परिमल संस्कृत ग्रन्थमाला संख्या-११

श्रीमद्वाल्मीकिमहामुनिप्रणीतं

# रामायणम्

रामप्रणीतरामायणतिलक—शिवसहायप्रणीत
रामायणशिरोमणि—गोविन्दराजप्रणीत-
रामायणभूषणेति-टीकात्रयेणोपस्कृतम् ।

तच्च

कट्टी श्रीनिवासशास्त्रिभिः
संशोधितं पाठान्तरैः टिप्पण्यादिभिश्च समलंकृतम्

तथा

श्रीसातकडिमुखोपाध्यायशर्मणा

विनिर्मितया विशदभूमिकया श्लोकानुक्रमण्या च
सनाथीकृतम् ।

षष्ठो भागः

[युद्धकाण्डम्]

परिमल पब्लिकेशन्स

दिल्ली — अहमदाबाद

॥ श्रीः ॥

आदिकविश्रीवाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।

तिलक-रामायणशिरोमणि-गोविन्दराजीय(भूषण)ेति-

टीकात्रयसमलंकृतम्

## युद्धकाण्डम् ।

### प्रथमः सर्गः ।

श्रीरामो हनुमद्वाक्यं श्रुत्वानितरशक्यसद्भृत्योचितकार्यकरणेनातिहृष्टमनास्तं परिष्वज्य प्रशंसति ।

श्रुत्वा हनूमतो वाक्यं यथावदभिभाषितम् । रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १ ॥

#### तिलकटीका ।

युद्धं रक्षोगणान्हत्वा पुष्पकेण निजां पुरीम् ।
सीतया सह चागम्य रेजे रामोऽभिषेचितः ॥

[ १ ] एवं हनूमतः सकाशात्सीतावृत्तान्तं श्रुत्वा कृतकार्यं भृत्यं स्वामिन उचितां वृत्तिं लोकस्य उपदेष्टुं हनूमन्तमस्तौषीदित्याह—श्रुत्वेति । उत्तरं प्रियश्रवणोत्तरकालयोग्यम् ॥ १ ॥

#### रामायणशिरोमणिः ।

स्वस्ति श्रीरघुवंशभूषणमहं राजाधिराजं परं
श्रीमद्वायुसुतेडितं परविभुं सुग्रीवसंसेवितम् ।
श्रीमल्लक्ष्मणलक्षितं जनकजां ध्यायन्तमार्यं सुखं
रामं नित्यसुखप्रदं सुखमुदं सर्वेश्वरेशं भजे ॥ १ ॥
नत्वा लवकुशौ सुधी छत्रकरौ तत्सेवकं मारुतिं
वाल्मीकिं कविनायकं गुरुमहं रामायणे रामगं ।
वाल्मीकेरतिनिर्मितेऽद्भुततमे युद्धे करोम्यत्र तां
टीकां रामपदारविन्दरतिदां श्रीरामसंतोषिणीम् ॥२॥
नत्वा त्रिवेणीं निखिलार्थवेणीं
वेणीधरार्चितपादवेणीम् ।
कुर्मः प्रयागं सकलार्थभागं
श्रीमत्त्रिवेणीतटसिद्धयागं ॥ ३ ॥

श्रीमद्रामायणव्याख्या वाल्मीकिहृदयार्पिका ।
रामेच्छया प्रवृत्तेयं रामायणशिरोमणिः ॥ ४ ॥
सीतारामसमारम्भां शुकाचार्यादिमध्यगाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ ५ ॥

हनुमत्कर्तृकसीतासंदेशोक्त्या सुन्दरकाण्डं समाप्य तद्वचनश्रवणानन्तरकालिकं रामवृत्तान्तमाह—श्रुत्वेत्यादिभिः । यथावदभिभाषितं हनुमतो वाक्यं श्रुत्वा प्रीतिसमायुक्तो रामः उत्तरं वाक्यमब्रवीत् ॥ १ ॥

#### भूषणटीका ।

आम्नायं गरुडोपदेशिकवरं प्राचार्यपारम्परी-
मध्यानस्य मनोरदं कुशलवाचार्यं मुनीनां वरम् ।
पूर्वाचार्यकृता विलोक्य बहुधा व्याख्याः सतां प्रीतये
कुर्वे संप्रति युद्धकाण्डविवृतिं श्रीमत्किरीटाभिधाम् ॥१॥

उक्तं पुरुषकारभूताया लक्ष्म्याः कृत्यं सुन्दरकाण्डे । अथोपायकृत्यं वक्तुं षष्ठः काण्ड आरभ्यते । तत्र स्वामिना कृतकार्ये भृत्ये एवं वर्तितव्यमित्यमुमर्थमुपदेष्टुं सुग्रीवादीनामुत्साहं वर्धयन् समाहृतसीतावृत्तान्तं हनुमन्तं रामः सत्करोति प्रथमे सर्गे । अत्र गायत्र्यक्षरं मकारः । श्रुत्वेति । यथावत् यथावस्थितप्रकारेण । अभिभाषितम् उक्तम् । उत्तरं प्रियश्रवणोत्तरकालार्हम् ॥ १ ॥

कृतं हनूमता कार्यं सुमहद्भुवि दुर्लभम् । मनसाऽपि यदन्येन न शक्यं धरणीतले ॥ २ ॥
नहि तं परिपश्यामि यस्तरेत महोदधिम् । अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥ ३ ॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ॥ ४ ॥
प्रविष्टः सत्त्वमाश्रित्य जीवन्को नाम निष्क्रमेत् । को विशेत्सुदुराधर्षां राक्षसैश्च सुरक्षिताम् ॥ ५ ॥
यो वीर्यबलसंपन्नो न समः स्याद्धनूमतः । भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् ॥
एवं विधाय स्वबलं सदृशं विक्रमस्य च ॥ ६ ॥
यो हि भृत्यो नियुक्तः सन्भर्त्रा कर्मणि दुष्करे । कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥ ७ ॥

२ ] ति० टी०–भुवि दुर्लभं भूलोके दुःखेन लभ्यं यद्वस्तु सीतारूपं तद्विषयं यत्कार्यमन्वेषणरूपं तद्धनुमता कृतं यद्धरणीतलेऽन्येन मनसापि न शक्यम् । कर्तुमिति शेषः । अतएव दुर्लभत्वमुक्तम् ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–कृतमित्यादिभिः । यत् कार्यमन्येन हनुमतो भिन्नेन मनसाऽपि स्वचिन्तुमिति शेषो न शक्यम् अत एव दुर्लभं तत्कार्यं हनुमता कृतम् ॥ २ ॥

गो० टी०–अथ प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः । कर्मान्ते दासभृत्याश्च न कदाचन पुत्रकाः ॥ इति वचनात्कर्मान्ते दासं स्तौति–कृतमित्यादिना । अत्र महदित्यनेन सागरतरणमुच्यते सुमहदित्यनेन लङ्काप्रवेशः । दुर्लभमित्यनेन लङ्काधर्षणम् मनसापि न शक्यमित्यनेन पुनर्निर्गमः प्रथमं सागर एव न तर्तुं शक्यः तीर्त्वाऽपि तं लङ्का न प्रवेष्टुम् । प्रविश्यापि न धर्षयितुं धर्षयित्वापि न ततो निर्गन्तुमिति भावः ॥ २ ॥

३ ति० टी०–अन्याशक्यत्वमेवाह–नहीति ॥ ३ ॥

रा० टी०–कार्यस्याशक्यत्वे हेतुमाह–नहीति । यो महोदधिं तरेत तं गरुडादेरन्यत्र अन्यं न परिपश्यामि । किंच गरुडादेः अन्यत्र अन्यः यो महोदधिं तरेत तं न परिपश्यामि ॥ ३ ॥

गो० टी०–महत्त्वमुपपादयति—नहीति । गरुडवायू मिलित्वा तेरतुः । अयं त्वेक एवातरदित्यर्थः ॥ ३ ॥

४ ] ति० टी०–देवदानवयक्षाणामिति करणे शेषत्वेन विवक्षिते षष्ठी ॥ ४ ॥

रा० टी०–देवेति । रावणेन सुरक्षिताम् अत एव देवादीनामप्रधृष्यां लङ्कां सत्त्वं स्वबलमाश्रित्य प्रविष्टः को नाम जनः जीवन् सन् निष्क्रमेत् न कोपीत्यर्थः । सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०–सुमहत् मनसापि न शक्यमित्येतद्द्वयमप्युपपादयति–देवदानवेत्यादिना सार्धश्लोकेन । सत्त्वं बलम् आश्रित्य वसन् जीवन् निष्क्रमेत् निष्कामेत् । लङ्कां प्रविश्य स्वबलेन पुनर्निर्गच्छन् हनुमतोन्यः कोपि नास्तीत्यर्थः ॥ ४ ॥

५ ] ति० टी०–तां प्रविष्टो निष्क्रमेत्पुनः स्वदेशमागच्छेत् । प्रवेशोऽपि दुर्लभ इत्याह—क इति । यो हनुमतः समो न स्यात्स को विशेदित्यन्वयः ॥ ५ ॥

रा० टी०–प्रवेशस्यैव दौर्लभ्यमाह–क इति । यो हनुमतः समो न स्यात् स कः विशेत् न कोपीत्यर्थः ॥ ५ ॥

गो० टी०–दुर्लभत्वमुपपादयति—को विशेदिति ॥ ५ ॥

६ ] ति० टी०–विक्रमस्य सदृशं स्वबलं स्वबलकार्यं समुद्रलङ्घनलङ्काप्रवेशरूपं विधाय हनुमता महत्त्वादतिक्रमपि सुग्रीवस्य भृत्यकार्यं सुग्रीवभृत्यत्वोचितं कार्यं सीतादर्शनवनभङ्गादिरूपं कृतम् ॥ ६ ॥

रा० टी०–भृत्येति । विक्रमस्य पराक्रमस्य सदृशं स्वबलं स्वपौरुषमेवं विधाय प्रकटय्य महत सुग्रीवस्य भृत्यकार्यं भृत्यैः कृत्यं हनुमता कृतम् ॥ ६ ॥

गो० टी०–न केवलं स्वामिनियुक्तकार्यकरणेन भृत्यकार्यं निर्व्यूढमनेन किन्त्वनियुक्तप्रकृतकार्यानुकूलकार्यान्तरकरणेनापि महत्कार्यं संसाधितमित्याह–भृत्येति । विक्रम अतिशक्तिः "विक्रमस्त्वतिशक्तिता" इत्यमरः । विक्रमस्य सदृशम् स्वबलम् अशोकवनिकाभङ्गादिकम् पौरुषं स्वयम् आत्मनः स्वामिनियोगं विना विधाय सुग्रीवस्य भृत्यकार्यं भृत्येन कर्तव्यम् महत् अधिकम् कृतमित्यर्थः ॥ ६ ॥

७ ] ति० टी०–हनुमतो भृत्योत्तमत्वं दर्शयितुमुत्तमादिभृत्यानां लक्षणान्याह—यो हीति । यो भृत्यो भर्त्रा दुष्करे कर्मणि नियुक्तस्तत्कार्यं कृत्वा तदनुरागेणोक्तकार्याविरोधेन कार्यान्तरमपि कुर्यात्तं पुरुषोत्तमं भृत्यपुरुषेषु श्रेष्ठमाहुः ॥ ७ ॥

रा० टी०–हनुमतः उत्तमभृत्यत्वं बोधयितुमुत्तमादिभृत्यानां लक्षणमाह–य इत्यादिभिः । दुष्करे कर्मणि भर्त्रा नियुक्तः सन् यो भृत्यः तत्कर्म अनुरागेण अतिप्रीत्या कुर्यात् तं पुरुषोत्तमं भृत्यजनश्रेष्ठमाहुः तत्त्वविद इति शेषः । प्रीतिप्राकट्यं तु आज्ञापितकार्याविरोधिस्वामीप्सितकार्यान्तरकरणेनेति बोध्यम् ॥ ७ ॥

गो० टी०–हनुमत उत्तमभृत्यत्वं दर्शयितुमुत्तममध्यमाधमभृत्यानां क्रमेण लक्षणमाह–यो हीत्यादिना । यो भृत्यः भर्त्रा स्वामिना दुष्करे कर्मणि नियुक्तः सन् कृत्वा अनुरा-

१ महार्णवमिति गो. पाठः । २ समन्विति गो. पाठः ।

यो नियुक्तः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरम् ॥ ८ ॥
नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः । भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ॥ ९ ॥
तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता । न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥ १० ॥
अहं च रघुवंशश्च लक्ष्मणश्च महाबलः । वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ ११ ॥
इदं तु मम दीनस्य मनो भूयः प्रकर्षति । यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥ १२ ॥

गेण स्वामिभक्त्यतिशयेन । तदपेक्षितमनियुक्तमपि कार्यं कुर्यात् तं पुरुषोत्तमम् उत्तमभृत्यम् आहुः ॥ ७ ॥

८ ] ति० टी०—यस्तु युक्तो बुद्ध्या समर्थश्च सन्परं स्वामिसंदिष्टादधिकं नृपतेः प्रियं न कुर्यात्किं तु संदिष्टमेव कुर्यात्तं मध्यममाहुः । ‘भृत्यस्तु यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्योऽभृत्यः समर्थोऽपि तमाहुर्मध्यमं नरम् ।’ इति पाठे यः समर्थोऽपि भृत्यः परं कार्यं न कुर्यात्स भृत्य उक्तमात्रकरणादधिकाकरणाच्चाभृत्यः, अतस्तं मध्यममाहुः ॥ ८ ॥

रा० टी०—य इति । नियुक्तो युक्तो योग्यो यः समर्थो भृत्यः परम् आज्ञापितकार्यादन्यत् नृपतेः प्रियं न कुर्यात् तं नरं भृत्यं मध्यममाहुः ॥ ८ ॥

गो० टी०—नियुक्त इति । नियुक्तो यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्यो युक्तः समर्थश्च तमाहुर्मध्यमं नरमिति पाठः । भर्त्रा नियुक्तः यो भृत्यः युक्तः उत्साहयुक्तः समर्थश्च नृपतेः स्वामिनः प्रियं परं कार्यं स्वामिनिर्दिष्टादधिकं कार्यम् न कुर्यात् तं मध्यमं नरं मध्यमभृत्यम् आहुः । भृत्यस्तु यः परं कार्यं न कुर्यान्नृपतेः प्रियम् । भृत्योऽभृत्यः समर्थोपि तमाहुर्मध्यमं नरमिति पाठान्तरम् । तत्र त्वयमर्थः यस्तु भृत्यः समर्थोपि परं कार्यं न कुर्यात् उक्तमात्रमेव कुर्यात्स भृत्योऽभृत्यः उक्तानुष्ठानात् भृत्यः अधिकाकरणादभृत्यः । ततस्तं मध्यममाहुरिति ॥ ८ ॥

९ ] ति० टी०—यो नियुक्तो नृपतेरुक्तमपि कार्यं न कुर्यात्तमधममाहुः ॥ ९ ॥

रा० टी०—नियुक्त इति । नियुक्तः स्वामिना प्रेरितः समर्थः तदीप्सितकार्यसाधने सामर्थ्यवान् अत एव युक्तः तत्कार्यसाधने योग्यो यो भृत्यः नृपतेः कार्यं समाहितः सन् न कुर्यात्तं पुरुषाधमम् अधमभृत्यमाहुः ॥ ९ ॥

गो० टी०—नियुक्त इति । समाहितः कार्यान्तराव्यग्रः । युक्तः समर्थश्च यो भृत्यो नियुक्तोपि नृपतेः कार्यं नृपतेः उक्तमात्रमपि कार्यं सम्यङ् न कुर्यात् तं पुरुषाधमम् अधमभृत्यम् आहुः ॥ ९ ॥

१० ] ति० टी०—अथ हनूमत उत्तमत्वं दर्शयति—तदिति । नियोगे सीतान्वेषणमात्रे । कृत्यमधिकमपि कृत्यं कृतम् अत उत्तमभृत्योऽयमिति भावः । उत्तमत्वे युक्त्यन्तरमप्याह—न चात्मेति । रक्षोभिरपराजितत्वात् । सुग्रीवश्चापि तोषितः । अधिककार्यकरणादित्यर्थः ॥ १० ॥

रा० टी०—तदिति । नियोगे कृत्ये नियुक्तेन हनूमता तत् नियोजितं सीतादर्शनं कृत्यं कृतम् आत्मा स्वस्वरूपं लघुतां न नीतः राक्षसाः पराभवं प्रापिता इत्यर्थः । एतेन अनाज्ञापितमपि कृतमिति सूचितम् अत एव सुग्रीवः चकारात् तन्मित्रवर्गश्च तोषितः एतेन हनूमतोऽत्युत्तमत्वं ध्वनितम् ॥ १० ॥

गो० टी०—उक्तेषु त्रिविधभृत्येषूत्तमभृत्योऽयमित्याह—तदिति । तत् उत्तमभृत्यलक्षणलक्षितत्वात् नियुज्यतेऽस्मिन्निति नियोगः कार्यं तस्मिन्नियुक्तेन उत्तमभृत्येन कृत्यं कर्तव्यं कार्यम् हनुमता कृतम् । किंचात्मा स्वयं लघुतां न नीतः । राक्षसैरपराजितत्वात् । सुग्रीवश्चापि तोषितः उक्तकार्यातिरिक्तकार्यकरणात् ॥ १० ॥

११ ] ति० टी०—धर्मतः धर्मं प्राप्येत्यर्थः । एतेन स्वाम्याज्ञापालनेन भृत्यस्य धर्मोऽपि सूचितः । मदादयः परिरक्षिताः सीतासमाचारालाभेन मन्नाशो मन्नाशाच्च लक्ष्मणभरतादीनां च नाश इति सर्वनाशप्रसङ्ग इति भावः ॥ ११ ॥

रा० टी०—अहमिति । धर्मतः भृत्यधर्मं प्राप्य वैदेह्या दर्शनेन मदादयः परिरक्षिताः हनुमतेति शेषः ॥ ११ ॥

गो० टी०—न केवलं सुग्रीवतोषणं धर्मपरिरक्षणं चास्माकमासीदित्याह—अहमिति । धर्मतः धर्मे । सप्तम्यर्थे तसिः । धर्मतः परिरक्षिताः धर्मे स्थापिताः धर्मस्थापनं चात्राधर्मान्मोचनम् । यदि हनुमता सीता न दृश्येत तदाहं तावदात्मानं जह्याम् ततो लक्ष्मणादयश्च तत आत्महानिरूपोऽधर्मस्सर्वेषां स्यादिति भावः । यद्वा वैदेहीदर्शनरूपेण धर्मेण उपकारेण सर्वे वयं परिरक्षिताः निरपवादाः कृताः स्मेति भावः ॥ ११ ॥

१२ ] ति० टी०—एवं हनूमत्कर्मणः सुखजनकत्वेऽपि तत्प्रत्युपकाराकरणजो विषादः सीताश्रवणजमानन्दमपि तिरोधाय मां संतापयतीत्याह—इदं त्विति । न कुर्मि न करोमि । सदृशं एतत्कृतप्रियसदृशं प्रियम् ॥ १२ ॥

रा० टी०—इदमिति । इह अस्मिन् समये प्रियाख्यातुरस्य हनूमतः सदृशं योग्यं प्रियं यदहं न कुर्मि करोमि तदिदमकरणं मम मनः भूयोऽधिकं प्रकर्षति खेदयति ॥ १२ ॥

गो० टी०—एवं निरतिशयानन्दकरं वचनं कथयतो हनु-

१ नियुक्तो य इति गो. पाठः ।

एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः । मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः ॥ १३ ॥
इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे । हनूमन्तं कृतात्मानं कृतवान्तमुपागतम् ॥ १४ ॥
ध्यात्वा पुनरुवाचेदं वचनं रघुसत्तमः । हरीणामीश्वरस्यापि सुग्रीवस्योपशृण्वतः ॥ १५ ॥
सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम् । सागरं तु समासाद्य पुनर्नष्टं मनो मम ॥ १६ ॥
कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः । हरयो दक्षिणं पारं गमिष्यन्ति समागताः ॥ १७ ॥

मतः तत्सदृशप्रत्युपकारालाभात् खिद्यते—इदं त्विति । प्रकर्षति व्याकुलयति संतापयति वा । कुर्मि करोमि ॥ १२ ॥

१३ ] ति० टी०—तत्तुल्यप्रियान्तरमपश्यन्नात्मपरिष्वङ्गमेव तथापश्यन्नाह—एष इति । सर्वस्वभूतः । भगवद्देहस्य शुद्धानन्दरूपत्वात्स्वालिङ्गनस्य सर्वस्वभूतत्वं बोध्यम् । 'आनन्द एव हि भगवतः सर्वस्वम् । आनन्द एव हि मायया रामादिदेहत्वेन भासते' इति गीताभाष्यविष्णुसहस्रनामभाष्ययोर्भगवत्पादैः स्पष्टमेवोक्तम् । ब्रह्माण्डपुराणादिषु चैवं परिष्वङ्गद्वारा ब्रह्मानन्दार्पणमेव हनमते कृतमिति बोधितम् । तस्य हनमत उत्तमभृत्यस्य हनमतः ॥ १३ ॥

रा० टी०—ननु प्रियं क्रियतामित्यत आह—एष इति । इमं दानयोग्यं कालं प्राप्य सर्वस्वभूतः मम सर्वधनत्वं प्राप्तः एष परिष्वङ्गः ममालिङ्गनं महात्मनो हनमतः दत्तोऽस्तु एतेन परिष्वङ्गातिरिक्तं हनुमदुपयोगिवस्त्वन्तरं नास्तीति सूचितं तेन रामपरिष्वङ्गप्राप्तेः परमपुरुषार्थत्वं सूचितम् ॥ १३ ॥

गो० टी०—स च संतापः सर्वस्वदानरूपेण प्रत्युपकारेण विना न शाम्यति । तस्य सर्वस्वदानस्य मया क्रियमाणः परिष्वङ्ग एव प्रतिनिधिर्भवत्वित्याह—एष सर्वस्वभूतस्तु परिष्वङ्गो हनमतः । मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः ॥ तुशब्दोऽवधारणे इमं प्रत्युपकारार्हं कालं प्राप्य मया दत्तोयं परिष्वङ्ग एव सर्वस्वभूतोस्तु । सर्वस्वदानसदृशोस्त्विति संबन्धः । एष स्वानुभवसिद्धः इच्छागृहीताभिमतोरुदेहत्वेन स्वस्य निरवधिकभोग्यतया स्थितः लोके स्वस्य रस्यं हि स्वाभिमताय दिशति सर्वस्वभूतः एतद्व्यतिरिक्तप्रदानेन इदं न दत्तमिति न्यूनता स्यात् । एतत्प्रदाने तु सर्वं दत्तम् एतद्विग्रहस्य सर्वाश्रयत्वात् परिष्वङ्गो हनमतः । अमृताशिनो' हि तृणकवलादिकं न देयम् । स्नेहो मे परमो राजंस्त्वयि तिष्ठतु नित्यदा इत्येतद्विग्रहे प्रेमवतः स एव दातव्यः । मया कालमिमं प्राप्य दत्तः । अयं किंचिदपि मत्तोनपेक्षमाणो वर्तते । कदा मयास्मै किंचिद्दत्तं स्यादिति सोत्कण्ठेन मया स्थितं संप्रत्यप्रतिषेधसमयलाभाद्दत्तवानस्मि । तस्य महात्मनः महास्वभावस्य महोदारस्येत्यर्थः । देहद्वयप्रदानकृतवतः किमेकदेहप्रदानमुचितमिति भावः । वेण्युद्ग्रथनसमये सीतां संरक्ष्य दत्त्वा अवगाह्यार्णवं स्वप्स्य इति दशायां रामदेहं च सीतासंदेशवचनेनाजीवयद्धि । एवं देहद्वयं दत्तवतः किमेकदेहदानमुचितमिति भावः ॥ १३ ॥

१४ ] ति० टी०—प्रीतिहृष्टाङ्गः प्रीतिपुलकितगात्रः । हनूमन्तमित्यादि पूर्वान्वयि ॥ १४ ॥

रा० टी०—इतीति । इत्युक्त्वा हनुमन्तं परिषस्वजे ॥ १४ ॥

गो० टी०—इत्युक्त्वेति । प्रीतिहृष्टाङ्गः प्रीत्या पुलकितगात्रः । महात्मानमित्यादिविशेषणानि परिष्वङ्गहेतवः ॥ १४ ॥

१५ ] ति० टी०—ध्यात्वा । समुद्रतरणं कथं स्यादिति संचिन्त्येत्यर्थः । सुग्रीवस्येति सप्तम्यर्थे षष्ठी । शृण्वति सत्युवाचेत्यन्वयः ॥ १५ ॥

रा० टी०—ध्यात्वेति । ध्यात्वा सीतां संचिन्त्य सुग्रीवस्य सुग्रीवे उपशृण्वतः उपशृण्वति सति रघुसत्तमः पुनरुवाच समीप इत्यध्याहृतं वा ॥ १५ ॥

गो० टी०—एवं हनुमन्तं स्तुत्वा सागरस्य दुस्तरत्वं विचार्य विषण्णः सन् प्रयासकृतं सीतान्वेषणं निरर्थकमिति मन्वान आह—ध्यात्वेति । एवकारो भिन्नक्रमः । ध्यात्वा दुस्तरं सागरं सर्ववानरवाहिनीसहितोहं कथं संतरिष्यामीति संचिन्त्य सुग्रीवस्योपशृण्वतः सुग्रीवे उपशृण्वत्येव । व्यत्ययेन सप्तम्यर्थे षष्ठी ॥ १५ ॥

१६ ] ति० टी०—सुकृतम् । अधिकस्यापि करणादित्यर्थः । समासाद्य दुस्तरत्वमालोच्य । पुनर्नष्टं सीतावृत्तान्तश्रवणेन हृष्टमपि पुनर्विषादं प्राप्तम् ॥ १६ ॥

रा० टी०—तद्वचनाकारमाह—सर्वथेति । यद्यपि सीतायाः परिमार्गणं सर्वथा सर्वप्रकारेण सुकृतं हनुमतेति शेषः तथापि सागरं समासाद्य उल्लङ्घनीयत्वेन संस्मृत्य मम मनः नष्टं सीताप्राप्तिनिश्चयं न करोतीत्यर्थः ॥ १६ ॥

गो० टी०—सर्वथेति । सर्वथा सर्वप्रकारेण समुद्रतरणान्तःपुरप्रवेशादिना । सुकृतं तावत्सुष्ठु कृतमेव । परिमार्गणम् अन्वेषणम् । किं तु सागरं समासाद्य सागरस्य दुस्तरत्वमालोच्य । पुनर्नष्टं मनो मम । सीतावृत्तान्तश्रवणेन हृष्टमपि मे मनः पुनर्नष्टं प्रकृतं विषादं पुनः प्राप्तमित्यर्थः ॥ १६ ॥

१७ ] ति० टी०—समागता मिलिताः ॥ १७ ॥

रा० टी०—निश्चयाभावे हेतुमाह—कथमिति । समागताः हरयः समुद्रस्य दक्षिणं पारं कथं गमिष्यन्ति ॥ १७ ॥

गो० टी०—विषादमेव प्रकटयति—कथमिति । दुष्पारस्य दुष्प्रापतीरस्य । "पार-तीर, कर्मसमाप्तौ" इत्यस्माद्धातोः

१ कार्यमिति गो. पाठः । २ नन्दन इति गो. पाठः । ३ पवेति गो. पाठः । ४ हिता इति गो. पाठः ।

यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम । समुद्रपारगमने हरीणां किमिवोत्तरम् ॥ १८ ॥
इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः । हनूमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ।

शोकसतप्तं रामं सुग्रीवो धैर्यदानादिना समुत्साहयति ।

तं तु शोकपरिद्यूनं रामं दशरथात्मजम् । उवाच वचनं श्रीमान्सुग्रीवः शोकनाशनम् ॥ १ ॥
किं त्वया तप्यते वीर यथान्यः प्राकृतस्तथा । मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदम् ॥ २ ॥
संतापस्य च ते स्थानं नहि पश्यामि राघव । प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥ ३ ॥

---

यत्प्रत्ययः । महाम्भसः अगाधजलस्य । समाहिताः संगताः ॥ १७ ॥

१८ ] ति० टी०—किं चैष वितर्को न ममैव, किं तु सीताया अपीत्याह—यद्यपीति । यद्यपीत्यप्यर्थे । एष वृत्तान्तो मम वैदेह्यापि गदितः, अतो हरीणां पारगमने किमिवोत्तरम । उत्तरकालोचितं कर्म किमित्यर्थः ॥ १८ ॥

रा० टी०—अयं संदेहः सीताया अप्यस्तीत्याह—यद्यपीति । हरीणां समुद्रपारगमने किमुत्तरम् उत्कर्षतरणोपायः ममैष वृत्तान्तः वैदेह्याऽपि गदितः एतेन तत्तरणोपायः निश्चेतव्य इति सूचितम् । यद्यपीति निपातोऽप्यर्थे ॥ १८ ॥

गो० टी०—सर्वश्चेतिश्लोकोक्तं विवृणोति—यदीति । वैदेह्या वृत्तान्तः गदितो यद्यपि गदित एव । हरीणां समुद्रपारगमने उत्तरं किम् उत्तरकालोचितं साधकं किम् न किमपीत्यर्थः । इवशब्दो वाक्यालंकारे ॥ १८ ॥

१९ ] ति टी०—शोकसंभ्रान्तः । ज्ञातेऽपि सीतावृत्तान्ते तत्प्राप्तिप्रतिबन्धपर्यालोचनया कलुषितान्तःकरण इत्यर्थः । ध्यानं ध्यानमिव तरणोपायविषयचिन्तामिव ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे प्रथमः सर्गः ॥ १ ॥

रा० टी०—इतीति । अशोकसंभ्रान्तः वास्तवशोकसंभ्रान्तिरहितो रामः हनूमन्तमित्युक्त्वाध्यानं सीताप्राप्त्युपायविषयकचिन्तामुपागमत् प्राप्तोत् ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे प्रथमः सर्गः ॥ १ ॥

गो० टी०—इत्युक्त्वेति । ध्यानमुपागमत् सागरतरणोपायचिन्तामकरोदित्यर्थः शत्रुनिर्बर्हणमहाबाहुपदाभ्यां सागरशोषणादिकमेवोपायमचिन्तयदिति द्योत्यते ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

१ ] ति० टी०—शोकपरिद्यूनं शोकसंतप्तम् ॥ १ ॥

रा० टी०—रामवचनश्रवणानन्तरकालिकीं रामं प्रति सुग्रीवोक्तिमाह—तमित्यादिभिः । शोकपरिद्यूनं शोकसंतप्तत्वेन प्रतीयमानं रामं शोकनाशनं वचनं सुग्रीव उवाच ॥ १ ॥

गो० टी०—एवं शोकसंभ्रान्तं राममवलोक्य समदुःखतया तच्छोकमसहमानः सुग्रीवः॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च अपृष्टोपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ॥ इति नीतिशास्त्रमनुस्मरन् शोकनिवारकं वचनमुवाचेत्याह—तं त्विति । तुशब्दः पूर्वस्माद्वैलक्षण्यपरः । तं तु शोकपरिद्यूनम् रामः प्रीतिसमायुक्त इति प्रीतियुक्तत्वदशायामेव शोकपरिद्यूनं शोकपरितप्तम् दशरथात्मजं महाराजपुत्रत्वेन शोकलेशानर्हं रामम् श्रीमान् ' शुचिता त्यागिता शौर्यं समानसुखदुःखता । अनुरागश्च दाक्षिण्यं सत्यता च सुहृद्गुणाः ॥' इति कामन्दकोक्तरीत्या मित्रगुणसंपन्न इत्यर्थः । शोकनाशनं रामहृदयान्तर्गतशोकनिवर्तनक्षमं वचनमुवाच ॥ १ ॥

२ ] ति० टी०—प्राकृतो यथा तप्यति तथा त्वया किं तप्यत इत्यन्वयः । एवं संतप्तः कृतघ्नो यथा सौहृदं त्यजति तथा त्वं संतापं त्यज ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—किमित्यादिभिः । अन्यः स्वतन्त्रादिभिन्नः प्राकृतो जनः यथा तप्यते तथा त्वया किं किमर्थं तप्यते एवम् ईदृक्संतापविशिष्टः त्वं मा भूः अतः कृतघ्नः सौहृदमिव संतापं त्वं त्यज ॥ २ ॥

गो० टी०—किं त्वमिति । प्राकृतः क्षुद्रः । मैवं भूः प्राकृत इव मा भूः ॥ २ ॥

३ ] ति० टी०—स्थानं निमित्तम् । प्रवृत्तौ जीवने ॥ ३ ॥

रा० टी०—त्यागे हेतुमाह—संतापस्येति । प्रवृत्तौ सीतावृत्तान्ते उपलब्धायां ज्ञातायां रिपोरपहर्तुर्निलये ज्ञाते सति ते तव संतापस्य स्थानं समयं नैव पश्यामि ॥ ३ ॥

गो० टी०—निमित्ताभावमुपपादयति—संतापस्य चेति ।

---

१ त्वं संतप्यसे इति गो. पाठः ।

मतिमाञ्शास्त्रवित्प्राज्ञः पण्डितश्चासि राघव । त्यजेमां प्राकृतां बुद्धिं कृतात्मेवार्थदूषिणीम् ॥ ४ ॥

समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् । लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम् ॥ ५ ॥

निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः । सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥ ६ ॥

इमे शूराः समर्थाश्च सर्वतो हरियूथपाः । त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥

एषां हर्षेण जानामि तर्कश्चापि दृढो मम ॥ ७ ॥

चोत्तरवारणे । संतापस्य स्थानमेव निमित्तमेव न पश्यामि । एतावत्पर्यन्तं सीतानुपलम्भनरूपं निमित्तमासीत् इदानीं तु नास्तीत्यर्थः । स्थानम् अवकाशः । अवकाशे स्थितौ स्थानमित्यमरः । प्रवृत्तौ सीतावृत्तान्ते । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः ॥ ३ ॥

४ ] ति० टी०–शास्त्रविदित्यादिशास्त्रज्ञः । मतिमान्भाव्यर्थज्ञानयोग्यबुद्धिः प्राज्ञो विचारकुशलः पण्डितो विचारपूर्वं सिद्धान्तप्रतिष्ठापनसमर्थः स त्वमिमां प्राकृतां सत्यादिरहितप्राकृतजनोचितां बुद्धिं दीनबुद्धिं त्यज । कृतात्मा योगी यथार्थस्य स्वेष्टस्य योगस्य दूषणीं दूषिकां कामादिविषयां बुद्धिं त्यजति तद्वत्त्वं त्यजेत्यर्थः ॥ ४ ॥

रा० टी०–मतिमानिति । यतस्त्वं मतिमत्त्वादिविशिष्टः अतः कृतात्मा प्राप्तस्वात्मसाक्षात्कारो जनः अर्थदूषणीं प्राकृतां बुद्धिं यथा त्यजति तथा इमां बुद्धिं त्यज ॥ ४ ॥

गो० टी०–त्वद्गुणपर्यालोचनायामपि न शोकावकाश इत्याह–मतिमानित्यादिना । मतिमान् आगामिगोचरज्ञानवान् । शास्त्रवित् नीतिशास्त्रज्ञः । प्रज्ञास्यास्तीति प्राज्ञः । "प्रज्ञादिभ्यश्च" इत्यण्प्रत्ययः ऊहापोहज्ञ इत्यर्थः पण्डा निर्णयात्मकं ज्ञानं सास्य संजातेति पण्डितः परिच्छेत्तेत्यर्थः । पापिकां[1] पापयुक्ताम् अनुत्साहकारिणीमिति यावत् । इमां बुद्धिं त्यज । कृतात्मा योगी । अर्थदूषणीं मोक्षरूपपुरुषार्थनिवर्तिकां बुद्धिमिव ॥ ४ ॥

५ ] ति० टी०–समुद्रलङ्घनेऽपि चिन्ता न कार्येत्याह–समुद्रमिति । वक्ष्यमाणोपायेनेति शेषः । आरोहयिष्याम आरोक्ष्यामः ॥ ५ ॥

रा० टी०–तत्र हेतुमाह–समुद्रमिति । समुद्रं लंघयित्वा ते रिपुं हनिष्यामः ॥ ५ ॥

गो० टी०–नापि सागरदुस्तरत्वं संतापनिमित्तमित्याह समुद्रमिति । न क्रमन्त इति नक्राः गजग्राहिमत्स्याः । महानक्रसमाकीर्णमपि समुद्रं लङ्घयित्वा लङ्कामारोहयिष्यामः । सेनामिति शेषः ते रिपुं रावणम् हनिष्यामश्च । समुद्रलङ्घनलङ्कारोहणशत्रुवधार्थं न संतापः कार्य इत्यर्थः ॥ ५ ॥

६ ] ति० टी०–निरुत्साहत्वादिगुणको व्यसनदुःखपरम्परामधिगच्छति प्राप्नोति ॥ ६ ॥

रा० टी०–शोके दोषमाह–निरुत्साहस्येति । शोकेन पर्याकुलः व्याप्तः आत्मा मनो यस्य अत एव दीनस्य अत एव निरुत्साहस्य जनस्य सर्वार्थाः निखिलमनोरथाः व्यवसीदन्ति नश्यन्ति अत एव व्यसनं दुःखमधिगच्छति प्राप्नोति ॥ ६ ॥

गो० टी०–एवं कारणाभावाच्छोकस्य नावकाश इत्युक्तम् । सत्यपि कारणे स त्याज्य इत्याह–निरुत्साहस्येति । शोकपर्याकुलात्मनः शोकव्याकुलमनसः अत एव निरुत्साहस्य सर्वार्थाः सर्वप्रयोजनानि व्यवसीदन्ति नश्यन्ति सः शोकं व्यसनं चाप्नोति । शोकादनुत्साहः अनुत्साहाद्दैन्यम् दैन्यादर्थनाशः । अर्थनाशाद्व्यसनप्राप्तिरित्यर्थः । तस्माच्छोकस्त्याज्य इति भावः ॥ ६ ॥

७ ] ति० टी०–ननु किं बलादस्मान्युत्साहः स्यादित्यत आह–इमे इति । सर्वतः समर्था इत्यन्वयः । मत्प्रियार्थमिमे कृतोत्साहा इति कथं ज्ञातं तत्राह–एषामिति । हर्षेण समुद्रतरणरावणप्रसङ्गे जायमानेन । तत्कार्यमुखविकासादिनानुमितेनेत्यर्थः । ममापि दृढस्तर्कः समुद्रतरणरावणहननादिविषयो दृढनिश्चय इत्यर्थः । तत्सर्वं संपत्स्यतमिति भावः ॥ ७ ॥

रा० टी०–इमे इति । सर्वतः सर्वेषु कार्येषु समर्थाः शूरा इमे हरियूथपाः त्वत्प्रियार्थं पावकमपि प्रवेष्टुं कृतोत्साहाः सन्तीति शेषः ॥ ७ ॥

रा० टी०–नन्वेषामुत्साहं कथं जानासीत्यत आह–एषामिति । एषां हर्षेण हेतुना जानामि अनुमिनोमि उत्साहमिति शेषः अस्मिन् अनुमाने मम तर्को दृढः दोषरहित इत्यर्थः अतो रावणं यथा हत्वा सीतां समानेष्यं तथा यत्नं त्वं कर्तुमर्हसि । सार्धः श्लोक एकान्वयी ॥ ८ ॥

गो० टी०–नापि साहाय्यानुपपत्तिः शोकनिमित्तमित्याह–इम इति । शूराः पराक्रमशालिनः । समर्थाः उपायकुशलाः । नः अस्माकं संबन्धिनः । सर्वे[2] इमे हरियूथपाः त्वत्प्रियार्थं पावकमपि प्रवेष्टुं कृतोत्साहाः । किमुतान्यत्कर्तुमिति भावः ॥ ७ ॥

गो० टी०–कुत एषामुत्साहस्त्वयावगत इत्याह–एषामिति । अर्धमेकं वाक्यम् । एषां यूथपानां हर्षेण मुखप्रसादानुमानेन जानामि । एषाम् उत्साहमिति शेषः । अस्मिन्नुत्साहे[3] मम दृढः अप्रशिथिलः तर्कश्चास्ति ॥ ८ ॥

१ पापिकामिति गो. पाठः । २ सर्वे नो इति गो. पाठः । ३ अस्मिन्निति गो. पाठः ।

विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् । रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि ॥ ८ ॥
सेतुरत्र यथा बद्ध्येद्यथा पश्येम तां पुरीम् । तस्य राक्षसराजस्य तथा त्वं कुरु राघव ॥ ९ ॥
दृष्ट्वा तां हि पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् । हतं च रावणं युद्धे दर्शनादवधारय ॥ १० ॥
अबद्ध्वा सागरे सेतुं घोरे चै वरुणालये । लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ११ ॥
सेतुर्बन्धः समुद्रे च यावल्लङ्कासमीपतः । सर्वं तीर्णं च मे सैन्यं जितमित्युपधारय ॥
तथा हि समरे वीरा हरयः कामरूपिणः ॥ १२ ॥
तदलं विक्लवां बुद्धिं राजन्सर्वार्थनाशिनीम् । पुरुषस्य हि लोकेऽस्मिन्शोकः शौर्यापकर्षणः ॥ १३ ॥
यत्तु कार्यं मनुष्येण शौटीर्यमवलम्ब्यताम् । तदलंकरणायैव कर्तुर्भवति सत्वरम् ॥ १४ ॥

८ ] ति० टी०—यदेवम्, अतो यथा रिपुं हत्वा सीतां विक्रमेण समानेष्ये तथा तदुचितमुत्साहं त्वं कर्तुमर्हसीत्यर्थः ॥८॥

गो० टी०—फलितमाह—विक्रमेणेति । पापकर्माणं सीताहरणरूपपापकर्मयुक्तं ते रिपुं रावणं हत्वा सीतां विक्रमेण यथा समानेष्ये तथा त्वमुत्साहं कर्तुमर्हसि ॥ ९ ॥

९ ] ति० टी०—किं मया कार्यं तत्राह—सेतुरिति । अत्र समुद्रे । यथा तस्य राक्षसराजस्य तां पुरीं पश्येम तथा त्वं कुरु । दिव्यास्त्रालम्बनेनेति शेषः ॥ ९ ॥

रा० टी०—यत्नं बोधयन्नाह—सेतुरिति । अत्र अस्मिन् सागरे यथा सेतुर्बध्येत् यथा च राक्षसराजस्य पुरीं लङ्कां पश्येम तथा त्वं कुरु ॥ ९ ॥

गो० टी०—तथा त्वं कर्तुमर्हसीत्युक्तं विशिनष्टि—सेतुरिति । अत्र समुद्रे सेतुर्यथा बद्ध्येत यथा तां पुरीं पश्येम तथा त्वं कुरु । तथोपायं चिन्तयेत्यर्थः ॥ १० ॥

१० ] ति० टी०—त्रिकूटशिखरस्थां तां लङ्कां दृष्ट्वा दर्शनात्तद्दर्शनसमनन्तरमेव युद्धे रावणं हतं जानीहि ॥ १० ॥

रा० टी०—दृष्ट्वेति । पुरीं लङ्कां दृष्ट्वा दर्शनात् रावणदर्शनात् रावणदर्शनं प्राप्य युद्धे रावणं हतमवधारय जानीहि ॥ १० ॥

गो० टी०—दर्शनमात्रेण किं सेत्स्यति तत्राह—दृष्ट्वेति । तां पुरीं दृष्ट्वा दर्शनादेव हेतोः रावणं हतमवधारय ॥ ११ ॥

११ ] ति० टी०—सेतुबन्धं विना प्रकारान्तरं लङ्काप्राप्तौ नास्ति सोऽपि कृत एवेति निश्चिन्वित्याह—अबद्ध्वेति ॥ ११ ॥

रा० टी०—अबद्ध्वेति । सेतुमबद्ध्वा सागरमजित्वेत्यर्थः सेन्द्रैः सुरासुरैरपि लङ्का मर्दितुं न शक्या एतेन समुद्रस्थराक्षसानां देवादिभीतिदातृत्वं सूचितम् तेन तत्पराभवमन्तरा देवादीनामपि लङ्का दुर्गमेति ध्वनितम् ॥ ११ ॥

गो० टी०—सेतुर्बध्य इति कोऽयं निर्बन्ध इत्याशङ्क्यान्यथा अशक्यत्वमन्वयव्यतिरेकाभ्यामाह—अबद्ध्वेत्यादिश्लोकद्वयेन । अबद्ध्वा सागरे इत्यादि सार्धम् । सेतुरिति लङ्कासमीपतः लङ्कासमीपे । यावत् यावत्काले सेतुर्बद्धो भवति तावत्काले । सर्वं सैन्यं तीर्णं जितं चेत्युपधारय । कर्तरि निष्ठा ॥ १२ ॥ १३ ॥

१२ ] ति० टी०—लङ्कासमीपतस्तत्समीपं यावत्सेतुबन्धः कृत एव सर्वं सैन्यं तीर्णमेवास्माभिर्जितं चेत्युपधारय निश्चिनु । तथानिश्चये हेतुमाह—तथा हीति । हि यतस्तादृशशौर्यवन्तो हरय इमे दृश्यन्ते, यतस्ते कामरूपिणः ॥ १२ ॥

रा० टी०—यावत् यस्मिन्काले लङ्कासमीपतः सेतुबन्धः तस्मिन् काले एव सर्वं सैन्यं तीर्णं जितं रावणकर्मकजयविशिष्टं चेत्युपधारय निश्चिनु हि यतः तथा तरणादियोग्याः हरयः सन्तीति शेषः । सार्धश्लोक एकान्वयी ॥१२॥१३॥

गो० टी०—तरणमात्रेण जयित्वे हेतुमाह—इमे हीति । अर्धमेकं वाक्यम् ॥ १४ ॥

१३ ] ति० टी०—तत्तस्माद्विक्लवां सर्वार्थनाशनीं बुद्धिमवलम्ब्यालम् हि यतः शौर्यापकर्षणस्तन्नाशकः ॥ १३ ॥

रा० टी०—तदिति । हि यतः शोकः शौर्यापकर्षणः शूरत्वविघातकः तत्तस्माद्धेतोः विक्लवां शोकव्याप्तां बुद्धिमलं त्यजेत्यर्थः ॥ १४ ॥

गो० टी०—उपसंहरति—तदिति । तत् उक्तरीत्या शोकनिमित्तासंभवात् विक्लवा शोकपरवशा अत एव सर्वार्थनाशिनी बुद्धिः अलं मा भूत् । अलं भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः । तत्र हेतुमाह—पुरुषस्येति । शौर्यापकर्षणः शौर्यनाशनः ॥ १५ ॥

१४ ] ति० टी०—मनुष्येण तु शौटीर्यं तद्युक्तं यत्कार्यं कर्तुं योग्यं तदेवावलम्ब्यताम् । अवलम्बयितुमुचितमित्यर्थः । यतः सत्वरं क्रियमाणं तत्कर्तुरलंकरणायैव भवति फलसाधनाय समर्थं भवति ॥ १४ ॥

रा० टी०—यदिति । यस्मात् सत्वरं सवेगं तत् शौण्डीर्यं शूरत्वं कर्तुरलंकरणाय भवति अतो मनुष्येण यत् शौण्डीर्यं तदवलम्ब्यत इति भूषणपाठः ॥ १५ ॥

गो० टी०—न केवलं शोकत्यागः सत्त्वावलम्बनं च कार्यं

१ बध्येत गो. पाठः । २ त्विति गो. पाठः । ३ सेतुर्बद्ध इति गो. पाठः । ४ वै इति गो. पाठः । ५ इमे इति गो. पाठः । ६ शूरा इति गो. पाठः । ७ बुद्ध्वा बुद्धिरिति गो. पाठः । ८ नाशिनीमिति गो. रा. पाठः । ९ शौण्डीर्यमवलम्बनेति गो. शौण्डीर्यमिति रा. पाठः । १० अर्धमेतत् गो. नास्ति ।

अस्मिन्काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा । शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् ॥
विनष्टे वा प्रनष्टे वा शोकः सर्वार्थनाशनः ॥ १५ ॥
तत्त्वं बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः । मद्विधैः सचिवैः सार्धमरिं जेतुं समर्हसि ॥ १६ ॥
नहि पश्याम्यहं कंचित्त्रिषु लोकेषु राघव । गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ १७ ॥
वानरेषु समासक्तं न ते कार्यं विपत्स्यते । अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ॥ १८ ॥
तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते । निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति ॥ १९ ॥
लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः । सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ॥ २० ॥
लङ्घिते तत्र तैः [3]सैन्यैर्जितमित्येव निश्चिनु । सर्वं तीर्णं च मे सैन्यं जितमित्यवधार्यताम् ॥ २१ ॥

मित्याह—यस्त्विति । शौण्डीर्यं शौर्यम् । "शौण्डी, गर्वे" इति धातोरौणादिक ईरन्प्रत्ययः शौण्डीरश्शूरः अस्य भावः शौण्डीर्यं तत् अवलम्बता अवलम्बमानेन । शौर्यप्रधानेनेत्यर्थः । मनुष्येण पुरुषेण । यत्कार्यं संपाद्यं तत्सत्त्वं धैर्यम् बलं वा । तेजसा पराक्रमेण सह अस्मिन्काले आतिष्ठ अवलम्बस्व ॥१६॥

१५ ] ति० टी०—अतो हे महाप्राज्ञ, त्वं तेजसा सह सत्त्वं गुणमातिष्ठ । विनष्टे सीतावददर्शनं गते प्रनष्टे दशरथवत्सर्वथादर्शनं गते ॥ १५ ॥

रा० टी०—अस्मिन्निति । हि यतः त्वद्विधानां विनष्टादिविषयकः शोकः सर्वार्थनाशनः अतः तेजसोपलक्षितस्त्वं सत्त्वं धैर्यम् आतिष्ठ कुरु तत्र विनष्टो विध्वस्तः प्रनष्टोऽदर्शनं प्राप्त इति बोध्यम् । सार्धश्लोकः एकान्वयी ॥ १६ ॥

गो० टी०—ननु नायं शोकः सागरतरणादिनिमित्तकः किं तु सीतानवलोकनादिनिमित्त इत्यत्राह—शूराणामिति ॥ विनष्टे अन्तर्हिते । "णश, अदर्शने" इति धातोर्निष्ठा ॥ १७ ॥

१६ ] ति० टी०—उपसंहरति—तदिति ॥ १६ ॥

रा० टी०—तदिति । तदुक्तहेतोः बुद्धिमतां श्रेष्ठस्त्वं सचिवैः सार्धम् अरिं जेतुमिहास्मिन् समये समर्हसि ॥ १७ ॥

गो० टी०—पुनश्च रामं प्रोत्साहयति—त्वमिति । इह इदानीम् ॥ १८ ॥

१७ ] ति० टी०—जयेषु पुष्कलं ते सामर्थ्यमस्तीत्याह—नहीति । तिष्ठेत्स्थातुं शक्नुयात् ॥ १७ ॥

रा० टी०—नहीति । गृहीतधनुषस्ते तवाभिमुखः सन् रणे यस्तिष्ठेत् त्वां जयेदित्यर्थः तं त्रिषु ऊर्ध्वाऽधोमध्यरूपेषु लोकेषु नैव पश्यामि ॥ १८ ॥

गो०टी०—न हीति । न हि तिष्ठेत् स्थातुं न शक्नुयात्॥१९॥

१८ ] ति० टी०—सहायसंपत्त्यापि जयं निश्चिन्वित्याह—वानरेष्विति । वानरेषु महाबलेष्वस्मादृशेषु समासक्तं कर्तव्यत्वेन संबद्धं कार्यं न विपत्स्यते न नङ्क्ष्यति ॥ १८ ॥

रा० टी०—वानरेष्विति । वानरेषु समासक्तं तत्कर्तव्यत्वेन स्थितं ते कार्यं न विपत्स्यते विनङ्क्ष्यति अतः सीताम् अचिराद्द्रक्ष्यसे ॥ १९ ॥

गो० टी०—वानरेष्विति । वानरेषु समासक्तम् वानरमूलमित्यर्थः । न विपत्स्यते न विनङ्क्ष्यति ॥ २० ॥

१९ ] ति० टी०—तदिति । शोकमालम्ब्यालम् शोकमालम्बस्वेत्यर्थः । क्रोधमालम्बेति यथाप्राप्तम् शत्रुविषयकमित्यर्थः । अन्वयव्यतिरेकाभ्यां शत्रुविषये कोप आवश्यक इत्याह—निश्चेष्टा इति । मन्दाः शत्रुविषये कोपहीनाः क्षत्रिया निश्चेष्टा भवन्ति । शत्रुकृतबन्धनादिनेति शेषः । चण्डस्य उचितकोपस्य सर्वे बिभ्यति ॥ १९ ॥

रा० टी०—तदिति । यतः निश्चेष्टाः उचितक्रोधहेतुकव्यापाररहिताः क्षत्रियाः मन्दाः भवन्ति चण्डस्य उचितक्रोधविशिष्टस्य क्षत्रियस्य तु सर्वे बिभ्यति तत्तस्मात् अलमत्यन्तं शोकमालम्ब्य विद्यमानस्त्वं क्रोधमालम्ब स्वीकुरु ॥ २० ॥

गो०टी०—उपसंहरति—तदिति । आलम्ब्यालम् । नालम्बस्वेत्यर्थः । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययः । क्रोधस्यालम्ब्यत्वे हेतुमाह—निश्चेष्टा इति । निश्चेष्टाः निरुद्योगाः क्षत्रियाः मन्दाः मन्दभाग्याः । चण्डस्य चण्डात् चण्डस्त्वत्यन्तकोपनः' इत्यमरः ॥ २१ ॥

२० ] ति० टी०—अस्माभिः सह नदीपतेर्लङ्घनार्थं लङ्घनं हेतुमस्माभिरुपेतः सन्सूक्ष्मबुद्धिस्त्वं विचारय ॥ २० ॥

रा० टी०—लङ्घनार्थमिति । अस्माभिरुपेतो युक्तः सूक्ष्मबुद्धिस्त्वं समुद्रस्य लङ्घनोपायं विचारय ॥ २१ ॥

गो० टी०—एवं सेतुबन्धेन सर्वार्थसिद्धेः शोको न कार्य इत्युक्त्वा सेतुबन्धोपायो विचार्यतामित्याह—लङ्घनार्थमिति । लङ्घनार्थं लङ्घनहेतुम् अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धनुश्शास्त्रे वस्तुहेतुनिवृत्तिषु । इति वैजयन्ती ॥ २२ ॥

२१ ] ति० टी०—सर्वं तीर्णं जितमिति चावधार्यतामवधारय । तत्र सागरे लङ्घिते सति तैर्मदीयैः सैन्यैर्जितमिति निश्चिनु । पाठान्तरे समुद्रे लङ्घिते तैर्वानरैस्तस्य रावणस्य सैन्यं जितमिति निश्चिन्वित्यर्थः ॥ २१ ॥

रा० टी०—लङ्घित इति । तत्र तस्मिन्सागरे लङ्घिते सति तैः मत्सैन्यैः सैन्यं रावणसेना जितमित्येव निश्चिनु

१ त्वं त्विति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ सैन्यमिति रा. पाठः । ४ उपपारयेति गो. रा. पाठः ।

इमे हि हरयः शूराः समरे कामरूपिणः । तानरीन्विधमिष्यन्ति शिलापादपवृष्टिभिः ॥ २२ ॥
कथंचित्परिपश्यामि लङ्घितं वरुणालयम् । हतमित्येव तं मन्ये युद्धे शत्रुनिबर्हण ॥ २३ ॥
किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् । निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ।

सुग्रीववचःश्रवणानन्तरं रामेण लङ्कनविषये पृष्टो हनुमांस्तत्सर्वं वृत्तं कथयति ।

सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवत्[3] । प्रतिजग्राह काकुत्स्थो हनूमन्तमथाब्रवीत् ॥ १ ॥
तपसा सेतुबन्धेन सागरोच्छोषणेन च । सर्वथापि[4] समर्थोऽस्मि सागरस्यास्य लङ्घने ॥ २ ॥
कति दुर्गाणि दुर्गाया लङ्कायास्तद्ब्रवीष्व मे । ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥ ३ ॥

---

अतः तीर्णं मे सैन्यं जितं जयाश्रय एव इत्यवधारय निश्चिनु ॥ २२ ॥

गो०टी०–सेतुबन्धोपाये निर्णीते ततः परं सुकरमित्याह–**सर्वमिति** । अर्धमेकं वाक्यम् ॥ २३ ॥

२२ ] ति० टी०–तेषु जेतृत्वशक्तिमाह–**इमे हीति** ॥२२॥

रा० टी०–**इमे इति** । इमे हरयः शिलापादपवृष्टिभिः अरीन् विधमिष्यन्ति ॥ २३ ॥

गो० टी०–उक्तेर्थे पूर्वोक्तं हेतुमनुवदति–**इमे हीति** । विधमिष्यन्ति धक्ष्यन्ति ॥ २४ ॥

२३ ] ति० टी०–कथंचित्केनाप्युपायेन । वरुणालयं लङ्घितमेव पश्यामि ॥ २३ ॥

रा० टी०–**कथञ्चिदिति** । कथञ्चित् लङ्घितं वरुणालयं यदि परिपश्यामि तदा तं रावणं हतमित्येव मन्ये ॥ २४ ॥

गो० टी०–मा भूत्सेतुबन्धः प्रकारान्तरेणापि समुद्रं तीर्त्वा शत्रून् हनिष्यामीत्याह–**कथंचिदिति** । कथंचित् केनाप्युपायेन । नन्दतीति नन्दनः नन्द्यादित्वात् ल्युः समित्यां युद्धे नन्दन युद्धोत्सुकेति यावत् ॥ २५ ॥

२४ ] ति० टी०–निमित्तमेवाह–**मन इति** ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वितीयः सर्गः ॥ २ ॥

रा० टी०–**किमिति** । यतः निमित्तानि सुशकुनान् पश्यामि मे मनश्च संप्रहृष्यति अतः भवान् सर्वथा विजयी अतः बहुधा उक्त्वा किं न किमपीत्यर्थः ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्वितीयः सर्गः ॥ २ ॥

गो० टी०–निमित्तानुसारेणापि भवतो जयसिद्धिरित्याह–**किमुक्त्वेति** । सर्वथा सेतुं बद्ध्वा अबद्ध्वा वा । निमित्तानि नेत्रस्फुरणादीनि । मनो मे संप्रहृष्यतीति मनःसंप्रहर्षश्च कार्यसिद्धिनिमित्तमिति भावः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डे द्वितीयः सर्गः ॥ २ ॥

१ ] ति० टी०–**सुग्रीवस्येति** । परमार्थवत्परमार्थभूतम् स्वार्थे वतिः श्रुत्वा प्रतिजग्राहाङ्गीचकार । अथ तदङ्गीकारानन्तरम् ॥ १ ॥

रा० टी०–सुग्रीववचनश्रवणानन्तरकालिकं हनूमन्तं प्रति रामवचनमाह–**सुग्रीवस्येत्यादिभिः** । हेतुमत् सकारणं परमार्थवत् परमार्थबोधकं सुग्रीवस्य वचः श्रुत्वा प्रतिजग्राह कर्तव्यत्वेन स्वीचकार अथानन्तरं हनूमन्तमब्रवीत् ॥ १ ॥

गो० टी०–एवं मानुषभावनानुसारेण समुद्रस्य दुस्तरत्वेन शोकापन्नोपि सुहृदुपदेशेन प्रतिष्ठापितधैर्यो रामः नीतिशास्त्रानुसारेण संहार्यशत्रुदुर्गस्वरूपशोधनाय पृच्छति–**सुग्रीवस्येत्यादिना** । सारग्राहित्वमाह–**परमार्थविदिति** । हेतुमद्युक्तियुक्तम् वचः श्रुत्वा प्रतिजग्राह ॥ १ ॥

२ ] ति० टी०–तपसा तपःकार्यसंकल्पसिद्ध्या, अतएव सकलस्वपुरवर्तिप्राणिनां ब्रह्मलोकनयनं वक्ष्यमाणं संगच्छते । सेतुबन्धनेन गङ्गायां गाङ्गेयेन शरैरिव सागरोच्छोषणेन । दिव्यास्त्रबलत इति शेषः । सर्वथा सर्वप्रकारस्य लङ्घनोपायस्य विद्यमानत्वादित्याशयः ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–**तपसेत्यादिभिः** । तपसा अवलोकनमात्रेण सेतुबन्धेन सागरोच्छोषणेन च अस्य सागरस्य लङ्घने सर्वथा समर्थोऽस्मि ॥ २ ॥

गो० टी०–**तपसेति** । तपसा तपःप्रभावेन । तरसेति पाठे तरसा वेगेन । लङ्घने तरणे ॥ २ ॥

३ ] ति० टी०–दुर्गाया गन्तुमशक्यायाः कति दुर्गाणि

---

१ संतरिष्यामस्ते वयमिति गो.पाठः। २ समितिनन्दनेति गो.पाठः। ३ परमार्थविदिति गो.पाठः। ४ स्विति गो.पाठः। ५ ब्रूहि तानीति गो.पाठः।

बलस्य परिमाणं च द्वारदुर्गक्रियामपि । गुप्तिकर्म च लङ्काया रक्षसां सदनानि च ॥ ४ ॥
यथासुखं यथावच्च लङ्कायामसि दृष्टवान् । सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥ ५ ॥
श्रुत्वा रामस्य वचनं हनूमान्मारुतात्मजः । वाक्यं वाक्यविदां श्रेष्ठो रामं पुनरथाब्रवीत् ॥ ६ ॥
श्रूयतां सर्वमाख्यास्ये दुर्गकर्म विधानतः । गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ॥ ७ ॥
राक्षसाश्च यथा स्निग्धा रावणस्य च तेजसा । परां समृद्धिं लङ्कायाः सागरस्य च भीमताम् ॥ ८ ॥
विभागं च बलौघस्य निर्देशं वाहनस्य च । एवमुक्त्वा कपिश्रेष्ठः कथयामास तत्त्ववित् ॥ ९ ॥
हृष्टप्रमुदिता लङ्का मत्तद्विपसमाकुला । महती रथसंपूर्णा रक्षोगणनिषेविता ॥ १० ॥
दृढबद्धकपाटानि महापरिघवन्ति च । चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च ॥ ११ ॥

जलगिरिवनादिनानाप्रकारदुर्गेषु कतिप्रकाराणि दुर्गाणि सन्तीत्यर्थः । दर्शनादिवापरोक्षानुभवादिव ॥ ३ ॥

रा० टी०–कतीति । दुर्गाया दुर्गमाया लङ्काया दुर्गाणि कति सन्तीति शेषः तत्पृष्टं सर्वं दर्शनात् अवलोकनादिव ज्ञातुमिच्छामि अतः मे मह्यं तद्ब्रवीष्व ॥ ३ ॥

गो० टी०–एवमुपायचिन्तनेन समुद्रस्य दुस्तरत्वमविगणय्य दुर्गस्वरूपं पृच्छति–कतीति । दुर्गायाः दुष्प्रापायाः लङ्कायाः कति दुर्गाणि कति दुर्गप्राकाराः सन्तीत्यर्थः । जलगिरिस्थलात्मकानि दुर्गाणि । तत् दुर्गविशेषतत्त्वं मे ब्रूहि । पूर्वमेवोक्तमित्यत्राह–ज्ञातुमिति । तत्पूर्वं श्रुतं सर्वम् दर्शनादिव प्रत्यक्षत इव विशदं ज्ञातुमिच्छामि । बलस्य सेनायाः । परिमाणम् इयत्ताम् । द्वारदुर्गक्रियां द्वारेषु दुर्गक्रियाम् कीलखननजलौघप्लवनकरणादिभिः दुर्गमत्वकरणम् । गुप्तिकर्म प्राकारपरिघादिनिर्माणम् । सदनानि गृहाणि ज्ञातुमिच्छामीति पूर्वेणान्वयः ॥ ३ ॥ ४ ॥

४ ] ति० टी०–परिमाणं संख्यापरिच्छेदम्, द्वारदुर्गक्रियां द्वाराणां दुष्प्रवेशत्वसंपादनम्, गुप्तिकर्म प्राकारादिषु यन्त्रादिस्थापनरूपम् । 'गुप्तिक्रमम्' इति पाठे प्राकारादिभी रक्षाक्रममित्यर्थः ॥ ४ ॥

रा० टी०–बलस्येति । बलस्य सैन्यस्य परिमाणमियत्तां द्वारदुर्गक्रियां द्वाराणां दुर्गाय दुष्प्रवेशाय क्रियां परिखादिविशेषनिर्मितिं लंकायाः गुप्तिकर्म रक्षणहेतुकप्राकारादिषु यन्त्रादिस्थापनं रक्षसां सदनानि च यथासुखं यथावल्लङ्कायां दृष्टवान् कुशलः तद्वर्णनादौ निपुणश्च त्वं सर्वमाचक्ष्व कथय । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

५ ] ति० टी०–यथासुखं यथावद्दृष्टवानसि तत्सर्वं तत्त्वेनाचक्ष्व सर्वथा कुशलो ह्यसि । यथावद्दृष्टप्रतिपादने इति शेषः॥५॥

गो० टी०–यथेति । यथासुखं निश्शङ्कम् । यथावत्तत्त्वेन लङ्कायां पूर्वोक्तं सर्वं दृष्टवानसि । तत्त्वेन दृष्टप्रकारेणैव आचक्ष्व व्यक्तं वद । सर्वथा द्रष्टुं वक्तुं च ॥ ५ ॥

६ ] ति० टी०–श्रुत्वाथाब्रवीदित्यन्वयः ॥ ६ ॥

रा० टी० श्रुत्वेति । हनुमान् अब्रवीत् ॥ ६ ॥

गो० टी०–श्रुत्वेति । अथाब्रवीत् [illegible] नन्तरमप्रश्नकालमित्यर्थः ॥ ६ ॥

७] ति० टी०–दुर्गकर्मविधानतो दुर्गसंपादककर्मविधानेन यथा गुप्ता बलैर्यथा रक्षिता च तथाख्यास्ये ॥ ७ ॥

८ ] ति० टी०–रावणस्य तेजसा संपादितां परां समृद्धिमाख्यास्ये इत्येवं क्रमेणान्वयः ॥ ८ ॥

रा० टी०–तदाकारमाह—श्रूयतामित्यादिभिः । पुरी लङ्का यथा गुप्ता परिरक्षिता यथा च बलैः रक्षिता यथा च दुर्गकर्म यथा च रावणस्य तेजसा राक्षसाः स्निग्धाः संतोषिताः तथा लङ्कायाः समृद्धिं च सागरस्य भीमतां च बलौघस्य पदातिसमूहस्य वाहनस्य च विभागं यथादेशं संस्थितिं निर्देशं संख्यां च आख्यास्ये त्वया सर्वं श्रूयताम् एवमुक्त्वा कपिश्रेष्ठः कथयामास । श्लोकत्रयमेकान्वयि ॥ ७–९ ॥

गो० टी०–श्रूयतामिति । दुर्गकर्मविधानतः दुर्गकर्म प्राकारपरिखाखननादि । तद्विधानतः तन्निर्माणेन गुप्तेति संबन्धः । राक्षसाः स्निग्धाः स्वामिनि भक्ताः । तेजसा संपादितामिति शेषः । विभागं तत्र तत्र विभज्य स्थापनम् । बलौघस्य चतुरङ्गबलसमूहस्य । निर्दिश्यते इयत्तया परिच्छिद्यतेऽनेनेति निर्देशः संख्या ताम् ॥ ७ ॥ ८ ॥

९–१० ] ति० टी०–बलौघस्य पादातसमूहस्य, वाहनस्य गजाश्वरथलक्षणस्य, निर्देशं संख्यापरिच्छेदम् ॥ ९ ॥ १० ॥

रा० टी०–कथनप्रकारमाह—हृष्टेत्यादिभिः । हृष्टैः हर्षविशिष्टैः राक्षसैः प्रमुदिता प्राप्तप्रमोदा मत्तद्विपैः समाकुला व्याप्ता रथैः संपूर्णा लङ्काऽस्तीति शेषः ॥ १० ॥

गो० टी०–एवमित्यर्धम् । एवमुक्त्वा उक्तरीत्या वक्ष्यमाणं संग्रहेण प्रतिज्ञाय ॥ ९ ॥

गो० टी०–हृष्टप्रमुदितेति । हृष्टप्रमुदिता अत्यन्तहृष्टजना ॥ १० ॥

११ ] ति० टी०–परिघवन्त्यर्गलवन्ति । 'परिघो योगभेदे स्यान्मुद्गरेऽर्गलघातयोः' इति विश्वः । ईदृशानि द्वाराणि सन्तीत्यन्वयः ॥ ११ ॥

१ अब्रवीति रा. पाठः । २ तत्त्वत इति गो. पाठः । ३ समाकुला इति गो. पाठः । ४ कवाटानीति गो. पाठः ।

तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च । आगतं प्रतिसैन्यं तैस्तत्र प्रतिनिवार्यते ॥ १२ ॥
द्वारेषु संस्कृता भीमाः कालायसमयाः शिताः । शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः ॥ १३ ॥
सौवर्णस्तु महांस्तस्याः प्राकारो दुष्प्रधर्षणः । मणिविद्रुमवैदूर्यमुक्ताविरचितान्तरः ॥ १४ ॥
सर्वतश्च महाभीमाः शीततोया महाशुभाः । अगाधा ग्राहवत्यश्च परिखा मीनसेविताः ॥ १५ ॥
द्वारेषु तासां चत्वारः संक्रमाः परमायताः । यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपङ्क्तिभिः ॥ १६ ॥
त्रायन्ते संक्रमास्तत्र परसैन्यागते सति । यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः ॥ १७ ॥

रा० टी०–दृढेति । दृढं बद्धाः कपाटाः येषु महान्तः परिघाः सन्ति येषु तानि विपुलानि विस्तीर्णानि सुमहान्ति अतिप्रशंसनीयानि अस्याः लङ्कायाः चत्वारि द्वाराणि सन्तीति शेषः 'परिघो योगभेदे स्यात् मुद्गरेऽर्गलघातयोः' इति विश्वः ॥ ११ ॥

गो० टी०–दृढेति । आयसकीलादिभिर्दृढघटितकवाटानि महापरिघवन्ति महार्गलवन्ति । 'अर्गले कावके वंशे योगे प्राकारगोपुरे । अस्त्रे घटे मुद्गरे च परिघः परिपठ्यते' इति निघण्टुः । सुमहान्ति उन्नतानि ॥ ११ ॥

१२ ] ति० टी०–तत्र तेषु द्वारेषु । इषवश्चोपलाश्च तत्प्रक्षेपकयन्त्राणि । तैर्द्वारैरागतं परसैन्यं तत्र तेषु द्वारेषु प्रतिनिवार्यते ॥ १२ ॥

रा० टी०–तत्रेति । तत्र तेषु द्वारेषु बलवन्ति पुष्टानि महान्ति विशालानि इषवो बाणाः उपलाः प्रक्षेपणप्रस्तराः यन्त्राणिसन्तीतिशेषः । तत्प्रयोजनमाह—तैरिषुप्रभृतिभिः आगतं प्रतिसैन्यं शत्रुसेना प्रतिनिवार्यते ॥ १२ ॥

गो० टी०–तत्रेति । तत्र तेषु द्वारेषु । इषूपलयन्त्राणि शरशिलाक्षेपकयन्त्राणि । बलवन्ति दृढाणि महान्ति विपुलानि सन्तीति शेषः । तैः यन्त्रैः तत्र द्वारेषु प्रतिहन्यते प्रतिबध्यते ॥ १२ ॥

१३ ] ति० टी०–उक्तयन्त्रैः संस्कृताः सज्जाः, कालायसमया अयःसारमयाः । शतमेकप्रयोगेण घ्नन्तीति शतघ्न्यश्चतुर्हस्तप्रमाणलोहकण्टकयुता मुद्गरविशेषाः । शतघ्न्यः । 'शतघ्नी च चतुर्हस्ता लोहकण्टकिनी गदा' इति वैजयन्ती ॥ १३ ॥

रा० टी०–द्वारेष्विति । संस्कृताः उचितसंस्कारविशिष्टाः भीमाः भयङ्कराः रक्षसां गणैः रचिताः शतशः शतघ्न्यः सन्तीति शेषः ॥ १३ ॥

गो० टी०–द्वारेष्विति । संस्कृताः मर्जीकृताः । शिताः तीक्ष्णाः । कालायसमया अयस्सारमयाः । ङीबभाव आर्षः । "अनोश्मायस्सरसां जातिसंज्ञयोः" इति समासान्तः । शतं घ्नन्तीति शतघ्न्यः मुद्गरविशेषाः । अमनुष्यकर्तृके च" इति टः । शतशः बहुशः रचिताः स्थापिताः ॥ १३ ॥

१४ ] ति० टी०–प्राकारो रत्नखचित इत्याह–मणीति १४

रा० टी०–सौवर्ण इति । मण्यादिभिः विरचितानि अन्तराणि मध्यानि यस्य सः दुष्प्रधर्षणः धर्षयितुमशक्यः सौवर्णः सुवर्णमयः तस्याः प्राकारोऽस्तीति शेषः ॥ १४ ॥

गो० टी०–सौवर्ण इति । तस्याः प्राकारो दुष्प्रधर्षणः दुरारोह इत्यर्थः । मणयः पद्मरागाः ॥ १४ ॥

१५ ] ति० टी०–परिखाः पुरोपान्तखाताः ॥ १५ ॥

रा० टी०–सर्वत इति । महाभीमाः अतिभयङ्कराः सीतानि तोयानि यासु महांति अशुभानि रिपूणामभङ्गलानि विनाशा इत्यर्थः यासु अगाधाः तलस्पर्शरहिताः सर्वतः पुरस्य चतुर्दिक्षु परिखाः खाताः सन्तीति शेषः ॥ १५ ॥

गो० टी०–सर्वत इति । सर्वतः प्राकारमभितः परिखाः सन्तीति शेषः । शीततोयत्वेन दुष्प्रवेशत्वमुक्तम् ॥ १५ ॥

१६ ] ति० टी०–द्वारेषु चतुर्षु तासां परिखाणां मध्ये संक्रमा मञ्चरूपेण बद्धाः परमायता अतिविस्तृतमार्गाः गृहपङ्क्तिभिः प्राकारशिरोगृहपङ्क्तिभिः । उपेता इत्यनुकर्षः ॥ १६

रा० टी०–द्वारेष्विति । द्वारेषु द्वारचतुष्टयसमीपेषु तासां परिखाणां मध्ये परमायताः अतिविस्तृताः बहुभिर्महद्भिर्यन्त्रैः शतघ्न्यादिभिर्गृहपङ्क्तिभिश्च उपेताः युक्ताः चत्वारः संक्रमाः निर्गमप्रवेशार्थं मञ्चरूपेण बद्धाः सन्तीति शेषः ॥ १६ ॥

गो० टी०–द्वारेष्विति । द्वारेषु द्वारसमीपप्रदेशेषु सामीप्ये सप्तमी । तासां परिखानां संबन्धिनः परिखोपरिक्रमा इत्यर्थः । संक्रमाः दारुफलकनिर्मितसंचारमार्गाः । संक्रमः क्रमणे सम्यक् द्वारसंचारयन्त्रक इति विश्वः । परमायताः अतिविपुलाः । यन्त्रैरिति । यन्त्रैः संक्रमावकीर्यकैः । महद्भिरिति यन्त्रविशेषणम् । गृहपङ्क्तिभिः रक्षिजनावासस्थानपङ्क्तिभिः उपेताः । सन्तीति शेषः ॥ १६ ॥

१७ ] ति० टी०–तत्र तेषु संक्रमेषु परसैन्यागते सति ते संक्रमास्तैर्यन्त्रैः प्राकारोपरि प्रतिष्ठापितैर्यन्त्रैस्त्रायन्ते रक्ष्यन्ते । 'ह्रियन्ते' इति पाठे ते संक्रमा नाश्यन्त इत्यर्थः । तैर्यन्त्रैः तासु परिखासु तत्समीपं प्राप्तानि परसैन्यानि समन्ततोऽवकीर्यन्ते क्षिप्यन्ते ॥ १७ ॥

रा० टी०–यन्त्रप्रयोजनमाह—त्रायन्त इति । तैः संक्रमस्थैर्यन्त्रैः समन्ततः परिखासु अवकीर्यन्ते प्रक्षिप्यन्ते परसैन्यानीति शेषः अत एव परसैन्यागमे सति संक्रमात्रायन्ते पुरं रक्षन्ते ॥ १७ ॥

१ परसैन्यं तु तत्र तैः प्रतिहन्यत इति गो. पाठः । २ तोयवहा इति गो. पाठः । ३ गमे इति गो. रा. पाठः ।

एकस्त्वकम्प्यो बलवान्संक्रमः सुमहादृढः । काञ्चनैर्बहुभिः स्तम्भैर्वेदिकाभिश्च शोभितः ॥ १८ ॥
स्वयं प्रकृतिमापन्नो युयुत्सू राम रावणः । उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥ १९ ॥
लङ्कापुनर्निरालम्बा देवदुर्गा भयावहा । नादेयं पार्वतं चान्यं[1] कृत्रिमं च चतुर्विधम् ॥ २० ॥
स्थिता पारे समुद्रस्य दूरपारस्य राघव । नौपथश्चापि[2] नास्त्यत्र [3]निरुद्देशश्च सर्वशः ॥ २१ ॥
शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा । वाजिवारणसंपूर्णा लङ्का परमदुर्जया ॥ २२ ॥
परिखाश्च शतघ्न्यश्च यन्त्राणि विविधानि च । शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥ २३ ॥

---

गो० टी०–संक्रमाणामुपयोगमाह–त्रायन्त इति । तत्र द्वारप्रदेशेषु । परसैन्यागमे सति संक्रमाः त्रायन्ते । पुरीमिति शेषः । कथमित्यत्राह–यन्त्रैरिति । यन्त्रैः संक्रमफलकविक्षेपयन्त्रैः परिखासु परिखोपरि समन्ततः अवकीर्यन्ते क्षिप्यन्ते । सर्वथा परिखाजलोपरि फलका निक्षिप्यन्ते । शत्रुसैन्यागमे तु ता उपक्षिप्यन्ते । तेन दुर्गपरिखाजलेन प्राकारसमीपगमनं न शक्यत इति श्लोकतात्पर्यम् ॥ १७ ॥

१८ ] ति० टी०–एको मुख्यः संक्रमः प्राकारमध्यवर्ती साक्षात्पुरप्रवेशसाधनभूतोऽकम्प्यो दुर्भेदः । तत्र हेतुः–बलवान्बहुलबलकृतरक्षः । दृढो दृढप्रतिष्ठानः । तदेव दर्शयति—काञ्चनैरिति ॥ १८ ॥

रा० टी०–एक इति । बलवान् बहुसेनाविशिष्टः सुमहादृढः शैथिल्यसंसर्गरहित इत्यर्थः अत एव अकम्प्यः परैः कम्पयितुमशक्यः काञ्चनैः स्तम्भैर्वेदिकाभिश्च शोभितः एकः संक्रमोऽस्तीति शेषः एतेन तेनैव रावणो निर्गच्छतीति प्रविशति चेति सूचितम् ॥ १८ ॥

गो० टी०–एक इति । तेषु संक्रमेषु । एकः उत्तरद्वारस्थः बलवान् स्थौल्यवान् । सुमहादृढः अत्यन्तदृढसंघटनः अत एवाकम्प्यः । स्तम्भैः संक्रमाधारार्थं परिखासु स्थापितैः स्तम्भैः वेदिकाभिः रक्षिजनाधारार्थाभिर्वितर्दिकाभिः ॥ १८ ॥

१९ ] ति० टी०–एवं पुरस्वरूपमुक्त्वा पुरपतेः स्वरूपमाह—स्वयमिति । युयुत्सुरपि प्रकृतिमापन्नोऽक्षुब्धान्तःकरणः । अतिधीर इति यावत् । बलानामनुदर्शने उत्थित उद्युक्तः । अप्रमत्तः सावधानश्च ॥ १९ ॥

रा० टी०–पुरस्वरूपं संवर्ण्य तदधिपतिस्वरूपमाह—स्वयमिति । प्रकृतिं स्वस्वभावम् आपन्नः मद्यपानादावपि स्वभावपरिणामरहित इत्यर्थः युयुत्सुः नित्यं योद्धुमिच्छुः रावणः बलानां सैन्यानामनुदर्शनेऽप्रमत्तः अनवधानतारहितः सन् स्वयमेव उत्थितो भवतीति शेषः ॥ १९ ॥

गो० टी०–स्वयमिति । प्रकृतिसंपन्नः द्यूतादिव्यसनरूपविकाररहितः अप्रमत्तः सावधानः बलानां सैन्यानाम् अनुदर्शने प्रतिदिनमवलोकननिमित्तम् उत्थितः जागरूकः स्वयं युयुत्सुः सर्वदा युद्धोद्यतः । तिष्ठतीति शेषः ॥ १९ ॥

२० ] ति० टी०–निरालम्बातिश्लक्ष्णमहोच्चगिरिशिखरप्रतिष्ठितत्वेनारोहणालम्बनरहिता देवदुर्गा देवनिर्मितदुर्गरूपिणी, अतएव भयावहा । नादेयं दुर्गम् । तत्पर्वतसंभूतनद्याचतुर्दिक्ष्वावरणात् । पार्वतं त्रिकूटरूपम् । कृत्रिमं प्राकाररूपं चतुष्प्राकारवत्त्वेन प्राकाररूपम् । चतुर्विधं दुर्गमस्तीति शेषः ॥ २० ॥

रा० टी०–लङ्केति । निरालम्बा अतिचिक्कणात्युच्चशैलशृङ्गप्रतिष्ठितात्वेन आरोहणालम्बहीना देवदुर्गा देवानामपि दुर्गमा भयावहा रिपुभयप्रापिका लङ्काऽस्तीति शेषः नादेयं चतुर्दिक्षु दुरवगाहनद्यावृतत्वात्तत्संबन्धि पार्वतं दुर्गमपर्वतखण्डमयत्वात्तत्संबन्धिवान्यं दुर्गमवनावृतत्वात् तत्संबन्धि कृत्रिमं निर्मितप्राकारवत्त्वेन राक्षसनिर्मितिविशिष्टं च चतुर्विधं दुर्गमस्तीति शेषः ॥ २० ॥

गो० टी०–लङ्केति । लङ्का पुनः लङ्का तु निरालम्बा टङ्कच्छेदमसृणीकृतत्रिकूटशिखरस्थितत्वादारोहणालम्बनरहितदेवदुर्गा देवैरपि दुष्प्रापा । लङ्का । नादेयादिरूपेण चतुर्विधं दुर्गं च चतुर्विधदुर्गप्राकारवतीत्यर्थः । नादेयं नद्यां भवम् जलदुर्गमित्यर्थः पार्वतं पर्वतस्थम् वनानां समूहो वन्या तत्संबन्धि वान्यम् कृत्रिमं क्रियया निर्वृत्तम् प्राकारपरिखादिमत् स्थलमित्यक्षरार्थः ॥ २० ॥

२१–२३ ] ति० टी०–तत्रान्यदप्याह—स्थितेति । दूरपारस्य दूरे पारं परतीरं यस्य नौपथो नौमार्गः अत्र समुद्रे सर्वशो निरुद्देशः प्रदेशविभागरहितः समुद्र इति शेषः 'निरादेशः' इति पाठे निरादेशः सर्वदिक्संचाररहितप्रदेशः ॥ २१–२३ ॥

रा० टी०–स्थितेति । दूरः पारः परतीरं यस्य तस्य समुद्रस्य पारे परतटे स्थिता लङ्काऽस्तीति शेषः अत्र समुद्रे नौपथः नौकामार्गो नास्ति अत एव सर्वशः निखिलसमुद्रप्रदेशे निरुद्देशः संदेशप्राप्तियत्नाभावोऽस्तीति शेषः ॥ २१ ॥

गो० टी०–स्थितेति । दूरे पारं यस्य सः दूरपारः तस्य विशालस्येत्यर्थः । पारे दक्षिणतीरे स्थिता अत्र समुद्रे नौपथः नौसंचारश्च नास्ति अत एव सर्वतः निरादेशश्च आदेशो वार्तासंचारः तद्रहितः अयं देश इत्यर्थः ॥ २१ ॥

रा० टी०–शैलेति । शैलाग्रे शैलशृङ्गे रचिता अत एव

---

१ चेति गो. पाठः । २ पथोऽपि चेति गो. पाठः । ३ निरादेशश्च सर्वत इति गो. पाठः ।

अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् । शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः ॥ २४ ॥
नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् । चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः ॥ २५ ॥
प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् । चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः ॥ २६ ॥
न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम् । रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः ॥ २७ ॥
शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः । यातुधाना दुराधर्षाः साग्रकोटिश्च रक्षसाम् ॥ २८ ॥
ते मया संक्रमा भग्नाः परिखाश्चावपूरिताः । दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः ॥ २९ ॥
[ बलैकदेशः क्षपितो राक्षसानां महात्मनाम् । ]
येन केन तु मार्गेण तराम वरुणालयम् । हतेति नगरी लङ्का वानरैरुपधार्यताम् ॥ ३० ॥

दुर्गा दुर्गमा अत एव परमदुर्जयः रिपुजयाभावो यस्याः सा लङ्कास्तीति शेषः ॥ २२ ॥

गो० टी०—वनगिरिदुर्गवत्त्वमाह—शैलाग्र इति ॥ २२ ॥

रा० टी०—परिखा इति । परिखादयः लङ्कां शोभयन्ति ॥ २३ ॥

गो० टी०— कृत्रिमदुर्गवत्त्वमाह—परिखा इति ॥ २३ ॥

२४ ] ति० टी०—शूलहस्ता एव न केवलम्, अपि तु खड्गाग्रयोधिनः खड्गैरग्रे युद्ध्यन्ते तादृशाः ॥ २४ ॥

रा० टी०—अयुतमिति । ये सर्वे दुराधर्षाः तेषां रक्षसामयुतम् अत्र लङ्कायां पूर्वद्वारसमाश्रितमस्तीति शेषः ॥ २४॥

गो० टी०—विभागं च बलौघस्येति रामप्रश्नस्योत्तरमाह—अयुतमिति । अत्र लङ्कायां सर्वे पूर्वद्वारस्थाः अयुतं दशसहस्रम् अग्रे सेनाग्रे युध्यन्त इत्यग्रयोधिनः खड्गैरग्रयोधिनः सर्वे अयुतसंख्याकाः । सर्वेऽपि तथाविधा इत्यर्थः ॥ २४ ॥

२५ ] ति० टी०—नियुतं लक्षम् । चतुरङ्गेण सैन्येनोपलक्षिता योधास्तत्रापि दक्षिणद्वारेऽपि सन्ति । अनुत्तमाः प्रशस्ताः ॥ २५ ॥

रा० टी०—नियुतमिति । चतुरङ्गेण सैन्येन उपलक्षिताः ये तत्र लङ्कायां योधाः तेषां रक्षसां नियुतम् अत्र अस्मिन् समये दक्षिणद्वारमाश्रितमस्तीति शेषः ॥ २५ ॥

गो० टी०—नियुतमिति । अत्र लङ्कायाम् । चतुरङ्गेण सैन्येन सह राक्षसां नियुतं दक्षिणद्वारमाश्रितम् । तत्र चतुरङ्गेषु योधाः पदातयः अनुत्तमाः अत्यन्तशूराः । भवन्तीत्यर्थः ॥ २५ ॥

२६ ] ति० टी०—प्रयुतं दशलक्षम ॥ २६ ॥

रा० टी०—प्रयुतमिति । ये सर्वे सर्वास्त्रकोविदाः तेषां रक्षसां प्रयुतं दशलक्षं पश्चिमद्वारमाश्रितम् ॥ २६ ॥

गो० टी०—प्रयुतमिति । सर्वे पश्चिमद्वारवासिनः । सर्वास्त्रकोविदाः समस्तास्त्रज्ञाः ॥ २६ ॥

२७ ] ति० टी०—कुलपुत्राः किंकराः । यद्वा योद्धृसत्कुले प्रसूताः ॥ २७ ॥

रा० टी०—न्यर्बुदमिति । ये कुलपुत्राः किङ्कराभिधा इत्यर्थः तेषां रक्षसां न्यर्बुदम् उत्तरद्वारमाश्रितमस्तीति शेषः ॥ २७ ॥

गो० टी०—न्यर्बुदमिति । अश्ववाहाश्चेति चकारेण गजवाहास्समुच्चीयन्ते कुलपुत्राः सत्कुलप्रसूताः विश्वसनीया इति यावत् । सुपूजिताः रावणेन बहुमताः [1] किंकरा इति । शेषः ॥ २७ ॥

२८ ] ति० टी०—मध्यमं स्कन्धं पुरमध्यसेनानिवेशस्थानम् । साग्रा कोटिः सपादकोटिः ॥ २८ ॥

रा० टी०—शतश इति । शतशः सहस्राणि यातुधानाः राक्षसविशेषाः रक्षसां साग्रकोटिः पादसहितकोटिश्च मध्यमं पुरमध्यवर्तिनं स्कन्धं सेनानिवेशप्रवेशमाश्रिताः ॥ २८ ॥

गो० टी०—शतश इति । अथेति कार्त्स्न्ये । शतशः सहस्राणि अनेकसहस्राणि दुराधर्षाः यातुधानाः राक्षसा मध्यमं स्कन्धं नगरमध्यमस्थानम् । आश्रिताः सर्वसंख्यामाह साग्रेति । रक्षसां साग्रकोटिः पूर्णकोटिः अत्र लङ्कायाम् । अस्तीति शेषः ॥ २८ ॥

२९ ] ति० टी०—यद्येवं दुर्गा लङ्का कथमस्मद्बलसाध्येति शङ्कां निराचष्टे—ते मयेति । ते संक्रमाः परिखामार्गा मया भग्नाः परिखाश्चावपूरिताः शिलेष्टकादिभिरिति शेषः । [2]तेन बलैकदेशक्षयोऽपि कृत इत्यर्थः ॥ २९ ॥

रा० टी०—ते इति । ते वर्णिताः संक्रमाः परिखास्थितमञ्चविशेषाः मया भग्नाः परिखाः अवपूरिताः मञ्चसामग्र्या पाषाणादिना च पूर्णतां प्रापिताः प्राकारा अवसादिता विध्वंसिताः ॥ २९ ॥

गो० टी०—एवं दुर्गप्राकारवर्णनेन लघूनां भीतिर्मा भूदिति स्वकृतं दर्शयति—ते मयेति । परिखा इत्यादावपि तच्छब्दोऽनुसंधेयः ॥ २९ ॥

३० ] ति० टी०—येन केन स्वानुगुणेनान्यतमेन समुद्रं [3]तराम । तत्रैवं सति वानरैः स्वयमेव लङ्का हतेत्युपधार्यतां निश्चीयताम् ॥ ३० ॥

रा० टी०—बलेति । राक्षसानां बलैकदेशः क्षपितः विनाशितः एतदर्धपाठः नभट्टसंमतः अत एव तेन बलैकदे-

१ अर्धमेतदधिकं गो. रा. पाठे । २ तेनेति गो. पाठः । ३ अवेति गो. पाठः ।

अङ्गदो द्विविदो मैन्दो जाम्बवान्पनसो नलः । नीलः सेनापतिश्चैव बलशेषेण किं तव ॥ ३१ ॥
प्लवमाना हि गत्वा तां रावणस्य महापुरीम् । सपर्वतवनां भित्त्वा सखातां च सतोरणाम् ॥
सप्राकारां सभवनामानयिष्यन्ति राघव ॥ ॥ ३२ ॥
एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् । मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।

हनुमद्वाक्यश्रवणोत्तरं कस्मिन्मुहूर्ते यात्रा कर्तव्येत्यादि च प्रश्नपूर्वकमेकं मुहूर्तं निश्चित्य शुभशकुनप्राप्तिं दर्शयति ।

श्रुत्वा हनूमतो वाक्यं यथावदनुपूर्वशः । ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ १ ॥
यन्निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः । क्षिप्रमेनां वधिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २ ॥

शक्योऽपि कृत इति तैरुक्तम् । अयं पृथक्—येनेति । येन केन भवदाज्ञापितेनेत्यर्थः मार्गेण वरुणालयम् अङ्गदादयो वयं तराम अतः वानरैरङ्गदादिभिरेव लङ्का हतेत्युपधार्यतां निश्चीयताम् अतः बलशेषेण शेषसैन्यतरणचिन्तया तव किं प्रयोजनमिति शेषः, न किंचिदित्यर्थः । श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

गो०टी०—बलैकदेश इति । इत्यर्धमेकान्वयम् । बलैकदेशः सेनाचतुर्थांश इत्यर्थः महात्मनां महाकायानाम् ॥ ३० ॥

गो० टी०—तपसा सेतुबन्धेनेत्येवं रामोक्तमेव सम्यगित्याह—येनेति । मार्गेण उपायेन तराम तरिष्यामः क्षत्यर्थेन लोट् । वरुणालयं समुद्रम् ॥ ३१ ॥

३१-३२ ] ति० टी०—किंचाशेषतरणोपायचिन्ता व्यर्थैव प्रबलैर्वक्ष्यमाणैरेव कार्यसिद्धिरित्याह—अङ्गद इत्यादि । एतेऽङ्गदादय एव लङ्कां भित्त्वा सीतामानेष्यन्ति किं बलशेषेण तवेत्यन्वयः ॥ ३१ ॥ ३२ ॥

रा० टी०—प्लवमाना इति । प्लवमाना अङ्गदादयः रावणस्य महापुरीं तां लङ्कां गत्वा भित्त्वा च आनयिष्यन्ति आनेष्यन्ति । सार्धश्लोक एकान्वयी ॥ ३२ ॥

गो० टी०—पक्षान्तरमाह—अङ्गद इत्यादिसार्धश्लोकद्वयेन अङ्गदादयः प्लवमानाः समुद्रं लङ्घितवन्तः । सखातां सपरिखाम् सप्रतोरणां सबहिर्द्वाराम्[1] आनयिष्यन्ति । बलशेषेण किम् । उक्ताङ्गदादिव्यतिरिक्तबलशेषेण किं प्रयोजनमिति योजना ॥ ३२ ॥ ३३ ॥

३३ ] ति० टी०—एवमिति । एवं प्रधानैरेव कार्यसाधनमिष्टं चेत्क्षिप्रमिदानीमेवानयतेत्याज्ञापय । यदि बलानां सर्वसंग्रहं बलसंमेलनमुद्दिश्य बलानामपि पारनयनमिष्टं तदा युक्तेन यात्रोचितेन मुहूर्तेन प्रस्थानं स्वयात्रामभिरोचय ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे तृतीयः सर्गः ॥ ३ ॥

रा० टी०—एवमिति । बलानां सर्वसंग्रहं क्षिप्रमाज्ञापय एवं युक्तेन गमनयोग्येन मुहूर्तेन प्रस्थानमभिरोचय प्रापय ॥ ३३

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे तृतीयः सर्गः ॥ ३ ॥

गो० टी०—एवमिति । सर्वसंग्रहम् संगृह्यत इति संग्रहः बलानां मध्ये सर्वसारभूतं बलम् अङ्गदादिकम् आज्ञापय । एवं प्लवमाना इत्याद्युक्तरीत्या आज्ञापयेत्यर्थः युक्तेन यात्रायोग्येन ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

१ ] ति० टी०—अनुपूर्वशोऽनुक्रमेण ॥ १ ॥

रा० टी०—हनुमद्वचनश्रवणानन्तरकालिकं रामवचनमाह—श्रुत्वेत्यादिभिः । अनुपूर्वशः यथाक्रमं हनुमतो वाक्यं श्रुत्वा रामोऽब्रवीत् ॥ १ ॥

गो० टी०—एवं लङ्काया दुर्गकर्मबलपरिमाणादौ हनुमता कथिते रामः कियन्मात्रमिदमिति न्यक्कृत्य तदानीमेव प्रस्थानमाज्ञापयति—श्रुत्वेति । महातेजाः महाबलः सत्यपराक्रमः अमोघविक्रमः आभ्यां निर्भयत्वे हेतुकथनम् । अब्रवीत् सुग्रीवमिति शेषः ॥ १ ॥

२ ] ति० टी०—तत्राङ्गदादिमुखेन कार्यनिर्वहणमशक्यं मत्वा तत्परीक्षणाय तदङ्गीकुर्वन्निव स्वमतमाह—यदिति । रक्षस एनां पुरीं क्षिप्रमेव वधिष्यामीति[2] यन्निवेदयसे तत्सत्यमेव तथा ते शक्तिरस्त्येव तथापि ते तुभ्यं स्वमतं ब्रवीमीत्यर्थः ॥ २ ॥

रा० टी०—तदाकारमाह—यदित्यादिभिः । एनां लङ्कां निवेदयसे वध्यान्वेन ब्रवीषि तामेनां क्षिप्रं नशिष्यामि[3] एतत्ते तुभ्यं सत्यं ब्रवीमि ॥ २ ॥

१ सप्रतोरणामिति गो. पाठः । २ यामिति गो. पाठः । ३ मथिष्यामीति गो. पाठः ।

अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचय[1] । युक्तो मुहूर्ते[2] विजये प्राप्तो मध्यं दिवाकरः ॥ ३ ॥
[ अस्मिन्मुहूर्ते[3] विजये प्राप्तमध्यं दिवाकरे । ]
सीतां हृत्वा[4] तु मे[5] यातु क्वासौ यास्यति[6] जीवितः । सीता श्रुत्वाभियानं मे आशामेष्यति जीविते
जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वा मृतमिवातुरः[7] ॥ ॥ ४ ॥
उत्तराफाल्गुनी[8] ह्यद्य श्वस्तु हस्तेन योक्ष्यते । अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥ ५ ॥
निमित्तानि च पश्यामि[9] यानि प्रादुर्भवन्ति[10] वै । निहत्य रावणं सीतामानयिष्यामि जानकीम् ॥ ६ ॥

---

गो० टी०–यामिति । निवेदयसे हनुमन्मुखेन निवेदयसि । मथिष्यामि शरैर्ध्वंसयिष्यामि ॥ २ ॥

३ ] ति० टी०–तदेवाह—अस्मिन्निति । सुग्रीवप्रयाणमिति षष्ठीतत्पुरुषः । तमेवाह—यतो मध्यमह्नो दिवाकरः प्राप्तोऽतो विजये विजयप्रदेऽभिजिदाख्ये मुहूर्ते युक्तः । मे निर्गम इति शेषः । एतदुत्तरम्—'अस्मिन्मुहूर्ते विजये प्राप्ते मध्यं दिवाकरे' इत्यर्धमधिकं कतकस्वरसात् ॥ ३ ॥

रा० टी०–हनुमन्तं प्रति उक्त्वा सुग्रीवं प्रत्याह–अस्मिन्निति । हे सुग्रीव यस्माद्दिवाकरो मध्यं प्राप्तः अतः विजयं विजयकारके अस्मिन्मुहूर्ते युक्तः मम निर्गम इति शेषः अतः प्रयाणं निर्गमम् अभिरोचय प्रीतिविषयं कुरु ॥३॥

गो० टी०–अस्मिन्निति । कुत इत्यत्राह–युक्त इति । युक्तः यात्रार्हः । तत्र हेतुः विजयः विजयावहः । विजयावहत्वे हेतुमाह–दिवाकरः । मध्यं दिने मध्यं प्राप्तः । अभिजिन्मुहूर्त इत्यर्थः । तदुक्तं विद्यामाधवीये–' आर्द्रोरगमित्रमखावसुजलविश्वाभिजिद्विरिञ्चेन्द्राः । ऐन्द्राग्निमूलवरुणार्यमभगतारा दिवा मुहूर्ताः स्युः ' इति । नन्वभिजिन्मुहूर्ता दक्षिणयात्रासु निषिद्धाः यथा ज्यौतिषरत्नाकरे–' भुक्तौ दक्षिणयात्रायां प्रतिष्ठायां द्विजन्मनि । आधाने च ध्वजारोहे मृत्युदः स्यात्सदाभिजित् इति । उच्यते । लङ्का हि दक्षिणपूर्वस्यां किष्किन्धायाः । अतो नेयं दक्षिणयात्रेति नोक्तदोषः ॥ ३

४ ] ति० टी०–एतन्मुहूर्तप्रस्थितस्य ध्रुवो विजय इत्याह—सीतामिति । तद्रक्षः सीतां हृत्वा कामं यातु । स्वदेशमिति शेषः । अथाप्यसौ जीवितः सन् कर्तरि निष्ठा । जीवन्भूत्वा क्व यास्यति न क्वापि । अविलम्बं यात्राप्रयोजनमाह–सीतेति । श्रुत्वा सिद्धादिमुखतः । जीविताशाप्राप्तौ दृष्टान्तः–आतुरो जीवितान्ते जीवितनाशप्राप्तावमृतममृतत्वसाधनं दिव्यौषधं स्पृष्ट्वा द्रवरूपममृतं पीत्वा च यथा जीविताशामेति तद्वत् । ' जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वामृतमिवातुरः ' इति प्राङ्कः पाठः ॥ ४ ॥

रा० टी०–सीतामिति । तद्रक्षः सीतां हृत्वा यातु यत्र क्वचित् स्वरक्षणार्थं गच्छतु परन्तु जीवितः सन् असौ राक्षसः क्व यास्यति हनिष्यामीत्यर्थः विषं पीत्वा आतुर इव सीता मे अभियानं प्रस्थानं श्रुत्वा शकुनादिना ज्ञात्वा जीवितान्ते प्राणापगमसमये अमृतं स्पृष्ट्वेव जीविते स्वजीवने आशामेष्यति प्राप्स्यति । सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०–मुहूर्तविशेषे प्रयाणस्य फलं दर्शयति–अस्मिन्निति । दिवाकरे मध्यं प्राप्ते विजयाख्ये अस्मिन्मुहूर्ते यास्यतो मे यास्यति मयि असौ रावणः सीतां हृत्वा जातु कदाचित् क्व यास्यति यत्र कुत्रापि यान्तं तं हनिष्यामीत्यर्थः। सीतां हृत्वा तु मे यात्विति पाठे यातु राक्षसः । नैर्ऋतो यातुरक्षसी इत्यमरः । यद्वा यातु गच्छतु । क्व यास्यतीत्यन्वयः॥४॥

गो० टी०–अथैव सागरतरणोपायचिन्तां विना निर्गमस्य कालमाह–सीतेति । मे अभियानं प्रस्थानं सीता श्रुत्वा जीविते आशामेष्यति । श्रवणं च त्रिजटादिभ्य इति ज्ञेयम् । निर्गमं विना केवलं विचाराकुलेष्वस्मासु जीविते सा निराशा स्यादिति भावः । कथमिव विषं पीत्वा आतुरः पीडितः पुरुषः जीवितान्ते प्राणात्यये प्राप्ते अमृतं स्पृष्ट्वेव ॥ ५ ॥

५–६ ] ति० टी०–मम ताराबलमस्तीत्याह–उत्तरेति । योक्ष्यते चन्द्र इति शेषः । पुनर्वसुजातस्य हस्तो वधतारा उत्तरा च सीताया जन्मतारा बद्धस्य जन्मतारायां तन्मोचनार्थयात्रायामवश्यं तन्मुक्तिरिति भावः । अथामान्तमानेन मार्गशीर्षकृष्णाष्टम्यां कृष्णसप्तम्यां वा । मार्गशीर्षपूर्णिमोत्तरं तदन्यतरस्मिन्नुत्तरालाभात् । अभिप्रयामेति प्रश्ने लोट् ॥ ५ ॥ ६ ॥

रा० टी०–यात्राकालस्य शोभनत्वं बोधयन्नाह–उत्तरेति । हे सुग्रीव अद्य उत्तराफाल्गुनी वर्तत इति शेषः श्वः इतः परदिनं तु हस्तेन योक्ष्यते योक्ता अतः सर्वानीकसमावृताः वयम् अभिप्रयाम ॥ ५ ॥

गो० टी०–तर्हि कदास्माभिः प्रस्थाप्यं तत्राह–उत्तरेति । अद्य दिने उत्तराफल्गुनीनक्षत्रं वर्तते श्वः उत्तरदिने हस्तेन योक्ष्यते । चन्द्र इति शेषः । हस्तो रामस्य निधनतारा उत्तराफल्गुनी तु साधनतारा अतोऽद्यैव सर्वानीकसमावृताः सन्तः अभिप्रयाम गच्छेम । अत्रोत्तराफल्गुनीत्यनेन स दिवसः फाल्गुनपौर्णमासीत्यवगम्यते । इदमुत्तरत्र प्रतिपादयिष्यते॥६॥

रा० टी०–निमित्तानीति । यानि निमित्तानि प्रादुर्भवन्ति मङ्गलानि कुर्वन्ति तानि पश्यामि अतः रावणं निहत्य

---

१ रोचये इति गो. पाठः । २ मुहूर्तो विजय इति गो. पाठः । ३ अर्धमेतदधिकं गो. पाठे । ४ हृत्वेति गो. पाठः । ५ मे जात्विति गो. पाठः । ६ यास्यत इति गो. पाठः । ७ विषमिति गो. पाठः । ८ फल्गुनीति गो. पाठः । ९ धन्यानीति गो. पाठः । १० चेति गो. पाठः ।

उपरिष्टाद्धि नयनं स्फुरमाणमि[1]मं मम । विजयं समनुप्राप्तं शंसतीव मनोरथम् ॥ ७ ॥
ततो वानरराजेन लक्ष्मणेन सुपूजितः । उवाच रामो धर्मात्मा पुनरप्य[2]र्थकोविदः ॥ ८ ॥
अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् । वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ ९ ॥
फलमूलवता नीलशीतकाननवारिणा । प[3]था मधुमता चाशु सेनां सेनापते नय ॥ १० ॥
दूषयेयुर्दुरात्मानः पथि मूलफलोदकम् । राक्षसाः प[4]थि रक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः ॥ ११ ॥
निम्नेषु वनदुर्गेषु वनेषु च वनौकसः । अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् ॥ १२ ॥
यत्तु फल्गु बलं किंचित्तदत्रैवोपपद्यताम् । एतद्धि कृत्यं घोरं नो विक्रमेण प्र[5]युज्यताम् ॥ १३ ॥
सागरौघनिभं भीममग्रानीकं महाबलाः । कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ १४ ॥

सीतामानयिष्यामि आनेष्यामि प्रादुर्भवन्तीत्यत्रान्तर्भावितणिजर्थः । यदि तु निमित्तशब्देन सुशकुना उच्येरन् तदा नेयं कल्पना ॥ ६ ॥

गो० टी०–निमित्तानीति । यानि निमित्तानि धन्यानि तानि प्रादुर्भवन्ति । अतो रावणं निहत्य सीतामानयिष्यामि । जानकीमिति विशेषणेन जनकप्रीत्यर्थं चावश्यं सा आनेतव्येति व्यज्यते ॥ ७ ॥

७–९ ] ति० टी०–मनोरथं मनोरथविषयं विजयं समनुप्राप्तमिव शंसतीत्यन्वयः ॥ ७–९ ॥

रा० टी०–निमित्तस्वरूपमाह–उपरिष्टादिति । उपरिष्टादुपरिभागे स्फुरमाणमिदं मम नयनं समनुप्राप्तं मम विजयं मनोरथं मनोरथसिद्धिं सीताप्राप्तिं चेत्यर्थः शंसतीव ॥ ७ ॥

गो० टी०–उपरिष्टादिति । उपरिष्टादुपरिस्फुरमाणमिदं मम नयनम् मनोरथं मनोरथविषयभूतं जयम् समनुप्राप्तम् सम्यक् समीपे प्राप्तम् शंसतीव स्पष्टं बोधयतीत्यर्थः । तथोक्तम् ज्योतिः शास्त्रे–'नेत्रस्याधः स्फुरणमसकृत्सङ्गरे भङ्गहेतुर्नेत्रोपान्ते हरति नयनं नेत्रमूले च मृत्युः । नेत्रस्योर्ध्वं हरति सकलं मानसं दुःखजातं वामे चैवं फलमविकलं दक्षिणे वैपरीत्यम् ।' इति एवं वचने विद्यमाने दक्षिणनयनमिति व्याख्यानं चिन्त्यम् ॥ ८ ॥

रा० टी०–तत इति । ततो रामवचनश्रवणानन्तरं वानरराजेन सुग्रीवेण लक्ष्मणेन च सुपूजितो रामः पुनरप्युवाच॥८॥

गो० टी०–तत इति । पूजितः युक्तमिति श्लाघितः । अर्थकोविदः नीतिशास्त्रनिपुणः ॥ ९ ॥

रा० टी०–तदाकारमाह–अग्र इत्यादिभिः । अस्य गमिष्यमाणस्य बलस्य मार्गमवेक्षितुं वानराणां शतसहस्रेण वृतः नीलः अग्रे पूर्वं यातु ॥ ९ ॥

गो० टी०–नीतिशास्त्रमनुस्मरन् सेनासंविधानं दर्शयति–अग्र इति । स्पष्टम् ॥ १० ॥

१० ] ति० टी०–शीतानि काननवारीणि यस्मिस्तादृशेन पथा सेनापते नील सेनां नयेत्यन्वयः ॥ १० ॥

रा० टी०–नीलं प्रत्याह–फलेति । हे नील हे सेनापते फलमूलवता प्रशस्तफलमूलसमीपस्थेन शीतानि काननवारीणि वनसंबन्धिजलानि यस्मिन् मधुमता प्रशस्तमधुसमीपस्थेन मार्गेण सेनां नय ॥ १० ॥

गो० टी०–मार्गमवेक्षितुं यात्वित्युक्तं सुग्रीवं प्रत्युक्तमार्गेण सन्निहितं नीलं प्रत्याह–फलेति ॥ ११ ॥

११ ] ति० टी०–दूषयेयुः विषादिनेति शेषः । नित्यमुद्यतः सदा सावधानः सन् ॥ ११ ॥

रा० टी०–दूषयेयुरिति । ये दुरात्मानो राक्षसाः पथि मूलफलोदकं दूषयेयुः तेभ्यः त्वं रक्षेथाः मूलादीनीति शेषः ॥ ११ ॥

गो० टी०–मार्गशोधनप्रकारमाह–दूषयेयुरिति । दूषयेयुः विषादिनेति शेषः । परिरक्षेथा इत्यात्मनेपदमार्षम् । उद्यतः सावधान इत्यर्थः ॥ १२ ॥

१२ ] ति० टी०–वनदुर्गेषु वनात्मकेषु दुर्गेषु । वनेषु दुर्गवनेषु च । निम्नभूमौ निहितं गुप्तप्रहारार्थं लीनतया स्थापितम् ॥ १२ ॥

रा० टी०–निम्नेष्विति । निम्नेषु खातादिविशिष्टेषु वनदुर्गेषु वनेषु जलसमीपप्रदेशेषु च परेषां राक्षसानां निहितं स्वरिपुविनाशाय संस्थापितं बलं सैन्यं वनौकसः अभिप्लुत्य चतुर्दिक्षूत्प्लुत्य अभिपश्येयुः ॥ १२ ॥

गो० टी०–शोधनान्तरमाह–निम्नेष्विति । निम्नेषु गर्तप्रदेशेषु वनदुर्गेषु वनैः जलैः दुर्गेषु दुर्गमप्रदेशेषु । जीवनं भुवनं वनमित्यमरः । वनेषु काननेषु च निहितं रन्ध्रे प्रहारार्थं स्थापितम् बलं परसैन्यम् वनौकसः वानराः अभिप्लुत्य अभित उत्प्लुत्य पश्येयुः ॥ १३ ॥

१३–१४ ] ति० टी०–यत्तु फल्गु निःसारं बलं बालवृद्धादिलक्षणं युद्धानर्हं तदत्रैव किष्किन्धायामेवोपपद्यतां तिष्ठतु हि यस्मादेतन्नः कृत्यं युद्धरूपं घोरम्, अतो विक्रमेण विक्रमोपपन्नबलेन प्रयुज्यताम् । यात्विति शेषः ॥ १३ ॥ १४ ॥

रा० टी०–यदिति । एतत् युद्धादि नोऽस्माकं कृत्यं घोरम् अतः विक्रमेण अतिपराक्रमविशिष्टेन वानरेण प्रयुज्यतां

१ इदमिति गो. पाठः ।२ चेति गो. पाठः ।३ तथेति रा. पाठः । ४ परीति गो. पाठः । ५ युज्यतामिति गो. पाठः । ६ युध्यतामिति गो. पाठः ।

गजश्च गिरिसंकाशो गवयश्च महाबलः। गवाक्षश्चाग्रतो यातु गवां दृप्त इवर्षभः॥ १५॥
यातु वानरवाहिन्या वानरः प्लवतां पतिः। पालयन्दक्षिणं पार्श्वमृषभो वानरर्षभः॥ १६॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः। यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः॥ १७॥
यास्यामि बलमध्येऽहं बलौघमभिहर्षयन्। अधिरुह्य हनूमन्तमैरावतमिवेश्वरः॥ १८॥
अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः। सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा॥ १९॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः। ऋक्षराजो महाबाहुः कुक्षिं रक्षन्तु ते त्रयः॥ २०॥
राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः। व्यादिदेश महावीर्यो वानरान्वानरर्षभः॥ २१॥

गमनं क्रियतामित्यर्थः यत्किंचित्तु फल्गुबलम् अल्पबलविशिष्टं तत् अत्र किष्किन्धायामेव उपपद्यतां संस्थाप्यताम्॥ १३॥

गो० टी०—शोधनानन्तरमाह—यदिति। यत्किंचिद्बलं फल्गु असारम् तत् अत्रैव किष्किन्धायामेव उपयुज्यतां स्थाप्यताम्। किंचिदित्यनेन तादृशं बलमत्र दुर्लभमिति सूचितम्। अत्र युक्तं वक्ति—एतदिति। एतत् घोरं कृत्यं विक्रमेण प्रयुज्यताम् आर्षः शतृप्रत्ययः विक्रमेण शक्त्या ये युद्ध्यन्ते तेषामेव नान्येषामित्यर्थः। विक्रमेणोपयुज्यतामिति पाठे विक्रमेणोपयुज्यमानानाम् विक्रमयुक्तानामित्यर्थः क्रियापदत्वे संप्रधारणायां लोड्वेदितव्यः॥ १४॥

रा० टी०—सागरेति। सागरौघनिभम् अतिघोषवत्तया सागरप्रवाहौघसदृशम् अग्रानीकम् अनीकाग्रभागं शतशः सहस्रशः कपिसिंहाः प्रकर्षन्तु नयन्तु॥ १४॥

गो० टी०—अथ यतश्च बलमाशङ्की ततो विस्तारयेद्बलमित्युक्तरीत्या बहवो बलिनोऽग्रे सेनां कर्षन्त्वित्याह—सागरेति। सागरौघनिभं सागरस्य प्रवाहो यदि भवेत्तत्तुल्यमित्यर्थः। शतशोथ सहस्रशः शतशः सहस्रशश्च संघीभूयेत्यर्थः॥ १५॥

१५-१६] ति०टी०—कपिसिंहानेवाह—गजश्चेति॥१५-१६

रा० टी०—कपिसिंहान् संक्षिप्य आह—गज इति। दृप्तो गवाम् ऋषभ इव गजप्रभृतिरग्रतो यातु॥ १५॥

गो० टी०—अथ सेनाबलाध्यक्षौ सर्वदिक्षु निवेशयेदित्युक्तरीत्या निवेशयति—गज इति। गवामिति गवामग्रे दृप्ताः वृषभा इवेति संबन्धः॥ १६॥

रा० टी०-यात्विति। वानरवाहिन्याः वानरसेनायाः दक्षिणं पार्श्वं पालयन् वानरर्षभः बुद्ध्यादिना वानरश्रेष्ठः प्लवतां पतिः ऋषभो यातु॥ १६॥

गो० टी०—यात्विति। दक्षिणं पश्चिमपार्श्वमित्यर्थः। 'यतश्च भयमाशङ्केत् तां प्राचीं परिकल्पयेत्' इति कामन्दकोक्तेः। प्लवतां वानराणाम्॥ १७॥

१७] ति० टी०—यस्य मदगन्धादन्ये गजाः पलायन्ते स गन्धहस्ती॥ १७॥

रा० टी०—गन्धेति। वानरवाहिन्याः सव्यं वामं पार्श्वमधिष्ठितः पालयन्नित्यर्थः गन्धमादनो यातु॥ १७॥

गो० टी०—गन्धेति। गन्धहस्ती मत्तगजः तरस्वी बलवान् सव्यं प्राचीभागम् अधिष्ठितः अधिष्ठाता कर्तरि क्तः॥ १८॥

१८] ति० टी०—ईश्वर इन्द्रः॥ १८॥

रा० टी०—यास्यामीति। हनूमन्तमधिरुह्य बलमध्ये अहं यास्यामि॥ १८॥

गो० टी०—यास्यामीति। मध्यगमनप्रयोजनमाह—अभिहर्षयन्निति। प्रहर्षयेद्बलं व्यूहैरित्युक्तेः। ईश्वरः इन्द्रः तथैवौचित्यात्। गवां पतिमिवेश्वर इति वा पाठः॥ १९॥

१९] ति० टी०—अङ्गदेन वाहनभूतेन। सार्वभौमः कुबेरदिग्गजः भूतेशः कुबेरः यक्षेशत्वात्॥ १९॥

रा० टी०—अङ्गदेनेति। अङ्गदेन वाहनभूतेनेत्यर्थः एष लक्ष्मणो यातु तत्र दृष्टान्तः—सार्वभौमेन तदभिधस्वगजेन द्रविणाधिपतिः कुबेरो यथा॥ १९॥

गो० टी०—अङ्गदेनेति। अङ्गदेन संयातु अङ्गदमारुह्य संयात्वित्यर्थः। सार्वभौमेन उत्तरदिग्गजेन भूतेशः यक्षेशः द्रविणाधिपतिः धनाधिपतिः। अत्र त्वं च शिबिकामारुह्य आवाभ्यामागच्छेति सिद्धम्॥ २०॥

२०-२१] ति० टी०—ऋक्षराजो जाम्बवानित्यन्वयः। कुक्षिं कुक्ष्युपलक्षितं सेनापुच्छभागम्॥ २०॥ २१॥

रा० टी०—जाम्बवानिति। जाम्बवदादयस्त्रयः कुक्षिं तदुपलक्षितसेनापश्चाद्भागं रक्षन्तु॥ २०॥

गो० टी०—जाम्बवानिति। ऋक्षराजः जाम्बवद्भ्राता कुक्षिं पश्चाद्भागम् जाम्बवान् सुषेणः वेगदर्शी चेति त्रयः महासत्त्वः ऋक्षराजश्च कुक्षिं रक्षन्त्वित्यन्वयः॥ २१॥

रा० टी०—राघवस्येति। राघवस्य वचः श्रुत्वा सुग्रीवो वानरान् व्यादिदेश॥ २१॥

गो० टी०—राघवस्येति। व्यादिदेश रामोक्तं सर्वं कुरुतेत्याज्ञापयामास॥ २२॥

१ यान्त्विति गो. पाठः। २ दृप्ता इवर्षभा इति गो. पाठः। ३ वर इति गो. गतिरिति रा. पाठः। ४ सत्त्व इति गो. पाठः। ५ वीर्यानिति गो. पाठः।

ते वानरगणाः सर्वे समुत्पत्य महौजसः । गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ २२ ॥
ततो वानरराजेन लक्ष्मणेन च पूजितः । जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ २३ ॥
शतैः शतसहस्रैश्च कोटिभिश्चायुतैरपि । वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥ २४ ॥
तं यान्तमनुयान्ती सा महती हरिवाहिनी । हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणापि पालिताः ॥ २५ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः । क्ष्वेलन्तो निनदन्तश्च जग्मुर्वै दक्षिणां दिशम् ॥ २६ ॥
भक्षयन्तः सुगन्धीनि मधूनि च फलानि च । उद्वहन्तो महावृक्षान्मञ्जरीपुञ्जधारिणः ॥ २७ ॥
अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च । पतन्तश्चोत्पतन्त्यन्ये पातयन्त्यपरे परान् ॥ २८ ॥
रावणो नो निहन्तव्यः सर्वे च रजनीचराः । इति गर्जन्ति हरयो राघवस्य समीपतः ॥ २९ ॥
पुरस्तादृषभो नीलो वीरः कुमुद एव च । पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह ॥ ३० ॥
मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च । बलिभिर्बहुभिर्भीमैर्वृतैः शत्रुनिबर्हणः ॥ ३१ ॥

२२-२४ ] ति० टी०–गुहाभ्यः शिखरेभ्यः पूर्वस्वस्थितिप्रदेशेभ्यः ॥ २२–२४ ॥

रा० टी०–ते इति । ते सुग्रीवेणाज्ञप्ताः सर्वे वानरगणाः गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे ॥ २२ ॥

गो० टी०–त इति । पुप्लुविरे प्लुतगतिं चक्रिरे ॥२३॥

रा० टी०–तत इति । वानरराजेन लक्ष्मणेन च पूजितः प्रार्थित इत्यर्थः ससैन्यो रामः दक्षिणां दिशं जगाम ॥२३॥

गो० टी०–तत इति । पूजितः पुरस्कृत इत्यर्थः धर्मात्मा नीतिरूपधर्मज्ञ इत्यर्थः ॥ २४ ॥

रा० टी०–गमनप्रकारमाह—शतैरिति । वारणाभैर्गजसदृशैः हरिभिर्वानरैः परिवृतो ययौ राम इति शेषः ॥ २४ ॥

गो० टी०–शतैरिति । ययौ राम इति शेषः ॥ २५ ॥

२५ ] ति० टी०–हर्षप्रमोदयोर्बाह्याभ्यन्तरकृतो भेदः ॥२५

रा० टी०–तमिति । यान्तं तं रामं हरिवाहिनी अनुयाति स्म । अर्धं पृथक् ॥ २५ ॥

रा० टी०–हृष्टा इति । हृष्टाः प्राप्तसंतोषाः अत एव प्रमुदिताः सर्वे वानराः आप्लवन्तः रक्षणार्थं सर्वदिक्षु गच्छन्तः प्लवन्तः सेनामाकर्षयन्तश्च सन्तः दक्षिणां दिशं जग्मुः सार्धश्लोक एकान्वयी ॥ २६ ॥

गो०टी०–तमिति । हरिवाहिनी पूर्वोक्तबलवानरभिन्ना२६

२६ ] ति० टी०–आप्लवन्तः समन्ताद्रक्षणार्थं प्लवमानाः प्लवन्तोऽग्रे शोधनार्थं गच्छन्तः ‘ क्ष्वेला तु सिंहनादः स्यात् ’ इति निघण्टुः । गर्जो मेघादिसदृशः शब्दः निनादः सामान्यशब्दः ॥ २६ ॥

गो० टी०–गच्छतामवस्थाविशेषान् दर्शयति–हृष्टा इत्यादिना । हृष्टा गर्विताः आप्लवन्तः मण्डलाकारं भ्रमन्त इत्यर्थः गर्जन्तः मेघध्वनिं कुर्वन्तः घनगर्जितमिति प्रसिद्धिः क्ष्वेलन्तः सिंहनादं कुर्वन्तः क्ष्वेला तु सिंहनादः स्यात् इत्यमरः । निनन्दतः अव्यक्तं शब्दायमानाः “ णद, अव्यक्ते शब्दे ” इति धातुः । भक्षयन्तः पिबन्तः उद्वहन्तः विलासार्थं हस्ते धारयन्तः ॥ २७ ॥ २८ ॥

२७ ] ति० टी०–लीलार्थं महावृक्षानुद्वहन्तो मञ्जरीपुञ्जधारिणश्च । जग्मुरित्यनुकर्षः ॥ २७ ॥

रा० टी०–भक्षयन्त इति । फलानि भक्षयन्तः मञ्जरीपुञ्जधारिणः मञ्जरीसमूहवतः महावृक्षान् उद्वहन्तः लीलार्थं गृह्णन्तः सन्तः अन्योऽन्यं निर्वहन्ति क्षिपन्ति च । सार्धश्लोक एकान्वयी ॥ २७ ॥ २८ ॥

२८ ] ति० टी०–निर्वहन्ति विनोदार्थमङ्कमङ्के वहन्ति तथा क्षिपन्ति च स्वमाक्रम्य भूमौ पातयन्ति । पतन्तश्च भवन्ति केवलं गच्छन्तीत्यर्थः अन्ये उत्पतन्त्याकाशमार्गं गच्छन्ति ॥ २८ ॥

रा० टी०–पतन्त इति । अन्ये केचित् वानराः पतन्तश्चलन्तः सन्तः उत्पतन्ति उत्प्लवन्ते अपरे अपरान् पातयन्ति अर्धं पृथक् । रावण इति । नोऽस्माकं रावणो निहन्तव्यः रजनीचराः अन्ये राक्षसाश्च निहन्तव्याः इति राघवस्य समीपतः समीपे हरयो गर्जन्ति । अर्धद्वयमेकान्वयि ॥ २९ ॥

गो० टी०–अन्योन्यमिति । सहसा तरसा । निर्वहन्ति उद्वहन्ति क्षिपन्ति पातयन्ति अन्ये पतन्तः सन्तः परान् पातयितॄन् । आक्षिपन्ति । प्रतिकारकरणासामर्थ्येन परिभाषणं कुर्वन्तीत्यर्थः अपरे शक्ताः परान् पातयितॄन् पातयन्ति ॥ २९ ॥

२९ ] ति० टी०–नोऽस्माकम् । अस्माभिरिति यावत् ‘ कृत्यानां कर्तरि वा ’ इति षष्ठी ॥ २९ ॥

गो० टी०–रावण इति । नः अस्माभिरित्यर्थः ॥ ३० ॥

३०–३१ ] ति० टी०–पुरस्तादृषभ इति । अयमृषभो दक्षिणपार्श्वविनियुक्तादन्यो नीलसहकारी ॥ ३० ॥ ३१ ॥

१ युयुत्सव इति गो. पाठः । २ कोटीभिरयुतैरिति गो. पाठः । ३ याति स्मेति गो. पाठः । ४ दृप्ता इति गो. पाठः । ५ धावमानास्ते इति गो. पाठः । ६ पतन्तश्चाक्षिपन्तीति गो. पाठः । ७ वृताः शत्रुनिबर्हणा इति गो. पाठः ।

हरिः शतवलिर्वीरः को[1]टिभिर्दशभिर्वृतः । सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ ३२ ॥
कोटीशतपरीवारः केसरी पनसो गजः । अर्कश्च [2]बहुभिः पार्श्वमेकं तस्याभिरक्षति ॥ ३३ ॥
सुषेणो जाम्बवांश्चैव [3]ऋक्षैर्बहुभिरावृतौ । सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ॥ ३४ ॥
तेषां सेनापतिर्वीरो नीलो वानरपुंगवः । [4]संयतश्चरतां श्रेष्ठस्तद्बलं पर्य[5]वारयत् ॥ ३५ ॥
[6]वलीमुखः प्रजङ्घश्च [7]जम्भोऽथ रभसः कपिः । सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवङ्गमान् ॥ ३६ ॥
एवं ते हरिशार्दूला [8]गच्छन्ति बलदर्पिताः । अपश्यन्त गिरिश्रेष्ठं सह्यं गिरिशतायुतम् ॥ ३७ ॥
सरांसि च सुफुल्लानि तटाकानि [9]वराणि च । रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ॥ ३८ ॥
वर्जयन्नगराभ्याशांस्तथा जनपदानपि । सागरौघनिभं भीमं तद्वानरबलं महत् ॥ ३९ ॥

रा० टी०—पुरस्तादिति । बहुभिर्वानरैः सह ऋषभादयः पुरस्तात् पन्थानं शोधयन्ति स्म ॥ ३० ॥

गो० टी०—पुरस्तादिति । अत्र पूर्वं रामेण मार्गरक्षणाय ये नीलादयो नियुक्ताः ततोऽन्ये कुमुदादयस्तु रामभक्त्युत्साहेन स्वयमेव प्रवृत्ता इति ज्ञेयम् । ऋषभो दक्षिणपार्श्वरक्षणाय नियुक्तो भक्त्या पराक्रमातिशयेन च अत्रापि रक्षणं कृतवानिति ज्ञेयम् ॥ ३१ ॥

रा० टी०—मध्य इति । बहुभिर्वानरैर्वृतः सुग्रीवप्रभृतिः मध्ये गच्छतीति शेषः ॥ ३१ ॥

गो० टी०—मध्ये त्विति । जग्मुरिति शेषः ॥ ३२ ॥

३२ ] ति० टी०—सर्वां वाहिनीमवष्टभ्यैको ररक्ष समन्ततो भ्रमन्रक्षति स्मेत्यर्थः ॥ ३२ ॥

रा० टी०—हरिरिति । दशभिः कोटिभिर्वृतः शतबलिः तदभिध एको हरिः सर्वां हरिवाहिनीमवष्टभ्य स्ववशीकृत्य ररक्ष ॥ ३२ ॥

गो० टी०—हरिरिति । अवष्टभ्य अधिष्ठाय ॥ ३३ ॥

३३ ] ति० टी०—केसर्यादीनां चतुर्णां द्वौ द्वौ तस्य बलस्य दक्षिणं वामं चैकैकं पार्श्वमभिरक्षत इत्यर्थ इति कतकः । एष गजः पूर्वभागनियुक्तादन्य इति तीर्थः ॥ ३३ ॥

रा० टी०—कोटीति । कोटीशतपरीवारः शतकोटिपरीवारविशिष्टः केशरी पनसश्च तस्य बलस्य एकं दक्षिणमित्यर्थः, पार्श्वमभिरक्षति बहुभिर्वानरैर्वृतः गजोऽर्कश्च एकं वाममित्यर्थः पार्श्वमभिरक्षति योग्यतया पार्श्वावर्तते ॥ ३३ ॥

गो० टी०—कोटीति । गजस्याग्रभागनियुक्तस्यापि पार्श्वरक्षणं भक्त्यतिशयात् । अत्र कार्यकरणात्केसर्यादयश्च पूर्वं नियुक्ता एवेत्याहुः । अत्र पूर्वनियुक्तानां गन्धमादनादीनामप्युपलक्षणम् । एकं पार्श्वं सव्यं पार्श्वम् । अभिरक्षतीत्यस्य प्रत्येकमभिसंबन्धः । व्यत्ययेन लट् ॥ ३४ ॥

३४ ] ति० टी०—सुषेणजाम्बवन्तौ प्रायः सेनामध्ये वर्तमानं सुग्रीवं पुरः कृत्वा जघनं सेनापुच्छभागं संरक्षतुः ॥ ३४ ॥

रा० टी०—सुषेण इति । बहुभिः ऋक्षैरावृतौ सुषेणो जाम्बवांश्च सुग्रीवं पुरतोऽग्रे कृत्वा जघनं पश्चाद्भागं संररक्षतुः ॥ ३४

गो० टी०—सुषेण इति । ऋक्षैरावृतत्वं जाम्बवत एव तत्संबन्धात् सुषेणस्यापि । जघनं पश्चाद्भागम् ॥ ३५ ॥

३५ ] ति० टी०—पर्यवारयत् नगरादिपीडाराहित्यं यथा भवति तथा परिवार्यानयदित्यर्थः ॥ ३५ ॥

रा० टी०—तेषामिति । तेषां शतबल्यादीनां समीपे गच्छन् सन्निति शेषः नीलः सेनापतिः तद्बलं पर्यवारयत् मार्गवर्तिपुरादिपीडानिवारणार्थं स्वेच्छाचारगमनात् न्यवारयदित्यर्थः ॥ ३५ ॥

गो० टी०—तेषामिति । संपतन् मार्गशोधनाय पुरो गच्छन्नपि पर्यपालयत् सेनापतित्वात् सर्वतो ररक्षेत्यर्थः ॥ ३६

३६ ] ति० टी०—सर्वतः वेगातिशयादिति भावः ॥ ३६ ॥

रा० टी०—दरीमुख इति । दरीमुखादयः प्लवङ्गमान् त्वरयन्तः सन्तः सर्वतो ययुः ॥ ३६ ॥

गो० टी०—दरीमुख इति । स्पष्टम् ॥ ३७ ॥

३७ ] ति० टी०—गच्छन्ति गच्छन्तश्च सह्यमपश्यन्त सरआदीनि चापश्यन्त । अत्र प्रथमदिनवास इति ज्ञायते ॥ ३७ ॥

रा० टी०—एवमिति । ते हरिशार्दूलाः एवं गच्छन्ति अगच्छन् अत एव गिरिशतैरायुतं व्याप्तं सह्यं तदभिधं गिरिश्रेष्ठं सरआदीनि च अपश्यन् । सार्धश्लोक एकान्वयी ॥ ३७ ॥ ३८ ॥

गो० टी०—एवमित्यादि । अपश्यन् दूरादिति शेषः । सुफुल्लानि सुफुल्लपद्मकह्लाराणि ॥ ३८ ॥

३८ ] ति० टी०—भीतवत् । भीताः सन्त इत्यर्थः ॥ ३८ ॥

३९ ] ति० टी०—वर्जयद्वर्जयित्वागच्छत् ॥ ३९ ॥

रा० टी०—रामस्येति । रामस्य शासनं नगरादिभ्यो दूरत एव गन्तव्यमित्याज्ञां ज्ञात्वा नीलवचनादवगत्य भीतवत् रामभीतिविशिष्टं तद्वानरबलं नगराभ्याशादीन् वर्जयत् सत् भीमघोषमर्णवमिव निःसमर्प निरन्तरं जगाम । श्लोकद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

१ कोटीभिरिति गो. पाठः । २ अतिबल इति गो. पाठः । ३ ऋक्षैश्च बहुभिर्वृतात्रिति गो. पाठः । ४ संपतन्पततामिति गो. पाठः । ५ पारयदिति गो. पाठः । ६ दरीति गो. रा. पाठः । ७ रम्भ इति गो. पाठः । ८ गच्छन्त इति गो. पाठः । ९ वनानीति गो. पाठः ।

[1]निःससर्प महाघोरं भीमघोषमिवार्णवम् । तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः ॥ ४० ॥
तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः । कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ ॥ ४१ ॥
महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करौ । ततो वानरराजेन लक्ष्मणेन सुपूजितः ॥ ४२ ॥
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् । तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा ॥ ४३ ॥
उवाच परिपूर्णार्थं पूर्णार्थप्रतिभानवान् । हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् ॥ ४४ ॥
समृद्धार्थः समृद्धार्थामयोध्यां प्रतियास्यसि । महान्ति च निमित्तानि दिवि भूमौ च राघव ॥ ४५ ॥
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये । अनुवाति शिवो वायुः सेनां मृदुहितः सुखः ॥ ४६ ॥
पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः । प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः ॥ ४७ ॥

गो० टी०–रामस्येत्यादि । भीतवत् भीतम् । कर्तरि क्तप्रत्ययः । वर्जयत् । दूरतः परिहरत् उत्ससर्प जगामेति संबन्धः । सागरौघनिभमिति विपुलतायां साम्यम् । भीमघोष इवार्णव इति शेषे ॥ ३९ ॥ ४० ॥

४०–४१ ] ति० टी०–भीमघोषमर्णवमिव अर्धचन्द्रादिरर्णवः निःससर्प सह्यतो निःसृतम् ॥ ४० ॥ ४१ ॥

रा० टी०–तस्येति । कपिकुञ्जराः दाशरथेः पार्श्वं सदश्वा इव तूर्णमापुप्लुवुः ॥ ४१ ॥

गो० टी०–तस्येति । दाशरथेः पार्श्व इति । तन्मुखोल्लासायेति भावः ॥ ४१ ॥

रा० टी०–कपिभ्यामिति । कपिभ्यां हनुमदङ्गदाभ्यामुह्यमानौ तौ रामलक्ष्मणौ महद्भ्याम् ग्रहाभ्यां संस्पृष्टौ चन्द्रभास्कराविव शुशुभाते ॥ ४२ ॥

गो० टी०–कपिभ्यामिति । हनुमदङ्गदाभ्यामुह्यमानौ रामलक्ष्मणौ महाग्रहाभ्यां शुक्रबृहस्पतिभ्याम् संस्पृष्टौ संयुक्तौ चन्द्रसूर्याविव शुशुभाते । अत्र उपमाने चतुर्ग्रहसंयोगस्य बहुजनविनाशहेतुत्वात् हनुमदङ्गदाभ्यां रामलक्ष्मणयोगस्य महासेनाविनाशकत्वं गम्यत इत्यलंकारेण वस्तुध्वनिः । संस्पृष्टपदेन हनुमदङ्गदयोर्लाघवातिशयकथनात् पदगतवस्तुना वस्तुध्वनिः ॥ ४२ ॥

४२–४३ ] ति० टी०–महद्भ्यां ग्रहाभ्यां राहुकेतुभ्यां संस्पृष्टार्धभागे स्पृष्टौ चन्द्रभास्कराविव । 'महद्भ्यामर्धसंस्पृष्टौ' इति पाठान्तरम् ॥ ४२ ॥ ४३ ॥

रा० टी०–तत इति । पूजितः ससैन्यो रामः ततः निवासभूतप्रदेशात् दक्षिणां दिशं जगाम ॥ ४३ ॥

गो० टी०–पुनः सुदूरगमनसूचनायाह–तत इति । स्पष्टम् ॥ ४३ ॥

रा० टी०–तमिति । अङ्गदगतः अङ्गदोपरि स्थितः प्रतिभानवान् अतिबुद्धिमान् स्मृतिमान् प्रशस्तस्मृतिविशिष्टः लक्ष्मणः राममुवाच ॥ ४४ ॥

गो० टी०–तमिति । परिपूर्णमनोरथः । स्मृतिमान् निमित्तशास्त्रार्थस्मरणवान् प्रतिभानवान् तात्कालिकबुद्धिमान् ॥ ४४ ॥

४४–४५ ] ति० टी०–पूर्णार्थप्रतिभानवान्पूर्णस्यार्थस्य कार्यस्य शकुनैः प्रतिभानवाञ्ज्ञानवान् करिष्यमाणस्य कार्यस्य पूर्णत्वज्ञानवानित्यर्थः । परिपूर्णार्थमिति रामविशेषणम् ॥ ४४ ॥ ४५ ॥

रा० टी०–तदाकारमाह—हृतामिति । रावणं क्षिप्रं हत्वा वै हृतां वैदेहीमवाप्य अयोध्यां क्षिप्रं त्वं यास्यसि ॥४५॥

गो० टी०–वक्ष्यमाणनिमित्तश्रवणे श्रद्धामुत्पादयितुं प्रथमं तत्फलं दर्शयति–हृतामिति । रावणं हत्वा वैदेहीमवाप्स्यसीति क्रमः ॥ ४५ ॥

रा० टी०–तत्र हेतुमाह—महान्तीत्यादिभिः । तवार्थसिद्धये अर्थसिद्धिं बोधयितुं विद्यमानानि महान्ति शुभानि निमित्तानि पश्यामि ॥ ४६ ॥

गो० टी०–कुतोयं निश्चय इत्यत्राह–महान्तीति । महान्ति दुर्लभानि दिवि भूमौ च यानि शुभानि निमित्तानि सर्वाणि तवार्थसिद्धये पश्यामि अर्थसिद्धिकराणि पश्यामीत्यर्थः ॥ ४६ ॥

४६ ] ति० टी०–सेनामनुवाति सेनापृष्ठभागेन वाति मृदुहितसुखपदैः क्रमेण मान्द्यशैत्यसौरभाण्युक्तानि ॥ ४६ ॥

रा० टी०–निमित्ताकारमाह—अनुवात्यादिभिः । मृदुहितः मृदुत्वेन हितकारी सुखः शैत्यसौगन्ध्याभ्यां सुखप्रदः अत एव शिवः मङ्गलप्रदो वायुः सेनामनुवाति इमे मृगद्विजाः पूर्णवल्गुस्वरान् अविच्छिन्नमधुरस्वनान् प्रवदन्ति ॥ ४७ ॥

गो० टी०–अनुवातीति । सुखः सुखकरः । शीत इत्यर्थः मृदुहितः । मृदुः मार्दवः हितः युक्तः । अनुकूल इत्यर्थः । शुभः भाविशुभसूचकः वायुः सेनाम् अनुवाति अनुसृत्य वाति । पूर्णवल्गुस्वराः अन्यूनापरुषस्वराः सन्तः प्रवदन्ति ॥ ४७ ॥

४७ ] ति० टी०–पूर्णा विच्छेदरहिता वल्गवः श्रोत्रसुखाः स्वरा येषां ते ॥ ४७ ॥

१ उदिति गो. पाठः । २ घोषं भीमघोष इवार्णव इति गो. पाठः । ३ नरोत्तमाविति गो. पाठः । ४ चेति गो. रा. पाठः । ५ पूर्णार्थः स्मृतिमानिति गो. रा. पाठः ।

**उशना च प्रसन्नार्चिरनु त्वां भार्गवो गतः । ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ॥**
**अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥ ॥ ४८ ॥**
**त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः । पितामहः[1] पुरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ४९ ॥**

**रा॰ टी॰–प्रसन्ना इति ।** भार्गवो भृगुपुत्रः उशना शुक्रः त्वामनु त्वन्मङ्गलार्थं प्रसन्नार्चिर्गतः प्राप्तः ॥ ४८ ॥

**गो॰ टी॰–**भौमनिमित्तान्युक्त्वा दिव्यनिमित्तान्याह–**प्रसन्ना इत्यादि ।** त्वामनुगतः तवानुकूलदिशि स्थित इत्यर्थः। यद्वा अनुगतः पश्चाद्भागं गतः । पुरःशुक्रस्य यात्रासु प्रतिषेधादिति भावः । तथोक्तम् ज्यौतिषे–'प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । अपि शक्रेण सदृशो हतसैन्यो निवर्तते' इति ॥ उशनाच प्रसन्नार्चिरनु त्वां भार्गवो गत इत्यनेनावतारकाले जातकफलसूचनवद्रामस्यानुकूलं गोचरफलं दर्शयति विपरीतफलं राक्षसानां च । तथाहि किष्किन्धातः आग्नेयदिग्वर्तिनीं लङ्कां प्रति गच्छतो रामस्यानुकूलः शुक्र इत्युच्यते सूर्यस्थराशेः पुरोराशिस्थो हि भवति शुक्रः । सूर्यश्च तदानीं मीनस्थः । उत्तराफल्गुनी त्वद्येति प्रयाणदिनकथनात् फाल्गुनपौर्णमास्यां हि रामस्य दण्डयात्रेति पूर्वमुक्तम् । तदाच शुक्रो मेषस्थः अतो रामस्य कर्कटराशेर्मेषो हि दशमोऽनुकूलः । पूर्वोक्तदिग्वर्तिनीं लङ्कां प्रति गच्छतो रामस्य पश्चात् स्थितत्वाच्च शुक्रोऽनुकूल एव । शुक्रानुकूल्योक्तिर्बृहस्पत्याद्यानुकूल्योपलक्षणम् स ह्यवतारकाले कर्कटकस्थः तदपेक्षयाष्टात्रिंशद्वर्षं युद्धयात्राकालः । तथा च निराहृत्या षट्त्रिंशद्वर्षेषु गतेषु रामस्याष्टात्रिंशद्वर्षे युद्धारम्भे गुरोः सिंहस्थितिः सिद्धा गुरुद्वितीयता रामस्यानुकूला । शनिश्चावतारकाले तुलावर्गोत्तमस्थः। द्वैतीयावृत्तौ तुलावृश्चिकयोः पञ्चवर्षेण गतयोः सार्द्धवर्षद्वयेऽतीतेन धनुरतीत्य तदानीं मकरस्थितियोग्योऽपि कथंचिद्धनुर्वर्गोत्तमस्थ एव शनिः राहुस्तु अवतारकाले सिंहस्थः । तदष्टात्रिंशद्वर्षेऽस्मिन्कर्कटस्थितियोग्योऽप्यतिचारादिभिर्मिथुनस्थः तत्सप्तमे धनुषि केतुः । उक्तं चात्रापि–'मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ' इति । धूमाकारः केतुर्धूमकेतुः तथाच धनुषि शनिकेतू रामस्य षष्ठस्थावनुकूलौ । अङ्गारकस्तु रामरावणयुद्धप्रसङ्गे, आक्रम्याङ्गारकस्तस्थौ विशाखे अपि चाम्बर इत्युक्त्या विशाखाचतुर्थपादे वृश्चिकराशौ तिष्ठति । रामस्य पञ्चमाङ्गारकत्वफलमिदम् । यदेतद्भ्रातृबन्धरुधिरादेहादि, बुधस्य प्रतिमासं रोहिणीस्थत्वयोगेऽपि रामरावणयुद्धप्रसङ्गे, प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् । समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः इत्युक्तम् प्रजानामशुभावहत्वमतिचारवशादेव । स च रामस्य दशमस्थोऽनुकूलः । चन्द्रश्च उत्तराफल्गुनीस्थत्वात् कन्यास्थः अतस्तृतीयश्चन्द्रो रामस्यानुकूलः सूर्यो नवमस्थो रामस्यानुकूलः राहुस्तु मिथुनस्थत्वाद्द्वादशस्थ इति किंचिद्बाधकः । राक्षसानामिदं सर्वं विपरीतम् । तथाहि । राक्षसानां हि नक्षत्रं मूलम् तथाच धनू राशिः तदपेक्षया पञ्चमस्थः शुक्रः प्रतिकूलः जन्मराशिस्थौ शनिकेतू च प्रतिकूलौ राहुस्तु सप्तमस्थः किंचिदनुकूलः द्वादशस्थाङ्गारकश्च प्रतिकूलः गुरुस्तु नवमस्थोऽनुकूलः चतुर्थस्थः सूर्यः पञ्चमस्थो बुधश्च नानुकूलौ दशमस्थश्चन्द्रः किंचिदनुकूलः एवं प्रायेण ग्रहगोचारफलं राक्षसानां विपरीतमेवेति । ब्रह्मराशिः अधीतसर्ववेद इत्यर्थः विशुद्धः पापग्रहासंयुक्तः इदं द्वयमपि भार्गवविशेषणम् । परमर्षयः सप्तर्षयः । दक्षिणां दिशं प्रति गताः । प्रदक्षिणं तिष्ठद्गुप्रभृतित्वात्साधुः । आवर्तमाना इति शेषः ॥ ४८ ॥ ४९ ॥

४८ ] ति॰ टी॰–भार्गवो भृगुपुत्र उशना शुक्रोऽपि प्रसन्नार्चिस्त्वामनुगतोऽस्ति शुक्रमौढ्यं नास्तीत्युक्तं भवति । यत्तु पुरः शुक्रभावो ध्वनित इति तन्न । दक्षिणोत्तरगन्तॄणां कदापि पुरः शुक्रप्रसक्तेरभावात् । ब्रह्मराशिर्ध्रुवः । ब्रह्मणां सप्तर्षीणां राशिः पुञ्जीभावो यस्मिन्स तथा तस्माद्विशुद्धोऽभ्रादिमालिन्यरहितः । तत्पुञ्जीभावमेव दर्शयति—शुद्धा अभ्रादिहीनाः शुद्धं ध्रुवं प्रदक्षिणं कुर्वाणा अर्चिष्मन्तः प्रशस्तार्चिषो भूत्वा प्रकाशन्ते ॥ ४८ ॥

**रा॰ टी॰–ब्रह्मराशिरिति ।** ब्रह्मणां सप्तर्षीणां राशिः समूहो यत्र स ध्रुवः विशुद्धः मालिन्यहेतुभूताभ्रादिरहितोऽभवदिति शेषः अत एव सर्वे सप्तापि परमर्षयः प्रदक्षिणं ध्रुवं प्रकाशन्ते प्रकाशयन्ते ॥ ४९ ॥

४९ ] ति॰ टी॰–सपुरोहितः । भगवद्विश्वामित्रसृष्टस्वसमीपवर्तिसप्तर्षिमण्डलमध्यवर्तिवसिष्ठसहित इत्यर्थः । ईदृशस्त्रिशंकुरस्माकं पितामहोऽस्माकं पुरो भाति तस्य दक्षिणदिक्स्थत्वात् । ' पितामहः पुरोऽस्माकम् ' इति पाङ्कः पाठ इति कतकः ॥ ४९ ॥

**रा॰ टी॰–त्रिशङ्कुरिति ।** इक्ष्वाकूणाम् अस्माकं पितामहः सपुरोहितो विश्वामित्रसहितः त्रिशंकुः विमलः सन् अस्माकं पुरोऽग्रे भाति त्रिशङ्कोर्दक्षिणदिग्वर्तित्वेनोपपन्नमिदम् ॥ ५० ॥

**गो॰ टी॰–त्रिशङ्कुरिति ।** पुरोहितः विश्वामित्रः । सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनरिति बालकाण्डोक्तरीत्या विश्वामित्रसृष्टसप्तर्ष्यन्तर्गतवसिष्ठो वा । पितामहवरः पितामहेषु कूटस्थेषु श्रेष्ठः । इक्ष्वाकूणां प्रधानकूटस्थ इत्यर्थः ॥ ५० ॥

---

[1] महवर इति गो. पाठः ।

विमले च प्रकाशेते विशाखे निरुपद्रवे । नक्षत्रं परमस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५० ॥
नैर्ऋतं नैर्ऋतानां च नक्षत्रमतिपीड्यते । मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥ ५१ ॥
सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् । काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् ॥ ५२ ॥
प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च । प्रवान्ति नाधिका गन्धा यथर्तुकुसुमा द्रुमाः ॥ ५३ ॥
व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो । देवानामिव सैन्यानि सङ्ग्रामे तारकामये ॥
एवमार्य समीक्ष्यैतत्प्रीतो भवितुमर्हसि ॥ ॥ ५४ ॥

५० ] ति० टी०–इक्ष्वाकूणां परं नक्षत्रं कुलनक्षत्रम् । विमलेऽङ्गारकादिदुष्टग्रहाक्रमणरहिते ॥ ५० ॥

रा० टी०–विमल इति । इक्ष्वाकूणामस्माकं नक्षत्रं निरुपद्रवं ग्रहाक्रान्तिरहितं विशाखे प्रकाशेते ॥ ५१ ॥

गो० टी०–विमले चेति । निरुपप्लवे क्रूरग्रहानाक्रान्ते । विशाखे इति द्विवचनं नक्षत्रद्वयात्मकत्वात् । विशाखाख्यं नक्षत्रवरमित्यर्थः विशाखाया इक्ष्वाकुनक्षत्रत्वं ज्यौतिषदर्पणे दर्शितम् अश्विन्यां यदि केतुरित्यारभ्य इक्ष्वाकुकुलनाथस्तु हन्यतो यदि भवेद्विशाखास्थस्त्विति ॥ ५१ ॥

५१ ] ति० टी०–अथ नैर्ऋतनक्षत्रपीडामाह—नैर्ऋतं निर्ऋतिदेवताकम् मूलः मूलमिति यावत् आर्षं पुंस्त्वम् अतिपीड्यतेऽत्यन्तं पीड्यते । केन तत्राह—मूलवतेति । मूलवतोच्चैर्दण्डाकारतयोत्थितेन धूमकेतुना स्पृष्टो धूप्यते संजाततापो भवति ॥ ५१ ॥

रा० टी०–नैर्ऋतमिति । नैर्ऋतं निर्ऋतिदेवताकम् । अत एव नैर्ऋतानां नक्षत्रं मूलो मूलं मूलवता मूलनियामकेन धूमकेतुना स्पृष्टोऽत एव पीड्यते पीडोत्पाद्यते अत एव धूप्यते संतप्यते मूलेनेति शेषः ॥ ५२ ॥

गो० टी०–स्वानुकूल्यमुक्त्वा परप्रातिकूल्यमाह–नैर्ऋतमिति । नैर्ऋतं नैर्ऋतदैवतम् । नैर्ऋतानां राक्षसानाम् । किं तन्नैर्ऋतं तस्य पीडा केनेत्याकाङ्क्षायामाह–मूल इति । मूलवता अन्तिकवता । मूलं वशीकृतौ स्वीये शीर्षे तारान्तिकादिष्विति वैजयन्ती । तेन धूमकेतुना स्पृष्टो मूलः मूलनक्षत्रम् धूप्यते संताप्यते । "धूप, संतापे" इति धातुः ॥ ५२ ॥

५२ ] ति० टी०–यतः कालेऽन्तकाले कालगृहीतानां मृत्युगृहीतानां नक्षत्रं गृहपीडितं शन्यङ्गारकराह्वादिगृहपीडितं भवतीति शेषः ॥ ५२ ॥

रा० टी०–सर्वमिति । कालगृहीतानामेव नक्षत्रं ग्रहपीडितं भवति अतः काले अस्मिन् समये एतदृश्यमानं सर्वं मूलपीडनादि राक्षसानां विनाशाय समुपस्थितम् ॥ ५३ ॥

गो० टी०–ततः किमित्यत्राह–सर्वमिति । एतन्नक्षत्रपीडनमेव राक्षसानां विनाशाय सर्वम् अशुभसूचकनिमित्तजातं समुपस्थितमित्यर्थः तदेवोपपादयति–काल इति । कालगृहीतानां मृत्युगृहीतानां नक्षत्रम् काले अन्तकाले ग्रहपीडितं भवति ॥ ५२ ॥

५३ ] ति० टी०–उशना चेत्यादितदनन्तं सत्रे किंचित्काले विश्रम्य फलमूलादि भुक्त्वा पुना रात्रौ गमनकाले लक्ष्मणेन प्रदर्श्यते । अतएव वक्ष्यति—' सा स्म याति दिवागतम ' इति । सुरसा आपः । सरसीष्विति शेषः । गन्धा अजन्तः गन्धवन्तो वायवोऽधिका न प्रवान्ति मन्दं यान्तीत्यर्थः । द्रुमाः स्वस्वर्तुमनतिक्रम्य जातकुसुमाः ॥ ५३ ॥

रा० टी०–रिपुविध्वंसकनिमित्तान्युक्त्वा मोद्भवकारकनिमित्तान्याह–प्रसन्ना इति । सुरसाः शोभनरसविशिष्टाः अत एव प्रसन्नाः आपः सन्तीति शेषः फलवन्ति फलविशिष्टानि वनानि सन्ति गन्धाः शोभनगन्धविशिष्टाः वाताः अधिकाः अपेक्षातोऽतिरिक्ताः न प्रवान्ति द्रुमाः यथर्तुकुसुमाः ऋतुमनतिक्रम्य कुसुमविशिष्टाः सन्ति ॥ ५४ ॥

गो० टी०–पुनरपि विजयसूचकान्याह–प्रसन्ना इत्यादिना । द्रुमाः यथर्तुकुसुमाः ऋतुमनतिक्रम्य जातानि कुसुमानि येषां ते तथोक्ताः अकालकुसुमोत्पत्तिरुत्पातः स इदानीं नास्तीत्यर्थः । तथोक्तं वराहमिहिरेण–'शीतोष्णानां विपर्यासः फलपुष्पमकालजम् अशोष्याणां विशोषश्च फलं षाण्मासिकं भवेत् इति ॥ ५४ ॥

५४ ] ति० टी०–आमयशब्देन दुःखनाशको लक्ष्यते । तारकस्य तारकासुरस्यामयो विनाशो यस्मिंस्तादृशे सङ्ग्रामे देवसेनान्या व्यूढानि देवानां सैन्यानीव प्रकाशन्ते ॥ ५४ ॥

रा० टी०–व्यूढानीति । तारकस्य तन्नामकासुरस्य आमयो विध्वंसो यस्मिन् तस्मिन् संग्रामे व्यूढानि देवानां सैन्यानीव कपिसैन्यान्यधिकं प्रकाशन्ते ॥ ५५ ॥

रा० टी०–एवमिति । आर्य हे राम एवमेतत्कल्याणनिमित्तं समीक्ष्य प्रीतो भवितुमर्हसि इति अनेन प्रकारेण भ्रातरमाश्वास्य आश्वासनार्थं सौमित्रिरब्रवीत् ॥ ५६ ॥

गो० टी०–व्यूढानीति । व्यूढानि कृतव्यूहानि । तारकस्य तारकासुरस्य आमयो वधो यस्मिन् सः तारकामयः तस्मिन् । यद्वा तारकायाः बृहस्पतिपत्न्याः आमयो मनोव्याधिः यस्मिन । तादृशसंग्रामसंज्ञेयम । तथोक्तं श्रीविष्णु

१ नक्षत्रवरमिति गो. पाठः । २ अभीति गो. पाठः । ३ अत्यधिकं गन्धानिति गो. पाठः । ४ समीक्ष्यैतानिति गो. पाठः ।

इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत् । अथावृत्य महीं कृत्स्नां जगाम हरिवाहिनी ॥ ५५ ॥
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैरपि । कराग्रैश्चरणाग्रैश्च वानरैरुद्धतं रजः ॥ ५६ ॥
भीममन्तर्दधे लोकं निवार्य सवितुः प्रभाम् । सपर्वतवनाकाशं दक्षिणां हरिवाहिनी ॥ ५७ ॥
छादयन्ती ययौ भीमा द्यामिवाम्बुदसंततिः । उत्तरन्त्याश्च सेनायाः सततं बहुयोजनम् ॥ ५८ ॥
नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत् । सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान् ॥ ५९ ॥
समान्भूमिप्रदेशांश्च वनानि फलवन्ति च । मध्येन च समन्ताच्च तिर्यक्चाधश्च साविशत् ॥ ६० ॥
समावृत्य महीं कृत्स्नां जगाम महती चमूः । ते हृष्टवदनाः सर्वे जग्मुर्मारुतरंहसः ॥ ६१ ॥
हरयो राघवस्यार्थे समारोपितविक्रमाः । हर्षं वीर्यं बलोद्रेकान्दर्शयन्तः परस्परम् ॥ ६२ ॥
यौवनोत्सेकजाद्दर्पाद्विविधांश्चक्रुरध्वनि । तत्र केचिद्द्रुतं जग्मुरुत्पेतुश्च तथापरे ॥ ६३ ॥

पुराणे—एवं च तयोरलीवोम: संग्रामस्तारकानिमित्तस्तारकामयो नामाभवदिति ॥ ५५ ॥

गो० टी०—एवमिति । अथाश्वास्याब्रवीत् आश्वासनपूर्वकमब्रवीत् । अनेन प्रथमसर्गान्तोक्तः श्लोकोऽनुवृत्त इति ज्ञायते ॥ ५६ ॥

५५ ] ति० टी०—सौमित्रिः स्वयंनिमित्तैराश्वास्य भ्रातुराश्वासाय हृष्टः सन्भ्रातरमब्रवीत् । 'आश्वास्य' इति पाठः ॥५५॥

रा० टी०—अथेति । अथ लक्ष्मणवचनश्रवणानन्तरं महीमावृत्य हरिवाहिनी जगाम अयं पृथक् । नखदंष्ट्रायुधैः ऋक्षादिभिः कर्तृभिः कराग्रादिभिः करणैरुद्धतमुत्थितं भीमं रजः सवितुः प्रभां निवार्य लोकमन्तर्दधे आच्छादयामास अयंचनुभ्रगमेकान्वयि ॥ ५७ ॥ ५८ ॥

गो० टी०—पुनरपि सेनायाः दुर्गमनमाह—अथेति । ऋक्षवानरशार्दूलैः ऋक्षशार्दूलैः वानरशार्दूलैश्च । शार्दूलशब्दः श्रेष्ठवाची ॥ ५७ ॥

५६ ] ति० टी०—ऋक्षादयः कर्तारः कराग्रादीनि करणानि ॥ ५६ ॥

गो० टी०—कराग्रैरिति । अन्तर्दधे आच्छादयामास ॥ ५८ ॥

५७–५८ ] ति० टी०—उद्धतं भीमं रजो लोकमन्तर्दधेऽन्तर्हितमकरोत् । दक्षिणां दिशमिति शेषः ॥ ५७–५८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सपर्वतेति । यामम्बुदसन्ततिः अश्वसमूह इव दक्षिणां दिशं छादयन्ती हरिवाहिनी ययौ ॥ ५९ ॥

गो० टी०—सपर्वतेति । हरिवाहिनी दक्षिणां महीम् अम्बुदसंततिर्द्यामिव छादयन्ती ययाविति संबन्धः ॥ ५९ ॥

रा० टी०—उत्तरन्त्यामिति । सेनायामुत्तरन्त्यां सत्यां सर्वाणि नदीस्रोतांसि बहुयोजनं विपरीतवत्सस्यन्दुः वानरादिभिरत्यन्तमाहतत्वात् प्रवाहाभिमुखं चलुरित्यर्थः ॥ ६० ॥

गो० टी०—उत्तरन्त्यामिति । संततं निरन्तरं यथा भवति तथा उत्तरन्त्याम् । विपरीतवत् वैपरीत्यवत भावप्रधानो निर्देशः । बहुयोजनं च यथा भवति तथा सस्यन्दुः ॥ ६० ॥

५९ ] ति० टी०—सर्वाणि नदीस्रोतांसि विपरीतवद्वैपरीत्येन सस्यन्दुः । यथाभ्रेषु धावत्सु चन्द्रो धावतीव, तद्वत्सेनागतिर्नदीप्रवाहेषु भ्रान्त्या भाति स्मेत्यर्थ इति कतकः । वस्तुतो नदीषु वानराणां प्रवाहाभिमुखं तरणे तैराहतानि जलानि विपरीतवहनानीत्यर्थः ॥ ५९ ॥

६० ] ति० टी०—साविशत् । अयं द्वितीयो वाम इति प्रतीयते ॥ ६० ॥

रा० टी०—सरांसीति । सरआदीनि मध्यादिना सा चमूराविशत् अयं द्वितीयो निवास इति प्रतीयत इति भट्टाः । सार्धश्लोक एकान्वयी ॥ ६१ ॥

गो० टी०—सरांसीत्यादिसार्धश्लोक एकान्वयः यथायोग्यं च संबन्धः सरांसि शीतलसलिलतया मध्येनाविशत् । पर्वतान् द्रुमाकीर्णतया तिर्यगाविशत् । समान् भूमिप्रदेशान् समन्तादाविशत् । वनानि फलवत्तया अध आविशत् ॥ ६१ ॥

६१ ] ति० टी०—पुनर्यात्रामाह—समावृत्येति ॥ ६१ ॥

गो० टी०—समावृत्येत्यर्थम् ॥ ६२ ॥

६२ ] ति० टी०—समारोपितविक्रमाः । एवमेव मया कर्तव्यमित्यसाध्येऽप्यर्थे चित्तमंक्रमितविक्रमप्रकाराः ॥ ६२ ॥

गो० टी०—त इत्यादि । मारुतरंहसः वायुवेगाः समारोपितविक्रमाः अभिरूढविक्रमा इत्यर्थः । उद्रेकशब्दोऽतिशयवाची । दर्पान् दर्पजव्यापारान् ॥ ६३ ॥ ६४ ॥

६३ ] ति० टी०—विविधान्प्रकारान् । तानेवाह—तत्रेति ॥ ६३ ॥

रा० टी०—ते इति । मारुतरंहसो हरयः यौवनोत्सेकजात् यौवनवृद्धिजनितात् दर्पात् हेतोः परस्परं हर्षादि दर्शयन्तः सन्तः जग्मुः विविधान् बलोद्रेकान् विलासान् चक्रुश्च । श्लोकद्वयमेकान्वयि ॥ ६३ ॥ ६४ ॥

रा० टी०—विलासानाह—तत्रेत्यादिभिः । किलकिलां

१ महती चमूरिति गो. पाठः । २ वृत्ता इति गो. पाठः । ३ उत्थितमिति गो. पाठः । ४ उत्तरन्त्यां च सेनायामिति गो. रा. पाठः । ५ मनसइति गो. पाठः । ६ दर्पवीर्यबलेति गो. पाठः । ७ यौवनोत्सुकजान्दर्पानिति गो. पाठः ।

केचित्किलकिलां चक्रुर्वानरा वनगोचराः । प्रास्फोटयंश्च पुच्छानि संनिजघ्नुः पदान्यपि ॥ ६४ ॥
भुजान्विक्षिप्य शैलांश्च द्रुमानन्ये बभञ्जिरे । आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः ॥ ६५ ॥
महानादान्प्रमुञ्चन्ति क्ष्वेडामन्ये प्रचक्रिरे । ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः ॥ ६६ ॥
जम्भमाणाश्च विक्रान्ता विचिक्रीडुः शिलाद्रुमैः। ततः शतसहस्रैश्च कोटिभिश्च सहस्रशः ॥ ६७ ॥
वानराणां सुघोराणां श्रीमत्परिवृता मही । सा स्म याति दिवारात्रं महती हरिवाहिनी ॥ ६८ ॥
प्रहृष्टमुदिताः सर्वे सुग्रीवेणाभिपालिताः । वानरास्त्वरिता यान्ति सर्वे युद्धाभिनन्दिनः ॥
प्रमोक्षयिषवः सीतां मुहूर्तं क्वापि नावसन् ॥ ॥ ६९ ॥
ततः पादपसंबाधं नानावनसमायुतम् । सह्यपर्वतमासाद्य वानरास्ते समारुहन् ॥ ७० ॥
काननानि विचित्राणि नदीप्रस्रवणानि च । पश्यन्नपि ययौ रामः सह्यस्य मलयस्य च ॥ ७१ ॥
चम्पकांस्तिलकांश्चूतान्प्रसेकान्सिन्दुवारकान् । तिनिशान्करवीरांश्च भजन्ति स्म प्लवङ्गमाः ॥ ७२ ॥
[11]अशोकांश्च करञ्जांश्च प्लक्षन्यग्रोधपादपान् । जम्बुकामलकान्[12]नागान्भजन्ति स्म प्लवङ्गमाः ॥ ७३ ॥

स्वजातीयध्वनिं प्रास्फोटयन्निति पुच्छानि प्रास्फोटयन् भूमौ प्राक्षिपन् पदानि संनिजघ्नुश्च ॥ ६५ ॥

गो० टी०–तान् विवृणोति–तत्रेत्यादिना । किलकिलेति वानरशब्दानुकरणम् ॥ ६५ ॥

६४ ] ति० टी०–वानराणां हर्षादिजनितशब्दः किलकिला प्रास्फोटयन्पुच्छानि भूमावताडयन् ॥ ६४ ॥

गो० टी०–प्रास्फोटयन्निति । प्रास्फोटयन् भूमावास्फालयन् सन्निजघ्नुः । भूमाविति शेषः । भुजानिति । भुजान् विक्षिप्य प्रसार्य द्रुमान् शैलांश्च बभञ्जिरे ॥ ६६ ॥

६५ ] ति० टी०–विक्षिप्य प्रसार्य ॥ ६५ ॥

रा० टी०–भुजानिति । भुजान् शाखाः विक्षिप्य प्रसार्य द्रुमान् गिरिशृङ्गाणि च आरोहन्तः सन्तः शैलान् बभञ्जिरे ६६

गो० टी०–आरोहन्त इति । गिरिगोचराः गिरिचराः क्ष्वेलां सिंहनादम् ॥ ६७ ॥

६६–६७ ] ति० टी०–ममृदुर्मर्दितवन्तः ॥ ६६ ॥ ६७ ॥

रा० टी०–महानादानिति । क्ष्वेडां हास्यविशेषमन्ये प्रचक्रिरे ॥ ६७ ॥

रा० टी०–जृम्भमाणा इति । विक्रान्ताः अतिपराक्रमवन्तः अत एव जृम्भमाणाः गात्रविक्षेपं कुर्वन्तः सन्तः शिलाद्रुमैस्तत्प्रक्षेपादिभिर्विचिक्रीडुः केचिदिति शेषः ॥ ६८ ॥

रा० टी०–तत इति । ततस्तदा वानराणां शतसहस्रादिभिः श्रीमत् अतिशोभाविशिष्टं यथा भवति तथा परिवृता मही बभूवेति शेषः ॥ ६९ ॥

गो० टी०–ऊरुवेगैरिति । ममृदुः मर्दनं चक्रुः ॥ ६८ ॥

गो० टी०–शतैरिति । श्रीमद्यथा भवति तथा परिवृता आसीदिति संबन्धः ॥ ६९ ॥

६८ ] ति० टी०–श्रीमत् लुप्ततृतीयान्तम् श्रीमद्भिरित्यर्थः । अयं तृतीयो वासः । दिवारात्रं मध्यरात्र एव याममात्रं वास इत्याशयः ॥ ६८ ॥

रा० टी०–सेति । हरिवाहिनी दिवारात्रं याति सुग्रीवेण अभिपालिताः सर्वे वानराः प्रहृष्टाः मुदिताः अभवन्निति शेषः ॥ ७० ॥

गो० टी०–सा स्मेति । सेना इनेन स्वामिना सहिता७०

६९ ] ति० टी०–प्रमोक्षयिषवः । मोक्षशब्दात् " तत्करोति–" इति णौ सन्यार्षत्वादभ्यासलोपं उप्रत्ययं च रूपम् । प्रमोचयितुमिच्छावन्त इत्यर्थः । नावसन् । स्थितेति शेषः ॥६९॥

रा० टी०–वानरा इति । सीताप्रमोक्षयिषवः सर्ववानराः त्वरिताः सन्तो यान्ति अत एव मुहूर्तमपि क्वापि नावसन् प्रमोक्षशब्दात् तत्करोतीति णिचि सन्युप्रत्यये च सिद्धं द्वित्वाभावस्तु संज्ञापूर्वकविधेरनित्यत्वात् ॥ ७१ ॥

गो० टी०–वानरा इति । प्रमोक्षयिषवः मोचयितुमिच्छवः सनि द्विर्वचनाभाव आर्षः । " मोक्ष, निरसने " इत्यस्माद्धातोः सन् ॥ ७१ ॥

७० ] ति० टी०–सह्यपर्वतं तत्पर्वतदक्षिणभागं समासाद्य ते वानराः समारुहन् । तच्छिखरमिति शेषः ॥ ७० ॥

रा० टी०–तत इति । पादपैः संबाधं निबिडं सह्यपर्वतमासाद्य प्राप्य वानराः समारुहन् समारोहन् सह्यपर्वतमासेदुर्मलयं च महीधरम् इति तीर्थपाठः ॥ ७२ ॥

गो० टी०–तत इति । ततः दिवारात्रान्ते ॥ ७२ ॥

७१–७३ ] ति० टी०–' सह्यपर्वतमासेदुर्मलयं च महीधरम् ' इति पाठान्तरं तीर्थसंमतम् ॥ ७१–७३ ॥

१ शतैरिति गो. पाठः । २ वृतेति गो. पाठः । ३ हृष्टा प्रमुदिता सेनेति गो. पाठः । ४ रक्षितेति गो. पाठः । ५ त्वरितामिति गो. पाठः । ६ नासतेति गो. पाठः । ७ भृगेति गो. पाठः । ८ आसेदुर्मलयं च महीधरमिति गो. पाठः । ९ ऽतीति गो. पाठः । १० बकुलानिति गो. पाठः । ११ अङ्कोलानिति गो. पाठः । १२ नीपानिति गो. पाठः ।

प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः । वायुवेगप्रचलिताः पुष्पैरवकिरन्ति तान् ॥ ७४ ॥
मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः । षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥ ७५ ॥
अधिकं शैलराजस्तु धातुभिस्तु विभूषितः । धातुभ्यः प्रसृतो रेणुर्वायुवेगेन घट्टितः ॥ ७६ ॥
सुमहद्वानरानीकं छादयामास सर्वतः । गिरिप्रस्थेषु रम्येषु सर्वतः संप्रपुष्पिताः ॥ ७७ ॥
केतक्यः सिन्दुवाराश्च वासन्त्यश्च मनोरमाः । माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः ॥ ७८ ॥
चिरिबिल्वा मधूकाश्च वञ्जुला बकुलास्तथा । रञ्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः ॥ ७९ ॥
चूताः पाटलिकाश्चैव कोविदाराश्च पुष्पिताः । मुचुलिन्दार्जुनाश्चैव शिंशपाः कुटजास्तथा ॥
[ धवाः शाल्मलयश्चैव रक्ताः कुरवकास्तथा ॥ ] ॥ ८० ॥
हिन्तालास्तिनिशाश्चैव चूर्णका नीपकास्तथा । नीलाशोकाश्च सरला अङ्कोलाः पद्मकास्तथा ॥ ८१ ॥

रा० टी०–काननानीति । पश्यन्नवलोकयन्नेव रामो ययौ ॥ ७३ ॥

रा० टी०–चम्पकानिति । प्लवङ्गमाः चम्पकादीन् भञ्जन्ति स्म ॥ ७४ ॥

रा० टी०–अशोकानिति । अशोकादीनि भञ्जन्ति स्म ॥ ७५ ॥

गो० टी०–काननानीति । सह्यस्य मलयस्य च काननानीत्यन्वयः । सह्यमलयौ नाम मार्गवर्तिनौ कौचित्पर्वतौ ७३

गो० टी०–बकुलानिति । बकुलान् केसरवृक्षान् । तिलकान् क्षुरकवृक्षान् । चूताः प्रसिद्धाः अशोकाश्च । सिन्धुवारकान् निर्गुण्डीवृक्षान । करवीराः प्रसिद्धाः । तिमिशान् नेमिवृक्षान् ॥ ७४ ॥

गो० टी०–अङ्कोलानित्यादि । अङ्कोलान् निकोचकवृक्षान् करञ्जान् नक्तमालवृक्षान् प्लक्षान् जटीवृक्षान् न्यग्रोधान् वटान् तिन्दुकान् स्फूर्जकवृक्षान् जम्बकामलकाः प्रसिद्धाः नीपाः कदम्बाः ॥ ७५ ॥

७४ ] ति० टी०–प्रस्तरेषु पाषाणेषु । स्थितानिति शेषः ॥ ७४ ॥

रा० टी०–प्रस्तरेष्विति । प्रस्तरेषु स्थितान् तान् रामादीन् काननद्रुमाः पुष्पैरवकिरन्ति ॥ ७६ ॥

गो० टी०–प्रस्तरेष्विति । प्रस्तरेषु शिलासु । स्थिता इति शेषः । वायुवेगः वानरसेनावेगजवायुवेगः ॥ ७६ ॥ ७७॥

७५ ] ति० टी०–षट्पदैरनुकूजद्भिरुपलक्षितो मारुतो वाति ॥ ७५ ॥

रा० टी०–मारुत इति । मधुगन्धिषु वनेषु षट्पदैरुपलक्षितः सुखसंस्पर्शः मन्द इत्यर्थः मारुतो वाति ॥ ७७ ॥

७६–७७ ] ति० टी०–धातुभ्यो गैरिकादिभ्यः ॥७६-७७॥

७८ ] ति० टी०–के पुष्पितास्तत्राह—केतक्य इत्यादि । गन्धपूर्णा गन्धाढ्याः । इदं सर्वविशेषणम् । कुन्दगुल्माः कुन्दानां गुल्माः ॥ ७८ ॥

७९ ति० टी०–वञ्जुलो वानीरः ॥ ७९ ॥

८०–८१ ] ति० टी०–कोविदारः पीतकुरण्टकः॥८०॥८१

रा० टी०–अधिकमिति । शैलराजस्तु धातुभिः अधिकं सुविभूषितोऽभवदिति शेषः । अर्धं पृथक् धातुभ्य इति । धातुभ्यः गैरिकादिभ्यः प्रसृतः प्रचलितः वायुवेगेन घट्टितः संघीभूतो रेणुः वानरानीकं छादयामास ॥ ७८ ॥

गो० टी०–वानराणां धातुरेणुरूषितत्वं वक्तुं पर्वतस्य धातुमत्तामाह–अधिकमिति । अर्धमेकं वाक्यम् । शैलराजः सह्यः ॥ ७८ ॥

गो० टी०–धातुभ्य इति । विघट्टितः उत्थापितः ॥७९॥

रा० टी०–गिरीति । गिरिप्रस्थेषु विद्यमानाः सर्वे केतकीप्रभृतयः प्रीयमाणैः पुष्पदर्शनादिना प्रीतिं प्राप्नुवद्भिः प्लवङ्गमैः पर्याकुलीकृताः अर्द्धदशकमेकान्वयि ॥ ७९–८३ ॥

गो० टी०–गिरिप्रस्थेत्यादिसार्द्धपञ्चश्लोक्येकान्वया । पुष्पिता इत्येतत्सर्वविशेषणम् । अतस्तस्य बहुशः प्रयोगः । वसन्ते पुष्प्यन्तीति वासन्त्यः । इदं माधवीविशेषणम् । "कालात्साधुपुष्प्यत्पच्यमानेषु" इत्यण् । गन्धैः पूर्णाः गन्धपूर्णाः कुन्दाः चिरिबिल्वाः नक्तमालाः मधूकाः गुडपुष्पाः वञ्जुलाः वानीराः प्रियकाः बन्धूकाः स्फूर्जकाः तिन्दुकवृक्षाः नागवृक्षाः नागकेसराः पाटलयः पाटलाः कोविदाराः चमरकाः मुचुलिन्दाः खर्जूरविशेषाः अर्जुनाः ककुभाः शिंशपाः पिच्छिलाः कुटजाः जयवृक्षाः धवाः धुन्धुरवृक्षाः शाल्मलयः मोचाः 'पिच्छिला पूरणी मोचा चिरायुः शाल्मलिर्द्वयोः' इत्यमरः । हिन्तालाः तालविशेषाः चूर्णकाः आमलकविशेषाः नीपकाः कदम्बाः वरणाः वारुणाः पद्मकाः छगन्धिपुष्पा वृक्षविशेषाः एवंभूता वृक्षाः प्लवमानैः प्लवङ्गैः पर्याकुलीकृता इत्यन्वयः ॥ ८० ॥ ८४ ॥

१ स्थिता इति गो. पाठः । २ वायुवेगविघट्टित इति गो. पाठः । ३ पर्वत इति गो. पाठः । ४ बकुलाः प्रियका इति गो. पाठः । ५ स्फूर्जका इति गो. पाठः; रञ्जका इति रा. पाठः । ६ पाटलय इति गो. पाठः । ७ अर्धमेतदधिकं गो. पाठे । ८ वरणा इति गो. पाठः ।

[1]प्रीयमाणैः प्लवङ्गैस्तु सर्वे पर्याकुलीकृताः । वाप्यस्तस्मिन्गिरौ [2]रम्याः पल्वलानि तथैव च ॥ ८२ ॥
चक्रवाकानुचरिताः कारण्डवनिषेविताः । प्लवैः क्रौञ्चैश्च संकीर्णा वराहमृगसेविताः ॥ ८३ ॥
ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः । व्यालैश्च बहुभिर्भीमैः सेव्यमानाः समन्ततः ॥ ८४ ॥
पद्मैः सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा । वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः ॥ ८५ ॥
तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा । स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः ॥ ८६ ॥
अन्योन्यं प्लावयन्ति स्म शैलमारुह्य वानराः । फलान्यमृत[3]गन्धीनि मूलानि कुसुमानि च ॥ ८७ ॥
[4]बभञ्जुर्वानरास्तत्र पादपानां मदोत्कटाः । द्रोणमात्रप्रमाणानि लम्बमानानि वानराः ॥ ८८ ॥
ययुः पिबन्तः [5]स्वस्थास्ते मधूनि मधुपिङ्गलाः । पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः ॥ ८९ ॥
विधमन्तो गिरिवरान्प्रययुः प्लवगर्षभाः । वृक्षेभ्योऽन्ये तु कपयो [6]नदन्तो मधुदर्पिताः ॥ ९० ॥
अन्ये वृक्षान्प्रपद्यन्ते [7]प्रपिबन्त्यपि चापरे । बभूव वसुधा तैस्तु संपूर्णा हरि[8]पुङ्गवैः ॥
यथा कलमकेदारैः पक्वैरिव वसुंधरा ॥ ॥ ९१ ॥
महेन्द्रमथ संप्राप्य रामो राजीवलोचनः । [9]आरुरोह महाबाहुः शिखरं द्रुमभूषितम् ॥ ९२ ॥
ततः शिखरमारुह्य रामो दशरथात्मजः । कूर्ममीनसमाकीर्णमपश्यत्सलिला[10]कुलम् ॥ ९३ ॥

---

८२-८४ ] ति० टी०—प्रीयमाणैः उक्तपुष्पदर्शनेनेति शेषः ॥ ८२ ॥ ८४ ॥

८५ ] ति० टी०—तत्र सह्यगिरिप्रान्ते ॥ ८५ ॥

रा० टी०—वाप्य इति । तस्मिन् गिरौ वाप्यः रम्याः पल्वलानि च रम्याणि सन्तीति शेषः लिङ्गविपरिणामेनान्वयः अर्धं पृथक् ॥ ८४ ॥

रा० टी०—रम्यत्वमेवोपपादयन्नाह—चक्रवाकेत्यादिभिः । चक्रवाकैः अनुचरिताः निषेविताः कारण्डवैर्जलकाकैर्निषेविताः ऋक्षादिभिः सेव्यमानाः पद्मादिभिरुपलक्षिताः अत एव रम्याः जलाशयाः सन्तीति शेषः तरक्षुर्मृगभक्षको जन्तुविशेषः । श्लोकत्रयमेकान्वयि ॥ ८५–८७ ॥

गो० टी०—वाप्य इत्यादि । जलाशया इत्यन्तमेकं वाक्यम् जलाशयाः जलपूर्णा इति वापीविशेषणम् अत्रापि पर्याकुलीकृता इत्यनुषज्यते । कारण्डवाः जलकुक्कुटाः प्लवैः जलकाकैः क्रौञ्चैः प्रसिद्धैः तीरवनमृगानाह—वराहेत्यादिना । तरक्षुभिः मृगादनैः व्यालैः दुष्टगजैः सौगन्धिकैः कल्हारैः वारिजैरिति । एवमिति शेषः ॥ ८६ ॥ ८७ ॥

८६ ] ति० टी०—तस्य सह्यस्य मलयस्य च ॥ ८६ ॥

रा० टी०—तस्येति । तस्य पर्वतस्य सानुषु द्विजगणाः पक्षिसमूहाः कूजन्ति वानराः अत्र जले स्नात्वा उदकानि पीत्वा क्रीडन्ति ॥ ८८ ॥

गो० टी०—तस्य सानुष्वित्यर्धमेकं वाक्यम् । कूजन्ति चुकूजुः । तत्सैन्यदर्शनादिति भावः ॥ ८८ ॥

गो० टी०—स्नात्वेति । अत्र जले वापीजले । प्लावयन्ति सिञ्चन्ति ॥ ८९ ॥

८७-९० ] ति० टी०—अमृतगन्धीन्यमृतोपमानि । अयं चतुर्थो वासः ॥ ८७ ॥ ९० ॥

रा० टी०—अन्योन्यमिति । वानराः शैलमारुह्य अन्योन्यं प्लावयन्ति स्म अर्धं पृथक् । फलानीति । तत्र तस्मिन् समये मदोत्कटाः वानराः पादपानां फलादीनि बभञ्जुः अयं चतुर्थो निवास इति भट्टाः ॥ ८९ ॥

गो० टी०—शैलमारुह्येत्युत्तरशेषः अमृतगन्धीनि अमृतस्वादूनि । मदोत्कटाः मदमत्ताः ॥ ९० ॥

रा० टी०—द्रोणेति । द्रोणमात्रं प्रमाणं येषां तानि लम्बमाना नि मधूनि पिबन्तः स्वस्थास्ते वानराः ययुः जग्मुः॥९०॥

गो० टी०—द्रोणमात्रेति । द्रोणमात्रप्रमाणानि द्रोणं शिवद्वयं तत्प्रमाणमधुपूर्णानि मधूनि मधुपटलानि । मधुपिङ्गलाः मधुवत्पिङ्गलवर्णाः ॥ ९१ ॥

रा० टी०—गमनप्रकारं बोधयन्नाह—पादपानिति ॥९१॥

गो० टी०—पादपानिति । विधमन्तः दहन्तः "ध्मा, शब्दाग्निसंयोगयोः" इति धातुः ॥ ९२ ॥

रा० टी०—वृक्षेभ्य इति । दर्पिताः अन्ये कपयः वृक्षेभ्यो मधु गृहीत्वा नदन्त आसन्निति शेषः अन्ये वृक्षान् तरून् प्रपद्यन्ते अपरे मधु प्रपिबन्ति ॥ ९२ ॥ "

गो० टी०—वृक्षेभ्य इति । अन्ये वृक्षेभ्यः वृक्षेभ्योऽन्यत्र अत्रापि ययुरित्यनुषज्यते ॥ ९३ ॥

९१-९३ ] ति० टी०—पीतमधुभिर्हरिभिरावृतभुव उपमा—यथेति । पक्वैः पक्वफलैः कलमकेदारैर्व्रीहिक्षेत्रैर्यथा भाति । इवशब्दस्तथार्थे । तथा तैः पूर्णा वसुधा बभूव॥९१॥९३

---

१ प्लवमानैरिति गो. पाठः । २ शीता इति गो. पाठः। ३ गन्धानीति रा. पाठः । ४ बुभुजुरिति गो. पाठः । ५ हृष्टा इति गो. पाठः । ६ नर्दन्त इति गो. पाठः । ७ प्रपतन्तीति गो. पाठः । ८ यूथपैरिति गो. पाठः । ९ अध्यारोहन्निति गो. पाठः । १० करमिति गो. पाठः ।

ते सह्यं समतिक्रम्य मलयं च महागिरिम् । आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम् ॥ ९४ ॥
अवरुह्य जगामाशु वेलावनमनुत्तमम् । रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ९५ ॥
अथ धौतोपलतलां तोयौघैः सहसोत्थितैः । वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥ ९६ ॥
एते वयमनुप्राप्ताः सुग्रीव वरुणालयम् । इहेदानीं विचिन्ता सा या नः पूर्वमुपस्थिता[1] ॥ ९७ ॥
अतः परमतीरोऽयं सागरः सरितां पतिः । न चायमनुपायेन शक्यस्तरितुमर्णवः[2] ॥ ९८ ॥
तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिह । यथेदं वानरबलं परं पारमवाप्नुयात् ॥ ९९ ॥
इतीव स महाबाहुः सीताहरणकर्शितः । रामः सागरमासाद्य वासमाज्ञापयत्तदा ॥ १०० ॥
सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गव । संप्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने ॥ १०१ ॥

---

रा० टी०—बभूवेति । पक्वैः कलमकेदारैः क्षेत्रारोपितशालिभिः यथा वसुंपूर्णा वसुन्धरेव हरिपुङ्गवैः संपूर्णा वसुधा बभूव ९३

गो० टी०—बभूवेति । इवशब्दो वाक्यालंकारे । अन्ये तु । तत्र तदानीम् । पक्वैः कमलकेदारैः पक्वशालिक्षेत्रैः संपूर्णा वसुन्धरेव यथा भवेत् तथा तैर्हरिपुङ्गवैः संपूर्णा वसुधा बभूवेति योजयन्ति । अपरे तु । कलमकेदारैर्यथा कलमकेदारसदृशैः हरिपुङ्गवैः संपूर्णा वसुधा वसुन्धरेव कलमकेदारभूरिव बभूवेत्याहुः । उपमानद्वित्वं व्यञ्जयितुमुपमावाचकद्वयं प्रयुञ्जते कवयः । यथा उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव संप्रणीताः । आलोकयामास हरिः पतन्तीर्नदीः स्मृतीर्वेदमिवाम्बुराशिमिति ॥ ९४ ॥

रा० टी०—महेन्द्रमिति । महेन्द्रं महेन्द्रसंबन्धि शिखरं संप्राप्य राम आरुरोह किंच महेन्द्रं संप्राप्य आरुह्येत्यर्थः शिखरं तत्कूटमारुरोह ॥ ९४ ॥

गो० टी०—महेन्द्रमिति । अथ सह्यमलयातिक्रमणानन्तरम् । राजीवलोचन इति समुद्रदर्शनाय महेन्द्रशिखरारोहणकुतूहलित्वमुक्तम् ॥ ९५ ॥

रा० टी०—तत इति । रामः शिखरमारुह्य सलिलाशयमपश्यत् ॥ ९५ ॥

गो० टी०—तत इति । स्पष्टम् ॥ ९६ ॥ ९७ ॥

९४]ति०टी०—तत्रानुक्रमपि वामवयमन्य(स्मा?)द्बोध्यम् । आग्निवेश्योक्तेः । ते सर्वे वानरा आनुपूर्व्येण सेनासंनिवेशक्रमेण ॥ ९४ ॥

रा० टी०—ते इति । ते रामादयः आनुपूर्व्येण उचितक्रमेण समुद्रमासेदुः ॥ ९६ ॥

९५ ] ति० टी०—अवरुह्य महेन्द्रादित्यर्थः ॥ ९५ ॥

रा० टी०—तत्प्रकारमाह—अवरुह्येति । अवरुह्य महेन्द्राधोभागे प्राप्य वेलावनं समुद्रवर्ति काननं रामो जगाम ॥९७॥

गो० टी०—अवरुह्येति । वेलावनस्यौत्तमत्यादवरुह्येत्युक्तम् । रमयतां श्रेष्ठ इत्यनेन समुद्रसंभ्रमप्रदर्शनेन लक्ष्मणादिरञ्जकत्वं व्यञ्जितम् ॥ ९८ ॥

९६ ] ति० टी०—सहसोत्थितैर्लहरीरूपेणागतैस्तोयौघैर्धौतं क्षालितमुपलतलं यस्यां ताम् ॥ ९६ ॥

रा० टी०—अथेति । तोयौघैर्धौतानि उपलतलानि यस्यां तां विपुलां विशालां वेलामासाद्य रामोऽब्रवीत् ॥ ९८ ॥

गो० टी०—अथेति । स्पष्टम् ॥ ९९ ॥

९७ ] ति० टी०—या पूर्वमुपस्थिता चिन्ता तरणविषया सेदानीमपि प्रवर्तत इति शेषः ॥ ९७ ॥

रा० टी०—तदाकारमाह—एते इति । हे सुग्रीव वरुणालयं वयं प्राप्ताः अत एव या पूर्वं नो विचिन्ता सागरतरणविषयकविचिन्तनं सेदानीमुपस्थिता प्राप्ता ॥ ९९ ॥

गो० टी०—एत इति । चिन्ता समुद्रतरणोपायचिन्ता ॥ १०० ॥

९८ ] ति० टी०—अतीरोऽदृश्यपरतीरः अतपारोऽनुपायेन ऽपालम्बनहीनेन ॥ ९८ ॥

रा० टी०—तदाकारमाह—अत इति । परमं रमणीयं तीरं यस्य स सरितां पतिः सागरः अयं राक्षसरिपुभिः प्राप्तुमशक्यः किंच अयं सागरः परमतीरः उत्कृष्टराक्षससंपत्तिविशिष्टतीरत्वात् अनुपायेन उपायविशेषमन्तरायमर्णवस्तरितुं न शक्यः प्रथमपक्षे यमिति सामान्ये नपुंसकम्(?) ॥ १०० ॥

गो० टी०—अत इति । अतीरः अविद्यमानतीरः । जलप्राय इति यावत् । अनुपायेन उपायं विनेत्यर्थः । परमतय प्रतिपेधे नञ्समासः ॥ १०१ ॥

९९–१०१ ] ति० टी०—मन्त्रो विचारः ॥ ९९ ॥ १०१ ॥

रा० टी०—तदिति । ततः तरणस्याशक्यत्वाद्धेतोः इह अस्मिन् काले इह अस्मिन् देशे एव निवेशः अस्मत्स्थितिरस्तु यथा वानरबलं परं पारं समुद्रपरतीरमवाप्नुयात् तथा प्रस्तूयतां विचार्यताम् ॥ १०१ ॥

गो० टी०—तदिति । मन्त्रः कार्यविचारः । प्रस्तूयताम् आरभ्यताम् । इति वक्ष्यमाणप्रकारेण ॥ १०२ ॥

रा० टी०—इतीवेति । इतीव अनेन प्रकारेण रामो वासमाज्ञापयत् ॥ १०२ ॥

---

१ पूर्वं समुपस्थितेति गो. पाठः । २ अरर्येति गो. पाठः ।

स्वां स्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत् । गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च नः॥ १०२ ॥
रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः । सेनां निवेशयत्तीरे सागरस्य द्रुमायुते ॥ १०३ ॥
विरराज समीपस्थं सागरस्य च तद्बलम् । मधुपाण्डुजलः श्रीमान्द्वितीय इव सागरः ॥ १०४ ॥
वेलावनमुपागम्य ततस्ते हरिपुङ्गवाः । [2]निविष्टाश्च परं पारं काङ्क्षमाणा महोदधेः ॥ १०५ ॥
तेषां निविशमानानां सैन्यसंनाहनिःस्वनः । अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ॥ १०६ ॥
सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता । त्रिधा निविष्टा महती रामस्यार्थपराभवत् ॥ १०७ ॥
सा महार्णवमासाद्य हृष्टा वानरवाहिनी । वायुवेगसमाधूतं पश्यमाना महार्णवम् ॥ १०८ ॥
दूरपारमसंबाधं रक्षोगणनिषेवितम् । पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ॥ १०९ ॥

गो० टी०—इतीति । इतीवेत्यनेन सेनानिवेशनियोगे सागरतरणोपायविचारः अहृदयो हेतुः वस्तुतस्तु सीताहरणक्लेश एव हेतुरिति व्यज्यते ॥ १०३ ॥

रा० टी०—आज्ञापनमेव भङ्ग्यन्तरेणाह—**सर्वा इति** । सागरस्य लङ्घने नः अस्माकं मन्त्रकालः संप्राप्तः अतः सर्वाः से .ाः वेलायां निवेश्यन्ताम् ॥ १०३ ॥

गो० टी०—**सर्वा इति** । स्पष्टम् ॥ १०४ ॥

१०२-१०३ ] ति० टी०—स्वां स्वां सेनां समुत्सृज्य कश्चिदपि कुतोऽपि हेतोर्मा व्रजेत् । यतो नोऽस्माकं छन्नं रक्षोमायाकृतत्वाद्गूढं भयमस्तीति ज्ञेयम् । सावधानतया स्थेयमिति बोधितम्, अतोऽत्र शूराः सर्वे वानराः सेनारक्षार्थं गच्छन्तु । सेनायाश्चतुर्दिक्षु गत्वा तत्र स्थित्वा तां रक्षन्त्वित्यर्थः ॥ १०२ ॥ १०३ ॥

रा० टी०—स्वां स्वामिति सेनां समुत्सृज्य कश्चिदपि कुतः कश्चिदपि देशं मा व्रजेत् यतः छन्नं राक्षसकृतत्वात् अप्रकटितं नो भयं भयहेतुः ज्ञेयमस्तीति शेषः अतः शूराः वानराः गच्छन्तु भयहेत्वन्वेषणार्थं सेनायाश्चतुर्दिक्षु पर्यटन्तु ॥ १०४ ॥

गो० टी०—**स्वां स्वामिति** । कुतः कुतश्चिद्धेतोः शूराः वानराः गच्छन्तु सर्वतः संचरन्तु किमर्थमित्यत्राह **ज्ञेयमिति** । नः अस्माकम् भयं भयनिमित्तम् छन्नं ज्ञेयम् तत्र तत्र निर्लीनैः शत्रुभिः प्रायशः प्रहारसंभवादिति भावः ॥ १०५ ॥

रा० टी०—**रामस्येति** । द्रुमैरायुते व्याप्ते सागरस्य तीरे सुग्रीवः सेनां न्यवेशयत् ॥ १०५ ॥

गो० टी०—**रामस्येति** । द्रुमायुते द्रुमैर्युक्ते । मिश्रणार्थायौतेर्निष्ठा ॥ १०६ ॥

१०४-१०५ ] ति० टी०—मधुपाण्डवो मधुपिङ्गला वानरा एव जलं यस्य सः । मधुशब्दसमभिव्याहारात्पाण्डुशब्दः पिङ्गलवर्णवाची ज्ञेयः॥ १०४ ॥ १०५ ॥

रा० टी०—**विरराजेति** । सागरस्य समीपस्थं तद्बलं मधुपाण्डुजलः द्वितीयः सागर इव विरराज ॥ १०६ ॥

गो० टी०—**विरराजेति** । सागरस्य समीपस्थं तद्बलम् । मधुपाण्डुजलः मधुवत्पिङ्गलजलः द्वितीयः सागर इव विरराजेत्युत्प्रेक्षा ॥ १०७ ॥

रा० टी०—**वेलेति** । महोदधेः परं पारं काङ्क्षमाणाः हरिपुङ्गवाः वेलावनमुपागम्य निविष्टाः बभूवुरिति शेषः ॥ १०७ ॥

गो० टी०—**वेलेति** । स्पष्टम् ॥ १०८ ॥

१०६ ] ति० टी०—समुद्रशब्दमन्तर्धाय सैन्यसंनाहस्य सैन्यसंचारस्य शब्दः शुश्रुवे ॥ १०६ ॥

रा० टी०—**तेषामिति** । निविशमानानां तेषां रामादीनां सैन्यसंनाहस्य सेनासंचारस्य निःस्वनः अर्णवस्य महानादमन्तर्धाय प्रशुश्रुवे ॥ १०८ ॥

गो० टी०—**तेषामिति** । 'अन्तर्धाय' स्थित इति शेषः ॥ १०९ ॥

१०७ ] ति० टी०—त्रिधा निविष्टा ऋक्षगोलाङ्गूलवानररूपत्रिपृथग्भेदेन । ऋक्षगोलाङ्गूलानामपि वानरावान्तरजातित्वात्सर्वेषां वानरत्वेनाप्युक्तिर्नासंगता । त्रिधा निविष्टा त्रिवलया निविष्टेत्यन्ये ॥ १०७ ॥

रा० टी०—**सेति** । रामस्यार्थपरा वानराणां ध्वजिनी सेना त्रिधा वानरावान्तरजातिविशिष्टऋक्षगोलाङ्गूलवानरपृथग्भेदेनातिमहत् महत् लघुपृथग्भेदेन वा त्रिप्रकारा निविष्टाऽभवत् ॥ १०९ ॥

गो० टी०—**सेति** । त्रेधा त्रिप्रकारैः । वलयत्रयाकारेणेति यावत् । वानरगोपुच्छभल्लूकभेदेन त्रेधेति वा ॥ ११० ॥

१०८ ] ति० टी०—पश्यमाना पश्यन्ती । हृष्टाभूदिति शेषः ॥ १०८ ॥

रा० टी०—**सेति** । सा वानरवाहिनी महार्णवमासाद्य महार्णवं पश्यमाना पश्यन्ती सती हृष्टाऽभवदिति शेषः ॥ ११० ॥

गो० टी०—**सेति** । पश्यमाना पश्यन्ती सती । हृष्टा अभूदिति शेषः ॥ १११ ॥

१०९ ] ति० टी०—असंबाधं मध्ये गिर्याद्याश्रयरहितं

1 बलमिति गो. पाठः । 2 विनिविष्टा इति गो. पाठः ।

चण्डनक्रग्राहघोरं क्षपादौ दिवसक्षये । हसन्तमिव फेनौघैर्नृत्यन्तमिव चोर्मिभिः ॥ ११० ॥
चन्द्रोदये समुद्भूतं प्रतिचन्द्रसमाकुलम् । चण्डानिलमहाग्राहैः कीर्णं तिमितिमिङ्गिलैः ॥ १११ ॥
दीप्तभोगैरिवाकीर्णं भुजङ्गैर्वरुणालयम् । अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् ॥ ११२ ॥
सुदुर्गं दुर्गमार्गं तमगाधमसुरालयम् । मकरैर्नागभोगैश्च विगाढा वातलोलिताः ॥
उत्पेतुश्च निपेतुश्च प्रहृष्टा जलराशयः ॥ ॥ ११३ ॥
अग्निचूर्णमिवाविद्धं भास्वराम्बुमहोरगम् । सुरारिनिलयं घोरं पातालविषयं सदा ॥ ११४ ॥

वक्ष्यमाणसकलविशेषणं वरुणावासं पश्यन्तो निपेदुरित्यन्वयः ॥ १०९ ॥

११० ] ति० टी०–चण्डनक्ररूपैर्ग्राहैर्महाघोरम् । क्षपादौ दिवसक्षये । तत्र प्रदोषकाले चन्द्रोदये प्रवृद्धफेनौघैर्हसन्तमिव स्थितम् । उपलक्षणमिदम् ऊर्मिभिर्नृत्यन्तमिव स्थितम् ॥ ११० ॥

१११ ] ति० टी०–समुद्भूतं वृद्धम् । ऊर्मिस्थप्रतिचन्द्रैः समाकुलं व्याप्तम् । चण्डानिलतुल्यवेगैर्जलचरैर्महाग्राहैः । तिमिः ' अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः ' इति लक्षितः तिमिंगिलस्तद्भिगरणशक्तः तैः कीर्णं व्याप्तम् ॥ १११ ॥

रा० टी०–दूरेति । दूरः पारः परतटो यस्य न संबाधः क्षोभो यस्य अत्युद्धतैर्नक्रग्राहैर्घोरं भयङ्करं दिवसक्षये क्षपादौ रात्र्यारम्भे प्रदोषकाले इत्यर्थः। चन्द्रोदये सति समुद्भूतं प्रवृद्धमत एव ऊर्मिभिर्नृत्यन्तमिव फेनौघैर्हसन्तमिव प्रतिचन्द्रेण चन्द्रप्रतिबिम्बेन समाकुलं संयुक्तं चण्डानिलवत् महाग्राहैर्हिंसार्थमत्यन्तं ग्राहकैः तिमितिमिङ्गिलैः कीर्णं व्याप्तम् । अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । तं यो गिलति मत्स्यः स तिमिङ्गिल इतीरितः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ॥ १११ ॥ ११२ ॥

गो० टी०–दूरपारमित्यादि । दूरं पारं यस्य दूरपारं विशालमित्यर्थः असंबाधं संबाधरहितम् अक्षोभ्यमित्यर्थः । रक्षोगणनिषेवितं समुद्रे रक्षांसि वसन्तीति प्रसिद्धिः । चण्डनक्रैः करणैः ग्रहः ग्रहणं यस्य स तथोक्तः तम् । 'मर्यादौ ग्रहणे युद्धे पूतनादावनुग्रहे । उपरागे च निर्बन्धे स्वर्भानौ च ग्रहः स्मृतः' इति निघण्टुः । दिवसक्षये क्षपादौ सन्ध्यायामित्यर्थः । घोरं वर्धमानत्वाद्भयङ्करम् समुद्भूतम् उल्लसितम् प्रतिवीचि प्रतिबिम्बितचन्द्रत्वात् प्रतिचन्द्रैः समाकुलम् चण्डानिलमहाग्राहैः चण्डानिलसदृशवेगमहाग्राहैरित्यर्थः । तिमयः शतयोजनायता महामत्स्याः । तानपि भक्षयितुं क्षमास्तिमिङ्गिलाः । निर्गाद्गिगिरतीति व्युत्पत्तेः । " गॄ, निगरणे " इति धातुः । ग्रोचि इति लत्वम् । तदुक्तं पुराणे–'अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति सागरे' इति । दीप्तभोगैः शिरोरत्नकान्त्या प्रकाशितफणैरिव स्थितैः । महासत्त्वैः जलगजशिशुमारादिभिः । सुदुर्गं यादोभिः दुर्गमार्गं दुर्गमम् । नौपथसञ्चारायोग्यमित्यर्थः । योगरूढिभ्यां वरुणावासवरुणालयपदद्वयनिर्वाहः ॥ ११२ ॥ ११३ ॥

११२ ] ति० टी०–दीप्तभोगैरुज्ज्वलदेहैर्भुजंगैराकीर्णं वरुणालयं पातालमिव ॥ ११२ ॥

रा० टी०–दीप्ताः प्रकाशिताः भोगाः येषां तैर्भुजङ्गैराकीर्णं महासत्त्वैः जलचरान्तरैरवगाढं निबिडम् अत एव दुर्गमार्गं मार्गरहितम् अत एव सुदुर्गं गन्तुमशक्यम् असुरालयम् असुरनिवासम् वरुणालयं पश्यन्त एव हरियूथपाः निषेदुः अर्थवशादेकान्वयि । इवशब्द एवार्थे ॥ ११३ ॥ ११४ ॥

११३ ] ति० टी०-सुदुर्गं शोभनानि लङ्कादीनि दुर्गाणि यस्मिन् दुर्गमार्गं दुष्प्रापमार्गम् । दुष्प्रापपरपारप्राप्त्युपायमित्यर्थः ॥ ११३ ॥

रा० टी०–मकरैरिति । मकरादिभिर्विगाढाः वातेन लोलिताश्चञ्चलाः प्रहृष्टाः जलराशयः ऊर्मय इत्यर्थः । उत्पेतुर्निपेतुश्च ॥ ११५ ॥

गो० टी०–तदानीं सागरमुत्प्रेक्षते–मकरैरिति । नागभोगैः सर्पकायैः विगाढाः प्रविष्टाः । वातलोलिताः वायुचलिताः अत एव प्रवृद्धाः जलराशयः तरङ्गाः उत्पेतुश्च निपेतुश्च उत्पत्य निपेतुरिति भावः ॥ ११७ ॥

११४ ] ति० टी०–जलराशय ऊर्मिरूपाः भास्वराः फणामणिभिर्भासमाना अम्बुमहोरगा जलसर्पा यस्मिंस्तम् । अतएवाग्निचूर्णं विस्फुलिङ्गरूपमाविद्धं क्षिप्तमिवात्र दृश्यत इति शेषः । सदा पातालविषयं पातालगोचरं सागरम् ॥ ११४ ॥

रा० टी०–अग्नीति । भास्वराः मणिगणैरवभासिताः अम्बुमहोरगाः यस्मिन् अत एव सदा घोरं पातालविषयं पातालपर्यन्तस्थायिनं सागरं समुद्दिश्य आविद्धं प्रक्षिप्तम् अग्निचूर्णं विस्फुलिङ्ग इव अदृश्यतेति शेषः ॥ ११६ ॥

गो० टी०–अथ सागराम्बरयोः सर्वथा साम्यं वर्णयति अग्निचूर्णमित्यादिना । रात्रौ सागरस्य सलिलशीकराः अग्निचूर्णा इव दृश्यन्त इति प्रसिद्धिः अतो भास्वराण्यम्बूनि शीकररूपाणि यस्य तथोक्तम् अत एवाविद्धं आकीर्णम् अग्निचूर्णमिव सागरं दृश्यते । अम्बरं च कीर्णैर्नक्षत्रैस्तथा दृश्यते । भास्वराम्बु विमलतुहिनं च । महान्त उरगा यस्मिन् तन्महोरगम् इदमप्युभयत्रापि समानम् । आकाशे गन्धर्वादीनामिव नागानामपि सञ्चारसम्भवात् । राह्वादिरूपोरगसंभवाद्वा । सुरारयः असुरा राक्षसाश्च तेषां विषयं

१ प्रवृद्धमिति गो. पाठः । २ प्रवृद्धा इति गो. पाठः । ३ बद्धाभा रा. पाठः । ४ विषयमिति गो. पाठः । ५ विषममिति गो. पाठः ।

सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् । सागरं चाम्बरं चेति निर्विशेषमदृश्यत ॥ ११५ ॥
संपृक्तं नभसाप्यम्भः संपृक्तं च नभोऽम्भसा । तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ॥ ११६ ॥
समुत्पतितमेघस्य वीचिमालाकुलस्य च । विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ॥ ११७ ॥
अन्योन्यैराहताः[1] सक्ताः सस्वनुर्भीमनिःस्वनाः । ऊर्मयः सिन्धुराजस्य महाभेर्य इवाम्बरे[2] ॥ ११८ ॥
रत्नौघजलसंनादं विषक्तमिव वायुना । उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ॥ ११९ ॥
ददृशुस्ते महात्मानो[3] वाताहतजलाशयम् । अनिलोद्धूतमाकाशे प्रलपन्तमिवोर्मिभिः[4] ॥ १२० ॥
ततो विस्मयमापन्ना हरयो[5] ददृशुः स्थिताः । भ्रान्तोर्मिजालसंनादं प्रलोलमिव सागरम् ॥ १२१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

आवासभूतम् इदमप्युभयत्र तुल्यम् । पातालविषमं पातालवत् गम्भीरम् इदमप्युभयत्र तुल्यम् घोरं भयङ्करम् इदमप्युभयत्र तुल्यम् । एवमुक्तविशेषणविशिष्टं सागरं सागर. अम्बरप्रख्यम् अम्बराभम् उक्तविशेषणविशिष्टमम्बरं च सागरोपममदृश्यतेत्याकृष्य योजना । न केवलं साम्यं सर्वथा साम्यं चेत्याह—सागरमिति । क्लीबत्वमार्षम् ॥११८॥११९॥

११५ ] ति० टी०-अम्बरप्रख्यं वैपुल्यातलत्वैः । तैरेव चाम्बरं सागरोपमम् । उपमेयोपमालंकारः । एवं सति यत्फलति तद्वाच्यवृत्त्याह—निर्विशेषं परस्परातिरिक्तसदृशरहितम् ११५॥

रा० टी०-सागरमिति । सागरम् अम्बरप्रख्यं तारागणसदृशमण्यादिमत्वेनाकाशसदृशम् । अम्बरं तु सागरोपमं सागरवर्तिमण्यादिसदृशतारावत्त्वेन सागरसदृशमदृश्यत इति । अतः सागरमंबरं च निर्विशेषं विशेषाभाववददृश्यत ॥ ११७ ॥

११६ ] ति० टी०-तयोरेव समानधर्मान्तरमाह—संपृक्तमिति । संसृष्टम् । तुल्यमित्यर्थः । नभोम्भसोस्तुल्यरूपत्वात्तारारत्नसमाकुले मुक्ताश्रेष्ठैर्नक्षत्रश्रेष्ठैश्च समाकुले समुद्रनभसी तादृग्रूपे परस्परसदृशरूपे दृश्येते ॥ ११६ ॥

रा० टी०-धर्मान्तरेणापि तयोः सादृश्यमाह—संपृक्तमिति । संपृक्तं संबद्धम् ॥ ११८ ॥

गो० टी०-प्रकारान्तरेणापि उक्तं साम्यं दर्शयति-संपृक्तमिति । संपृक्तं संसृष्टम् तुल्यवर्णमिति यावत् हिशब्दो हेतौ । तादृग्रूपे अन्योन्यतुल्यरूपे तारारत्नसमाकुले सागराम्बरे दृश्येते स्म ॥ १२० ॥

११७ ] ति० टी०-समुत्पतितमेघस्याम्बरस्य वीचिमालाकुलस्य सागरस्य चेत्यन्वयः ॥ ११७ ॥

रा० टी०-धर्मान्तरेणापि सादृश्यमाह—समिति । समुत्पतिताः मेघाः यस्मिन् तस्याम्बरस्य वीचिमालाकुलसागरस्य च द्वयोर्विशेषो नासीत् ॥ ११९ ॥

गो० टी०-समुत्पतितेति । मेघवीचिमालयोर्बिम्बप्रतिबिम्बभावेनोपमानत्वम् ॥ १२१ ॥

११८ ] ति० टी०-सक्ता निरन्तराः ॥ ११८ ॥

रा० टी०-अन्योन्यैरिति । अन्योन्यैराहताः ताडिताः सक्ताः निरन्तराः अत एव भीमनिःस्वनाः सिन्धुराजस्य ऊर्मयः अम्बरे महाभेर्य इव सस्वनुः ॥ १२० ॥

गो० टी०-अन्योन्यमिति । प्रथमं सक्ताः अथ आहता इत्यन्वयः ॥ १२२ ॥

११९ ] ति० टी०-वायुना विषक्तं संबद्धम्, अतएव रत्नौघक्षेपकोर्मिमयजलसंनादवन्तम्, अतएव क्रुद्धमुत्पतन्तमिव स्थितम् ॥ ११९ ॥

रा० टी०-रत्नेति । वायुना विषक्तं संबद्धम् अत एव रत्नौघजलसंनादं रत्नसमूहप्रक्षेपकोर्मिमज्जलसंनादविशिष्टम् अत एव क्रुद्धमिवोत्पतन्तं ददृशुरित्यपकृष्यते ॥ १२१ ॥

गो० टी०-रत्नौघेत्यादिश्लोकद्वयम् । रत्नौघजलयोः संनादो यस्मिन् । अनेन वेगवद्वायुजनितक्षोभातिशयादन्तरंतरत्नानामुद्गमनमवगम्यते । वायुना विषक्तमिव वायुना एकीभूतमिव यादोगणसमाकुलं यादांसि जलजन्तवः तेषां गणेन समाकुलम् वाताहतजलाशयं जलाशयः समुद्रः वाताहतश्चासौ जलाशयश्चेति कर्मधारयः तम ऊर्मिभिः आकाशं वल्गन्तमिव स्थितम् । एतन्निरूपणार्थमेव अनिलोद्धूतमिति पुनरुक्तिः ॥ १२३ ॥ १२४ ॥

१२० ] ति० टी०-जलाशयः समुद्रः ॥ १२० ॥

रा० टी०-ददृशुरिति । वाताहतं वायुव्याप्तं जलाशयं सागरं द्वयोः कर्मधारयः ॥ १२२ ॥

१२१ ] ति० टी०-भ्रान्तानां घूर्णतामूर्मिजालानां संनादो यत्र तम्, अतएव प्रलोलं प्रचलदिव स्थितम् ॥ १२१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय
आदिकाव्ये युद्धकाण्डे चतुर्थः सर्गः ॥ ४ ॥

रा० टी०-तत इति । भ्रान्तानां भ्रमिप्राप्तानामूर्मिजलानां संनादो यस्मिन् तं सागरं प्रलोलं चञ्चलमिव ददृशुः । आकाशे अनिलोद्धूतम् अनिलेन प्रापितम् । ऊर्मिभिः

---

१ अन्योन्यमिति गो. पाठः । २ आहवे इति गो. पाठः । ३ महोत्साहा इति गो. पाठः । ४ प्रवल्गन्तमिति गो. पाठः । ५ ददृशुर्हरयस्तेऽपि इति गो. पाठः ।

## पञ्चमः सर्गः ।

रामो लक्ष्मणेन संभाषमाणः सीतां स्मृत्वा मदनदहनदग्धो विलपति ।

सा तु नीलेन विधिवत्स्वारक्षा सुसमाहिता । सागरस्योत्तरे तीरे साधु सा विनिवेशिता ॥ १ ॥
मैन्दश्च द्विविदश्चोभौ तत्र वानरपुङ्गवौ । विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥ २ ॥
निविष्टायां तु सेनायां तीरे नदनदीपतेः । पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३ ॥
शोकश्च किल कालेन गच्छता ह्यपगच्छति । मम चापश्यतः कान्तामहन्यहनि वर्धते ॥ ४ ॥
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च । एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥ ५ ॥

प्रलपन्तं किंचित्कथयन्तमिव महात्मानो वानरा ददृशुः ततस्तद्दर्शनाद्विस्मयमापन्नाः ॥ १२३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुर्थः सर्गः ॥ ४ ॥

गो० टी०–तत इति । विशेषाभिधानार्थत्वान्न पुनरुक्तिः भ्रान्तोर्मिजलसन्नादमिति । घूर्णिततरङ्गजलसन्नादो यस्मिन् तम् । प्रलोलमिव उद्भ्रान्तमिव ॥ १२५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

१–३ ] ति० टी०–स्वारक्षा सुकृतमासमन्ताद्रक्षणं यस्याः सा सुसमाहिता सम्यग्रचिता ॥ १–३ ॥

रा० टी०–सेनावृत्तान्तमेवाह—सेति । स्वेनैव आरक्षा समन्ताद्रक्षणं यस्याः अत एव सुसमाहिता सेना नीलेन साधु यथा भवति तथा विनिवेशिता ॥ १ ॥

रा० टी०–मैन्द इति । मैन्दो द्विविदश्च रक्षार्थं सेनां सर्वतो दिशं विचेरतुः ॥ २ ॥

रा० टी०–निविष्टायामिति । सेनायां निविष्टायां सत्यां रामो लक्ष्मणमब्रवीत् ॥ ३ ॥

गो० टी०–एवं कृतज्ञत्वमित्रानुरोधित्वपरीक्ष्यकारित्वमहोत्साहत्वादिशरण्यत्वौपयिका रामगुणा दर्शिताः । अथ रामस्य कारुण्यरूपं प्रधानगुणं दर्शयितुं सर्गान्तरमारभते–सा त्विति । स्वारक्षा आसमन्ताद्रक्षन्तीत्यारक्षाः शोभनाः आरक्षाः यस्याः सा तथोक्ता विधिवत् नीतिशास्त्रोक्तरीत्या । सुसमाहिता निराकुला निवेशिता ॥ १ ॥

गो० टी०–मैन्द इति । दिशमिति जात्येकवचनम् । दिश इत्यर्थः । "उभसर्वतसोः०" इत्यादिना द्वितीया । सर्वत इति सप्तम्यर्थे तसिः । दिशां सर्वेषु प्रदेशेष्वित्यर्थः ॥२॥३॥

४ ] ति० टी०–अथ समुद्रवेलावनायुदीपकदर्शनात्परतीरस्थसीतास्मृत्या शोचति—शोकश्चेति । गच्छता कालेनेष्टान्तरवियोगजः शोकोऽपि गच्छतीति प्रसिद्धिः । मम प्रियाविरहजं शोकं तु विपरीतमित्याह—मम चेति । चस्त्वर्थे॥४॥

रा० टी०–तदाकारमाह—शोक इत्यादिभिः । गच्छता कालेन शोकः अपगच्छति निवर्तते किल प्रसिद्धमेतत् । कान्तामपश्यतो मम शोकस्तु अहन्यहनि प्रतिदिनं वर्धते ॥ ४ ॥

गो० टी०–समुद्रवेलावनायुद्दीपकदर्शनादुद्भूतं विरहशोकं सोढुमशक्नुवन् सौमित्रिं प्रत्याह–शोकश्चेत्यादिना । प्रथमश्चकारोऽवधारणे द्वितीयस्त्वर्थः शोकः इष्टवस्त्वन्तरवियोगजनितः शोकः गच्छता कालेन अपगच्छति किलेत्यैतिह्ये । गच्छत्येवेति प्रसिद्धमिति लौकिका वदन्ति । कान्तामपश्यतो मम तु शोकः अहन्यहनि वर्धते लौकिकशोकविलक्षणो मम शोक इति भावः ॥ ४ ॥

५ ] ति० टी०–नन्वचिरात्प्रत्याहरिष्यामः किं शोकेनेत्यत्र तत्रैव विघ्नचिन्तया दुःखमित्याह न मे इति । प्रिया दूरे स्थितेति दुःखं मे नास्ति स्वीयधर्मदिवसवत् । तथा हृतेत्यपि न दुःखम् प्रबलदुष्कर्मवशं प्राप्तत्वात् अपि त्वस्या वयः प्राणावस्थितिकालोऽतिवर्तते । मासद्वयमात्रं जीवनमित्युक्तेः । तत्रापि बहुदिवसात्ययात् । यद्वा वयो यौवनमिति प्राकृतवद्वादः ॥ ५ ॥

रा०टी०–शोकमेवाह—नेति । सीता हृता इति मे दुःखमत्यन्तक्लेशो न प्रिया दूरे इत्यपि न ननु तर्हि किं दुःखमित्यत आह—अस्याः प्रियायाः वयः स्थितिनियमितकालः यदतिवर्तते एतदेवानुशोचामि एतेन प्रबलेनैतद्दुःखेन पूर्वदुःखं तिरोहितमिति सूचितम् ॥ ५ ॥

गो० टी०–ननु शत्रुहृताया दूरे स्थितायास्तस्याः प्रत्याहरणसमर्थस्य तव किं शोकेनेत्याशङ्क्य न तद्विषयोऽयं शोकः किंतूपभोगयोग्यस्य प्रियावयसो वैफल्यानुस्मरणादित्याह–न मे इति । दुःखमिति प्रिया दूरे स्थितेति मे न दुःखम् सुग्रीवेण प्रस्थानेन तस्य निवर्त्यत्वात् । प्रबलरक्षसा हृतेति मे दुःखं नास्ति तस्य तच्छिरःकृन्तनापनोद्यत्वात् । एतदेवानुशोचामि इदमेकमेव शोकनिमित्तम् वयोऽस्या ह्यतिवर्तते गतं यौवनं न प्रत्याहर्तुं शक्यमिति भावः । अत्र यौवनमतिवर्तत इति नार्थः नित्ययौवनत्वात्तस्याः किं वयोऽतिवर्तते व्यर्थतयैव यातीति भावः । मानुषभावानुसारेण चेदं वचनम् ॥ ५ ॥

१ सेनेति गो. पाठः । २ नेति गो. पाठः ।

वाहि वात यतःकान्ता तां स्पृष्ट्वा मामपि स्पृश । त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥ ६ ॥
तन्मे दहति गात्राणि विषं पीतमिवाशये । हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत्॥ ७ ॥
तद्वियोगेन्धनवता तच्चिन्ताविमलार्चिषा । रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ८ ॥
अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना । एवं च प्रज्वलन्कामो न मां सुप्तं जले दहेत् ॥ ९ ॥
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् । यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १० ॥

६ ] ति० टी०—यतो यस्यां दिशि कान्ता तद्दिशि वाहि गच्छ तत्र स्थितां तां स्पृष्ट्वा मामपि स्पृश । किमेतावता तवेत्यत्राह—त्वयीति । कान्तास्पर्शवति त्वयि मे गात्रसंस्पर्शो निदाघतप्तदृष्टेश्चन्द्रे समागमो यथाखिलदृष्टितापशामक एवं त्वत्स्पर्शो गात्रीयाखिलतापशामक इत्यर्थः । निदर्शनालंकारः ॥ ६ ॥

रा० टी०—अत्यन्तशोकाविशात् वातं प्रत्याह—वाहीति । हे वात त्वं वाहि। तां सीतां स्पृष्ट्वा मामपि स्पृश। स्पर्शने हेतुमाह-त्वयि सीतास्पर्शविशिष्टे मे गात्रसंस्पर्शः चन्द्रे दृष्टिसमागमश्चक्षुःसंयोगः यथा चन्द्रे दृष्टिसमागमः तापशामकः तथा सीतास्पर्शवति त्वयि मम स्पर्शोऽपि तापशामक इत्यर्थः ॥ ६ ॥

गो० टी०—प्रियास्पृष्टद्रव्यस्पर्शस्य विनोदहेतुत्वात्तत्संपादनार्थं वायुं प्रार्थयते—वाहीति । हे वात ! मे कान्ता यतः यत्र वसति तत्र वाहि गच्छ । तत्र गत्वा किं करणीयमित्यत्राह—तामिति । न चैतदन्यतः सेत्स्यतीति सदृष्टान्तं दर्शयति—दृष्टिसमागमः चन्द्रे यथा चन्द्राधीनः तथा मे तद्गात्रसंस्पर्शोऽपि त्वयि त्वदधीनः । यथा तदवलोकितं चन्द्रं पश्यन् तत्प्रणालिकया तां दृष्टवानस्मि तद्वत् तदङ्गस्पृष्टं त्वां स्पृशन् तामेव स्पृष्टवान् भवेयमित्यर्थः ॥ ६ ॥

७ ] ति० टी०—अथ हेत्वन्तरेण शोकः—तन्मे इति । ह्रियमाणा सा हा नाथेति यदब्रवीत्तदेव । अनुमानेन मे आशये चित्ते स्थितमिति शेषः । पीतविषमिव मे गात्राणि दहति ॥ ७ ॥

रा० टी०—तदिति । ह्रियमाणा सीता हा नाथेति यन्मामब्रवीत् तत् आशये ममान्तःकरणे स्थितं सत् पीतं विषमिव मे गात्राणि दहति ॥ ७ ॥

गो० टी०—न केवलं वयोऽतिवर्तनस्मरणमेव व्यथाहेतुः किंतु कारणान्तरमप्यस्तीत्याह—तदिति । तद्वचनं मे आशये हृदये स्थितं सत् । सदा स्मर्यमाणं सदित्यर्थः । पीतं विषमिव गात्राणि प्रत्यवयवम् दहति । किं तद्वचनं तत्राह—हा नाथेति । सा सर्वान् भोगान् परित्यज्य मया सहागता । ह्रियमाणा सती रावणेन हरणसमये । न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसेत्युक्तरीत्या पातिव्रत्याग्निना भस्मीकर्तुं समर्थापि तत्तस्य सह्यं भवेदित्युक्तरीत्या हा नाथेति मन्नाथत्वमेव पुरस्कृत्य मां यदब्रवीत् तन्मे गात्राणि दहति । एतेन रामशोकः सीताविषयकारुण्यमित्यवगम्यते । परदुःखदुःखित्वं हि कारुण्यम् ॥ ७ ॥

८ ] ति० टी०—रात्रिंदिवमिति निपातः ॥ ८ ॥

रा० टी०—तदिति । तस्याः प्रियायाः वियोग एवेन्धनं तद्वता तस्याः चिन्तैव विमलार्चिर्यस्य तेन मदनाग्निना । ग्लानिरूपवह्निना मे शरीरं रात्रिंदिवं दह्यते ॥ ८ ॥

गो० टी०—अथ संतापो जलप्रवेशं विना न शाम्यतीति वक्तुं तस्याग्नित्वं सावयवं रूपयति—तद्वियोगेति । मदनाग्निवर्धकत्वेन वियोगस्येन्धनरूपत्वम् । संततत्वेन चिन्ताया ज्वालात्वरूपणम् । रात्रिंदिवमिति । "अचतुर०" इत्यादिना सूत्रेण साधुत्वम् । शीतलाशीतलकालाविशेषेण दह्यत इत्यर्थः ॥ ८ ॥

९ ] ति० टी०—सौमित्रे त्वमत्रैव । तिष्ठेति शेषः । भवता विनाहमेक एवार्णवमवगाह्य स्वप्स्ये । एवं सति प्रज्वलन्कामो जले सुप्तं न दहेत् । जलस्याग्निविरोधित्वात् । मनोमुलकामस्य सुप्तौ मनउपरमेणोपरमाच्चेति भावः । भवता विनेत्युक्तिरेकाकित्वेन निद्राप्राप्त्यै ॥ ९ ॥

रा० टी०—अवगाह्येति । हे सौमित्रेऽर्णवमवगाह्य तज्जले स्थित्वेत्यर्थः । भवता विनाहं स्वप्स्ये तत्प्रयोजनमाह-जलसुप्तं माम् एवं प्रज्वलन् कामोऽभिलाषातिशयो न दहेत् किंचिद्दाहो निवर्तेतेत्यर्थः। भवता विनेत्युक्त्या जाग्रदेव त्वं तिष्ठेति सूचितम् तेन त्वद्भिन्नो मन्निकटे नागच्छत्विति हेतुः सूचितः तेन सीतातिरिक्तविषये तदानीं दिदृक्षाभावः सूचितः ॥ ९ ॥

गो० टी०—अवगाह्येति । सौमित्रे कान्तास्मारकेण भवता विना अर्णवमवगाह्य स्वप्स्ये । अनेन लक्ष्मणस्य शोकावतारत्वमुक्तम् । अर्णवशयनं हि शेषिणैव ( ? ) । किं प्रयोजनमित्यत्राह—कथंचिदिति । इदानीं प्रज्वलन् स कामः जले सुप्तं मां कथंचिद्दहेत् कृच्छ्राद्दहेत् । मन्दीभवेदित्यर्थः ॥ ९ ॥

१० ] ति० टी०—यद्यस्मादहं सा च वामोरूरेकां धरणिमाश्रितावेतत्कामयमानस्य बहु । एतेन जीवितुं शक्यम् । कामुक एव शय्यासनेन यथा जीवति तथैतेनापि जीवितुं शक्यम् । एकभूलोकस्थत्वेन लाभसंभवसत्त्वादिति भावः ॥१०॥

रा० टी०—बह्विति । यत् यस्मात् अहं वामोरूः सा सीता च एकां धरणिमाश्रितौ एतेन एकधरण्याश्रितत्वेन हेतुना एतत् प्रियासंयोजनं बहुकामयानस्य मे जीवितुं शक्यम् ॥ १० ॥

१ विपुलेति गो. पाठः । २ कथंचिदिति गो. पाठः । ३ स मेति गो. पाठः ।

केदारस्येव केदारः सोदकस्य निरूदकः । उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११ ॥
कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम् । विजित्य शत्रून्द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥ १२ ॥
कदा सु[1]चारु[2]दन्तोष्ठं तस्याः पद्ममिवाननम् । ईषदु[3]न्नाम्य पास्यामि रसायनमिवातुरः ॥ १३ ॥
[4]तौ तस्याः सहितौ पीनौ स्तनौ तालफलोपमौ । कदा नु खलु सोत्कम्पौ ह[5]सन्त्या मां भजिष्यतः ॥ १४ ॥
सा नूनमसितापाङ्गी रक्षोमध्यगता सती । मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १५ ॥
कथं जनकराजस्य दुहिता [6]मम च प्रिया । राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ॥ १६ ॥
[7]अविक्षोभ्याणि रक्षांसि सा विधूयोत्पतिष्यति । विधूय जलदान्नीलाञ्छशिलेखा शरत्स्विव ॥ १७ ॥
स्वभावतनुका नूनं शोकेनानशनेन च । भूयस्तनुतरा सीता देशकालविपर्ययात् ॥ १८ ॥
कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् । [8]शोकं प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥ १९ ॥

गो० टी०—एवं दुःसहदुःखाक्रान्तस्यापि मम जीवनधारणशक्तिस्तया सह एकधरण्याश्रयणात्तज्जीवनप्रवृत्त्युपलम्भाच्च जायत इत्याह—बह्वित्यादिना श्लोकद्वयेन । अहं सा वामोरूश्च एकां धरणिमाश्रिताविति यत् एतद्बहु भूरि जीवनसाधनम् अतः एतेन कामयानस्य विरहिणो मम जीवितुं शक्यम् एकशय्याश्रयणन्यायेन कामिनोरेकधरण्याश्रयणमपि जीवनसाधनं भवतीत्यभिप्रायः ॥ १० ॥

११ ] ति० टी०—यथा सोदकस्य केदारस्योपस्नेहेन संबन्धेन निरुदकोऽपि केदारस्तत्स्थं धान्यं जीवति न शुष्यति तद्वत्तस्या जीवनवार्ताश्रवणेनाहमपि जीवामि ॥ ११ ॥

रा० टी०—केदारस्येति । तां सीतां यज्जीवन्तीं शृणोमि तत् सोदकस्य केदारस्य शालिक्षेत्रस्य उपस्नेहेन संसर्गेण निरूदकः केदार इव जीवामि ॥ ११ ॥

गो० टी०—केदारस्येति । जीवन्तीं तां शृणोमीति यत् तेन । निरूदकः निरुदकः केदारः वप्रम् । सोदकस्य केदारस्य उपस्नेहेन उपक्लेदनेव जीवामि ॥ ११ ॥

१२ ] ति० टी०—स्फीतां श्रियमिव समृद्धां राज्यलक्ष्मीमिव ॥ १२ ॥

रा० टी०—कदेति । शत्रून् विजित्य स्फीतां प्रवृद्धां श्रियं राज्यलक्ष्मीमिव सुश्रोणीं सीतां कदा द्रक्ष्यामि ॥ १२ ॥

गो० टी०—कदेति । स्पष्टम् ॥ १२ ॥

१३–१६ ] ति० टी०—रसायनं पारदादि ॥ १३ ॥ १६ ॥

रा० टी०—कदेति । सुचारवो दन्ताः ओष्ठौ च यस्मिन् तत् पद्ममिव तस्याः आननं समुन्नाम्य आतुरः रोगी रसायनं गुरुसिद्धपारदमिव कदा प्रयास्यामि ॥ १३ ॥

गो० टी०—कदा न्विति । रसायनं शरीरसिद्धिकरमौषधविशेषम् । आतुरः रोगी । आतुरोऽभ्यमितोऽभ्यान्त इत्यमरः ॥ १३ ॥

रा० टी०—ताविति । हसन्त्याः तस्याः प्रियायाः सोत्कम्पौ स्तनौ मां कदा भजिष्यतः भक्ष्यतः ॥ १४ ॥

गो० टी०—तस्या इति । संहतौ श्लिष्टौ ॥ १४ ॥

रा० टी०—सेति । अहमेव नाथो यस्याः सा सीता नाथहीनेव रक्षोमध्यगता सती त्रातारं मां नूनं किं नाधिगच्छति अधिगमिष्यति अधिगमिष्यत्येवेत्यर्थः ॥ १५ ॥

गो० टी०—सेति । स्पष्टम् ॥ १५ ॥

रा० टी०—कथमिति । मम प्रिया राक्षसीमध्यगता सती कथं शेते ॥ १६ ॥

गो० टी०—कथमिति । स्पष्टम् ॥ १६ ॥

१७ ] ति० टी०—अविक्षोभ्याणि दुराधर्षाणि रक्षांसि विधूय मद्द्वारा तेषां विधूननं कृत्वोत्पतिष्यतीति संबन्धः ॥ १७ ॥

रा० टी०—अविक्षोभ्याणीति । शरत्सु नीलान् जलदान् विधूय शशिलेखा चन्द्रकलेव रक्षांसि विधूय सा सीतोत्पतिष्यति ॥ १७ ॥

गो० टी०—कदेति । अविक्षोभ्यरक्षांसीत्येकं पदम् अविक्षोभ्याणि दुराधर्षाणि रक्षांसि ॥ १७ ॥

१८ ] ति० टी०—स्वभावतनुका प्रकृत्या कृशशरीरा देशकालविपर्ययात्प्राचीनदुष्कर्मवशप्राप्तदुःखसाधनदेशकालसंबन्धात् ॥ १८ ॥

रा० टी०—स्वभावेति । स्वभावेन प्रकृत्या तनुः सूक्ष्मशरीरं यस्याः सा सीता देशकालविपर्ययात् सुखसंपादकदेशकालयोरभावात् हेतोः शोकेन अनशनेन भोजनाभावेन च भूयस्तनुतरा अतिसूक्ष्माङ्गी प्रतीयेतेति शेषः ॥ १८ ॥

गो० टी०—स्वभावेति । देशकालविपर्ययात् देशकालयोर्व्यत्यासात् । सुखावहयोर्देशकालयोरपगमात्तद्विरुद्धयोरुपगमाच्चेत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—प्रत्याहरिष्यामि । जानक्या इति शेषः । मानसं मनसि वर्तमानम् । प्रत्याहरणसंभावनया प्रागपि शोकोत्सर्गोक्तिः साधुत्वम् ॥ १९ ॥

रा० टी०—कदेति । राक्षसेन्द्रस्य उरसि सायकान् शरा-

१ न्विति गो. पाठः । २ बिम्बेति गो. पाठः । ३ उन्नम्येति गो. समुन्नाम्य प्रपास्यामीति रा. पाठः । ४ तस्यास्तु संहताविति गो. पाठः । ५ श्लिष्यन्त्या इति गो. पाठः । ६ सा ममेति गो. पाठः । ७ कदाविक्षोभ्येति गो. पाठः । ८ सीतामिति गो. पाठः ।

कदा नु खलु [1]मे साध्वी सीतामरसुतोपमा । सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं जलम् ॥ २० ॥
कदा शोकमिमं घोरं मैथिलीविप्रयोगजम् । सहसा विप्रमोक्ष्यामि वासः शुक्लेतरं यथा ॥ २१ ॥
एवं विलपतस्तस्य तत्र रामस्य धीमतः । दिनक्षयान्मन्दवपुर्भास्करोऽस्तमुपागतः ॥ २२ ॥
आश्वासितो लक्ष्मणेन रामः संध्यामुपासत । स्मरन्कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ।

इतश्च लङ्कायां रावणो राक्षसैः सह युद्धे जयविषये मन्त्रयते ।

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् । राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ॥
अब्रवीद्राक्षसान्सर्वान्ह्रिया किंचिदवाङ्मुखः ॥ ॥ १ ॥
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी । तेन वानरमात्रेण दृष्टा सीता च जानकी ॥ २ ॥

न् निधाय मानसं स्वमनसि स्थितं शोकमुत्सृज्य शोकं सीतासंतापं कदा प्रत्याहरिष्यामि ॥ १९ ॥

गो० टी०—कदा न्विति । सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसमिति । सीतां प्रत्याहृत्य कदा नु शोकमुत्स्रक्ष्यामीत्यर्थः । आस्यं व्यादाय स्वपितीतिवत्साधुः ॥ १९ ॥

२० ] ति० टी०—मे कण्ठमालम्ब्येत्यन्वयः ॥ २० ॥

रा० टी०—कदेति । मे कण्ठमालम्ब्य सोत्कण्ठा सीता आनन्दजं जलं कदा मोक्ष्यति त्यक्ष्यति ॥ २० ॥

गो० टी०—कदा न्विति । स्पष्टम् ॥ २० ॥

२१ ] ति० टी०—शुक्लेतरं मलिनम् ॥ २१ ॥

रा० टी०—कदेति । मैथिल्याः विप्रयोगजं वियोगजनितं शोकं शुक्लेतरं मलिनं वासो वस्त्रमिव कदा विप्रमोक्ष्यामि ॥ २१ ॥

गो० टी०—कदेति । शुक्लेतरं मलिनम् ॥ २१ ॥ २२ ॥

२२ ] ति० टी०—विलपतो रामस्य । विलापं श्रुत्वेत्यर्थः ॥ २२ ॥

रा० टी०—एवमिति । रामस्यैवं विलपतः दिनक्षयात् दिनक्षयसमयात् हेतोः भास्करो मन्दवपुस्तिरोहिततेजाः सन् अस्तमुपागतः ॥ २२ ॥

२३ ] ति० टी०—सीतां स्मरन् हेतौ शतृप्रत्ययः तत्स्मरणाद्धेतोः शोकाकुलीकृतो रामो लक्ष्मणेनाश्वासितः॥२३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चमः सर्गः ॥ ५ ॥

रा० टी०—आश्वासित इति । शोकेन आकुलीकृतः रामः लक्ष्मणेन आश्वासितः सन् संध्यामुपासत ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चमः सर्गः ॥ ५ ॥

गो० टी०—आश्वासित इत्यर्धम् । उपासत उपास्त । भ्रातुरपि लक्ष्मणस्य पुरतो रघुनाथस्यैवंविधवचनप्रयोगस्तस्य सर्वविधसेवकत्वात् अतो नानौचित्यम् ॥ २३ ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

१ ] ति० टी०—अथ कविना हनुमत्प्रतिनिवृत्तिं समुद्रतीरं रामानयनपर्यन्तामुपवर्ण्य तन्निवृत्त्यनन्तरकालिकः समयरावणव्यापार उपवर्ण्यते वाचः क्रमवर्तित्वात्—लंकायामिति । हनुमता शक्रेणेव कृतं घोरं कर्म दृष्ट्वा राक्षसानब्रवीत् ॥ १ ॥

रा० टी०—सागरतीरवर्तिरामवृत्तान्तमुक्त्वा रावणवृत्तान्तमाह—लंकायामित्यादिभिः । राक्षसेन्द्रो रावणः हनुमता कृतं घोरं कर्म दृष्ट्वा किञ्चिदवाङ्मुखः सन् अब्रवीत् सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०—एवं रामवृत्तान्तमुक्त्वा हनुमन्निर्गमकालानन्तरकालिकं रावणवृत्तान्तं वक्तुमुपक्रमते—लङ्कायामिति । घोरं दुर्दर्शम् । शक्रेणेव शक्रतुल्येन । "इवेन सह नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्" इति विभक्त्यलोपः ॥ १ ॥

२ ] ति० टी०—ह्रीबीजमाह—धर्षितेति । आक्रान्तेत्यर्थः । वानरमात्रेण । एकेन निरायुधेन चेत्यर्थः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—धर्षितेत्यादिभिः । वानरमात्रेण सहायान्तररहितेनेत्यर्थः । दुष्प्रसहा अतितेजोविशिष्टेत्यर्थः लङ्का प्रविष्टा धर्षिता च जानकी जनकसुता सीता च दृष्टा ॥ २ ॥

गो० टी०—धर्षितेति । वानरमात्रेण वानरजातीयेन वानरेष्वल्पेनेति यावत् ॥ २ ॥

१ मामिति गो. पाठः । २ इरेति गो. पाठः । ३ पय इति गो. पाठः ।

प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः । आविला च पुरी लङ्का सर्वा हनुमता कृता ॥ ३ ॥
किं करिष्यामि भद्रं वः किं वो युक्तमनन्तरम् । उच्यतां नः समर्थं यत्कृतं च सुकृतं भवेत् ॥ ४ ॥
मन्त्रमूलं च विजयं प्रवदन्ति मनस्विनः । तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ॥ ५ ॥
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः । तेषां तु समवेतानां गुणदोषौ वदाम्यहम् ॥ ६ ॥
मन्त्रस्त्रिभिर्हि संयुक्तः समर्थैर्मन्त्रनिर्णये । मित्रैर्वापि समानार्थैर्बान्धवैरपि वाधिकैः ॥ ७ ॥
सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत् । दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥ ८ ॥
एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः । एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥ ९ ॥
गुणदोषौ न निश्चित्य त्यक्त्वा दैवव्यपाश्रयम् । करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः ॥ १० ॥

३ ] ति० टी०—आविला क्षुभिता ॥ ३ ॥

रा० टी०—प्रासाद इति । हनुमता चैत्यः देवविशेषाविष्टः प्रासादः धर्षितः प्रवरा राक्षसाः हताश्च अत एव सर्वा लङ्का आविला क्षुभिता कृता ॥ ३ ॥

गो० टी०—प्रासाद इति । चैत्यः प्रासादः नगरप्रधानभूतः प्रासादः । आविला दाहेन आकुला ॥ ३ ॥

४ ] ति० टी०—वो भद्रमस्तु, किं करिष्यामि, अनन्तरं वो युष्माकं किं युक्तम् योग्यानुष्ठानं किं रोचत इति शेषः । यत्कर्मानुष्ठितं नः समर्थं भवेत्तच्च कृतं सुकृतं सम्यगनुष्ठितं श्लाघनीयं भवेत्तदुच्यताम् ॥ ४ ॥

रा० टी०—किमिति । वो युष्माकं किं युक्तं कर्तव्यमित्यर्थः, कृतं प्रारब्धं यत् कर्म अनन्तरं विघ्नरहितं सत् सुकृतं सुसाधितं समर्थं सम्यगर्थप्रापकं च भवेत् तत् नो अस्मभ्यम् उच्यतां अहं च किं करिष्यामि ॥ ४ ॥

गो० टी०—किं करिष्यामीति । अनन्तरं किं वा युक्तं यन्नः समर्थं हितम् समर्थस्त्रिषु शक्तिष्ठे संबन्धार्थे हितेऽपि चेत्यमरः । यत्कृतम् अनुष्ठितम् सुकृतं स्वनुष्ठितम् भवेत्फलवद्भवेत् तादृशं किम् उच्यतां करिष्यामि वो भद्रमस्त्वित्यन्वयः ॥ ४ ॥

५ ] ति० टी०—सर्वतः समर्थस्य तव को विचार इत्यत्र राजनीतिरियमित्याह—मन्त्रमूलमिति । मनस्विनः शूराः ५

रा० टी०—प्रश्ने बीजमाह—मन्त्रेति । मनस्विनो विजयं मन्त्रमूलं मन्त्रकारणकं प्रवदन्ति तस्माद्धेतोः रामंप्रति रामोद्देश्यककृत्ये मन्त्रं रोचये अभिलाषपूर्वकं पृच्छामि ॥ ५ ॥

गो० टी०—बलवतस्तव किं मन्त्रेणेत्याशङ्क्य सर्वेषामपि विजयस्य मन्त्रमूलत्वान्ममापि मन्त्रः करणीय इत्याह—मन्त्रमूलमिति ॥ ५ ॥

६ ] ति० टी०—स्वस्योत्तमप्रभुत्वप्रत्यायनशेषतया मन्त्रत्रैविध्यात्प्रभुत्रैविध्यमाह—त्रिविधा इति । पुरुषा मन्त्रापेक्षिणः प्रभुपुरुषाः समवेतानां संकीर्णरूपाणां लक्षणज्ञानं विना विवेक्तुमशक्यानां गुणदोषौ । उत्तमानां गुणो मध्यमानां गुणदोषावधमानां दोषश्चेति विवेकः ॥ ६ ॥

रा० टी०—स्वस्योत्तमत्वप्रतिपादनाय मन्त्रभेदकृतोत्तमत्वाद्याह—त्रिविधा इति । ये त्रिविधाः पुरुषाः तेषां समवेतानां लक्षणज्ञानमन्तरा विभाजयितुमशक्यानां गुणदोषावहं वदामि ॥ ६ ॥

गो० टी०—मन्त्रस्य करणीयत्वेऽपि स्वयमेव संमन्त्र्यतां किं बहुभिरित्याशङ्क्य बहुभिः सह मन्त्रयितुरेवोत्तमत्वं वक्तुं प्रतिज्ञापूर्वकं क्रमेण मन्त्रयितृभेदानाह—त्रिविधा इत्यादिना । समवेतानां संकीर्णस्वरूपाणाम् । लक्षणज्ञानं विना विवेक्तुमशक्यानामित्यर्थः गुणदोषौ । उत्तमलक्षणं गुणम् । अधमलक्षणं दोषम् । मध्यमलक्षणं मिश्रणम् ॥ ६ ॥

७-८ ] ति० टी०—यस्य मन्त्र उच्यमानलक्षणैस्त्रिभिः संयुक्तो भवति, यो वा मित्रादिभिस्त्रिभ्योऽधिकैरपि सहितो मन्त्रयित्वा कर्मारम्भान्प्रवर्तयेत् दैवे दैवसहाये च यत्नं कुरुते तमुत्तमं पुरुषमाहुः ॥ ७ ॥ ८ ॥

रा० टी०—मन्त्रिभिरिति । हितसंयुक्तैर्हितत्वविशिष्टैर्मन्त्रिभिर्वा मन्त्रनिर्णये समर्थैः समानार्थैः तुल्यसुखदुःखैः समाहितैर्मित्रैर्वा बान्धवैर्वा सहितो यो मन्त्रयित्वा कर्मारम्भान् लौकिककृत्यप्रारम्भान् प्रवर्तयेत् दैवे देवकार्ये यत्नं च कुरुते तं पुरुषोत्तममाहुः । अर्धचतुष्टयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०—मन्त्रिभिरिति । हितसंयुक्तैः हितपरैः समानार्थैः समानसुखदुःखैः । कर्मारम्भान् आरम्भणीयकर्माणि । दैवे दैवसमाश्रयणे कुरुते ॥ ७ ॥ ८ ॥

९ ] ति० टी०—एकोऽर्थमिति । विचारोऽस्य गुणः । इतरनिरपेक्षता दोषः ॥ ९ ॥

रा० टी०—एक इति । एक एव अर्थं कृत्यं विमृशेत् विचारयेत् एक एव धर्मे मनः प्रकुरुते एक एव कार्याणि कुरुते च तं मध्यममाहुः ॥ ९ ॥

गो० टी०—एकोऽर्थमिति । धर्मे पूर्वोक्तदैवसमाश्रयणे । मनः मनःपूर्वं यत्नम् ॥ ९ ॥

१० ] ति० टी०—गुणदोषौ युक्तायुक्तत्वहिताहितादिकमिष्टैः सह न निश्चित्य दैवव्यपाश्रयं त्यक्त्वा दैवोपेक्षां कृत्वा

१ वेति गो. पाठः । २ प्राहुरार्या इति गो. पाठः । ३ मन्त्रिभिर्हितसंयुक्तैरिति गो. रा. पाठः । ४ वाऽहितैरिति गो. पाठः । ५ कर्मेति गो. पाठः ।

यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः । एवं मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमः ॥ ११ ॥
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा । मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥ १२ ॥
बह्वीरपि मतीर्गत्वा मन्त्रिणामर्थनिर्णयः । पुनर्यत्रैकतां प्राप्तः स मन्त्रो मध्यमः स्मृतः ॥ १३ ॥
अन्योन्यमतिमास्थाय यत्र संप्रतिभाष्यते । न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते ॥ १४ ॥
तस्मात्सुमन्त्रितं साधु भवन्तो मतिसत्तमाः । कार्यं संप्रतिपद्यन्तामेतत्कृत्यं मतं मम ॥ १५ ॥
वानराणां हि धीराणां सहस्रैः परिवारितः । रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः ॥ १६ ॥

कार्यं करिष्यामीत्युपक्रम्य तदप्यन्ते उपेक्षेन्निवर्तयेत्स नराधमः ॥ १० ॥

रा० टी०–गुणेति । गुणदोषौ न निश्चित्य मन्त्रिभिः सह विचारेणानिर्णीय दैवव्यपाश्रयं देवाश्रयत्वं च त्यक्त्वा कार्यं करिष्यामीत्युक्त्वेति शेषः । उपेक्षेत् त्यजेत् स नराधमः अधमनरः ज्ञेय इति शेषः ॥ १० ॥

गो० टी०–गुणदोषाविति । गुणदोषौ हिताहिते अनिश्चित्य दैवव्यपाश्रयं त्यक्त्वा करिष्यामीत्युपक्रम्य यः कार्यमुपेक्षेत् उपेक्षेत न समाप्नुयात् ॥ १० ॥

११ ] ति० टी०–यद्वशात्प्रभुत्रैविध्यमुक्तं तस्य मन्त्रस्यापीदानीं त्रैविध्यमाह–यथेति ॥ ११ ॥

रा० टी०–यदाचरणेन राज्ञां त्रैविध्यं तन्मन्त्रस्यापि त्रैविध्यमाह—यथेत्यादिभिः । उत्तमाधममध्यमः उत्तमाधमाभ्यां सहितो मध्यमो मन्त्रोऽपि विज्ञेयः ॥ ११ ॥

गो० टी०–यथेति । स्पष्टम् ॥ ११ ॥

१२ ] ति० टी०–तानेव मन्त्रप्रकारानाह—ऐकमत्यमिति । शास्त्रदृष्टेन नीतिशास्त्रप्रतिपादितेन चक्षुषा नयचक्षुषा मन्त्रिणो यत्र मन्त्र ऐकमत्यमुपागम्य निरताः प्रतिष्ठितास्तं मन्त्रमुत्तममाहुः ॥ १२ ॥

रा० टी०–तदेव निष्पादयन्नाह–ऐकमत्यमित्यादिभिः। ऐकमत्यम् एकसंमतिमुपागम्य प्राप्य यत्र मन्त्रिणो निरताः तं मन्त्रमुत्तममाहुः ॥ १२ ॥

गो० टी०–उक्तत्रैविध्यं मन्त्रेप्यतिदिशति–ऐकमत्यमिति। ऐकमत्यम् एकां मतिमुपागम्य शास्त्रदृष्टेन स्वभ्यस्तशास्त्रेण राजदन्तादित्वात्परनिपातः तद्रूपेण चक्षुषा उपलक्षिताः मन्त्रिणः यत्र मन्त्रे निरताः तम् उत्तममन्त्रमाहुः ॥ १२ ॥

१३ ] ति० टी०–बह्वीर्मतीर्गत्वा बहुविरुद्धमतिविषयतां प्राप्येत्यर्थः पुनर्वैमत्यानन्तरं राजभीत्याद्युपाधितो यत्र मन्त्र एकतामैकमत्यं प्राप्तः स मन्त्रो मध्यमः ॥ १३ ॥

रा० टी०–बह्वीरिति । यत्र यस्मिन् मन्त्रे अर्थनिर्णयः कृत्यनिश्चयः मन्त्रिणां बह्वीर्विरुद्धानेकविधाः मतीर्गत्वा पुनरेकतां प्राप्तः स मध्यमः स्मृतः ॥ १३ ॥

गो० टी०–बह्वय इति । यत्र मन्त्रे । मन्त्रिणां मतयः बह्वयः बहुधा भूत्वापि अर्थनिर्णये अर्थनिर्णयरूपफलविषये एकतां प्राप्ता भवन्ति स मन्त्रो मध्यमः स्मृतः । नीतिज्ञैरिति शेषः ॥ १३ ॥

१४ ] ति० टी०–अन्योन्यमतिं भिन्नभिन्नमतिमास्थाय यत्र मन्त्रे समन्तात्प्रति प्रतिस्पर्धया भाष्यते, कथंचित्कथंनैकमत्येऽपि श्रेयश्च नास्ति स मन्त्रोऽधमः ॥ १४ ॥

रा० टी०–अन्योन्यमिति । अन्योन्यमतिं विरुद्धपरस्परबुद्धिमास्थाय विद्यमानो यो मन्त्रः संप्रतिभाष्यते ऐकमत्ये एकमतौ सत्यां न संप्रतिभाष्यते सोऽधम उच्यते अत एव न श्रेयोऽस्ति तेन मन्त्रेणेति शेषः ॥ १४ ॥

गो० टी०–अन्योन्यमिति । यत्र मन्त्रे । मन्त्रिभिः अन्योन्यं मतिं स्वां स्वां बुद्धिम् आस्थाय प्रधानीकृत्य संप्रतिभाष्यते व्यवह्रियते । अनेनोत्तममन्त्रव्यावृत्तिरुक्ता । मध्यममन्त्रव्यावृत्त्यर्थमाह–न चेति । ऐकमत्ये तेषां मन्त्रिणां श्रेयश्च प्रीतिश्च नास्ति स मन्त्रोऽधम उच्यते ॥ १४ ॥

१५ ] ति० टी०–उपसंहरति—तस्मादिति । यत्कार्यं सुमन्त्रितं भवति तदेव साधु भवति । भवन्तश्च मन्त्रे मत्या सत्तमाः श्रेष्ठाः, अतो यत्कार्यं सुमन्त्रितं साधु भवति तत्कार्यं संप्रतिपद्यन्तामैकमत्येन निश्चिन्वन्तु । यदेव भवद्भिर्निश्चितं तदेव मम कृत्यं कर्तुं योग्यम् । मतमिदम् ॥ १५ ॥

रा० टी०–तस्मादिति । तस्मात् उक्तहेतोः सुमन्त्रितं सुमन्त्रेण निष्पन्नं कार्यं भवन्तः प्रतिपद्यन्तां प्रापयन्तु कथयन्त्वित्यर्थः एतत् मन्त्रेणनिश्चितमेव कृत्यं मम मतं कर्तव्यत्वेनेष्टम् ॥ १५ ॥

गो० टी०–तस्मादिति । सुमन्त्रितं सुनिश्चितम् । साधु समीचीनम् । कार्यं संप्रतिपद्यन्ताम् ऐकमत्येन जानन्तु । एतत् ऐकमत्येन सुनिश्चितं कार्यम् मम कृत्यम् अतिशयेन कर्तव्यम् ॥ १५ ॥

१६ ] ति० टी०–विचारप्रयोजिका शङ्काभीतिश्च निश्चितास्माकमित्याह—वानराणामिति । अभ्येतीति वर्तमानसामीप्ये लट् अचिरादागमिष्यत्येवेत्यर्थः ॥ १६ ॥

रा० टी०–मन्त्रविषयं निरूपयन्नाह—वानराणामित्यादिभिः । वानराणां सहस्रैः बहुभिः परिवारितः अत एवास्माकमुपरोधको रामः लङ्कामभ्येति ॥ १६ ॥

१ मन्त्रा हि विज्ञेया उत्तमाधममध्यमा इति गो. पाठः । २ बह्वोऽपि मतया भूत्वेति गो. पाठः । ३ निर्णये इति गो. पाठः । ४ प्राप्ता इति गो. पाठः । ५ वीराणामिति गो. पाठः ।

तरिष्यति च सुव्यक्तं राघवः सागरं सुखम् । तरसा युक्तरूपेण सानुजः सबलानुगः ॥ १७ ॥
समुद्रमुच्छोषयति वीर्येणान्यत्करोति वा । तस्मिन्नेवंविधे[1] कार्ये विरुद्धे वानरैः सह ॥
हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ।

रावणोक्त्यनन्तरं सर्वे राक्षसाः स्वबलप्रशस्तिपूर्वकं विषादो न कर्तव्य इति समाश्वसयन्ति रावणम् ।

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः । ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् ॥ १ ॥
द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः । राजन्परिघशक्त्यृष्टिशूलपट्टिशकुन्तलम्[3] ॥ २ ॥
सुमहन्नो बलं कस्माद्विषादं भजते भवान् । त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि ॥ ३ ॥

गो० टी०-गतं तु गतमेव किं मन्त्रकरणे इतः किं नश्छिन्नमित्यत आह-वानराणामिति । अभ्येति अभ्येष्यति । "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमाननिर्देशः । उपरोधकः उपरोद्धुम् । क्रियार्थायां क्रियायां ण्वुल्॥१६॥

१७ ] ति० टी०-ननु कथं दुस्तरे सागरे स्थिते रामागमनशङ्केत्यत्राह—तरिष्यतीति । सुव्यक्तं सुखं तरिष्यति । प्रथमान्तपाठे सगरस्य गोत्रापत्यं सागर इति रामविशेषणम् तदा सागरमिति द्वितीयान्तमन्यत्पदमध्याहार्यम् । को वा तरणोपायस्तस्येत्यत्राह—तरसेति । बलेन । तपोबलसहजबलदिव्यास्त्राणामन्यतमेनेत्यर्थः । बलैर्वानरबलैरनुगैः सुग्रीवादिभिश्च सहितः ॥ १७ ॥

रा० टी०-तरिष्यतीति युक्तम् । अस्मद्योग्यं रूपं स्वरूपं यस्य तेन किं च युक्तरूपेण स्वस्वरूपयोग्येन परिवारितः अत एवास्माकमुपरोधकः सागरं सुव्यक्तं तरिष्यति सागर इति प्रथमान्तपाठे रामविशेषणं तदा सागरमिति कर्माध्याहार्यम् ॥ १७ ॥

गो० टी०-सागरे विद्यमाने कथमस्मानुपरोत्स्यति—तत्राह तरिष्यतीति । सार्धश्लोकः उच्छोषयति उच्छोषयिष्यति । अन्यत्सेतुबन्धादिकं वा करोति करिष्यति ॥ १७ ॥ १८ ॥

१८ ] ति० टी०-तदेवाह—समुद्रमिति । अन्यत्सेतुबन्धनम् । तस्मिन्नेकस्मिन्वानरे एवंविधव्यापारे सति बहुभिर्वानरैः सह रामे विरुद्धे कार्ये विरुद्धं कर्तुमुद्यते सति यन्मम पुरे सैन्ये च हितं तत्सर्वं संमन्त्र्यताम् ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षष्ठः सर्गः ॥ ६ ॥

रा० टी०-तरणोपायमाह—समुद्रमिति । उच्छोषयिष्यति अन्यत् उपायान्तरं करोति करिष्यति । अर्धं पृथक् । उपसंहरन्नाह-तस्मिन्निति । एवंविधे उक्तप्रतापवति तस्मिन् राघवे कार्ये स्वकार्यार्थं वानरैः सह विरुद्धे सति पुराऽऽदौ सर्वं हितं यथा भवति तथा संमन्त्र्यताम् ॥ १८ ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षष्ठः सर्गः ॥ ६ ॥

गो० टी०-अस्मिन्निति । अस्मिन् लङ्कानिरोधनरूपे कार्ये एवंगते उक्तरीत्या प्रवृत्ते वानरैः सह विरुद्धे विरोधे च प्राप्ते भावे निष्ठा पुरादिषु हितं यत्तत्सर्वं संमन्त्र्यतामित्यर्थः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षष्ठः सर्गः ॥ ६॥

१ ] ति० टी०-तत्रादौ दुर्मन्त्रिणां दुर्मन्त्रमाह—इत्युक्ता इति । यतो नीतिबाह्याः, अतएवाबुद्धयस्ते राक्षसा द्विषत्पक्षस्य रामसुग्रीवादेर्बलमविज्ञाय ज्ञात्वापि मोहादविगणय्य वा प्राञ्जलयः सन्तो रावणमूचुः ॥ १ ॥

रा० टी०-रावणवचनश्रवणानन्तरकालिकं रावणं प्रति अविज्ञराक्षसानां वचनमाह—इतीत्यादिभिः । अबुद्धयः अत एव नीतिबाह्याः राक्षसाः द्विषत्पक्षं रामबलमविज्ञाय रावणमूचुः। सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०-एवं रावणवचनमाकर्ण्य अविदितरघुनाथप्रभावा मदोद्धता राक्षसास्तद्गुरुवर्णनपूर्वकं रावणं प्रशंसन्ति—इत्युक्ता इत्यादिना । सार्धश्लोक एकान्वयः । द्विषत्पक्षं द्विषद्बलम् । पक्षो मासार्धके पार्श्वे गृहे सर्यविरोधयोः । केशादेः परितो वृन्दे बले सखिसहाययोः ॥ इति विश्वः ॥ १ ॥

२-३ ] ति० टी०-तदेवाह—राजन्निति । ऋष्टिरसिः ॥ २ ॥ ३ ॥

रा० टी०-तदाकारमाह—राजन्नित्यादिभिः । हे राजन् परिघादिसंकुलं सुमहत् नो बलमस्ति अतः भवान् विषादं कस्माद्भजते विषादं न कुर्वित्यर्थः ॥ २ ॥

१ अस्मिन्निति गो. पाठः । २ गते इति गो. पाठः । ३ संकुलमिति गो. रा. पाठः ।

कैलासशिखरावासी यक्षैर्बहुभिरावृतः । सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ४ ॥
स महेश्वरसख्येन श्लाघमानस्त्वया विभो । निर्जितः समरे रोषाल्लोकपालो महाबलः ॥ ५ ॥
विनिपात्य च यक्षौघान्विक्षोभ्य विनिगृह्य च । त्वया कैलासशिखराद्विमानमिदमाहृतम् ॥ ६ ॥
मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता । दुहिता तव भार्यार्थे दत्ता राक्षसपुङ्गव ॥ ७ ॥
दानवेन्द्रो महाबाहो वीर्योत्सिक्तो दुरासदः । विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः ॥ ८ ॥
निर्जितास्ते महाबाहो नागा गत्वा रसातलम् । वासुकिस्तक्षकः शङ्खो जटी च वशमाहृताः ॥ ९ ॥
अक्षया बलवन्तश्च शूरा लब्धवराः पुनः । त्वया संवत्सरं युद्ध्वा समरे दानवा विभो ॥ १० ॥
स्वबलं समुपाश्रित्य नीता वशमरिन्दम । मायाश्चाधिगतास्तत्र बह्व्यो वै राक्षसाधिप ॥ ११ ॥
शूराश्च बलवन्तश्च वरुणस्य सुता रणे । निर्जितास्ते महाभाग चतुर्विधबलानुगाः ॥ १२ ॥

गो० टी०—राजन्निति । परिघः परितो हननक्षमो गदाविशेषः परिघः परिघातन इत्यमरः शक्तिः दीर्घयष्टिः ऋष्टिः असिः खड्गे तु निस्त्रिंशचन्द्रहासासिऋष्टय इत्यमरः । शूलं प्रसिद्धम् पट्टिशः खड्गविशेषः तैः संकुलं व्याप्तं बलमस्ति । समग्रबले एवं विद्यमाने कस्माद्धेतोः भवान् विषादं भजत इति योजना । अत्र सुमहन्नो बलमित्यत्र बलं नास्तीति प्रामादिकभाव्यनर्थसूचिकाखिलोक्तिः ॥ २ ॥

रा० टी०—तदुत्साहप्रवृद्धये तत्पराक्रमं वर्णयन्त आहुः—त्वयेति । भोगवतीं नागपुरीं गत्वा पन्नगाः त्वया निर्जिताः । अर्धं पृथक् ॥ ३ ॥

गो० टी०—तिष्ठतु सैन्यं त्वमेक एव समस्तशत्रुविद्रावणक्षम इत्याशयेनाह—त्वयेत्यादिना । सार्धश्लोक एकान्वयः । भोगवतीं सर्पराजनगरीम् । कदनं युद्धम् ॥ ३ ॥ ४ ॥

४ ] ति० टी०—उच्यमानगुणो धनदस्ते त्वया सुमहत्कदनं युद्धं कृत्वा वश्यः कृतः ॥ ४ ॥

रा० टी०—कैलासेति । कैलासशिखरावासी धनदः सुमहत् कदनं युद्धं कृत्वा ते त्वया वश्यः कृतः ॥ ४ ॥

५ ] ति० टी०—तदेव प्रपञ्च्यते—स इति । स धनदो महेश्वरसख्येन हेतुना स्वयं श्लाघमानोऽपि लोकपालोऽपि त्वया समरे रोषान्निर्जितः ॥ ५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । महेश्वरसख्येन श्लाघ्यमानो लोकपालो धनदः त्वया निर्जितः ॥ ५ ॥

गो० टी०—स इति । स्पष्टम् ॥ ५ ॥

६ ] ति० टी०—न जयमात्रम्, अपि तु सर्वस्वापहारोऽपीत्याह—विनिपात्येति । इदं विमानं पुष्पकम् ॥ ६ ॥

रा० टी०—विनिपात्येति । यक्षौघान् विक्षोभ्य संचाल्य विनिगृह्य च विनिपात्य ध्वंसयित्वा इदं पुष्पकं विमानं त्वया हृतम् ॥ ६ ॥

गो० टी०—विनिहत्येति । विमानं पुष्पकम् ॥ ६ ॥

७ ] ति० टी०—मयदुहिता मन्दोदरी ॥ ७ ॥

रा० टी०—मयेनेति । मयेन दुहिता स्वकन्या दत्ता ॥७॥

गो० टी०—मयेनेति । दुहिता मन्दोदरी । यद्यपि भयं नाभिजात्यभ्रमाद्दत्तेत्युत्तरं वक्ष्यति तथाप्यत्र प्रशंसायां भयाद्दत्तेत्युक्तम् ॥ ७ ॥

८ ] ति० टी०—कुम्भीनसी रावणस्वसेति तीर्थः । तस्याः सुखावहो भर्तेत्यर्थः ॥ ८ ॥

रा० टी०—दानवेन्द्र इति । कुम्भीनस्याः तदभिधत्वद्भगिन्याः सुखावहः पतिः दानवेन्द्रो विगृह्य त्वया वशमानीतः ॥ ८ ॥

गो० टी०—दानवेन्द्र इति । दानवेन्द्रः मधुः । कुम्भीनसी रावणभगिनी । सुखमावहतीति सुखावहः भर्ता ॥ ८ ॥

९ ] ति० टी०—जटी नागविशेषः ॥ ९ ॥

रा० टी०—निर्जिता इति । रसातलं गत्वा वासुकिप्रभृतयो नागाः नागविशेषाः त्वया निर्जिताः अत एव वशमाहृताः प्रापिताः अत एव पूर्वेण न पौनरुक्त्यम् ॥ ९ ॥

गो० टी०—निर्जिता इति । जटी सर्पविशेषस्य नाम । त्वया भोगवतीमित्यत्र तक्षकादिभिन्नकर्कोटकादिजयोक्तिरिति न पौनरुक्त्यम् ॥ ९ ॥

१०–११ ] ति० टी०—दानवाः कालकेयाः । तत्र तैः सह वासान्मायाश्चाधिगताः प्राप्ताः ॥ १० ॥ ११ ॥

रा० टी०—अक्षया इति । स्वबलमाश्रित्य संवत्सरं युद्ध्वा अक्षया अपि शूराः त्वया वशं नीताः तत्र तैः सह निवाससमये बह्व्यो मायाश्चाधिगताः प्राप्ताः । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—अक्षया इत्यादिश्लोकद्वयमेकान्वयम् । लब्धवराः ब्रह्मणेति शेषः । अक्षयाः चूर्णीकरणेपि पुनरुत्पत्तिमत्त्वेन क्षयरहिता इत्यर्थः । दानवाः कालकेयाः तत्र कालकेयसकाशात् । बह्वः बह्व्यः । "वोतो गुणवचनात्" इति पक्षे ङीषभावः ॥ १० ॥ ११ ॥

१२ ] ति० टी०—चतुर्विधबलं रथगजतुरगपादातरूपम् ॥ १२ ॥

मृत्युदण्डमहाग्राहं शाल्मलीद्रुममण्डितम् । कालपाशमहावीचिं यमकिंकरपन्नगम् ॥ १३ ॥
महाज्वरेण दुर्धर्षं यमलोकमहार्णवम् । अवगाह्य त्वया राजन्यमस्य बलसागरम् ॥ १४ ॥
जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः । सुयुद्धेन च ते सर्वे लोकास्तत्र सुतोषिताः ॥ १५ ॥
क्षत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः । आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १६ ॥
तेषां वीर्यगुणोत्साहैर्न समो राघवो रणे । प्रसह्य ते त्वया राजन्हताः समरदुर्जयाः ॥ १७ ॥
तिष्ठ वा किं महाराज श्रमेण तव वानरान् । अयमेको महाराज इन्द्रजित्क्षपयिष्यति ॥ १८ ॥
अनेन च महाराज माहेश्वरमनुत्तमम् । इष्ट्वा यज्ञं वरो लब्धो लोके परमदुर्लभः ॥ १९ ॥
शक्तितोमरमीनं च विनिकीर्णान्त्रशैवलम् । गजकच्छपसंबाधमश्वमण्डूकसंकुलम् ॥ २० ॥
रुद्रादित्यमहाग्राहं मरुद्वसुमहोरगम् । रथाश्वगजतोयौघं पदातिपुलिनं महत् ॥ २१ ॥
अनेन हि समासाद्य देवानां बलसागरम् । गृहीतो दैवतपतिर्लङ्कां चापि प्रवेशितः ॥ २२ ॥

---

रा० टी०—शूरा इति । चतुर्विधबलानुगाः वरुणस्य सुताः ते त्वया निर्जिताः ॥ १२ ॥

गो० टी०—शूराश्चेति । चतुर्विधबलानुगाः रथगजतुरगपदातिभेदेन चतुर्विधानि बलानि पृष्ठगानि येषां ते तथा ॥ १२ ॥

१३–१४ ] ति० टी०—मृत्युदण्डरूपो महाग्राहो यस्मिंस्तं बलसागरम् शाल्मलीद्रुमैर्यातनाहक्षैर्मण्डितम् सागरोऽपि द्वीपेषु वृक्षमण्डितो भवति । कालपाश एव महत्यो वीचयो यस्य तम् ॥ १३ ॥ १४ ॥

रा० टी०—मृत्य्विति । मृत्योर्यमस्य दण्ड एव महाग्राहो यस्मिन् शाल्मलीद्रुमैर्यातनातरुभिर्मण्डितं कालपाश एव महावीचिर्बृहत्तरङ्गो यस्मिन् यमकिंकराः पन्नगाः यस्मिन् महाज्वरेण दुर्धर्षं वशीकर्तुमशक्यं यमलोकमहार्णवं यमस्य बलसागरं च अवगाह्य प्रमथ्य विपुलो जयस्त्वया प्राप्तः अत एव मृत्युर्यमः प्रतिषेधितः पलायनं प्रापितश्च अत एव ते सुयुद्धेन सर्वे लोकाः सुतोषिताः । श्लोकत्रयमेकान्वयि ॥ १३–१५ ॥

गो० टी०—मृत्युदण्डेत्यादिश्लोकद्वयमेकान्वयम् । मृत्युदण्डः यमदण्डः स एव महाग्राहः महानक्रः यस्मिन् । शाल्मल्यः कण्टकशाल्मलिवृक्षाकारायुधविशेषाः त एव द्रुमाः तैर्मण्डितम् मृत्युः यमः प्रतिषेधितः युद्धादपक्रामितः ॥ १३ ॥ १४ ॥

१५ ] ति० टी०—प्रतिषेधितः पराङ्मुखः कृतः । ते त्वया सर्वे लोकाः सर्वे राक्षसाः सुतोषिताः प्रीणिताः ॥ १५ ॥

गो० टी०—सुयुद्धेनेत्यर्धम् । सुयुद्धेन स्वल्पयुद्धेनेत्यर्थः विलोलिताः द्राविताः ॥ १५ ॥

१६ ] ति० टी०—एवं दिव्यं जयमुक्त्वा भौमं जयमाहुः—क्षत्रियैरिति । उच्यमानगुणैः क्षत्रियैर्वसुमती पूर्णासीत् ॥ १६ ॥

रा० टी०—क्षत्रियैरिति । वीरैः क्षत्रियैर्वसुमती पादपैरिव पूर्णा आसीत् ॥ १६ ॥

गो० टी०—क्षत्रियैरिति । क्षत्रियैः अनरण्यप्रभृतिभिः ॥ १६

१७ ] ति० टी०—तेऽपि प्रसह्य त्वया हताः । राघवस्तु रणे तेषां वीर्यादिभिर्न समः, अतस्तद्वधे का चिन्तेति भावः ॥ १७ ॥

रा० टी०—तेषामिति । वीर्यादिभिः । तेषां प्रसिद्धानां क्षत्रियाणां समः राघवो न ते क्षत्रियाः त्वया हताः एतेन रामात्त्वया न भेतव्यमिति सूचितम् ॥ १७ ॥

गो० टी०—तेषामिति । न समो राघव इति । तेभ्योऽपि निहीनबलः सुखेन निग्राह्य इति भावः ॥ १७ ॥

१८ ] ति० टी०—एवं रावणं प्रशस्य तत्पुत्रं स्तुवन्ति—तिष्ठ वेति । हे महाराज ! तव मनुष्यो लक्ष्यं किम्, तस्मात्त्वं तूष्णीमेव तिष्ठ तव श्रमेण किं फलम् । वानरानेक एवेन्द्रजित्क्षपयिष्यति । महाराजेति द्विरुक्तिरादरात् ॥ १८ ॥

रा० टी०—ननु मया किं कर्तव्यमित्यत आह—तिष्ठेति । हे महाराज ! त्वं तिष्ठ तव श्रमेण किं न प्रयोजनमित्यर्थः ननु कथं मम विजय इत्यत आह—महाराजोऽतिदीप्तिमान् एक इन्द्रजिदेव वानरान् क्षपयिष्यति हनिष्यति ॥ १८ ॥

गो० टी०—तिष्ठ वेति । स्पष्टम् ॥ १८ ॥

१९ ] ति० टी०—कथमस्यैवं सामर्थ्यं तत्राहुः—अनेन चेति । माहेश्वरं महेश्वरप्रीतिकरम् । इष्ट्वा कृत्वा ॥ १९ ॥

रा० टी०—इन्द्रजितेति । बलवत्त्वे हेतुमाह—अनेनेति । माहेश्वरं महेश्वरदेवताकं यज्ञमिष्ट्वा अनेनेन्द्रजिता परमदुर्लभो वरो लब्धः ॥ १९ ॥

गो० टी०—अनेनेति । माहेश्वरं महेश्वरप्रीतिकरम् ॥ १९ ॥

२० ] ति० टी०—देवबलं सागरत्वेन रूपयति—शक्तीत्यादि । विनिकीर्णानि व्याप्तानि ॥ २० ॥

२१–२२ ] ति० टी०—महन्महान्तम् ॥ २१ ॥ २२ ॥

रा० टी०—वरप्रभावं बोधयन्नाह—शक्तीत्यादिभिः । शक्तितोमराः मीनाः यस्मिन् विनिकीर्णानि निःसार्य प्रक्षिप्तानि

---

१ अर्धमेतत् गो. नास्ति । २ विलोलिता इति गो. पाठः । ३ बाहुरिति गो. पाठः । ४ हीति गो. पाठः ।

पितामहनियोगाच्च मुक्तः शम्बरवृत्रहा । गतस्त्रिविष्टपं राजन्सर्वदेवनमस्कृतः ॥ २३ ॥
तमेव त्वं महाराज विसृजेन्द्रजितं सुतम् । यावद्वानरसेनां तां सरामां नयति क्षयम् ॥ २४ ॥
राजन्नापदयुक्तेयमागता प्राकृताज्जनात् । हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ।

प्रहस्तादिभिरात्मश्लाघनपूर्वकं रामादिवधप्रतिज्ञानेन रावणसमाश्वासनम् ॥ १ ॥

ततो नीलाम्बुदप्रख्यः प्रहस्तो नाम राक्षसः । अब्रवीत्प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तदा ॥ १ ॥
देवदानवगन्धर्वाः पिशाचपतगोरगाः । सर्वे धर्षयितुं शक्याः किं पुनर्मानवौ रणे ॥ २ ॥
सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता । नहि मे जीवतो गच्छेज्जीवन्स वनगोचरः ॥ ३ ॥

अन्नाणि शैवलाः यस्मिन् गजरूपैः कच्छपैः संबाधं निबिडम् अश्वरूपमण्डूकैः संकुलं व्याप्तं रुद्रादित्याः महाग्राहाः यस्मिन् मरुतो वायवो वसवश्च महोरगाः यस्मिन् रथानामश्वगजाः तोयौघा यस्मिन् पदातयः पुलिनानि यस्मिन् तं देवानां महद्बलसागरम् अनेनेन्द्रजिता समासाद्य संपीड्य दैवतपतिरिन्द्रः गृहीतः लङ्कां प्रवेशितश्च । श्लोकत्रयमेकान्वयि ॥ २०–२२ ॥

गो० टी०–शक्तितोमरेत्यादिश्लोकत्रयमेकान्वयम् । दैवतपतिः इन्द्रः ॥ २०–२२ ॥

२३ ] ति० टी०–पितामहस्य चतुर्मुखस्य रुद्रस्य यदि ज्यायो लब्धवरस्तन्नियोगात्तदाज्ञया । सर्वस्य जगतः प्रजापतिः पिता, भगवांश्चतुर्मुखरुद्रः पितामहः, भगवान्हिरण्यगर्भः प्रपितामहः, अतएवादित्यरुद्रवसुप्रधानाः सर्वश्राद्धदेवताः सर्वयज्ञदेवताः सचराचरसर्वप्रजोपास्यस्य सर्वस्वभूताश्चेति कतकः । शम्बरं वृत्रं हन्ति सः ॥ २३ ॥

रा० टी०–इन्द्रमोचने कारणमाह—पितामहेति । शम्बरवृत्रहा इन्द्रः पितामहनियोगात् आज्ञातो मुक्तः इन्द्रजिता प्रमोचितः सन् त्रिविष्टपं स्वर्गं गतः ॥ २३ ॥

गो० टी०–पितामहेति । स्पष्टम् ॥ २३ ॥

२४ ] ति० टी०–क्षयं यावन्नयति । नेष्यतीत्यर्थः ॥ २४ ॥

रा० टी०–तमिति । यः सरामां रामसहितां यावद्वानरसेनां क्षयं नयति नेष्यति तमिन्द्रजितं सुतं विसृज प्रेषय ॥ २४ ॥

गो० टी०–तमिति । विसृज प्रेषय । यावन्नयति नेष्यति ॥ २४ ॥

२५ ] ति० टी०–प्राकृतान्नरवानररूपाज्जनादागता संभावितागमनेयमापद्विपत्तच्चिन्ता तेऽयुक्ता कर्तुमयोग्या । सर्वथैषा चिन्ता त्वया हृदि नैव कार्या, यतस्त्वं राघवं वधिष्यस्येव ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तमः सर्गः ॥ ७ ॥

रा० टी०–राजन्निति । प्राकृतात् जनात् आगतेयमापत् अयुक्ता तव योग्या न अतः त्वया हृदि न कार्या स्मर्तव्येत्यर्थः । तत्र हेतुमाह—त्वं राघवं वधिष्यसि ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तमः सर्गः ॥ ७ ॥

गो० टी०–राजन्निति । अयुक्ता असंभाविता । प्राकृतात् क्षुद्रात् हनुमतः ॥ २५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

१–२ ] ति० टी०–तत इति ॥ १ ॥ २ ॥

रा० टी०–रावणं प्रति प्रहस्तोक्तिमाह–तत इत्यादिभिः । नीलाम्बुदप्रख्यः सेनापतिः प्रहस्तो राक्षसः वाक्यमब्रवीत् ॥ १ ॥

गो० टी०–एवं मन्त्रिभिः सह संमन्त्र्य भूयोऽभिहिते सकलसचिवप्रधानः प्रहस्तः स्वाभिमतमर्थं राज्ञे निवेदयति–तत इति । स्पष्टम् ॥ १ ॥

रा० टी०–तदाकारमाह—देवेत्यादिभिः । देवादयः सर्वे प्रधर्षयितुमस्माभिः पराभावयितुं शक्याः तर्हि मानवौ किम् ॥ २ ॥

गो० टी०–देवेति । स्पष्टम् ॥ २ ॥

३ ] ति० टी०–नन्विदानीमेव वानरैर्णकेनैव धर्षणे कृते कथं धर्षयितुं शक्या इति वचोऽत आह—सर्वे इति । प्रमत्ता भोगादिपरवशाः, विश्वस्ताः शत्रुधर्षणासंभवबुद्ध्या निःश-

१ निम इति गो. पाठः । २ न त्वामिति गो. पाठः । ३ शक्ता इति गो. पाठः । ४ वानरा इति गो. पाठः ।

सर्वां सागरपर्यन्तां सशैलवनकाननाम् । करोम्यवानरां भूमिमाज्ञापयतु मां भवान् ॥ ४ ॥
रक्षां चैव विधास्यामि वानराद्रजनीचर । नागमिष्यति ते दुःखं किंचिदात्मापराधजम् ॥ ५ ॥
अब्रवीत्तमसंक्रुद्धो दुर्मुखो नाम राक्षसः । इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ॥ ६ ॥
अयं परिभवो भूयः पुरस्यान्तःपुरस्य च । श्रीमतो राक्षसेन्द्रस्य वानरेन्द्रप्रधर्षणम् ॥ ७ ॥
अस्मिन्मुहूर्ते गत्वैको निवर्तिष्यामि वानरान् । प्रविष्टान्सागरं भीममम्बरं वा रसातलम् ॥ ८ ॥
ततोऽब्रवीत्सुसंक्रुद्धो वज्रदंष्ट्रो महाबलः । प्रगृह्य परिघं घोरं मांसशोणितदूषितम् ॥ ९ ॥
किं नो हनूमता कार्यं कृपणेन तपस्विना । रामे तिष्ठति दुर्धर्षे सुग्रीवेऽपि सलक्ष्मणे ॥ १० ॥
अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम् । आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम् ॥ ११ ॥

---

द्भुतया[1] स्थिताः, अतएव हनुमता वञ्चिताः स्म । आर्षो विसर्गलोप इति कतक । प्रामादिकः परिभवो न न्यूनतायै इति भावः । मे जीवत इत्यार्षी षष्ठी प्रमादाद्यभावविशिष्टजीवनवति मयि प्रहस्ते सति स जीवन्न गच्छेदित्यर्थः ॥ ३ ॥

रा० टी०—ननु तत्रैकेनैव केन वानरेण सर्वे यूयं पराभूताः इति कथमिदमुच्यते इत्यत आह—सर्व इति । वयं सर्वे विश्वस्ताः अस्मत्पराभावका न सन्तीति विश्वासं प्राप्ताः अत एव प्रमत्ताः भोगाद्यत्यासक्त्या अनवधानाः अत एव हनुमता वञ्चिताः जीवतः सावधानतया तिष्ठतो ममाग्रे वनगोचरो जीवन्न गच्छेत् ॥ ३ ॥

गो० टी०—हनुमतः पौरुषं प्रत्यक्षतो दृष्ट्वा कथमेवमुच्यत इत्यत्राह—सर्व इति । विश्वस्ताः परिभवितुमस्मान कोऽपि न शक्त इति विश्वस्ताः विस्रब्धाः । प्रामादिकशत्रुपरिभवो न न्यूनतामापादयतीति भावः । [ करिष्यतीत्यवज्ञया विस्रब्धाः अत एव वञ्चिताः । ] नहीति । जीवत इत्यनादरे षष्ठी ॥ ३ ॥

४ ] ति० टी०—करोमि करिष्यामि ॥ ४ ॥

रा० टी०—सर्वामिति । भूमिमवानरां करोमि अतो भवान् मामाज्ञापयतु ॥ ४ ॥

गो० टी०—सर्वामिति । स्पष्टम् ॥ ४ ॥

५] ति० टी०—आत्मापराधजं सीतापहरणापराधजम्॥५॥

रा० टी०—रक्षामिति । वानरात्ते रक्षां विधास्यामि अतः आत्मापराधजं स्वापराधजनितं किञ्चिद्दुःखं ते नागमिष्यति ॥ ५ ॥

गो० टी०—रक्षामिति । आत्मापराधः सीताहरणरूपो व्यतिक्रमः ॥ ५ ॥

६ ] ति० टी०—न क्षमणीयं क्षमितुं न युक्तम् प्रतिक्रियैव कर्तव्येति भावः । इदंपदार्थमाह—सर्वेषामिति ॥ ६ ॥

रा० टी०—अब्रवीदिति । सुसंक्रुद्धो दुर्मुखो नाम राक्षसः तं रावणमब्रवीत् । तदाकारमाह—नोऽस्माकं प्रधर्षणं वानरकर्तृकपराभवः अस्माकं न क्षमणीयम् ॥ ६ ॥

गो० टी०—अब्रवीदित्यादि । हि यस्माद्वानरेण कृतमिदं कर्म सर्वेषां नः प्रधर्षणरूपम् । भूयः तदुपरि पुरस्यान्तःपुरस्य च परिभवरूपम् अथ च राक्षसेन्द्रस्य प्रधर्षणरूपम् अतो न क्षमणीयमित्यर्थः ॥ ६ ॥ ७ ॥

७–८ ] ति० टी०—भूयः पुनः । पुरस्यान्तःपुरस्य चायं परिभवो दाहरूपो न क्षमणीय इत्यनुषङ्गः । वानरेन्द्रप्रधर्षणं तज्जं राक्षसेन्द्रस्य दुःखमहमेक एव गत्वा भीत्या सागरादीनपि प्रविष्टान्वानरान्हत्वा निवर्तयिष्यामि प्रधर्षणदुःखं निवर्तयिष्यामि ॥ ७ ॥ ८ ॥

रा० टी०—अयमिति । पुरादेरयं दाहादिकृतः परिभवः राक्षसेन्द्रस्य वानरेन्द्रप्रधर्षणं च अस्माकं न क्षमणीयमित्यनुकृष्यते ॥ ७ ॥

रा० टी०—अस्मिन्निति । सागराद्यन्यतमं प्रविष्टान् वानरान् अस्मिन्मुहूर्ते एको गत्वा निवर्तयिष्यामि ॥ ८ ॥

गो० टी०—ततः किं करिष्यसीत्यत आह—अस्मिन्निति । स्पष्टम् ॥ ८ ॥

९ ] ति० टी०—मांसशोणिताभ्यां स्वसंबद्धाभ्यां दूषितं भयजनकम् ॥ ९ ॥

रा० टी०—तत इति । मांसशोणिताभ्यां दूषितं संपृक्तं परिघं परिगृह्य वज्रदंष्ट्रोऽब्रवीत् ॥ ९ ॥

गो० टी०—तत इति । स्पष्टम् ॥ ९ ॥

१० ] ति० टी०—कृपणेन दीनेन । प्रकाशसंचारे भयाद्रात्रौ कृतकार्येण वा तपस्विना शोच्येन हनूमता किम् । अलक्ष्यस्य तस्य हननेन न प्रयोजनमिति भावः । कृपणादिशब्दानां पारुष्यमात्रे तात्पर्यम्, न त्वर्थे मातृगाम्यादिगालिदानवत् । तर्हि को हन्तव्यस्तत्राह—रामे तिष्ठत्यहते तिष्ठति सति किमनेन हतेनेत्यर्थः ॥ १० ॥

रा० टी०—तदाकारमाह—किमित्यादिभिः । रामादौ तिष्ठति सति कृपणेन दीनेन तपस्विना आहाराद्यन्वेषणार्थं संतापयुक्तेन हनूमता नोऽस्माकं किं कार्यं तस्मिन् प्रहारो न युक्त इत्यर्थः ॥ १० ॥

गो० टी०—किमिति । कृपणेन गूढसंचारप्रकटितभयेन तपस्विना शोच्येन ॥ १० ॥

११ ] ति० टी०—यद्वमतः—अद्य राममिति ॥ ११ ॥

---

[1] मति गो. पाठः । [2] तु रिर्वात गो. रा. पाठः । [3] इत्वेति गो. पाठः । [4] ऋषितमिति गो. पाठः । [5] न इति गो. पाठः ।

इदं ममापरं वाक्यं शृणु राजन्यदीच्छसि । उपायकुशलो ह्येव जयेच्छत्रूनतन्द्रितः ॥ १२ ॥
कामरूपधराः शूराः सुभीमा भीमदर्शनाः । राक्षसानां सहस्राणि राक्षसाधिप निश्चिताः ॥ १३ ॥
काकुत्स्थमुपसंगम्य [2]विहृतं मानुषं वपुः । सर्वे ह्यसंभ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम् ॥ १४ ॥
प्रेषिता भरतेनैव भ्रात्रा तव यवीयसा । स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति ॥ १५ ॥
ततो वयमितस्तूर्णं शूलशक्तिगदाधराः । चापबाणासिहस्ताश्च त्वरितास्तत्र यामहे ॥ १६ ॥
आकाशे गणशःस्थित्वा हत्वा तां हरिवाहिनीम् । अश्मशस्त्रमहावृष्ट्या प्रापयाम यमक्षयम् ॥ १७ ॥
एवं चेदुपसर्पेतामनयं रामलक्ष्मणौ । अवश्यमपनीतेन जहतामेव जीवितम् ॥ १८ ॥
कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्यवान् । अब्रवीत्परमक्रुद्धो रावणं लोकरावणम् ॥ १९ ॥
सर्वे भवन्तस्तिष्ठन्तु महाराजेन संगताः । अहमेको हनिष्यामि राघवं सहलक्ष्मणम् ॥ २० ॥
सुग्रीवं सहनूमन्तं [5]सर्वांश्चैवात्र वानरान् । ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः ॥ २१ ॥

---

रा० टी०-अद्येति । रामप्रभृतिं हत्वा हरिवाहिनीं विक्षोभ्य पलायनं प्रापय्य आगमिष्यामि ॥ ११ ॥

गो० टी०-अद्येति । स्पष्टम् ॥ ११ ॥

१२ ] ति० टी०-इदंपदार्थमाह—उपायेति ॥ १२ ॥

रा० टी०-इदमिति । उपायकुशल एव शत्रून् जयेदिति ममापरं वाक्यं श्रृणु ॥ १२ ॥

गो० टी०-इदमिति । तद्वाक्यं किमित्याकाङ्क्षायामुपाय प्रतिपादकं वाक्यं वक्तुमादावुपायं प्रशंसति—उपायेति॥१२॥

१३ ] ति० टी०-ततः किं तत्राह—कामेति । कामरूपेत्यादिषु पुंस्त्वमार्षम् ॥ १३ ॥

१४ ] ति० टी०-ततोऽपि किं तत्राह-काकुत्स्थमिति । विहृतं स्पष्टम् । वपुः धृत्वेति शेषः ॥ १४ ॥

रा० टी०-कामेति । हे राक्षसाधिप ! ये कामरूपधरा निश्चिताः कार्यविषयकनिश्चयवन्तः तेषां रक्षसां सहस्राणि विहृतं स्पष्टं मानुषं वपुर्गृहीत्वेति शेषः । काकुत्स्थमुपसंगम्य असंभ्रमा उद्वेगरहिताः भूत्वा तव भ्रात्रा भरतेन वयं प्रेषिता भवदानयनार्थमिति शेष इति रघुसत्तमं ब्रुवन्तु । सार्धश्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०-विवक्षितमुपायमेवाह—कामरूपेत्यादिना । निश्चिताः निश्चितवन्तः राक्षसा वा सहस्राणीति सहस्रशब्दस्य संख्येयपरत्वेऽपि शब्दस्वाभाव्यान्नपुंसकत्वम् । किमिति ब्रूयुस्तत्राह-प्रेषिता इति । अस्यान्ते इतिकरणं द्रष्टव्यम्१३॥१५

१५ ] ति० टी०-भरतप्रेषितत्ववचनेनापि किं तत्राह—स हीति । सेनां वानरसेनां समुत्थाप्य युक्त्वा स्वीयबुद्ध्या क्षिप्रमेवोपयास्यति । अस्मानिति शेषः ॥ १५ ॥

रा० टी०-तथोक्तेः प्रयोजनमाह-स इति । सः श्रुतभरतसंदेशो रामः सेनां समुत्थाप्य संत्यज्येत्यर्थः क्षिप्रमेवोपयास्यति । अर्थं पृथक् ॥ १५ ॥

१६-१७ ] ति० टी०-ततः किमिति प्रश्ने । मध्येमार्गं प्रहरामेति वकवद्धरणमन्त्रमाह—तत इति । यामेति लोडुत्तमः ॥ १६ ॥ १७ ॥

रा० टी०-तत किमित्यत आह—तत इति । ततः रामगमननिश्चयानन्तरं ते तत्र वयं तत्र याम ॥ १६ ॥

गो० टी०-तत इति । ते वयं तत्र समीपे याम । यामेति लोटि रूपम् ॥ १६ ॥

रा० टी०-ततोऽपि किमित्यत आह—आकाश इति । गणश आकाशे स्थित्वा अश्मादिमहावृष्ट्या हरिवाहिनीं यमक्षयं मृत्युगृहं प्रापयाम ॥ १७ ॥

गो० टी०-आकाश इति । स्पष्टम् ॥ १७ ॥

१८ ] ति० टी०-उक्तमन्त्रात्कार्यसिद्धिमाह-एवं चेदिति । एवमस्मदुक्तमुपश्रुत्य यद्ययमनुजानाति तदा सर्वथास्मदीयमनयं कैतवमुपसर्पेतां प्राप्नुयाताम्, ततश्चापनीतेन कैतवकृतप्रहारेणावश्यमेव जीवितं जहताम् जह्यातामिति यावत्॥१८॥

रा० टी०-एवमिति । एवमनयमस्मत्कृतवञ्चनं चेत् यदि रामलक्ष्मणौ उपसर्पेतां जानीयातां तदा अपनीतेन सेनया त्यक्तत्वेन हेतुना जीवितं जहतां जहीतां त्यजताम् ॥ १८ ॥

गो० टी०- एवं कृते किं स्यादित्यत्राह-एवं चेदिति । रामलक्ष्मणौ अनयम् अस्मत्कृतकैतवापरिज्ञानेन विश्वासम् यद्युपसर्पेतां ततस्तेन अपनीतेन अपनयेन जीवितं जहतामेव जह्यातामेवेत्यर्थः ॥ १८ ॥

१९-२० ति० टी०-कौम्भकर्णिः कुम्भकर्णापत्यम्१९॥२०

रा० टी०-कौम्भकर्णिरिति । ततो वज्रदंष्ट्रवचनश्रवणानन्तरं निकुम्भो नाम कौम्भकर्णिरब्रवीत् ॥ १९ ॥

गो० टी०- कौम्भकर्णिरिति । स्पष्टम् ॥ १९ ॥

रा० टी०-तद्वचनाकारमाह—सर्व इत्यादिभिः । महाराजेन रावणेन संगताः सहिता भवन्तस्तिष्ठन्तु अहमेको हनिष्यामि । सार्धश्लोक एकान्वयी ॥ २० ॥

गो० टी०- सर्व इत्यादि सार्धश्लोकमेकं वाक्यम् ॥ २०॥

२१ ] ति० टी०-अत्र वानरान् । अस्यां सेनायां स्थितान्वानरानित्यर्थः ॥ २१ ॥

रा० टी०-तत इति । सृक्कामोष्ठोपान्तं जिह्वया परिलिहन् वज्रहनुरब्रवीत् ॥ २१ ॥

क्रुद्धः परिलिहन्सृक्कां जिह्वया वाक्यमब्रवीत् । स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः ॥ २२ ॥
एकोऽहं भक्षयिष्यामि तां सर्वां हरिवाहिनीम् । स्वस्थाः क्रीडन्तु निश्चिन्ता पिबन्तु मधु वारुणम् २३ ॥
अहमेको वधिष्यामि सुग्रीवं सहलक्ष्मणम् । साङ्गदं च हनूमन्तं सर्वांश्चैवात्र वानरान् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ।

स्वस्वशक्त्यनुसारेण सगर्वं भाषमाणान् निशाचरान्वारयित्वा विभीषणो नीतिपुरःसरं वक्तुमुपक्रमते तच्छ्रुत्वा रावणः स्ववेश्म प्रविशति ।

ततो निकुम्भो रभसः सूर्यशत्रुर्महाबलः । सुप्तघ्नो यज्ञकोपश्च महापार्श्वमहोदरौ ॥ १ ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः । इन्द्रशत्रुश्च बलवांस्ततो वै रावणात्मजः ॥ २ ॥
प्रहस्तोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः । धूम्राक्षोऽथ निकुम्भश्च दुर्मुखश्चैव राक्षसः ॥ ३ ॥
परिघान्पट्टिशान्शूलान्प्रासाञ्शक्तिपरश्वधान् । चापानि च सुबाणानि खड्गांश्च विपुलाम्बुभान् ४ ॥
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः । अब्रुवन्रावणं सर्वे प्रदीप्ता इव तेजसा ॥ ५ ॥
अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम् । कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ॥ ६ ॥
तान्गृहीतायुधान्सर्वान्वारयित्वा विभीषणः । अब्रवीत्प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ॥ ७ ॥
अप्युपायैस्त्रिभिस्तात योऽर्थः प्राप्तुं न शक्यते । तस्य विक्रमकालांस्तान्युक्तानाहुर्मनीषिणः ॥ ८ ॥

---

गो० टी०—तत इत्यादिसार्धश्लोकत्रयमेकान्वयम् ॥ मधुवारुणीं मधुरूपां वारुणीम् । रणकुञ्जरं रणाप्रधृष्यम् । स्वःस्था इत्यमङ्गलोक्तिः ॥ २१ । २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्यानेऽष्टमः सर्गः ॥ ८ ॥

२२ ] ति० टी०—सृक्काभोष्ठप्रान्तम् ॥ २२ ॥

रा० टी०—तदाकारमाह—स्वैरमित्यादिभिः ॥ २२ ॥

२३-२४ ] ति० टी०—वारुणं मधु मद्यम् । एतेन क्षौद्रव्यावृत्तिः ॥ २३ ॥ २४ ॥

कतकरीत्यात्र सर्गाविच्छेदः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टमः सर्गः ॥ ८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स्वस्था इति । सुग्रीवादीन् अहमेको वधिष्यामि । सार्धः श्लोक एकान्वयी २३॥२४

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डेऽष्टमः सर्गः ॥ ८ ॥

---

१-३ ] ति० टी०—तत इति । कौम्भकर्णिरेवायं निकुम्भः परैः सहितस्तं पुनराह ॥ १-३ ॥

४ ] ति० टी०—सुबाणानीति बहुव्रीहिः । विपुलाम्बुभान्निर्मलजलकान्तीन् ॥ ४ ॥

५ ] ति० टी०—समुत्पत्योत्थाय ॥ ५ ॥

रा० टी०—रावणं प्रति सङ्घीभूतराक्षसानामुक्तिमाह—तत इत्यादिभिः । निकुम्भादयो राक्षसाः परिघादीन् प्रगृह्य अब्रुवन् निकुम्भादिनामत्वेन बहूनां सत्त्वान्न पौनरुक्त्यम् । विपुलाम्बुभान् गम्भीरजलकान्तिमतः । श्लोकपञ्चकमेकान्वयि ॥ १-५ ॥

गो० टी०—अथ निकुम्भमतमेवानुसरन्तः सर्वेपि प्रधाना अहमहमिकया समुत्थाय शत्रुवधोद्युक्ताः तमुद्योगं नीतिशास्त्रज्ञो विभीषणः प्रतिषिद्धवानित्याह—तत इत्यादिश्लोकषट्कमेकं वाक्यम् । आदौ निकुम्भोपादानं निकुम्भमतानुसरणसूचनार्थम् । समुत्पत्य आसनेभ्यः समुत्थाय । प्रधर्षितेत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ १ ॥ ६ ॥

६ ] ति० टी०—किमब्रुवंस्तदाह—अद्येति ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—अद्येति ॥ ६ ॥

७ ] ति० टी०—विभीषणस्तान्सर्वान्वारयित्वा पुनः प्रत्युपवेश्य स्थापयित्वा रावणं प्रति प्राञ्जलिर्भूत्वा वाक्यमब्रवीत् ॥ ७ ॥

रा० टी०—तानिति । गृहीतायुधान् तान् घोरकर्मणः तान् सर्वान् वारयित्वा प्रत्युपवेश्य च विभीषणोऽब्रवीत् ॥७॥

गो० टी०—तानिति । क्रियाभेदात्तानित्यस्य न पुनरुक्तिः ॥ ७ ॥

८ ] ति० टी०—त्रिभिरुपायैः सामदानभेदरूपैः । तस्य-

---

१ वक्त्रमिति गो. पाठः । २ तान्सर्वान्हरियूथपानिति गो. पाठः । ३ मधुवारुणीमिति गो. पाठः । ४ अङ्गदं चेति गो. पाठः । ५ रामं च रणकुञ्जरमिति गो. पाठः । ६ यज्ञहा रक्षो महापार्श्वो महोदर इति गो. पाठः । ७ राक्षस इति गो. रा. पाठः ८ जिह्व महातेजा बलवान्रावणात्मज इति गो. पाठः । ९ प्रासाञ्छक्तिशूलेति गो. पाठः । १० विपुलाञ्छ्रितानिति गो. पाठः ।

प्रमत्तेष्वभियुक्तेषु दैवेन [1]प्रहतेषु च । विक्रमास्तात सिद्ध्यन्ति परीक्ष्य विधिना कृताः ॥ ९ ॥
अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम् । जितरोषं दुराधर्षं तं धर्षयितुमिच्छथ ॥ १० ॥
समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम् । [2]गतिं हनूमतो लोके को विद्यात्तर्कयेत वा ॥ ११ ॥
बलान्यपरिमेयानि वीर्याणि च निशाचराः । परेषां सहसावज्ञा न कर्तव्या कथंचन ॥ १२ ॥
किं च राक्षसराजस्य रामेणापकृतं पुरा । आजहार जनस्थानाद्यस्य भार्यां यशस्विनः ॥ १३ ॥

र्थस्य प्राप्त्यर्थमिति शेषः । तान्नीतिशास्त्रोक्तान्विक्रमकालानाहुः मनीषिणो नीतिशास्त्रज्ञाः ॥ ८ ॥

रा० टी०—तदाकारमाह—अपीतित्रिभिः । सामदानभेदाभिधैः उपायैर्योऽर्थः प्राप्तुं न शक्यते तस्यार्थस्य लाभार्थमिति शेषः युक्तान् शास्त्रोक्तत्वेन योग्यान् विक्रमकालान् मनीषिण आहुः ॥ ८ ॥

गो० टी०—प्रहस्तादीनां प्रधानानां संनिहितत्वाद्रावणिं वा रावणं वा प्रत्युक्तिः । मध्ये कचित्सचिवान् प्रति वोक्तिः । विक्रमस्य नायमवसर इति दर्शयितुं सामान्येन विक्रमकालानाह—अप्युपायैरिति । तातेत्यभिमुखीकरणाय संबोधनम् । त्रिभिः सामदानभेदरूपैः उपायैरपि योऽर्थः लब्धुं न शक्यते तस्य सिद्धये तान् नीतिशास्त्रप्रसिद्धान् विक्रमकालान् युक्तानाहुः । तदुक्तं कामन्दकेन—सामादीनामुपायानां त्रयाणां विफले नये । विनयेन्नयसंपन्नो दण्डं दण्ड्येषु दण्डभृदिति ॥ तथा च नायं दण्डस्य काल इत्युक्तम् ॥ ८ ॥

९ ] ति० टी०—तानेव कालानाह—प्रमत्तेष्वसावधानेषु, अभियुक्तेषु शत्र्वन्तराक्रान्तेषु दैवेन प्रहतेषु महारोगादिनेति शेषः । परीक्ष्य उक्तविक्रमप्रवृत्तिनिमित्तसत्तां परीक्ष्येत्यर्थः ॥ ९ ॥

रा० टी०—विक्रमकालान्बोधयन्नाह—प्रमत्तेष्विति । प्रमत्तेषु असावधानेषु दैवेन रोगादिना अभिहतेषु च अभियुक्तेषु स्वविजयार्थमुद्युक्तेषु परीक्ष्य अनवधानतादि ज्ञात्वा विधिना कृताः विक्रमाः सिध्यन्ति विजयप्रदाः भवन्ति ॥ ९ ॥

गो० टी०— न केवलं दण्डस्याकालिकत्वं दण्ड्यत्वं च ते शत्रोर्नास्तीत्यभिप्रायेणाह—प्रमत्तेष्विति । प्रमत्तेषु अनवधानेषु विषयासक्तेष्वित्यर्थः । अभियुक्तेषु ज्ञानिषु विरक्तेष्विति यावत् । यद्वा सामन्तैराक्रान्तेषु । दैवेन भाग्येन प्रहतेषु क्षीयमाणसंपत्स्वित्यर्थः । चकाराद्बालवृद्धादिषु विधिना नीतिशास्त्रोक्तरीत्या परीक्ष्य मन्त्रिभिर्विचार्य । कृताः विक्रमाः विग्रहाः सिद्ध्यन्ति । नान्यत्रेत्यर्थः । यथाह कामन्दकः—'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसंयुतः ॥ अदेशस्थो बहुरिपुर्युक्तो कालेन यश्च मः । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम्' इति ॥ ९ ॥

१० ] ति० टी०—प्रकृतो विक्रमानर्ह एव काल इत्याह—अप्रमत्तमिति । विजिगीषुम् । अनेन शत्र्वन्तरराहित्यम् । बले दैवबले स्थितम् । जितरोषमित्यनेन मौर्ख्यराहित्यम् । दुराधर्षत्वेन दिव्यास्त्रसंपदुक्ता ॥ १० ॥

रा० टी०—इदानीं विक्रमकालो नास्तीति बोधयन्नाह—अप्रमत्तमिति । अप्रमत्तं दुराधर्षं तं रामं धर्षयितुं कथमिच्छथ ॥ १० ॥

गो० टी०—रामस्तु न तादृश इत्याह—अप्रमत्तमिति । अप्रमत्तं सावधानम् । तुशब्दोऽवधारणे । बले स्थितं स्थिरबलमित्यर्थः । जितरोषम् अकाले रोषरहितमित्यर्थः कुम्भकर्णेति । पूर्वं रावणं प्रतिवचनम् । अत्र सर्वान् प्रतीति बहुवचनम् ॥ १० ॥

११ ] ति० टी०—को विद्यान्मनसापि कः प्राप्नुयात् तर्कयेत हनुमत्येवं चेष्टां संभावयेत ॥ ११ ॥

रा० टी०—दुराधर्षत्वे कारणमाह—समुद्रमिति । समुद्रं लङ्घयित्वा प्रसिद्धस्य हनुमतः गतिं को विद्यात् तर्कयेत वा तद्गतिज्ञाने न कश्चित्समर्थ इत्यर्थः ॥ ११ ॥

गो० टी०—राम इदानीं दैवानुपहत इत्यत्र उदाहरणमाह—समुद्रमिति । स्पष्टम् ॥ ११ ॥

१२ ] ति० टी०—एवमेव हनुमदादेर्बलान्यपरिमेयानि वीर्याणि पराक्रमाश्च सर्वलोकातिगा इति जानीथेति शेषः । अतो हे निशाचराः, परेषां सहसा द्रागवज्ञा न कार्या ॥ १२ ॥

रा० टी०—बलानीति । येषां बलानि सैन्यानि वीर्याणि च अपरिमेयाणि तेषां परेषां रिपूणामवज्ञा लघुत्वेनानादरो न कर्तव्या ॥ १२ ॥

गो० टी०—बलानीति । परेषां रामादीनाम् ॥ १२ ॥

१३ ] ति० टी०—किं चास्मास्वेवान्यायो न रामे इत्याह—किं चेति । यशस्विनो यस्य भार्या जनस्थानादाजहार तेन रामेण राक्षसराजस्य पुरा पूर्वं किमपकृतं कोऽपकारः कृतो न कोऽपि ॥ १३ ॥

रा० टी०—रामस्तु कथंचित् न युद्धार्ह इति बोधयन्नाह—किमिति । च अपरं वदामीत्यर्थः यस्य भार्यां जहार भवानिति

१ प्रहतेष्विति गो. पाठः । २ कृतं हनूमतां कर्म दुष्करमिति गो. पाठः ।

खरो यद्यतिवृत्तस्तु स रामेण हतो रणे । अवश्यं प्राणिनां प्राणा रक्षितव्या यथाबलम् ॥ १४ ॥
[ अयशस्यमनायुष्यं परदाराभिमर्शनम् । अर्थक्षयकरं घोरं पापस्य च पुनर्भवम् ॥ ]
एतन्निमित्तं वैदेही भयं नः सुमहद्भवेत् । आहृता सा परित्याज्या कलहार्थे कृते नु किम् ॥ १५ ॥
न नु क्षमं वीर्यवता तेन धर्मानुवर्तिना । वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ॥ १६ ॥
यावन्न सगजां साश्वां बहुरत्नसमाकुलाम् । पुरीं दारयते बाणैर्दीयतामस्य मैथिली ॥ १७ ॥
यावत्सुघोरा महती दुर्धर्षा हरिवाहिनी । नावस्कन्दति नो लङ्कां तावत्सीता प्रदीयताम् ॥ १८ ॥
विनश्येद्धि पुरी लङ्का शूराः सर्वे च राक्षसाः । रामस्य दयिता पत्नी न स्वयं यदि दीयते ॥ १९ ॥
प्रसादये त्वां बन्धुत्वात्कुरुष्व वचनं मम । हितं तथ्यं त्वहं ब्रूमि दीयतामस्य मैथिली ॥ २० ॥

शेषः तेन रामेण राक्षसराजस्य तव पुरा किमपकृतं न किमपीत्यर्थः ॥ १३ ॥

गो० टी०—अनपराधिनि निष्कारणवैरकरणमप्यपरमनुचितमित्याह—किं चेत्यादि । खरवध एव प्रथमापराध इत्याशङ्क्याह—खर इति । दुर्वृत्ततया स्ववधप्रवृत्तखरवधे रामस्य नापकारगन्धोऽपीति भावः । निहतो यदि तत्र को दोष इति शेषः । दोषाभावमाह—अवश्यमिति ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—ननु खरादिहननरूपोऽपकारः कृत इति चेत्तत्राह—खर इति । खरो रामेण निहत इति यदुच्यते तदा शृणु—अतिवृत्तस्तु स इति । स्वस्थानमतिक्रम्य तद्देशं गत्वा तत्पीडायै प्रवृत्त इति तेन स हतः । तादृशस्य हननं च न्याय्यमेवेत्याह—अवश्यमिति ॥ १४ ॥

रा० टी०—ननु खरोऽनेनैव निहत इति कथं नास्यापराध इत्यत आह—खर इति । प्राणिना प्राणा अवश्यं रक्षितव्या अतः अतिप्रवृत्तः हन्तुमागतः खरः यदि रामेण हतः तर्हि किमपकृतमपकृतमित्यनुकृष्यते ॥ १४ ॥

१५–१९ ] ति० टी०—एतन्निमित्तं खरादिवधनिमित्तमाहृता वैदेही यदि तदेतन्निमित्तमेव वैदेह्याहरणनिमित्तमेव नः सुमहद्भयं भवेद्धावि । एतन्निमित्तमित्यत्र तन्त्रम्, अतो भयहेतुः सा परित्याज्या । कलहार्थं कलहफलके कस्मिंश्चित्कर्मणि कृते किं नु, फलमिति शेषः । अनर्थ एवेत्यर्थः ॥ १५–१९ ॥

रा० टी०—एतदिति । नु यदि एतन्निमित्तं खरादिवधहेतोः आहृता सा सीता नोऽस्माकं सुमहद्भयं भयहेतुर्भवेत् तर्हि परित्याज्या कलहार्थं कलहमात्रप्रयोजने कृते प्रयत्ने किं फलं न किमपीत्यर्थः ॥ १५ ॥

रा० टी०—नेति । तेन रामेण निरर्थकं वैरं कर्तुं न क्षमम् अतः अस्य रामस्य मैथिली दीयताम् ॥ १६ ॥

गो० टी०—प्रथमं रामेणापकृतत्वेऽप्यनेकदोषमूलं सीतापहरणं न कार्यमित्याह—अयशस्यमिति । पुनर्भवं जन्मान्तरम् । मृत्यन्तरमिति यावत् । एवं सामान्यतः परदाराभिमर्शनस्याहेतुत्वमुक्त्वा प्रकृते तद्दर्शयति—एतदिति । एतस्मान्निमित्तादित्यर्थः । "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति पञ्चम्यर्थे प्रथमा । अयशस्यत्वादिहेतोर्वैदेह्याः सकाशात्सुमहद्भयं भवेत् । तर्हि किमिदानीं कर्तव्यं तत्राह—आहृतेति । उत्तमं वस्तु कथं त्यक्तव्यं तत्राह—कलहार्थे कृतेन किमिति । कलहार्थे विषये कृतेन कर्मणा किमित्यर्थः । अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रवस्तुहेतुनिवृत्तिष्विति वैजयन्ती ॥ १५ ॥ १६ ॥

रा० टी०—अदाने महान् दोष इति बोधयन्नाह—यावदित्यादिभिः ॥ १७ ॥

गो० टी०—बहुदोषप्रदर्शनपूर्वकं सीताप्रदानस्यावश्यकर्तव्यतामाह—न नः क्षममित्यादिना ॥ १७ ॥

रा० टी०—यावदिति । अवस्कन्दति विनाशयति ॥ १८ ॥

गो० टी०—यावदिति । यावद्दारयते दारयिष्यति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । राम इति शेषः ॥ १८ ॥

रा० टी०—विनश्येदिति । यदि स्वयं रामस्य पत्नी न दीयते तर्हि लङ्का विनश्येत् अतो दीयताम् ॥ १९ ॥

गो० टी०—यावदिति । यावत् यदा तावत्तदा नावस्कन्दति न रुणद्धि ॥ १९ ॥

गो० टी०—विनश्येदिति । शूरा इति । विनश्येयुरिति व्यत्ययेन योजनीयम् । स्वयं न यदि दीयत इति पाठः ॥ २० ॥

२० ] ति० टी०—बन्धुत्वाद्भ्रातृत्वात् ॥ २० ॥

रा० टी०—प्रसादये इति । बन्धुत्वाद्धेतोः हितं ब्रूमि ब्रवीमि त्वां प्रसादये च ॥ २० ॥

गो० टी०—प्रसादय इति । ब्रूमि ब्रवीमि । अस्य अस्मै ॥ २१ ॥

१ रामेण निहत इति गो. पाठः । २ प्राणिनामिति गो. पाठ । ३ श्लोकोऽयं गो. अधिकः । ४ कृतेनेति गो. पाठः । ५ इति गो. पाठः । ६ दीयतामिति रा. पाठः । ७ स्वयं न यदि दीयत इति गो. पाठः । ८ पथ्यमहमिति गो. पाठः ।

पुरा शरत्सूर्यमरीचिसंनिभान्नवाग्रपुङ्खान्सुदृढान्नृपात्मजः ।
सृजत्यमोघान्विशिखान्वधाय ते प्रदीयतां दाशरथाय मैथिली ॥ २१ ॥
त्यजाशु कोपं सुखधर्मनाशनं भजस्व धर्मं रतिकीर्तिवर्धनम् ।
प्रसीद जीवेम सपुत्रबान्धवाः प्रदीयतां दाशरथाय मैथिली ॥ २२ ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः । विसर्जयित्वा तान्सर्वान्प्रविवेश स्वकं गृहम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः ।

पुनश्च विभीषणः प्रातः प्रविश्याग्रजभवनं दुरुत्पातान्दर्शयन् प्राप्तकालभाषणेन तं प्रार्थयते ।

ततः प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः । राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ १ ॥

२१-२२ ] ति० टी०—नवाग्रपुङ्खान्नवान्युज्वलान्यग्राणि फलभागाः पुङ्खभागाश्च येषाम् । पुरा सृजति स्रक्ष्यति ततः पुरा प्राङ्मैथिली दीयताम् ॥ २१ ॥ २२ ॥

रा० टी०—पुरेति । नृपात्मजो रामः अमोघान् विशिखान् शरान् ते वधाय विसृजति त्यक्ष्यति अतः पुरा शरप्रक्षेपात् पूर्वमेव मैथिली प्रदीयताम् ॥ २१ ॥

गो० टी०—पुरेति । अग्रं शल्यं पुङ्खं शरमूलम् नवे अग्रपुङ्खे येषां ते अत एव सुदृढान् पुरा सृजति स्रक्ष्यति । दशरथस्यायं दाशरथः "तस्येदम्" इति संबन्धार्थे अण् । संबन्धश्चात्र पुत्रत्वम् दाशरथाय दाशरथये ॥ २२ ॥

रा० टी०—त्यजेति कोपं त्यज प्रसीद च अत एव मैथिली प्रदीयतामत एव सपुत्रबान्धवाः वयं जीवेम ॥ २२ ॥

गो० टी०—त्यजेति । रतिः सुखम् ॥ २३ ॥

२३ ] ति० टी०—तान्सर्वान्प्रहस्तादिदुर्मन्त्रिणो विभीषणं च ॥ २३ ॥

अत्राष्टमसर्गसमाप्तिः कतकरीत्या ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवमः सर्गः ॥ ९ ॥

रा० टी०—विभीषणेति । सर्वान् विभीषणादीन् विसर्जयित्वा विसर्ज्य गृहं प्रविवेश ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे नवमः सर्गः ॥ ९ ॥

गो० टी०—विभीषणेति । सर्वं प्रातरालोचयिष्याम इति विभीषणप्रमुखान् विसृज्येत्यर्थः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

१ ] ति० टी०—प्रत्युषसि प्रातःकाले प्राप्ते, प्राप्तो धर्मार्थयोर्निश्चयो येन स विभीषणो राक्षसाधिपते रावणस्य वेश्म नासभूतं वक्ष्यमाणविशेषणमग्रजस्यालयं प्रविवेशेति सप्तमश्लोकस्थेनान्वयः । भीमकर्मा रावणसमीपे सीता देयेति दुष्करवचनवक्ता ॥ १ ॥

रा० टी०—विभीषणकर्तृकरावणवेश्मप्रवेशं वर्णयन्नाह—तत इत्यादिभिः । ततः रावणनिद्रापगमश्रवणानन्तरं प्रत्युषसि प्रातःकाले प्राप्ते धर्मार्थयोर्निश्चयो यस्य सः भीमाय भयंकराय रावणाय तद्बोधनायेत्यर्थः कर्म गमनं यस्य स विभीषणः राक्षसाधिपतेर्वेश्म प्रविवेशेत्यपकृष्यते ॥ १ ॥

गो० टी०—अथ हितपरो विभीषणः सत्योत्तरकाले रावणस्योपदेष्टुं तद्गृहं गत इत्याह—तत इत्यादि । प्रविवेश महाद्युतिरित्यन्तमेकं वाक्यम् । ततः प्रत्युषसीत्यनेन लङ्कादाहानन्तरमेकमहो गतमित्यवगम्यते । प्राप्तधर्मार्थनिश्चयः सीताप्रदानमेवास्माकं धर्मोऽर्थश्चेति कृतनिश्चयः । भीमकर्मा परमार्थतो रावणस्य हितत्वेऽप्यनभिमतार्थविज्ञापनरूपसाहसकरणात् भीमकर्मेत्युक्तिः राक्षसाधिपतेः अग्रजस्य आलयं निवासभूतम् वेश्म प्रविवेशेति संबन्धः । शैलाग्रचयसंकाशं गिरिशिखरचयसदृशम् । अनेकशृङ्गयुक्तत्वादिति भावः शैलशृङ्गमिवोन्नतमित्यौन्नत्ये दृष्टान्तः । सुविभक्तमहाकक्ष्यं सुष्ठुविभक्तमहाप्रकोष्ठम् । कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धन इत्यमरः । महाजनैः विद्वद्भिः परिगृह्यत इति महाजनपरिग्रहम् तदधिष्ठितमित्यर्थः । महामात्रैः प्रधानैः महामात्राः प्रधानाः स्युरित्यमरः आप्तपर्याप्तैः कार्यकरणदक्षैरिति महामात्रविशेषणम् व्याकुलीकृतमारुतं चक्रवातीकृतवायुम् शङ्खघोषमहाघोषं शङ्खघोषेण महान् घोषो यस्य तथोक्तम् तूर्यनादानुनादितं तूर्यनादेन सञ्जातप्रतिध्वनिम् प्रजल्पितमहापथं सञ्जातमहाकलकलमहामार्गम् । तप्तकाञ्चननिर्यूहं द्रुतकनकमयमत्तवारणम् निर्यूहो मत्तवारण इत्यमरः । भूषणोत्तमैः तोरण-

१ शरानिति रा. पाठः त्यजस्वेति गो. पाठः ।

शैलाग्रचयसंकाशं शैलशृङ्गमिवोन्नतम् । सुविभक्तमहाकक्षं महाजनपरिग्रहम् ॥ २ ॥
मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् । राक्षसैराप्तपर्याप्तैः सर्वतः परिरक्षितम् ॥ ३ ॥
मत्तमातङ्गनिःश्वासैर्व्याकुलीकृतमारुतम् । शङ्खघोषमहाघोषं तूर्यसंबाधनादितम् ॥ ४ ॥
प्रमदाजनसंबाधं प्रजल्पितमहापथम् । तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् ॥ ५ ॥
गन्धर्वाणामिवावासमालयं मरुतामिव । रत्नसंचयसंबाधं भवनं भोगिनामिव ॥ ६ ॥
तं महाभ्रमिवादित्यस्तेजोविस्तृतरश्मिवान् । अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ॥ ७ ॥
पुण्यान्पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् । शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥ ८ ॥
पूजितान्दधिपात्रैश्च सर्पिर्भिः सुमनोक्षतैः । मन्त्रवेदविदो विप्रान्ददर्श स महाबलः ॥ ९ ॥
स पूज्यमानो रक्षोभिर्दीप्यमानं स्वतेजसा । आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ॥ १० ॥

---

वितानप्रभृतिभिर्भूषितम् गन्धर्वाणामिवावासम् तौर्यत्रिकमुखरितत्वादिति भावः। मरुतां देवानाम् आलयमिव निरवधिकैश्वर्यसंपन्नत्वादिति भावः । रत्नसंचयैः संबाधं संपूर्णम् अत एव भोगिनां सर्पाणाम् भवनमिव स्थितम् । तेजोविस्तृतरश्मिमान् तेजः शरीरकान्तिस्तदेव विस्तृतरश्मिरस्यास्तीति तथा महाद्युतिः महाप्रभः अभ्रमिवेत्युपमया तद्भवनं बिभीषणस्य तेजोपहारकमिति व्यज्यते । एवं गृहोत्कर्षवर्णनं रावणस्यानीत्या सर्वमेकपदेन नष्टमिति ज्ञापनाय ॥ १ ॥ ७ ॥

२ ] ति० टी०—शैलाग्राणां शैलशृङ्गाणां च यः समूहस्तत्संकाशम् । बहुप्रासादवत्त्वादेवं वादः ॥ २ ॥

रा० टी०—भवनमेव वर्णयन्नाह—शैलाग्रेत्यादिभिः । शैलाग्रचयसंकाशं बहुप्रासादवत्वेन शैलशृङ्गसमूहसदृशं सुविभक्ताः महाकक्षाः यस्मिन् महाजनानां परिग्रहः संग्रहो यस्मिन् ॥ २ ॥

३ ] ति० टी०—'अनुष्ठितम्' इति पाठेऽप्यधिष्ठितमित्यर्थः । आप्तैर्हितैः पर्याप्तैः कार्यनिर्वहणसमर्थैः ॥ ३ ॥

रा० टी०—महामात्रैरधिष्ठितम्, आप्तपर्याप्तैः, आप्तत्वेन परिपूर्णैः राक्षसैः परिरक्षितम् ॥ ३ ॥

४ ] ति टी०—व्याकुलीकृतमारुतं मिश्रीकरणेन वात्यारूपमापादितो बाह्यमारुतो यत्र तम् तूर्याणां संबाधो नैबिड्यं तेन नादितम् [ मत्तमातङ्गानां निःश्वासैर्व्याकुलीकृतः वात्यारूपसंपादनेन चञ्चलीकृतः मारुतो यस्मिन् शङ्खघोषवत् महाघोषः राक्षसस्वनो यस्मिन् तूर्यसंनादैर्नादितम् ]॥ ४ ॥

५–६ ] ति० टी०—प्रजल्पितमहापथम् । आदिकर्मणि क्तः प्रातःकालत्वात्प्रारब्धजल्पमहामार्गम् । निर्यूहो द्वारम् । 'निर्यूहः शिखरे द्वारे' इति विश्वः ॥ ५ ॥ ६ ॥

रा० टी०—प्रमदाजनैः संबाधं निबिडं प्रजल्पिताः जनप्रजल्पविशिष्टाः महापथाः यस्मिन् तप्तकाञ्चनमयाः निर्यूहा द्वाराणि यस्मिन् ॥ ५ ॥

रा० टी०—गन्धर्वाणामावासं वेश्मेव भोगिनां भवनमिव रत्नसंचयसंबाधं रत्नसमूहैर्निबिडम् ॥ ६ ॥

७–८ ] ति० टी०—तेजोभिर्विस्तृता रश्मयो येषां सन्ति तादृशमणिमानित्यर्थः ॥ ७ ॥ ८ ॥

रा० टी०—अग्रजस्यालयं वेश्म तेजसां विस्तृतं विस्तारो येषां तादृग्रश्मिवान् किंच तेजसा विस्तृता रश्मयस्तद्वान् आदित्यो महाभ्रमिव वीरो विभीषणः प्रविवेश पण्णामेकत्रान्वयः यदि तु आसमन्ताल्लयः इतरबुद्धीनां दौर्बल्यं यस्मिन् तत् वेश्म विभीषणः प्रविवेशेत्यर्थः तदा सप्तानामेकत्रान्वयः अस्मिन्पक्षे तमिति महाभ्रविशेषणम् ॥ ७ ॥

रा० टी०—पुण्यानिति । पुण्यान् पवित्रकारकान् भ्रातुः रावणस्य विजयसंश्रितान् विजयोद्देशेन प्रवृत्तान् वेदविद्भिरुदाहृतान् पुण्याहघोषान् स्वस्तिपुण्याहवाचनस्वनान् शुश्राव ॥ ८ ॥

गो० टी०—पुण्यानिति । पुण्यान् पुण्यकरान् पुण्याहघोषान् पुण्याहमन्त्रघोषान् विजयसंश्रितान् विजयफलकानित्यर्थः उदाहृतान् उच्चारितान् ॥ ८ ॥

९–१० ] ति० टी०—सुमनोक्षतैः पुष्पाक्षतैः पूजितान् दधिपात्रैः सर्पिर्भिश्च युक्तहस्तानिति शेषः मन्त्रान्वेदं ब्राह्मणं विदन्ति तान् ॥ ९ ॥ १० ॥

रा० टी०—पूजितानिति महाबलो विभीषणः सुमनोभिः पुष्पैरक्षतैश्च पूजितान् दधिपात्रैः सर्पिर्भिश्च संयुक्तकरानिति शेषः मन्त्रवेदविदः मन्त्रोच्चारणाविशिष्टवेदवेदितॄन् विप्रान् ददर्श ॥ ९ ॥

गो० टी०—पूजितानिति । दधिपात्रैः दधियुक्तपात्रैः । मन्त्रवेदविदः मन्त्रब्राह्मणविदः मन्त्राः कर्मसु विनियुक्ता इषे त्वेत्यादयः कर्मचोदना ब्राह्मणानि ॥ ९ ॥

---

१ कक्ष्यमिति गो. पाठः । २ नादानुनादितमिति गो. पाठः । ३ मानिति गो. पाठः । ४ स्थिति गो. पाठः । ५ मान इति गो. पाठः ।

स राजदृष्टिसंपन्नमासनं हेमभूषितम् । जगाम समुदाचारं प्रयुज्याचारकोविदः ॥ ११ ॥
स रावणं महात्मानं विजने मन्त्रिसंनिधौ । उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥ १२ ॥
प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः । देशकालार्थसंवादि दृष्टलोकपरावरः ॥ १३ ॥
यदाप्रभृति वैदेही संप्राप्तेह परंतप । तदाप्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ १४ ॥
सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः । मन्त्रसंधुक्षितोऽप्यग्निर्न सम्यगभिवर्धते ॥ १५ ॥
अग्निष्टेष्वग्निशालासु तथा ब्रह्मस्थलीषु च । सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥ १६ ॥
गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः । दीनमश्वाः प्रहेषन्ते नवग्रासाभिनन्दिनः ॥ १७ ॥

रा० टी०—स इति । रक्षोभिः पूज्यमानः स विभीषणः धनदानुजं रावणं ववन्दे ॥ १० ॥

गो० टी०—स पूज्यमान इति । पूज्यमानः श्लाघ्यमानः ॥ १० ॥

११ ] ति० टी०—राजदृष्टिसंपन्नं पुरःप्रदेशवर्तिराजदृष्ट्या बोधितपरिग्रहं चासनं जगाम प्राप तत्रोपविवेशेति यावत् । समुदाचारं विजयी भवेत्यादिविजयप्रयोगादिविनयप्रकाशकमाचारं प्रयुज्य कृत्वा ॥ ११ ॥

रा० टी०—स इति । आचारकोविदः स विभीषणः समुदाचारं राजोद्देश्यकपरंपराप्राप्तविजयप्रकाशकवचनं प्रयुज्य राजदृष्टिसंपन्नं स्थित्यै राज्ञा दृष्टिमात्रेण बोधितमित्यर्थः हेमभूषितमासनं जगाम तत्र तस्थावित्यर्थः ॥ ११ ॥

गो० टी०—स राजेति । दृष्टिसंपन्नं दृष्ट्या निवेदितमित्यर्थः समुदाचारं जयशब्दप्रयोगादिसमुदाचारम् । जगाम आरुरोह ॥ ११ ॥

१२ ] ति० टी०—विजने मन्त्रिव्यतिरिक्तजनरहिते । हेतुनिश्चितं युक्तिभिर्निश्चितार्थम् ॥ १२ ॥

रा० टी०—स इति । उपस्थितः संपादितः क्रमः वन्दनादिरीतिर्येन सः दृष्टलोकपरावरः स विभीषणः हेतुभिर्निश्चितम् । अत्यर्थमत्यन्तं हितं वचनं मन्त्रिसंनिधौ विजने जनान्तररहिते देशे सान्त्वेन सान्त्वनवचनेन भ्रातरं प्रसाद्य उवाच । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—स इति । विजने मन्त्रिव्यतिरिक्तजनरहिते हेतुनिश्चितं हेतुभिर्युक्तिभिर्निश्चितम् ॥ १२ ॥

१३ ] ति० टी०—सान्त्वेन भ्रातरं प्रसाद्य, उपस्थितक्रमोऽनुष्ठितवन्दनादिक्रियाक्रमः, दृष्टं लोकपरावरं भ्रातृप्राधान्याज्ज्यैष्ठ्याश्रैष्ठ्यं येन सः । देशकालार्थसंवादीति देशकालोचिततत्तदर्थानुसारीत्यर्थकं वचनविशेषणम् ॥ १३ ॥

गो० टी०—प्रसाद्येति । प्रसाद्य स्तुतिवचनेन प्रसन्नं कृत्वा । सान्त्वेनोवाचेत्यन्वयः उपस्थितक्रमः ज्ञातवचनक्रमः देशकालार्थसंवादी देशकालप्रयोजनानुसारी दृष्टलोकपरावरः लोके ये परावरे उत्कृष्टापकृष्टे ते दृष्टे ज्ञाते येन तथोक्तः रामस्य धार्मिकत्वं रावणस्याधार्मिकत्वं च जानातीत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—तदेव वचनमाह—यदेति ॥ १४ ॥

रा० टी०—वचनारम्भमाह यदेत्यादिभिः यदाप्रभृति यत्कालादारभ्य वैदेही इह संप्राप्ता तदाप्रभृति अशुभानि निमित्तानि दृश्यन्ते ॥ १४ ॥

गो० टी०—प्रथमं रावणसंवादाय दुर्निमित्तानि दर्शयति—यदेति । यदाप्रभृति यत्कालमारभ्य क्रियाविशेषणमिदम् एवं तदाप्रभृतीत्यपि । अशुभानि निमित्तान्यशुभसूचकनिमित्तानि ॥ १४ ॥

१५ ] ति० टी०—तानि निमित्तान्याह—सस्फुलिङ्ग इति । अग्निर्मथनादिनोत्पत्तिकाले सधूमकलुषोदयो धूमकलुषाय उदयस्तत्सहितः । उत्पत्त्यनन्तरं प्रणयनकाले सस्फुलिङ्गः सधूमार्चिः ॥ १५ ॥

रा० टी०—अशुभस्वरूपमाह—सेत्यादिभिः । धूमेन कलुषो मलिनः उदयः मन्थनकाले उत्पत्तिर्यस्य सस्फुलिङ्गः स्फुलिङ्गसहितः सधूमार्चिः धूमविशिष्टार्चिर्विशिष्टः सोऽग्निः मन्त्रसंधुक्षितोऽपि सम्यक् नाभिवर्धते ॥ १५ ॥

गो० टी०—सस्फुलिंग इति । सस्फुलिङ्गः अग्निकणसहितः सधूमार्चिः धूमाकुलज्वालासहितः । सधूमकलुषोदयः धूमेन कलुषः उदयः आविर्भावो धूमकलुषोदयः तेन सहितः सधूमकलुषोदयः । शान्तः शान्तो ज्वलन्नित्यर्थः मन्त्रसंधुक्षितः मन्त्रवद्भिर्हविर्भिर्योजितः ॥ १५ ॥

१६ ] ति० टी०—अग्निष्टेषु महानसादिषु अग्निशालास्वग्निहोत्रगृहेषु ब्रह्मस्थलीषु वेदाध्ययनस्थानेषु सरीसृपाणि सर्पाः । लिङ्गव्यत्यय आर्षः ॥ १६ ॥

रा० टी०—अग्निष्टेष्विति । अग्निष्टेषु महानसप्रभृतिषु अग्निशालासु अग्निहोत्रभवनेषु ब्रह्मस्थलीषु वेदाध्ययनगृहेषु च सरीसृपाणि सरीसृपाः सर्पाः दृश्यन्ते हव्येषु देवोद्देश्यकपायसादिषु पिपीलिकाः दृश्यन्ते ॥ १६ ॥

गो० टी०—अग्निष्टेष्विति । अग्नयस्तिष्ठन्त्येष्वित्यग्निष्टा महानसाः तेषु अग्निशालासु अग्निहोत्रशालासु ब्रह्मस्थलीषु वेदाध्ययनस्थानेषु सरीसृपाणि सर्पाः लिङ्गव्यत्यय आर्षः । हविष्येषु देवताभ्यो देयेषु आज्यपुरोडाशादिषु ॥ १६ ॥

१७ ] ति० टी०—स्कन्नानि शुष्काणि । 'स्कन्दिर्गतिशो-

१ इमां पुरः तोषेत गो.पाठः। २ चेति गो.पाठः। ३ संधुक्षित इति गो.पाठः। ४ अग्निष्टेष्विति गो.पाठः। ५ वीरेति गो.पाठः। ६ न चेति गो.पाठः।

खरोष्ट्राश्वतरा राजन्भिन्नरोमाः स्रवन्ति च[1] । न स्वभावेऽवतिष्ठन्ते[2] विधानैरपि चिन्तिताः ॥ १८ ॥
वायसाः सङ्घशः क्रूरा व्याहरन्ति समन्ततः । समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः ॥ १९ ॥
गृध्राश्च परिलीयन्ते पुरीमुपरि [3]पीडिताः । उपपन्नाश्च संध्ये द्वे व्याहरन्त्यशिवं शिवाः ॥ २० ॥
क्रव्यादानां मृगाणां च [4]पुरीद्वारेषु सङ्घशः । श्रूयन्ते विपुला घोषाःसविस्फूर्जितनिःस्वनाः॥ २१ ॥
तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् । [5]रोचये वीर वैदेही राघवाय प्रदीयताम् ॥ २२ ॥
इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया । तत्रापि च महाराज न दोषं कर्तुमर्हसि ॥ २३ ॥

पणयोः' । नवग्रासाभिनन्दिनः अनेन कृतभोजना अपि बुभुक्षिता इति सूच्यते ॥ १७ ॥

रा० टी०-गवामिति । गवां पयांसि स्कन्नानि शुष्काणि मदकुञ्जराः विमदाः मदरहिताः आसन्निति शेषः नवग्रासेन नवीनग्रासलाभेन अभिनन्दिनः अभिनन्दनशीला अपि अश्वाः दीनं प्रहेषन्ते स्वजातीयस्वनं कुर्वते ॥ १७ ॥

गो० टी०-गवामिति । स्कन्नानि शुष्काणि "स्कन्दिर्गतिशोषणयोः" इति धातोर्निष्ठा "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति नत्वम् । वीरकुञ्जराः मत्तगजाः । प्रहेषन्ते हेषारवं कुर्वन्ति हेषा अश्वशब्दः ॥ १७ ॥

१८-१९ ] ति० टी०-भिन्नरोमा ऊर्ध्वरोमाणः अदन्तत्वमार्षम् स्रवन्ति च अश्रूणीति शेषः । विधानैश्चिकित्साकर्मभिश्चिन्तिताः पर्यालोच्यमाना अपि स्वभावे प्रकृतौ नावतिष्ठन्ते ॥ १८ ॥ १९ ॥

रा० टी०-खरेति । खरादयः भिन्नरोमाः उत्थापितलोमानः सन्तः स्रवंति अश्रूणि पातयन्ति विधानैः चिकित्सोपायैः चिन्तिताः विचारपूर्वकं चिकित्सिता अपि ते स्वभावे नावतिष्ठन्ति ॥ १८ ॥

गो० टी०-खरेति । अश्वतरा महाखराः भिन्नरोमाः स्वस्थानात् भिन्नरोमाणः गलितरोमाणः ऊर्ध्वरोमाणो वा अकारान्तत्वमार्षम् स्रवन्ति अश्रूणि मुञ्चन्ति विधानैः चिकित्साभिः चिन्तिता अनुसंहिताः चिकित्सिता अपीत्यर्थः स्वभावे प्रकृतौ नावतिष्ठन्ते प्रकृतिस्था न भवन्तीत्यर्थः ॥ १८ ॥

रा० टी०-वायसा इति । समन्ततः चतुर्दिक्षु सङ्घशो वायसाः व्याहरन्ति विमानाग्रेषु सङ्घशः समवेताः संस्थिताः दृश्यन्ते च ॥ १९ ॥

गो० टी०-वायसा इति । संघशो व्याहरन्ति संघशः समवेता इति च संबन्धः ॥ १९ ॥

२० ] ति० टी०-पुरीमुपरि पुर्या उपरि द्वे संध्ये द्वयोः संध्ययोः उपपन्नाः समीपं प्राप्ताः ॥ २० ॥

रा० टी०-गृध्रा इति । पिण्डिताः सङ्घीभूताः गृध्राः पुरीमुपरि पुर्याः ऊर्ध्वदेशे परिलीयन्ते संसृज्य भ्रमन्ति उपपन्नाः समीपं प्राप्ताः शिवाः जम्बुकाः द्वे संध्ये द्वयोः संध्ययोः अशिवममङ्गलं व्याहरन्ति ॥ २० ॥

गो० टी०-गृध्रा इति । पुरीमुपरि उपर्युपरि गृहेष्वित्यर्थः पिण्डिताः मण्डलीभूताः सन्तः परिलीयन्ते श्लिष्यन्ति । सन्ध्ये द्वे, अत्यन्तसंयोगे द्वितीया शिवाः जम्बुकाः उपपन्नाः नगरसमीपं प्राप्ताः ॥ २० ॥

२१ ] ति० टी०-क्रव्यादा मृगा वृकादयः । चस्त्वर्थे । सविस्फूर्जितनिःस्वना विस्फूर्जितसदृशनिःस्वनाः ॥ २१ ॥

रा० टी०-क्रव्यादानामिति । सविस्फूर्जितनिःस्वनाः वज्रनिर्घोषसहिताः क्रव्यादानां मांसाशिनां वृकादीनां मृगाणां तदितरवनजन्तूनां सङ्घशो विपुलाः घोषाः श्रूयन्ते ॥ २१ ॥

गो० टी०-क्रव्यादानामिति । क्रव्यादानां मांसभक्षकाणाम् मृगाणाम् श्वादीनामित्यर्थः सविस्फूर्जथुनिःस्वनाः विस्फूर्जथुः अशनिघोषः तद्रूपस्वनसहिताः ॥ २१ ॥

२२ ] ति० टी०-प्रस्तुते कार्येऽवश्यकर्तव्यदुर्निमित्तशान्तिविधौ प्रायश्चित्तं दुर्निमित्तसूचितपापशोधनम् ॥ २२ ॥

रा० टी०-ननु तत्र किं विधेयमित्यत आह-तदिति । एवं प्रस्तुते प्राप्ते अकार्ये कार्यविध्वंसके दुर्निमित्तदर्शने प्राय-श्चित्तं कार्यविध्वंसजनकीभूतदुर्निमित्तदर्शनजनितपापशोधकम् इदं क्षमं युक्तम् इदमर्थमाह राघवाय 'मैथिली प्रदीयताम् अत एव रोचये अस्मिन्नर्थे रुचिमुत्पादये ॥ २२ ॥

गो० टी०-एवमुपस्थितदुर्निमित्तजातस्य प्रायश्चित्तं सीताप्रदानमेवेत्याह-तदेवमिति । तत् दुर्निमित्तदर्शनात् तत्सूच्ये कार्ये पराजये एवं लङ्कादहनादिरूपेण प्रस्तुते प्रसक्ते सति क्षमम् अशुभनिवारणसमर्थम् इदं प्रायश्चित्तम् । इदं शब्दार्थमाह-वैदेहीति ॥ २२ ॥

२३ ] ति० टी०-रावणस्यातिक्रूरत्वाद्वस्तुतो हितस्यापि तेनानिष्टवद्ग्रहणसंभवात्कोपं क्षमापयति—इदं चेति । मोहः कार्यतत्त्वापरिज्ञानम् । लोभाज्जीवनलोभात् । दोषं मयि दुष्टत्वबुद्धिम् ॥ २३ ॥

रा० टी०-इदमिति । मोहात् त्वदनुमितकुलनाशहेतुकवैचित्यात् लोभात् त्वदनुमितप्राणरक्षणाभिलाषाद्वा यदि मया व्याहृतं तत्र तदापि दोषं कर्तुं नार्हसि मद्वचनं कर्तव्यमेवेत्यर्थः एतेन स्ववचनस्य दोषरहितत्वं सूचितम् ॥ २३ ॥

गो० टी०-एवमनभिमतभाषणेन राजा कुप्यतीति समाधत्ते इदमिति । मोहात् कार्यतत्त्वापरिज्ञानात् लोभात् जीवन-

१ न इति गो. पाठः । २ तिष्ठन्तीति रा. पाठः । ३ पिण्डिता इति रा. पाठः । ४ पुरद्वारेष्विति गो. पाठः । ५ रोचते यदीति गो. पाठः ।

अयं हि दोषः सर्वस्य जनस्यास्योपलक्ष्यते । रक्षसां राक्षसीनां च पुरस्यान्तःपुरस्य च ॥ २४ ॥
¹प्रापणे चास्य मन्त्रस्य निवृत्ताः सर्वमन्त्रिणः । अवश्यं च मया वाच्यं यद्दृष्टमथवा श्रुतम् ॥
³संविधाय यथान्यायं तद्भवान्कर्तुमर्हति ॥ ॥ २५ ॥
इति स्वमन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान् । रावणं रक्षसां ⁴श्रेष्ठं पथ्यमेतद्विभीषणः ॥ २६ ॥
हितं महार्थं मृदु हेतुसंहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ २७ ॥
भयं न पश्यामि कुतश्चिदप्यहं न राघवः प्राप्स्यति जातु मैथिलीम् ।
सुरैः सहेन्द्रैरपि संगरे कथं ममाग्रतः स्थास्यति लक्ष्मणाग्रजः ॥ २८ ॥
इत्येवमुक्त्वा सुरसैन्यनाशनो महाबलः संयति चण्डविक्रमः ।
दशाननो भ्रातरमाप्तवादिनं विसर्जयामास तदा विभीषणम् ॥ २९ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे दशमः सर्गः ॥ १० ॥

---

लोभाद्वापि यदि व्याहृतम् तत्रापि तथापि मयि दोषम् अपराधं कर्तुं नार्हसि ॥ २३ ॥

२४ ] ति० टी०—अयं दोषः सीतापहारदोषः तन्मूलदुर्निमित्तदोषश्चेत्यर्थः । सर्वस्य जनस्येत्यादि तृतीयार्थे षष्ठी सर्वेण जनेन रक्षआदिरूपेणोपलक्ष्यते दृश्यते । यद्वा सर्वस्य राक्षसादिरूपस्यैतद्दुर्निमित्तफलमुपलक्ष्यत इत्यर्थः ॥ २४ ॥

रा० टी०—तत्र हेतुमाह—अयमिति । दोषः दोषजनकः अयं दुर्निमित्तसमूहः रक्षःप्रभृतेः सर्वस्य जनस्य सर्वेण जनेन उपलक्ष्यते दृश्यते एतेनोक्तप्रायश्चित्ताकरणे सर्वेषां विध्वंसो भवितेति ध्वनितम् ॥ २४ ॥

गो० टी०— अयमिति । अयं दोषः पूर्वोक्तदुर्निमित्तसूचितोनर्थः । सर्वस्योपलक्ष्यते संबन्धसामान्ये षष्ठी सर्वेणापि लक्ष्यत इत्यर्थः ॥ २४ ॥

२५ ] ति० टी०—ननु त्वदतिरिक्तः कोऽपीमं मन्त्रं न वदति, त्वमेव कथं ब्रवीषीत्यत आह—प्रापणे इति । अस्य मन्त्रस्य प्रापणे यद्यपि त्वद्भयात्सर्वे मन्त्रिणो निवृत्ताः, तथापि मया भ्रात्रा यद्दृष्टं श्रुतं वा तत्सर्वं हितमवश्यं वाच्यमेव समानदुःखभागित्वात् ॥ २५ ॥

रा० टी०—ननु त्वदुक्तमसंमतम् अस्यारम्भे सर्वेषां निवृत्तत्वात् सज्जनहिंसावत् इदमयुक्तं सर्वासंमतत्वात् विषभक्षणवत् इत्यत आह—प्रापणे इति । अस्य मन्त्रस्य प्रापणे बोधने सर्वे मन्त्रिणो निवृत्ताः त्वद्भयादपगताः एतेन निवृत्तानामपि मदुक्तं संमतमेवेति सूचितं तेनोहितानुमानयोर्बाधस्वरूपासिद्धादिग्रस्तत्वं ध्वनितम् । ननु स्वासंमतं बुद्धैवेमे गता न तु भयादित्यत आह—यत् दृष्टं स्वतो ज्ञातमथवा श्रुतमन्यतो ज्ञातं तत् मया वाच्यं भवत्संनिधौ निवेदनीयम् ॥ २५ ॥

रा०टी०—संविधायेति । यन्मया उक्तं तत् यथान्यायं संविधाय विचार्य भवान् कर्तुमर्हति इत्येतद्वचः स्वमन्त्रिणां मध्ये विद्यमानं भ्रातरं विभीषण ऊचिवान् सार्धश्लोक एकान्वयी॥२६

गो० टी०—प्रहस्तादिषु विद्यमानेषु भवतैव किमुच्यते तत्राह—प्रापणे चेति । तेषां त्वच्चित्तमात्रानुसारित्वादिति भावः प्रापणे त्वां प्रति विज्ञापने च । त्वं पुनः कथं वक्तुं प्रगल्भसे तत्राह—अवश्यमिति । भ्रातृत्वादिति भावः ॥ २५ ॥

गो० टी०—संप्रधार्येत्यर्थम् ॥ यथान्यायं यथायोग्यम् संप्रधार्य मनस्येव निश्चित्य । तत्संप्रधारितं कार्यम् ॥ २६ ॥

२६ ] ति० टी०—स्वमन्त्रिणां स्वभ्रातृमन्त्रिणाम् ॥ २६ ॥

गो० टी०—इति स्मेति । इत्येतदूचिवानित्यन्वयः । ऊचिवान् उक्तवान् । "वचश्च" इति लिटः क्वस्वादेशः ॥ २७ ॥

२७] ति० टी०—व्यतीतकाले, आयतावुत्तरकाले, संप्रति वर्तमानकाले च क्षमं हितम् । उपस्थितज्वरः प्राप्तक्रोधः । प्रसङ्गवान्सीताविषयकामप्रसक्तवान् ॥ २७ ॥

रा० टी०—हितमिति । व्यतीतकाले आयतौ आगामिकाले च संप्रति वर्तमानकाले च हितम् अत एव क्षमं युक्तं हेतुभिः संहितं संयुक्तं महार्थं मृदु अकर्कशं तद्वाक्यं निशम्य श्रुत्वा उपस्थितज्वरः प्राप्तसंतापः प्रसङ्गवान् रामवैरासक्तो रावणः एतत् उत्तरमब्रवीत् ॥ २७ ॥

गो० टी०—हितमिति । महार्थं प्रयोजनव्यापकम् मृदु सान्त्वपूर्वम् हेतुसंहितं युक्तियुक्तम् व्यतीतकालायतिसंप्रतिक्षमं व्यतीतकालः भूतकालः आयतिः भविष्यत्कालः संप्रति वर्तमानकालः तत्र क्षमम् । अकीर्तिनाशकत्वेन सीतापहरणप्रायश्चित्तत्वेन वाप्यतीतकालक्षमम् सुखवर्धकत्वेन वर्तमानकालक्षमम् धर्मावहत्वेनायतिक्षमम् । उपस्थितज्वरः प्राप्तक्रोध इत्यर्थः प्रसङ्गवान् परिगृहीतार्थेभिनिवेशवान् ॥ २८ ॥

२८-२९ ] ति० टी०—कुतश्चिदुर्निमित्तादस्मदुपलक्ष्यमाणेश्वेत्यर्थः ॥ २८ ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे दशमः सर्गः ॥ १० ॥

---

१ चेति गो. पाठः । २ प्रापणे इति गो. पाठः । ३ संप्रधार्येति गो. पाठः । ४ राक्षसश्रेष्ठमिति गो. पाठः ।

# एकादशः सर्गः ।

सीताविरहाद्विभीषणादिकृतस्वावमानाच्च कृशे रावणे मन्त्रयितुं सभां प्रविष्टेऽन्येपि प्रमुखा राक्षसा विभीषणश्च तां प्रविविशुः ।

स बभूव कृशो राजा मैथिलीकाममोहितः । असन्मानाच्च सुहृदां पापः पापेन कर्मणा ॥ १ ॥
अतीव कामसंपन्नो वैदेहीमनुचिन्तयन् । अतीतसमये काले तस्मिन्वै युधि रावणः ॥
अमात्यैश्च सुहृद्भिश्च प्राप्तकालममन्यत ॥ ॥ २ ॥
स हेमजालविततं मणिविद्रुमभूषितम् । उपगम्य विनीताश्वमारुरोह महारथम् ॥ ३ ॥
तमास्थाय रथश्रेष्ठं महामेघसमस्वनम् । प्रययौ रक्षसां श्रेष्ठो दशग्रीवः सभां प्रति ॥ ४ ॥
असिचर्मधरा योधाः सर्वायुधधरास्ततः । राक्षसा राक्षसेन्द्रस्य पुरस्तात्संप्रतस्थिरे ॥ ५ ॥
नानाविकृतवेषाश्च नानाभूषणभूषिताः । पार्श्वतः पृष्ठतश्चैनं परिवार्य ययुस्तदा ॥ ६ ॥

रा० टी०-उत्तरस्वरूपमाह—भयमिति । अहं कुतश्चिदपि भयं न पश्यामि अतो राघवो मैथिलीं जातु कदाचिदपि न प्राप्स्यति । भयाभावे हेतुमाह-सुरादिभिः सहितोऽपि लक्ष्मणाग्रजः ममाग्रतः कथं स्थास्यति । एतेन सुराणामपि स्वस्माद्दुर्बलत्वं सूचितम् ॥ २८ ॥

गो० टी०-भयमिति । भयं भयजनकं पुरुषम् । रामो युद्धेन सीतां प्राप्स्यतीति पूर्वं विभीषणोक्तस्य परिहारमाह-सुरैरिति । कथं तिष्ठति स्थास्यति । स्थातुमेव न शक्तः कुतो योत्स्यते कुतस्तरां सीतां प्राप्स्यतीति भावः ॥ २९ ॥

रा० टी०-इतीति । संयति सुरसैन्यनाशनो दशाननः विभीषणं विसर्जयामास ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे दशमः सर्गः ॥ १० ॥

गो० टी०-राघवं तृणीकृत्य कथमेवमाहेत्याशङ्क्य तन्निदानं दर्शयति-इतीति । नाशनः हिंसकः चण्डविक्रमः उग्रविक्रमः आप्तवादिनं युक्तवादिनम् ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

१ ] ति० टी०-कृशत्वे हेतुः—मैथिलीकाममोहित इति । मैथिलीविषयकामेन मोहितः । हेत्वन्तरम्—सुहृदां विभीषणादीनामसन्मानाज्जुगुप्सनात् । पापत्वे हेतुः—पापेन कर्मणेति तच्च परदारापहाररूपम् ॥ १ ॥

रा० टी०-विभीषणविसर्जनानन्तरकालिकं रावणवृत्तान्तमाह-स इत्यादिभिः । मैथिलीकामेन मैथिलीस्थापनविषयकोत्कटेच्छया मोहितः कर्तव्यविषयकनिश्चयाभाववान् अत एव पापः रामसेवानिवर्तनादाद्युक्तः राजा स रावणः पापेन कर्मणा हेतुभूतेन सुहृदां विभीषणादीनां कर्तृणामसंमानाद्धेतोः कृशो बभूव ॥ १ ॥

गो० टी०-अथ परेद्युर्विभीषणाद्युपदेशेतिचिन्ताव्याकुलस्य रावणस्य निर्णयहेतुमन्त्रकरणाय सभाप्राप्तिं दर्शयन्नि-स बभूवेत्यादि । पापः पापी । "गुणवचनेभ्यो मतुपो लुगिष्टः" इति मतुपो लुक् । असंमानात् अनादरात् । सुहृदां विभीषणादीनाम् कर्तरि षष्ठी विभीषणोक्ते तूष्णीं स्थितत्वेन प्रहस्तादीनामप्यनादरः सिद्ध एव । पापेन कुत्सितेन सीतापहरणरूपेण कर्मणा हेतौ तृतीया । मैथिलीकाममोहित इति हेतुगर्भविशेषणम् । तथा च मैथिलीविषयकाममोहात् सुहृदनादरात् पापहेतुसीताहरणाच्च कृशः चिन्ताकुलो बभूवेत्यर्थः ॥ १ ॥

२ ] ति० टी०-तस्मिन्काले रावणो युधि युद्धेऽतीतसमयेऽपि विभीषणोक्तरीत्यानवसरदुस्थेऽप्यमात्यादिभिर्विभीषणातिरिक्तैः सह युद्धमेव प्राप्तकालं काममोहितत्वादमन्यत॥२॥

रा० टी०-अतीवेति । कामेन सीतासंस्थापनविषयकोत्कटेच्छया संपन्नः अत एव वैदेहीं तत्स्थापनोपायमनुचिन्तयन् रावणः काले तस्मिन् समये युधि रामेण सह युद्धे अतीतसमये समयाभाववत्यपि प्राप्तकालममन्यत युद्धमिति शेषः । सार्धश्लोक एकान्वयी ॥ २ ॥

गो० टी०-अतीतेति । तस्मिन् काले मन्त्रयोग्यकाले । अतीतसमये अतीतावसरे सति युधि च सत्यां युद्धे च प्राप्ते सति अमात्यैश्च सुहृद्भिश्च मन्त्रस्य प्राप्तकालममन्यत । मुनिहृदयं तु कालेऽतीतसमये रावणायुःकालेऽतीते सति युधि अमात्यादिभिः सहात्मानम् प्राप्तकालं प्राप्तमृत्युम् अमन्यतेति । वै प्रसिद्धौ ॥ २ ॥

३-६ ] ति० टी०- अस्यैव निश्चयाय सभाप्रस्थानम्—स हेमेत्यादि ॥ ३ ॥ ६ ॥

रा० टी०-स इति । हेमजालेन विततं व्याप्तं विनीताः शिक्षिताः अश्वाः यस्मिन् तं महारथम् । उपगम्य प्राप्य आरोह ॥ ३ ॥

१ अर्धमेतत् गो. नास्ति । २ मन्त्रेति गो. पाठः । ३ राक्षसश्रेष्ठ इति गो. पाठः । ४ तमेति गो. पाठः । ५ पुरत इति गो. पाठः । ६ तत इति गो. पाठः ।

रथैश्चातिरथाः शीघ्रं मत्तैश्च वरवारणैः । अनूत्पेतुर्दशग्रीवमाक्रीडद्भिश्च वाजिभिः ॥ ७ ॥
गदापरिघहस्ताश्च शक्तितोमरपाणयः । परश्वधधराश्चान्ये तथान्ये शूलपाणयः ॥
ततस्तूर्यसहस्राणां संजज्ञे निःस्वनो महान् ॥ ॥ ८ ॥
तुमुलः शङ्खशब्दश्च सभां गच्छति रावणे । स नेमिघोषेण महान्सहसाभिनिनादयन् ॥ ९ ॥
राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः । विमलं चातपत्रं च प्रगृहीतमशोभत ॥ १० ॥
पाण्डुरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा । हेममञ्जरिगर्भे च शुद्धस्फटिकविग्रहे ॥ ११ ॥
चामरव्यजने तस्य रेजतुः सव्यदक्षिणे । ते कृताञ्जलयः सर्वे रथस्थं पृथिवीस्थिताः ॥ १२ ॥
राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे । राक्षसैः स्तूयमानः सञ्जयाशीर्भिररिंदमः ॥ १३ ॥
आससाद महातेजाः सभां विरचितां तदा । सुवर्णरजतास्तीर्णां विशुद्धस्फटिकान्तराम् ॥ १४ ॥
विराजमानो वपुषा रुक्मपट्टोत्तरच्छदाम् । तां पिशाचशतैः षड्भिरभिगुप्तां सदाप्रभाम् ॥ १५ ॥

---

गो० टी०—स हेमेति । हेमजालविततं स्वर्णमयगवाक्षव्याप्तम् स्वर्णसमूहनिर्मितमिति वा विनीताश्वं शिक्षिताश्वयुक्तम् उपगम्य प्रदक्षिणीकृत्य ॥ ३ ॥

रा० टी०—तमिति । रथश्रेष्ठमास्थाय सभां प्रति ययौ॥४॥

गो० टी०—तमिति । सभां मन्त्रशालाम् ॥ ४ ॥

रा० टी०—असीति । असिचर्मधराः सर्वायुधधराश्च राक्षसाः राक्षसेन्द्रस्य पुरस्तादग्रे संप्रतस्थिरे ॥ ५ ॥

गो० टी०—असीति । चर्म खेटः ॥ ५ ॥

रा० टी०—नानेति । नानाविकृतवेषाः राक्षसाः एनं रावणं परिवार्य ययुः ॥ ६ ॥

गो० टी०—नानाविकृतेति । ततः रावणालयात् । नानाविकृतवेषाः नानाविधतया विशिष्य कृतालंकाराः। राक्षसा इति शेषः ॥ ६ ॥

७ ] ति० टी०—आक्रीडद्भिर्गतिभेदेन कीडां कुर्वद्भिः॥ ७ ॥

रा० टी०—रथैरिति । गदादिहस्ता अतिरथाः रथैः वरवारणैः उत्कृष्टगजैश्च क्रीडद्भिर्वाजिभिश्च दशग्रीवमनूत्पेतुः । सार्धश्लोक एकान्वयी ॥ ७ ॥ ८ ॥

गो० टी०—रथैरिति । आक्रीडद्भिः धारामण्डलगमनादिकं कुर्वद्भिः ॥ ७ ॥

गो० टी०—गदेति । अत्र प्रतिपदमन्य इत्यनुषञ्जनीयम् अनूत्पेतुरिति च ॥ ८ ॥

८–९ ] ति० टी०—ततः प्रस्थानोत्तरम् ॥ ८ ॥ ९ ॥

गो० टी०—ततस्तूर्येति । ततः स्वालयात् ॥ ९ ॥

रा० टी०—तत इति । रावणे सभां गच्छति सति तूर्यसहस्राणां महान् निःस्वनः तुमुलः शङ्खशब्दश्च संजज्ञे ॥ ९ ॥

रा० टी०—स इति । स रावणः नेमिघोषेण राजमार्गमभिनादयन् सन् प्रतिपेदे जगाम ॥ १० ॥

गो० टी०—स नेमीति । नेमिः रथचक्रधारा ॥ १० ॥

१० ] ति० टी०—आतपत्रं छत्रम् ॥ १० ॥

रा० टी०—विमलमिति । प्रगृहीतं राक्षसेन्द्रस्यातपत्रं पूर्णस्ताराधिप इव अशोभत ॥ ११ ॥

गो० टी०—विमलमिति । भासा विमलमित्यर्थः ॥ ११ ॥

११ ] ति० टी०—अलंकाराय हेमनिर्मिता मञ्जर्यो गर्भे ययोस्ते । शुद्धस्फटिकविग्रहे तेनातिशुभ्रे ॥ ११ ॥

रा० टी०—हेमेति । हेम्नो निर्मिताः मञ्जर्यो गर्भे ययोः अतिशुक्लत्वेन शुद्धस्फटिकवत् विग्रहो स्वरूपे ययोः ते चामरव्यजने तस्य रावणस्य सव्यदक्षिणे सव्यदक्षिणपार्श्वयोः रेजतुः ॥ १२ ॥

गो० टी०—हेमेति । हेममञ्जरिगर्भे हेममञ्जरीगर्भे । इकारान्तत्वमार्षम् । शुद्धस्फटिकविग्रहे शुद्धस्फटिकसदृशाकारे । चामरव्यजने चामररूपव्यजने । सव्यदक्षिणे सव्यदक्षिणयोः । “ सर्वो द्वन्द्वो विभाषयैकवद्भवति ” इत्येकवद्भावः ॥ १२ ॥

१२–१३ ] ति० टी०—सव्यदक्षिणे । समाहारद्वन्द्वः । सव्यदक्षिणपार्श्वयोरित्यर्थः ॥ १२ ॥ १३ ॥

रा० टी०—ते इति । राक्षसाः राक्षसश्रेष्ठं ववन्दिरे॥१३॥

गो० टी०—त इति । स्पष्टम् ॥ १३ ॥

रा० टी०—राक्षसैरिति । जयाशीर्भिः जयबोधकाशीर्वचनैः करणैः राक्षसैः स्तूयमानः सन् विरचितां विश्वकर्मणा निर्मितां सभाम् आससाद ॥ १४ ॥

गो० टी०—राक्षसैरिति । सुविहितां सुष्ठु निर्मिताम्॥१४

१४ ] ति० टी०—विरचिताम् । विश्वकर्मणेति शेषः । सुवर्णरजतास्तीर्णाम् तैः कृतकुट्टिमामित्यर्थः विशुद्धाः स्फाटिका अन्तरे मध्ये शोभार्थं यस्याः सा ॥ १४ ॥

१५ ] ति० टी०—विराजमानो वपुषेति प्रवेष्टृरावणविशेषणम् । रुक्मालंकृतपट्टवस्त्रमुत्तरच्छदो यस्यास्ताम् षड्भिः पिशाचशतैः षट्शतपिशाचैरभिगुप्तां रक्षिताम् सदाप्रभाम् रत्नप्रभयेति शेषः ॥ १५ ॥

---

१ अर्धमेतदधिकं गो. पाठे । २ वीति गो. पाठः । ३ पाण्डरमिति गो. पाठः । ४ चास्येति गो. पाठः सुविहितां शुभामिति गो. पाठः ।
६ रजतस्थूणामिति गो. पाठः । ७ शुभामिति गो. पाठः

प्रविवेश महातेजाः सुकृतां विश्वकर्मणा । तस्यां स वैदूर्यमयं प्रियकाजिनसंवृतम् ॥ १६ ॥
महत्सोपाश्रयं भेजे रावणः परमासनम् । ततः शशासेश्वरवद्दूतांल्लघुपराक्रमान् ॥ १७ ॥
समानयत मे क्षिप्रमिहैतान्राक्षसानिति । कृत्यमस्ति महज्जाने कर्तव्यमिति शत्रुभिः ॥ १८ ॥
राक्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः । अनुगेहमवस्थाय विहारशयनेषु च ॥
उद्यानेषु च रक्षांसि चोदयन्तो ह्यभीतवत् ॥ ॥ १९ ॥
ते रथान्तचरा एके दृप्तानेके दृढान्हयान् । नागानेकेऽधिरुरुहुर्जग्मुश्चैके पदातयः ॥ २० ॥
सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः । संपतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम् ॥ २१ ॥
ते वाहनान्यवस्थाय यानानि विविधानि च । सभां पद्भिः प्रविविशुः सिंहा गिरिगुहामिव ॥ २२ ॥

रा० टी०—सुवर्णेति । सुवर्णरजतैः आस्तीर्णां तन्निर्मितभूमिमतीमित्यर्थः विशुद्धाः स्फटिकाः तन्मयप्रतिमादयः अन्तरे मध्ये यस्या रुक्मपट्टः उत्तरच्छदो यस्यां पङ्क्तिः पिशाचशतैरभिरक्षितां विश्वकर्मणा सुकृतां तां सभां वपुषा विराजमानो रावणः प्रविवेश श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—सुवर्णेत्यादिश्लोकद्वयमेकान्वयम् । विशुद्धस्फटिकान्तरां निर्मलस्फटिकनिर्मितमध्यप्रदेशाम् रुक्मपट्टोत्तरच्छदां कनकमयपट्टवस्त्रास्तरणाम् ॥ १५ ॥ १६ ॥

१६ ] ति० टी०—तस्याः सभाया मध्ये स रावणः वैदूर्यमयं वैदूर्यरत्ननिर्मितम् प्रियकाख्यमृगसंबन्धिना परममृदुनाजिनेन संवृतम् ॥ १६ ॥

रा० टी०—तस्या इति । वैदूर्यमयं वैदूर्यमणिनिर्मितं प्रियकाणाम् अतिमृदुचर्मवत्प्रियकाभिधमृगाणामजिनेन संवृतं सोपाश्रयम् उपधानसहितं तस्याः सभायाः परमासनं रावणो भेजे तत्र तस्थौ ॥ १६ ॥

गो० टी०—तस्यामिति । वैदूर्यमयं वैदूर्यप्रचुरम् प्रियकाजिनसंवृतं प्रियकमृगस्याजिनेन संवृतम् प्रियको लोमभिर्युक्तो मृदुचमसृणैर्घनैरिति वैजयन्ती । सोपाश्रयं सावष्टम्भम् सोपधानमिति यावत् ॥ १७ ॥

१७ ] ति० टी०—सोपाश्रयं सोपधानम् ईश्वरवदीश्वरार्हम् ॥ १७ ॥

१८ ] ति० टी०—शत्रुभिर्महत्कृतं कर्तव्यमस्तीति जाने, अतो राक्षसान्समानयतेति शशास ॥ १८ ॥

रा० टी०—तत इति । शत्रुभिः सह महत् कृत्यं कार्यं कर्तव्यमस्ति इत्यहं जाने अतः एतान् प्रसिद्धान् राक्षसान् क्षिप्रमिहानयत इति लघुपराक्रमान् दूतान् ईश्वरवत् शशास सार्धश्लोक एकान्वयी ॥ ७१ ॥ १८ ॥

गो० टी०—तत इति । ईश्वरवत् राजार्हम् इह सभायाम् एतान् एतन्नगरस्थान् इति शशासेत्यन्वयः तमेव प्रकारमाह—कृत्यमित्यर्धेन । महद्यथा तथा समर्थ्यं यत्नेन निर्वाह्यं जातं प्राप्तं महत्कृत्यमस्तीति शशास । महद्भ्यो रामादिभ्यो जातमिति वा। महदित्यनेन तदानीं चारमुखेन रामादेः समुद्रतीरगमनं रावणो ज्ञातवानिति गम्यते ॥ १८ ॥ १९ ॥

१९ ] ति० टी०—राक्षसा दूतरूपाः । अनुगेहमवस्थाय प्रविश्य विहारादिषु व्यासक्तान्यपि रक्षांसि रावणाज्ञयाभीतवत्तदर्थं चोदयन्तः सन्तो लङ्कायां परिचक्रमुः ॥ १९ ॥

रा० टी०—राक्षसा इति । तद्वचः श्रुत्वा अनुगेहं निखिलगृहेषु उद्यानेषु च अवस्थाय विहारसैन्येषु आसक्तानि रक्षांसि अभीतवत् यथा भवति तथा चोदयन्तः सभागमनाय प्रेरयन्तो राक्षसाःलङ्कायां परिचक्रमुः सार्धश्लोक एकान्वयी१९

गो० टी०—राक्षसा इत्यादि सार्धश्लोकः । विहरमाणानीति शेषः । विहारो विहारस्थलम् विहारादिषु आस्थाय विहरमाणानि रक्षांसि अभीतवत् अभीताः चोदयन्तः चोदनार्थं लङ्कायामनुगेहं परिचक्रमुरित्यन्वयः ॥ २० ॥

२० ] ति० टी०—ते आहूता राक्षसा रथान्तचरा रथश्रेष्ठसंचारिणः । जग्मुरिति शेषः । हयानित्यत्राधिरुरुहुरित्यपकर्षः ॥ २० ॥

रा० टी०—ते इति । ते आहूताः एके राक्षसाः रथान्तचराः रथश्रेष्ठसंचारिणः सन्तः एके पदातय एव जग्मुः एके हयान् एके नागान् गजान् आरुरुहुः ॥ २० ॥

गो० टी०—ते रथान् रुचिरानेके दृप्तानेके पृथग्हयान् । नागानन्येऽधिरुरुहुर्जग्मुश्चैके पदातयः ॥ २१ ॥

२१-२२ ] ति० टी०—परमाकीर्णा ॥ २१ ॥ २२ ॥

रा० टी०—सेति । रथादिभिः परमाकीर्णा सा लङ्का गरुत्मद्भिराकीर्णमम्बरमिव रुरुचे शुशुभे ॥ २१ ॥

गो० टी०—सेति । गरुत्मद्भिः पक्षिभिः ॥ २२ ॥

रा० टी०—ते इति । ते राक्षसाः वाहनानि गजादीन् यानानि रथादीन् च अवस्थाप्य बहिरिति शेषः सिंहाः गिरिगुहामिव पद्भिः सभां प्रविविशुः ॥ २२ ॥

गो० टी०—त इति । वाहनानि शिबिकादीनि । यानानि अश्वादीनि अवस्थाप्य बहिर्निक्षिप्य ॥ २३ ॥

१ तस्यां तु वैदूर्यमिति गो. पाठः । २ जातं समर्थ्यमिह नो महदिति गो. पाठः । ३ रथान्रुचिरानिति गो. पाठः । ४ पृथगिति गो. पाठः । ५ अन्ये इति गो. पाठः । ६ स्थाप्येति गो. रा. पाठः ।

राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः । पीठेष्वन्ये बृसीष्वन्ये भूमौ केचिदुपाविशन् ॥ २३ ॥
ते समेत्य सभायां वै राक्षसा राजशासनात् । यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ॥ २४ ॥
मन्त्रिणश्च यथामुख्या निश्चितार्थेषु[1] पण्डिताः । अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः ॥ २५ ॥
समीयुस्तत्र[2] शतशः शूराश्च बहवस्तथा । सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै ॥ २६ ॥
[ रम्यायां राक्षसेन्द्रस्य समेयुस्तत्र संघशः । ][3]

ततो महात्मा विपुलं सुयुग्यं रथं वरं हेमविचित्रिताङ्गम् ।
शुभं समास्थाय ययौ यशस्वी विभीषणः संसदमग्रजस्य ॥ ॥ २७ ॥
स पूर्वजायावरजः शशंस नामाथ पश्चाच्चरणौ ववन्दे ।
शुकः प्रहस्तश्च तथैव[4] तेभ्यो ददौ यथार्हं पृथगासनानि ॥ ॥ २८ ॥
सुवर्णनानामणिभूषणानां सुवाससां संसदि राक्षसानाम् ।
तेषां परार्ध्यागुरुचन्दनानां स्रजां च गन्धाः प्रववुः समन्तात् ॥ ॥ २९ ॥
न चुक्रुशुर्नानृतमाह कश्चित्सभासदो नापि[5] जजल्पुरुच्चैः ।
संसिद्धार्थाः सर्व एवोग्रवीर्या भर्तुः सर्वे ददृशुश्चाननं ते ॥ ॥ ३० ॥

२३-२४ ] ति० टी०—बृसी वृत्तासनम् ॥ २३ ॥ २४ ॥

रा० टी०—राज्ञ इति । राज्ञः पादौ गृहीत्वा विश्रमाना अत एव राज्ञाप्रतिपूजिताः ते राक्षसाः पीठादिषु उपाविशन् बृषी कुशमयमासनम् ॥ २३ ॥

गो० टी०—राज्ञ इति । अन्ये पुरोहितादयः पीठेषु सुवर्णादिकृतासनेषु अन्ये श्रोत्रियाः बृसीषु दर्भमयासनेषु केचित्पुत्रादयः भूमौ सामान्यास्तरणमात्रयुक्तायां भूमौ ॥२४॥

रा० टी०—ते इति । सभायां समेत्य यथार्हं यथायोग्यं रावणमुपतस्थुः तुष्टुवुः ॥ २४ ॥

गो० टी०—त इति । क्रियाभेदात्तच्छब्दद्वयम् । उपतस्थुः समीपे तस्थुः । यथार्हं यथाक्रमम् ॥ २५ ॥

२५ ] ति० टी०—यथामुख्या यथायोगं तत्तन्मन्त्रविषये मुख्याः निश्चितार्थेषु भावे निष्ठा आहिताग्न्यादिः अर्थनिश्चयेष्वित्यर्थः । अमात्या उपमन्त्रिणः सर्वज्ञाः सर्वशास्त्रज्ञाः बुद्धिर्दर्शनं चक्षुर्येषां ते ॥ २५ ॥

रा० टी०—मन्त्रिण इति । निश्चितार्थेषु अर्थनिश्चयेषु पण्डिताः बुद्धिरेव दर्शनं प्रधानचक्षुर्येषां ते मन्त्रिणः अमात्याश्च शूराश्च सर्वार्थस्य स्वामिनिखिलकृत्यस्य सुखाय सुखपूर्वकसाधनाय तत्र सभायां यथावत्समीयुः । श्लोकद्वयमेकान्वयि २५॥२६

गो० टी०—मन्त्रिणश्चेत्यादिसपादश्लोकः । यथा यथाक्रमम् यथामुख्या इत्येकं पदं वा मुख्याननतिक्रम्य स्थिताः अनव्ययत्वमार्षम् निश्चयार्थेषु अर्थनिश्चयेषु । अमात्याः कर्मणि सहायाः मन्त्रिणः बुद्धिसहायाः यद्वा अमा सह तिष्ठन्तीत्यमात्याः । "अव्ययात्त्यप्" । आप्ता इत्यर्थः । बुद्धिदर्शना: बुद्धिचक्षुषः ॥ २६ ॥

२६ ] ति० टी०—सर्वार्थस्य । निश्चयायेति शेषः । सुखाय क्षेमाय क्षेमं विचारयितुम् ॥ २६ ॥

गो० टी०—शूरा इत्युत्तरशेषः अन्यथा क्रियापदपौनरुक्त्यम् । सभायामिति । सुखाय क्षेमाय क्षेमं विचारयितुम् "क्रियार्थोपपदस्य०" इत्यादिना चतुर्थी ॥ २७ ॥

२७ ] ति० टी०—सुयुग्यं शोभना युग्या अश्वा यस्मिंस्तम् । संसदं सभाम् ॥ २७ ॥

रा० टी०—तत इति । शोभनाः युग्याः अश्वा यस्मिन् तं रथं समास्थाय संसदं सभां विभीषणो ययौ ॥ २७ ॥

गो० टी०—तत इति । युग्या अश्वाः । युगं वहन्तीति "तद्वहति रथयुगप्रासङ्गम्" इति यत् ॥ २८ ॥

२८ ] ति० टी०—नामग्रहणपूर्वकं नमस्कारः कार्य इति सदाचारः । व्यग्रचित्ततया राज्ञः स्वागमनज्ञापनाय वा । तेभ्यः सभामागतेभ्यः सभ्येभ्यः पृथग्ददौ तत्तदासनस्थानं बोधितवान् ॥ २८ ॥

रा० टी०—स इति । अवरजः सविभीषणः पूर्वजाय रावणाय नाम स्वाभिधां शशंस पश्चात् चरणौ ववन्दे शुकः प्रहस्तश्च तथा तेन प्रकारेण नाम शशंस ववन्दे च तेभ्यो यथार्हमासनानि पृथक् ददौ रावण इति शेषः ॥ २८ ॥

गो० टी०—स इति । नाम शशंस । अभिवादनमकरोदित्यर्थः । शुकः प्रहस्तश्चेति । ववन्दाते इत्यर्थः ॥ २९ ॥

२९ ] ति० टी०—तेषां राक्षसानां यानि परार्ध्यागुरुचन्दनानि स्रजश्च तेषां गन्धा वायुसंबन्धात्प्रववुः ॥ २९ ॥

रा० टी०—सुवर्णेति । सुवर्णनानामणीनां भूषणानि येषां तेषां राक्षसानां संबन्धिनां परार्ध्यागरुचन्दनानां स्रजां च गन्धाः प्रववुः ॥ २९ ॥

गो० टी०—सुवर्णेति । स्रजश्च गन्धाः स्रजां गन्धाः ॥३०॥

३० ] ति० टी०—संसिद्धार्थाः संपूर्णमनोरथाः ॥ ३० ॥

१ निश्चयार्थेष्विति गो. पाठः । २ समेयुरिति गो. पाठः । ३ अर्धमेतदधिकं गो. पाठे । ४ चेति गो. पाठः । ५ नैवेति गो. पाठः ।

स रावणः शस्त्रभृतां मनस्विनां महाबलानां समितौ मनस्वी ।
तस्यां सभायां प्रभया चकाशे मध्ये वसूनामिव वज्रहस्तः ॥ ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः ।

सभायामुपविश्य रावणो नगररक्षणादि सम्यक्कारयितुमचिरादेव सुप्तोत्थितं कुम्भकर्णं सर्ववृत्तं निवेदयितुं च चमूपतिं प्रहस्तमादिशति ।

स तां परिषदं कृत्स्नां समीक्ष्य समितिंजयः । प्रबोधयामास तदा प्रहस्तं वाहिनीपतिम् ॥ १ ॥
सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः । योधा नगररक्षायां तथा व्यादेष्टुमर्हसि ॥ २ ॥
स प्रहस्तः प्रणीतात्मा चिकीर्षन्राजशासनम् । विनिक्षिप्य बलं सर्वं बहिरन्तश्च मन्दिरे ॥ ३ ॥
ततो विनिक्षिप्य बलं सर्वं नगरगुप्तये । प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च ॥ ४ ॥
विहितं बहिरन्तश्च बलं बलवतस्तव । कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्ति ते ॥ ५ ॥

रा० टी०—नेति । कश्चिज्जनोऽनृतं नाह । संसिद्धः अर्थो येषां ते सर्व सभासदः क्रोशनादि न चक्रुः ते सर्वे भर्तुराननं ददृशुश्च ॥ ३० ॥

गो० टी०—न चुक्रुशुरिति । न चुकुशुः न घोषं चक्रुः न जजल्पुः नाक्रमोक्तीश्चक्रुः सभासदः सभागताः संसिद्धन्यर्थं वृत्तभेदश्चिन्त्यः ॥ ३१ ॥

३१ ] ति० टी०—समितौ समागमं । 'समितिः सागरे साम्ये सभायामपि संगमे' ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकादशः सर्गः ॥ ११ ॥

रा० टी०—स इति । शस्त्रभृतां मनस्विनां सभायां समितौ सभासदां समागमे सति वसूनां मध्ये वज्रहस्त इन्द्र इव रावणश्चकाशे ' समितिः सागरे साम्ये सभायामपि सङ्गमे ' इति कोशः ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकादशः सर्गः ॥ ११ ॥

गो० टी०—स इति । समितौ संङ्गे । संङ्गे सभायां समितिरित्यमरः । सभायाम् आस्थानमण्डपे ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

---

१ ] ति० टी०—स इति ॥ १ ॥

रा० टी०—सभास्थितरावणवृत्तान्तमाह—स इत्यादिभिः । समितिंजयः सरावणः कृत्स्नां परिषदं समीक्ष्य प्रहस्तं प्रबोधयामास ॥ १ ॥

गो० टी०—अथ सर्वमेलनानन्तरं नगररक्षाविधानपूर्वकं स्वाभिमतानुसारेण रावणो मन्त्रमर्थयते—स तामित्यादि । समितौ युद्धं जयतीति समितिंजयः । "संज्ञायां भृतृवृजि०" इत्यादिना खचि मुमागमः । तां पूर्वोक्ताम् । सेनेति । कृतविद्याः अभ्यस्तधनुर्विद्याः । चतुर्विधाः रथिकहस्तिपकसादिपदातिरूपेण चतुर्विधाः । अधिकरक्षायां पूर्वापेक्षया सावधानरक्षायाम् यथा स्युः यथा जागरूकाः स्युः तथा व्यादेष्टुमर्हसि । अत्र इतिकरणं बोध्यम् ॥ १ ॥ २ ॥

२ ] ति० टी०—कृतविद्याः शिक्षितास्त्रशस्त्रविद्याः । चतुर्विधा रथिहस्तिसादिपदातिरूपेण चतुर्विधा ये योधा वसन्ति ते यथा नगररक्षायां सावधानाः स्युस्तथा तान्व्यादेष्टुमर्हसि । अनेन समुद्रतीरे रामागमनं चारमुखेन ज्ञातवानिति गम्यते ॥ २ ॥

रा० टी०—बोधनप्रकारमाह—सेनेति कृतविद्याः शिक्षिताशस्त्रविद्याविशिष्टाः चतुर्विधाः रथहस्तिसादिपदातिरूपेण चतुष्प्रकाराः ये योधाः ते नगररक्षायां यथा स्युः सावधाना इति शेषः तथा व्यादेष्टुमाज्ञापयितुमर्हसि ॥ २ ॥

३ ] ति० टी०—प्रणीतात्मा सावधानचित्तः । मन्दिरे पुरे ३

रा० टी०—स इति । प्रणीतात्मा वशीकृतचित्तः प्रहस्तः राजशासनं चिकीर्षन् कर्तुमिच्छन् सन् मन्दिरे मन्दिरमयपुरे बलं विनिक्षिप्य नियोज्य रावणसमीपं जगामेति शेषः ॥ ३ ॥

गो० टी०—स इति । सः सर्वेषु विद्यमानेष्वपि रावणविस्रम्भपात्रभूतः प्रणीतात्मा निश्चितबुद्धिः मन्दिरे रावणगृहे विनिक्षिपत् विन्यक्षिपत् व्यधात् ॥ ३ ॥

४ ] ति० टी०—तदेवाह—नगरगुप्तय इति ॥ ४ ॥

रा० टी०—तत इति । नगरगुप्तये सर्वमाज्ञापितमात्रं बलं विनिक्षिप्य राज्ञः प्रमुखे संमुखे निषसाद जगाद च ॥४॥

गो० टी०—तत इति । प्रमुखे अग्रे ॥ ४ ॥

५ ] ति० टी०—अविमना अव्याकुलचित्तः ॥ ५ ॥

रा० टी०—तदुक्तिस्वरूपमाह—विहितमिति । तव बलं विहितं संस्थापितम् अतो यत्ते अभिप्रेतमस्ति तत् अविमनाः सन् कुरुष्व ॥ ५ ॥

---

१ प्रबोधयामासेति गो. पाठः । २ क्षिपविति गो. पाठः । ३ पृथङ्नगरेति गो. पाठः । ४ निहितमिति गो. पाठः । ५ अस्त्विति गो. पाठः ।

प्रहस्तस्य वचः श्रुत्वा राजा राज्यहितैषिणः । सुखेप्सुः सुहृदां मध्ये व्याजहार स रावणः ॥ ६ ॥
प्रियाप्रिये सुखे दुःखे लाभालाभे हिताहिते । धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥ ७ ॥
सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा । मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥ ८ ॥
ससोमग्रहनक्षत्रैर्मरुद्भिरिव वासवः । भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम् ॥ ९ ॥
अहं तु खलु सर्वान्वः समर्थयितुमुद्यतः । कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम् ॥ १० ॥
अयं हि सुप्तः षण्मासान्कुम्भकर्णो महाबलः । सर्वशस्त्रभृतां मुख्यः स इदानीं समुत्थितः ॥ ११ ॥
इयं च दण्डकारण्याद्रामस्य महिषी प्रिया । रक्षोभिश्चरितोद्देशादानीता जनकात्मजा ॥ १२ ॥
सा मे न शय्यामारोढुमिच्छत्यलसगामिनी । त्रिषु लोकेषु चान्या मे न सीतासदृशी तथा ॥ १३ ॥

गो० टी०–निहितमिति । अविमनाः स्वस्थहृदयः यदभिप्रेतं तत्कुरुष्व तत् अभीष्टम् ते अस्तु सिध्यतु ॥ ५ ॥

६ ] ति० टी०–राज्यहितैषिणः प्रहस्तस्येत्यन्वयः ॥ ६ ॥

रा० टी०–प्रहस्तस्येति । राज्यहितैषिणः प्रहस्तस्य वचः श्रुत्वा सुखेप्सुः रावणः सुहृदां मध्ये व्याजहार ॥ ६ ॥

गो० टी०–प्रहस्तस्येति । सुखेप्सुः कामपुरुषार्थेच्छुः न विजयेच्छुः ॥ ६ ॥

७ ] ति० टी०–प्रियादिविषये धर्मादिविषयकृच्छ्रेषु संकटेषु च यूयं वेदितुमर्हथ । कर्तव्यकृत्यमिति शेषः ॥ ७ ॥

रा० टी०–तदाकारमाह–प्रियेति । धर्मकामार्थानां कृच्छ्रेषु बाधं प्राप्तेषु प्रियादिद्वन्द्वचतुष्टयं वेदितुं बोधयितुं यूयमर्हथ ॥७॥

गो० टी०–मन्त्रणीयं वक्तुमनास्तेषामाभिमुख्यं संपादयितुं प्रथमं तान् प्रशंसति–प्रियाप्रिये इति । धर्मकामार्थकृच्छ्रेषु धर्मकामार्थसङ्कटेषु विषये । धर्मादिष्विदानीं को वा सेव्य इति संदेहे तदनुष्ठानफलभूते प्रियाप्रिये सुखदुःखसाधने वस्तुनी सुखं दुःखम् लाभालाभौ लाभ इष्टप्राप्तिः अलाभः तन्नाशः तौ च हिताहिते । हितम् उत्तरकालफलवत् अहितं तदितरत् ते च । वेदितुमर्हथ । प्रियाप्रियादिफलस्वरूपनिर्धारणाय धर्मादिसंदेहं निराकर्तुं समर्था इत्यर्थः ॥ ७ ॥

८-९ ] ति० टी०–मन्त्रकर्मनियुक्तानि मन्त्रकरणपूर्वं नियुक्तानि प्रेरितानि युष्माभिः समारब्धानि मे सर्वकृत्यानि सर्वदा सफलान्येव । जातु कदाचिदपि विफलानि न ॥ ८ ॥ ९ ॥

रा० टी०–बोधनार्हत्वे हेतुमाह–सर्वेति । मन्त्रकर्मनियुक्तानि मन्त्रक्रियया नियोजितानि युष्माभिः समारब्धानि यानि मे सर्वकृत्यानि तानि जातु कदाचिदपि न विफलानि अभवन्निति शेषः ॥ ८ ॥

गो० टी०–कथमर्हाम इत्यपेक्षायां तत्कार्यमुखेन दर्शयति–सर्वेति । स्पष्टम् ॥ ८ ॥

रा० टी०–सेति । सोमादिसहितैर्मरुद्भिर्देवैर्वृतो वासव इन्द्र इव भवद्भिर्वृतोऽहंश्रियमत्यर्थमवाप्नुयाम् ॥ ९ ॥

गो० टी०–इदानीमपि तथैवास्त्वित्याह–स सोमेति । ग्रहाः सोमभिन्नाः सूर्यादयः । मरुद्भिः सोमादिभिन्नैर्देवैः ॥ ९ ॥

१०-११ ] ति० टी०–समर्थयितुं सर्वाभिमतं मां नियोजयितुं तत्र मां नियोजयन्त्विति बोधयितुमुद्यतः । पूर्वोक्तमर्थं पुनरुक्तवानित्यर्थः । किं च कुम्भकर्णस्य स्वप्नात्स्वापाद्धेतोरिममर्थं नाचोदयं नावेदयम् । इदानीमुत्थितस्य तस्यापि बोधनार्थं पुनरुक्तिरित्यर्थः ॥ १० ॥ ११ ॥

रा० टी०–अहमिति । इमं स्वाभिप्रेतमर्थं वः सर्वान् समर्थयितुं साभिप्रायं बोधयितुमुद्यतोऽप्यहं कुम्भकर्णस्य सुप्तत्वाद्धेतोः नाचोदयमकथयम् ॥ १० ॥

गो० टी०–पूर्वोक्तस्यैवार्थस्य पुनरपि वक्ष्यमाणस्यात्र पुनः कथने हेतुं दर्शयति–अहमिति । तुरवधारणे । सर्वान् वः समर्थयितुं ज्ञापयितुम् उद्यत एव पूर्वमेवोद्यतः । किं तु कुम्भकर्णस्य स्वप्नाद्धेतोः इममर्थम् नाचोदयं तस्य नावेदयम् अतः कथ्यत इत्यर्थः ॥ १० ॥

रा० टी०–अयमिति । योयं षण्मासान् सुप्तः स इदानीं समुत्थितः ॥ ११ ॥

गो० टी०–कुम्भकर्णस्य स्वप्नादित्युक्तमेव स्पष्टयति–अयमिति । षण्मासानित्यत्यन्तसंयोगे द्वितीया । इदानीं समुत्थितः अतः पूर्वं नावेदयमित्यर्थः ॥ ११ ॥

१२ ] ति० टी०–सीतासमर्पणं विना राघवजयोपायो विचार्यतामिति बोधयितुं तस्या दुस्त्यजत्वमाह–इयं चेति । रक्षोभिश्चरितः सेवितो य उद्देशो देशो जनस्थानलक्षणस्तस्मात् ॥ १२ ॥

रा० टी०–अभिप्रेतं बोधयितुमाह–इयमित्यादिभिः । रक्षोभिः चरितः उद्देशो देशः यस्य तस्मात् दण्डकारण्यात् जनकात्मजा मया आनीता ॥ १२ ॥

गो० टी०–उत्तरत्र सीताप्रत्यर्पणं विना रामजयो विचार्यतामिति वक्तुकामस्तस्या दुस्त्यजत्वं दर्शयितुं तामेव स्तौति–इयमित्यादिना । रक्षोभिश्चरितोद्देशात् जनस्थानादित्यर्थः । सा मयानीतेत्युक्तिरजानन्तं कुम्भकर्णं प्रति ॥ १२ ॥

१३ ] ति० टी०–सीतासदृश्यन्या मे न तथा । न मनोहरेत्यर्थः ॥ १३ ॥

रा० टी०–सेति । सा मयानीता सीता मे मया प्रेर्विता

१ हिते रत इति गो.पाठः। २ सुखं दुःखं लाभालाभाविति गो.पाठः। ३ निष्फलानीति गो.पाठः। ४ चरितादेशामिति गो.पाठः। ५ मनोति गो.पा।

तनुमध्या पृथुश्रोणी शरदिन्दुनिभानना[1] । हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता ॥ १४ ॥
सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ । दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः ॥ १५ ॥
हुताग्निरर्चिःसंकाशामेनां सौरीमिव प्रभाम् । उन्नसं विमलं वल्गु वदनं चारुलोचनम् ॥ १६ ॥
पश्यंस्तदवशस्तस्याः[2] कामस्य वशमेयिवान् । क्रोधहर्षसमानेन दुर्वर्णकरणेन च ॥ १७ ॥
शोकसंतापनित्येन कामेन कलुषीकृतः । सा तु संवत्सरं कालं मामयाचत भामिनी ॥ १८ ॥
प्रतीक्षमाणा भर्तारं राममायतलोचना । तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम् ॥ १९ ॥

---

शय्यामारोढुं नेच्छति भूमावेव शेते इत्यर्थः । ननु तथाशयने तव का हानिरित्यत आह—मे मया गतेषु त्रिषु लोकेषु सीतासदृशी अन्या यथा स्यात्तथा न एतेन सीताशरीरस्य कृत्यजन्यत्वं सूचितं तेन तस्या भूमिशयनमनुचितमिति ध्वनितम् ॥ १३ ॥

गो० टी०—सेति । अलसगामिनी मन्दगामिनी । त्यज तामनिच्छन्तीं परिगृहाणेतरामित्यत्राह—त्रिष्विति ॥ १३ ॥

१४–१५ ] ति० टी०—हेम्ना निर्मितं यद्बिम्बं प्रतिमा तन्निभा । मायेवेति । प्रतिक्षणमपूर्वाश्चर्यावहो वस्तुविशेषो माया ॥ १४ ॥ १५ ॥

रा० टी०—ननु अनुचितं सैव करोतीति तत्र तवापराधाभावात् किमर्थं तव शोक इत्यत आह—तन्विति । तनुमध्यत्वादिविशिष्टा निर्मिता मयमायेव या सीता तस्याः ताम्राणि लोहितानि नखानि ययोस्तौ सुलोहिततलौ चरणौ भूमिलुण्ठितपादौ दृष्ट्वा मे शरीरजः शरीरजनकः मनःपदार्थः दीप्यते संतप्यते । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—असदृशत्वमुपपादयति—तनुमध्येत्यादिना । हेमबिम्बनिभा स्वर्णप्रतिमातुल्या सौम्या रम्या मायेव प्रतिक्षणमपूर्ववदाश्चर्यावहवस्तुवत् स्थिता ॥ १४ ॥

गो० टी०—क्रमेणारोक्ष्यतीत्याशङ्क्य मन्मथो विलम्बं न सहत इत्याह—सुलोहितेति । सुप्रतिष्ठितौ समतलौ दृष्ट्वा । स्थितस्येति शेषः । शरीरजः कामः ॥ १५ ॥

१६ ] ति० टी०—हुताग्निरर्चिःसंकाशामित्यर्धेऽपि दृष्ट्वा दीप्यते मे शरीरज इत्यनुषज्यते । उन्नता नासिका यस्मिंस्तत् ॥ १६ ॥

रा० टी०—ननु तर्हि किमर्थं संरोध्यते इत्यत आह—हुतेति । सौरीं सूर्यसंबन्धिनीं प्रभामिव एनां सीतां लब्ध्वेति शेषः तस्याः सीतायाः वदनं पश्यन् अवशः स्वतन्त्रोऽपि यो रामः कामस्य तत्प्राप्तिविषयकोत्कटेच्छायाः वशमेयिवान् सः रामः क्रोधं कोपं हर्षयति वर्धयति तेन सीतानिरोधेन समानं जीवनं यस्य तेन दुर्वर्णस्य रामशरीरवैवर्ण्यस्य करणं यस्मिन् तेन शोकसंतापयोर्नित्यं नियमेन स्थितिर्येन तेन कामेन कलुषीकृतः व्याप्तः एतेन रामदुःखप्राप्तय एव सीतानिरोध इति ध्वनितम् । सार्धश्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०—सोपि निगृह्यतामित्याशङ्क्याह—हुतेत्यादि । अर्धमेकं वाक्यम् । अर्चिश्शब्दस्य इकारान्तत्वमार्षम् । सौरीमिव प्रभामित्यस्य दृष्ट्वेत्यादिशेषपूरणेन सम्बन्धः ॥ १६ ॥

गो० टी०—उन्नसमिति । उन्नसम् उन्नतनासिकम् "उपसर्गाच्च" इति नसादेशः । अवशः विवशः तदधीनः कथं निगृह्णीयामिति भावः । वल्गु सुन्दरम् ॥ १७ ॥

१७–१९ ] ति० टी०—अवशोऽस्वाधीन एव तस्या वदनं पश्यन्नेयिवान्प्राप्तवान् । यत्किंचिद्विषयनिमित्तकक्रोधहर्षकालयोरपि समानेन तावप्यभिभूयान्तः प्रवृत्तेन दुर्वर्णकरणेन कान्तिनाशकेन तदप्राप्तिजयोः शोकसंतापयोर्नित्येन नित्यप्रवर्तकेन । ननु स्वनगरे स्थितायां तस्यां किमित्येवं दुःखभोगोऽत आह—सा त्विति । सा तु संवत्सरं कालं तत्समाप्तिपर्यन्तं रामं प्रतीक्षमाणा ममास्पर्शमयाचत मयापि तथास्त्विति प्रतिज्ञातम् । बलात्कारे शापान्मरणभिया स्वेनैव कृतं समयं तद्याचितत्वेन ब्रूत इत्यत्र वस्तुतत्त्वम् । नहि सीतैवं याचितुमर्हतीति, अतएव पूर्वम् 'सा मे न शय्यामारोढुमिच्छत्यलसगामिनी' इति सामान्येनैवोक्तम् ॥ १७ ॥ १९ ॥

गो० टी०—कामवश्यत्वमेव विवृणोति—क्रोधेति । क्रोधहर्षयोः समानेन क्रोधे हर्षे चैकरूपेण दुर्वर्णकरणेन वैवर्ण्यकारिणा शोकसंतापनित्येन शोके मनोव्यथायां संतापे शरीरपीडायां च नित्येन अनपायेन कामेन । कलुषीकृतः व्याकुलचित्तोस्मि ॥ १८ ॥

रा० टी०—ननु भर्तारं विना सा कथं जीवतीत्यत आह—सेति । भर्तारं प्रतीक्षमाणा सा सीता संवत्सरं वर्षपर्यन्तं कालं स्वजीवनसमयं मामयाचत अवदत् ॥ १८ ॥

गो० टी०—यद्येवं सा प्रसह्यापि शय्यामारोप्यतां तत्राह—सा त्विति । संवत्सरं कालं संवत्सररूपं कालम् । संवत्सराभ्यन्तरे रामो यदि नागतः तदा तथा करिष्यामीत्ययाचतेत्यर्थः । इदं चारोप्योक्तम् वस्तुतो रावणेनैव तथा प्रतिज्ञानादिति भावः ॥ १९ ॥

रा० टी०—तदिति । चारुनेत्रायाः सीतायाः प्रतिज्ञातं तद्वचः मया श्रुतमिति शेषः । अर्धं पृथक् । ननु रामस्य बलवत्त्वज्ञाने रामाय सीता प्रदीयतामित्यत आह—श्रान्त इति । कामात् रामपराभवविषयकाभिलाषात् अहं श्रान्तः संतप्तो

---

१ शारदेति गो. पाठः । २ तदा वश इति गो. पाठः ।

श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि । कथं सागरमक्षोभ्यं तरिष्यन्ति वनौकसः ॥ २० ॥
बहुसत्त्वझषाकीर्णं तौ वा दशरथात्मजौ । अथवा कपिनैकेन कृतं नः कदनं महत् ॥ २१ ॥
दुर्ज्ञेयाः कार्यगतयो ब्रूत यस्य यथामति । मानुषान्नो भयं नास्ति तथापि तु विमृश्यताम् ॥ २२ ॥
तदा देवासुरे युद्धे युष्माभिः सहितोऽजयम् । ते मे भवन्तश्च तथा सुग्रीवप्रमुखान्हरीन् ॥ २३ ॥
परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ । सीतायाः पदवीं प्राप्य संप्राप्तौ वरुणालयम् ॥ २४ ॥
अदेया च यथा सीता वध्यौ दशरथात्मजौ । भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम् ॥ २५ ॥
नहि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित् । सागरं वानरैस्तीर्त्वा निश्चयेन जयो मम ॥ २६ ॥

---

जातः तत्र दृष्टान्तः अध्वनि हयः कशया ताडितो महाश्व इव एतेन सीतां न दास्यामीति सूचितम् । अर्धं पृथक् ॥ १९ ॥

गो० टी०–तन्मयेति । चारुनेत्राया इति प्रतिश्रवणहेतुः । नयनसौन्दर्यपारवश्येन तद्वचनमङ्गीकृतवानस्मीति भावः । अध्वनि दीर्घमार्गे ॥ २० ॥

२० ] ति० टी०–नन्वेवं संवत्सरानन्तरं त्वद्वशे भविष्यत्येव, रामस्य त्विहाप्रसक्तिरेवेति का ते चिन्तेत्याशङ्क्य 'अल्पोऽपि रिपुर्नोपेक्ष्यः' इति नीतिशास्त्रपर्यालोचनया मन्त्रे प्रेरयामीत्याह–कथमिति । न कथमपीत्यर्थः ॥ २० ॥

रा० टी०–ननु बलवत्त्वे स एव ग्रहीष्यति किं तवादानेनेत्यत आह–कथमिति । वनौकसो दशरथात्मजौ च सागरं कथं तरिष्यन्ति तरणसामर्थ्यं तेषां नास्तीत्यर्थः ॥ २० ॥

गो० टी०–कथमेनामुपलप्स्यसे तामुपनेतुमुपागते सपरिकरे दाशरथावित्यत आह–कथमिति । उत्तरन्ति उत्तरिष्यन्ति । सत्त्वानि झषव्यतिरिक्तजन्तवः ॥ २१ ॥

२१ ] ति० टी०–अथापि संभावनास्तीत्याह–अथवेति । एकेनापि कपिना महत्कदनं कृतम् ॥ २१ ॥

रा० टी०–ननु तदागमनाभावनिश्चये तव भयाभावात् किमर्थं सर्वान् पृच्छसीत्यतः पक्षान्तरमाह–अथवेति । एकेन यस्य कपिना नो अस्माकं कदनं विनाशः कृतम् अतः तस्य कार्यगतयः कार्याणां सिद्धयः दुर्ज्ञेयाः अतो यूयं यथामति ब्रूत ॥ २१ ॥

गो० टी०–तर्हि किमिदानीं विचार्यं तत्राह–अथवेति । यस्य यथामति तथा ब्रूतेत्यर्थः ॥ २२ ॥

२२ ] ति० टी०–अतः कार्यगतयो दुर्ज्ञेयाः, तस्माद्यस्य यथामति यज्ज्ञाति तद्ब्रूत । नन्वेककपितो भीतस्य रामादधिकमेव ते भयमिति भयहेतुः सीता त्यज्यतामित्याशङ्क्य भयाभावमाह–मानुषादिति ॥ २२ ॥

रा० टी०–स्वकीयानां भीतिं निवर्तयन्नाह–मानुषादिति । यद्यपि मानुषात् प्राकृतमनुष्यात् नो भयं नास्ति तथापि भवद्भिर्विमृश्यताम् अर्धं पृथक् । मानुषाद्भयाभावे हेतुमाह–तदेति । देवासुरे युद्धे युष्माभिः सहितोऽहम् अजयं रिपूनिति शेषः ते मे मम भवन्तः तथा तादृग्बलेन विद्यमाना एवेत्यर्थः एतेन यदि देवादिभ्यो नास्मासु भीतिः तर्हि मनुष्येभ्यो नेति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः । नन्विदानीं तु ते नात्र संनिहिता इति किमर्थमेवं मन्त्र इत्यत आह–सीतायाः पदवीम् इह स्थितिं प्राप्य ज्ञात्वा सुग्रीवप्रमुखान् हरीन् पुरस्कृत्य वरुणालयमुल्लङ्घयितुं समुद्रस्य परे पारे नृपात्मजौ प्राप्तौ । सार्धश्लोक एकान्वयी ॥ २२ ॥ २३ ॥

गो० टी०–विभीषणमतव्यावृत्त्यर्थं स्वमतमाह–मानुषादिति । सपादश्लोकमेकं वाक्यम् । मानुषात् भयाभावे हेतुमाह–तदेति । अजयमितिच्छेदः लङुत्तमैकवचनम् । इन्द्रं जितवतो मे मनुष्यः कियानिति भावः । ते मे भवन्तश्च तथा ते देवासुरे युद्धे जेतारो भवन्तः तथा सहायभूताः वर्तन्त इत्यर्थः ॥ २३ ॥

२३–२४ ] ति० टी०–भयाभावहेतुमाह–तदेति । यैर्युष्माभिः सहितो देवानजयं ते भवन्तो मे तथा च तथैव सन्ति, अतो मानुषान्न भयं यद्यपि तथापि विमृश्यतां विचार्यतामिति पूर्वश्लोकेनान्वयः । विमर्शे हेतुमाह–सुग्रीवेति । नृपात्मजौ इतेन वरुणालयमतिक्रम्य सीतायाः पदवीं प्राप्यान्विष्य सुग्रीवप्रमुखान्हरीन्पुरस्कृत्य समुद्रस्य परे पारे संप्राप्ताविति श्रुतम् ॥ २३ ॥ २४ ॥

गो० टी०–सुग्रीवप्रमुखान् हरीनित्युत्तरशेषः । प्राप्तौ ज्ञातवन्तौ वरुणालयं समुद्रं संप्राप्तौ प्राप्तुतां नाम का नः क्षतिरिति भावः ॥ २४ ॥

२५ ] ति० टी०–अतः परं यथा सीतादेया, यथा च दशरथात्मजौ वध्यौ, तथैव मन्त्रो भवद्भिर्मन्त्र्यताम् अथ सुनीतं सुनिश्चितं मन्त्रतत्त्वमभिधीयताम् ॥ २५ ॥

रा०टी०–स्वेप्सितविरोधिमन्त्राभावायाह–अदेया चेति । यथा सीता अदेया दशरथात्मजौ च यथा वध्यौ तथा मन्त्रो भवद्भिर्मन्त्र्यताम् सुनीतं मन्त्रेण सुनिश्चितं यथा भवति तथा अभिधीयताम् । श्लोकत्रयमेकान्वयि ॥ २४–२५ ॥

गो० टी०–विमृश्यतामित्युक्तं विमर्शप्रकारं दर्शयति–अदेयेति । मन्त्रो मन्त्र्यताम् मन्त्रः क्रियतामित्यर्थः । सुनीतं सुनिश्चितम् ॥ २५ ॥

२६ ] ति० टी०–निश्चितप्राय एव शत्रुजय इत्याह–नहीति । जगति लोके, कस्यचिदिन्द्रादेरप्यसमजये शक्तिं न पश्यामि । अन्यस्य मनुष्यरूपशत्रोर्वानरैः सह सागरं तीर्त्वा-

---

१ उत्तरन्तीति गो. पाठः । २ समेति गो. पाठः । ३ मे इति गो. पाठः । ४ प्राप्ताविति गो. पाठः ।

**तस्य कामपरीतस्य निशम्य परिदेवितम् । कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥ २७ ॥**
**यदा तु रामस्य सलक्ष्मणस्य प्रसह्य सीता खलु सा इहाहृता ।**
**सकृत्समीक्ष्यैव सुनिश्चितं तदा भजेत चित्तं यमुनेव यामुनम् ॥ २८ ॥**
**सर्वमेतन्महाराज कृतमप्रतिमं तव । विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥ २९ ॥**
**न्यायेन राजकार्याणि यः करोति दशानन । न स संतप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥ ३० ॥**
**अनुपायेन कर्माणि विपरीतानि यानि च । क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३१ ॥**

---

स्मज्जये शक्तिप्रसङ्गमपि न पश्यामि, अतो निश्चयेन सर्वथा ममैव जय इति योजना ॥ २६ ॥

**रा० टी०–नहीति ।** वानरैः सागरं तीर्त्वा अन्यस्य राक्षसभिन्नस्य शक्तिम् अस्मज्जयसामर्थ्यं नैव प्रपश्यामि अतः निश्चयेन ममैव जयः ॥ २६ ॥

**गो० टी०–**मा भूद्रामस्य समुद्रतरणे तव जये वा शक्तिः तत्सहायस्यान्यस्य कस्यचित् स्यात्तत्राह–**नहीति ।** वानरैः सह सागरं तीर्त्वा आगन्तुमिति शेषः । रामादन्यस्य शक्तिं न पश्यामि अतो मम निश्चयेन जय इत्यन्वयः ॥ २६ ॥

**२७ ] ति० टी०–**अथ कुम्भकर्णो भ्रातुरन्यायमूलानर्थप्राप्तिदर्शनात्क्रुद्ध आहेत्याह—**तस्येति ।** परिदेवितं कामशोकप्रलापम् । प्रचुक्रोध महाराजः सन्नीदृशं सभायां प्रलपतीति क्रोधः ॥ २७ ॥

**रा० टी०–तस्येति ।** कामपरीतस्य सीतास्थितिपूर्वकस्वरक्षाविषयकाभिलापविशिष्टस्य तस्य रावणस्य परिदेवितं विलपितं निशम्य कुम्भकर्णः प्रचुक्रोध अत एव इदमब्रवीत् ॥ २७ ॥

**गो० टी०–तस्येति ।** कामपरीतस्य कामेन विपरीतस्य । कामातुरतया विपरीतबुद्धेरित्यर्थः । परिदेवितं परिदेवनम् । तद्वदसंगतभाषणमित्यर्थः ॥ २७ ॥

**२८] ति० टी०–**तदेव वचनमाह—**यदा त्विति ।** यदा सलक्ष्मणस्य रामस्य सीता सकृत्समीक्ष्यैव तात्कालिकापातविचारं कृत्वैव प्रसह्य हृता तदैव ते चित्तं यमुना यामुनं ह्रदमिव सुनिश्चितं भजेत निश्चयभजनार्हम् । यथा यमुना पृथिव्यामवतारसमये एव स्वह्रदं पूरयति, कालान्तरे तु समुद्रं गतत्वात्तज्जलस्य तत्पूरणासंभवः, एवमस्माभिः सह विचारस्य स एव कालः, इदानीं त्वनर्थनिश्चयो जात एवेति विचारो निष्फल इति क्रोधजा व्यङ्ग्योक्तिः ॥ २८ ॥

**रा० टी०–**तद्वचनाकारप्राह—**यदेत्यादिभिः ।** यदा सीता इहाहृता तदैव सकृत् समीक्ष्य अस्मान् अवलोक्य सुनिश्चितं मन्त्रं तव चित्तं भजेत गृह्णीयात् । तत्र दृष्टान्तः—यथा यमुना श्रीकृष्णावतारसमये यामुनं महाह्रदविशेषं भजति कृष्णावतारसमये प्राप्नोति कालान्तरे तत्र प्राप्तौ कृष्णसंबन्धो न भवेदिति तात्पर्यम् । एतेन रामकोपस्य दुर्निवारणीयत्वं ध्वनितम् ॥ २८ ॥

**गो० टी०–**मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये । सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेदित्युक्तोत्तममन्त्रयितृभावे एकोऽर्थं विमृशत्येको धर्मे प्रकुरुते मनः । एकः कार्याणि कुरुते तमाहुर्मध्यमं नरमित्युक्तमध्यममन्त्रयितृभावेपि नावस्थितोसीत्याह–**यदेति ।** यदा सकृत्समीक्ष्यैव स्वयमेव विचार्य रामस्य सीता इहाहृता तदैव चित्तं कर्तृ यमुना यामुनं पर्वतमिव सुनिश्चितं सुनिश्चयं भजेत खलु । स एवास्माभिः सह विचारकालः । इदानीं विचारणम् गते जले सेतुबन्धनमिति भावः ॥ २८ ॥

**२९]ति०टी०–**व्यङ्ग्यतयोक्तमेव साक्षादप्याह–**सर्वमिति ।** यदेतद्वञ्चनापूर्वं प्रसह्य परदारहरणादि कृतमेतत्सर्वं महाराज, तवाप्रतिममनुचितम् । इदानीं विचारोऽपि निष्फल इत्याह–**विधीयेतेति ।** अस्य कर्मणः करणमुद्दिश्य प्रवृत्तिकाल एव यद्यस्माभिः सह मन्त्रयेत तदा विधीयेतास्माभिः अस्य निवारणमिति शेषः इदानीं क्रियमाणो विचारस्तु गतजलसेतुबन्धनसम इति भावः ॥ २९ ॥

**रा० टी०–**वस्तुतस्त्वपहरणमेव तवाज्ञानमूलकमित्याह—**सर्वमिति ।** कृतमेतत् अपहरणादि सर्वं तवाप्रतिमम् अयोग्यं तदुचितमाह–अस्यापहरणरूपस्य कर्मणः आदावारम्भे एव अस्माभिः सह विधीयेत मन्त्र आरभ्येत एतेन पूर्वं मन्त्रारम्भे तवापहरणबुद्धिर्निवर्तेतेति व्यञ्जितम् ॥ २९ ॥

**गो० टी०–**तदा कृते किं स्यादित्यत्राह–**सर्वमिति ।** कृतमिति कर्मणि निष्ठा एतत्कृतं सर्वं मन्त्रकर्म अस्य कर्मणः सीताहरणरूपस्य आदावेव यदि विधीयेत तदा अप्रतिमं समञ्जसं स्यादित्यर्थः ॥ २९ ॥

**३० ] ति० टी०–**अथ मन्त्रिभिरसंमन्त्र्य कृतं नित्यकर्म पश्चात्परितापाय भवतीत्याह–**न्यायेनेति ।** प्रथमं मन्त्रिभिः सह निश्चितार्थमतिर्भूत्वा यो नृपतिर्न्यायेन राजकार्याणि करोति स तत्कार्यं कृत्वा पश्चान्न संतप्यते ॥ ३० ॥

**रा० टी०–**मन्त्रस्यावश्यकत्वे हेतुमाह–**न्यायेनेति ।** निश्चिता मन्त्रेण निश्चयं प्राप्ता अर्थमतिः अर्थविषयकेच्छा यस्य स यो नृपः न्यायेन राजकार्याणि करोति स पश्चान्न संतप्यते ॥ ३० ॥

**गो० टी०–**आदौ विचार्य कृतस्य साफल्यप्रदर्शनपुरःसरमविचार्यकृतस्य फलवैपरीत्यं दर्शयति श्लोकद्वयेन–**न्यायेनेति ।** न्यायेन विचारणेन ॥ ३० ॥

**३१ ] ति० टी०–**अन्यथा व्यतिरेकमप्याह—**अनुपायेनेति ।** मन्त्रिभिः सह सामाद्युपायविचारानालम्बनेन मोहा-

यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति । पूर्वं चापरकार्याणि स न वेद नयानयौ ॥ ३२ ॥
चपलस्य तु कृत्येषु प्रसमीक्ष्याधिकं बलम् । छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ ३३ ॥
त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् । दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम् ॥ ३४ ॥
तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः । अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ॥ ३५ ॥

---

त्स्वयमेव यानि विपरीतान्यन्यायकृत्यानि करोति तानि तथा क्रियमाणानि दुष्यन्ति कश्मलं प्रापयन्ति । अप्रयतेष्वभिचारत्वादपवित्रेषु यागेषु हुतानि हवींषीव । तानि तु–'प्रत्यगेनमभिचारस्तृणुते' इति कर्तारं कश्मलं प्रापयन्त्येव । तद्वदिदं कर्मापाततः सुखमिव भासमानमपि परिणामे दुःखायैवेति भावः ॥ ३१ ॥

रा० टी०–अनुपायेनेति । अनुपायेन मन्त्राद्युपायराहित्येन विपरीतानि यानि कर्माणि क्रियमाणानि तानि कर्माणि दुष्यन्ति तत्र दृष्टान्तः–अप्रयतेषु अयतचितेषु हवींषि देवद्रव्याणीव ॥ ३१ ॥

गो० टी०–अनुपायेनेति । अनुपायेन क्रियमाणानि कर्माणि विपरीतानि विपर्यस्तानि यानि तानि च दुष्यन्ति दोषवन्ति च भवन्ति । न केवलं निष्फलानि प्रत्युतानर्थकराण्यपि भवन्तीत्यर्थः अप्रयतेषु अशुचिषु अपात्रेषु । दीयमानानीति शेषः ॥ ३१ ॥

३२ ] ति० टी०–यथाकालं यस्य कर्मानारम्भः स मूर्ख इत्याह—य इति । पूर्वकार्याणि प्रथमकर्तव्यानि कर्माणि पश्चादभिचिकीर्षति एवं पश्चात्कर्तव्यानि पूर्वं करोति स नयानयौ न वेद । साम्नि प्रथमं प्रयोक्तव्ये दण्डम्, दण्डे पश्चात्प्रयोक्तव्ये साम चेत्यर्थः । यद्वा विचारानन्तरं कर्मकरणमुचितम् /तद्वैपरीत्यं कुर्वंस्तु नीत्यनीत्यज्ञानीत्यर्थः ॥ ३२ ॥

रा० टी०–य इति । पूर्वकार्याणि पूर्वं कर्तव्यानि कर्माणि पश्चादभिचिकीर्षति अपरकार्याणि औत्तरकालिककृत्यानि च पूर्वं चिकीर्षति स नयानयौ न वेद ॥ ३२ ॥

गो०टी०–अकालकृतं मन्त्रकरणमनुचितमित्याह–य इति। पूर्वकार्याणि पूर्वं कर्तव्यानि मन्त्रकर्माणि अपरकार्याणि उत्तरकालकर्तव्यकर्मारम्भान्। पूर्वं मन्त्रविचारात् पूर्वम्॥ ३२॥

३३ ] ति० टी०–विषयचपलस्य बलमप्यप्रयोजनमित्याह चपलस्येति । अन्ये शत्रवः परस्याधिकं बलं प्रसमीक्ष्यापि कृत्येषु चपलस्य तस्य निग्रहाय क्षिप्रं रन्ध्रं प्रपद्यन्ते । द्विजा हंसा अलङ्घ्यस्यापि क्रौञ्चपर्वतस्य लङ्घनाय कुमारशक्तिकृतं खं रन्ध्रमिव ॥ ३३ ॥

रा० टी०–चपलस्येति । चपलस्य असमीक्ष्यकारिणः अधिकं बलं प्रसमीक्ष्य अन्ये शत्रवः कृत्येषु छिद्रं प्रपद्यन्ते अन्वेषयन्ति । तत्र दृष्टान्तः–द्विजाः हंसाः क्रौञ्चस्य अनुलङ्घनार्हतदभिधपर्वतस्य लङ्घनाय खं कुमारशक्त्या संपादितरन्ध्रमिव ॥ ३३ ॥

गो० टी०–इदानीमसमीक्ष्यकारिणो बलमपि निरर्थकमित्याह–चपलस्येति । यद्वा प्रामाण्यनीतिं बलेन समीकरिष्यामीत्यत्राह–चपलस्येति । कृत्येषु क्षिप्रं चपलस्य असमीक्ष्यकारिणः बलमधिकमाभिमुख्येन जेतुमशक्यम् समीक्ष्य विचार्य अन्ये शत्रवः । खं रन्ध्रम् । प्रपद्यन्ते असमीक्ष्यकरणरूपावसरं लब्ध्वा अभिभवन्तीत्यर्थः । क्रौञ्चस्यौन्नत्येनालङ्घ्यत्वात् सुब्रह्मण्यशक्तिविदारणकृतरन्ध्रेण हंसास्तमतिक्रम्य गच्छन्तीति प्रसिद्धिः ॥ ३३ ॥

३४ ] ति० टी०–एवं कर्म कृतवतस्तवैतावत्कालं जीवनमतिभाग्यवशादित्याह—त्वयेति । येन त्वयाप्रतिचिन्तितं भाविफलचिन्तारहितं यदिदं महत्कार्यं प्रबलदारहरणरूपमारब्धं तं त्वां रामोऽतिप्रबलोऽपि दिष्ट्या नावधीत् । विषमिश्रमामिषं भोज्यं वस्तु भोक्तारं यथा हन्ति तद्वदित्यर्थः ॥३४॥

रा० टी०–त्वयेति । येन त्वया अप्रतिचिन्तितमविचारितं कार्यमारब्धं तं त्वां विषमिश्रमामिषं भोग्यपदार्थमिव रामो दृष्ट्या भाग्यवशेनैव नावधीत् ॥ ३४ ॥

गो० टी०–सापायं च त्वत्कृतं कर्मेत्याह–त्वयेति । महत् दुष्करम् सापायमित्यर्थः अप्रतिचिन्तितम् अनालोचितम् इदं सीताहरणरूपं कार्यम् सापायत्वमेवाह—दिष्ट्येति ॥ ३४ ॥

३५ ] ति०टी०–एवंगते स्वकर्तव्यमाह—तस्मादिति । यस्मात्त्वया परैः प्रबलशत्रुभिरप्रतिममनुचितं कर्मारब्धम्, यतश्च सामदाने नेच्छसि मारीचेनेवास्माभिरपि गजत्वाने चित्तमनुसर्तव्यमेव । तस्मादहं तव शत्रून्हत्वा तव कार्यं समीकरिष्यामि संपादयिष्यामि । यद्वा त्वया समीकरिष्यामि त्वं यथा युद्धं करिष्यसि तथाहमपि परैर्योत्स्यामि, न तु विभीषणवत्त्वां त्यक्ष्यामीति व्यङ्ग्यम् ॥ ३५ ॥

रा० टी०–न्याय्यवचने रावणारुचिं समीक्ष्य आह—तस्मादिति । यस्मात्परैः रिपुभिः सह अप्रतिमं कर्म समारब्धं तस्मादपि अहं तव शत्रून् हत्वा समीकरिष्यामि शान्तिं विधास्यामि ॥ ३५ ॥

गो० टी०–सर्वमेतन्महाराजेत्युपक्रम्योक्तमुपसंहरति—तस्मादिति । तर्हि का गतिरित्यपेक्षायां मयि जीवति कस्ते भार इत्याह–अहमिति । अनघेति त्वं तु निर्व्यसनो भवेत्यर्थः । समीकरिष्यामि नीत्यनीती तुल्ये करिष्यामीत्यर्थः ॥ ३६ ॥

---

१ क्षिप्रमिति गो. पाठः ।

अहमुत्सादयिष्यामि शत्रूंस्तव [1]निशाचर । यदि शक्रविवस्वन्तौ यदि पावकमारुतौ ॥
तावहं योधयिष्यामि कुबेरवरुणावपि ॥ ॥ ३६ ॥
गिरिमात्रशरीरस्य महापरिघयोधिनः । नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाद्वै पुरन्दरः ॥ ३७ ॥
पुनर्मां स द्वितीयेन शरेण निहनिष्यति । ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस ॥ ३८ ॥
वधेन वै दाशरथेः सुखावहं जयं तवाहर्तुमहं यतिष्ये ।
हत्वा च रामं सह लक्ष्मणेन खादामि सर्वान्हरियूथमुख्यान् ॥ ॥ ३९ ॥
रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कार्याणि हितानि विज्वरः ।
मया तु रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

३६ ] ति० टी०–युक्तमेव राज्ञः प्रीतयेऽभ्यस्यति सत्यत्वप्रत्यायनाय–अहमिति । यदि शक्रविवस्वन्तौ तत्तद्देवतारूपौ स्यातां तथापि तावहं योधयिष्यामीत्यन्वयः ॥ ३६ ॥

रा० टी०–तद्विश्वासाय तदेव पुनराह–अहमिति । उत्सादयिष्यामि नाशयिष्यामि । अर्थं पृथक् । यदीति । यदि रिपू भविष्यतः तर्हि तावप्यहं योधयिष्यामि रिपू भविष्यत इत्यध्याहृतम् ॥ ३६ ॥

गो० टी०–तदेवाह–अहमिति सार्धश्लोकः ॥ विशांपते प्रजानां पते । अतिमानुषवैभवौ तौ कथं जय्यौ तत्राह—यदीति । तौ दशरथात्मजौ शक्रविवस्वन्तौ यदि स्याताम् तथापीत्यर्थः ॥ ३६ ॥

३७ ] ति० टी०–गिरिमात्रशरीरस्य गिरिप्रमाणदेहस्य ॥ ३७ ॥

रा० टी०–ननु योधनमात्रेण किमित्यत आह—गिरीति । नर्दतो मम पुरन्दरोऽपि बिभीयात् भयं प्राप्नुयात् ॥ ३७ ॥

गो०टी०–स्वस्य योधनसामर्थ्यविशेषं दर्शयति—गिरीति । गिरिमात्रशरीरस्य गिरिप्रमाणदेहस्य । "प्रमाणे द्वयसच्दघ्नञ्मात्रचः" इति मात्रच् प्रत्ययः । पञ्चम्यर्थे षष्ठी ॥ ३७ ॥

३८ ] ति० टी०–पुनरिति । यदि मां स राम एकेन शरेणाहत्य पुनर्द्वितीयेन शरेण निहनिष्यति यावत्ततः पूर्वमेव तस्य रुधिरं पास्यामि काममाश्वस ॥ ३८ ॥

रा० टी०–पुनरिति । स तव रिपुः द्वितीयेन एकेन हत्वा परेण शरेण मां यदि हनिष्यति ततस्तदापि तस्य रुधिरं कामं यथेष्टं पास्यामि अतो मा श्वस उच्छ्वासं न प्राप्नुहि गणकार्यस्यानित्यत्वाल्लुगभावः ॥ ३८ ॥

गो० टी०–शरवर्षिणो रामस्य पुरतः कथं स्थातुं शक्तस्तत्राह–पुनरिति । सः रामः पुनर्मां प्रथममेकेन शरेण निहत्य पुनरपि द्वितीयेन शरेण मां हनिष्यति । ततः तावदेवेत्यर्थः । अत्राश्लीलमपि ध्वन्यते । मां द्वितीयेन शरेणावश्यं निहनिष्यति । तस्य रामस्य ततस्तस्माद्धननात् । कर्तरि षष्ठी । रुधिरं स्वरुधिरं पास्यामि कामम् अत्यर्थम् आश्वस निःश्वसेति ॥ ३८ ॥

३९–४० ] ति० टी०–ते सुखावहं जयं दाशरथेर्वधेन तवाहमाहर्तुं कर्तुं यतिष्ये फलं तु दैवायत्तमिति भावः । खादामि खादिष्ये ॥ ३९ ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वादशः सर्गः ॥ १२ ॥

रा० टी०–वधेनेति । दाशरथेः वधेन तव विजयमाहर्तुं संपादयितुमहं यतिष्ये अत एव रामं हत्वा हरियूथमुख्यान् खादामि खादिष्यामि ॥ ३९ ॥

गो० टी०–आत्मानमरक्षन् परघाती वीरो न श्लाघ्य इति न्यायेन परवत् स्वस्यापि वधे न कोप्यतिशय इत्यत्राह—वधेनेति । अत्राप्यर्थान्तरम् । वधेन स्वविनाशेन दाशरथेः सुखावहं जयं तव सकाशादाहर्तुं यतिष्ये । रामं हत्वा रामं गत्वा । "हन, हिंसागत्योः" इति धातुः । खादामि किं जीवामि किमिति काकुरनुसन्धेया ॥ ३९ ॥

रा० टी०–रमस्वेति । वशगा त्वत्पूजनीयात्वे वशं प्राप्ता भविष्यति ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्वादशः सर्गः ॥ १२ ॥

गो० टी०–रमस्वेति । अत्राप्यर्थान्तरम् । मया रामे विषये अक्षयं यथा भवति तथा गमिता प्रापिता सीता रामस्य वशगा भविष्यति । रमस्वेत्यादौ काकुः ॥ ४० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

---

1 विशांपते इति गो. पाठः ।

## त्रयोदशः सर्गः ।

सीतां बलादाक्रम्य भुङ्क्ष्वेति वदते महापार्श्वाय रावणेन तदकरणनिमित्तं ब्रह्मणः सकाशाच्छापप्राप्तिरूपं पूर्ववृत्तमुक्त्वा स्वस्य दुराधर्षत्वकथनम् ॥ १ ॥

**रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः । मुहूर्तमनुसंचिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥**
**यः खल्वपि वनं प्राप्य मृगव्यालनिषेवितम् । न पिबेन्मधु संप्राप्य स नरो बालिशो भवेत् ॥ २ ॥**
**ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण । रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु ॥ ३ ॥**
**बलात्कुक्कुटवृत्तेन प्रवर्तस्व महाबल । आक्रम्याक्रम्य सीतां वै तां भुङ्क्ष्व च रमस्व च ॥ ४ ॥**
**लब्धकामस्य ते पश्चादागमिष्यति किं भयम् । प्राप्तमप्राप्तकालं वा सर्वं प्रतिविधास्यसे ॥ ५ ॥**

१ ] ति० टी०—क्रुद्धमाज्ञाय । अप्रतिमं कर्म कृतमिति कुम्भकर्णवचःश्रवणेनेति शेषः । मुहूर्तमनुसंचिन्त्य न्याय्ये भ्रातुर्वचस्यपि मनोननुकूलतयैवं कोपश्चेदस्माकं तथोक्तौ शिरश्छेद एव स्यादिति मनोनुकूलमेव वाच्यमिति संचिन्त्य ॥ १ ॥

रा० टी०—कुम्भकर्णवचनश्रवणान्तरकालिकं महापार्श्वोक्तिमाह—रावणमित्यादिभिः । महापार्श्वोऽब्रवीत् ॥ १ ॥

गो० टी०—अथ रावणस्य दुर्मन्त्रिमतानुसारित्वमाह—रावणमित्यादि । क्रुद्धं कुम्भकर्णोक्तनयापरिज्ञानवचनेनेत्यर्थः । मुहूर्तमनुसंचिन्त्य रावणक्रोधनिवारणोपायं विचार्येत्यर्थः ॥ १ ॥

२ ] ति० टी०—यः खलु पुरुषो मृगव्यालनिषेवितं दुष्प्रवेशं वनं प्राप्य तत्र च मधु संप्राप्य तन्मधु न पिबेत्स बालिशो मूर्खः । एतेन प्रथमं रामाश्रमो दुरासदः, तं प्राप्य तत्र तत्स्त्रियं च प्राप्य तद्भोगाभावो न युक्त इति सूचितम् ॥ २ ॥

रा० टी०—तदाकारमाह—य इत्यादिभिः । व्यालैर्निषेवितं वनं प्राप्य कथञ्चित् गत्वा मधु संप्राप्य यो नरो जनः न पिबेत् सः बालिशो मूर्खो भवेत् एतेन लङ्काविध्वंसो न कारयितव्य इति ध्वनितम् ॥ २ ॥

गो० टी०—य इति । खलुर्वाक्यालंकारे । दुष्करं सीताहरणं श्रमेण कृत्वा तत्संभोगमकुर्वाणस्त्वम् क्षौद्रकाङ्क्षयाऽतिगहनं वनं प्रविश्य तदपिबन् जन इव मूढोसीति भावः ॥ २ ॥

३ ] ति० टी०—ननु बलात्परदारभोगोऽधर्मत्वादीश्वराज्ञाविरोधीत्यत्राह—ईश्वरस्येति । धर्मफलप्रवर्तकानां यमादीनामपि त्वमीश्वरः । अतस्तेऽयं विचारोऽनुचित इत्यर्थः ॥ ३ ॥

रा० टी०—ननु भोगानामीश्वराधीनत्वात् लङ्काभोगावसानं चेत् कथं भोगः सेत्स्यतीत्यत आह ईश्वरस्येति । ईश्वरस्य सर्वकार्यसमर्थस्य तव ईश्वरो नियन्ता कोऽस्ति न कोऽपीत्यर्थः अतः समर्थस्त्वं वैदेह्यैव करणेन शत्रूनाक्रम्य वैदेहीं संप्रार्थ्य रामाय दत्वा च तद्द्वारा रामशान्तिं कृत्वेत्यर्थः मूर्धसु उत्तमस्थानेषु रमस्व हशब्द एवार्थे ॥ ३ ॥

गो० टी०—शत्रुषु विद्यमानेष्वधर्मावहमिदं कथं कुर्यामित्यत्राह—ईश्वरस्येति । सर्वनियन्तुस्तव को वा नियन्तास्ति । अतो धर्मान्न भेतव्यमिति भावः । शत्रून् मूर्धस्वाक्रम्य तान् तूष्णीकृत्येत्यर्थः । अर्थान्तरं तु रामस्येश्वरः कोस्ति स निग्रहीतुं न शक्य इत्यर्थः । शत्रून् रामम् पूजायां बहुवचनम् । दशस्वपि मूर्धस्वाक्रम्य शिरसा प्रणम्येत्यर्थः वैदेह्या सह रमस्व वैदेह्यां यथा स्वभर्ता रमते तथा त्वमपि स्वदारेषु रमस्व वैदेह्या सह रामं प्रणम्येति वा योजना ॥ ३ ॥

४ ] ति० टी०—अनानुकूल्ये कथं भोगस्तत्राह—बलादिति । कुक्कुटवृत्तेन 'कुक्कुटीनां कामिकुक्कुटसंयोगे कोपो जातिधर्मः' इति वात्स्यायनः । अथापि संक्रुद्धाः कुक्कुटीरनुभुज्य कुक्कुटा यथा सुखिनस्तद्वत्त्वमपि भवेत्यर्थः । तदेव दर्शयति—आक्रम्येति ॥ ४ ॥

रा० टी०—ननु मां प्रति अतिकुपितायाः सीतायाः कथं प्रसादो भविष्यतीत्यत आह—बलादिति । कुक्कुटानां तत्कुलानां वृत्तं वर्तनं यस्मिन् तेनोपः—काले इत्यर्थः बलात् हठात् आक्रम्याक्रम्य तच्चरणौ गृहीत्वा गृहीत्वा सीतां प्रवर्तस्व स्वापराधक्षमापने नियोजयस्व अतः एतां लङ्कासंपत्तिं भुङ्क्ष्व रमस्व च ॥ ४ ॥

गो० टी०—किं करोमि सा हि न मामभिलषतीत्यत्राह—बलादिति । कुक्कुटवृत्तेन कुक्कुटवृत्त्या भाव सः कुक्कुटो वञ्चनामार्गेण स्वदयितामाक्रमते तथा त्वमपीत्यर्थः कुक्कुटानां कामुककुक्कुटसङ्गे कोपो जातिधर्मः । तथा सीतामनुभव यथा कुक्कुटाः सुखिनः तद्वदित्यर्थः । यथाह वात्स्यायनः—'क्रुद्धामाक्रम्य भोगस्तु कौक्कुटः सोपि सौख्यदः' इति । भुङ्क्ष्व भोगं भज रमस्व निर्विचारो भवेत्यर्थः । मुनिहृदयं तु कुक्कुटवृत्तेनान्यत्र वर्तस्व सीतां तु बलात् भुङ्क्ष्व रक्ष । "भुज, परिपालनाभ्यवहारयोः" इति धातुः । आत्मनेपदमार्षम् ॥ ४ ॥

५ ] ति० टी०—अथ स्वाभिलषिते सिद्धे प्रथमतो भयमेव न महातेजस्त्वात् अथापि तन्निमित्तं भयं प्राप्नुयात्तदापि तत्प्रतिविधेयमेव त्वयेत्याह—लब्धकामस्येति । प्राप्तं प्राप्तकालं सावधानदशाप्राप्तकालम् अप्राप्तकालं वा कामभोगासावधानदशां प्राप्तं वा ॥ ५ ॥

रा० टी०—ननु सीतासमर्पणेऽपि रामप्रसादे संशय एवे-

१ समाकुलमिति गो. पाठः । २ संप्राप्तमिति गो. पाठः । ३ वर्तस्वेति गो. पाठः । ४ तथा भुङ्क्ष्वेति गो. पाठः । ५ यदिति गो. पाठः । ६ सहिष्यसीति गो. रा. पाठः ।

कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः । प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ॥ ६ ॥
उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् । समतिक्रम्य दण्डेन सिद्धिमर्थेषु [1]रोचये ॥ ७ ॥
इह प्राप्तान्वयं सर्वाञ्छत्रूंस्तव महाबल । [2]वशं शस्त्र[3]प्रतापेन करिष्यामो न संशयः ॥ ८ ॥
एवमुक्तस्तदा राजा महापार्श्वेन रावणः । तस्य संपूजयन्वाक्यमिदं वचनमब्रवीत् ॥ ९ ॥
महापार्श्व [4]प्रवदतो रहस्यं किंचिदात्मनः । चिरवृत्तं तदाख्यास्ये यदवाप्तं पुरा मया ॥ १० ॥
पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् । चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११ ॥
सा प्रसह्य मया भुक्ता कृता विवसना ततः । स्वयंभूभवनं प्राप्ता लोलिता नलिनी यथा ॥ १२ ॥

---

त्यत आह—लब्धेति । पश्चात् सीताप्राप्त्यनन्तरकाले लब्धः कामः इच्छाविषयीभूतस्वदारप्राप्तिर्येन तस्य रामस्य रामात् भयं तुभ्यं किं किमर्थम् आगमिष्यति प्राप्स्यति न प्राप्स्यतीत्यर्थः अतः न प्राप्तः निवृत्त इत्यर्थः कालः कोपसमयो यस्य तं प्राप्तं रामं सर्वं स्वापराधजातं प्रतिसहिष्यसि साहयिष्यसि ॥ ५ ॥

गो० टी०—एतन्निमित्तमागामिभयमनिवार्यं कथमत्र क्रियतामित्यत्राह—लब्धेति । एवं लब्धकामस्य ते पश्चात्कामलाभानन्तरम् यत् भयमागमिष्यति । प्राप्तं तदानीमागतम् । अप्राप्तकालं प्राप्तकालमित्यस्य " प्राप्तापन्ने च द्वितीयया " इति समासः तथा न भवतीत्यप्राप्तकालम् आगामीति यावत् प्रतिसहिष्यसि अभिभविष्यसीत्यर्थः ॥ ५ ॥

६ ] ति० टी०—कथमत्र बलं नस्तत्राह—कुम्भकर्ण इति ॥ ६ ॥

रा०टी०—ननु प्रसादनेऽपि यदि तत्कोपशान्तिर्न भवेत् तदा किं कर्तव्यमित्यत आह—कुम्भकर्ण इत्यादिभिः । कुम्भकर्णः इन्द्रजिच्च सवज्रं वज्रसहितं वज्रिणं वज्रस्वामिनमिन्द्रमपि प्रतिषेधयितुं शक्तौ । एतेन तवापराधसत्त्वे कुम्भकर्णादीनां बलमकिंचित्करं भविष्यतीति ध्वनितम् ॥ ६ ॥

गो० टी०—तिष्ठतु भवान् त्वद्भ्रातृपुत्रावेव प्रतिपक्षप्रतिषेधे शक्तावित्याह—कुम्भकर्ण इति ॥ ६ ॥

७-९ ] ति० टी०—एवमस्माकमेव प्राबल्याच्चतुर्थोपाय एवास्माभिरादरणीय इत्याह—उपप्रदानमिति । कुशलैर्नीतिकुशलैः कृतम् । विषयविशेष इति शेषः ॥ ७ ॥ ९ ॥

रा० टी०—सामाद्यनन्तरं दण्डो युक्त एवेत्याह—उपेति । कुशलैः दानादिषु निपुणैः कृतम् उपप्रदानप्रभृति समतिक्रम्य वर्तमाने रामे अर्थेषु अर्थप्राप्त्यर्थं दण्डेन सिद्धिं रोचये इच्छामि ॥ ७ ॥

गो० टी०—विभीषणमतं खण्डयति—उपप्रदानमिति । अकुशलैः युद्धासमर्थैः कृतं दानादिकम् अतिक्रम्य त्यक्त्वा दण्डेन बलात्कारेण अर्थेषु प्रयोजनेषु सिद्धिं रोचय ॥ ७ ॥

रा० टी०—इहेति । तव शत्रून् बलं तत्सैन्यं च शस्त्रप्रतापेन करिष्यामः हनिष्यामः ॥ ८ ॥

गो० टी०—रामादयो यत्र वर्तन्ते तत्र गत्वा योद्धव्यमित्युक्तं निकुम्भादिमतं दूषयन्नाह—इहेति । इह लङ्कापरिसरे शस्त्रप्रतापेन शस्त्रबलेन वशे करिष्यामः निग्रहीष्याम इत्यर्थः ॥ ८ ॥

रा० टी०—एवमिति । महापार्श्वेन एवमुक्तो रावणोऽब्रवीत् ॥ ९ ॥

गो० टी०—एवमिति । संपूजयन् स्वचित्तानुगुणयुक्तमिति श्लाघयन्नित्यर्थः ॥ ९ ॥

१० ] ति० टी०—रहस्यं प्रच्छादितुं(?)योग्यवद्गुप्तं चिरवृत्तं यन्मया पुरावाप्तं बलादुपभोगस्याशक्यकरणतानिमित्तमात्मनः किंचिद्वस्तु तदाख्यास्ये ॥ १० ॥

रा० टी०—तदाकारमाह—महापार्श्वेति । हे महापार्श्व यत् मया अवाप्तं प्राप्तं चिरवृत्तं तदात्मनः किंचित् रहस्यं प्रवदतस्तव समीपे आख्यास्ये ॥ १० ॥

गो० टी०—महापार्श्वेति संबोधनम् । प्रवदितोऽस्मीति शेषः । चिरवृत्तं रहस्यं किंचित् अस्तीति शेषः । यत्पुरा मयावाप्तं तदाख्यास्य इति योजना ॥ १० ॥

११ ] ति० टी०—तदेवाह—पितामहस्येति । चञ्चूर्यमाणां मद्दर्शनभीतिवशान्निलीयगतिमतीम् ॥ ११ ॥

रा० टी०—वृत्ताकारमाह—पितामहस्येति । पितामहस्य भवनं गच्छन्तीं चञ्चूर्यमाणां मद्भिया अप्रकटितगतिमतीं पुञ्जिकस्थलीं तदभिधमप्सरसमहमद्राक्षम् ॥ ११ ॥

गो० टी०—पितामहस्येति । गच्छन्तीम् । पितामहवन्दनायेति शेषः । पुञ्जिकस्थला नाम काचिदप्सराः । चञ्चूर्यमाणां भीत्या निलीय गच्छन्तीम् । " लुपसदचर० " इत्यादिना भावगर्हायां यङ् । संचरणात्मकस्य भावस्य गर्हा निलयनम् । " चरफलोश्च " इति नुक् । " उत्परस्यातः " इत्युकारः । अग्निशिखामिवेति तेजोविशेषोक्तिः । यद्वा द्रावकत्वोक्तिः । अत एवोक्तम्—' अङ्गारसदृशी नारी घृतकुम्भसमः पुमान् ' इति । संचार्यमाणामिति पाठे परिचारिकादर्शितमार्गामित्यर्थः ॥ ११ ॥

१२ ] ति० टी०—ततो दर्शनोत्तरं प्रसह्य विवसना कृता सा मया भुक्ता । लोलिता । गजेनेति शेषः ॥ १२ ॥

---

१ रोचयेति गो. पाठः । २ वशे इति गो. बलमिति रा. पाठः । ३ प्रतापेनेति रा. पाठः । ४ निबोध त्वमिति गो. पाठः । ५ स्थलीमिति रा. पाठः ।

तच्च तस्य तथा[1] मन्ये ज्ञातमासीन्महात्मनः । अथ संकुपितो वेधा[2] मामिदं वाक्यमब्रवीत् ॥ १३ ॥
अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि । तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥ १४ ॥
इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् । नारोहये[3] बलात्सीतां वैदेहीं शयने शुभे ॥ १५ ॥
सागरस्येव मे वेगो मारुतस्येव मे गतिः । नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६ ॥
को[4] हि सिंहमिवासीनं सुप्तं गिरिगुहाशये । क्रुद्धं मृत्युमिवासीनं संबोधयितुमिच्छति ॥ १७ ॥
न मत्तो नि[5]र्गतान्[6]बाणान्द्विजिह्वान्पन्नगानिव । रामः पश्यति सङ्ग्रामे तेन मामभिगच्छति ॥ १८ ॥
क्षिप्रं वज्रसमै[7]र्बाणैः शतधा कार्मुकच्युतैः । राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९ ॥
तच्चास्य बलमादास्ये बलेन महता वृतः । उदितः[8] सविता काले नक्षत्राणां प्रभामिव ॥ २० ॥

रा० टी०—सेति । अभुक्ता एकादश्याद्युपवासयुक्ता सा पुञ्जिकस्थली मया विवसना पुरा गमनदर्शनजनितकोपादुत्तरीयरहिता कृता ततोऽनन्तरं नलिनीव लोलिता क्रोधेन कम्पिता सती स्वयंभूभवनं प्राप्ता ॥ १२ ॥

गो० टी०—सेति । विवसना कृता सा मया भुक्तेत्यन्वयः ॥ १२

१३ ] ति० टी०—तच्च मम चरितं महात्मनस्तस्य मन्ये निश्चितं ज्ञातमासीत् । मन्ये इति तिङन्तप्रतिरूपकमव्ययम् । 'मन्ये शङ्के ध्रुवं प्रायो निश्चयार्था अमी मताः' इति कतकः ॥ १३ ॥

रा० टी०—तदिति । तदुत्तरीयापहरणं महात्मनः तस्य ब्रह्मणो ज्ञातमासीत् इत्यहं मन्ये अनुमानेनाजानाम् अथ तज्ज्ञानानन्तरं संकुपितो वेधा अब्रवीत् ॥ १३ ॥

गो० टी०—तस्येति । तत् धर्षणम् । मन्य इत्यनेन शापमात्रं मया श्रुतम् धर्षणश्रवणं तु मया ऊहितमिति गम्यते ॥ १३ ॥

१४–१५ ] ति० टी०—फलिष्यति विशीर्णो भविष्यति । क्वचिदेवमेव कुबेरपुत्रनलकूबरशापोऽपि रम्भानिबन्धनः श्रूयते तत्रोपपत्तिश्चिन्त्या । अस्य प्रथमत्वे तस्यां बलात्कारासंभवात्, तस्य प्रथमत्वेऽस्यां बलात्कारासंभवादिति केचित् । नलकूबरशापस्य तपोबलेनाकिंचित्करत्वादयमेव शापो ब्रह्मास्त्रवदप्रतिक्रियः पाश्चात्य इत्यन्ये ॥ १४ ॥ १५ ॥

रा० टी०—तदाकारमाह—अद्येति । अद्यप्रभृति इतः कालादारभ्य अन्यां नारीं यत्समीपं बलात् हठात् यदि गमिष्यसि तदा ते मूर्धा शतधा फलिष्यति दरिष्यति ॥ १४ ॥

रा० टी०—इतीति । इति हेतोः तस्य शापस्य शापात् भीतः हठप्रार्थनायामियमपि शापं दास्यतीति भयं प्राप्तोऽहं शुभे शयने तयोग्यपर्यङ्के बलात् नारोहये भूमावेव सा तिष्ठतीत्यर्थः ॥ १५ ॥

गो० टी०—अद्येत्यादि । अद्यप्रभृति एतत्क्षणमारभ्य । क्रियाविशेषणमेतत् । तदा गमनकाले एव फलिष्यति विशीर्णो भविष्यति इति एवंप्रकारस्य शापस्य । शापादित्यर्थः । प्रसभं नारोपय इत्यन्वयो न बलादित्यनेन पौनरुक्त्यात् । किंतु प्रसभं शापस्येत्यन्वयः । वैदेहीमित्यनेन महाकुलप्रसूततया तच्छापादपि भीतोऽस्मीत्यवगम्यते ॥ १४ ॥ १५ ॥

१६ ] ति० टी०—अथ महापार्श्वोक्तस्वप्राबल्यमेव श्रावयति सागरस्येत्यादि । दाशरथिर्हि यस्मादेतन्मे बलं न वेद तेन मामासादयति ॥ १६ ॥

रा० टी०—नन्वेवं चेद्रामाय समर्पयेत्यत आह—सागरस्येति । एतेन रामाय दाने मे दौर्बल्यप्रख्यातिर्भविष्यतीत्यतो न दास्यामीति सूचितम् । नन्वेवं वेगादिविशिष्टेन त्वया योद्धुं रामः कथमागत इत्यत आह—एतद्वेगादि दाशरथिर्न वेद तेन हेतुना मामासादयति मद्दुःखोत्पत्त्यनुकूलव्यापारं करोति ॥ १६ ॥

गो० टी०—एवं न युक्ता बलात्कर्तुं मतिरित्युक्त्वा अस्माभिः सह कुम्भकर्णेन्द्रजितौ यास्यत इति महापार्श्ववचनस्यासहायशूरे मयि विद्यमाने किमन्येनेति परिहारमाह—सागरस्येति । एतत् वेगगतिमत्त्वम् । आसादयति सेनामिति शेषः स्वार्थण्यन्तो वा । तेन अवेदनेन ॥ १६ ॥

१७ ] ति० टी०—को हि ज्ञातमद्बल इति शेषः । गिरिगुहारूप आशये निवासे आसीनमेव सुप्तं सिंहमिव ॥ १७ ॥

रा० टी०—क इति । सुप्तमासीनं सिंहमिव क्रुद्धमासीनमृत्युमिव मां संबोधयितुं क इच्छति रामव्यतिरिक्तः कोऽपि नेच्छतीत्यर्थः ॥ १७ ॥

गो० टी०—स्वप्रभावावेदनेनाहितमाह—यस्त्विति । सुप्तं सिंहमिवासीनं सिंहमिव स्थितमित्यर्थः । मृत्युमित्यत्रापि सुप्तमित्यनुषज्यते । अन्यथा प्रबोधयितुमिच्छतीत्यनेनानन्वयः । क्रुद्धं क्रोधार्हम् । यथा सुप्तं सिंहं मृत्युं वा प्रबोधयितुमिच्छन् पुरुषोऽनभिज्ञ एव तद्वत् तूष्णीं स्थितं मां प्रकोपयन् रामोऽपीति भावः ॥ १७ ॥

१८ ] ति० टी०—न पश्यति न पश्यति स्म ॥ १८ ॥

रा० टी०—नेति । मत्तो निर्गतान् बाणान् रामो न पश्यति अपश्यत् तेन हेतुना मामभिगच्छति ॥ १८ ॥

गो० टी०—रामो मत्पराक्रमं न वेत्त्येव तत्तिष्ठतु मद्बाणवेगं वा जानाति नैवेत्याह—नेति । लेलिहानतादर्श्यं द्योतयितुं द्विजिह्वानित्युक्तम् ॥ १८ ॥

१९–२० ] ति० टी०—आदीपयिष्यामि धक्ष्यामि ॥ १९ ॥ २० ॥

१ तस्य तच्च तदेति गो. तदेति रा. पाठः । २ देव इति गो. पाठः । ३ नारोपये इति गो. पाठः । ४ यस्त्विति गो. पाठः । ५ प्रेति गो. पाठः । ६ निशितानिति गो. पाठः । ७ वज्रोपमैरिति गो. पाठः । ८ उदयन्निति गो. पाठः ।

न वासवेनापि सहस्रचक्षुषा युधास्मि शक्यो वरुणेन वा पुनः ।
मया त्वियं बाहुबलेन निर्जिता पुरा पुरी वैश्रवणेन पालिता ॥ ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः ।

पूर्वोक्तं रावणवचो निशम्य यावद्रामशरा रक्षःशिरांसि न गृह्णन्ति तावदेव दाशरथये मैथिली देयेत्यादि रावणप्रहस्तादीन्विभीषण उपदिशति ।

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि ।
विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् ॥ १ ॥
वृतो हि बाह्वन्तरभोगराशिश्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः ।
पञ्चाङ्गुलीपञ्चशिरोऽतिकायः सीतामहाहिस्तव केन राजन् ॥ २ ॥

रा० टी०—क्षिप्रमिति । उल्काभिः कुञ्जरमिव कार्मुकच्युतैः शतधा त्वाणै राममादीपयिष्यामि ॥ १९ ॥

गो० टी०—क्षिप्रमिति । आदीपयिष्यामि सन्तापयिष्यामि उल्काभिः निर्गतज्वालकाष्ठैः । कुञ्जरपलायनार्थमुल्काः प्रदर्शयन्तीति प्रसिद्धिः ॥ १९ ॥

रा० टी०—तदिति । महता बलेन वृतोऽहम् अस्य रामस्य बलमादास्ये विनाशयिष्यामीत्यर्थः । तत्र दृष्टान्तः—सविता सूर्यो नक्षत्राणां प्रभामिव ॥ २० ॥

गो० टी०—एवं रामं पलाययित्वा तस्य सेनां हनिष्यामीत्याह—तच्चेति । आदास्ये खण्डयिष्ये । " दो, अवखण्डने " इति धातुः ॥ २० ॥

२१ ] ति० टी०—युधा सङ्ग्रामेण न शक्यः । जेतुमिति शेषः । वैश्रवणेन पालितेत्यनेन पुष्पकवल्लङ्कापि भगवता कुबेराय दत्तेति सूचितम् ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

रा० टी०—नेति । युधा जेतुमिति शेषः वासवादिनाऽहं न शक्योऽस्मि अत एव वैश्रवणेन कुबेरेण पालिता इयं लङ्का मया निर्जिता ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

गो० टी०—देवानामप्यजय्योऽस्मि कथं मनुष्यादीनां जय्यो भविष्यामीत्याशयेनाह—न वासवेनेति । सहस्रचक्षुषेति तस्याभिमानातिशयोक्तिः । युधा युद्धेन न शक्योऽस्मि । जेतुमिति शेषः । उत्तरार्धेन कुबेरेणापि न जेतुं शक्य इति सिद्धम् । अत्र वंशस्थवृत्तम् ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

१ ] ति० टी०—अथ विभीषणः प्रहस्तादिवचोऽतिदुर्मन्त्र इत्याह—निशाचरेन्द्रस्येति । वाक्यं रावणस्य गर्जितानि कुम्भकर्णस्य अर्थयुक्तं वास्तवार्थम् ॥ १ ॥

रा० टी०—रावणं प्रति विभीषणोक्तिमाह—निशाचरेन्द्रस्येति । राक्षसराजमुख्यं रावणम् अर्थयुतं अर्थप्रापकमत एव हितं वाक्यं विभीषण उवाच ॥ १ ॥

गो० टी०—एवं दुर्मन्त्रिभिः प्रभुचित्तानुसारेण कथिते तदसहमानो विभीषणः परमार्थं हितमुपदिशति—निशेति । स कुम्भकर्णस्येत्यत्र स इति छेदः । गर्जितानि निरर्थकवचनानि । अर्थयुक्तं कर्तव्यार्थबोधयुक्तम् ॥ १ ॥

२ ] ति० टी०—वृत इति । अहिमध्यदेहोऽत्र भोगबाह्वन्तरं हृदयभाग एव भोगराशिः शरीरपरिणाहो यस्य सः चिन्तैव विषं यस्य शोभनं स्मितमेव तीक्ष्णं दंष्ट्रा यस्य अनुचितकृत्यदर्शनादिजं स्मितम् । तस्याः पञ्चाङ्गुल्य एव पञ्च शिरांसि यस्य स चासावतिकायश्च एवंभूतः सीतामहाहिस्तव केन वृतो बद्धः । कण्ठ इति शेषः । यद्वा केन हेतुना वृतः गृहीत इत्यर्थः ॥ २ ॥

रा० टी०—तदाकारमाह—वृत इत्यादिभिः । बाह्वोरन्तरं हृदयदेश एव भोगराशिः शरीरपरिणाहो यस्य चिन्तैव विषं यस्य स्मितं रावणानुचितकृत्यहेतुक ईषद्धास एव दंष्ट्रा यस्य पञ्चाङ्गुल्य एव पञ्च शिरांसि यस्य स एवातिकायः सीतामहाहिः तव त्वया केन हेतुना वृतः स्वीकृतः तदपहरणमतीवानुचितमित्यर्थः ॥ २ ॥

गो० टी०—अदेया न यथा सीतेति रावणवचनं प्रतिवक्तुं सीतामहित्वेन रूपयति—वृत इति । बाह्वन्तरं वक्षः तदेव भोगराशिः फणापरिणाहो यस्य स तथा यद्वा बाह्वन्तरं वक्षसि भोगराशिः सौख्यसंपत् सैव बाह्वन्तरभोगराशिः तिर्यक्प्रसारितयोर्बाह्वोर्यदन्तरं तत्प्रमाणो भोगराशिः शरीरपरिणाहो यस्येत्याद्यया रूपकनिर्वाहः । चिन्तैव विषं विरो-

यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः ।
दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥ ३ ॥
यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् ।
वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥ ४ ॥
न कुम्भकर्णेन्द्रजितौ च राजंस्तथा महापार्श्वमहोदरौ वा ।
निकुम्भकुम्भौ च तथातिकायः स्थातुं समर्थौ युधि राघवस्य ॥ ५ ॥
जीवंस्तु रामस्य न मोक्ष्यसे त्वं गुप्तः सवित्राप्यथवा मरुद्भिः ।
न वासवस्याङ्कगतो न मृत्योर्नभो न पातालमनुप्रविष्टः ॥ ॥ ६ ॥
निशम्य वाक्यं तु बिभीषणस्य ततः प्रहस्तो वचनं बभाषे ।
न नो भयं विद्म न दैवतेभ्यो न दानवेभ्योऽप्यथवा कदाचित् ॥ ७ ॥

धि प्राणहरत्वात् तत् यस्य सः चिन्ताविषः सुस्मितं स्वाभाविकमन्दस्मितम् तदेव शुभत्वेन कामुकहृदयहारित्वेन च तीक्ष्णा दंष्ट्रा यस्य सः सुस्मिततीक्ष्णदंष्ट्रः चिन्तावशेन बदनोपधानीकृतपाणेः पञ्चाङ्गुल्य एव पञ्चशिरोरूपातिकायो यस्य सः पञ्चाङ्गुलीपञ्चशिरोतिकायः सीतामहाहिः स्पर्शमात्रेण मारकाहिः तव त्वया केन हेतुना वृतः सर्वथा त्यक्तव्य एवेति भावः राजन्निति सान्त्वोक्तिः ॥ २ ॥

३–५ ] ति० टी०–वलीमुखेति वानरनाम । पर्वतकूटमात्राः पर्वतशिखरप्रमाणाः ॥ ३–५ ॥

रा० टी०–यावदिति । वलीमुखादयः यावल्लङ्कां न समभिद्रवन्ति तावन्मैथिली प्रदीयतां वलीमुख इति वानरविशेषाणां नाम पर्वतकूटमात्राः गिरिशिखरप्रमाणाः किंच वलीयुक्तानि मुखानि येषां तदित्यपि विशेषणमेव अस्मिन्पक्षे वानराणामिति विशेष्यमध्याहार्यम् ॥ ३ ॥

गो० टी०–न केवलं तवैवानर्थहेतुः सीता किंतु तावकीनस्य सर्वस्येत्याह–यावदिति । " यावत्पुरानिपातयोर्लट् " इति लट् । तावदिति शेषः ॥ ३ ॥

रा० टी०–यावदिति । रामेरिता बाणाः राक्षसपुङ्गवानां शिरांसि यावन्न गृह्णन्ति तावत्प्रदीयताम् ॥ ४ ॥

गो० टी०–यावदिति । स्पष्टम् ॥ ४ ॥

गो० टी०–भित्त्वेति । तावच्छब्दो वाक्यालंकारे । प्राणान्ते भवाः प्राणान्तिकाः प्राणहारिण इत्यर्थः । साक्षाद्राजानं प्रत्युक्तेरयुक्तत्वात् प्रहस्तं प्रति प्राणहरत्वोक्तिः । विकत्थसे आत्मानं श्लाघसे । "कत्थ, श्लाघायाम्" इति धातुः । ( रामानुजार्यैः पञ्चदशत्वेन व्याख्यातोयं श्लोकः ) यावन्न गृह्णन्ति शिरांसि बाणा इत्यतः परं केषुचित् कोशेषु दृश्यमानः भित्त्वा न तावत् प्रविशन्ति कायमिति श्लोकः प्रहस्तोद्देशेन प्रवृत्तस्य तीक्ष्णा न तावदित्यस्यानन्तरं द्रष्टव्यः अन्यथा प्रकरणविरोधः स्यादिति ॥ ५ ॥

रा० टी०–नेति । कुम्भकर्णप्रभृतयः तदा रावणप्रहारसमये राघवस्य युधि स्थातुं न समर्थाः ॥ ५ ॥

गो० टी०–तर्हि कुम्भकर्णादयो रामं वारयिष्यन्तीत्यत्राह–न कुम्भकर्णेति । इदमपि प्रहस्तं प्रति वचनम् ॥ ६ ॥

६ ] ति० टी०–जीवंस्तु रामस्य न मोक्ष्यसे । संनिधिं प्राप्येति शेषः ॥ ६ ॥

रा० टी०–जीवन्निति । रामस्य संग्रामं प्राप्येति शेषः सवित्रादिभिः गुप्तो रक्षितोऽपि त्वं न मोक्ष्यसे बिभीषणस्य वाक्यं निशम्य प्रहस्तो बभाषे ॥ ६ ॥

गो० टी०–रामः असामर्थ्यं विशिष्य दर्शयति–जीवन्निति । रामस्य रामात् विभक्तिव्यत्ययः । जीवन्न विमोक्ष्यसे प्राणपर्यन्तं न त्वां रामो विमोक्ष्यतीति भावः अङ्कगतोपि पुत्रभावेनाङ्कस्थितोपीत्यर्थः मृत्योरित्यत्रापि अङ्कगत इत्यनुषज्यते नभः पातालं वाऽनुप्रविष्टः न मोक्ष्यस इति योजना ॥ ७ ॥

७ ] ति० टी०–दैवतेभ्यो नोऽस्माकं भयमिति वयं न विद्म ॥ ७ ॥

रा० टी०–तदाकारमाह–नेति । दैवतादिभ्यः नोऽस्माकं भयं न अतो नो भयं न रामादिति शेषः अत एवाधिकारस्य सार्थक्यम् ॥ ७ ॥

गो० टी०–निशम्येति । अस्माक कुतश्चित् भयं न विद्म विसर्गलोपश्छान्दसः । एवं सामान्येनोक्त्वा विशिष्य दर्शयति–न दैवतेभ्य इत्यादिना । भयं न विद्म इति सर्वत्रान्वेति ॥ ८ ॥

१ न राजेति गो. पाठः । २ तदेति रा. पाठः । ३ न सक्ता इति गो. पाठः । ४ अर्धमेतत् रा. नास्ति । ५ अथवा कुतश्चिदिति गो. पाठः ।

न यक्षगन्धर्वमहोरगेभ्यो भयं न संख्ये पतगोरगेभ्यः ।
कथं नु रामाद्भविता भयं नो नरेन्द्रपुत्रात्समरे कदाचित् ॥ ८ ॥
प्रहस्तवाक्यं त्वहितं निशम्य विभीषणो राजहितानुकाङ्क्षी ।
ततो महार्थं वचनं बभाषे धर्मार्थकामेषु निविष्टबुद्धिः ॥ ९ ॥
प्रहस्त राजा च महोदरश्च त्वं कुम्भकर्णश्च यथार्थजातम् ।
ब्रवीत रामं प्रति तन्न शक्यं यथा गतिः स्वर्गमधर्मबुद्धेः ॥ १० ॥
वधस्तु रामस्य मया त्वया च प्रहस्त सर्वैरपि राक्षसैर्वा ।
कथं भवेदर्थविशारदस्य महार्णवं तर्तुमिवाप्लवस्य ॥ ११ ॥
धर्मप्रधानस्य महारथस्य इक्ष्वाकुवंशप्रभवस्य राज्ञः ।
पुरोऽस्य देवाश्च तथाविधस्य कृत्येषु शक्तस्य भवन्ति मूढाः ॥ १२ ॥
तीक्ष्णा न तावत्तव कङ्कपत्रा दुरासदा राघवविप्रमुक्ताः ।
भित्त्वा शरीरं प्रविशन्ति बाणाः प्रहस्त तेनैव विकत्थसे त्वम् ॥ १३ ॥

८-९ ] ति० टी०–संख्ये युद्धे ॥ ८ ॥ ९ ॥

गो० टी०–न यक्षेति । पतगोत्तमेभ्यः गरुडेभ्यः नरेन्द्रपुत्रात् मानुषत्वादित्यर्थः । कथं नो भवितेत्यपि ध्वन्यते ॥ ९ ॥

रा० टी०–प्रहस्तेति । धर्मादिषु निविष्टा बुद्धिर्यस्य स विभीषणः प्रहस्तवाक्यं निशम्य बभाषे ॥ ८ ॥

गो० टी०–प्रहस्तेति । महात्मा महाबुद्धिः । धर्मार्थकामेषु । स्वामिन इति शेषः ॥ १० ॥

१० ] ति० टी०–प्रहस्तेति । यथा यादृशमर्थजातं रामं प्रति यूयं ब्रवीत ब्रूत तन्न शक्यम् । कर्तुमिति शेषः यथाऽधर्मबुद्धेः स्वर्गमुद्दिश्य गतिरशक्या ॥ १० ॥

रा० टी०–तदाकारमाह–प्रहस्तेत्यादिभिः । हे प्रहस्त ! रामं प्रति यथा येन प्रकारेण यदर्थजातं स्वार्थसमूहं राजादयो यूयं ब्रवीत ब्रूत तत् न शक्यं भवद्भिः कर्तुमिति शेषः । तत्र दृष्टान्तः–स्वर्गं प्रति अधर्मबुद्धेर्गतिर्यथा ॥ ९ ॥

गो० टी०–प्रहस्तेति । महोदरेण पूर्वमनुक्तमप्यनेनावगम्यते पूर्वमुक्तमिति । अर्थजातं यथा ब्रवीथ तथा रामं प्रति तत्कार्यजातं न शक्यम् । कर्तुमिति शेषः । अधर्मबुद्धेः स्वर्गं प्रति गतिर्यथा न शक्या तथैवेत्यर्थः ॥ ११ ॥

११ ] ति० टी०–तर्तुम् । शक्तिरिति शेषः ॥ ११ ॥

रा० टी०–वध इति । अर्थविशारदस्य रामस्य वधस्त्वदादिभिः कथं भवेत् न भवेदित्यर्थः । तत्र दृष्टान्तः–अप्लवस्य महार्णवं तर्तुं तरीतुं शक्तिरिव शक्तिरिति शेषः ॥ १० ॥

गो० टी०–अशक्यत्वमेव विशदयति–वधस्त्विति । अर्थविशारदस्य कार्यदक्षस्य रामस्य वधः । अप्लवस्य नौरहितस्य महार्णवं तर्तुं तरितुम् । शक्तिरिति शेषः । शक्तिरिव कथं भवेत् न कथंचिदपि संभवतीत्यर्थः । एतेन वध्यौ दशरथात्मजावित्युक्तस्योत्तरमुक्तम् ॥ १२ ॥

१२ ] ति० टी०–तथाविधस्योक्तस्वभावस्य । कृत्येषु रणमुखस्थसकललोकसंहारकृत्येषु शक्तस्य पुरो युधि देवाश्च देवा अपि विमूढा भवन्ति ॥ १२ ॥

रा० टी०–धर्मेति । इक्ष्वाकुवंशप्रभवस्य अत एव तथाविधस्य इक्ष्वाकुसदृशस्य कृत्येषु शक्तस्य अस्य रामस्य पुरोऽग्रे देवा अपि मूढाः भवन्ति ॥ ११ ॥

गो० टी०–उक्तमर्थं कैमुतिकन्यायेन दृढयति–धर्मेति । धर्मप्रधानस्य अप्यहं जीवितं जह्यामित्युक्तरीत्या धर्मविरोधे तृणीकृतसकलेतरपुरुषार्थस्य महारथस्य रणे आत्मानं सारथिं च रक्षन् शत्रुसंहारक्षमो महारथः तस्य । 'आत्मानं सारथिं चाश्वान् रक्षन् युद्ध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः' इत्युक्तेः । इक्ष्वाकुवंशप्रभवस्य जन्मसिद्धनिरतिशयपराक्रमस्य राज्ञः सकलप्रकृतिमण्डलरञ्जकस्य तथाविधस्य विराधकबन्धवालिप्रभृतिवधविदितवैभवस्य शक्तस्य कार्यदक्षस्य रामस्य कृत्येषु रणव्यापारेषु विषये देवाश्च मूढा भवन्ति अविदिततदीयव्यापारा भवन्तीत्यर्थः किं पुनर्भवादृशा इति भावः ॥ १३ ॥

१३ ] ति० टी०–यावत्ते कायं भित्त्वा बाणाः पुनस्तदिषुधिं न प्रविशन्ति तेनैव हेतुना तावद्धे प्रहस्त, त्वं विकत्थसे वृथात्मश्लाघां करोषि । रावणस्य पुरस्तादिति शेषः ॥ १३ ॥

रा० टी०–तीक्ष्णा इति । राघवविप्रमुक्ताः तीक्ष्णाः बाणाः तव शरीरं भित्त्वा यावत्कालं येन हेतुना न प्रविशन्ति तावत् तेनैव हेतुना त्वं विकत्थसे ॥ १२ ॥

गो० टी०–तीक्ष्णा इति । तीक्ष्णाः तीक्ष्णाग्राः । कङ्क-

१ उत्तमेभ्य इति गो. पाठः । २ अर्थमेतत् रा. नास्ति । ३ महात्मेति गो. पाठः । ४ ब्रवीथेति गो. पाठः । ५ वेति गो. पाठः । ६ प्रहस्तेति गो. पाठः ।

[1]भित्त्वा न तावत्प्रविशन्ति कायं प्राणान्तिकास्तेऽशनितुल्यवेगाः ।
शिताः शरा राघवविप्रमुक्ताः प्रहस्त तेनैव विकत्थसे त्वम् ॥ १४ ॥
न रावणो नातिबलस्त्रिशीर्षो न कुम्भकर्ण[2]स्य सुतो निकुम्भः ।
न चेन्द्रजिद्दाशरथिं प्रसोढुं त्वं वा रणे शक्रसमं [3]समर्थः ॥ १५ ॥
देवान्तको वापि नरान्तको वा तथातिकायोऽतिरथो महात्मा ।
अकम्पनश्चा[4]पि समानसारः स्थातुं न शक्ता युधि राघवस्य ॥ १६ ॥
अयं च[5] राजा व्यसनाभिभूतो मित्रैरमित्रप्रतिमै[5]र्भवद्भिः ।
अन्वास्यते राक्षसनाशनार्थे तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १७ ॥
अनन्तभोगेन सहस्रमूर्ध्ना नागेन भीमेन महाबलेन ।
बलात्परिक्षिप्तमिमं भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ॥ १८ ॥
यावद्धि केशग्र[6]हणात्सुहृद्भिः समेत्य सर्वैः परिपूर्णकामैः ।
निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ॥ १९ ॥

तिभेदनक्षमा इत्यर्थः । नताः नतपर्वाणः ऋजव इत्यर्थः सपदि भित्त्वा निर्गन्तुं क्षमा इति भावः । कङ्कपत्राः कङ्कानां पत्राण्येव पत्राणि येषां ते तथोक्ताः कङ्कपक्षनिबद्धत्वेन महावेगा इत्यर्थः अत एव दुरासदाः ॥ १४ ॥

१४ ] ति० टी०—प्राणान्तिकाः प्राणान्तपीडाकरास्ते कायं भित्त्वा यावन्न प्रविशन्तीपुर्धि तावद्विकत्थसे ॥ १४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—भित्त्वेति । यावच्येन हेतुना प्राणान्तिकाः प्राणान्तकराः राघवविप्रमुक्ताः शराः ते कायं भित्त्वा न प्रविशन्ति तेनैव हेतुना त्वं विकत्थसे ॥ १३ ॥

१५-१६ ] ति० टी०—त्रिशीर्षस्त्रिशिराः । त्वं वेति प्रहस्तनिर्देशः ॥ १५ ॥ १६ ॥

रा० टी०—नेति । रणे दाशरथिं प्रसोढुं रावणप्रभृतयो न समर्थाः ॥ १४ ॥

गो० टी०—न रावण इति । रावणादयः सर्वेऽपि न समर्था इति योज्यम् ॥ १५ ॥

रा० टी०—देवेति । देवान्तकप्रभृतयः राघवस्य युधि स्थातुं न शक्ताः ॥ १५ ॥

गो० टी०—देवान्तक इति । अतिरथः अतिशयितरथः । महात्मा महाशरीरः । अद्रिसमानसारः गिरितुल्यबलः । 'सारो बले स्थिरांशे च' इत्यमरः । देवान्तकादयो रावणपुत्राश्च राघवस्य युधि स्थातुं न शक्ताः ॥ १६ ॥

१७ ] ति० टी०—व्यसनैः कामव्यसनैरभिभूतः । अमित्रप्रतिमैः शत्रुतुल्यैः । राक्षसनाशनार्थे राक्षसकुलनाशनिमित्तमन्वास्यते सेव्यते ॥ १७ ॥

रा० टी०—अयमिति । व्यसनाभिभूतः अहं सर्वश्रेष्ठ इत्यादिव्यसनैः पराभूतः अत एव असमीक्ष्यकारी अयं रावणः राक्षसनाशनार्थं अमित्रप्रतिमैः रिपुतुल्यैः मित्रैर्भवद्भिः अन्वास्यते सेव्यते ॥ १६ ॥

गो० टी०—अयमिति । अमित्रप्रतिमैः कार्यतो रिपुतुल्यैः नाम्ना मित्रैः भवद्भिः त्वत्प्रमुखैः व्यसनाभिभूतः सप्तव्यसनैराक्रान्तः प्रकृत्या तीक्ष्णः उग्रः असमीक्ष्यकारी अविमृश्यकारी अयं राजा राक्षसनाशनार्थम् अन्वास्यते अनुस्रियते । अस्य राजत्वासमीक्ष्यकारित्वव्यसनाभिभूतत्वान्यपुरस्कृत्य तीक्ष्णत्वमेव पुरस्कुर्वन्तो भवन्तोऽभिभवन्ति । सर्वराक्षसविनाशं न जानन्तीति भावः । सप्तव्यसनस्वरूपमुक्तं कामन्दकेन—'वाग्दण्डयोस्तु पारुष्यमर्थदूषणमेव च । पानं स्त्री मृगया द्यूतं व्यसनं सप्तधा प्रभोः' इति ॥ १७ ॥

१८ ] ति० टी०—अनन्तभोगेनापरिच्छिन्नदेहबलेन परिक्षिप्तं पाशेनेव वेष्टितम् । रघुनाथेन वैरकरणं महासर्पवेष्टनमिवेति निदर्शनालंकारोऽत्र व्यङ्ग्यः ॥ १८ ॥

रा० टी०—अनन्तेति । अनन्तः अपरिच्छिन्नो भोगः शरीरबलं यस्य तेन सहस्रमूर्ध्ना महाबलेन नागेन बलात्परिक्षिप्तं संवेष्टितमिमं रावणमुत्क्षिप्य बन्धनाद्बहिष्कृत्य विमोचयतु रामेण वैरसंपादनस्य महासर्पवेष्टनत्वेन वर्णनमिति निदर्शनालंकारः ॥ १७ ॥

गो० टी०—एवं प्रहस्तप्रमुखान् मन्त्रिमुख्यान्निर्भर्त्स्य संप्रति कर्तव्यमुपदिशति—अनन्तेति । अनन्तभोगेन अपरिच्छिन्नकायेन सहस्रमूर्ध्ना अत एव भीमेन न केवलं भीमत्वमात्रं महाबलेन नागेन शेषेणेत्यर्थः परिक्षिप्तं परिवेष्टितम् । रामद्वेषो महासर्पवेष्टनतुल्य इति भावः ॥ १८ ॥

१९ ] ति० टी०—यावदिति वाक्यालंकारे केशग्रहणात्केशग्रहणपर्यन्तमप्युल्लङ्घितं कृत्वा निगृह्य राजा रक्षितव्यः भूतैर्गृहीतः पुमांस्तदाप्तैरिव ॥ १९ ॥

१ श्लोकोऽयं पञ्चमस्थाने गो. पाठे । २ कर्णोऽस्येति गो. पाठः । ३ समर्था इति गो. पाठः । ४ अद्रीति गो. पाठः । ५ हीति गो. पाठः । ६ ग्रहणमिति गो. पाठः ।

सुवारिणा राघवसागरेण प्रच्छाद्यमानस्तरसा भवद्भिः ।
युक्तस्त्वयं तारयितुं समेत्य काकुत्स्थपातालमुखे पतन्सः ॥ २० ॥
इदं पुरस्यास्य सराक्षसस्य राज्ञश्च पथ्यं ससुहृज्जनस्य ।
सम्यग्घि वाक्यं स्वमतं ब्रवीमि नरेन्द्रपुत्राय ददातु मैथिलीम् ॥ २१ ॥
परस्य वीर्यं स्वबलं च बुद्ध्वा स्थानं क्षयं चैव तथैव वृद्धिम् ।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या वदेत्क्षमं स्वामिहितं स मन्त्री ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

रा० टी०—यावदिति । यावत्साकल्येन परिपूर्णकामैर्भवद्भिर्भूतैर्गृहीत इव राजा रावणः केशग्रहणात् परिरक्षितव्यः॥१८॥

गो० टी०—ननु ममयोऽतीतः किं कुर्म इत्यत्राह—यावदिति । परिपूर्णकामैः अवाप्तसर्वाभीष्टैरित्यर्थः राजतो लब्धकामैः राजकार्यंऽवश्यं यतितव्यमिति भावः सर्वैः सुहृद्भिः समेत्य ऐकमत्यं प्राप्येति यावत् राजा भीमबलैः भूतैः गृहीतः पुरुष इव निगृह्य बलात्कृत्य यावत्केशग्रहणात् शत्रुभिः केशग्रहणपर्यन्तम् परिरक्षितव्यः । आकेशग्रहणान्मित्रमकृत्येभ्यो निवर्तयेदिति प्रसिद्धिं दर्शयति हिशब्दः । यद्वा आकेशग्रहणान्निगृह्य परिरक्षितव्यः अकार्यप्रवृत्तोऽयं राजा केशेष्वाकृष्यापि निवारणीय इत्यर्थः ॥ १९ ॥

२० ] ति० टी०—सुवारिणा सुचरित्ररूपवारिमता राघवसागरेण प्रच्छाद्यमानो निमज्ज्यमानः, पुनश्च काकुत्स्थरूपपातालमुखे पतन्सोऽयं राजा भवद्भिः समेत्य तारयितुं युक्तः॥२०

रा० टी०—सुवारिणेति । सुवारिणा वियोगजनितदुःखरूपजलवता राघवसागरेण प्रच्छाद्यमानः काकुत्स्थरूपपातालमुखे पतंश्च सोऽयं रावणः समेत्य एकीभूय तारयितुं बहिष्कर्तुं युक्तः ॥ २० ॥

गो० टी०—संहारिणेति[1] । संहारिणा विनाशकेन राघवसागरेण लक्ष्मणसमुद्रेण प्रच्छाद्यमानः ततः काकुत्स्थपातालमुखे रामवडवाग्निमुखे पातालं वडवाग्नौ चेति नानार्थरत्नमाला । पतन् सोयं राजा तरसा आरम्भकाल एव तारयितुं भवद्भिर्हस्तप्रदानेनोत्तारयितुम् युक्तः अर्हः अत्र प्रच्छाद्यमानः पतन्निति प्रयोगौ वर्तमानसामीप्यात् । लक्ष्मणः प्रथमं ग्रहीष्यति ततो रामः अतो न जीवितुं शक्यम् अतः प्रथममेव राजा निवर्तनीय इति भावः । सुवारिणेति पाठान्तरम् । तत्र सागरपक्षे सुजलेनेत्यर्थः । राघवपक्षे वारः स्यन्दनः शोभनो वारः सुवारः सोस्यास्तीति सुवारी तेन । मर्यादिदिवसे छन्दे कुन्दवृक्षे परिक्रमे । मद्यपात्रे स्यन्दने च वारो वरुणसेनयोरिति निघण्टुः ॥ २० ॥

२१ ] ति० टी०—मैथिलीम् रावण इति शेषः ॥ २१ ॥

रा० टी०—इदमिति । मैथिलीं नरेन्द्रपुत्राय रामाय ददातु इदमेव पुरादेः सम्यक् पथ्यं स्वमतं वाक्यं ब्रवीमि ॥ २० ॥

गो० टी०—मा दिशतु रामाय राजा वैदेहीं वयमेव बलाद्धि ददामः[2] यदि हितमाकाङ्क्षितमित्याह—इदमिति । स्वमतं स्वस्य सिद्धान्तभूतम् । इदंशब्दार्थमाह नरेन्द्रेति[3] ॥२१॥

२२ ] ति० टी०—स्थानं बलादेर्यथापूर्वमुपचयापचयराहित्येन स्थितिः । तदपेक्षयापचयः क्षयः तत उपचयो वृद्धिः प्रकृते हि परस्य वानरसहायतया संपदुपचयो वर्तते, अस्माकं तु खरनाशलङ्कादाहादिकृतोऽपचयः, एतत्सर्वं बुद्ध्यानुमृश्य स्वामिहितं वदेत्स मन्त्री न यूयमित्यर्थः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

रा० टी०—स्वोक्तेऽर्थे मन्त्रिणो राजानं नियोजयन्त्विति मन्त्रिधर्ममाह—परस्येति । परस्य रिपोः वीर्यं स्वबलं च स्वपक्षे अपिना रिपुपक्षे च स्थानं योग्यदेशं च क्षयं क्षयकालं वृद्धिं वृद्धिकालं च बुद्ध्या अनुमृश्य विचार्य बुद्ध्वा च क्षमं योग्यं स्वामिहितं यो वदेत् स एव मन्त्री एतेन स्वमन्त्रित्वरक्षणार्थं हितं भवद्भिरुपदेष्टव्यमिति सूचितम् ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

गो० टी०—वयमपि सम्यगेव ब्रूमः शत्रुर्हन्तव्य इति तत्राह—परस्येति । मन्त्री परस्य शत्रोः वीर्यं स्वबलं स्वराजबलं च बुद्ध्वा स्वराजपरराजयोर्बलं परीक्ष्येत्यर्थः । तथैव बलाबलपरीक्षावत् परस्य स्थानं संपदां साम्यम् क्षयं वृद्धिं च बुद्ध्वा तथा परस्येव स्वपक्षेपि बुद्ध्या सूक्ष्मदृष्ट्या स्थानक्षयवृद्धीः अनुमृश्य आलोच्य । क्षमं युक्तं स्वामिहितं च वदेत् । परस्य क्षये स्ववृद्धौ यानम् परस्य वृद्धौ स्वस्य क्षये संधिं परस्य स्वस्य च साम्ये आसनं च स्वामिने कथयेदित्यर्थः । अत्र प्रकृते परस्य वृद्धेः रावणस्य नगरदहनतनयनाशादिना क्षयस्य दर्शनाच्च सीताप्रदानेन संधिरेव साधुरिति मन्त्रिभिर्भवत्स्वामिने निवेदनीयमिति भावः ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

---

१ संहारिणेति गो. पाठः । २ ददाम पत्नीमिति गो. पाठः । ३ चेति गो. पाठः ।

## पञ्चदशः सर्गः ।

एवं विभीषणोक्तमाकर्ण्य सगर्वं भाषमाणमिन्द्रजितं यथार्थकठोरशब्दैर्धिक्कृत्य राघवप्रसादनमेव प्राप्तकालं हितकरं चेत्यानुदिशति विभीषणः ।

बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैर्ऋतयूथमुख्यः ॥ १ ॥
किं नाम ते तात कनिष्ठ वाक्यमनर्थकं[1] वै बहुभीतवच्च ।
अस्मिन्कुले योऽपि भवेन्न जातः सोऽपीदृशं नैव वदेन्न कुर्यात् ॥ २ ॥
सत्त्वेन वीर्येण पराक्रमेण धैर्येण शौर्येण च तेजसा च ।
एकः कुलेऽस्मिन्पुरुषो विमुक्तो विभीषणस्तात कनिष्ठ एषः ॥ ३ ॥
किं नाम तौ मानुषराजपुत्रावस्माकमेकेन हि राक्षसेन ।
सुप्राकृतेनापि निहन्तुमेतौ शक्यौ कुतो भीषयसे स्म भीरो ॥ ४ ॥

१ ] ति० टी०–बृहस्पतेः गुरुणेत्यर्थः यत्नेन निशम्य दुःखेन श्रुत्वा । महात्मा महामनाः ॥ १ ॥

रा० टी०–विभीषणं प्रति इन्द्रजितो वचनमाह–बृहस्पतेरित्यादिभिः। विभीषणस्य वचो निशम्य नैर्ऋतयूथमुख्य इन्द्रजित् बभाषे ॥ १ ॥

गो० टी०–अथेन्द्रजितो दुर्बुद्धिमुपन्यस्य दूषयति—बृहस्पतेरिति । ततो विभीषणवचनानन्तरम् । तत्र राक्षसेषु यत्नेन निशम्य । असह्यतयेति भावः ॥ १ ॥

२ ] ति० टी०–तातकनिष्ठेत्यसमस्तम् । भीतवद्भीतस्येवानर्थकमनुपादेयं वाक्यं किंनाम कस्मादुच्यते । अस्मिन्कुले पौलस्त्यकुले यो जातो न भवेत्, अपि तु सहजदुर्बलत्वादिमति मनुष्यादिकुले । सोऽपीदृशं वचो न वदेदीदृशं च न कुर्यात् । करोतेः क्रियासामान्यवचनत्वान्न चिन्तयेदित्यर्थः । एवं च हीनजातेरपि हीनस्तव व्यापार इति भावः ॥ २ ॥

रा० टी०–तदाकारमाह—किमित्यादिभिः । हे तात ! कनिष्ठ बहुभीतवत् बहुभीतिबोधकमनर्थकं ते वाक्यं किं कथम् अयुक्तमेतदित्यर्थः । तत्र हेतुः अस्मिन् पौलस्त्यसंबन्धिनि कुले यो जातः उत्पन्नो न भवेत् दुर्बलकुलेऽप्युत्पन्न इत्यर्थः सोऽपि ईदृशं बलं भवद्वचनसदृशं नैव वदेत् न कुर्यात् किंच अस्मिन् कुले यो जातो भवेत् स न वदेत् न कुर्यात् वारत्रयं निषेधोऽत्यन्तदार्ढ्याय ॥ २ ॥

गो० टी०–किन्नामेति । हे तात ! ते कनिष्ठवाक्यम् अनर्थकं प्रयोजनशून्यम् अनुष्ठातुरभावादिति भावः । बहुभीतवत्स्रुभीतिमत् । किंनाम कीदृशं जुगुप्सितमित्यर्थः । नामशब्दः कुत्सनद्योतकः । नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सन इति वैजयन्ती । तदेवोपपादयति—अस्मिन्निति । अप्योऽपिशब्दः प्रश्ने । अपि नतु । अस्मिन् कुले पौलस्त्यवंशे यो जातो न भवेत् . अन्यस्मिन् कुले यो जातः सोपि ईदृशं न वदेत् न कुर्यात् ईदृग्वचनार्थं नानुतिष्ठेत् । ईदृग्वचनं वक्तृश्रोत्रोरुभयोरपि निन्दनीयम । यद्वा हे तात कनिष्ठ । ते वाक्यं किं नाम । जुगुप्सितमित्यर्थः । जुगुप्सितत्वमेवाह—अस्मिन्निति । न कुर्यात् न चिन्तयेत् । अत्र करोतिश्चिन्ताक्रियायां वर्तते । मुख्यस्य करणार्थस्यासंभवात् सर्वधात्वर्थेषु करोत्यर्थस्य संभवाच्च ॥ २ ॥

३ ] ति० टी०–तदेवाह—सत्त्वेनेति । सत्त्वं बलम्, वीर्यं पराक्रमणशक्तिः, पराक्रमस्तत्कार्यम्, शौर्यं रणादपराङ्मुखत्वम्, धैर्यं तत्कारणं स्थैर्यम्, तेजः स्मृत्या भयंकरत्वम् एतैर्गुणैरेको विभीषण एव तातस्य कनिष्ठोऽस्मिन्कुले मुक्तः ॥ ३ ॥

रा० टी०–सत्त्वेनेति । सत्वादिना विमुक्तस्त्यक्तः एकः तातकनिष्ठः एषविभीषण एव ॥ ३ ॥

गो० टी०–एतद्वाक्यमेतस्त्वभावस्य सदृशमित्याह—सत्त्वेनेति । सत्त्वेन बलेन वीर्येण प्रभावेण वीर्यं बले प्रभावे चेत्यमरः । पराक्रमेण उद्योगेन शौर्योद्योगौ पराक्रमावित्यमरः। शौर्येण साहसिक्येन धैर्येण स्थैर्येण तेजसा गर्वेण पराभिभवासहनेनेति यावत् ॥ ३ ॥

४ ] ति० टी०–हे भीरो ! प्राकृतेनैकेनापि राक्षसेन रणे तौ राजपुत्रौ हि यतो निहन्तुं शक्यौ, अतस्तौ किंनाम गृहीत्वास्मान्कुतो भीषयसे व्यर्थमेव । न तावता बिभीम इत्यर्थः ॥ ४ ॥

रा० टी०–किमिति । हे भीरो ! अस्माकं मध्ये सुप्राकृतेन लघुनेत्यर्थः एकेनापि राक्षसेन निहन्तुं शक्यौ यावेतौ मानुषराजपुत्रौ तौ किंनाम गणनार्हौ नेत्यर्थ अतः कुतः कस्माद्धेतोः भीषयस स्म ॥ ४ ॥

गो० टी०–एवं रावणं प्रत्युक्त्वा बिभीषणं निर्भर्त्सयति—किंनामेत्यादिना । राक्षसेति हीनसंबोधनमायहकृत्यम

१ नैव सुभीतवच्चेति गो. पाठः । २ राक्षसराजपुत्राविति गो. पाठः । ३ रणे निहन्तुमिति गो. पाठः ।

त्रिलोकनाथो ननु देवराजः शक्रो मया भूमितले निविष्टः ।
भयार्पिताश्चापि दिशः प्रपन्नाः सर्वे तदा देवगणाः समग्राः ॥ ५ ॥
ऐरावतो निःस्वनमुन्नदन्स निपातितो भूमितले मया तु ।
विकृष्य दन्तौ तु मया प्रसह्य वित्रासिता देवगणाः समग्राः ॥ ६ ॥
सोऽहं सुराणामपि दर्पहन्ता दैत्योत्तमानामपि शोककर्ता ।
कथं नरेन्द्रात्मजयोर्न शक्तो मनुष्ययोः प्राकृतयोः सुवीर्यः ॥ ७ ॥
अथेन्द्रकल्पस्य दुरासदस्य महौजसस्तद्वचनं निशम्य ।
ततो महार्थं वचनं बभाषे विभीषणः शस्त्रभृतां वरिष्ठः ॥ ८ ॥
न तात मन्त्रे तव निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः ।
तस्मात्त्वयाप्यात्मविनाशनाय वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९ ॥
पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥ १० ॥

तौ राजपुत्रौ किं नाम न किंचिदपि अतिदुर्बलावित्यर्थः । कुत इत्यत्राह—अस्माकमेकेनेति । अस्माकं मध्ये सुप्राकृतेन अतिक्षुद्रेणापि एकेन राक्षसेन एतौ निहन्तुं शक्यौ हि । अतः भीरो कुतोऽस्मान् भीषयसे स्वयं भीतोऽस्मान् भीषयसे नास्माकं किंचित् भयमिति भावः । भयाभावे पूर्ववृत्तं संवादयति—त्रिलोकेति । नन्वित्यामन्त्रणे । त्रिलोकनाथ इत्यैश्वर्यमुक्तम् देवराज इति सैन्यसामग्री दर्शिता मया हेतुना । भूमितले निविष्टः स्थितः । निवेशित इत्यर्थ इत्यन्ये । ऐरावत इति । उन्नदन् उद्घुष्यन् । विकृष्य उत्पाट्य । ताभ्यां सर्वे देवगणाः वित्रासिताः । हेतुभेदेन देवानां भयान्तरमत्रोक्तमिति न पुनरुक्तिः । स्ववृत्तप्रदर्शनफलमाह—सोऽहमिति । मनुष्ययोरिति देवासुरव्यावृत्तिः । प्राकृतयोरिति इन्द्रव्यावृत्तिः । नरेन्द्रात्मजयोरिति बाल्योक्तिः । कथं न शक्तोऽस्मि अतः कुतो भीषयसे इति पूर्वेणान्वयः ॥ ४–७ ॥

५–६] ति० टी०—तदेवाह—त्रिलोकेति । भूमितले निविष्टः स्वर्गात्प्रच्याव्य भूमौ बन्दीकृत्य स्थापितः । भयार्पिता भयमर्पितं येषु ते मद्दत्तभयाः सर्वे देवगणा दिशः प्रपन्नाः प्राप्ताः ॥५॥६॥

रा० टी०—तत्र विश्वासं संपादयितुं स्वपराक्रममाह—त्रिषु लोकेत्यादिभिः । मया शक्रो भूमितले निविष्टः प्रापितः तदा समग्राः स्वपुरोहितसहिताः सर्वे देवगणाः भयार्पिताः सन्तः दिशः प्रपन्नाः सर्वदिक्षु पलायिताः ॥ ५ ॥

रा० टी०—ऐरावत इति । उन्नदन् ऐरावतः निःस्वनं यथा भवति तथा दन्तौ विकृष्य उत्पाट्य मया भूतले निपातितः अत एव मया देवगणाः वित्रासिताः ॥ ६ ॥

७–८] ति० टी०—कथं न शक्तः निग्रह इति शेषः॥७॥८॥

रा० टी०—स इति । सुरादीनां दर्पहन्ता शोककर्ता सुवीर्योऽहं नरेन्द्रात्मजयोर्विनाशने इति शेषः कथं न शक्तः ॥ ७ ॥

रा० टी०—अथेति । महौजस इन्द्रजितः वचनं निशम्य विभीषणो बभाषे ॥ ८ ॥

गो० टी०—अथेति । इन्द्रकल्पस्येत्यादिविशेषणत्रयेण पूर्वोक्तस्य यथार्थत्वमुक्तम् । शस्त्रभृतां वरिष्ठ इत्यनेनाभीरुत्वमुक्तम् । महार्थमित्यनेन वक्ष्यमाणार्थस्येन्द्रजिता दुर्ज्ञेयत्वमुक्तम् ॥ ८ ॥

९ ] ति० टी०—हे तात पुत्र, तव मन्त्रे निश्चयो नास्ति कृत्याकृत्यविचारनिश्चयसामर्थ्यं नास्ति, यतस्त्वमद्याप्यविपक्वबुद्धिरप्राप्तज्ञानपरिपाकचित्तो बाल एव । तस्मात्त्वयार्थहीनमनुपादेयमात्मविनाशनाय बहु विप्रलप्तमेकेनापि हन्तुं शक्य इति वृथा प्रलपितम् ॥ ९ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । हे तात त्वं बालः अत एव अविपक्वबुद्धिः अत एव मन्त्रे तव निश्चयो नास्ति तस्मादेव आत्मविनाशाय अर्थहीनं बहुवचो विप्रलप्तम् ॥ ९ ॥

गो० टी०—न तातेति । अनेन निकृष्टवयस्त्वमुक्तम् । बालत्वेपि कस्यचित्सुमतिः संभवति सापि नास्तीत्याह—अद्यापीति । अविपक्वबुद्धिः अपरिणतबुद्धिः । निश्चयाभावं दर्शयति—तस्मादिति । विप्रलप्तं विप्रलपितम् ॥ ९ ॥

१० ] ति० टी०—हे इन्द्रजित्, पुत्रप्रवादेन पुत्रशब्देनोपलक्षितस्त्वं मित्रमुखो मित्रवदवभासमानो वस्तुतः शत्रुरेवासि । तदेवाह—यस्य रावणस्य राघवत ईदृशं विनाशं निशम्यापि मोहात्त्वमनुमन्यसे न वारयसि ॥ १० ॥

रा० टी०—पुत्रेति । यस्य रावणस्य राघवतो विनाशं निशम्य श्रुत्वा मोहाद्धेतोः त्वमनुमन्यसे तत्र संमतिं करोषि तस्य रावणस्य पुत्रप्रवादेन पुत्रशब्देन मित्रमुखः मित्रत्वेनाभासमानः शत्रुः त्वमसि ॥ १० ॥

१ शक्र इति गो. पाठः । २ विस्वरमिति गो. पाठः । ३ दातेति गो. पाठः । ४ द्यौति गो. पाठः ।

त्वमेव वध्यश्च सुदुर्मतिश्च स चापि वध्यो य इहानयत्त्वाम् ।
बालं दृढं साहसिकं च योऽद्य प्रावेशयन्मन्त्रकृतां समीपम् ॥ ११ ॥
मूढोऽप्रगल्भोऽविनयोपपन्नस्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा ।
मूर्खस्त्वमत्यन्तसुदुर्मतिश्च त्वमिन्द्रजिद्बालतया ब्रवीषि ॥ १२ ॥
को ब्रह्मदण्डप्रतिमप्रकाशानर्चिष्मतः कालनिकाशरूपान् ।
सहेत बाणान्यमदण्डकल्पान्समक्षमुक्तान्युधि राघवेण ॥ १३ ॥
धनानि रत्नानि सुभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् ।
सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ॥ १४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

गो० टी०–न केवलं स्वाज्ञानस्य स्वविनाश एव फलं किंतु पितृविनाशोऽपीत्याह–पुत्रेति । हे इन्द्रजित् त्वं पुत्रप्रवादेन पुत्रप्रसिद्ध्या । इत्थंभावे तृतीया । मित्रस्य मुखमिव मुखं यस्य सः तथोक्तः । मित्रवद्भासमान इत्यर्थः । शत्रुरसि । शत्रुत्वमेवोपपादयति–यस्येति । त्वं यस्य रावणस्य ईदृशं पुत्रमित्रविनाशपर्यन्तं राघवतो रामात् विनाशं निशम्य मन्युमाच्छूत्वा मोहादनुमन्यसे तस्य रावणस्य त्वं शत्रुरसीत्यर्थः । मोहादित्यनेन मित्रमुखत्वमुपपादितम् । अनुमन्यस इत्यनेन शत्रुत्वम् ॥ १० ॥

११ ] ति० टी०–तस्मात्त्वमेव वध्यः पुत्रोऽपि सन् । यश्च वृद्धानां मन्त्रकृतां समीपं प्रावेशयच्चानयदागमनार्थं प्रेरितवान्सोऽपि वध्यः ॥ ११ ॥

रा० टी०–त्वमिति । यस्त्वाम् इह अनयत् स वध्यः यश्च मन्त्रसमीपं प्रावेशयत् स वध्यः सुदुर्मतिस्त्वं च वध्यः ॥ ११ ॥

गो० टी०–एवमनुमोदनस्य दण्डमाह–त्वमेवेति । त्वमेव वध्यः दण्ड्यः किमित्यर्थः । किंतु यस्त्वां इह सभायाम् आनयत् प्रावेशयच्च स एव वध्यः ॥ ११ ॥

१२ ] ति० टी०–मूढः कृत्याकृत्यविवेकहीनः, अतएवाप्रगल्भो मतिप्रागल्भ्यहीनः अविनयेनोपपन्नो युक्तः । अल्पमतिः दीर्घदर्शनानर्हबुद्धिः । दुरात्मा कामादिदुष्टान्तःकरणः । मूर्खः साहसप्रवृत्तिपर उक्तरीत्यात्यन्तसुदुर्मतिश्च ॥ १२ ॥

रा० टी०–मूढ इति । हे इन्द्रजित् ! मूढोऽविवेकी अत एव अप्रगल्भः परिपक्वबुद्धिहीनः अत एव अविनयेन उपपन्नः अत एव तीक्ष्णः स्वभावो यस्य अत एव अल्पा अल्पविषयिणी मतिर्यस्य अत एव दुरात्मा अगृहीतमनाः अत एव मूर्खः असमीक्ष्यकारी त्वमसीति शेषः अत एव अत्यन्तसुदुर्मतिस्त्वं बालतया बालत्वेन हेतुना ब्रवीषि ॥ १२ ॥

गो० टी०–सुदुर्मतिश्चेति चशब्ददर्शितान् दोषानाह–मूढ इति । मूढः कृत्याकृत्यविवेकशून्यः प्रगल्भः धृष्टः पण्डितंमन्य इति यावत् । अविनयोपपन्नः अशिक्षित इत्यर्थः । तीक्ष्णस्वभावः क्रूरप्रकृतिः दुरात्मा दुष्टान्तःकरणः मूर्खः अविमृश्यकारी । अत्यन्तसुदुर्मतिः । प्रहस्तो दुर्मतिः महापार्श्वादिः सुदुर्मतिः त्वमत्यन्तसुदुर्मतिरित्यर्थः । त्वमेवंभूतोऽसि अतस्त्वं बालतया ब्रवीषि इति संबन्धः ॥ १२ ॥

१३ ] ति० टी०–ब्रह्मदण्डेन चतुर्मुखकरगृहीतेन प्रतिमा अमोघानर्गलसंहारशक्त्या समानास्तत्समप्रकाशाश्च तान् । तस्यैव विवरणम्—अर्चिष्मत इति । कालनिकाशरूपान्कालाग्नितुल्यरूपान् ॥ १३ ॥

रा० टी०–क इति । ब्रह्मदण्डप्रतिमः ब्रह्मदण्डसदृशः प्रकाशो येषां तत्त्वेन प्रतीयमानानित्यर्थः कालनिकाशरूपान् कालसदृशस्वरूपान् यमदण्डं कल्पयन्ति रचयन्ति ये तान् राघवेण समक्षमुक्तान् अर्चिष्मतो बाणान् कः सहेत न कोऽपीत्यर्थः ॥ १३ ॥

गो० टी०–दुर्मतित्वे हेतुमाह–क इति । ब्रह्मदण्डप्रतिमप्रकाशान् ब्रह्मदण्डसदृशप्रभान् । ब्रह्मदण्डो नाम युगान्तसमुत्थितोऽग्निवर्णो धूमकेतुरिवांके । ब्रह्मशाप इत्यन्ये । अर्चिष्मतः ज्वालावतः । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । कालनिकाशरूपान् अन्तकसदृशरूपान् समक्षमुक्तान् समीपे मुक्तान् १३

१४] ति० टी०–रत्नानि श्रेष्ठवस्तूनि निवेद्य समर्प्य ॥ १४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

रा० टी०–रावणं प्रत्याह—धनानीति । हे राजन् ! धनादीन् राघवाय निवेद्यैव वीतशोकाः सन्तः वयं वसेम ॥ १४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

गो० टी०–कृतस्याकृत्यस्य प्रायश्चित्तं राजानं प्रत्याह—धनानीति । रत्नानि श्रेष्ठवस्तूनि । 'रत्नं स्वजातौ श्रेष्ठेऽपि' इत्यमरः । धनानि द्रव्याणि ॥ १४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नाकराख्याने युद्धकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

---

१ मूढः प्रगल्भ इति गो. पाठः । २ चीति गो. पाठः ।

## षोडशः सर्गः ।

एवं श्रवणकटुनाऽपि नितान्तपथ्येन विभीषणोपदेशेनारुष्टहृदयो रावणो न विरतोऽपि तु प्रदीप्तामर्षः परुषोक्तिभिर्मर्मण्यवरजं तमविध्यत् ।

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् । अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥ १ ॥
वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण च । न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २ ॥
जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस । हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३ ॥
प्रधानं साधकं वैद्यं धर्मशीलं च राक्षस । ज्ञातयोऽप्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४ ॥
नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः । प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ५ ॥

---

१ ] ति० टी०—सुनिविष्टं सुनिविष्टार्थतत्त्वम् ॥ १ ॥

रा० टी०—विभीषणं प्रति रावणोक्तिमाह—**सुनिविष्टमित्यादिभिः** । हितं वाक्यमुक्तवन्तं विभीषणं परुषं वाक्यं रावणोऽब्रवीत् ॥ १ ॥

गो० टी०—इत्थं हितमुक्तवन्तं विभीषणं प्रति रावणस्य परुषभाषणं षोडशे—**सुनिविष्टमिति** । सुसन्निवेशम् अर्थानुसंधानविरहेऽपि श्रवणमात्रेणात्यन्तप्रीतिजनकम् तेनार्थस्याननुकूलत्वेऽपि श्रवणस्यापरित्याज्यत्वमुक्तम् सुनिविष्टम् उक्तवन्तमिति क्रियाविशेषणं वा तेन मनस्यलग्नं चेदनादरणीयं वा स्यात् मनसि सम्यग्लग्नं यथा भवति तथा उक्तवन्तम् हितं न केवलं श्रवणप्रियम् अतिदुर्दशानिस्तरणोपायतया पथ्यम् श्रवणकटुत्वेऽपि पथ्यत्वपर्यालोचनया अपरित्याज्यम् वाक्यं यावद्वक्तव्यार्थपूर्णम् उक्तवन्तम् नासंवत्सरवासिने प्रब्रूयादित्युक्तरीत्या गुरूपसदनयुक्तस्य पादयोः पतितस्य वक्तव्यस्य दुरवस्थां दृष्ट्वोक्तवन्तं विभीषणम् । अन्येन चेदुक्तं परित्याज्यम् साक्षादनुजतया प्रत्यासन्नेनोक्तं कथं त्याज्यम् । परुषं वाक्यमब्रवीत् । श्रवणसमनन्तरं स्थितोऽस्मि गतसंदेह इति वा वक्तव्यम् त्वया महोपकारः कृत इति स्तोत्रं वा कर्तव्यम् सदृशप्रत्युपकाराभावेनानुतापो वा कर्तव्यः तद्विहाय शत्रून् प्रति वक्तव्यमुक्तवान् । अब्रवीदित्यनेन यथा सुनिविष्टमुक्तं तथा मनसि सुलग्नं यथा भवति तथा व्यक्तमुक्तवान् । एवमुक्तवन्तं प्रत्यपि परुषोक्तौ हेतुद्वयमाह—रावण इत्यादि । रावयति रोदयतीति रावणः परहिंसायां जगद्भिदितः रौतीति रवणः स एव रावणः स्वार्थेऽण्प्रत्ययः अस्थाने पदं कृत्वा स्वयमप्याक्रन्दन्नित्यर्थः । कालचोदितः । भ्राता रामं शरणं गच्छेदित्युक्तवान् कालस्तस्य कर्तव्यमिति स्वयं द्विधा भज्येयमिति । अतः स्वप्रकृत्यनुगुणं कालमनुसृतवानिति भावः ॥ १ ॥

२ ] ति० टी०—सपत्नेनापि सह वसेत्, न तु मित्रप्रवादेन मित्रपदव्यवहार्येण शत्रुसेविना शत्रुपक्षपातिना वसेत् सपत्ने चित्तस्य दूषकोत्येव प्रतिष्ठा, मित्रप्रवादे तु दूष्यत्वेन निरयत्वेन चेति परमदुःखमिति तत्सहवासनिषेधः शत्रुसेविनेत्यनेनास्य भगवद्भक्तत्वं सूचितम् ॥ २ ॥

रा० टी०—तदाकारमाह—**वसेदिति** । सपत्नेन शत्रुणा सह क्रुद्धेन आशीविषेण महाविषसर्पेण च सह वसेत् मित्रप्रवादेन मित्रवदवभासमानेन शत्रुसेविना सह तु नैव वसेत् एतेन विभीषणो रामसंसर्गीति रावणस्य निश्चयो ध्वनितः ॥ २ ॥

गो० टी०—परुषमेवाह—**वसेदिति** । सपत्नेन बाह्यशत्रुणा मित्रप्रवादेन मित्रवदवभासमानेनेत्यर्थः शत्रुसेविना शत्रुपक्षपातिना सहजशत्रुणेत्यर्थः शत्रुसर्पसहवासादपि सहजशत्रुसहवासः सुदूरं परिहर्तव्य इति भावः अतस्त्वया अस्मान्नगरात् सद्यो गन्तव्यमिति द्योत्यते ॥ २ ॥

३ ] ति० टी०—शीलं स्वभावं जानामि तदेव विवृणोति हृष्यन्तीति ॥ ३ ॥

रा० टी०—**जानामीति** । सर्वलोकेषु प्रसिद्धं ज्ञातीनां शीलं स्वभावं जानामि । ननु किं तत् इत्यत आह–ज्ञातीनां व्यसनेषु दुःखेषु प्राप्तेषु ज्ञातयो हृष्यन्ति ॥ ३ ॥

गो० टी०—अत्र शत्रुसेवित्वे हेतून् त्रिभिर्दर्शयति—**जानामीत्यादिभिः** । सर्वलोकेषु सर्वजनेषु मध्ये शीलं स्वभावम् शीलमेवाह—**हृष्यन्तीति** । अस्मद्व्यसनेन लब्धहर्षस्त्वमेवं गर्जसीति भावः ॥ ३ ॥

४ ] ति० टी०—प्रधानं ज्येष्ठत्वादिना प्राप्तराज्यं साधकम् । राज्यरक्षादेरिति शेषः वैद्यं विद्यावन्तम् अवमन्यन्ते गुणवत्त्वेऽपि गुणान्न गृह्णन्ति शूरं परिभवन्ति च । रन्ध्रमन्विष्येति शेषः ॥ ४ ॥

रा० टी०—**प्रधानमिति** । प्रधानं राज्यप्राप्त्यादिना मुख्यत्वविशिष्टं साधकं राजकार्यनिर्वाहकं वैद्यं प्राज्ञवियं धर्मशीलं च शूरं च ज्ञातयो अवमन्यन्ते उपायेनानादरं कुर्वन्ति परिभवन्ति क्षुद्रान्वेषणेन पराभावयन्ति ॥ ४ ॥

गो० टी०—**प्रधानमिति** । ज्ञातयः प्रधानं स्वजातिश्रेष्ठम् । साधनं कार्यसाधकम् वैद्यं विद्वांसम् प्राधान्यादिष्वेकैकगुणयोगेऽपि ज्ञातयोऽवमन्यन्ते न बहु मन्यन्ते अवसरे परिभवन्ति चेत्यर्थः ॥ ४ ॥

५ ] ति० टी०—ज्ञातयो ज्ञातिरूपाः आततायिनः । 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते

---

१ चेति गो. पाठः । २ साधनमिति गो. पाठः । ३ हीति गो. पाठः ।

श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने पुरा । पाशहस्तान्नरान्दृष्ट्वा शृणुष्व गदतो मम ॥ ६ ॥
नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः । घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥ ७ ॥
उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः । कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ८ ॥
विद्यते गोषु संपन्नं विद्यते ज्ञातितो भयम् । विद्यते स्त्रीषु चापल्यं विद्यते ब्राह्मणे तपः ॥ ९ ॥
ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः । ऐश्वर्यमभिजातश्च रिपूणां मूर्ध्नि च स्थितः ॥ १० ॥

आततायिनः ॥' ते प्रच्छन्नहृदयाः प्रच्छन्नं तत्कार्यं प्रवृत्ताः, अतएव घोरा अन्योन्यं व्यसनेष्वापत्सु संहृष्टा भवन्ति, अत एव ज्ञातयो भयावहाः ॥ ५ ॥

रा० टी०—नित्यमिति । घोराः क्रूराः अत एव प्रच्छन्नहृदयाः अज्ञातान्तर्वृत्तयः व्यसनेषु दुःखेषु प्राप्तेषु अन्योन्यसंहृष्टाः अत एव आततायिनः अत एव नित्यं सुभयावहा ज्ञातयो भवन्तीति शेषः ॥ ५ ॥

गो० टी०—एवं ज्ञातीनां ज्ञातिषु व्यसने हर्षः उत्कर्षेऽसूया चेति शीलद्वयमुक्तम् । अथ भयावहत्वरूपं शीलान्तरमाह—नित्यमिति । प्रच्छन्नहृदयाः गूढाभिप्रायाः अत एव नित्यमन्योन्यसंहृष्टाः बहिःस्नेहवन्त इव स्थिताः घोराः क्रूरकर्माणः अत एव व्यसनेषु सत्सु आततायिनः द्रोहकारिणः अतस्त्वमस्मासु व्यसनं प्रहर्तुमिच्छसीति भावः ॥ ५ ॥

६ ] ति० टी०—ज्ञातिभीतिं हस्तिगीतेन स्पष्टयति—श्रूयन्त इति । हस्तिभिः पद्मवनवर्तिदिव्यवनगजैः स्वबन्धनाय प्रवृत्तान्पाशहस्तान्दृष्ट्वा पुरा पूर्वं हस्तिभिर्गीता ये श्लोकाः श्रूयन्ते तान्गदतो मम वक्त्राच्छृणु ॥ ६ ॥

रा० टी०—ज्ञातिभीतिः सार्वकालिकीति बोधयितुं हस्त्युक्तिमाह—श्रूयन्त इत्यादिभिः । पाशहस्तान् स्वबन्धनार्थं गृहीतपाशान् नरान् पद्मवने दृष्ट्वा हस्तिभिः पुरा गीताः श्लोकाः श्रूयन्ते वृद्धानां मुखतोऽश्रौषमित्यर्थः तत् गदतो मे शृणु ॥ ६ ॥

गो० टी०—उक्तं ज्ञातीनां भयावहत्वं हस्तिगीतेन संवादयति—श्रूयन्त इत्यादिना । क्वचित्पद्मवने । पाशहस्तान् पाशाः गजग्रहणरज्जवः ते हस्तेषु येषां ते तथोक्तान् स्वबन्धनोद्युक्तानिति यावत् नरान् ज्ञातिगजगोप्तॄन् गजग्राहिपुरुषान् दृष्ट्वा हस्तिभिः गीताः पठिताः श्लोकाः श्रूयन्ते वक्तृपरंपरया तान् श्लोकान् गदतः वदतः मम मत्तः शृणु ॥ ६ ॥

७ ] ति० टी०—स्वार्थप्रयुक्ताः स्वार्थपर हस्तिपकाद्याज्ञाकरण उत्तमभोजनलाभादिस्वार्थपराः ॥ ७ ॥

रा० टी०—तदुक्त्याकारमाह—नेत्यादिभिः । अग्न्यादयो मे भयावहा न स्वार्थप्रयुक्ताः ज्ञातिविघातार्थमपि हस्तिपकदत्तोत्तमभोजनादिग्रहीतारो ज्ञातयस्तु नोऽस्माकं भयावहाः ॥ ७ ॥

गो० टी०—तानेव त्रीन् श्लोकानुपादत्ते—नाग्निरित्यादिना । नः अस्माकम् अग्निः आश्रयाशोऽपि न भयावहः अन्यानि लोकलक्षणानि अग्नितोऽपि क्षणानाशकराणि शस्त्राणि आयुधानि च न भयावहानि पाशाः मरणादप्यतिदुस्सहपारवश्यक्लेशकराश्च न भयावहाः किंतु घोरा निर्दयाः स्वार्थप्रयुक्ताः स्वप्रयोजनपराः ज्ञातयः भयावहाः अग्न्यादिभ्योऽप्यधिकं ज्ञातिभ्यो भयमित्यर्थः ॥ ७ ॥

८ ] ति० टी०—एते मज्जातिभूताः पूर्वगृहीता गजाः वक्ष्यन्ति करिष्यन्तीत्यर्थः नो विदितं च गतशोऽनुभूतं चेत्यर्थः ॥ ८ ॥

रा० टी०—उपायमिति । एते हस्तिपकेभ्यः प्राप्तभोगा गजाः अस्माकं ग्रहण उपायं वक्ष्यन्ति अत्र संशयो न अत कृत्स्नात् सर्वस्मात् भयात् ज्ञातिभयं सुकष्टमतिदुःखम् इति नोऽस्माकं विदितं ज्ञातम् ॥ ८ ॥

गो० टी०—उक्तं ज्ञातिभयातिरेकं सयुक्तिकमुपपादयति—उपायमिति । अस्माकं ग्रहणे एते ज्ञातिरूपा हस्तिनः उपायं वक्ष्यन्ति अत्रोपायकथने संशयो नास्ति अतः कृत्स्नादग्न्यादिभयात् ज्ञातिभयं सुकष्टम् प्रकृष्टं भयमित्यर्थः इदमस्माभिः विदितं ज्ञातं च ॥ ८ ॥

९ ] ति० टी०—संपन्नं हव्यकव्यसाधनसंपत् ॥ ९ ॥

रा० टी—विद्यत इति । संपन्नं हव्यकव्यसाधकद्रव्यं गोषु विद्यत एव स्त्रीषु चापल्यं विद्यत एव ब्राह्मणे तपो विद्यत एव ज्ञातितो भयं विद्यत एव ॥ ९ ॥

गो० टी०—स्निग्धेषु ज्ञातिषु कुतो भयसंभावनेत्याशङ्क्याह—विद्यत इति । गोसंपन्नाद्युपादानं दृष्टान्तार्थम् गोषु संपन्नं संपत्तिः तद्धेतुत्वमित्यर्थः विद्यते अस्ति "विद, सत्तायाम्" इति धातुः । दमः इन्द्रियनिग्रहः चापल्यं चञ्चलत्वम् ज्ञातितः ज्ञातिषु भयं भयकरत्वम् ॥ ९ ॥

१० ] ति० टी०—तत इति रावणवाक्यम् । अहं लोकसत्कृत इति यत्तत्तेनेष्टं न प्रियमिति मन्ये. तथैश्वर्यप्राप्त्यादिकमपि ॥ १० ॥

रा० टी०—रावणवाक्यमाह—तत इति । ततः गजोक्तिज्ञापितज्ञातिद्रोहस्य स्थिरत्वात् हेतोः यदहं लोकसत्कृतत्वादिविशिष्टः तदिदं ते नेष्टम् ॥ १० ॥

गो० टी०—प्रधानं साधनमिति श्लोकोक्तं निदर्शयति—तत इति । अहं लोकसत्कृतः ऐश्वर्यम् अभिजातः प्राप्तः रिपूणां मूर्ध्न्यवस्थितश्चेति यत् इदं ततः ज्ञातीनामसहिष्णुत्वात् तव नेष्टम् ॥ १० ॥

१ क्वचिदिति गो. पाठः । २ ब्राह्मणे दम इति गो. पाठः । ३ ज्ञातितो भयमिति गो. पाठः । ४ ज्ञातीनां मूर्ध्न्यवस्थित इति गो. पाठः ।

यथा पुष्करपत्रेषु पतितास्तोयबिन्दवः । न श्लेषमभिगच्छन्ति तथानार्येषु सौहृदम् ॥ ११ ॥
यथा शरदि मेघानां सिञ्चतामपि गर्जताम् । न भवत्यम्बुसंक्लेदस्तथानार्येषु सौहृदम् ॥ १२ ॥
यथा मधुकरस्तर्षाद्रसं विन्दन्न तिष्ठति । तथा त्वमपि तत्रैव तथानार्येषु सौहृदम् ॥ १३ ॥
यथा मधुकरस्तर्षात्काशपुष्पं पिबन्नपि । रसमत्र न विन्देत तथानार्येषु सौहृदम् ॥ १४ ॥
यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः । दूषयत्यात्मनो देहं तथानार्येषु सौहृदम् ॥ १५ ॥
योऽन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर । अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसन ॥ १६ ॥
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः । उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ १७ ॥
अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः । अन्तरिक्षगतः श्रीमान्भ्राता वै राक्षसाधिपम् ॥ १८ ॥

---

११ ] ति० टी०—अनार्येषु क्रूरस्वभावेषु ॥ ११ ॥

रा० टी०—इदानीं विभीषणे स्वकृतसौहृदस्य नैरर्थक्यमाह—यथेत्यादिभिः । श्लेषं तत्र प्रविष्टत्वं यथा नाभिगच्छन्ति प्राप्नुवन्ति तथा अनार्येषु दुष्टस्वभावेषु सौहृदं नाधिगच्छति ॥ ११ ॥

गो० टी०—चिरं सह वसति विभीषणे कथमकार्यमाशङ्क्यम इत्यपेक्षायामनार्यस्य चिरसंवासोऽप्रयोजक इत्याह—यथेति । पुष्करपर्णेषु पद्मपत्रेषु पतितास्तोयबिन्दवः यथा श्लेषम् ऐक्यं नोपगच्छन्ति तथा अनार्येषु दुष्टेषु विषये संगतं संबन्धः । श्लेषम् स्नेहबन्धं नोपयातीत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—यथा गर्जतां सिञ्चतामपि मेघानां संबन्धि पृथिव्या अम्बुसंक्लेदोऽम्बुव्याप्तता न भवति, तथानार्येषु सौहृदं निष्फलमिति भावः । यद्वा वर्षासु गर्जतां सिञ्चतामपि मेघानां शरदि नाम्बुसंक्लेदस्तथानार्येषु सौहृदमल्पकालस्थायीत्यर्थः ॥ १२ ॥

रा० टी०—यथेति । वर्षासु सिञ्चतां सेककर्तॄणां गर्जतामपि मेघानां अम्बुसंक्लेदः अम्बुना भूमेरार्द्रीभावः शरदि न भवति आर्द्रत्वं विनश्यतीत्यर्थः तथा ॥ १२ ॥

गो० टी०—दृष्टोऽपि स्नेहो न फलपर्यवसायीत्याह—यथेति । शरदि सिञ्चतां वर्षतां मेघानां संबन्धी अम्बुसंक्लेदः अम्बुसेचनम् यथा न भवति तथानार्येषु सौहृदम् । शरन्मेघवर्षणवदनार्येषु सौहृदमनुपकारकमित्यर्थः । हेतुस्तोयधारा न भवति यथा अनार्येषु सौहृदं तथा । शरदि मेघा इव अनार्याः आपातत उपकुर्वन्त इव प्रतीयमाना वस्तुतो नोपकुर्वन्तीत्यर्थः ॥ १४ ॥

१३ ] ति० टी०—यथा मधुकरस्तर्षादभिलाषाद्रसं पुष्परसं विन्दन्नपि तत्रैव न तिष्ठति तथानार्येषु सौहृदमपि न तिष्ठति । त्वमपि तथा तादृशोऽनार्योऽसीत्यर्थः ॥ १३ ॥

रा० टी०—यथेति । मधुकरस्तर्षादभिलाषातिशयात् रसं विन्दन् प्राप्नुवन्नपि यथा न तिष्ठति तथा त्वमपि न तिष्ठसि तथा अनार्येषु सौहृदमपि न तिष्ठति ॥ १३ ॥

गो० टी०—त्वदुपजीविनस्त्वयि कथं स्नेहबन्धाभाव इत्यत्राह—यथेति । यथा मधुकरः तर्षात् अभिलाषात् रसं मकरन्दम् विन्दन् पिबन् तत्र रसाधारे पुष्पे न विद्यते न तिष्ठति रसप्रदानोपकारं जानन् तत्र न स्निह्यतीत्यर्थ त्वमपि तथा मधुकर इव । अनार्येषु दुर्जनेषु सौहृदम् तथा हि । उपजीव्यविषये न जायत इत्यर्थान्तरन्यासः ॥ १२ ॥

१४ ] ति० टी०—काशपुष्पं पिबतोऽपि रसालाभस्तथानार्येषु सौहृदं कुर्वतः फलालाभ इति भावः ॥ १४ ॥

रा० टी०—यथेति । काशपुष्पं पिबन्मधुकरः अत्र काशपुष्पे रसं न विन्देत तथा अनार्येषु सौहृदं कुर्वन् रसं सुखं न विन्देत ॥ १४ ॥

१५ ] ति० टी०—यथा गजः पूर्वं स्नात्वा हस्तेन रजो गृहीत्वा यथात्मनो देहं दूषयति स्नानकृतनैर्मल्यं नाशयति, तथानार्याः पूर्वं कृतं स्नेहं स्वयमेव नाशयन्तीत्यर्थः ॥ १५ ॥

रा० टी०—यथेति । गजः पूर्वं स्नात्वा नैर्मल्यं संपाद्य हस्तेन शुण्डेन रजः आगृह्य आत्मनो देहं यथा दूषयति नैर्मल्यं निवर्तयति तथा अनार्येषु प्राप्तं सौहृदं दूषयति स्वरूपमिति शेषः ॥ १५ ॥

गो० टी०—तथापि कृतस्नेहः कुतोपलप्यते तत्राह—यथेति । अनार्येषु सौहृदं गजस्नानवत्तैरेव दुष्यत इत्यर्थः ॥ १३ ॥

१६ ] ति० टी०—त्वत्तोऽन्यो यद्येवं ब्रूयात्तदा तस्मिन्मुहूर्ते न भवेन्न जीवेत् । त्वां तु धिक् । सोदरत्वेन वधानर्हत्वाद्धिक्कृतिरेव ते दण्ड इति भावः ॥ १६ ॥

रा० टी०—य इति । एवंविधं त्वद्वाक्यसदृशं वाक्यं योऽन्यो ब्रूयात् सोऽस्मिन् मुहूर्ते न भवेत् हि निहन्यामित्यर्थः, अतस्त्वां धिक् ॥ १६ ॥

गो० टी०—एवं सामान्येन विनिन्द्य साक्षादपि निन्दति—अन्य इति । अन्यः अनुजादन्यः एवंविधमतिपरुषम् एतत्पूर्वोक्तं वाक्यं ब्रूयात् वदेचेत् अस्मिन्मुहूर्तेऽस्मिन् क्षण एव न भवेत् विनश्येत नाशयेयमिति यावत् । त्वां तु भ्रातृभावं धिक् त्यक्ष्यामीत्यर्थः । कुलपांसनं राक्षसकुलावद्यकरम् ॥ १६ ॥

१७–१८ ] ति० टी०—परुषं वाक्यं पूर्वोक्तम् । लङ्काव

---

१ उपेति गो. पाठः । २ अयं श्लोकः गो. नास्ति । ३ य इति गो. नास्ति । ४ पांसनमिति गो. रा. पाठः । ५ आतसमिति गो. पाठः ।

स त्वं भ्रान्तोऽसि मे राजन्ब्रूहि मां यद्यदिच्छसि । ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः ॥
इदं हि परुषं वाक्यं न क्षमाम्यग्रजस्य ते ॥ ॥ १९ ॥
सुनीतं हितकामेन वाक्यमुक्तं दशानन । न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २० ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २१ ॥
बद्धं कालस्य पाशेन सर्वभूतापहारिणः । न नश्यन्तमुपेक्षे त्वां प्रदीप्तं शरणं यथा ॥ २२ ॥
दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः । न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २३ ॥

स्थानेऽप्यैतैः सह नाशस्य दुर्वारत्वाज्ज्येष्ठोऽप्यसौ । 'उत्पथप्रतिपन्नस्य कार्याकार्यमजानतः । गुरोरप्यवलिप्तस्य परित्यागो विधीयते ॥' इति शास्त्रबलात्सर्वथा परित्याज्य एवेत्यालोच्य तत्सभां हित्वा खमुत्पपात चतुर्भिर्मन्त्रिभिः ॥ १७ ॥ १८ ॥

रा० टी०—इतीति । इति परुषमुक्तः न्यायवादी यथार्थवक्ता विभीषणः चतुर्भिः राक्षसैः सह उत्पपात ॥ १७ ॥

गो० टी०—इत्युक्त इति । न्यायवाद्यपि इति पूर्वोक्तरीत्या परुषमुक्तः सन् उत्पपात मंतप्तमलिकतामयभूमिस्थित इव उद्गतः ॥ १६ ॥

रा० टी०—अब्रवीदिति । अन्तरिक्षगतो विभीषणः राक्षसाधिपमब्रवीत् ॥ १८ ॥

गो० टी०—एवमाकाशे उत्पतन्नपि पुनस्तस्मिन्ननुतापेनापि नाम समुद्भवेत् समीची मतिरिति हितोपदेशे प्रावर्ततेत्याह—अब्रवीदिति । अन्तरिक्षगतः श्रीमान् । परित्यक्ता मया लङ्का मित्राणि च धनानि चेति समुत्थितस्य का नाम श्रीः । उच्यते । प्रतिकूलनिवृत्तिपूर्वकानुकूलरामविषयाभिमुख्यश्रीसमेत इत्यर्थः ॥ १७ ॥

१९ ] ति० टी०—अथ सभासदां ज्येष्ठत्यागेनाधमोऽयमिति शङ्कानिवृत्त्यर्थमाह—स त्वं भ्रान्त इत्यादि । ज्येष्ठत्वादिगुणकोऽपि न धर्मपथे स्थितः । परदाराहरणादिरूपानेकाधर्मशालित्वात् । 'पतितैः सह संव्यवहारो न विद्यते' इति स्मृतेः पतितमाचार्यं ज्ञातिं वा द्रष्टुं न गच्छेत्, न चास्मादुपगृह्णीत । 'यदृच्छासंनिपाते उपसंगृह्य तूर्ष्णीं व्रजेत्' इति स्मृतेश्चाग्रजस्यापि ते इदं परुषं वाक्यं न क्षमामि । अतः परमिह स्थित्वेति शेषः ॥ १९ ॥

रा० टी०—तदाकारमाह—स इत्यादिभिः । यो धर्मपथे न स्थितः सोऽपि त्वं ज्येष्ठो भ्राता अत एव पितृसमः अत एव मान्योऽसि अतः यद्यदिच्छसि तत्तन्मां ब्रूहि सर्वं सहे इत्यर्थः ॥ १९ ॥

गो० टी०—स त्वमित्यर्धमेकं वाक्यम् । स त्वं परुषवादी त्वम् । भ्राताऽसि प्रतिवक्तुमनर्होऽसि अतो यद्यदिच्छसि तद्वद ॥ १८ ॥

गो० टी०—तर्हि किमर्थमुद्गतोऽसि प्रतिवचनाभावात् क्षमाऽपि क्रियतां तत्राह—ज्येष्ठ इति । ज्येष्ठस्त्वं पितृसमः मान्यः । किंतु धर्मपथे न स्थितोऽसि । अतस्त्वदुक्तमनृतं परुषं न क्षमामि न क्षमे ॥ १९ ॥

२० ] ति० टी०—सुनीतं सुनिश्चितागामिफलबोधकं वाक्यं हितकामेनोक्तम् । तत्तु त्वया न गृहीतमिति शेषः । नाश्चर्यं लोकस्थितिरित्याह—न गृह्णन्तीति । सुनीतवाक्यार्थमिति शेषः ॥ २० ॥

रा० टी०—ननु यदि सहनेच्छा तर्हि किमर्थं पलायसे इत्यतआह—इदमिति अग्रजस्यते मर्मापेऽपि इदं परुषं वाक्यं इन्द्रजिदादिवचनं न क्षमामि अर्थ पृथक् । सुनीतमिति । हे दशानन ! सुनीतं शोभननीतिविशिष्टं हितकामेन जनेन उक्तं वाक्यम् अकृतात्मानः चञ्चलचित्ताः कालस्य वशमागताः जनाः न गृह्णन्ति ॥ २० ॥

गो० टी०—स्ववाक्याश्रवणे निमित्तं सामान्यतो दर्शयति—सुनीतमिति । स्पष्टम् ॥ २० ॥

२१ ] ति० टी०—उक्तमेवार्थं पुनर्मारीचोक्तस्मरणेनाह—सुलभा इति ॥ २१ ॥

रा० टी०—पुरुषा इति । सततं प्रियवादिनः अहितमपि प्रियत्वेन वदनशीलाः जनाः सुलभाः बहवः सन्तीत्यर्थः अप्रियस्य श्रुतिकटोः पथ्यस्य वचनस्य श्रोता वक्ता च दुर्लभः ॥ २१ ॥

गो० टी०—सुलभा इति । प्रियवादिन इत्यपलक्षणं प्रियश्रोतारश्च ॥ २१ ॥

२२ ] ति० टी०—सर्वभूतापहारिकालपाशेन बद्धं नश्यन्तं त्वां नोपेक्षे । अतो मया किंचिद्धितमुक्तमिति शेषः ॥ २२ ॥

रा० टी०—ननु अपृष्टेन त्वया पथ्यमपि किमर्थमुक्तमित्यत आह—बद्धमिति । सर्वभूतापहारिणा कालस्य पाशेन तत्सदृशाधर्मेणेत्यर्थः, बद्धमत एव नश्यन्तं त्वाम् अहं नोपेक्षेयम् तत्र दृष्टान्तः—प्रदीप्तं दह्यमानं शरणं यथा ॥ २२ ॥

गो० टी०—तर्ह्यश्रोतारं प्रति किमर्थं वदसि तत्राह—बद्धमिति । सर्वभूतापहारिणा निर्दयेनेत्यर्थः । नोपेक्षेयम् नोपेक्षेय । शरणं गृहम् ॥ २२ ॥

२३ ] ति० टी०—निहतं त्वां द्रष्टुं नेच्छामि । अतएवोक्तमिति शेषः ॥ २३ ॥

रा० टी०—सदेव भङ्ग्यन्तरेणाह—दीप्तेति । रामेण शरैः निहतं त्वां द्रष्टुं नेच्छामि ॥ २३ ॥

१ भ्रान्तेति गो. पाठः । २ अनृतं तवेति गो. पाठः । ३ पुरुषाः सुभगा इति रा. पाठः । ४ स्थितिं गो. पाठः । ५ हारिणेति गो. पाठः । ६ उपेक्षेयमिति गो. रा. पाठः ।

शूराश्च बलवन्तश्च कृतास्त्राश्च नरा रणे। कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २४ ॥
तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता। आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ॥
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २५ ॥
निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर।
पैरान्तकाले हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः।

एवं कठोरवचोनाराचनिर्भिन्नान्तःकरणो राममेव शरण्यं मन्वानो विभीषणस्तस्मान्निष्क्रम्य मन्त्रिचतुष्टयेनानुगतो राघवमुपगम्य यानरैः रावणानुचरः कोऽपि राक्षसैः गहास्मान्हन्तुमागच्छतीत्यूह्यमानोऽपि धीरः स्ववृत्तान्तं चात्मनो महता रवेणाकाशस्थ एव कथयति

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः। आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ १ ॥

गो० टी०—दीप्तेति। स्पष्टम् ॥ २३ ॥

२४ ] ति० टी०—कालाभिपन्ना अधर्मतः कालपाशबद्धाः ॥ २४ ॥

रा० टी०—शूरा इति। शस्त्रादिविशिष्टाः नराः कालाभिपन्नाः अधर्मसंपादकममवन्तः सन्तः वालुकसेतव इव सीदन्ति विनश्यन्ति ॥ २४ ॥

गो० टी०—शौर्यबलास्त्रशालिनो मे कुतो विपदाशङ्केत्यत आह—शूरा इति। कालाभिपन्नाः मृत्युगृहीताः सीदन्ति शीर्यन्ति वालुकाः सिकताः ॥ २४ ॥

२५–२६] ति० टी०—यदुक्तमप्रियमिव हितं तद्भवान्मर्षयतु क्षमताम्। मया विना सुखी भवेति व्यङ्ग्योक्तिः ॥ २५ ॥२६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

रा० टी०—तदिति। गुरुत्वात् तव ज्येष्ठत्वाद्धेतोः हितमिच्छता मया यदप्रियमुक्तं तत् भवान् मर्षयतु क्षमताम्। आत्मानं पुरीं च रक्ष, ते स्वस्त्यस्तु, अहं गमिष्यामि, मया विना रहितस्त्वं सुखी भव। सार्धश्लोक एकान्वयी ॥ २५ ॥

गो० टी०—तदिति। मर्षयतु। भवानिति शेषः ॥ २५ ॥

गो० टी०—स्वस्तीत्यर्धम् ॥ २६ ॥

रा० टी०—निवार्यमाणस्येति। परान्तकाले मरणसमये गतायुषो नराः जनाः सुहृद्भिरीरितं हितं वचो न गृह्णन्ति अतः हितैषिणा मया निवार्यमाणस्य ते वचनं मदुक्तं न रोचते ॥ २६ ॥

इति श्रीमहावाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

गो० टी०—निवार्यमाण इति। स्पष्टम् ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

१ ] ति० टी०—अथ विभीषणस्य रामसमीपगमनम्—इतीति। परुषम् 'आत्मानं सर्वथा—' इत्यादिरूपम्। रावणानुजो विभीषणो यत्र सलक्ष्मणो रामस्तत्राजगाम। उत्पथप्रतिपन्नत्वादेहसंबन्धेन गुरुं रावणं परित्यज्य जगद्गुरुं स्मरणमात्रेण सकलपापहरं गुरुं रामं प्रत्याजगामेत्याशयः ॥ १ ॥

रा० टी०—विभीषणकर्तृकरावणोद्देश्यकवचनान्तकारलिकं विभीषणवृत्तान्तमाह—इतीत्यादिभिः। रावणानुजो विभीषणः इति परुषं वाक्यमुक्त्वा यत्र रामस्तत्र मुहूर्तेनाजगाम ॥ १ ॥

गो० टी०—'एवमष्टभिः सर्गैः—आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः' इत्युक्तेषु शरणागत्यङ्गेषु प्रपित्सोर्विभीषणस्यानुकूल्यप्रातिकूल्यवर्जने दर्शिते। संकल्पः पुनः पुनरुपदेशादिना महाविश्वासो दर्शितः। अथ कार्पण्यप्रदर्शनपूर्वकं शरणागतिस्वरूपं दर्शयितुमुपक्रमते—इत्युक्त्वेत्यादिना। तत्र रावणेन तिरस्कारे सत्यस्य देश एवास्माभिस्त्याज्यः। परमधार्मिकश्रीरामाश्रयस्तु कर्तव्य इति धार्मिकस्य विभीषणस्य धर्मे मतिरासीदित्यृषिः प्रस्तौति—इतीति। इत्युक्त्वा 'प्रदीयतां दाशरथाय मैथिली' इति कर्तव्यसौकर्यम्, 'यावन्न गृह्णन्ति शिरांसि बाणाः' इत्यकरणे प्रत्यवायं चोक्त्वा। परुषं सत्त्वीकजनसुखावहस्य मलयमारुतस्य विरहिणि दुःखकरत्ववद्विभीषणोदितम् हितम्। आश्रयदोषेण परुषं वाक्यं हितपरिपूर्णम्। उक्त्वा हितज्ञो भ्राता भ्रातरमापन्नं परित्यजेदित्यपयशो यावता शक्यं परिमार्ष्टुं तावत्पर्यन्तमुक्त्वा। परुषत्वे हेतुः रावणमिति। प्रबलदुर्बलविचारमन्तरेण सर्वरावकस्य शत्रुबलोपवर्णने परुषं भवत्येव। रावणानुजः रावणानुजत्वेऽपि सत्त्वोत्तरतया कथनीयं हितमुक्तवानित्यृषिः स्तौति। हितकथने ज्येष्ठभावोऽप्यप्रयोजकः। अत एवोक्तं मनुना—'पितॄनध्यापयामास शिशुराङ्गिरसः

१ रणाजिरे इति गो. पाठः। २ परीतकाला इति गो. पाठः।

स त्वं भ्रान्तोऽसि मे राजन्ब्रूहि मां यद्यदिच्छसि । ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः ॥
इदं हि परुषं वाक्यं न क्षमाम्यग्रजस्य ते ॥ ॥ १९ ॥
सुनीतं हितकामेन वाक्यमुक्तं दशानन । न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २० ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २१ ॥
बद्धं कालस्य पाशेन सर्वभूतापहारिणः । न नश्यन्तमुपेक्षे त्वां प्रदीप्तं शरणं यथा ॥ २२ ॥
दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः । न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २३ ॥

स्थानेऽप्येतैः सह नाशस्य दुर्वारत्वाज्ज्येष्ठोऽप्यसौ । 'उत्पथप्रतिपन्नस्य कार्याकार्यमजानतः । गुरोरप्यवलिप्तस्य परित्यागो विधीयते ॥' इति शास्त्रबलात्सर्वथा परित्याज्य एवेत्यालोच्य तत्सभां हित्वा खमुत्पपात चतुर्भिर्मन्त्रिभिः ॥ १७ ॥ १८ ॥

रा० टी०—इतीति । इति परुषमुक्तः न्यायवादी यथार्थवक्ता विभीषणः चतुर्भिः राक्षसैः सह उत्पपात ॥ १७ ॥

गो० टी०—इत्युक्त इति । न्यायवाद्यपि इति पूर्वोक्तरीत्या परुषमुक्तः सन् उत्पपात संतप्तसिकतामयभूमिस्थित इव प्लुतः ॥ १६ ॥

रा० टी०—अब्रवीदिति । अन्तरिक्षगतो विभीषणः राक्षसाधिपमब्रवीत् ॥ १८ ॥

गो० टी०—एवमाकाशे उत्पतन्नपि पुनस्तस्मिन्ननुतापेनापि नाम समुद्भवेत् समीची मतिरिति हितोपदेशे प्रावर्ततेत्याह—अब्रवीदिति । अन्तरिक्षगतः श्रीमान् । परित्यक्ता मया लङ्का मित्राणि च धनानि चेति समुत्थितस्य का नाम श्रीः । उच्यते । प्रतिकूलनिवृत्तिपूर्वकानुकूलरामविषयाभिमुख्यश्रीसमेत इत्यर्थः ॥ १७ ॥

१९ ] ति० टी०—अथ सभासदां ज्येष्ठत्यागेनाधमोऽयमिति शङ्कानिवृत्त्यर्थमाह—स त्वं भ्रान्त इत्यादि । ज्येष्ठत्वादिगुणकोऽपि न धर्मपथे स्थितः । परदाराहरणादिरूपानेकाधर्मशालित्वात् । 'पतितैः सह संव्यवहारो न विद्यते' इति स्मृतेः पतितमाचार्यं ज्ञातिं वा द्रष्टुं न गच्छेत्, न चास्मादुपगृह्णीत । 'यदृच्छासंनिपाते उपसंगृह्य तूष्णीं व्रजेत्' इति स्मृतेश्चाग्रजस्यापि ते इदं परुषं वाक्यं न क्षमामि । अतः परमिह स्थित्वेति शेषः ॥ १९ ॥

रा० टी०—तदाकारमाह—स इत्यादिभिः । यो धर्मपथे न स्थितः सोऽपि त्वं ज्येष्ठो भ्राता अत एव पितृसमः अत एव मान्योऽसि अतः यद्यदिच्छसि तत्तन्मां ब्रूहि सर्वं सहे इत्यर्थः ॥ १९ ॥

गो० टी०—स त्वमित्यर्धमेकं वाक्यम् । स त्वं परुषवादी त्वम् । भ्राताऽसि प्रतिवक्तुमनर्होऽसि अतो यद्यदिच्छसि तद्वद ॥ १८ ॥

गो० टी०—तर्हि किमर्थमुक्तोऽसि प्रतिवचनाभावात् क्षमाऽपि क्रियतां तत्राह—ज्येष्ठ इति । ज्येष्ठस्त्वं पितृसमः मान्यः । किंतु धर्मपथे न स्थितोऽसि । अतस्त्वदुक्तमनृतं परुषं न क्षमामि न क्षमे ॥ १९ ॥

२० ] ति० टी०—सुनीतं सुनिश्चितागामिफलबोधकं वाक्यं हितकामेनोक्तम् । तत्तु त्वया न गृहीतमिति शेषः । नाश्चर्यमेव लोकस्थितिरित्याह—न गृह्णन्तीति । सुनीतवाक्यार्थमिति शेषः ॥ २० ॥

रा० टी०—ननु यदि सहनेच्छा तर्हि किमर्थं पलायसे इत्यतआह—इदमिति अग्रजस्यते समीपेऽपि इदं परुषं वाक्यं इन्द्रजिदादिवचनं न क्षमामि अर्धं पृथक् । सुनीतमिति । हे दशानन ! सुनीतं शोभननीतिविशिष्टं हितकामेन जनेन उक्तं वाक्यम् अकृतात्मानः चञ्चलचित्ताः कालस्य वशमागताः जनाः न गृह्णन्ति ॥ २० ॥

गो० टी०—स्ववाक्याश्रवणे निमित्तं सामान्यतो दर्शयति—सुनीतमिति । स्पष्टम् ॥ २० ॥

२१ ] ति० टी०—उक्तमेवार्थं पुनर्मारीचोक्तस्मरणेनाह—सुलभा इति ॥ २१ ॥

रा० टी०—पुरुषा इति । सततं प्रियवादिनः अहितमपि प्रियत्वेन वदनशीलाः जनाः सुलभाः बहवः सन्तीत्यर्थः अप्रियस्य श्रुतिकटोः पथ्यस्य वचनस्य श्रोता वक्ता च दुर्लभः ॥ २१ ॥

गो० टी०—सुलभा इति । प्रियवादिन इत्युपलक्षणं प्रियश्रोतारश्च ॥ २१ ॥

२२ ] ति० टी०—सर्वभूतापहारिकालपाशेन बद्धं नश्यन्तं त्वां नोपेक्षे । अतो मया किंचिद्धितमुक्तमिति शेषः ॥ २२ ॥

रा० टी०—ननु अपृष्टेन त्वया पथ्यमपि किमर्थमुक्तमित्यत आह—बद्धमिति । सर्वभूतापहारिणा कालस्य पाशेन तत्सदृशाधर्मेणेत्यर्थः, बद्धमत एव नश्यन्तं त्वाम् अहं नोपेक्षेयम् तत्र दृष्टान्तः—प्रदीप्तं दह्यमानं शरणं यथा ॥ २२ ॥

गो० टी०—तर्ह्यश्रोतारं प्रति किमर्थं वदसि तत्राह—बद्धमिति । सर्वभूतापहारिणा निर्दयेनेत्यर्थः । नोपेक्षेयम् नोपेक्षेय । शरणं गृहम् ॥ २२ ॥

२३ ] ति० टी०—निहतं त्वां द्रष्टुं नेच्छामि । अतएवोक्तमिति शेषः ॥ २३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—दीप्तेति । रामेण शरैः निहतं त्वां द्रष्टुं नेच्छामि ॥ २३ ॥

१ भ्रातेति गो. पाठः । २ अनृतं तवेति गो. पाठः । ३ पुरुषाः सुभगा इति रा. पाठः । ४ स्थितिं गो. पाठः । ५ हारिणेति गो. पाठः । ६ उपेक्षेयमिति गो. रा. पाठः ।

शूराश्च बलवन्तश्च कृतास्त्राश्च नरा रणे। कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २४ ॥
तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता। आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ॥
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २५ ॥
निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर।
परान्तकाले हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः।

एवं कठोरवचोनाराचनिर्भिन्नान्तःकरणो राममेव शरण्यं मन्वानो विभीषणस्तस्मान्निष्क्रम्य मन्त्रिचतुष्टयेनानुगतो राघवमुपगम्य वानरै रावणानुचरः कोऽपि राक्षसैः महास्मान्हन्तुमागच्छतीत्यूह्यमानोऽपि धीरः स्ववृत्तान्तं चात्मनो महता रवेणाकाशस्थ एव कथयति

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः। आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ १ ॥

गो० टी०—दीप्तेति। स्पष्टम् ॥ २३ ॥

२४ ] ति० टी०—कालाभिपन्ना अधर्मतः कालपाशबद्धाः ॥ २४ ॥

रा० टी०—शूरा इति। शूरत्वादिविशिष्टाः नराः कालाभिपन्नाः अधर्मसंपादकममयवन्तः सन्तः वालुकसेतव इव सीदन्ति विनश्यन्ति ॥ २४ ॥

गो० टी०—शौर्यबलास्त्रशालिनो मे कुतो विपदाशङ्केत्यत्राह—शूरा इति। कालाभिपन्नाः मृत्युगृहीताः सीदन्ति शीर्यन्ति वालुकाः सिकताः ॥ २४ ॥

२५—२६] ति० टी०—यदुक्तमप्रियमिव हितं तद्भवान्मर्षयतु क्षमताम्। मया विना सुखी भवेति व्यङ्ग्योक्तिः ॥ २५ ॥२६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

रा० टी०—तदिति। गुरुत्वात् तव ज्येष्ठत्वाद्धेतोः हितमिच्छता मया यदप्रियमुक्तं तत् भवान् मर्षयतु क्षमताम्। आत्मानं पुरीं च रक्ष, ते स्वस्त्यस्तु, अहं गमिष्यामि, मया विना रहितस्त्वं सुखी भव। सार्धश्लोक एकान्वयी ॥ २५ ॥

गो० टी०—तदिति। मर्षयतु। भवानिति शेषः ॥ २५ ॥

गो० टी०—स्वस्तीत्यर्धम् ॥ २६ ॥

रा० टी०—निवार्यमाणस्येति। परान्तकाले मरणसमये गतायुषो नराः जनाः सुहृद्भिरीरितं हितं वचो न गृह्णन्ति अतः हितैषिणा मया निवार्यमाणस्य ते वचनं मदुक्तं न रोचते ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षोडशः सर्गः ॥ १६ ॥

गो० टी०—निवार्यमाण इति। स्पष्टम् ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

१ ] ति० टी०—अथ विभीषणस्य रामसमीपगमनम्—इतीति। परुषम् 'आत्मानं सर्वथा—' इत्यादिरूपम्। रावणानुजो विभीषणो यत्र सलक्ष्मणो रामस्तत्राजगाम। उत्पथप्रतिपन्नत्वादेहसंबन्धेन गुरुं रावणं परित्यज्य जगद्गुरुं स्मरणमात्रेण सकलपापहरं गुरुं रामं प्रत्याजगामेत्याशयः ॥ १ ॥

रा० टी०—विभीषणकर्तृकरावणोद्देश्यकवचनान्तकालिकं विभीषणवृत्तान्तमाह—इतीत्यादिभिः। रावणानुजो विभीषणः इति परुषं वाक्यमुक्त्वा यत्र रामस्तत्र मुहूर्तेनाजगाम ॥ १ ॥

गो० टी०—'एवमष्टभिः सर्गैः—आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः' इत्युक्तेषु शरणागत्यङ्गेषु प्रपित्सोर्विभीषणस्यानुकूल्यप्रातिकूल्यवर्जने दर्शिते। संकल्पः पुनः पुनरुपदेशादिना महाविश्वासो दर्शितः। अथ कार्पण्यप्रदर्शनपूर्वकं शरणागतिस्वरूपं दर्शयितुमुपक्रमते—इत्युक्त्वेत्यादिना। तत्र रावणेन तिरस्कारे सत्यस्य देश एवास्माभिस्त्याज्यः। परमधार्मिकश्रीरामाश्रयस्तु कर्तव्य इति धार्मिकस्य विभीषणस्य धर्मे मतिरासीदित्यृषिः प्रस्तौति—इतीति। इत्युक्त्वा 'प्रदीयतां दाशरथाय मैथिली' इति कर्तव्यसौकर्यम् 'यावन्न गृह्णन्ति शिरांसि बाणाः' इत्यकरणे प्रत्यवायं चोक्त्वा। परुषं सन्नीकजनदुःखावहस्य मलयमारुतस्य विरहिणि दुःखकरत्ववद्विभीषणोदितम् हितम्। आश्रयदोषेण परुषं वाक्यं हितपरिपूर्णम्। उक्त्वा हितज्ञो भ्राता भ्रातरमापन्नं परित्यजेत्यपयशो यावता शक्यं परिमार्ष्टुं तावत्पर्यन्तमुक्त्वा। परुषत्वे हेतुः रावणमिति। प्रबलदुर्बलविचारमन्तरेण सर्वरावकस्य शशबलोपवर्णने परुषं भवत्येव। रावणानुजः रावणानुजत्वेऽपि सत्त्वोत्तरतया कथमीयं हितमुक्तवानित्यृषिः स्तौति। हितकथने ज्येष्ठभावोऽप्यप्रयोजकः। अत एवोक्तं मनुना—'पितॄनध्यापयामास शिशुराङ्गिरसः

१ रणाजिरे इति गो. पाठः। २ परीतकाला इति गो. पाठः।

कांवेः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ अज्ञं हि बालमित्याहुः पितेत्येव च मन्त्रदम् ' इति । आजगाम रावणगोष्ठ्यां स्वस्य संबन्धाभावेन रामगोष्ठ्याः स्वगृहत्वेनाजगामेत्युक्तम् न तु जगामेति । मुहूर्तेन ' वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसम् ' इति न्यायेनाङ्गारनिकरपरिक्षिप्ते वर्त्मनि पदन्यासवत् रावणसदनावस्थित्यनर्हत्वं विगलितबन्धनरज्जोर्वत्सस्य मातुरूधःस्पर्शमन्तरेण मध्यदेशादर्शनवदतिवेगागमनं चोक्तम् । यत्र रामः। रामापेक्षया तद्देशसंबन्धस्य प्राप्यत्वमुक्तम् । ' सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः । यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने ' इतिवत् रामस्य लक्ष्मणो व्यावर्तक इति सलक्ष्मण इत्युक्तम् । यद्वा पुरुषकारसांनिध्यमनेनोच्यते । अनेन श्लोकेन भगवद्विमुखानां देशस्य त्याज्यत्वं तत्संबन्धिदेशस्य परमप्राप्यत्वं चोक्तम् । यद्वा ' सा काशीति न चाकशीति ' इत्याद्युक्तरीत्या भगवद्देशस्यापि भागवताभिमानाभावे परित्याज्यत्वाल्लक्ष्मणसान्निध्यमुक्तम् । ननु विश्रवःपितामहवरप्रदानविभवविदितनिखिलधर्मवृन्देन ' विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः' इति तत्र तत्र धार्मिकतया प्रशंसितेन विभीषणेन 'ज्येष्ठो भ्राता पितृसमः' इति पितृवदनुवर्तनीयो ज्येष्ठभ्राता बाल्यात् प्रभृति परिपोषकश्च सन् रावणः सपदि सन्निहिते शत्रौ क्षुद्रबुद्धिनेव दूरं कथं परित्यक्तः । त्यजतु नाम कथंचित् । अथापि न युक्तमभिगन्तुं तस्य प्रहर्तारम् । अभिगच्छतु नाम नोचितमस्य स्थानमभिलषितुम् । अभिलषतु नाम नौपयिकमस्य वधोपायं निर्देष्टुम् । अत्र केचित् । रावणस्य निरवधिकदोषदूषितत्वात् 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ' इति स्मरणाद्विभीषणेन त्यक्तो रावण इत्याहुः । वयन्तगुरवस्तु पितामहवरप्रसादेन लब्धविज्ञानत्वाद्रामं सर्ववेदान्तवेद्यं सर्वलोकेश्वरभूतं सर्वलोकशरण्यं मुक्तप्राप्यं नारायणाख्यं परं ब्रह्म लोकानुजिघृक्षयाऽवतीर्णमिति निर्विचिकित्समवगच्छति। यथा मन्दोदरीप्रभृतयः एवं तत्त्वज्ञानसंपन्नस्य विशेषसामान्यधर्मप्राबल्यदौर्बल्यविवेकेन सामान्यधर्मपरित्यागो विशेषधर्मपरिग्रहश्चोपपद्यते । ज्येष्ठभ्रात्रनुवर्तनं हि त्रैवर्गिकफलसाधनतया ज्येष्ठानुवर्तनद्वारा परमात्माराधने पर्यवसानस्य वक्तव्यत्वात् मोक्षपर्यवसानेऽपि परमात्मोपासनाङ्गत्वाच्च सामान्यधर्मः । रामानुवर्तनं तु साक्षात्परमात्मसमाराधनत्वात् यज्ञादिधर्मसाध्यत्वेन प्रधानत्वाच्च विशेषधर्मः । उभयोश्चाप्यविरोधे सत्युभयमप्यनुवर्तनीयम् विरोधे तु सामान्यधर्मं परित्यज्य विशेषधर्मोऽनुवर्तनीयः अतो विभीषणोऽपि इयन्तं कालं कृतं रावणानुवर्तनमपरित्यज्यैव मम रामानुवर्तनमपि किं सिद्ध्येदित्याशया तस्मै हितं पुनः पुनरुपदिदेश एवमपि तस्यासुरप्रकृतितयाऽनपनोद्यं रामवैरमिति निश्चित्यातः परं एतदनुवर्तने स्वात्मविनाशकं रामविषयकं वैरं मय्यपि स्यादिति भीतः सन् ' वरं हुतवहज्वाला० ' इत्यादिन्यायेनात्यन्तदुःसहां तत्संगतिं तत्याज विशेषधर्मं रामानुवर्तनं चाङ्गीचकारेत्यतोऽयं परो धर्म एवेति कृतघ्नशङ्का दूरोत्सारिता । नाप्ययं राज्यकाङ्क्षया रामं शरणमुपजगाम तदपेक्षाया अदर्शनात् । तथाहि शरणागतिसमये ' त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ' इत्यन्यविषयवैराग्यस्य तेन कण्ठरवेणोक्तत्वात् । पश्चाद्रामाय विज्ञापने क्रियमाणे 'परित्यक्ता मया लङ्का मित्राणि च धनानि च । भवद्गतं मे राज्यं च जीवितं च सुखानि च' इति सर्वविधपुरुषार्थत्वेन त्वामेवाहमुपयियासामिति कथनाच्च ' अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम् । राजानं त्वां करिष्यामि सत्यमेतत् ब्रवीमि ते ' इत्यनाकाङ्क्षितराजत्वकरणोक्तिः कृतज्ञरामप्रीतिमात्रपरीवाहरूपानुषङ्गिकभोगप्रदानपरा । यथाहुः— 'आयुरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायतां नित्यमपवर्गप्रदो हरिः ' इति । अतो यदुक्तं हनुमता ' राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः ' इति । यच्च रामेणोक्तं ' राज्यकाङ्क्षी विभीषणः ' इति तत्सर्वं रामभक्त्यातिशयस्य सुग्रीवस्य व्यामोहप्रशमनाय नीतिशास्त्रोक्तराजवृत्तान्तप्रदर्शनमात्रपरमिति मन्तव्यम् । हनुमद्रामवाक्यस्य विभीषणवाक्यस्य चान्योन्यविरोधप्रसङ्गे ' अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः ' इतिन्यायेन विभीषणवाक्यस्य प्राबल्यात् । अत एव 'राजानं त्वां करिष्यामि' इति ब्रुवतो रामस्य प्रतिवचनमनुक्त्वा परिचरणमात्रमेव विभीषणः प्रार्थयामास। राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे । करिष्यामि यथाप्राणं प्रवक्ष्यामि च वाहिनीम्' इति । तस्यानुमत्यभावेऽपि बलाद्राज्यस्वीकार उत्तरकाण्ड उक्तः— 'यावत् प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण। राक्षसेन्द्र महावीर्य लङ्कास्थस्त्वं धरिष्यसि । शापितस्त्वं सखित्वेन कार्यं ते मम शासनम्। प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि' इति । इत्थमनन्यप्रयोजनत्वादेवास्मै रामः कुलधनं श्रीरङ्गनाथं ददौ । धर्मसंस्थापनार्थमेवावतीर्णस्य रामस्य नियोगेनावशिष्टां राक्षसजातिं सन्मार्गे प्रवर्तयितुं तस्य राज्याङ्गीकरणम् । इदमप्याज्ञानुविधायित्वात् कैङ्कर्यं कोटावन्तर्भूतमिति विभीषणतात्पर्यम् । अतो यथावद्विदितार्थो लक्ष्मणोऽपि ' अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ' इति सोपाधिकपितरं दशरथं परित्यज्य निरुपाधिकसकलविधबन्धुं राममेव ' अग्रतस्ते गमिष्यामि पन्थानमकुतोभयम् । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ' इति रामपरिचरणमेव फलं प्रार्थयामास। 'स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ' इति राघवं शरणमुपागतश्च । तथा विभीषणोऽपि सोपाधिकबन्धुं भ्रातरं परित्यज्य कैङ्कर्यापेक्षयैव सर्वविधसहजबन्धुं रामं शरणं गत इति बोध्यम् । अत एव रामप्राप्त्यपेक्षया रावणपरित्यागवेलायामन्तरिक्षगतः श्रीमानिति प्रशंसितः। स तु नागवरः श्रीमान् लक्ष्मणो लक्ष्मसंपन्न इतिवत् । तस्मान्नाधर्मशङ्का विभीषणे। ननु यद्येवं तर्हि ' ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया । तावुभौ मम नाशाय प्रसक्तौ पुरुषर्षभौ । जीवन्नपि विपन्नोऽस्मि नष्टरा-

तं मेरुशिखराकारं दीप्तामिव शतह्रदाम् । गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ २ ॥
[1]ते चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः । तेऽपि [2]वर्मायुधोपेता [3]भूषणोत्तमभूषिताः ॥ ३ ॥
स च मेघाचलप्रख्यो [4]वज्रायुधसमप्रभः । वरायुधधरो वीरो दिव्याभरणभूषितः ॥ ४ ॥
तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः । वानरैः सह दुर्धर्षश्चिन्तयामास बुद्धिमान् ॥ ५ ॥
चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह । हनुमत्प्रमुखान्सर्वानिदं वचनमुत्तमम् ॥ ६ ॥
एष [5]सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः । राक्षसोऽभ्येति पश्यध्वमस्मान्हन्तुं न संशयः ॥ ७ ॥

ज्यमनोरथः । प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः इति नागपाशबन्धनसमये स्वस्य राज्यनाशकृतनिर्वेदः कथमुपपद्यते इति चेन्न । तत्रापि प्रतिज्ञाशब्दस्य रामकैङ्कर्यपरत्वात् । नष्टराज्यमनोरथ इत्यत्रापि राज्यशब्दो ' भवद्गतं मे राज्यं च ' इत्युक्तकैङ्कर्यसाम्राज्यपरः । एतेन ' राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः ' इति सुग्रीववचनं तु तदाशयाज्ञानकृतमिति न कश्चिद्दोष इति प्राहुः । अत एव चतुर्थश्लोके वक्ष्यति विभीषणः—' यदाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम् । तत्तथानुष्ठितं वीर त्वद्वाक्यसमनन्तरम् ' इति ॥ १ ॥

२–४ ] ति० टी०—मेरुशिखराकारमुन्नतत्वपीवरत्वरत्नबहुलत्वैस्तदाकारम् । दीप्तत्वगगनस्थत्वाभ्यां शतह्रदासाम्यम् ॥ २–४

रा० टी०—तमिति । मेरुशिखराकारम् उन्नतत्वपीनत्वमणिमयत्वादिना मेरुशिखरसदृशम् शतह्रदाम् । अतिप्रकाशवत्त्वेन विद्युतमिव गगनस्थं तं विभीषणं महीस्थाः वानराधिपाः ददृशुः ॥ २

गो० टी०—रावणसमीपादुत्पतनसमय एव सुग्रीवादयो विभीषणमपश्यन्नित्याह—तमिति । तं दवाग्नेर्निर्गत्य शीतलह्रदे पतितुमिवागच्छन्तम् मेरुशिखराकारम् उन्नतत्वपीवरत्वरत्नबहुलत्वादिभिर्मेरुशिखरतुल्यम् । किंच प्रतिपक्षत्यागलाभेन स्थिरतया स्थितत्वं प्रकाशमानत्वं पारतन्त्र्यज्ञापकत्वम् तेन रामस्य शृङ्गलाभः रावणस्य शृङ्गभङ्गश्चोच्यते । दीप्तामिव शतह्रदाम् । तेजिष्ठत्वगगनसंचाराभ्यां विद्युद्दृष्टान्तः । रामभक्ता वानरा नास्मान् प्रवेशयिष्यन्तीति कम्पः, अप्रवेशे जीवनं न सिध्यतीति त्वरा चेत्येतद्द्वयं तेन गम्यते । गगनस्थमिति दूरत एव ददृशुरिति भावः ॥ २ ॥

रा० टी०—स इति । मेघाचलप्रख्यः मेघाचलयोः सदृशः वज्रायुधसमा इन्द्रसदृशी प्रभा यस्य वरायुधधरः स विभीषणोऽस्तीति शेषः ॥ ३ ॥

रा० टी०—ये इति । ये तस्यानुचराः तेऽपि वर्मायुधोपेतत्वादिविशिष्टाः सन्ति ॥ ४ ॥

५–७ ] ति० टी०—आत्मपञ्चममात्मा पञ्चमो यस्य तं मन्त्रिचतुष्टयसहितं तमिति यावत् ॥ ५–७ ॥

रा० टी०—तमिति । आत्मा विभीषणः पञ्चमो यस्मिन् तं मन्त्रिचतुष्टयसहितमित्यर्थः । तं विभीषणं वानरैः सह सुग्रीवो दृष्ट्वा चिन्तयामास ॥ ५ ॥

गो० टी०—अथ सुग्रीवो लङ्कापुरीदेशादागमनमायुधसन्नाहं च दृष्ट्वा प्रहर्तुमेवागच्छतीति विचार्य तमर्थं वानरैः सह चिन्तयामासेत्याह—तमिति । तम् अत्यन्ताभिनिवेशेन शीघ्रमागतम् । आत्मपञ्चमम् आत्मना पञ्चत्वसङ्ख्यापूरकमित्यर्थः । अनलशरभसंपातिप्रघसनामभिश्चतुर्भी राक्षसैर्युक्तमिति यावत् । अनलादिगतसङ्ख्यापूरण एव विभीषणस्य प्राधान्यमुक्तम् । रामविषयप्रेमास्पदत्वं तु समानम् । सुग्रीवः गगनस्थदर्शनार्थं शीघ्रं शिर उन्नम्य दर्शनेन तात्कालिकग्रीवासौन्दर्यमूर्चितत्वीति । वानराधिपः शीघ्रमुत्थाय दर्शनं वानरसेनायां अपि स्वस्यैव रक्षकत्वेन रामविषयप्रीतेश्च राघवार्थे पराक्रान्ता इत्युक्तेभ्यो वानरेभ्योऽपि स्वस्यैव निरवधिकप्रीतिमत्ताज्ञापकत्वेन च । दुर्धर्षः शरणागतस्यापि पश्चादाकृष्टपादत्वापादकत्वेन अनभिभवनीयः स्थितः । बुद्धिमान्वानरैः सह चिन्तयामास । स्वयं समर्थत्वेऽपि तानप्यनुसृत्य चिन्तनं कार्यगौरवात् । चारो वा शत्रुर्वेति चिन्तयामास । आगमनमुखविकासादिना निर्दुष्टत्वनिश्चयेऽपि रामविषयप्रेमपारवश्येन चिन्तितवानिति बुद्धेः प्राशस्त्यम् ॥ ३ ॥

रा० टी०—चिन्तयित्वेति । मुहूर्तं चिन्तयित्वा हनुमत्प्रमुखान् वानरान् इदमुवाच ॥ ६ ॥

गो० टी०—विभीषणे सपरिकरे सविधस्थे मन्त्रविलम्बो न युक्त इति झटिति मनसा निश्चित्य सचिवादीन् प्रति निर्णीतमाह—चिन्तयित्वेति । चिन्ताया निर्णयान्तत्वादत्र चिन्तयित्वेति निर्णयवाची । नायं चारो नापि दूतः अपि तु बाधक एवेति निश्चित्य ॥ ४ ॥

रा० टी०—तदाकारमाह—एष इति । एष राक्षसः अस्मान् हन्तुमभ्येति ॥ ७ ॥

गो० टी०—स्वनिर्णीतार्थमाह—एष इति । एषः बाधकत्वैकान्तक्रौर्यसंपन्नः सर्वायुधोपेतः मनःस्थितक्रौर्यानुकूलहिंसापरिकरसंपूर्णः । अनुकूलस्य प्रतिकूलतानिश्चयवत् रामविषयप्रेमान्धतया एकायुधस्य बहुत्वनिश्चयः । एकायुधग्रहणचातुर्यदर्शनेन सर्वायुधग्रहणेष्वपि नैपुण्यं ज्ञायत इति वा तथोक्तम् । स्वामिपीडने ब्रह्मास्त्रसदृशशरणागतिरेतस्य हस्ते विद्यत इति वा । उत्पपात गदापाणिरित्यत्र सर्वायुधोपलक्षणमित्यन्ये राक्षसः सर्पजातिरिति वत् क्रौर्यातिशयोक्तिः । पश्यध्वं पश्यत

१ एतदादि श्लोकद्वयं गो. नास्ति; ३–४ श्लोकौ व्यत्यस्तौ रा. पाठे तत्र ' ते ' इत्यस्य स्थाने ये इति गो. पाठः । २ वर्मेति रा. पाठः । ३ भूषणैश्चापीति गो. पाठः । ४ महीन्द्रसमविक्रम इति गो. पाठः । ५ सर्वायुधेति गो. पाठः ।

**सुग्रीवस्य वचः श्रुत्वा सर्वे ते वानरोत्तमाः। शालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ८ ॥**
**शीघ्रं व्यादिश नो राजन्वधायैषां दुरात्मनाम्। निपतन्ति हता यावद्धरण्यामल्पचेतनाः ॥ ९ ॥**
**तेषां संभाषमाणानामन्योन्यं स विभीषणः। उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ १० ॥**
**स उवाच महाप्राज्ञः स्वरेण महता महान्। सुग्रीवं तांश्च संप्रेक्ष्य खस्थ एव बिभीषणः ॥ ११ ॥**
**रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः। तस्याहमनुजो भ्राता बिभीषण इति श्रुतः ॥ १२ ॥**

अस्मान् हन्तुम्। अस्मासु कस्यचिद्धनने हि शेषं जीविष्यति मूलभूतरामहनने सर्वविनाश इति बहुवचनार्थः ॥ ९ ॥

८ ] ति० टी०—शालान्शालवृक्षान् ॥ ८ ॥

रा० टी०—**सुग्रीवस्येति**। सर्वे वानरोत्तमाः शालान् शैलांश्चोद्यम्य इदमब्रुवन् ॥ ८ ॥

गो० टी०—वानराश्च सुग्रीववाक्यानुसारेणोद्योगं चक्रुरित्याह—**सुग्रीवस्येत्यादि**श्लोकद्वयेन। अल्पतेजस इति। अस्मद्बलस्य गजकवलप्राया इत्यर्थः ॥ ६ ॥ ७ ॥

९ ] ति० टी०—यावद्धता निपतन्ति। निपतिष्यन्तीत्यर्थः ॥ ९ ॥

रा० टी०—तदाकारमाह—**शीघ्रमिति**। यावदस्मात् हताः सन्तः धरण्यां निपतन्ति निपतन्तु तस्माद्धेतोः एषां राक्षसानां वधाय नोऽस्मान् व्यादिश आज्ञापय ॥ ९ ॥

१० ] ति० टी०—तेषामित्यनादरे षष्ठी। तानन्योन्यं संभाषमाणाननादृत्य रामस्य भगवतः परमदयालुत्वभावनया तेषामनादरः। खस्थ एव व्यतिष्ठतेति तिष्ठतेर्द्विःप्रयोगो निर्भयत्वेनावस्थानसूचनाय ॥ १० ॥

रा० टी०—**तेषामिति**। तेषाम् अन्योन्यं संभाषमाणानां सतामुत्तरं तीरमासाद्य खस्थः संस्तत्र व्यतिष्ठत ॥ १० ॥

गो० टी०—**तेषामिति**। अनादरे चेयं षष्ठी। वदन्तु नामैते वानरा यत् किंचित्। सर्वज्ञः परमकारुणिकः सर्वलोकशरण्यो रामो मामवश्यं रक्षिष्यत्येवेति महाविश्वासेन तेषामन्योन्यभाषणमनादृत्य प्रहरणोद्यतानामपि तेषामाभिमुख्येनाजगाम। आगत्यापि निर्विशङ्कः सन् सर्वेषामात्मानं प्रकाशयन्नाकाश एव स्थितवानित्यर्थः। अत्र खस्थो व्यतिष्ठतेति द्विःप्रयोगो निर्भयत्वेन निष्कम्पावस्थानसूचनार्थः ॥ ८ ॥

११ ] ति० टी०—महाप्राज्ञः। सर्वदोषाकररावणत्यागाखिलदुर्लभसर्वगुणाकररामाश्रयणाच्च महाप्राज्ञत्वम्। अतएव महान्। महता स्वरेण सर्वलोकशरण्यस्यार्तरवश्रवणाय स्वरमहत्त्वम्। धीरगम्भीरत्वं वा स्वरे महत्त्वम् तेन निर्भयत्वप्रकाशः॥११॥

रा० टी०—**स इति**। स विभीषणः सुग्रीवं तान् वानरांश्च संप्रेक्ष्य महता स्वरेण उवाच ॥ ११ ॥

गो० टी०—अथ पुरुषकारलेशमनपेक्ष्य सर्वानपि प्रतिबन्धिनो निवार्य मां रक्षिष्यतीति महाविश्वासशाल्यपि बिभीषणः सहसा रामं शरणं नोपजगाम किंतु दूरत एव स्थितः। प्रातिकूल्यप्रवृत्तानेव सुग्रीवादीन् पुरुषकारभूतान् कृत्वोवाचेत्याह—**उवाच चेति**। उवाच च चकारेण स्वीकारे स्वागमनमेव पर्याप्तं वचनमप्युक्तवान्। पद्भ्यामभिगमाच्चेत्यागमनमपि भारायेति मन्यमानस्य तदुपरि वाक्यं क्षते क्षारवत्। महाप्राज्ञ इत्यनेनान्तरङ्गपुरुषकारेणैव कृपालुरपि राजा शरणमुपगन्तव्य इति परिज्ञानं वानराणां मत्प्रतिकूलसंरम्भोपि न मद्वेषकृतः किंतु रामभक्तिप्रकर्षकारितः अतो गुण एवायमिति जानन्यदि रामपरिचारका एते नाङ्गीकुर्युः किं रामाङ्गीकारेण अतो रामाङ्गीकारादप्येतदन्तर्भावि एव मम पुरुषार्थ इति ज्ञानं च विवक्षितम्। स्वरेण महतेति। पुरुषकारभूतानां सर्वेषां सर्वलोकशरण्यस्य च स्वार्तरवश्रवणाय महास्वरप्रयोगः रामविषये चैवंविधार्तरवोच्चारणं भाग्याधिकस्यैवेति विवक्षया महानित्युक्तिः। यथोक्तं लक्ष्मीतन्त्रे—आकिंचन्यैकशरणाः केचिद्भाग्याधिकाः पुनः। मामेव शरणं प्राप्य मामेवान्ते समश्नुत इति ॥ ९ ॥

१२ ] ति० टी०—रावणो नामेत्यादिना स्वस्य रामानुकूल्यतत्प्रातिकूल्यराहित्यादिरूपशरणागत्यङ्गबोधनम्। 'आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥ इत्युक्तेः रावणत्वेन सर्वलोकपीडकत्वम्, दुर्वृत्तत्वेनाकृत्यकर्तृत्वम्, राक्षसत्वेन जातिक्रौर्यम्, राक्षसेश्वर इत्यनेन भृत्यक्रौर्यम्,तद्भ्रातृत्वेन स्वस्यापि दोषवत्त्वकथनाद्गर्वहानिरूपकार्पण्यमुक्तम् ॥ १२ ॥

रा० टी०—तत्स्वरूपमाह—**रावण इत्यादिभिः**। रावणो नाम यो राक्षसेश्वरः तस्य भ्राता बिभीषण इति श्रुतोऽहमस्मि ॥ १२ ॥

गो० टी०—अत्र प्रथमं स्वदोषान् पुरस्करोति—**रावण इति**। रावणं लोकरावणमिति न्यायेन रावयतीति व्युत्पत्तिसंभवान्नामैव क्रूरमित्यर्थः। न केवलं नामैव क्रूरं व्यापारोऽपि नृशंस इत्याह—दुर्वृत्त इति। जातिरपि तथाविधेत्याह—राक्षस इति। न केवलं स्वयमेव क्रूरः क्रूरानेकपरिकरसमवेत इत्याह—राक्षसेश्वर इति। रावणस्यैवंविधत्वे तव किमायातमित्यत्राह—**तस्याहमिति**। यद्यहमग्रजः स्यां तर्हि तदाज्ञानुवर्तित्वेन धनदवत्तद्दोषैर्न लिप्येय। अनुजत्वेन तन्मनीषिताः सर्वे दोषास्तदाज्ञया मया कृता इति भावः ॥ १० ॥

१ निपतान्त्वति गो. पाठः। २ चैते इति गो. पाठः। ३ तेजस इति गो. पाठः। ४ खस्थ इति गो. पाठः। ५ उवाच चेति गो. पाठः। ६ सर्वान्वानरयूथपानिति गो. पाठः। ७ राक्षस इति गो. रा. पाठः।

तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् । रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता ॥ १३ ॥
तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् । साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ १४ ॥
स च न प्रतिजग्राह रावणः कालचोदितः । उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥ १५ ॥
सोऽहं परुषितस्तेन दासवच्चावमानितः । त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १६ ॥
निवेदयत मां क्षिप्रं राघवाय महात्मने । सर्वलोकशरण्याय विभीषणमुपस्थितम् ॥ १७ ॥

१३ ] ति० टी०-दुर्वृत्तत्वमेवाह—तेनेति । राक्षसीभिः सुरक्षितेत्यनेन सीतापातिव्रत्याहानिः सूचिता तद्धानौ हि ताभी रक्षणानुपयोग इति भावः ॥ १३ ॥

रा० टी०-स्वागमने हेतुं वदितुमाह—तेनेति । तेन रावणेन हृता राक्षसीभिः सुरक्षिता सीताऽस्तीति शेषः ॥ १३ ॥

गो० टी०-राघवस्य तु प्रियापहारनिरोधादिभिः समाश्रितहननाच्च विशेषतस्तेनापकृतमित्याह—तेनेति । स्पष्टम् । तथा न कृतम् । स्वस्य सपरिवारस्य विनाशार्थमेवं कृतवान् रुद्धा च । प्रमादाद्धरणेऽपि पश्चात्तापेन पुनर्न त्यक्ता किंतूच्छ्वासनिःश्वासासंचारस्थले रुद्धा । विवशा न्यस्तपाणिपादाचलनेन रामविश्लेषदुःखेन आश्वासकान्तराभावेन च स्वबलहानिं प्रकाशयन्ती स्थिता । रामभोगपरंपरया हृद्यांमेतादृशावस्थाविशिष्टां कृतवान् राक्षसीभिः सुरक्षिता । विकृतभयंकरवेषवचोभिरेकाक्ष्येककर्णीप्रभृतिभिः आश्वासकनवग्राकरणपण्डितस्यापि यथा न प्रवेशस्तथा रक्षिता ॥ ११ ॥

१४ ] ति० टी०-हेतुभिर्हेतुमद्भिः निर्यात्यतां दीयतामिति हेतुमद्भिर्वाक्यैः पुनः पुनः साधु न्यदर्शयमित्यन्वयः । अनेन भगवदानुकूल्यसंकल्पः प्रातिकूल्याभावश्च दर्शितः ॥ १४ ॥

रा० टी०-तमिति । सीता रामाय निर्यात्यतां दीयताम् इति वाक्यैः न्यदर्शयम् अबोधयम् ॥ १४ ॥

गो० टी०-अस्त्वेवं ततः किमित्यत्राह—तमिति । हेतुभिर्वाक्यैः हेतुप्रतिपादकैर्वाक्यैः । न्यदर्शयम् अबोधयम् । बोधितमेवार्थमाह—साध्विति । निर्यात्यतां प्रत्यर्प्यताम् ॥१२॥

१५ ] ति० टी०-विपरीतो मुमूर्षुः ॥ १५ ॥

रा० टी०-स इति । उच्यमानं मया कथ्यमानं हितं वाक्यं विपरीतः मुमूर्षुरौषधमिव रावणो न प्रतिजग्राह ॥ १५ ॥

गो० टी०-स चेति । विपरीतः मुमूर्षुः ॥ १३ ॥

१६ ] ति० टी०-दासवदवमानितः । भ्रातापि सन्निति शेषः । शरणं गत इत्यनेनात्मनिक्षेपरूपमङ्गं दर्शितम् ॥ १६ ॥

रा० टी०-स इति । स हितोपदेष्टाऽहं तेन रावणेन परुषितः परुषमुक्तः अवमानितश्च अतः पुत्रादीन् त्यक्त्वा शरणं रक्षकं राघवं गतः प्राप्तोऽस्मि ॥ १६ ॥

गो० टी०-एवमीश्वरस्य निर्हेतुककरुणाकृतेन रावणावमानेन प्रयोजनान्तरवैमुख्यं जातम् ततश्च परमपुरुषार्थभूतरामप्राप्त्यर्थं राममेव शरणमुपगतोऽस्मीत्याह—सोऽहमिति । अत्र पुत्रान् दारानिति, परित्यक्ता मया लङ्का मित्राणि च धनानि चेति वक्ष्यमाणानां लङ्काराज्यादीनामुपलक्षणम् । अत्र फलान्तरानिर्देशाद्राक्षसानां वधे साह्यमित्यादिवचनस्य स्वेनैव वक्ष्यमाणत्वाच्च रामपरिचरणस्यैव फलत्वपक्षो युक्तः ॥ १४ ॥

१७ ] ति० टी०-सर्वलोकशरण्याय । 'मम वंशानुरूपश्च धर्मात्मा च भविष्यति' इति कैकस्यै ब्रह्मपुत्रेण विश्रवसा वरदानात्सात्विकत्वेन ब्रह्मतस्तथैव लब्धवरत्वेन च, विभीषणस्य सर्वलोकस्रष्टुः सर्वलोकान्तर्यामिणश्चायमवतार इति ज्ञानात्सर्वलोकशरण्यत्वमहात्मत्वज्ञानं रामविषये बोध्यम् । राघवाय ' किं त्वर्थिनामर्थितदानदीक्षाकृतव्रतश्लाघ्यमिदं कुलं नः ' इत्यादिवचनैः प्रसिद्धवैभवे रघुवंशेऽवतीर्णाय अनेनार्थिप्रार्थितवैफल्याभावो ध्वनितः । क्षिप्रमित्यनेन शीतलसुरभि सलिलं प्राप्य तृषितस्येव विलम्बासहत्वम् । उपस्थितं शरणत्वेन प्राप्तं निवेदयत शरणागत इति ज्ञापयत । अनेन गोप्तृत्ववरणं रक्षिष्यत्यवश्यमेवेति विश्वासश्च दर्शितः ॥ १७ ॥

रा० टी०-निवेदयतेति । सर्वलोकशरण्याय निखिलजनरक्षकाय राघवाय उपस्थितं प्राप्तं विभीषणं मां निवेदयत यूयं कथयत ॥ १७ ॥

गो० टी०-एवं शरण्यस्य विज्ञाप्यमर्थमुक्त्वा तद्विज्ञापनाय गुरुपकारभूतान् प्रार्थयते—सर्वलोकशरण्यायेति । शरणे रक्षणे साधुः शरण्यः " तत्र साधुः " इति यत्प्रत्ययः । शरणं भवितुमर्हः शरण्य इति निरुक्तिः अनालोचितकुलविद्यावृत्तादिविशेषाशेषलोकशरण्यायेत्यर्थः अतः संचितविविधापराधस्य रावणस्यापि युष्माकमिवात्रांशोऽस्ति किमुत तत्संबन्धिनः परंतु रुच्यभावादेव स स्वांशं न लब्धवान् मम त्वाभिमुख्येनागतस्य दुरपनोदोंऽशलाभ इति भावः । अत्र शरण्याङ्गभूतं सुलभत्वपरत्वरूपं गुणद्वयं प्राधान्येन दर्शयति—राघवाय महात्मन इति । सुलभत्वेऽप्यनिष्टानां लोष्टानाम् उत्कर्षेऽप्यसुलभानां मेरुप्रभृतीनां चानुपादेयत्वादुभयमप्यपेक्षितम् । यत्तदनिर्देश्यमित्यादिवेदान्तगोचरस्य परब्रह्मणः सकलमनुजतिर्यङ्नयनसाक्षात्कारक्षममनुजावतारात् केयमन्या सौलभ्यकाष्ठेति भावः । महात्मने । एवमवतारेऽप्यजहत्स्वभावतया निखिलहेयप्रत्यनीकत्वे सति ज्ञानशक्त्याद्यनन्तकल्याणगुणैकतानाय निवेदयत अत्र प्रत्यक्षस्य स्वागमनस्य निवेदने प्रयोजनाभावात् स्वापराधपरिपूर्तिः

१ व्यत्यस्तोऽयं श्लोकः गो. पाठे ।

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः। लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १८ ॥
प्रविष्टः शत्रुसैन्यं हि प्राप्तः शत्रुरतर्कितः। निहन्यादन्तरं लब्ध्वा उलूको वायसानिव ॥ १९ ॥
मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि। वानराणां च भद्रं ते परेषां च परंतप ॥ २० ॥
अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः। शूराश्च निकृतिज्ञाश्च तेषां जातु न विश्वसेत् ॥ २१ ॥
प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम्। अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशयः ॥ २२ ॥
अथ वा स्वयमेवैष छिद्रमासाद्य बुद्धिमान्। अनुप्रविश्य विश्वस्ते कदाचित्प्रहरेदपि ॥ २३ ॥

---

इहामुत्रफलभोगविरागः शरणागतिलक्षणनिरपायोपायपरिग्रहः रामकैङ्कर्याभिलाषः तत्परिचारकान्तर्भावश्चेत्येतेऽर्था विज्ञापनीया इत्यर्थः। क्षिप्रमित्यनेन यावच्छरण्यः स्वयमेव परिग्रहीष्यति ततः पूर्वमेव विज्ञापनेन युष्माभिः सुहृत्कार्यमाचरणीयमिति भावः। विभीषणम्। रावणवन्नाहं प्रतिकूलः किंतु विभीषणस्तु धर्मात्मेत्यनुकूल एव। उपस्थितम्। अतिहीनस्याप्युपगमनमेव हि रामाङ्गीकारे बीजमिति भावः ॥ १९ ॥

१८ ] ति० टी०—एतद्विभीषणोक्तम्। अथ लोकदृशा शत्रुपक्षो न विश्वसनीय इति मत्वा राममपि तथैव बोधयतीत्याह—लक्ष्मणस्येति। संरब्धं संरम्भोपेतमिति क्रियाविशेषणम् ॥ १८ ॥

रा० टी०—एतदिति। सुग्रीवः एतत् विभीषणेनोक्तं वचनं संरब्धं कोपोपेतं यथा भवति तथा लक्ष्मणस्याग्रतोऽग्रे राममब्रवीत् ॥ १८ ॥

गो० टी०—अथ सुग्रीवो रामप्रेमातिशयजनिताढ्यामोहात् अतिस्नेहः पापशङ्कीति न्यायेन तस्य सर्वशक्तित्वमपि विस्मृत्य शरणागतवत्सलो रामः शरणागतिशब्दश्रवणमात्रेण गूढहृदयमेनं परिगृह्णीयात् ततः क्रूरहृदयोऽयं रामे किमिव पापमाचरेदित्यस्थानभयशङ्काव्याकुलितः शीघ्रं रामसमीपं गत्वा स्वसमानहृदयं लक्ष्मणमपि सहायीकृत्य विभीषणो निग्राह्य इति विज्ञापयामासेत्याह—एतदिति। तुशब्देन पूर्वोक्तविशेष उच्यते। लघुविक्रमः शीघ्रगमनः। संरब्धं प्रेमभरात् त्वरितोदिताक्षरम् ॥ १६ ॥ १७ ॥

१९ ] ति० टी०—इदंपदार्थमाह—प्रविष्ट इति। कश्चिदस्मच्छन्न राक्षसत्वात्पूर्वं शत्रो रावणस्य सैन्यं प्रविष्ट इदानीमतर्कितागमन एव सन्नस्मत्सैन्यं प्राप्तः सोऽस्मावन्तरं लब्ध्वोलूको वायसानिव नो हन्यात् ॥ १९ ॥

रा० टी०—तदाकारमाह-प्रविष्ट इत्यादिभिः। शत्रुसैन्यं प्रविष्टः पूर्वं शत्रुसैन्ये संस्थितः अत एव शत्रुः इदानीमतर्कितः अज्ञातः सन् प्राप्तः अस्मत्समीपमागतः अतः अन्तरमवकाशं लब्ध्वा उलूको वायसानिव निहन्यात् ॥ १९ ॥

२० ] ति० टी०—यदेवमतः—मन्त्र इति। वानराणां च परेषां च क्रमादनुग्रहनिग्रहार्थं त्वं मन्त्रे कार्याकार्यविचारे, व्यूहे सेनासंनिवेशे, नये सेनानयने। यद्वा विचार्य निश्चितानामुपायानां तत्तद्विषयप्रयोगे चारे परबलवृत्तान्तज्ञानफलके चारपुरुषप्रवर्तने युक्तः सावधानो भवितुमर्हसि एवं सति ते भद्रमित्यर्थः ॥ २० ॥

रा० टी०—नन्विदानीं किं कर्तव्यमित्यत आह—मन्त्र इति। मन्त्रे कर्तव्याकर्तव्यविचारे व्यूहे यथोचितसेनासंस्थापने नये सेनाचालने च चारे वृत्तान्तलाभार्थं चारनियोगे च युक्तः सावधानो भवितुमर्हसि अत एव परेषां राक्षसरिपुत्वं प्राप्तानां वानराणां ते च भद्रम् ॥ २० ॥

गो० टी०—मन्त्र इति। मन्त्रः कार्याकार्यविचारः। व्यूहः सेनास्कन्दनिवेशः नयः विचार्य निश्चितानामुपायानां स्वस्वविषये प्रयोगः चारः गूढप्रेषणम् वानराणां परेषां राक्षसानां च मन्त्रादिषु विषये युक्तः अवहितः भवितुमर्हसि। वानराणां मन्त्रादीन् प्रयोजय शत्रूणां मन्त्रादींस्तु सम्यक् जानीहि एवं सति तव भद्रं भविष्यतीत्यर्थः ॥ १८ ॥

२१ ] ति० टी०—उक्तमेवैतदित्याह—अन्तरिति। अन्तर्धानगता अदृश्यसंचारस्वभावाः निकृतिज्ञाः कपटोपायेन गूढविप्रियकरणाभिज्ञाः ॥ २१ ॥

रा०टी०—ननु स्वरक्षार्थमागतेनानेन नास्माकं भीतिरित्यत आह—अन्तरिति। अन्तर्धानेन अलक्ष्यत्वेन गतं गमनं येषां निकृतिज्ञाः गूढाभिप्रायवेदितारः ये एते राक्षसाः तेषां जातु कदाचिदपि न विश्वसेत् ॥ २१ ॥

गो० टी०—अस्त्वेवं ततः किमित्याशङ्क्य प्रकृतं निशापयति—अन्तर्धानेति। अन्तर्धानगताः अदृश्यचारिणः निकृतिज्ञाः कपटोपायवेदिनः ॥ १९ ॥

२२ ] ति० टी०—किं च योऽयमागतः स रावणस्य प्रणिधिश्चार एव भवेत्। अस्तु किं ततस्तत्राह—अन्विति। भेदमङ्गदादिविषये ॥ २२ ॥

रा० टी०—प्रणिधिरिति। अयं राक्षसेन्द्रस्य प्रणिधिः चारो भवेत् अत एव स प्रणिधिः अस्मासु अनुप्रविश्य भेदं भेदरूपोपायं कुर्यात् ॥ २२ ॥

गो० टी०—विश्वासे वा किमयं करिष्यतीत्याशङ्क्य भेदं दण्डं वा करिष्यतीत्याह—प्रणिधिरिति। प्रणिधिः चारः। 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः। चारश्च गूढपुरुष' इत्यमरः। भेदं मित्रभेदम् ॥ २० ॥

२३ ] ति० टी०—विश्वस्ते प्राप्तविश्वासे। अस्मद्बल इति शेषः ॥ २३ ॥

---

१ श्लोकोऽयं २८ श्लोकोत्तरं गो. पाठे। २ तेष्विति गो. पाठः

मित्राटविबलं चैव मौलंभृत्यबलं तथा। सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २४ ॥
प्रकृत्या राक्षसो ह्येष भ्रातामित्रस्य [4]वै प्रभो। आगतश्च रिपुः साक्षात्कथमस्मिंश्च विश्वसेत् ॥ २५ ॥
रावणस्यानुजो भ्राता विभीषण इति श्रुतः। चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ २६ ॥
रावणेन प्रणीतं हि तमवेहि विभीषणम्। तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ २७ ॥
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः। प्रहर्तुं मायया छन्नो विश्वस्ते त्वयि चानघ ॥ २८ ॥
[ प्रविष्टः शत्रुसैन्यं हि प्राज्ञः शत्रुरतर्कितः। निहन्यादन्तरं लब्ध्वा उलूक इव वायसम् ॥ ]
वध्यतामेष तीव्रेण दण्डेन सचिवैः सह। रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ २९ ॥

रा० टी०—स्वतर्कितान्तरमाह—अथवेति। अथवा एषः स्वयं रावण एव अत एव अनुप्रविश्य विश्वस्ते प्राप्तविश्वासे मदादौ कदाचित्प्रहरेत् ॥ २३ ॥

गो० टी०—अथवेति। अपिः संभावनायाम् ॥ २१ ॥

२४ ] ति० टी०—नन्वनेनाप्यागतेनास्माकमधिकं बलमेव भविष्यतीत्याशङ्क्य नेत्याह—मित्रेति। मित्रेणाटविकेनारण्यकेन प्रेषितं बलं मित्राटविबलम् मौलमाप्तबन्धुप्रहितं बलम् 'मूलं वशीकृतौ स्वीये' इति कोशः। भृत्यबलं तत्कालभृतिदानसंपादितबलम् मौलभृत्यबलमिति समाहारद्वन्द्वः द्विषत्प्रेषितं बलं द्विषद्बलम् ॥ २४ ॥

रा० टी०—ननु भ्रातृविरोधित्वेनायमस्मत्सहाय एव भविष्यतीत्यत आह—मित्रेति। मित्राटविबलं मित्राणाम् अटवीनाम् अटवीनिवासिनामुदासीनानामित्यर्थः, बलं मौलं स्ववशीभूतराजादिप्रेषितं भृत्यं तात्कालिकमूल्यदानेन संपादितम् द्वयोः समाहारद्वन्द्वः तदेव बलमिति कर्मधारयः एतत्सर्वं बलं ग्राह्यं द्विषद्बलं वर्जयित्वा शत्रुबलं न ग्राह्यमित्यर्थः 'मूलं वशीकृते स्वीये' इति कोशः ॥ २४ ॥

गो० टी०—शत्रुसकाशादागतस्यास्य परिग्रहे शत्रोर्बलक्षयः अस्माकं बलवृद्धिश्च स्यादित्याशङ्क्य द्विषद्बलव्यतिरिक्तमेव बलं ग्राह्यमित्याह—मित्रेति। मित्रबलं मित्रसंबन्धिबलम् अटवीबलम् आटविकजनरूपं बलम् मौलं परंपरागतं सैन्यम्। भृत्यबलं तादात्विकभृतिप्रदानोपजीवि बलम् ॥ २२ ॥

२५ ] ति० टी०—अस्य द्विषद्बलत्वमेव दर्शयति—प्रकृत्येति। अमित्रस्य रावणस्य ॥ २५ ॥

रा० टी०—प्रकृत्येति। आगतो ह्येषः प्रकृत्या जात्या राक्षसः अमित्रस्य रिपोर्भ्राता अत एव रिपुः अतः अस्मिन् कथं विश्वसेत् विश्वासो न युक्त इत्यर्थः ॥ २५ ॥

गो० टी०—न केवलं द्विषद्बलत्वमात्रम् अन्येऽप्यपरिग्राह्यताहेतवः सन्तीत्याह—प्रकृत्येति। प्रकृत्या जात्येत्यर्थः ॥ २३ ॥

२६ ] ति० टी०—अमित्रभ्रातृत्वं तद्वचनादेव निश्चितमित्याह—रावणस्येति। इति तन्मुखादेव श्रुतमित्यर्थः ॥ २६ ॥

रा० टी०—ननु रावणभ्राताऽयमिति त्वया कथं ज्ञातमित्यत आह—रावणस्येति। विभीषणः शरणं रक्षकं भवन्तं गतः प्राप्तः इति तेनैवोक्तमिति शेषः ॥ २६ ॥

गो० टी०—नन्वयं शरणागतः कथं परित्याज्य इत्याशङ्क्य शरणागतिलक्षणमायोपायेन विश्वासमुत्पाद्य त्वयि प्रहर्तुं प्रवृत्तत्वादस्यापरिग्राह्यत्वमात्रं किंतु सहायैः सह वध्यत्वमित्याह—रावणेनेत्यादि। श्लोकद्वयमेकं वाक्यम्। प्रणिहितं प्रणिधिकर्मणा नियुक्तम्। अस्य शरणागतिर्विप्रलम्भकृतेति भावः। क्षमवतां युक्तव्यापारवताम् क्षमं हितम् 'क्षमं शक्ते हिते त्रिषु' इत्यमरः ॥ २४ ॥

२७ ] ति० टी०—इदमपि वचो न वास्तवमित्याह—रावणेनेति। प्रणीतं प्रेषितमवेहि। अतस्तस्य निग्रहं क्षमं मन्ये। क्षमवतां युक्तव्यापारवतां क्षमावतां वा ह्रस्व आर्षः ॥ २७ ॥

रा० टी०—रावणेनेति। तमागतं विभीषणं रावणेन प्रणिहितं प्रेषितमवेहि अतः तस्य विभीषणस्य क्षमं योग्यं निग्रहं दण्डं मन्ये ॥ २७ ॥

२८ ] ति० टी०—त्वयि प्रहर्तुं रावणेन संदिष्टः सन्निहागतः ॥ २८ ॥

रा० टी०—राक्षस इति। जिह्मया बुद्ध्या संदिष्टः मायया छन्नः अयं राक्षसः विश्वस्ते त्वयि प्रहर्तुमागतः ॥ २८ ॥

गो० टी०—प्रणिधिरप्येष नः किं करिष्यतीत्यत्राह—राक्षस इति। संदिष्टः रावणेनेति शेषः। प्रहर्तुं संदिष्ट इति संबन्धः ॥ २६ ॥

गो० टी०—यदा शाठ्यं दृश्यते तदासौ हन्यतां तत्राह—प्रविष्ट इति। प्राज्ञ इति हेतुगर्भं विशेषणम्। प्राज्ञत्वादतर्कितः अस्मज्जिघांसयायमागत इति तैरविचारितः अत एव तेषां सैन्यं प्रविष्टः सन् कदाचित् अन्तरं छिद्रं लब्ध्वा हन्यादित्यर्थः। प्रविष्टोऽप्येकाकी कथं बहून् हनिष्यतीत्याशङ्क्य छिद्रसहितस्य युज्यत इति दृष्टान्तमुखेन प्रकटयति—उलूक इति ॥ २६ ॥

२९ ] ति० टी०—अत एव वध्यताम् ॥ २९ ॥

रा० टी०—वध्यतामिति। यतः एष रावणस्य भ्राता अत एषः तीव्रेण दण्डेन वध्यताम् ॥ २९ ॥

गो० टी०—तर्हि किं कर्तव्यं तत्राह—वध्यतामिति

१ अटवीबलमिति गो.पा.। २ मौलमिति गो. रा.पा.। ३ राक्षसेन्द्रस्येति गो.पा.। ४ ते इति गो.पा.। ५ रिपोरिति गो.पा.। ६ श्लोकोऽयं मन्त्रे इत्यस्माच्छ्लोकात्परो गो.पाठे। ७ प्रणिहितमिति गो. रा.पा.। ८ उपागत इति गो.पा.। ९ राघवेति गो.पा.। १० तिल० पाठे २९ श्लोऽयं श्लोको गो.पाठेऽत्र।

एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः। वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ ३० ॥
सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महाबलः। समीपस्थानुवाचेदं हनुमत्प्रमुखान्कपीन् ॥ ३१ ॥
यदुक्तं कपिराजेन रावणावरजं प्रति। वाक्यं हेतुमदत्यर्थं भवद्भिरपि च श्रुतम् ॥ ३२ ॥
सुहृदामर्थकृच्छ्रेषु युक्तं बुद्धिमता सदा। समर्थेनोपसंदेष्टुं शाश्वतीं भूतिमिच्छता ॥ ३३ ॥
इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः। सोपचारं तदा राममूचुः प्रियचिकीर्षवः ॥ ३४ ॥
अज्ञातं नास्ति ते किंचित्त्रिषु लोकेषु राघव। आत्मानं पूजयन्राम पृच्छस्यस्मान्सुहृत्तया ॥ ३५ ॥

वध्यतां केवलनिरसने कृते मारीचवदनर्थकारी स्यादिति भावः। तीव्रेण दण्डेन वालिवदेकेन बाणेन न हन्तव्यः। किंतु शिरसि वर्तिं कृत्वा दीपारोपणं कार्यम्। सचिवैः सह प्रथमं तेषां शिरांसि छित्त्वा विभीषणहस्ते दत्त्वा ततोऽयं वध्यताम्। तत्र हेतुमाह—**रावणस्येत्यादि** ॥ २७ ॥

३० ] ति० टी०—वाक्यकुशलं राममित्यन्वयः ॥ ३० ॥

रा० टी०—**एवमिति**। संरब्धः ईषत्कोपविशिष्टः वाक्यज्ञः सुग्रीवः वाक्यकुशलं राममेवमुक्त्वा मौनमुपागमत् ॥ ३० ॥

गो० टी०-एवं सुग्रीवो विभीषणविषयवक्तव्यमुक्त्वा अतः परमनेन यत्किंचिदुक्तं चेदुत्तरं वक्ष्याम इति तूष्णीं स्थित इत्याह—**एवमुक्त्वेति** ॥ २८ ॥

३१ ] ति० टी०—अथ रामः शरणागतं श्रुत्वानिनीषुरपि द्रागेव सुग्रीववाक्यभङ्गस्यायुक्तत्वमालोच्य विचारं प्रस्तावयति—**सुग्रीवस्येति** ॥ ३१ ॥

रा० टी०—**सुग्रीवस्येति**। रामः सुग्रीवस्य वाक्यं श्रुत्वा हनुमत्प्रमुखानुवाच ॥ ३१ ॥

गो० टी०—अथ शरणागतवत्सलो रामः सुग्रीवस्य संरम्भप्रतिक्षेपाय यत्किंचिद्व्याजमपेक्षमाणो विभीषणस्य विश्वासातिरेकेण किंचिद्विलम्बेऽपि भावं निवेदयतेति वदतस्तस्य तदन्तर्भावापेक्षां च सम्यगालोच्य प्रतिक्षेपकमुखेनैव तदानयनं कर्तुकामो हनुमदादीनुवाचेत्याह—**सुग्रीवस्येति**। स्पष्टम् ॥ २९ ॥

३२ ] ति० टी०—सुग्रीवस्य सुमतितां स्वहितैषित्वं च मन्त्रिभ्य आह—**यदुक्तमिति**। मन्त्रे व्यूह इत्यादिनेति शेषः अत्यर्थं हेतुमद्भृशं युक्तिमत् ॥ ३२ ॥

रा० टी०—तदाकारमाह—**यदिति**। कपिराजेन रावणावरजं विभीषणं प्रति हेतुमत् सहेतुकं यद् वाक्यमुक्तं तत् भवद्भिरपि अत्यर्थमत्यन्तं श्रुतम् ॥ ३२ ॥

गो० टी०—रामः सुग्रीववचनोपलालनपूर्वकमन्यानपि सचिवान् स्वं स्वं मतं पृच्छति—**यदुक्तमित्यादि**श्लोकद्वयेन। हेतुमत् युक्तियुक्तम् अर्थ्यम् अर्थः प्रयोजनं तस्मादनपेतम् ॥ ३९ ॥

३३ ] ति० टी०—तस्य युक्तत्वमाह—**सुहृदामिति**। सुहृदां शाश्वतीं भूतिमिच्छता बुद्धिमता प्रशस्तबुद्धिना समर्थेन विचारसमर्थेन, सदार्थकृच्छ्रेषु कृत्याकृत्यसंदेहेषु उपसंदेष्टुं सम्यगुपदेष्टुं युक्तम् उपदेशकरणमुचितमिति भावः ॥ ३३ ॥

रा० टी०—**सुहृदामिति**। सुहृदां शाश्वतीं भूतिमिच्छता बुद्धिमता प्रशस्तबुद्धिविशिष्टेन अत एव समर्थेन जनेन सुहृदामर्थकृच्छ्रेषु कर्तव्याकर्तव्यसंशयेषु सत्सु उपसंदेष्टुं युक्तम् एतेन विभीषणविषये यत्कर्तव्यं तद्भवन्तोऽपि ब्रुवन्त्विति सूचितम् ॥ ३३ ॥

गो० टी०—**सुहृदेति**। न[1]केन सुहृदोपदिष्टे सत्यन्यैस्तूष्णीं स्थातव्यम् अपि तु बुद्धिमता समर्थेन शाश्वतीं भूतिमिच्छता श्रेयस्कामेन सुहृदा सुहृदन्तरेणापि अर्थकृच्छ्रेषु कार्यसङ्कटेषु उपदेष्टुं युक्तमेव अतो यूयमपि वदतेत्यर्थः ॥ ३१ ॥

३४ ] ति० टी०—**इत्येवमिति**। मित्रैर्मित्रस्य उपदेष्टव्यमेवेति यतः, अतो यूयमपि स्वस्वमतं ब्रूतेत्येवं पृष्टा हरयः स्वं स्वं मतमूचुरित्यन्वयः ॥ ३४ ॥

रा० टी०—**इतीति**। इत्येवं परिपृष्टाः तेऽङ्गदप्रभृतयः स्वं स्वं मतमभिप्रेतं सोपचारं सत्कारपूर्वं यथा भवति तथा राममूचुः ॥ ३४ ॥

गो० टी०—**इत्येवमिति**। स्पष्टम् ॥ ३२ ॥

३५ ] ति० टी०—सोपचारमूचुरित्युक्तं तत्रोपचारं दर्शयति—**अज्ञातमिति**। आत्मानमस्माकमात्मानं सुहृत्तया सुहृद्भावप्रकाशनेन पूजयन्नित्यर्थः। यद्वा एवं वानरेष्वपरोऽप्ययं सुहृदित्यात्मनः कीर्तिं प्रथयन्नित्यर्थः ॥ ३५ ॥

रा० टी०—तदाकारमाह—**अज्ञातमित्यादिभिः**। यद्यपि त्रिषु ऊर्ध्वाधोमध्यवर्तिषु लोकेषु ते अविदितं किंचिन्नास्ति तथापि सुहृत्तया आत्मानं स्वशरीरभूतवानरमित्यर्थः पूजयन् अस्मान् पृच्छसि आत्मानमित्यत्र जात्यभिप्रायेणैकवचनम् किंच आत्मानं स्वं पूजयन् अयमतीव मर्यादापालको यदमन्त्रितं किंचिन्न करोतीति प्रशंसयन् पृच्छसि ॥ ३५ ॥

गो० टी०—सोपचारप्रशंसावाक्यमेवाह—**अज्ञातमिति**। अत्र सर्वज्ञ इत्युक्ते प्रायिकत्वशङ्का स्यादिति तन्निरासार्थं व्यतिरेकोक्तिः। त्रिषु लोकेषु कृतकमकृतकं कृतकाकृतकमित्युक्तेषु। आत्मानं सुहृत्तया सूचयन्नस्मान् पृच्छसीत्यन्वयः। अयं वानराणां सुहृदितीमां कीर्तिं लोके ख्यापयितुं तवायं प्रश्न इत्यर्थः। पूजयन्निति पाठे तु अस्मान् प्रत्येकं मानय-

१ यज्ञा इति गो. पाठः। २ हरीनिति गो. पाठः। ३ तदिति गो. पाठः। ४ सुहृदा हीति गो. पाठः। ५ सतेति गो. पाठः। ६ ऽपीति गो. पाठः। ७ सूचयन्नानन्निति गो. पाठः।

त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः । परीक्ष्यकारी स्मृतिमान्निसृष्टात्मा सुहृत्सु च ॥ ३६ ॥
तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव । हेतुतो मतिसंपन्नाः समार्थाश्च पुनस्तथा[1] ॥ ३७ ॥
इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः । विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३८ ॥
शत्रोः सकाशात्संप्राप्तः सर्वथा तर्क्य[2] एव हि । विश्वासनीयः[3] सहसा न कर्तव्यो विभीषणः ॥ ३९ ॥
छादयित्वात्मभावं हि चरन्ति शठबुद्धयः । प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान्भवेत् ॥ ४० ॥
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह । गुणतः संग्रहं कुर्याद्दोषतस्तु विसर्जयेत्[4] ॥ ४१ ॥

स्मान् पृच्छसीत्यथ. । प्रत्येकं माननाभिप्रायेणैवात्मानमित्येकवचनप्रयोगः । यद्वा । आत्मानम् आत्मस्वभावम् । जानन् राजनीतिमिति यावत् । पूजयन् पालयन् । यद्वा सुहृत्तया शोभनहृदयतया हेतुना आत्मानं स्वम् पूजयन् । कार्यविचारेषु अस्मदपेक्षया स्वयमेव शोभनहृदय इति स्वप्रभावमभिव्यञ्जयितुमिति भावः । अस्मन्मतानि पूर्वपक्षीकृत्य स्वमतमेव सिद्धान्तयितुमिति भावः ॥ ३३ ॥

३६ ] ति० टी०–सुहृत्सु निसृष्टात्मा कृतविश्वासः सत्यव्रतो रक्षःस्वपि शरणागतरक्षणव्रतपालकः ॥ ३६ ॥

रा० टी०–त्वमिति । सत्यव्रतत्वादिविशिष्टः परीक्ष्यकारी संमतिपूर्वककार्यनिष्पादनशीलः अत एव सुहृत्सु निसृष्टः अधीनीकृत इत्यर्थः आत्मा स्वप्रयत्नो येन स त्वं यतोऽसि तस्मात् मतिसंपन्नाः सचिवाः सुग्रीवमन्त्रिण एकैकशो हेतुतस्तवाग्रे ब्रुवन्तु । श्लोकद्वयमेकान्वयि । रामसुग्रीवयोरभेदविवक्षायां तवेत्यस्य सचिवान्वयित्वेऽपि न क्षतिरिति दिक् ३६॥३७

गो० टी०–स्वपूजनार्थमस्मान् पृच्छसीत्यत्र हेतुमाह–त्वमिति । सत्यव्रतः शरणागतरक्षणव्रतस्य सापराधरावणादिष्वपि विफलीकर्तुमशक्यत्वात् परीक्ष्यकारी सर्वज्ञः सन्नपि सम्यग्घेतुभिर्विमृश्याचरणशीलः सुहृत्सु निसृष्टात्मा सुहृत्परतन्त्रीकृतात्मस्वरूपः पूर्वश्लोके सुहृत्त्वमात्रमुक्तम् अत्र तु सुहृत्परतन्त्रत्वमिति भेदः ॥ ३४ ॥

३७ ] ति० टी०–तव सचिवा हेतुतो हेतुयुक्तं ब्रुवन्त्विति विधिः ॥ ३७ ॥

गो० टी०–तस्मादिति । तस्मात् भवत उक्तगुणत्वात् तावत् क्रमेण हेतुतः युक्तिभिः ब्रुवन्तु ॥ ३५ ॥

३८ ] ति० टी०–इत्युक्ते इति । हनुमदादिमन्त्रिभिरिति शेषः । विभीषणपरीक्षार्थं तत्परीक्षाफलकं वचनं राघवायाङ्गदो युवराजत्वादग्रत उवाच ॥ ३८ ॥

रा० टी०–इतीति । इत्युक्ते हनुमदादिभिः कथिते सति विभीषणपरीक्षैव अर्थः तात्पर्यं यस्य तद्वचनं हरिर्वानरोऽङ्गदः अग्रतः प्रथममुवाच ॥ ३८ ॥

गो० टी०–सुग्रीवानन्तरमङ्गदस्य युवराजतया प्रधानत्वात् प्रथममङ्गदो जगादेत्याह–इत्युक्त इति । विभीषणपरीक्षार्थं तदुपायप्रतिपादकमिति शेषः ॥ ३६ ॥

३९ ] ति० टी०–तर्क्य एव शङ्क्य एव विश्वासनीयो विश्वासप्रयुक्तव्यवहारार्हः सहसा न कर्तव्यः, अपि तु शनैरित्यर्थः ॥ ३९ ॥

रा० टी०–तत्स्वरूपमाह–शत्रोरिति । यतः शत्रोः सकाशात् समीपात् संप्राप्तः अत एव तर्क्यः परीक्षणीय एव अतः सहसा परीक्षामन्तरेण विभीषणो न विश्वासनीयः विश्वासयोग्यो न कर्तव्यः ॥ ३९ ॥

गो० टी०–शत्रोरिति । असौ शरणागतोऽपि शत्रोः सकाशात् प्राप्तत्वादनुकूलो नेति शङ्क्य एव अतः सहसा परीक्षामन्तरेण विश्वासयोग्यो न कर्तव्यः किंतु परीक्ष्य प्रवेष्टव्य इति सुग्रीववचनाद्विशेषः ॥ ३७ ॥

४० ] ति० टी०–तत्र हेतुमाह–छादयित्वेति । भावमान्तरम् ॥ ४० ॥

रा० टी०–तत्र हेतुमाह–छादयित्वेति । शठबुद्धयः भावं स्वाभिप्रायं छादयित्वा चरन्ति रन्ध्रेषु छिद्रेषु प्राप्तेषु सत्सु प्रहरन्ति च अतः सः रिपुजनविश्वासः सुमहान् अनर्थः अर्थविघातको भवेत् ॥ ४० ॥

गो० टी०–विश्वासकरणे अनिष्टमाह–छादयित्वेति । शठबुद्धयः कुटिलबुद्धयः आत्मभावं स्वाभिप्रायम् छादयित्वा स्वाभिप्रायसूचकेङ्गितादिकमपि स्थगयित्वेत्यर्थः चरन्ति यावद्रन्ध्रलाभं स्वैरसंचारं कुर्वन्ति रन्ध्रेषु अनवधानेषु सत्सु प्रहरन्ति हिंसन्ति ॥ ३८ ॥

४१ ] ति० टी०–तस्य तस्य गुणदोषपरीक्षणेनार्थानर्थौ हिताहितत्वे निश्चित्य तदनुरूपं व्यवसायमुद्योगं भजेतेति ह प्रसिद्धम् । कस्मिन्सति कीदृशो व्यवसायस्तत्राह–गुण इति । गुणभूयस्त्वेनेत्यर्थः ॥ ४१ ॥

रा० टी०–अर्थेति । अर्थानर्थौ अर्थसंपादकार्थविध्वंसकौ विनिश्चित्य कुत्रचित्कर्मणि नियोगेन विज्ञाय व्यवसायं ग्रहणाग्रहणनिश्चयं भजेत कुर्यात् । तत्कार्यं विभज्याह–गुणतः गुणनिश्चयात् संग्रहं कुर्यात् दोषतः दोषनिश्चयात् विसर्जयेत् त्यजेत् ॥ ४१ ॥

गो० टी०–त्यागोपादानोपयुक्तं परीक्षाप्रकारमाह–अर्थानर्थाविति । अर्थानर्थौ गुणदोषौ विनिश्चित्य कस्मिंश्चित्कर्मणि नियोगेन निश्चित्य व्यवसायं त्यागसंग्रहोचिताध्यव-

१ पुनरिति गो. पाठः । २ ऽशङ्क्य इति गो. पाठः । ३ योग्य इति गो. पाठः । ४ वर्जयेदिति गो. पाठः ।

यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम् । गुणान्वापि बहून्ज्ञात्वा संग्रहः क्रियतां नृप ॥ ४२ ॥
शरभस्त्वथ निश्चित्य सार्थं वचनमब्रवीत् । क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ॥ ४३ ॥
प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना । परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ॥ ४४ ॥
जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः । वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥ ४५ ॥
बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः । अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् ॥ ४६ ॥
ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः । वाक्यं वचनसंपन्नो बभाषे हेतुमत्तरम् ॥ ४७ ॥
अनुजो नाम तस्यैष रावणस्य विभीषणः । पृच्छ्यतां मधुरेणायं शनैर्नरपतीश्वर ॥ ४८ ॥
भावमस्य तु विज्ञाय ततस्तत्त्वं करिष्यसि । यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ॥ ४९ ॥

---

सायम् भजेत तत्र गुणतः गुणनिश्चयेन संग्रहम् अङ्गीकारं कुर्यात् दोषतः दोषनिश्चयेन तु विसर्जयेत् ॥ ३९ ॥

४२ ] ति० टी०—तदेव विवृणोति—यदि दोष इति॥४२॥

रा० टी०—लोकवृत्तान्तं प्रकृते नियोजयति—यदीति । तस्मिन् विभीषणे यदि महान् दोषस्तर्हि त्यज्यताम् । बहून् गुणान् ज्ञात्वा निश्चयवान् यदि तर्हि संग्रहः क्रियताम् ॥ ४२ ॥

गो० टी०—ननु सर्वात्मना गुणी दोषी वा दुर्लभः अतः कथं संग्रहत्यागव्यवस्थितिरित्यत्राह—यदीति । तस्मिन् विभीषणे महान् दोषो यदि स्यात् तदा असौ अविशङ्कितम् त्यज्यताम् । बहून् गुणान् ज्ञात्वा संग्रहः क्रियतां वा । स्वल्पदोषवत्त्वेऽपि बहुगुणो ग्राह्यः स्वल्पगुणवत्त्वेऽपि बहुदोषस्त्याज्य इति भावः ॥ ४० ॥

४३ ] ति० टी०—सार्थं सोपपत्तिकम् । चारो दूतः । प्रतिविधीयतां प्रेष्यताम् ॥ ४३ ॥

रा० टी०—शरभ इति । निश्चित्य विभीषणविषये निश्चयं कृत्वा सार्थं वचनं शरभोऽब्रवीत् । तदाकारमाह—अस्मिन् विभीषणसमीपे चारः प्रतिविधीयतां प्रेष्यताम् ॥४३॥

गो० टी०—विनियोगं विना गुणदोषपरिज्ञानं न संभवति सहसा विनियोगे च मन्त्रहानिः स्यादिति पूर्वास्वरसाच्छरभ आह—शरभस्त्विति । तुशब्दः पूर्वस्माद्वैलक्षण्यपरः । साध्यं साध्यार्थकम् । अनेनाङ्गदपक्षस्यासाध्यार्थत्वं द्योतितम् । अस्मिन् विभीषणविषये । प्रतिविधीयतां प्रेष्यताम् ॥ ४१ ॥

४४–४५ ] ति० टी०—प्रणिधाय चारं प्रेषयित्वा सूक्ष्मबुद्धिना चारेण च यथान्यायं परीक्ष्य ततः संग्रहः कार्यः ४४॥४५

रा० टी०—तत्प्रयोजनमाह—प्रणिधायेति । प्रणिधाय चारं संप्रेष्य ततश्चारेण परीक्ष्य गुणदोषौ ज्ञात्वा यथान्यायं यथोचितं परिग्रहः संग्रहः कार्यः ॥ ४४ ॥

गो० टी०—प्रणिधायेति । प्रणिधाय चारं प्रेषयित्वा । सूक्ष्मबुद्धिना चारेण यथावन्नीतिशास्त्रोक्तरीत्या परीक्ष्य ततो गुणान्याय्यं न्यायादनपेतं न्याय्यं निर्णीतार्थमनतिक्रम्य । परिग्रहः विभीषणपरिग्रहः कार्यः ॥ ४२ ॥

रा० टी०—जाम्बवानिति । शास्त्रबुद्ध्या संप्रेक्ष्य विचार्य गुणवद्वाक्यं जाम्बवान् विज्ञापयास ॥ ४५ ॥

गो० टी०—नियोगेन चारेण वा नायं परीक्ष्यः अविश्रम्भहेतूनां बहूनां संभवादिति जाम्बवान् पक्षान्तरमुपक्षिपति—जाम्बवानिति । गुणवत् युक्तिमत् । दोषवर्जितम् अनायमिति पूर्वोक्तमतद्वयव्यावृत्तिः ॥ ४३ ॥

४६] ति० टी०—अदेशकाले स्वामिसंदेशं विना रिपुदेश आगमनेनानुचितदेशप्राप्तत्वम् । स्वामिनः संकटकाले तत्प्रहाणानौचित्यादनुचितकालप्राप्तः, अतः शङ्क्यताम् । सर्वथा शङ्काविषयत्वेन त्यागार्ह एवायमिति भावः ॥ ४६ ॥

रा० टी०—बद्धेति । बद्धवैरात् राक्षसेन्द्रात् अदेशकाले संप्राप्तोऽयं विभीषणः सर्वथा शङ्क्यताम् ॥ ४६ ॥

गो० टी०—बद्धेति । बद्धवैरात् दृढवैरात् पापात् पापकर्मणः अदेशे दूरतया सांप्रतिकभयाभावेन आगमनप्रयोजनरहिते । अकाले स्वामिपरित्यागानर्हकाले ॥ ४४ ॥

४७ ] ति० टी०—हेतुमत्तरमतिशयेन हेतुमत् ॥ ४७ ॥

रा० टी०—तत इति । नयापनयकोविदः नीत्यनीतिविचारे चतुरः वचनसंपन्नः प्रशस्तवचनवान् मैन्दः हेतुमत्तरम् अतियुक्तिविशिष्टं वाक्यं बभाषे ॥ ४७ ॥

गो० टी०—सर्वथा शङ्क्यत्वेऽपि सुकरोपायेन गुणदोषपरीक्षया अकरणे सुखोपनतमित्रहानिः स्यादिति मैन्दो मतान्तरमाह—तत इति । हेतुमत्तरम् अतिशयेन हेतुयुक्तम् ॥ ४५ ॥

४८ ] ति० टी०—अनुजो नामेति । नामेति प्रसिद्धौ । अतोऽयं मधुरेण सौम्यभावेनैव पृच्छ्यताम् । गूढदूतमुखेन रावणस्य वृत्तान्तमिति शेषः ॥ ४८ ॥

रा० टी०—तदाकारमाह—अनुज इति । रावणस्यानुजः एष विभीषणः मधुरेण सरलवचनेन पृच्छ्यताम् वृत्तान्तमिति शेषः ॥ ४८ ॥

गो० टी०—वचनमिति । मधुरेण वचसा रावणस्य वचनमयं विभीषणः शनैः पृच्छ्यतामिति संबन्धः । पृच्छ्यतामित्यत्र अज्ञातपुरुषमुखेनेति शेषः । तथैव हनूमतानुवादात् ॥ ४६ ॥

४९] ति० टी०—अस्य बुद्धिपूर्वकदुष्टत्वादुष्टत्वान्यतरसत्त्वतो निर्णीय ततस्त्वं तत्तदुचितकृत्यं करिष्यसि ॥ ४९ ॥

---

१ साध्यमिति गो. पाठः । २ वचनमिति गो. पाठः । ३ वरेश्वरेति गो. पाठः । ४ ततस्तत्त्वमिति गो. पाठः ।

अथ संस्कारसंपन्नो हनूमान्सचिवोत्तमः । उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥ ५० ॥
न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् । अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥ ५१ ॥
न वादान्नापि संघर्षान्नाधिक्यान्न च कामतः । वक्ष्यामि वचनं राजन्यथार्थं राम गौरवात् ॥ ५२ ॥
अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव । तत्र दोषं प्रपश्यामि क्रिया नह्युपपद्यते ॥ ५३ ॥
ऋते नियोगात्सामर्थ्यमवबोद्धुं न शक्यते । सहसा विनियोगोऽपि दोषवान्प्रतिभाति मे ॥ ५४ ॥

रा० टी०—भावमिति । अस्य भावमभिप्रायं दुष्टो न दुष्टो वेति च बुद्धिपूर्वं विज्ञाय तत्त्वतः यथोचितमित्यर्थः यदि त्वं करिष्यसि तदा न दोष इति शेषः ॥ ४९ ॥

गो० टी०—भावमिति । एवंविधपरीक्षणेनास्य तत्त्वतो भावं विज्ञाय यदि दुष्टः तदा तदनुरूपम् अदुष्टश्चेत्तदनुरूपं च बुद्धिपूर्वं परीक्षापूर्वकम् करिष्यसीत्यर्थः ॥ ४७ ॥

५० ] ति० टी०—अथ हनूमान्सुग्रीवोक्तं वध्यत्वं राजवचनत्वादत्यन्ताविचारमूलकमित्युपेक्ष्य गुणादिपरीक्षया परिग्रहत्यागरूपमङ्गदादिवचोनुवादपूर्वकं दूषयन्निदानीमेव दोषाभावनिर्णयस्य सुकरत्वादविलम्बेन परिग्रह एव युक्त इत्याह—अथेति । संस्कारसंपन्नः सकलशास्त्रज्ञानजसंस्कारसंयुक्तः । श्लक्ष्णं श्लक्ष्णसंदर्भम् अर्थवत्प्रकटार्थवत्, लघु मितशब्दम्, मधुरं श्रवणमात्रेण सुखकरम् ॥ ५० ॥

रा० टी०—अथेति । संस्कारसंपन्नः सकलशास्त्रीयज्ञानसंस्कारयुक्तो हनूमान् श्लक्ष्णम् काव्योक्तदोषरहितं लघुयुक्ताक्षरं मधुरमर्थवत् प्रशस्तार्थकं वचनमुवाच ॥ ५० ॥

गो० टी०—एवं सुग्रीवेणेदानीं वध्यत्वं प्रतिपादितम् । अङ्गदादिभिस्तु गुणदोषपरीक्षापूर्वकं परिग्रहपरित्यागौ सिद्धान्तितौ । अथ सचिवोत्तमो हनूमान् सुग्रीवमतं राजमतत्वादत्यन्ताविचारमूलत्वाच्चोपेक्ष्य अङ्गदादिमतमेकैकानुवादपूर्वकं दूषयित्वा इदानीमेव दोषाभावस्य निर्णेतुं शक्यत्वात् सहसैव परिग्राह्य इति सिद्धान्तयति सर्गशेषेण—अथेति । संस्कारसंपन्नः शास्त्राभ्यासदृढतरसंस्कारयुक्तः । लघु अविस्तृतम्॥४८॥

५१ ] ति० टी०—समर्थं सकलशास्त्रार्थतत्त्वनिरूपणसमर्थम् । अतिशाययितुमभिभवितुम् ॥ ५१ ॥

रा० टी०—तत्स्वरूपमाह—नेत्यादिभिः । मतिश्रेष्ठं वदतां वरं भवन्तम् अतिशाययितुं वचनेन पराभवितुं ब्रुवन् बृहस्पतिरपि न शक्तः ॥ ५१ ॥

गो० टी०—भवतः उपदेशार्थं न मम प्रवृत्तिः भवतः सर्वप्रकारोत्कृष्टत्वात् केनाप्याकारेणातिशयितस्य कस्यचिदभावादित्याह—न भवन्तमिति । स्पष्टम् ॥ ४९ ॥

५२ ] ति० टी०—वादात्तर्ककुशलत्वप्रकटनाद्धेतोः, संघर्षात्सचिवान्तरस्पर्धावशात्, आधिक्यादधिकबुद्धिमत्त्वाभिमानात्, कामतो वचनेच्छातः । यदेवम्, अतो यथार्थमेव वक्ष्यामि । गौरवात् कार्यगौरवाद्बोधेनेत्यर्थः ॥ ५२ ॥

रा० टी०—नेति । न वादात् स्वप्रौढ्यप्रकटनहेतुकवचनविशेषात् न संघर्षात् पराभिभवेच्छातः नाधिक्यात् अधिकमतिमत्त्वाद्यभिमानात् न च कामतः किंचिद्ग्रहणादिविषयकेच्छातः वक्ष्यामि किंतु गौरवात् कार्यस्य गुरुत्वाद्धेतोः यथार्थं वचनं वक्ष्यामि ॥ ५२ ॥

गो० टी०—न वादादिति । वादात् तर्ककौशलात् संघर्षात् सचिवेषु स्पर्धावशात् आधिक्यात् अहं मतिमान् वाग्मी चेत्याधिक्याभिमानात् कामतः स्वैरभाषणेच्छातः बिभीषणपक्षपाताद्वा । तर्हि किमर्थं प्रवृत्तिस्तत्राह—गौरवादिति । मयि त्वत्कृतात्संमानात् ॥ ५० ॥

५३ ] ति० टी०—तत्रादावङ्गदमतं दूषयति—अर्थेत्यादि । अर्थानर्थनिमित्तं गुणदोषनिश्चयनिमित्तं तव सचिवैरङ्गदादिभिर्यदुक्तं तत्र दोषमंशेन वैगुण्यं पश्यामि । शङ्कितव्यः परीक्षणीयश्चेति यदुक्तं तयुक्तमेव किं त्वेवं निश्चय इत्यनुक्तेरिदमनुत्तरम् । तदेवाह—क्रिया नह्युपपद्यते क्रियोत्तररूपा । यद्वा परीक्षणरूपा क्रियेदानीं नोपपद्यत इत्यर्थः ॥ ५३ ॥

रा० टी०—तद्वचनस्वरूपमाह—अर्थेत्यादिभिः । अर्थानर्थनिमित्तम् अर्थानर्थपरीक्षार्थं यत्तवाग्रे सचिवैरङ्गदादिभिरुक्तं तत्र दोषं प्रपश्यामि । दोषमेवाह—क्रिया परीक्षाकारको व्यापारः नोपपद्यते संप्रति न युज्यते ॥ ५३ ॥

गो० टी०—पूर्वोक्तेषु चतुर्षु मतेषु प्रथममङ्गदमतं दूषयति—अर्थानर्थेति । अर्थानर्थयोर्निमित्तं निर्णयोपायः सचिवैः अङ्गदेन तादात्विकसंरम्भपरिहाराय नामानुवृत्तिर्बहुवचनं च यदुक्तं तत्र दोषं प्रपश्यामि । कुतः । क्रिया एवंप्रकारेण क्रिया नोपपद्यते हि ॥ ५१ ॥

५४ ] ति० टी०—तदेवाह—ऋते इति । नियोगादृते तमाहूय तस्मै वृत्तान्तनिवेदनरूपनियोगं विना सामर्थ्यं हानोपादानौचित्यं बोद्धुं न शक्यते । तर्हि द्रागानयेति चेत्तत्राह—सहसा हठाद्विनियोगोऽपि राजसंनिधिप्रापणपूर्वं वृत्तान्तप्रतिपादनाद्यनुज्ञादानरूपविनियोगोऽपि दोषवानेव प्रतिभाति, तस्मात्समर्थद्वारा तदीयवृत्तान्तं ज्ञात्वा भवत्समीपानयनमुचितमिति भावः ॥ ५४ ॥

रा० टी०—अनुपपत्तिमेवाह—ऋते इति । नियोगात् कस्मिंश्चित्कार्ये नियोजनात् ऋते विना सामर्थ्यं हिताहितसंपादकसमर्थत्वमवबोद्धुं न शक्यते । ननु तर्हि नियोगः क्रियतामित्यत आह—सहसा शीघ्रं विनियोगोऽपि दोषवान् प्रतिभाति यत्र नियुक्तः तमेव विघातयेच्चेत् महाननर्थः स्यादिति तात्पर्यम् ॥ ५४ ॥

गो० टी०—अनुपपत्तिमेव दर्शयति—ऋत इति । नियो-

चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव । अर्थस्यासंभवात्तत्र कारणं नोपपद्यते ॥ ५५ ॥
अदेशकाले संप्राप्त इत्ययं यद्विभीषणः । विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति ॥ ५६ ॥
एष देशश्च कालश्च भवतीह यथा तथा । पुरुषात्पुरुषं प्राप्य तथा दोषगुणावपि ॥ ५७ ॥
दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि । युक्तमागमनं ह्यत्र सदृशं तस्य बुद्धितः ॥ ५८ ॥
अज्ञातरूपैः पुरुषैः स राजन्पृच्छ्यतामिति । यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥ ५९ ॥

गाद्राजकार्येषु नियोगात् ऋते विना । "अन्यारादितरर्ते०" इत्यादिना पञ्चमी । सामर्थ्यं साधुत्वम् । सहसा विनियोगः गुणदोषपरीक्षामन्तरेण कुत्रचिन्महति राजकार्ये विनियोजनम् । मा मां प्रति दोषवान् भाति तथा च सत्यां गुणदोषपरीक्षायां नियोगः नियोगे सति गुणदोषपरीक्षणमित्यन्योन्याश्रयः । अतोऽनुपपन्नमङ्गदमतमिति भावः ॥ ५२ ॥

५५ ] ति० टी०—तर्हि शरभमतमेव तथापि किमित्याशङ्क्य तन्मतं दूषयति—चारेति । प्रणिहितमिति भावे निष्ठा । चारप्रेषणं युक्तमिति यदुक्तं तव सचिवैः शरभादिभिस्तदपि नोपपद्यते इति शेषः । यतस्तत्र चारप्रेषणे कारणं नोपपद्यते तत्प्रयोजनं नास्ति । कुतः, अर्थस्यासंभवादेव तत्साध्यप्रयोजनासंभवादेव । अयं भावः—असंनिहितेऽप्रकटवृत्तान्ते तज्ज्ञानाय तत्प्रेषणम्, न तु प्रत्यक्षे प्रकटतया स्ववृत्तान्तवेदके इति ॥ ५५ ॥

रा०टी०—अङ्गदमतेऽनुपपत्तिमुक्त्वा शरभमतेऽनुपपत्तिमाह—चारेति । चारप्रणिहितं चारप्रेषणं यत्तवाग्रे सचिवैः शरभादिभिरुक्तं तत् अर्थस्य प्रयोजनस्य असंभवाद्धेतोः तत्र चारप्रेषणकारणं नोपपद्यते ॥ ५५ ॥

गो० टी०—अथ शरभमतं प्रयोजनाभावेन खण्डयति—चारेति । अत्रेतिशब्दोऽध्याहर्तव्यः । चारप्रणिहितं चारप्रणिधानम् युक्तमिति तव सचिवैर्यदुक्तम् शरभेण यदुक्तमित्यर्थः । तत्र तस्मिन्मते अर्थस्य चारप्रयोजनस्य दूरतिरोहितदर्शनादेरसंभवात् चारप्रणिधानलक्षणं कारणम् उपायः न युज्यत इत्यर्थः । अत्यासन्ने स्वचक्षुर्विषये सम्यक्परिदृश्यमाने व्यवधानरहिते नभस्स्थलावस्थायिनि चास्मिन् परस्न्ध्रादितत्त्वदर्शनलक्षणचारप्रयोजनाभावादयमुपायो न युज्यत इति भावः । चारणं नोपपद्यत इति पाठे तु चारयितव्यस्यान्तःपुरसमाजतीर्थादिरूपस्य विषयस्याभावाच्चारसंचारणं न घटत इत्यर्थः॥५३॥

५६ ] ति० टी०—अथ जाम्बवदुक्तमदेशकालप्राप्तिरूपं शङ्कास्पदं स्वरूपासिद्ध्या दूषयति—अदेशेति । अयं विभीषणोऽदेशकाले संप्राप्त इति यज्जाम्बवतोक्तं तत्र तद्विषय एष देशः कालश्च यथा भवति तथेयं मे विवक्षास्तीत्यन्वयः ॥५६॥

रा० टी०—जाम्बवदुक्तं दूषयति—अदेशेति । अयं विभीषणः अदेशकाले संप्राप्तः इति यत् जाम्बवतोक्तं तत्र देशकालसंपादिका यथामति मे विवक्षाऽस्ति तां त्वं निबोध जानीहि ॥ ५६ ॥

गो० टी०—अदेशकाले संप्राप्त इत्यस्य जाम्बवन्मतस्यासारत्वात्तन्निराकरणेन सर्वं निराकृतप्रायमिति तत्स्वरूपासिद्ध्या दूषयति—अदेशेति । सार्धश्लोक एकान्वयः ॥ अयं विभीषणः अदेशकाले संप्राप्त इति यत् तत्र तद्विषये यथातथा याथातथ्येन । स एष देशः कालश्च भवतीति मे यथामति इयं विवक्षाऽस्ति तां निबोधेत्यन्वयः ॥ ५४ ॥

५७-५८ ] ति० टी०—तं विवक्षाविषयमाह—पुरुषादिति । पापात्पुरुषाद्रावणादुत्तमं पुरुषं त्वां प्राप्य बुद्ध्या निश्चित्य, तथा द्वयोस्तयोर्दोषगुणावपि प्राप्य बुद्ध्या निश्चित्य, यदत्र युक्तं कालोचितमागमनं कृतं तत्तस्यैव बुद्धितः सदृशम् । पुरुषादित्यर्धोक्तस्यैव विवरणम्—दौरात्म्यमिति । परदारापहरणाद्रावणे दौरात्म्यम् । त्वयि विक्रमं च कक्षपुटे रावणं कृत्वा चतुःसागरीं प्रदक्षिणं कृतवतो वालिन एकेनैव बाणेन त्वया हननाद्दृष्ट्वेत्यर्थः ॥ ५७ ॥ ५८ ॥

रा० टी०—तद्वचनमेवाह—एष इति । दोषगुणौ रावणरामयोः अधर्मधर्मौ प्राप्य बुद्ध्वा तथा पुरुषात् अधर्मविशिष्टरावणात् पुरुषं परमधर्मविशिष्टं रामं प्राप्य तिष्ठतीति शेषः अतः एषः रामसमीपवर्ती एव देशः तथा एषः धर्मवत्पुरुषप्रापकः कालश्च इह अस्मिन्समये यथा यथावद्भवति ॥ ५७ ॥

रा० टी०—तदेव स्पष्टमाह—दौरात्म्यमिति । रावणे दौरात्म्यं दुष्टप्रयत्नं त्वयि विक्रमं यो वाली रावणं कक्षपुटे कृत्वा सागराणां प्रदक्षिणं कृतवान् स एकेन बाणेन येन हतः तस्मातीव बलवत्त्वमिति दृष्ट्वा ज्ञात्वा विद्यमानस्य तस्य विभीषणस्यागमनं युक्तम् अत एव तस्य बुद्धितः बुद्धेः सदृशम् ॥ ५८ ॥

गो० टी०—विवक्षितमेव सोपपत्तिकं विशदयति—पुरुषादित्यादिसार्धश्लोकेन । पुरुषात् अधमपुरुषाद्रावणात् पुरुषम् उत्तमपुरुषं भवन्तम् । प्राप्य मनसा विमृश्य । तथा दोषगुणावपि युवयोर्विमृश्य तथा रावणे दौरात्म्यं राक्षसकुलविनाशहेतुभूतसीतापहरणतत्प्रत्यर्पणानपेक्षित्वादिकम् त्वयि विक्रमं खरदूषणप्रमुखराक्षसवधादिकम् वालिवधपूर्वकसुग्रीवराज्यप्रदानम् अतिदुस्तरसमुद्रतरणोद्योगं च दृष्ट्वा तस्य बुद्धितः बुद्धेः सदृशं तस्य आगमनं युक्तमिति संबन्धः । यदा प्रतिकूलेदोषदर्शनमनुकूले गुणज्ञानं च स एव देशः कालश्च भवति । इदं तथ्यमिति भावः ॥ ५५ ॥

५९ ] ति० टी०—अथैनमकार्यतद्वचनतद्भावदर्शनाभ्यामेव तदीयगुणदोषाववगन्तव्याविति स्वमतं स्थिरीकर्तुं चारप्रेषण-

१ तस्येति गो. पाठः ।

पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान्वचः। तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ॥ ६० ॥
अशक्यं सहसा राजन्भावो बोद्धुं परस्य वै। अन्तरेण स्वरैर्भिन्नैर्नैपुण्यं पश्यतां भृशम् ॥ ६१ ॥
न त्वस्यब्रुवतो जातु लक्ष्यते दुष्टभावता। प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥ ६२ ॥

पक्षे दोषान्तरमाह—अज्ञातेति अज्ञातकुलशीलप्रयोजनैः पुरुषैश्चारैः स विभीषणः पृच्छ्यतामिति यन्मैन्देनोक्तमत्र मे मया समीक्षिता सम्यक्परीक्षिता काचित्प्रेक्षा धीरस्ति ॥ ५९ ॥

रा० टी०-मैन्दोक्तिं निराकरोति-अज्ञातेति। अज्ञातरूपैः पृच्छयताम् इति यत् मैन्देनोक्तम् अत्र विषये मे मया समीक्षिता सम्यक् परीक्षिता प्रेक्षा बुद्धिरस्ति एतदपि निराकरीमीत्यर्थः ॥ ५९ ॥

गो० टी०-मैन्दमतं प्रतिक्षिपति श्लोकत्रयेण—अज्ञातेति। अज्ञातरूपैः अपरिचितस्वरूपस्वभावैः समीक्षिता सम्यक्परीक्षिता प्रेक्षा युक्तिरूपा बुद्धिः ॥ ५६ ॥

६० ] ति० टी०-का सेत्यत्राह—पृच्छ्यमान इति। अज्ञातपुरुषेण को भवान्कुत आगत इति किमर्थमागत इत्यादि पृच्छ्यमानः प्रष्टृस्वरूपज्ञानरहितो बुद्धिमान्पुरुषस्तद्वचः सहसा द्राग्विशङ्केत, नेमं जानामि केनायं प्रेषितः किमर्थं पृच्छतीति शङ्काकुल एव भवति केवलम्, न तूत्तरयति किंचित्। यदि तु प्रष्टुः शनैर्ज्ञानं भवति तदा सुखागतं सुखार्थमागतं मित्रं चेत्तदा मिथ्या पृष्टं दृथा पुनः पृष्टं सन्मित्रभावात्प्रदुष्येत भिद्येत। किमर्थमेवं विचारयति पुरुषमुखेनेति स्तब्धस्नेहं भवति एवं च मित्रहानिरिति भावः ॥ ६० ॥

रा० टी०-निराकरणमेवाह—पृच्छ्यमान इति। पृच्छ्यमानः अज्ञातजनेन कस्त्वं कुत आगतः किम् आगमनप्रयोजनम् इत्यादिना पृष्टः बुद्धिमान् जनः वचः पृच्छकवचनं विशङ्केत किमर्थमयं पृच्छतीति शङ्कां प्राप्नुयात् न तु किंचिदुत्तरयेदित्यर्थः तत्र पृच्छकस्वरूपस्य मित्रप्रेष्यत्वादिना ज्ञाते सुखागतं मित्रं प्रदुष्येत् मित्रं मां किमर्थमेवं पृच्छतीति दुःखं प्राप्नुयात् अत एव पृष्टं प्रश्नः मिथ्या भवेदिति शेषः। न च लोके चारप्रेषणस्य वैयर्थ्यमिति वाच्यं चिरं तत्र स्थित्या तद्व्यवहारज्ञानेन तन्मित्रामित्रज्ञानेन च तत्पुरुषसरूपादिज्ञानादिना च सार्थकयात् ॥ ६० ॥

गो० टी०-क्वचिद्गुणवत्यपि मित्रे दोषनिर्णयोपाय इत्याह—पृच्छ्यमान इति। बुद्धिमानपि पुमान् अपरिचितैः पृच्छ्यमानः सन् अविश्वासादेवैते पृच्छन्ति कस्मिन् वचस्युक्ते को वाऽनर्थः समापद्यत इति प्रतिवचनरूपं वच उद्दिश्य सहसा विविधां शङ्कां प्राप्नुयात् तथा सति सुखागतं स्वस्मिन्दोषराहित्येन विश्वासोपगतमपि मित्रम् मिथ्या पृष्टं सत् तेन प्रश्नेन हेतुना प्रदुष्येत दुष्टं भवेदित्यर्थः ॥ ६७ ॥

६१ ] ति० टी०-किं च तस्य शत्रुत्वे तदभिप्रायश्चारैरपि दुर्ज्ञेय इत्याह—अशक्यमिति। परस्य शत्रोर्भावश्चारेण सहसा द्राक्प्रश्नमात्रेण वेत्तुं ज्ञातुमशक्य एव अज्ञातेन पृष्ट उत्तरस्यैवादानात् शत्रुप्रहितत्वेन ज्ञाते प्रत्युत दण्डस्यापि प्रसङ्गात्। नन्वेवं जगति चारप्रेषणनैष्फल्यप्रसङ्ग इति चेन्न, बहुकालं तत्र स्थितौ तद्वचनैस्तद्व्यवहारैस्तत्प्रसङ्गे हर्षामर्षादिभिश्च तस्य शत्रुमित्रत्वज्ञानाय तत्प्रेषणसंभवात्। यदेवमतः—अन्तरेणेति। 'अन्तरेण स्वरैर्भिन्नैर्नैपुण्यं पश्यतां भृशम्' इति प्राचीनः पाठः। अन्तरेण व्यवहारमध्ये भिन्नैः स्वरैर्विलक्षणस्वरैः कण्ठध्वनिभिर्नैपुण्यं सदसदन्यतरत्वनिश्चयं पश्यतां कुरुताम् भवानिति शेषः। तत्र बाष्पकण्ठत्वे भीत्या पूर्वापरासंगतकथने चासन्नन्यथा सन्निति निश्चीयतामित्याशयः। 'अन्तः स्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम्' इति पाठे भृशमत्यर्थं स्वस्मिन्नैपुण्यं पश्यता जानतापि प्रष्ट्रान्तःस्वभावैरापाततः प्रसन्नार्थत्वेऽपि गूढाभिप्रायैर्गीतैर्भाषितैः परस्वभावोऽभिप्रायः सहसा वेत्तुं न शक्य इत्यर्थः ॥ ६१ ॥

रा० टी०-अशक्य इति। हे राजन्! सहसा शीघ्रं चारप्रेषणमात्रेण परस्य रिपोः भावोऽभिप्रायः बोद्धुमशक्यः अतः अन्तरेण स्वसैन्यमध्ये स्थापनेनेति शेषः भिन्नैः अस्मत्प्रियविषयतया रिपुप्रियविषयतया च भेदविशिष्टैः स्वरैः वाग्व्यापारैः नैपुण्यं तत्कौशलं भृशं पश्यतां भवन्ताविति शेषः तेन तदभिप्रायज्ञानं सुलभमिति तात्पर्यम् ॥ ६१ ॥

गो० टी०-क्वचिन्निष्प्रयोजनश्चायमुपाय इत्याह—अशक्य इति। भृशम् अत्यर्थम् स्वस्मिन्नैपुण्यं पश्यतापि मिथ्या प्रष्ट्रा अन्तःस्वभावैः अन्तर्हितस्वाभिप्रायैः परस्य गीतैः भाषितैः पराभिप्रायः सहसा ज्ञातुमशक्य इत्यर्थः। छद्मना प्रष्टुर्गूढमभिप्रायं ज्ञात्वा। अहृदयवाचामहृदया एव प्रतिवाचो भवन्तीति न्यायेन परेणापि स्वाभिप्रायानाविष्करणादिति भावः ॥ ५८ ॥

६२ ] ति० टी०-ननु त्वयैव प्रथमं परीक्ष्यतामिति चेन्मया परीक्षित एवेत्याह—न त्वस्येति। दुष्टभावता वचनचेष्टादिभिर्दुष्टान्तःकरणता न लक्ष्यते, प्रसन्नवदनता च दृश्यत ॥ ६२ ॥

रा० टी०-ननु एतद्विषये त्वया किं निश्चितमित्यत्राह—नेति। ब्रुवतोऽस्य दुष्टभावता दुष्टस्वभावः जातु कदाचिदपि लक्ष्यते प्रत्युत प्रसन्नवदनं वदनप्रसादः लक्ष्यते तस्मात् मे संशयो नास्ति एतेन वदनप्रसादरूपहेतुनाऽस्मन्महदुद्योगदर्शनजनितप्रमोदस्तस्य सूचितः तेन अस्मत्प्रियाकाङ्क्षावानयमिति ध्वनितम् ६२

गो० टी०-एवं पूर्वोक्तेषु पक्षेषु दोषानुद्भाव्य संप्रत्यात्मना परीक्ष्य कक्षीकृतं पक्षमुपक्षिपति—न त्वित्यादिना। ब्रुवतो बहुव्याहरतोऽस्य ॥ ६९ ॥

१ अशक्य इति रा. पाठः। २ वेत्तुमिति गो. पाठः। ३ नास्तीहेति। गो. पाठः।

अशङ्कितमतिः स्वस्थो न शठः परिसर्पति । न चास्य दुष्टवागस्ति तस्मान्मे नास्ति संशयः ॥ ६३ ॥
आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्। बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥ ६४ ॥
देशकालोपपन्नं च कार्यं कार्यविदां वर । सफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥ ६५ ॥
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् । वालिनं च हतं श्रुत्वा सुग्रीवं चाभिषेचितम् ॥ ६६ ॥
राज्यं प्रार्थयमानस्तु बुद्धिपूर्वमिहागतः । एतावत्तु पुरस्कृत्य विद्यते तस्य संग्रहः ॥ ६७ ॥
यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति । प्रमाणं त्वं हि शेषस्य श्रुत्वा बुद्धिमतां वर ॥ ६८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

६३ ] ति० टी०—उक्तार्थस्यैव स्थैर्यायाभ्यासः—अशङ्कितेति । अशङ्कितमतिर्निश्चितशरणगमनमती रामशरणगमनमेव ममेष्टसाधनमिति सुप्रतिष्ठितचित्तः, अत एव स्वस्थः सुस्वभाव एव भूत्वायं परिसर्पति, न शठो गूढविप्रियधीर्भूत्वा। दुष्टवाग्ग् दुष्टा शब्दार्थदोषवती वाक् ॥ ६३ ॥

रा० टी०—अशङ्कितेति । न शङ्किता अस्मद्विषयकशङ्कावती मतिर्यस्य अत एव स्वस्थः अत एव शठः शठत्वं न परिसर्पति अस्मिन् प्राप्नोति अत एव अस्य दुष्टवागस्ति तस्मान्मे संशयो नास्ति ॥ ६३ ॥

गो० टी०—एवमस्येङ्गिताकाराभ्यामदुष्टत्वमुक्त्वा चेष्टाभाषणाभ्यां च तद्दर्शयति—अशङ्कितेति । शठः गूढविप्रियकारी ॥ ६० ॥

६४ ] ति० टी०—ननु शठोऽप्येवं वक्ष्यतीत्याशङ्क्याह—आकार इति । आकार आन्तरो भावो यावच्छक्यं छाद्यमानोऽपि न सर्वात्मना निगूहितुं शक्यः। कुतस्तत्राह—बलादिति । भावं शठभावं साधुभावं च विवृणोत्येव। अन्तर्यामिदेवतेति शेषः सा हि तथावचनादिप्रेरणया तं प्रकटीकरोतीत्यर्थः । अस्य त्रिरेकरूपवादान्निर्दुष्टत्वं निर्णीयत इति भावः ॥ ६४ ॥

रा० टी०—ननु शठैरप्येवं चेष्टा क्रियते इत्यत आह—आकार इति । आकारः स्वाभिप्रायः छाद्यमानः यत्नतो विनिगूह्यमानोऽपि विनिगूहितुं सर्वथा छादयितुं न शक्यः अत एव नृणामन्तर्गतं भावमभिप्रायं बलाद्विवृणोति प्रकाशयत्येव आकार इत्यत्रापि संबध्यते ॥ ६४ ॥

गो० टी०—ननु परमवञ्चकः पुरुषो भावं निगूहयति कथं तेन विश्वास इत्यत्राह—आकार इति। आकारः मुखविकारः६१

६५ ] ति० टी०—नन्वदुष्टस्यास्यां वेलायामत्रागमने किं प्रयोजनमित्याशङ्कायां देशकालौचित्यज्ञानमेवेत्याह—देशेति हे कार्यविदां वर, अस्येदमत्रागमनरूपं कार्यं देशकालोपपन्नमेवोक्तरीत्या। किं चेदृशं कार्यं प्रयोगेणाभिसंहितमनुष्ठानेन संपादितमात्मानं क्षिप्रं सफलं कुरुते इत्यर्थः ॥ ६५ ॥

रा० टी०—नन्वशठत्वे अस्मिन् समये किमर्थमागत इत्यत आह—देशेति । कार्यविदां वर हे राम ! देशकालोपपन्नं देशकालाभ्यां युक्तं प्रयोगेण सुविचारेण अभिसंहितं संपादितं कार्यं क्रिया सफलं फलसंयुक्तं कर्तारं कुरुते कर्तारमिति प्रत्यासत्तिन्यायाल्लब्धम् एतेनैतदागमनं सफलमेवेति सूचितम् ॥ ६५ ॥

गो० टी०—एवं दोषाभावमुक्त्वा गुणमुचितज्ञत्वरूपं दर्शयितुं नीतिमर्यादां दर्शयति—देशेति । देशकालोपपन्नं देशकालाभ्यां युक्तम् प्रयोगेण उचितपुरुषप्रयोगेण अभिसंहितं युक्तम् । उचितेषु देशकालपुरुषेषु प्रयुक्तमित्यर्थः । कार्यं क्रिया। स्वफलं स्वोचितफलम् क्षिप्रम् अप्रतिबन्धम् कुरुते कर्तरीति शेषः ॥ ६२ ॥

६६-६७ ] ति० टी०—एतदेव विवृणोति—उद्योगमिति । उद्योगं रावणवधविषयम् मिथ्यावृत्तं मिथ्याबलगर्वितं पापवृत्तं च दृष्ट्वा रावणादप्यधिकबलं वालिनं हतं श्रुत्वा बुद्धिपूर्वं वालिवदेव रावणं हनिष्यति सुग्रीववदेव मह्यं राज्यं दास्यति शरणागतवत्सलः सर्वथा मां रक्षिष्यतीति बुद्धिपूर्वम् । उपसंहरति—एतावदिति ॥ ६६ ॥ ६७ ॥

रा० टी०—संशयाभावे हेतुं द्रढयन् स्वानुमितमाह—उद्योगमित्यादिभिः । तवोद्योगं रावणं मिथ्यावृत्तं दुष्टोद्योगशीलं च संप्रेक्ष्य ज्ञात्वा अभिषेचितं सुग्रीवं श्रुत्वा राज्यं लङ्काधिपत्यं प्रार्थयमानः सन् बुद्धिपूर्वमेव इहागतः एतान् मदुक्तं पुरस्कृत्य मनसि निधाय तस्य विभीषणस्य संग्रहो युज्यते। श्लोकद्वयमेकान्वयि ॥ ६६ ॥ ६७ ॥

गो० टी०—एतेनाप्येवमेव कार्यं प्रयुक्तमित्याशयेनाह—उद्योगमिति । सार्धश्लोक एकान्वयः ॥ ६३ ॥

६८ ] ति० टी०—मया राक्षसस्यार्जवमुद्दिश्य त्वां प्रति यथाशक्त्युक्तम् अधिकं वक्तुं तु न युज्यते श्रुत्वा शेषकृत्यस्य निर्णये तु त्वमेव प्रमाणम् ॥ ६८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

१ दुष्टावाक्चापीति गो. पाठः । २ नात्रेति गो. पाठः । ३ वालिनश्च वधमिति गो. पाठः । ४ चेति गो. पाठः । ५ युज्यते तवेति गो. युज्यत इति रा. पाठः । ६ स्थिति गो. पाठः ।

# अष्टादशः सर्गः ।

रामो विभीषणस्य ग्राह्याग्राह्यत्वविषये सुग्रीवादिभीः सह विचार्यान्ते सतस्यग्राह्यत्वं निर्णयति ।

**अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह । प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ॥ १ ॥**
**ममापि च विवक्षास्ति काचित्प्रति विभीषणम् । श्रोतुमिच्छामि तत्सर्वं भवद्भिः श्रेयसि स्थितैः ॥ २ ॥**
**मित्रभावेन संप्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥ ३ ॥**

रा० टी०—यथेति । श्रुत्वा तवानुशासनं ज्ञात्वा राक्षसस्य विभीषणस्य आर्जवं प्रति यथाशक्ति मयोक्तं शेषस्य कृत्यनिर्णयस्य प्रमाणं संपादक इत्यर्थः, त्वमेव ॥ ६८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तदशः सर्गः ॥ १७ ॥

गो० टी०—फलितमाह—एतावदिति सार्धश्लोकेन । स्ववचनं निगमयति—यथाशक्तीति । यथाशक्ति बुद्धिशक्तिमनतिक्रम्य आर्जवं निर्दोषत्वम् मद्वाक्यं श्रुत्वा यत्कर्तव्यमकर्तव्यं वा तस्य सर्वस्य त्वं तु त्वमेव प्रमाणं प्रमातेत्यर्थः॥६४॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

१ ] ति० टी०—वायुसुतस्य वचनमिति शेषः । श्रुतवान्सकलशास्त्रश्रवणवान् आत्मनि स्वचित्ते स्थितम् स्वचित्तस्थितार्थप्रतिपादकमिति यावत् ॥ १ ॥

रा० टी०—हनुमद्वचनश्रवणानन्तरकालिकं रामवचनमाह—अथेत्यादिभिः । आत्मनि स्वचित्ते स्थितं वायुसुतस्य वचनमिति शेषः श्रुत्वा श्रुतवान् सकलवेदशास्त्रसंपन्नः रामः प्रत्यभाषत ॥ १ ॥

गो० टी०—एवं सुग्रीवादिभिः स्वस्वमते प्रतिपादिते स्वाभिमतमपि रामो वक्तुं प्रारभते—अथेति । वायुसुतस्य वचनमिति शेषः । प्रसन्नात्मा सुग्रीवादिवाक्यैः कलुषीकृते मनसि सति हनुमद्वाक्ये प्रसन्नमनाः दुर्धर्षः पूर्वपक्षैरक्षोभ्यः । तत्र हेतुमाह—श्रुतवानिति । वसिष्ठादिभ्यः श्रुतकपोतमण्डूपाख्यानादिमान् आत्मनि स्थितं चित्तावस्थितम् ॥ १ ॥

२ ] ति० टी०—ममापि भवदुक्तेभ्यो विलक्षणं विभीषणं प्रति काचिद्विवक्षास्ति तत्सर्वं मद्विवक्षितं मम श्रेयसि स्थितैर्भवद्भिः श्रोतुं श्रवणसंनिहितं कर्तुमिच्छामि । इयमुक्तिः सर्वमलप्रतिक्षेपकस्वमतश्रवणेन सुग्रीवादीनां व्याकुलचित्तता मा भूदिति तेषामुपलालनाय ॥ २ ॥

रा० टी०—तदाकारमाह—ममेत्यादिभिः । विभीषणं प्रति ममापि काचिद्विवक्षा वक्तुमिच्छाऽस्ति तत् मद्विवक्षितं सर्वं श्रेयसि स्थितैर्भवद्भिः श्रोतुं भवत्कर्तृकश्रवणमिच्छामि ॥२॥

गो० टी०—सर्वमतप्रतिक्षेपरूपेण स्ववाक्येन किमेते व्याकुलितमनसो भवेयुरिति शङ्कया रामः सचिवाननुपच्छन्दयति—ममापीति । तुशब्दः पक्षान्तरवद्दत्तमपक्षमपि व्यावर्तयति । ममापि विभीषणं प्रति काचिद्युष्मत्पक्षैः सह परिगणनायोग्या विवक्षा अस्ति अतः तत्सर्वं मद्विवक्षितं वा तु साध्यरूपं सर्वमर्थजातम् श्रेयसि स्थितैः अस्मच्छ्रेयोनिरतैः भवद्भिः युष्माभिः श्रोतुमिच्छामि भवद्भिः श्रुत्वा परीक्षणं कार्यमिति ममेच्छास्तीत्यर्थः ॥ २ ॥

३ ] ति० टी०—तत्रान्यैर्दोषोक्तिपूर्वकमग्राह्यत्वमुक्तम् । हनुमता निर्दोषत्वोक्तिपूर्वं ग्राह्यत्वमुक्तम् । भगवांस्तु प्रौढ्या सुग्रीवाद्युक्तं रन्ध्रप्रहारित्वमङ्गीकृत्यापि परिग्राह्यत्वं स्थापयति—मित्रेति । राघवं शरणं गत इति प्रसन्नवचनादनुमितमित्रभावेन मित्रत्वेन संप्राप्तं पत्नी स्निग्धभावेन प्राप्तं पतिमिव कथंचन सर्वदेशकालावस्थास्वपि न त्यजेयम् । भवदुक्तरन्ध्रप्रहारमिथ्याविभीषिकाभीतः सन्निति शेषः । ननु शत्रुपक्षत्वेन दुष्टं कथं न त्यक्ष्यसीत्यत्राह—दोष इति । वस्तुतस्तत्र दोष एव नास्ति शत्रुपक्षत्वेऽपि ततो भीततया शरणागतत्वात् । यद्यपि तस्य दोषो भवदुक्तस्तदतिरिक्तश्च स्यात्तथापि तं न त्यजेयमिति संबन्धः । यद्यपि दुष्टजनपरिग्रहः शिष्टगर्हितस्तथापि 'वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' इत्येवमादि शास्त्राच्छरणागतदुष्टपरिग्रहणं सतामगर्हितम् । पूजितमित्यर्थः ॥ ३ ॥

रा० टी०—स्वविवक्षितमेवाह—मित्रेत्यादिभिः । मित्रभावेन उपलक्षणतया मित्रत्वदासत्वादिधर्मेण संप्राप्तं जनं कथंचन न त्यजेयम् । ननु दुष्टपरिग्रहस्य शास्त्रतोऽपि निषिद्धत्वादस्य दुष्टत्वे कथं न त्याग इत्यत आह—तस्य शरणागतस्य दोषो यद्यपि स्यात् तथापि एतत् शरणागतस्वीकरणम् अगर्हितमनिन्दितम् ॥ ३ ॥

गो० टी०—एवं सचिवाननुगुणीकृत्य स्वस्वभावकथनव्याजेन स्वविवक्षितं सहेतुकं दर्शयति—मित्रभावेनेति । मतान्तरेषु सदोषत्वान्न परिग्राह्य इति हेतुसाध्ये अपि दुष्टे । मारुतिमते तु परिग्राह्यत्वरूपे साध्ये समीचीनेऽपि निर्दोषत्वादिति हेतुरसमीचीनः। किंतु शरणागतोऽहमिति वाक्यप्रयोक्तृत्वमेव तत्र मुख्यहेतुरित्यभिप्रायेण मित्रभावेनेति हेतुनिर्देशः। मित्रभावेन वास्तवमित्रत्वाभावेऽपि मित्रत्वाभिनयमात्रेणापीत्यर्थः । मित्रभावः शरणागतत्वम् । 'राघवं शरणं गतं शरण्यं शरणं गतः' इति पूर्वोत्तरत्र च तस्यैव कथनात् । अन्यत्रापि—'विदितः स हि धर्मज्ञः शरणागतवत्सलः' इति शरणागतिशब्देनोपक्रम्य, 'तेन मैत्री भवतु ते यदि जीवितुमिच्छसि' इति मैत्रीशब्देन परिसमापनात् । यद्वा । मित्रशब्दः स्वाभिप्रायेण शरणागते गौरवारो-

१ क्षिति गो. पाठः ।

पाद्युज्यते न त्यजेयं त्यक्तुं न शक्नोमि । सर्वशक्तेरपि मम शरणागतशब्दश्राविणः परित्यागे शक्तिसंभावनामपि न पश्यामीत्यर्थः । कथंचन दृष्टादृष्टानर्थशतानुबन्धित्वे तत्परिग्रहस्य सुहृदामनभिमतत्वे मत्प्राणपरित्यागे प्रस्तुतेऽपीत्यर्थः । दोषो यद्यपि तस्य स्यात् । यद्यपि सुग्रीवादिभीरुक्ता दोषा नास्मिन् सन्ति सन्तु वा ततोपि भूयांसः अथाप्यशक्यमहं कथं करोमीत्यर्थः । स्याच्छब्दः दुष्टोऽपि शरणागतशब्दप्रयोक्ता मया परिगृहीत इति मम महद्यशो भवेदित्येवमर्थम् । अदुष्टपरिग्रहे गुणो मन्दः दुष्टपरिग्रहे तु मम शरणागतरक्षणधर्म उत्तेजितो भवतीति भावः । करुणया दुष्टपरिग्रहे शिष्टगर्हा स्यादित्यत्राह– सतामेतदिति । एतद्दुष्टस्यापि शरणागतस्य संग्रहणम् सतां शिष्टानाम् अगर्हितं गर्हितादन्यत् पूजितमित्यर्थः । पूजितत्वं च कपोतोपाख्यानादिभिः प्रपञ्चयिष्यते । एवं च शास्त्रेषु दोषाणां परित्यागहेतुत्वोक्तिः शरणागतव्यतिरिक्तविषयेति विषयव्यवस्थाऽभिप्रेता । अत एव दोषाधिक्येन वधार्हस्यापि शरणागतस्य रक्षणमेव कार्यमिति श्रुतिराह–" तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति " इति आचार्ययोजना । मित्रस्य स्नेहिनो भावो मित्रत्वम् । तेन आशालेशमात्रेण । अद्वेषमाभिमुख्यमात्रं वास्मदङ्गीकारे प्रयोजकं न तु पूर्णभक्तिरिति भावः । तथोक्तम्–' त्वामामनन्ति कवयः करुणामृताब्धे ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः । एतेषु केन वरदोत्तरकोसलस्थाः पूर्वं सदूर्वमभजन्त हि जन्तवस्त्वाम् ' इति । यद्वा मित्रक्रियया । ' भावो लीलास्वभावयोः । जन्त्वभिप्रायचेष्टासु भूतौ विद्वत्पदार्थयोः । तदप्युक्तम्–'शरणवरणवागियं योदिता न भवति बत सापि धीपूर्विका' इति । शरणागतभावेनेति वक्तव्ये मित्रभावेनेत्युक्तिः । स्वाश्रयणाय कतिचित्पदानि कुर्वत्यपि स्वसदृशबुद्धिकारिणो भगवतोऽभिप्रायेण । देव्यापि शरणागतिमभिदधत्या ' तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ' इत्युक्तम् । यद्वा मित्रभावेन मित्रत्वेन हेतुना । सुहृदं सर्वभूतानामित्युक्तरीत्या अस्मदीयसहजसौहार्दं पुरस्कृत्येत्यर्थः । यद्वा मित्रभावेन आनुकूल्यसंकल्पादिपूर्वकमित्यर्थः । यद्वा मितात्त्रायत इति मित्रम् । ईश्वरोपकारं परिच्छिद्य तत्सदृशोपकारप्रवृत्तस्य भावेनेत्यर्थः । यद्वा विश्वसनीयस्थले मित्रम् तन्मित्रं यत्र विश्वास इत्युक्तत्वात् । विश्वासिनो भावेनेत्यर्थः । संप्राप्तं तस्याशालेशमात्रेण ह्रीरेषा हि ममातुलेत्युक्तरीत्या मम तन्निवासगमने प्राप्तेऽपि स्वयमेव प्राप्तं कथं त्यजेयम् । संप्राप्तं सम्यक्प्राप्तम् । पादुके द्वारि विन्यस्य देववन्दनकारिन्यायेनान्यत्र चित्तप्राप्तिमन्तरेण परित्यक्ता मया लङ्का मित्राणि च धनानि चेति विरोधिनिवृत्तिपूर्वकं प्राप्तमित्यर्थः । यद्वा संप्राप्तं माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायण इति न्यायेन मयि त्यक्तसकलविधबन्धुभावमाचरन्तम् । यद्वा मदन्तरङ्गानुचरपुरस्कारेण प्राप्तम् । यद्वा संप्राप्तं लङ्कायां स्थित्वा राघवं शरणं गतोस्मीत्युक्तं चेत् अतन्द्रितचमूपतीत्याद्युक्तन्यायेन मम तत्र गन्तव्यतायामपि तस्यागमनेन पङ्गोरुपरि गङ्गानिपतनवदस्मत्प्रयोजनमेव कृतम् । संप्राप्तं प्राप्तिरेवास्माकमपेक्षिता । न तु स्तुत्यर्चनध्यानप्रणामादिः । समित्यनेन मानसवाचिककायिकरूपपूर्णप्रपदनमुच्यते । न त्यजेयं त्यक्तुं न शक्नोमि । सर्वशक्तेरपि मम शरणागतशब्दश्राविणः परित्यागे शक्तिसंभावनामपि न पश्यामीत्यर्थः । संप्राप्तं न त्यजेयं, शरणागतसस्यमालिनीयं वृषशैलेशकृषीवलं धिनोतीत्युक्तरीत्या रक्षापेक्षां प्रतीक्षमाणोऽहं कथं संप्राप्तं त्यजेयम् । न त्यजेयं तत्संबन्धेन रावणविषयाकारापेक्षी कथं तमेव त्यजेयम् । अतएव हि घण्टाकर्णपक्षपातेन तदनुजस्यापि मुक्तिं ददौ । अत एव च मालाकारविषयपक्षपातेन युष्मत्सन्ततिजातानां दीर्घमायुर्भविष्यतीत्युक्तवान् । न त्यजेयम् आगमनमात्रेण श्लाघनीये त्यागसंभावना कुतः । संभावनायां लिङ् । त्यागसंभावनायां खलु साधनोद्योगः । तस्य त्यागे स्वसत्ता चेत् साधनोद्योगः स्यात् । सैव न निर्वहति कथमुद्योगः । तत्स्वीकाराभावे स्वसत्ता न सिद्ध्यति चेत् तत्स्वीकारेऽस्मत्सत्ता न सिद्ध्यतीत्यस्मत्त्यागः स्यात् स कथमुपपद्यत इति चेत्तत्राह–कथंचन । अप्यहं जीवितं जह्यामित्युक्तरीत्या नवप्रसववात्सल्येन वत्सला गौः पूर्ववत्सानिव युष्मानपि त्यक्ष्यामि न त्वाश्रितम् । यद्वा कथंचन सर्वदेशसर्वकालसर्वावस्थास्वपीत्यर्थः । यद्वा कथंचन शरणागतस्य गुणाभावेऽपि दोषप्राचुर्येऽपि तत्परिग्रहस्य सर्वानभिमतत्वेऽपि दृष्टादृष्टानिष्टशतानुबन्धित्वेऽपि मत्प्राणपरित्यागे प्रस्तुतेपीऽत्यर्थः । किंच दोषो यद्यपि तस्य स्यात् । अस्मदभिप्रायेण दोषो नास्त्येव अस्थानभयशङ्किनो भवतोऽभिप्रायेण तस्य दोषोऽस्ति चेत्स्यात् । अङ्गीकारेऽव्ययमिदम् । दोषभोग्यत्वरूपवात्सल्यैकस्वभावस्य मे आश्रितदोषो ह्युपादेय इति भावः । सुकुमारस्य राजकुमारस्य सुगन्धिमूलमृत्क्लेशवदस्य दोषभोग्यत्वम् । यद्वा दोषो यद्यपि स्यात् तस्य शरणागतस्य न दोषः । यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं ह्यस्य सर्वे पाप्मानः प्रदूयन्त इत्युक्तरीत्या दोषो न श्लिष्येदित्याशयः । यद्वा दोषो यद्यपि स्यात् स तस्य हि शरणागतिरूपनिरतिशयगुणशालिनो दोषो न त्याज्यकोटिमाटीकते सुगन्धिमूलमृत्क्लेशवत् । यद्वा दोषो यद्यपि तस्य दोषोऽस्ति चेत्तत्संबन्धी खलु दोषः स तस्मादपि श्लाघ्यः स्यात् प्रार्थनायां लिङ् । अस्माभिः प्रार्थितः खलु । गुणवान् रक्षितश्चेत् गुणवत्ताप्रतिकरः दोषवान् रक्षितश्चेदतिशयोऽस्माकमिति भावः । यद्वा दोषो यद्यपि अस्मद्बुध्यापेक्षया तस्य स्यात् तस्यापेक्षितफलसिद्धिः स्यात् कपोतोपाख्यानानुगुणेयं योजनेति श्रीवत्साङ्कमिश्रा आहुः । कथं तर्ह्येतन्महामन्त्रिणो निन्दन्तीत्यत्राह–सतामेतदगर्हितम् एतदाश्रितदोषाङ्गीकरणं सताम् अगर्हितम् अनिन्दितम् । अस्मत्पक्षपातिनामस्थानभयशङ्किनां निन्दितत्वेऽपि परमार्थदर्शिनां कपोतादीनां च न निन्दितमिति भावः । यद्वा एवं दुष्टापरित्यागे प्रत्यवायपरिहारो वा पुरुषार्थसिद्धिर्वा पापक्षयो वेति चेन्नैतदित्याह–सतामिति । सद्गोष्ठीष्वस्मद्गर्हापरिहार एव फलं स्वमारणोद्योगवतामपि रक्षकाः कपोतादयः तेषामगर्हितम् ।

सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च। ततः शुभतरं वाक्यमुवाच हरिपुंगवः ॥ ४ ॥
स दुष्टो वाप्यदुष्टो वा किमेष रजनीचरः। ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ॥ ५ ॥
को नाम स भवेत्तस्य यमेष न परित्यजेत्। वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य तु ॥ ६ ॥
ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम्। इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७ ॥
अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च। न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८ ॥
अस्ति सूक्ष्मतरं किंचिद्यथात्र प्रतिभाति मा। प्रत्यक्षं लौकिकं चापि वर्तते सर्वराजसु ॥ ९ ॥

---

यद्वा दुष्टजनपरिग्रहस्य शिष्टगर्हितत्वच्छास्त्रनिन्दितत्वाच्चायुक्तमित्याशङ्क्य सत्यमेतद्दुष्टजनत्याज्यत्ववचनं सामान्यविषयम्। तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीत्येवमादिशरणागतापरित्यागविषयविशेषशास्त्रस्य सद्भावात्। दुष्टस्यापि शरणागतस्य संरक्षणे शिष्टगर्हणा नास्ति प्रत्युत श्रेय एवेत्याह—सतामेतदगर्हितमिति। एतद् दुष्टशरणागतपरिग्रहणम्। सतां सामान्यविशेषशास्त्रविदाम्। अगर्हितं गर्हितादन्यत्। पूजनीयमित्यर्थः। सर्वशक्तेः काचिदशक्तिः। सर्वज्ञस्य किंचिदज्ञानं च मित्रभावेनेति श्लोकेन दर्शितमिति गोविन्दयतिनः प्रत्यवदन् ॥ ३ ॥

४ ] ति० टी०—गर्हितत्वमेव ज्ञापयितुं सुग्रीवः प्रागुक्तादधिकं स्वविवक्षितं दोषं विभीषणं कथयति—सुग्रीव इति। आभाष्यानन्य ततो विमर्शानन्तरम्। शुभतरं प्रागुक्तदोषादप्यधिको यः समर्थतरापरिग्राह्यत्वे हेतुभूतो दोषस्तत्प्रतिपादकम् ॥४

रा० टी०—सुग्रीव इति। तद्वाक्यं रामवचनं विमृश्य विचार्य आभाष्य अनय च शुभतरं वाक्यं सुग्रीव उवाच ॥४॥

गो० टी०—अथ सुग्रीवो रामप्रकृतिमाकर्ण्य अतिसाहसमेतदित्यन्तं भीतभीतः प्राह—सुग्रीव इति। आभाष्य अनय। शुभतरं नीतिशास्त्ररहस्यमूलत्वात्स्वामिविषयप्रमातिशयनिबन्धनत्वाच्च शुभतरं वाक्यमुवाच। अत्र लक्ष्मणमित्युक्तत्वादुपसंहारे सहलक्ष्मण इत्युक्तत्वाच्चोभयोरपि वचनमुभावपि प्रतिवचनं च बोध्यम् ॥ ४ ॥

५ ] ति० टी०—स एष रजनीचरो दुष्टो वा प्रागुक्तदोषयुक्तो वा अदुष्टो वा तद्रहितो वा तथाप्यसौ ग्राह्यः। किं नैव ग्राह्यः कृतघ्नत्वादित्याह—ईदृशमिति। प्रबलशत्रुग्रासरूप व्यसनं प्राप्तं भ्रातरं यः परित्यजेदत्यजत् ॥ ५ ॥

रा० टी०—तदाकारमाह—सुदुष्ट इति। रजनीचर एष विभीषणः मद्दुष्टो वा अदुष्टो वा किं तद्विचारो निरर्थक इत्यर्थः। अथ पृथक्। ननु अदुष्टत्वज्ञाने तन्मङ्गुहः प्रयोजनमित्यत आह—ईदृशमिति। ईदृशम् अतिप्रबलरिपुसमागमजनितं व्यसनं दुःखं प्राप्तं भ्रातरं यः परित्यजेत् स एषः यम परित्यजेत् तस्य एतस्य को भवेत् समये मवं परित्यक्ष्यतीत्यर्थः। एतेनैतद्दुष्टत्वस्य दुष्परिहरत्वात् अदुष्टत्वं दुर्लभमिति तात्पर्यम् ॥ ५ ॥

गो० टी०—सुदुष्ट इत्यर्धमेकं वाक्यम्। अस्माभिः पूर्वमुक्तैश्छिद्रान्वेषित्वादिदोषैर्युक्तो भवतु वा मा कृतघ्नः स एष रजनीचरः किं किमर्थम् परित्याज्य एवेत्यर्थः ॥ ५ ॥

गो० टी०—कृतघ्नतामेवाह—ईदृशमिति। यं बन्धुम्। एष व्यसने प्राप्ते न परित्यजेत्स कस्तस्य भवेत् न कोपीत्यर्थः। भ्रातरं परित्यजन् सर्वानपि परित्यजेदेवेति भावः। ईदृशं व्यसनम् लङ्कादहनपुत्रवधादिकमारभ्य समुद्रतीरनिवेशपर्यन्तं व्यसनमित्यर्थः ॥ ६ ॥

६–७ ] ति० टी०—तस्यास्य को नाम स भवेत्, यमेष संकटे न परित्यजेत्, तस्मादस्मानपि संकटे त्यक्ष्यत्येव। विश्वासघातिकृतघ्नत्वादित्यर्थः। सर्वानुदीक्ष्य सुग्रीवस्योत्तरकक्ष्याचालनसामर्थ्यं सर्वहरीनवभाव्य, तथा लक्ष्मणमुदीक्ष्येषदुत्स्मयमानो बालत्वेन मद्वृत्तापरिज्ञानात्तवाप्येतदेव संमतमितीपद्धासं कुर्वन्निति होवाच ॥ ६ ॥ ७ ॥

रा० टी०—वानरेति। वाक्यं श्रुत्वा सर्वान् लक्ष्मणं चोदीक्ष्य ईषदुत्स्मयमानः काकुत्स्थः इदं वाक्यमुवाच। ईषदुत्स्मयमान इत्यनेन मदभिप्रायः सुग्रीवेण न ज्ञात इति सूचितम् ६॥७

गो० टी०—अथ सूक्ष्मधर्मानभिज्ञस्य सुग्रीवस्य नीतिमर्यादयैवोत्तरं वक्तुमारभते—वानराधिपतेरिति। सार्धश्लोकः। ईषदुत्स्मयमानः धर्मरहस्यमिदं मम परमशक्तिं शरणागतसंरक्षणव्रतं च सम्यगपरिज्ञाय यत्किंचिद्वदत्ययमिति मन्दस्मयं कुर्वन् ॥ ७ ॥

८ ] ति० टी०—सुग्रीववैमनस्यपरिहाराय तद्वाक्यं प्रशस्योत्तरमाह—अनधीत्येति। हरीश्वरो यदुवाचेदृशं वृद्धसेवारहितेन शास्त्राध्ययनरहितेन च न वक्तुं शक्यम् ॥ ८ ॥

रा० टी०—तद्वाक्याकारमाह—अनधीत्येति। हरीश्वरः सुग्रीवो यदुवाच ईदृशं वाक्यं वक्तुं न शक्यम् एतेन तद्वचनस्य सयुक्तिकत्वं ध्वनितम् ॥ ८ ॥

गो० टी०—प्रथमं तद्वचनमुपलालयति—अनधीत्येति ॥८॥

९ ] ति० टी०—अथैतदुपर्यपि मम किंचिद्भातीत्याह—अस्तीति। अत्र भ्रातृपरित्यागरूपदोषोद्भावनेऽपि सर्वराजसु प्रत्यक्षं प्रत्यक्षसिद्धं लौकिकमन्ततः सर्वलोकप्रसिद्धं विद्यते मा मां प्रति भाति च तत्सूक्ष्मतरं किंचिदर्थरूपमस्ति ॥ ९ ॥

रा० टी०—ननु तर्हि सुग्रीवोक्तिं स्वीकृत्य विभीषणस्त्य-

---

१ विविति रा. पाठः। २ चेति गो. पाठः। ३ मदत्रेति गो. पाठः। ४ मे इति गो. पाठः। ५ वेति गो. पाठः। ६ विद्यत इति गो. पाठः।

अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः । व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥ १० ॥
अपापास्तत्कुलीनाश्च मानयन्ति स्वकान्हितान् । एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ॥ ११ ॥
यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च । तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु ॥ १२ ॥
न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः । पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥ १३ ॥

ज्यतामित्यत आह—अस्तीति । अत्र विभीषणविषये सूक्ष्मतरम् अतिविचारगम्यं यदस्ति तत् किंचित् मा मां यथा यथावत् प्रतिभाति मद्बुद्धिविषयो भवति यत् सर्वराजसु प्रत्यक्षं लौकिकं जनान्तरप्रत्यक्षं च वर्तते ॥ ९ ॥

गो० टी०—अस्तीति । सूक्ष्मतरं किंचित् अर्थस्वरूपमिति शेषः । तदेवार्थस्वरूपं विशिनष्टि—प्रत्यक्षमिति ' प्रत्यक्षं दृष्टम् लौकिकं लोकसिद्धम् यत्सर्वेष्वपि राजसु विद्यते मे प्रतिभाति च तत्सूक्ष्मतरं किंचिद्धर्मस्वरूपमस्तीति संबन्धः ॥ ९ ॥

१० ] ति० टी०—तदर्थरूपं प्रतिपादयितुं तदुपयुक्तां लोकस्थितिमाह—अमित्रा इति । राज्ञाममित्राः शत्रवो द्विधा कीर्तिताः । तत्कुलीना ज्ञातयः प्रातिदेश्या आसन्नदेशवासिनश्चेति ते द्विविधा अपि स्वविरोधिज्ञातेः स्वविरोधिन आसन्नदेशवर्तिनश्च व्यसनेष्वाध्यात्मिकादित्रिप्रकारकष्टेषु तस्य प्रहर्तारो भवन्तीति प्रसिद्धम् । अस्तु, किं तत इत्यत्राह—तस्मादिति । नानाप्रकारस्वपीडाप्रवृत्तज्ञातिभयात्स्वत्राणार्थमिहागतः । यद्वा तस्माद्व्यसनप्रहर्तृज्ञातित्वाद्व्यसनिनं रावणं प्रहर्तुमयं विभीषण इहागत इत्यर्थः ॥ १० ॥

रा० टी०—तदेव स्फुटयन्नाह—अमित्रा इत्यादिभिः । तत्कुलीनाः स्वकुलप्रसूताः प्रातिदेश्याः तत्समीपदेशवासिनश्च अमित्राः समयविशेषे शत्रवः कीर्तिताः अत एव व्यसनेषु दुःखसमयेषु प्रहर्तारो भवन्ति तस्मात् ज्ञातिरूपरिपुभयात् अयमिहागतः एतेन भ्रातृनिष्ठप्रीतिविषयत्वे यद्ययमिहागच्छेत् तदाऽस्मिन् कृतघ्नत्वादिदोषसंभावना संभवेत् अयं तु पापाचरणशीलस्वबन्धुना स्वविपरीताचरणवत्तयाऽयं निःसारित इति न दोषवानिति सूचितम् ॥ १० ॥

गो० टी०—तदेवार्थस्वरूपमाह—अमित्रा इति । तत्कुलीनाः ज्ञातयः प्रातिदेश्याः समनन्तरदेशाधिपाश्च व्यसनेषु समुपस्थितेषु प्रहर्तारः अमित्राः शत्रवः कीर्तिताः । तस्माद्व्यसनप्रहर्तृज्ञातित्वात् ॥ १० ॥

११ ] ति० टी०—अथ शत्रुताप्रयोजकमपि न ज्ञातित्वमात्रम्, किं तु परस्परानिष्टचिन्तायुक्तत्वमित्याह—अपापा इति । अपापाः परस्परानिष्टचिन्तारहिताः । धर्ममार्गेण परस्पर हितैषिणश्च तत्कुलीना ज्ञातयो ये ते स्वकान्हितान्मानयन्ति । एष उक्तोऽर्थः प्रायो बाहुल्येन लोके उपलक्ष्यते । नरेन्द्राणां तु शोभनोऽपि हितैष्यपि ज्ञातिः शङ्कनीय एव । महत्तरराज्यैश्वर्यलोभसंभवात् । उपजापवशादनिष्टचिन्ताया भरतमात्रादौ [illegible] । एवं च स्वस्मात्शङ्कितरावणतोऽनिष्टं संभाव्य तं त्यक्त्वायमागतः । किं च 'यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन्दोषः' इत्यापस्तम्बोक्ते रावणनाशार्थमागमनेऽप्यस्य न दोष इत्याशयः ॥ ११ ॥

रा० टी०—ननु ज्ञातीनां रिपुत्वे लोकशास्त्रप्रसिद्धभ्रात्रादिस्नेहानां निरवलम्बनत्वापत्तिरित्यत आह—अपापा इति । अपापाः पापाचरणरहिताः तत्कुलीनाः स्वकुलप्रसूताः जना स्वकान् स्वकुलोद्भवानित्यर्थः हितान् मानयन्ति नरेन्द्राणां तु शोभनाः निर्दोषोऽपि एष ज्ञातिः प्रायः शङ्कनीयः तद्विनाशे तन्महैश्वर्यस्य तैरेव प्रापणीयत्वात् ज्ञातयः शङ्कास्पदीभूताः इतरनरेषु तथाचरणाभावस्तु राजशङ्कैश्वर्यस्याल्पत्वेन चेति बोध्यम् ॥ ११ ॥

गो० टी०—व्यसनिनं रावणं परित्यज्यागमने कारणान्तरमस्तीत्याह—अपापा इति । अपापास्तत्कुलीना नरेन्द्राः हितान् हितपरान् स्वकान् ज्ञातीन् मानयन्त्येव तेषामपि नरेन्द्राणां शोभनो गुणवानेष ज्ञातिः प्रायः शङ्कनीयः लोके पापभूयिष्ठतया शोभनोपि प्रायेण शङ्कनीयः पापिनस्तु नरेन्द्रस्य तादृशो ज्ञातिः शङ्कनीय इति किमु वक्तव्यम् । अतोयं रावणेन शङ्कितः तेन सह विरुद्ध्यैवागत इत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—एवं भ्रातृत्यागदोषं परिहृत्य यः पूर्वं परिग्रहे रन्ध्रप्रहारदोष उक्तस्तमलय परिहरति—य इति । अरिबलस्य शत्रुपक्षस्यादाने परिग्रहे यो दोषो रन्ध्रप्रहाररूपो दोष उक्तस्तद्विषये यथाशास्त्रं यथान्यायमुत्तरं कीर्तयिष्यामि तच्छृणु ॥ १२ ॥

रा० टी०—भ्रातृत्यागहेतुकदोषसंभावनां निरस्य तदुक्तविभीषणपरिग्रहदोषं निरस्यन्नाह—य इति । रिपुबलस्यादाने यो दोषस्त्वयोक्तस्तत्र तद्विषये यथाशास्त्रं ते कीर्तयिष्यामि इदं मत्कीर्तितं त्वं शृणु ॥ १२ ॥

गो० टी०—एवं रावणपरित्यागे हेतुमुक्त्वा स्वापरित्यागे हेतुं वक्तुं प्रतिजानीते—यस्त्विति । अरिबलस्य विभीषणस्य दोषः को नाम स भवेत्तस्येत्यादिनोक्तः । तत्र विषये । यथाशास्त्रं नीतिशास्त्रमनतिक्रम्य इदमुत्तरं—न वयमिति । न वयं तत्कुलीनाः राक्षसराज्यानर्हाः अस्माकं तद्राज्ये आकाङ्क्षाभावात् । मम रावणस्येव तस्मिन्नरिस्वशङ्काप्रसक्तिर्नास्ति अतो नास्मान् त्यक्ष्यतीति भावः । किंच राक्षसो विभीषणस्तु राज्यकाङ्क्षी अस्मन्मुखेन रावणं घातयति अतः स्वकार्यविघातभयादपि नास्माकमपकारं करोतीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—तदेवाह—नेति । वयं न तत्कुलीना

अव्यग्राश्च प्रहृष्टाश्च [1]ते भविष्यन्ति संगताः । [2]प्रणादश्च महानेषो[3]ऽन्योन्यस्य भयमागतम् ॥
इति भेदं गमिष्यन्ति तस्मा[4]द्ग्राह्यो विभीषणः । ॥ १४ ॥
न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः । मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः ॥ १५ ॥

ज्ञातयः चात्प्रातिदेश्याश्च न भवामः, अतोऽस्मद्राज्यजिघृक्षाभावान्नास्माष्ठ प्रहारोऽनेन कार्यः, किं तु निजराज्यमेव स्वज्ञातिनिरासमस्मन्मुखेन संपाद्य काङ्क्षति तदाह—राज्यकाङ्क्षीति अतो नोपजीव्यविरोधं करिष्यति । ननु मूर्खस्तमःप्रधानत्वाद्राक्षसैः कथमेवं विचारकरणमत आह—पण्डिता इति । पर्यालोचनपूर्वमनुष्ठेयनिश्चयसमर्थाः पण्डितास्ते सर्वत्र भविष्यन्त्येव । एवं चैकजन्यत्वेऽपि यथा कुम्भकर्णोऽतितामसो रावणश्चातिराजसः, एवमयमतिसात्त्विकतयैवंविचारशील इति भावः । उपसंहरति—तस्मादिति ॥ १३ ॥

रा० टी०—प्रतिज्ञातमाह—नेति । राक्षसो विभीषणः राज्यकाङ्क्षी वयं तु न तत्कुलीनाः चकारात् न तन्निकटवासिनः एतेनायोग्यत्वान्नास्मद्राज्याकाङ्क्षीति सूचितम् तेन वयं न तद्द्रोहविषया इति व्यञ्जितम् राज्यकाङ्क्षीत्यनेन रावणविघातेच्छा तस्मिन्नास्तीति सूचितम् तेन मैत्रीयोग्यत्वं ध्वनितम् । ननु तमःप्रधानानां राक्षसानां विवेकाभावात् द्रोहाविषयेभ्योऽपि द्रोक्ष्यन्तीत्यत आह—पण्डिताः विवेकिनोऽपि भविष्यन्ति भवन्ति सत्वप्रधानेषु देवेषु तमउदयात् क्रोध इव तमःप्रधानेष्वपि संस्कारवशेन सत्वोदयात् विवेको नासंभवीति तात्पर्यम् तस्माद्धेतोर्विभीषणो ग्राह्यः ॥ १३ ॥

गो० टी०—ननु मूर्खा राक्षसाः कथमेवं विमृश्यकारिण इत्याशङ्क्य नायं नियम इत्याह—पण्डिता इति । अर्धमेकं वाक्यम् । राक्षसा अपीत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—उक्तहेत्वनुवादपूर्वं ग्राह्यत्वमुपसंहरति—अव्यग्रा इति सार्धेन । ते ज्ञातयोऽव्यग्रा अनाकुलाः निश्चयवन्त इति यावत् । प्रहृष्टा अन्योन्यं संतुष्टाश्च सौभ्रात्रात्संगताः परस्परमिलिता भविष्यन्तीति सर्वलोकप्रसिद्धम् । तेभ्योऽन्ये तूक्तविपरीता इति प्रागुक्तरीत्या पापमूलराज्यलोभादिना भेदं गमिष्यन्ति, ततोऽनन्तरमस्य ज्ञातिवर्गस्यैष लोकप्रसिद्धः प्रणादो युद्धरूपकोलाहलो भवति, अन्योन्यस्यान्योन्यतो भयं चागतं भवतीति लोकस्थितिर्यतस्तस्मादयमेतावत्कालमनपगतसौभ्रात्रोऽपि केनचिन्निमित्तेनाद्य प्राप्तवैरः शरणमागतो ग्राह्य एवेति कतकव्याख्या । तीर्थस्तु—'नैष ततोऽस्य' इति पठित्वास्य भीतस्यैवैष महान्प्रणादः श्रूयते, अतस्ततो बलवतो रावणादस्य विभीषणस्य भयमागतमित्यात्मत्राणार्थमागतः परिग्राह्य एवेत्यर्थः इतरत्तु प्राग्वदेव व्याख्येयमित्याह ॥ १४ ॥

रा० टी०—ग्रहणे एव हेत्वन्तरं वदन्नाह—अव्यग्रा इति । सङ्गताः अस्माभिर्मिलितास्ते विभीषणप्रभृतयः अव्यग्रा भविष्यन्ति । अत एव प्रहृष्टा भविष्यन्ति अत एव अन्योन्यस्य राक्षसेषु परस्परस्य भयमागतमेषः प्रणादः कोलाहलशब्दो भविष्यति इतिहेतोर्भेदं विनाशं गमिष्यन्ति राक्षसा इति शेषः तस्माद्विभीषणो ग्राह्यः । 'प्रहृष्टाश्च ने' ति पाठे तु एषः विभीषणसंङ्गमहेतुकः प्रणादः अन्योन्यस्य राक्षसेषु परस्य भविष्यति अत एव भयमागतं भविष्यति अत एव संगता मिलिता रावणादयः अव्यग्रा प्रहृष्टा न भविष्यन्ति तस्माद्विभीषणो ग्राह्यः ॥ १४ ॥

गो० टी०—पुनरप्यस्य रावणेन विरुध्यागमनमेव प्रतिपादयन् परिग्राह्यत्वं निगमयति—अव्यग्रा इति सार्धश्लोकेन । ते ज्ञातयः अव्यग्राः प्रहृष्टाश्च सन्तः कदाचिदप्यन्योन्यसंगताः न भविष्यन्ति न भवन्तीति । अनेनैव हेतुना ज्ञातयोवसरे भेदं गमिष्यन्ति गच्छन्ति । अस्य च भीतस्यैव महान् प्रणादः श्रूयते अतो बलीयसो रावणात् अस्य भयमागतं तेन च भयेनात्मत्राणार्थमागतं इति परिग्राह्योयमित्यर्थः ॥ १४ ॥

१५ ] ति० टी०—ननु भरतादिष्वेतद्दोषादर्शनाद्भ्रातॄणामीदृशभेदासंभवोऽत आह—न सर्वे इति । राज्यादीच्छया प्राप्तसौभ्रात्रत्यागस्याभावो भरतादन्येन परमदुष्करः, तेन पितृदत्तराज्यत्यागात्, लक्ष्मणादेस्तु तदप्रसक्त्या न तदुक्तिः । मद्विधा वा पुत्राः छललिप्सया पितृवाक्यलङ्घनरहिताः, सुहृदो वा भवद्विधाः । त्यक्त्वापि सर्वसौख्यं सर्वाकारेण सर्वबलेन सर्वयत्नेन च मित्रकार्यसाधकः सुहृत्परमदुर्लभ इति भावः । अत्र भूतार्थकथनरूपत्वान्नात्मप्रशंसादोषो भगवतः । 'स्वगुणाविष्कयादोषो नास्ति भूतार्थशंसने' इति दण्डयुक्तेः ॥ १५ ॥

रा० टी०—नन्वेवं सति भवद्भ्रात्रादिषु विद्यमानस्य स्नेहस्य तात्त्विकत्वाभावापत्तिरित्यत आह—नेति । अत एव एष प्रायो नरेन्द्राणामित्यत्र प्रायः पदमुपात्तम् ॥ १५ ॥

गो० टी०—ननु दुष्टोपि ज्येष्ठोनुवर्तनीय एवेत्याशङ्क्य यद्यप्ययं धर्मः तथापि न सर्वत्र संभवतीत्याह—न सर्वे इति । मद्विधा वा पितुः पुत्रा इति भूतार्थकथनत्वान्नात्मप्रशंसादोषः। यथा कृपावानविकत्थन इत्युक्तलक्षणेन धीरोदात्तेन दुष्यन्तेन । 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय' इत्युक्तम् । यथा च हनुमता 'पन्नगाशनमाकाशे पतन्तं पक्षिसेविते । वैनतेयमहं शक्तः परिगन्तुं सहस्रधा' इति । दण्डिना च काव्यादर्शे प्रथमपरिच्छेदे 'स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः । अपि त्वनियमो दृष्टस्तथा त्वन्यैरुदीरणात्' इति यद्वा पूर्वश्लोकार्थस्य भरतेऽतिप्रसङ्गः परिहरति—सर्वे इति तातेति सान्त्वोक्तिः । सर्वे भ्रातरः भरतोपमा न भवन्ति । कैकेयीवरप्राप्तं पित्रा दत्तमपि राज्यं परित्यज्य वनं गतं

१ नेति गो. पाठः । २ प्रवाद इति गो. पाठः ३ ततो स्येति गो. पाठः । ४ ग्राह्य इति गो. पाठः ।

एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः। उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥ १६ ॥
रावणेन प्रणिहितं तमवेहि निशाचरम्। तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ १७ ॥
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः। प्रहर्तुं त्वयि विश्वस्ते विश्वस्ते मयि वाऽनघ ॥ १८ ॥
लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह। रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ १९ ॥
एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः। वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ २० ॥
स सुग्रीवस्य तद्वाक्यं रामः श्रुत्वा विमृश्य च। ततः शुभतरं वाक्यमुवाच हरिपुङ्गवम् ॥ २१ ॥
स दुष्टो वाऽप्यदुष्टो वा किमेष रजनीचरः। सूक्ष्ममप्यहितं कर्तुं मम शक्तः कथंचन ॥ २२ ॥

---

मामनुसृत्य तवैव राज्यं त्वमेव गृहाण अहं त्वदास्यं करिष्यामीति वदन्भरतादन्यः कश्चिदस्ति किमिति भावः। एवंविधप्रसक्त्यभावाल्लक्ष्मणस्यानुपादानम्। अत्र दृष्टान्तमाह—**मद्विधा इत्यादिना**। मद्विरहमात्रेण लोकान्तरं गतः पिता। तत्तुल्यपितृमानस्मत्सदृशः कश्चिदस्ति किमित्यर्थः। यद्वा मद्विधाः पितुः पुत्राः सन्तु वा मा वा भरतसमा भ्रातरस्त्वत्समाः सुहृदश्च न सन्तीत्यर्थः। सुहृदो वा भवद्विधाः। वर्षात्रसमये स्थितेन मयात्यन्तकुपितेन लक्ष्मणेन चात्यन्तं परुषमुक्तेपि अस्मासु प्रेमातिशयमेव प्रकटयन् त्वत्समः को वास्तीति भावः। यद्वा मद्विधा वा पितुः पुत्रा न भवन्ति। निरतिशयपितृवात्सल्यभूतोस्मत्तुल्यो नास्तीत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—एवं न्यायतो विभीषणस्य ग्राह्यत्वे प्रतिपादितेऽपि प्रीत्यतिशयेनानिष्टसंभावनया स्वमतमेव सम्यगित्याशयेनाह—**एवमिति**। सहलक्ष्मण इत्यनेनोभयोरैकमत्यं दर्शितम्। उत्थाय प्रणत इत्यन्वयः ॥ १६ ॥

रा० टी०—**एवमिति**। रामेण एवमुक्तः प्रणतः महाप्राज्ञः सर्वे न भवन्तीत्युक्त्या कश्चिद्भवतीति रामाभिप्रायाभिज्ञः सहलक्ष्मणः अतिस्नेहवत्वेन लक्ष्मण इव स्थितः सुग्रीवः उत्थाय इदमब्रवीत् ॥ १६ ॥

गो० टी०—अथ सुग्रीवो नीतिमुखेन विभीषणस्य त्याज्यतां प्रतिपादयितुमशक्तः परिग्रहे चाविदितभावोयं रामे कमनर्थमुत्पादयिष्यतीति प्रेमवशेन व्याकुलो विभीषणशरणागते रेकस्याः सलक्ष्मणेन स्वेन क्रियमाणं शरणागतिद्वयं प्रबलमभिमन्यमानः शरणागतिपूर्वकं विभीषणनिग्रहं प्रार्थयते—**एवमित्यादिचतुःश्लोकैः** ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—प्रणिहितमवेहि, न तु वैरस्यादागतमित्यर्थः। तद्वाक्यमविश्वास्यमित्याशयः ॥ १७ ॥

रा० टी०—तदाकारमाह—**रावणेनेत्यादिभिः**। तं विभीषणं रावणेन प्रणिहितं प्रेषितमवेहि अत एव तस्य विभीषणस्य निग्रहं दण्डं क्षमं योग्यमहं मन्ये ॥ १७ ॥

१८ ] ति० टी०—उक्तमेवाह—**जिह्मयेति**। कुटिलयेत्यर्थः। विश्वस्ते मयीत्युक्तिः स्वव्यसनादपि स्वाश्रितव्यसनमरुंतुदमिति मत्वेति बोध्यम् ॥ १८ ॥

१९ ] ति० टी०—तादृशच्छलबुद्धित्वे हेतुः रावणभ्रातृत्वम् ॥ १९ ॥

रा० टी०—तदेव स्फुटयन्नाह—**राक्षसइति**। राक्षसः जिह्मया कुटिलया बुद्ध्या युक्तो भवतीति शेषः अतः संदिष्टोऽस्मद्वृत्तज्ञानाय भ्रात्राऽऽज्ञप्तः सन् त्वदादौ प्रहर्तुमयमिहागतः अतः रावणस्य सः प्रसिद्धो भ्राता सचिवैः सह वद्ध्यः अर्थचतुष्टयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०—**राक्षस इत्यादि**। अत्र मयि लक्ष्मण इति स्वस्य लक्ष्मणस्य चानर्थकथनं स्वव्यसनादपि स्वाश्रितव्यसनं रामस्यात्यन्तारुन्तुदमिति तत्प्रदर्शनेन विभीषणापरिग्रहसमर्थनार्थम् ॥ १८ ॥ १९ ॥

२० ] ति० टी०—मौनमुपागमत्। त्रिवारोक्तम्, अतोऽधिकं प्रभौ न वक्तुं युक्तमित्याशयेनेति शेषः ॥ २० ॥

रा० टी०—**एवमिति**। सुग्रीव एवमुक्त्वा मौनमुपागमत् ॥ २० ॥

गो० टी०—**एवमुक्त्वेति**। मौनमुपागमत् प्रणयरोषादिति भावः ॥ २० ॥

२१ ] ति० टी०—विमृश्य च रन्ध्रप्रहारदोषः सति संभवेऽप्यस्मास्वकिंचित्कर इति विचार्य ॥ २१ ॥

रा० टी०—**स इति**। रामः सुग्रीवस्य वाक्यं श्रुत्वा विमृश्य तत्त्वतो विचार्य च शुभतरं वाक्यमुवाच ॥ २१ ॥

गो० टी०—अथ रामः स्वस्य सर्वशक्तित्वप्रदर्शनेन सुग्रीवस्यातिशङ्कां निवार्य शरणागतरक्षणरूपस्य स्वव्रतस्य धर्मशास्त्रसिद्धत्वात्तस्यापरित्याज्यतां प्रतिपादयति—**सुग्रीवस्य त्वित्यादिना** ॥ विमृश्य मयि प्रेमातिशयेनैवमुक्तमिति विचार्य ॥ २१ ॥

२२ ] ति० टी०—तमेव निश्चयं दर्शयति—**स दुष्ट इति**। स एव दुष्टोऽदुष्टो वा यथाकथंचिदस्तु, अथापि मम सूक्ष्ममप्यहितं कर्तुं कथंचन कथमपि शक्तः किम् न कथमपि शक्त इत्यर्थः ॥ २२ ॥

रा० टी०—तदाकारमाह—**स इति**। स आगतः एव रजनीचरः दुष्टोऽदुष्टो वा अलमेतद्विचारेण दुष्ट एव भवेदित्यर्थः तथापि सूक्ष्मं किंचिदपि ममाहितं कर्तुं कथञ्च केनापि

---

१ विभीषणमिति गो. पाठः। २ वध इति गो. पाठः। ३ सुग्रीवस्य त्विति गो. पाठः। ४ अशक्त इति गो. पाठः।

पिशाचान्दानवान्यक्षान्पृथिव्यां चैव राक्षसान्। अङ्गुल्यग्रेण तान्हन्यामिच्छन्हरिगणेश्वर ॥ २३ ॥
श्रूयते हि कपोतेन शत्रुः शरणमागतः। अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ २४ ॥
स हि तं प्रतिजग्राह भार्याहर्तारमागतम्। कपोतो वानरश्रेष्ठ किंपुनर्मद्विधो जनः ॥ २५ ॥

प्रकारेण शक्तो न किंच कथञ्चन केन प्रकारेण शक्तो न केनापीत्यर्थः काकुः ॥ २२ ॥

गो० टी०—सुग्रीवस्य भयं निवर्तयति—सुदुष्ट इति। स एष रजनीचरः सुदुष्टो वा अदुष्टो वा भवतु किं करिष्यति। तदेव विवृणोति—सूक्ष्ममिति। सूक्ष्ममपीत्यनेन साक्षान्मयि मदाश्रितेषु मत्संबन्धिसंबन्धिष्वपि न शक्त इति भावः ॥ २२ ॥

२३ ] ति० टी०—कुत इत्यत्रापरिमेयनिजशक्तिं तच्छक्तिप्रतिहन्त्रीमाह—पिशाचानिति। अङ्गुल्यग्रेण एकाङ्गुल्या अग्रमात्रेणापि अनेन संकल्पसिद्धिरैश्वर्यं चिह्नमुक्तम्। यद्येवमस्मदादिसंग्रहो व्यर्थस्तत्राह—इच्छन्निति। स्वस्य निरतिशयमहिमानं तात्त्विकं ब्रह्मभावं प्रकटीकर्तुमिच्छन्यदि स्यां तदा तथैव कुर्याम्, संप्रति तु देवभावोपेतनिजविलासैरशेषैरवध्यत्वमस्य मयैव दत्तमिति तत्परिपालनाय स्वदिव्यभावं स्वशक्त्यैवान्तर्धाय मानुषमर्यादायां स्थित्वा तद्भावप्रकटनायैव सीतावियोगप्रयुक्तरोदनतद्वाद्यसहायमेलनम् वस्तुतो न स्वातिरिक्तसहायान्तरापेक्षा मम, मनुष्याणां संसारमर्यादाज्ञापनं तद्व्यवहारफलमिति भावः ॥ २३ ॥

रा० टी०—तत्र हेतुमाह—पिशाचानिति। यद्यहमिच्छन् तदा पिशाचादीन् अङ्गुल्यग्रेण इच्छामात्रेणेत्यर्थः हन्याम् ॥ २३ ॥

गो० टी०—कथं न शक्त इत्याकाङ्क्षायां स्वशक्तिं दर्शयति—पिशाचानिति। पृथिव्यां विद्यमानानिति शेषः। त्वं तावत्सकलैः स्वबलैः सह तिष्ठ अहमेक एव पर्याप्त इत्यभिप्रायेणाह—हरिगणेश्वरेति। अङ्गुल्यग्रेण शस्त्रास्त्रादिप्रसङ्गशून्येन अङ्गुल्यन्तरनिरपेक्षेण एकस्यामप्यङ्गुल्यामंशान्तरव्यापारवर्जितेन तत्रापि हस्तपादादिविशेषविवक्षाशून्येन अग्रमात्रेण हन्यां हन्तुं शक्तः न केवलं लङ्कामात्रनिवासिनो राक्षसान् किन्तु स्थानान्तरनिवासिनोपीति विवक्षया पृथिव्यां चैवेति निर्देशः न केवलमेकजातीयानामेव लक्ष्यत्वं किन्तु सर्वेषामपीत्यभिप्रायेणाह—तानिति। तर्हि लङ्कामात्रनिवासिनो राक्षसान्किमिति न हंसीत्यत्राह—इच्छन्निति। इच्छाभावादेव तद्वधाभावः न त्वशक्त्येति भावः ॥ २३ ॥

२४ ] ति० टी०—एवं रन्ध्रे प्रहारभीतिं दूरीकृत्य शरणागतरक्षणं परमो धर्म इति कपोताख्यानेन दर्शयति —श्रूयते हीति। भार्याहर्तृत्वात्कपोतशत्रुर्व्याधः शरणं गृहं स्वनिवासभूतवृक्षमागतो यथान्यायमर्चितोऽग्न्यानयनशीतनिवारणाद्युपचारैर्यथोचितं पूजितः स्वैर्मांसैर्निमन्त्रितो भोजनाय प्रार्थितः २४

रा० टी०—ननु एतत्स्वीकारे किमर्थमेवमाग्रह इत्यत आह—श्रूयत इति। शरणं स्वगृहभूततरुमागतः शत्रुः स्वभार्याविघातकत्वेन रिपुर्व्याधः कपोतेन यथान्यायमर्चितः शीतनिवारणसामग्र्यादिभिः सत्कृतः स्वमांसैः स्वशरीरपलैर्निमन्त्रितश्च ॥ २४ ॥

गो० टी०—एवमस्मादपकारशङ्का नास्तीत्युक्त्वा भवतु वायमपकारी तस्मादेवापकारान्मम प्राणा गच्छन्तु वा अथापि नायं निग्राह्यः नापि परित्याज्यः किन्त्ववश्यं रक्ष्य एवेति कपोतोपाख्यानेन प्रतिपादयति—श्रूयते हीति। हीति प्रसिद्धेयमाख्यायिकेत्यर्थः। कपोतेन धर्माधिकारशून्येन तिर्यङ्मात्रेण एतेनाप्यनुष्ठितत्वं किमु वक्तव्यमस्माकम्। कपोतेन एकेनासहायेन कृतं किमुत ससहायैरस्माभिः शत्रुः कपोतस्य मृगयुः स्वयं भार्यापहारी वैरी विभीषणस्त्वस्माकं न तथा तथाप्यरक्षणे किमस्मत्पौरुषेण शरणमागतः कपोताध्युषितद्रुमस्थलं यदृच्छया प्राप्तः। 'सोञ्जलिं शिरसा बद्ध्वा वाक्यमाह वनस्पतिम्। शरणं हि गतोस्म्यद्य देवतामिहवासिनीम्' इति स्वावासवनस्पतिदेवतां प्रत्युक्तवान् न तु कपोतम्। विभीषणस्तु राघवं शरणं गत इति अस्मत्कूटस्थरघुराक्षससंवादोक्तशरणागतराक्षसरक्षणं पुरस्कृत्य मां प्राप्तः यद्वा शरणं शाखिनः पक्षिणां गृहमित्युक्तरीत्या वनस्पतिरूपं गृहं प्राप्तः न तु शरणागतिं चक्रे। शरणं गृहरक्षित्रोरित्यमरः। अर्चितश्च लुब्धकत्वात्सहजशत्रुत्वात् भार्यापहर्तृत्वाच्चापत्रोप्यसावित्युपेक्षणस्य तद्वधोपायान्वेषणस्य च कर्तव्यत्वे प्राप्तेप्यतिथिं देवत्वेन मत्वा शीतनिवारणायाग्निमानीय पूजितः। वयं तु वध्यतामेष तीव्रेण दण्डेन सचिवैः सहेत्यनुबन्धिपर्यन्तं सम्यगर्चयामः यथान्यायम्। यावत्क्षुन्निवृत्ति सन्मित्रागम इव समग्रादरेणान्तर्विपादलेशं विना आदृतः यद्वा प्रियवचनादिभिः वञ्चनां विनेत्यर्थः। स्वैश्च मांसैर्निमन्त्रितः। बहिः कतिचिदाहारानानीय स्वकीयद्रव्यान्तराणि कतिपयानि शरीरैकदेशान्वा दत्त्वा नोपचचार किन्त्वज्ञैरात्मत्वेनाभिमन्यमानैः प्राज्ञैरप्यायं धर्मसाधनमित्यादरणीयैः शरीरमांसैः शरभङ्ग इव इदमेकं महत्तप इति मत्वा वह्नावह्नाय पतति स्म निमन्त्रितः भोजनार्थं नियोजितः २४॥

२५ ] ति० टी०—एवंरीत्या स हि सोऽपि तिर्यग्जन्तुरपि भार्याहर्तारं शरणमागतं प्रतिजग्राह नोपेक्षितवानिति श्रूयते, किं पुनर्मद्विधो जनः सकलधर्मरहस्यवेत्ता क्षत्रियो भूत्वाऽकृतापकारं शरणागतं न प्रतिगृह्णीयादित्यर्थः। शरणागतं कायवाग्व्यापारैरसंदिग्धमेवेत्याशयः ॥ २५ ॥

रा० टी०—ननु किं तेनेत्यत आह—स इति। सः तिर्यग्योनिगतोऽपि कपोतः आगतं भार्यापहर्तारं तं व्याधं प्रति

ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा । शृणु गाथा पुरा गीता धर्मिष्ठा सत्यवादिना ॥ २६ ॥
बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् । न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ॥ २७ ॥

जग्राह तर्हि मद्विधः उत्तमकुलप्रसूत इत्यर्थः यदि प्रतिगृह्णाति तर्हि किं युक्तमेवेत्यर्थः ॥ २५ ॥

गो० टी०—उक्तमेवार्थं दृढीकुर्वन् स्वस्य कैमुत्यमाह—स हि तमिति । स कपोतः वयमिव धर्मानुष्ठानयोग्यजातौ शरण्यवंशे वा नोत्पन्नः तं जात्या स्वभावेन च क्षुद्रसमाचारम् पक्षिणां कालसंमित इत्यखिलपक्षिजातिविरोधिनं तस्य कपोतस्यान्तिकं प्रति यदृच्छयाभ्येत्य पतितम् उपायान्तरशून्यम् विपरीतानुष्ठानैकनिरतम् अनुतापलेशेन वा अनुकूलवादप्रसक्त्या वाऽनन्वितं प्रतिजग्राह स्वात्मत्यागेनाङ्गीकृत्यावति स्म । पूर्वश्लोके शत्रुरिति सामान्येनोक्तमर्थं तद्वृत्तिप्रदर्शनेन विशिनष्टि—भार्याहर्तारमिति । एवमेव रावण आगतश्चेदस्माभिः कार्यं इत्यभिप्रायः । आगतम् अस्याङ्गीकाराय कृतमुपायानुष्ठानं कपोतावासद्रुमस्थलं प्रत्यागमनमात्रमेव तद्विना वनस्पतिदेवतां प्रत्युक्तं शरणशब्दं कपोतो नाशृणोत् । अत्र स हीत्यनेनैव कपोतानुवादे लब्धेपि पुनः कपोतग्रहणं श्येनकपोतोपाख्यान इव नायं परिगृहीतकपोतशरीरो देवो मुनिर्वा किन्तु प्राकृतः कपोत इति ज्ञापनार्थम् । अयं कपोतः प्राक्तनधर्मविशेषैर्गजेन्द्रादिवत्तिर्यक्त्वेप्येवंधर्मानुष्ठानयोग्यो बभूव कपोत इत्यनेन तिर्यक्त्वं शास्त्रानधिकारित्वं बुद्धिमान्द्यं च सूचितम् । वानरश्रेष्ठ पुनरप्येकस्तिर्यक् शत्रुं किरातं ररक्षेत्येनां कथां शृणु । वानरः कश्चिद्व्याघ्राद्भीतं स्वावासद्रुममागतं किरातं ररक्ष तदानीं वृक्षमूलस्थो व्याघ्रस्तस्मिन्वानरे सुप्ते निषादं समीक्ष्य त्वां रक्षामि वानरं पातयेत्युवाच ततः पापैकनिरतः किरातः स्वरक्षणकारिणं वानरं पातयामास अनन्तरं वानरं पतितं गृहीत्वा व्याघ्रः त्वां जह्यां स्वोपकारिद्रोहिणं निषादं जहीति मनुष्यमांसलुब्धस्त्वादुवाच । ततो धर्मवित्स वानरः प्राणात्ययदशात्वादहृदयं तत्त्यागमङ्गीकृत्य व्याघ्रस्तकस्तरुमारुह्य स्वस्यापकर्तारं किरातं पश्चादपि गत्यन्तराभावान्निजवासद्रुमस्थितिहेतुना शरणागत इत्यरक्षत् । भवान्वानराधिपत्ये स्थितः सन् स्वजातिधर्मं इति शरणागतरक्षणं किमवलम्बते किं पुनर्मद्विधो जनः । कपोतचरितं पश्यतां मादृशां किं वक्तव्यम् । मद्विधः शरणागतरक्षणाय समुच्छ्रितध्वजे रघुवंशे जातः । षष्टिर्वर्षसहस्राणि लोकस्य चरता हितम् । पाण्डुरस्यातपत्रस्य छायायां जरितं मयेत्युक्तरीत्या लोकरक्षणदीक्षितस्य दशरथस्य पुत्रः वसिष्ठविश्वामित्रादिशिष्यः महायोगिना जनकेन कृतसंबन्धः रामो विग्रहवान् धर्म इति प्रसिद्धः मर्यादानां च लोकस्य कर्ता कारयिता च स इति सर्वलोकानुकृतधर्मानुष्ठानः अहं संप्रति शरणागतहिंसां कुर्यां चेल्लोकः कीदृग्विधः स्यात् । मद्विधः मम वृत्तं पश्चाद्दृश्यते । सामान्येन धर्मसेतुर्नृपाणामिति मादृशानां संमतत्वेन स्थितः मद्विधः मादृशः शरणागतत्यागं न करोति । अन्यथा अधोन्मुखानां रावणादीनां खल्वीदृशं कार्यं रोचते । जनः शरणागतत्यागकृत्कीदृशोत्पत्तिमान् स्यात् ॥ २५ ॥

२६ ] ति० टी०—नन्वत्र विध्यदर्शनाद्धर्मानधिकृतकपोतचेष्टा कथं धर्मे प्रमाणं स्यादतो निमित्तमपि दर्शयति—ऋषेरिति । तद्गीतगाथायां प्रामाण्यप्रदर्शनाय सत्यवादिनेत्यन्तानि ऋषिविशेषणान्युक्तानि । सत्यवादिनाऽबाधितार्थप्रतिपादनव्रतेन, अतएव तद्गीतगाथा धर्मिष्ठा धर्मपरेत्यर्थः ॥ २६ ॥

रा० टी०—ननु विवेकरहितानां तिर्यग्योनीनां दृष्टान्तेन कथमेवं निश्चय इत्यत आह—ऋषेरिति । परमर्षिणा निखिलवेदशास्त्रतत्त्वज्ञात्रा सत्यवादिना कण्वस्य तदभिधस्य ऋषेः पुत्रेण गीतां धर्मिष्ठां धर्मप्रतिपादिकां गाथां शृणु प्रथमान्तपाठे तु वाक्यस्य कर्मत्वेनान्वयाय द्वितीया ॥ २६ ॥

गो० टी०—ननु शास्त्रानधिकारिणस्तिरश्चोऽनुष्ठानमननुष्ठेयं न च चोदनामन्तरेण प्रकृतिमात्रेण धर्मत्वं सिद्ध्यतीत्याशङ्क्य कण्डुमुनिगाथया विधानं दर्शयति—ऋषेरिति । कण्वस्य पुत्रेणेत्यनेन महाकुलप्रसूतत्वं परमर्षिणेति यथार्थदर्शित्वम् सत्यवादिनेति यथादृष्टार्थवादित्वं चोच्यते तेन परमाप्तत्वं दर्शितम् वेदवचनादिसिद्धम् । पुरा गीतां कण्डुकल्पितेयमिति न मन्तव्यम् । ऋच एव सामत्वात्पुरा विद्यमानामेवेदानीं गीयमानां गीताम् । एतत्कृतत्वेपि सामध्वनिवत्समस्तपापापनोदनक्षमाम् धर्मिष्ठां वेदोक्तधर्मोपमेयस्पृष्टयुक्तप्रतिपादिकाम् अनेन परमप्रयोजनत्वमुक्तम् । सत्यवादिनीमिति पाठे अबाधितार्थप्रतिपादिनीं गाथाम् । अनेकार्थोचितदुर्लभाभ्यसनीयत्वाय संकुचितशब्दां शृणु । इतः पूर्वमेतद्गाथानाकर्णनेन खलु त्वमेवमाविलात्मासि एनामवहितमनाः शृणु ॥ २६ ॥

२७ ] ति० टी०—तां गाथामाह—बद्धेति । याचन्तम्, शरणमित्यर्थः । आनृशंस्यार्थमघातुकत्वसिद्धधर्माश्रितरक्षणरूपपरमधर्मपालनार्थं वा ॥ २७ ॥

रा० टी०—गाथामेवाह—बद्धेति । बद्धोऽञ्जलिपुटो येन याचन्तं स्वरक्षणं प्रार्थयन्तं शरणागतं स्वगृहं प्राप्तं दीनं शत्रुमपि आनृशंस्यार्थमतिक्रूरत्वनिवृत्त्यर्थमपि न हन्यात् मशकार्थो धूम इत्यादाविवार्थशब्दस्य निवृत्त्यर्थकत्वं प्रसिद्धम् अत एव अस्यार्थस्य प्रतिषेधो वक्तव्य इति वार्तिकेऽर्थशब्दस्य तथात्वं कैयटादिभिर्व्याख्यातम् किंच आनृशंस्यार्थं स्वस्मिन् क्रूरतासंसर्गाभावार्थमित्यर्थः ॥ २७ ॥

१ गाथां पुरा गीतां धर्मिष्ठां सत्यवादिनीमिति गो. रा. पाठः ।

**आर्तो वा यदि वा दृप्तः परेषां शरणं गतः । अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥ २८ ॥**
**स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति । स्वया शक्त्या यथान्यायं तत्पापं लोकगर्हितम् ॥ २९ ॥**
**विनष्टः पश्यतस्तस्य रक्षिणः शरणं गतः । आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ ३० ॥**

गो० टी०–अथ कण्डुगाथायां चतुःश्लोक्यामाद्यश्लोकेन पूर्णप्रपत्त्यसिद्धावपि गत्यन्तरशून्यतयात्मनिक्षेपाभिप्रायव्यञ्जकशरणागतिशकलतुल्याञ्जलिबन्धादिमात्रविधानमपि हानिं न नयेत् तत्करणमनुग्रहावहमित्याह—**बद्धाञ्जलिपुटमिति।** अनुकूलबुद्धिवाग्व्यत्ययभावेप्यञ्जलिमात्रमेवालम् । अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनीति स्वतन्त्रस्याप्याशु दयाजननी मुद्रा खल्वियम् । दीनम् एवमञ्जलिबन्धमात्रं विनापि कार्पण्यद्योतनावस्थानमेवालम् । याचन्तम् अञ्जल्याद्यभावेपि कार्पण्याद्योतनेपि हृदयप्रार्थनैवालम् । शरणागतम् अञ्जलिबन्धादित्रयेप्यविद्यमाने रक्षकनिवासस्थलाभिगमनमेवालम् । पूर्वं स्वरक्षाभरनिक्षेपरूपशरणागतिशकलान्युक्त्वा शरणागतमिति पूर्णप्रपत्तिरुक्तेति वा स्यात् । अपि शत्रुं साक्षाच्छत्रुमपि न हन्यात् । अयं शास्त्रार्थ ऐहिकाभ्युदयार्थो वा परलोकार्थो वा प्रत्यवायपरिहारार्थो वेत्युक्ते सति तेभ्यः प्राक्प्रयोजनान्तरमाह—आनृशंस्यार्थमिति । अघातुकत्वसिद्ध्यर्थमित्यर्थः। नृशंसोयमिति लोकापवादपरिहारार्थमिति यावत् । यद्वा आनृशंस्यं सकलधर्मसारभूतो दयागुणः तद्रक्षणार्थं वा । यथोक्तं सीतया—आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुत इति । परंतपेति। कण्डुरपि कंचिद्राजानं प्रत्युक्तवानिति गम्यते । परंतप शरणागते किं पौरुषप्रकटनेन प्रत्यर्थिषु खलु तत्कर्तव्यमिति भावः ॥ २७ ॥

२८ ] ति० टी०–आर्तो वा दृप्तो वेति गुणदोषौदासीन्यपरं वचनम् । परेषां शत्रूणां भयाच्छरणागतोऽरिरपि पूर्वं कृतवैरोऽपि कृतात्मना धर्मशास्त्रशिक्षितचित्तेन प्राणान्परित्यज्यापि रक्षणीयः ॥ २८ ॥

रा० टी०–नन्वनेन श्लोकेन रिपुत्याग एव फलितो न संग्रह इत्यत आह—**आर्त इति** । परेषां रिपूणां भयादिति शेषः शरणं स्वसंनिधिं गतः प्राप्तः आर्तः रक्षकान्तररहितत्वेन स्वरक्षार्थं त्यक्तरिपुत्वाभिमानः यदि वा दृप्तः कथंचिदरित्वाभिमानसहितोऽरिरपि कृतात्मनः यतचित्तस्य जनस्य प्राणान् परित्यज्यापि रक्षितव्यः ॥ २८ ॥

गो० टी०–पूर्वं न हन्यादिति स्वेन क्रियमाणं हननमात्रं प्रतिषिद्धम् । अत्र स्वेतरक्रियमाणशरणागतपीडायामपि शरणागते आर्तत्वदृप्तत्वविभागानालोचनेन प्राणान् हित्वा तद्रक्षणं कार्यमित्याह—**आर्तो वेति** । आर्तः स्वाभिमतसंभवे विलम्बाक्षमस्तीव्रसंवेगवान्वा । शरणागमनवेलायामपि स्वापराधनिमित्तभयादिमान् वेत्यर्थः। दृप्तस्तु विलम्बाविलम्बावनादृत्य फलसिद्धिमात्रसक्तः । अस्यां वेलायां विनयस्वापराधभयशून्यो वा । मुमुक्षुपक्षे संसारजुगुप्सानुसंधानेन सद्य एव देहनिवृत्तिकाम आर्तः । दृप्तः शरीरावसाने मुक्तिकामः । यद्वा आकिंचन्यानन्यगतित्वपुरस्सरं प्रपन्न आर्तः । स्तोभहेलनादिरूपेण शरणागतोस्मीति ब्रुवन् दृप्तः । परेषां शरणागतः स्वव्यतिरिक्तशरणागतः । यद्वा परेषामिति निर्धारणे षष्ठी परेषां मध्ये शरणागतोरिः वैरे हृदि विद्यमानेपि शरणागतिशब्दमात्रमभिदधानः पुरुषः कृतात्मना निश्चितमनस्केन धर्मशास्त्रविश्वासशालिनेत्यर्थः । प्राणान् परित्यज्य रक्षितव्यः । अस्थिरान् प्राणान्परित्यज्य स्थिरं शरणागतरक्षणं कर्तव्यम् । कृतात्मनेति विशेषणेन विदुषोतिक्रमे दण्डभूयस्त्वमुक्तम् । शरणागतरक्षणशास्त्रस्य निरवकाशत्वात् सर्वथैवात्मानं गोपायेदिति शास्त्रस्य सावकाशत्वात्तद्व्यतिरिक्तविषयेप्यवस्थाप्यमिति भावः ॥ २८ ॥

२९ ] ति० टी०–तथाकरणे पापमाह तस्य धर्मस्य नित्यत्वबोधनाय—**स चेदिति** । केनापि शरणतया श्रित इत्यर्थः । भयात्तद्रक्षणे तच्छत्रोः सकाशात्तस्माद्वा भयमुत्प्रेक्ष्य ततो हेतोर्मोहात्कार्यान्तरपारवश्यजनितविस्मृतेः । कामाद्वा तच्छत्रोः सकाशतः किंचित्फललोभेन वा स्वया शक्त्या स्वसामर्थ्येन सहायसंपादनेन स्वद्रव्यदानादिना वा यथान्यायं न रक्षति चेत् । शरणागतमिति शेषः तदा तत्पापमरक्षितस्य शरणागतस्य पापम् । प्राप्नोतीति शेषः तथा लोकगर्हितम् भावे निष्ठा लोकनिन्दां च प्राप्नोति ॥ २९ ॥

रा० टी०–रक्षाया अकरणे दोषमाह—**स इति** । सः प्राप्तस्वरक्षणकामजनः भयात् रक्षितव्यशरणागतरिपुर्भीतेः मोहात् कार्यान्तरवशतया तत्र चित्तानिवेशाद्वा कामात् तस्मात्किंचित्प्राप्तीच्छातो वा यथान्यायं स्वशक्त्या चेद्यदि न रक्षति तत् तदा लोकगर्हितं नारकिजनैरपि निन्दितं पापं प्राप्नुयादितिः शेष ॥ २९ ॥

गो० टी०–एवं शरणागतरक्षणधर्मे चोदनामभिधाय तदरक्षणे प्रत्यवायमाह—**स चेदिति** । भयात् तद्रक्षणे तच्छत्रुसकाशात् तस्माद्वा । किरातन्यायेन स्वस्यापि भयमुत्प्रेक्ष्य ततो हेतोः मोहात् शास्त्रार्थापरिज्ञानात् कामात् स्वच्छन्दवृत्तिस्वाभाव्यात् तच्छत्रुसकाशात्किंचिल्लाभापेक्षणाद्वा स्वया शक्त्या स्वकीयेन केनचित्सामर्थ्यप्रकारेण स्वसहायसंपादनस्वकीयद्रव्यदानादिना शरीरत्यागपर्यन्तेनोपायकलापेनेत्यर्थः । यथासत्त्वं सत्त्वमनतिक्रम्य शक्तौ सत्यामपि येन केनचिच्छलेन शक्तिवञ्चनामकृत्वा तत् अरक्षणम् पापं प्रत्यवायहेतुः । अनेन निरयहेतुत्वमुक्तम् । न केवलं परलोकबाधकम् इह लोकेपि सर्वजनगर्हितमित्याह—**लोकगर्हितमिति** ॥ २९ ॥

३० ] ति० टी०–न केवलमेतावदेव, स्वकृतसर्वसुकृता-

१ शरणागत इति गो. पाठः । २ सत्त्वमिति गो. पाठः । ३ तस्या रक्षिण इति गो. पाठः ।

एवं दोषो महानत्र प्रपन्नानामरक्षणे । अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ॥ ३१ ॥
करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् । धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदये ॥ ३२ ॥
सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ ३३ ॥

पहारं च प्राप्नोतीत्याह—विनष्ट इति । यः शरणागतोऽरक्षितो विनष्टः स्यात्स पश्यतस्तस्य रक्षिणो रक्षार्थं वृतस्य समक्षमेव तस्य रक्षिणः सर्वं सुकृतमादाय गच्छेत् ॥ ३० ॥

रा० टी०—विनष्ट इति । रक्षिणः रक्षां कर्तुं योग्यस्य जनस्य पश्यतः सतः शरणं गतः अरक्षितः सन् विनष्टश्चेत्तदा तस्य रक्षिणः सर्वं सुकृतमादाय गच्छेत् सर्वं सुकृतं विनश्यतीत्यर्थः ॥ ३० ॥

गो० टी०—न केवलमैहिकानर्थहेतुत्वमात्रं पूर्वसंचितसकलसुकृतविनाशकमपीत्याह—विनष्ट इति । यः कश्चियं कंचिच्छरणमागतः तमरक्षिणस्तस्य पश्यतः रक्षकत्वेन वृते समर्थे च तस्मिन्पश्यति तेनारक्षणेनैव स्वशत्रुसकाशाद्विनष्टश्चेत् तस्य अरक्षकस्य संबन्धि अनादिकालसंचितं सर्वं सुकृतमादाय गच्छति अस्यारक्षकस्य समार्जितसकलसुकृतक्षयो भवतीत्यर्थः ॥ ३० ॥

३१ ] ति० टी०—एतदन्ताः कण्डुगाथाः । अथ रामवाक्यम्—एवमिति । अतस्तदरक्षणमस्वर्ग्यं स्वर्गप्रतिबन्धकम् बलवीर्यनाशनम् । तपोबलजं यद्वीर्यं निग्रहानुग्रहसामर्थ्यं तद्विनाशकमित्यर्थः ॥ ३१ ॥

रा० टी०—एवमिति । अस्वर्ग्यं स्वर्गप्रतिबन्धकम् अयशस्यं यशोविनाशकं बलवीर्ययोः शरीरेन्द्रियबलयोर्विनाशकम् अरक्षणमिति शेषः एवमतः अत्र प्रपन्नानामरक्षणे महान् दोषः॥३१॥

गो० टी०—कण्डुवचनचतुःश्लोकीतात्पर्यं संग्रहेणाह—एवं दोषो महानत्र प्रपन्नानामरक्षण इत्यर्धेन ॥ ३१ ॥

गो० टी०—विस्तरेणाह—अस्वर्ग्यमित्यादिना । अस्वर्ग्यं स्वर्गविरुद्धम् नरकहेतुभूतमित्यर्थः अयशस्यम् अकीर्तिकरम् बलवीर्यविनाशनम् ययोः शारीरबलवीर्ययोः सतोरेव शरणागतो न रक्षितः तयोर्विनाशकमित्यर्थः ।अत्र अरक्षणमिति विशेष्यमनुषज्यते ॥ ३२ ॥

३२ ] ति० टी०—यदेवमतः—करिष्यामीत्यादि वचनं शरणागतरक्षणपरम् । धर्मिष्ठं जन्यतासंबन्धेनातिशयितधर्मवत् । फलोदयकाले स्वर्ग्यं स्वर्गजनकम् ॥ ३२ ॥

रा० टी०—करिष्यामीति । धर्मिष्ठं प्रतिपादकत्वसंबन्धेन धर्मविशिष्टमत एव फलोदये फलोत्पत्तिसमये स्वर्ग्यं स्वर्गप्रदं यत्स्यात् भवति तत् अत एव यशस्यं यशस्कारकम् अत एव उत्तमं यथार्थं कण्डोर्वचनं करिष्यामि ॥ ३२ ॥

गो० टी०—एवं शरणागतरक्षणे कण्डुवचनं प्रमाणयित्वा धर्मसंस्थापनप्रवृत्तस्य ममैतदवश्यं पालनीयमित्याह—करिष्यामीति । उत्तमं लोकादृतम् ॥ ३३ ॥

गो० टी०—न केवलमकरणे प्रत्यवायबाहुल्यं करणे दृष्टादृष्टाभ्युदया बहवः सन्तीत्यपि कण्डुवचनतात्पर्यमिति रामः स्वयमाह—धर्मिष्ठमिति । पापनिवर्तकधर्मोपेतत्वं विवक्षितम् । फलहेतुधर्मोपेतत्वस्य स्वर्ग्यमित्यनेनैव सिद्धत्वात् । फलोदये फलप्रदानकाले समुपस्थिते । स्वर्ग्यम् स्वर्गहेतुरित्यर्थः । अत्र प्रतिपाद्यगतं धर्मिष्ठत्वादिकं प्रतिपादकवचने समुपचर्यते ॥ ३४ ॥

३३ ] ति० टी०—किं च परमकारुणिकस्य मम सर्वभूताभयदानरूपः कश्चित्संकल्पोऽस्तीत्याह—सकृदिति । सर्वभूतेभ्य इति पञ्चमी चतुर्थी च । भयप्रसक्तिमद्भ्योऽभयं ददामि । अत्र वर्तमानप्रयोगेण नित्यसत्सहजधर्मत्वमभयदानस्य द्योत्यते । तदेवाह—एतन्मम व्रतमिति । नित्यपरिगृहीतो नित्यनिजप्रतिष्ठितोऽस्मद्धर्म इत्यर्थः । अत्र तात्कालिकमात्यन्तिकं चेत्युभयविधमप्यभयदानं प्रतिज्ञायते । तत्रात्यन्तिकं संसारभयोपरतिरूपम्, द्वितीयं तु रावणादित उत्थितमृत्युभयनिवृत्तिरूपम्, इदं चोराग्निदहनिमित्तकाभयदानस्याप्युपलक्षणम् । नन्वेवं सर्वेश्वरस्यापि तव निमित्ताभयदातृत्वे वैषम्यनैर्घृण्यादिदोषप्रसङ्गस्तत्राह—सकृदिति । अनेनोभयविधाभयदानस्य साधनमुपदिश्यते । सकृदेकवैव दृष्या प्रपन्नाय पदिर्गत्यर्थः । प्रकृष्टप्रतिपत्तिमते प्रतिपत्तौ प्रकर्षश्च निरन्तरत्वम् सा च तत्त्वमस्यादिवाक्यजन्या भगवतः स्वात्मत्वेन प्रतिपत्तिः । अयं च ‘ ज्ञानी त्वात्मैव मे मतः ’ इति गीतोक्तः । अयमेवात्यन्तिकाभयदानपात्रम् । द्वितीयाभयदानसाधनमाह—तवास्मीति च याचत इति । औपाधिकभेदमवलम्ब्य तवाहं सेवकस्त्वं मे स्वामी, अहं शिष्यस्त्वं गुरुः, अहं रक्ष्यस्त्वं रक्षकः, इत्येवमुपासनां कुर्वते ‘ द्वितीयाद्वै भयं भवति ’ इति न्यायेनावश्यं प्राप्तभयस्य सर्वभूतेभ्यो यथा भयं न भवति तथा *यतामीति मे व्रतमित्यर्थः । अतथाभूतेभ्यस्तु न यच्छामीति । न नैर्घृण्यादिदोषप्रसक्त इति भावः ॥ ३३ ॥

रा० टी०—सार्वकालिकीं स्वप्रकृतिमाह—सकृदिति । सकृत् एकवारमपि तवाहमस्मीति याचते प्रपन्नाय उपायान्तररहिततया शरणागताय जनाय सर्वभूतेभ्योऽभयं ददामि एतदभयदानं मम व्रतं निर्हेतुकः संकल्पः एतेन सर्वज्ञस्यापि स्वस्य शरणागतदोषादर्शित्वकेरपि स्वस्य शरणागतत्यागाशक्यत्वं सूचितम् ॥ ३३ ॥

गो० टी०—एवं, ‘ श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ’ ॥ इति याज्ञवल्क्योक्तधर्मप्रमाणेषु श्रूयत इत्यनेन, तस्मादपि

१ फलोदयमिति गो. पाठः । * आत्मनेपदमत्रापेक्षितमिति भाति ।

आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया। विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ॥ ३४ ॥
रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः। प्रत्यभाषत काकुत्स्थं सौहार्देनाभिपूरितः ॥ ३५ ॥
किमत्र चित्रं धर्मज्ञ लोकनाथशिखामणे। यत्त्वमार्यं प्रभाषेथाः सत्त्ववान्सत्पथे स्थितः ॥ ३६ ॥

ग्रह्यं प्रपन्नं न प्रतिप्रयच्छन्तीत्यादिना श्रुतिः कण्डुगाथामुखेन स्मृतिः। कपोतादिना शिष्टाचारः। प्रतिपक्षनिरसनपूर्वकबलवदुपपादनेन स्वप्रियत्वं चेत्येवं चतुर्षु प्रमाणेषु प्रपन्नरक्षणरूपपरमधर्मविषयेषु दर्शितेषु संप्रति तत्र प्रमाणं पञ्चमं दर्शयति—सकृदेवेति। सकृदेव एकवारमेव। उपायान्तरेष्वावृत्तिः शास्त्रार्थः प्रपत्तौ त्वनावृत्तिः। सकृदेव हि शास्त्रार्थः कृतोयं तारयेन्नरमित्युक्तेः। प्रपन्नाय गत्यर्था ज्ञानार्था इति न्यायेनात्र मानसप्रपत्तिरुच्यते तवास्मीति न वाचिकी। उभयोरन्यतरेण युक्तायापीत्यर्थः। यद्वा प्रपन्नायेत्युपायः कथ्यते। तवास्मीति च याचत इति तच्छेषवृत्तिलक्षणफलविशेषप्रार्थना। एवंभूतायाधिकारिणे सर्वभूतेभ्य इति "भीत्रार्थानां भयहेतुः" इत्यपादानत्वम्। भयहेतुतया शङ्कितेभ्यः सर्वभूतेभ्यः अभयं भयाभावम् ददामि। अभयमेव मोक्षो नाम। अथ सोभयं गतो भवति आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेतीति ब्रह्मविद्याफलत्वेन श्रवणात्। एतत् तवास्मीति फलविशेषयाच्ञेति पक्षस्यानुकूलम्। पक्षान्तरे त्रैवर्गिकफलानामप्येतदुपलक्षणम्। स्वस्य सकलफलप्रदत्वात्। एतद्व्रतं मम व्रतवदिदं कस्यांचिदपि दशायां परित्यागायोग्यमित्यर्थः। अत्र सर्वभूतेभ्य इत्यपि चतुर्थी। प्रपन्नसंबन्धिभ्योपि सर्वभूतेभ्योऽभयं ददामि। पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः। तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदमित्युक्तेः॥ ३५ ॥

३४-३५ ] ति० टी०—अथापरिग्राह्यतावादिनं सुग्रीवमेव स्वात्परिग्राह्यताङ्गीकारं कारयित्वा, तमेव तदानयनाय प्रेषयति—आनयेति। अस्य वाक्याभ्यां सुस्पष्टं शरणागतस्य। यदि वा रावण इति। कामरूपतयाकारान्तरावष्टम्भवानिति शेषः॥ ३४ ॥ ३५ ॥

रा० टी०—आनयेति। अयं शरणं प्राप्तः विभीषणो वा यदि वा स्वयं रावणः स्यादिति शेषः तदापि एनमानय तत्र हेतुः—अस्याभयं मया दत्तम्॥ ३४ ॥

गो० टी०—एवमुक्तं सत्यसंभवदुत्तरं प्रशान्तप्रेमान्धतया प्रसन्नमुखं विभीषणाभिमुखं सुग्रीवमालोक्य तमेव तदानयने नियुङ्क्ते—आनयेनमिति। निवेदयतेति सपरिवारान् युष्मान् पुरुषकारतया स्वन्वन्तमेनं यूयमेवानयत तथा सत्येतावत्पर्यन्तमस्वीकारकृतदुःखमस्य निवर्तेत। हरिश्रेष्ठ अस्य दुःखनिवृत्तये त्वमेव गत्वानयसि चेन्मयि स्नेहवद्भ्यो हरिभ्यः श्रेष्ठं भवन्तमतिक्रम्य किमहं स्वीकरोमि। दत्तमस्याभयं मया। अस्य स्वबन्धुत्यागपूर्वकं स्वनिकर्षकीर्तनपुरःसरं चागतस्य मया मित्रभावेनैवालमिति मन्यमानेन अभयं दत्तम्। शरणशब्दश्रवणकाल एवेति शेषः। कथमानयेयमित्याकुलितं समाधत्ते—विभीषणो वेत्यादिना। विभीषणो वा। विभीषणस्तु धर्मात्मेति विभीषणस्वीकारो धर्मवत्स्वीकारतया नोत्कर्षाय। रावणस्य नृशंसस्येति रावणस्वीकार एवोत्कर्षः स्यादिति। विभीषणस्वीकारे तत्परिकराश्चत्वार एव रक्षिताः स्युः। रावणस्वीकारे तु लङ्कास्थाः सर्वेपि रक्षिताः स्युरिति महान् लाभः। सुग्रीव। अस्माकमागतोतिशयो युष्माकं तुल्यः खलु। एकं दुःखं सुखं च नावित्युक्तेः। यदि वा रावणः स्वयं यत्संबन्धेन विभीषणेप्यतिशङ्का स एवास्तु स्वयम् सीतामपुरस्कृत्य स्वयमागतो रावणो वास्तु। यद्वा स्वयम् अयं यदि विभीषणो न भवति किंतु कामरूपी रावण एव विभीषणभूमिकां परिगृह्य यद्यागतः तथाप्यस्याभयं मया दत्तम्। त्वमपि रावणोयं न तु विभीषणं इति विज्ञापनायापि पुनर्नागच्छेः। किंत्वानयैवेत्यर्थः॥ ३४ ॥

रा० टी०—रामस्येति। सौहार्देनाभिपूरितः सुग्रीवः काकुत्स्थं प्रत्यभाषत॥ ३५ ॥

गो० टी०—अथ सुग्रीवः क्वचिदप्यसंभावितं रामस्य शरणागते स्वस्मिंश्च सौहार्दातिशयमालोच्य विस्मयपरवश आह—रामस्येति। सौहार्देन प्रचोदितः[1]। सर्वानपि दोषाननालोच्य विपरीतप्रवृत्तान् पूर्वसुहृदो नानाप्रकारैरस्तुनीय यदि वा रावणः स्वयमिति वदतो रामचन्द्रस्य कोयं सौहार्दातिशय इति विस्मयेन प्रेरित इत्यर्थः॥ ३७ ॥

३६ ] ति० टी०—अथ सुग्रीवो विस्मयपरवश आह—किमत्रेति। धर्मज्ञ शरणागतरक्षणधर्मरहस्यज्ञ, लोकनाथानां राज्ञां शिखामणे, सत्त्ववान्सत्त्वैकनिष्ठस्त्वमार्यं कल्याणं प्रभाषेथा इति यत्तत्र किं चित्रम्॥ ३६ ॥

रा० टी०—तदाकारमाह—किमिति। हे लोकनाथशिखामणे! सत्पथे सज्जनमार्गे स्थितः त्वमत्र अस्मिन् समये आर्यं धर्मं यत्प्रभाषेथाः तत्किं चित्रं नेत्यर्थः॥ ३६ ॥

गो० टी०—एवं विस्मयातिशयाद्धकुकुपक्रान्तो रामस्य स्वाभाविकान् कल्याणगुणैवानालोच्य सहजधर्मत्वादेतद्रामे नाश्चर्यकरमित्याह—किमिति। धर्मज्ञ धर्मसूक्ष्मतत्त्वज्ञस्य तव धर्मानुष्ठानं किमाश्चर्यम्। लोकनाथ भृत्यवर्गसंरक्षणं स्वामिनः किं चित्रम्। सुखावह स्वयमवाप्तसमस्तकामत्वेन परप्रयोजनैकपरायणस्य सर्वसुखकारिणस्तव शरणागतेषु समाश्रितेष्वस्माकं सुखकारित्वे कोवा विस्मयः। आर्यं समीचीनम्। सत्त्ववान् प्रशस्ताध्यवसायवान्। दृष्याद्यध्यवसायेषु सत्त्वमबी

१ चोदित इति गो. पाठः।

मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम् । अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः ॥ ३७ ॥
तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव । विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ॥ ३८ ॥
ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः ।
विभीषणेनाशु जगाम संगमं पतत्रिराजेन यथा पुरन्दरः ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

---

तु जन्तुष्वित्यमरः । दृढव्रतस्य व्रतपरिपालनं किमद्भुतम् । यद्वा सत्त्वं बलं सर्वशक्तेस्तव समाश्रितभयनिवारणं किमाश्चर्यम् । सत्पथे स्थितः । धर्मसंस्थापनार्थमेवावतीर्णस्य शरणागतरक्षणरूपविशेषधर्मानुष्ठानं नाश्चर्यमित्यर्थः । प्रपन्नसंरक्षणे धर्मज्ञत्वादिष्वन्यतम एव गुणः पर्याप्तः किमुत सर्वेऽपि समुदिता इति भावः ॥ ३८ ॥

३७-३८ ] ति० टी०—ममान्तरात्मापि विभीषणं शुद्धं वेत्ति । त्वद्वाक्यश्रवणादिति भावः । किं च परमचतुरेण हनुमता भावरूपादनुमानाच्च सर्वतः सुपरीक्षितश्चायं तस्मात् ॥ ३७ ॥ ३८ ॥

रा० टी०—ममेति । भावात् स्वस्थस्थितिहेतुकादनुमानात् सर्वतः सर्वप्रकारेण सुपरीक्षितः हनुमतेति शेषः अतः तं विभीषणं ममाप्ययमन्तरात्मा शुद्धं वेत्ति ॥ ३७ ॥

गो० टी०—किमस्मत्प्रशंसनेन त्वन्मनःप्रवृत्तौ खलु विभीषणो ग्राह्यः स्यात्तत्राह—ममेति । मम वध्यतामेष तीव्रेण दण्डेनेत्युक्तवतोपि । न केवलमस्मिन्नर्थे मदन्तःकरणप्रवृत्तिरेकमेव प्रमाणम् । प्रमाणान्तराण्यपि सन्तीत्याह—अनुमानादिति । अनुमानात् त्वया हनुमता चोक्तयुक्तिकदम्बात् भावात् भावबोधकान्मुखप्रसादादिलिङ्गात् । सर्वतः सर्वत्र अन्तर्बहिश्चेत्यर्थः । यद्वा अनुमानात् हृदयप्रकाशकमुखविकासादिलिङ्गात् भावादार्तध्वनिप्रकाशितमृदुस्वभावात् चशब्देन वध्यतामपीत्युक्तावस्थायां न त्यजेयमिति कालेप्येकरूपत्वं समुच्चीयते । सुपरीक्षितः संशयविपर्ययराहित्येन परीक्षितः । अन्तरात्मा अन्तःकरणम् । चापीति रामान्तःकरणसमुच्चयार्थः ॥ ३९ ॥

रा० टी०—तस्मादिति । तस्मात् शरणागतत्वाद्धेतोः नः सखित्वम् अभ्युपैतु प्राप्नोतु अत एव अस्माभिस्तुल्यो भवतु भवत्संनिधाविति शेषः ॥ ३८ ॥

गो० टी०—पूर्वमानयैनमिति नियुक्तमनुतिष्ठति—तस्मादिति । क्षिप्रं पूर्वमज्ञानवशान्मया पापमाचरितम् । तत्त्वविचारे त्वयं क्षणमात्रं विलम्बानर्ह इति भावः । तुल्यो भवतु । निवेदयत मामिति पुरुषकारकरणायाभ्यर्थितानां नृशंसानामस्माकं पुरुषकारत्वं संपादयितुमेव तवायं प्रयासश्च सिद्धः । इतःपरमस्माभिः पुरुषकारव्यापारः क्रियत इत्यर्थः । एवं विभीषणस्य पुरुषार्थमर्थयित्वा तत्सख्यरूपं स्वेषां पुरुषार्थमर्थयते—विभीषण इति । महाप्राज्ञः फलसाधनोपयोगिज्ञानवान् । न केवलं ममैव सर्वेषामिदं फलं समानमिति दर्शयितुं नः सखित्वमित्युक्तम् ॥ ४० ॥

३९ ] ति० टी०—हरीश्वरेणाभिहितं तमानीयतां विभीषण इति बोधितम् । पतत्रिराजेन । तदानीतेनोपेन्द्रेणेत्यर्थः ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

रा० टी०—तत इति । नरेश्वरो रामः सुग्रीववचो निशम्य हरीश्वरेण अभिहितं बोधितं विभीषणेन संङ्गममाशु जगाम । तत्र दृष्टान्तः—पतत्रिराजेन गरुडानीतोपेन्द्रेण संगमं पुरन्दरो यथा ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

गो० टी०—एवं सुहृत्तमसुग्रीवाभ्यनुज्ञानानन्तरं शरण्यस्य शरणागतसंगमविशेषं दर्शयति—तत इति । सुग्रीववचो निशम्य ततो हरीश्वरेणाभिहितं विभीषणेन संगमं जगामेत्यन्वयः । अभिहितं हे विभीषण राघवस्तवाभयं दत्तवान् राघवमुपयाहीत्येवं सुग्रीवोक्तम् । नरेश्वरः संगमं जगामेति संगमोपि कर्तुरीप्सिततमत्वकथनेन रामस्यायं लाभ इति गम्यते । न त्यजेयं कथंचनेत्यादिभिः सुग्रीवादिविवाक्यरूपविरोधिनिरसनपूर्वकं श्रीविभीषणस्वीकारं प्रतिश्रुत्य कथंचित्सुग्रीवादिवाक्यजनितं विलम्बमविषह्य त्वरया रक्षितुं स्वयमेव तेन संगत इत्याह—विभीषणेनाशु जगाम संगममिति । आशु त्वरितम् । आश्रितसंश्लेषे स्वयं त्वरातिशयवानिति भावः । पुरंदरो यथा पतत्रिराजेन संगमं स्वलाभममन्यत तथायमपीति दृष्टान्ताभिप्रायः । यद्वा सुग्रीवस्य बुद्धिः पुनर्विपरीता चेत्कार्यहानिरिति शीघ्रं जगाम ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः ।

रामाद्गृहीताभयो मन्त्रिभिः सह भूमिमवतीर्णो विभीषणो रामचरणयोर्निपत्याग्रजेन तिरस्कृतस्त्वामहं शरणमागत इति प्रार्थयमानः पुना रामेण सादरं पृष्टः स सर्वं रावणवृत्तं कथयति ।

**राघवेणाभये दत्ते संनतो रावणानुजः । विभीषणो महाप्राज्ञो भूमिं समवलोकयत्[1] ॥ १ ॥**
**खात्पपातावनिं[2] हृष्टो भक्तैरनुचरैः सह । स तु रामस्य धर्मात्मा निपपात विभीषणः ॥ २ ॥**
**पादयोर्निपपाताथ चतुर्भिः सह राक्षसैः । अब्रवीच्च तदा वाक्यं[4] रामं प्रति विभीषणः ॥ ३ ॥**
**धर्मयुक्तं च युक्तं च सांप्रतं संप्रहर्षणम् । अनुजो रावणस्याहं तेन चास्म्यवमानितः[5] ॥ ४ ॥**

१ ] ति० टी०—संनतो भक्तिप्रवणः । भूमिं समवलोकयत् । अवरोहणायेति भावः ॥ १ ॥

रा० टी०—विभीषणवृत्तान्तमाह—राघवेणेत्यादिभिः । राघवेणाभये दत्ते सति महाप्राज्ञो विभीषणः अनुचरैः सह खादवनिं पपात । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०—एवं शरण्यस्य शरणागतसंगमरूपफलमुक्त्वा शरणागतस्य शरण्यसेवाख्यपुरुपार्थलाभमाह—राघवेणेत्यादि । सार्धश्लोक एकान्वयः । अभये स्वापेक्षिते सर्वभूताभये दत्ते समतः गुणैर्दास्यमुपागत इति न्यायेन पूर्वश्रुतेभ्योप्यधिकानां रामकल्याणगुणानां साक्षात्कारेण सम्यक्प्रह्वीभूताङ्गः महाप्राज्ञः निरपायोपरिग्रहेण परमपुरुपार्थलाभाद्वैदशाभ्यासातिशयजनितप्रज्ञातिशयस्य फलमिदानीं निर्दिष्टमिति भावः । भूमिं समवलोकयन् अन्तरङ्गसचिवसमूहासंमर्दनिरवकाशेपि रामपुरोदेशे सचिवैरेव समुध्यतामापन्नस्य विभीषणस्य स्वपरिपन्मध्ये दत्तं भूतलावकाशं सम्यक्पश्यन् खादवनीं पपातेति प्राथमिको दूरप्रमाण उच्यते । प्रणामायोग्यस्थानमाकाशं परित्यज्य पाणिपादशिरःप्रभृतिभिरष्टाङ्गैर्भूमिं प्राप्तवानित्यर्थः । नन्वपेक्षितमभयं दत्तमेव पुनः किमर्थं प्रणाम इत्यत्राह—हृष्ट इति । रामस्य स्वरूपरूपगुणानुभवजनितहर्षविवशीकृतशरीर एव प्रणतः न तु किमपि प्रयोजनमुद्दिश्येत्यर्थः । भक्तैरनुचरैः सहेति । राघवं शरणं गतः निवेदयत मामिति विभीषणस्यैकस्यैवोपायानुष्ठानश्रवणेपि तदनुबन्धिनां तद्भक्तिवशादेव रामपरिचरणं समानमित्युच्यते । उक्तं हि—'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्' इति ॥१॥

२ ] ति० टी०—हृष्टोऽभिमतलाभजनितप्रीतियुक्तः । रामस्य निपपात । पादयोरित्यनुकर्षः ॥ २ ॥

रा० टी०—स इति । शरणान्वेषी स्वरक्षणेच्छुः विभीषणः रामस्य पादयोर्निपपात ॥ २ ॥

गो० टी०—पूर्वं वाचिका प्रपत्तिः कृता सम्प्रति कायिकशरणागतिं प्रयुङ्क्ते—स त्विति । स तु पूर्वस्माद्विलक्षणः संशयविपर्ययनिवृत्त्या अनुकूलत्वनिर्णयविषय इत्यर्थः । धर्मात्मा सर्वावस्थास्वप्यप्रच्युतशरणागतिधर्मनिष्ठावान् । वध्यतामिति शङ्क्यतामिति न त्यजेयमिति आनयैनमिति अस्माभिस्तुल्यो भवत्विति चोक्तासु सर्वावस्थास्वप्यविचारेणैकरूपचित्त इत्यर्थः । अनेन विभीषणस्य महाविश्वास उक्तः । शरणान्वेषी[3] कृतशरणवरणः । विभीषणः रामस्य स्वस्मिन् पक्षपातातिशयद्योतकाभिरामाकारस्य पादयोः स्तनन्धयस्य मातृस्तनवत् श्रीपादावेव स्वस्य भोग्यभूताविति पपात । अन्यैरागत्य प्रशिथिलानवयवान् सम्यग्योजयित्वा यथोत्थाप्येत तथा पपात । चतुर्भिः सह राक्षसैः करचरणाद्यवयवतत्परतन्त्रैरित्यर्थः । तत्रानुकूल्यसंकल्पप्रातिकूल्यवर्जनवत्त्वमुक्तम् । धर्मात्मेति महाविश्वासः शरणान्वेषीति गोप्तृत्ववरणं पपातेत्यात्मनिक्षेप इति साङ्गशरणागतिः कृता भवति ॥ २ ॥

३ ] ति० टी०—पूर्वमेकस्यैव पादपतनमुक्त्वा मन्त्रिसहितस्य तदाह—पादयोरिति । पादयोर्निपपातेत्यनेन शरणागतधर्मकथनम् ॥ ३ ॥

रा० टी०—अब्रवीदिति । विभीषणः धर्मयुक्तम् अत एव युक्तं वक्तुं योग्यम् अत एव साम्प्रतं शीघ्रं संप्रहर्षणं संतोषकरं वाक्यं रामं प्रत्यब्रवीत् ॥ ३ ॥

गो० टी०—एवं कायिकी शरणागतिरुक्ता अथ वाचिकीं दर्शयति—अब्रवीदिति । तदा पादपतनसमये तत्र सुग्रीवादीनां सर्वेषामैकमत्यवति सदसि रामं पूर्वं सुग्रीवादिपुरुषकारभूतान् प्रति सम्प्रति शरण्यमेव धर्मयुक्तं शरणागत्यङ्गानुकूलसङ्कल्पादिधर्मयुक्तम् युक्तं समर्थकारुणिकशरण्यविषयतया योग्यम् साम्प्रतं सम्प्रहर्षणम् पूर्वं राघवं शरणं गत इत्युक्तिदशायां सुग्रीवादीनां श्रुतिकटुकम् जातम् इदानीं सर्वसम्प्रहर्षणम् ॥ ३ ॥

४ ] ति० टी०—युक्तं युक्तियुक्तम् सांप्रतं संप्रहर्षणं तत्कालं संतोषकरणम् ॥ ४ ॥

रा० टी०—सदाकारमाह—अनुज इत्यादिभिः । रावणस्यानुजोऽहं तेन रावणेन अवमानितः तिरस्कृतोस्मि अत एव सर्वभूतानां शरण्यं शरणहितं शरणं रक्षकं भवन्तं गतः प्राप्तोऽस्मि ॥ ४ ॥

गो० टी०—अनुज इति । पूर्वं निवेदयतेत्यत्र पुरुषकारभूतान् प्रत्युक्तम् इदानीं साक्षाच्छरण्यं प्रतीति न पुनरुक्तिः ।

१ लोकयन्निति गो. पाठः । २ मी मिति गो.पाठः । ३ शरणान्वेषीति गो. रा.पाठः । ४ रामं वाक्यं तत्रेति गो. पाठः । ५ चाप्यवेति गो. पाठः ।

भवन्तं सर्वभूतानां शरण्यं शरणं गतः। परित्यक्ता मया लङ्का मित्राणि च धनानि च ॥ ५ ॥
भवद्गतं हि[1] मे राज्यं जीवितं च सुखानि च। तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ॥ ६ ॥
वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव। आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ॥ ७ ॥
एवमुक्तं[2] तदा रक्षो रामेणाक्लिष्टकर्मणा। रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ॥ ८ ॥
अवध्यः सर्वभूतानां गन्धर्वोरगपक्षिणाम्[3]। राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः ॥ ९ ॥
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान्। कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि ॥ १० ॥
राम सेनापतिस्तस्य प्रहस्तो यदि ते[4] श्रुतः। कैलासे येन समरे मणिभद्रः पराजितः ॥ ११ ॥
बद्धगोधाङ्गुलित्रश्च[5] अवध्यकवचो युधि। धनुरादाय यस्तिष्ठन्नदृश्यो भवतीन्द्रजित् ॥ १२ ॥

---

पूर्वार्धेन स्वदोषख्यापनादाकिंचन्यमुक्तम् सर्वभूतानां शरण्यं रावणस्यापि शरणं भवामीति कृतसङ्कल्पम् भवन्तं ज्ञानशक्त्यादिपरिपूर्णम् ॥ ४ ॥

५ ] ति० टी०–सर्वभूतानां शरण्यमित्यनेन तस्य रामे भगवदवतारत्वावगमः सूचितः ॥ ५ ॥

रा० टी०–परित्यक्तेति। लङ्काप्रभृतयः मया परित्यक्ताः अत एव मे राज्यादि भवद्गतं भवदधीनम् ॥ ५ ॥

गो० टी०–अनन्तरं प्राप्यान्तरनिरसनपूर्वकं त्वमेव प्राप्य इत्याह—परित्यक्तेति। लङ्का वासस्थानम् मित्राणि सुहृदः धनानि तद्द्वारा समागतानि सोपाधिकानि वस्तूनि प्राप्यान्तराणि त्यक्तानीत्यर्थः भवद्गतं त्वदधीनम् राज्यमिति सर्वपरिग्रहोपलक्षणम् जीवितमिति धारकपोषकभोग्योपलक्षणम् सुखानि ऐहिकामुष्मिकरूपाणि इदं सर्वं भवद्गतं भवत्कैङ्कर्यान्तरगतं भवत्कैङ्कर्यं विना अन्यन्नाहमभ्यर्थयामीत्यर्थः ॥ ५ ॥

६ ] ति० टी०–मे राज्यं च भवद्गतमित्युक्त्या सर्वज्ञत्वेन रामो रावणवधं करिष्यत्येवेति निश्चितमिति गम्यते ॥ ६ ॥

रा० टी०–तस्येति। तस्य विभीषणस्य वचनं श्रुत्वा एनं विभीषणं सान्त्वयित्वा लोचनाभ्यां पिबन्निव रामः राक्षसानां बलाबलं ममाग्रे तत्त्वेनाख्याहीति वचनमब्रवीत्। सार्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो० टी०–तस्येति। तस्य सर्वपरिग्रहत्यागपूर्वकं रामे न्यस्तभरस्य तद्वचनं रामकैङ्कर्यमेव सकलभोग्यजातमिति वाक्यम् सान्त्वयित्वा शरणं गत इत्युक्तिसमय एव स्वीकार्योऽसि एतावत्पर्यन्तं विलम्बः क्षन्तव्य इति सान्त्ववचनान्युक्त्वा लोचनाभ्यां पिबन्निव सान्त्ववचनेन तस्य हृदयमार्द्रं कृत्वा अत्यादरेण विलोकयन्नित्यर्थः ॥ ६ ॥

७–९ ] ति० टी०–पिबन्निवानुग्रहचक्षुषावलोकयन्निव ७–९

गो० टी०–एवं विभीषणेन कायिककैङ्कर्ये प्रार्थिते कायिककैङ्कर्यं पश्चात् भविष्यतीति सम्प्रति वाचिककैङ्कर्यं कुर्विति दर्शयति—आख्याहीति। अत्र भवदीयानामित्यनुक्त्वा राक्षसानामित्युक्तेरयं राक्षसजातिर्न भवति किन्त्विक्ष्वाकुवंश्य इति रामो मेने इति गम्यते। प्रमगर्भोऽनन्यार्थेन सद्यः स्वसाम्यप्रदं भगवदाश्रयणवैभवम् ॥ ७ ॥

रा० टी०–एवमिति रामेण एवमुक्तो रक्षो विभीषणः रावणस्य बलमाख्यातुमुपचक्रमे ॥ ८ ॥

गो० टी०–एवमिति। स्पष्टम् ॥ ८ ॥

रा० टी०–तदाकारमाह—अवध्य इत्यादिभिः। हे राजपुत्र ! स्वयम्भुवो वरदानात् हेतोः देवप्रभृतीनां सर्वभूतानां दशग्रीवोऽवध्यः ॥ ९ ॥

गो० टी०–अवध्य इति। सर्वभूतानामित्येतद्गन्धर्वादिव्यतिरिक्तपरम्। राजपुत्रेति सम्बुद्ध्या मानुषवध्यत्वं द्योतयति ९

१०–११ ] ति० टी०–शक्रप्रतिबलः शक्रसंस्पर्धिबलवान् ॥ १० ॥ ११ ॥

रा० टी०–रावणेति। रावणानन्तरः रावणानन्तरजन्मा ज्येष्ठो मम भ्राता कुम्भकर्णः युधि शक्रप्रतिबलः शक्रसंस्पर्द्धिबलविशिष्टोऽस्तीति शेषः ॥ १० ॥

गो० टी०–रावणेति। प्रतिबलः समानबलः ॥ १० ॥

रा० टी०–रामेति। येन कैलासे माणिभद्रः पराजितः स प्रहस्तस्तस्य रावणस्य सेनापतिः यदि कदाचित् ते श्रुतो भवेदिति शेषः ॥ ११ ॥

गो० टी०–रामेति। कैलासे वर्तमान इति शेषः। माणिभद्रः कुबेरसेनापतिः। यदि वा श्रुत इति। हनुमत इति शेषः ११

१२ ] ति० टी०–बद्धं गोधारूपमङ्गुलित्राणं येन सः गोधा ज्याघातवारणम्। अदृश्यो भवति। युद्धे इति शेषः ॥ १२ ॥

रा० टी०–बद्धेति। बद्धं गोधैवाङ्गुलित्राणं येन 'गोधा ज्याघातवारणम्' न वध्यः छेद्यः कवचो यस्य स य इन्द्रजित् स युधि तिष्ठन् सन् अदृश्यो भवति ॥ १२ ॥

गो० टी०–बद्धेति। अङ्गुलीस्त्रायत इत्यङ्गुलित्राणम् अङ्गुलिकवचम्। गोधा तलं ज्याघातवारण इत्यमरः। अनेन निरन्तरशरसन्धायीति गम्यते। अवध्यकवचः अभेद्यकवचः।

---

१ मे राज्यं चेति गो. पाठः। २ उक्त इति रा. पाठः। ३ गन्धर्वासुररक्षसामिति गो. पाठः। ४ वेत्सि गो. पाठः। ५ त्राण इति गो. रा.पाठः।

सङ्ग्रामे[1] सुमहद्व्यूहे तर्पयित्वा हुताशनम् । अन्तर्धानगतः श्रीमानिन्द्रजिद्धन्ति राघव ॥ १३ ॥
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः । अनीकपास्तु तस्यैते लोकपालसमा युधि ॥ १४ ॥
दशकोटिसहस्राणि रक्षसां कामरूपिणाम् । मांसशोणितभक्ष्याणां लङ्कापुरनिवासिनाम् ॥ १५ ॥
स तैस्तु सहितो राजा लोकपालानयोधयत् । सह देवैस्तु ते भग्ना रावणेन दुरात्मना[2] ॥ १६ ॥
विभीषणस्य[3] तु वचस्तच्छ्रुत्वा रघुसत्तमः । अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥ १७ ॥
यानि कर्मापदानानि रावणस्य विभीषण । आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम् ॥ १८ ॥
अहं हत्वा दशग्रीवं सप्रहस्तं सहात्मजम् । राजानं त्वां करिष्यामि सत्यमेतच्छृणोतु मे[5] ॥ १९ ॥
रसातलं वा प्रविशेत्पातालं वापि रावणः । पितामहसकाशं वा न मे जीवन्विमोक्ष्यते ॥ २० ॥
अहत्वा रावणं संख्ये सपुत्रजनबान्धवम्[4] । अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ॥ २१ ॥

---

युधि अदृश्यो भवतीत्यन्वयः । हनुमद्ग्राहकत्वेन प्रसिद्धत्वात्तस्य रावणपुत्रत्वमुक्तम् ॥ १२ ॥

१३ ] ति० टी०–तदेवाह–संग्राम इति । सुमहद्व्यूहरचितबलसंनिवेशवति ॥ १३ ॥

रा० टी०–संग्राम इति । सुमहान्तो व्यूहा यथोचितसेनासंनिवेशा यस्मिन् तस्मिन् संग्रामे हुताशनं वह्निं तर्पयित्वा अन्तर्धानगत इन्द्रजित् शत्रून् हन्ति अहन् ॥ १३ ॥

गो० टी०–कुतोऽस्यादृश्यत्वशक्तिः अदृश्यश्च किं करोतीत्याह—संग्रामेति । सङ्ग्रामसमयकृतव्यूहे । तर्पयित्वा होमैः प्रीणयित्वा ॥ १३ ॥

१४ ] ति० टी०–अनीकपा उपसेनापतयः ॥ १४ ॥

रा० टी०–महोदरेति । युधि लोकपालसमा एते महोदरप्रभृतयस्तस्येन्द्रजितोऽनीकपाः सेनापतयः सन्तीति शेषः अत्रेन्द्रजितो रावणपुत्रत्वादुक्त्येन्द्रजितं रावणपुत्रत्वेन रामो जानातीति विभीषणनिश्चयो ध्वनितः ॥ १४ ॥

गो० टी०–महोदर इत्यादि श्लोकद्वयम् । अनीकस्थाः सेनापतयः । एते महोदरादयः दशकोटिसहस्राणि सन्तीति शेषः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०–दशकोटिसहस्राणि सन्तीति शेषः । इदं च प्रधानराक्षसविवक्षया ॥ १५ ॥

रा० टी०–दशेति । लङ्कापुरनिवासिनां रक्षसां दश कोटिसहस्राणि सन्तीति शेषः ॥ १५ ॥

१६ १७ ] ति० टी०–ते लोकपालाः ॥ १६ ॥ १७ ॥

रा० टी०–स इति । तै राक्षसैः सहितः स रावणः लोकपालानयोधयत् देवैः सह ते लोकपालास्तु रावणेन भग्नाः ॥ १६ ॥

गो० टी०–स तैरित्यर्द्धम् ॥ १६ ॥

गो० टी०–न केवलं योधनं पराजिताश्च ते लोकपाला इत्याह—सह देवैरित्यर्धमेकं वाक्यम् । देवैः लोकपालभिन्नैः । ते लोकपालाः । महात्मना महाधैर्येण ॥ १७ ॥

रा० टी०–विभीषणस्येति । रघुसत्तमो विभीषणस्य वचः श्रुत्वा मनसान्वीक्ष्य विचार्य च इदमब्रवीत् ॥ १७ ॥

गो० टी०–विभीषणेति । अन्वीक्ष्य आलोच्य । सर्वं कर्तव्याकर्तव्यम् ॥ १८ ॥

१८ ] ति० टी०–कर्मापदानानि युधि कर्मनिर्वर्तितशौर्याणि तान्यहमवगच्छाम्येव, न तु तानि मयि प्रभविष्यन्तीति भावः ॥ १८ ॥

रा० टी०–तदाकारमाह—यानीति । यानि रावणस्य कर्मापदानानि युद्धक्रियानिर्वर्तितशौर्यादीनि । तत्तेन त्वया आख्यातानि सर्वाणि अहम् अवगच्छामि जानामि तेन अस्मद्विषये तान्यकिंचित्कराणीति सूचितम् 'अपदानं कर्म कृतम्' इत्यमरः ॥ १८ ॥

गो० टी०–यानीति । कर्मापदानानि ' अपदानं कर्मवृत्तम्, इत्यमरः करिकलभ इत्यत्रेव कर्मशब्दप्रयोगः शौर्यकृतव्यापारा इत्यर्थः अवगच्छामि अवधारयामीत्यर्थः ॥१९॥

१९ ] ति० टी०–यदुक्तं भवद्भूतं हि मे राज्यमिति तदवश्यं संपादयिष्यामीति प्रतिजानीते—अहमिति ॥ १९ ॥

रा० टी०–अहमिति । दशग्रीवं हत्वा त्वां राजानं करिष्यामि एतत् सत्यं ब्रवीमि ॥ १९ ॥

गो० टी०–आलोचितमर्थमाह—अहमित्यादिना ॥२०॥

२०–२१ ] ति० टी०–रसातलं भूसंनिहिताधोलोकम् पातालमधोलोकावधिभूतं लोकम् । मे मत्तः ॥ २० ॥ २१ ॥

रा० टी०–रसातलमिति । रसातलप्रभृतीनि प्रविशेत् गच्छेत् परंतु मे मया जीवन् सन् न प्रमोक्ष्यते त्यक्ष्यते ॥ २० ॥

गो० टी०–रसातलमिति । रसातलं भूविवरम् पातालम् अधोलोकम् पितामहसकाशं स्ववरपदसमीपम् उपरितनलोकावधिभूतं सत्यलोकं वा मे मत्तः ॥ २१ ॥

रा० टी०–विभीषणस्य पाक्षिकशङ्कां निवर्तयितुं प्रतिजानीते—अहत्वेति । त्रिभिर्भरतादिभिः शपे अत्रार्थे भ्रातॄणां शपथं करोमि ॥ २१ ॥

---

१ संग्रामसमयेति गो. पाठः । २ महात्मनेति गो. पाठः । ३ विभीषणवचः श्रुत्वा रामो दृढपराक्रमः इति गो. पाठः । ४ सबान्धवमिति गो. पाठः । ५ ब्रवीमि ते इति गो. रा. पाठः ।

श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः । शिरसावन्द्य धर्मात्मा वक्तुमेव प्रचक्रमे ॥ २२ ॥
राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे । करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥ २३ ॥
इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् । अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥ २४ ॥
तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् । राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥ २५ ॥
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् । मध्ये वानरमुख्यानां राजानं राजशासनात् ॥ २६ ॥
तं प्रसाद तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः । प्रचुक्रुशुर्महात्मानं साधुसाध्विति चाब्रुवन् ॥ २७ ॥
अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम् । कथं सागरमक्षोभ्यं तराम वरुणालयम् ॥
सैन्यैः परिवृताः सर्वे वानराणा महौजसाम् ॥ ॥ २८ ॥
उपायैरभिगच्छाम यथा नदनदीपतिम् । तराम तरसा सर्वे ससैन्या वरुणालयम् ॥ २९ ॥

गो० टी०—उक्तमर्थं व्यतिरेकमुखेन द्रढयन् सत्यमेतदब्रवीमि त इत्युक्तं विवृणोति—अहत्वेति । संख्ये युद्धे तैः प्रसिद्धैः भ्रातृभिरिति हेतुविवक्षया तृतीया ॥ २२ ॥

२२ ] ति० टी०—अथ विभीषणो रामस्य स्वार्थसाधनप्रतिज्ञां श्रुत्वा स्वयमपि रामकार्यसाधनं प्रतिजानीते—शिरसेति ॥ २२ ॥

रा० टी०—श्रुत्वेति । रामस्य वचनं श्रुत्वा आवन्द्य नमस्कृत्य प्रवक्तुमेव प्रचक्रमे विभीषण इति शेषः ॥ २२ ॥

गो० टी०—स्वानभिमतराज्यप्रदानप्रतिज्ञानात् वन्दनपूर्वकं स्वाभिमतं कैङ्कर्यमेव प्रयोजनान्तरनिवृत्तयेऽर्थयते—श्रुत्वेत्यादिना । आवन्द्येति च्छेदः ॥ २३ ॥

२३ ] ति० टी०—साह्यं साहाय्यम् । वाहिनीं रावणवाहिनीम् ॥ २३ ॥

रा० टी०—तदाकारमाह—राक्षसानामिति । राक्षसानां वधे लङ्कायाः प्रधर्षणे च साह्यं ते साहाय्यं यथाप्राणं जीवनपर्यन्तमित्यर्थः करिष्यामि अत एव वाहिनीं रावणसेनां प्रवेक्ष्यामि ॥ २३ ॥

गो० टी०—राक्षसानामिति । साह्यं साहाय्यम् सहशब्दः सहायवाची । यथाप्राणं यथाबलम् ॥ २४ ॥

२४-२६ ] ति० टी०—परिष्वज्येत्यनेन मित्रत्वेन परिग्रहणं सूचितम् ॥ २४-२६ ॥

रा० टी०—इतीति । इति ब्रुवाणं विभीषणं रामः परिष्वज्य समुद्राज्जलमानय तेन जलेन प्रसन्ने मयि मत्समीपे रक्षसां राजानं कर्तुमिति शेषः विभीषणमभिषिञ्च इति लक्ष्मणमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०—एवं कैङ्कर्यव्यतिरिक्तफलमनाकांक्षमाणं विभीषणं परिष्वङ्गेन वशीकृत्यानुषङ्गिकमपि फलं मत्प्रदत्तमङ्गीकर्तव्यमित्यभिप्रायेण लक्ष्मणमादिशति—इतीति तेनेति । तेन समुद्रजलेन महाप्राज्ञं कैङ्कर्यपर्यन्तस्वशेषत्वस्वरूपज्ञम् मयि प्रसन्ने सतीत्यनेन अभिषेको विभीषणेनानाकांक्षित इति गम्यते । मानद बहुमानप्रद मत्प्रसादे सति फलप्रदस्त्वमिति भावः ॥ २५ ॥ २६ ॥

रा० टी०—एवमिति । एवमुक्तः सौमित्रिर्वानरमुख्यानां मध्ये राजशासनाद्धेतोः राजानं कर्तुं विभीषणमभ्यषिञ्चत् ॥ २६ ॥

गो० टी०—एवमिति । मध्ये वानरमुख्यानामित्यनेन महत्समाजे कृतमलङ्घनीयमिति द्योत्यते । राजशासनादित्यनेनालङ्घनीयं राजशासनमिति विभीषणोऽनुमेन इति भाव्यते २७

२७ ] ति० टी०—प्रचुक्रुशुः सतोषात्किलकिलामकुर्वन् २७

रा० टी०—तमिति । रामस्य तं विभीषणविषयकं प्रसादं प्रीतिं दृष्ट्वा ज्ञात्वा प्लवङ्गमाः प्रचुक्रुशुः हर्षसूचकस्वजातीयशब्दं चक्रुः महात्मानं रामं साधु साध्विति अब्रुवन् च ॥ २७ ॥

गो० टी०—तमिति । प्रचुक्रुशुः हर्षनादं चक्रुः महात्मानं रामम् अब्रुवन् प्राशंसन्नित्यर्थः ॥ २८ ॥

२८ ] ति० टी०—वानराणां सैन्यैः परिवृताः कथं केनोपायेन सागरं तराम ॥ २८ ॥

रा० टी०—अब्रवीदिति । हनुमान् सुग्रीवश्च विभीषणमब्रवीत् । अर्थं पृथक् । तदाकारमाह—वानराणां सैन्यैः परिवृता वयं सागरं कथं तराम । अर्धद्वयमेकान्वयि ॥ २८ ॥ २९

गो० टी०—अथ समयान्तरे कुत्रचिदेकान्ते प्रदेशे हनुमत्सुग्रीवौ स्थलज्ञं विभीषणं वानरसेनातरणोपायमपृच्छतामित्याह—अब्रवीच्चेति । इदमर्धमेकं वाक्यम् ॥ २९ ॥

गो० टी०—कथमिति । दुस्तरत्वे हेतुरक्षोभ्यमिति । तत्रापि हेतुर्वरुणालयमिति ॥ ३० ॥

२९ ] ति० टी०—ससैन्या वरुणालयं यथा तराम तथा कैरुपायैर्नदनदीपतिमभिगच्छाम मार्गप्राप्तये तद्वदेति शेषः २९

रा० टी०—तदेव भङ्ग्यन्तरेणाह—उपायैरिति । ससैन्या ये वयं नदनदीपतिं वरुणालयमभिगच्छाम अभ्यगच्छाम प्राप्नुम ते वयं तरसा उपायैर्यथा तराम तथा ब्रूहीति शेषः किंच वरुणालयं यथा तराम यथा च उपायैरभिगच्छाम सीतां प्राप्नुयां तथा ब्रूहि ॥ ३० ॥

१ प्रधर्षणमिति गो. पाठः । २ उपायं नाभिगच्छाम इति गो. पाठः ।

एवमुक्तस्तु धर्मात्मा प्रत्युवाच विभीषणः । समुद्रं राघवो राजा शरणं गन्तुमर्हति ॥ ३० ॥
खानितः सगरेणायमप्रमेयो महोदधिः । कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः ॥ ३१ ॥
एवं विभीषणेनोक्तं राक्षसेन विपश्चिता । आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः ॥ ३२ ॥
ततश्चाख्यातुमारेभे विभीषणवचः शुभम् । सुग्रीवो विपुलग्रीवः सागरस्योपवेशनम् ॥ ३३ ॥
प्रकृत्या धर्मशीलस्य रामस्यास्याप्यरोचत । सलक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरम् ॥ ३४ ॥
सत्क्रियार्थं क्रियादक्षं स्मितपूर्वमभाषत । विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ॥ ३५ ॥
सुग्रीवः पण्डितो नित्यं भवान्मन्त्रविचक्षणः । उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम् ॥ ३६ ॥
एवमुक्तौ ततो वीरावुभौ सुग्रीवलक्ष्मणौ । समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ ३७ ॥

---

गो० टी०–बुद्धिमन्तो भवन्त एव विचारयन्तीत्यत्राह—उपायं नाधिगच्छाम इति । सर्वे वयमिति शेषः ॥ ३१ ॥

३० ] ति० टी०–एवं प्रभ उपायमाह—एवमिति॥३०॥

रा० टी०–एवमिति । एवमुक्तो धर्मात्मा विभीषणः प्रत्युवाच । तदाकारमाह–राजा रामः शरणं स्वगृहप्रायं समुद्रं गन्तुमर्हति ॥ ३१ ॥

गो० टी०–समुद्रमित्यर्धम् । लक्ष्मणव्यावृत्तये राजेत्युक्तिः ॥ ३२ ॥

३१ ] ति० टी०–राघवेण शरणगमने समुद्रानुग्रहसिद्धौ हेतुमाह—खानित इति । सगरेण । पुत्रैरिति शेषः । अयमुद्रकतीरसमीपः कतिपयोंऽशः । ज्ञाते रामस्येत्यन्वयः ॥३१॥

रा० टी०–सागरस्य गृहप्रायत्वे हेतुं वदन्नाह—खानित इति । महामतिरयं महोदधिः सगरेण खानितः अतः ज्ञातेः रामस्य कार्यं कर्तुमर्हति ॥ ३२ ॥

गो० टी०–शरणवरणं व्याजीकृत्य समुद्रः प्रत्यासक्त्यतिशयात्स्वय उपायं दिशेदित्यभिप्रायेणाह—खानित इति । खानितः स्वपुत्रैरिति शेषः । न केवलमुत्पत्तिमात्रं तन्मूलं किं त्वतिशयोपि तदधीन इत्याह—अप्रमेयो महोदधिरिति । सगरेण रामकूटस्थेन । महामतिः उपकारज्ञ इत्यर्थः॥ ३३ ॥

३२ ] ति० टी०–एवं विभीषणोक्तं श्रुत्वा यत्र रामो वर्तते तं देशं सलक्ष्मणः सुग्रीव आजगामेति संबन्धः ॥ ३२ ॥

रा० टी०–एवमिति । विभीषणेन एवमुक्तं कथितम् अथ तदुक्तश्रवणानन्तरं सुग्रीवः यत्र रामस्तत्राजगाम ॥ ३३ ॥

गो० टी०–एवमिति । राक्षसेनेति स्थकज्ञतोक्ता । विपश्चितेति तात्कालिकबुद्धिमत्ता आजगामेत्यनेन कालान्तरे देशान्तरे सुग्रीवादिप्रभ इति गम्यते ॥ ३४ ॥

३३ ] ति० टी०–सागरस्योपवेशनं शरणगमनम् ॥३३॥

रा० टी०–तत इति । ततः रामसमीपागमनानन्तरं सागरस्योपवेशनं विभीषणवचः सुग्रीव आख्यातुमारेभे॥३४॥

गो० टी०–ततश्चेति । विपुलग्रीव इत्यनेन कुतूहलित्वमुक्तम् । आरेभ इत्यनेन आरम्भमात्र एव सूक्ष्मज्ञतया रामेण सहसा सुग्रीवविवक्षितं ज्ञातमित्युच्यते । उपवेशनम् उपासनम् ३५

३४ ] ति० टी०–अस्य सकलजगच्छरणभूतस्य रामस्याप्यरोचत । युक्तियुक्तत्वात्सागरशरणगमनमिति भावः ॥ ३४ ॥

रा० टी०–तदाख्यानानन्तरकालिकं रामवृत्तान्तमाह–प्रकृत्येति । प्रकृत्या स्वभावतः धर्मशीलस्य राघवस्य अरोचत सुग्रीवोक्तविभीषणवचनमिति शेषः । अर्धं पृथक् । स इति । महातेजाः स रामः सत्क्रिया सुग्रीवादिसत्कारः अर्थः प्रयोजनं यस्य तद्वचनं क्रियादक्षलक्ष्मणं सुग्रीवं च स्मितपूर्वमभाषत । तदाकारमाह–अयं विभीषणस्य मन्त्रो मम रोचते । सार्धश्लोक एकान्वयी ॥ ३५ ॥ ३६ ॥

गो० टी०–प्रकृत्येत्यर्धमेकं वाक्यम् । अरोचत तदुपवेशनमित्यनुषङ्गः ॥ ३६ ॥

३५ ] ति० टी०–सत्क्रियार्थं विभीषणस्य पूजार्थं सलक्ष्मणं सुग्रीवं हरीश्वरमभाषतेत्यन्वयः ॥ ३५ ॥

गो० टी०–स इति । महातेजाः तात्कालिकहर्षप्रकाशकदेहकान्तिमान् । अन्यान्विहाय सुग्रीवं प्रति वचने हेतुर्हरीश्वरमिति । सत्क्रियार्थं विभीषणमन्त्रबहुमानार्थम् । क्रियादक्षः स्वयं कार्यकरणसमर्थोपि ॥ ३७ ॥

गो० टी०–बिभीषणस्येति । स्पष्टम् ॥ ३८ ॥

३६ ] ति० टी०–उभाभ्यामर्थं कार्यं संप्रधार्य निश्चित्य यद्रोचते तदुच्यताम् ॥ ३६ ॥

रा० टी०–सुग्रीव इति । सुग्रीवो भवांश्च पण्डितः सर्वाभिज्ञः अत एव मन्त्रविचक्षणः मन्त्रेषु कुशलः अत एव उभाभ्यामर्थं संप्रधार्य निश्चित्य यद्रोचते तदुच्यताम् ॥ ३७ ॥

गो० टी०–सुग्रीव इति । पण्डितः मन्त्रसमर्थः । उभाभ्यामिति चतुर्थी । अर्थं प्रयोजनम् । सम्प्रधार्य निश्चित्य । त्कार्यमुभाभ्यां रोचते तदुच्यतामिति सम्बन्धः ॥ ३९ ॥

३७ ] ति० टी०–समुदाचार उपचारः ३७ ॥

रा० टी०–एवमिति । एवमुक्तौ सुग्रीवलक्ष्मणौ समुदाचारेण सत्कारेण संयुक्तमिदं वचनमूचतुः ॥ ३८ ॥

गो० टी०–एवमिति । समुदाचारः अञ्जलिबन्धाद्युपचारः तत्संयुक्तमिति क्रियाविशेषणम् ॥ ४० ॥

---

१ धर्मज्ञ इति गो. पाठः । २ शास्त्रेति गो. पाठः । ३ महामतिरिति गो. पाठः । ४ वक्त इति गो. पाठः । ५ राघवस्येति गो. रा. पाठः । ६ दक्षं इति गो. पाठः । ७ उवाच हेति गो. पाठः ।

किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव । विभीषणेन यत्तूक्तमस्मिन्काले सुखावहम् ॥ ३८ ॥
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन्वरुणालये । लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ३९ ॥
विभीषणस्य शूरस्य यथार्थं क्रियतां वचः । अलं कालात्ययं कृत्वा सागराय नियुज्यताम् ॥
यथा सैन्येन गच्छाम पुरीं रावणपालिताम् ॥ ॥ ४० ॥
एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः । संविवेश तदा रामो वेद्यामिव हुताशनः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः ।

शार्दूलनाम्नि यातुधाने सुग्रीवपालिता वानरसेना लङ्कां समभिवर्तत इत्यादि कथयति सुग्रीवोपदेशार्थं रावणेन प्रहितः शुकाभिधो राक्षस उपदेष्टुं च प्रवृत्तः कपिभिर्जीवग्राहं गृहीत्वा भृशं निगृहीतोऽपि रामोपमोचितः सुग्रीवं रावणोक्तं कथयतीत्यादि ।

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् । ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ॥ १ ॥
चारो राक्षसराजस्य रावणस्य दुरात्मनः । तां दृष्ट्वा सर्वतोऽव्यग्रां प्रतिगम्य स राक्षसः ॥ २ ॥
आविश्य लङ्कां वेगेन राजानमिदमब्रवीत् । एष वै वानरर्क्षौघो लङ्कां समभिवर्तते ॥ ३ ॥

---

३८-३९ ] ति० टी०-नावावयोः । विभीषणेन यदुक्तं तत्कथं न रोचिष्यति । सर्वथाभिरुचितमेवेत्यर्थः ॥ ३८ ॥ ३९ ॥

रा० टी०-तदाकारमाह-किमर्थमित्यादिभिः । अस्मिन् काले सुखावहं यद्विभीषणेनोक्तं तत् नौ आवाभ्यां किमर्थं न रोचिष्यति रोचत एवेत्यर्थः ॥ ३९ ॥

गो० टी०-किमर्थमिति । अस्मिन्काले उपायमन्तरा दर्शनकाले सुखावहम् अयत्नेन कार्यसाधकम् । नौ आवयोः ४१

रा० टी०-स्वनिश्चितमाह-अबद्ध्वेति । वरुणालये सेतुमबद्ध्वा लङ्का सादितुं पराभावितुं न शक्या ॥ ४० ॥

गो० टी०-रामशरणागतेः फलं सेतुबन्धनमित्याशयेनाह-अबद्ध्वेति । घोरे तिमितिमिङ्गिलादिसत्त्वाधिष्ठितत्वेन दुस्तरे । सेन्द्रैरिति । किं पुनरस्माभिरिति भावः ॥ ४२ ॥

४०-४१ ] ति० टी०-सागराय सागरप्रार्थनार्थं नियुज्यताम् । स्वात्मेति शेषः ॥ ४० ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०-विभीषणस्येति । विभीषणस्य वचः यथार्थं क्रियतां कालात्ययं कृत्वा अलं न कर्तव्य इत्यर्थः अतः सैन्येन सह पुरीं लङ्कां यथा गच्छाम तथाऽयं समुद्रो नियुज्यताम् । सार्धश्लोक एकान्वयी ॥ ४१ ॥

गो० टी०-विभीषणस्येति । शूरस्य मन्त्रशूरस्य । यथार्थं परमाप्तोक्तत्वादिति भावः । नियुज्यतां प्रार्थ्यताम् । यथेति । तथा नियुज्यतामिति पूर्वेणान्वयः ॥ ४३ ॥

रा० टी०-रामस्य तीर्थविधिकरणमुपक्रममाह—एवमिति । एवमुक्तः सुग्रीवलक्ष्मणाभ्यां प्रार्थितो रामः कुशास्तीर्णे नदनदीपतेस्तीरे वेद्यां हुताशन इव संविवेश ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

गो० टी०-एवमिति । संविवेश संवेशनमकरोत् । वेद्यामिव हुताशन इत्यनेन ज्वलिष्यमाणत्वं व्यज्यते ॥ ४४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

१ ] ति० टी०-निविष्टाम् सागरतीरे इति शेषः ॥ १ ॥

रा० टी०-रामसंवेशानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । रावणस्य चारः शार्दूलो नाम राक्षसः अभ्येत्य सेनासमीपं प्राप्य सुग्रीवेणाभिपालितां ध्वजिनीं सेनां ददर्श । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०-अथ विभीषणनिर्गमनानन्तरं लङ्कावृत्तान्तं प्रस्तौति-तत इत्यादिना । निविष्टां समुद्रतीरस्थाम् ध्वजिनीं सेनाम् । वीर्यवानिति दर्शनसामर्थ्योक्तिः ॥ १ ॥

२-३ ] ति० टी०-तां वाहिनीम् ॥ २ ॥ ३ ॥

रा० टी०-तामिति । तां सेनां सर्वतः सेनायाः चतुर्दिक्षु प्रतिगम्य दृष्ट्वा च लङ्कामाविश्य च व्यग्रं राजानं रावणमिदमब्रवीत् ॥ २ ॥

गो० टी०-चार इत्यादि । सार्धश्लोकः । दुरात्मनः दुर्बुद्धेः । अकाले चारप्रेषितुरित्यर्थः ॥ २ ॥

रा० टी०-तदाकारमाह-एष इत्यादिभिः । अगाधः अवगाहितुमशक्यः अप्रमेयः प्रमातुमशक्यः द्वितीयः सागर इव एष वानरर्क्षौघः लङ्कां समभिवर्तते लङ्कासमीपे तिष्ठति॥३॥

---

१ यत्तोक्तमिति गो. पाठः । २ समुद्रोऽयमिति गो. सागरोऽयमिति रा. पाठः । ३ गच्छामः इति गो. पाठः । ४ व्यग्रमिति गो. रा. पाठः ।

अगाधश्चाप्रमेयश्च द्वितीय इव सागरः । पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ॥ ४ ॥
उत्तमौ रूपसंपन्नौ सीतायाः पदमागतौ । एतौ सागरमासाद्य संनिविष्टौ महाद्युते ॥ ५ ॥
बलं चाकाशमावृत्य सर्वतो दशयोजनम् । तत्त्वभूतं महाराज क्षिप्रं वेदितुमर्हसि ॥ ६ ॥
तव दूता महाराज क्षिप्रमर्हन्ति वेदितुम् । उपप्रदानं सान्त्वं वा भेदो वात्र प्रयुज्यताम् ॥ ७ ॥
शार्दूलस्य वचः श्रुत्वा रावणो राक्षसेश्वरः । उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः ॥
शुकं साधु तदा रक्षो वाक्यमर्थविदां वरम् ॥ ॥ ८ ॥
सुग्रीवं ब्रूहि गत्वाशु राजानं वचनान्मम । यथासंदेशमक्लीबं श्लक्ष्णया परया गिरा ॥ ९ ॥
त्वं वै महाराजकुलप्रसूतो महाबलश्चर्क्षरजःसुतश्च ।
न कश्चनार्थस्तव नास्त्यनर्थस्तथापि मे भ्रातृसमो हरीश ॥ १० ॥
अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः । किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ॥ ११ ॥

गो० टी०—एष इति । अगाधः सेनापक्षे दुष्प्रवेश इत्यर्थः अप्रमेयः अपरिच्छेद्यः ॥ ३ ॥

४ ] ति० टी०—अगाधत्वं दुष्प्रवेशत्वेन ॥ ४ ॥

रा० टी०—पुत्राविति । रूपसंपन्नौ रामलक्ष्मणौ सीतायाः पदं रक्षामुद्दिश्य आगतौ 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोशः ॥ ४ ॥

गो० टी०—पुत्राविति । पदं स्थानम् प्रति आगतौ ॥४॥

५ ] ति० टी०—सीतायाः पदं त्राणमुद्दिश्यागतौ । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' ॥ ५ ॥

रा० टी०—एताविति । एतौ रामलक्ष्मणौ सागरमासाद्य संनिविष्टौ बलं तत्सैन्यं तु दशयोजनमाकाशमवकाशमावृत्य निवर्तयन्त्यर्थः सर्वतः संनिविष्टं लिङ्गवचनविपरिणामेनाप्यन्वयः ॥ ५ ॥

गो० टी०—एतावित्यर्धमेकम् ॥ ५ ॥

६ ] ति० टी०—दशयोजनमाकाशं तावत्पर्यन्तावकाशमावृत्य संनिविष्टमित्यनुषङ्गः । तत्त्वभूतम् । यथार्थमित्यर्थः ॥ ६ ॥

रा० टी०—तत्त्वेति । हे महाराज ! तत्त्वभूतं याथार्थ्यं यथा भवति तथा वेदितुं रामवृत्तान्तं ज्ञातुं त्वं क्षिप्रमर्हसि अत एव तव दूताः वेदितुं बोधयितुमर्हन्ति ॥ ६ ॥

गो० टी०—बलमिति । पूर्वं सेनासन्निवेशमात्रमुक्तम् अत्र तद्विस्तार उच्यते आकाशम् अवकाशम् सर्वतः चतुःपार्श्वेषु । दशयोजनपरिमितमवकाशमावृत्य स्थितम् ॥ ६ ॥

गो० टी०—तत्त्वभूतमिति । मया सामान्यतो ज्ञातं यथार्थभूतं यथा भवति तथा ज्ञातुमर्हसीत्यर्थः ॥ ७ ॥

७ ] ति० टी०—उपप्रदानं सीतायाः । सान्त्वं सुग्रीवं प्रति साम भेदो वा तं प्रत्येव ॥ ७ ॥

रा० टी०—तत्प्रयोजनमाह—उपप्रदानमिति । उप रामसमीपे प्रदानं सीतायाः समर्पणं यस्मिन् तत् सान्त्वं शान्तिर्वा भेदो वा अत्र अस्मिन् समये प्रयुज्यताम् । अर्धं पृथक् ॥ ७ ॥

गो० टी०—उपप्रदानमित्यर्धमेकं वाक्यम् । दण्डस्य त्ववकाश एव नास्तीति भावः । अत्र रामविषये ॥ ८ ॥

८ ] ति० टी०—आत्मनोऽर्थं तत्कालोचितकार्यं शुकमुवाचेत्यन्वयः । सुग्रीवं प्रति । सामभेदप्रयोगार्थमिति शेषः॥८॥

रा० टी०—शार्दूलस्येति । आत्मनोऽर्थं कृत्यं संप्रधार्य निश्चित्य व्यग्रो रावणः साधु वाक्यं शुकं तदभिधदूतमुवाच ! सार्धश्लोक एकान्वयी ॥ ८ ॥

गो० टी०—शार्दूलस्येत्यर्धत्रयमेकान्वयम् । अर्थः कर्तव्यार्थः ॥ ९ ॥

९ ] ति० टी०—संदेशमाह—सुग्रीवमिति । यथासंदेशं मत्संदेशप्रकारमनतिक्रम्य । अक्लीबमकातरम् ॥ ९ ॥

रा० टी०—तदाकारमाह—सुग्रीवमित्यादिभिः । सुग्रीवं गत्वा यथासंदेशं ब्रूहि ॥ ९ ॥

गो० टी०—भेदप्रयोगमुपदर्शयति—सुग्रीवमिति । मम वचनाद्ब्रूहि मयोक्तमिति ब्रूहि । अक्लीबं मधार्ष्ट्यमित्यर्थः । श्लक्ष्णया पारुष्यरहितया । परया श्राव्यया ॥ १० ॥

१०–११ ] ति० टी०—तवार्थः कोऽपि नास्ति रामसहायकरणेन प्राप्यं फलं नास्ति । अनर्थश्च कश्चित्परिहर्तव्यो नास्ति, अतो निष्प्रयोजनप्रवृत्तिरनुचितेति भावः । यद्यपि वा कश्चिदर्थो रामतो जातः स्यात्तथापि मे भ्रातृसमोऽसि । तथा च मद्विषये औदासीन्यमुचितमिति भावः ॥ १० ॥ ११ ॥

रा० टी०—संदेशाकारमाह—त्वमिति । यद्यपि तव कश्चनार्थः मत्तः प्रयोजनं न अनर्थः अर्थविघातो वा न तथापि यतस्त्वं महाराजकुलप्रसूतत्वादिविशिष्टोऽतः मे भ्रातृसमोऽसि एतेन मयि तव द्वेषो न युक्त इति सूचितम् ॥ १० ॥

गो० टी०—वचनमेवाह—त्वमिति । वचनगाम्भीर्यव्यञ्ज-

१ उत्तमायुधसंपन्नाविति गो. पाठः । २ महाबलाविति गो. रा. पाठः । ३ चेति गो. नास्ति । ४ अनेक्षितुमिति गो. पाठः । ५ नामेति गो.पाठः । ६ त्वमिति गो. पाठः । ७ कश्चिदर्थ इति गो. पाठः । ८ हीति गो. पाठः !

नहीयं हरिभिर्लङ्का प्राप्तुं शक्या कथंचन । देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ॥ १२ ॥
स तदा राक्षसेन्द्रेण संदिष्टो रजनीचरः । शुको विहंगमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १३ ॥
स गत्वा दूरमध्वानमुपर्युपरि सागरम् । संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥ १४ ॥
सर्वमुक्तं यथादिष्टं रावणेन दुरात्मना । तत्प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः ॥ १५ ॥
प्रापद्यन्त तदा क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः । सर्वैः प्लवंगैः प्रसभं निगृहीतो निशाचरः ॥ १६ ॥
गगनाद्भूतले चाशु प्रतिगृह्यावतारितः । वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ॥ १७ ॥
न दूतान्घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः । यस्तु हित्वा मतं भर्तुः स्वमतं संप्रधारयेत् ॥
अनुक्तवादी दूतः सन्स दूतो वधमर्हति ॥ ॥ १८ ॥

---

नाय गुरुवृत्तारम्भः । हे महाराज ! त्वं कुलप्रमतः । सूर्यपुत्रत्वादिति भावः तेन निष्कारणवैरं त्वया कर्तुमनुचितमिति व्यज्यते । महाबलः अल्पबलं राममवलम्बितुं नार्हसीत्यर्थः । ऋक्षरजःसुतः ब्रह्मपौत्रत्वेन मम बन्धुभूतोसीत्यर्थः । तव रामावलम्बने कश्चिदर्थो नास्ति अनवलम्बने अनर्थश्च नास्ति अफलं वैरं तव नोचितमिति भावः । वालिसम्बन्धेन भ्रातृसमत्वान्मयैव प्रणयं कुर्वित्यभिप्रायेणाह—तथा हीति ॥ ११ ॥

रा० टी०–ननु सीतापहारित्वात्त्वयि मम द्रोहो युक्त एवेत्यत आह–अहमिति । राजपुत्रस्य रामस्य भार्यां यद्यहमहरं तर्हि तत्र हरणे तव किम् अकार्यमिति शेषः न किंचिदित्यर्थः अतः किष्किन्धां प्रति गम्यताम् ॥ ११ ॥

गो० टी०–सीतापहरणमेव त्वत्कृतो महाननर्थ इत्यत्राह–अहमिति । राजपुत्रस्य तवेति पदाभ्यां नरवानरयोः कः संबन्ध इत्युक्तम् । धीमत इति सुग्रीवविशेषणम् । तत्र हरणविषये किं का हानिरित्यर्थः ॥ १२ ॥

१२ ] ति० टी०–मद्वचनमनादृत्यागतेनापि त्वयात्र किमपि न कर्तुं शक्यमित्याह–नहीयमिति ॥ १२ ॥

रा० टी०–तव लङ्कागमनोद्योगो निरर्थक इति बोधयन्नाह–नहीति । इयं लङ्का हरिप्रभृतिभिः प्राप्तुं कथंचन न शक्या अत्र हरिपदवाच्यो विष्णुर्ज्ञेयः अत एवोत्तरत्र वानरैरितिसुपपन्नम् ॥ १२ ॥

गो० टी०–आरब्धस्यान्तगमनमिति न्यायेन प्रक्रान्तं कार्यं कथं त्यज्यतामित्यत्राह–न हीति । उक्तमर्थं कैमुतिकन्यायेन द्रढयति—देवैरिति । अत्र नरग्रहणात् पूर्वार्धे हरिपदं नरोपलक्षकं बोध्यम् । त्वमेवास्मुमर्थमालोचयेति भावः । इयं लङ्का प्राप्तुं न शक्येत्युत्तरार्धेऽप्युपपद्यते ॥ १३ ॥

१३ ] ति० टी०–शुको विहंगमो भूत्वा शुकपक्षी भूत्वा आप्लुत्य चाम्बरम् जगामेति शेषः

रा० टी०–तदेति । राक्षसेन्द्रेण संदिष्टः शुकः विहङ्गमः पक्षी भूत्वा अम्बरमाप्लुत्य सागरस्योपर्युपरि दूरमध्वानं गत्वा अम्बरमेव संस्थितः सन् सुग्रीवमिदमब्रवीत् । अर्धचतुष्टयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०–स इति । अम्बरमाप्लुत्य आजगामेति शेषः ॥ १४

१४ ] ति० टी०–सागरस्योपर्युपरि सागरसमीपोर्ध्वदेशे ॥ १४ ॥

गो० टी०–स गत्वेति । उपर्युपरि सागरं सागरस्याव्यवहितोपरि प्रदेशे "उपर्यध्यधसः सामीप्ये" इति द्विर्वचनम् । आम्रेडितान्तत्वादुभसर्वतसोरिति द्वितीया ॥ १५ ॥

१५ ] ति० टी०–यथादिष्टं सर्वमुक्तं वाक्यमब्रवीदित्यन्वयः तत्प्रापयन्तम् रावणोक्तं सुग्रीवायेत्यर्थः ॥ १५ ॥

रा० टी०–सर्वमिति । रावणेनोक्तं सर्वं तद्वचनं यथादिष्टं प्रापयन्तं कथयन्तमित्यर्थः वानरास्तूर्णमाप्लुत्य लोप्तुं पक्षौ छेत्तुं मुष्टिभिर्हन्तुं च प्रापद्यन्त ॥ १६ ॥

गो० टी०–तमिति । प्रापयन्तं श्रावयन्तम् । प्रापद्यन्त पर्यवारयन् ॥ १६ ॥

१६–१७ ] ति० टी०–प्रापद्यन्त गृहीतवन्तः । लोप्तुम् । पक्षाविति शेषः ॥ १६ ॥ १७ ॥

रा० टी०–स इति । निशाचरः प्लवङ्गैर्निगृहीत आसीदिति शेषः । अर्धं पृथक्–गगनादिति । गगनात् प्रतिगृह्य भूतलेऽवतारितः अत एव पीड्यमानः शुकोऽब्रवीत् । सार्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

गो० टी०–स तैरिति । निगृहीतः बद्धः ॥ १७ ॥

गो० टी०–वानरैरित्यादि । दूतोऽप्यनुक्तकारी वध्य एवेत्याशङ्क्य नाहं तथा अनुक्तकारीत्याशयेनाह–यस्त्विति ॥ १८ ॥ १९ ॥

१८ ] ति० टी०–यथोक्तराजसंदेशवादिनो ममापराधो नास्तीत्याह–यस्त्विति । भर्तुर्मतं संदिष्टं मार्गं हित्वा स्वमतं तत्काले आत्मत्राणार्थमन्यदेव किंचिद्यदि भाषते तदा सोऽनुक्तवादी सन्वधमर्हति ॥ १८ ॥

रा० टी०–तदाकारमेवाह—नेत्यादिभिः । हे काकुत्स्थ ! दूतान् न घ्नन्ति राजान इति शेषः अतो वानराः वार्यन्ताम् । अर्धं पृथक् । ननु त्वया किमर्थं वानराप्रियमुक्तमित्यत आह–य इति । यो भर्तुर्मतं हित्वा स्वमतं स्वसंमतिविषयीभूतं वचनं

---

१ तथेति गो. पाठः । २ तमिति गो. पाठः । ३ दिवमिति गो. पाठः । ४ स तैरिति गो.रा. पाठः । ५ परिगृह्य निपातित इति गो. पाठः । ६ भाषते इति गो. पाठः ।

शुकस्य वचनं रामः श्रुत्वा तु परिदेवितम् । उवाच मावधिष्टेति घ्नतः शाखामृगर्षभान् ॥ १९ ॥
स च पत्रलघुर्भूत्वा हरिभिर्दर्शितेऽभये । अन्तरिक्षे स्थितो भूत्वा पुनर्वचनमब्रवीत् ॥ २० ॥
सुग्रीव सत्त्वसंपन्न महाबलपराक्रम । किं मया खलु वक्तव्यो रावणो लोकरावणः ॥ २१ ॥

स एवमुक्तः प्लवगाधिपस्तदा प्लवङ्गमानामृषभो महाबलः ।
उवाच वाक्यं रजनीचरस्य चारं शुकं शुद्धमदीनसत्त्वः ॥ २२ ॥
न मेऽसि मित्रं न तथानुकम्प्यो न चोपकर्तासि न मे प्रियोऽसि ।
अरिश्च रामस्य सहानुबन्धस्ततोऽसि वालीव वधार्ह वध्यः ॥ २३ ॥
निहन्म्यहं त्वां ससुतं सबन्धुं सज्ञातिवर्गं रजनीचरेश ।
लङ्कां च सर्वां महता बलेन सर्वैः करिष्यामि समेत्य भस्म ॥ २४ ॥

---

प्रधारयेत् वञ्चनार्थं वदेत् सोऽयुक्तवादी दूतः वधमर्हति । एतेन दूतधर्ममवेक्ष्यैव मयेदमुक्तमिति सूचितम् ॥ १८ ॥

१९-२०] ति० टी०-शुकस्य परिदेवितरूपं वचनं श्रुत्वा । मावधिष्ट मावधिष्टेति यावत् । एकवचनमार्षम् । रामवचसा हरिभिरभये दर्शिते सति । पत्रलघुः पक्षबलेन शीघ्रगतिर्भूत्वा वचनमब्रवीत् । यत्तु—पत्रलघुः पक्षैर्लघुर्लूनपक्ष इति तीर्थस्तत्र । तादृशस्यान्तरिक्षगमनासंभवात्, रामवचनानुष्ठानबाधाच्च ॥ १९ ॥

रा० टी०-शुकस्येति । परिदेवितं रोदनरूपं शुकस्य वचनं श्रुत्वा मावधिष्टेति वचः घ्नतः शाखामृगर्षभान् राम उवाच ॥ १९ ॥

गो० टी०-शुकस्येति । परिदेवितं परिदेवनरूपं वचनम् । मा वधिष्टेति प्रत्येकोक्त्यभिप्रायेणैकवचनम् । वधिष्टेतीत्यत्र आर्षः सन्धिः ॥ २० ॥

रा० टी०-स इति । सः रामेण वधान्निवारितः शुकः पक्षौ लघू यस्य लूनकिंचित्पक्षलोमेत्यर्थः स भूत्वा हरिभिरभये दर्शिते सति अन्तरिक्षे स्थितो भूत्वा पुनरब्रवीत् ॥ २० ॥

गो० टी०-स चेति । पत्रलघुः लघुपत्रः । वानरैः प्रायेण लूनपक्ष इत्यर्थः । भये दर्शिते दर्शितेऽपि ॥ २१ ॥

२१ ] ति० टी०-लोकरावण इत्यनेन तत्संदेशं विनैव गमने ततो मे महद्भयमिति सूचितम् ॥ २१ ॥

रा० टी०-तदाकारमाह—सुग्रीवेति । हे सुग्रीव ! रावणो मया किं वक्तव्यः तद्वदेत्यर्थः ॥ २१ ॥

गो० टी०-स्ववाक्यश्रवणाय सुग्रीवं प्रशंसति—सुग्रीवेति । लोकरावण इत्यनेन प्रतिवचनानादाने मां हनिष्यतीति भावः ॥ २२ ॥

२२ ] ति० टी०-वाक्यं प्रतिसंदेशवाक्यम् ॥ २२ ॥

रा० टी०-स इति । एवमुक्तः प्लवगाधिपः सुग्रीवः रजनीचरस्य चारं शुकमुवाच ॥ २२ ॥

गो० टी०-स एवमिति । लोके कश्चिदधिपतिरपि तज्जातीयो न भवति तद्व्यावर्तनाय प्लवङ्गमानामृषभ इत्युक्तम् । महाबलः तृणीकृतरावण इत्यर्थः । अदीनसत्त्वः अदीनमनस्कः । अत्र वंशस्थोपेन्द्रवज्रेन्द्रवज्रायोगादुपजातिवृत्तभेदः ॥ २३ ॥

२३ ] ति० टी०-अनुकम्प्यो दयापात्रम् । अरिश्च । अस्तीति शेषः । अतः सहानुबन्धः ससुतमित्रादिपरिकरः । ततो रामारित्वादेव वालीव वध्योऽसि । रामेणेति शेषः ॥२३॥

रा० टी०-तदाकारमाह—नेत्यादिभिः । मे मित्रादि त्वं नासि रामस्यारिश्चासि ततो रामारित्वाद्धेतोः हे वधार्ह ! सहानुबन्धः पुत्रमित्रादिसहितस्त्वं वालीव वध्योऽसि ॥ २३ ॥

गो० टी०-भ्रातृसमोऽसीत्यस्योत्तरमाह—न मेसीति । मे मित्रं नासीत्यर्थः अनुकम्प्यः दयनीयश्च नासि मे उपकर्ता च नासि मे प्रियोऽपि नासि अतः कथं भ्रातृसमोऽसीति भावः प्रत्युत मित्रशत्रुत्वाच्छत्रुरेवासीत्याह—अरिश्चेति । ननु नोपकर्तृत्वादिना मित्रं किन्तु सख्युर्वालिनो भ्रातृत्वादित्यत आह—स मेसीति । नः अरिभूतस्त्वमपि वालीव मे वध्योसि अरिमित्रस्याप्यरित्वादिति भावः । इदमेव मनसि कृत्वोक्तं वधार्हेति । अनेनाहं यद्यहरं भार्यामित्येतदुक्तोत्तरम् ॥ २४ ॥

२४ ] ति० टी०-त्वां मन्मित्ररामारिम् । सर्वैः समेत्येत्यन्वयः ॥ २४ ॥

रा० टी०-निहन्मीति । सर्वैः रामादिभिर्महता बलेन च समेत्य आगत्याहं त्वां निहन्मि अत एव लङ्कां भस्म करिष्यामि ॥ २४ ॥

गो० . टी०-नहीयं हरिभिर्लङ्केत्यस्योत्तरमाह—निहन्मीति । ज्ञातिवर्गः कुम्भकर्णादिः विभीषणस्तु न ज्ञातिरिति भावः । सुतादयः किमर्थं हन्तव्या इत्यपेक्षायां राजापराधादित्याह—रजनीचरेशेति । बलेन सनया ॥ २५ ॥

---

१ पक्षेति रा. पाठः । २ अन्तरिक्षस्थित इति गो. पाठः । ३ तूर्णमिति गो. पाठः । ४ स मे इति गो. पाठः । ५ क्षिप्रमिति गो. पाठः ।

न मोक्ष्यसे रावण राघवस्य सर्वैः सहेन्द्रैरपि मूढ गुप्तः ।
अन्तर्हितः सूर्यपथं गतोऽपि तथैव पातालमनुप्रविष्टः ॥
गिरीशपादाम्बुजसंगतो वा हतोऽसि रामेण सहानुजस्त्वम् ॥ २५ ॥
तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् । त्रातारं नानुपश्यामि न गन्धर्वं न चासुरम् ॥ २६ ॥
अवधीस्त्वं जरावृद्धं गृध्रराजं जटायुषम् । किं नु ते रामसांनिध्ये सकाशे लक्ष्मणस्य च ॥
हृता सीता विशालाक्षी यां त्वं गृह्य न बुध्यसे ॥ ॥ २७ ॥
महाबलं महात्मानं दुराधर्षं सुरैरपि । न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान्हरिष्यति ॥ २८ ॥
ततोऽब्रवीद्वालिसुतोऽप्यङ्गदो हरिसत्तमः । नायं दूतो महाप्राज्ञ चारकः प्रतिभाति मे ॥ २९ ॥
तुलितं हि बलं सर्वमनेन तव तिष्ठता । गृह्यतां मागमल्लङ्कामेतद्धि मम रोचते ॥ ३० ॥
ततो राज्ञा समादिष्टाः समुत्पत्य वलीमुखाः । जगृहुश्च बबन्धुश्च विलपन्तमनाथवत् ॥ ३१ ॥

---

२५ ] ति० टी०–राघवस्य न मोक्ष्यसे राघवान्न मुच्यसे। अन्तर्हितोऽन्तर्धानशक्त्या ॥ २५ ॥

रा० टी०–नेति । महेन्द्रैः सर्वैर्देवैर्गुप्तो रक्षितस्त्वं राघवस्य राघवान्न मोक्ष्यसे अतः अन्तर्हितत्वादिकं प्राप्तोऽपि सहानुजस्त्वं रामेण हतो निहतप्रायोऽसि। सार्धश्लोक एकान्वयी ॥ २५ ॥

गो० टी०–मयि लङ्कास्थे खल्वेवं करिष्यसि स्थलान्तरं गमिष्यामीति शङ्कायामाह–न मोक्ष्यस इति । राघवस्य राघवात् । पञ्चम्यर्थे षष्ठी । मूढेति संबुद्धिः । सूर्यपथं सूर्यद्वारं गतः सन् अन्तर्हितोपि न मोक्ष्यस ॥ २६ ॥

२६ ] ति० टी०–पिशाचादीनामेकैकं समुदितं च त्रातारं न पश्यामि, अतएव नञ्पञ्चकं चरितार्थम् ॥ २६ ॥

रा० टी०–तस्येति । तस्य रामरिपोस्तव त्रातारं नानु मनुष्यसदृशः वानर इत्यर्थः अयं नुशब्द इवार्थे पिशाचप्रभृति न पश्यामि अत्र पञ्चमनकारसार्थक्यार्थं प्रथममेकैकस्यानुपश्यामीत्यत्रान्वयः पश्चात् समुदायस्येति वर्णयन्ति ॥ २६ ॥

गो० टी०–त्रिदशेश्वरेपि त्रातुमनीश्वरे का वार्ता क्षुद्राणामित्याह–तस्येति । तस्य रामशरविद्धस्य ॥ २७ ॥

२७ ] ति० टी०–किं च तद्बलं त्वयैव ज्ञातमिति त्वत्कृतचोरवृत्त्या जानीम इत्याह–अवधीरिति । जरावृद्धं जरायुक्तं वृद्धं चिरकालिकं चिरकालिकोऽपि कश्चिदौषधसिद्ध्यादिना जरारहितो भवेत्, अचिरकालिकोऽपि कश्चिच्छापादिना जरावानित्युभयोपादानम् । किं नु न हृता । यदि त्वत्बलमस्तीति शेषः। न बुध्यसे स्वबलमिति शेषः ॥ २७ ॥

रा० टी०–अवधीरिति । जरया युक्तो वृद्धो ज्ञानाधिकस्तं ज्ञानवयोभ्यामधिकमित्यर्थः जटायुषं किं किमर्थमवधीः यां सीतां गृह्य गृहीत्वा रामसांनिध्ये लक्ष्मणस्य सकाशे समीपे च त्वं न बुध्यसे स्वमृत्युमिति शेषः सा सीता च त्वया किं हृता । सार्धश्लोक एकान्वयी ॥ २७ ॥ २८ ॥

गो० टी०–यदि रामसहाये स्थितोसि तर्हि ते जटायुषोवस्था स्यादित्यत्राह–अवधीरिति । अर्धमेकं वाक्यम् । जरया वृद्धम् अत एवाक्षमम् असमर्थम् । जटायुषमवधीरिति यत्तत्र ते किं वीर्यमिति शेषः । नाहं तादृश इति भावः ॥ २८॥

गो० टी०–भार्याहरणकाले किमप्यकुर्वन् रामः किमिदानीं करिष्यतीत्यत्राह–किंन्विति । तं त्वया सन्निधिरिव सान्निध्यम् । विशालाक्षीत्यनेन सीताहरणं रामस्यात्यन्तासह्यमित्युच्यते । गृह्य गृहीत्वा। न बुध्यसे भाव्यनर्थमिति शेषः॥२९॥

२८ ] ति० टी०–रघुश्रेष्ठं महाबलत्वादिगुणकम् । न बुध्यसे इत्यर्थः ॥ २८ ॥

रा० टी०–महाबलमिति । यस्ते प्राणान् हरिष्यति तम् बुध्यसे ॥ २९ ॥

गो० टी०–न बुध्यस इत्युक्तं विवृणोति–महाबलमिति । महात्मानं महाबुद्धिम् ॥ ३० ॥

२९ ] ति० टी०–अयं स्वामिसंदेशप्रापणमात्रकृत्यो दूत एव न, किं तु गुप्ततया परबलपरीक्षाप्रवृत्तिश्चार एव ॥ २९ ॥

रा० टी०–तत इति । ततोऽङ्गदोऽब्रवीत् । तदाकारमाह–अयं दूतः संदेशप्रापकमात्रो न किंतु चारकः अस्मद्बलपरीक्षाकर्ता मे प्रतिभाति ॥ ३० ॥

गो० टी०–तत इति । हरिसत्तमः इङ्गितप्रेक्षणादिज्ञ इति यावत् ॥ ३१ ॥

गो० टी०–नायमिति । चारिकः चारः । स्वार्थे ठक् । दूतो हि न वध्यः चारस्तु वध्य एवेति भावः । तुलितं तुलया मितम् । परिच्छिद्य ज्ञातमिति यावत् ॥ ३२ ॥

३० ] ति० टी०–कुतस्तत्राह—तुलितं हीति । एवं प्रमाणमेवं व्यूहमिति सर्वं परिच्छिन्नमित्यर्थः ॥ ३० ॥

रा० टी०–तुलितमिति । तव समीपे तिष्ठताऽनेन सर्वं तव बलं तुलितम् अतोऽयं गृह्यतां यतो लङ्का मागमत् गच्छेत् एतत् मम रोचते ॥ ३१ ॥

३१ ] ति० टी०–राज्ञा सुग्रीवेण ॥ ३१ ॥

---

१ सुरैरिति गो. पाठः । २ अर्धमेतत् गो. पाठः । ३ नेति गो. नास्ति । ४ वेति गो. पाठः । ५ दुर्धर्षममरैरिति गो.पाठः । ६ त्विति गो.पाठः । ७ महाराजेति गो. पाठः । ८ अत्रैवेति गो. पाठः । ९ तत्तुल्येति गो. पाठः ।

शुकस्तु वानरैश्चण्डैस्तत्र तैः संप्रपीडितः । [1]व्याचुक्रोश महात्मानं रामं दशरथात्मजम् ॥
लुप्येते मे बलात्पक्षौ भिद्येते मे तथाक्षिणी ॥ ॥ ३२ ॥
यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् । एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् ॥
सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ॥ ॥ ३३ ॥
नाघातयत्तदा रामः श्रुत्वा तत्परिदेवितम् । वानरानब्रवीद्रामो मुच्यतां दूत आगतः ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः ।

पारं जिगमिषुणा रामेण प्रार्थितोऽपि सरित्पतिर्यदा मार्गदायी नाभूद्थवा स्वं रूपं न दर्शयामास तदा तेन प्रयुक्तक्रूरशरेण स क्षुब्धवारिचरसत्त्वोऽतिक्रान्तमर्यादतोयश्चासीत् ।

ततः सागरवेलायां दर्भानास्तीर्य राघवः । अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ १ ॥
बाहुं भुजङ्गभोगाभमुपधायारिसूदनः । जातरूपमयैश्चैव भूषणैर्भूषितं सदा ॥ २ ॥
मणिकाञ्चनकेयूरमुक्ताप्रवरभूषणैः । भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३ ॥
चन्दनागुरुभिश्चैव पुरस्तादभिसेवितम् । बालसूर्यप्रकाशैश्च चन्दनैरुपशोभितम् ॥ ४ ॥

रा० टी०–तत इति । ततः अङ्गदवचनश्रवणानन्तरं वलीमुखाः समुत्पत्य जगृहुः ॥ ३२ ॥

गो० टी०–तत इति । राज्ञा सुग्रीवेण ॥ ३२ ॥

३२ ] ति० टी०–लुप्येते छिद्येते ॥ ३२ ॥

रा० टी०–शुक इति । वानरैः संपीडितः शुकः रामं व्याचुक्रोश ॥ ३३ ॥

रा० टी०–तदाकारमाह—लुप्येते इति । मे पक्षौ लुप्येते अतः चेद्यदि जीवितमहं जह्यां तर्हि यां रात्रिं यस्मिन् समये अहं जाये यां रात्रिं यस्मिन् समये मरिष्यामि एतस्मिन् जन्ममरणावधिके अन्तरे मध्यवर्तिनि काले यदशुभं पापं मया कृतं तत्सर्वं त्वमुपपद्येथाः प्राप्नुयाः । अर्धचतुष्टयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०–शुकस्त्वित्यादि । सार्धश्लोक एकान्वयः । चण्डैः अत्यन्तकोपनैः । पितृसंबन्धकीर्तने दया भवेदिति दशरथात्मजमित्युक्तम् । पक्षौ पूर्वलुप्तशेषौ ॥ ३४ ॥

३३–३४ ] ति० टी०–रात्रिशब्दोऽहोरात्रपरः । यद्दिने मरिष्यामि यद्दिने च जातवानस्मि तदन्तरे काले जन्ममरणावधिकाले यन्मयाऽशुभं कृतं तत्सर्वं त्वमुपपद्येथास्त्वं प्राप्नुयाः । यदीह त्वयाऽनिवारितताडनो जीवितं जह्याम् ॥ ३३ ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे विंशः सर्गः ॥ २० ॥

गो० टी०–यामित्यादि । सार्धश्लोक एकान्वयः । रात्रिशब्दोऽहोरात्रवचनः यां च रात्रिं यस्मिंश्च दिवसे मरिष्यामि यस्मिंश्च जाये अजाये अनित्यमागमशासनमित्यडभावः जातोऽस्मि एतस्मिन्नन्तरे जननमरणयोर्मध्यकाले मया यदशुभं कृतं तत्सर्वं निरपराधस्य मे घातयिता त्वम् उपपद्येथाः प्राप्नुहि । चेदिति प्रसिद्ध्यर्थमव्ययम् ॥ ३५ ॥

रा० टी०–नेति । तदा तत्प्रार्थनोत्तरकाले आगतो दूतः मुच्यतां बन्धनताडनादयस्त्यज्यन्तामित्यर्थः, निर्मुक्तबन्धनादि सन् प्रतीहारसमीपे एव तिष्ठत्विति तात्पर्यं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायाद्विशेषणमात्रे त्यागस्य पर्यवसानम् । बाधज्ञानं तु वक्ष्यमाणात् शुक एष विमुच्यतामिति पुनराज्ञापनात् इति रामोऽब्रवीत् अत एव रामो नाघातयत् ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे विंशः सर्गः ॥ २० ॥

गो० टी०–नाघातयदिति । नाघातयद्वधान्न्यवर्तयत् । मुच्यतां बन्धनान्मुच्यताम् । निर्यापणं तु दक्षिणकूले ॥३६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

१–२ ] ति० टी०–तत इति । महोदधेरञ्जलिं कृत्वा प्राङ्मुखो वरप्रार्थनाय प्रतिशिश्ये शयनं कृतवान् ॥ १ ॥ २ ॥

३ ] ति० टी०–मण्यादिमुक्ताप्रवरान्तानि भूषणानि येषु तैः । परमनारीणामेकदारव्रतत्वेनेतरस्त्रीप्रसङ्गाभावादुत्तमधात्रीजनानां भुजैरनेकधा स्नपनालंकरणादिकालेऽभिमृष्टं स्पृष्टं बाहुभिरित्यन्वयः ॥ ३ ॥

४ ] ति० टी०–पुरस्तात्पूर्वं बालसूर्यप्रकाशैरतिरक्तैश्चन्दनैः कुङ्कुमैरिति यावदित्यर्थः ॥ ४ ॥

१ व्याक्रोशतेति गो. पाठः । २ परिदेवनमिति गो. पाठः । ३ वरेति गो. पाठः । ४ अधिवासितामिति गो. पाठः ।

**शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा । तक्षकस्येव संभोगं गङ्गाजलनिषेवितम् ॥ ५ ॥**
**संयुगे युगसंकाशं शत्रूणां शोकवर्धनम् । सुहृदां नन्दनं दीर्घं सागरान्तव्यपाश्रयम् ॥ ६ ॥**
**अस्यता च पुनः सव्यं ज्याघातविहतत्वचम् । दक्षिणो दक्षिणं बाहुं महापरिघसंनिभम् ॥ ७ ॥**

५ ] ति० टी०–शयने तत्काले । सीताया उत्तमाङ्गेन शिरसा रामभुजार्पितेन शोभितम् । तक्षकस्य संभोगं शरीरं गङ्गाजलेन निषेवितम् । स्थितगङ्गाजलमित्यर्थः । अत्र गङ्गाजलस्थाने सीतागौरत्वात्पवित्रत्वाच्च ॥ ५ ॥

६ ] ति० टी०–संयुगे शत्रूणां शोकवर्धनम् युगसंकाशं युगवद्दीर्घम्, दीर्घं दीर्घकालं सुहृदां नन्दनं सुखप्रापकम् । सागरान्तभूचक्रस्य व्यपाश्रयं प्रतिष्ठाभूतम् ॥ ६ ॥

७ ] ति० टी०–पुनः पुनः सव्यमस्यता शरान्विसृजता ज्याघातेन विहता त्वग्यत्र तादृशं सर्वभुजेभ्य उत्तमं गोसहस्रप्रदातारं दक्षिणं बाहुं भुजं तदवच्छिन्नम् । कूर्परादुपरिदेशो भुज इत्याहुः । उपधाय दक्षिणः स्वयमधिशिश्ये इत्यन्वयः॥७॥

रा० टी०–शुकवधनिवारणानन्तरकालिकं रामवृत्तान्तमाह—तत इत्यादिभिः । राघवः सागरवेलायां दर्भानास्तीर्य प्राङ्मुखः सन् महोदधेः अञ्जलिं कृत्वा प्रणयसूचकत्वेन संपाद्य भुजङ्गभोगाभं सर्पशरीरसदृशं भूषणैर्भूषितं मणिकाञ्चनमयकेयूरादिभिर्युक्तैः परमनारीणां समवेतजनकराजवेश्मस्थाङ्गनानां भुजैरनेकधा बहुवारं पुरस्तात् विवाहसमये अभिमृष्टं श्रमापनयनहेतुकनिपीडनादौ स्पृष्टं किंच नारीभुजयोः पूज्यत्वाद्बहुवचनमिति नारीशब्देन सीतैव ग्राह्या किंच अनारीणां नारीसंसर्गरहितानां नैष्ठिकानां हनुमदादीनामित्यर्थः भुजैरभिमृष्टं सख्यभावनया स्पृष्टम् अत एव परमं तेषां तृप्तिकारकं किंच यत् अरीणां भुजैर्नाभिमृष्टं तत् परमत्युत्कृष्टम् अपालकम् अ इति अनधातुप्रकृतिकक्विबन्तप्रकृतिकामन्त्रं सामान्ये नपुंसकं दीर्घाभावस्तु संज्ञापूर्वकविधेरनित्यत्वात् पुरस्तात्पूर्वं चन्दनादिभिरभिसेवितं बालसूर्यप्रकाशैः रक्तैरित्यर्थः चन्दनैरुपशोभितं पुरा पूर्वं शयने शयनसमये सीतायाः उत्तमाङ्गेन शिरसा शोभितं स्पृष्टसीताशिरस्कमित्यर्थः गङ्गाजलनिषेवितं गङ्गाजलेन सिक्तं तक्षकस्य संभोगं शरीरमिव एतेन बाह्वोः स्वेदवत्त्वं सूचितं तेन किंचिच्छ्रमः सूचितः संयुगे संग्रामे युगसंकाशं रिपुविनाशकीभूतशकटावयवीभूतकाष्ठविशेषसदृशम् अत एव शत्रूणां शोकवर्धनं दीर्घम् आजानुलम्बं सागरान्तं व्यपाश्रयते स्पृशति तं पुनः पुनरस्यता शरान् प्रक्षिपता ज्याघातेन विहता चिह्नविशिष्टा त्वक् यस्य तं गमकत्वात्समासः सव्यं वामं बाहुमुपधाय उपबर्हणत्वेन प्रकल्प्य गोसहस्रप्रदातारं प्रतिदिनं विपुलगोप्रदानशीलं दक्षिणं भुजं च उपधाय प्रतिशिश्ये मां स्वकीयं ज्ञात्वा मत्संनिधौ शेते इति परमभाग्यवानहमिति महोदधेः प्रसादाय शयनं चकार । सार्धश्लोकसप्तकमेकान्वयि ॥ १–७ ॥

गो० टी०–एवं प्रासङ्गिकं परिसमाप्य एकान्तरितपूर्वसर्गान्तोदितकथाशेषमुपक्षिपति–तत इत्यादि । सार्धश्लोक एकान्वयः । ततः शुकमोक्षणानन्तरम् सागरवेलायां शर्कराप्रचुरायाम् दर्भान् शिताग्रकुशान् आस्तीर्य राघवः सर्वशरण्यकुलप्रसूतः महोदधेः अञ्जलिं कृत्वा भुजगभोगाभम् अहिकायवदतिमृदुलं बाहुम् उपधाय उपधानीकृत्य । प्राङ्मुखः सन् प्रतिशिश्ये । प्रतीत्यनेन तदानीं सागराभिमुखमपरः सागर इव स्थित इत्यवगम्यते । अरिसूदन इत्यनेन तादृशदशायामपि शत्रूणामधृष्यतया स्थित इत्युच्यते । अत्र विशेषणमहिम्ना अतिसुकुमारस्य कथमतिकठिनावनितलशयनम्, अखिलरक्षकस्य कथमन्यतो रक्षापेक्षेति वाल्मीकेः खेदो द्योत्यते ॥ १ ॥

गो० टी०–अमुमेवार्थं प्रपञ्चयति सार्धसप्तश्लोकैः–जातरूपमयैरित्यादि । जातरूपमयैः चकाराद्रत्नमयैः एवकारोऽयोगव्यवच्छेदार्थः । पुरा अयोध्यावासकाले अवतारात्पूर्वं वा वरकाञ्चनेति परमनारीभुजविशेषणम् । भुजैः हस्तैः तदेकदेशलक्षणा । परमनारीणां सैरन्ध्रिकाणाम् अनेकधा स्नानालङ्करणादिषु चन्दनागरुकुङ्कुमप्रभृतिभिः बहुप्रकारेण । अभिमृष्टम् संमृष्टम् । अधिवासितं सञ्जातगन्धम् । बालसूर्येति विशेषणात् द्वितीयचन्दनशब्दो रक्तचन्दनपरः । तच्च कुङ्कुमम् । कुङ्कुमं घुसृणं प्रोक्तं लोहितं रक्तचन्दनमिति हलायुधः आदौ चन्दनागरुभ्यां चर्चितम् अथ कुङ्कुमैरिति बोध्यम् । कश्चिदाह । परमनारीणामित्यनेन सीताव्यतिरिक्ताश्च भार्याः सन्तीति तन्न नहि बालकाण्डे कुत्रचिद्रामस्य दारान्तरोद्वाहः प्रतिपाद्यते प्रत्युत रामस्तु सीतया सार्धं विजहार बहूनृतून् । मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः ॥ इति सीतया सह निरन्तरभोग एवोच्यते । अत एव सीताप्याह । समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ इत्यत्यन्तसंयोगे द्वितीयया निरन्तरभोगम् । तत्कुतोऽस्य दारान्तरावकाशः । ननु रामस्य दयिता भार्येति विशेषणाद्रोहिणी यथेति ताराणामन्यतमया रोहिण्या दृष्टान्तीकरणाच्च भार्यान्तरं तस्य व्यज्यत इति चेन्न । दयितो भ्रातुरितिवदनुगमनानर्हत्वाय तथा विशेषितत्वात् । किं भरतो रामस्य न दयितः । तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु । न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ॥ इत्यादिविरोधात् । रामवाल्लभ्यातिशयेन सौकुमार्यातिशयेन च राजगृह एवावस्थाय दिव्यसुखानुभवयोग्यावपि सीतालक्ष्मणौ राममनुगताविति हि तत्र मुनिहृदयम् । रोहिणी चेयमन्या प्रसिद्धाया नित्यानुगमनासंभवात् । ननु च । हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः । अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये । इति स्नुषासाहचर्याद्रामस्य स्त्रियः

गोसहस्रप्रदातारं ह्युपधाय भुजं महत्। अद्य मे तरणं वाथ मरणं सागरस्य वा ॥ ८ ॥
इति रामो धृतिं कृत्वा महाबाहुर्महोदधिम्। अधिशिश्ये च विधिवत्प्रयतोऽत्र स्थितो मुनिः॥ ९ ॥
तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले। नियमादप्रमत्तस्य निशास्तिस्रोऽभिजग्मतुः ॥ १० ॥
स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः। उपासत तदा रामः सागरं सरितां पतिम् ॥ ११ ॥

पत्न्यो बह्व्यः सन्तीति गम्यते। सुन्दरकाण्डेपि। स्त्रीभिस्तु मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थ इति सीतया चोच्यते। अत्रापि। भुजैः परमनारीणामभिमृष्टमनेकधेत्युक्तम्। तस्माद्बह्व्यः पत्न्यो रामस्य सन्तीत्यवगम्यते। मैवं रामस्य परमाः स्त्रिय इति रामसंबन्धिन्यः कौसल्यासीतातद्दासीप्रभृतय उच्यन्ते। पूजायां बहुवचनेन सीतैवोच्यते। ते स्नुषा इतिवत्। नहि भरतस्यानेकाः स्त्रियः सन्तीत्यत्र प्रमाणमस्ति। त्वं रंस्यस इत्यत्रापि लौकिकरीतिमनुसृत्य सीतोक्तवती। परमनारीणामित्यत्रापि अलंकर्त्रीणामित्यर्थ उक्तः। यद्वा अभिमृष्टम् अभिमर्शनार्हम्। आशंसायां क्तः। परमनार्यः श्रीभूमिनीलाः। आत्मानं मानुषं राम एव हि मन्यते ऋषिस्तु रामस्य विष्णुत्वं व्यक्तीकरोत्येव जज्ञे विष्णुः सनातन इत्याह। ननु राजसूयाश्वमेधाद्यनुष्ठानान्यथानुपपत्त्या रामस्यानेकपत्न्यः कल्प्यन्ते। कामं कल्प्यन्तां न ता इह संबध्यन्ते। तासां केवलं धर्मार्थं वृतानां परिग्रहं रन्तुं चायोग्यत्वात्। वस्तुतो न ताः कल्प्याः सीतयैव प्रतिमया यज्ञे पत्नीकार्यनिर्वाहस्योत्तरकाण्डे दर्शितत्वात्। न च पत्नीप्रतिनिध्यभावो भट्टाचार्येण कथ्यत इति वाच्यम्। न हि वचनविरोधे न्यायः प्रभवतीति न्यायात्। वचनं च हेमाद्रिस्मृतिनिबन्धने दर्शितम्। यदि दुष्टभार्यो दूरभार्यो वा स्यात्तदा दर्भपुञ्जीलं तत्स्थाने निधायाग्निमाधाय कुर्यादिति। धर्मसंस्थापनार्थं प्रवृत्तस्य रामस्याचारादपरं किं नाम मानमपेक्षणीयम्। वस्तुत आचार एव प्रथमं प्रमाणं श्रुत्या पूर्वाचारं प्रदर्श्यैव कर्मविधानात्। आपस्तम्बोप्यत एव धर्मज्ञसमयः प्रमाणं वेदाश्चेत्याचारमेव प्रथमं प्रमाणमाह। अत एव स्मरन्ति च स्मर्तारः। श्रुतिर्विभिन्ना स्मृतयो विभिन्ना नचानृषेर्दर्शनमस्ति किंचित्। धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्था इति। तस्मात् चातुर्वर्ण्यं च लोकेस्मिन् स्वे स्वे धर्मे नियोक्ष्यतीत्युक्तरामाचार एव समीचीनं प्रमाणं तद्विरुद्धाश्च न्याया न प्रभवन्ति। यद्यपि राजसूयाश्वमेधानां महिषीवह्वातापरिवृत्तिभ्यामपि भवितव्यम्। तथापि तल्लोपे तत्कार्याननुष्ठानमेव! तस्य कर्मवैकल्यहेतुत्वात्। यथा पशुबन्धादेर्यज्ञे विष्णुक्रमाज्यावेक्षणादिलोपेन न यज्ञलोपः तत्तन्मात्रोच्चारणस्यैव कार्यत्वात्। तस्मात्केवलन्यायसञ्चारेणापन्यायमार्गो नानुसरणीयः। किन्तु सर्वाचारप्रवर्तकसर्वकर्मधुरन्धरभगवदवताररामचन्द्राचार एव विवेकिभिरनुवर्तनीय इति सर्वमवदातम्। शयने हंसतूलिकामये तल्पे। गङ्गानिवेशितं गङ्गाजले वर्तमानम्। तक्षकस्य संभोगं कायमिव स्थितम् सीतायाः उत्तमाङ्गेन शोभितं चेति योजना। संयुगे युद्धे युगसंकाशं गोपुरार्गलवत् प्रतिभटनिवारकम् अत एव शत्रूणां शोकवर्धनम्। सागरोन्ते यस्यासौ सागरान्तः भूमण्डलम् तस्य व्यपाश्रयम् आलम्बनभूतम् सव्यम् अप्रदक्षिणं यथा भवति यथा अस्यता इषून् क्षिपता। स्वेनैव हेतुना ज्याघातेन करणेन विगतत्वचं ज्याकिणाङ्कितमित्यर्थः। महापरिघसन्निभम् उत्तमपरिघाख्यायुधवत् दृढम्। गोसहस्रप्रदातारं करणे कर्तृत्वोपचारः। महद्भुजं भुजोत्तमम् तथैव प्रायशः पाठः। आत्वाभाव आर्षः। एवंभूतं दक्षिणं बाहुमुपधाय दक्षिणः दाक्षिण्यवान्। महाबाहुः सर्वाभयप्रदः। रामः अद्य मे तरणं वा सागरस्य मरणं वा भवत्विति मतिं कृत्वा। विधिवत् शास्त्रोक्तरीत्या। प्रयतः कायिकनियमयुक्तः नियतः वाचिकनियमवान् मुनिः मानसनियमोपेतश्च सन् महोदधिमुद्दिश्याधिशिश्य इति योजना ॥ २ ॥ ९ ॥

८ ] ति० टी०–पुनर्बाहुभुजशब्दप्रयोगः पुर्वस्य व्यवहिततया विशेषप्रतिपत्त्यर्थः। अद्य त्रिदिनमुपासनया प्रसन्नस्य सागरस्य प्रसादेन मे ससैन्यस्य तरणं वापि स्यात्। ततः परमुपेक्षणे सागरस्य मत्तो मरणमेव स्यादिति धृतिं कृत्वा निश्चित्येति योजना ॥ ८ ॥

९ ] ति० टी०–मुनिर्मौनी। महोदधिम्। उद्दिश्येति शेषः ॥ ९ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अद्येति। अद्य दिनत्रयात्मकोपवासानन्तरकाले मे तरणं सागरप्रसादहेतुकमार्गदानादिनोत्तरणं वा सागरस्य मरणं प्रसादपूर्वकमार्गदानाद्यभावे विघातो वा इति धृतिं निश्चयं कृत्वा मुनिर्मौनी सन् प्रयतः तरणं प्रति प्रयत्नवान् नियतो यतचित्तो रामः महोदधिं विधिवत् तीर्थोपवासविधिविशिष्टं यथा भवति तथा अधिशिश्ये "अधिशीङ्" इति महोदधेः कर्मत्वम्। सार्धश्लोक एकान्वयी ॥ ८ ॥ ९ ॥

१० ] ति० टी०–अभिजग्मतुरभिजग्मुः ॥ १० ॥

रा० टी०–तस्येति। नियमात् महीतले सुप्तस्य रामस्य तिस्रो निशाः अतिचक्रमुः ॥ १० ॥

गो० टी०–तस्येति। सुप्तस्य शयानस्य। नियमादप्रमत्तस्य अत एवाप्रच्युतनियमस्येत्यर्थः। तिस्रो निशाः त्रीण्यहानि ॥ १० ॥

११ ] ति० टी–सोऽञ्जल्यग्रेण तान्हन्यामित्यादिना प्रक-

१ मतिमिति गो. पाठः। २ स इति गो. पाठः। ३ नियत इति गो. पाठः। ४ ऽतिचक्रमुरिति गो. रा. पाठः।

न च दर्शयते रूपं मन्दो रामस्य सागरः । प्रयतेनापि रामेण यथार्हमभिपूजितः ॥ १२ ॥
समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः । समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ १३ ॥
अवलेपः समुद्रस्य न दर्शयति यः स्वयम् । प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता ॥ १४ ॥
असामर्थ्यफला ह्येते निर्गुणेषु सतां गुणाः । आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् ॥ १५ ॥
सर्वत्रोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् । न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ॥१६॥

---

दितवीर्यः । नयज्ञः सामाद्युपायानां यथोचितं प्रयोक्ता, धर्मवत्सलः शरणागतरक्षणरूपे धर्मे प्रीतिमान् । उपासत उपास्त ॥ ११ ॥

रा० टी०—स इति । नयज्ञः अत एव त्रिरात्रोषितः तीर्थोपवासविधिना रात्रित्रयं स्थितः स रामः सागरमुपासत उपास्त अध्यायदित्यर्थः ॥ ११ ॥

गो० टी०—तिसृष्वपि रात्रिषूपासनमविच्छिन्नमित्याह—स इति । त्रिरात्रोषितः त्रिरात्रं शयानः तत्र समुद्रतीरे सर्वशक्तेः कुत एवं निर्बन्ध इत्याशङ्क्य धर्मप्रवर्तनार्थमित्याशयेनाह—नयज्ञो धर्मवत्सल इति । शरणागतधर्मे प्रीतिमान् । सरितां पति स्वगोष्ठ्यां कान्तापुरुपकारमुखेन समाश्रयणदर्शनात् स्वयमपि तथैवाचरदिति भावः ॥ ११ ॥

१२ ] ति० टी०—शरणागतत्वेऽपि फलप्रदानाभिमुख्याभावात्सागरस्य सापराधत्वमाह—न चेति । मन्दो मन्दबुद्धिः ॥ १२ ॥

रा० टी०—नेति । 'रामेण यथार्हमभिपूजितोऽपि मन्दो मन्दमतिरतिप्रमोदविशिष्टो वा सागरः रूपं स्वस्वरूपं रामस्य न दर्शयते अदर्शयत् एतेन तस्य रामप्रभावदर्शनाकाङ्क्षित्वं व्यक्तम् ॥ १२ ॥

गो० टी०—न चेति । न च दर्शयते आत्मानमिति शेषः। मन्दः अज्ञः । ननु रामेण सम्यक्कृता शरणागतिः कुतो न फलिता उच्यते अनधिकारिणा कृतत्वात् ब्राह्मणकृतराजसूयवत् । न च शरणागतावधिकारी रामः अकिंचनो हि तत्राधिकारी ॥ १२ ॥

१३ ] ति० टी०—समुद्रस्य क्रुद्धः समुद्राय क्रुद्धः ॥ १३ ॥

रा० टी०—समुद्रस्येति । ततः प्रार्थनयाऽप्यनागमनाद्धेतोः समुद्रस्य समुद्राय क्रुद्धो रामः समीपस्थं लक्ष्मणमुवाच ॥१३॥

गो० टी०—समुद्रस्येति । समुद्रस्य समुद्रविषये संबन्धसामान्ये षष्ठी रक्तान्ते लोचने यस्य सः रक्तान्तलोचनः अनेन मन्दकोपत्वमुक्तम् । शुभलक्षणम् स्वस्य हृदयकोपमनुगम्य कृतमन्दहासम् ॥ १३ ॥

१४ ] ति० टी०—अवलेपो गर्वः । वर्तत इति शेषः प्रशमश्चित्तशान्तिः, क्षमा शक्यप्रतिक्रियापराधसहिष्णुता, आर्जवं कौटिल्याभावः ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—अवलेपः इति । यत् स्वयं न दर्शयति स्वस्वरूपं न प्रकटयति तत्समुद्रस्य अवलेपः गर्वः । अयं पृथक् । पात्राभावात् स्वकृतप्रार्थनादेरयुक्तत्वमाह—प्रशम इति । प्रशमः शान्तिः क्षमा अपराधसहिष्णुत्वम् आर्जवं सरलवृत्तिः प्रियवादिता प्रियवचनम् एते सतां गुणा निर्गुणेषु निषिद्धगुणवत्सु गर्वादिदोषविशिष्टेष्वित्यर्थः असामर्थ्यफलाः सामर्थ्यं फलनिष्पादनविषयकशक्तिं फलन्ति तद्भिन्नाः निष्फला भवन्तीत्यर्थः किंच असामर्थ्यफला अशक्तत्वनिष्पादका अयमशक्त इति बोधका भवन्तीत्यर्थः ॥ १४ ॥

गो० टी०—अवलेप इति । स्वयं न दर्शयतीति यत् अयं समुद्रस्यावलेप इत्यन्वयः ॥ १४ ॥

१५ ] ति० टी०—एवं सतां गुणा निर्गुणेषु दयागुणहीनेषु अवलिप्तेषु तद्विषये, असामर्थ्यफलाः । सर्वशक्तियुक्तोऽपि दुष्टविषये प्रशमादिपरश्चेत्तमशक्तं मन्यन्त इत्यर्थः अतोऽयं दण्डस्यैव विषय इति भावः । आत्मप्रशंसिनं शौर्यादिगुणाभावेऽपि तद्वत्तया श्लाघमानम्, दुष्टं दुश्चरित्रम्, धृष्टमधर्मप्रवृत्तौ साहसिकम्, विपरिधावकमितस्ततः स्वगुणख्यापनाय परिधावनशीलम् ॥ १५ ॥

रा० टी०—गर्वादिदोषविशिष्टेषु यानि सफलानि भवन्ति तानि बोधयन्नाह—आत्मेति । आत्मप्रशंसिनं प्रशंसनार्हगुणाभावेऽपि स्वप्रशंसाशीलम् अत एव दुष्टं निषिद्धाचरणशीलम् अत एव धृष्टं दुष्कर्मसाधनहेतुकलज्जाहीनं विपरिधावकं स्वगुणप्रख्यापनायेतस्ततो धावनशीलं सर्वत्र दण्डाविषयेष्वपि उत्सृष्टो दण्डो येन तं नरं राजानमित्यर्थः लोको गर्ववान् जनः सत्कुरुते ॥ १५ ॥

गो० टी०—प्रशम इति । प्रशमः अक्रोधता क्षमा अपराधसहिष्णुता आर्जवं परचित्तानुसारित्वम् अकौटिल्यं वा प्रियभाषिता प्रियवादित्वमित्येते गुणाः निर्गुणेषु असामर्थ्यं फलन्ति । असमर्थत्वबुद्धिं जनयन्तीत्यर्थः ॥ १५ ॥

गो० टी०—कं पुनः समर्थं निर्गुणो मन्यते तत्राह—आत्मेति । आत्मप्रशंसिनम् आत्मस्तुतिपरम् दुष्टं वञ्चकम् धृष्टं निर्दयमित्यर्थः विपरिधावकं सर्वपलायनकरम् सर्वत्र सगुणेषु निर्गुणेषु च उत्सृष्टदण्डं कृतदण्डम् । लोकः अज्ञो जनः ॥ १६ ॥

१६ ] ति० टी०—सर्वत्र प्राणिमात्रे उत्सृष्टदण्डं कृतदण्डम्, सत्कुरुते बहुमन्यते । कीर्तिर्देशान्तरख्यातिः, यशः स्वदेशख्यातिः न शक्यते प्राप्तुमित्यन्वयः ॥ १६ ॥

रा० टी०—नेति । साम्ना सामरूपोपायेनैव कीर्तिः दिग-

---

१ मन्दस्तदेति गो. पाठः । २ असामर्थ्यं फलन्तीति गो. पाठः ।

प्राप्तुं लक्ष्मण लोकेऽस्मिञ्जयो वा रणमूर्धनि । अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् ॥ १७ ॥
निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः । भोगिनां पश्य भोगानि मया भिन्नानि लक्ष्मण ॥१८॥
महाभोगानि मत्स्यानां करिणां च करानिह । सशङ्खशुक्तिकाजालं समीनमकरं तथा ॥ १९ ॥
अद्य युद्धेन महता समुद्रं परिशोषये । क्षमया हि समायुक्तं मामयं मकरालयः ॥ २० ॥
असमर्थं विजानाति धिक्क्षमामीदृशे जने । न दर्शयति साम्ना मे सागरो रूपमात्मनः ॥ २१ ॥
चापमानय सौमित्रे शरांश्चाशीविषोपमान् । समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवंगमाः ॥ २२ ॥

न्तरख्यातिः प्राप्तुं न शक्यते यशः अल्पख्यातिर्जयो वा साम्नैव प्राप्तुं न शक्यते ॥ १६ ॥

गो० टी०—न साम्नेति । बलकृता प्रथा यशः । पराक्रमकृता कीर्तिः । जयो वेत्यत्रापि न साम्ना प्राप्तुं शक्यत इत्यनुषञ्जनीयम् ॥ १७ ॥

१७-१८ ] ति० टी०—रणमूर्ध्नि जयो वा न प्राप्तुं शक्य इत्यनुकर्षः मद्बाणनिर्भिन्नैः, अतएव मृत्वा सर्वतः प्लवद्भिर्मत्स्यादिभिर्निरुद्धतोयं प्रच्छादिततोयम् । भोगिनां भोगानि शरीराणि ॥ १७ ॥ १८ ॥

रा० टी०—अद्येति । अद्य मदीप्सितस्य सर्वथा सिद्धिकाले मद्बाणेन निर्भिन्नैः अत एव सर्वतः प्लवद्भिः प्रसर्पद्भिर्मकरैः निरुद्धतोयं मकरालयं सागरं पश्य ॥ १७ ॥

गो० टी०—अद्येति । मद्बाणनिर्भिन्नैः अतएव जलोपरि प्लवद्भिः मकरैः । निरुद्धतोयं व्याप्ततोयम् ॥ १८ ॥

रा० टी०—भोगिनामिति । मया भिन्नानि भोगिनां नागानां भोगानि शरीराणि मत्स्यानां महाभोगानि च करिणां करान् च पश्य ॥ १८ ॥

गो० टी०–महाभोगानीति । भोगिनां महाकायानाम् भूम्नि मतुप् । भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । नागानां सर्पाणाम् महाभोगानि महाशरीराणि क्लीबत्वमार्षम् करिणां मत्स्यानां गजाकारमत्स्यानाम् छिन्नानीति लिङ्गव्यत्ययेनानुषङ्गः । करान् शुण्डादण्डान् । मत्स्यविशेषो मकरः करिमकरो भवति तद्विशेषश्चेति हलायुधः ॥ १९ ॥

१९ ] ति० टी०—मत्स्यानां महाभोगानि महाशरीराणि । करिणां जलकरिणां करान्भिन्नान् । पश्येति शेषः । शङ्खजालशुक्तिकाजालसहितं समुद्रमित्यन्वयः ॥ १९ ॥

रा० टी०—सेति । शङ्खशुक्तिकाजालसहितं मीनमकरैः सहितं समुद्रं युद्धेन प्रहारेण परिशोषये तदीयपरिकरनाशप्रतिज्ञया सागरस्यातिभीतिः स्यात्तेन द्रुतमागच्छेदिति व्यञ्जितम् ॥ १९ ॥

गो० टी०—सशङ्खेति । स्पष्टः ॥ २० ॥

२० ] ति० टी०—युद्धेन प्रहारेण ॥ २० ॥

रा० टी०—क्षमयेति । क्षमया क्षमायुक्तं मामयं मकरालयः असमर्थं विजानाति अत एव साम्नोपलक्षिताय मे मह्यम् आत्मनो रूपं सागरो न दर्शयति । सार्धश्लोक एकान्वयी ॥ २० ॥ २१ ॥

गो० टी०—क्षमैकसाराणां भवतामीदृशी फणितिरनुचितेत्याशङ्क्याह–क्षमयेति । सागरशोषणे प्रवृत्तोप्येतावत्पर्यन्तं क्षमया गृहीतचरणोस्मि । क्षुप्रमत्तकुपितानां भावज्ञान दृष्टमिति न्यायेन स्वरूपं प्रकटयति–मामिति । माम् इतरनैरपेक्ष्येण स्थितम् । असमर्थं विजानाति कार्यकरणाक्षमं मन्यते । विजानाति मकरालयः । अयोध्याधिपतिः कोसलाधिपतिरितिवत् । स्वमात्मानं मन्यते । कतिपयदिनग्रहणगर्त्त इति न जानाति । धिक् क्षमाम् इतःपरं क्षमां नाङ्गीकुर्मः । विनियोगकाले हि क्षमा स्वीकार्या । अद्य क्रोध एवाङ्गीकर्तव्यः । इक्ष्वाकूणां कदाचिदपि क्षमा किं त्याज्येत्यत्राह–ईदृशे जन इति । ईदृशे जने प्राप्तरक्षःसहवासदोषे ॥ २१ ॥

२१ ] ति० टी०—असमर्थम् । स्वविजय इति शेषः ॥२१॥

गो० टी०—न दर्शयतीत्यर्धमेकं वाक्यम् ॥ २२ ॥

२२ ] ति० टी०—स्ववैभवमवष्टभ्याह—चापमिति॥२२॥

रा० टी०—चापमिति । चापं शरांश्चानय तत्प्रयोजनमाह–समुद्रं शोषयिष्यामि शरैरिति शेषः अतः प्लवङ्गमाः पद्भ्यां यान्तु तरन्तु ॥ २२ ॥

गो० टी०—अपि कदाचिदात्मानं दर्शयेदिति करुणया समुद्रं वाचा निर्भर्त्स्य कर्मणापि निर्भर्त्सयितुमुपक्रमते–चापमानयेति । एवम् विलम्ब्य करणं क्रमेण निर्भर्त्स्य कार्यं कारयितुम् । अन्यथा सद्य एव शोषयेत् । चापमानय निर्गुणं वशीकर्तुं सगुणमानयेत्याशयः । चापमानय अस्यानम्रत्वं निवर्तयितुं नम्रं चापमानय । समुद्रस्य शेषशय्यात्वेन तस्मिन्किंचित्सौहार्दवता लक्ष्मणेन क्षणं विलम्बः कृतः । अत आह— सौमित्र इति । सुमित्रावचनमेव कर्तव्यं ज्येष्ठवचनं तु न कर्तव्यमिति नियमोस्ति । यद्वा सौमित्रे रामे प्रमादं माकार्षीरिति मात्रोपदिष्टं मा विस्मार्षीः । अथ चापमात्रमानीतं तदाह–शरांश्चेति । लीलाप्रयोगार्हेषु केषु चिदानीतेष्वाह–आशीविषोपमानिति । दृष्टिविषाः सर्पा आशीविषा इत्युच्यन्ते । किमर्थं शरानयनमिति विलम्ब्य सौमित्रिणा पृष्ट आह–सागरमिति। एकेनैव दग्धुं सामर्थ्येपि शरानित्युक्तिस्तत्संबन्धेन सप्तसाग-

१ एतदाद्ययोरर्धयोः पाठव्यत्यासः गो. पुस्तके । २ नागानामिति गो. पाठः । ३ छिन्नानीति गो. पाठः । ४ सागरमिति रा. पाठः ।

अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् । वेलासु कृतमर्यादं सहस्रोर्मिसमाकुलम् ॥ २३ ॥
निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् । महार्णवं क्षोभयिष्ये महादानवसंकुलम् ॥ २४ ॥
एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः । बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ॥ २५ ॥
संपीड्य च धनुर्घोरं कम्पयित्वा शनैर्जगत् । मुमोच विशिखानुग्रान्वज्रानिव शतक्रतुः ॥ २६ ॥
ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः । प्रविशन्ति समुद्रस्य जलं वित्रस्तपन्नगम् ॥ २७ ॥
तोयवेगः समुद्रस्य समीनमकरो महान् । स बभूव महाघोरः समारुतरवस्तथा ॥ २८ ॥
महोर्मिजालचलितः शङ्खजालसमावृतः । सधूमः परिवृत्तोर्मिः सहसासीन्महोदधिः ॥ २९ ॥
व्यथिताः पन्नगाश्चासन्दीप्तास्या दीप्तलोचनाः । दानवाश्च महावीर्याः पातालतलवासिनः ॥ ३० ॥
ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तथा । विन्ध्यमन्दरसंकाशाः समुत्पेतुः सहस्रशः ॥ ३१ ॥
आघूर्णिततरङ्गौघः संभ्रान्तोरगराक्षसः । उद्वर्तितमहाग्राहः संघोषो वरुणालयः ॥ ३२ ॥

रानपि शोषयितुमिच्छया । कोपातिशयेन स्वबलमज्ञात्वा वा तादृशोक्तिः । शोषयिष्यामीति वदतः किं शरेणेति न शङ्कनीयम् । छिन्नं भिन्नं शरैर्दग्धमिति रामशराणां दाहकत्वसंभवात् । अन्तरेणापि चतुर्थभूतं जगन्निर्वाहं करिष्यामीति भावः । सागरम् । यदयं ज्ञातिविरोधमाचरति तर्हि वयमपि ज्ञातिकृत्यं कुर्म इति भावः । सागरं शोषयिष्यामि अनेकसहस्रवानरमेक एव हरिष्यामि किं तत इत्याह—पद्भ्यामिति । एकैकस्य पदद्वयं गमनसाधनमिति द्विवचनम् । वानराणां हि द्वावेव पादौ द्वौ हस्तौ ग्रहणभक्षणादीनां ताभ्यामेव दर्शनात् । अनेन कृतस्य कार्यविच्छेदस्यानुरूपमखं वानरपादाभ्यामेव दर्शयिष्यामीति भावः ॥ २२ ॥

२३ ] ति० टी०—वेलासु तीरेषु कृतमर्यादं तदलङ्घने कृतनियमम् ॥ २३ ॥

रा० टी०—अद्येति । वेलासु कृता मर्यादास्थितिनियमो येन तम् । अक्षोभ्यमपि सागरं क्षोभयिष्यामि ॥ २३ ॥

गो० टी०—पक्षान्तरमाह—अद्येति । अर्धमेकं वाक्यम् ॥ २४

गो० टी०—पुनः पक्षान्तरमेवाह—वेलास्विति । वेलासु चतुर्षु तीरेषु । कृतमर्यादं कृतव्यवस्थम् । कदाचिदपि वेलाम् अनतिवर्तमानमित्यर्थः । निर्मर्यादं करिष्यामि अव्यवस्थं करिष्यामि । भूतले प्लावयिष्यामीत्यर्थः ॥ २५ ॥

२४–२५ ] ति० टी०—निर्मर्यादं लङ्घितवेलम् ॥२४॥२५॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—निर्मर्यादमिति । महादानवैः संकुलं क्षोभयिष्ये ॥ २४ ॥

गो० टी०—समुद्रेण चिरपरिपोषिता दानवादय एनं रक्षिष्यन्तीत्यत्राह—महार्णवमिति । दानवैः सह क्षोभयिष्यामीत्यर्थः ॥ २६ ॥

रा० टी०—एवमिति । क्रोधेन विस्फारिते ईक्षणे यस्य स रामः युगान्ताग्निरिव ज्वलन् सन् दुर्धर्षो बभूव ॥ २५ ॥

गो० टी०—एवमिति । विस्फारितेक्षणः विवर्तितनयनः ॥ २७ ॥

२६–२७ ] ति० टी०—घोरं धनुः शनैः संपीड्य संपीडनपूर्वं सज्यं कृत्वा जगत्कम्पयित्वा । ज्याघोषेणेति शेषः २६॥२७

रा० टी०—संपीड्येति । घोरं भयंकरं धनुः शनैः संपीड्य अत एव जगत् कम्पयित्वा शतक्रतुर्वज्रानिव विशिखान् बाणान्मुमोच ॥ २६ ॥

गो० टी०—संपीड्येति । संपीड्य दृढमुष्टिना मध्यमवलम्ब्य । कम्पयित्वा भयकम्पितं कृत्वा । जगत् जगत्स्थजन्तून् । वज्रानित्यभूतोपमा ॥ २८ ॥

रा० टी०—ते इति । ते रामेण मोचिताः सायकोत्तमाः वित्रस्तपन्नगं यथा भवति तथा समुद्रस्य जलं प्रविशन्ति ॥२७॥

गो० टी०—त इति । तेजसा ज्वलन्त इत्यन्वयः । प्रविशन्ति प्राविशन् । त्रस्तपन्नगमिति क्रियाविशेषणम् ॥ २९ ॥

२८–३२ ] ति० टी०—समुद्रस्य तोयवेगः संक्षोभः । समारुतरवो बाणगणप्रवर्तितमारुतशब्दसहितः ॥ २८ ॥ ३२ ॥

रा० टी०—तोयेति । समीनमकरः मीनादिसहितः समारुतरवः बाणवेगहेतुकप्रवृद्धमारुतजनितरवविशिष्टः समुद्रस्य स तोयवेगो महाघोरो बभूव ॥ २८ ॥

गो० टी०—तोयवेग इति । तोयवेगः तरङ्गविततिः । मारुतरवः वातजन्यरवः समारुतरवः वातसंघट्टनजन्यरवसहित इत्यर्थः ॥ ३० ॥

रा० टी०—महोर्मीति । महोर्मीणां जालेन समूहेन चलितः स धूमः बाणोत्थवह्निहेतुकधूमविशिष्टो महोदधिः परिवृत्तोर्मिः ऊर्मिरहितदेशेऽपि ऊर्मिविशिष्ट आसीत् ॥ २९ ॥

गो० टी०—महोर्मीति । तीरे महोर्मिमालावितताः । अन्तस्तरङ्गजालाकृष्टशङ्खशुक्तिसमावृतः सज्वालशरप्रवेशेन सधूमः । मध्ये शराग्निशोषणेन परिवृत्तोर्मिश्चासीदित्यन्वयः ॥ ३१ ॥

१ सहस्रेति गो. पाठः । २ शरैरिति गो. पाठः । ३ सलिलं त्रस्तपन्नगमिति गो. पाठः । ४ सनक्रेति गो. पाठः । ५ संमिति गो. पाठः । ६ मालावितत इति गो. पाठः । ७ शुक्तीति गो. पाठः । ८ सधूमपरीति गो. पाठः । ९ तदेति गो. पाठः । १० संवृत्तसलिलाशय इति गो. पाठः ।

ततस्तु तं राघवमुग्रवेगं प्रकर्षमाणं धनुरप्रमेयम् ।
सौमित्रिरुत्पत्य विनिःश्वसन्तं मामेति चोक्त्वा धनुराललम्बे ॥ ३३ ॥
एतद्विनापि ह्युदधेस्तवाद्य संपत्स्यते वीरतमस्य कार्यम् ।
भवद्विधाः क्रोधवशं न यान्ति दीर्घं भवान्पश्यतु साधुवृत्तम् ॥ ३४ ॥
अन्तर्हितैश्चापि तथान्तरिक्षे ब्रह्मर्षिभिश्चैव सुरर्षिभिश्च ।
शब्दः कृतः कष्टमिति ब्रुवद्भिर्मामेति चोक्त्वा महता स्वरेण ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

## द्वाविंशः सर्गः ।

---

रामेण क्रोधाद्धनुषि संहितं ब्रह्मास्त्रं दृष्ट्वा सागरो भीत आत्मानं दर्शयित्वा प्राञ्जलिर्नीलकृतं सेतुं धारयिष्यामीत्युक्त्वाऽन्तर्दधे । ततो नीलः सागरे सेतुं बबन्ध ।

अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः । अद्याहं शोषयिष्यामि सपातालं महार्णवम् ॥ १ ॥

---

रा० टी०–व्यथिता इति । दीप्तास्याः पन्नगाः दानवाश्च व्यथिता आसन् ॥ ३० ॥

गो० टी०–व्यथिता इति । आपातालं शराः प्रविष्टा इति भावः ॥ ३२ ॥

रा० टी०–ऊर्मय इति । सिन्धुराजस्य सहस्रश ऊर्मयः समुत्पेतुः ॥ ३१ ॥

गो०टी०–तात्कालिकतरङ्गौन्नत्यं वर्णयति–ऊर्मय इति ३३

रा० टी०–आघूर्णितेति । आघूर्णिता तरङ्गौघाः यस्मिन् अत एव उद्वर्तिताः ऊर्ध्वं प्रक्षिप्ताः महाग्राहाः यस्य अत एव सघोषः महाघोषसहितः वरुणालयो बभूवेति शेषः ॥ ३२ ॥

गो० टी०–उक्तानुवादेन विशेषान्तरमाह–आघूर्णितेति । आघूर्णितसंभ्रान्तोद्वर्तितपदान्येकार्थानि ॥ ३४ ॥

३३ ] ति० टी०–सौमित्रिरुत्पत्योपगम्य विनिःश्वसन्तं रामं मामेत्युक्त्वा समुद्रसत्त्वनाशनं न कार्यमित्युक्त्वा धनुराललम्बे । धृतवानित्यर्थः ॥ ३३ ॥

रा० टी०–तत इति । ततः सागरातिक्लेशदर्शनानन्तरं सौमित्रिरुत्पत्य रामसमीपं प्राप्य मा मा एवं न कार्यमित्यर्थः इति राममुक्त्वा धनुराललम्बे पुनः प्रहारनिवारणाय जग्राह ३३

गो० टी०–ततस्त्विति । तुशब्देन पूर्वसंधानाद्वैषम्यमुक्तम् । अप्रमेयम् अपरिच्छेद्यवैभवम् प्रकर्षमाणम् अमोघशरसन्धानायेति भावः । समुच्छ्वसन्तं कोपेनेति शेषः । तं राघवम् उत्पत्य झटित्यागत्य मा मेत्युक्त्वा एतादृशं धनुराकर्षणं मा कुर्वित्युक्त्वा । भयातिशयाद्वीप्सा । अनिवर्तमाने तस्मिन् धनुराललम्बे ॥ ३५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

३४ ] ति० टी०–एतद्विनापि क्षोभणं विनापि । साधुवृत्तं समीचीनोपायमेव दीर्घं यथा भवति तथा पश्यतु ॥ ३४ ॥

रा० टी०–एतदिति । उदधेः एतत् विनाशनं विनापि वीरतमस्य तव कार्यं संतरणं संपत्स्यते सेत्स्यति । ननु प्राप्तक्रोधस्य कथं निष्फलत्वमित्यत आह–भवद्विधाः भवत्सदृशाः क्रोधवशं न यान्ति अतः दीर्घं सार्वकालिकं साधुवृत्तं क्रोधादिराहित्यतया स्वस्थितिं भवान् पश्यतु संस्मरतु ॥ ३४ ॥

३५ ] ति० टी०–कष्टमिति ब्रुवद्भिर्ब्रह्म्यादिभिर्महता स्वरेण मामेत्युक्त्वा शब्दः हाहाशब्दः कृत इत्यर्थः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकविंशः सर्गः ॥ २१ ॥

रा० टी०–निवारणे स्वस्वातन्त्र्यं निवारयन्नाह–अन्तरिति । अन्तरिक्षे अन्तर्हितैः तिरोहिततया संस्थितैः महता स्वरेण कष्टमिति ब्रुवद्भिर्ब्रह्मर्षिप्रभृतिभिः मा मा एवं मा भूदित्यर्थः इत्युक्त्वा शब्दः कृतः किंच एको माशब्दोऽस्मच्छब्दप्रकृतिकद्वितीयान्तः ॥ एतेन तद्बोधनायैव मया निवार्यसे इति सूचितं तेन लक्ष्मणस्यापि किंचिद्भयं व्यक्तम् ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

१ ] ति० टी०–एवं प्राणिपीडावहे क्षोभे निवारिते शोषणप्रतिज्ञां संपादयितुमुपक्रमते–अथेति ॥ १ ॥

रा० टी०–लक्ष्मणप्रार्थनानन्तरकालिकं रामवृत्तान्तमाह–अथेत्यादिभिः । अथ लक्ष्मणवचनश्रवणानन्तरमपि रघुश्रेष्ठो रामः सागरं दारुणं भयंकरं वच उवाच । तदाकारमाह–सपातालं पातालसहितं महार्णवं शोषयिष्यामि ॥ १ ॥

गो० टी०–प्रथमं वानराणां तरणाय सागरं शरणं गत्वा

---

१ समुच्छ्वसन्तमिति गो. पाठः । २ एतदादि श्लोकद्वयं गो. पाठे नास्ति । ३ त्वमिति गो. पाठः । ४ महार्णवेति गो. पाठः ।

शरनिर्दग्धतोयस्य परिशुष्कस्य सागर । मया [1]निहतसत्त्वस्य पांसुरुत्पद्यते महान् ॥ २ ॥
मत्कार्मुकनिसृष्टेन [2]शरवर्षेण सागर । [3]परं तीरं गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥ ३ ॥
विचिन्वन्नाभिजानासि पौरुषं [4]नापि विक्रमम् । दानवालय संतापं मत्तो [5]नाम गमिष्यसि ॥ ४ ॥
ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् । संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥ ५ ॥
तस्मिन्विकृष्टे सहसा राघवेण शरासने । रोदसी संपफालेव [6]पर्वताश्च चकम्पिरे ॥ ६ ॥
तमश्च लोकमावव्रे दिशश्च न चकाशिरे । प्रतिचुक्षुभिरे चाशु सरांसि सरितस्तदा[7] ॥ ७ ॥
तिर्यक्च सह नक्षत्रैः संगतौ चन्द्रभास्करौ । भास्करांशुभिरादीप्तं तमसा च समावृतम् ॥ ८ ॥

तस्मिन्ननागते चापमानयेति वाचा भीषयित्वा तथाप्यनाविष्कृतनिजरूपं तं शरैः प्रक्षोभ्य तावताप्यनागतस्य तस्य भीतिमुत्पादयितुं ब्रह्मास्त्रसन्धानायोपक्रमत इत्याह—अथेत्यादिना । सपातालं पातालपर्यन्तमित्यर्थः ॥ १ ॥

२-३ ] ति० टी०—निहतानि सत्त्वानि यादांसि यस्य । उत्पद्यते । वर्तमानसामीप्ये लट् ॥ २ ॥ ३ ॥

रा० टी०—शरेति । शरेण निर्दग्धानि तोयानि यस्य अत एव परिशुष्कस्य अत एव मया निहतानि सत्त्वानि मकरादयो यस्य तस्य तव खाते महान् पांशुरुत्पद्यते उत्पत्स्यते ॥ २ ॥

गो० टी०—शरेति । शरनिर्दग्धतोयस्य निर्जलस्येत्यर्थः । परिशुष्कस्य भूम्यन्तर्गतजलशून्यस्य । शोषितसत्त्वस्य दग्धसत्त्वस्येत्यर्थः । ते महान् पांसुः अतिसूक्ष्मो रेणुः उत्पद्यते । वर्तमानसामीप्ये वर्तमानप्रयोगः । महावर्षेपि पुनर्यथा जललवोपि न तिष्ठति तथा करिष्यामीति भावः ॥ २ ॥

रा० टी०—मदिति । मत्कार्मुकेन निसृष्टेन परित्यक्तेन शरवर्षेण हेतुना प्लवङ्गमाः पद्भिरेव परं तीरं गमिष्यन्ति ॥ ३ ॥

गो० टी०—ननु सकलजलशोषणेन पातालमात्रपरिशोषात्तत्र गमनासंभवादाकाशेन गन्तव्यं ततो वरमिदानीं तथागमनं किं कोपेनेत्यत्राह—मत्कार्मुकेति । शरवर्षेण शरजालेन सेतुस्थानीयेन । सेतुबन्धादिक्लेशो मे न भवतीति भावः ॥ ३ ॥

४ ] ति० टी०—विचिन्वञ्जलादिदृष्ट्या दृष्टियुक्तः सन् । हे दानवालय पूर्वोक्तहेतोर्मत्तः संतापं प्राणनाशं निबन्धनं गमिष्यसि । नाम प्रसिद्धौ । इत्युक्त्वेति शेषः ॥ ४ ॥

रा० टी०—विचिन्वन्निति । विचिन्वन् विपुलजलादिपरिगृह्णन् त्वं पौरुषं मत्परपुरुषत्वं विक्रमं च मत्तस्त्वं नाभिजानासि अतः संतापं नाम प्रसिद्धं गमिष्यसि प्राप्स्यसि ॥ ४ ॥

गो० टी०—विचिन्वन्निति । पौरुषं बलं विक्रमं पराक्रमं च विचिन्वन् विशेषेण पर्यालोचयितुं नाभिजानासि । "लक्षणहेत्वो०" इति शतृप्रत्ययः । इदमज्ञानं सहवासकृतमित्याशयेन दानवालयेति संबोधनम् । मत्तो भाविनं संतापं च नाभिगमिष्यसि न ज्ञास्यसि । मत्पराक्रममजानन् मत्तो भाविन्नात्मपीडामपि न ज्ञास्यस्येवेति भावः ॥ ४ ॥

५ ] ति० टी०—अस्त्रेण तन्मन्त्रेण संयोज्याभिमन्त्र्य एवमभिमन्त्रितं शरं धनुषि संयोज्य ॥ ५ ॥

रा० टी०—ब्राह्मेणेति । ब्रह्मदण्डनिभं शरं ब्राह्मेण ब्रह्मदेवताकेन अस्त्रेण अस्त्रप्रयोगमन्त्रेण संयोज्य अभिमन्त्र्य श्रेष्ठे धनुषि संयोज्य च विचकर्ष ॥ ५ ॥

गो० टी०—ब्राह्मेणेति । ब्रह्मदण्डः ब्रह्मशापः । तद्वदमोघमित्यर्थः । यद्वा ब्रह्मदण्डः केतुविशेषः । तथोक्तं नारदसंहितायां—'पितामहात्मजः क्रूरस्त्रिवर्णः शिखरान्वितः । ब्रह्मदण्डाह्वयः केतुः सर्वभूतविनाशनः' इति । ब्राह्मेणास्त्रेण ब्रह्मास्त्रमन्त्रेण संयोज्य अभिमन्त्र्य । तद्धनुर्विचकर्ष ॥ ५ ॥

६-७ ] ति० टी०—संपफालेव विशशरतुरिव । एकवचनमार्षम् ॥ ६ ॥ ७ ॥

रा० टी०—तस्मिन्निति । शरासने विकृष्टे सति रोदसी द्यावापृथिव्यौ संपफालेव रोदसीत्यव्ययमेकवचनान्तमत्र अत एव संपफालेति क्रियामूपपन्ना अत एव द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति चेत्युक्तम् एतेनैकवचनमार्षमित्युक्तिश्चिन्त्येति दिक् ॥ ६ ॥

रा० टी०—तत्र दुर्निमित्तमाह—तम इति । तमः लोकं भुवनमावव्रे छादयामास अत एव दिशो न चकाशिरे अत एव सरांसि सरितश्च प्रतिचुक्षुभिरे ॥ ७ ॥

गो० टी०—अथास्त्रसन्धानस्य मरुकान्तारवर्तिनां युगपद्विनाशहेतुत्वात्तत्काले तदुचितमहोत्साहान् दर्शयति—तस्मिन्नित्यादिना । शरसन्धानकालिकं लोकस्य भयं दर्शयतीत्यप्याहुः । रोदसी द्यावापृथिव्यौ संपफालेव भिन्ने इव एकवचनमार्षम् । द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी इत्यमरः ॥ ६ ॥ ७ ॥

८ ] ति० टी०—नक्षत्रैः सह तिर्यक्संगतौ । यथा प्राप्तपूर्वापरमार्गप्रतिरोधाद्दक्षिणोत्तरमार्गगामिनावभूतामित्यर्थः । भास्करांशुभिरादीप्तमपि तमसा संवृतम् । आकाशमासीदिति शेषः । अनेन विरुद्धयोस्तेजस्तिमिरयोः सामानाधिकरण्यरूप उत्पातः सूचितः ॥ ८ ॥

रा० टी०—तिर्यगिति । चन्द्रभास्करौ नक्षत्रैः सह

१ शोषितेति गो. पाठः । २ विसृष्टेनेति गो. पाठः । ३ पारं तेऽद्येति गो. पाठः । ४ वेति गो. पाठः । ५ नाद्यीति गो. पाठः । ६ परीति गो. पाठः । ७ तथेति गो. पाठः ।

प्रचकाशे तदाकाशमुल्काशतविदीपितम् । अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ॥ ९ ॥
वेपुःप्रकर्षेण ववुर्दिव्यमारुतपङ्क्तयः । बभञ्ज च तदा वृक्षाञ्जलदानुद्वहन्मुहुः ॥ १० ॥
आरुजंश्चैव शैलाग्राञ्शिखराणि बभञ्ज च । दिविचैं स्म महावेगाः संहताः समहास्वनाः ॥ ११ ॥
मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा । यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेः समम् ॥ १२ ॥
अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम् । शिशियरे चाभिभूतानि संत्रस्तान्युद्विजन्ति च ॥ १३ ॥
संप्रविव्यथिरे चापि न च पस्पन्दिरे भयात् । सह भूतैः सतोयोर्मिः सनागः सहराक्षसः ॥ १४ ॥
सहसाभूत्ततो वेगाद्भीमवेगो महोदधिः । योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् ॥ १५ ॥

तिर्यक् बाणतेजसा मार्गसंरोधात् तिर्यङ्मार्गं सक्तौ प्राप्तौ भास्करांशुभिः आदीप्तमपि तमसा समावृतं नभो बभूवेति शेषः ॥ ८ ॥

गो० टी०–तिर्यक् चेति श्लोकद्वयमेकान्वयम् । चन्द्रभास्करौ नक्षत्रैः सह तिर्यग्वक्रं यथा भवति तथा सक्तौ तिर्यग् जग्मुः । भयादिति भावः । आदीप्तम् ईषद्दीप्तम् । मन्दरश्मित्वात्तमसावृतत्वाच्च सूर्यस्येति भावः । समावृतं सम्यगावृतम् । उल्काशतविदीपितम् । उल्कालक्षणमुक्तं वराहमिहिरेण 'उल्का शिरसि विशाला निपतन्ती वर्द्धते च तनुपुच्छेति' । निर्घातलक्षणं तेनैवोक्तं–'पवनः पवनाभिहतो गगनादवनौ यदा समापतति । भवति तदा निर्घातः स च पापो दीर्घखगविरुतः' इति ॥ ८ ॥ ९ ॥

९ ] ति० टी०–निर्घाता अशनयः, निर्जग्मुर्निःसृताः॥९॥

रा० टी०–प्रचकाश इति । उल्काशतैर्विदीपितमाकाशं प्रचकाशे निर्घाताः वज्राः अन्तरिक्षान्निर्जग्मुः ॥ ९ ॥

१०–११ ] ति० टी०–दिव्यमारुतपङ्क्तयः परिवहादिवातस्कन्धा वपुःप्रकर्षेण महावेगेन ववुः । बभञ्ज चेति । मारुतपङ्क्तिरिति शेषः । उद्वहन् । मारुतसमूह इति शेषः अग्रेऽप्येष एव कर्ता ॥ १० ॥ ११ ॥

रा० टी०–वपुरिति । दिव्यमारुतपङ्क्तयः वातसमूहाः वपुःप्रकर्षेणातिवेगेनेत्यर्थः ववुः । अथ पृथक् । बभञ्जेति । जलदान् उद्वहन् महावातः वृक्षान् बभञ्ज शैलाग्रान् मुख्यगिरीन् आरुजन् सन् शिखराणि बभञ्ज ॥ १० ॥

गो० टी०–पुस्फुरुरिति । पुस्फुरुः चेरुः । मारुतपङ्क्तयः आवहोद्वहादिवातस्कन्धाः । दिव्याः श्लाघ्याः ॥ १० ॥

गो० टी०–बभञ्जेति । उद्वहन् ऊर्ध्वं नयन् । शैलाग्रान् पर्वताग्रप्रदेशान् । शिखराणि खण्डपर्वतान् । अरुजन् अपीडयन् । बहुवचनमार्षम् ॥ ११ ॥

रा० टी०–दिवीति । महावेगाः महाशनयः वैद्युतान् विद्युत्सदृशान् अग्नीन् मुमुचुः ॥ ११ ॥

गो० टी०–दिविस्पृश इति । ते वैद्युताग्नयः तदा महाशनयोऽभवन् । अशनिस्वरूपं मिहिरेणोक्तम्–अशनिः स्वनेन महता नृकुञ्जराश्वमृगाश्मवेश्मतरुपशुष्वपि निपतति विदारयन्ती धरातलं चक्रसंस्थानेति ॥ १२ ॥

१२ ] ति० टी०–ते पतमाना महाशनयो महावेगत्वादिगुणा वैद्युतानग्नीन्मुमुचुः । अशनेः सममशनिघोषतुल्यघोषम् ॥ १२ ॥

रा० टी०–यानीति । दृश्यानि यानि भूतानि तानि अशनेः स[ह] चुक्रुशुः अदृश्यानि च भूतानि भैरवस्वनं मुमुचुः॥१२

गो० टी०–यानीत्यादि श्लोकद्वयमेकं वाक्यम् । यानि भूतानि दृश्यानि मनुष्यादीनि अदृश्यानि पिशाचादीनि तानि सर्वाणि भूतानि सन्त्रस्तानि अत एवोद्विजन्ति कम्पमानानि सन्ति । अशनेः समम् अशनिस्वरसमं यथा तथा चुक्रुशुः तथा [भैर]वस्वनं मुमुचुः । ततः शिशियरे सुप्तानि । सुप्तवद्भूमौ [प]तितानीत्यर्थः । तत्रापि संप्रविव्यथिरे चिन्तया दुःखितानि । भयान्न पस्पन्दिरे न चलितानि ॥ १३ ॥ १४ ॥

१३ ] ति० टी०–संत्रस्तानि भीतानि, उद्विजन्ति कम्पमानानि, शिशियरे शयितान्यभूवन् । नोत्थातुं समर्थानीत्यर्थः ॥ १३ ॥

रा० टी०–शिशियर इति । अभिभूतानि अशनिस्वनैः पराभूतानि अत एव संत्रस्तानि भीतानि अत एव उद्विजन्ति चलितचित्तानि भूतानि संप्रविव्यथिरे शिशियरे पुनश्च अत एव भयात् न पस्पन्दिरे चेलुः ॥ १३ ॥

१४ ] ति० टी०–तदेव विवृणोति–संप्रविव्यथिर इति ॥ १४ ॥

१५ ] ति० टी०–संप्लवः प्रलयस्ततोऽन्यत्रापि । योजनं व्यतिचक्राम ॥ १५ ॥

रा० टी०–सहेति । भूतादिसहितो महोदधिः ततः तस्मात् वेगात् बाणजवाद्धेतोः महावेगो बभूव अत एव अन्यत्र संप्लवात् वेलातोऽधिकं प्रसरणाद्धेतोः वेलां योजनं व्यतिचक्राम । सार्धश्लोक एकान्वयी ॥ १४ ॥ १५ ॥

गो० टी०–अथ समुद्रराजस्योत्थानं सूचयति–सह भूतैरित्यादिना । ततो वेगात्पूर्वसर्गान्तोक्ताद्भीमवेगात् सहसा

१ पुस्फुरुश्च घना दिव्या दिवीति गो. पाठः । २ अपीति गो. पाठः । ३ अरुजन्निति गो. पाठः । ४ प्रभञ्जन इति गो. पाठः । ५ स्पृशो महामेघाः संगता इति गो. पाठः । ६ स्विति रा. पाठः ।

तं तथा समतिक्रान्तं नातिचक्राम राघवः । तमुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६ ॥
ततो मध्यात्समुद्रस्य सागरः स्वयमुत्थितः । उदयाद्रिमहाशैलान्मेरोरिव दिवाकरः ॥ १७ ॥
पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत । स्निग्धवैदूर्यसंकाशो जाम्बूनदविभूषणः ॥ १८ ॥
रत्नमाल्याम्बरधरः पद्मपत्रनिभेक्षणः । सर्वपुष्पमयीं दिव्यां शिरसा धारयन्स्रजम् ॥ १९ ॥
जातरूपमयैश्चैव तपनीयविभूषणैः । आत्मजानां च रत्नानां भूषितो भूषणोत्तमैः ॥ २० ॥
धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव । एकावलीमध्यगतं तरलं पाण्डरप्रभम् ॥ २१ ॥
विपुलेनोरसा बिभ्रत्कौस्तुभस्य सहोदरम् । आघूर्णिततरङ्गौघः कालिकानिलसंकुलः ॥
गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः । उद्वर्तितमहाग्राहः संभ्रान्तोरगराक्षसः ॥
देवतानां सुरूपाणां नानारूपाभिरीश्वरः । सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् ॥
अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ॥ ॥ २२ ॥

शरसन्धानसमय एव भीमवेगोभूत् भीमप्रवाहवेगोभूत् । केवलशरमोक्षकृतात् क्षोभात् ब्रह्मास्त्रमोक्षारम्भे महान् क्षोभोभूदित्यर्थः ॥ १५ ॥

गो॰ टी॰—वेगफलं दर्शयति—योजनमित्यादिना । सार्धश्लोक एकान्वयः । संप्लवात् वारिपूरेण वेलामन्यत्र वेलां विनेत्यर्थः । अथवा संप्लवादन्यत्र प्रलयं विना । वेलां योजनं योजनपर्यन्तं व्यतिचक्राम अतिक्रान्तवान् । योजनमन्तर्जीर्णो भूदित्यप्याहुः तं समतिक्रान्तं पलायमानं नातिचक्राम पलायमानं प्रति शस्त्रप्रयोगरूपातिक्रमं न चकार ॥ १६ ॥

१६–१९ ] ति॰ टी॰—तं प्रसिद्धमुच्यमानविशेषणं तं दक्षिणदेशस्थं नदनदीपतिं दृष्ट्वा राघवो रामो नातिचक्राम न चचाल । अस्त्रं न परावर्तितवानित्यर्थः अस्त्रं न त्यक्तवानिति वा ॥ १६ ॥ १९ ॥

रा॰ टी॰—तमिति । तथा उक्तप्रकारेण समतिक्रान्तम् उद्धतं तं चोरप्रायं तं प्रसिद्धं नदनदीपतिं रामो नातिचक्राम तत्रैव तस्थावित्यर्थः ॥ १६ ॥

रा॰ टी॰—तत इति । समुद्रस्य तज्जलस्य मध्यात् सागरः मेरोर्दिवाकर इव स्वयमुत्थितः ॥ १७ ॥

गो॰ टी॰—तत इति । समुद्रस्य मध्यात् उन्नतात् स्वयं सागरः समुद्राभिमानिदेवता दिवाकर इव बभाविति शेषः १७

रा॰ टी॰—पन्नगैरिति । स्निग्धवैदूर्यसंकाशः समुद्रः पन्नगैः सह प्रत्यदृश्यत ॥ १८ ॥

रा॰ टी॰—रक्तेति । सर्वपुष्पमयीं निखिलपुष्पविशिष्टां स्रजं धारयन् ॥ १९ ॥

गो॰ टी॰—पन्नगैरित्यादि । जाम्बूनदं जम्बूनदीप्रभवं स्वर्णम् । रत्नमाल्यं रत्नवैकक्ष्यमाला । जातरूपमयैः आकरजस्वर्णप्रचुरैः तपनीयविभूषितैः रत्नकोन्नाहद्रुतकनकविभूषितैः रत्नानां संबन्धिभिर्भूषणोत्तमैः । एकावली मुक्तावली । तरलं नायकरत्नम् । आघूर्णितः चलितः । कालिका मेघपङ्क्तिः । मेघजालेपि कालिकेत्यमरः । तयाऽनिलेन च संकुलः क्षुभितः । मेघानिलौ समुद्रस्य सहचराविति प्रसिद्धिः ॥ १८–२२ ॥

२० ] ति॰ टी॰—जातरूपं सुवर्णम्, तपनीयं तप्तकाञ्चनमधिकवर्णम्, स्वोदरजातरत्नखचितभूषणोत्तमैर्भूषितः २०

रा॰ टी॰—जातरूपतपनीययोः अवान्तरभेदान्न पौनरुक्त्यम् आत्मजानां रत्नानां भूषणोत्तमैर्भूषितः ॥ २० ॥

२१ ] ति॰ टी॰—अतएव विविधधातुभिर्मण्डितः शैल इव । कालिकानिलैर्मेघवातैः संकुलः । ' मेघजाले च कालिका ' ॥ २१ ॥

रा॰ टी॰—आघूर्णिताः तरङ्गौघाः यस्य कालिकानिलैर्मेघवातैः संकुलः मेघजाले च कालिकेति कोशः ॥ २१ ॥

२२ ] ति॰ टी॰—समुपक्रम्योपगम्य । पूर्वमामन्त्र्य हे रामेति प्रथमं संबोध्य । शरपाणिनं शरपाणिम् ॥ २२ ॥

रा॰ टी॰—आपगाभिर्नदीभिः समावृतः सागरः समुपक्रम्य रामसमीपं प्राप्य आमन्त्र्य संबोध्य राघवमब्रवीत् । सार्धश्लोकचतुष्टयमेकान्वयि ॥ २२ ॥

गो॰ टी॰—उद्वर्तितेत्यादि सार्धश्लोक एकान्वयः । उद्वर्तितः उद्भ्रामितः । समुपक्रम्य समुपागम्य । स्वसौजन्यं पुरस्कर्तुं पूर्वम् आमन्त्र्य आहूय प्रकृष्टो मूर्ध्नि कृतोञ्जलिः यस्यासौ प्राञ्जलिः । शरपाणिनमिति नकारान्तत्वमार्षम् । स्वविरोधिनो मरुवासिनो रामेण घातयितुं स्वयं रावणभीतत्वेन तत्संहारक्षममस्य पराक्रमं परीक्षितुं च समुद्र एतावत्पर्यन्तं विलम्बितवानिति बोध्यम् ॥ २३ ॥

१ तदेति गो॰ पाठः । २ समुद्धतमिति गो॰ पाठः । ३ सागरस्य समुत्थित इति गो॰ पाठः । ४ उदयं ह्येति गो॰ पाठः । ५ विभूषित इति गो॰ पाठः । ६ रक्तेति रा॰ पाठः । ७ विभूषितैरिति गो॰ पाठः । ८ श्लोकोऽयमधिकः गो॰ पाठे ।

पृथिवी वायुराकाशमापो ज्योतिश्च राघव । स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः॥ २३ ॥
तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः । विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ॥ २४ ॥
न कामान्न च लोभाद्वा न भयात्पार्थिवात्मज । रागा(ग्रा)हनक्राकुलजलं स्तम्भयेयं कथंचन ॥ २५ ॥
विधास्ये येन गन्तासि विषहिष्येऽप्यहं तथा । नै ग्राहा विधमिष्यन्ति यावत्सेना तरिष्यति ॥
हरीणां तरणे राम करिष्यामि यथा स्थलम् ॥ २६ ॥
तमब्रवीत्तदा रामः शृणु मे वरुणालय । अमोघोऽयं महाबाणः कस्मिन्देशे निपात्यताम्॥ २७ ॥
रामस्य वचनं श्रुत्वा तं च दृष्ट्वा महाशरम् । महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ २८ ॥

---

२३ ] ति० टी०—एतावत्कालमनागमने स्वीयमगाधत्वमेव कारणमिति सूचयितुं सामान्यतो भूतस्थितिमाह—**पृथिवीति** । पृथ्वीस्वभावः काठिन्याद्धारणम्, वायोः सदा संचारतः संयोजनवियोजने, आकाशस्यावकाशदानम्, अपां स्यन्दनं संश्लेषणं च, ज्योतिषः प्रकाशभस्मीकरणे । शाश्वतं मार्गमनादिं ब्रह्मसृष्टं स्वरूपस्थितिप्रकारमास्थिताः सन्तः स्वे स्वे भावे तिष्ठन्ति ॥ २३ ॥

रा० टी०—तदाकारमाह—**पृथिवीति** । शाश्वतं निरन्तरं मार्गं ब्रह्मसृष्टिमाश्रिताः पृथिव्यादयः स्वभावे धारणादौ तिष्ठन्ति काठिन्याद्धारणं पृथिव्याः सदा संचारात् संयोजनवियोजने वायोः अवकाशदानमाकाशस्य स्पन्दनश्लेषणे अपां प्रकाशभस्मीकरणे ज्योतिषः स्वभाव इति विवेकः ॥ २३ ॥

गो० टी०—किं विभोस्तव मया कर्तव्यं किं गाधत्वम् उत जलस्तम्भनम् आहोस्वित्सेतुबन्धनानुकूल्यमित्याशङ्क्य न तावदाद्यः पक्ष इत्याह श्लोकद्वयेन—**पृथिवीति** । सौम्य प्रसन्न । अनेनाञ्जलिकरणानन्तरमेव रामः प्रसन्न इति गम्यते । पृथिव्यादयः पञ्चपदार्थाः शाश्वतं नित्यं मार्गं मर्यादाम् आश्रिताः सन्तः स्वभावे काठिन्यतिर्यग्गमनावकाशप्रदानागाधत्वोर्ध्वज्वलनादिस्वस्वभावे तिष्ठन्ति । स्वस्वभावं नातिक्रामन्तीत्यर्थः ॥२४॥

२४ ] ति० टी०—तत्तस्मादहमप्यगाधत्वाशक्यतरणत्वरूपाशक्यप्लवत्वादिस्वभावः । गाधः गाधत्वं मम विकारो भवेत्, एतदेतस्माद्धेतोस्तेऽहं प्रवदामि । उपायमिति शेषः॥२४॥

रा० टी०—**तदिति** । तत् ब्रह्मसृष्ट्यवलम्बित्वाद्धेतोः अगाधः तलस्पर्शाभाववान् अत एव अप्लवस्तरणरहितोऽहमस्मीति एषः गाधाभावादिः मम स्वभाव एव अतः कामादिना नक्राकुलजलं कथञ्चन न स्तम्भयेयम् अतः यत् यस्मात् उपायाद् विकारः रूपान्तरं प्राप्तः सन् गाधस्तलस्पर्शित्वं भवेत् एतदुपायम् अहं ते प्रवदामि । श्लोकद्वयमेकान्वयि ॥२४॥२५॥

गो० टी०—एवु कस्ते स्वभाव इत्यत आह—**तदिति** । तत् तस्मात् सर्वेषां पृथिव्यादीनां स्वस्वभावानतिलङ्घित्वात् । अहम् अगाधः अप्लवः अलङ्घ्यश्चेति यत् एषः ममापि स्वभावः । तस्मादेवमेव मया स्थातव्यम् । गाधः प्लवविषयोहमिति यत् एषः मम विकारः अन्यथाभावः । तथा मया न स्थातुं युक्तम् । एतत् उक्तस्वरूपं ते प्रवदामि प्रावदम् । प्रवदामीति पाठेऽप्ययमेवार्थः । धातूनामनेकार्थत्वात् ॥ २४ ॥

२५ ] ति० टी०—ननु मा भूत्ते गाधता स्वस्वरूपस्तम्भनेनास्माकं गतिं देहीत्यत्राह—**नेति** । कामाद्यन्यतमेनापि समुदितेन वा न जलं स्तम्भये । जलरूपस्य मे स्वरूपपीडाप्रसङ्गात् । तत्र कामोऽभिलाषः, लोभः स्ववस्तुपरित्यागासहिष्णुता, रागोऽनुरागः ॥ २५ ॥

गो० टी०—द्वितीयपक्षोऽप्यनुपपन्न इत्याह—**न कामादिति** । कामात् अर्थेच्छया लोभात् लब्धवस्तुत्यागासहिष्णुतया भयात् दण्डभयात् पार्थिवात्मजेत्यनेन सर्वमर्यादास्थापकोसीति द्योतयति । न स्तम्भयेयं पीडाकरत्वादिति भावः ॥ २६ ॥

२६ ] ति० टी०—तर्हि कथं कार्यनिर्वाहस्तत्राह—**विधास्ये इति** । विधास्ये करिष्यामि । उक्तमेवार्थं स्थैर्यायाह—**न ग्राहा इति** । हरीणां तरणे तरणनिमित्तं तथा स्थलं करिष्यामि, यथा यावत्सेना प्रतरिष्यति तावद्ग्राहा वानरान्न प्रहरिष्यन्ति । वक्ष्यमाणमार्गेण मयि सेतुं कुर्विति युक्तं भवति । एतद्विधानं च भयाद्रागाद्वेति बोध्यम् ॥ २६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—**विधास्य इति** । येनोपायेन त्वं गन्तासि ग्राहाश्च न विधमिष्यन्ति यावत्सेना सकलसैन्यं तरिष्यति अहं च विषहिष्ये खेदं न प्राप्नुयां तमुपायमहं विधास्ये कथयिष्यामि ॥ २६ ॥

गो० टी०—तृतीयं तु पक्षं कक्षीकरोमीत्याह—**विधास्य** इत्यादिसार्धश्लोकेन । येन यथाहं विषहिष्ये शक्ष्यामि तथा विधास्ये । किं तच्छक्यमित्यपेक्षायामाह—**ग्राहेत्यादि** । यावत्सेना तरिष्यति तावत् ग्राहा न प्रहरिष्यन्ति । जलेपि हि केचिद्रमिष्यन्ति । हरीणां तरणे विषये । यथा स्थलं भवति यथा सेतुमार्गो भवति तथा करिष्यामि । सेतुबन्धद्रव्यापकर्षणादिविघ्नं न करिष्यामीत्यर्थः ॥ २७ ॥ २८ ॥

२७-२८ ] ति० टी०—'इत्युक्ते त्वब्रवीद्रामः' इति पाठे एवं कार्यसाधने कथमपि प्रतिज्ञाते सतीत्यर्थः । बाणो ब्रह्मास्त्रसंयुतः ॥ २७ ॥ २८ ॥

रा० टी०—उपायमेवाह—**हरीणामिति** । हे राम ! हरीणां

---

१ ग्राहेति गो. पाठः । २ राम येनापीति गो. पाठः । ३ ग्राहा न प्रहरिष्यन्तीति गो. पाठः । ४ उद्यतोऽयं महीपते इति गो. पाठः ।

उत्तरेणावकाशोऽस्ति कश्चित्पुण्यतरो मम । द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान् ॥२९॥
उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः । आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३० ॥
तैर्न[2] तत्स्पर्शनं पापं सहेयं पापकर्मभिः । अमोघः क्रियतां राम अयं तत्र शरोत्तमः ॥ ३१ ॥
तस्य तद्वचनं श्रुत्वा सागरस्य महात्मनः । मुमोच तं शरं दीप्तं परं सागरदर्शनात् ॥ ३२ ॥
तेन तन्मरुकान्तारं पृथिव्यां किल विश्रुतम् । निपातितः शरो यत्र वज्राशनिसमप्रभः ॥ ३३ ॥
ननाद च तदा तत्र वसुधा शल्यपीडिता । तस्माद्व्रणमुखात्तोयमुत्पपात रसातलात् ॥ ३४ ॥
स बभूव तदा कूपो व्रण इत्येवं विश्रुतः । सततं चोत्थितं तोयं समुद्रस्येव दृश्यते ॥ ३५ ॥
अवदारणशब्दश्च दारुणः समपद्यत । तस्मात्तद्बाणपातेन अपः कुक्षिष्वशोषयत् ॥ ३६ ॥

---

तरणे तरणार्थं स्थलं जलरहितं तरणयोग्यमित्यर्थः यथा यथावत् करिष्यामि । अयं पृथक् । तमिति । हे वरुणालय ! अमोघः वैफल्यरहितः अयं महाबाणः कस्मिन्देशे निपात्यतामिति मे वचः शृणु इति रामस्तमब्रवीत् ॥ २७ ॥

गो० टी०—तमिति । उद्यतः कृतसंधानः ॥ २९ ॥

रा० टी०—रामस्येति । महोदधिः राघवमब्रवीत् ॥ २८ ॥

गो० टी०—रामस्येति । महातेजाः स्वाभिमतलाभेन जनितकान्तिः ॥ ३० ॥

२९ ] ति० टी०—उत्तरेणेत्येनबन्तमव्ययम् । ममोत्तरेणासन्नोत्तरदेशे । अग्रिमदेश इति यावत् । उत्तरशब्दोऽग्रिमवाची । यथा भवांल्लोके ख्यातः पुण्यतमश्च, एवं द्रुमकुल्य इति ख्यातः पुण्यतमः कश्चिदवकाशोऽस्ति ॥ २९ ॥

रा० टी०—तदाकारमाह—उत्तरेणेति । ममोत्तरेण अग्रिमदेशे पुण्यतरो भवान् अतिप्रकाशविशिष्टः लोके द्रुमकुल्य इति ख्यातः कश्चिद्यथा यथावदवकाशो देशोऽस्ति ॥ २९ ॥

गो० टी०—उत्तरेणेति । उत्तरेण समीपवर्तिन्युत्तरभागे । "एनबन्यतरस्यामदूरेऽपञ्चम्याः" इत्येनप् । ममावकाशः मध्यप्रदेश इत्यर्थः । पुण्यतमः चारुतमः । पुण्यं तु चार्वपीत्यमरः । द्रुमेषु कुल्या यस्यासौ द्रुमकुल्यः । कुल्याल्पा कृत्रिमा सरिदित्यमरः ॥ ३१ ॥

३० ] ति० टी०—तत्रोग्रे दर्शनकर्मणी येषां तादृशा बहवो दस्यवः पापाः सन्ति ॥ ३० ॥

रा० टी०—उग्रेति । तत्र विद्यमानाः उग्रे भयंकरे दर्शनकर्मणी येषां ते आभीरप्रमुखाः बहवो दस्यवः पापाः मम सलिलं पिबन्ति ॥ ३० ॥

गो० टी०—उग्रेति । उग्रे दर्शनकर्मणी येषां ते उग्रदर्शनकर्माणः । दस्यवः शत्रवः । दस्युशात्रवशत्रव इत्यमरः । दस्यवः चोरा वा । आभीरा महाशूद्राः ॥ ३२ ॥

३१ ] ति० टी०—तैः पापकर्मभिः स्पर्शनं ममास्ति तत्पापं न सहेयम्, अतस्तत्रायममोघः शरो मुच्यताम् ॥३१॥

रा० टी०—तैरिति । पापकर्मभिस्तैः कृतं पापं पापजनकं संस्पर्शनमहं न सहेयम अतः तत्र आभीरप्रमुखेषु अयं शरोत्तमः अमोघः सफलः क्रियतां शरपातेन ते विहन्यन्तामित्यर्थः ॥ ३१ ॥

गो० टी०—तैरिति । तत्र द्रुमकुल्ये । तेषु आभीरप्रमुखेषु ॥ ३३ ॥

३२ ] ति० टी०—सागरदर्शनात् । अनन्तरमिति शेषः । सागरोपदेशादिति वार्थः ॥ ३२ ॥

रा० टी०—तस्येति । सागरस्य तद्वचनं श्रुत्वा सागरदर्शनात् परं दृश्यमानसागरोत्तरभागे दीप्तं शरं मुमोच ॥३२॥

गो० टी०—तस्येति । सागरदर्शनात्सागरमतेन । यद्वा अङ्गुल्या निर्दिश्य सागरेण प्रदर्शनात् ॥ ३४ ॥

३३ ] ति० टी०—यत्र शरः पातितस्तत्स्थलं तेन हेतुना मरुकान्तारमिति विश्रुतम् ॥ ३३ ॥

रा० टी०—तेनेति । यत्र तेन रामेण शरो निपातितः तत् मरुकान्तारं पृथिव्यां विश्रुतम् ॥ ३३ ॥

गो० टी०—तेनेति । तेन शरमोक्षणेन ॥ ३० ॥

३४ ] ति० टी०—व्रणमुखाद्व्रणात्मकृतद्वारात् ॥ ३४ ॥

रा० टी०—ननादेति । तत्र तस्मिन्समये शल्यपीडिता वसुधा ननाद तस्मात् शरपातजनितात् व्रणमुखात् तन्मार्गेणेत्यर्थः रसातलात् तोयमुत्पपात ॥ ३४ ॥

गो० टी०—ननादेति । ननाद जलनिर्गमेनेति भावः । व्रणमुखात् व्रणमुखद्वारेण ॥ ३६ ॥

३५ ] ति० टी०—उत्थितम् । व्रणकूपादिति शेषः । समुद्रस्य जलमिव । प्रभूतमिति शेषः ॥ ३५ ॥

रा० टी०—स इति । सः शरविदीर्णदेशः व्रण इत्येवं विश्रुतः ख्यातः कूपो बभूव उत्थितं तस्मात् कूपान्निसृतं तोयं समुद्रस्येव दृश्यते ॥ ३५ ॥

गो० टी०—स इति । सः व्रणमुखं व्रणकूप इत्यभिविश्रुतो बभूव । सततमिति । तस्येति शेषः ॥ ३७ ॥

३६ ] ति० टी०—तस्मादवदारणशब्दाद्बाणपातेन हेतुना

---

१ तम इति गो. पाठः । २ तु समिति गो. रा. पाठः । ३ प्राप्तैन सहे इति गो. पाठः । ४ तत्र तेष्विति गो.पाठः । ५ स राघव इति गो.रा.पाठः । ६ वीर इति गो. पाठः । ७ ख्यातिति गो. पाठः । ८ दीप्तेति गो. पाठः । ९ भर्भ ति गो. पाठः । १० स्वित्यधिकं गो. पाठे ।

विख्यातं त्रिषु लोकेषु मरुकान्तारमेव च । शोषयित्वा तु तं कुक्षिं रामो दशरथात्मजः ॥
वरं तस्मै ददौ विद्वान्मरवेऽमरविक्रमः ॥ ॥ ३७ ॥
पशव्यश्चाल्परोगश्च फलमूलरसायुतः । बहुस्नेहो बहुक्षीरः सुगन्धिर्विविधौषधिः ॥ ३८ ॥
एवमेतैश्च संयुक्तो बहुभिः संयुतो मरुः । रामस्य वरदानाच्च शिवः पन्था बभूव ह ॥ ३९ ॥
तस्मिन्दग्धे तदा कुक्षौ समुद्रः सरितां पतिः । राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् ॥ ४० ॥
अयं सौम्य नलो नाम तनयो विश्वकर्मणः । पित्रा दत्तवरः श्रीमान्प्रीतिमान्विश्वकर्मणः ॥ ४१ ॥
एष सेतुं महोत्साहः करोतु मयि वानरः । तमहं धारयिष्यामि यथा ह्येष पिता तथा ॥ ४२ ॥

---

तद्देशस्थ कुक्षिषु सरस्तटाकादिषु वर्तमानाः पुरातनीरपो दस्यु-जीवनमात्रनीभूता अशोषयत । राम इति शेषः ॥ ३६ ॥

रा० टी०–अवदारणेति । अवदारणशब्दः पृथिवीभेदनजनितस्वनः दारुणो भयंकरः समपद्यत अजायत । तद्बाणपातेन हेतुना जातात् स्वनात् कुक्षिषु तटाकप्रभृतिषु विद्यमाना अपः चोरजीवनसाधनीभूतजन्मानि अशोषयत् राम इति शेषः अत एव त्रिषु लोकेषु मरुकान्तारमेव इति विख्यातम् अभवदिति शेषः तदर्थस्तु मरुकस्य मारकत्वस्यान्तमवसानमृच्छति तदिति । सार्धश्लोक एकान्वयी ॥ ३६ ॥

गो० टी०–अवदारणेति । अवदारणशब्दः बाणस्येति शेषः ॥ ३८ ॥

गो० टी०–तस्मादित्यर्धम् । तद्बाणपातेन तस्य बाणस्य पातेन । कुक्षिषु अवटेषु स्थिता अपः पूर्वं पापस्पृष्टानि जलानि तस्मात् द्रुमकुल्यात् अशोषयत् न्यवारयदित्यर्थः ॥ ३९ ॥

रा० टी०–शोषयित्वेति । अमरविक्रमो रामः कुक्षिं तटाकादिजलं शोषयित्वा मरवे मरुकान्ताराय वरं ददौ नामैकदेशग्रहणम् ॥ ३७ ॥ ३८ ॥

३७ ] ति० टी०–बाणशोषितजलत्वात्ततः परं मरुकान्तारमिति ख्यातम् । मरवे मरुदेशाय ॥ ३७ ॥

गो० टी०–पूर्वं रामबाणपातेन पृथिव्यां विश्रुतत्वमुक्तम् संप्रति विरोधिनिर्गमनात् त्रिषु लोकेषु विख्यातत्वमाह—विख्यातमिति । मरुकान्तारमेव मरुकान्तारनामैव । विख्यातं प्रसिद्धमभूदित्यर्थः ॥ ४० ॥

गो० टी०–शोषयित्वेति । कुक्षिं समुद्रमध्यप्रदेशम् । मरुकान्तारं शोषयित्वा दग्ध्वा । कथं मनुष्यत्वं भावयतो वरदानमित्यत्राह—अमरविक्रम इति । सत्येन लोकान् जयतीति न्यायेन वशीकृतसर्वलोक इत्यर्थः ॥ ४१ ॥

३८ ] ति० टी०–पशव्यः पशुहितः, अल्परोगः क्षीणरोगः, विविधौषधिः, अतएव सुगन्धिः ॥ ३८ ॥

रा० टी०–वराकारमाह—पशव्य इति । पशव्यः पशूनां हितः अल्पो रोगो यस्मिन् फलादिभिरायुतो व्याप्तः बहूनि स्नेहानि स्नेहविशिष्टवस्तूनि यस्मिन्बहूनि क्षीराणि यस्मिन् विविधाः औषधयो यस्मिन् अत एव सुगन्धिः मरुर्भवत्विति शेषः ॥ ३९ ॥

गो० टी०–वरं सिद्धिमुखेन दर्शयति श्लोकद्वयेन—पशव्य इत्यादि । पशव्यः पशुभ्यो हितः पशूपभोग्यबालतृणादिसमृद्ध इत्यर्थः । अल्परोगः आरम्भ एव विनष्टरोगः । रसः मधु आयुतः समन्तायुक्तः । स्नेहः घृतम् । औषधमौषधिसमूहः । एवमेतैः एवंप्रकारैः गुणैः भोग्यैः युक्तः संयुतः शिवः पन्थाः शोभनप्रदेश इत्यर्थः ॥ ४२ ॥ ४३ ॥

३९-४० ] ति० टी०–शिवःपन्थाःशोभनो देशः ३९॥४०

रा० टी०–एव मिति । एवमनेन प्रकारेण रामस्य वरदानात् एतैर्बहुभिर्गुणैः संयुतो मरुः शिवः कल्याणप्रदः पन्थाः बभूव ॥ ४० ॥

रा० टी०–तस्मिन्निति । कुक्षौ दग्धे सति समुद्रः राघवमब्रवीत् ॥ ४१ ॥

गो० टी०–तस्मिन्निति । स्पष्टम् ॥ ४४ ॥

४१ ] ति० टी०–पित्रा दत्तवरः सर्ववस्तुनिर्माणसामर्थ्ये दत्तवरः । विश्वकर्मणस्तव प्रीतिमांस्त्वद्विषयप्रीतिमान् । तेन त्वन्नामस्मरणं पूर्वं करोत्वित्यर्थः । संसारसागरे गाधतासंपादकस्य त्वन्नाम्नो मद्गाधतासंपादनमीषत्करमिति भावः ॥ ४१ ॥

रा० टी०–तत्स्वरूपमाह–अयमिति । विश्वकर्मणस्तनयः पित्रा दत्तः वरः निखिलवस्तुनिर्माणसामर्थ्यं यस्मै सः नलो नामायं विश्वकर्मणः निखिलविश्वनिष्पादकस्य तव प्रीतिमान् त्वद्विषयकप्रीतिविशिष्टोऽस्तीति शेषः ॥ ४२ ॥

गो० टी०–एवं सेतुनिर्माणानुकूलं स्थास्यामीत्युक्तवान् संप्रति वरदानसन्तुष्टो वाक्साहाय्यमाचरति—अयमिति । दत्तवरः मत्तुल्यः पुत्रस्ते भविष्यतीति मात्रे दत्तवरः ॥ ४५ ॥

४२ ] ति० टी०–कथं त्वय्यगाधे करिष्यतीत्यत्राह—तमिति । तं तत्क्रियमाणसेतुं तावद्देशे गाधो भूत्वा धारयिष्यामि, तावन्मात्रसाहाय्ये मया कृते सेतुनिर्माणं तस्येषत्करमित्याह—यथेति । सेत्वादिनिर्माणे यथास्य पिता विश्वकर्मा तथैतस्मिन्कर्मणि समर्थः इत्यर्थः ॥ ४२ ॥

रा० टी०–एष इति । यथा पिता विश्वकर्मा सर्ववस्तुनि-

---

१ तदिति गो. पाठः । २ तत इति गो. पाठः । ३ गुणैरिति गो. पाठः । ४ प्रतिम इति गो. पाठः ।

एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्ततः। अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलम् ॥ ४३ ॥
अहं सेतुं करिष्यामि विस्तीर्णे मकरालये। पितुः सामर्थ्यमासाद्य तत्त्वमाह महोदधिः ॥ ४४ ॥
दण्ड एव परो लोके पुरुषस्येति मे मतिः। धिक्क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा ॥ ४५ ॥
अयं हि सागरो भीमः सेतुकर्मदिदृक्षया। ददौ दण्डभयाद्गाधं राघवाय महोदधिः ॥ ४६ ॥
मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा। मया तु सदृशः पुत्रस्तव देवि भविष्यति ॥ ४७ ॥
औरसस्तस्य पुत्रोहं सदृशो विश्वकर्मणा। स्मारितोऽस्म्यहमेतेन तत्त्वमाह महोदधिः ॥
न चाप्यहमनुक्तो वः प्रब्रूयामात्मनो गुणान् ॥ ॥ ४८ ॥

---

र्माणसमर्थः तथा एष नलोऽस्तीति शेषः अतः एष नलः मयि सेतुं करोतु तं सेतुमहं धारयिष्यामि ॥ ४३ ॥

गो० टी०–एष इति। तं सेतुं तथा क्षेप यथा पितेति। पिता यथा यादृशशक्तिमान् तादृशोयमित्यर्थः ॥ ४६ ॥

४३ ] ति० टी०–नष्टोऽदर्शनं गतः। अन्तर्हित इत्यर्थः। ततो नलः समुत्थायाब्रवीत् ॥ ४३ ॥

रा० टी०–एवमिति। उदधिः सागरः एवमुक्त्वा नष्टः अन्तर्हितः ततोनन्तरं नलः समुत्थाय राममब्रवीत् ॥ ४४ ॥

गो० टी०–एवमिति। उदधिः नष्टः अन्तर्हितः ॥ ४७ ॥

४४ ] ति० टी०–तद्वाक्यमाह—अहमिति। पितुर्वरदानसामर्थ्यमास्थाय सेतुं करिष्यामि नात्र संशयः। महोदधिश्च तत्त्वमेवाह—त्वत्प्रीतिमत्तो मम सामर्थ्यमस्तीति ॥ ४४ ॥

रा० टी०–तत्स्वरूपमाह–अहमिति। महोदधिः तत्त्वं यथार्थमाह–अतः पितुर्दत्तं सामर्थ्यं आसाद्य प्राप्य मकरालये सेतुमहं करिष्यामि ॥ ४५ ॥

गो० टी०–अहमिति। पितुः सामर्थ्यम् पित्रा दत्तं सामर्थ्यम् ॥ ४८ ॥

४५ ] ति० टी०–अथ किंचिद्वक्तुं नलो लोकस्थितिमाह—दण्ड एवेति। पुरुषस्याकृतज्ञेषु दण्ड एव परोऽर्थसाधक इति मे मतिः, अतएवाकृतज्ञेषु क्षमां धिक् ॥ ४५ ॥

रा० टी०–दण्ड इति। अकृतज्ञेषु जनेषु पुरुषस्य परः तृप्तिकारको दण्ड एव अतः अकृतज्ञेषु कृतं क्षमादि धिक् ॥ ४६ ॥

गो० टी०–अथ वानरान् प्रत्याह—दण्ड इत्यादिश्लोकद्वयेन। अतो राघवायेति परोक्षनिर्देशः। हिमवान् मन्दरो मकरिस्यादिवत्। मध्ये कविवाक्यं वा। दण्ड एव परः समीचीनोपायः। क्षमां सान्त्वं साम दानं वा धिक्। क्षमादयो नोपाया इत्यर्थः ॥ ४९ ॥

४६ ] ति० टी०–कुत एवं तत्राह—अयं हीति। यतोऽयं सागरो रामपूर्वैः सगरपुत्रैर्वर्धितोऽप्यकृतज्ञतया दण्डभयादेव संजातया दिदृक्षया तज्जन्यदर्शनेन राघवाय सेतुं कर्तुं गाधं ददौ। यद्यपि सगरसंबन्धादेव हनूमते मैनाकद्वारा कृतोपचारः सागरः, तथापि रामे एतावद्विलम्बकरणं रामेण क्रोधाद्धनुः संधानं कारयित्वा स्वरिपुनाशनायेति बोध्यम् ॥ ४६ ॥

रा० टी०–तत्र ज्ञापकमाह–अयमिति। सागरः सगरसुतैर्निर्मितः अयं महोदधिः दण्डभयादेव सेतुकर्मदिदृक्षया सेतुरचनादर्शनविषयकेच्छया विशिष्टः सन् राघवाय गाधं मार्गमित्यर्थः ददौ ॥ ४७ ॥

गो० टी०–उक्तेर्थे हेतुमाह—अयं हीति। हि यस्मात्सागरः सगरखानितः। प्रत्युपकारानभिज्ञ इत्यर्थः। दण्डभयात् सेतुकर्मदिदृक्षया गाधं ददावित्यन्वयः। सेतुकर्मदिदृक्षा च दण्डभयादेवास्य जातेत्यर्थः ॥ ५० ॥

४७ ] ति० टी०–स्वस्य पितृसदृशत्वं सागरोक्तं सत्यमिति बोधयितुं वरागमनप्रकारमाह—ममेति। उत्तरार्धं वररूपम् ॥ ४७ ॥

रा० टी०–पितुः सामर्थ्यप्राप्तौ हेतुमाह–ममेति। मया सदृशस्तव पुत्रो भविष्यति इति वरः मन्दरे मन्दराचले विश्वकर्मणा मम मातुर्दत्तः ॥ ४८ ॥

गो० टी०–पूर्वोक्तस्वपितृतुल्यसामर्थ्यलाभस्य हेतुं दर्शयति–ममेति। मया सदृशः पुत्रस्तव भविष्यतीत्येवंरूपो वरः। अयं चार्थः, औरसस्तस्य पुत्रोहं सदृशो विश्वकर्मण इत्यनुवादात्सिद्धः ॥ ५१ ॥

४८ ] ति० टी०–औरसः पुत्रः। मातुरालिङ्गनपूर्वं स्वतेजोनिषेकद्वारा निर्मितः पुत्र इत्यर्थः। अतोऽहं विचित्रनिर्माणे विश्वकर्मणा सदृशः। नन्वेतत्सामर्थ्यं प्रागेव त्वं किं नावदस्तत्राह—न चेति। आत्मप्रशंसालज्जयेति शेषः ॥ ४८ ॥

रा० टी०–औरस इति। विश्वकर्मणा सदृशः तस्य औरसः पुत्रोऽहमस्मि। नन्वेवं स्वगुणः पूर्वं कुतो नोक्त इत्यत आह–वः युष्माभिरनुक्तोऽपृष्टोऽहमात्मनो गुणान् न प्रब्रूयाम् ॥४९॥

गो०टी०–तर्ह्येतावत्पर्यन्तं किमर्थं नोक्तवानसीत्यत्राह—स्मारित इति। एतेन समुद्रेण। अनुक्तौ निमित्तान्तरमप्याह—नचेति। अनुक्तः अन्येनानुक्तः। स्वेनैवोक्तौ महाकर्मारम्भे विश्वासो न भवेदिति भावः ॥ ५२ ॥

---

१ तदेति गो. पाठः। २ महाबल इति गो. पाठः। ३ वरुणेति गो. पाठः। ४ अथोऽपीति रा. पाठः। ५ अर्धमेतदधिकं गो. पाठे। ६ अर्धमेतत् गो. नास्ति। ७ वै इति गो. पाठः।

समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये । [1]तस्मादद्यैव बध्नन्तु सेतुं वानरपुङ्गवाः ॥ ४९ ॥
ततो [2]विसृष्टा रामेण सर्वतो हरिपुङ्गवाः[3] । [4]उत्पेतुर्महारण्यं हृष्टाः शतसहस्रशः ॥ ५० ॥
ते नगान्नगसंकाशाः शाखामृगगणर्षभाः । बभञ्जुः [5]पादपांस्तत्र प्रचकर्षुश्च सागरम् ॥ ५१ ॥
ते सालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः । कुटजैरर्जुनैस्तालैस्तिलकैस्तिनिशैरपि ॥ ५२ ॥
[6]बिल्वकैः सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः । चूतैश्चाशोकवृक्षैश्च सागरं समपूरयन् ॥ ५३ ॥
समूलांश्च विमूलांश्च पादपान्हरिसत्तमाः । इन्द्रकेतूनिवोद्यम्य प्रजह्रु[7]र्वानरास्तरून् ॥ ५४ ॥
तालान्दाडिमगुल्मांश्च नारि[8]केलविभीतकान् । [9]करीरान्बकुलान्निम्बान्समाजह्रुरि[10]तस्ततः ॥ ५५ ॥
हस्तिमात्रान्महाकायाः पाषाणांश्च महाबलाः । पर्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥ ५६ ॥
प्रक्षिप्यमाणैरचलैः सहसा जलमु[11]द्धृतम् । [12]समुत्ससर्प चाकाशमवासर्पत्ततः पुनः ॥ ५७ ॥
समुद्रं क्षोभयामासुर्नि[13]पतन्तः समन्ततः । सूत्राण्यन्ये प्रगृह्णन्ति [14]ह्यायतं शतयोजनम् ॥ ५८ ॥
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः । स तदा क्रियते सेतुर्वानरैर्घोरकर्मभिः ॥ ५९ ॥

४९ ] ति० टी०—यस्मात्समर्थोऽस्मि तस्मादद्यैव मया सह वानराः सेतुं बध्नन्तु । बन्धनानुज्ञा दीयतामित्यर्थः ॥४९॥

रा० टी०—समर्थ इति । सेतुं कर्तुमहं समर्थः तस्मात् वानरपुङ्गवाः सेतुं बध्नन्तु मदनुसारेण सामग्रीसंपादनं कुर्वन्त्वित्यर्थः ॥ ५० ॥

गो० टी०—न केवलमुक्तिमात्रं समर्थश्चापीत्याह—समर्थश्चेति । बध्नन्तु बन्धनाय शिलादिकमानयन्त्वित्यर्थः ॥ ५३ ॥

५०] ति० टी०—विसृष्टा दत्तानुज्ञाः । उत्पेततुरुत्पेतुः ॥५०॥

रा० टी०—तत इति । रामेण विसृष्टाः आज्ञप्ताः शतशः सहस्रशो हरिपुङ्गवाः महारणमुत्पेततुः उत्पेतुः प्रविविशुः ॥५१॥

गो० टी०—तत इति । अतिसृष्टा नियुक्ताः ॥ ५४ ॥

५१ ति० टी०—नगसंकाशास्ते नगान्पादपान्बभञ्जुः । सागरं सागरसमीपं प्रचकर्षुराकृष्टवन्तः ॥ ५१ ॥

रा० टी०—ते इति । नगसंकाशाः पर्वतसदृशाः शाखामृगगणर्षभाः पादपान् बभञ्जुः नगात् पर्वतात् सागरं प्रचकर्षुः प्रचकृषुः प्रापयामासुश्च ॥ ५२ ॥

गो० टी०—त इति । नगान् वृक्षान् । नगसंकाशाः गिरिसंकाशाः । वानराधिपतित्वेपि मनुष्यत्वं संभवति निषादस्थपत्यधिकरणपूर्वपक्षन्यायादत आह—वानरा इति । तत्र तदानीम् । प्रचकर्षुः आनयन्ति स्म ॥ ५५ ॥

५२–५३ ] ति० टी०—सालाश्वकर्णयोरवान्तरजातिकृतो भेदः ॥ ५२ ॥ ५३ ॥

रा० टी०—ते इति । ते वानराः सालादिभिः सागरं समपूरयन् । श्लोकद्वयमेकान्वयि ॥ ५३ ॥ ५४ ॥

गो० टी०—सेतुबन्धनसाध्यकृतां वृक्षाणां कृतार्थतां व्यञ्जयितुं तान् परिगणयति श्लोकद्वयेन—ते सालैरित्यादिना ॥५६॥५७

५४–५५ ] ति० टी०—इन्द्रकेतून्फलपुष्पादिना शोभावत्त्वादिन्द्रध्वजसदृशानुन्मूल्योद्यम्योद्धृत्योज्जह्रुः । तरूनित्यस्योत्तरेण संबन्धः ॥ ५४ ॥ ५५ ॥

रा० टी०—समूलानिति । तदा हरिसत्तमाः हरयः समूलान् मूलसहितान्विमूलान्मूलरहितांश्च पादपान् उद्यम्य उत्पाट्य इन्द्रकेतूनिव प्रजह्रुः चिक्षिपुः ॥ ५५ ॥

गो० टी०—अथैषामानयनशैघ्र्यमाह—समूलानिति । हरयस्तरूनित्युत्तरशेषः ॥ ५८ ॥

रा० टी०—तालानिति । तालादीन् ततस्ततः तत्तद्देशात्समाजह्रुः ॥ ५६ ॥

गो० टी०—वृक्षेषून्मूलितेषु गुल्मादीनाजह्रुरित्याह—तालानिति । तालान् क्षुद्रतालान् । खदिरान् अरिमेधकान् ॥५९॥

५६ ] ति० टी०—यन्त्रैः सुखाहरणसाधनैः ॥ ५६ ॥

रा० टी०—हस्तिमात्रानिति । महाकायाः वानराः पर्वतान् समुत्पाट्य भित्त्वा हस्तिमात्रान् पाषाणान् यन्त्रैः परिवहनसाधकैः परिवहन्ति सागरं प्रापयन्ति ॥ ५७ ॥

गो० टी०—वृक्षेषु ह्रसेषु पाषाणपर्वतादीनाजह्रुरित्याह—हस्तीति । हस्तिमात्रान् गजप्रमाणान् । “ प्रमाणे द्वयसज्दघ्नञ्मात्रचः” इति मात्रच् प्रत्ययः यन्त्रैः शकटादिभिः ॥६०॥

५७ ] ति० टी०—अवासर्पत् । अधः पपातेत्यर्थः ॥ ५७ ॥

रा० टी०—प्रक्षिप्यमाणैरिति । प्रक्षिप्यमाणैः प्रक्षेपणकर्मीभूतैरचलैः पाषाणैरुद्धतं जलमाकाशं समुत्ससर्प जगाम ततः आकाशात् पुनरवासर्पत् अधोदेशं प्राप्नोत् ॥ ५८ ॥

गो० टी०—प्रक्षिप्यमाणैरिति । उद्धृतम् उत्पतितम् आसीत् । समुत्पतितं सत् आकाशं ततस्ततः तत्र तत्र उपासर्पत् प्रससार ॥ ६१ ॥

५८–५९ ] ति० टी०—सूत्राणीति । आकर्षणार्थमिति

१ काममिति गो. पाठः । २ ऽत्रीति गो. पाठः । ३ यूथपा इति गो. पाठः । ४ अभीति गो. पाठः । ५ वानरा इति गो. पाठः । ६ बिल्वैश्चेति गो. पाठः । ७ हरय इति गो. हरयस्तदेति रा. पाठः । ८ केलानिति गो. पाठः । ९ बकुलान्खदिरानिति गो. पाठः । १० समन्तत इति गो. ततस्तत इति रा.पाठः । ११ द्धतमिति गो.पाठः । १२ समुत्पतितमाकाशमुपासर्पत्ततस्ततः इति गो.पाठः। १३ वानराश्चेति गो.पाठः। १४ ह्यायतमिति गो.पाठः।

दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथापरे । वानरैः शतशस्तत्र रामस्याज्ञापुरःसरैः ॥ ६० ॥
मेघाभैः पर्वताभैश्च तृणैः काष्ठैर्बबन्धिरे । पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः ॥ ६१ ॥
पाषाणांश्च गिरिप्रख्यान्गिरीणां शिखराणि च । दृश्यन्ते परिधावन्तो गृह्य दानवसंनिभाः ॥ ६२ ॥
शिलानां क्षिप्यमाणानां शैलानां तत्र पात्यताम् । बभूव तुमुलः शब्दस्तदा तस्मिन्महोदधौ ॥ ६३ ॥
कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । प्रहृष्टैर्गजसंकाशैस्त्वरमाणैः प्लवङ्गमैः ॥ ६४ ॥
द्वितीयेन तथैवाह्ना योजनानि तु विंशतिः । कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥ ६५ ॥
अह्ना तृतीयेन तथा योजनानि तु सागरे । त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥ ६६ ॥
चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि वा । योजनानि महावेगैः कृतानि त्वरितैस्ततः ॥ ६७ ॥
पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः । योजनानि त्रयोविंशत्सुवेलमधिकृत्य वै ॥ ६८ ॥
स वानरवरः श्रीमान्विश्वकर्मात्मजो बली । बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥ ६९ ॥

शेषः । सेतोरवक्रत्वायेति वा शेषः । शतयोजनमायतं दीर्घं महासेतुं नलश्चक्रे इत्युत्तरेणान्वयः ॥ ५८ ॥ ५९ ॥

**रा० टी०–समुद्रमिति** । समन्ततः चतुर्दिक्षु निपततः पाषाणान्निपातयन्तः वानराः समुद्रं क्षोभयामासुः अन्ये वानराः शतयोजनमायतं यथा भवति तथा सूत्राणि प्रगृह्णन्ति सेतोरवक्रत्वाय प्रजगृहुः ॥ ५९ ॥

**गो० टी०–समुद्रमिति** । सूत्राणि शतयोजनम् व्यायतम् आकृष्टं यथा भवति तथा प्रगृह्णन्ति प्रागृह्णन् । आर्जवार्थं व्यत्ययेन लकारः ॥ ६२ ॥

**रा० टी०–नल इति** । नदनदीपतेर्मध्ये नलो महासेतुं चक्रे स सेतुः तदा वानरैरितरकपिभिरपि क्रियते एतेन पाषाणादिसङ्घट्टनं नलायत्तं सामग्रीसंपादनं तु तदितरायत्तमिति सूचितम् ॥ ६० ॥

**गो टी०–नल इति** । घोरकर्मभिः युगपदनेकपर्वतानयनकर्मभिः । तथा नलक्रियानुसारेण ॥ ६३ ॥

**६०-६७] ति०टी०-**विचिन्वन्त्याहरणीयदृक्षादिकम् ६०-६७

**रा० टी०–दण्डानिति** । अन्ये केचन वानराः दण्डान् परिमाणकारकयष्टिविशेषान् प्रगृह्णन्ति तेन सेतुं परिमान्तीति तात्पर्यम् अपरं विचिन्वन्ति सामग्रीसंघट्टनं कुर्वन्ति । अर्धं पृथक् । **वानरैरिति** । रामस्याज्ञापुरस्सरैः शतशो वानरैः तृणादिभिर्बबन्धिरे सेतुप्रदेशा इति शेषः ॥ ६१ ॥

**गो० टी०–दण्डानिति** । दण्डान् सूत्रबद्धदण्डान् । वानरत्वराकरणदण्डान्वा । विचिन्वन्ति विशेषेण चयनं कुर्वन्ति । नलबद्धसेतोरुपरि शिलाश्चितवन्त इत्यर्थः ॥ ६४ ॥

**गो० टी०–वानरा इति** ॥ बबन्धिरे सेतुप्रदेशानिति शेषः ॥ ६५ ॥

**रा० टी०–पुष्पिताग्रैरिति** । वानराः पुष्पिताग्रैस्तरुभिः सेतुं बध्नन्ति शोभार्थं सेतौ सन्निवेशयन्तीत्यर्थः । अर्धं पृथक् । **पाषाणानिति** । पाषाणादीन् गृह्य गृहीत्वा परिधावन्तो वानराः वारणसन्निभाः दृश्यन्ते ॥ ६३ ॥

**गो० टी०–पुष्पिताग्रैरिति** । मार्दवार्थमुपरि बबन्धुरित्यर्थः ॥ ६६ ॥

**गो० टी०–**अथ वानराणां पर्वतानयनं वर्णयति–**पाषाणांश्चेति** । गृह्य गृहीत्वा ॥ ६७ ॥

**रा० टी०–शैलानामिति** । पात्यतां पात्यमानानां शैलानां क्षिप्यमाणानां शिलानां च तुमुलः शब्दो महोदधौ बभूव ॥ ६४ ॥

**गो० टी०–शिलानामिति** । निपात्यताम् आर्षं परस्मैपदम् । तुमुलः संकुलः ॥ ६८ ॥

**रा० टी०–कृतानीति** । प्लवङ्गमैः प्रथमेन अह्ना दिनेन चतुर्दशयोजनानि सेतुस्थलानि कृतानि सेतुस्थलानीत्यर्थतो लब्धम् एवमुत्तरत्रापि बोध्यम् ॥ ६५ ॥

**गो० टी०–कृतानीति** । चतुर्दशयोजनपरिमितः सेतुर्बद्ध इत्यर्थः । एवमुत्तरेष्वपि योज्यम् ॥ ६९ ॥

**रा० टी०–द्वितीयेनेति** । द्वितीयेन अह्ना विंशतिर्योजनानि कृतानि ॥ ६६ ॥

**रा० टी०–अह्नेति** । तृतीयेन अह्ना एकविंशतिर्योजनानि कृतानि ॥ ६७ ॥

**रा० टी०–चतुर्थेनेति** । चतुर्थेन द्वाविंशतिर्योजनानि कृतानि ॥ ६८ ॥

**गो० टी०–द्वितीयेनेति** । प्रतिदिनं योजनाधिक्यमुत्साहातिरेकात् ॥ ७०–७२ ॥

**६८-६९] ति० टी०**पञ्चदिनैः शतयोजनं बबन्ध सुवेलम् । सामीप्ये सुशब्दस्याव्ययीभावः । वेलासमीपम् । परपारसमीपमधिकृत्येत्यर्थः ॥ ६८ ॥ ६९ ॥

**रा० टी०–पञ्चमेनेति** । सुवेलं वेलासमीपं परपारमि-

१ वानरा इति गो. पाठः । २ सरा इति गो. पाठः । ३ अग्रैश्चेति गो. पाठः । ४ वारणसंनिभा इति गो. रा. पाठः । ५ शैलानामिति रा. पाठः । ६ शिलानामिति रा. पाठः । ७ च नीति गो. पाठः । ८ तथा चाह्नेति गो. पाठः । ९ कृतानि त्विति गो. पाठः । १० चेति गो. रा. पाठः । १२ तु तैरिति गो. पाठः ।

स नलेन कृतः सेतुः सागरे मकरालये । शुशुभे सुभगः श्रीमान्स्वातीपथ इवाम्बरे ॥ ७० ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७१ ॥
दशयोजनविस्तीर्णं शतयोजनमायतम् । ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥ ७२ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवंगमाः । तमचिन्त्यमसह्यं च ह्यद्भुतं लोमहर्षणम् ॥ ७३ ॥
ददृशुः सर्वभूतानि सागरे सेतुबन्धनम् । तानि कोटिसहस्राणि वानराणां महौजसाम् ॥ ७४ ॥
बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः । विशालः सुकृतः श्रीमान्सुभूमिः सुसमाहितः ॥ ७५ ॥
अशोभत महान्सेतुः सीमन्त इव सागरे । ततः पारे समुद्रस्य गदापाणिर्विभीषणः ॥ ७६ ॥
परेषामभियानार्थमतिष्ठत्साचिवैः सह । सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ॥ ७७ ॥
हनूमन्तं त्वमारोह अङ्गदं त्वथ लक्ष्मणः । अयं हि विपुलो वीर सागरो मकरालयः ॥ ७८ ॥

---

त्यर्थः अधिकृत्य पञ्चमेन अह्ना त्रयोविंशत् त्रयोविंशतिर्योजनानि कृतानि ॥ ६९ ॥

गो० टी०—पञ्चमेनेति । त्रयोविंशत् त्रयोविंशतिः । आर्षो व्यत्ययः । अधिकृत्य अवधिं कृत्वा ॥ ७३ ॥

रा० टी०—स इति । स नलः सागरे सेतुं बबन्ध । तत्र हेतुः—यथा अस्य पिता विश्वकर्मा तथा अयमस्तीति शेषः॥७०॥

गो० टी०—स वानरेति । अस्य पिता यथा यादृशशक्तिविशिष्टः तथा तादृशशक्तिविशिष्ट इत्यर्थः ॥ ७४ ॥

७०-७२ ] ति० टी०—स्वातीपथश्छायापथः॥ ७० ॥७२॥

रा० टी०—स इति । नलेन कृतः सेतुः अम्बरे स्वातीपथ इव शुशुभे ॥ ७१ ॥

गो० टी०—स नलेनेति । सुभगः शोभनमाहात्म्यवान् स्वातीपथः छायापथः स्वातीवीथिर्वा सा चाकाशे सूर्यादीनां मध्यमार्गे मध्यमा वीथिः । तदुक्तं वायुपुराणे—सूर्यादीनां त्रयो मार्गा दक्षिणोत्तरमध्यमा इति प्रक्रम्य । तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता । हस्तश्चित्रा तथा स्वाती मध्यवीथ्यभिविश्रुता । ज्येष्ठा विशाखानूराधा वीथी राजगवी मता । एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते । इति॥७५॥

रा० टी०—तत इति । तदद्भुतं द्रष्टुकामा देवादयः गगने तस्थुः ॥ ७२ ॥

गो० टी०—तत इति । स्पष्टः ॥ ७६ ॥

रा० टी०—दशेति । सुदुष्करम् अन्यैः कर्तुमशक्यं नलसेतुं देवगन्धर्वा ददृशुः ॥ ७३ ॥

गो० टी०—दशेति । नलसंबन्धी सेतुर्नलसेतुः तम् ॥७७॥

७३-७४ ] ति० टी०—गर्जन्तः प्लवंगमाश्च ददृशुः । अचिन्त्यमचिन्त्यरचनम् । असह्यं भगवत्संबन्धं विना केनाप्यशक्यकरणम् ॥ ७३ ॥ ७४ ॥

रा० टी०—आप्लवन्त इति । आप्लवन्तः अधिकप्लुतिं कुर्वन्तः प्लवन्तः केचित् साधारणप्लुतिं कुर्वन्तः गर्जन्तः प्लवङ्गमाः सर्वभूतानि च अचिन्त्यम्, अचिन्तनीयोपायमत एव असह्यम् असहनीयनिर्मितिसंकल्परूपभरम् अत एव अद्भुतं सेतुबन्धनं ददृशुः । किंच सर्वभूतान्येव कर्तॄणि विशेषणविशिष्टप्लवङ्गमास्तु कर्माणि द्वितीयानुत्पत्तिस्तु वाक्यार्थस्य कर्मतयान्वयादिति दिक् । सार्धश्लोक एकान्वयी ॥ ७४ ॥

गो० टी०—निर्विघ्नसेतुबन्धेन जातं वानरहर्षं दर्शयति—आप्लवन्त इति । अर्द्धमेकं वाक्यम् । आप्लवन्तः आभिमुख्येन प्लवन्तः दूरं प्लवन्तः । आसन्निति शेषः ॥ ७८ ॥

गो० टी०—तद्दिति । अचिन्त्यम् इतःपूर्वं मनसापि चिन्तयितुमनर्हम् असह्यं कस्यापि यत्नाविषयम् अद्भुतम् आश्चर्यकरम् रोमहर्षणं पुलकावहम् ॥ ७९ ॥

रा० टी०—तानीति । सेतुं बध्नन्तः बध्नन्ति वानराणां कोटिसहस्राणि महोदधेः पारं जग्मुः ॥ ७५ ॥

गो० टी०—तानीति । सेतुं बध्नन्तः सेतुबन्धनसहकारिणः ॥ ८० ॥

७५-७६ ] ति० टी०—बध्नन्त इति लिङ्गव्यत्यय आर्षः ॥ ७५ ॥ ७६ ॥

रा० टी०—विशाल इति । शोभनं कृतं कृतिर्यस्य शोभना भूमिर्यस्य सुसमाहितः सम्यग्विन्यस्त. महान् प्रशंसनीयः सेतुः सागरे सीमन्तः केशवेश इव अशोभत ॥ ७६ ॥

गो० टी०—विशाल इति । सुकृतः दृढतया कृतः सुकृतकरो वा श्रीमान् ऋजुत्वेन कान्तिमान् सुभूमिः निम्नोन्नतत्वरहितः सुसमाहितः निर्विवरः ॥ ८१ ॥

रा० टी०—तत इति । ततः सेतुनिर्मित्यनन्तरं परेषां रिपुराक्षसानाम् अभिघातार्थं समुद्रस्य पारे विभीषणोऽतिष्ठत् ॥ ७७ ॥

गो० टी०—तत इति । पारे दक्षिणतीरे ॥ ८२ ॥

७७-७८ ] ति० टी०—परेषां राक्षसानाम् ॥ ७७ ॥ ७८ ॥

रा० टी०—तरणप्रकारं बोधयमाह—सुग्रीव इति । हे वीर अयं सागरो विपुलः अतिविस्तीर्णः अतः त्वं हनूमन्तमारोह लक्ष्मणस्तु अङ्गदमारोहतु एतौ हनूमदङ्गदौ वैहायसा

---

१ तद्विति गो. पाठः । २ महासेतुरिति गो. पाठः । ३ घातार्थमिति गो. रा. पाठः । ४ चापीति गो. पाठः ।

वैहायसौ युवामेतौ वानरौ धारयिष्यतः । अग्रतस्तस्य सैन्यस्य श्रीमान्रामः सलक्ष्मणः ॥ ७९ ॥
जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः । अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवंगमाः ॥ ८० ॥
सलिलं प्रपतन्त्यन्ये मार्गमन्ये प्रपेदिरे । केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः ॥ ८१ ॥
घोषेण महता घोषं सागरस्य समुच्छ्रितम् । भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी ॥ ८२ ॥
वानराणां हि सा तीर्णा वाहिनी नलसेतुना । तीरे निविविशे राज्ञा बहुमूलफलोदके ॥ ८३ ॥

तदद्भुतं राघवकर्म दुष्करं समीक्ष्य देवाः सह सिद्धचारणैः ।
उपेत्य रामं सहसा महर्षिभिस्तमभ्यषिञ्चन्सुशुभैर्जलैः पृथक् ॥ ८४ ॥
जयस्व शत्रून्नरदेव मेदिनीं ससागरां पालय शाश्वतीः समाः ।
इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥ ८५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

आकाशगमनशीलौ अतो युवां धारयिष्यतः इति वचः सुग्रीवो रामं प्राह । अर्धचतुष्टयमेकान्वयि ॥ ७८ ॥ ७९ ॥

गो० टी०—सुग्रीव इत्यादि । लक्ष्मण इत्यत्र आरोहत्विति पुरुषविपरिणामः कर्तव्यः ॥ ८३ ॥

गो० टी०—आरोहणहेतुमाह—अयमिति । विपुलः शतयोजनम्पद्धर्या गमने बहुकालविलम्बो भविष्यतीति भावः । वैहायसौ अपादचारिणौ । इति सुग्रीवः प्राहेति पूर्वेणान्वयः ॥ ८४ ॥

७९ ] ति० टी०—वैहायसावाकाशगतिमन्तौ ॥ ७९ ॥

रा० टी०—अग्रत इति । सैन्यस्य अग्रतः अग्रे सुग्रीवेण समन्वितो रामो जगाम एतेन सुग्रीवस्याप्याकाशगामित्वं सूचितम् ॥ ८० ॥

गो० टी०—अग्रत इति । स्पष्टः ॥ ८९ ॥

८०–८१ ] ति० टी०—सुग्रीवेण समन्वितो रामो धन्व्यग्रतो जगाम । अनेन सुग्रीवस्य व्योममार्गगमनं सिद्धम् ॥ ८० ॥ ८१ ॥

रा० टी०—अन्य इति । अन्ये मध्येन गच्छन्ति अन्ये पार्श्वतो गच्छन्ति अन्ये सलिलं प्रपतन्ति तत्राप्यन्ये मार्गं सेतुं प्रपेदिरे केचिद्वैहायसगताः सन्तः सुपर्णा गरुडा इव पुप्लुवुः सार्धश्लोक एकान्वयी ॥ ८१ ॥ ८२ ॥

गो० टी०—अन्य इति । न लेभिरे मार्गालाभात्तीर एव कञ्चित् कालं स्थिता इत्यर्थः ॥ ८६ ॥

गो० टी०—केचिदित्यर्धमेकं वाक्यम् । वैहायसं विहायःसंबन्धि गतं गमनं येषां ते यथोक्ताः । सुपर्णाः गरुडाः ॥ ८७ ॥

८२ ] ति० टी०—तरन्ती हरिवाहिनी महता स्वीयेन घोषेण सागरस्य भीमं घोषमन्तर्दधे तिरोहितवती ॥ ८२ ॥

रा० टी०—घोषेणेति । हरिवाहिनी वानरसेना महता घोषेण स्वरवेण समुच्छ्रितं सागरस्य घोषमन्तर्दधे अन्तर्धापयामास ॥ ८३ ॥

गो० टी०—घोषेणेति । अन्तर्दधे तिरश्चकार ॥ ८८ ॥

८३ ] ति० टी०—तीरे परतीरे निविविशे निवेशिता ॥ ८३ ॥

रा० टी०—वानराणामिति । नलसेतुना तीर्णा वानराणां वाहिनी राज्ञा सुग्रीवेण बहुमूलफलोदके तीरे निविविशे ॥ ८४ ॥

गो० टी०—वानराणामिति । वानराणां राज्ञो वाहिनीत्यन्वयः । राज्ञेति पाठे राज्ञा सुग्रीवेण सहेत्यर्थः । तीरे दक्षिणतीरे ॥ ८९ ॥

८४ ] ति० टी०—अथ समुद्रे सेतुबन्धनहृष्टैर्देवैस्तदानीमेव रामस्य राज्याभिषेकः कृतो रामेण विभीषणस्येवेत्याह—तदद्भुतमिति । राघवकर्म राघवाज्ञाजन्यत्वात्तत्रामग्रहणजन्यत्वाच्च । सुशुभैर्जलैराकाशगङ्गादिजलैः ॥ ८४ ॥

रा० टी०—तदिति । अद्भुतं तत् सागरलङ्घनादि राघवकर्म समीक्ष्य राममुपेत्य सुशुभैः अत्यन्तशोभनैर्जलैः सागरनीरैः पृथक् पृथक् अभ्यषिञ्चन् ॥ ८९ ॥

गो० टी०—इत्थमकुण्ठदशकण्ठकण्ठाटवीत्रुटननिदर्शनभूतं सेतुनिर्माणनैपुण्यमालोक्य समुपजातमानन्दसन्दोहमा रावणनिर्बर्हणादवुद्धाटनीयमप्यन्तर्नियन्तुमशक्नुवन्तस्ताडशहर्षप्रकर्षबलात्कारेण देवा यथोचितं राममपूजयन्नित्याह—तदित्यादिना श्लोकद्वयेन । दुष्करं रामादन्यै र्मनसापि कर्तुमशक्यम् । पृथक्प्रत्येकं समभ्यषिञ्चन् ॥ ९० ॥

८५ ] ति० टी०—अभिषिच्याशीर्वादं च कुर्वन्ति—जयस्वेत्यादि । इतीवेत्यतीत्यर्थकम् । नरदेवा ब्राह्मणाः ॥ ८५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

रा० टी०—जयस्वेति । शाश्वतीः समाः बहुकालं मेदिनीं पालय इतीव विविधैर्वचोभिर्नरदेवसत्कृतं राममपूजयन् ॥ ८६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

गो० टी०—जयेति । जयेति च्छेदः । स्वशत्रून् आश्रित-

---

१ तारयिष्यत इति गो. पाठः । २ सलिले इति गो. पाठः । ३ तस्य सिन्धोर्घोषमिति गो. पाठः । ४ राज्ञ इति गो. पाठः । ५ समिति गो. पाठः ।

# त्रयोविंशः सर्गः ।

रामो दुरुत्पातान् लक्ष्मणाय कथयति ।

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः । सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ॥ १ ॥
परिगृह्योदकं शीतं वनानि फलवन्ति च । बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ २ ॥
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । प्रबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३ ॥
वाताश्च कलुषा वान्ति कम्पते च वसुंधरा । पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४ ॥
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः । क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ ५ ॥
रक्तचन्दनसंकाशा संध्या परमदारुणा । ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६ ॥

---

शत्रूणामेवास्य शत्रुत्वादिति भावः । नरदेवसत्कृतं नरैश्च देवैश्च सत्कृतम् । अपूजयन् अस्तुवन् । स्तुतिर्हि वाचिका पूजा ॥ ११ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

१ ] ति० टी०—अथ रामस्य घोरनिमित्तदर्शनमाह—निमित्तानीति । वक्ष्यमाणानीत्यर्थः ॥ १ ॥

रा० टी०—सागरतरणानन्तरकालिकं लक्ष्मणं प्रति रामवचनमाह—निमित्तानीत्यादिभिः । निमित्तज्ञः निमित्तनिर्णयज्ञाता लक्ष्मणपूर्वजः सौमित्रिमिदमब्रवीत् ॥ १ ॥

गो० टी०—एवं रामो नलसेतुना तीर्णमहार्णवो महासमरसूचकान् महोत्पातान् दृष्ट्वा चिरप्रार्थिताभीष्टसिद्धिर्भविष्यतीति सन्तुष्टो दृष्टानि निमित्तानि निमित्तज्ञाय लक्ष्मणाय दर्शयति—निमित्तानीति । निमित्तज्ञत्वे लक्ष्मणादप्याधिक्यं दर्शयितुं लक्ष्मणपूर्वज इत्युक्तम् । संपरिष्वङ्गश्चिरप्रार्थितसमरस्यासन्नत्वात् । निमित्तापेक्षणस्यावश्यकत्वमुक्तम् कामन्दके-'निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् । तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेदि'ति ॥ १ ॥

२ ] ति० टी०—संविभज्य व्यूह्य ऋक्षगोलाङ्गूलवानरविभागं कृत्वा । तस्य व्यूहं च कृत्वेत्यर्थः ॥ २ ॥

रा० टी०—तदाकारमाह—परिगृह्येत्यादिभिः । उदकं फलवन्ति वनानि च परिगृह्य आश्रित्य बलौघं संविभज्य ऋक्षादिरूपेण विभागं कृत्वा व्यूह्य व्यूहरचनया संस्थाप्य वयं तिष्ठेम ॥ २ ॥

गो० टी०—परिगृह्येति । शीतमुदकं शीतोदकवत्प्रदेशम् वनानि जलसमीपस्थानि । परिगृह्य वासार्थं स्वीकृत्य । व्यूह्य गरुडरूपेण सन्निवेश्य । तथा व्यक्तीभविष्यति ॥ २ ॥

३ ] ति० टी०—भयं भयनिमित्तम् ॥ ३ ॥

रा० टी०—लोकेति । लोकस्य देवादिजनस्य क्षयकरम् आश्रयप्रदातारं भीममुग्रं भयं राक्षसभीतिप्रदम् उपस्थितमृक्षवानररक्षसां प्रबर्हणं संग्रामं पश्यामि । किंच लोकानां राक्षसानां क्षयकरं विनाशकारकमत एव भयं तेषां भयप्रदमित्यर्थः ॥ ३ ॥

गो० टी०—लोकक्षयकरमिति । लोकक्षयकरं क्षुद्रजनक्षयकरम् विशिष्य प्रवीराणां निबर्हणं विनाशकम् । भयमिति युद्धमुच्यते ॥ ३ ॥

४ ] ति० टी०—कलुषा रजोव्याप्ताः ॥ ४ ॥

रा० टी०—तत्र निमित्तमाह—वाता इत्यादिभिः । कलुषाः रजोमयाः वाताः वान्ति ॥ ४ ॥

गो० टी०—भयदर्शने लिङ्गान्याह—वाता इत्यादि । महीरुहाः पतन्ति अकस्मादिति भावः । अत्रात्यन्तानिष्टकरो भूकम्पः संध्याकालिक इति ज्ञेयम् । तथोक्तं वसिष्ठेन—यामत्रयाद्य भूकम्पो द्विजातीनामरिष्टदः । अरिष्टदः क्षितीशानां संध्ययोरुभयोरपीति ॥ ४ ॥

५-६ ] ति० टी०—क्रव्यादसंकाशा गृध्रगोमायुश्येनादिसदृशास्तद्वद्धूसरवर्णाः, अतएव परुषाश्चक्षुरुद्वेजकाः ॥ ५ ॥ ६ ॥

रा० टी०—मेघा इति । क्रव्यादसंकाशाः धूसरवर्णवत्त्वेन गृध्रगोमायुश्येनप्रभृतितुल्याः परुषाः रूक्षस्वरूपाः परुषस्वनाः अत एव क्रूराः मेघाः शोणितबिन्दुभिः मिश्रं यथा भवति तथा प्रवर्षन्ति ॥ ५ ॥

गो० टी०—मेघा इति क्रव्यादसंकाशाः वृकवर्णाः । श्येनादिसंस्थाना इति वा परुषाः दुर्दर्शाः । रूक्षा इति यावत् । परुषस्वनाः श्रुतिकटुस्वनाः अत एव क्रूराः भयङ्कराः मिश्रम् उदकमिति शेषः । क्रूरमिति क्रियाविशेषणम् । अत्रमिहिरः—दिग्युल्कापतनं चैव दिवानक्षत्रदर्शनम् । दिवा शनिस्तथा काष्ठतृणरक्तप्रवर्षणमिति ॥ ५ ॥

रा० टी०—रक्तेति । रक्तचन्दनसंकाशा अत्यरुणेत्यर्थः अत एव परमदारुणा संध्या भातीति शेषः ज्वलतः आदित्यात् अग्निमण्डलं प्रपतति ॥ ६ ॥

गो० टी०—रक्तचन्दनेति । रक्तचन्दनं कुङ्कुमम् । रक्तचन्दनतुल्यमेघवतीत्यर्थः । परमदारुणा भवतीति शेषः अग्निमण्डलम् अग्निपिण्डः ॥ ६ ॥

---

१ सौमित्रमिति गो. पाठः । २ नीति गो. पाठः ।

दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः । प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७ ॥
रजन्यामप्रकाशस्तु संतापयति चन्द्रमाः । कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः ॥ ८ ॥
ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषस्तु लोहितः । आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ ९ ॥
रजसा महता चापि नक्षत्राणि हतानि च । युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण ॥ १० ॥
काकाः श्येनास्तथा नीचा गृध्राः परिपतन्ति च । शिवाश्चाप्यशुभान्नादान्नदन्ति सुमहाभयान् ॥ ११ ॥
शैलैः शूलैश्च खड्गैश्च विमुक्तैः कपिराक्षसैः । भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १२ ॥
क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् । अभियाम जवेनैव सर्वैर्हरिभिरावृताः ॥ १३ ॥
इत्येवमुक्त्वा धन्वी स रामः सङ्ग्रामधर्षणः । प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥ १४ ॥

---

७ ] ति० टी०–प्रत्यादित्यं सूर्यसंमुखम् ॥ ७ ॥

रा० टी०–दीना इति । दीना महद्भयं जनयन्तो मृगपक्षिणः प्रत्यादित्यम् आदित्यसंमुखं विनर्दन्ति ॥ ७ ॥

गो० टी०–दीना इति । दीनाः दीनाकृतयः । जनयन्तः सूचयन्तः ॥ ७ ॥

८ ] ति० टी०–चन्द्रमाः संतापयति । सोष्णकिरण इत्यर्थः । कृष्णरक्तेत्यादिना परिवेषविशेष उक्तः ॥ ८ ॥

रा० टी०–रजन्यामिति । कृष्णरक्तैरंशुभिः पर्यन्तो व्याप्तः अत एव लोकक्षय इवोदितश्चन्द्रमाः रजन्यामपि अप्रकाशः प्रकाशरहितः सन् संतापयति ॥ ८ ॥

गो० टी०–रजन्यामिति । अर्धमेकं वाक्यम् । अप्रकाशः निष्प्रभः । सन्तापयति । शीतस्य सन्तापकरणं ह्युत्पात इति भावः ॥ ८ ॥

गो टी०–कृष्णेति । कृष्णा रक्ताश्चांशवः पर्यन्ते यस्य स तथोक्तः । सर्वान्ते कृष्णमण्डलः तदनन्तरं रक्तमण्डल इत्यर्थः सुलोहितः मध्ये अत्यन्तरक्तवर्णः लोकक्षये प्रलये उदितः परिवेष इव स्थितः । रूक्षः क्रूरः । अप्रशस्तः अप्रसिद्धः । इतः पूर्वमदृष्ट इत्यर्थः । परिवेषः दृश्यत इति शेषः । अत्र वर्णत्रयकथनेन मण्डलत्रयकथनात्सायंकालिकत्वाच्च परिवेषस्य नृपक्षयकरत्वं सूच्यते । तथाह काश्यपः—'द्विमण्डलश्चमूपघ्नो नृपघ्नो यस्त्रिमण्डलः' इति । 'दिनकरपरिवेषः पूर्वयामे तु पीडा दिनकरपरिवेषो दृष्टियुद्धं द्वितीये । दिनकरपरिवेषं क्षेममाहुस्तृतीये दिनकरपरिवेषः सर्वनाशश्चतुर्थे ' इति ॥ ९ ॥

९ ] ति० टी०–ह्रस्वत्वादिगुणकः परिवेष आदित्ये दृश्यते ॥ ९ ॥

रा० टी०–ह्रस्व इति । विमले आदित्ये ह्रस्वत्वादिविशिष्टः परिवेषः मध्ये नीलं लक्ष्म च दृश्यते ॥ ९ ॥

गो० टी०–आदित्य इति । नीलं लक्ष्म छिद्ररूपम् । तदाह वराहः—' अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः । चन्द्रार्कमकलच्छिद्रं दृष्ट्वा जनपदक्षये ' इति । यद्वा नीलं लक्ष्म चन्द्र इव कलङ्को दृश्यते । एतदेवौत्पातिकं नैल्यमधिकृत्य यदादित्यस्य रोहितं रूपमित्यारभ्य यत् कृष्णं तदन्नस्येत्युच्यते ॥ १० ॥

१० ] ति० टी०–नक्षत्राणि हतानीति । रात्रिकाल इति शेषः ॥ १० ॥

रा० टी०–रजसेति । रजसाहतानि नक्षत्राणि लोकानां युगान्तं विनाशमित्यर्थः । किं च लोकानां जनानां युजः संयोगस्य आसमन्तादन्तं विनाशमिव शंसन्ति ॥ १० ॥

गो० टी०–रजसेति । रजसा मालिन्येन । युगान्तं प्रलयम् ॥ ११ ॥

११ ] ति० टी०–महाभयान्महाभयजनकान्नादान् ॥ ११ ॥

रा० टी०–काका इति । काकादयः परिपतन्ति लङ्कायां निपतन्ति शिवाः अपि सुमहाभयान् अशुभान् नादान् नदन्ति ॥ ११ ॥

गो० टी०–काका इति । नीचैः दुर्बलैः । अधिकबलानां दुर्बलैः परिभवोऽप्युत्पात इति । शिवाः गोमायवः । स्त्रियां शिवा भूरिमायुर्गोमायुरित्यमरः । नादान् नदन्ति नादान्कुर्वन्तीत्यर्थः ॥ १२ ॥

१२–१३ ] ति० टी०–अधुना दृश्यमाननिमित्तानां फलमाह—शैलैरित्यादि ॥ १२ ॥ १३ ॥

रा० टी०–उक्तदुःशकुनानां फलमाह—शैलैरिति । कपिराक्षसैर्विमुक्तैः शैलादिभिरावृता अत एव मांसशोणितकर्दमा भूमिर्भविष्यति ॥ १२ ॥

गो० टी०–उक्तोत्पातफलमाह—शैलैरिति । मांसशोणितकर्दमा मांसशोणितरूपकर्दमवती ॥ १३ ॥

रा० टी०–क्षिप्रमिति । हरिभिरावृता वयं पुरीं लङ्कां क्षिप्रमभियाम एतेन स्वविजयसूचकसुशकुनोऽपि रामेणावलोकित इति व्यञ्जितम् ॥ १३ ॥

गो० टी०–क्षिप्रमिति । क्षिप्रं सत्वरम् । जवेन वेगेन ॥ १४ ॥

१४ ] ति० टी०–रामो जनरमणो राम इत्यन्वयः ॥ १४ ॥

रा० टी०–इतीति । रामः सर्वाभिरामदाता रामः लङ्कामभिमुखः सन् पुरतः प्रथमं प्रतस्थे पुरतः प्रतस्थे इत्यनेन युद्धोत्साहः सूचितः ॥ १४ ॥

---

१ स्रवतीति गो. पाठः । २ गृध्रा नीचैरिति गो. पाठः । ३ चाशिवानिति गो. पाठः । ४ विसृष्टैरिति गो.पाठः । ५ सर्वतो हरिभिर्वृता इति गो.पाठः । ६ धर्मात्मा धन्वीति गो. पाठः । ७ हर्षण इति गो. पाठः ।

सविभीषणसुग्रीवाः सर्वे ते वानरर्षभाः । प्रतस्थिरे विनर्दन्तो धृतानां द्विषतां वधे ॥ १५ ॥
राघवस्य प्रियार्थं तु सुतरां वीर्यशालिनाम् । हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः ।

रामो लङ्कां वीक्ष्य प्रशस्य स्वसेनां व्यूह्य पूर्वं बद्धं शुकं मोचयामास स तु रावणमुपागम्य रामबलं कथयामास तेन क्रुद्धः पौलस्त्यः स्वपराक्रमं सगर्वं कथयति ।

सा वीरसमिती राज्ञा विरराज व्यवस्थिता । शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १ ॥
प्रचचाल च वेगेन त्रस्ता चैव वसुंधरा । पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २ ॥
ततः शुश्रुवुराक्रुष्टं लङ्कायां काननौकसः । भेरीमृदङ्गसंघुष्टं तुमुलं लोमहर्षणम् ॥ ३ ॥
बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः । अमृष्यमाणास्तद्घोषं विनेदुर्घोषवत्तरम् ॥ ४ ॥
राक्षसास्तत्प्लवंगानां शुश्रुवुस्तेऽपि गर्जितम् । नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५ ॥

गो० टी०—इत्येवमिति । पुरतः प्रतस्थ इति उत्साहातिशयोक्तिः । विभुः समर्थः ॥ १५ ॥

१५ ] ति० टी०—धृतानां निश्चितबुद्धीनाम् ॥ १५ ॥

रा० टी०—सेति । सर्वे वानरर्षभाः धृतानां युद्धविषयकनिश्चयवतां द्विषतां राक्षसानां वधे वधार्थं प्रतस्थिरे ॥ १५ ॥

गो० टी०—स बिभीषणेति । निश्चिताः निश्चयवन्तः । अत्र प्रस्थानं शीतोदकफलवद्वनपरिग्रहार्थं परिगृह्योदकमित्यादिना प्रथमं तस्य कर्तव्यतया अभिहितत्वात् ॥ १६ ॥

१६ ] ति० टी०—कर्मणा धैर्येण परं प्रति प्रस्थानलक्षणेन, चेष्टाभिः कायव्यापारैश्च तुतोषेत्यन्वयः ॥ १६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

रा० टी०—राघवस्येति । राघवस्य स्वस्य प्रियार्थं हरीणां कर्मचेष्टाभिः कृतकायव्यापारैः रघुनन्दनस्तुतोष ॥ १६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

गो० टी०—राघवस्येति । धृतानां धैर्यवताम् । कर्मचेष्टाभिः युद्धकर्मादिविषयचेष्टाभिः । लाङ्गूलोत्थापनादिभिः तुतोषेत्यनेन इदं दुर्गप्रदेशं दृष्ट्वा वानरा निरुत्साहा भवेयुरिति पूर्वं राममनसि स्थितमित्यवगम्यते ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

१ ] ति० टी०—सेति । सा वीराणां समितिः समागमो राज्ञा व्यवस्थिता रामेण कृतव्यूहा विरराज । शुभनक्षत्रा शारदी पौर्णमासी शशिनेव ॥ १ ॥

रा० टी०—प्रस्थानानन्तरकालिकं वृत्तान्तमाह—सेत्यादिभिः । राज्ञा सुग्रीवेण व्यवस्थिता संस्थापिता वीरसमितिः वीराणां समाजः शशिना युक्ता पौर्णमासीव विरराज ॥ १ ॥

गो० टी०—अथ रावणस्य वानरसेनागमनश्रवणम्—सेत्यादि । राज्ञा रामेण व्यवस्थिता शीतोदकादिकं परिगृह्य स्थिता । वीरसमितिः वीरसङ्घः । सङ्घे सभायां समितिरित्यमरः । शशिना व्यवस्थिता कृतमर्यादा ॥ १ ॥

२ ] ति० टी०—तेन बलौघेन पीड्यमाना वसुंधरा सेनाया वेगेन प्रचचाल वित्रस्ता च ॥ २ ॥

रा० टी०—प्रचचालेति । सागरवर्चसा सागरस्य सगरवंशोद्भवस्य रामस्य वर्चस्तेजो यस्मिन् किंच सागरात् सागरतरणात् लब्धं वर्चो येन तेन वेगेनोपलक्षितेन बलौघेन त्रस्तत्वादिविशिष्टा वसुंधरा प्रचचाल ॥ २ ॥

गो० टी०—प्रचचालेति । सागरवर्चसा सागरवदपरिच्छिन्नेनेत्यर्थः ॥ २ ॥

३ ] ति० टी०—आक्रुष्टमाक्रोशम् ॥ ३ ॥

रा० टी०—तत इति । आक्रुष्टं राक्षसानां परस्परमाह्वानं भेरीमृदङ्गसंघुष्टं च काननौकसः शुश्रुवुः ॥ ३ ॥

गो० टी०—तत इति । ततः सेनानिवेशानन्तरम् । निष्कोलाहले सतीत्यर्थः । आक्रुष्टं सेनाक्रोशम् भावे क्तः । भेरीमृदङ्गसंघुष्टमिति सत्त्वयः ॥ ३ ॥

४ ] ति० टी०—घोषवत्तरमतिशयितध्वनिमत् ॥ ४ ॥

रा० टी०—बभूवुरिति । हरियूथपाः तेन घोषेण तच्छ्रवणेन संहृष्टा बभूवुः । तद्घोषम् अमृष्यमाणाः सन्तः घोषवत्तरं विनेदुश्च ॥ ४ ॥

गो० टी०—बभूवुरिति । घोषवत्तरं राक्षसघोषादधिकघोषवत् । क्रियाविशेषणम् ॥ ४ ॥

५ ] ति० टी०—अम्बरे मेघानां स्वनमिव तेऽपि राक्षसाः प्लवंगानां तद्गर्जितं शुश्रुवुः ॥ ५ ॥

१ तत इति गो. पाठः । २ निश्चिता इति गो. पाठः । ३ धृतानामिति गो. पाठः । ४ तमिति गो. पाठः । ५ स्थिति गो. पाठः । ६ चेति गो. पाठः ।

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् । जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६ ॥
अत्र सा मृगशावाक्षी रावणेनोपरुध्यते । अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥ ७ ॥
दीर्घमुष्णं च निःश्वस्य समुद्वीक्ष्य च लक्ष्मणम् । उवाच वचनं वीरस्तत्कालहितमात्मनः ॥ ८ ॥
आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण । मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९ ॥
विमानैर्बहुभिर्लङ्का संकीर्णा रचिता पुरा । विष्णोः पदमिवाकाशं छादितं पाण्डुभिर्घनैः॥ १० ॥
पुष्पितैः शोभिता लङ्का वनैश्चित्ररथोपमैः । नानापतंगसंघुष्टफलपुष्पोपगैः शुभैः ॥ ११ ॥
पश्य मत्तविहङ्गानि प्रलीनभ्रमराणि च । कोकिलाकुलखण्डानि दोधवीति शिवोऽनिलः॥१२॥

रा० टी०–राक्षसा इति । मेघानां स्वनमिव प्लवङ्गानां गर्जितं राक्षसा अपि शुश्रुवुः ॥ ५ ॥

गो० टी०–राक्षसा इति । द्रुमाणां पूर्णानाम् । आकाशस्यैव शब्दाश्रयत्वादम्बर इत्युक्तम् । यद्वा प्लवगसैन्यमुल्कजिताजितमितिवदम्बरशब्दस्तत्पर्यायं नभश्शब्दं लक्षयित्वा श्रावणमासमाह ॥ ५ ॥

६ ] ति० टी०–मनसा जगाम सस्मारेत्यर्थः ॥ ६ ॥

रा० टी०–दृष्ट्वेति । दाशरथिः लङ्कां दृष्ट्वा दूयमानेन चेतसोपलक्षितां सीतां मनसा जगाम संस्मारेत्यर्थः ॥ ६ ॥

गो० टी०–दृष्ट्वेति । चिह्नयुक्तो ध्वजः केवलचेला पताकेति भिदा । चेतसा उपलक्षितः मनसा जगाम । सस्मारेत्यर्थः ॥ ६ ॥

७ ] ति० टी०–स्मरणप्रकारः—अत्र सेति । उपरुध्यते उपरुद्धा तिष्ठति । लोहिताङ्गोऽङ्गारकः ॥ ७ ॥

रा० टी०–स्मरणप्रकारमाह–अत्रेति । लोहिताङ्गेन ग्रहेण अभिभूता रोहिणीव सा सीता रावणेनोपरुध्यते ॥ ७ ॥

गो० टी०–स्मरणप्रकारमाह—अत्रेति । एतच्छ्लोकान्त प्रकारवचनमितिकरणं द्रष्टव्यम् । सा साकेते सकलभोगार्हा । मृगशावाक्षी । मृगानुसरणसमये यद्धरिणदर्शनकुतूहलेन मृगशिशुवत्तरलतरं विलोचनयुगलम् तदेवाद्यापि मनसि परिवर्तते । तदाह । यद्वा मृगशावे मारीचमये अक्षिणी यस्या इति वा विग्रहः ॥ ७ ॥

८ ] ति० टी०–आत्मनस्तत्कालहितं लङ्कादर्शनकाले आत्मनः प्रीतिकरम् । दिव्यपुरीदर्शनजसंतोषद्योतकमिति यावत् ॥ ८ ॥

रा० टी०–दीर्घमिति । दीर्घं बहुकालमुष्णं निःश्वस्य लक्ष्मणमुद्वीक्ष्य च वीरो रामः आत्मनः तत्कालहितं वचनमुवाच ॥ ८ ॥

गो० टी०–दीर्घमिति । अथ युद्धयात्रासमये कान्तास्मरणव्यसनमनुचितमिति तन्नियमितवानिति सूचयति दीर्घमुष्णं च निश्वस्येत्यनेन । तत्कालहितम् युद्धयात्रासमये हितम् । शोकविस्मारकमगरशोभावर्णनरूपं वचनम् । यद्वा अङ्गदः सह नीलेनेत्यादि वाक्यं तत्कालहितम् । तत्साहचर्यादस्य नगरमितिवत् । आलिखन्तीमित्यादिकं सर्वं वाक्यजातं तत्कालहितमित्युक्तम् ॥ ८ ॥

९ ] ति० टी०–तदेवाह—आलिखन्तीमित्यादि ॥ ९॥

रा० टी०–तदाकारमाह–आलिखन्तीमित्यादिभिः । नगाग्रे शैलशृङ्गे विश्वकर्मणा मनसेव कृताम् आकाशम् आलिखन्तीमिवोत्थितां लङ्कां पश्य ॥ ९ ॥

गो० टी०–आलिखन्तीमिति । आलिखन्तीं स्पृशन्तीम् उत्थिताम् उन्नताम् । नगाग्रे त्रिकूटशिखरे ॥ ९ ॥

१०-११] ति० टी०–विमानैः सप्तभूमिकप्रासादैः संकीर्णा निबिडा । तत्रोपमा–पाण्डुभिर्घनैः संकीर्णं विष्णोर्व्यापनशीलस्य वायुमयस्य ब्रह्मणः पदं प्रचारस्थानमाकाशमिव ॥ १० ॥ ११ ॥

रा० टी०–विमानैरिति । पाण्डुभिर्घनैराच्छादितं विष्णोः पदमाकाशमिव लङ्का विमानैः संकीर्णा आच्छादिता ॥ १० ॥

गो० टी०–विमानैरिति । विष्णोः आदित्यस्य पदं स्थानम् । आकाशमध्यमिति भावः । विमानम् अनेक तलप्रासादः ॥ १० ॥

रा० टी०–पुष्पितैरिति । नानापतंगसंघुष्टानां फलपुष्पाणामुपगः राजगृहादिषु गमनं येभ्यस्तैः पुष्पितैश्चैत्ररथोपमैः काननैर्लङ्का शोभिता ॥ ११ ॥

गो० टी०–पुष्पितैरिति । फलभूतानि पुष्पाणि यासां ताः फलपुष्पाः मल्लिकादयः ताभिरुपगम्यन्त इति तथा । अतो न पुष्पितैरित्यनेन पौनरुक्त्यम् । सङ्घुष्टं सङ्घोषः भावे क्तः । नानाविधानि पतङ्गसङ्घुष्टानि येषां तैः ११ ॥

१२ ] ति० टी०–कोकिलाकुलखण्डानि तदाकुलवृक्षखण्डानि । दोधवीति कम्पयति ॥ १२ ॥

रा० टी०–पश्येति । मत्ताः विहङ्गाः येषु प्रलीनाः भ्रमराः येषु कोकिलाकुलाः षण्डाः वृक्षसमूहाः येषु तानि वनानि अनिलः दोधवीति पुनः कम्पयति इति त्वं पश्य एषां वचनानां हितत्वं तु युद्धव्यापारशैथिल्यसंपादकसीतास्मृतिनिवर्तकत्वेन ॥ १२ ॥

गो० टी०–पश्येति । मत्तविहङ्गानि । विहङ्गशब्दोऽत्र कोकिलपरः । अनेन सदा फलवत्त्वमुक्तम् । प्रलीनभ्रमराणि मधुपानपरवशतया निष्पन्दभ्रमराणि । अनेन सदा पुष्पवत्त्वमुक्तम् । कोकिलाकुलं षण्डं पुष्पसमूहो येषां तानि कोकिलाकु-

१ भुवि राजन्न इति गो. पाठः । २ पाण्डुरैरिति गो. पाठः । ३ पतङ्गेति गो. पाठः । ४ यस्येति रा. पाठः ।

इति दाशरथी रामो लक्ष्मणं समभाषत । बलं च तत्र विभजञ्छास्त्रदृष्टेन कर्मणा ॥ १३ ॥
शशास कपिसेनां तां बलादादाय वीर्यवान् । अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १४ ॥
तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः । आश्रितो दक्षिणं पार्श्वमृषभो नाम वानरः ॥ १५ ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः । तिष्ठेद्वानरवाहिन्याः सव्यं पक्षमधिष्ठितः ॥ १६ ॥
मूर्ध्नि स्थास्याम्यहं यत्तो लक्ष्मणेन समन्वितः । जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ १७ ॥
ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः । जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ॥
पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ॥ ॥ १८ ॥
सुविभक्तमहाव्यूहा महावानररक्षिता । अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा ॥ १९ ॥
प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् । आसेदुर्वानरा लङ्कां मिमर्दयिषवो रणे ॥ २० ॥
शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा । इति स्म दधिरे सर्वे मनांसि हरिपुङ्गवाः ॥ २१ ॥

---

लपण्डानि । अनेन सदा पल्लवितत्वमुक्तम् । कोकिलानां पल्लवप्रियत्वात् । वनानीत्यनुषञ्जनीयम् । दोधवीति पुनः पुनः कम्पयति । "धूञ्, कम्पने" इत्यस्माद्यङ्लुक् ॥ १२ ॥

१३ ] ति० टी०–विभजद्व्यभजत् ॥ १३ ॥

रा० टी०–इतीति । रामः इति समभाषत शास्त्रदृष्टेन नीतिशास्त्रविहितेन कर्मणा बलं विभजत् व्यभजच्च ॥ १३ ॥

गो० टी०–इतीत्यर्धमेकं वाक्यम् ॥ १३ ॥

१४ ] ति० टी०–बलाद्वानरबलात्, आदाय स्वबलं गृहीत्वा नीलेन सहाङ्गद उरस्युच्यमानपुरुषव्यूहस्योरसि तिष्ठेदिति कपिसेनां शशास ॥ १४ ॥

रा० टी०–शशासेति । कपिसेनां शशास राम इति शेषः तत्प्रकारमाह–बलात् सैन्यात् आदाय स्वबलं गृहीत्वा उरसि पुरुषव्यूहमध्ये नीलेन सह अङ्गदः तिष्ठेत् ॥ १४ ॥

गो० टी०–बलमिति । शास्त्रदृष्टेन नीतिशास्त्रज्ञानेन कर्मणा प्रयोगेन बलं सेनाम् विभजन् व्यूहयन् व्यूहहेतोः शशास कपिसेनाया इत्याद्युत्तरशेषः ॥ १४ ॥

गो० टी०–शासनप्रकारमाह—कपिसेनाया इत्यादि । अङ्गदो नीलेन सह स्वबलमादाय कपिसेनायाः उरसि उरःस्थाने तिष्ठेदित्यन्वयः ॥ १५ ॥

१५–१६ ] ति० टी०–वानरौघसमावृत ऋषभो वानरवाहिन्या दक्षिणं पार्श्वमाश्रितस्तिष्ठेदित्यन्वयः ॥ १५ ॥ १६ ॥

रा० टी०–तिष्ठेदिति । वानरौघसमावृतः ऋषभो नाम वानरो वानरवाहिन्याः दक्षिणं पार्श्वमाश्रितः सन् तिष्ठेत् ॥ १५ ॥

गो० टी०–तिष्ठेदिति । वानरौघसमावृतः कपिसमूहसहितः ॥ १६ ॥

रा० टी०–गन्धेति । गन्धमादनः सव्यं पक्षमधिष्ठितः सन् तिष्ठेत् ॥ १६ ॥

गो० टी०–गन्धहस्तीति । गन्धहस्ती मत्तगजः ॥ १७ ॥

१७ ] ति० टी०–यत्तः सावधानः ॥ १७ ॥

रा० टी०–मूर्ध्नीति । यत्तः सावधानोऽहं मूर्ध्नि सेनाशिरसि स्थास्यामि जाम्बवदादयस्त्रयः कुक्षिं रक्षन्तु कपिसेनायाः जघनं तु लोकस्य पश्चार्धं प्रचेता वरुण इव कपिराजोऽभिरक्षतु । सार्धश्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०–मूर्ध्नीत्यर्धमेकं वाक्यम् । युक्तः सावधानः १८

गो० टी०–जाम्बवानिति । वानर इति वेगदर्शिविशेषणम् । ऋक्षमुख्यपदं वानराणामप्युपलक्षणम् । महात्मानः महाबुद्धयः । कुक्षिं कुक्षिस्थानम् ॥ १९ ॥

१८–१९ ] ति० टी०–जाम्बवदादयस्त्रयोऽपि ऋक्षा जघनं पश्चार्धं लोकस्य भूलोकस्य पश्चार्धं पश्चिमदिशं तेजसा वृत्तः प्रचेता इव ॥ १८ ॥ १९ ॥

गो० टी०–जघनमिति । जघनं चरमभागं पुच्छमिति यावत् । कपिराजः सुग्रीवः । पश्चार्धमिति । "अपरस्यार्धे पश्चभावो वक्तव्यः" इत्यपरशब्दस्य पश्चादेशः अर्धशब्दोंऽशवाची । पश्चिमां दिशमित्यर्थः ॥ २० ॥

रा० टी०–सुविभक्तेति । सुविभक्तः महाव्यूहो यस्याः सा अनीकिनी सेना अभ्रसंप्लवसहिता द्यौरिव विबभौ ॥ १९ ॥

गो० टी०–सुविभक्तेति । सुविभक्तमहाव्यूहा सुष्ठु कृतगरुडव्यूहा । उत्तरत्र शार्दूलवचने गारुडं व्यूहमाश्रित्येति वक्ष्यमाणत्वात् । साभ्रसंप्लवा समेघसंचारा ॥ २१ ॥

२० ] ति० टी०–मर्दयितुमिच्छवो मिमर्दयिषवः ॥ २० ॥

रा० टी०–प्रगृह्येति । रणे लङ्कामिमर्दयिषवः वानराः गिरिशृङ्गाणि प्रगृह्य आसेदुर्जग्मुः ॥ २० ॥

गो० टी०–प्रगृह्येति । आसेदुः आसादितुमुद्युक्ताः । विमर्दयिषवः मर्दयितुमिच्छवः । सनि द्वित्वाभाव आर्षः ॥ २२ ॥

२१ ] ति० टी०–शिखरैर्गिरिशिखरैर्विकिराम विक्षिपाम । नाशयामेति यावत् ॥ २१ ॥

---

१ तद्वै इति गो. पाठः । २ सेनाया इति गो. पाठः । ३ आश्रितेति गो. पाठः । ४ वानरर्षभ इति गो. पाठः । ५ सव्यपक्षमिति गो. पाठः । ६ पार्श्वं समाश्रित इति गो. पाठः । ७ युक्त इति गो. पाठः । ८ विमर्दैति गो. रा. पाठः । ९ सत्तमा इति गो. पाठः ।

ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् । सुविभक्तानि सैन्यानि शुक एष विमुच्यताम्॥ २२ ॥
रामस्य तु वचः श्रुत्वा वानरेन्द्रो महाबलः । मोचयामास तं दूतं शुकं रामस्य शासनात् ॥ २३ ॥
मोचितो रामवाक्येन वानरैश्च[1] निपीडितः । शुकः परमसंत्रस्तो रक्षोधिपमुपागमत् ॥ २४ ॥
रावणः प्रहसन्नेव शुकं वाक्यमुवाच ह । किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे ॥ २५ ॥
कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः । ततः स भयसंविग्नस्तेन राज्ञाभिचोदितः ॥
वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ॥ ॥ २६ ॥
सागरस्योत्तरे तीरेऽब्रुवं ते वचनं तथा । यथा संदेशमक्लिष्टं सान्त्वयञ्श्लक्ष्णया गिरा ॥ २७ ॥
क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रः प्लवंगमैः । गृहीतोऽस्म्यपि चारब्धो हन्तुं लोप्तुं च मुष्टिभिः ॥२८॥
न ते[2] संभाषितुं शक्याः संप्रश्नोऽत्र न [3]विद्यते । प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप॥ २९ ॥

---

रा० टी०—शिखरैरिति । एनां लङ्कां शिखरैर्मुष्टिभिर्वा विकिराम विनाशयाम इति मनांसि हरिपुङ्गवाः दधिरे ॥२१॥

गो० टी०—शिखरैरिति । शिखरैः ताडनैः । विकिराम चूर्णयाम । मनांसि दधिरे निश्चयं चक्रुरित्यर्थः ॥ २३ ॥

२२-२४ ] ति० टी०—शुक एष विमुच्यतामिति । पूर्वं मुच्यतां दूत आगत इत्यत्र ताडनादिदुःखान्मुच्यतामित्येवार्थः । तेन बद्धा स्थापित इत्यवगम्यते ॥ २२ ॥ २४ ॥

रा० टी०—तत इति । सैन्यानि सुविभक्तानि अतः एषः शुकः तदभिधरावणदूतः विमुच्यताम् इदं वचः रामः सुग्रीवमब्रवीत् ॥ २२ ॥

गो० टी०—तत इति । स्पष्टः ॥ २४ ॥

रा० टी०—रामस्येति । रामस्य वचः श्रुत्वा वानरेन्द्रः सुग्रीवः रामस्य शासनात् शुकं दूतं मोचयामास ॥ २३ ॥

गो० टी०—रामस्येति । स्पष्टः ॥ २९ ॥

रा० टी०—मोचित इति । रामवाक्येन मोचितः शुकः रक्षोधिपमुपागमत् ॥ २४ ॥

गो० टी०—मोचित इति । स्पष्टः ॥ २६ ॥

२५ ] ति० टी०—प्रहसन्नेव । लूनपक्षत्वादिविकृताकारं दृष्ट्वा प्रहासः । इमौ ते पक्षौ सितौ बद्धौ किम्, अतो लूनपक्षश्च दृश्यसे ॥ २५ ॥

रा० टी०—रावण इति । प्रहसन् रावणः शुकमुवाच । तदाकारमाह—ते इमौ पक्षौ किं किमर्थं सितौ बद्धौ लूनपक्षश्च कथं दृश्यसे ॥ २५ ॥

रा० टी०—कच्चिदिति । अनेकचित्तानां चञ्चलमनसां तेषां वानराणां वशं त्वं कच्चिदागतः अर्थ पृथक् ॥ २६ ॥

गो० टी०—रावण इत्यादि । सितौ बद्धौ । "षिञ्, बन्धने" इत्यस्माद्धातोर्निष्ठा । तत्र हेतुमाह—लूनपक्षश्च दृश्यस इति चो हेत्वर्थः । यस्माल्लूनपक्षो दृश्यसे तस्मात् सिताविति संबन्धः । अनेकचित्तानां चञ्चलचित्तानामित्यर्थः । अनेन पुनः पुनर्बन्धविसर्जने ध्वन्येते । तेषां वानराणां वशमागतो न कच्चिदित्यन्वयः ॥ २७ ॥

२६ ] ति० टी०—अनेकचित्तानां चञ्चलचित्तानां वानराणाम् ॥ २६ ॥

रा० टी०—तत इति । भयेन संविग्नः चञ्चलमनाः राज्ञाऽभिचोदितः पृष्टः स शुकः इदं प्रत्युवाच ॥ २७ ॥

गो० टी०—तत इति । संविग्नः संभ्रान्तः । तथापि चोदितः मत्संदेशस्य किमुत्तरं सुग्रीवेण दत्तं वदेति चोदित इत्यर्थः ॥ २८ ॥

२७ ] ति० टी०—सागरस्योत्तरे तीरे स्थित्वा । श्लक्ष्णया गिरा वानरान्सान्त्वयन् । अक्लिष्टं ते वचनं यथासंदेशं तथाब्रुवम् ॥ २७ ॥

रा० टी०—तदाकारमाह—सागरस्येत्यादिभिः । सागरस्योत्तरे तीरे तदाकाशे स्थित्वा श्लक्ष्णया गिरा सान्त्वयन् सन् अक्लिष्टं सरलं यथा ते संदेशं वचनं तथाहमब्रुवम् । किंच ते संदेशं वचनमक्लिष्टमबाधितं यथा स्यात्तथा ब्रुवम् ॥ २८ ॥

गो० टी०—सागरस्येति । सान्त्वयन् असान्त्वयन् । सुग्रीवमिति शेषः ॥ २९ ॥

२८ ] ति० टी०—अहं तथाब्रुवम् । लोप्तुं पक्षभागे छेत्तुं मुष्टिभिर्हन्तुं चारब्धः ॥ २८ ॥

रा० टी०—क्रुद्धैरिति । क्रुद्धैः प्लवङ्गमैः दृष्टमात्रोऽहं गृहीतः मुष्टिभिर्हन्तुं लोप्तुं च पक्षकेशानिति शेषः आरब्धोऽस्मि ॥ २९ ॥

गो० टी०—क्रुद्धैरिति । लोप्तुं विनाशयितुम् ॥ ३० ॥

२९ ] ति० टी०—ते कृतपरिभवाः संभाषितुं न शक्याः । अत्र परिभवे सम्प्रश्नो विचारो नास्ति । इदमेतावत्कार्यमिति मर्यादा नास्तीत्यर्थः । तदेव स्मारयति—प्रकृत्येति ॥ २९ ॥

रा० टी०—नेति । ते वानराः प्रकृत्या कोपनाः अतः संभाषितुं न शक्याः अत एव अत्र मत्कर्मकताडनसमये संप्रश्नो न विद्यते किमर्थं मां ताडयथेति प्रष्टुमवकाशो न लब्ध इत्यर्थः ॥ ३० ॥

गो० टी०—नैवेति । अत्र वानरेषु । विषये सप्तमी । ती-

---

१ वचनमिति गो. पाठः । २ ऽभीति गो. पाठः । ३ अभाषतेति गो. पाठः । ४ दृश्यते इति रा. पाठः । ५ तथेति गो. पाठः । ६ सान्त्वयमिति गो. पाठः । ७ मात्रैरिति गो. पाठः । ८ एवेति गो. पाठः । ९ कम्प्यत इति गो. पाठः ।

स च हन्ता विराधस्य कबन्धस्य खरस्य च । सुग्रीवसहितो रामः सीतायाः पदमागतः ॥ ३० ॥
स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् । एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ॥ ३१ ॥
ऋक्षवानरसङ्घानामनीकानि सहस्रशः । गिरिमेघनिकाशानां छादयन्ति वसुंधराम् ॥ ३२ ॥
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च । नैतयोर्विद्यते संधिर्देवदानवयोरिव ॥ ३३ ॥
पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु । सीतां चास्मै प्रयच्छाशु युद्धं वापि प्रदीयताम् ॥ ३४ ॥
शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् । रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३५ ॥
यदि मां प्रति युध्येरन्देवगन्धर्वदानवाः । नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ ३६ ॥
कदा समभिधावन्ति मामका राघवं शराः । वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥ ३७ ॥
कदा शोणितदिग्धाङ्गं दीप्तैः कार्मुकविच्युतैः । शरैरादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ ३८ ॥
तच्चास्य बलमादास्ये बलेन महता वृतः । ज्योतिषामिव सर्वेषां प्रभामुद्यन्दिवाकरः ॥ ३९ ॥
सागरस्येव मे वेगो मारुतस्येव मे बलम् । न च दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥ ४० ॥

दणाः क्रूराः । उक्तेरेवावकाशो नास्ति प्रत्युक्तः का कथेति भावः । रावणप्रसादार्थं मध्ये राक्षसाधिपेति सम्बुद्धिः । त्वत्तोऽप्येतेऽतिशयिता इति ज्ञापनार्थं वा ॥ ३१ ॥

३० ] ति० टी०—अधुना विज्ञाप्यमाह—स चेति । विराधादिहन्तेत्यनेन तवापि हन्तेति सूचितम् । पदं स्थानमन्विष्यागतः प्राप्तः ॥ ३० ॥

रा० टी०—स इति । विराधादेर्हन्ता रामः सीतापदं स्थितिं ज्ञात्वेति शेषः आगतः ॥ ३१ ॥

गो० टी०—वक्ष्यमाणयोः सीताप्रदानयुद्धयोर्मध्ये सीताप्रदानस्य साधिष्ठत्वं दर्शयितुं रामपराक्रमं वर्णयति—स चेति । तदभ्याहतपराक्रमस्य भूयः संदर्शनादस्मानवश्यं हनिष्यत्येवेति भावः ॥ ३२ ॥

३१-३२ ] ति० टी०—रक्षांसि निर्धूय तृणीकृत्य॥३१॥३२॥

रा० टी०—स इति । रक्षांसि निर्धूय विद्यमानो यो राघवः स सेतुं कृत्वा तीर्त्वा च तिष्ठति ॥ ३२ ॥

गो० टी०—स कृत्वेति । निर्धूय तृणीकृत्य । एष इत्यतिसन्निहितत्वमुच्यते ॥ ३३ ॥

रा० टी०—ऋक्षेति । ऋक्षवानरसंघानामनीकानि सैन्यानि वसुन्धरां छादयन्ति ॥ ३३ ॥

गो० टी०—ऋक्षेति । सङ्घानामनीकानीत्यनेन संघानां बहुत्वोक्त्या महानीकत्वं सूचितम् ॥ ३४ ॥

३३ ] ति० टी०—संधिः संधानं नास्त्येव ॥ ३३ ॥

रा० टी०—राक्षसानामिति । एतयोर्देवदानवयोरिव संधिरियत्ता न विद्यते ॥ ३४ ॥

गो० टी०—इदानीं तव वचनावकाशाभावेऽपि पुनः प्रकारान्तरेण गच्छेत्याशङ्क्याह—राक्षसानामिति । संधिः योगमात्रम् ॥ ३५ ॥

३४-३५ ] ति० टी०—पुरा आयान्त्यायास्यान्ति । पुरायोगे भविष्यति लट् । एकतरं वक्ष्यमाणयोरन्यतरत् ॥३४॥३५॥

गो० टी०—तर्हि किं कर्तव्यमित्यत आह—पुरेति । प्राकारमायान्ति आयास्यन्ति अतः पुरा आगमनात्पूर्वम् एकतरं क्षिप्रं कुरु एकतरत्वमेवाह—सीतां प्रयच्छ युद्धं प्रदीयतां वा ॥ ३५ ॥

गो० टी०—संप्रति कर्तव्यमुपदिशति—पुरेति । पुरा आयान्ति आयास्यन्ति । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । एकतरमित्युक्तम् विशदयति—सीतामिति॥३६॥

रा० टी०—शुकस्येति । रावणोऽब्रवीत् ॥ ३६ ॥

गो० टी०—शुकस्येति । स्पष्टः ॥ ३७ ॥

३६ ] ति० टी०—सर्वस्य राक्षसलोकस्य रणभयप्राप्तेरपीत्यर्थः ॥ ३६ ॥

रा० टी०—तदाकारमाह—यदीति । देवादयोऽपि यदि मां प्रतियुध्येरन् अत एव सर्वलोकभयं प्राप्य विद्यमानोऽहं सीतां नैव प्रदास्यामि ॥ ३७ ॥

गो० टी०—यदीति । सर्वलोकभयात् सर्वलोकेभ्यो भयात् ३८

३७-३८ ] ति० टी०—समभिधावन्ति धाविष्यन्ति ३७॥३८

रा० टी०—कदेति । मामकाः शराः पुष्पितं पादपं भ्रमरा इव राघवं कदा समभिधावन्ति शीघ्रं गमिष्यन्ति ॥ ३८ ॥

गो० टी०—स्वमनोरथं दर्शयति—कदेत्यादिना ॥ ३९ ॥

रा० टी०—कदेति कार्मुकविच्युतैर्दीप्तैः शरैः शोणितदिग्धाङ्गं रामम् उल्काभिः कुञ्जरमिव कदा आदीपयिष्यामि ॥ ३९ ॥

गो० टी०—कदेति । तूणीशयैः चिरात् समराभावेन केवलतूणीरस्थैः । गणशः संघशः । उल्काभिः निर्गतज्वालाकाष्ठैः ताभिः कुञ्जरमभिद्रावयन्तीति प्रसिद्धिः ॥ ४० ॥

३९ ] ति० टी०—आदास्ये तिरस्करिष्यामि ॥ ३९ ॥

रा० टी०—तदिति । अस्य तद्बलमहमादास्ये हरिष्यामि । तत्र दृष्टान्तः—ज्योतिषां प्रभाम् उद्यन् दिवाकर इव ॥ ४० ॥

गो० टी०—तच्चेति । तत् बलं स च हन्ता विराधस्येत्यादिना भवदुक्तबलम् । आदास्ये तिरस्करोमीत्यर्थः ॥४१॥

४० ] ति० टी०—वेद जानाति ॥ ४० ॥

१ वेति गो. पाठः । २ सुयुद्धं वेति गो. पाठः । ३ यच्छामीति गो. पाठः । ४ तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैरिति गो.पाठः । ५ आदीपयाम्येनमिति गो. पाठः । ६ गर्तैरिति गो. पाठः । ७ हीति गो. पाठः ।

न मे तूणीशयान्बाणान्सविषानिव पन्नगान् । रामः पश्यति सङ्ग्रामे तेन मां योद्धुमिच्छति ॥ ४१ ॥
न जानाति पुरा वीर्यं मम युद्धे स राघवः । मम चापमयीं वीणां शरकोणैः प्रवादिताम् ॥ ४२ ॥
ज्याशब्दतुमुलां घोरामार्तगीतमहास्वनाम् । नाराचतलसंनादां नदीमहितवाहिनीम् ॥
अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ॥ ॥ ४३ ॥
न वासवेनापि सहस्रचक्षुषा युद्धेऽस्मि शक्यो वरुणेन वा स्वयम् ।
यमेन वा धर्षयितुं शराग्निना महाहवे वैश्रवणेन वा स्वयम् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ।

ससेने राघवे सागरं तीर्णे प्रच्छन्नौ रामबलं प्रविश्य सर्वं वृत्तं कथयतमिति रावणेन संदिष्टौ शुकसारणौ तथा कुर्वन्तौ विभीषणेन गृहीतावपि दूतत्वाद्रामेणमुक्तौ तौ रावणं प्रदीयतां दाशरथाय मैथिलीत्यानुदिशतः ।

सबले सागरं तीर्णे रामे दशरथात्मजे । अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥ १ ॥

---

रा० टी०–सागरस्येति ॥ ४१ ॥

गो० टी०–सागरस्येति । स्पष्टः ॥ ४२ ॥

४१ ] ति० टी०–पश्यति दृष्टवान् ॥ ४१ ॥

रा० टी०–नेति । पन्नगानिव तूणीशयान् मे बाणान् रामो न पश्यति अपश्यत् तेन हेतुना मां योद्धुमिच्छति॥४२॥

गो० टी०–न म इति स्पष्टः ॥ ४३ ॥

४२ ] ति० टी०–पुरा पूर्वं मम वीर्यं न जानाति नाज्ञासीत् । शरकोणैः शररूपवादनदण्डैः प्रवादिताम् ॥ ४२ ॥

रा० टी०–नेति । युद्धे मम वीर्यं राघवो न जानाति शरकोणैः बाणरूपवीणावादनदण्डैः प्रवादितां चापमयीं वीणां च न जानाति ॥ ४३ ॥

गो० टी०–न जानातीत्यर्धम् । पुरा न जानाति इतः परं ज्ञास्यतीत्यर्थः ॥ ४४ ॥

४३ ] ति० टी०–ज्याशब्द एव तुमुलः शब्दो यस्यास्ताम् आर्त आर्तशब्दरूपो हा हतोऽस्मीत्यादिको गीतरूपो महान्स्वनो यस्यास्ताम् नाराचतलरव एव सन्नादो यस्यास्ताम् अत्र तुमुलमहास्वनसंनादशब्दैर्वीणाया मन्द्रमध्यताराः शब्दा उक्ताः । नदीरूपा याहितवाहिनी सेना तद्रूपं महारङ्गमवगाह्य रणे वादयिष्यामि ॥ ४३ ॥

रा० टी०–ज्याशब्देति । ज्याशब्द एव तुमुलशब्दो यस्यां आर्तानां गीता हा हतोस्मीत्यादिवचनानि महास्वनाः यस्यां नाराचतलानां सं नादो यस्यां ताम् अहितवाहिनीं रिपुसेनां नदीमवगाह्य प्राप्येत्यर्थः रणे महारङ्गं वादयिष्यामि नर्तयिष्यामि सार्धश्लोक एकान्वयी ॥ ४४ ॥ ४५ ॥

गो० टी०–अथ रूपकव्याजेन युद्धस्यात्मनो विनोदनकरत्वमाह—ममेत्यादिना । ममाहितवाहिनीमेव महारङ्गं विपुलवृत्तशालाम् अवगाह्य प्रविश्य शरैरेव कोणैः वीणावादनदण्डैः प्रवादितां शब्दिताम् ज्याशब्द एव तुमुलः तुमुलस्वनो यस्यास्ताम् आर्तभीतमहास्वनाम् आर्तभीतशब्देन तत्स्वनो लक्ष्यते एवं नाराचतलशब्देनापि तत्स्वनः आर्तभीतानां स्वन एव महास्वनो यस्यास्ताम् नाराचतलस्वन एव सन्नादो यस्यास्ताम् घोराम् अन्यैर्वादयितुमशक्याम् मम चापमयीं वीणामिति व्यस्तरूपकम् । रणे रणस्थजने । शृण्वतीति शेषः। वीणाया मन्द्रमध्यतारभेदेन स्वरत्रयसंभवादत्रापि स्वरत्रयमुक्तम ॥ ४५ ॥ ४६ ॥

४४ ] ति० टी०–न शक्यः । जेतुमिति शेषः ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

रा० टी०–नेति । वासवादिभिर्धर्षयितुमहं न शक्योऽस्मि ४६

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

गो० टी०–न वासवेनेति । सहस्रचक्षुष्ट्वं गर्वहेतुत्वेनोक्तम् । दिग्विजये वरुणपुत्रैरेव युद्धकरणात् स्वयमित्युक्तम् । वासवादिभिः शराग्निना यथा धर्षयितुं न शक्योस्मीति योजना ॥ ४७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

१ ] ति० टी०–रावणः शुकसारणाख्यावमात्यावब्रवीत् । अमात्यत्वेन विशेषणादयं शुकोऽन्यः, पूर्वप्रेषितशुकोक्तवृत्तान्तज्ञानपूर्वकं प्रेषणाच्चेति कतकादयः ॥ १ ॥

रा० टी०–रावणवृत्तान्तमेवाह–सेत्यादिभिः । रामे सागरं तीर्णे सति रावणः शुकसारणौ अमात्यौ अब्रवीत् ॥१॥

गो० टी०–अथ शुकसारणप्रेषणं पञ्चविंशे—सबल

---

१ तां ममाहितेति गो. पाठः । २ यमेति गो. पाठः । ३ पुनरिति गो. पाठः ।

समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् । अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २ ॥
सागरे सेतुबन्धं तं न श्रद्दध्यां कथंचन । अवश्यं चापि संख्येयं तन्मया वानरं बलम् ॥ ३ ॥
भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ । परिमाणं च वीर्यं च ये च मुख्याः प्लवंगमाः ॥ ४ ॥
मन्त्रिणो ये च रामस्य सुग्रीवस्य च संगताः । ये पूर्वमभिवर्तन्ते ये च शूराः प्लवंगमाः ॥ ५ ॥
स च सेतुर्यथा बद्धः सागरे सलिलार्णवे । निवेशं च यथा तेषां वानराणां महात्मनाम् ॥ ६ ॥
रामस्य व्यवसायं च वीर्यं प्रहरणानि च । लक्ष्मणस्य च वीरस्य तत्त्वतो ज्ञातुमर्हथः ॥ ७ ॥
कश्च सेनापतिस्तेषां वानराणां महात्मनाम् । तच्च ज्ञात्वा यथातत्त्वं शीघ्रमागन्तुमर्हथः ॥ ८ ॥
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ । हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ॥ ९ ॥
ततस्तद्वानरं सैन्यमचिन्त्यं लोमहर्षणम् । संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ॥ १० ॥
तत्स्थितं पर्वताग्रेषु निर्झरेषु गुहासु च । [ समुद्रस्य च तीरेषु वनेषूपवनेषु च । ]
तरमाणं च तीर्णं च तर्तुकामं च सर्वशः ॥ ११ ॥

---

इत्यादि । दशरथात्मज इति मनुष्यत्वोक्तिः । श्रीमानिति महातिशयोक्तिः । शुकः पूर्वस्मादन्यः सारणसाहित्यात् ॥ १॥

२ ] ति० टी०—सर्वं वानरबलं तीर्णं सागरे सेतुबन्धनं च कृतमेतदुभयमप्यभूतपूर्वम् ॥ २ ॥

रा० टी०—तदाकारमाह—समग्रमित्यादिभिः । दुस्तरं सागरं रामेण वानरबलं तीर्णं तारितं सागरे सेतुबन्धनं च कृतमिति शेषः अभूतपूर्वम् एतद्द्वयमपि पूर्वं न जातमित्यर्थः ॥२॥

गो० टी०—समग्रमिति । समग्रं विशालम् । दुस्तरं तरितुमशक्यम् सागरं कर्म वानरं वानरसंबन्धि बलं कर्तृ । तीर्णम् अतरत् कर्तरि क्तः । सेतुबन्धनं रामेण कृतमिति शेषः ॥ २ ॥

३ ] ति० टी०—सागरे सेतुबन्धनं न श्रद्दध्याम्, समुद्रस्य विराड्दरत्वेन जीवव्रातैरशक्यबन्धनत्वाजीवविशेषत्वाच्च रामस्येत्याशयः । रामोऽपि विराडेव नान्य इति बुद्धिस्तु रजस्तमःप्रधानत्वान्न तस्येति दिक् ॥ ३ ॥

रा० टी०—सागरेति । तं रामेण कृतं सेतुबन्धम् अहं कथञ्चन न श्रद्दध्याम् मह्यं न रोचते इत्यर्थः ननु जाते सेतुबन्धे इदं वचनं निरर्थकमत इदानीं कर्तव्यं वदेत्यत आह—तत् उत्तीर्णं वानरबलम् अवश्यं मया संख्येयम् ॥ ३ ॥

गो० टी०—सागर इति । सेतुबन्धं रामेण कृतम् । कथंचन आप्तपुरुषोदितत्वेपि । अपि च तथापि । संख्येयं ज्ञातव्यम् ॥ ३ ॥

४ ] ति० टी०—परिमाणं चेत्यादीनां 'तत्त्वतो ज्ञातुमर्हथः' इत्यनेन संबन्धः । ये च मुख्यास्तानिति शेषः ॥ ४ ॥

५ ] ति० टी०—ये पूर्वमभिवर्तन्ते अग्रेसरा इत्यर्थः ॥५॥

६ ] ति० टी०—सागरे संबद्धे सलिलार्णवे लवणजले समुद्रे । निवेशं सेनानिवेशम् ॥ ६ ॥

७–९ ] ति० टी०—प्रहरणान्यायुधानि ॥ ७ ॥ ९ ॥

रा० टी०—भवन्ताविति । अनुपलक्षितौ भवन्तौ वानरसैन्यं प्रविश्य परिमाणं वानराणामियत्तां ये मुख्याः प्लवङ्गमाः तान् सङ्गता ये मन्त्रिणस्तांश्च ये पूर्वमभिवर्तन्ते गच्छन्ति तांश्च ये प्लवङ्गमाः शूराः सङ्ग्रामेष्वनिवर्तिनः तांश्च यथा सेतुर्बद्धः तत्र वानराणां निवेशं संस्थितिं च रामादेर्व्यवसायादि च तत्त्वतो यथा यथावत् ज्ञातुं युवामर्हथः । श्लोकचतुष्टयमेकान्वयि ॥ ४—७ ॥

रा० टी०—क इति । वानराणां सेनापतिः कः तत् यथा तत्त्वं ज्ञात्वा शीघ्रमागन्तुमर्हथः ॥ ८ ॥

रा० टी०—इतीति । इति प्रतिसमादिष्टौ शुकसारणौ हरिरूपधरौ सन्तौ वानरं बलं प्रविष्टौ ॥ ९ ॥

गो० टी०—भवन्तावित्यादि चतुः श्लोक्येकान्वया । तस्माद्भवन्तौ अनुपलक्षितौ परैरविज्ञातौ सन्तौ वानरं सैन्यं प्रविश्य परिमाणं वानराणामियत्ताम् तेषां वीर्यं बलपरिच्छेदम् ये प्लवङ्गमाः मुख्याः प्रधानभूताः तान् ये रामस्य सुग्रीवस्य च संमता मन्त्रिणः ये नासीरभटाः पूर्वमभिवर्तन्ते ये च प्लवङ्गमाः वस्तुतः शूराः तान् सर्वान् सागरे सगरखनिते सलिलार्णवे लवणजलसमुद्रे स सेतुः वानरतरणार्थसेतुश्च यथा येन प्रकारेण बद्धः तं प्रकारम् तेषां निवेशं निवासम् उत्पत्तिस्थानं वा क्लीबत्वमार्षम् यथथा यादृशप्रकारः । रामस्य व्यवसायं कर्तव्यविषयनिश्चयम् वीर्यं बलम् प्रहरणानि आयुधानि लक्ष्मणस्य व्यवसायं बलं च तत्त्वतः पारमार्थ्येन ज्ञातुमर्हथ इत्यन्वयः ॥ ४–९ ॥

१० ] ति० टी०—नाध्यगच्छेतां नाशक्नुवाताम् ॥ १० ॥

रा० टी०—तत इति । शुकसारणौ सैन्यं संख्यातुं नाध्यगच्छेताम् अध्यगच्छताम् ॥ १० ॥

गो० टी०—तत इति । नाध्यगच्छेतां नाज्ञासिष्टाम् ॥१०॥

११ ] ति० टी०—तत्र हेतुमाह—तत्स्थितमित्यादिना ॥ ११ ॥

---

१ संगता इति गो. पाठः । २ यदिति गो. पाठः । ३ वीर्यं चेति गो. पाठः । ४ एतदिति गो. पाठः । ५ संस्थितमिति गो.पाठः । ६ निर्दरेष्विति गो. पाठः । ७ अर्धमेतदधिकं गो. पाठे ।

निविष्टं निविशच्चैव भीमनादं महाबलम् । तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ ॥ १२ ॥
तौ ददर्श महातेजाः प्रतिच्छन्नौ विभीषणः । आचचक्षे स रामाय गृहीत्वा शुकसारणौ ॥ १३ ॥
तस्यैतौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ । लङ्कायाः समनुप्राप्तौ चारौ परपुरंजय ॥ १४ ॥
तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तथा । कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः ॥ १५ ॥
आवामिहागतौ सौम्य रावणप्रहितावुभौ । परिज्ञातुं बलं सर्वं तदिदं रघुनन्दन ॥ १६ ॥
तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः । अब्रवीत्प्रहसन्वाक्यं सर्वभूतहिते रतः ॥ १७ ॥
यदि दृष्टं बलं सर्वं वयं वा सुसमाहिताः । यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् ॥ १८ ॥
अथ किंचिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः । विभीषणो वा कार्त्स्न्येन पुनः संदर्शयिष्यति ॥१९॥
न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति । न्यस्तशस्त्रौ गृहीतौ च न दूतौ वधमर्हतः ॥ २० ॥
प्रच्छन्नौ च विमुञ्चेमौ चारौ रात्रिंचरावुभौ । शत्रुपक्षस्य सततं विभीषण विकर्षिणौ ॥ २१ ॥

१२ ] ति० टी०–ददृशाते ददृशतुः ॥ १२ ॥

रा० टी०–तदिति । स्थित्यादिक्रियाविशिष्टं महाबलमतिपराक्रममत एव अक्षोभ्यं बलार्णवं निशाचरौ ददृशाते । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०–अज्ञानहेतुमाह सार्धश्लोकद्वयेन—संस्थितमिति । निर्दरेषु दलितपर्वतप्रदेशेषु उपवनेषु आरामेषु आरामः स्यादुपवनमित्यमरः ॥ ११ ॥ १२ ॥

१३–१४ ] ति० टी०–प्रतिच्छन्नौ हरिरूपेण गृहीत्वा चचक्षे गृहीत्वोपनीयाचचक्षे ॥ १३ ॥ १४ ॥

रा० टी०–ताविति । विभीषणः प्रतिच्छन्नौ तौ शुकसारणौ ददर्श अत एव गृहीत्वा रामाय आचचक्षे ॥ १३ ॥

गो० टी०–ताविति । अथ विभीषणः ददर्श आचचक्षे चेत्यन्वयः ॥ १३ ॥

रा० टी०–तदाकारमाह— तस्येति । तस्य रावणस्य मन्त्रिणौ चारौ च एतौ शुकसारणौ लङ्कायाः समनुप्राप्तौ॥१४॥

गो० टी०–तस्येति । लङ्काया इति पञ्चमी । परपुरं जयतीति परपुरंजयः । " संज्ञायां भृतृवृजिधारिसहितपिदमः " इति खच् ॥ १४ ॥

१५ ] ति० टी०–तौ रामं दृष्ट्वा व्यथितौ जीविते निराशौ चाभूताम् ॥ १५ ॥

रा० टी०–ताविति । जीविते निराशौ अत एव भीतौ अत एव व्यथितौ तौ शुकसारणौ रामं दृष्ट्वा कृताञ्जलिपुटौ सन्तौ इदमूचतुः ॥ १५ ॥

गो० टी०–ताविति । स्पष्टः ॥ १५ ॥

१६ ] ति० टी०–रावणप्रहितौ तत्प्रेषितौ ॥ १६ ॥

रा० टी०–तदाकारमाह—आवामिति । हे रघुनन्दन ! इदं भवदीयं बलं परिज्ञातुं रावणेन प्रहितौ प्रेरितौ आवामिहागतौ ॥ १६ ॥

गो० टी०–आवामिति । स्पष्टः ॥ १६ ॥

१७ ] ति० टी०–प्रहसन्सेतुबन्धनेन जनस्थाने निरपेक्षं खरादिवधेन च न मद्बलज्ञानं वृत्तमिति प्रहासः ॥ १७ ॥

रा० टी०–तयोरिति । तयोर्वचनं श्रुत्वा रामोऽब्रवीत् १७

गो० टी०–तयोरिति । दशरथात्मजः महापुरुषप्रसूतत्वेन सहजकारुण्यः प्रहसन् रावणबुद्धिमान्द्यस्मरणात् प्रहासः । सर्वभूतहिते रतः रिपूणामपि वत्सलः ॥ १७ ॥

१८ ] ति० टी०–वयमिति । रामेण निर्देशः सुग्रीवादिसहितस्य स्वस्य । सुसमाहिता ज्ञातबलाः । यथोक्तं रावणोक्तमनतिक्रम्य वा चेत् । छन्दतः स्वेच्छया ॥ १८ ॥

रा० टी०–तदाकारमाह—यदीत्यादिभिः । यदि बलं सैन्यं यथोक्तं रावणोक्तमनतिक्रम्य दृष्टं वयं च सुसमीक्षिताः अत एव कार्यं छन्दतः स्वेच्छया कृतं तदा छन्दतः प्रतिगम्यताम् ॥ १८ ॥

गो० टी०–यदीति । यथोक्तं रावणेन यथोक्तम् छन्दतः यथेच्छातः ॥ १८ ॥

१९ ] ति० टी०–विभीषणो वा । यस्माद्विशिष्य भवतां भयमिति शेषः ॥ १९ ॥

रा० टी०–अथेति । अथवा यदि किंचिददृष्टं तदा भूयो द्रष्टुमर्हथः । नन्वावयोर्दर्शनसामर्थ्यं नास्तीत्यत आह—विभीषणः पुनः संदर्शयिष्यति ॥ १९ ॥

गो० टी०–अथेत्यादि । अथेति पक्षान्तरे । भूयः अतिशयेन । दूतौ युवामिति शेषः ॥ १९ ॥ २० ॥

२० ] ति० टी०–न्यस्तशस्त्रत्वाद्येकैकमप्यवधे हेतुः, किमुत समुदितमिति भावः ॥ २० ॥

रा० टी०–नेति । यतः न्यस्तशस्त्रौ त्यक्तायुधौ गृहीतौ दूतौ युवां वधं नार्हथः अतः इदं विभीषणकर्तृकं ग्रहणं प्राप्य जीवितं प्रति न भेतव्यम् ॥ २० ॥

२१ ] ति० टी०–प्रच्छन्नौ च गूढतया रन्ध्रान्वेषिणावपि

१ प्रच्छन्नौ चेति गो. पाठः । २ ऽथेति गो. पाठः । ३ इमाविति गो. पाठः । ४ तदेति गो. पाठः । ५ कृत्स्नं तदेवमिति गो. पाठः । ६ कृत्स्नमिति गो. पाठः । ७ परीक्षिता इति गो. समीक्षिता इति रा. पाठः । ८ भूय इति गो. पाठः । ९ वेति गो. पाठः । १० अर्हथः इति गो. रा. पाठः । ११ पृच्छमानो विमुञ्चैताविति गो. पाठः । १२ कर्षणाविति गो. पाठः ।

प्रविश्य महतीं लङ्कां भवद्भ्यां धनदानुजः । वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ॥ २२ ॥
यद्बलं त्वं समाश्रित्य सीतां मे हृतवानसि । तद्दर्शय यथाकामं ससैन्यैश्च सबान्धवः ॥ २३ ॥
श्वः काल्ये नगरीं लङ्कां सप्राकारां सतोरणाम् । रक्षसां च बलं पश्य शरैर्विध्वंसितं मया ॥ २४ ॥
क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण । श्वः काल्ये वज्रवान्वज्रं दानवेष्विव वासवः ॥ २५ ॥
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ । जयेति प्रतिनन्द्यैनं राघवं धर्मवत्सलम् ॥ २६ ॥
आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् । विभीषणगृहीतौ तु वधार्थं राक्षसेश्वर ॥ २७ ॥
दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा । एकस्थानगता यत्र चत्वारः पुरुषर्षभाः ॥ २८ ॥
लोकपालसमाः शूराः कृतास्त्रा दृढविक्रमाः । रामो दाशरथिः श्रीमाँल्लक्ष्मणश्च विभीषणः ॥ २९ ॥
सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः । एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् ॥ ३० ॥
उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः । यादृशं तद्धि रामस्य रूपं प्रहरणानि च ॥ ३१ ॥
वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः । रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ॥
बभूव दुर्धर्षतरा [11] सर्वैरपि सुरासुरैः ॥ ॥ ३२ ॥

शत्रुपक्षस्य रावणशत्रुपक्षस्य सुग्रीवादिरूपस्य सततं विकर्षिणौ भेदादिपरावपीमौ रात्रिंचरौ हे विभीषण, विमुञ्च ॥ २१ ॥

रा० टी०—विभीषणं प्रत्याह—प्रच्छन्नाविति । प्रच्छन्नौ तिरोहितराक्षसरूपौ रात्रिंचरौ इमौ द्वौ चारौ शत्रुपक्षस्य सुग्रीवादिरूपस्य विकर्षिणौ भेदादिकरणशीलावपि विमुञ्च ॥ २१ ॥

गो० टी०—विभीषणं प्रत्याह—पृच्छमानाविति । सततं पृच्छमानत्वदशायामपि शत्रुपक्षस्य विकर्षणौ बाधकाविति यावत् ॥ २१ ॥

२२-२३ ] ति० टी०—अथ रामः प्रतिसंदिशति—प्रविश्येति ॥ २२ ॥ २३ ॥

रा० टी०—चारौ प्रत्याह—प्रविश्येति । लङ्कां प्रविश्य धनदानुजो रावणः मम वचनं यथोक्तं वक्तव्यः ॥ २२ ॥

गो० टी०—पुनर्दूतौ प्रत्याह—प्रविश्येति ॥ २२ ॥

रा० टी०—तदाकारमाह—यद्दित्यादिभिः । यद्बलं पराक्रमं समाश्रित्य मे सीतां हृतवानसि तद्बलं यथाकामं दर्शय ॥ २३ ॥

गो० टी०—यदिति । यथाकामं यथेच्छम् । शरणं वाऽऽगच्छेति भावः ॥ २३ ॥

२४ ] ति० टी०—श्वः काल्ये श्वः प्रातःकाले ॥ २४ ॥

रा० टी०—श्व इति । लङ्कां राक्षसबलं च मया शरैर्विध्वंसितं श्वः परदिने पश्य ॥ २४ ॥

गो० टी०—श्वः काल्य इत्यादि । श्वः काल्ये परेद्युः प्रातःकाले ॥ २४ ॥

२५-२६ ] ति० टी०—वज्रवान्वज्रवत्त्वगुणः ॥ २५ ॥ २६ ॥

रा० टी०—क्रोधमिति । हे रावण ! श्वः काले दानवेषु वासव इव भीमं क्रोधमहं मोक्ष्ये ॥ २५ ॥

गो० टी०—क्रोधमिति । क्रोधं मोक्ष्ये क्रोधकार्यं करिष्य इत्यर्थः । वज्रवान् अभ्यस्तवज्र इत्यर्थः ॥ २५ ॥

रा० टी०—इतीति । इत्यनेन प्रकारेण प्रतिसमादिष्टौ शुकसारणौ जयेति राघवं प्रतिनन्द्य लङ्कामागम्य राक्षसाधिपमब्रूताम् । सार्धश्लोक एकान्वयी ॥ २६ ॥

गो० टी०—इतीत्यादि सार्धश्लोक एकान्वयः । प्रतिनन्द्य अभिष्टुत्य ॥ २६ ॥

२७ ] ति० टी०—विभीषणगृहीतावित्यनेन तस्यागस्तव महतेऽनर्थायेति सूचितम् ॥ २७ ॥

रा० टी०—तदाकारमाह—विभीषणेत्यादिभिः । वधार्थं विभीषणगृहीतौ आवां दृष्ट्वा धर्मात्मना रामेण मुक्तौ मोचितौ ॥ २७ ॥

गो० टी०—विभीषणेति । मुक्तौ आवामिति शेषः । धर्मात्मना दूतवधमनिच्छतेत्यर्थः अमिततेजसेत्यनेन अस्मत्यागे भीतिहेतुता न शङ्क्येत्यर्थः ॥ २७ ॥

२८-३० ] ति० टी०—यत्र यस्मादेते वक्ष्यमाणाश्चत्वार एकस्थानगता एकत्र मिलिताः, तस्मात्त एते शक्ता इति योजना ॥ २८ ॥ ३० ॥

रा० टी०—एकेति । यत्र यस्माद्धेतोः । रामादय एते चत्वारः एकस्थानगताः तस्मात् लङ्कामुत्पाट्य संक्रामयितुं प्रक्षेप्तुं समर्थाः अतः सर्वे वानरास्तिष्ठन्तु अन्यवानराणां न प्रयोजनमित्यर्थः । अर्धषट्कमेकान्वयि ॥ २८-३० ॥

गो० टी०—एकस्थानेत्यादि श्लोकत्रयमेकान्वयम् । यत्र एकस्थानम् ऐकमत्यम् एकप्रदेशं वा गताः एते शक्ताः पुरीं लङ्कामित्याद्यन्वयः । कृतास्त्राः शिक्षितास्त्राः । छत्रिणो गच्छन्तीतिवदयं निर्देशः सुग्रीवस्याकृतास्त्रत्वात् । उत्पाट्य उद्धृत्य संक्रामयितुम् अन्यत्र क्षेप्तुम् । सर्वे एतच्चतुष्टयभिन्नाः ॥ २८ ।

३१-३२ ] ति० टी०—उत्पाट्य संक्रामयितुम् । निखातशालास्तम्भमिवोपरि कृत्वा पुनः प्रतिष्ठापयितुमित्यर्थः ३१ ॥ ३२

१ नगरीमिति गो. रा. पाठः । २ चेति गो. पाठः । ३ सैन्यः सहबान्धव इति गो. पाठः । ४ काले इति रा. पाठः । ५ राक्षसमिति गो. पाठः । ६ पतावविति गो. पाठः । ७ वधार्हाविति गो. पाठः । ८ राक्षसेश्वर इति रा. पाठः । ९ लोकपालोपमा इति गो. पाठः । १० तस्येति गो. पाठः । ११ सेन्द्रैरिति गो. पाठः ।

प्रहृष्टयोधा ध्वजिनी महात्मनां वनौकसां संप्रति योद्धुमिच्छताम् ।
अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिली ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चविंशः सर्गः ॥ २५॥

## षड्विंशः सर्गः ।

सारणवचो निशम्य रावणः प्रासादमारुह्य कपिबलमवलोक्य च सारणं पप्रच्छस तु तत्तत्पराक्रमख्यापनपूर्वं सविशेषचिन्हं हनुमदादीन् दर्शयति ।

तद्वचः सत्यमक्लीबं सारणेनाभिभाषितम् । निशम्य रावणो राजा पर्यभाषत[1] सारणम् ॥ १ ॥
यदि मामभियुञ्जीरन्देवगन्धर्वदानवाः । नैव सीतामहं दद्यां सर्वलोकभयादपि ॥ २ ॥
त्वं तु सौम्य परित्रस्तो हरिभिः[3] पीडितो भृशम् । प्रतिप्रदानमद्यैव सीतायाः साधु मन्यसे ॥ ३ ॥
को हि नाम सपत्नो मां समरे जेतुमर्हति । इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ ४ ॥
आरुरोह ततः श्रीमान्प्रासादं हिमपाण्डुरम् । बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ॥ ५ ॥

रा० टी०–यादृशमिति । रामस्य यादृशं रूपं प्रहरणान्यायुधानि च तादृशं यत्तत् यस्यास्ति चेदिति शेषः स एक एव लङ्कां वधिष्यति अतः त्रयः लक्ष्मणप्रभृतयस्तिष्ठन्तु तेषामपि न प्रयोजनमित्यर्थः ॥ ३१ ॥

गो० टी०–यादृशमिति । प्रहरणादिकं यादृशं तदवलोकने राम एको वधिष्यतीति मन्यावहे इत्यर्थः ॥ ३१ ॥

रा० टी०–रामेति । रामलक्ष्मणगुप्ता सुग्रीवेणोपलक्षिता वाहिनी वानरसेना सुरासुरैरपि दुर्धर्षतरा बभूव ॥ ३२ ॥

गो० टी०–नन्वसहायशूरोपि रामः सेनाहननादुत्साहः स्यात् तत् क्रियतामित्यत्राह—रामलक्ष्मणेति । सुग्रीवेण च अङ्गदादिना च सहिता सा अपरिच्छिन्ना हरिवाहिनी चपलकपिसेना रामलक्ष्मणगुप्ता रामेण रामस्य दक्षिणो बाहुरिति रामदक्षिणबाहुभूतेन लक्ष्मणेन च गुप्ता सती सुग्रीवस्य रक्ष्यकोटावेवान्वयः न तु रक्षककोटौ तन्मन्त्रिणा हनुमतैव—' जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ' इत्युक्तेः ॥ दुर्धर्षतरा बभूव । तरसा मनसापि धर्षयितुमशक्येत्यवगम्यते । न केवलं मनुष्यादिभिः किंतु सुरैरपि न केवलं सुरैरेव किन्तु सुरासुरैः विरोधं विहाय कृतसौहार्दैरपि न केवलमनायकैस्तैः किंतु सेन्द्रैरपि । स्वस्वातन्त्र्यं विहाय नायकाज्ञानुवर्तिभिरित्यर्थः॥ ३२ ॥

३३ ] ति० टी०–योद्धुमिच्छतां ध्वजिनी दुर्धर्षेत्यन्वयः यदेवमतः—अलमिति ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०–प्रहृष्टेति । प्रतियोद्धुमिच्छतां वनौकसां प्रहृष्टयोधा ध्वजिनी सेना पराभावयितुमशक्येति शेषः अतो विरोधेनालं शमो विधीयताम् । तदुपायमाह—मैथिली प्रदीयताम् ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

गो० टी०–प्रहृष्टेति । महात्मनां दृढमनस्कानाम् संप्रति सद्य एव योद्धुमिच्छताम् प्रहृष्टरूपा हर्षद्योतकाकारयुक्ता भवतीति शेषः । अतस्तद्विरोधेनालम् शमः क्रोधनिवृत्तिः विधीयतां क्रियताम् मैथिली प्रदीयतां च ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

१–४ ] ति० टी०–तदिति ॥ १ ॥ ४ ॥

५ ] ति० टी०–बहुतालसमुत्सेधमनेकतालप्रमाणोन्नतम् । दिदृक्षया वानरबलदर्शनेच्छया ॥ ५ ॥

रा० टी०–दूतवचनश्रवणानन्तरकालिकं रावणवृत्तान्तमाह–तदित्यादिभिः । सारणेनाभिभाषितं निशम्य रावणः पर्यभाषत शुकसारणयोरैकमत्यात् एकतरस्यैव नामग्रहणेऽपि न न्यूनता ॥ १ ॥

गो० टी०–अथ रावणाय सारणेन वानरयूथपतीनां वीर्यादिकथनपूर्वकं तत्प्रदर्शनं षड्विंशे—तदिति । अक्लीबम् अकातरम् । प्रत्यभाषत अनिन्ददित्यर्थः ॥ १ ॥

रा० टी०–तद्वचनाकारमाह—यदीत्यादिभिः । अयं पूर्वं व्याख्यातः ॥ २ ॥

गो० टी०–यदीति । अभियुञ्जीरन् युद्ध्येरन् । सर्वलोकभयात् सर्वलोकेभ्यो भयात् ॥ २ ॥

रा० टी०–त्वमिति । हरिभिर्भृशं पीडितः अत एव

१ पय्यमिति गो. पाठः । २ प्रत्यभाषतेति गो. पाठ. । ३ निर्जित इति गो. पाठः ।

ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्च्छितः । पश्यमानः समुद्रं [1]तं पर्वतांश्च वनानि च ॥ ६ ॥
ददर्श पृथिवीदेशं सुसंपूर्णं प्लवंगमैः । तदपारमसह्यं च वानराणां [2]महाबलम् ॥ ७ ॥
आलोक्य रावणो राजा परिपप्रच्छ सारणम् । एषां [3]के वानरा मुख्याः के शूराः के महाबलाः ॥ ८ ॥
के पूर्वमभिवर्तन्ते महोत्साहाः समन्ततः । केषां शृणोति सुग्रीवः के वा यूथपयूथपाः ॥ ९ ॥
सारणाचक्ष्व [4]मे सर्वं किंप्रभावाः प्लवंगमाः । सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः ॥ १० ॥
आबभाषेऽथ मुख्यज्ञो मुख्यांस्तत्र वनौकसः । एष योऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः ॥ ११ ॥
यूथपानां सहस्रेण शतेन परिवारितः । यस्य घोषेण महता सप्राकारा सतोरणा ॥ १२ ॥
लङ्का प्रतिहता सर्वा सशैलवनकानना । सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः ॥ १३ ॥
बलाग्रे तिष्ठते वीरो नीलो नामैष यूथपः । बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्यवान् ॥ १४ ॥
लङ्कामभिमुखः [10]कोपादभीक्ष्णं च विजृम्भते । गिरिशृङ्गप्रतीकाशः पद्मकिंजल्कसंनिभः ॥ १५ ॥
स्फोटयत्यतिसंरब्धो लाङ्गूलं च पुनः पुनः । यस्य लाङ्गूलशब्देन स्वनन्ति प्रदिशो दश ॥ १६ ॥

---

परित्रस्तस्त्वं सीतायाः प्रतिप्रदानं साधु मन्यसे एतेन रामबलवर्णनं भीतिहेतुकमिति सूचितम् ॥ ३ ॥

गो० टी०—त्वमित्यादि सार्धश्लोकः । सपत्नः शत्रुः ॥ ३ ॥

रा० टी०—क इति । कः सपत्नो रिपुः मां जेतुमर्हति इति परुषं वाक्यमुक्त्वा रावणः प्रभूतशब्दकर्ता रावणो दिदृक्षया रामसैन्यदर्शनविषयकेच्छया बहुतालसमुत्सेधम् अनेकतालपरिमितोन्नतं हिमपाण्डुरं प्रासादमारूरोह । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—इत्युक्त्वेत्यादि सार्धश्लोकः । ततः तस्मात्पूर्वस्थानात् बहुतालसमुत्सेधम् अनेकतालवृक्षतुल्यौन्नत्यम् यद्वा विततादुष्ठमध्यमामितस्तालः । तदाह सज्जनः—'प्रादेशतालगोकर्णवितस्त्यश्च यथाक्रमम् । भवन्ति विततादुष्ठप्रदेशिन्यादिभिः सह' इति । अत्र द्वितीयो रावणशब्दो रावयतीति व्युत्पत्त्या क्रियानिमित्तकः । दिदृक्षया वानरबलदिदृक्षया ॥ ४ ॥ ५ ॥

६ ] ति० टी०—चराभ्यां चाराभ्याम् । पश्यमानः पश्यन् ६ ॥

रा० टी०—ताभ्यामिति । चराभ्यां चाराभ्यां सहितः समुद्रं पर्वतांश्च पश्यमानः पश्यन् रावणः प्लवङ्गमैः संपूर्णं पृथिवीदेशं ददर्श । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—ताभ्यामित्यादि । चराभ्यां चाराभ्याम् । क्रोधमूर्छितः क्रोधेन व्याप्तः । पृथिवीदेशं त्रिकूटाधःप्रदेशम् ॥ ६ ॥

७–८ ] ति० टी०—वानराणां महाबलं च ददर्शेत्यन्वयः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—केषां शृणोति । वच इति शेषः । यूथपयूथपा महाप्रधानाः ॥ ९ ॥

रा० टी०—तदिति । असह्यं वानराणां बलमालोक्य रावणः सारणं परिपप्रच्छ ॥ ७ ॥

गो० टी०—तदिति । अपारम् उत्तरावधिरहितम् ॥ ७ ॥

रा० टी०—तदाकारमाह—एषामिति । एषां वानराणां मध्ये के पूर्वमभिवर्तन्ते युद्धाय प्रचलन्तीत्यर्थः समन्ततः सर्वकालं महोत्साहाः के केषां वचनमिति शेषः सुग्रीवः शृणोति आदरपूर्वकं श्रुत्वा प्रामाणिकत्वेन मन्यते प्लवङ्गमाश्च किंप्रभावाः किं प्रभाववन्तः एतत्सर्वं हे सारण ! मे आचक्ष्व कथय । अर्धचतुष्टयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०—एषामिति । इयं निर्धारणे षष्ठी । केषामिति । वचनमिति शेषः । प्रधानाः सेनापतयः ॥ ८ ॥ ९ ॥

१०–११ ] ति० टी०—वचनमुत्तरमाबभाषे इत्यन्वयः ॥ १० ॥ ११ ॥

१२ ] ति० टी०—सहस्रेण शतेन लक्षेणेत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—यूथपसंख्याया एव गणनम् । सुग्रीवस्य बलाग्रे च यस्तिष्ठति एष नील इत्यन्वयः ॥ १३ ॥

रा० टी०—सारण इति परिपृच्छतः राक्षसेन्द्रस्य वचनं श्रुत्वा मुख्यज्ञः मुख्यानां ज्ञाता सारणः मुख्यान् वनौकसः आबभाषे ॥ १० ॥

गो० टी०—सारण इति । वचनं निशम्येति शेषः ॥ १० ॥

रा० टी०—तदाकारमाह—एष इत्यादिभिः । य एषः यूथपानां सहस्रेण शतेन लक्षसंख्याकेनेत्यर्थः परिवारितः लङ्कामभिमुखः नर्दन्सन् तिष्ठति यस्य महता घोषेण लङ्का प्रतिहता य एषः सुग्रीवस्य बलाग्रे तिष्ठते स वीरः नीलो नाम यूथपः । अर्धषट्कमेकान्वयि ॥ ११–१३ ॥

गो० टी०—त्रिभिर्नीलं वर्णयति—एष इत्यादि । य एष इत्यन्वयः तिष्ठते तिष्ठति ॥ ११ ॥ १३ ॥

१४–१६ ] ति० टी०—अथाङ्गदवर्णनम्—बाहू इति । प्रगृह्योपगम्य पद्भ्यां महीं गच्छति । नश्वदिति शेषः १४॥१६

---

१ चेति गो. पाठः । २ मसंख्येयमिति गो. पाठः । ३ महद्बलमिति गो. पाठः । ४ वानरमुख्यानामिति गो. पाठः । ५ तस्त्वेन के प्रभावा इति गो. पाठः । ६ आचचक्षे इति गो. पाठः । ७ तांश्चेति गो. पाठः । ८ सहस्राणामिति गो. पाठः । ९ प्रवेपते इति गो. पाठः । १० क्रोधादिति गो. पाठः । ११ अभीति गो. पाठः ।

एष वानरराजेन सुग्रीवेणाभिषेचितः । यौवराजोऽङ्गदो नाम त्वामाह्वयति संयुगे ॥ १७ ॥
वालिनः सदृशः पुत्रः सुग्रीवस्य सदा प्रियः । राघवार्थे पराक्रान्तः शक्रार्थे वरुणो यथा ॥ १८ ॥
एतस्य सा मतिः सर्वा यद्दृष्टा जनकात्मजा । हनूमता वेगवता राघवस्य हितैषिणा ॥ १९ ॥
बहूनि वानरेन्द्राणामेष यूथानि वीर्यवान् । परिगृह्याभियाति त्वां स्वेनानीकेन मर्दितुम् ॥ २० ॥
अनुवालिसुतस्यापि बलेन महता वृतः । वीरस्तिष्ठति सङ्ग्रामे सेतुहेतुरयं नलः ॥ २१ ॥
ये तु विष्टभ्य गात्राणि क्ष्वेडयन्ति नदन्ति च । [ उत्थाय च विजृम्भन्ते क्रोधेन हरिपुंगवाः ॥ २२ ॥
एते दुष्प्रसहा घोराश्चण्डाश्चण्डपराक्रमाः । अष्टौ शतसहस्राणि दशकोटिशतानि च ॥ ]
य एनमनुगच्छन्ति वीराश्चन्दनवासिनः ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् । श्वेतो रजतसंकाशश्चपलो भीमविक्रमः ॥ २३ ॥
बुद्धिमान्वानरः शूरस्त्रिषु लोकेषु विश्रुतः । तूर्णं सुग्रीवमागम्य पुनर्गच्छति वानरः ॥ २४ ॥

१७ ] ति० टी०–अभिषेचितोऽभिषिक्तः ॥ १७ ॥

१८ ] ति० टी०–पराक्रान्तः पराक्रमितुमुद्यतः ॥ १८ ॥

रा० टी०–बाहू इति । यः पद्भ्यां बाहू प्रगृह्य महीं गच्छति लङ्कामभिमुखः सन् अभीक्ष्णं विजृम्भतेच लाङ्गूलं पुनः पुनः स्फोटयति च यस्य लाङ्गूलशब्देन दश प्रदिशः स्वनन्ति यश्च संयुगे त्वामाह्वयति स एषः सुग्रीवेणाभिषेचितः वालिनः पुत्रः शक्रार्थे वरुण इव राघवार्थे पराक्रान्तः पराक्रमितुमुद्युक्तः अङ्गदो नाम युवराजः सार्द्धश्लोकचतुष्टयमेकान्वयि ॥ १४–१८ ॥

गो० टी०–अथाङ्गदं वर्णयति—बाहू इत्यादिना स्वेनानीकेन दुर्जय इत्यन्तेन । बाहू प्रगृह्य उत्क्षिप्य अभि उद्दिश्य मुखं यस्यासावभिमुख विजृम्भतं जृम्भणं करोति पद्मकिञ्जल्कसन्निभः पद्मकेसरवत्पीतवर्ण इत्यर्थः । स्फोटयति भूमौ ताडयति अभिसंरब्धः कुपितः । प्रस्वनन्तीत्यन्वयः । अभिषेचितः अभिषिक्तः आह्वयति आह्वयते । स्पर्धाविषयत्वेप्यात्मनेपदाभाव आर्षः । पराक्रान्तः पराक्रमितुमुद्यतः ॥ १४ ॥ १८

१९ ] ति० टी०–यद्धनूमता जनकात्मजा दृष्टा सा सर्वा मतिरेतस्याङ्गदस्य । मन्त्रमूलेति शेषः ॥ १९ ॥

रा० टी०–एतस्येति । यत् यया मत्या राघवस्य हितैषिणा हनूमता जनकात्मजा दृष्टा सा मतिरेतस्याङ्गदस्यैव एतत्संमत्यैव सर्वं चकारेत्यर्थः एतेनाङ्गदस्य अगाधबोधत्वं सूचितम् ॥ १९ ॥

गो० टी०–एतस्येति । हनूमता सीता दृष्टेति यत्सा मतिः एतस्याङ्गदस्य एतद्बुद्धिमूलं हनुमतः सीतादर्शनमिति भावः । अङ्गदपुरस्कारेण हनुमतः समागमात् ॥ १९ ॥

२० ] ति० टी०–बहूनि यूथानि परिगृह्य स्वेनानीकेन त्वामभियाति ॥ २० ॥

रा० टी०–बहूनीति । वानरेन्द्राणां बहूनि यूथानि परिगृह्य स्वेनानीकेन त्वां मर्दितुं एष अङ्गदोभियाति ॥ २० ॥

गो० टी०–बहूनीति । स्वेनानीकेनेति दुर्जयत्वकारणोक्तिः । अतो न पुनरुक्तिः ॥ २० ॥

२१ ] ति० टी०–वालिसुतस्यानु पश्चात् । सेतुहेतुः सेतुकर्ता ॥ २१ ॥

रा० टी०–अनुवालीति । वालिसुतस्य अनु पश्चात् सेतुहेतुः सेतुबन्धनकारणमयं नलस्तिष्ठति ॥ २१ ॥

गो० टी०–अनु वालीति । एतस्योत्तरार्धं वीरस्तिष्ठति सङ्ग्राम इति । वालिसुतस्य अनु पश्चात् सेतुहेतुः सेतुकर्ता सङ्ग्रामे सङ्ग्रामनिमित्तम् ॥ २१ ॥

२२] ति० टी०–अथ श्वेतवर्णनम्—ये त्विति । गात्राणि विष्टभ्य क्ष्वेलां कुर्वन्ति । एनं श्वेतम् , चन्दनवासिनः ॥ २२ ॥

रा० टी०–य इति । गात्राणि विष्टभ्य सस्तभ्य ये क्ष्वेडयन्ति नदन्ति त एव चन्दनवासिनश्चन्दनलिप्ताङ्गाः वीराः एतन्नलमनुगच्छन्ति एष नलोऽपि लङ्का मर्दितु माशंसते कथयति एषैवेत्यत्र संन्धिरत एव ज्ञापकात् एवोप्ययं । सार्धश्लोक एकान्वयी ॥ २२ ॥

गो० टी०–नलपरिवारानाह—ये त्वित्यादिना मर्दितुमित्यन्तेन । श्लोकत्रयमेकान्वयम् । विष्टभ्य उन्नम्य । क्ष्वेलयन्ति सिंहनादं कुर्वन्ति । नदन्ति गर्जन्ति । उत्थाय आसनादिति शेषः विजृम्भन्ते कोपेन गात्रविनामं कुर्वन्ति । य एवंविधा वानराः ये च चन्दनवासिनः चन्दनवनवासिनः । एते एनं नलमनुगच्छन्तीति संबन्धः । चन्दनवानरा इति पाठे मध्यमपदलोपिसमासः । चन्दनवासिनो वानरा इति । एषैवेति सन्धिरार्षः । आशंसते प्रार्थयते ॥ २२ ॥ २४ ॥

२३ ] ति० टी०–एषैव एष एव । संधिरार्षः ॥ २३ ॥

२४ ] ति० टी०–सुग्रीवमागम्य पुनर्गच्छतीत्यनेन रावणदर्शनसमये कार्यार्थं सुग्रीवसमीपमागत्य गतवानिति ज्ञायते २४

रा० टी०–श्वेतं वर्णयति—श्वेत इति । वानरीं सेनां विभजन् सन् यो वानरः सुग्रीव मागम्य तूर्णं पुनर्गच्छति

१ यौवराज्ये इति गो. पाठः । २ दुर्जयेति गो. पाठः । ३ सार्धः श्लोकोऽयमधिकः गो. पाठे । ४ पतामिति रा. पाठः । ५ वीर इति गो. पाठः । ६ सत्वर इति गो. पाठः ।

विभजन्वानरीं सेनामनीकानि प्रहर्षयन् । यः पुरा गोमतीतीरे रम्यं पर्येति पर्वतम् ॥ २५ ॥
नाम्ना [1]संरोचनो नाम नानानगयुतो गिरिः । तत्र राज्यं प्रशास्त्येष कुमुदो नाम यूथपः ॥ २६ ॥
योऽसौ शत[2]सहस्राणि सहर्षं परिकर्षति । यस्य वाला बहुव्यामा [3]दीर्घलाङ्गूलमाश्रिताः ॥ २७ ॥
ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरदर्शनाः । अदीनो वानरश्चण्डः सङ्ग्राममभिकाङ्क्षति ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ॥ २८ ॥
यस्त्वेष सिंहसंकाशः कपिलो दीर्घकेसरः । निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा ॥ २९ ॥
विन्ध्यं कृष्णगिरिं सह्यं पर्वतं च सुदर्शनम् । राजन्सततमध्यास्ते स रम्भो नाम यूथपः ॥
शतं शतसहस्राणां त्रिंशच्च हरिपुंगवाः ॥ ॥ ३० ॥
यं यान्तं वानरा [10]घोराश्चण्डाश्चण्डपराक्रमाः । परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ॥ ३१ ॥
यस्तु कर्णौ विवृणुते जृम्भते च पुनः पुनः । न तु संविजते मृत्योर्न च [11]सेनां प्रधावति ॥ ३२ ॥
प्रकम्पते च रोषेण तिर्यक्च पुनरीक्षते । [12]पश्य लाङ्गूलविक्षेपं क्ष्वेडत्येष महाबलः ॥ ३३ ॥

---

स वानरः त्रिषु लोकेषु विश्रुतः श्वेतः तदभिधः यत्तच्छब्द्राध्याहारस्तु अन्यतरवानरशब्दसार्थक्याय यदितु वानं रचना विशेषं राति बोधयतीत्यर्थः इतिव्युत्पाद्यतेतदानाध्याहृतिः अर्द्धचतुष्टयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०—अथ द्वाभ्यां श्वेताख्यं वानरं वर्णयति—श्वेत इत्यादि । अन्वर्थनामेत्याह—रजतेति । चपलः युद्धचपलः । अनीकानि पुनर्गच्छतीत्यन्वयः । विभजन् निविडां सेनां भित्त्वा गच्छन्नित्यर्थः । अत्र चपल इत्यनेन अद्यैव लङ्कां ध्वंसयामीति निवेदनार्थं गत्वा तेन सान्त्वितः पुनर्गच्छतीत्यवगम्यते ॥ २५ ॥ २६ ॥

२५ ] ति० टी०—यः पुरेत्यादिना कुमुदवर्णनम्—रम्यं रम्याख्यम् ॥ २५ ॥

रा० टी०—कुमुदं वर्णयति—य इति । पुरा पूर्वं गोमतीतीरे नाम्ना सरोचनो यो गिरिः तं रम्यं पर्वतं यः पर्येति पर्येत्य तत्र राज्यञ्च प्रशास्ति स एषः कुमुदो नाम यूथपः ॥ २५ ॥

गो० टी०—चतुर्भिः कुमुदं वर्णयति—यः पुरेत्यादि । पुरेत्यनेनाद्य सुग्रीवसमीप एव वसतीति गम्यते । पर्येति परितः सञ्चरति । नाम्ना संकोचनो नाम यः प्रसिद्धः तं पर्वतमित्यन्वयः तत्र गोमतीतीरे । परिकर्षति आनयति । घोरकर्मणो यस्य लाङ्गूलमाश्रिताः वालाः रोमाणि । दैर्घ्यस्यावधिमाह—बहुव्यामा इति । व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरमित्यमरः । अदीन इत्यत्र य इत्युपस्कार्यम् ॥२७—३०॥

२६ ] ति० टी०—अस्यैव संरोचन इति नामान्तरम् ॥२६

२७-२८] ति०टी०—चण्डवर्णनम्—योऽसाविति२७॥२८

रा० टी०—चण्डं वर्णयति—यो साविति । शतसहस्राणि सैन्यानि यः परिकर्षति बहुव्यामाः अतिदीर्घाः प्रकीर्णाः इतस्ततः प्रक्षिप्ताः ताम्रत्वादिविशिष्टाः दीर्घलाङ्गूलमाश्रिताः यस्य बालाः केशाः यश्च सङ्ग्राममभिकाङ्क्षति स चण्डः तदनेनो वानरः एष एव मर्दितुमाशंसते अत्रापि सन्धिरेतव्ञ्चाकादेव । अर्धपञ्चकमेकान्वयि ॥ २६—२८ ॥

२९-३० ] ति० टी०—रम्भवर्णनम्—यस्त्विवति । भृत एकाग्रः ॥ २९ ॥ ३० ॥

३१ ] ति० टी०—यं यान्तमनुगच्छन्तीत्यन्वयः ॥ ३१ ॥

रा० टी०—रम्भं वर्णयति—यस्त्वेष इति । दीर्घकेसरः महालोमा निभृतः एकाग्रचित्तो यः चक्षुषा दिधक्षन्निव लङ्कां प्रेक्षते विन्ध्यादीन् सततं यश्चाध्यास्ते यान्तं यं शतसहस्राणां वानराणां शतं त्रिंशच्च हरिपुंगवाः घोरा वानराः परिवार्य लङ्कां मर्दितुं गच्छन्ति स एषः रम्भो नाम यूथपः । सार्धश्लोकत्रयमेकान्वयि ॥ २९—३२ ॥

गो० टी०—अथ सार्द्धैस्त्रिभी रम्भं वर्णयति—यस्त्वेष इत्यादि ॥ ३१—३३ ॥

३२-३३ ] ति० टी०—शरभवर्णनम्—यस्तु कर्णाविति । मृत्योर्न संविजते नोद्विग्नं गच्छति । तथा वरदानादिति शेषः । न च सेनामिति । किं त्वेक एव योद्धुमिच्छतीत्यर्थः ॥ ३२ ॥ ३३ ॥

रा० टी०—शरभं वर्णयति—यस्तु कर्णाविति । यः कर्णा विवृणुते पुनः पुनर्जृम्भते च मृत्योर्न संविजते बिभेति च तिर्यगीक्षते च क्ष्वेडति च यश्च साल्वेयपर्वतमध्यास्ते स एष शरभो नाम यूथपः महौजस्तोपलक्षितस्य शरभस्य लाङ्गूलविक्षेपं पश्य । अर्धं षट्कमेकान्वयि ॥ ३३—३९ ॥

गो० टी०—अथ शरभं वर्णयति—यस्तु कर्णावित्यादि । संविजते बिभेति ॥ ३४—३७ ॥

---

१ सङ्कोचन इति गो. पाठः । २ सहस्राणामिति गो. पाठः । ३ दीर्घा इति गो. पाठः । ४ कर्मण इति गो. पाठः । ५ रोषण इति गो. पाठः । ६ ऽपीति गो. पाठः । ७ लोचनं इति गो. पाठः । ८ रम्भो नामैषइति गो. पाठः । ९ एते इति गो. पाठः । १० शूरा इति गो. पाठः । ११ युद्धादीति गो. पाठः । १२ पश्यँल्लाङ्गूलमपि च क्ष्वेळते चेति गो. पाठः ।

महौजसा वीतभयो रम्यं साल्वेयपर्वतम् । राजन्सततमध्यास्ते शरभो नाम यूथपः ॥ ३४ ॥
एतस्य बलिनः सर्वे विहारा नाम यूथपाः । राजञ्छतसहस्राणि चत्वारिंशत्तथैव च ॥ ३५ ॥
यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति । मध्ये वानरवीराणां सुराणामिव वासवः ॥ ३६ ॥
भेरीणामिव संनादो यस्यैष श्रूयते महान् । घोषः शाखामृगेन्द्राणां सङ्ग्राममभिकाङ्क्षताम् ॥ ३७ ॥
एष पर्वतमध्यास्ते पारियात्रमनुत्तमम् । युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः ॥ ३८ ॥
एनं शतसहस्राणां शतार्धं पर्युपासते । यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः ॥ ३९ ॥
यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन् । स्थितां तीरे समुद्रस्य द्वितीय इव सागरः ॥ ४० ॥
एष दर्दुरसंकाशो विनतो नाम यूथपः । पिबंश्चरति यो वेणां नदीनामुत्तमां नदीम् ॥ ४१ ॥
षष्टिः शतसहस्राणि बलमस्य प्लवंगमाः । त्वामाह्वयति युद्धाय क्रथनो नाम वानरः ॥ ४२ ॥
विक्रान्ता बलवन्तश्च यथा यूथानि भागशः । यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः ॥ ४३ ॥
अवमत्य सदा सर्वान्वानरान्बलदर्पितः । गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते ॥ ४४ ॥
एनं शतसहस्राणि सप्ततिः पर्युपासते । एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४५ ॥

---

३४-३५ ] ति० टी०–महौजसा महता तेजसा ३४॥३
रा० टी०–एतस्येति । शतसहस्राणि चत्वारिंशच्च विहा नाम विहारानामानः सर्वे एतस्य शरभस्य यूथपाः ॥ ३६
३६ ] ति० टी०–पनसवर्णनम्—यस्तु मेघ इत्यादिना ॥ ३६ ॥
३७-३८ ] ति० टी०–भेरीणां नाद इव यस्य संनाद । श्रूयत इति शेषः ॥ ३७ ॥ ३८ ॥
रा० टी०–पनसं वर्णयति–यस्त्विति । सुराणां मध्ये वासव इव वानरवीराणां मध्ये आकाशमावृत्य मेघ इव यस्तिष्ठति भेरीणां सनाद इव यस्यैष महान् घोषः शाखामृगेन्द्राणां मध्ये श्रूयते यश्च पारियात्रं पर्वतमध्यास्ते अध्यास्त स एषः पनसो नाम यूथपः । अर्थषट्कमेकान्वयि ॥३७–३९॥
गो० टी०–अथ पनसं वर्णयति—यस्तु मेघ इत्यादिना ॥ ३८–४० ॥
३९ ] ति० टी०–एनं पनसम् । शतार्धं शहसहस्रसंख्यानां पञ्चाशल्लक्षसंख्यं यूथपाः पर्युपासते । येषां यूथानि भागशः प्रत्येकं सन्तीति शेषः ॥ ३९ ॥
रा० टी०–एनमिति । येषां यूथानि विभागशः सन्तीति शेषः तेषां शतसहस्राणां शतार्धं शतेन युक्तमर्धं शताधिकपञ्चाशत्सहस्रसंख्याका इत्यर्थः यूथपाः यूथपश्रेष्ठमेनं पनसं भागशः पर्युपासते ॥ ४० ॥
गो० टी०–एनमिति । एनं पनसम् । येषां यूथपानाम् यूथानि च भागशः स्वस्वांशसङ्करेण एनं पर्युपासत इति संबन्धः ॥ ४१ ॥
४०-४१ ] ति० टी०–विनतवर्णनम्—यस्तु भीमामिति ॥ ४० ॥ ४१ ॥

रा० टी०–विनतं वर्णयति–यस्तु भीमामिति । प्रवल्गन्तीं भीमां चमूं शोभयन् द्वितीयः सागर इव यः तिष्ठति यश्च वेणां नदीं पिबन्सन् चरति एषः दर्दुरसंकाशः मेघसदृशः विनतो नाम यूथपः । अर्धचतुष्टयमेकान्वयि ॥ ४१ ॥ ४२ ॥
गो० टी०–विनतं वर्णयति—यस्त्वित्यादि । प्रवल्गन्तीम् उत्साहेन प्लवमानाम् समुद्रस्य पारे स्थिताम् । अतएव द्वितीयः सागर इव स्थितामिति शेषः । विनतविशेषणं वा । दर्दरो नाम गङ्गासमीपस्थः पर्वतः । पर्णासां पर्णासाख्यां नदीम् । विनतसेनासङ्ख्यामाह—षष्टिरिति । षष्टिः शतसहस्राणि प्लवङ्गमाः अस्य विनतस्य बलं सेनेत्यर्थः ॥ ४२–४४ ॥
४२ ] ति० टी०–क्रथनवर्णनम्–त्वामाह्वयतीत्यादि ४२॥
रा० टी०–षष्टिरिति । षष्टिशतसहस्राणि प्लवङ्गमाः अस्य विनतस्य बलमस्तीति शेषः । अर्धं पृथक् ॥ ४२ ॥
रा० टी०–क्रथनं वर्णयति–त्वामिति । यः युद्धाय त्वामाह्वयति यस्य च विक्रान्ता महागमनवन्तो यथा यूथपा इति शेषः तथा यूथानि सन्ति स क्रथनो नाम वानरः ॥ ४३ ॥
गो० टी०–एकेन क्रोधनमाह—त्वामिति । उत्तरार्धे अस्येत्यध्याहार्यम् । यथायूथानि यथायूथम् अमभावश्छान्दसः । भागशः भागत्वेन स्थिताः वानराः विक्रान्ता बलवन्तश्चेति योजना ॥ ४९ ॥
४३-४५ ] ति० टी०–विक्रान्ता बलवन्तश्च । यस्य यूथपा इति शेषः । यथास्य यूथपास्तथैव तेषां भागशः प्रत्येकं यूथानि च सन्तीति शेषः । गवयवर्णनम्—यस्तु गैरिकेत्यादि ॥ ४३ ॥ ४५ ॥
रा० टी०–गवयं वर्णयति–यस्त्विति । गैरिकवर्णाभं गैरिकवर्णसदृशवर्णविशिष्टं वपुर्यः पुष्यति क्रोधाद्धेतोर्वानरा-

---

१ महाजव इति गो. पाठः । २ दर्दरेति गो. पाठः । ३ पर्णासामिति गो. पाठः । ४ क्रोधन इति गो. पाठः । ५ यूथप इति गो. पाठः । ६ दर्पितानिति गो. पाठः ।

एते दुष्प्रसहा वीरा येषां संख्या न विद्यते । यूथपा यूथपश्रेष्ठास्तेषां यूथानि भागशः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः ।

सारणो वानराणां प्रत्येकं नामनिर्देशपूर्वकं तत्पराक्रमं वर्णयति ।

तांस्तु ते संप्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् । राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम् ॥ १ ॥
स्निग्धा यस्य बहुव्यामा दीर्घलांगूलमाश्रिताः । ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः ॥ २ ॥
प्रगृहीताः प्रकाशन्ते सूर्यस्येव मरीचयः । पृथिव्यां चानुकृष्यन्ते हरो नामैष वानरः ॥ ३ ॥
यं पृष्ठतोऽनुगच्छन्ति शतशोऽथ सहस्रशः । द्रुमानुद्यम्य सहसा लङ्कारोहणतत्पराः ॥ ४ ॥

नवमत्य तिरस्कृत्य यश्च त्वामभिवर्तते त्वत्संमुखे तिष्ठति सः गवयो नाम । सार्धश्लोक एकान्वयी ॥ ४४ ॥

रा० टी०–एनमिति । सप्ततिः शतसहस्राणि सैन्यानि एनं गवयं पर्युपासते एवैव एष एव मर्दितुमाशंसते वृद्धिराषी, नप्तुनेत्यत्र योगविभागेन क्वचिदसिद्धत्वाभावज्ञापनाद्वा ॥ ४५ ॥

गो० टी०–शेषेण गवयं वर्णयति—यस्त्वित्यादिना । गैरिकं रक्तवर्णधातुविशेषः । ' धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ' इत्यमरः । तद्वर्ण इवाभा यस्येति विग्रहः । गैरिकवर्ण इवाभातीति गैरिकवर्णाभमिति वा । पुष्यति युद्धहर्षादभिवर्धयतीत्यर्थः ॥ ४६ ॥ ४७ ॥

४६ ] ति० टी०–येषां यूथपानां संख्या न विद्यते । भागशः सन्तीति शेषः ॥ ४६ ॥

४७–४८ ] ति० टी०–अत्र सर्गच्छेदोऽपाङ्क्तो वृत्तभेदाभावादेकप्रकरणत्वाच्चेति कतकः ॥ ४७ ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षड्विंशः सर्गः ॥ २६ ॥

रा० टी०–एते इति । एते दुष्प्रसहाः वीराः वर्णिता इति शेषः येषां संख्या न विद्यते ते यूथपश्रेष्ठा यूथपास्तेषां यूथानि च भागशस्तिष्ठन्तीति शेषः ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षड्विंशः सर्गः ॥ २६ ॥

गो० टी०–उपसंहरति—एत इति । यूथपाः अङ्गदादयः । यूथपश्रेष्ठाः सुग्रीवादयः । एषां यूथपानां यूथानि भागशः पृथक् । विद्यन्त इति शेषः ॥ ४८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

१ ] ति० टी०–तानिति । ये जीवितं न रक्षन्ति ॥ १ ॥

रा० टी०–लाङ्गूलजातिप्रभृतीनाह—तानित्यादिभिः । राघवार्थे जीवितं स्वजीवनमपि न रक्षन्ति तान् यूथपान् संप्रेक्षमाणस्यावलोकमानस्य ते तव समीपे संप्रवक्ष्यामि ॥ १ ॥

गो० टी०–पुनरुक्तेभ्योऽप्युत्कृष्टान् प्रधानयूथपतीन् वक्तुं प्रतिजानीते—तांस्त्वित्यादि । ये राघवार्थे पराक्रान्ताः सन्तः जीवितं न रक्षन्ति तान् यूथपान् ते तुभ्यम् प्रवक्ष्यामीत्यन्वयः ॥ १ ॥

२ ] ति० टी०–स्निग्धा इत्यादि हरवर्णनमिति कतकः । तारस्येत्यन्ये । बहुव्यामा यस्य लाङ्गूलाश्रिता वाला बहुव्यामत्वादिगुणकाः ॥ २ ॥

३–४ ] ति० टी०–प्रगृहीता उत्क्षिप्ताः । एष हरो नामेत्यन्वयः । हरो गोलाङ्गूलजातिः ॥ ३ ॥ ४ ॥

रा० टी०–स्निग्धा इति । बहुव्यामाः अतिदीर्घाः ताम्रत्वादिविशिष्टाः घोरकर्मणो यस्य दीर्घलाङ्गूलमाश्रिताः प्रकीर्णाः इतस्ततः प्रक्षिप्ताः स्निग्धा प्रगृहीताः उत्थिताः केशाः सूर्यस्य मरीचय इव प्रकाशन्ते पृथिव्यामनुकृष्यन्ते च यं च शतशः सहस्रशः लङ्कारोहणतत्पराः समुपस्थिताः हरिराजस्य किंकराः यूथपाश्च वृक्षानुद्यम्य पृष्ठतोऽनुगच्छन्ति स एष हरो नाम वानरः । सार्धश्लोकत्रयमेकान्वयि ॥ २–४ ॥

गो० टी०–द्वाभ्यां हरं वर्णयति—वाला इति । वालारोमाणि बहुव्यामाः बहुव्यामप्रमाणाः व्यामो नाम प्रसारितबाहुद्वयप्रमाणम् । प्रगृहीताः उत्क्षिप्ताः । प्रकीर्णाः विरलाः । सूर्यस्य मरीचय इव मेघेषु शक्रचापादिरूपेण प्रसृता रश्मय इव प्रकाशन्ते कदाचित् पृथिव्यामनुकृष्यन्ते एष यूथपो हरो नाम ॥ २ ॥ ३ ॥

गो० टी०–यमित्यादि सार्धं श्लोक एकान्वयः ॥ यं हरम् । हरस्य हरिराजकिङ्करत्वेन तदीया अपि यूथपा हरिराजकिंकरा एवेति न विरोधः ॥ ४ ॥

१ घोरा बलिनः कामरूपिण इति गो. पाठः । २ एषामिति गो. पाठः । ३ ऽद्यमिति गो. पाठः । ४ वाला इति गो. पाठः । ५ यूथप इति गो. पाठः । ६ द्रुमानिति गो. पाठः ।

यूथपा हरिराजस्य किंकराः समुपस्थिताः । नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि ॥ ५ ॥
असिताञ्जनसंकाशान्युद्धे सत्यपराक्रमान् । असंख्येयाननिर्देश्यान्परं पारमिवोदधेः ॥ ६ ॥
पर्वतेषु च ये केचिद्विषयेषु[1] नदीषु च । एते त्वामभिवर्तन्ते राजन्नृक्षाः[2] सुदारुणाः ॥ ७ ॥
एषां मध्ये स्थितो राजा भीमाक्षो भीमदर्शनः । पर्जन्य इव जीमूतैः समन्तात्परिवारितः ॥ ८ ॥
ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् । सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ ९ ॥
यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् । भ्रात्रा समानो रूपेण विशिष्टश्च[4] पराक्रमे ॥ १० ॥
स एष जाम्बवान्नाम महायूथपयूथपः । प्रशान्तो[5] गुरुवर्ती च संप्रहारेष्वमर्षणः ॥ ११ ॥
एतेन साह्यं तु महत्कृतं शक्रस्य धीमता । देवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥ १२ ॥
आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाः शिलाः । मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च ॥ १३ ॥
राक्षसानां च सदृशाः पिशाचानां च रोमशाः । एतस्य सैन्या बहवो विचरन्त्य[6]मितौजसः ॥ १४ ॥
यं[7] एनमभिसंरब्धं प्लवमानमवस्थितम् । प्रेक्षन्ते वानराः सर्वे स्थितं यूथपयूथपम् ॥ १५ ॥
एष राजन्सहस्राक्षं पर्युपास्ते हरीश्वरः । बलेन बलसंयुक्तो रम्भो नामैष यूथपः ॥ १६ ॥

---

५ ] ति० टी०–धूम्रवर्णनम्—नीलानित्यादि ॥ ५ ॥
६–९ ] ति० टी०–अनिर्देश्यानशक्यनामगणनान् । परं पारमिव परपारस्थरेणूनिव ॥ ६–९ ॥

रा० टी०–धूम्रं वर्णयति—नीलानिति । नीलान् महामेघानिव अत एव असिताञ्जनसंकाशान् अतिकृष्णाञ्जनसदृशान् उदधेः परं पारं लक्षणया तत्स्थरेणूनिव असंख्येयान् यान् त्वं पश्यसि ये केचित् पर्वतेषु विषयेषु देशेषु नदीषु च अवसन्निति शेषः ते एते सुदारुणा ऋक्षाः त्वामभिवर्तन्ते च । सार्धश्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–ऋक्षसेनां वर्णयति—नीलानित्यादि । अनिर्देश्यान् प्रत्येकं निर्देष्टुमशक्यान् । परं पारमिवोदधेः समुद्रस्यापरं तीरमिव स्थितमित्यर्थः । विषमेषु निम्नोन्नतप्रदेशेषु ॥ ५–७ ॥

रा० टी०–एषामिति । एषां पूर्वोक्तानां राजा अत एव एषां मध्ये जीमूतैः कृष्णमेघैः समन्तात्परिवारितः पर्जन्य इन्द्र इव यः स्थितः यश्च नर्मदां नदीं पिबन् शोषयन् सन् ऋक्षवन्तं तदभिधं गिरिश्रेष्ठमध्यास्ते अध्यास्त सः सर्वर्क्षाणामधिपतिः एष धूम्रो नाम । अर्धचतुष्टयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०–एषामिति । पर्जन्यः वर्षदेवता ॥ ८ ॥ ९ ॥

१० ] ति० टी०–अथ जाम्बवद्वर्णनम्—यवीयानिति । अस्य धूम्रस्य कनिष्ठ इत्यर्थः । यो भ्रात्रा समान इत्यन्वयः ॥ १० ॥

रा० टी०–जाम्बवन्तं वर्णयति—यवीयानिति । रूपेण भ्रात्रा धूम्रेण समानः पराक्रमे विशिष्टः अधिकः महायूथपयूथपः संप्रहारेषु युद्धेषु अमर्षणः तच्छ्रवणमात्रेण तत्र प्रवर्तते इत्यर्थः, योऽस्य धूम्रस्य यवीयान् कनिष्ठो भ्राता स जाम्बवान् नाम एषः पर्वतोपममेनं पश्य । अर्धचतुष्टयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०–यवीयानिति । यवीयान् कनिष्ठः । अयमिति शेषः । विशिष्टः अधिकः ॥ १० ॥

११ ] ति० टी०–गुरुवर्ती सद्गुरूपासकः । अनेन मन्त्रसिद्धिमत्त्वमुक्तम् ॥ ११ ॥

गो० टी०–स एष इति । गुरुवर्ती गुरुशुश्रूषकः ॥ ११ ॥

१२ ] ति० टी०–साह्यं साहाय्यम् । देवासुरे । युद्धे इति वैर इति वा शेषः ॥ १२ ॥

रा० टी०–एतेनेति । एतेन दृश्यमानेन जाम्बवता देवासुरे युद्धे शक्रस्य महत्साह्यं साहाय्यं कृतमतः बहवो वराः लब्धाः ॥ ११ ॥

गो० टी०–एतेनेति । दैवासुरे देवासुरयुद्धे ॥ १२ ॥

१३ ] ति० टी०–अथ तत्सैन्यवर्णनम्—आरुह्येति १३

१४ ] ति० टी०–रोमशा अधिकरोमवन्तः । रक्षःपिशाचसादृश्यं क्रौर्येण ॥ १४ ॥

रा० टी०–तत्सैन्यं वर्णयति—आरुह्येति । अमितौजसः अत एव राक्षसानां पिशाचानां च सदृशाः रोमशाः बहुलोमवन्तः एतस्य जाम्बवतो ये बहवः सैन्याः वानराः विचरन्ति ते सर्वे आरुह्य महाभ्रवत् विपुलाः विशालाः शिलाः पर्वताग्रेभ्यो मुञ्चन्ति मृत्योरपि नोद्विजन्ति अवस्थितम् एनं जाम्बवन्तं प्रेक्षन्ते च । अर्धषट्कमेकान्वयि ॥ १२–१४ ॥

गो० टी०–जाम्बवतः सैनिकान् वर्णयति द्वाभ्याम्—आरुह्येत्यादि । पर्वताग्राणीत्यर्थात्सिद्धम् । मुञ्चन्ति च्यावयन्ति नोद्विजन्ति न बिभ्यति । राक्षसानां पिशाचानां च सदृशा इत्यन्वयः ॥ १३ ॥ १४ ॥

१५–१६ ] ति० टी०–दम्भवर्णनम्—य एनमिति ।

---

१ विषमेष्विति गो. पाठः । २ राजन्निति गो. पाठः । ३ उत्तममिति रा पाठः । ४ तु पराक्रमैरिति गो. पाठः । ५ प्रक्रान्त इति गो. पाठः । ६ अमिततेजस इति गो. पाठः । ७ यमिति गो. पाठः । ८ इवेति गो. पाठः । ९ स्थिता इति गो. पाठः । १० संपन्न इति गो. पाठः । ११ दम्भ इति गो. रा. पाठः ।

यः स्थितं योजने शैलं गच्छन्पार्श्वेन सेवते । ऊर्ध्वं तथैव कायेन गतः प्राप्नोति योजनम् ॥ १७ ॥
यस्मात्तु परमं रूपं चतुष्पात्सु न विद्यते । श्रुतः संनादनो नाम वानराणां पितामहः ॥ १८ ॥
येन युद्धं तदा दत्तं रणे शक्रस्य धीमता । पराजयश्च न प्राप्तः सोऽयं यूथपयूथपः ॥ १९ ॥
यस्य विक्रममाणस्य शक्रस्येव पराक्रमः । एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मना ॥ २० ॥
तदा देवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् । यत्र वैश्रवणो राजा जम्बूमुपनिषेवते ॥ २१ ॥
यो राजा पर्वतेन्द्राणां बहुकिंनरसेविनाम् । विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप ॥ २२ ॥
तत्रैष रमते श्रीमान्बलवान्वानरोत्तमः । युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः ॥ २३ ॥
वृतः कोटिसहस्रेण हरीणां समवस्थितः । एषैवाशंसते लङ्कां स्वेन नीकेन मर्दितुम् ॥ २४ ॥

---

प्लवमानम् । लीलार्थमिति शेषः । स्थितं लीलार्थमेव पुनः स्थितम् ॥ १५ ॥ १६ ॥

रा० टी०—दम्भं वर्णयति—एष इति । बलसंयुक्तः बहुसैन्यविशिष्टः य एषः स दम्भो नाम यूथपः एषः दम्भः सहस्राक्षं बलेन स्वसैन्येन पर्युपास्ते इन्द्रसाहाय्यार्थं स्वसैन्यं प्रेषयामासेत्यर्थः ॥ १५ ॥

गो० टी०—द्वाभ्यां दम्भं वर्णयति—यं त्विति । अभिसंरब्धं कुपितम् प्लवमानमिव सदा प्लवमानमिव स्थितं प्रेक्षन्ते । आश्चर्येणेति शेषः । बलेन पर्युपास्ते बलेन प्रीणयतीत्यर्थः ॥ १५ ॥ १६ ॥

१७–१९ ] ति० टी०—संनादनवर्णनम्—यः स्थितमिति । यो योजने स्थितं शैलं पार्श्वेन सेवते । एतेन योजनव्यायामदेह इत्युक्तम् । ऊर्ध्वमपि योजनं कायेन कायप्रमाणेन गतो व्याप्तः सन्नूर्ध्ववर्तिपदार्थं प्राप्नोति स्पृशति ॥ १७–१९ ॥

रा० टी०—सन्नादनं वर्णयति—यः स्थितमिति । योजने स्थितं शैलं गच्छन् सन् यः पार्श्वेन सेवते संस्पृशति योजनदीर्घशरीर इत्यर्थः गतो गमनवान् यः कायेन ऊर्ध्वं योजनं सेवते योजनपरिमितोत्सेध इत्यर्थः चतुष्पात्सु यस्मात्परमं रूपं न विद्यते सः सन्नादनो नाम वानराणां पितामहः श्रुतः । अर्धचतुष्टयमेकान्वयि ॥ १६ ॥ १७ ॥

रा० टी०—येनेति । येन रणे शक्रस्य युद्धं दत्तं तेन सह योधितवानित्यर्थः, तदा तस्मिन्समये पराजयो न प्राप्तः सोऽयं सन्नादन एव ॥ १८ ॥

गो० टी०—त्रिभिः सन्नादनं वर्णयति—यः स्थितमिति । यो गच्छन् योजने योजनदूरे स्थितं शैलम् पार्श्वेन गच्छति । अस्य गमनकाले एकपदप्रक्षेपदशायाम् एकयोजनपरिमितः पर्वतः पार्श्वस्थो भवति । योजनायतशरीर इत्यर्थः । कायेनोर्ध्वं गतः सन् योजनं प्राप्नोति । योजनोन्नतकाय इत्यर्थः । अत एव चतुष्पात्सु यस्मात् परमं परं रूपं शरीरं न विद्यते । शक्रस्य रणे शक्रस्यासुरैः सह युद्धे । येनासुरेभ्यो युद्धं दत्तं तदा पराजयश्चासुरेभ्यो न प्राप्तः सोयं सन्नादन इति श्रुतो नाम ॥ १७–१९ ॥

२० ] ति० टी०—अथ क्रथनवर्णनम्—यस्येति । कृष्णवर्त्मनाग्निना ॥ २० ॥

रा० टी०—क्रोधनं वर्णयति—यस्येति । विक्रममाणस्य युद्धार्थं प्रचलतः यस्य शक्रस्येव पराक्रमो दृश्यत इति शेषः एषः देवासुरे युद्धे साह्यार्थं साहाय्यार्थं कृष्णवर्त्मना वह्निना गन्धर्वकन्यायामुत्पन्नः उत्पादितः यश्च यो वैश्रवणः किंनरसेविनां किंनरकर्तृकसेवावतां पर्वतेन्द्राणां राजा तस्य ते भ्रातुः कुबेरस्य नित्यं विहारसुखदः अत एव यत्र यस्मिन् गिरौ वैश्रवणः कुबेरः जम्बूं तदभिधतरुमुपनिषेवते तत्समीपे तीष्ठतीत्यर्थः, तत्र तस्मिन् गिरावेव रमते सः युद्धेषु अकथनः स्वश्लाघाकथनरहितः क्रोधनो नाम यूथपः । अर्धाष्टकमेकान्वयि ॥ १९ ॥ २२ ॥

गो० टी०—कस्यायं पुत्र इत्यत्राह—यस्येति । विक्रममाणस्य पराक्रमं कुर्वतः यस्य पराक्रमः शक्रस्येव । तत्पराक्रमसदृशपराक्रम इत्यर्थः ॥ २० ॥

२१–२२ ] ति० टी०—त्रिदिवौकसां साह्यार्थमुत्पन्न इत्यन्वयः । वैश्रवणो राजा यत्र गिरौ जम्बूमुपनिषेवते, यः पर्वतो बहवः किंनराः सेवका येषां तेषां पर्वतेन्द्राणां राजा, यश्च ते भ्रातुर्विहारसुखदः ॥ २१ ॥ २२ ॥

गो० टी०—किमर्थमुत्पादित इत्यत्राह—तदेत्यर्धम् । तदा प्रसिद्धे ॥ २१ ॥

२३–२४ ] ति० टी०—तत्र गिरौ कैलासे वसति । अकत्थन आत्मश्लाघारहितः कार्येणैव पराक्रमप्रदर्शकः ॥ २३ ॥ २४ ॥

रा० टी०—वृत इति । समवस्थितः एकाग्रचित्तः हरीणां कोटिसहस्रेण वृतः एष क्रोधन एव मर्दितुमाशंसते ॥ २३ ॥

गो० टी०—क्रथनं वर्णयति सार्धैस्त्रिभिः—यस्येत्यादिना । यस्य गिरेः वैश्रवणः कुबेरो राजा । यो गिरिः जम्बूं जम्बूवृक्षम् उपनिषेवते । जम्बूयुक्त इत्यर्थः । यः ते भ्रातुः

---

१ नेति गो. पाठः । २ पादेष्विति गो. पाठः । ३ पुरेति गो. पाठः । ४ वत्मन इति गो. पाठः । ५ दैवासुर इति गो. पाठः । ६ वसतीति गो. पाठः । ७ ऋषभ इति गो. पाठः । ८ क्रोधन इति रा. पाठः । ९ तपेति गो. पाठः ।

यो गङ्गामनुपर्येति त्रासयन्गजयूथपान्। हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ॥ २५ ॥
एष यूथपतिर्नेता गर्जन्गिरिगुहाशयः। गजान्रोधयते वन्यानारुजंश्च महीरुहान् ॥ २६ ॥
हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु। उशीरबीजमाश्रित्य मन्दरं पर्वतोत्तमम् ॥ २७ ॥
रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम्। एनं शतसहस्राणां सहस्रमभिवर्तते ॥ २८ ॥
वीर्यविक्रमदृप्तानां नर्दतां बाहुशालिनाम्। स एष नेता चैतेषां वानराणां महात्मनाम् ॥ २९ ॥
स एष दुर्धरो राजन्प्रमाथी नाम यूथपः। वातेनेवोद्धतं मेघं यमेनमनुपश्यसि ॥ ३० ॥
अनीकमपि संरब्धं वानराणां तरस्विनाम्। उद्धूतमरुणाभासं पवनेन समन्ततः ॥ ३१ ॥
विवर्तमानं बहुशो य तद्बहुलं रजः। एते सितमुखा घोरा गोलाङ्गूला महाबलाः ॥ ३२ ॥
शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम्। गोलाङ्गूलं महाराज गवाक्षं नाम यूथपम् ॥ ३३ ॥

कुबेरस्य विहारसुखदः तत्र पर्वते युद्धेष्वकत्थनः क्रथनो नामैष यूथपो वसतीति संबन्धः ॥ २२–२४ ॥

२५ ] ति० टी०-अथ प्रमाथिवर्णनम्—यो गङ्गामिति। गङ्गामनु गङ्गासमीपे। हस्तिवानरयोर्वैरं गजाकारशम्बसादनासुरस्य हनुमत्पित्रा केसरिणा वधात्पूर्वमुत्पन्नमिति पौराणिकी गाथा ॥ २५ ॥

२६ ] ति० टी०-नेता प्रभुः ॥ २६ ॥

२७ ] ति० टी०-हैमवतीं नदीं गङ्गामनुवर्तमानमुशीरबीजाख्यं पर्वतमाश्रित्य यो रमते इत्यन्वयः ॥ २७ ॥

२८–२९ ] ति० टी०-शतसहस्राणां सहस्रम्। सहस्रलक्षमिति यावत् ॥ २८ ॥ २९ ॥

रा० टी०-प्रमाथिनं वर्णयति-य इति। हस्तिनां वानराणां च पूर्वं पौर्वकालिकं वैरमनुस्मरन् सन् गजयूथपान् त्रासयन् सन् गङ्गामनु गङ्गासमीपे यः पर्येति परिभ्रमति वैरं निमित्तं तु गजाकृतिसंबसादनाभिधासुरस्य हनुमत्पितृकेसरिकर्तृकवध इति पौराणकी प्रसिद्धिः यः एषः नेता प्रभुः सन् महीरुहान् तरून् रुजन् भञ्जन् गजान् रोधयते यश्च हैमवतीं गङ्गामनु अनुवर्तमानम् उशीरबीजं तदभिधं मन्दरं च पर्वतोत्तममाश्रित्य दिवि शक्र इव रमते यमेनं बाहुशालिनाम् अतिबाहुबलयुक्तानां शतसहस्राणां वानराणां सहस्रमभिवर्तते यं चैनं वातेनोद्धतं प्रवृद्धं मेघमिव अनुपश्यसि यस्य च वानराणां संरब्धं कोपाविष्टमनीकमपि पश्यसि यत्र यस्यानीके पवनेनोद्धूतमरुणाभासम् अरुणवत्प्रतीयमानं समन्ततो विवर्तमानं बहुलं रजः बहुशोऽनेकवारमनुपश्यसि च स एषः प्रमाथी नाम यूथपः स एष एव महात्मनां वानराणां नेता प्रवर्तकः। सार्धश्लोकसप्तकमेकान्वयि ॥ २४ ॥ ३१ ॥

गो० टी०-यो गङ्गामित्यादि सार्धश्लोकसप्तकम् प्रमाथिविषयम् ॥ हस्तिनां वानराणां च अन्योन्यं पूर्ववैरमनुस्मरन् यः गङ्गामनु गङ्गासमीपे। "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया। हस्तियूथपान् त्रासयन् पर्येति परितश्चरति।

अत्रेयं पौराणिकी कथा—पुरा किल शम्बसादनो नामासुरो गजरूपेण मुनीन् बाधमानस्तैर्मुनिभिश्चोदितेन केसरिणा हनुमत्पित्रा हतः। तत्संतुष्टैर्मुनिभिर्महापराक्रमो हनुमान् पुत्रस्ते भविष्यतीति केसरिणे वरो दत्तः। ततःप्रभृति हस्तिनां वानराणां च परस्परं वैरमभूदिति ॥ गच्छन्नेव गमनकाल एव रिपूणां नाशयिता गिरिगुहायां शेते वर्तत इति गिरिगुहाशयः। गजानिति। गजैर्वृक्षान् वृक्षैर्गजांश्च हन्तीत्यर्थः। हैमवतीमनु गङ्गासमीपे स्थितम् उशीरबीजाख्यं पर्वतमाश्रित्य रमत इति योजना। हरिवाहिनीमुख्यत्वेपि भिन्नजातीयत्वभ्रमव्युदासार्थं वानरश्रेष्ठ इत्युक्तम्। वीरस्य भावो वीर्यम्। उत्साह इत्यर्थः। विक्रमः परान् प्रत्यभिभवः। बलशालिनां वानराणामित्यर्थसिद्धम्। शतसहस्राणां सहस्रं सहस्रलक्षमित्यर्थः। नेता नायकः ॥ २५–२९ ॥

३० ] ति० टी०-दुर्धरः शत्रुभिर्धर्तुमशक्यः। प्रमाथिनं विशिष्य बोधयति—वातेनेवेति ॥ ३० ॥

गो० टी०-प्रमाथिनं वर्णयति—स एष इति। दुर्धरः दुर्धर्षः। प्रमाथी नाम प्रमाथिनामकः। वातेनोद्धतं मेघमिव यमेनमनुपश्यसि एष प्रमाथीति संबन्धः ॥ ३० ॥

३१ ] ति० टी०-तरस्विवानरसंबन्धि यस्यानीकं संरब्धं पश्यसि, यस्यानीकेनोद्धतं बहुलं रजोऽरुणाभं धूम्रवर्णं पवनेन समन्ततो बहुशो विवर्तमानं क्षिप्यमाणं यत्र यत्समीपे पश्यसि स एष प्रमाथीत्यन्वयः ॥ ३१ ॥

गो० टी०-अनीकमिति। यत्र अनीके। समन्ततः पवनेनोद्धूतम् अरुणाभासम् अरुणकान्तिबहुलमेतद्रजः बहुधा विवर्तमानं भवति संरब्धं तत् तरस्विनां वानराणामनीकमपि पश्यसि। तदप्यस्य प्रमाथिन इत्यर्थः ॥ ३१ ॥

३२–३३ ] ति० टी०-गवाक्षवर्णनम्—एते सितेत्यादि। शतं शतसहस्राणि। शतलक्षमित्यर्थः। सेतुबन्धनं नलसमीपे तत्सहायतया स्थित्वा सेतुबन्धनकर्तारम् ॥ ३२ ॥ ३३ ॥

रा० टी०-गवाक्षं वर्णयति-एत इति। शतं शतगुणि-

१ हस्तीवि गो. पाठः। २ गच्छन्निति गो. पाठः। ३ योधयते इति गो. पाठः। ४ गिरीश्रेवेति गो. पाठः। ५ पर्वतं मन्दरोपममिति गो. पाठः। ६ भान्विति गो. पाठः। ७ बहुधेति गो. पा :। ८ वेगमिति गो. पाठः।

परिवार्याभिनर्दन्ते लङ्कां मर्दितुमोजसा । भ्रमराचरिता यत्र सर्वकालफलद्रुमाः ॥ ३४ ॥
यं सूर्यस्तुल्यवर्णाभमनुपर्येति पर्वतम् । यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः ॥ ३५ ॥
यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः । सर्वकामफला वृक्षाः सर्वे फलसमन्विताः ॥ ३६ ॥
मधूनि च महार्हाणि यस्मिन्पर्वतसत्तमे । तत्रैष रमते राजन्रम्ये काञ्चनपर्वते ॥ ३७ ॥
मुख्यो वानरमुख्यानां केसरी नाम यूथपः । षष्टिर्गिरिसहस्राणि रम्याः काञ्चनपर्वताः ॥ ३८ ॥
तेषां मध्ये गिरिवरस्त्वमिवानघ रक्षसाम् । तत्रैके कपिलाः श्वेतास्ताम्रास्या मधुपिङ्गलाः ॥ ३९ ॥
निवसन्त्यन्तिमगिरौ तीक्ष्णदंष्ट्रा नखायुधाः । सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः ॥ ४० ॥
सर्वे वैश्वानरसमा ज्वलदाशीविषोपमाः । सुदीर्घाञ्चितलाङ्गूला मत्तमातंगसंनिभाः ॥ ४१ ॥
महापर्वतसंकाशा महाजीमूतनिःस्वनाः । वृत्तपिङ्गलनेत्रा हि महाभीमगतिस्वनाः ॥ ४२ ॥

---

तानि सहस्राणि लक्षाणीत्यर्थः अमितमुखाः श्यामवर्णमुखवन्तः एते गोलाङ्गूलाः तज्जातीयाः सेतुबन्धनं नलकर्तृकसेतुबन्धनमहायीभूतं गवाक्षं नाम यूथपं परिवार्य आहत्य अभिनर्दन्ते । श्लोकद्वयमेकान्वयि ॥ ३२ ॥ ३३ ॥

गो० टी०—गवाक्षमाह श्लोकद्वयेन—एत इति । अमितमुखाः गोलाङ्गूलाः सेतुबन्धनं दृष्ट्वा उत्साहेन शतं शतसहस्राणि च सन्तः गवाक्षं नाम स्वयूथपतिं परिवार्य लङ्काम् ओजसा स्वतेजसा मर्दितुमभिवर्तन्ते । अत्र यूथपत्यपेक्षया यूथानां बलोत्साहाधिक्यं व्यज्यते ॥ ३२ ॥ ३३ ॥

३४ ] ति० टी०—केसरिवर्णनम्—भ्रमरेत्यादि । यत्र पर्वते सर्वकाले फलन्ति तादृशा द्रुमाः सन्ति ॥ ३४ ॥

३५ ] ति० टी०—यं सूर्यस्तुल्यवर्णाभं स्वतुल्यवर्णकान्तियुक्तं पर्वतमनुपर्येति प्रदक्षिणं करोति । मृगपक्षिणस्तद्वर्तिमृगादयः ॥ ३५ ॥

३६ ] ति० टी०—सर्वकामेति । काम्यन्त इति कामा विषयाः सर्वेषां भोगार्हस्रक्चन्दनाभरणवस्त्रादिरूपफलप्रदा ॥ ३६ ॥

३७ ] ति० टी०—काञ्चनपर्वतो महामेरुः ॥ ३७ ॥

रा० टी०—केसरिणं वर्णयति—भ्रमरेत्यादिभिः । यत्र पर्वते भ्रमराचरिताः भ्रमरैः सेविताः सर्वेषु कालेषु फलन्ति त एव द्रुमाः सन्तीति शेषः यं च तुल्यवर्णेन आभाति तं पर्वतं सूर्योऽनुपर्येति प्रदक्षिणं परिभ्रमति यस्य पर्वतस्य भासा दीप्ता तद्वर्णाः अरुणा इत्यर्थः, मृगपक्षिणो भान्ति यस्य प्रस्थं शृङ्गं महर्षयो न त्यजन्ति यत्र च फलसमन्विताः सर्वे वृक्षाः सर्वकामफला सन्तीति शेषः, यस्मिन् मधूनि वर्तन्ते तत्र काञ्चनपर्वते महामेरौ केसरी नाम एष यूथपो रमते श्लोकचतुष्टयमेकान्वयि ॥ ३४ ॥ ३६ ॥

गो० टी०—अथ चतुर्भिः केसरिणं वर्णयति—भ्रमरेति । यत्र पर्वते । सर्वकामफलाः । सर्वैः काम्यन्त इति सर्वकामाः सर्वाभीष्टार्थाः तान् फलन्तीति सर्वकामफलाः ते च ते द्रुमाश्च सर्वकामफलद्रुमाः भ्रमरैः आचरिताः व्याप्ताः भवन्ति । अनेन वृक्षाणां सर्वापेक्षितप्रदत्वं सदा पुष्पितत्वं चोक्तम् । यं पर्वतम् सूर्यः तुल्यवर्णाभं तुल्यप्रकारकान्तिकं यथा तथा अनु समीपे पर्येति संचरति । दृश्यते हि सूर्यस्तत्सन्निधाने काञ्चनवर्णः । यस्मिन्पर्वतसत्तमे सर्वकामफलाः सर्वैः काम्यमानफलाः । अनेन स्वादुफलत्वमुक्तम् । सदा फलसमन्विताः सर्वकालं फलयुक्ता इत्यर्थः । काञ्चनपर्वते मेरौ ॥ ३४—३७ ॥

३८ ] ति० टी०—शतवलिवर्णनम्—षष्टिरित्यादि ॥ ३८ ॥

रा० टी०—शतवलिं वर्णयति—षष्टिरित्यादिभिः । गिरिवाराणां विद्यमानाः वर्णनीया इत्यर्थः, षष्टिः सहस्राणि काञ्चनपर्वताः ये सन्तीति शेषः तेषां पर्वतानां मध्ये रक्षसां मध्ये त्वमिव यो गिरिवरः सावर्णिमेरुनामेत्यर्थः, 'गिरिसहस्राणाम्' इति पाठे तु गिरिसहस्राणां मध्ये ये षष्टिः काञ्चनपर्वता इत्यर्थः ॥ ३७ ॥

गो० टी०—अथ शतवलिवानरसेनाश्लाघनपूर्वकं वर्णयति षष्टिरित्यारभ्य हरिरित्यन्तेन । गिरिसहस्राणां षष्टिरस्ति । ते रम्याः काञ्चनपर्वता भवन्ति । गिरिवरः मेरुः । अस्ति ह्यस्तगिरेः पूर्वतश्चापरो मेरुः । वैश्वानरसमाः वैश्वानरः अग्निः तद्वदुग्रा इत्यर्थः । ज्वलिताशीविषाः कुपितसर्पाः आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः आशीरुरगदंष्ट्रायां प्रियवाक्याभिलाषयोरित्यमरः । पृषोदरादित्वात् सलोपः । तद्वत्कोपना इत्यर्थः । अञ्चितलाङ्गूलाः उदञ्चित लाङ्गूलाः मत्तेत्यादिना महाकायत्वमुक्तम् । पर्वतसंकाशा इत्यनेन दार्ढ्यमुक्तम् । भीमभीमाः भीमप्रकाराः प्रकारः सादृश्यं भीमसदृशाः ईषद्भीमा इत्यर्थः । "प्रकारे गुणवचनस्य" इति द्विर्भावः तादृशगमनस्वराः । ते वानराः ते तव लङ्कां समीक्ष्य मर्दयन्तीव तस्थुः मर्दयन्तीव तिष्ठन्ति । आर्षो लिङ्गव्यत्ययः ॥ ३८—४२

३९—४२ ] ति० टी०—तेषां मध्ये गिरिवरः सावर्णिमेरुनामास्ति । तत्र सावर्णिमेरौ ॥ ३९—४२ ॥

रा० टी०—तत्रेति । तत्रान्तिमगिरौ गिरेरुत्तरभागे तीक्ष्णदंष्ट्रा नखायुधाः सिंहा इव चतुर्दंष्ट्राः दंष्ट्राचतुष्टयविशिष्टाः व्याघ्रा इव दुरासदाः वैश्वानरसमाः वह्निसदृशाः वृत्तानि वर्तु-

---

१ वर्तन्त इति गो. पाठः । २ सदेति गो. पाठः । ३ सहस्राणामिति गो. पाठः । ४ एते इति गो. पाठः । ५ उत्तमेति गो. पाठः । ६ ज्वलितेति गो. पाठः । ७ सन्निभा इति गो. पाठः । ८ रक्ताक्षा भीमभीमगतिस्वरा इति गो. पाठः ।

मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते । एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् ॥ ४३ ॥
जैयार्थी नित्यमादित्यमुपतिष्ठति वीर्यवान् । नाम्ना पृथिव्यां विख्यातो राजञ्शतबलीति यः॥४४॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् । विक्रान्तो बलवाञ्छूरः पौरुषे स्वे व्यवस्थितः ॥ ४५ ॥
रामप्रियार्थं प्राणानां दयां न कुरुते हरिः । गजो गवाक्षो गवयो नलो नीलश्च वानरः ॥ ४६ ॥
एकैकमेव योधानां कोटिभिर्दशभिर्वृतः । तथान्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः ॥
न शक्यन्ते बहुत्वात्तु संख्यातुं लघुविक्रमाः ॥ ४७ ॥

सर्वे महाराज महाप्रभावाः सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन कर्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ।

सारणोक्तावशिष्टं शुकः कथयति ।

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् । बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत् ॥ १ ॥
स्थितान्पश्यसि यानेतान्मत्तानिव महाद्विपान् । न्यग्रोधानिव गाङ्गेयान्सालान्हैमवतानिव ॥ २ ॥
एते दुष्प्रसहा राजन्बलिनः कामरूपिणः । दैत्यदानवसंकाशा युद्धे देवपराक्रमाः ॥ ३ ॥

---

लानि पिङ्गलानि नेत्राणि येषां ते भीमाः गतयः स्वनाश्च येषां ते एके प्रधानाः सर्वे ये निवसन्ति ते सर्वे लङ्कां मर्दयन्तीव अत एव समीक्ष्य तस्थुः एतेन लिङ्गव्यत्यय आर्षइत्युक्तिश्चिन्त्या । श्लोकचतुष्टयमेकान्वयि ॥ ३८–४१ ॥

४३–४८ ] ति० टी०–ते वानरास्ते तव लङ्कां समीक्ष्य मर्दयन्तीव मर्दयन्त इव तिष्ठन्ति ॥ ४३–४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

रा० टी०–एष इति । यो वीर्यवान् मध्ये तिष्ठति राज्यार्थी सन् आदित्यमुपतिष्ठति च सः शतबलीति नाम्ना विख्यातः वीर्यवान् एष एषां पूर्वोक्तानामधिपतिः सार्धश्लोक एकान्वयी ॥ ४२ ॥

रा० टी०–एष इति । एष शतबलीति विख्यातः मर्दितुमाशंसते अत एव निर्देशात्संधिः ॥ ४३ ॥

गो० टी०–एष चेत्यादि । उपतिष्ठति उपतिष्ठते एषैवेति संधिरार्षः । पौरुषे पराक्रमे । प्राणानां प्राणेषु ॥ ४३ ॥ ४५॥

रा० टी०–रामेति । गजादिः रामप्रियार्थं प्राणानां प्राणिनां दयां तदविषयककृपां न कुरुते एतेन भेदानवकाशः सूचितः ॥ ४४ ॥

गो० टी०–गज इति । स्पष्टः ॥ ४६ ॥

रा० टी०–एकैकमिति । योधानां मध्ये दशभिः कोटिभिर्वृताः विन्ध्यपर्वतवासिनो योधा बहुत्वात् हेतोः तथा पूर्ववदेकैकं संख्यातुं नैव शक्यन्ते ॥ ४९ ॥

गो० टी०–तथेति । स्पष्टः ॥ ४७ ॥

रा० टी०–उपसंहरन्नाह—सर्व इति । हे महाराज पृथिवीं प्रविध्वस्तविकीर्णशैलां कर्तुं सर्वे समर्थाः सन्तीति शेषः ॥४६॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

गो० टी०–सर्व इति । प्रविध्वस्तविकीर्णशैलां प्रविध्वस्ताः चूर्णिताः विकीर्णा विक्षिप्ताः शैलाः यस्याः सा तां तथा ॥४८॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

---

१ ] ति० टी०–सारणानुक्तं किंचिच्छुको वक्तीत्याह—सारणस्येति । तत्सर्वं बलमादिश्य तूष्णीं स्थितवतः सारणस्य वचः श्रुत्वा स्थितं रावणं शुकोऽब्रवीत् ॥ १ ॥

रा० टी०–सारणोक्तिं संवर्ण्य शुकोक्तिं वर्णयितुमाह—सारणस्येत्यादिभिः । सारणस्य वचः श्रुत्वा बलमादिश्य शुको राक्षसाधिपमब्रवीत् ॥ १ ॥

गो० टी०–एवं सारणेनोक्तं श्रुत्वा शुकस्तेन कार्त्स्न्येनानुक्तेः स्वयं तत् सर्वं दर्शयत्यष्टाविंशे सर्गे–सारणस्येति । शुकः सारणस्य वचः श्रुत्वा तेन कार्त्स्न्येनानुक्तेः स्वयं तत्सर्वं बलम् आदिश्य अङ्गुल्या निर्दिश्य । रावणम् । अथ कार्त्स्न्येन अब्रवीत् । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः । सविनयोक्तिद्योतनाय राक्षसाधिपमित्युक्तम् ॥ १ ॥

२–३ ] ति० टी०–गाङ्गेयान्गङ्गातटोत्पन्नान् । अनपत्येऽपि ढगार्षः ॥ २ ॥ ३ ॥

---

१ राज्यार्थी रा. पाठः । २ बुद्धीति गो. पाठः । ३ यूथानामिति गो. पाठः ।

एषां कोटिसहस्राणि नव पञ्च च सप्त च । तथा शङ्कुसहस्राणि तथा वृन्दशतानि च ॥ ४ ॥
एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा । हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५ ॥
यौ तौ पश्यसि तिष्ठन्तौ समानौ देवरूपिणौ । मैन्दश्च द्विविदश्चैव ताभ्यां नास्ति समो युधि ॥ ६ ॥
ब्रह्मणा समनुज्ञाता अमृतप्राशिनावुभौ । आशंसेते यथा लङ्कामेतौ मर्दितुमोजसा ॥ ७ ॥
यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् । यो बलात्क्षोभयेत्क्रुद्धः समुद्रमपि वानरः ॥ ८ ॥
एषोऽभिगन्ता लङ्कायां वैदेह्यास्तव च प्रभो । एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ ९ ॥
ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः । हनूमानिति विख्यातो लङ्घितो येन सागरः ॥ १० ॥
कामरूपो हरिश्रेष्ठो बलरूपसमन्वितः । अनिवार्यगतिश्चैव यथा सततगः प्रभुः ॥ ११ ॥
उद्यन्तं भास्करं दृष्ट्वा बालः किल बुभुक्षितः । त्रियोजनसहस्रं तु अध्वानमवतीर्य हि ॥ १२ ॥
आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति । इति निश्चित्य मनसा पुप्लुवे बलदर्पितः ॥ १३ ॥

---

रा० टी०-तदाकारमाह—स्थितानित्यादिभिः । मत्तान्महाद्विपानिव गाङ्गेयान् गङ्गाकूलोद्भवान् न्यग्रोधानिव हैमवतान् हिमवत्प्रभवान् शालानिव स्थितान् यान् त्वं पश्यसि ते एते कामरूपिणः अत एव युद्धे दुष्प्रसहाः जेतुमशक्या इत्यर्थः । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०-स्थितानिति । न्यग्रोधान् वटान् । गाङ्गेयान् गङ्गातटरुहान् । हैमवतान् हिमवत्पर्वतोद्भवान् । दैत्यदानवसंकाशाः दैत्यदानवतुल्यबलाः ॥ २ ॥ ३ ॥

४-५ ] ति० टी०-एषां कोटीति सुग्रीवसचिवसंख्यां रात्रवलसंख्यां तु सर्गान्ते वक्ष्यति ॥ ४ ॥ ५ ॥

रा० टी०-एषामिति । एषां वानराणां नवादिगुणितकोटिसहस्रादीनि तत्संख्याका इत्यर्थः, देवगन्धर्वैरुत्पन्नाः सुग्रीवसचिवाः हरयः सन्तीति शेषः । श्लोकद्वयमेकान्वयि॥४॥५॥

गो० टी०-एषामिति । शङ्कुवृन्दादिस्वरूपमुत्तरत्र स्वयमेव वक्ष्यति । वृन्दशतादिसङ्ख्याः सन्तीति शेषः ॥ ४ ॥

गो० टी०-एत इति । सुग्रीवसचिवाः सुग्रीवसहायाः । मन्त्री सहायः सचिव इत्यमरः । देवगन्धर्वैः देवेभ्यो गन्धर्वेभ्यश्चेत्यर्थः । उत्पन्नाः कामरूपिण इति कामरूपित्वेन उत्पन्ना इत्यर्थः । पूर्वं कामरूपित्वमुक्तम् । तस्येदानीमुत्पत्तिकत्वमुच्यत इति न पुनरुक्तिः ॥ ५ ॥

६ ] ति० टी०-यौ ताविति मैन्दद्विविदविषयम् ॥ ६ ॥

रा० टी०-याविति । मैन्दो द्विविदश्च तौ प्रसिद्धौ यौ पश्यसि ताभ्यां समः कश्चिन्नास्ति ॥ ६ ॥

गो० टी०-यौ ताविति । कुमारौ युवानौ । देवेति रावणं प्रति संबुद्धिः । रूपिणौ प्रशस्तरूपौ प्रशंसायां मत्वर्थीय इनिप्रत्ययः । यौ पश्यसि तौ मैन्दश्च द्विविदश्चेत्युच्येते इत्यर्थः । युधि ताभ्यां समो नास्तीत्यत्र हेतुं दर्शयति—ब्रह्मणेति । समनुज्ञातौ सन्तौ अमृतप्राशिनावित्यर्थः ॥ ६ ॥ ७ ॥

७ ] ति० टी०-समनुज्ञाता इत्यत्र 'लोपः शाकल्यस्य' इति लोपः समनुज्ञातावित्यर्थः ॥ ७ ॥

रा० टी०-तत्र हेतुं वदन्नाह—ब्रह्मणेति । ब्रह्मणा समनुज्ञातौ सन्तौ उभौ अमृतप्राशिनौ बभूवतुरिति शेषः । अत एव लङ्कां यथावन्मर्दितुमाशंसेते ॥ ७ ॥

८ ] ति० टी०-हनुमन्तं वर्णयति—यं त्विति । प्रभिन्नं मत्तम् ॥ ८ ॥

रा० टी०-हनुमन्तं वर्णयति—यमिति । प्रभिन्नं मत्तमित्यर्थः, कुञ्जरमिव तिष्ठन्तं यं पश्यसि यश्च समुद्रमपि क्षोभयेत् स एष एव वानरः लङ्कायां वैदेह्यास्तव च समीपे अभिगन्ता अभवदिति शेषः । सार्धश्लोक एकान्वयी ॥ ८ ॥

गो० टी०-हनुमन्तं वर्णयति-यं त्वित्यादिना । प्रभिन्नं मत्तम् प्रभिन्नो गर्जितो मत्त इत्यमरः । अभिगन्तेति । वैदेहीपक्षे अभिगमनम् अन्वेषणम् रावणपक्षे दर्शनम् । ज्येष्ठ इति । अत्र एष इत्यध्याहार्यम् । केसरिणः पुत्रः तस्य क्षेत्रजः पुत्रः बलरूपसमन्वितः प्रशस्तबलसमन्वितः प्रशंसायां रूपप् प्रत्ययः । यथा सततगः सततग इव सततगः वायुः ॥८॥११॥

९-१० ] ति० टी०-एष लङ्कायां वैदेह्यास्तव चाभिगन्तान्वेषी । समीपमागतश्चेत्यर्थः ॥ ९ ॥ १० ॥

रा० टी०-एनमिति । येन सागरो लङ्घितः यश्च केसरिणः पुत्रो वातात्मज इति श्रुतो विख्यातः हनुमानिति विख्यातश्च तं पुरा दृष्टमेनं वानरं पुनरागतं पश्य । सार्धश्लोक एकान्वयी ॥ ९ ॥ १० ॥

११-१२ ] ति० टी०-सततगो वायुः ॥ ११ ॥ १२ ॥

१३ ] ति० टी०-प्रतियास्यति । भूलोकवर्तिफलैरिति शेषः ॥ १३ ॥

रा० टी०-कामेति । यथा सततगो वायुः कामरूपत्वादिविशिष्टः तथाऽयमपीति शेषः ॥ ११ ॥

रा० टी०-अनुभूतं हनुमत्प्रभावमाह—उद्यन्तमित्यादिभिः । बुभुक्षितो बालो हनुमान् मे क्षुत् न प्रतियास्यति फलादिभिर्निवर्तिष्यते इति हेतोः उद्यन्तं भास्करं दृष्ट्वा आदि-

---

१ शङ्केति गो. पाठः । २ कुमाराविति गो. पाठः । ३ उभाविति गो. पाठः । ४ युधेति गो. पाठः । ५ कक्षाया इति गो. पाठः । ६ रूपीति गो. पाठः । ७ पिपासित इति गो. पाठः । ८ संचिन्त्येति गो. पाठः । ९ पुरैव इति गो. पाठः ।

अनाधृष्यतमं देवमपि देवर्षिराक्षसैः। अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १४ ॥
पतितस्य कपेरस्य हनुरेका शिलातले। किंचिद्भिन्ना दृढहनुर्हनूमानेष तेन वै ॥ १५ ॥
सत्यमागमयोगेन ममैष विदितो हरिः। नास्य शक्यं बलं रूपं प्रभावो वानुभाषितुम् ॥ १६ ॥
एष आशंसते लङ्कामेको मथितुमोजसा। येन जाज्वल्यतेऽसौ वै धूमकेतुस्तवाद्य वै ॥
लङ्कायां निहितश्चापि कथं विस्मरसे कपिम् ॥ १७ ॥
यस्यैषोऽनन्तरः शूरः श्यामः पद्मनिभेक्षणः। इक्ष्वाकूणामतिरथो लोके विश्रुतपौरुषः ॥ १८ ॥
यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते। यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ १९ ॥
यो भिन्द्याद्गगनं बाणैर्मेदिनीं वापि दारयेत्। यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ॥ २० ॥
यस्य भार्या जनस्थानात्सीता चापि हृता त्वया। स एष रामस्त्वां राजन्योद्धुं समभिवर्तते ॥ २१ ॥
यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः। विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः ॥ २२ ॥
एषो हि लक्ष्मणो नाम भ्रातुः प्रियहिते रतः। नये युद्धे च कुशलः सर्वशस्त्रभृतां वरः ॥ २३ ॥
अमर्षी दुर्जयो जेता विक्रान्तश्च जयी बली। रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ २४ ॥
नह्येष राघवस्यार्थे जीवितं परिरक्षति। एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् ॥ २५ ॥

त्यमाहरिष्यामि भोजनार्थं ग्रहीष्यामीति मनसानिश्चित्य बलदर्पितः सन् त्रियोजनसहस्रमध्वानमवतीर्य उत्प्लुत्य पुप्लुवे उत्प्लवनेनोर्ध्वदेशं जगाम। श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०–उद्यन्तमित्यादि। बालः बाल्यावस्थः। किलेत्यैतिह्ये। पिपासितः स्तन्यापेक्षः। क्षुधित इति यावत्। त्रियोजनसहस्रं त्रियोजनसहस्रपरिमाणम्। "द्विगोर्नित्यम्" इति प्रमाणप्रत्ययस्य लुक्। हनुमत्पितुः केसरिणः कनकाचलवासित्वात्तस्य चात्युन्नतत्वादादित्यस्य तच्छिखरस्य च मध्यमाद्वा त्रिसहस्रयोजनपरिमित इत्युक्तम्। अत एव अवतीर्येत्युक्तम् मनूत्पत्त्येति। यद्वा आदित्यस्य भूमेरुपरि लक्षयोजनान्तरत्वात् त्रियोजनसहस्रमित्येतदनेकसहस्रोपलक्षणम्। आहरिष्यामि भक्षयिष्यामि इति संचिन्त्य मनसा पुरैष बलदर्पित इत्यनन्तरं त्रियोजनसहस्रमित्यर्थं योज्यम्। देवं सूर्यम्। भास्कर उद्यतेऽस्मिन्निति भास्करोदयनः तस्मिन् गिरौ। हनुः ताल्वप्रदेशः। अनासाद्येत्यत्र तत्तेजसेत्युपस्कार्यम्। तेजसा तस्य निर्धूत इति किष्किन्धाकाण्डोक्तेः। यद्यप्युत्तरकाण्डे इन्द्रवज्रेण पतनमुक्तम् तथापि तदपि हेत्वन्तरमिति ज्ञेयम्। कथमियं कथा त्वया विदितेत्यत्राह–सत्यमिति। आगमः आप्तवाक्यम् तदेव योग उपायः तेन। यद्वा आप्तवाक्यश्रवणेन मम मया रूपं वपुः भाषितुं न शक्यम्। कामरूपदर्शनादिति भावः ॥ १२ ॥ १७ ॥

१४–१५ ] ति० टी०–अनासाद्य। भास्करमिति शेषः। भास्करोदयने इति बहुव्रीहिः ॥ १४ ॥ १५ ॥

रा० टी०–अनाधृष्येति। देवादिभिरनाधृष्यतमं देवं सूर्यम् अनासाद्य अप्राप्य भास्करस्य उदयनम् उदयो यस्मिन् तस्मिन् गिरौ पतितः इन्द्रप्रहृतवज्रेण प्राप्तः ॥ १४ ॥

रा०टी०–पतितस्येति। शिलातले पतितस्य अस्य हनूमतः एका हनुः किंचिद्भिन्ना वज्रप्रहारेण जातव्रणा अभवदिति शेषः तेन हेतुना एष दृढहनुरभवत् अत एव हनुमान् तदभिधोऽभवत् अत एव पूर्वेण न विरोधः प्रशस्तार्थकोऽत्र मतुप् ॥ १५ ॥

१६ ] ति० टी०–आगमयोगेन सह हनुमन्नामनिमित्तभूतपूर्ववृत्तान्तेन सहेत्यर्थः ॥ १६ ॥

रा० टी०–सत्यमिति। आगमयोगेन आगमिनां मत्समीपे प्राप्तानां वानरादीनां योगेन योजनेन कथनेनेत्यर्थः, एष हरिर्हनुमान् मम सत्यं विदितो ज्ञातः। ज्ञातमेवाह—अस्य हनूमतो बलादि भाषितुं न शक्यम् ॥ १६ ॥

१७ ] ति० टी०–धूमकेतुरग्निर्येन जाज्वल्यते प्रज्वलितः कृतः त्वत्तेजोरुद्धोऽपि यत्पुच्छं प्राप्य प्रज्वलितः। लङ्कायां निहितो निक्षिप्तश्च ॥ १७ ॥

रा० टी०–एष इति। एष हनुमान् एक एव मथितुमाशंसते। अर्थं पृथक्। ननु किमेतदाशंसनेनेत्यत आह—येनेति। लङ्कायां निहितः त्वत्तेजसानिस्तेजाअपि धूमकेतुर्वह्निर्येन जाज्वल्यते अजाज्वल्यत तं कपिं हनुमन्तमद्यैव कथं विस्मरसे एतेन तदाशंसनं सत्यमेव भविष्यतीति ध्वनितम् अर्धद्वयमेकान्वयि ॥ १७ ॥

१८–१९ ] ति० टी०–रामं वर्णयति—यस्यैष इति। यस्य दर्शितस्य हनूमतोऽनन्तरः समीपवर्ती ॥ १८ ॥ १९ ॥

२०–२५ ] ति० टी०–गगनं बाणैर्भिन्द्यात्। मन्दुष्करमपि तस्य सुकरमिति तात्पर्यम् ॥ २० ॥ २५ ॥

१ दानवैरिति गो. पाठः। २ हनोरिति गो. पाठः। ३ मर्दितुमिति गो. पाठः। ४ श्लोकोऽयं गो. नास्ति। ५ यश्चेति गो. पाठः। ६ विश्रुतेति गो. पाठः। ७ चाप्यङ्गेति गो. पाठः। ८ ऽस्येति गो. पाठः। ९ भ्राता प्राणसमः प्रिय इति गो. पाठः। १० शास्त्रविशारद इति गो. पाठः। ११ बुद्धिमानिति गो. पाठः।

यस्य सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति । रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ २६ ॥
श्रीमता राजराजेन लङ्कायामभिषेचितः । त्वामसौ प्रतिसंरब्धो युद्धायैषोऽभिवर्तते ॥ २७ ॥
यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् । सर्वशाखामृगेन्द्राणां भर्तारममितौजसम् ॥ २८ ॥
तेजसा यशसा बुद्ध्या बलेनाभिजनेन च । यः कपीनतिबभ्राज हिमवानिव पर्वतः ॥ २९ ॥
किष्किन्धां यः समध्यास्ते दुर्गां सगहनद्रुमाम् । दुर्गां पर्वतदुर्गम्यां प्रधानैः सह यूथपैः ॥ ३० ॥
यस्यैषा काञ्चनी माला शोभते शतपुष्करा । कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ॥ ३१ ॥
एतां मालां च तारां च कपिराज्यं च शाश्वतम् । सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥ ३२ ॥

रा० टी०-रामं बोधयति—यस्येति । यस्य हनूमतः अनन्तरः सन्निकटवर्ती इक्ष्वाकूणामतिरथः यस्मिन् धर्मो न चलते नित्यं तिष्ठतीत्यर्थः । यो धर्मं नातिवर्तते उल्लङ्घयति धर्ममेव शिक्षयतीत्यर्थः, यस्य च मृत्योरिव क्रोधः शरणागतरिपुविध्वंसने गृहीतानिवार्यकोप इत्यर्थः, यस्य सीता त्वया हृता स एषः रामः त्वां योद्धुं समभिवर्तते । अर्धाष्टकमेकान्वयि ॥ १८—२१ ॥

गो० टी०-अथ रामं वर्णयति—यश्चैष इत्यादिना । अनन्तरः अन्तरम् अवकाशः तद्रहितः । स्कन्धारूढत्वेन पूर्वोक्तहनुमतोऽत्यन्तसन्निहित इत्यर्थः । शूरः हनुमदारूढत्वेन प्रकटितशौर्यः श्यामः कनकमयशिखरारूढकालाम्बुदकमनीयविग्रहः पद्मनिभेक्षणः दिव्यविग्रहमहातटाकस्थविकसितकमलशोभनीयविलोचनः अनरण्यादिवदयं न मन्तव्यः किंत्विक्ष्वाकूणां मध्ये अतिरथः अतिशयितरथः अपराजितरथ इत्यर्थः । अत्र न वयमेव प्रमाणम् । लोके विख्यातपौरुषः खरवधादिना ख्यातं भवद्वैरिवालिवधेन विशेषेण ख्यातं पौरुषं यस्य तथोक्तः न केवलं पौरुषं धर्मोऽप्यस्यैव स्वमित्याह—यस्मिन्निति । यस्मिन्धर्मो न चलति जाबालिप्रभृतिभिराकुलितोऽप्यप्रकम्पितः यो धर्मं नातिवर्तते भरतसीतादिभिः कृतेपि प्रतिबन्धे पितृवचनमुनिप्रतिज्ञाधर्मं नातिवर्तते । खरयुद्धेऽपसर्पणं बाणपातावकाशलाभार्थम् । छद्मना वालिवधस्त्वन्यथानुपपत्त्यावश्यमाश्रितविषयप्रतिज्ञाया निर्वोढव्यतया च । न केवलं पौरुषधर्मौ अस्त्रबलं चास्यैवेत्याह—य इति । ब्राह्ममस्त्रं ब्रह्मास्त्रमन्त्रं वेदांश्च वेद जानाति । ब्रह्मास्त्रमन्त्रस्य वेदान्तर्गतत्वेपि प्राधान्यात् पृथगुक्तिः । वेदविदां वेदार्थविदां वरः उपदेष्टृभ्योवसिष्ठादिभ्योऽप्युत्कृष्टः । उक्तं पौरुषमेव प्रपञ्चयति—यो भिन्द्यादित्यादि । गगनं गगनस्थविमानादि । आदिशब्देन पातालादिकमुच्यते । संप्रति कोपोद्भवे मूलमाह—यस्य भार्येति ॥ १८—२१ ॥

रा० टी०-लक्ष्मणं बोधयति—यस्येति । यस्य रामस्य दक्षिणे पार्श्वे स्थितः अमर्षी रामापराधिषु क्षमारहितः दुर्जयः कैश्चित् जेतुमशक्यः जेता सर्वान् जेतुं शीलः रामस्य दक्षिणो बाहुः अत एव बहिश्चरो रामस्य प्राणः स एष लक्ष्मणः । अर्धषट्कमेकान्वयि ॥ २२—२४ ॥

रा० टी०-न हीति । जीवितं जीवनं न परिरक्षति जीवनमपि त्यक्तुमिच्छतीत्यर्थः ॥ २५ ॥

गो० टी०-अथ लक्ष्मणं वर्णयति—यस्यैष इत्यादिना । दक्षिणे रामस्येति शेषः । शुद्धजाम्बूनदप्रभः स्वर्णवर्णः । ताम्राक्षः त्वद्विषयकोपेनेति भावः । सर्वेति । शास्त्रशब्दो नीतिशास्त्रव्यतिरिक्तपरः । प्राणो बहिश्चर इत्यनेन प्राणसंरक्षकत्वमुच्यते ॥ २२—२६ ॥

२६ ] ति० टी०-यस्य प्राग्वर्णितस्य रामस्य सव्यं पक्षमाश्रित्य तिष्ठतीत्यन्वयः । रक्षोगणेन परिक्षिप्तो व्याप्तः । गणशब्देन चत्वार एव ॥ २६ ॥

रा० टी०-विभीषणं बोधयति—यस्येति । यस्य रामस्य सव्यं वामं पक्षमाश्रित्यतिष्ठति तेन रामेण लङ्कायां लङ्काराज्यप्राप्त्यर्थमभिषेचितः रक्षोगणैः परिक्षिप्तः व्याप्तः एष विभीषणः ॥ २६ ॥

गो० टी०-यस्त्विवति । पक्षं पार्श्वम् । रक्षोगणेति । चतुर्णामेव रक्षसां गणतुल्यविक्रमत्वात्तथोक्तम् । राजा त्वद्राज्यस्येति शेषः । अत्र हीति गायत्र्याः षोडशाक्षरम् ॥ २६ ॥

२७ ] ति० टी०-राजराजेन रामेणाभिषेचित इत्यन्वयः । एषोऽसौ त्वां प्रतियुद्धायाभिवर्तते ॥ २७ ॥

रा० टी०-अतः एव एषः लङ्काराज्यविषयकेच्छावान् असौ विभीषणः त्वां प्रति युद्धाय संरब्धोऽभिवर्तते ॥ २७ ॥

गो० टी०-राजत्वं कुत इत्यत्राह—श्रीमतेति । श्रीमता अवाप्तसमस्तकामत्वेन लङ्काराज्यानभिलाषिणेत्यर्थः । राजराजेन विभीषणादिराजत्वानिर्वाहे स्वस्य राजराजत्वं न निर्वहेदिति मन्वानेन । लङ्कायां निमित्ते । लङ्कायां राजेति वान्वयः २७

२८ ] ति० टी०-सुग्रीववर्णनम्—यं त्विति ॥ २८ ॥

२९–३० ] ति० टी०-अतिबभ्राज । अतिक्रम्यातिशयेन बभ्राजेत्यर्थः ॥ २९ ॥ ३० ॥

३१–३२ ] ति० टी०-पुष्करं पद्मम् ॥ ३१ ॥ ३२ ॥

रा० टी०-सुग्रीवं लक्षयति—यमिति । अचलं गिरिमिव मध्ये तिष्ठन्तं यं पश्यसि यश्च तेजआदिना कपीन् अति-

१ पर्वतेति गो. पाठः । २ शानेनेति गो. पाठः । ३ पर्वतानिति गो. पाठः । ४ गुहामिति गो. दुःसहामिति रा. पाठः । ५ दुर्गस्थामिति गो. पाठः ।

शतं शतसहस्राणां कोटिमाहुर्मनीषिणः । शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते ॥ ३३ ॥
शतं शङ्कुसहस्राणां महाशङ्कुरिति स्मृतः । महाशङ्कुसहस्राणां शतं वृन्दमिहोच्यते ॥ ३४ ॥
शतं वृन्दसहस्राणां महावृन्दमिति स्मृतम् । महावृन्दसहस्राणां शतं पद्ममिहोच्यते ॥ ३५ ॥
शतं पद्मसहस्राणां महापद्ममिति स्मृतम् । महापद्मसहस्राणां शतं खर्वमिहोच्यते ॥ ३६ ॥
शतं खर्वसहस्राणां [ महाखर्वमिति स्मृतम् । महाखर्व सहस्राणां ] समुद्रमभिधीयते ।
शतं समुद्रसाहस्रं महौघमिति विश्रुतम् ॥ ३७ ॥
[ शतमोघसहस्राणां महौघ इति विश्रुतः । ]
एवं कोटिसहस्रेण शङ्कूनां च शतेन च । महाशङ्कुसहस्रेण तथा वृन्दशतेन च ॥ ३८ ॥
महावृन्दसहस्रेण तथा पद्मशतेन च । महापद्मसहस्रेण तथा खर्वशतेन च ॥ ३९ ॥
समुद्रेण च तेनैव महौघेन तथैव च । एष कोटिमहौघेन समुद्रसदृशेन च ॥ ४० ॥
विभीषणेन वीरेण सचिवैः परिवारितः । सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमनुवर्तते ॥
महाबलवृतो नित्यं महाबलपराक्रमः ॥ ४१ ॥
इमां महाराज समीक्ष्य वाहिनीमुपस्थितां प्रज्वलितग्रहोपमाम् ।
ततः प्रयत्नः परमो विधीयतां यथा जयः स्यान्न परैः पराभवः ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

---

भाज यश्च पर्वतदुर्गस्थां दुर्गपर्वते स्थिताम् अत एव दुर्गां रिपुभिर्दुर्गमां गहनद्रुमां निबिडद्रुमसहितां किष्किन्धां गुहां समध्यास्ते यस्य च देवमनुष्याणां लक्ष्मीः यस्यां प्रतिष्ठिता सा कान्ता माला शोभते स सुग्रीवः रामेण वालिनं हत्वा घातयित्वा मालादीन् प्रतिपादितः प्राप्तः । अर्धदशकमेकान्वयि ॥ २८–३२ ॥

गो० टी०–अथ सुग्रीवं वर्णयति—यस्त्वित्यादि । मध्ये रामविभीषणयोर्मध्ये । अचलं निश्चलम् । बुद्ध्या ऊहापोहरूपज्ञानेन ज्ञानेन शास्त्रजन्यज्ञानेन अभिजनेन कुलेन अतिबभ्राज अतिशय्य बभ्राज । गहनं वनम् । दुर्गां प्राकारादिना दुर्गमाम् पर्वतदुर्गस्थां पर्वतरूपदुर्गे स्थिताम् । शतपुष्करा शतपद्मा कान्ता काम्यमाना लक्ष्मीः वीरलक्ष्मीः तद्धारणे कदाचिदपि पराजयो न भवतीति सदा वाली तां वहति स्मेति प्रसिद्धिः । तद्धारणादेव हि रामस्तदनभिमुख एव वालिनं हतवान् । प्रतिपादितः प्रापितः ॥ २८–३२ ॥

३३–३७ ] ति० टी०–अथ सर्वबलसंख्यां दर्शयितुं संख्यास्वरूपं निदर्शयति–शतमिति ॥ ३७ ॥

रा० टी०–एकदैव वानरान् संख्यातुं संख्यास्वरूपमाह–शतमित्यादिभिः । शतसहस्राणां शतं कोटिमाहुः कोटिसहस्राणां शतं शङ्कुरित्यभिधीयते ॥ ३३ ॥

रा० टी०–शतं शङ्कुरिति ॥ ३४ ॥

रा० टी०–शतं वृन्देति ॥ ३५ ॥

रा० टी०–शतपद्मेति ॥ ३६ ॥

रा० टी०–शतं खर्वेति ॥ ३७ ॥

गो० टी०–उक्तानुक्तसकलवानरसङ्ख्यां वक्तुं प्रथमतः सङ्ख्यामेव दर्शयति—शतमित्यादिना । शतपर्यन्तसङ्ख्यायाः स्फुटत्वात्तदूर्ध्वसङ्ख्या अत्र संकीर्त्यन्ते। शतसहस्राणाम् लक्षाणां शतं कोटिरित्याहुः ॥ ३३–३९ ॥

३८–४१ ] ति० टी०–अथ बलसंख्यामाह—एवं कोटीति ॥ ३८ ॥ ४१ ॥

रा० टी०–सेनासङ्ख्यामाह—महेत्यादिभिः । महापद्मसहस्रादिना बलेन विभीषणादिभिश्च परिवारितः महाबलेन रामेण वृतः स्वीयत्वेन स्वीकृतः अत एव महाबलपराक्रमः सुग्रीवः युद्धार्थं त्वामनुवर्तते । सार्धश्लोकपञ्चकमेकान्वयि ॥३८–४३॥

गो० टी०–एवं कोटिसहस्रेणेत्याद्यवान्तरसङ्ख्याभेदकीर्तनमवान्तरसेनाप्रतिभेदात् । समुद्रसदृशेन सागरसदृशेन । विभीषणेनेति । सचिवैः राक्षसैरुपलक्षितेन विभीषणेन परिवारितः सुग्रीवः त्वामभि त्वां प्रति युद्धार्थं वर्तते ॥ ४०–४३ ॥

४२ ] ति० टी०–प्रज्वलितग्रहोपमां प्रज्वलितग्रहज्वालोपमाम् ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

---

१ चाद्य इति गो. पाठः । २ इति स्मृतमिति गो. पाठः । ३ अर्धमेतदधिकं गो. पाठे । ४ ओघ इत्यभिधीयते इति गो. पाठः । ५ पतदादि सार्धः श्लोको रा. नास्ति । ६ सचिवै राक्षसैरिति गो. पाठः । ७ अभीति गो. पाठः । ८. जय इति गो. पाठः ।

## एकोनत्रिंशः सर्गः ।

रावणेन शुकसारणावधिकृत्य शार्दूलपुरोगाश्चाः प्रेषिताः । हरिभिस्ताडितः शार्दूलः कारुण्येन मोचितो रामेण अन्ये च राक्षसाः शार्दूलोऽपिधिकृत्य रामबलं रावणायान्ववेदयत् ।

शुकेन तु समादिष्टान्दृष्ट्वा स हरियूथपान् । लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणम् ॥ १ ॥
समीपस्थं च रामस्य भ्रातरं च विभीषणम् । सर्ववानरराजं च सुग्रीवं भीमविक्रमम् ॥ २ ॥
अङ्गदं चापि बलिनं वज्रहस्तात्मजात्मजम् । हनूमन्तं च विक्रान्तं जाम्बवन्तं च दुर्जयम् ॥ ३ ॥
सुषेणं कुमुदं नीलं नलं च प्लवगर्षभम् । गजं गवाक्षं शरभं मैन्दं च द्विविदं तथा ॥ ४ ॥
किंचिदाविग्नहृदयो जातक्रोधश्च रावणः । भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ५ ॥
अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ । रोषगद्गदया वाचा संरब्धं परुषं तथा ॥ ६ ॥
न तावत्सदृशं नाम सचिवैरुपजीविभिः । विप्रियं नृपतेर्वक्तुं निग्रहे प्रग्रहे प्रभोः ॥ ७ ॥
रिपूणां प्रतिकूलानां युद्धार्थमभिवर्तताम् । उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥ ८ ॥
आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः । सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते ॥ ९ ॥

---

रा० टी०-इमामिति । प्रज्वलितग्रहोपमां वाहिनीं समीक्ष्य अवलोक्य परमः प्रयत्नो विधीयताम् ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०-इमामिति । ज्वलितग्रहोपमां क्रूरग्रहोपमाम् । यथेति । यथा ते जयो न स्यात् प्रत्युत परैः पराजय एव स्यात् तथा यत्नः क्रियतामिति ध्वन्यते ॥ ४४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणे रत्नकीरीटाख्याने युद्धकाण्ड व्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

१-४ ] ति० टी०-शुकेनेति ॥ १ ॥ ४ ॥

५ ] ति० टी०-कथान्ते वृत्तान्तश्रवणसमाप्तिसमये । भर्त्सयामास । स्वकीयभीताकारगोपनार्थोऽयं व्यापारः ॥ ५ ॥

रा० टी०-शुकवर्णितरामसेनावृत्तश्रवणानन्तरकालिकं रावणवृत्तान्तमाह—शुकेनेत्यादिभिः । शुकेन समादिष्टान् हरियूथपान् लक्ष्मणादींश्च दृष्ट्वा किंचिदाविग्नहृदयो रावणः कथान्ते वर्णनावसाने तौ वर्णनकर्तारौ शुकसारणौ भर्त्सयामास । श्लोकपञ्चकमेकान्वयि ॥ १—६ ॥

गो०टी०-अथ रावणेन चारप्रेषणादि प्रतिपाद्यत एकोनत्रिंशे-शुकेनेत्यादिश्लोकत्रयम् । सर्ववानरराजं चेत्यत्र चकारो हनुमदादिसमुच्चयार्थः।आविग्नहृदयः भीतहृदयः तथापि जातक्रोधः परस्तवाकर्णनेन कुपित इत्यर्थः । कथान्ते वचनान्ते ॥ १-३॥

६ ] ति० टी०-अधोमुखौ । भर्त्सनेनेति शेषः ॥ ६ ॥

रा० टी०-अध इति । अधोमुखौ भर्त्सनेन नतानतौ शुकसारणौ संरब्धं सकोपम् अत एव परुषं वचनमब्रवीत् ॥६॥

गो० टी०-अधोमुखाविति । रोषगद्गदया कोपस्वलितया संरब्धः कुपितः ॥ ४ ॥

७ ] ति० टी०-उपजीविभिः उच्यमानविशेषणस्य नृपतेः पुरस्तादुपजीविभिर्विप्रियं वक्तुं तावन्न सदृशम् । प्रग्रहेऽनुग्रहे ॥ ७ ॥

रा० टी०-तदाकारमाह—नेत्यादिभिः । निग्रहे प्रग्रहे अनुग्रहे च प्रभोः समर्थस्य नृपतेर्यावद्विप्रियं तावत्सकलमप्रियमित्यर्थः, सचिवैर्वक्तुं न सदृशं योग्यम् नामप्रसिद्धमेतत् ॥ ७ ॥

गो० टी०-न तावदिति । तावत् प्रथमतः । निग्रहप्रग्रहे निग्रहानुग्रहयोः । प्रभोः शक्तस्य । नृपतेः विप्रियं वक्तुं न सदृशं नाम । नामेति नीतिशास्त्रप्रसिद्धिः ॥ ९ ॥

८ ] ति० टी०-तदेव विप्रियं दर्शयति—रिपूणामिति । युद्धायाभिवर्ततामभिमुखतया वर्तमानानाम् । स्तवं श्लोत्कर्षकथनम्, अप्रस्तवे तत्प्रश्नाभावे वक्तुं सदृशं युक्तं नाम काकुरत्र अपि त्वयुक्तमेव । के यूथपाः कियद्बलमिति विचार्य वक्तव्यमिति प्रेषिते तावन्मात्रं वाच्यम्, अपृष्टं तु तेषां प्राबल्यमेकैको नाशयितुं शक्त इत्यादि वक्तुं न युक्तमित्यर्थः ॥ ८ ॥

रा० टी०-विप्रियमेव दर्शयन्नाह—रिपूणामिति । प्रतिकूलानां विरुद्धाचरणशीलानाम् अत एव युद्धार्थमभिवर्ततां रिपूणां स्तवम् अप्रस्तवे प्रसङ्गरहितसमये उभाभ्यां युवाभ्यां वक्तुं सदृशं नाम किं नेत्यर्थः ॥ ८ ॥

गो० टी०-विप्रियपदोक्तं विशदयति—रिपूणामिति । अभिवर्तताम् अभिवर्तमानानाम् । अप्रस्तवे अनवसरे । स्तवं वक्तुं सदृशं नाम सदृशं किमु । युद्धारम्भसमयो हि परस्तुत्यनर्ह इति भावः ॥ ६ ॥

९ ] ति० टी०-आचार्य उपनीय वेदाध्यापकः गुरवः पित्रादयः वृद्धा ज्ञानवयोवृद्धाः । वां युवाभ्यामनुजीव्यमाश्रितो न गृह्यते न गृहीतः ॥ ९ ॥

रा० टी०-आचार्या इति । यद्यस्माद्धेतो राजशास्त्राणाम् । अनुजीव्यं ग्राह्यं सारं वां युवाभ्यां न गृह्यते अगृह्यत अतः युवाभ्याम् आचार्यादयः वृथा पर्युपासिताः ॥ ९ ॥

---

१ अर्धमेतत् गो. नास्ति । २ एतदादि श्लोकद्वयं व्यत्यस्तं गो. पाठे । ३ गवयमिति गो. पाठः । ४ एवं वेति गो. पाठः । ५ संरब्ध इति गो. पाठः । ६ वच इति गो. पाठः । ७ निग्रहप्रग्रहे इति गो. पाठः । ८ आचार्या इति गो. पाठः ।

गृहीतो वा न विज्ञातो भारोऽज्ञानस्य वोह्यते । ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्या धराम्यहम् ॥ १० ॥
किं तु मृत्योर्भयं नास्ति मां वक्तुं परुषं वचः । यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम् ॥ ११ ॥
अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः । राजदण्डपरामृष्टास्तिष्ठन्ते नापराधिनः ॥ १२ ॥
हन्यामहं त्विमौ पापौ शत्रुपक्षप्रशंसिनौ । यदि पूर्वोपकारैर्मे क्रोधो न मृदुतां व्रजेत् ॥ १३ ॥
अपध्वंसत नश्यध्वं संनिकर्षादितो मम । नहि वां हन्तुमिच्छामि स्मराम्युपकृतानि वाम् ॥
हतावेव कृतघ्नौ द्वौ मयि स्नेहपराङ्मुखौ ॥ १४ ॥

गो० टी०–आचार्या इति । यस्मात् राजशास्त्राणां सारं प्रतिपाद्य सारभूतम् अनुजीव्यम् अनुजीविकृत्यम् न गृह्यते न ज्ञायते अतः वां युवाभ्याम् गुरवः महान्तः वृद्धाः ज्ञानवयः शीलसंपन्नाः आचार्याः नीतिशास्त्रोपदेष्टारः वृथा पर्युपासिताः । तदुपासनफलादर्शनान्निरर्थकमाराधिता इत्यर्थः । ननु चिरोपासितगुरो ज्ञानं न साम्प्रतं तत्राह–गृहीतो वेति । गृहीतो वार्थः न विज्ञातः न विशेषेण ज्ञातः । विस्मृत इत्यर्थः । तर्हि कथं ज्ञातृत्वप्रवाद इत्यत्राह–भार इति । ज्ञानस्य भारः ऊह्यते वा । जातमपि ज्ञानं नानुष्ठानपर्यवसायीत्यर्थः । यद्वा ज्ञानस्य भार ऊह्यते । ज्ञानभारभरणाभिमान एव क्रियते न तु तत्कार्यमित्यर्थः ॥ ७ ॥

१० ] ति० टी०–गृहीतो वा न विज्ञातः विस्मृत इत्यर्थः । ज्ञातविस्मरणमपि युवयोर्न संभावितमित्याह–भार इति । अज्ञानस्य भारो वाह्यते अज्ञानबाहुल्यमेव वर्तते, न ज्ञानलेशोऽपीति भावः । धरामि । राज्यमिति शेषः । राज्यभ्रंशस्य परमकारणं भवादृशदुर्मतिसङ्गः, तत्र सत्यपि तन्मूलनार्थं एतावत्कालं यन्नयोर्बलेन तिरस्कृत इत्यर्थः ॥ १० ॥

रा० टी०–ननु नीतिशास्त्रसारमावाभ्यां गृहीतमेवेत्यत आह–गृहीत इति । गृहीतो ज्ञातो वा नीतितात्पर्यार्थ इति शेषः न विज्ञातः इदानीं ज्ञानविषयीभूतो नास्ति अत्यन्तं विस्मृत इत्यर्थः, अत एव अज्ञानस्य भारः बाहुल्यं वाह्यते युवाभ्यां गृह्यते ईदृशैर्मूर्खैः सचिवैर्युक्तोऽहं दिष्ट्या अतिभाग्योदयेन धरामि राज्यमिति शेषः ॥ १० ॥

गो० टी०–अनयोरज्ञत्वे कथमेतावत्पर्यन्तमस्मन्मत्यनुसारेण तव राज्यभरणं तत्राह–ईदृशैरिति । ईदृशैः एवं नीतिशास्त्रलेशज्ञानमिश्रैरित्यर्थः । धरामि राज्यमिति शेषः । "धृञ् , धारणे" इति भौवादिको धातुः । धरामि जीवामीति वा ॥ ८ ॥

११ ] ति० टी०–युवाभ्यां स्वनाशमप्यविशाय दुर्वच उक्तमित्याह–किं त्विति । शासतो राज्ञो यस्य मे जिह्वा तदुक्तिः शुभाशुभं निग्रहानुग्रहं प्रयच्छति तं मां परुषं वचो वक्तुमुत्सहेथे । यतस्तयुवयोर्मृत्योर्भयं किं तु नास्ति । यदि स्यान्न ब्रुवाथे इत्यर्थः ॥ ११ ॥

रा० टी०–किमिति । शासतो यस्य मे जिह्वा वचनमात्रमित्यर्थः, शुभाशुभं निग्रहानुग्रहं प्रयच्छति तन्मां परुषं वक्तुं उद्युक्तयोर्युवयोरिति शेषः मृत्योर्भयं किं नास्ति एतेन युवां हनिष्यामीति सूचितम् ॥ १२ ॥

गो० टी०–किन्त्विति । मां परुषं वचो वक्तुं युवयोर्मृत्योः सकाशात् भयं नास्ति किन्तु । वक्तुम् उद्यतयोर्युवयोरिति शेष इत्यध्याहुः । परुषोक्तिमात्रे कुतो मृत्युरित्यत्राह—यस्येति । शासतो मे जिह्वैव शुभाशुभं प्रयच्छति । शासने प्रवृत्तस्य मे जिह्वाचलनमेव मृत्युं श्रेयो वा प्रयच्छतीत्यर्थः ॥ ९ ॥

१२ ] ति० टी०–अप्रतिक्रियानर्थो राजद्रोह इत्याह—अप्येवेत्यादि । राजदोषपरामृष्टा राजक्रोधविषयाः ॥ १२ ॥

रा० टी०–अपीति । दहनं वह्निं स्पृष्ट्वापि पादपास्तिष्ठन्ति कथंचिन्न दह्यन्त इत्यर्थः राजदण्डपरामृष्टाः राजदण्डार्हा इत्यर्थः, अपराधिनस्तु न तिष्ठन्ते नश्यन्त्येवेत्यर्थः ॥ १२ ॥

गो० टी०–अपीति । राजदोषः राजकोपः । दहनस्पृष्टवनपादपस्थितिसंभवादप्यसंभाविता राजदोषस्पृष्टजनस्थितिरिति भावः । तिष्ठन्ते तिष्ठन्ति ॥ १० ॥

१३ ] ति० टी०–पूर्वोपकारैर्युद्धादौ कृतैः ॥ १३ ॥

रा० टी०–हन्यामिति । पूर्वोपकारैः एतत्कृतोपकृतिभिः मे क्रोधः यदि मृदुतां न व्रजेत् तर्हि इमौ अहं हन्याम् ॥१३॥

गो० टी०–स्वमनः प्रत्याह—हन्यामिति ॥ ११ ॥

१४ ] ति० टी०–अपध्वंसत मत्सभाप्रवेशाद्भ्रष्टा भवत मे संनिकर्षान्नश्यध्वमदर्शनं गच्छत । क्रोधवशाद्वचनव्यत्यासो न दोषाय । हतावेव । विनापि शिरश्छेदं धिक्कारादेवेति शेषः॥१४

रा० टी०–अपध्वंसतेति । मम संनिकर्षात् सान्निध्यात् यूयमपध्वंसत निर्गच्छत अत एव नश्यध्वं दृश्यत्वाभावं प्राप्नुत । ननु हननं प्रतिज्ञाय त्याग एव कुत आज्ञाप्यते इत्यत आह–वां युवयोरुपकृतानि अहं स्मरामि अतो वां हन्तुं नेच्छामि ॥ १४ ॥

रा० टी०–हननाभावेऽपि ते जीवनं न भविष्यतीति बोधयन्नाह—हताविति । स्नेहपराङ्मुखौ द्वौ कृतघ्नौ युवां हतौ स्वत एव निहतप्रायौ अर्थं पृथक् ॥ १९ ॥

गो० टी०–अपध्वंसतेति । अपध्वंसत स्थानात् प्रच्यवध्यम् । परस्मैपदं बहुवचनं चार्षम् । गच्छध्वं गच्छत संनिकर्षात् दृष्टिविषयात् ॥ १२ ॥

१ वोह्यत इति गो.पाठ । २ दैवेर्ति गो.पाठः । ३ प्रशंसकाविति गो.पाठः । ४ खिति गो.पाठः । ५ गच्छध्वमिति गो.पाठः । ६ नाविति गो.पाठः ।

एवमुक्त्वा[1] तु सव्रीडौ[2] तौ दृष्ट्वा शुकसारणौ । रावणं जयशब्देन प्रतिनन्द्याभिनिःसृतौ ॥ १५ ॥
अब्रवीच्च दशग्रीवः समीपस्थं महोदरम् । उपस्थापय मे शीघ्रं चारानिति[3] निशाचरः ॥
महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ॥ १६ ॥
ततश्चाराः संत्वरिताः प्राप्ताः पार्थिवशासनात् । उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषः[4] ॥ १७ ॥
तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः । चारान्प्रत्यायिकाञ्शूरान्धीरान्[5]विगतसाध्वसान् ॥ १८ ॥
इतो गच्छत रामस्य व्यवसायं परीक्षितुम्[7] । मन्त्रेष्वभ्यन्तरा[6] येऽस्य प्रीत्या तेन समागताः ॥ १९ ॥
कथं स्वपिति जागर्ति किमद्य च करिष्यति । विज्ञाय निपुणं सर्वमागन्तव्यमशेषतः[8] ॥ २० ॥
चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः । युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २१ ॥
चारास्तु ते तथेत्युक्त्वा प्रहृष्टा राक्षसेश्वरम् । शार्दूलमग्रतः कृत्वा ततश्चक्रुः प्रदक्षिणम् ॥ २२ ॥
ततस्तं[9] तु महात्मानं चारा राक्षससत्तमम् । कृत्वा प्रदक्षिणं जग्मुर्यत्र रामः सलक्ष्मणः ॥ २३ ॥
ते सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ । प्रच्छन्ना ददृशुर्गत्वा ससुग्रीवविभीषणौ ॥ २४ ॥
प्रेक्षमाणाश्चमूं तां च बभूवुर्भयविह्वलाः[10] । ते तु धर्मात्मना दृष्टा राक्षसेन्द्रेण राक्षसाः ॥ २५ ॥

गो० टी०–हताविर्त्यर्धम् । कृतघ्नत्वस्नेहपराङ्मुखत्वे एव तयोर्वध इति भावः ॥ १३ ॥

१५–१७ ] ति० टी०–प्रतिनन्द्याभिनिःसृतौ । अयमेव तयो राक्षसत्वप्रापकशापस्यान्त इत्यन्यत्र स्पष्टम् ॥ १५–१७ ॥

रा० टी०–एवमिति । एवमुक्तौ शुकसारणौ जयशब्देन रावणं प्रतिनन्द्य प्रशस्य अभिनिःसृतौ ॥ १५ ॥

गो० टी०–एवमिति । प्रतिनन्द्य प्रशस्य अभिनिःसृतौ निर्गतौ ॥ १४ ॥

रा० टी०–अब्रवीदिति । मे चारान् उपस्थापय इति वचः महोदरमब्रवीत् ॥ १७ ॥

गो० टी०–अब्रवीदिति । चारानुपस्थापयेत्यब्रवीदित्यन्वयः ॥ १५ ॥

रा० टी०–तत इति । पार्थिवशासनात् सन्त्वरिता अत एव प्राप्ताः चाराः जयाशिषा वर्धयित्वा प्राञ्जलयः सन्तः उपस्थिताः समीपे तस्थुरित्यर्थः ॥ १८ ॥

गो० टी०–तत इति । स्पष्टः ॥ १६ ॥

१८ ] ति० टी०–चरांश्चारान् । प्रत्यायिकान्प्रत्यय एव प्रत्यायस्तद्वत इत्यर्थः । 'अत इनिठनौ' । विश्वासोपेतानित्यर्थः ॥ १८ ॥

रा० टी०–तानिति । प्रत्यायिकान् विश्वस्तान् विगतसाध्वसान् निर्भयान् चरान् चारान् दूतान् रावणोऽब्रवीत् १९

गो० टी०–तानिति । प्रत्यय एव प्रत्यायः तं प्राप्ताः प्रत्यायिताः तान् विश्वसनीयानित्यर्थः विगतसाध्वसान् विगतशत्रुभयान् ॥ १७ ॥

१९–२५ ] ति० टी०–मन्त्रेषु विचारेषु अभ्यन्तराः परमान्तरङ्गमन्त्रिणः ॥ १९–२५ ॥

रा० टी०–तदाकारमाह—इत इति । रामस्य व्यवसायम् अस्य रामस्य मन्त्रेषु ये अभ्यन्तराः ये च तेन रामेण सह समागताः तेषां च व्यवसायं परीक्षितुम् इतो गच्छत ॥ २० ॥

रा० टी०–व्यवसायस्वरूपमाह—कथमिति । कथं स्वापादि करोतीति सर्वं निपुणं यथा स्यात्तथा विज्ञाय आगन्तव्यम् ॥ २१ ॥

गो० टी०–इत इति । व्यवसायं कर्तव्यनिश्चयम् परीक्षथ परीक्षध्वम् । शिथिलव्यवसायश्चेदमुं भीषयाम इति भावः । अस्य रामस्य मन्त्रिषु ये अभ्यन्तराः अन्तरङ्गभूता इत्यर्थः तेन रामेण प्रीत्या सङ्गताः मित्रभूता इत्यर्थः तानपि परीक्षध्वम् । तच्छैथिल्ये तान् भेत्स्याम इत्याशयः । कथं स्वपिति किमेकः स्वपिति उत जाग्रद्भिरनेकैरावृतः स्वपिति । आद्ये सुप्ते युद्धं प्रवर्तयिष्याम इति हृदयम् । कथं जागर्ति किं चिन्ताकुलः उतानाकुल इत्यर्थः । आद्ये व्याक्षिप्तं प्रहरिष्यामीत्याकूतम् । किमन्यच्च करिष्यति किं कंचित्कालं विलम्ब्य नगरमुपरोत्स्यति उत सद्य इति । आद्ये क्रमेण वञ्चयिष्यामीति तात्पर्यम् । निपुणं प्रच्छन्नमिति यावत् क्रियाविशेषणमिदम् । सर्वम् उक्तं स्वापादिकम् अशेषतः सर्वप्रकारेण विज्ञायागन्तव्यम् । अशेषतः अशेषैश्चारैरिति वार्थः । अशेषत इत्युत्तरशेषो वा ॥ १८ ॥ १९ ॥

रा० टी०–चारेणेति । चारेण विदितः ज्ञाताचरणः शत्रुः वसुधाधिपैः युद्धं समासाद्य स्वल्पेन यत्नेन निरस्यते ॥ २१ ॥

गो० टी०–उक्तमाशयं विवृणोति—चारेणेति । पण्डितैः निपुणैः वसुधाधिपैः चारेण चारद्वारेण अशेषतो विदितः शत्रुः युद्धं स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २० ॥

रा० टी०–चारा इति । तथेत्युक्त्वा ते चाराः शार्दूलं प्रधानचारमग्रतः कृत्वा राक्षसेश्वरं प्रदक्षिणं चक्रुः ॥ २२ ॥

१ उक्ताविति गो. रा. पाठः । २ समाविति गो. पाठः । ३ नीतिविशारदानिति गो. निति निशाचरमिति रा. पाठः । ४ आशिषा इति गो. पाठः ।
५ चारान्प्रत्यायितानिति गो. पाठः। ६ मन्त्रिष्विति गो. पाठः। ७ परीक्षथेति गो. पाठः। ८ अन्यदिति गो. पाठः। ९ ते नमिति गो. पाठः। १० विह्वला इति गो. पाठः।

विभीषणेन तत्रस्था निगृहीता यदृच्छया । शार्दूलो ग्राहितस्त्वेकः पापोऽयमिति राक्षसः ॥ २६ ॥
मोक्षितः सोऽपि रामेण वध्यमानः प्लवंगमैः । अनृशंसेन रामेण मोक्षिता राक्षसाः परे ॥ २७ ॥
वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः । पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २८ ॥
ततो दशग्रीवमुपस्थितास्ते चारा बहिर्नित्यचरा निशाचराः ।
गिरेः सुवेलस्य समीपवासिनं न्यवेदयन्रामबलं महाबलाः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ।

रावणेन वानरसेनां चारयितुं प्रेषितः शार्दूलो नाम राक्षसः रावणाय सेनासु प्रमुखान् वानरान्वर्णयति ।

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः । सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥

गो० टी०—चारा इति । चाराः शार्दूलमग्रतः कृत्वा प्रधानीकृत्य राक्षसेश्वरं रावणम् प्रदक्षिणं चक्रुः ॥ २१ ॥

रा० टी०—तत इति । चाराः यत्र रामस्तत्र जग्मुः ॥ २३ ॥

गो० टी०—तत इति । कृत्वा प्रदक्षिणमित्यनुवादो मध्ये विलम्बाभावद्योतनार्थम् ॥ २२ ॥

रा० टी०—ते इति । ते चाराः प्रछन्नाः सन्तः सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ ददृशुः ॥ २४ ॥

गो० टी०—ते सुवेलस्येति । प्रच्छन्नाः वेषान्तरधारिणः ॥ २३ ॥

रा० टी०—प्रेक्षमाणा इति । चमूं प्रेक्षमाणा ते चाराः भयविह्वलाः बभूवुः अथ पृथक् ॥ २५ ॥

रा० टी०—ते इति । ते चाराः धर्मात्मना विभीषणेन दृष्टाः निगृहीताश्च ॥ २६ ॥

गो० टी०—प्रेक्षमाणा इति । भयविक्लवाः भयेन दीनाः २४

गो० टी०—ते त्विति । धर्मात्मना राक्षसेन्द्रेण । विभीषणेनेत्यर्थः ॥ २५ ॥

२६ ] ति० टी०—शार्दूलः प्रधानचारो ग्राहितः । विभीषणेनेति शेषः । एको ग्राहित इत्यत्र हेतुः—पापोऽयमिति । अतिदुष्ट इत्यर्थः ॥ २६ ॥

रा० टी०—शार्दूल इति । अयमत्र एको राक्षसः पापोऽतिपापी इति वचनेन ग्राहितो विभीषणेन बोधितः शार्दूलोऽभवदिति शेषः अत एव प्लवङ्गमैर्वध्यमानः स शार्दूलो रामेण मोक्षितः ॥ २७ ॥

गो० टी०—विभीषणेनेति । निगृहीताः तर्जिता इत्यर्थः । ग्राहितः ग्रहणं प्रापितः ॥ २६ ॥

२७-२८ ] ति० टी०—सोऽपि शार्दूलोऽपि परे शार्दूलसहायभूतास्ते च मोक्षिताः ॥ २७ ॥ २८ ॥

रा० टी०—अनृशंसेनेति । वानरैरर्दिताः परे अन्येऽपि ते चाराः अनृशंसेन क्रूरत्वसंसर्गरहितेन रामेण मोक्षिताः अत एव लङ्कामनुप्राप्ताः । सार्धश्लोक एकान्वयी ॥ २८ ॥

गो० टी०—मोचित इति । मोचितः प्रहारादिति शेषः २७

गो० टी०—वानरैरिति । अर्दिताः पीडिताः । विक्रान्तैरित्यत्र विक्रममात्रोक्तिर्लघुविक्रमैरित्यत्र जवमात्रं विक्रमस्य विशेष्यते ॥ २८ ॥

२९ ] ति० टी०—बहिर्नित्यचराः स्वदेशाद्बहिः परवृत्तान्तपरिज्ञानाय नित्यप्रवृत्ताः । सुवेलसमीपवासि रामबलं तं रावणं न्यवेदयन् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनत्रिंशः सर्गः ॥ २९ ॥

रा० टी०—तत इति । दशग्रीवम् उपस्थिताः प्राप्ताः बहिर्नित्यचराः चाराः सुवेलस्य गिरेः समीपवासिरामस्य बलं तं रावणं न्यवेदयन् ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गो० टी०—तत इति । बहिर्नित्यचराः परराष्ट्रेषु वृत्तान्तज्ञानाय सदा संचारशीलाः । समीपवासिनमिति पुंस्त्वमार्षम् ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—संदर्भशुद्धये निवेदनमेव भङ्ग्यन्तरेणाह—तत इति । चराः चाराः सुवेले शैले निविष्टमक्षोभ्यबलं राघवं च प्रत्यवेदयन् ॥ १ ॥

गो० टी०—अथ शार्दूलादिचारवचनं त्रिंशे—तत इति । सुवेले सुवेलसमीपे सामीप्ये सप्तमी सुवेलस्य समीप इति पूर्वमुक्तत्वात् ॥ १ ॥

१ मोचित इति गो. पाठः । २ अनृशंसेन रामस्य मोचिता इति गो. पाठः । ३ भीमबलमिति गो. पाठः ।

चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् । जातोद्वेगोऽभवत्किंचिच्छार्दूलं वाक्यमब्रवीत् ॥ २ ॥
अयथावच्च ते वर्णो दीनश्चासि निशाचर । नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ॥ ३ ॥
इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयन् । तदा राक्षसशार्दूलं शार्दूलो भयविक्लवः ॥ ४ ॥
न ते चारयितुं शक्या राजन्वानरपुंगवाः । विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः ॥ ५ ॥
नापि संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते । सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः ॥ ६ ॥
प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्निचारिते । बलाद्गृहीतो रक्षोभिर्बहुधास्मि विचारितः ॥ ७ ॥
जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चाभिहतो भृशम् । परिणीतोऽस्मि हरिभिर्बलमध्ये अमर्षणैः ॥ ८ ॥
परिणीय च सर्वत्र नीतोऽहं रामसंसदि । रुधिरस्राविदीनाङ्गो विह्वलश्चलितेन्द्रियः ॥ ९ ॥
हरिभिर्वध्यमानश्च याचमानः कृताञ्जलिः । राघवेण परित्रातो मामेति च यदृच्छया ॥ १० ॥
एष शैलशिलाभिस्तु पूरयित्वा महार्णवम् । द्वारमाश्रित्य लङ्काया रामस्तिष्ठति सायुधः ॥ ११ ॥

---

२ ] ति० टी०—चाराणाम् । वचनादिति शेषः । तद्वच-नाद्रामं प्रति प्राप्तं लङ्कासमीपमागतं श्रुत्वेत्यन्वयः ॥ २ ॥

चाराणामिति । चाराणां चारेभ्यः रामं प्राप्तं श्रुत्वा रावणः जातोद्वेगोऽभवत् शार्दूलं किंचिदब्रवीच किञ्चिदिति जातोद्वेग इत्यत्रान्वयि ॥ २ ॥

गो० टी०—चाराणामिति । चाराणां चारेभ्यः ॥ २ ॥

३ ] ति० टी०—अमित्राणां वशमागतोऽसि कच्चिदिति॥३॥

रा० टी०—तत्स्वरूपमाह—अयथावदिति । ते वर्णः अयथावत् पूर्ववन्नास्तीत्यर्थः, अत एव दीनोऽसि अमित्राणां रिपूणां वशं नागतोऽसि कच्चित् कच्चित् प्रश्नार्थकमव्ययम् ॥३॥

गो० टी०—अयथेति । शत्रुगृहीतत्वेन तेषां स्वरूपं किं न ज्ञातमिति भावः ॥ ३ ॥

४ ] ति० टी०—तेनानुशिष्टः पृष्ट इत्यर्थः ॥ ४ ॥

रा० टी०—इतीति । तेन रावणेन अनुशिष्टः पृष्टः शार्दूलः राक्षसशार्दूलं राक्षसश्रेष्ठं रावणं वाचमुदीरयत् उदैरयत् ॥ ४ ॥

गो० टी०—इतीति । अनुशिष्टः पृष्टः । उदीरयत् अडभाव आर्षः ॥ ४ ॥

५ ] ति० टी०—चारयितुं चारैर्विचारयितुम् ॥ ५ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । वानरपुङ्गवाः चारयितुं चारैर्ज्ञातुं न शक्याः । तत्र हेतुः—संभाषितुमपि न शक्याः अत एव संप्रश्नः को भवानित्यादिवचनमत्र वानरसंनिधौ न लभ्यते उच्चारयितुं न शक्यते तत्र हेतुः—सर्वतः सर्वप्रकारेण वानरैः पन्थाः रक्ष्यते तत्र प्रवेश एव दुर्घट इति तात्पर्यम् श्लोकद्वयं संमिलितान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—न त इति । चारयितुं चारविषयीकर्तुम् । न शक्याः चारसंचारविषया न भवन्तीत्यर्थः ॥ ५ ॥

गो० टी—विक्रान्ता इति । संप्रश्नः परीक्षणम् । अत्र वानरेषु ॥ ६ ॥

६ ] ति० टी०—यतः संभाषितुमशक्या, अतोऽत्र संप्रश्ने विचारहेतुपर्यनुयोगो न लभ्यते ॥ ६ ॥

गो० टी०—सर्वत इति । प्रविष्टमात्रे प्रविष्ट एव । अचारिते चाराविषयीकृते ॥ ७ ॥

७ ] ति० टी०—विचारिते विचारयितुं प्रक्रान्ते । रक्षोभिर्विभीषणपरिवारैर्विचारितो बहुप्रकारगत्या चालितः ॥ ७ ॥

रा० टी०—प्रविष्टेति । विचारिते अतिविचारशीले तस्मिन् बले मया प्रविष्टमात्रे सति रक्षोभिरहं ज्ञातः अत एव गृहीतः विचारितः इतस्ततः परिभ्रमितश्चास्मि ॥ ७ ॥

गो० टी०—बलादित्यादि । रक्षोभिः विभीषणसचिवैः विचालितः भुवि परिवर्तितः परिणीतः परितो नीतः सर्वतः परिणीय सर्वेषां निकटे चारोयमिति घोषणपूर्वकम् परिणीयेत्यर्थः । रामसंसदं रामसभाम् । विह्वलः मूर्च्छितः । मूर्च्छानिवृत्तावपि चलितेन्द्रियः याचमानः त्राणमिति शेषः । परित्रात इत्यनुवादात् ॥ ८ ॥ १० ॥

८ ] ति० टी०—परिणीतोऽस्मि हनमानिव घोषणार्थमितस्ततो नीतोऽस्मि ॥ ८ ॥

रा० टी०—जानुभिरिति । जानुप्रभृतिभिः करणैर्वानरैर्भृशमभिहतः परिणीतः सर्वमहावानरसंनिधौ प्रापितश्चास्मि ॥८॥

९ ] ति० टी०—तदेवाह—परिणीय च सर्वत्रेति । रुधिरस्रावी चासौ दीनाङ्गश्चेति कर्मधारयः ॥ ९ ॥

रा० टी०—परिणीयेति । रुधिरस्रावी रुधिरवमनशीलः अत एव दीनाङ्गः स एव स इति कर्मधारयः अत एव विह्वलोऽहं सर्वत्र परिणीय प्रापय्य रामसंसदि नीतः ॥ ९ ॥

१०–११ ] ति० टी०—यदृच्छया पृष्टेन रामेण मा मां वध्यतामिति परित्रातः ॥ १० ॥ ११ ॥

रा० टी०—हरिभिरिति । हरिभिर्वध्यमानोऽत एव याचमानोऽहं यदृच्छयामामेत्युक्त्वा राघवेण परित्रातोऽस्मि ॥१०॥

---

१ विह्वल इति गो. रा. पाठः । २ अचारिते इति गो. पाठः । ३ चालित इति गो. पाठः । ४ दण्डैरिति रा. पाठः । ५ वह्निरिति गो. पाठ. ६ रुधिरादिग्धसर्वाङ्ग इति गो. पाठः । ७ जीनामीतीति गो. पाठः । ८ शैलैः शिलाभिश्चेति गो. पाठः ।

गरुडव्यूहमास्थाय सर्वतो हरिभिर्वृतः। मां विसृज्य महातेजा लङ्कामेवोतिवर्तते ॥ १२ ॥
पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु। सीतां वापि प्रयच्छाशु युद्धं वापि प्रदीयताम् ॥ १३ ॥
मनसा तत्तदा प्रेक्ष्य तच्छ्रुत्वा राक्षसाधिपः। शार्दूलं सुमहद्वाक्यमथोवाच स रावणः ॥ १४ ॥
यदि मां प्रतियुद्ध्यन्ते देवगन्धर्वदानवाः। नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ १५ ॥
एवमुक्त्वा महातेजा रावणः पुनरब्रवीत्। चरिता भवता सेना केऽत्र शूराः प्लवंगमाः ॥ १६ ॥
किंप्रभाः कीदृशाः सौम्य वानरा ये दुरासदाः। कस्य पुत्राश्च पौत्राश्च तत्त्वमाख्याहि सुव्रत ॥ १७ ॥
तथात्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम्। अवश्यं खलु संख्यानं कर्तव्यं युद्धमिच्छता ॥ १८ ॥
अथैवमुक्तः शार्दूलो रावणेनोत्तमश्चरः। इदं वचनमारेभे वक्तुं रावणसंनिधौ ॥ १९ ॥
अथर्क्षरजसः पुत्रो युधि राजन्सुदुर्जयः। गद्गदस्याथ पुत्रोऽत्र जाम्बवानिति विश्रुतः ॥ २० ॥

---

गो० टी०—राघवेणेत्यर्थम्। जीवामीति यदृच्छया। इदानीं जीवनं यादृच्छिकमित्यर्थः। यद्वा इतीति स्वशरीरप्रदर्शनम्। अयथावच्च ते वर्णो दीनश्चासि निशाचरेति ह्युक्तम् ॥ ११ ॥

रा० टी०—एष इति। शैलशिलादिभिर्महार्णवं पूरयित्वा सेतुं कृत्वोत्तीर्येत्यर्थः, लङ्कायाः द्वारमाश्रित्य एष रामस्तिष्ठति ११

गो० टी०—एष इति। द्वारमाश्रित्य तिष्ठतीति वर्तमानसामीप्ये वर्तमानवत्प्रयोगः ॥ १२ ॥

१२ ] ति० टी०—गरुडव्यूहमास्थायेति प्रस्थानार्थम्। पूर्वं तु स्थितिकालत्वात्पुरुषव्यूह आसीत् ॥ १२ ॥

रा० टी०—गरुडेति। गरुडव्यूहमास्थाय रचयित्वेत्यर्थः, मां विसृज्य मोचयित्वा च हरिभिर्वृतो रामः लङ्कामेवाभिवर्तते ॥ १२ ॥

गो० टी०—गरुडेति। स्पष्टः ॥ १३ ॥

१३–१५ ] ति० टी०—पुरायात्यायास्यति ॥ १३–१५ ॥

रा० टी०—पुरेति। प्राकारं पुरा आयाति आयास्यति अतः एकतरं क्षिप्रं कुरु एकतरमेवाह—सीतां प्रयच्छ वा युद्धं प्रयच्छ वा ॥ १३ ॥

गो० टी०—पुरेति। पुरा प्राकारम् आयाति। आयास्यतीत्यर्थः। "यावत्पुरानिपातयोर्लट्" एकतरं द्वयोरेकम्। "एकाच्च प्राचाम्" इति तरप्। एकतरमित्युक्तं विवृणोति—सीतामिति ॥ १४ ॥

रा० टी०—मनसेति। तत् दूतोक्तं श्रुत्वा प्रेक्ष्य विचार्य च रावणः शार्दूलमुवाच ॥ १४ ॥

गो० टी०—मनसेति। मनसा प्रेक्ष्य आलोच्य तं शार्दूलमुवाचेत्यन्वयः ॥ १५ ॥

रा० टी०—तदाकारमाह—यदीति। अयं पूर्वं व्याख्यातः ॥ १५ ॥

गो० टी०—सीतास्मै प्रदीयतामित्यस्योत्तरमाह—यदीति। युद्ध्येरन् तथापि सीतां न प्रदास्यामि। सर्वलोकेभ्यो भयादपि न प्रदास्यामीति योजना ॥ १६ ॥

१६–१७ ] ति० टी०—चरिता भवता। दैवगत्या घोपणार्थं प्रणयनेनेति भावः ॥ १६ ॥ १७ ॥

रा० टी०—एवमिति। एवमुक्त्वा रावणः पुनरब्रवीत्। तदाकारमाह—सेना भवता चरिता अत्र सेनायां शूराः प्लवङ्गमाः के ॥ १६ ॥

रा० टी०—कीदृशा इति। ये वानराः दुरासदा ते कीदृशाः किं प्रभावाः किंप्रमाणाश्च कस्य पुत्राः कस्य पौत्राश्च तत्सर्वं त्वमाख्याहि ॥ १७ ॥

गो० टी०—एवं प्रथमपक्षस्यानुपपत्त्या द्वितीयपक्षं करिष्यमाणः तत्र ज्ञातव्यविशेषं पृच्छति—एवमित्यादि श्लोकत्रयम्। भवता सेना चारिता चारविषयीकृता। सम्यक् दृष्टेत्यर्थः। अत्र सेनायाम् के शूराः ये दुरासदाः ते कीदृशाः कीदृशाकाराः किंप्रभाः किंप्रभावाः कस्य पुत्राः कस्य पौत्राश्च तत्त्वं तेषां वानराणां भावमाख्याहि ॥ १७–१९ ॥

१८–१९ ] ति० टी०—तथा तदनुसारेण ॥ १८ ॥ १९ ॥

रा० टी०—प्रश्नप्रयोजनमाह—तथेति। तेषां वानराणां बलाबलं ज्ञात्वा तथा तदनुसारेण प्रतिपत्स्यामि विचारयिष्यामि यतो युद्धमिच्छता पुरुषेण संख्यानं सेनाविचारः अवश्यं कर्तव्यम् ॥ १८ ॥

रा० टी०—अथेति। एवमुक्तः शार्दूलः इदं वचनं वक्तुमारेभे ॥ १९ ॥

गो० टी०—कथने किं प्रयोजनमित्यत्राह—तथेति। तथा एवमाख्याते सति तेषां बलाबलं ज्ञात्वा अत्र वानरेषु प्रतिपत्स्यामि प्रतिपत्त्ये कर्तव्यं ज्ञास्यामीत्यर्थः ॥ २० ॥

२० ] ति० टी०—गद्गदो जाम्बवतः क्षेत्रद्वारा पिता। यद्यपि 'जाम्बवाञ्जृम्भमाणस्य मम वक्त्रादजायत' इति भ-

---

१ अमीति गो. पाठः। २ वाऽस्मै इति गो. पाठः। ३ सुयुद्धं वेति गो. पाठः। ४ तामिति गो. पाठः। ५ युध्येरन्निति गो. पाठः। ६ चालितेनेति गो. पाठः। ७ कीदृशाः किंप्रमाणाश्चेति रा. पाठः। ८ राक्षसेति गो. पाठः। ९ बलेति गो. पाठः। १० तथेति गो. पाठः। ११ राजेति गो. पाठः।

गद्गदस्यैाथ पुत्रोऽन्यो गुरुपुत्रः शतक्रतोः । कदनं यस्य पुत्रेण कृतमेकेन रक्षसाम् ॥ २१ ॥
सुषेणश्चात्र धर्मात्मा पुत्रो धर्मस्य वीर्यवान् । सौम्यः सोमात्मजश्चात्र राजन्दधिमुखः कपिः॥ २२ ॥
सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः । मृत्युर्वानररूपेण नूनं सृष्टः स्वयंभुवा ॥ २३ ॥
पुत्रो हुतवहस्यात्र नीलः सेनापतिः स्वयम् । अनिलस्य तु पुत्रोऽत्र हनूमानिति विश्रुतः ॥ २४ ॥
नप्ता शक्रस्य दुर्धर्षो बलवानङ्गदो युवा । मैन्दश्च द्विविदश्चोभौ बलिनावश्विसंभवौ ॥ २५ ॥
पुत्रा वैवस्वतस्यैाथ पञ्च कालान्तकोपमाः । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २६ ॥
दश वानरकोट्यश्च शूराणां युद्धकाङ्क्षिणाम् । श्रीमतां देवपुत्राणां शेषं नाख्यातुमुत्सहे ॥ २७ ॥
पुत्रो दशरथस्यैष सिंहसंहननो युवा । दूषणो निहतो येन खरश्च त्रिशिरास्तथा ॥ २८ ॥
नास्ति रामस्य सदृशो विक्रमे भुवि कश्चन । विराधो निहतो येन कबन्धश्चान्तकोपमः ॥ २९ ॥

---

गवन्मुखादस्योत्पत्तिः श्रुता, तथापि जृम्भणसमय उद्गताया भगवच्छक्तेर्गद्गदक्षेत्रमाविश्य तेन रूपेण परिणामाददोषः॥२०॥

रा० टी०–तदाकारमाह—अथेत्यादिभिः । ऋक्षरजसः पुत्रः गद्गदस्यापि पुत्रः जाम्बवानिति विश्रुतः अत्रास्तीति शेषः अन्यतरस्य क्षेत्रजत्वात् न द्विपुत्रत्वविरोधः न च जाम्बवान् जृम्भमाणस्य ममवक्त्रादजायतेति भगवद्वचनेनेदं विरुध्यते इति वाच्यं जृम्भणरूपभगवच्छक्तेः गद्गदक्षेत्रद्वारैव निष्पादिकात्वेनादोषात् ॥ २० ॥

गो० टी०–अथेति । अथेत्युत्तरवचनारम्भे द्वितीयोथशब्दः पादपूरणे । राजा सुग्रीवः । पाञ्चाली न्यायेन गद्गदेन पोषितत्वात्तत्पुत्रो जाम्बवान् तस्य ब्रह्मणो जृम्भारम्भसंभूतत्वात्॥२१

२१-२२ ] ति० टी०–अन्यः पुत्रो धूम्रः । शतक्रतोर्गुरुपुत्रः । बृहस्पतिपुत्र इत्यर्थः । अयं केसरीति शेषः । यस्य केसरिणः पुत्रेण हनुमतैकेन रक्षसां कदनं कृतं पूर्वमित्यर्थः॥२१॥२२

रा० टी०–गद्गदस्येति । शतक्रतोः गुरोः बृहस्पतेः पुत्रो धूम्रः गद्गदस्य अन्यो द्वितीयः पुत्रः केसरीत्यर्थः, अत्र वर्तते एकेन सहायरहितेन यस्य केसरिणः पुत्रेण हनुमता रक्षसां कदनं विध्वंसनं कृतम् ॥ २१ ॥

गो० टी०–गद्गदस्यैवेति । अन्यः पुत्रः धूम्रः । जाम्बवान् धूम्रश्चेति गद्गदस्य द्वौ पुत्रावित्यर्थः । यस्य पुत्रेणैकेन महता रक्षसाम् अक्षादीनां कदनं हननं कृतम् स केसरी शतक्रतोर्गुरुः बृहस्पतिः तस्य पुत्रः सापेक्षत्वेपि गमकत्वात् समासः ॥ २२ ॥

रा० टी०–सुषेण इति । धर्मस्य पुत्रः सुषेणोऽत्र दधिमुखः सोमात्मजोऽत्र ॥ २२ ॥

गो० टी०–सुषेणश्चेति । धर्मस्य देवतायाः । ननु, वरुणो जनयामास सुषेणं नाम वानरमिति बालकाण्डोक्तम् । सत्यमुक्तं स एवात्र धर्मशब्देनोच्यते । शार्दूलो वा भयाकूलोन्यथा श्रुतवान् । अन्योयं सुषेण इत्यप्याहुः । एवमन्यत्रापि ज्ञेयम्॥२३॥

२३-२५ ] ति० टी०–मृत्युः सृष्टः । सुमुखादयो मृत्युतुल्या इत्यर्थः ॥ २३-२५ ॥

रा० टी०–सुमुख इति । वेगदर्शी स्वस्ववेगदर्शनशीलः सुमुखो दुर्मुखश्च वानररूपेण मृत्युरेव स्वयंभुवा सृष्टः ॥ २३ ॥

गो० टी०–सुमुख इति । मृत्युरेव स्वयंभुवा सुमुखादिवानररूपेण सृष्टः । सुमुखादयो मृत्युतुल्या इत्यर्थः । यद्वा सुमुखादयो मृत्युपुत्रा इत्यर्थः ॥ २४ ॥

रा० टी०–पुत्र इति । नीलः हुतवहस्य वह्नेः पुत्रोऽत्र हनूमान् इति विश्रुतोऽनिलस्य वायोः पुत्रोऽत्र केसरिणः क्षेत्रजत्वात् नेदं विरुद्धम् ॥ २४ ॥

गो०टी०–पुत्रो हुतवहस्येति । अनिलस्य पुत्रः औरसः । एवं तत्र तत्र पितृद्वयनिर्देशो बीजित्वक्षेत्रित्वाभ्यामिति मन्तव्यम् ॥ २५ ॥

रा० टी०–नप्तेति । अङ्गदः शक्रस्य नप्ता पुत्रपुत्रः मैन्दो द्विविदश्च अश्विसंभवौ अश्विनोः पुत्रौ ॥ २५ ॥

गो० टी०–नप्तेति । अत्र नप्तृशब्दोर्थसामर्थ्यात् पौत्रे वर्तते ॥ २६ ॥

२६ ] ति० टी०–पञ्च यमपुत्रपरिगणनम्—गज इत्यादि ॥ २६ ॥

रा० टी०–पुत्रा इति । गजादयः पञ्च वैवस्वतस्य पुत्राः अत्र ॥ २६ ॥

गो० टी०–पुत्रा इति । स्पष्टः ॥ २७ ॥

२७-२९ ] ति० टी०–दश वानरकोट्य इति । वानरेति लुप्तषष्ठीबहुवचनान्तम् । तद्विशेषणम्—शूराणामित्यादि । नाख्यातुमुत्सहे । अशक्यगणनत्वात् ॥ २७-२९ ॥

रा० टी०–दशेति । शूराणां देवपुत्राणां वानराणां दशकोट्यः सन्तीति शेषः, शेषान् अन्यान् आख्यातुं नोत्सहे सामर्थ्यं नास्तीत्यर्थः, वानरेति । लुप्तषष्ठीबहुवचनान्तम् ॥२७॥

गो० टी०–दशेति ॥ वानरकोट्य इत्यत्र वानरेत्यविभक्तिकनिर्देशः । "सुपां सुलुक्०" इत्यादिना षष्ठ्या लुक् । वानराणामित्यर्थः । शेषं जन्मस्थानादि । नोत्सहे न शक्नोमि॥२८॥

रा० टी०–पुत्र इति । येन दूषणादिर्निहतः स एष दशरथस्य पुत्रः ॥ २८ ॥

गो० टी०–पुत्र इति । सिंहसंहननः रमणीयावयवसन्निवेशवान् । वराङ्गरूपोपेतो यः सिंहसंहननो हि स इत्यमरः॥२९॥

---

१ एवेति गो. पाठः । २ अथेति गो. पाठः । ३ चेति गो. पाठः । ४ अत्रेति गो. पाठः । ५ शेषानिति रा. पाठः ।

वक्तुं न शक्तो रामस्य गुणान्कश्चिन्नरः क्षितौ । जनस्थानगता येन तावन्तो राक्षसा हताः ॥ ३० ॥
लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः । यस्य बाणपथं प्राप्य न जीवेदपि वासवः ॥ ३१ ॥
श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसंभवौ । वरुणस्याथ पुत्रोऽन्यो हेमकूटः प्लवंगमः ॥ ३२ ॥
विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः । विक्रान्तो वेगवानत्र वसुपुत्रः सुदुर्धरः ॥ ३३ ॥
राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः । परिगृह्य पुरीं लङ्कां राघवस्य हिते रतः ॥ ३४ ॥
इति सर्वं समाख्यातं तथा वै वानरं बलम् । सुवेलेऽधिष्ठितं शैले शेषकार्ये भवान्गतिः ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ।

रामं चारमुखात्सुवेलाचले प्राप्तं श्रुत्वा महोद्वेगः पौलस्त्योऽमात्यैः समं मन्त्रयामास तान्विसृज्य विद्युज्जिह्वेन मायाविना सह जानकीमुपसृत्य सबलः स्तव भर्ता मया हत इति बोधयित्वा विद्युज्जिह्वेनानीतं रामस्य शिरस्तामदर्शयच्च ततो मूर्छितापि वैदेही त्रिजटया माययेमिति बोधिता शुचं जहौ ।

ततस्तमक्षोभ्यबलं लङ्कायां नृपतेश्चराः । सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥

रा० टी०—नास्तीति । रामसदृशः कश्च न नास्ति ॥२९॥

गो० टी०—नास्तीति । स्पष्टः ॥ ३० ॥

३०–३२ ] ति० टी०—यतो दूषणादयस्तेन निहताः, अतस्तस्य गुणान्वक्तुं न कोऽपि शक्त इत्यन्वयः ॥ ३०–३२ ॥

रा० टी०—वक्तुमिति । रामगुणान् वक्तुं कश्चिन्न शक्तः ३०

गो० टी०—वक्तुमिति । ये जनस्थानगताः ते यावन्तः ते सर्वेपि हता इत्यर्थः । यावत्तावच्च साकल्य इत्यमरः ॥ ३१ ॥

रा० टी०—लक्ष्मण इति । यस्य बाणपथं प्राप्य वासवो न जीवेत् स मातङ्गानामृषभः श्रेष्ठगज इव लक्ष्मणः अत्र रामसमीपे वर्तत इति शेषः ॥ ३१ ॥

गो० टी०—लक्ष्मण इति । चशब्देन दशरथस्य पुत्र इत्याकृष्यते । मातङ्गानामिवर्षभः गजश्रेष्ठ इव स्थितः ॥ ३२ ॥

रा० टी०—श्वेत इति । भास्करस्यात्मसंभवौ पुत्रौ श्वेतो ज्योतिर्मुखश्च हेमकूटो वरुणस्य पुत्रोऽत्र ॥ ३२ ॥

गो० टी०—श्वेत इति । स्पष्टः ॥ ३३ ॥

३३–३४ ] ति० टी०—दुर्धरस्तदाख्यः ॥ ३३ ॥ ३४ ॥

रा० टी०—विश्वकर्मेति । नलो विश्वकर्मसुतः सदुर्धरो वसुपुत्रोऽत्र ॥ ३३ ॥

गो० टी०—विश्वकर्मेति । सदुर्धरः सदुर्धरनामा ॥३४॥

रा० टी०—राक्षसानामिति । विभीषणः लङ्कां प्रतिगृह्य राघवात्संप्राप्य राघवस्य हिते रतोऽस्तीति शेषः ॥ ३४ ॥

गो० टी०—राक्षसानामिति । लङ्कां रामात् परिगृह्य तस्य हिते रतो विभीषणस्तव भ्रातेत्यन्वयः ॥ ३५ ॥

३५ ] ति० टी०—भवान् गतिः प्रमाणम् निर्णायक इति यावत् नन्वत्र धर्मपुत्रः सुषेणो वैवस्वतपुत्रौ शरभगन्धमादनौ । बालकाण्डे वरुणात्सुषेणः पर्जन्याच्छरभः कुबेराद्गन्धमादन उक्त इति चेन्न, तत्तत्संज्ञकानामनेकेषामपि सत्त्वान्न विरोध इति तीर्थः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिंशः सर्गः ॥ ३० ॥

रा० टी०—इतीति । इत्यनेन प्रकारेण सुवेलेऽधिष्ठितं सर्वं वानरबलं समाख्यातं शेषकार्ये अवशिष्टकृत्ये भवान् गतिः निर्णायक इत्यर्थः, न च बालकाण्डे वरुणात्सुषेणः पर्जन्याच्छरभः कुबेराद्गन्धमादनः इत्युक्त्या अत्रोक्तं सुषेणस्य धर्मपुत्रत्वं शरभगन्धमादनयोः वैवस्वतपुत्रत्वं च विरुध्यते इति वाच्यम् अन्येषामपि तत्तन्नामकत्वेन विरोधाभावात् ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रिंशः सर्गः ॥ ३० ॥

गो० टी०—इतीति । गतिः प्रमाणम् । अत्र वानरजन्मोक्तिः प्रायशो बालकाण्डोक्तविरोधादेतत्सर्गं विनापि पूर्वोत्तरकथासंघटनाच्च सर्गोयं कल्पित इत्याहुः ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—शार्दूलवचनश्रवणानन्तरकालिकं रावणं प्रति चारान्तराणां वचनमाह—तत इति । नृपतेः रावणस्य चराः चाराः सुवेले शैले निविष्टमक्षोभ्यबलं राघवं च प्रत्यवेदयन् ॥१॥

गो० टी०—अथ सीतामोहनमेकत्रिंशे । कथासंघटनाय पूर्वसर्गोक्तमनुवदति—तत इति । स्पष्टः ॥ १ ॥

१ अन्यत इति गो. पाठः । २ चेति गो. पाठः । ३ अन्य इति गो. पाठः । ४ बलवानिति गो. पाठः । ५ स्थितेति गो. रा. पाठः । ६ परीति गो. पाठः । ७ सोऽत्रमित्रि गो. रा. पाठः । ८ लङ्काधिपतये इति गो. पाठः ।

चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् । जातोद्वेगोऽभवत्किंचित्सचिवानिदमब्रवीत् ॥ २ ॥
मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः । अयं नो मन्त्रकालो हि संप्राप्त इति राक्षसाः ॥ ३ ॥
तस्य तच्छासनं श्रुत्वा मन्त्रिणोऽभ्यागमन्द्रुतम् । ततः स मन्त्रयामास राक्षसैः सचिवैः सह ॥ ४ ॥
मन्त्रयित्वा तु दुर्धर्षः क्षमं यत्तदनन्तरम् । विसर्जयित्वा सचिवान्प्रविवेश स्वमालयम् ॥ ५ ॥
ततो राक्षसमादाय विद्युज्जिह्वं महाबलम् । मायाविनं महामायं प्राविशद्यत्र मैथिली ॥ ६ ॥
विद्युज्जिह्वं च मायाज्ञमब्रवीद्राक्षसाधिपः । मोहयिष्यावहे सीतां मायया जनकात्मजाम् ॥ ७ ॥
शिरो मायामयं गृह्य राघवस्य निशाचर । मां त्वं समुपतिष्ठस्व महच्च सशरं धनुः ॥ ८ ॥
एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः । दर्शयामास तां मायां सुप्रयुक्तां स रावणे ॥ ९ ॥
तस्य तुष्टोऽभवद्राजा प्रददौ च विभूषणम् । अशोकवनिकायां च सीतादर्शनलालसः ॥ १० ॥
नैर्ऋतानामधिपतिः संविवेश महाबलः । ततो दीनामदीनार्हां ददर्श धनदानुजः ॥ ११ ॥
अधोमुखीं शोकपरामुपविष्टां महीतले । भर्तारं समनुध्यान्तीमशोकवनिकां गताम् ॥ १२ ॥

---

२ ] ति० टी०—सचिवानुपमन्त्रिणः ॥ २ ॥

रा० टी०—चाराणामिति । रावणः चाराणां चारेभ्यः रामं प्राप्तं श्रुत्वा जातोद्वेगोऽभवत् सचिवान् किंचिदब्रवीच, किञ्चिदिति जातोद्वेगान्वयि वा ॥ २ ॥

गो० टी०—चाराणामिति । चाराणां चारेभ्यः । जातोद्वेगः जातसंभ्रमः । सचिवान् मन्त्रिणः समीपस्थान् ॥ २ ॥

३-४ ] ति० टी०—आयान्तु । युष्मद्वचनादिति शेषः ३-४

रा० टी०—तदाकारमाह—मन्त्रिण इति । अयं नोऽस्माकं मन्त्रकालः संप्राप्तः अतः मन्त्रिणः शीघ्रमायान्तु ॥ ३ ॥

गो० टी०—मन्त्रिण इति । हे राक्षसाः ! अयं नो मन्त्रकालः संप्राप्तः इति हेतोः मन्त्रिणः समायान्त्विति इदं वाक्यमब्रवीदिति पूर्वेण सम्बन्धः । यद्वा इदमब्रवीदित्यस्य वाक्यान्तस्थेनेतिशब्देन संबन्धः । राक्षसा इत्युत्तरशेषः । अथवा हे मन्त्रिणः भवन्तः आयान्तु समीपमिति सचिवानब्रवीत् । राक्षसा इति मन्त्रिविशेषणम् । सचिवै राक्षसैरित्यनुवादात् । सुसमाहिताः नीतिकुशला इत्यर्थः ॥ ३ ॥

रा० टी०—तस्येति । तस्य रावणस्य तच्छासनं श्रुत्वा मन्त्रिणो द्रुतमभ्यागमन् ततोऽनन्तरं रावणो मन्त्रयामास ॥४॥

गो० टी०—तस्येति । स्पष्टः ॥ ४ ॥

५ ] ति० टी०—यत्तदनन्तरं क्षमम् । सीताप्राप्ताविति शेषः ॥ ५ ॥

रा० टी०—मन्त्रयित्वेति । अनन्तरं शीघ्रं यत्क्षमं राक्षसयोग्यं तत् मन्त्रयित्वा सचिवान् विसर्जयित्वा विसर्ज्य स्वमालयं प्रविवेश ॥ ५ ॥

गो० टी०—मन्त्रयित्वेति । तदनन्तरं रामस्य समीपागमनानन्तरम् । यत् क्षमं कर्तुमुचितं तन्मन्त्रयित्वेति योजना ॥५॥

६ ] ति० टी०—ततः स्वान्तःपुरप्रवेशानन्तरम् । मायाविनं प्रशस्तमायावन्तम् । महामायं तादृशमायाप्रयोगकर्तारम् ॥ ६ ॥

रा० टी०—तत इति । ततो वेश्मप्रवेशानन्तरं मायाविनं विद्युज्जिह्वं समादाय यत्र मैथिली तत्र प्राविशत् ॥ ६ ॥

गो० टी०—तत इति । स्पष्टः ॥ ६ ॥

७ ] ति० टी०—मायाविनं विद्युज्जिह्वमब्रवीच । वचनमाह-मोहयिष्यावहे इति ॥ ७ ॥

रा० टी०—विद्युज्जिह्वमिति । राक्षसाधिपः विद्युज्जिह्वमब्रवीत् । तदाकारमाह—मायया सीतां मोहयिष्यावहे ॥ ७ ॥

गो० टी०—विद्युज्जिह्वमित्यादि । शिर इति । गृह्य गृहीत्वा ॥ ७ ॥ ८ ॥

८ ] ति० टी०—मां त्वं समुपतिष्ठस्व । मत्समीपमागच्छेत्यर्थः ॥ ८ ॥

रा० टी०—मायाकारमाह—शिर इति । मायामयं राघवस्य शिरः सशरं महद्धनुश्च गृह्य गृहीत्वा त्वं मां मत्समीपे समुपतिष्ठस्व ॥ ८ ॥

९ ] ति० टी०—रावणे रावणायेत्यर्थः ॥ ९ ॥

रा० टी०—एवमिति । एवमुक्तः स विद्युज्जिह्वः तथेत्याह सुप्रयुक्तां रावणेनाज्ञापितां मायां रावणे रावणसन्निधौ दर्शयामास ॥ ९ ॥

गो० टी०—एवमिति । तस्य तस्मिन् ॥ ९ ॥

१० ] ति० टी०—कुब्जायै कैकेयीवत्तस्य विद्युज्जिह्वस्यामर्थे आनुकूल्यात्तुष्टः सन्भूषणं प्रददौ ॥ १० ॥

रा० टी०—तस्येति । तस्य विद्युज्जिह्वस्योपरि तुष्टोऽभवत् अत एव विभूषणं प्रददौ । अर्धं पृथक्—अशोकेति । सीतादर्शनलालसो रावणः अशोकवनिकायां संविवेश ॥ १० ॥

गो० टी०—अशोकेति । लालसः साभिलाषः ॥ १० ॥

११-१२ ] ति० टी०—संविवेश प्रविवेश ॥ ११ ॥ १२ ॥

रा० टी०—तत इति । अदीनार्हां दीनतायाः अयोग्यां

---

१ स इति गो. पाठः । २ समिति गो. पाठः । ३ आहूयेति गो. पाठः । ४ विदमिति गो. पाठः । ५ माम इति गो. पाठः । ६ अर्धमेतत् गो. नास्ति । ७ स्थितिं गो. पाठः । ८ अदैन्येति गो. पाठः । ९ पद ध्यायन्तीमिति गो. अनुध्यायन्तीमिति रा. पाठः ।

उपास्यमानां घोराभी राक्षसीभि[1]रदूरतः । उपसृत्य ततः सीतां प्रहर्षं नाम कीर्तयन् ॥ १३ ॥
इदं च वचनं धृष्टमुवाच जनकात्मजाम् । सान्त्व्यमाना मया भद्रे [2]यमाश्रित्य विमन्यसे ॥ १४ ॥
खरहन्ता स ते भर्ता राघवः समरे हतः । छिन्नं ते [3]सर्वथा मूलं दर्प[4]श्च निहतो मया ॥ १५ ॥
व्यसनेनात्मनः सीते मम भार्या भविष्यसि । विसृज[5]ैतां मतिं मूढे किं मृतेन करिष्यसि ॥ १६ ॥
भवस्व भद्रे भार्याणां सर्वासामीश्वरी मम । अल्पपुण्ये निवृत्तार्थे मूढे पण्डितमानिनि ॥
शृणु भर्तृवधं सीते घोरं वृत्रवधं यथा ॥ ॥ १७ ॥
समायातः समुद्रान्तं हन्तुं मां किल राघवः । वानरेन्द्रप्रणीतेन बलेन महता वृतः ॥ १८ ॥
संनिविष्टः समुद्रस्य पीड्य तीरमथोत्तरम् । बलेन महता रामो व्रजत्यस्तं दिवाकरे ॥ १९ ॥
अथाध्वनि परिश्रान्तमर्धरात्रे स्थितं बलम् । सुखं[6]सुप्तं समासाद्य [7]चरितं प्रथमं चरैः ॥ २० ॥

---

दीनां तत्वेन प्रतीयमानां भर्तारं राममेव ध्यायन्तीम् अदूरतः समीपे घोराभी राक्षसीभिरुपास्यमानां सीतां धनदानुजो ददर्श । अर्धचतुष्टयमेकान्वयि ॥ ११ ॥ १२ ॥

गो॰ टी॰—तत इति । उपास्यमानाम् अनुव्रताम्॥११॥१२॥

१३-१४ ] ति॰ टी॰—प्रहर्षं नाम कीर्तयन् । नामेत्यपरमार्थे अपरमार्थभूतं रामजयजं प्रहर्षं कीर्तयन्॥१३॥१४॥

रा॰ टी॰—उपसृत्येति । प्रहर्षं यथा स्यात्तथा नाम स्वाभिधां कीर्तयन्सन् सीतामुपसृत्य सीतासमीपं प्राप्य इदमब्रवीत् ॥ १३ ॥

गो॰ टी॰—उपसृत्येति । प्रहर्षं नाम कीर्तयन् प्रहर्षवार्त्तां कीर्तयन्निव । नामेत्यपरमार्थे ॥ १३ ॥

रा॰ टी॰—तदाकारमाह—सान्त्व्यमानेति । यं राममाश्रित्य मया सान्त्व्यमाना प्रार्थ्यमाना त्वं विमन्यसे मत्प्रार्थनाङ्गीकारं नाकरोः स राघवः समरे हतः अतस्ते मूलं गर्वकारणं सर्वथा छिन्नम् अत एव दर्पो निहतः । सार्धश्लोक एकान्वयी ॥ १४ ॥ १५ ॥

गो॰ टी॰—सान्त्व्यमानेति । वल्गसे जल्पसि । मां निष्ठुरमवद इत्यर्थः ॥ १४ ॥

१५ ] ति॰ टी॰—ते मूलमस्मदपरिग्रहनिदानं सर्वथा सर्वप्रकारेण छिन्नम्, ते दर्पश्च मया निहतः ॥ १५ ॥

गो॰ टी॰—छिन्नमिति । मूलम् आधारभूतम् । सर्वतः कार्त्स्न्येन । व्यसनेन निमित्तेन । प्रार्थनां विनेत्यर्थः ॥ १५ ॥

१६ ] ति॰ टी॰—एवं करणेन किं ते जातं तत्राह—व्यसनेनेति । आत्मनस्तव व्यसनेन मम भार्या भविष्यसि । गत्यन्तराभावात्स्वयमेवेति शेषः । एतां मतिं रामविषयां मतिम् ॥ १६ ॥

रा॰ टी॰—ननु तवोक्तस्य सत्यत्वेऽपि अहं तल्लोकमेव गमिष्यामीत्यत आह—व्यसनेनेति । मूढे हे प्राप्तनिरोधे आत्मनो व्यसनेन पतिवियोगदुःखेनोपलक्षिता त्वम् एनां तल्लोकगमनविषयां मतिं विसृज त्यज मृतेन लोकान्तरं गतेन पत्या त्वं किं करिष्यसि तत्प्राप्तिर्न भविष्यतीत्यर्थः अतो मम भार्याः स्त्रियो भविष्यसि प्राप्स्यसि तासां सेव्या सती तत्रैव निवत्स्यसीत्यर्थः ॥ १६ ॥

गो॰ टी॰—विसृजेति । मृतेन रामेण । भवस्वेत्यात्मनेपदमार्षम् ॥ १६ ॥

१७ ] ति॰ टी॰—भवस्व । भवेत्यर्थः । निवृत्तार्थे निवृत्तो रामरूपोऽर्थो यस्यास्तादृशि । कथमिदं त्वया साधितमिति चेदुपायेनेत्याह—शृण्विति ॥ १७ ॥

रा॰ टी॰—तदेव भङ्ग्यन्तरेणाह—भवस्वेति । हे भद्रे ! अल्पपुण्ये अल्पानां क्षुद्राणामपि पुण्यं पवित्रत्वं यया यन्नामस्मरणादिना क्षुद्रा अपि पूता भवन्तीत्यर्थः, तत्संबोधनम् न निवृत्तोऽर्थो यस्याः सर्वार्थसंपन्नेत्यर्थः, तत्संबोधनं मूढे ! हे प्राप्तनिरोधे पण्डितान्मन्यते सत्करोति तच्छीला तत्संबोधनम् मम भार्याणाम् ईश्वरी पूज्या त्वं भवस्व ॥ १७ ॥

रा॰ टी॰—शृण्विति । हे सीते ! भर्तृवधं शृणु । तदाकारमाह—राघवो मां हन्तुं वानरेन्द्रप्रणीतेन सुग्रीवप्रेरितेन बलेन वृतः सन् समुद्रान्तं समायातः । सार्धश्लोक एकान्वयी ॥ १८ ॥

गो॰ टी॰—अल्पेति । निवृत्तार्थे एतावत्पर्यन्तं निवृत्तपुरुषार्थे । पण्डितमानिनि । "क्यङ्मानिनोश्च" इति ह्रस्वत्वम् १७

१८ ] ति॰ टी॰—प्रणीतेनानीतेन ॥ १८ ॥

गो॰ टी॰—समायात इत्यादि । समुद्रान्तं समुद्रतीरम् प्रणीतेन आनीतेन । सन्निविष्ट इति । स रामः समुद्रस्योत्तरं तीरं महता बलेन पीड्य पीडयित्वा । दिवाकरे अस्तं प्रयाति सति निविष्टः ॥ १८ ॥ १९ ॥

१९ ] ति॰ टी॰—अस्तं दिवाकरे व्रजति महाबलेन समुद्रस्योत्तरं तीरं संपीड्य रामः संनिविष्ट इत्यन्वयः ॥ १९ ॥

रा॰ टी॰—संनिविष्ट इति । दिवाकरे अस्तं व्रजति सति महता बलेनोपलक्षितो रामः समुद्रस्योत्तरं तीरं पीड्य पीडयित्वा संनिविष्टः ॥ १९ ॥

२० ] ति॰ टी॰—बलं रामसेना । चरितं चारितम् । तद्बलमिति शेषः ॥ २० ॥

---

१ इतस्ततः इति गो॰ पाठः । २ उपाश्रित्य वल्गसे इति गो. पाठः । ३ सर्वतः इति गो. पाठः । ४ ते विहत इति गो. पाठः । ५ इमामिति गो. पाठः । ६ संसुप्तमिति गो. पाठः । ७ चारितमिति गो. पाठः ।

तत्प्रहस्तप्रणीतेन बलेन महता मम । बलमस्य हतं रात्रौ यत्र रामः सलक्ष्मणः ॥ २१ ॥
पट्टिशान्परिघांश्चक्रानृष्टीन्दण्डान्महायुधान् । बाणजालानि शूलानि भास्वरान्कूटमुद्गरान् ॥ २२ ॥
यष्टीश्च तोमरान्प्रासांश्चक्राणि मुसलानि च । उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ॥ २३ ॥
अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना । असक्तं कृतहस्तेन शिरश्छिन्नं महासिना ॥ २४ ॥
विभीषणः समुत्पत्य निगृहीतो यदृच्छया । [3]दिशं प्रव्राजितः सैन्यैर्लक्ष्मणः प्लवगैः सह ॥ २५ ॥
सुग्रीवो ग्रीवया सीते भग्नया प्लवगाधिपः । निरस्तहनुकः सीते हनूमान्राक्षसैर्हतः ॥ २६ ॥
जाम्बवानथ जानुभ्यामुत्पतन्निहतो युधि । पट्टिशैर्बहुभिश्छिन्नो निकृत्तः पादपो यथा ॥ २७ ॥
मैन्दश्च द्विविदश्चोभौ तौ वानरवरर्षभौ । निःश्वसन्तौ रुदन्तौ च रुधिरेण परीप्लुतौ ॥ २८ ॥
असिना व्यायतौ छिन्नौ मध्ये ह्यरिनिषूदनौ । अनुष्टनति मेदिन्यां पनसः पनसो यथा ॥ २९ ॥
नाराचैर्बहुभिश्छिन्नः शेते दर्यां दरीमुखः । कुमुदस्तु महातेजा निष्कूजन्सायकैर्हतः ॥ ३० ॥

रा० टी०–अथेति । अथानन्तरम् अर्धरात्रे स्थितम् अध्वनि परिश्रान्तम् अत एव सुखसुप्तं बलं चरैः चारैः समासाद्य प्राप्य चरितं चारकर्मणा ज्ञातम् ॥ २० ॥

गो० टी०–अथेति । कात्स्न्यार्थेऽथशब्दः । अध्वनि परिश्रान्तमतं एव स्थितम् । अर्द्धरात्रे सुखसंसुप्तं बलं प्रथममासाद्य चारैश्चारितमभूत् ॥ २० ॥

२१ ] ति० टी०–यत्र रामः सलक्ष्मणस्तद्देशेऽस्य बलं हतम् ॥ २१ ॥

रा० टी०–तदिति । यत्र रामः स्थितः तत्रैव अस्य रामस्य तत्सुप्तं बलं प्रहस्तप्रणीतेन बलेन रात्रौ हतम् ॥ २१ ॥

गो० टी०–तदिति । यत्र बले रामः सलक्ष्मणोवस्थितः तदस्य बलं प्रहस्तप्रणीतेन महता बलेन हतम् ॥ २१ ॥

२२–२३ ] ति० टी०–चक्रान्स्वल्पान् । चक्राणीति पुनरुक्तेः । एतान्युद्यम्योद्यम्य ते पट्टिशादयो वानरेषु पातिताः । ऋष्टयः सूक्ष्मखड्गाः ॥ २२ ॥ २३ ॥

रा० टी०–बलहननप्रकारमाह—पट्टिशानिति । पट्टिशादीन् उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः एतेन वानरा हता इति सूचितम् । अर्धचतुष्टयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०–पट्टिशानित्यादिश्लोकद्वयम् । पट्टिशान् असिविशेषान् परिघान् अर्गलानि चक्रान् क्षुद्रचक्राणि महायसान् महायसनिर्मितान् दण्डविशेषणमेतत् कूटमुद्गरान् अयःकीलकीलितगदाः यष्टीः केवलदण्डान् तोमरान् स्थूलाग्रगदाः प्रासान् क्षेपणीः चक्राणि महाचक्राणि पट्टीशादीन्युद्यम्योद्यम्य वानरेषु निपातिताः । त इति शेषः ॥ २२–२३ ॥

२४ ] ति० टी०–कृतहस्तेन शिक्षितहस्तेनासक्तं यथा तथा छिन्नम् ॥ २४ ॥

रा० टी०–अथेति । प्रमाथिना अतिहिंसाशीलेन प्रहस्तेन कृतहस्तेन हस्ते कृतेन महासिना सुप्तस्य रामस्य शिरः असक्तं यथा भवति तथा छिन्नम् ॥ २४ ॥

गो० टी०–अथेति । प्रमथ्नाति प्रहरतीति प्रमाथी तेन कृतहस्तेन शिक्षितहस्तेन कर्त्रा महासिना करणेन असक्तम् अविलम्बितं यथा भवति तथा छिन्नमित्यन्वयः ॥ २४ ॥

२५–२९ ] ति० टी०–समुत्पत्य यदृच्छया गतोऽपि निगृहीतः ॥ २५–२९ ॥

रा० टी०–विभीषण इति । समुत्पत्य उड्डीय विभीषणो गृहीतः प्रहस्तेनेति शेषः अत एव सैन्यैः सह लक्ष्मणः दिशं प्रव्राजितः पलायितः ॥ २५ ॥

गो० टी०–विभीषण इति । विभीषणः समुत्पत्य गतोपि निगृहीत इत्यर्थः । प्रव्राजितः पलायितः ॥ २५ ॥

रा० टी०–सुग्रीव इति । भग्नया ग्रीवया सुग्रीवः शेते निरस्ता हनुर्यस्य अत एव हतो हनूमान् शेते ॥ २६ ॥

गो० टी०–सुग्रीव इति । ग्रीवया उपलक्षित इति शेषः २६

रा० टी०–जाम्बवानिति । जानुभ्यामुत्पतन् जाम्बवान् बहुभिः पट्टिशैर्निहतः अत एव निकृत्तः छिन्नः पादप इव छिन्नः ॥ २७ ॥

गो० टी०–जाम्बवानिति । जानुभ्यां जानुनोः निहतः । अथ पट्टिशैश्छिन्नः जाम्बवान् निकृत्तः पादप इवाभूत् ॥ २७ ॥

रा० टी०–मैन्द इति । मैन्दो द्विविदश्चोभौ मध्ये असिना व्यायतौ प्रहतौ अत एव छिन्नौ अत एव निहतौ त्यक्तप्राणौ अभवतामिति शेषः । सार्धश्लोक एकान्वयी ॥ २८ ॥

गो० टी०–मैन्दश्चेति । व्यायतौ दीर्घशरीरौ । मध्ये कटिस्थाने ॥ २८ ॥

रा० टी०–अन्विति । पनसः विदीर्णपक्वपनसफलमिव पनसोऽनुश्वसिति दरीमुखोदर्यां शेते ॥ २९ ॥

गो० टी०–अनुतिष्ठतीति । अनुतिष्ठति शेते । पनसः पनसफलम् । तथा खण्डित इत्यर्थः ॥ २९ ॥

३० ] ति० टी०–'कुमुदस्तुमहातेजा निष्कूजन्सायकैर्हतः' इति पाठः पाठः ॥ ३० ॥

१ दण्डान्खड्गान्महायसानिति गो. पाठः । २ शक्तीरिति गो. पाठः । ३ दिश इति गो. पाठः । ४ सर्वैरिति गो.पाठः । ५ शेत इति गो.पाठः । ६ विहताविति रा. पाठः । ७ परिप्लुताविति गो. पाठः । ८ तिष्ठतीति गो. श्वसितीति रा पाठः । ९ निष्कूज इति गो. पाठः । १० कृत इति गो. पाठः ।

अङ्गदो बहुभिश्छिन्नः शरैरासाद्य राक्षसैः । पतितो रुधिरोद्गारी क्षितौ निपतितोऽङ्गदः ॥ ३१ ॥
हरयो मथिता नागै रथजालैस्तथापरे । शयाना मृदितास्तत्र वायुवेगैरिवाम्बुदाः ॥ ३२ ॥
प्रहृताश्च परे त्रस्ता हन्यमाना जघन्यतः । अनुद्रुतास्तु रक्षोभिः सिंहैरिव महाद्विपाः ॥ ३३ ॥
सागरे पतिताः केचित्केचिद्गगनमाश्रिताः । ऋक्षा वृक्षानुपारूढा वानरैर्व्यतिमिश्रिताः ॥ ३४ ॥
सागरस्य च तीरेषु शैलेषु च वनेषु च । पिङ्गलास्ते विरूपाक्षै राक्षसैर्बहवो हताः ॥ ३५ ॥
एवं तव हतो भर्ता ससैन्यो मम सेनया । क्षतजार्द्रं रजोध्वस्तमिदं चास्याहृतं शिरः ॥ ३६ ॥
ततः परमदुर्धर्षो रावणो राक्षसेश्वरः । सीतायामुपशृण्वत्यां राक्षसीमिदमब्रवीत् ॥ ३७ ॥
राक्षसं क्रूरकर्माणं विद्युज्जिह्वं समानय । येन तद्राघवशिरः सङ्ग्रामात्स्वयमाहृतम् ॥ ३८ ॥
विद्युज्जिह्वस्तदा गृह्य शिरस्तत्सशरासनम् । प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥ ३९ ॥
तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम् । विद्युज्जिह्वं महाजिह्वं समीपपरिवर्तिनम् ॥ ४० ॥
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः । अवस्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ॥ ४१ ॥
एवमुक्तं तु तद्रक्षः शिरस्तत्प्रियदर्शनम् । उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥ ४२ ॥

---

रा० टी०—कुमुद इति । सायकैः कुमुदो हतः ॥ ३० ॥

गो० टी०—नाराचैरिति । निष्कूजः निःशब्दः ॥ ३० ॥

३१-३२ ] ति० टी०—राक्षसैरासाद्य प्राप्य छिन्नः ३१॥३२

रा० टी०—राक्षसै रासाद्य प्राप्य अङ्गदोऽङ्गदविशिष्टोऽङ्गदः शरैः छिन्नः अत एव रुधिरोद्गारी सन् क्षितौ निपतितः।सार्धश्लोक एकान्वयी ॥ ३१ ॥

गो० टी०—अङ्गद इति । राक्षसैरासाद्य शरैश्छिन्नः निपतिताङ्गदोऽङ्गदः क्षितौ पतितः ॥ ३१ ॥

रा० टी०—हरय इति । शयानाः अपरे हरयः वायुवेगैर्मृदिताः मर्दिताः अम्बुदा इव नागैर्गजैः रथजालैश्च मथिताः ३२

गो० टी०—हरय इति । शायिताः शयानाः । अपरे हरयः वायुवेगैरम्बुदा इव नागै रथजातैश्च मृदिताः ॥ ३२ ॥

३३-३६ ] ति० टी०—जघन्यतोऽनुद्रुता इत्यन्वयः३३।३६

रा० टी०—प्रहृता इति । जघन्यतः पृष्ठतः हन्यमानाः त्रस्ताः अपरे वानराः सिंहैः प्रहृता महाद्विपा इव अनुद्रुताः अभवन्निति शेषः ॥ ३३ ॥

गो० टी०—प्रहृता इति । त्रस्ताः अत एवाभिद्रुताः । जघन्यतः पृष्ठतः । हन्यमानाः अपरे हरयः सिंहैः द्विपा इव प्रहृताः ॥ ३३ ॥

रा० टी०—सागर इति । केचित्सागरे पतिताः वानरैर्व्यतिमिश्राः विभक्ताः ऋक्षाः वृक्षानुपारूढाः ॥ ३४ ॥

गो० टी०—सागर इति । स्पष्टः ॥ ३४ ॥

रा० टी०—उपसंहरन्नाह—सागरस्येति द्वाभ्याम् । विरूपाक्षैः राक्षसैः बहवः पिङ्गलाः वानरा हताः ॥ ३५ ॥

गो० टी०—सागरस्येति । पिङ्गलाः वानराः । विरूपाक्षैः वानरैः ॥ ३५ ॥

रा० टी०—एवमिति । तव भर्ता एवं हतः क्षतजार्द्रं रुधिरव्याप्तम् अस्य रामस्य शिरस्तु आहृतम् ॥ ३६ ॥

गो० टी०—एवमिति । स्पष्टः ॥ ३६ ॥

३७-४१ ] ति० टी०—राक्षसीं सीतासमीपवर्तिनीम् ३७।४१

रा० टी०—तत इति । रावणो राक्षसीमब्रवीत् ॥ ३७ ॥

गो० टी०—तत इति । राक्षसीं समीपवर्तिनीं कांचित् ३७

रा० टी०—तदाकारमाह—राक्षसमिति । येन राघवशिरः स्वयमाहृतं तं विद्युज्जिह्वं समानय ॥ ३८ ॥

गो० टी०—राक्षसमिति । स्पष्टः ॥ ३८ ॥

रा० टी०—विद्युज्जिह्व इति । तदाकारमाह—रावणाज्ञाश्रवणानन्तरकाले तत् मायाकल्पितं सशरासनं शिरः गृह्य गृहीत्वा रावणस्याग्रतः स्थितः ॥ ३९ ॥

रा० टी०—तमिति । विद्युज्जिह्वं रावणोऽब्रवीत् ॥ ४० ॥

गो० टी०—विद्युज्जिह्व इति । ततः राक्षसीं प्रत्याज्ञापनवचनश्रवणानन्तरमेव ॥ ३९ ॥ ४० ॥

रा० टी०—तदाकारमाह—अग्रत इति । भर्तुः पश्चिमाम् अन्तिमामवस्थां कृपणा सीता पश्यतु इति हेतोः दाशरथेः शिरः सीतायाः अग्रतः कुरु ॥ ४१ ॥

गो० टी०—अग्रत इति । पश्चिमामवस्थाम् । मरणमित्यर्थः ॥ ४१ ॥

४२ ] ति० टी०—शिरस्तत्प्रियदर्शनम् । रामशिरोवत्प्रियदर्शनमित्यर्थः । अन्तरधीयतापागच्छत् । बीजोऽर्थां स्यादनुमस्तकत्वविधेति भावः ॥ ४२ ॥

रा० टी०—एवमिति । एवमुक्तं रक्षो विद्युज्जिह्वः प्रियदर्शनं शिरः सीताया उपनिःक्षिप्य अन्तरधीयत । अन्तरधीयतेत्यनेन सीतादर्शनमात्रेण तस्य दयोत्पन्नेति सूचितम् ॥ ४२ ॥

---

१ पतित इति गो. पाठः । २ निपतिताङ्गद इति गो. पाठः । ३ जातैरिति गो. पाठः । ४ शायिता इति गो. पाठः । ५ चौघैरिति गो. पाठः । ६ हन्यमानपरे इति गो. रा. पाठः । ७ मजौघैरिति गो. पाठः । ८ वानरैर्वृतिमाश्रिता इति गो. पाठः । ९ बहुभिरिति गो. पाठः । १० राक्षसाधिप इति गो. पाठः । ११ त्वमिति गो. पाठः । १२ कृपणेति गो. रा. पाठः ।

रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् । त्रिषु लोकेषु विख्यातं रामस्यैतदिति ब्रुवन् ॥ ४३ ॥
इदं तत्तव रामस्य कार्मुकं ज्यासमावृतम् । इह प्रहस्तेनानीतं तं हत्वा निशि मानुषम् ॥ ४४ ॥
स विद्युज्जिह्वेन सहैव तच्छिरो धनुश्च भूमौ विनिकीर्यमाणः ।
विदेहराजस्य सुतां यशस्विनीं ततोऽब्रवीत्तां भव मे वशानुगा ॥ ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ।

विद्युज्जिह्वेन दर्शितं शीर्षं धनुश्च रामस्य विलोक्य जानकी बहु विललाप तदैव केन चिद्दूतेनाहूतो रावणः संमन्त्र्यामात्यैः सेनां संनाहयामास ।

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् । सुग्रीवप्रतिसंसर्गमाख्यातं च हनूमता ॥ १ ॥
नयने मुखवर्णं च भर्तुस्तत्सदृशं मुखम् । केशान्केशान्तदेशं च तं च चूडामणिं शुभम् ॥ २ ॥
एतैः सर्वैरभिज्ञानैरभिज्ञाय सुदुःखिता । विजगर्हेऽथ कैकेयीं क्रोशन्ती कुररी यथा ॥ ३ ॥
सकामा भव कैकेयि हतोऽयं कुलनन्दनः । कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥ ४ ॥

---

गो० टी०–एवमिति । उप समीपे अन्तरधीयत अपागच्छत् ॥ ४२ ॥

४३-४४ ] ति० टी०–चिक्षेपाचकर्ष ॥ ४३ ॥ ४४ ॥

रा० टी०–रावण इति । एतत्कार्मुकं धनुः रामस्येति ब्रुवन्सन् रावणःकार्मुकं चिक्षेप ॥ ४३ ॥

गो० टी०–रावणश्चेति । चिक्षेप आचकर्ष । विद्युज्जिह्वहस्तादित्यर्थः। त्रिषु लोकेषु विख्यातम् । वैष्णवत्वादिति भावः ४३

रा० टी०–इदमिति । तव रामस्येदं कार्मुकं मानुषं रामं हत्वा प्रहस्तेन विद्युज्जिह्वेनानीतम् ॥ ४४ ॥

गो० टी०–इदमिति । स्पष्टः ॥ ४४ ॥

४५ ] ति० टी०–स विद्युज्जिह्वेनेति च्छन्दोवशात्सकारलोपः। विनिकीर्यमाणः विकिरन्नित्यर्थः ॥ ४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

रा० टी०–स इति । विद्युज्जिह्वेन आनीतं शिरो धनुश्च भूमौ सहैव रावणो विनिकीर्यनेवशानां स्त्रीणाम् अनुगा अनुगीयमाना निरन्तरं स्तूयमाना भव इति तां सीतामब्रवीत् । अत एव ज्ञापकादीदृशमपि छन्दः ॥ ४५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

गो० टी०–स इति । विद्युज्जिह्वेत्यत्र तलोप आर्षः । सहैव युगपदेव । विनिकीर्य शिरो धनुश्च युगपत् सीतायाः पुरतः स्थापयित्वेत्यर्थः । विद्युज्जिह्वः शिरः प्रक्षिप्तवान् स्वयं धनुरिति भेदः । वशानुगेत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ४५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

१ ] ति० टी०–सेति । हनूमताख्यातं सुग्रीवप्रतिसंसर्गं सुग्रीवरामसंबन्धं रावणकल्पितवानरवधस्योपपादकम् । स्मृत्वेति शेषः ॥ १ ॥

२ ] ति० टी०–भर्तृसदृशमिति विभक्तिविपरिणामेन सर्वत्रान्वेति । केशान्तदेशं ललाटम् । तं केशान्तवर्तिनम् ॥२॥

३-४ ] ति० टी०–अभिज्ञानैर्लक्षणैः ॥ ३ ॥ ४ ॥

रा० टी०–रावणकर्तृकमायाप्रदर्शनानन्तरकालिकं सीतावृत्तान्तमाह–सेत्यादिभिः । शिरः कार्मुकं च दृष्ट्वा हनूमता आख्यातं सुग्रीवप्रतिसंसर्गं रामसुग्रीवयोः संबन्धं च दृष्ट्वा संस्मृत्य भर्तुः सदृशं नयनादि च दृष्ट्वा एतैरुक्तैरभिज्ञानैः चिह्नैः अभिज्ञाय रामलोकान्तरगमनं ज्ञात्वा सुदुःखिता सीता कुररीव क्रोशन्ती विलपन्ती सती कैकेयीं केकयीदासीं मन्थरां विजगर्ह इ इति विस्मयेन च सकलस्वामिन्या अज्ञानसंसर्गशून्यायाः कथमेवमभिज्ञानमिति वाच्यम् शृङ्गारपोषकवियोगजनितदुःखाभासेन विचारस्यानुदयात् संदृश्यवस्तुदर्शनजनितदुःखदुःखयोरनिवार्यत्वाच्च मर्यादापुरुषोत्तमरामाभिप्रायां मर्यादापालनस्यावश्यकतया मायाया अपि मर्यादापालनस्वीकारादेति दिक् श्लोकत्रयमेकान्वयि ॥ १-३ ॥

गो० टी०–अथ सीताप्रलापो द्वात्रिंशे–स सीतेत्यादिश्लोकत्रयमेकं वाक्यम् ॥ हनुमता पूर्वं कथितम् । सुग्रीवप्रतिसंसर्गं रामस्य सुग्रीवप्रतिसंबन्धम् । रावणमुखाच्छ्रुत्वेति शेषः यद्वा दृष्ट्वा ज्ञात्वेत्यर्थः। ज्ञानं च सुग्रीवप्रतिसंबन्धस्य स्मरणम् । अन्यत्र साक्षात्कारः । नयने इति द्वितीया । भर्तुः सदृशम् भर्तुर्मुखसदृशमित्यर्थः । इदं नयनादावप्यन्वेति । केशान्तदेशं ललाटम् । अभिज्ञानैः चिह्नैः । प्रज्ञानं चाभिज्ञानमित्यमरः । अभिज्ञाय तदेव शिर इति प्रत्यभिज्ञायेत्यर्थः । अत्र रामविषये ॥ १-३ ॥

---

१ सीतामिदमुवाच चेति गो. पाठः । २ सुतामिति गो. पाठः । ३ रावण इति गो. रा. पाठः । ४ चेति रा. पाठः ।

आर्येण किं नु कैकेय्याः कृतं रामेण विप्रियम् । यन्मया चीरवसनं दत्त्वा प्रव्राजितो वनम् ॥ ५ ॥
एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी । जगाम जगतीं बाला छिन्ना तु कदली यथा ॥ ६ ॥
सा मुहूर्तात्समाश्वस्य परिलभ्याथ चेतनाम् । तच्छिरः समुपास्थाय विललापायतेक्षणा ॥ ७ ॥
हा हतास्मि महाबाहो वीरव्रतमनुव्रत । इमां ते पश्चिमावस्थां गतास्मि विधवा कृता ॥ ८ ॥
प्रथमं मरणं नार्या भर्तुर्वैगुण्यमुच्यते । सुवृत्तः साधुवृत्तायाः संवृत्तस्त्वं ममाग्रतः ॥ ९ ॥
महद्दुःखं प्रपन्नाया मग्नायाः शोकसागरे । यो हि मामुद्यतस्त्रातुं सोऽपि त्वं विनिपातितः ॥ १० ॥

रा० टी०—विहर्षणप्रकारमाह—सकामेत्यादिभिः । कैकेयी हे मन्थरे ! कुलनन्दनो हतः अतस्त्वं सकामा भव एतेन काङ्क्षा तवापि मनोरथो भ्रष्ट इति सूचितम् तत्र हेतुमाह त्वया सर्वं कुलम् उत्सादितं विहिंसितम् ॥ ४ ॥

गो० टी०—सकामेति ॥ हे कैकेयि सकामा भव । सम्पूर्णकामा भवेत्यर्थः । कः काम इत्यत्राह—हत इति । कलहशीलया कलहस्वभावया । कलहप्रयोजनयेति यावत् । त्वया सर्वं कुलं रघुवंशः उत्सादितं भवति । तथा कुलनन्दनोयं रामो हतः प्रव्राजनव्याजेन रामहननमेव त्वया संकल्पितं तदिदानीं विपरीतफलं तं जातम् । कुलतन्तुभूतरामहननेन तदेकपराः सर्वे भरतादयो हता एव कलह एव ते प्रयोजनं फलितमिति भावः ४

५-६ ] ति० टी०—आर्येण रामेणेत्यन्वयः । चीरवसनं दत्त्वा मया सह प्रव्राजित इत्यन्वयः ॥ ५ ॥ ६ ॥

रा० टी०—आर्येणेति । आर्येण रामेण कैकेय्याः किं विप्रियं कृतं यद्यस्माद्धेतोः मया सह रामो वनं प्रव्राजितः ॥५॥

गो० टी०—हेत्वन्तराभावादिदमेव रामवनप्रव्राजने हेतुरित्याह—आर्येणेति । आर्येण सर्वप्रियकारिणेत्यर्थः । यत् येन कारणेन मया सह चीरवसनो रामः प्रस्थापितः तादृशं विप्रियं किं कृतम् ॥ ५ ॥

रा० टी०—एवमिति । वैदेही एवमुक्त्वा छिन्नकदलीव जगतीं भूमिं जगाम ॥ ६ ॥

गो० टी०—एवमिति । तपस्विनी शोचनीया जगतीं भूमिं जगाम । मूर्छितेत्यर्थः । बाला मृदुबुद्धिरित्यर्थः ॥ ६ ॥

७ ] ति० टी०—समुपास्थाय स्वसमीपे स्थापयित्वा । 'समुपाघ्राय' इति पाठान्तरम् ॥ ७ ॥

रा० टी०—सेति । सा सीता समाश्वस्य अतिश्वासं प्राप्य अथ चेतनां परिलभ्य च तत् मायामयं शिरः समुपास्थाय विललाप ॥ ७ ॥

गो० टी०—सेति । समाश्वास्य उच्छ्वासं प्राप्य । चेतनां ज्ञानम् । आयतेक्षणा अश्रुमिश्रत्वेन शिरोवलोकनार्थं विस्तृतलोचनेत्यर्थः ॥ ७ ॥

८ ] ति० टी०—वीरव्रतं दृढं पितृवाक्यपालनव्रतम् । ते तव नाशादिमां पश्चिमावस्थां गतास्मि । तामवस्थामाह—विधवा कृतेति ॥ ८ ॥

रा० टी०—विलापाकारमाह—हेत्यादिभिः । हे महाबाहो! वीरव्रतमनुव्रत वीरगीतिपालनशील तं पश्चिमामन्तिमामवस्थां गता दृष्टवत्यस्मि अत एव विधवा कृता विधिनेति शेषः ॥८॥

गो० टी०—हा हतेति । वीरव्रतं शत्रुमहत्वा न निवर्तिष्य इति संकल्पम् । अनुव्रत अनुप्राप्त । गतास्मि दृष्टवत्यस्मि । गत्यर्था ज्ञानार्था इति न्यायात् । अतो विधवा कृता ॥ ८ ॥

९ ] ति० टी०—नार्या भर्तुर्मरणं प्रथमं वैगुण्यं मुख्योऽनर्थः । यत्तु—भर्तुः प्रथमं मरणं नार्या वैगुण्यं दुश्चरित्रमूलमित्यर्थस्तन्न, एवं हि सर्वविधवानामसतीत्वापत्तेः । संवृत्तोऽतीतः ॥ ९ ॥

रा० टी०—प्रथममिति । प्रथमं नारीमरणात् पूर्वं भर्तुर्मरणं नार्याः वैगुण्यं महान् अनर्थः उच्यते अतः साधुवृत्तायाः ममाग्रतः यतस्त्वं संवृतस्तिरोहितः अतः सुवृत्तः महान् अनर्थः संपन्नः ॥ ९ ॥

गो० टी०-प्रथमं भर्तुर्मरणं भार्यादोषनिमित्तकं भवति तत्त्वत्र न पश्यामीत्याह—प्रथममिति । प्रथमं भर्तुर्मरणं नार्या वैगुण्यं वैगुण्यहेतुकम् । सुवृत्तस्त्वं साधुवृत्ताया ममाग्रतः संवृत्तः मृतः कथमिदं संगच्छत इति भावः । अस्मिन् पक्षे न सुवृत्तपदस्वारस्यम् । यद्वा भवन्मरणस्य मद्दोष एव हेतुरित्याह—प्रथममिति । विगुण एव वैगुण्यम् स्वार्थे ष्यञ् । प्रथमं भर्तृमरणं भार्यादोषनिमित्तकमिति सुप्रसिद्धम् अतो हे सुवृत्त साधुवृत्त । साधुवृत्तायाः सम्यग्जीवनवत्याः ममाग्रतस्त्वं मृतोसि मद्वैगुण्यहेतुकं त्वन्मरणमिति भावः । सुवृत्तेत्यनेन त्वद्वैगुण्यहेतुकं न भवतीति ज्ञापितम् ॥ ९ ॥

१० ] ति० टी०—महद्दुःखं प्रपन्नाया मम मरणमेव वरमिति शेषः । हि यतो यस्त्वं मां त्रातुमुद्यतः सोऽपि त्वं विनिपातितः । राक्षसैरिति शेषः ॥ १० ॥

रा० टी०—महदिति । महत् दुःखं प्रपन्नायाः प्राप्तायाः अत एव शोकसागरे मग्नायाः ममदुःखमवलोक्येति शेषः मां त्रातुं यस्त्वमुद्यतः सोऽपि विनिपातितः ॥ १० ॥

गो० टी०—स्वस्य वैगुण्यसद्भावे निदर्शनमाह—दुःखादिति । दुःखाद्दुःखम् अत्यन्तदुःखम् । प्रपन्नायाः वनप्रस्थानं प्रथमं दुःखं तस्मादपि दुःखं रावणेनापहरणं तत् प्राप्ताया इत्यर्थः । संप्रति भर्तृमरणेन शोकसागरे निमग्नायाः इयं च षष्ठी 'यस्य च भा-

१ हे कैकेयीति गो. पाठः । २ वसनस्त्वया प्रस्थापित इति गो. पाठः । ३ चेति गो.पाठः। ४ आघ्रायेति गो.पाठः । ५ दुःखाद्दुःखमिति गो.पाठः ।

सा श्वश्रूर्मम कौसल्या त्वया पुत्रेण राघव। वत्सला ते यथा धेनुर्विवत्सा वत्सला कृता ॥ ११ ॥
उद्दिष्टं दीर्घमायुस्ते दैवज्ञैरपि राघव। अनृतं वचनं तेषामल्पायुरसि राघव ॥ १२ ॥
अथवा नश्यति प्रज्ञा प्राज्ञस्यापि सतस्तव। पचत्येनं तथा कालो भूतानां प्रभवो ह्ययम् ॥ १३ ॥
अदृष्टं मृत्युमापन्नः कस्मात्त्वं नयशास्त्रवित्। व्यसनानामुपायज्ञः कुशलो ह्यसि वर्जने ॥ १४ ॥
तथा त्वं संपरिष्वज्य रौद्रयातिनृशंसया। कालरात्र्या मयाच्छिद्य हृतः कमललोचनः ॥ १५ ॥

वेन भावलक्षणम् " इत्यस्मिन्नर्थे। शोकसागरे मग्नायाः शोकसागरे मग्नायां मयि दुःखाद्दुःखं प्रपन्नायाः प्रपन्नायां सत्याम् यो मां त्रातुमुद्यतः स त्वमपि विनिपातित इति सम्बन्धः॥१०॥

११ ] ति० टी०—सा वत्सला मम श्वश्रूस्त्वया पुत्रेण राक्षसहतेन वत्सला धेनुरिव विवत्सा कृता ॥ ११ ॥

रा० टी०—सेति। त्वया पुत्रेण वत्सला या मम श्वश्रूः सा विवत्सा नष्टवत्सा वत्सला धेनुरिव कृता ॥ ११ ॥

गो० टी०—न केवलं ममैव दुःखं मातुश्चेत्याह—सेति। सा मम श्वश्रूः कौसल्या वत्सला धेनुर्यथा धेनुरिव त्वया हतेन पुत्रेण वत्सेनेव विवत्सा कृता ॥ ११ ॥

१२ ] ति० टी०—दैवज्ञैः वसिष्ठादिभिरिति शेषः। यतोऽल्पायुरसि, अतस्तेषां वचनं मिथ्या ॥ १२ ॥

रा० टी०—उद्दिष्टमिति। हे राघव! दैवज्ञैर्ज्योतिर्विद्भिस्ते आयुर्दीर्घमुद्दिष्टं कथितमतो हे राघव! यदि त्वमल्पायुरसि तदा तेषां दैवज्ञानां वचनमनृतम् अपिर्यथर्थे ॥ १२ ॥

गो० टी०—आदिष्टमिति। यैः ब्राह्मणैः दीर्घमायुरित्यादिष्टम् उपदिष्टं तेषां वचनमनृतमासीत् अनृतत्वे हेतुमाह—अल्पायुरसीति। अचिन्त्यपराक्रमेत्यनेन ते पराक्रमं दृष्ट्वा तैरुक्तम् न तु शास्त्रं दृष्ट्वेति गम्यते ॥ १२ ॥

१३ ] ति० टी०—अथवेति। अथेति प्रश्ने। प्राज्ञस्य सतस्तवापि प्रज्ञा नश्यत्यथ नाशं प्राप्ता किम्। येन प्रज्ञादौर्बल्यात्त्वमः अरिवशं प्राप्त इति शेषः। वा अथवा हि यतः कालो भूतानां प्रभवः प्रभवाय हेतुस्तस्मादयमेनं प्राणिनं तथा पचति तत्तत्कर्मफलं प्रापयति। काल ईश्वरः, अतः प्राज्ञोऽपि त्वमप्राज्ञो जात इति भावः ॥ १३ ॥

रा० टी०—दैवज्ञवचनानृतत्वस्यासंभवं मनसि निधाय पक्षान्तरमाह—अथेति। सतो जीवतोऽपि प्राज्ञस्य तव प्रज्ञा चैतन्यं नश्यति अनश्यत् तिरोऽभवत् अथ किं हि यतः भूतानां प्रभवः प्रभवहेतुः अयं कालः एनं प्राणिनं तथा अदृष्टानुसारेण पचति प्रवर्तयत्येव। वा एवार्थे ॥ १३ ॥

गो० टी०—अथवा तेषामनृतवादित्वं नास्त्येव किन्तु तवैव भाग्यविपर्यासात्तेषामपि प्रज्ञा नष्टेति पक्षान्तरमवलम्बते—अथवेति। प्रभवत्यस्मादिति प्रभवः भूतानां कारणभूतःअयं कालः परमात्मा यथा येन प्रकारेण एनं पचनविषयभूतम्। पचति पक्वकर्माणं करोति तथा प्राज्ञस्य भविष्यदर्थवेदिनोपि सतः सत्पुरुषस्य प्रज्ञा तव त्वयि विषये नश्यति नष्टेत्यर्थः यद्वा पूर्वमचिन्त्यपराक्रमेति तव कथं विपत्तिरित्यभिप्रायेण संबोधितम्। तत्र पक्षान्तरमाह—अथवेति। एनं रामम् येन प्रकारेण कालः पचति तथास्य प्राज्ञस्यापि प्रज्ञा नश्यति अतो विपत्तिरियमिति भावः ॥ १३ ॥

१४ ] ति० टी०—हि यतस्त्वं व्यसनानां वर्जन उपायज्ञस्तदनुष्ठाने कुशलश्चासि। तस्मात्कस्माद्धेतोरदृष्टं पूर्वमज्ञातं मृत्युमापन्नः। अत्र हेतुं न पश्यामीति भावः ॥ १४ ॥

रा० टी०—अदृष्टमिति। नयशास्त्रवित् अत एव व्यसनानां दुःखानां वर्जने निवर्तने उपायज्ञः अत एव कुशलस्त्वम् अदृष्टमज्ञातं मृत्युं कस्मादापन्नः प्राप्तोऽसि ॥ १४ ॥

गो० टी०—अदृष्टमिति। हि यस्माद्व्यसनानां वर्जने प्रतिरोधे कुशलोसि अतः अदृष्टम् अचिन्तितं सौप्तिकत्वेनादृष्टं वा मृत्युम् कस्मादापन्नः कथमापन्नोसीत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—मया कालरात्र्येत्यन्वयः। रौद्रत्वादिविशिष्टया मया कालरात्र्या संपरिष्वज्याच्छिद्य बलात्कृत्य तथा त्वं हृतो यथा नष्ट इति भावः ॥ १५ ॥

रा० टी०—तथेति। रौद्रया त्वद्वियोगिनीत्वेन भयावहाकृत्या प्रतीयमानया अत एव क्रूरया क्रूरत्वेन प्रतिभासमानया अत एव कालरात्र्या तथा कालरात्रीसदृशया मया सह परिष्वज्य मत्संबन्धं प्राप्यैवेत्यर्थः आछिद्य चक्षुः पिधाय त्वं हृतः लोकान्तरं गतः ॥ १५ ॥

गो०टी०—तथेति। रौद्रया क्रूरया कालरात्र्या यस्यां रात्रौ समुद्रतीरे निविष्टोसि तया रात्र्या संपरिष्वज्य मम मत्तः आच्छिद्य अपहृत्य तथा हतोसीति संबन्धः। यद्वा मयेति पाठः। रौद्रया अतिनृशंसया अत्यन्तनिर्दयया कालरात्र्या कर्त्र्या मया करणभूतया संपरिष्वज्य आच्छिद्य बलात्कृत्य तथा हत इति। कालरात्रिर्नाम सर्वभूतापहारिणी काचन शक्तिः। यद्वा मया कालरात्र्येति व्यस्तरूपकम्। संपरिष्वज्य त्वमाच्छिद्य बलाद्धृतोसीति घोरवैधव्यलक्षणयुक्तत्वेन क्रूराया मे परिष्वङ्ग एव तेन्तोहेतुरासीदित्यर्थः। शिरश्छेदादेरश्लीलत्वेन तथेत्युक्तम्। कमललोचनेति हेतुगर्भम् कमललोचनत्वात् त्वं कालरात्र्या हतोसि। परिकराङ्गप्राणितरूपकालङ्कारः ॥ १५ ॥

१ वत्सेनेवेति गो. पाठः। २ आदिष्टमिति गो पाठः। ३ यैरचिन्त्यपराक्रमेति गो. पाठः। ४ मयेति गो. पाठः। ५ ममेति गो. पाठः। ६ लोचनेति गो. पाठः।

इह शेषे महाबाहो मां विहाय तपस्विनीम् । प्रियामिव यथा नारीं पृथिवीं पुरुषर्षभ ॥ १६ ॥
अर्चितं सततं यत्नाद्गन्धमाल्यैर्मया तव । इदं ते मत्प्रियं वीर धनुः काञ्चनभूषितम् ॥ १७ ॥
पित्रा दशरथेन त्वं श्वशुरेण ममानघ । सर्वैश्च पितृभिः सार्धं नूनं स्वर्गे समागतः ॥ १८ ॥
दिवि नक्षत्रभूतं च महत्कर्म कृतं तथा । पुण्यं राजर्षिवंशं त्वमात्मनः समुपेक्षसे ॥ १९ ॥
किं मां न प्रेक्षसे राजन्किं वा न प्रतिभाषसे । बालां बालेन संप्राप्तां भार्यां मां सहचारिणीम् ॥ २० ॥
संश्रुतं गृह्णता पाणिं चरिष्यामीति यत्त्वया । स्मर तन्मम काकुत्स्थ नय मामपि दुःखिताम् ॥ २१ ॥
कस्मान्मामपहाय त्वं गतो गतिमतां वर । अस्माल्लोकादमुं लोकं त्यक्त्वा मामपि दुःखिताम् ॥ २२ ॥
कल्याणै रुचिरं गात्रं परिष्वक्तं मयैव तु । क्रव्यादैस्तच्छरीरं ते नूनं विपरिकृष्यते ॥ २३ ॥

---

१६ ] ति० टी०—मां विहाय प्रियां नारीमिव पृथिवीमालिङ्ग्य शेषे ॥ १६ ॥

रा० टी०—इहेति । पृथिवीं तद्राज्यमिव प्रियां मां विहाय इह अस्मिन् समये शेषे ॥ १६ ॥

गो० टी०—उपशेष इति । तपस्विनीं शोचनीयाम् । प्रियां मत्तः प्रियाम् पुरुषर्षभेत्यनेन दक्षिणस्य शठत्वमनुचितमिति द्योत्यते ॥ १६ ॥

१७ ] ति० टी०—मया सह तव त्वयार्चितं मत्प्रियं ते धनुरिदमेतादृशम् । जातमिति शेषः ॥ १७ ॥

रा० टी०—अर्चितमिति । इदं ते धनुः यत्नात् सततं मयाऽर्चितम् ॥ १७ ॥

गो० टी०—अर्चितमिति । मया सह तव त्वया यदर्चितं तत्ते धनुः इदम् एतादृशं जातमित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—सर्वैः पितृभिः सार्धं स्थितेन दशरथेन स्वर्गे त्वं समागत इत्यन्वयः ॥ १८ ॥

रा० टी०—पित्रेति । मम श्वशुरेण तव पित्रा सर्वैः पितृभिः पितामहादिभिश्च सार्धं स्वर्गे त्वं समागतोऽसि ॥१८॥

गो० टी०—पित्रेति । सर्वैः पितृभिः सार्धं स्थितेन दशरथेन समागत इति संबन्धः ॥ १८ ॥

१९–२० ] ति० टी०—दिवि नक्षत्रभूतम् । त्रिशङ्कोस्तथात्वाच्छत्रिन्यायेन वंशस्य तथात्वम् । महता पितृवचःपालनरूपेण कर्मणा कृतम् । तथा पुण्यमात्मनः प्रियं पुण्यं राजर्षिवंशं समुपेक्षसे त्यक्त्वा गच्छसि । एतदन्याय्यमित्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—दिवीति । येन त्वया दिवि नक्षत्रभूतं सर्वत्र प्रकाशमानमित्यर्थः महत्कर्म कृतं स त्वम् आत्मनो राजर्षिवंशं समुपेक्षसे किमर्थमिति शेषः ॥ १९ ॥

गो० टी०—दिवीति । महत्कर्मकृतं महाकर्मकृताम् आत्वाभाव आर्षः । प्रियं कर्मकरत्वेन काङ्क्षणीयं पुण्यम् । आत्मनो राजर्षिवंशमिक्ष्वाकुप्रमुखम् दिवि नक्षत्रभूतः विमानस्थः सन् समवेक्षसे पश्यसि ॥ १९ ॥

रा० टी०—किमिति । बालां संप्राप्तां मां बालेन ममाज्ञानेन हेतुभूतेन किं न प्रेक्षसे ॥ २० ॥

गो० टी०—किमिति । बालां बाल्येन संप्राप्ताम् बाल्य एव त्वयोढामित्यर्थः । भार्यां सदा भर्तुं योग्याम् माम् एतादृशावस्थामापन्नां सहचारिणीं मां किं न प्रेक्षसे किं न प्रतिभाषस इति सम्बन्धः ॥ २० ॥

२१–२२ ] ति० टी०—पाणिं गृह्णता त्वया 'त्वया सह चरिष्यामि धर्मादिकम्' इति यत्संश्रुतं प्रतिज्ञातं तत्स्मर । अतो दुःखितां मामपि नय ॥ २१ ॥ २२ ॥

रा० टी०—संश्रुतमिति । पाणिं गृह्णता त्वया चरिष्यामि धर्मादि सहैव करिष्यामीति यत् संश्रुतं प्रतिज्ञातं तत् स्मर अत एव मामपि नय ॥ २१ ॥

गो० टी०—संश्रुतमिति । मम पाणिं गृह्णता त्वया चरिष्यामि सह चरिष्यामीति यत् संश्रुतं प्रतिज्ञातम् तत् स्मर । स्मृत्वा मामपि त्वत्समीपं नय ॥ २१ ॥

रा० टी०—कस्मादिति । मामपहाय वने आनीय इह दुःखितां मां त्यक्त्वा अस्माल्लोकात् अमुं परं लोकं कस्माद्गतोऽसि । अपहायेति अपपूर्वकगत्यर्थकहाधातुप्रकृतिकल्यबन्तम् ॥ २२ ॥

गो० टी०—कस्मादिति । त्यक्त्वा त्वां विहाय दुःखितां मामपि प्रेयसीमपि माम् अपहाय अस्माल्लोकात् अमुं लोकं परलोकम् कस्माद्धेतोः गतोसि ॥ २२ ॥

२३ ] ति० टी०—कल्याणैर्मङ्गलैः रुचिरं यत्त्वच्छरीरं तदेतावत्कालपर्यन्तं मयैव परिष्वक्तं तत्तव शरीरमद्य क्रव्यादैर्विपरिकृष्यते ॥ २३ ॥

रा०टी०—कल्याणैरिति । कल्याणैरनेकमाङ्गलिकोपचारैः रुचिरं यत्तव गात्रं मया परिष्वक्तं तत्ते शरीरं क्रव्यादैर्विपरिकृष्यते ॥ २३ ॥

गो० टी०—कल्याणैरिति । यदित्यर्थे यत्तदित्यपि प्रयुज्यते कल्याणैः मङ्गलैः शुभैश्चन्दनादिभिर्वा सुवर्णाभरणैर्वा रुचितम् अभ्यस्तं यत्तच्छरीरं मयैव परिष्वक्तं मान्यथा । एत-

---

१ उपेति गो. पाठः । २ समाश्लिष्टेति गो. पाठः । ३ यत्नादिति गो. पाठः । ४ भूषणमिति गो. पाठः । ५ भूतलत्वमिति गो. पाठः । ६ कृतां प्रियमिति गो. पाठः । ७ मामिति गो. पाठः । ८ बाल्येनेति गो. पाठः । ९ तन्ममेति गो. पाठः । १० काकुत्स्थमिति रा. पाठः । ११ इमेति रा. पाठः । १२ रुचितं यत्तदिति गो. पाठः ।

अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः । अग्निहोत्रेण संस्कारं केन त्वं न तु लप्स्यसे ॥ २४ ॥
प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतम् । परिप्रेक्ष्यति[1] कौसल्या लक्ष्मणं शोकलालसा ॥ २५ ॥
स तस्याः परिपृच्छन्त्या वधं मित्रबलस्य ते । तव चाख्यास्यते नूनं निशायां राक्षसैर्वधम् ॥ २६ ॥
सा त्वां सुप्तं हतं ज्ञात्वा[2] मां च रक्षोगृहं गताम् । हृदयेनावदीर्णेन न भविष्यति राघव ॥ २७ ॥
मम हेतोरनार्याया अनघः[3] पार्थिवात्मजः । रामः सागरमुत्तीर्य वीर्यवान्[4] गोष्पदे हतः ॥ २८ ॥
अहं दाशरथेनोढा मोहात्स्वकुलपांसनी । आर्यपुत्रस्य रामस्य भार्या मृत्युरजायत ॥ २९ ॥
नूनमन्यां मया जातिं वारितं दानमुत्तमम् । याहमद्यैव[5] शोचामि भार्या सर्वातिथेरिह[6] ॥ ३० ॥

इव क्रव्यादैः श्येनादिभिः विपरिकृष्यते । अत्र मयैवेत्यनेन रामस्य दारान्तरं नास्तीति गम्यते ॥ २३ ॥

२४ ] ति० टी०—अग्निहोत्रेण वैतानाग्निना संस्कारं केन हेतुना न लप्स्यसे न लभसे ॥ २४ ॥

रा० टी०—अग्नीति । आप्तदक्षिणैः परिपूर्णदक्षिणाविशिष्टैः यज्ञैः यस्त्वमिष्टवान् स त्वम् अग्निहोत्रेण हेतुभूतेन संस्कारं केन हेतुना न लप्स्यसे प्राप्नोषि ॥ २४ ॥

गो० टी०—अग्निष्टोमेति । वनवासनिवृत्त्यनन्तरं त्वम् आप्तदक्षिणैः पर्याप्तदक्षिणैः अग्निष्टोमादिभिर्यज्ञैः इष्टवान् कृतदेवपूजनो भूत्वा अग्निहोत्रेण यज्ञीयवह्निना संस्कारं केन हेतुना न लप्स्यसे । अत्र वनवासात्पूर्वमग्न्याधानाद्यभावात्तन्निवृत्त्यनन्तरमाधानाग्निष्टोमादिकमनुष्ठाय पश्चात्क्रमप्राप्तावसाने यज्ञीयाग्निभिः संस्कारं प्राप्तुं योग्यस्त्वं कथमेवं मध्ये मरणं प्राप्नोसीति भावः । अनेन वनवासात्पूर्वं रामेण यज्ञादिकं नानुष्ठितमिति सूच्यते । अयमर्थोऽयोध्याकाण्डे सम्यक्प्रतिपादितः ॥ २४ ॥

२५ ] ति० टी०—प्रव्रज्यां प्रवासमुपपन्नानां त्रयाणामस्माकं मध्य एकं लक्ष्मणमित्यन्वयः । परिप्रेक्ष्यति । द्रक्ष्यतीत्यर्थः ॥ २५ ॥

रा० टी०—प्रव्रज्यामिति । प्रव्रज्यां प्रवासम् उपपन्नानां प्राप्तानां त्रयाणामस्माकं मध्ये आगतमेकं लक्ष्मणमेव कौसल्या परिप्रेक्षति कथमिति शेषः ॥ २५ ॥

गो० टी०—प्रव्रज्यामिति । प्रव्रज्यां प्रवासम् । "व्रजयजोर्भावे क्यप्" । इतिक्यप् उपपन्नानां प्राप्तानाम् त्रयाणां रामादीनां मध्ये एकं लक्ष्मणमागतम् शोकलालसा शोकमन्दा कौसल्या परिप्रक्ष्यति ॥ २५ ॥

२६ ] ति० टी०—मित्रबलस्य वानरबलस्य ॥ २६ ॥

रा० टी०—स इति । स लक्ष्मणः परिपृच्छन्त्याः तस्याः कौसल्यायाः समीपे ते मित्रबलस्य तव च वधमाख्यास्यते नूनं किम् ॥ २६ ॥

गो० टी—स इति । सः लक्ष्मणः परिपृच्छन्त्यास्तस्याः ते मित्रबलस्य वधं तव वधं चाख्यास्यते ॥ २६ ॥

२७ ] ति० टी०—अवदीर्णेन विदीर्णेनोपलक्षिता सती नूनं न भविष्यति । म्रियेतेत्यर्थः ॥ २७ ॥

रा० टी०—सेति । सा कौसल्या सुप्तं त्वां हतं मां च रक्षोगृहं गतां ज्ञात्वा श्रुत्वा अवदीर्णेन विदीर्णेन हृदयेन उपलक्षिता सती न भविष्यति लोकान्तरं गमिष्यतीत्यर्थः ॥ २७ ॥

गो० टी०—सेति । सुप्तं हतं सुप्तत्वदशायां हतमित्यर्थः । अवदीर्णेन भिन्नेन हृदयेनोपलक्षिता सा न भविष्यति न जीविष्यति ॥ २७ ॥

२८ ] ति० टी०—सागरमुत्तीर्य गोष्पदे हतस्तत्समुद्रनाशकस्येति या लोकवार्ता तत्तुल्यमिदं जातमित्यर्थः ॥ २८ ॥

रा० टी०—ममेति । रामः ममहेतोः सागरमुत्तीर्य महाकर्माणि कृत्वेत्यर्थः गोष्पदे तुच्छरावणकृत्ये हतः ॥ २८ ॥

गो० टी०—ममेति । अनार्यायाः दुःशीलायाः मम हेतोः मन्निमित्तम् अनर्हः एतादृशसौप्तिकवधानर्हः सागरमुत्तीर्य गोष्पदे हतः खरतरखरादीन् हत्वा क्षुद्रेण प्रहस्तेन हत इत्यर्थः ॥ २८ ॥

२९ ] ति० टी०—दाशरथेन दशरथपुत्रेण अणार्षः । मृत्युरजायत मृत्युरूपा जाता ॥ २९ ॥

रा० टी०—अहमिति । दाशरथेन रामेणोढाऽहमेव मोहात् कपटमृगादिविषयकमोहं प्राप्य स्थिताऽभवमिति शेषः अत एव रामस्य भार्यैव मृत्युरजायत ॥ २९ ॥

गो० टी०—अहमिति । स्वकुलपांसनी स्वकुलदूषणी अहं मोहात् अज्ञानात् दाशरथेनोढास्मि अतो रामस्य भार्यैव मृत्युरजायत ॥ २९ ॥

३० ] ति० टी०—अन्यां जातिमन्यस्मिञ्जन्मन्युत्तमं दानं कन्यादानं गोभूहिरण्यादिदानं च वारितं न कृतम् । सर्वातिथेः सर्वातिथिप्रियस्येह काले देशे च ॥ ३० ॥

रा० टी०—नूनमिति । सर्वातिथेः सर्वः अतिथिर्याचको यस्य तस्य रामस्य भार्या याऽहं शोचामि तया मया अन्याम् अन्यस्यां जातिं जातौ जन्मनि उत्तमं दानं वारितं न कृतमित्यर्थः ॥ ३० ॥

गो० टी०—नूनमिति । मया अन्यां जातिं प्राप्य यद्वा अन्यां जातिम् अन्यस्मिन् जन्मनि उत्तमं दानं वारितम्

१ प्रक्ष्यतीति गो. प्रेक्षतीति रा. पाठः । २ श्रुत्वेति गो. पाठः । ३ हृतनर्ह इति गो. पाठः । ४ कृत्वेति गो. पाठः । ५ इहेति गो. पाठः । ६ अपीति गो. पाठः ।

साधु घातय मां क्षिप्रं रामस्योपरि रावण । समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥ ३१ ॥
शिरसा मे शिरश्चास्य कायं कायेन योजय । रावणानुगमिष्यामि गतिं भर्तुर्महात्मनः ॥ ३२ ॥
इतीव दुःखसंतप्ता विललापायतेक्षणा । भर्तुः शिरो धनुश्चैव ददर्श जनकात्मजा ॥ ३३ ॥
एवं लालप्यमानायां सीतायां तत्र राक्षसः । अभिचक्राम भर्तारमनीकस्थः कृताञ्जलिः ॥ ३४ ॥
विजयस्वार्यपुत्रेति सोऽभिवाद्य प्रसाद्य च । न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ॥ ३५ ॥
अमात्यैः सहितः सर्वैः प्रहस्तस्त्वामुपस्थितः । तेन दर्शनकामेन अहं प्रस्थापितः प्रभो ॥ ३६ ॥
नूनमस्ति महाराज राजभावात्क्षमान्वित । किंचिदात्ययिकं कार्यं तेषां त्वं दर्शनं कुरु ॥ ३७ ॥
एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम् । अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ॥ ३८ ॥
स तु सर्वं समर्थ्यैव मन्त्रिभिः कृत्यमात्मनः । सभां प्रविश्य विदधे विदित्वा रामविक्रमम् ॥ ३९ ॥

---

कन्यादानं वारितमित्यर्थः । तत्र हेतुमाह–येति । सर्वे अतिथया यस्य तस्य सर्वातिथेः सर्वरक्षितुरित्यर्थः । सर्वातिथिपूजकस्येति वार्थः । भार्यापि याहम् इह जन्मनि अग्र भोगकाल एव शोचामि ॥ ३० ॥

३१–३३ ] ति० टी०–समानय योजय ॥ ३१ ॥ ३३ ॥

रा० टी०–साध्विति । रामस्योपरि संस्थाप्येत्यर्थः, मां घातय तत्प्रयोजनमाह पत्न्यासह पतिं समानय संयोजय इदमेव कल्याणं कुरु ॥ ३१ ॥

गो० टी०–साध्विति । समानय योजय । उत्तमं कल्याणं पतिसंयोगरूपम् ॥ ३१ ॥

रा० टी०–योजनप्रकारमाह–शिरसेति । मे शिरः अस्य रामस्य शिरसा कायं शेषशरीरं कायेन च योजय तत्प्रयोजनमाह–भर्तुर्गतिम् अनुगमिष्यामि ॥ ३२ ॥

गो० टी०–शिरसेति । स्पष्टः ॥ ३२ ॥

रा० टी०–इतीवेति । दुःखसंतप्ता सीता विललाप शिरोधनुर्ददर्श च ॥ ३३ ॥

गो० टी०–इतीति । शिरः धनुश्च । तत्र पुरोदेशे ॥ ३३ ॥

३४–३६ ] ति० टी०–तत्राशोकवनिकायां राक्षसः प्रहस्तप्रेषितोऽनीकस्थो द्वाररक्षी राक्षसो भर्तारं स्वामिनमभिचक्रामाभिक्रम्य 'आर्यपुत्र, विजयस्व' इति प्रसाद्याभिवाद्य च कृताञ्जलिः समुपस्थितः । आर्यपुत्रशब्दो यद्यपि स्त्रीभिर्भर्तरि प्रयुज्यते प्रायेण, तथापि पूजामात्रे सामान्यतः प्रयोगोऽपि बोध्यः ॥ ३४ ॥ ३६ ॥

रा० टी०–एवमिति । सीतायामेवं लालप्यमानायां सत्यां अनीकस्थः कश्चन चारविशेषः भर्तारं रावणमभिचक्राम प्राप ॥ ३४ ॥

गो० टी०–एवमिति । लालप्यमानायां प्रलपन्त्याम् भर्तारं रावणम् अनीकस्थः द्वाररक्षी । ननु लौकिकीषु काचिदिव सीता भर्तृशिरस्साक्षात्कारेपि चिरं रुदित्वा विलप्य कथं जीवितं धारयति स्म । उच्यते । अत्र ययोर्दिव्यदम्पत्योः परस्परसत्तैव जीवितधारणे निमित्तम् नतु ज्ञानाज्ञाने अत, भर्तुर्जीवितवैकल्याभावात्सा जीवति स्म ॥ ३४ ॥

रा० टी०–विजयस्वेति । स राक्षसः अभिवाद्य प्रणम्य विजयस्वेत्युक्त्वा प्रसाद्य च अनुप्राप्तं प्रहस्तं न्यवेदयत् ॥ ३५॥

गो० टी०–विजयस्वेति । अनुप्राप्तं द्वारीति शेषः ॥ ३५॥

रा० टी०–तत्प्रकारमाह–अमात्यैरिति । प्रहस्तः अमात्यैः सहितस्त्वामुपस्थितः दर्शनकामेन तेन अहं प्रस्थापितः ॥ ३६ ॥

गो० टी०–अमात्यैरिति । वयमिति भयेन बहुवचनं बहूनामन्तःपुरे समागमासंभवात् ॥ ३६ ॥

३७ ] ति० टी०–नन्वनवसरे कथं प्रस्थापितवांस्तत्राह—नूनमिति । राजभावाद्राजकार्याभिप्रायज्ञानाद्धेतोरनवसरप्राप्तावपि क्षमान्वित महाराज, नूनं निश्चितमात्ययिकमत्यावश्यकं किंचित्कार्यमस्ति, तस्मादागत्य तेषां त्वं दर्शनं कुरु । 'क्षमान्वित' इति पाङ्कः पाठः ॥ ३७ ॥

रा० टी०–नूनमिति । हे क्षमान्वित ! राजभावात् राजधर्मात् हेतोः किंचिदात्ययिकमावश्यकं कार्यमस्ति अतस्तेषां दर्शनं त्वं कुरु ॥ ३७ ॥

गो० टी०–प्रहस्तेन प्रेषितोपि कथमनवसरे समागतोसीत्याशङ्क्याह–नूनमिति । राजभावात् राजत्वाद्धेतोः । क्षमान्वितम् तदानीमेव कर्तव्यत्वेपि तव राजभावात् क्षमया त्वदाज्ञाप्रतीक्षणेनान्वितम् । आत्ययिकम् आतिपातिकम् । किंचित्कार्यमस्ति नूनम् । तत्तस्मात्तेषां प्रहस्तादीनां दर्शनं कुर्वित्यन्वयः ॥ ३७ ॥

३८ ] ति० टी०–मन्त्रिणां दर्शनम् उद्दिश्येति शेषः ॥ ३८ ॥

रा० टी०–एतदिति । राक्षसेन प्रतिवेदितं कथितं श्रुत्वा मंत्रिणां दर्शनम् अवलोकनार्थं ययौ ॥ ३८ ॥

गो० टी०–एतदिति । स्पष्टः ॥ ३८ ॥

३९ ] ति० टी०–सर्वं समर्थ्यैव गत्वा । वृद्धमन्त्रिभिरेकान्ते सर्वं कृत्यं विचार्येत्यर्थः । सभां प्रविश्य विदधे एकान्ते कृतमन्त्रोचितव्यापारमिति शेषः ॥ ३९ ॥

---

१ तत्र समीक्ष्य च पुनः पुनरिति गो. पाठः। २ सहितैरिति गो. पाठः। ३ त्वामिति गो. पाठः। ४ वयं प्रस्थापिताः इति गो. पाठः। ५ अन्वितमिति गो. पाठः।

अन्तर्धानं तु तच्छीर्षं तच्च कार्मुकमुत्तमम् । जगाम रावणस्यैव निर्याणसमनन्तरम् ॥ ४० ॥
राक्षसेन्द्रस्तु तैः सार्धं मन्त्रिभिर्भीमविक्रमैः । समर्थयामास तदा रामकार्यविनिश्चयम् ॥ ४१ ॥
अविदूरस्थितान्सर्वान्बलाध्यक्षान्हितैषिणः । अब्रवीत्कालसदृशो रावणो राक्षसाधिपः ॥ ४२ ॥
शीघ्रं भेरीनिनादेन स्फुटं कोणाहतेन मे । समानयध्वं सैन्यानि वक्तव्यं च न कारणम् ॥ ४३ ॥
ततस्तथेति प्रतिगृह्य तद्वचस्तदैव दूताः सहसा महद्बलम् ।
समानयंश्चैव समागतं च न्यवेदयन्भर्तरि युद्धकाङ्क्षिणि ॥ ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ।

नेदं रामस्य शिरः स तु सुखं जीवति शीघ्रमेव त्वां पश्यति मा भैषीरिति सरमा सीतां समाश्वासयत् ।

सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी । आससादाथ वैदेहीं प्रियां प्रणयिनी सखी ॥ १ ॥
मोहितां राक्षसेन्द्रेण सीतां परमदुःखिताम् । आश्वासयामास तदा सरमा मृदुभाषिणी ॥ २ ॥

---

रा० टी०—स इति । स रावणः आत्मनः सर्वं कृत्यं समर्थ्य तत्तत्कृत्ये तत्तद्योग्यान्नियोज्य रामविक्रमं विदित्वा चारमुखादवगत्य सभां प्रविश्य विदधे विचारयामास ॥ ३९ ॥

गो० टी०—स इति । स रावणः रामविक्रमं विदित्वा सभां प्रविश्य आत्मनः सर्वं कृत्यं मन्त्रिभिः सह समर्थ्य निश्चित्य विदधे प्रकृतकार्यमिति शेषः ॥ ३९ ॥

४० ] ति० टी०—निर्याणसमनन्तरमेवेति योजना । मायामयत्वादिति भावः ॥ ४० ॥

रा० टी०—अन्तर्धानमिति । रावणस्य निर्याणसमनन्तर निर्गमानन्तर काले एव शिरः प्रभृति अन्तर्धानं जगाम॥४०॥

गो० टी०—अन्तर्धानमिति । निर्याणं निर्गमनम् ॥४०॥

४१-४२ ] ति० टी०—रामकार्यविनिश्चयं रामविषयं स्वकर्तव्यनिश्चयम् ॥ ४१ ॥ ४२ ॥

रा० टी०—राक्षसेन्द्र इति । राक्षसेन्द्रस्तु रामकार्यविनिश्चयं रामोद्देश्यककृतिविषयकनिश्चयं समर्थयामास चकार॥४१

रा० टी०—अविदूरेति । बलाध्यक्षान् रावणोऽब्रवीत्४२

गो० टी०—समर्थ्येत्युक्तं विवृणोति—राक्षसेन्द्र इति । रामकार्यविनिश्चयं रामविषये स्वकृत्यनिश्चयम् ॥ ४१ ॥ ४२ ॥

४३ ] ति० टी०—स्फुटं कोणाहतेनोल्बणवादनदण्डाहतेन । कारणं न वक्तव्यमिति भावः । राजा आह्वयते इत्येतावदेव वक्तव्यम्, न त्वेतदर्थमितीति भावः ॥ ४३ ॥

रा० टी०—तदाकारमाह—शीघ्रमिति । कोणाहतेन वादनदण्डाभिघातजनितेन भेरीनिनादेन सैन्यानि समानयध्वं कारणम् आह्वानप्रयोजनं तु न वक्तव्यम् ॥ ४३ ॥

गो० टी०—शीघ्रमिति । स्फुटकोणाहतेन उल्बणवादनदण्डाहतिजनितेन । कार्ये कारणोपचारः । वक्तव्यं च न कारण मिति । युद्धार्थं निर्यातेति पुरे प्रवदन्ति चेद्बलाध्यक्षाः तदानीं देव्याः सन्निधौ कथितं स्वकीयं रामसैन्यवधवृत्तान्तवाक्यमसत्यमिति तस्याः विदितं स्यादिति भावः ॥ ४३ ॥

४४ ] ति० टी०—अत्र सीताप्रलापः स्वस्य मानुषधर्मप्रकटनायेति बोध्यम् ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

रा० टी०—तत इति । तद्वचः तथेति प्रतिगृह्य महद्बलं समानयन् समागतं बलं भर्तरि न्यवेदयंश्च ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामा० व्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

गो० टी०—तत इति । आत्मनः आत्मनाम् । भर्तरि विषये ॥ ४४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

---

१-२] ति० टी०—सीतां त्विति । विभीषणपत्नीयं सरमा । सा तु सीतायां भक्तिमती । सा हि रावणेन ज्ञातसात्त्विकभावातिभर्त्सनेन नाममात्रकृत्य सीताश्वासनार्थं संदिष्टेति बोध्यम् । प्रणयिनी स्नेहवती सखी सरमेत्यन्वयः ॥ १ ॥ २ ॥

रा० टी०—सीतां प्रति सरमोक्तिमाह—सीतामित्यादिभिः । सीतां मोहितां रावणमायया वैचित्यं प्राप्तां दृष्ट्वा सरमा नाम प्रणयनी स्नेहवती सखी वैदेहीमाससाद प्राप ॥ १ ॥

रा० टी०—मोहितामिति । मृदुभाषिणी सरमा सीतामाश्वासयामास ॥ २ ॥

गो० टी०—अथ सरमा सीतां समाश्वासयति त्रयस्त्रिंशे—

---

१ स्फुटकोणेति गो. पाठः । २ बलाधिपास्ते महदात्मन इति गो. पाठः । ३ गमं च ते इति गो. पाठः । ४ प्रणयिनीं सखीमिति गो. पाठः ।

सा हि तत्र कृता मित्रं सीतया रक्ष्यमाणया । रक्षन्ती रावणादिष्टा सानुक्रोशा दृढव्रता ॥ ३ ॥
सा ददर्श सखी सीतां सरमा नष्टचेतनाम् । उपावृत्त्योत्थितां ध्वस्तां वडवामिव पांसुषु ॥ ४ ॥
तां समाश्वासयामास सखी स्नेहेन सुव्रताम् । [ समाश्वसिहि वैदेहि मा भूत्ते मनसो व्यथा । ]
उक्ता यद्रावणेन त्वं प्रत्युक्तश्च स्वयं त्वया ॥ ॥ ५ ॥
[ सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् । ]
लीनया गहने शून्ये भयमुत्सृज्य रावणात् । तव हेतोर्विशालाक्षि नहि मे रावणाद्भयम् ॥ ६ ॥
स संभ्रान्तश्च निष्क्रान्तो यत्कृते राक्षसेश्वरः । तत्र मे विदितं सर्वमभिनिष्क्रम्य मैथिलि ॥ ७ ॥

---

सीतामिति । मोहितां रामविषयविपरीतज्ञानवतीम् । सरमा विभीषणभार्या । प्रणयिनीं स्नेहवतीम् ॥ १ ॥ २ ॥

३ ] ति० टी०—ननु राक्षसी कथं सखी, कथं चाश्वासयेदत आह—सा हीति । तत्राशोकवनिकायाम् । रावणादिष्टा अत्र बीजमुक्तम् । अतएव राक्षसीभ्यो नित्यं रक्षन्ती सरमा रक्ष्यमाणया सीतयात्मनः स्वस्याः मित्रं कृत्वा सखी संपादिता । तत्र योग्यतामाह—सानुक्रोशेत्यादि । दुःखितेषु सदया दृढव्रता प्राणैरपि ममेयं रक्षणीयेति दृढप्रतिज्ञा ॥ ३ ॥

रा० टी०—ननु राक्षस्याः कथं सीताप्रियात्वमित्यत आह—सेति । रावणादिष्टा क्रूरराक्षसीभ्यो रक्षणाय रावणेनाज्ञापिता अत एव रक्षन्ती अत एव सानुक्रोशा सीताविषयकदयाविशिष्टा सा सरमा रक्ष्यमाणया सीतया मित्रं कृता ॥ ३ ॥

गो० टी०—ननु राक्षस्यास्तस्याः कथं सख्यमाश्वासनं वेत्यत्राह—सा हीति । हि यस्माद्रावणादिष्टा रक्षन्ती सा आत्मना रक्ष्यमाणया मित्रं सखी कृता अत इत्यर्थः । रक्षन्ती । तत्र तत्रावसरे सीताया योगक्षेमविधानं कुर्वतीत्यर्थः । रावणादिष्टा योगक्षेमे रावणेनादिष्टा सानुक्रो न सदया अनेन सख्यकरणे हेतुरुक्तः दृढव्रता दृढप्रतिज्ञा अनेन सख्यस्याप्रच्युतिर्दर्शिता॥३॥

४ ] ति० टी०—उपावृत्य श्रमनाशार्थं लुठित्वा, ध्वस्तां पीडितामध्वश्रमेण शोकेन च ॥ ४ ॥

रा० टी०—सेति । पांसुषु उपावृत्य लुण्ठित्वा उत्थिताम् अत एव ध्वस्तां रजोव्याप्तां वडवामिव नष्टचेतनां कर्तव्यविषयकविवेकरहितां सीतां सरमा ददर्श सखीस्नेहेनोपलक्षिता सती समाश्वासयामास च सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०—आसादनानन्तरं तदवस्थादर्शनमाह—सेति । नष्टचेतनां विपरीतज्ञानवतीम् उपावृत्य लुठित्वा ध्वस्तां धूल्युपहताम् वडवाम् अश्वस्त्रियम् पांसुलां पांसुमतीम् ॥ ४ ॥

५ ] ति० टी०—रावणेन यत्त्वमुक्ता यच्च रावणं प्रति स्वयं त्वयोक्तम् 'साधु पातय मां क्षिप्रम्' इत्यादि तत्सर्वं मया परिश्रुतम् ॥ ५ ॥

रा० टी०—समाश्वासनप्रकारमाह—उक्तेत्यादिभिः । रावणेन त्वं यदुक्ता त्वया रावणश्च यत्प्रत्युक्तस्तत्सर्वं सखीस्नेहेन हेतुना रावणाद्भयमुत्सृज्य शून्ये गहने निबिडदेशे लीनया मया प्रतिश्रुतम् । सार्धश्लोक एकान्वयी ॥ ५ ॥

गो० टी०—तामिति । पूर्वं करस्पर्शादिना समाश्वासनमुक्तम् इदानीं रावणवृत्तान्तप्रदर्शनेनेति ज्ञेयम् ॥ ५ ॥

गो० टी०—समाश्वसिहीत्यादि । स्वयं साक्षात् प्रत्युक्तं प्रलापरूपम् सखीस्नेहेन सखीविषयस्नेहेन प्रतिश्रुतम् । प्रतिरुपसर्गमात्रम् ॥ ६ ॥

६ ] ति० टी०—ननु विभीषणस्य विरुद्धकोटौ गतत्वात्तत्पत्न्या त्वया रावणसंनिधौ स्थित्वा कथं श्रुतं तत्राह—लीनयेति । गहनेऽशोकवनमध्ये पूर्वमस्य मायाकृतवृत्तान्तं श्रुतवत्या त्वद्रक्षणरूपकार्यार्थमागत्य लीनया गुप्तं स्थितया रावणाद्भयमुत्सृज्य स्थितया सर्वं श्रुतम् । नहि मे रावणाद्भयम् तेनैव तव रक्षणे नियुक्तत्वात्तज्ज्ञातित्वाच्च ततोऽन्यैवैषा सरमेत्यन्ये ॥ ६ ॥

रा० टी०—ननु लीनश्रवणेऽपि रावणात् कुतो न भीतिरित्यत आह—तवेति । तव हेतोः त्वत्प्रयोजनसिद्ध्यर्थं रावणात् मे भयं नास्ति अत एव यत्कृते यदर्थंससंभ्रान्तो रावणो निष्क्रान्तस्तत्सर्वमभिनिष्क्रम्य बहिर्गत्वा मे मम विदितम् । सार्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो० टी०—तदानीमसन्निहितया त्वया कथं श्रुतमित्यत्राह—लीनयेति । लीनया च्छन्नया गगने क्वचित्तरुस्कन्धे गहन इति पाठे आहत इत्यर्थः । शून्ये निर्जने कथं घोराद्रावणाद्भयं त्यक्तं तत्राह—तवेति । तव हेतोः त्वन्निमित्तम् मे जीवितमपि न प्रियम् तत्र हेतुर्विशालाक्षीति तव नयनसौन्दर्यम् पश्यन्त्या मे कथं त्वत्पीडा सोढव्येति भावः । ननु विभीषणभार्या कथं सीतारक्षणे रावणेन नियोगार्हा नियोगे वा कथं तस्याः रावणभयाद्गूढावस्थानम् । उच्यते । विभीषणावस्थानकाले सीतायोगक्षेमपरामर्शायान्तरङ्गभूता सरमा नियुक्ता । तन्निर्गमनादिदानीमन्तरङ्गवार्ताश्रवणे भीतासीदिति न विरोधः नियोगश्च दासीमुखेन अदर्शनं च स्नुषात्वादिति च बोध्यम् । अन्येयं सरमेत्येके ॥ ७ ॥

७ ] ति० टी०—स रावणो यत्कृते यन्निमित्तं संभ्रान्तो निष्क्रान्तस्तदप्यभिनिष्क्रम्य बहिर्गत्वा मया विदितं ज्ञातम् ॥७॥

---

१ रक्षमाणयेति रा.पाठः । २ तत इति गो.पाठः । ३ पांसुलामिति गो.पाठः । ४ सुव्रतेति गो.पाठः । ५ अर्धमेतदधिकं गो.रा.पाठे । ६ प्रत्युक्तमिति गो.पाठः । ७ ते भीरिति रा.पाठः । ८ गगने इति गो.पाठः । ९ जीवितं प्रियमिति गो.पाठः । १० राक्षसाधिप इति गो.पाठः । ११ तच्चेति गो.रा.पाठः ।

न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः । वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥ ८ ॥
न त्वेवं[1] वानरा हन्तुं शक्याः पादपयोधिनः । सुरा देवर्षभेणेव रामेण हि सुरक्षिताः ॥ ९ ॥
दीर्घवृत्तभुजः श्रीमान्महोरस्कः प्रतापवान् । धन्वी संहननोपेतो धर्मात्मा भुवि विश्रुतः ॥ १० ॥
विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च । लक्ष्मणेन सह भ्रात्रा कुलीनो नयशास्त्रवित् ॥ ११ ॥
हन्ता परबलौघानामचिन्त्यबलपौरुषः । न हतो राघवः श्रीमान्सीते शत्रुनिबर्हणः ॥ १२ ॥
अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना । इव प्रयुक्ता रौद्रेण माया मायाविना त्वयि ॥ १३ ॥
शोकस्ते विगतः सर्वकल्याणं त्वामुपस्थितम् । ध्रुवं त्वां भजते लक्ष्मीः प्रियं[4] ते भवति शृणु ॥ १४ ॥
उत्तीर्य सागरं रामः सह वानरसेनया । संनिविष्टः समुद्रस्य तीरमासाद्य दक्षिणम् ॥ १५ ॥
दृष्टो मे परिपूर्णार्थः काकुत्स्थः सहलक्ष्मणः । सहितैः सागरान्तस्थैर्बलैस्तिष्ठति रक्षितः ॥ १६ ॥

---

गो० टी०—स इति । मे मया । यत्कृते यन्निमित्तम् । अभिनिष्क्रम्य बहिर्निर्गम्य ॥ ८ ॥

८ ] ति० टी०—तस्य पश्चादपि कथने बाधकाभावेनादौ राममोहं निवर्तयति—न **शक्यमिति** । सौप्तिकं सुप्तिकालयुद्धम् । तत्र हेतुः—विदितात्मनः । जितनिद्रालस्यादिदोषचित्तस्येत्यर्थः पुरुषव्याघ्रे सर्वातिशायिशौर्यवति, अतएव तस्मिन्वधो नोपपद्यते ॥ ८ ॥

रा० टी०—ननु रामस्य तथात्वे किं वृत्तान्तज्ञानेनेत्यत आह—**नेत्यादिभिः** । विदितात्मनः ज्ञातराक्षसस्वभावस्य रामस्य सौप्तिकं सुप्तिकालकं युद्धं कर्तुं न शक्यम् अत एव तस्मिन् रामे वधोऽपि नैवोपपद्यते ॥ ८ ॥

गो० टी०—मा भूदस्मदवगमः उपपत्तिश्च तत्र नास्तीत्याह—न **शक्यमिति** । सौप्तिकं सुप्तौ मरणम् न केवलमशक्यत्वं रामस्य पुरुषधौरेयतया वधयोग्यतापि नास्तीत्याह—**वधश्चेति** ॥ ९ ॥

९-१२ ] ति० टी०—सर्ववानरहननमप्यशक्यमित्याह—**न त्वेवमिति** ॥ ९ ॥ १२ ॥

रा० टी०—**नत्विति** । देवर्षभेण विष्णुना सुरक्षिताः सुरा इव रामेण सुरक्षिताः वानराः हन्तुं नैव शक्याः ॥ ९ ॥

गो० टी०—एवं वानरवधोऽप्यनुपपन्न इत्याह—**न त्विति** । स्वबलाद्रामबलाच्च न वानरा हन्तुं शक्या इत्यर्थः ॥ १० ॥

रा० टी०—**दीर्घेति** । दीर्घवृत्तभुजत्वादिविशिष्टः आत्मनः परस्य च रक्षिता अत एव परबलौघानां हन्ता लक्ष्मणेन सह राघवो न हतः । अर्धषट्कमेकान्वयि ॥ १०-१२ ॥

गो० टी०—न केवलं बलादिना सौभाग्यलक्षणादिभिरप्यतदर्हो राम इत्याह श्लोकत्रयेण—**दीर्घेत्यादिना** । श्रीमान् कान्तिमान् प्रतापवान् तेजिष्ठः संहननोपेतः शोभनावयवसंस्थानः । लक्ष्मणेन सह रक्षितेत्यन्वयः । श्रीमान् विजयश्रीमान् ॥ ११ ॥ १३ ॥

१३ ] ति० टी०—ननु प्रत्यक्षतो हते कथं न हतस्तत्राह—**अयुक्तेति** । अयुक्तानुचिता बुद्धिः कृत्यं च यस्य तेन रौद्रेण रावणेन ॥ १३ ॥

रा० टी०—ननु हतिमन्तरा कथमेवं शिरःप्रभृतिदर्शनमित्यत आह—**अयुक्तेति** । न युक्ते योग्ये बुद्धिकृत्ये यस्य अत एव सर्वभूतविरोधिना रावणेन त्वयि माया प्रयुक्ता ॥ १३ ॥

गो० टी०—कथं तर्हि शिरःप्रभृतिप्रापणं तत्राह—**अयुक्तेति** । अयुक्तबुद्धिकृत्येन अनर्हबुद्धिव्यापारेण मायाशिरोदर्शनबुद्धेस्तत्कृत्यस्य चात्मलाघवहेतुत्वादिति भावः ॥ १४ ॥

१४-१५ ] ति० टी०—शोको विगतः कल्याणं चोपस्थितम् । कुतस्तत्राह—हे भवति ! ते प्रियं प्रियवचनम् ॥ १४ ॥ १५ ॥

रा० टी०—प्रत्युत्तररावणस्यैव मरणादि भविष्यतीति बोधयन्ती आह—**शोक इत्यादिभिः** । हे भवति ! ते शोको विगतः तत्र हेतुः त्वां कल्याणं मङ्गलमुपस्थितम् अत एव त्वां लक्ष्मीः संपत्तिर्ध्रुवं भजते । ननु कथं सर्वमिदमित्यत आह—ते प्रियं प्रीतिविषयीभूतं वृत्तान्तं शृणु ॥ १४ ॥

गो० टी०—**शोक इति** । भजते भविष्यत्सामीप्ये लट्प्रयोगः । प्रियं प्रियवचनम् ॥ १५ ॥

रा० टी०—वृत्तान्तमेवाह—**उत्तीर्येत्यादिभिः** । सागरमुत्तीर्य संनिविष्टः सह लक्ष्मणो रामो मे मया दृष्टः । सार्धश्लोक एकान्वयी ॥ १५ ॥

गो० टी०—**उत्तीर्येति** । सन्निविष्टः स्थितः ॥ १६ ॥

१६ ] ति० टी०—दृष्टो मे । मया दृष्ट इत्यर्थः । स्वगृहवर्त्यूर्ध्वगृहमारुह्येति शेषः । खेचरीत्वाद्बहिर्निर्गत्येति शेषो वा । सागरान्तस्थैः सागरतीरस्थैः । सहितैः संगतैर्बलैः सह स्वमहिम्ना रक्षितस्तिष्ठति ॥ १६ ॥

रा० टी०—**स इति** । सागरान्तस्थैर्बलैः सैन्यैः रक्षितः स रामः तिष्ठति अत एव अनेन रावणेन ये प्रेषिताः राक्षसाः तैः राघवस्तीर्णः इत्येवं प्रवृत्तिः वृत्तमिहाहृता । सार्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

गो० टी०—**दृष्ट इति** । सागरान्तस्थैः सागरतीरस्थैः ॥ १७ ॥

---

१ पवेति गो. पाठः । २ विदेति गो. पाठः । ३ सर्वः इति गो. पाठः । ४ प्रीतिकरमिति गो. पाठः ।

अनेन प्रेषिता ये च राक्षसा लघुविक्रमाः । राघवस्तीर्ण इत्येवं प्रवृत्तिस्तैरिहाहृता ॥ १७ ॥
स तां श्रुत्वा विशालाक्षि प्रवृत्तिं राक्षसाधिपः । एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥ १८ ॥
इति ब्रुवाणा सरमा राक्षसी सीतया सह । सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ॥ १९ ॥
दण्डनिर्घातवादिन्याः श्रुत्वा भेर्या महास्वनम् । उवाच सरमा सीतामिदं मधुरभाषिणी ॥ २० ॥
संनाहजननी ह्येषा भैरवा भीरु भेरिका । भेरीनादं च गम्भीरं शृणु तोयदनिःस्वनम् ॥ २१ ॥
कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः । दृश्यन्ते तुरगारूढाः प्रासहस्ताः सहस्रशः ॥ २२ ॥
तत्र तत्र च संनद्धाः संपतन्ति सहस्रशः । आपूर्यन्ते राजमार्गाः सैन्यैरद्भुतदर्शनैः ॥ २३ ॥
वेगवद्भिर्नदद्भिश्च तोयौघैरिव सागरः । शस्त्राणां च प्रसन्नानां चर्मणां वर्मणां तथा ॥ २४ ॥
रथवाजिगजानां च राक्षसेन्द्रानुयायिनाम् । संभ्रमो राक्षसामेष हृषितानां तरस्विनाम् ॥
प्रभां विसृजतां पश्य नानावर्णसमुत्थिताम् ॥ ॥ २५ ॥

---

१७ ] ति० टी०–अथ रावणस्य निष्क्रमहेतुमाह—अनेनेति । प्रेषितास्तै राघवस्तीर्ण इति प्रवृत्तिर्वार्तेहाहृता ॥ १७ ॥

गो० टी०–अनेनेति । तीर्णः तीर्णवान् । प्रवृत्तिर्वार्ता १८

१८ ] ति० टी०–तां प्रवृत्तिं राघवस्य सबलोत्तरणप्रवृत्तिम् इतो निर्गत्येति शेषः मन्त्रयते विचारयति ॥ १८ ॥

रा० टी०–स इति । तां राघवागमनविषयिणीं प्रवृत्तिं श्रुत्वा रावणो मन्त्रयते ॥ १८ ॥

गो० टी०–स इति । एष मन्त्रयत इति सान्निध्यद्योतनाय ॥ १९ ॥

१९–२० ] ति० टी०–शब्दं सिंहनादम् ॥ १९ ॥ २० ॥

रा० टी०–इतीति । सीतया सह इति ब्रुवाणा सरमा सर्वोद्योगेनोपलक्षितानां सैन्यानां शब्दं शुश्राव ॥ १९ ॥

गो० टी०–इतीति । सीतया सह शुश्रावेत्यन्वयः सर्वोद्योगेन सर्वप्रयत्नेन जनितमिति शेषः शब्दं सिंहनादम् ॥ २० ॥

रा० टी०–दण्डेति । दण्डनिर्घातेन वादिन्याः शब्दवत्याः भेर्याः महास्वनं श्रुत्वा सरमा सीतामुवाच ॥ २० ॥

गो० टी०–दण्डेति । दण्डनिर्घातवादिन्याः दण्डाहत्या शब्दायमानायाः ॥ २१ ॥

२१ ] ति० टी०–संनाहो युद्धाय संनहनम् भेरीनादं शृणु रामबले युद्धाय संनाहकमिति शेषः ॥ २१ ॥

रा० टी०–तदाकारमाह–संनाहेत्यादिभिः । संनाहजननी युद्धोद्योगज्ञापकशब्दोत्पादिका भेरिका वर्तते इति शेषः अत एव तोयदनिःस्वनं तोयदनादसदृशं भेरीनादं शृणु ॥ २१ ॥

गो० टी०–सन्नाहेति । भेरिका ताड्यत इति शेषः तोयदनिस्वनं तोयदनिःस्वनतुल्यम् ॥ २२ ॥

२२–२३ ] ति० टी०–युज्यन्ते रथेनेति शेषः ॥२२-२३॥

रा० टी०–कल्प्यन्ते इति । सहस्रशः मत्तमातङ्गाः कल्प्यन्ते गमनार्थं रचनाविशेषैर्युज्यन्ते इत्यर्थः रथवाजिनो युज्यन्तेरथेष्विति शेषः तुरगारूढाः दृश्यन्ते अत एव सन्नद्धाः सन्तः तत्र तत्र नियोजितप्रतिस्थाने संपतन्ति । सार्धश्लोकः संमिलितान्वयी ॥ २२ ॥

गो० टी०–कल्प्यन्त इति । कल्प्यन्ते आकल्प्यन्ते अलङ्क्रियन्त इत्यर्थः । युज्यन्ते रथवाजिनः रथेषु वाजिनो युज्यन्त इत्यर्थः । रथेत्यविभक्तिकनिर्देशो वा हृष्यन्ते हर्षव्यापारं कुर्वन्ति ॥ २३ ॥

रा० टी०–आपूर्यन्त इति । तोयौघैः सागर इव सैन्यैः राजमार्गाः आपूर्यन्ते ॥ २३ ॥

गो० टी०–तत्र तत्रेति । सार्धश्लोकः । संपतन्ति सङ्गीभवन्ति । सैन्यैः सेनासमवेतरथगजतुरगपदातिभिः अद्भुतदर्शनैः अलंकारविशेषैरिति शेषः वेगवद्भिर्नदद्भिश्चेति पाठः॥२४॥

२४ ] ति० टी०–प्रसन्नानां शाणोल्लेखननिर्मलानाम् चर्म फलकम् वर्म कवचम् ॥ २४ ॥

२५ ] ति० टी०–नानावर्णैर्नीलपीतादिभिः समुत्थितां प्रभां विसृजतां चर्मादीनां प्रभां पश्येत्यावृत्त्यान्वयः ॥ २५ ॥

रा० टी०–शस्त्राणामिति । प्रसन्नानां संस्कृतत्वेन निर्मलानाम् अत एव नानावर्णसमुत्थितां घर्मे वनं निदहतः विभावसोः रूपमिव प्रभां विसृजतां शस्त्रादीनां राक्षसेन्द्रानुयायिनां रक्षसां च एष प्रदृश्यमानः सम्भ्रम उद्वेगोऽस्तीति शेषः । सार्धश्लोकद्वयमेकान्वयि ॥ २४ ॥ २६ ॥

गो० टी०–शस्त्राणामित्यादिश्लोकद्वयम् ॥ प्रसन्नानां निर्मलानाम् । चर्मणां फलकानाम् । भूषितानाम् अत तव प्रभां विसृजताम् उत्पादयताम् उत्थिताम् ऊर्ध्वं प्रसृताम् रूपं तेजः नानौषधीवनदाहेन नानावर्णत्वं सिद्धम् । पश्येत्यत्रापि प्रभैव कर्म यद्वा विसृज तामिति च्छेदः । तां प्रसिद्धाम् । प्रभां पश्य । विसृज शोकमिति शेषः ॥ २५ ॥ २६ ॥

रा० टी०–घण्टानामिति । घण्टानां हयानां च निर्घोषं शृणु ॥ २७ ॥

गो० टी०–घण्टानामिति । घण्टानां गजघण्टानाम् ।

---

१ एवेति गो. पाठः । २ हृष्यन्त इति गो. पाठः । ३ पदातय इति गो. पाठः । ४ भूषितानां च रक्षसामिति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ वर्णामिति गो. पाठः ।

[ वनं निर्दहतो घर्मे यथा रूपं विभावसोः । घण्टानां शृणु निर्घोषं रथानां शृणु निःस्वनम् ॥
हयानां हेषमाणानां शृणु तूर्यध्वनिं यथा । उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् ] ॥
संभ्रमो रक्षसामेष तुमुलं लोमहर्षणम् । श्रीस्त्वां भजति शोकघ्नी रक्षसां भयमागतम् ॥ २६ ॥
रामः कमलपत्राक्षो दैत्यानामिव वासवः । अवजित्य जितक्रोधस्तमचिन्त्यपराक्रमः ॥
रावणं समरे हत्वा भर्ता त्वाधिगमिष्यति ॥ ॥ २७ ॥
विक्रमिष्यति रक्षःसु भर्ता ते सहलक्ष्मणः । यथा शत्रुषु शत्रुघ्नो विष्णुना सह वासवः ॥ २८ ॥
आगतस्य हि रामस्य क्षिप्रमङ्कागतां सतीम् । अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥ २९ ॥
अस्राण्यानन्दजानि त्वं वर्तयिष्यसि जानकि । समागम्य परिष्वक्ता तस्योरसि महोरसः ॥ ३० ॥
अचिरान्मोक्ष्यते सीते देवि ते जघनं गताम् । धृतामेकां बहून्मासान्वेणीं रामो महाबलः ॥ ३१ ॥
तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितम् । मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ॥ ३२ ॥

---

रथानां निस्वनं नेमिसंघट्टनजम् हेषम् आणानामिति च्छेदः आङ्पूर्वात् "अण शब्दे" इत्यस्माद्धातोः पचाद्यच् आणानां शब्दायमानानाम् हेषं शब्दम् स्त्रीलिङ्गाभावः आर्षः । निस्वनमिति वा अनुवर्त्यते । तूर्यध्वनिं यथा तूर्यध्वनिमिव ॥ २७ ॥

२६ ] ति० टी०–एतदुत्तरम् ' वनं निर्दहतो घर्मे यथारूपं विभावसोः । घण्टानां शृणु निर्घोषं रथानां नेमिनिःस्वनम् ॥ हयानां हेषमाणानां शृणु तूर्यध्वनिं तथा । उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् ॥' इति श्लोकद्वयं प्रक्षिप्तमिति कतकः । संभ्रम इति । एष संभ्रमो रक्षसामेव, अतो रक्षसां तुमुलं लोमहर्षणं भयमागतं विद्धि अर्थाच्छोकघ्नी श्रीस्त्वां भजतीति विद्धि॥२६॥

रा० टी०–उद्यतेति । उद्यतायुधैर्युक्ता हस्ता येषां तेषां राक्षसेन्द्रानुयायिनां रक्षसामेष संभ्रमः उद्वेगः अत एव लोमहर्षणं तुमुलं शब्दः भवतीति शेषः, अत एव रक्षसां भयमागतम् अत एव शोकघ्नी श्रीः त्वां भजति । सार्धश्लोक एकान्वयी ॥ २८ ॥ २९ ॥

गो० टी०–उद्यतेति । संभ्रमः सन्नाहः तुमुलः सान्द्रः दृश्यत इति शेषः ॥ २८ ॥

गो० टी०–ध्रुवं त्वां भजते लक्ष्मीरित्युपक्रान्तमुपसंहरति—श्रीरिति । शोकघ्नी श्रीः विजयलक्ष्मीः भजति । भविष्यत्सामीप्ये लट्प्रयोगः ॥ २९ ॥

२७ ] ति० टी०–अथ दैत्यानां निकटस्थां लक्ष्मीं यथा वासवो हृतवान्, एवं रामो रावणं समरे हत्वा तव भर्ता त्वामवजित्य शत्रुगृहादवसृच्याधिगमिष्यति ॥ २७ ॥

रा० टी०–राम इति । दैत्यानां दैत्यान् वासव इव रामः रावणं समरे अवजित्य पराभूय हत्वा च त्वा त्वाम् अधिगमिष्यति प्राप्स्यति । सार्धश्लोक एकान्वयी ॥ ३० ॥

गो० टी०–राम इत्यादिसार्धश्लोक एकान्वयः । कमलपत्राक्षः । श्रीर्न त्यजति रक्ताक्षमिति सामुद्रिकोक्तरीत्यावश्यं श्रीरुपतिष्ठति तत्रापि श्रेष्ठे तत्रापि चक्षुषी इति नयनसौभाग्यलक्षणमव्यभिचारीति भावः । न केवलं सौभाग्यलक्षणेन श्रीप्रभावादपीत्याह–अदैत्यानामिति । अदैत्यानां देवानांमध्ये वासव इव स्थितः सर्वश्रेष्ठ इत्यर्थः । अचिन्त्यपराक्रमःएकेन शरेण मरुकान्तारवासिसकलदस्युवारणाद्प्रमेयपराक्रमः तर्हि तादृशः किमिदानीं विलम्बत इत्यत्राह–जितक्रोध इति । रावणस्याभिमुखमनागमनात् क्रोधावकाशमलभमानस्तिष्ठतीति भावः दैत्यानामिति द्वितीयार्थे षष्ठी वा दैत्यान् वासवः इव रावणं समरे हत्वा विनिर्जित्य शत्रुगृहादपनीय त्वामभिगमिष्यतीति योजना ॥ ३० ॥

२८–२९ ] ति० टी०–रक्षःसु विक्रमिष्यति च यथा शत्रुघ्नो वासवो विष्णुनोपेन्द्रेण सह शत्रुषु विक्रान्तवांस्तथा ते भर्ता विक्रमिष्यतीत्यन्वयः ॥ २८ ॥ २९ ॥

रा० टी०–विक्रमिष्यतीति । विष्णुना सहितो वासव इव सह लक्ष्मणस्ते भर्ता शत्रुषु रक्षस्सु विक्रमिष्यति विक्रमं करिष्यति ॥ ३१ ॥

गो० टी०–विक्रमिष्यतीति । विष्णुना उपेन्द्रेण ॥३१॥

रा० टी०–आगतस्येति । शत्रौ रावणे विनिपातिते सति आगतस्य रामस्य अङ्कगतां त्वाम् अहं क्षिप्रं द्रक्ष्यामि ॥३२॥

गो० टी०–एवं शंसन्त्यास्ते किं फलं तत्राह—आगतस्येति । चिरप्रवासादागतस्य दयितादर्शने कोपि विकासो भवेत्स मया द्रष्टव्य इति भावः ॥ ३२ ॥

३० ] ति० टी०–तस्योरस्यस्राणि वर्तयिष्यसीत्यन्वयः३०

रा० टी०–अस्राणीति । महोरसः रामस्य उरसि समागम्य परिष्वक्ता त्वम् आनन्दजानि आनन्देन जनितानि अस्राणि अश्रूणि वर्तयिष्यसि ॥ ३३ ॥

गो० टी०–अश्रूणीति । महोरस इत्यत्र समासान्तविधेरनित्यत्वात् कबभावः । समागम्य परिष्वज्य स्थितस्य तस्योरसि अश्रूणि वर्तयिष्यसीति योजना ॥ ३३ ॥

३१–३२ ] ति० टी०–जघनं गतां जघनदेशं प्राप्तां वेणीमित्यन्वयः ॥ ३१ ॥ ३२ ॥

---

१ श्लोकद्वयमेतदधिकं गो. रा. पाठे । २ तुमुलो लोमहर्षण इति गो. पाठः । ३ विनिर्जित्येति गो. पाठः । ४ त्वामिति गो. पाठः । ५ तेनेति रा. पाठः । ६ अश्रूणीति गो. पाठः । ७ शोभने इति गो. पाठः । ८ परिष्वज्येति गो. पाठः ।

रावणं समरे हत्वा न चिरादेव मैथिलि । त्वया समग्रः प्रियया सुखार्हो लप्स्यते सुखम् ॥ ३३ ॥
सभाजिता त्वं रामेण मोदिष्यसि महात्मना । सुवर्षेण समायुक्ता यथा सस्येन मेदिनी ॥ ३४ ॥
गिरिवरमभितो विवर्तमानो हय इव मण्डलमाशु यः करोति ।
तमिह शरणमभ्युपैहि देवि दिवसकरं प्रभवो ह्ययं प्रजानाम् ॥ ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ।

सरमा सीता संवादः ।

अथ तां जातसंतापां तेन वाक्येन मोदिताम् । सरमा ह्लादयामास महीं दग्धामिवाम्भसा ॥ १ ॥

रा० टी०—अचिरादिति । जघनं गतां जघनपर्यन्तावलम्बिनीं बहून् मासान् धृताम् एकां वेणीं रामो चिरान्मोक्ष्यते ३४

गो० टी०—अचिरादिति । जघनं गतां नितम्बावलम्बिनीम् बहून् मासान् धृतां बहुमासैर्धृताम् अत्यन्तसंयोगे द्वितीया । रामवियोगात्प्रभृति बद्धामेतां वेणीम् मोक्ष्यते मोक्षयिष्यति । आर्षमात्मनेपदम् ॥ ३४ ॥

रा० टी०—तस्येति । तस्य रामस्य मुखं दृष्ट्वा पन्नगी निर्मोकं त्वचमिव शोकजं वारि मोक्ष्यसे त्यक्ष्यसे ॥ ३५ ॥

गो० टी०—तस्येति । निर्मोकं त्वचम् निर्मोकदृष्टान्तेन शोकाश्रुणो निःशेषनिवृत्तिरुच्यते । अश्रुमूलं शोकं त्यक्ष्यसीति भावः ॥ ३५ ॥

३३-३४ ] ति० टी०—समग्रः सहितः ॥ ३३ ॥ ३४ ॥

रा० टी०—रावणमिति । त्वया सह मग्रः सरामः सुखं लप्स्यते ॥ ३६ ॥

गो० टी०—रावणमिति । समग्रः संपूर्णमनोरथः ॥ ३६ ॥

रा० टी०—सभाजितेति । सस्येन मेदिनी भूरिव रामेण सभाजिता सत्कृता त्वं मोदिष्यसि मोदिष्यसे ॥ ३७ ॥

गो० टी०—समागतेति । सस्येन समायुक्ता मेदिनी सुवर्षेण यथा तथा महात्मना रामेण समायुक्ता त्वं वीर्येण तच्छौर्येण मोदिष्यसि ॥ ३७ ॥

३५ ] ति० टी०—गिरिवरं मेरुमभितो विवर्तमानः परिवर्तमानो हय इव यो मण्डलं मण्डलाकारगतिमाशुकरोति तं दिवसकरं ते कुलदैवतं शरणमभ्युपैहि । हि यतोऽयं प्रजानाम् सुखदुःखहान्योरिति शेषः प्रभवः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रा० टी०—गिरीति । गिरिवरं सुमेरुमभिवर्तमानो यो हय इव मण्डलं तदाकारगमनं करोति तं शरणं रक्षकं दिवसकरमभ्युपैहि तत्र हेतुः अयं रविः प्रजानां सुखदुःखयोरिति शेषः प्रभवः कारणम् ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

गो० टी०—अथानिष्टनिवारणाय इष्टप्राप्तये च सूर्यनमस्कारं विदधाति—गिरिवरमिति । यः देवः गिरिवरं मेरुम् अभितः परितः "अभितः परित०" इत्यादिना द्वितीया । अनुवर्तमानः आनुकूल्येन चरन् प्रादक्षिण्येन चरन्नित्यर्थः । हयोऽश्व इव मण्डलं मण्डलगतिम् आशु त्रिंशन्मुहूर्तेनैव करोति । देवं द्योतमानम् दिवसकरं शरणं रक्षणम् । अभ्युपेहि गच्छ । वरणीयत्वे हेतुमाह—प्रभव इति । अयं दिवसकरः प्रजानां देवतिर्यङ्मनुष्यस्थावराणाम् प्रभवः कारणम् । हिः प्रसिद्धौ वर्षादिद्वारा जगदाप्यायक इत्यर्थः । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्युक्तेः ॥ न पुनरत्र जगत्कारणत्वोक्तिः । अश्वोपमानेन स्वातिरिक्तपुरुषप्रेर्यत्वाभिधानात् । भीषास्माद्वातः पवते, भीषोदेति सूर्य इति श्रुतेः ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

१ ] ति० टी०—तेन वाक्येन रावणवाक्येन अम्भसा मेघपङ्क्तिरिवेति शेषः ॥ १ ॥

रा० टी०—सीतां प्रति पुनः सरमोक्तिमाह—अथेत्यादिभिः । तेन रावणोक्तेन वाक्येन मोहिताम् अत एव जातसंतापां सीतां सरमा अम्भसा दग्धां महीमिव आल्हादयामास ॥ १ ॥

गो० टी०—अथ सरमया रावणाशयपरिज्ञानं चतुस्त्रिंशे—अथ तामित्यादिभिः । अथेति प्रथमश्लोकेन पूर्वसर्गोक्तानुवादः तेन वाक्येन ह्लादयामासेत्यन्वयः । यद्वा तेन वाक्येन रावणवाक्येन ॥ १ ॥

१ समागतेति गो. पाठः । २ वीर्येणेति गो. पाठः । ३ मैथिलीति गो. पाठः । ४ ऽन्वेति गो. पाठः । ५ उपेहीति गो. पाठः । ६ मोहितामिति क. पाठः । ७ पृथिवीं दीप्तिवेति गो. पाठः ।

ततस्तस्या हितं सख्याश्चिकीर्षन्ती सखी वचः । उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥ २ ॥
उत्सहेयमहं गत्वा त्वद्वाक्यमसितेक्षणे । निवेद्य कुशलं रामे प्रतिच्छन्ना निवर्तितुम् ॥ ३ ॥
नहि मे क्रममाणाया निरालम्बे विहायसि । समर्थो गतिमन्वेतुं पवनो गरुडोऽपि वा ॥ ४ ॥
एवं ब्रुवाणां तां सीता सरमामिदमब्रवीत् । मधुरं श्लक्ष्णया वाचा पूर्वशोकाभिपन्नया ॥ ५ ॥
समर्था गगनं गन्तुमपि चै त्वं रसातलम् । अवगच्छाद्य कैर्तव्यं कर्तव्यं ते मदन्तरे ॥ ६ ॥
मत्प्रियं यदि कर्तव्यं यदि बुद्धिः स्थिरा तव । ज्ञातुमिच्छामि तं गत्वा किं करोतीति रावणः ॥ ७ ॥
स हि मायाबलः क्रूरो रावणः शत्रुरावणः । मां मोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ८ ॥
तर्जापयति मां नित्यं भर्त्सापयति चासकृत् । राक्षसीभिः सुघोराभिर्यो मां रैक्षति नित्यशः ॥ ९ ॥

---

२ ] ति० टी०—चिकीर्षन्ती कर्तुमिच्छन्ती सखी सरमा वच उवाचेत्यन्वयः ॥ २ ॥

रा० टी०—आल्हादनप्रकारमाह—तत इति । सख्या हितं चिकिर्षन्ती स्मितपूर्वाभिभाषिणी सरमा उवाच ॥ २ ॥

गो० टी०—तत इति । सख्याः सीतायाः सखी सरमा ॥२॥

३ ] ति० टी०—अहं प्रतिच्छन्ना गत्वा कुशलं कुशलावेदकं त्वद्वाक्यं रामे निवेद्य पुनः प्रतिच्छन्ना निवर्तितुमुत्सहेयमित्युवाच ॥ ३ ॥

रा० टी०—तत्प्रकारमाह—उत्सहेयमिति । प्रतिच्छन्नाहं तत् रावणोक्तं वाक्यं त्वां प्रति वचनं कुशलं तव मङ्गलं च रामे निवेद्य निवर्तितुमुत्सहेयम् ॥ ३ ॥

गो० टी०—उत्सहेयमिति । कुशलं कुशलप्रतिपादकम् त्वद्वाक्यमित्यन्वयः निवर्तितुमुत्सहेयम् समर्थेत्यर्थः ॥ ३ ॥

४ ] ति० टी०—स्वस्यास्तथा सामर्थ्यं दर्शयति—नहीति ॥ ४ ॥

रा० टी०—नहीति । निरालम्बे विहायसि आकाशे क्रममाणायाः मे गतिमन्वेतुं पवनो गरुडो वा न समर्थः ॥ ४ ॥

गो० टी०—बहुदूरं कथं गन्तुमर्हसीत्यत्राह—नहीति । क्रममाणायाः गच्छन्त्याः ॥ ४ ॥

५ ] ति० टी०—तां सरमामित्यन्वयः । एवं ब्रुवाणां दूतत्वेच्छुम् । पूर्वशोकाभिपन्नयाश्वासमात्पूर्वं जातेन शोकेनेषद्युक्तया ॥ ५ ॥

रा० टी०—एवमिति । एवं ब्रुवाणां सरमां पूर्वशोकाभिपन्नया सरमावचनहेतुकपूर्वप्रादुर्भूतशोकनिष्टत्तेर्योतिकया वाचा सीताऽब्रवीत् ॥ ५ ॥

गो० टी०—एवमिति । मधुरं मधुरार्थकम् । श्लक्ष्णयेति वाङ्माधुर्योक्तिः । पूर्वं शोकाभिपन्नया संप्रति हृष्टयेत्यर्थः ॥५॥

६ ] ति० टी०—अथ सीता शूर्पणखाया इवास्या अपि रामसमीपगमनमनुचितमिति विचार्य तत्सामर्थ्यश्लाघापूर्वं तादुचितकृत्ये नियोजयति—समर्थेति । 'अवगच्छाद्य कर्तव्यम्' इति पाङ्कः पाठ इति कनकः । अन्तरशब्दस्तादर्थ्ये मदन्तरे मदर्थे यत्कर्तव्यं त्वया कर्तुं योग्यं तादृशं कर्तव्यं कृत्यं मयोच्यमानमवगच्छ ॥ ६ ॥

रा० टी०—तदाकारमाह—समर्थेति । गगनं रसातलं च गन्तुं त्वं समर्थेत्यवगच्छामि जानामि मदन्तरे मद्विषये अन्यैरकर्तव्यमपि ते कर्तव्यमित्यपि अवगच्छामि ॥ ६ ॥

गो० टी०—संदेशमाहरिष्यामीति वदन्तीं सरमां प्रति न गन्तव्यमित्युक्ते सख्यहानिः, रामं प्रति प्रेषणं तत्तस्य सदृशं भवेदिति स्थितायाः सीताया न युक्तम् अतो व्याजेन निपुणं परिहरति—समर्थेति । मदन्तरे मद्विषये अन्यैरकर्तव्यं कर्तुमशक्यं त्वया कर्तव्यं कर्तुं शक्यमित्यवगच्छामि । यद्वा मद्विषये ते कर्तव्यम् अवश्यकरणीयं जानामीत्यर्थः ॥ ६ ॥

७ ] ति० टी०—मत्प्रियं कर्तव्यमिति यदि तव बुद्धिः स्थिरास्ति तदोच्यत इति शेषः । स्थिरैव निःशङ्कं ब्रूहीत्युक्ता चाह—ज्ञातुमिति । इतो गत्वा रावणः किं करोतीति रावणं ज्ञातुमिच्छामि ॥ ७ ॥

रा० टी०—ननु स्वाभिप्रेतं वदेत्यत आह—मदिति । रावणः किंकरोतीति ज्ञातुमहमिच्छामि अतः यदि मत्प्रियन्त्वया कर्तव्यं यदि च तव बुद्धिः स्थिरा तदा तं रावणं गत्वा रावणः किं करोतीति ज्ञापयेति ॥ ७ ॥

गो० टी०—मत्प्रियमिति । रावणं गत्वा स किं करोतीति ज्ञातुमिच्छामि त्वत्कर्तृकं रावणज्ञानमिच्छामीत्यर्थः ॥ ७ ॥

८ ] ति० टी०—पीतमात्रा सद्यः पीता ॥ ८ ॥

रा० टी०—तज्ज्ञाने प्रयोजनमाह—स इति । दुष्टात्मा रावणः पीतमात्रा वारुणीव मां मोहयति ॥ ८ ॥

गो० टी०—तस्य ज्ञानस्य किं प्रयोजनमित्यत्राह—स हीति । पीतमात्रा सद्यः पीता । वारुणी मद्यम् ॥ ८ ॥

९ ] ति० टी०—तर्जापयतीति । तर्जभर्त्साभ्याम् 'तत्करोति—' इति णिचि पुगार्षः । अवाचिकी भीषिका तर्जनम्, वाचिकी तु सा भर्त्सनम् राक्षसीभिरिति द्वारकथनम् रक्षत्यवरुद्धयते ॥ ९ ॥

रा० टी०—तर्जापयतीति यो रावणः राक्षसीभिः तर्जा-

---

१ पुनरिति गो. पाठः । २ पूर्वमिति गो. पाठः । ३ वेति गो. पाठः । ४ अकर्तव्यमिति गो. पाठः । ५ या इति गो. पाठः । ६ रक्षन्तीति गो. पाठः ।

उद्विग्ना शङ्किता चास्मि न स्वस्थं च मनो मम । तद्भयाच्चाहमुद्विग्ना अशोकवनिकां गता ॥ १० ॥
यदि नाम कथा तस्य निश्चितं वापि यद्भवेत् । निवेदयेथाः सर्वं तत्परो[1] मे स्यादनुग्रहः ॥ ११ ॥
सा त्वेवं[2] ब्रुवतीं सीतां सरमा मृदुभाषिणी[3] । उवाच वचनं तस्याः स्पृशन्ती बाष्पविक्लवम् ॥ १२ ॥
एष ते यद्यभिप्रायस्तस्माद्गच्छामि जानकि । गृह्य शत्रोरभिप्रायमुपावर्तामि[4] मैथिलि ॥ १३ ॥
एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः । शुश्राव कथितं तस्य रावणस्य समन्त्रिणः ॥ १४ ॥
सा श्रुत्वा निश्चयं तस्य निश्चयज्ञा दुरात्मनः । पुनरेवागमत्क्षिप्रमशोकवनिकां शुभाम्[5] ॥ १५ ॥
सा प्रविष्टा ततस्तत्र[6] ददर्श जनकात्मजाम् । प्रतीक्षमाणां स्वामेव भ्रष्टपद्मामिव श्रियम् ॥ १६ ॥
तां तु सीता पुनः प्राप्तां सरमां प्रियभाषिणीम्[7] । परिष्वज्य च सुस्निग्धं ददौ च स्वयमासनम् ॥ १७ ॥
इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः । क्रूरस्य निश्चयं तस्य रावणस्य दुरात्मनः ॥ १८ ॥

---

पयति विविधचेष्टाभिर्भीषयति भर्त्सयति अनेकदुर्वचनैः प्रकम्पयति रक्षति च तद्भयात् अशोकवनिकां गताप्यहम् उद्विग्ना शङ्किताचास्मि अत एव मम मनो न स्वस्थं तद्भयादेवउद्विग्ना पुनरपीति शेषः तर्जापयति भर्त्सापयतीत्यत्र तत्करोतीति णिच् संज्ञापूर्वकविधेरनित्यत्वादिलोपाभावे वृद्धौ च पुक् । श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०–तर्जापयतीति । तर्जापयति तर्जनं कारयति भर्त्सापयति भर्त्सनं कारयति । आत्वपुगागमावार्षौ । या राक्षस्यो मां रक्षन्ति ताभिस्तर्जापयतीति संबन्धः नासाग्रे अङ्गुलिन्यासनयनभ्रामणदन्तदर्शनप्रभृतिमुखचेष्टाभिर्भीजननं तर्जनम् । हनिष्यति दहिष्यतीत्यादि वाचा भीजननं भर्त्सनम् ॥ ९ ॥

१० ] ति० टी०–उद्विग्नेति । कथमुद्विग्नेत्यत्राह—तद्भयादिति । अशोकवनिकां गताप्यहं तद्भयादुद्विग्नास्मि ॥१०॥

गो० टी०–उद्विग्नेति । कुत उद्विग्नेत्यत्राह—तद्भयाच्चेति । कुतः शङ्कितेत्यत्राह—अशोकवनिकां गतेति ॥ १०॥

११ ] ति० टी०–कथा मद्विमोक्षविषया कथा यदि नाम भवेत्, अपि वा तदभावविषया स्यात् अनयोर्यन्निश्चितं तत्सर्वं मे निवेदयेथाः तदा मे वरः श्रेष्ठोऽनुग्रहः स्यात् । एतदनुकूलमेवोत्तरं वक्ष्यति—न त्वामुत्सहते मोक्तुमिति ॥ ११ ॥

रा० टी०–यदीति । यदि तस्य रावणस्य कथा मद्विमोकाविमोकान्यतरविषयिणी वार्ता भवेत् वापि तत्र यन्निश्चितं भवेत् तत्र सर्वं मे मह्यं निवेदयेथाः अयं वरोऽनुग्रहः स्यात् तवेति शेषः ॥ ११ ॥

गो० टी०–यदि नामेति । तस्य रावणस्य यदि नाम कथा यदि वार्तास्ति यच्च तस्य निश्चितम् अध्यवसाय इति यावत् । तत्सर्वं निवेदयेथाः । ततश्च मे परोऽनुग्रहः उपकारः कृतः स्यात् । याहि नामेति पाठः सम्यक् ॥ ११ ॥

१२ ] ति० टी०–बाष्पविक्लवं तस्या वदनं स्पृशन्ती परिमार्जयन्ती ॥ १२ ॥

रा० टी०–सेति । बाष्पविक्लवम् अश्रुव्याप्तं तस्याः सीतायाः वदनं स्पृशन्ती परिमृजन्तीत्यर्थः. सरमा एवं ब्रुवतीं सीतामुवाच ॥ १२ ॥

गो० टी०–सा त्विति । वल्गु सुन्दरं यथा तथा भाषितुं शीलमस्या अस्तीति वल्गुभाषिणी बाष्पविक्लवं बाष्पव्याकुलम् वदनं स्पृशन्ती परिमृजन्ती ॥ १२ ॥

१३-१५ ] ति० टी०–उपावर्तामि परावृत्यागच्छामि १३-१५

रा० टी०–एष इति । यदि ते अभिप्राय एषः तर्हि शत्रोरभिप्रायं गृह्य गृहीत्वा उपावर्तामि ॥ १३ ॥

गो० टी०–एष त इति । तदा गच्छामीति पाठः गृह्य ज्ञात्वा । उपावृत्तां च पुनरागतामेव पश्य तत्र सन्देहो नास्तीत्यर्थः ॥ १३ ॥

रा० टी०–एवमिति । एवमुक्त्वा ततस्तस्मात्स्थानात् रक्षसस्तस्य रावणस्य समीपं गत्वा समन्त्रिणो रावणस्य कथितं शुश्राव ॥ १४ ॥

गो० टी०–एवमिति । स्पष्टः ॥ १४ ॥

रा० टी०–सेति । सा सरमा तस्य रावणस्य निश्चयं श्रुत्वा अशोकवनिकां पुनरागमत् ॥ १५ ॥

गो० टी०–सेति । स्पष्टः ॥ १५ ॥

१६-१८ ] ति० टी०–स्वामेव प्रतीक्षमाणाम् कदागमिष्यति सरमेति तदागमं प्रतीक्षमाणामित्यर्थः ॥ १६–१८ ॥

रा० टी०–सेति । सा सरमा स्वामेव प्रतीक्षमाणां भ्रष्टपद्मां श्रियमिव जनकात्मजां ददर्श ॥ १६ ॥

गो० टी०–सेति । स्वामेव आत्मानमेव । सरमामित्यर्थः । आत्मवाचिनः स्वशब्दस्य आवन्तत्वमार्षम् । भ्रष्टपद्मां पद्मासनहीनामित्यर्थः ॥ १६ ॥

रा० टी०–तामिति । पुनः प्राप्तां सरमां सीता परिष्वज्य स्वयमासनं ददौ ॥ १७ ॥

गो० टी०–तामिति । सुस्निग्धं स्नेहयुक्तं यथा तथा ॥१७॥

रा० टी०–इहेति । सुखमिहासीना त्वं रावणस्य निश्चयं तत्वत आख्याहि ॥ १८ ॥

---

१ पर इति गो. पाठः । २ त्वेवमार्तां गो. पाठः । ३ वल्गुवाचिनि गो. पाठः । ४ वृत्तां च पश्य मामिति गो. पाठः । ५ तदेति गो. पाठः । ६ पुनरिति गो. पाठः ।

एवमुक्ता तु सरमा सीतया वेपमानया। कथितं सर्वमाचष्ट रावणस्य समन्त्रिणः ॥ १९ ॥
जनन्या राक्षसेन्द्रो वै त्वन्मोक्षार्थं बृहद्वचः। अतिस्निग्धेन वैदेहि मन्त्रिवृद्धेन चोदितः ॥ २० ॥
दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली। निदर्शनं ते पर्याप्तं जनस्थाने यदद्भुतम् ॥ २१ ॥
लङ्घनं च समुद्रस्य दर्शनं च हनूमतः। वधं च रक्षसां युद्धे कः कुर्यान्मानुषो युधि ॥ २२ ॥
एवं स मन्त्रिवृद्धैश्च मात्रा च बहु बोधितः। न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ॥ २३ ॥
नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति मैथिलि। सामात्यस्य नृशंसस्य निश्चयो ह्येष वर्तते ॥ २४ ॥
तदेषा सुस्थिरा बुद्धिर्मृत्युलोभादुपस्थिता। भयान्न शक्तस्त्वां मोक्तुमनिरस्तः स संयुगे ॥ २५ ॥

---

गो० टी०–इहेति। सुखमासीनेत्यन्वयः ॥ १८ ॥

१९ ] ति० टी०–समन्त्रिणो रावणस्य सर्वं कथितं परम्परालापमाचष्ट ॥ १९ ॥

रा० टी०–एवमिति। सीतया एवमुक्ता सरमा रावणस्य सर्वं कथितमाचष्ट अकथयत ॥ १९ ॥

गो० टी०–एवमिति। वेपमानया किंवा भयं वक्ष्यतीति कम्पमानया ॥ १९ ॥

२० ] ति० टी०–जनन्या मात्रातिस्निग्धेन वृद्धेन च रावणो बृहद्वचः सर्वथा हितत्वाद्वचसो बृहत्त्वम्। तदुक्त्वा चोदितो बोधितः ॥ २० ॥

रा० टी०–तत्कथितमेवाह–जनन्येत्यादिभिः। जनन्या रावणमात्रा अतिस्निग्धेन रावणविषयकातिस्नेहयुक्तेन मन्त्रिवृद्धेन च त्वन्मोक्षार्थं बृहत् अत्युत्तमं वचः राक्षसेन्द्र उदितः कथितः ॥ २० ॥

गो० टी०–जनन्येति। जनन्या कैकसीनाम्न्या अविद्धेन अविद्धाख्येन मन्त्रिवृद्धेन च राक्षसेन्द्रस्त्वन्मोक्षार्थं बृहद्वचनं बोधितः ॥ २० ॥

२१ ] ति० टी०–तद्वाक्यमाह–दीयतामिति। सत्कारपूर्वं दीयतामित्यर्थः। निदर्शनम् तत्पराक्रमविषय इति शेषः। जनस्थानेऽद्भुतं खरादिवधरूपं यत्कृतं तदेव पर्याप्तं प्रमाणान्तरानपेक्षं निदर्शनम्। तत्पराक्रमस्येत्यर्थः ॥ २१ ॥

रा० टी०–तद्वचनाकारमाह–दीयतामिति। यद्यस्मा द्धेतोः निदर्शनं तत्पराक्रमनिश्चयात्मकनिखिलराक्षसध्वंसरूपकारणं जनस्थाने त्वया प्राप्तम्। अतः अभिसत्कृत्य मैथिली दीयताम् ॥ २१ ॥

गो० टी०–तदेव वचनं दर्शयति–दीयतामिति। जनस्थाने यदद्भुतं खरवधादिकं कृतं तदेव पर्याप्तं प्रमाणान्तरनिरपेक्षम् निदर्शनं दृष्टान्तः। करिष्यमाणस्य रामपराक्रमस्येति शेषः २१

२२ ] ति० टी०–किं च रामानुचरो हनूमानेव सर्वराक्षसजयसमर्थ इत्याह–लङ्घनं चेति। दर्शनम् सीताया इति शेषः। मानुषः पुरुषः तस्माद्धनूमान्रामो वानरो मनुष्यो वा न, अपि तु देवावतार इति भावः ॥ २२ ॥

रा० टी०–ननु मनुष्यस्य रामस्य मम पराभवे कथं शक्तिरियत आह–लङ्घनमिति। समुद्रस्य लङ्घनं हनूमतो दर्शनं सीतादर्शनोद्देश्यकप्रेरणं च रक्षसां वधं च को मानुषः कुर्यात् न कोऽपीत्यर्थः, एतेनायं विलक्षणो मानुष इति सूचितम् ॥ २२ ॥

गो० टी०–तिष्ठतु रामः तद्भृत्यो हनुमानेव सर्वान् राक्षसान् जेतुं समर्थ इत्याशयेन तत्पराक्रमं वर्णयति–लङ्घनमिति। दर्शनं सीतादर्शनम् मानुषः मनुष्यसंबन्धी पुरुषः कः कुर्यात्। "तस्येदम्" इत्यण्। स्वदृतमुखेनानेककार्यकारी रामो देव एवेति भावः ॥ २२ ॥

२३ ] ति० टी०–बहुबोधितो बहुप्रकारं बोधितः। अर्थपर उत्तरोत्तरमर्थार्जनतत्परः परमलुब्ध इत्यर्थः ॥ २३ ॥

रा० टी०–एवमिति। एवं बहुबोधितोऽपि रावणः अर्थपरो लुब्धः अर्थं धनमिव त्वां मोक्तुं नोत्सहते ॥ २३ ॥

गो० टी०–एवमिति। अविद्धेन तन्मात्रा मन्त्रिवृद्धैरिति पूजायां बहुवचनम्। बह्विति क्रियाविशेषणम् ॥ २३ ॥

२४ ] ति० टी०–युद्धेऽमृतो मरणम् प्राप्तः। ततः प्राक्त्वां मोक्तुं त्यक्तुं नोत्सहति। हि प्रसिद्धम्। तस्य सामात्यस्यैष निश्चयो वर्तते ॥ २४ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–नेति। युद्धे अमृतमरणरहितः सन् रावणस्त्वां मोक्तुं नोत्सहति इत्येष एव नृशंसस्य रावणस्य निश्चयो वर्तते ॥ २४ ॥

गो० टी०–नोत्सहतीति। हि यस्मात्सामात्यस्य एष निश्चयो वर्तते इति तस्मात् युद्धे अमृतः सन् त्वां मोक्तुं नोत्सहतीति। इतिहेतौ। इति निश्चय इत्यन्वय इत्येके। इति मन्य इत्यपरे। इह मैथिलीति केषुचित्पाठः ॥ २४ ॥

२५ ] ति० टी०–मृत्युलोभान्मृत्युकृतवञ्चनया सर्वेषां राक्षसानामात्मनो रावणस्य च वधेन रामेण युद्धेऽनिरस्तः सन्रामतो मृत्युभयात्त्वां प्राप्य न त्वां मोक्तुं शक्तः नोत्सहत इत्यर्थः ॥ २५ ॥

रा० टी०–तदिति। मृत्युलोभात् महाकालकर्तृकविमोहनाद्धेतोस्तदुक्तेऽर्थे एषां रक्षसां बुद्धिः स्थिरा सती नावस्थिता अत एव संयुगे सर्वेषां रक्षसाम् आत्मनश्च वधेन अतिताडनेन

---

१ अविद्धेन चेति गो. पाठः। २ बोधित इति गो. पाठः। ३ चेति गो. पाठः। ४ मुत्रीति गो. पाठः। ५ अविद्धेनेति गो. पाठः। ६ भाषित इति गो. पाठः। ७ एषा निश्चितेति गो. पाठः। ८ नवस्थितेति रा. पाठः। ९ स्थिति गो. पाठः।

राक्षसानां च सर्वेषामात्मनश्च वधेन हि । निहत्य रावणं संख्ये सर्वथा निशितैः शरैः ॥
प्रतिनेष्यति रामस्त्वामयोध्यामसितेक्षणे ॥ ॥ २६ ॥
एतस्मिन्नन्तरे शब्दो भेरीशङ्खसमाकुलः । श्रुतो वै[१] सर्वसैन्यानां कम्पयन्धरणीतलम् ॥ २७ ॥
श्रुत्वा तु [२]तं वानरसैन्यनादं[३] लङ्कागता राक्षसराजभृत्याः ।
हतौजसो[४] दैन्यपरीतचेष्टाः श्रेयो न पश्यन्ति नृपस्य दोषात्[५] ॥ ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ।

लङ्कायां राक्षसविनाशसूचकानि दुष्टनिमित्तान्युत्पाताश्च भवन्तीति राघवेण सह त्वया संधिरेव कार्यो न विग्रह इति माल्यवतो रावणं प्रत्युक्तिः ॥ १ ॥

तेन शङ्खविमिश्रेण भेरीशब्देन नादिना । उपयाति महाबाहू रामः परपुरंजयः ॥ १ ॥
तं निनादं निशम्याथ रावणो राक्षसेश्वरः । मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २ ॥
अथ तान्सचिवांस्तत्र सर्वानाभाष्य रावणः । सभां संनादयन्सर्वानित्युवाच महाबलः ॥ ३ ॥

---

अनिरस्तः सन् भयात् भयं प्राप्यापि त्वां भोक्तुं न शक्तः सार्धश्लोक एकान्वयी नञआवृत्तिः लुप्ताकारकवस्थितशब्देन नञ्समासो वा ॥ २५ ॥

गो० टी०–एतादृशाध्यवसायस्य किं निमित्तमित्यपेक्षायां मरणलोभ एवेत्याह–तदेवेत्यादिसार्धश्लोकः । तत् तस्येत्यर्थः । राक्षसानामात्मनश्च वधेन अनिरस्तः अनिराकृतः केवलभयात्त्वां मोक्तुं न शक्तः नोत्सहत इत्यर्थः ॥ २५ ॥

२६ ] ति० टी०–तर्हि मम निर्गमोऽसंभवीत्यत आह–निहत्येति ॥ २६ ॥

रा० टी०–ननु मम का गतिर्भविष्यतीत्यत आह–निहत्येति । रामो रावणं निहत्य त्वामयोध्यां प्रति नेष्यति ॥२६॥

गो० टी०–कथं तर्हि मे निर्गमनमित्यत आह–निहत्येति । एतत्सर्वं तव नेत्रसौभाग्यलक्षणादित्यभिप्रायेणाह–असितेक्षण इति ॥ २६ ॥

२७ ] ति० टी०–भेरीशङ्खसमाकुलस्तच्छब्दसमाकुलः सर्वसैन्यानां शब्दः श्रुतः ॥ २७ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे समये भेर्यादिशब्दसमाकुलः सर्वसैन्यानां शब्दः श्रुतः ॥ २७ ॥

गो०टी०–सरमोक्तस्योपश्रुतिनिमित्तं दर्शयन्नेव कथाशेषं दर्शयति–एतस्मिन्निति । अत्र भेर्यादिशब्दो भेर्यादिशब्दपरः वानरसैन्यानामपि भेर्यादिकमस्तीति किष्किन्धाकाण्डे दर्शितम् ॥२७॥

२८ ] ति० टी०–नृपस्य रावणस्य दोषादन्यायाच्छ्रेयो न पश्यन्ति नष्टजीविताशा अभूवन्नित्यर्थः ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०–श्रुत्वेति । लङ्कागताः लङ्कानिवासिनः राक्षसराजभृत्याः वानरसैन्यनादं श्रुत्वा हतौजसः अत एव दैन्यपरीतचेष्टाः दैन्ययुक्तव्यापारयुक्ताः सन्तः नृपस्य रावणस्य दोषात् हेतोः श्रेयः कल्याणं न पश्यन्ति ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०–श्रुत्वेति । श्रेयो न पश्यन्ति नृपस्य दोष इति । रावणस्य दोषे निमित्तभूते जीवनभूतमात्मनः श्रेयो न पश्यन्ति ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

१–२ ] ति० टी०–उपयातिस्म लङ्कामिति शेषः ॥१–२॥

रा० टी०–रावणवृत्तान्तं वर्णयितुमुपक्रमत्राह–तेनेति । तेन अतिप्रभूतेन शब्देनोपलक्षितो रामः उपयाति लङ्कामिति शेषः ॥ १ ॥

गो० टी०–अथ माल्यवदुपदेशः पञ्चत्रिंशे–तेनेति । शङ्खविमिश्रेण शङ्खशब्दविमिश्रेण । उपयाति उपाययौ ॥ १ ॥

रा० टी०–तमिति । रावणः निनादं निशम्य श्रुत्वा मुहूर्तं ध्यानं विचारमास्थाय सचिवानभ्युदैक्षत ॥ २ ॥

गो० टी०–तमिति । ध्यानमास्थाय किं मयेदानीं कर्तव्यमिति ध्यानं कृत्वेत्यर्थः ॥ २ ॥

३ ] ति० टी०–आभाष्यामन्त्र्य ॥ ३ ॥

रा० टी०–अथेति । जगत्संतापनो रावणः सचिवानाभाष्य संबोध्य सभां सन्नादयन् सन् सचिवानुवाच सार्धश्लोक एकान्वयी ॥ ३ ॥

---

१ वानरेति गो. पाठः । २ तुदिति गो. पाठः । ३ शब्दमिति गो. पाठः । ४ नष्टौजस इति गो. पाठः । ५ दोषे इति गो. पाठः । ६ राघव इति गो. पाठः । ७ सर्वामितीति गो. पाठः ।

जगत्संतापनः क्रूरोऽगर्हयन्राक्षसेश्वरः । तरणं सागरस्यास्य विक्रमं बलपौरुषम् ॥ ४ ॥
यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम् । भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान् ॥
तूष्णीकानीक्षतोन्योन्यं विदित्वा रामविक्रमम् । ॥ ५ ॥
ततस्तु सुमहाप्राज्ञो माल्यवान्नाम राक्षसः । रावणस्य वचः श्रुत्वा इति मातामहोऽब्रवीत् ॥ ६ ॥
विद्यास्वभिविनीतो यो राजा राजन्नयानुगः । स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ॥ ७ ॥
संदधानो हि कालेन विगृह्णंश्चारिभिः सह । स्वपक्षे वर्धनं कुर्वन्महदैश्वर्यमश्नुते ॥ ८ ॥
हीयमानेन कर्तव्यो राज्ञा संधिः समेन च । न शत्रुमवमन्येत ज्यायान्कुर्वीत विग्रहम् ॥ ९ ॥

---

गो० टी०–अथेत्यादि । आभाष्य संबोध्य । सभाम् आस्थानमण्डपम् । उर्दीक्षणाद्ययुद्धादयति–गर्हयन्निति । गर्हयन्नुवाच गर्हात्मिकां वाचमुवाचेत्यर्थः ॥ ३ ॥

४ ] ति० टी०–रामबलमहं जानामीति सचिवान्स्तुवन्नाह–जगदिति । जगत्संतापयतीति जगत्संतापनः अगर्हयन्निति च्छेदः । अस्य रामस्य ॥ ४ ॥

रा० टी०–तदाकारमाह—तरणमिति । अस्य रामस्य सागरस्य तरणं विक्रमम् अव्याहतगतिं बलपौरुषं च यद्भवन्त उक्तवन्तः तन्मया श्रुतम् एतेन रिपुबलवर्णनं न कर्तव्यमिति सूचितम् ॥ ४ ॥

गो० टी०–गर्हाप्रकारमाह श्लोकद्वयेन–तरणमिति । तूष्णीकान् तूष्णींशीलान् । "शीले को मलोपश्च" इति कप्रत्ययो मलोपश्च । तूष्णींशीलस्तु तूष्णीक इत्यमरः । निरुत्साहानित्यर्थः ॥ ४ ॥ ५ ॥

५ ] ति० टी०–तूष्णीकानिति । अथ रामविक्रमं विदित्वान्योन्यमीक्षतस्तूष्णीकान्निरुत्साहान्पश्यामीदं किमिति शेषः॥५॥

रा० टी०–भवत इति । रामविक्रमं विदित्वा सत्यपराक्रमानपि भवतः अन्योऽन्यमीक्षतः तूष्णीकान् निरुत्साहानित्यर्थः, अहं वेद्मि एतेन तेषां कातर्यं सूचितम् ॥ ५ ॥

६ ] ति० टी०–' मातुः पैतामहः ' इति पाठे रावणमातुः पितामहपुत्रस्तस्याः पितेत्यर्थ इति तीर्थः ॥ ६ ॥

रा० टी०–तत इति । ततः अधिक्षेपवचनश्रवणानन्तरं रावणस्य वचः श्रुत्वा माल्यवान्नाम रावणस्य मातामह इत्यब्रवीत् ॥ ६ ॥

गो० टी०–तत इति । पितामहस्य पुत्रः पैतामहः । पितृव्य इत्यर्थः । कैकसी सुमालिपुत्रीत्युत्तररामायणेभिधानान्माल्यवतस्तद्भ्रातृत्वाच्च पितामहशब्दस्य नियतसापेक्षत्वामासामर्थ्यदोषः । पितेत्यर्थ इत्येके । वृद्धो मातामहोऽब्रवीदिति क्वचित्पाठः ॥ ६ ॥

७ ] ति० टी०–तद्वाक्यमाह—विद्यास्विति । विद्यासु चतुर्दशस्वभिविनीतः शिक्षितः । नयानुगो नीतिमार्गगः ॥ ७ ॥

रा० टी०–तदाकारमाह–विद्यास्विति । विद्यासु अभिविनीतः शिक्षितः अत एव नयानुगो यो राजा सः चिरमैश्वर्यं शास्ति विन्दतीत्यर्थः, अरींश्च वशे कुरुते ॥ ७ ॥

गो० टी०–नीतिमार्गपर्यालोचनायां बलवता रामेण संधिः करणीय इत्यभिप्रायेण प्रथमं नयस्य श्रेयोहेतुत्वं दर्शयति–विद्येति । विद्यासु आन्वीक्षिकीत्रयीवार्तादण्डनीत्याख्यासु चतसृषु विद्यासु अभिविनीतः अभितः शिक्षितः अत एव नयानुगः नीतिशास्त्रानुसारी यो राजा सः चिरम् ऐश्वर्यम् ईश्वरत्वम् शास्ति अधितिष्ठति । तमिममर्थं विशदमुक्तवान् कामन्दकः–आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः । तद्विद्भिस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः । आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥ विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम् । विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदतीति ॥ ७ ॥

८ ] ति० टी०–तां नीतिमेवाह—संदधान इति । कालेन संदधानविग्रहोचितकालानुसारेण ॥ ८ ॥

रा० टी०–नीतिमेवाह–संदधान इति । कालेन यथोचितसमयेन अरिभिः सह संदधानः संधिं कुर्वन् स्वपक्षे वर्धनं वृद्ध्युपायं कुर्वंश्च सन् महदैश्वर्यमश्नुते ॥ ८ ॥

गो० टी०–नयानुग इत्युक्तं तत्र नयस्वरूपमाह–संदधान इति । कालेन स्वबलक्षयकालेन संदधानः संधानं कुर्वन् स्वबलवृद्धिकालेन विगृह्णन् विग्रहं कुर्वन् ऐश्वर्येच्छुना कालानुरूपम् संधिविग्रहौ कार्यावित्यर्थः । एवं कुर्वतः फलमाह–स्वपक्षेति ॥ ८ ॥

९ ] ति० टी०–कथं तयोः कालस्तत्राह–हीयमानेनेति । क्षीयमाणेन समेन च कर्त्रा संधिः कार्यः, ज्यायान्प्रबलो विग्रहं कुर्वीत । सर्वथा शत्रुं नावमन्येत । नोपेक्षेतेत्यर्थः ॥ ९ ॥

रा० टी०–उचितकालमेवाह–हीयमानेनेति । हीयमानेन न्यूनेन समेन च राज्ञा संधिः रिपुभिः सह मिलापोपायः कर्तव्यः ज्यायांश्चेद्राजा विग्रहं कुर्वीत शत्रुं नावमन्येत तुच्छबुद्ध्या न त्यजेत् ॥ ९ ॥

गो० टी०–संधिविग्रहस्य च कालं विविच्य दर्शयति–हीयमानेनेति । हीयमानेन हीयमानबलेन समेन समबलेन च राज्ञा स्वशत्रुणा सह संधिः कर्तव्यः । न शत्रुमिति । ज्यायान्

तन्मह्यं रोचते संधिः सह रामेण रावण । यदर्थमभियुक्तोऽसि सीता तस्मै प्रदीयताम् ॥ १० ॥
तस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः । विरोधं मागमस्तेन संधिस्ते तेन रोचताम् ॥ ११ ॥
असृजद्भगवान्पक्षौ द्वावेव हि पितामहः । सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥ १२ ॥
धर्मो हि श्रूयते पक्ष अमराणां महात्मनाम् । अधर्मो रक्षसां पक्षो ह्यसुराणां च राक्षस ॥ १३ ॥
धर्मो वै ग्रसतेऽधर्मं यदा कृतमभूद्युगम् । अधर्मो ग्रसते धर्मं तदा तिष्यः प्रवर्तते ॥ १४ ॥

अधिकबलस्तु शत्रुं नावमन्येत नोपेक्षेत किंतु तेन सह विग्रहं कुर्वीत हीयमानः समः संधिं कुर्यात् अधिको विग्रहं कुर्यादित्यर्थः ॥ ९ ॥

१० ] ति० टी०–एवं हि स्वपक्षवृद्धिर्भवतीत्युक्तम् । स्वपक्षे नयनं कुर्वन्निति । तत्तस्माद्धीयमानस्य तव बलवता रामेण संधिर्मह्यं रोचते । संधानोपायमाह—यदर्थमिति । सीतार्थमित्यर्थः । अभियुक्तः परैः स्वयं नाभिनिविष्टोऽसि ॥ १० ॥

रा० टी०–तदिति । तदुक्तहेतोः रामेण सह संधिर्मह्यं रोचते एतेन रामस्य समप्रबलान्यतरत्वं सूचितम् । संधेरुपायमाह–यदस्याः सीतायाः अर्थमभियुक्तः अभिनिविशवानसि सा सीता तस्मै रामाय प्रदीयताम् ॥ १० ॥

गो० टी०–अस्त्वेवं प्रस्तुते किमुपन्यस्तं तत्राह–तदिति । तत्तस्मात् एवं नीतिशास्त्रस्थितेः हीयमानस्य तव बलवता रामेण संधिर्मह्यं रोचत इत्यर्थः । बलवता संधिर्दानेन विना न फलति तच्च सीताप्रत्यर्पणादेव सेत्स्यतीत्याह–यदर्थमिति । यदर्थम् अभियुक्ताः स्म विरुद्धाः स्म सा सीता तस्मै रामाय प्रदीयताम् ॥ १० ॥

११ ] ति० टी०–शत्रोर्वृद्धिः स्वक्षयश्च संधानकालः, तत्राद्यः स्पष्ट एवेत्याह—तस्येति ॥ ११ ॥

रा० टी०–रामस्य प्रबलत्वं बोधयन्नाह–तस्येति । तस्य रामस्य जयैषिणो विजयाभिकाङ्क्षिणो देवर्षयो गन्धर्वाश्च सन्तीति शेषः तेन हेतुना तेन रामेण ते विरोधं मा गमः न कुरु तेन सह सन्धिः रोचताम् ॥ ११ ॥

गो० टी०–कथं रामस्य बलवत्त्वं तत्राह—यस्येति । देवाश्च ऋषयश्च देवर्षयः । ते तुभ्यम् । रामस्य देवबलवत्त्वात् बलवत्त्वमित्यर्थः ॥ ११ ॥

१२ ] ति० टी०–अथ स्वपक्षक्षयं दर्शयितुं सामान्यतो जगतः क्षयवृद्धिहेतुमाह–असृजदिति । भगवान्पितामहः सुराणामसुराणां च हिताहितप्राप्तिपरिहारार्थौ विधिनिषेधरूपौ द्वावेव पक्षावसृजत् । किं विषयौ तौ तत्राह–धर्माधर्मौ तदाश्रयौ तयोर्विधिनिषेधयोः क्रमादाश्रयौ विषयौ । विधिविषयो धर्मो निषेधविषयश्चाधर्मः ॥ १२ ॥

रा० टी०–स्वकीयानां प्राप्तविनाशकालं बोधयन् जगद्वृत्तान्तमाह–असृजदित्यादिभिः । सुराणामसुराणां सुरभिन्नानां दैत्यादीनां च धर्माधर्मौ द्वौ पक्षौ आश्रयणीयत्वेन पक्षसदृशौ पिता महोऽसृजन् अत एव तदाश्रयौ क्रमेण तावेवाश्रयेते ॥ १२ ॥

गो० टी०–देवादीनां रामजयकाङ्क्षित्वे को हेतुरित्याशङ्क्य देवादीनां धर्मपक्षपातित्वाद्धर्मस्य रामाश्रयत्वादित्यभिप्रेत्याह–असृजदित्यादिना । भगवान् सर्वज्ञः पितामहः हि यस्मात् सुराणाम् असुराणाम् च पक्षौ अवलम्बभूतौ द्वावेव धर्माधर्मौ असृजत् अतः धर्माधर्मौ तदाश्रयौ सुरासुराश्रयौ असुरशब्देनासुरप्रकृतयो राक्षसादयश्च विवक्षिताः ॥ १२ ॥

१३ ] ति० टी०–तत्रामराणां धर्मस्तद्विषयो विधिः पक्षः । राक्षसा राजसा असुरास्तामसा इति भेदः ॥ १३ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–धर्म इति । अमराणां पक्षः धर्मः श्रूयते रक्षसां असुराणां दानवानाम् अधर्मः पक्षः श्रूयते न च दानवादीनामपि अग्निहोत्रादेः प्रसिद्धत्वात् कथं तत्राधर्म इति वाच्यं भगवद्विमुखकर्तृकस्य धर्मस्याप्यधर्मप्रायत्वेनादोषात् ॥ १३ ॥

गो० टी०–अनयोः कतरः केषां पक्ष इत्यत्राह–धर्मो हीति । महात्मनामिति हेतुगर्भविशेषणम् महास्वभावानामित्यर्थः समीचीनप्रकृतीनामिति यावत् अमहात्मनामित्यसुरादिविशेषणं चार्थसिद्धम् तथा च धर्मस्य देवपक्षत्वाद्रामस्य तदाश्रयत्वाद्देवादयो रामपक्षपातिन इति भावः ॥ १३ ॥

१४ ] ति० टी०–अथ तयोः कालविशेषेणाभिभवानभिभवौ दर्शयति–धर्मो वै इत्यादि । यदा कृतं युगमभूत्तदा तस्मादेव कालाद्धेतोः प्रवृद्धो धर्मोऽधर्मं ग्रसतेऽभिभवति वै प्रसिद्धम् । यदा तिष्यः कलिः प्रवर्तते तदा तत एव हेतोरधर्मो धर्मं ग्रसते कलौ पादेन धर्मस्थितेः । तथाहि–सर्वदा सुखसाधनं धर्म एकरूप एव । अधर्मस्त्रिधा । धर्मान्यस्तद्विरोधी तदभावश्चेति । तत्राद्यः शाक्यादिधर्ममार्गे दृष्टो धर्माभासः । द्वितीयो हत्यादिलक्षणः । अन्त्यः स्वस्वविहितनित्यधर्मलोपात्मा । कृते त्रिविधाधर्माभाव एव । त्रेतादौ क्रमादेकद्वित्रिभिरधर्मैः संवलनं धर्मस्य । एवं च कलावधर्माभिभूतपादत्रयत्वादेकपादेन धर्मस्य वृत्तिरक्षता एवं च धर्मतो देवत्वमधर्मतो राक्षसत्वादीति सूचितम् । नन्वधर्मस्य रक्षोऽसुरधर्मत्वे रक्षोऽसुराणां धर्मफलैश्वर्यजयादि कथमिति चेच्छृणु । देवाः केवलधर्मपराः रक्षोऽसुराः काम्यराजसतामसधर्ममात्रपराः तादृशधर्ममनुतिष्ठतोऽपि तानुक्तत्रिप्रकाराधर्मो न मुञ्चत्येव । रजस्तमःप्रकृति-

१ युक्ताःस्मेति गो पाठः । २ पक्षोहीति गो. पाठः । ३ राक्षसेति गो. पाठः । ४ तत इति गो. पाठः ।

तत्त्वया चरता लोकान्धर्मोऽपि निहतो महान् । अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ॥ १५ ॥
स प्रमादात्प्रवृद्धस्तेऽधर्मोऽहिर्ग्रसते हि नः । विवर्धयति पक्षं च सुराणां सुरभावनः ॥ १६ ॥
विषयेषु प्रसक्तेन यत्किंचित्कारिणा त्वया । ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ॥ १७ ॥
तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः । तपसा भावितात्मानो धर्मस्यानुग्रहे रताः ॥ १८ ॥

त्वात् । अतो धर्मकरणेन सुखिनोऽपि ते काम्यत्वेन सान्ततया-धर्मफलान्तेऽधर्मफलभोगभाज इति न दोषः ॥ १४ ॥

रा० टी०—तयोः फलमाह धर्म इति । यदा धर्मोऽधर्मं ग्रसते तदा कृतमभूत् भवति यदा च अधर्मो धर्मं ग्रसते तदा तिष्यः कलिः प्रवर्तते यद्वा यदा कृतं सत्यं युगमभूत्तदा धर्मोऽधर्मं ग्रसते न्यूनयति यदा तिष्यः कलिः प्रवर्तते तदा अधर्मो धर्मं ग्रसते 'तिष्यः कलौ च पुष्ये च' इत्यमरः ॥ १४ ॥

गो० टी०—एवं देवादिपक्षपाताद्रामस्य बलीयस्त्वमुपपाद्य धर्मस्य प्राबल्यादपि तदाह—धर्म इति । अत्र यदेति शेषः । धर्मः अधर्मं यदा ग्रसते अभिभवति तदा कृतं युगम् अभूत् भवति पुरुषेषु प्रवर्तते आर्षः कालव्यत्ययः । अधर्मो यदा धर्मं ग्रसते तदा तिष्यः कलिः प्रवर्तते । 'तिष्यः कलौ च पुष्ये च' इत्यमरः ॥ १४ ॥

१५ ] ति० टी०—अस्तु तावता, प्रकृते किमायातं तत्राह-तत्त्वयेति । तदित्यव्ययम् । तत्तादृशो निखिलैश्वर्यादिसाधनो धर्मो लोकान्दिग्विजयाय चरता निहतो यज्ञदानतपसां विघ्नं चरता तस्य नाशः कृतः अधर्मश्च प्रगृहीतः अनेकद्विजदेवर्ष्यादिपीडनेनेति शेषः । तेन कारणेनास्मदस्मत्तः परे शत्रवो बलिनः धर्महान्यधर्मपरिग्रहयोरभावात् ॥ १५ ॥

रा० टी०—ननु तयोर्युगयोरिदानीमभावात् प्रकृते किमायातमित्यत आह—तदिति । तत् विजयकारी महान् धर्मः लोकान् चरता त्वया निहतः अधर्मः प्रगृहीतश्च एतेनेदानीमेव त्वया कलिः प्रवर्तित इति सूचितम् तेन तव ब्रह्मविरोधित्वमायातमिति व्यञ्जितम् तेन हेतुना परे रिपवो बलिनः सन्तीति शेषः, एतेनात्यधर्मवतः सदैव पराभव एव भवतीति व्यञ्जितम् ॥ १५ ॥

गो० टी०—ततः किमित्यपेक्षायां त्वय्यधर्मेण कलेः प्रवेशात्कृतापेक्षया कलेर्दुर्बलत्वादस्मदपेक्षया रामो बलवानित्याह—तदिति । लोकान् चरता दिग्विजयार्थमिति शेषः । विनिहतः । परदारपरिग्रहार्थमिति शेषः । अस्मदिति पञ्चमीबहुवचनम् । परे शत्रवो रामादयो धार्मिकाः । यद्वा कृतं युगमिति शब्दसमुदायेन शुभं लक्ष्यते तिष्य इत्यनेनाशुभम्- यदा धर्मः अधर्मं ग्रसते तदा शुभं भवति यदा अधर्मो धर्मं ग्रसते तदा अशुभं भवतीत्यर्थः । एवं भवतु मया किं कृतमित्यत्राह—तदिति । तत् धर्माधर्मयोरेवंरूपत्वात् त्वया शुभहेतुर्धर्मो विनिहतः अशुभहेतुरधर्मश्च परिगृहीतः तेन पराजयरूपाशुभहेत्वधर्मकृद्भ्योऽस्मज्जयरूपशुभहेतुधर्मपराः परे बलिन इत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—अधर्मजानर्थं दर्शयति—स इति । ते तव प्रमादाच्चित्तदोषात्प्राक्संपादित इदानीं प्रवृद्धोऽधर्मरूपोऽहिर्नोऽस्मान्ग्रसते । सुरैर्भावनं नित्यानुष्ठानं यस्य धर्मस्य सोऽसौ धर्मः सुराणां तदंशभूतानां परेषां पक्षं विवर्धयति ॥ १६ ॥

रा० टी०—स इति । ते प्रमादात् अविचारादित्यर्थः प्रवृद्धोऽधर्मः नोऽस्मान् ग्रसते अत एव सुरभावनः सुरैः भाव्यते परिशील्यतेऽसौ धर्म इत्यर्थः, सुराणां पक्षं विवर्धयति ॥ १६ ॥

गो० टी०—अधर्मं स्वीकृत्य धर्मे निहते तेषां सुराणां बलवत्त्वं कथमित्याशङ्क्याधर्मस्याश्रयनाशकत्वादित्यभिप्रायेणाह—स इति । सः अधर्मः ते प्रमादात् अविमृश्यकरणात् विवृद्धः नः अस्मान् । ग्रसते नाशयति । सुरभावनः सुरानुकूलः सन् सुराणां पक्षं विवर्धयति ॥ १६ ॥

१७ ] ति० टी०—रावणस्याधर्मपरिग्रहं प्रपञ्चयति—विषयेष्विति । विषयेषु स्त्रीवारुण्यादिषु प्रसक्तेन तत एव यत्किंचित्कारिणा निर्मर्यादं यथेष्टं कुर्वता त्वया ऋषीणामुद्वेगः क्रोधो जनितः ॥ १७ ॥

रा० टी०—तत्कृताधर्ममेव बोधयन्नाह—विषयेष्विति । विषयेषु प्रसक्तेन अत एव यत्किंचित्कारिणा अविचारितकृत्यकर्त्रा त्वया ऋषीणां महान् उद्वेगो जनितः ॥ १७ ॥

गो० टी०—स्वकृतस्याधर्मस्य सुरपक्षवृद्धिहेतुत्वं कथमित्याशङ्क्य ऋषीणामुद्वेगजननद्वारा धर्मप्रवर्तकत्वादित्याह—विषयेष्विति । विषयेषु प्रसक्तेन अत एव यत्किञ्चित्कारिणा देवर्षिप्रमुखानां कन्यापत्नीहरणादिकं कुर्वता ऋषीणामुद्वेगः मनस्तापः जनितः कृतः ॥ १७ ॥

१८ ] ति० टी०—ननु किं तेषां क्रोधेन तत्राह—तेषामिति । तेषां प्रभावः क्रोधजस्तापः प्रदीप्तपावक इव दुर्धर्षो दुःसहः । कुतो दुःसहता तत्प्रभावस्य तत्राह—तपसेति । धर्मस्यानुग्रहेऽनुग्रह· संवर्धनस्तत्संपादने रताः ॥ १८ ॥

रा० टी०—तेषामिति । ये धर्मस्य अनुग्रहे संपादने रताः तेषां प्रभावः प्रदीप्तः पावक इव दुर्धर्षः पराभवितुमशक्यः ॥ १८ ॥

गो० टी०—अग्निकल्पत्वमुपपादयति—तेषामिति ॥ १८ ॥

गो० टी०—उद्वेगात्किं कृतवन्तस्तत्राह—तपसेति । भावितात्मानः पूतात्मानः धर्मस्यानुग्रहे संवर्धने रताः मुख्यैः श्रेष्ठैः तैस्तैः अग्निष्टोममारभ्य विश्वसृजामयनपर्यन्तैः अग्नीनुद्दिश्य जुह्वति होमं कुर्वन्ति । देवतोद्देशेन द्रव्यत्यागो यागः । त्यक्तस्याग्नौ प्रक्षेपो होम इत्यनयोर्भेदः । अभिभूय अगणयित्वा । ब्रह्मघोषान् उदैरयन् उच्चारयन्ति स्म वेदांश्चोच्चैरधीयत इत्यस्य विवरणमिदम् ॥ १९ ॥ २० ॥

१ वीति गो. पाठः । २ ऽभीति गो. पाठः ।

मुख्यैर्यज्ञैर्यजन्त्येते तैस्तैर्यज्ञै[1] द्विजातयः । जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते ॥
अभिभूय च रक्षांसि ब्रह्मघोषानुदीरयन्[2] । ॥ १९ ॥
दिशो विप्रद्रुताः[3] सर्वे स्तनयित्नुरिवोष्णगे । ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ २० ॥
आवृत्य[4] रक्षसां तेजो धूमो व्याप्य दिशो दश । तेषु तेषु च देशेषु पुण्येष्वेव[5] धृतव्रतैः ॥ २१ ॥
चर्यमाणं तपस्तीव्रं संतापयति राक्षसान् । देवदानवयक्षेभ्यो गृहीतश्च वरस्त्वया ॥ २२ ॥
मनुष्या[6] वानरा ऋक्षा गोलाङ्गूला महाबलाः । बलवन्त इहागम्य[7] गर्जन्ति दृढविक्रमाः ॥ २३ ॥
उत्पातान्विविधान्दृष्ट्वा घोरान्बहुविधान्बहून्[8] । विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ॥ २४ ॥
खराभिस्तनिता घोरा मेघाः प्रतिभयंकराः । शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥ २५ ॥
रुदतां वाहनानां च प्रपतन्त्यश्रुबिन्दवः । रजोध्वस्ता[9] विवर्णाश्च न प्रभान्ति यथापुरम्[10] ॥ २६ ॥

---

१९ ] ति० टी०—मुख्यैर्यज्ञैर्ध्यानरूपैर्ब्रह्मघोषान्वेदघोषानुदीरयन्नुदैरयन्कृतवन्तः ॥ १९ ॥

रा० टी०—तद्धर्ममेवाह—मुख्यैरिति । तैस्तैः तत्तद्वेदविहितैर्मुख्यैर्यज्ञैः एते द्विजातयः यजन्ति वेदान् अधीयते च ॥१९॥

रा० टी०—अभीति । रक्षांसि अभिभूय ब्रह्मघोषान् उदीरयन् उदैरयन् अत एव सर्वे राक्षसाः उष्णगे ग्रीष्मे स्तनयित्नुर्मेघ इव दिशो विप्रद्रुताः ॥ २० ॥

२० ] ति० टी०—दिशो विप्रद्रुतास्तदुदीरितब्रह्मघोषेण । राक्षसा इति शेषः । 'स्तनयित्नुर्बलाहकः' । उष्णो ग्रीष्मस्तद्गते रवाविति शेषः ॥ २० ॥

रा० टी०—ऋषीणामिति । अग्निकल्पानाम् ऋषीणामग्निहोत्रसमुत्थितो धूमः दशदिशो व्याप्य रक्षसां तेजः आवृत्य च अतिष्ठदिति शेषः ॥ २१ ॥

गो० टी०—तपःप्रभृतिकर्मणः फलमाह—दिश इत्यादिना । सर्वा दिशः प्रतिविद्रुताः । राक्षसा इति शेषः । उष्णगे ग्रीष्मे । स्तनयित्नुरिव मेघ इव । जातावेकवचनम् ॥२१॥२२॥

२१ ] ति० टी०—धूमः उत्तिष्ठतीति शेषः ॥ २१ ॥

रा० टी०—तेष्विति । पुण्येषु देशेषु चर्यमाणं तपः राक्षसान् संतापयति ॥ २२ ॥

२२ ] ति० टी०—नन्वन्यराक्षसांस्तत्तपः संतापयतु, मया तु ब्रह्मणः सकाशादवध्यत्ववरो लब्ध इति चेत्तत्राह—देवेति ॥ २२ ॥

रा० टी०—ननु प्राप्तवरस्य मम का भीतिरित्यत आह—देवेति । देवादिभ्यः एव त्वया वरो गृहीतः न तु दिव्य मनुष्यादिभ्य इत्यर्थः, तेन मनुष्यादिभ्यो भयमस्त्येवेति सूचितम् । अर्थं पृथक्—मनुष्या इति । दृढविक्रमाः मनुष्यादयः इहागम्य गर्जन्ति ॥ २३ ॥ २४ ॥

गो० टी०—बलिनोपि देवाः ब्रह्मदत्तवरमहिम्ना न प्रहर्तुं शक्नुयुरिति चेत्तत्राह—देवदानवेत्यादिना । देवदानवयक्षेभ्य एवावध्यत्ववरो गृहीतः । न तु मानुषादिभ्य इति भावः ॥२३॥

२३ ] ति० टी०—वानरादयः । न देवादय इति भावः॥२३॥

गो० टी०—तर्हि किमायातमित्यत्राह—मानुषा इति । द्वयोरपि बहुवचनं पूजायाम् । महाबलाः महासैन्याः । इह लङ्कायाम् ॥ २४ ॥

२४ ] ति० टी०—किं च दुर्निमित्तैरप्यस्माकमनर्थ प्राप्तिरनुमीयत इत्याह—उत्पातानिति । बहुविधान्दिव्यान्तरिक्षभौमभेदभिन्नान्बहूननेकान् ॥ २४ ॥

रा० टी०—उत्पातानिति । विविधान् अनेकनिषिद्धफलविधायकान् बहुविधान् अनेकप्रकारान् बहून् उत्पातान् दृष्ट्वा रक्षसां विनाशमनुपश्यामि ॥ २५ ॥

गो० टी०—न केवलं परागमनेन किं त्वशुभनिमित्तदर्शनेनापि भयमुत्प्रेक्ष्यमित्याह—उत्पातानिति । उत्पातान् विविधान् दिव्यान्तरिक्षभौमभेदभिन्नान् । बहुविधान् भौमादिषु प्रत्येकं विविधान् । अनुपश्यामि तर्कयामि ॥ २५ ॥

२५ ] ति० टी०—खराभिस्तनिता दुःश्रवशब्दवन्तः । लङ्कामित्यनेन स्वपक्षानर्थः सूचितः ॥ २५ ॥

रा० टी०—उत्पातान्येवाह—खरेत्यादिभिः । खरः श्रुतिकटुत्वेन रूक्षः अभिस्तनितशब्दो येषाम् अत एव प्रतिभयङ्कराः मेघाः उष्णेन शोणितेन लङ्कामभिवर्षन्ति ॥ २६ ॥

गो० टी०—खरेति । खराभिस्तनिताः परुषगर्जिताः । घोराः विरूपाः प्रतिभयंकराः प्रतीत्युपसर्गमात्रम् । भयंकरा इत्यर्थः ॥ २६ ॥

२६ ] ति० टी०—यथापुरं यथापूर्वम् । अनतिक्रमेऽव्ययीभावः न प्रभान्ति । दिश इति शेषः । वाहनानीत्यन्ये ॥२६॥

रा० टी०—रुदतामिति । रुदतां वाहनानाम् अश्रुबिन्दवः प्रपतन्ति रजोध्वस्ता धूलिभिर्व्याप्ताः दिश इति शेषः यथापुरं न प्रभान्ति ॥ २७ ॥

गो० टी०—रुदतामिति । ध्वस्ताः धूसराः । अत एव विवर्णाः विगतवर्णाः ॥ २७ ॥

---

१ नित्यमिति रा. नित्यंतैरिति गो. पाठः । २ पैरयन्निति गो. पाठः । ३ ऽपि विद्रुताः सर्वा इति गो. पाठः । ४ आदत्ते इति गो. पाठः । ५ ष्वेव दृढव्रतैरिति गो. रा. पाठः । ६ मानुषा इति गो. पाठः । ७ तथेति गो. पाठः । ८ अलेति गो.पाठः । ९ ध्वजा इति गो. पाठः । १० पुरेति गो. पाठः ।

व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम् । प्रविश्य लङ्कामारामे समवायांश्च कुर्वते ॥ २७ ॥
कालिका: पाण्डुरैर्दन्तैः प्रहसन्त्यग्रतः स्थिताः । स्त्रियः स्वप्नेषु मुष्णन्त्यो गृहाणि प्रतिभाष्य च ॥ २८ ॥
गृहाणां बलिकर्माणि श्वानः पर्युपसेवते । खरा गोषु प्रजायन्ते मूषका नकुलेषु च ॥ २९ ॥
मार्जारा द्वीपिभिः सार्धं सूकराः शुनकैः सह । किंनरा राक्षसैश्चापि समेयुर्मानुषैः सह ॥ ३० ॥
पाण्डुरा रक्तपादाश्च विहगाः कालचोदिताः । राक्षसानां विनाशाय कपोता विचरन्ति च ॥ ३१ ॥
चीचीकूचीति वाशन्तः शारिका वेश्मसु स्थिताः । पतन्ति ग्रथिताश्चापि निर्जिताः कलहैषिभिः ॥ ३२ ॥
पक्षिणश्च मृगाः सर्वे प्रत्यादित्यं रुदन्ति ते । करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ॥ ३३ ॥

---

२७ ] ति० टी०—व्याला मांसादाः पशवः । 'सर्पो मांसात्पशुर्व्यालः' इति कोशः । समवायान्यूथान् ॥ २७ ॥

रा० टी०—व्याला इति । व्यालादयः लङ्कां प्रविश्य वाश्यन्ति शब्दं कुर्वन्ति आरामे उपवने समवायान् स्वस्वसजातीयसंघान् कुर्वते ॥ २८ ॥

गो० टी०—व्याला इति । व्यालाः दुष्टाः वाश्यन्ति वाशितं कुर्वन्ति कुत्सितरुतं कुर्वन्तीत्यर्थः समवायान् सङ्घान् ॥ २८ ॥

२८ ] ति० टी०—कालिका महाकाल्यः । स्त्रियः स्वप्नेषु गृहाणि तद्वर्तिद्रव्यजातं मुष्णन्त्योऽग्रतः स्थिताः प्रतिभाष्य प्रतिकूलभाषणं कृत्वा पाण्डुरैर्दन्तैरुपलक्षिताः प्रहसन्ति ॥२८॥

रा० टी०—कालिका इति । स्वप्नेषु गृहाणि तत्स्थद्रव्याणि प्रतिभाष्य संबोध्य कालिका करालाः स्त्रियः पाण्डुरैर्दन्तैरुपलक्षिताः अग्रतः स्थिताश्च सत्यः प्रहसन्ति ॥ २९ ॥

गो० टी०—कालिका इति । कालिकाः नीलवर्णाः स्त्रियः पूतनाप्रमुखा इति यावत् । शक्तय इत्येके । पाण्डुरैर्दन्तैरुपलक्षिताः सत्यः प्रतिभाष्य प्रतिकूलमाभाष्य गृहाणि गृहस्थितवस्तूनि मुष्णन्त्यः हसन्ति । एवं दृश्यन्त इत्यर्थः ॥ २९ ॥

२९ ] ति० टी०—बलिकर्माणि देवपूजासाधनघृतदध्यन्नपानादीनि श्वभिः स्पृश्यन्ते । बलिहरणानि श्वान एव भुञ्जते, न तु वायसा इत्यर्थ इत्यन्ये ॥ २९ ॥

रा० टी०—गृहाणामिति । गृहाणां गृहस्थानां बलिकर्माणि कृतकाकोद्देश्यकबलीन् श्वानः पर्युपसेवते पर्युपसेवन्ते भक्षयन्ति गोषु खराः प्रजायन्ते उत्पद्यन्ते नकुलेषु मूषकाः प्रजायन्ते ॥ ३० ॥

गो० टी०—गृहाणामिति । बलिकर्माणि बलिकर्मसाधनानि हवींषि । नकुलैः सह वर्तन्त इति शेषः ॥ ३० ॥

३० ] ति० टी०—द्वीपिभिः शार्दूलैः । समेयुर्मिथुनीभावं जग्मुः ॥ ३० ॥

रा० टी०—मार्जारा इति । द्वीपिभिः सार्धं मार्जाराः राक्षसैः मानुषैश्च किंनरा समेयुः मिथुनीभावं प्रापुः ॥ ३१ ॥

गो० टी०—मार्जारा इति । समीयुः संयन्ति । द्वीपिभिः व्याघ्रैः मानुषैः । राक्षसा इति शेषः । मानुषाश्चात्रोत्पातजनिता एव लङ्कायां मानुषाभावात् ॥ ३१ ॥

३१ ] ति० टी०—पाण्डुरत्वादिगुणविशिष्टाः कपोता विहगा विचरन्ति । गृहेषु मध्ये इति शेषः ॥ ३१ ॥

रा० टी०—पाण्डुरा इति । पाण्डुरत्वादिविशिष्टाः कपोता विहगाः विचरन्ति ॥ ३२ ॥

गो० टी०—पाण्डुरा इति । कालचोदिताः दैवप्रेरिताः । विनाशाय विनाशसूचनायेत्यर्थः । वाताय कपिला विद्युदित्यादिवत् । कपोताः कपोताख्या विहंगा इत्यन्वयः ॥ ३२ ॥

३२ ] ति० टी०—चीचीकूचीति शब्दानुकारः । कलहैषिभिः पक्ष्यन्तरैर्निर्जिता ग्रथिताः पतन्ति परस्परमाबध्य पतन्ति ३२

रा० टी०—चीचीति । चीचीति कूचीति च तत्तज्जातीयशब्दानुकरणं वाशन्तः सन्तो वेश्मसु स्थिताः कलहैषिभिः पक्ष्यन्तरैः निर्जिताः ग्रथिताश्च सन्तः पतन्ति ॥ ३३ ॥

गो० टी०—चीचीती । वेश्मसु मधुरसल्लापार्थं पोषिताः शारिकाः । मधुरभाषणानि विहाय चीचीकूचीति क्रूरं वाश्यन्तीत्यर्थः ॥ ३३ ॥

गो० टी०—पतन्तीति । पक्षिणः काकादयः मृगाश्च पूर्वं निर्जिता अपि पुनः कलहैषिणः सन्तः ग्रथिताः पुञ्जीभूताः पतन्ति धावन्ति प्रत्यादित्यं रुदन्ति चेत्यन्वयः ॥ ३४ ॥

३३ ] ति० टी०—प्रत्यादित्यं सूर्याभिमुखीभूय रुदन्ति । रुदन्त इव रटन्तीत्यर्थः ॥ ३३ ॥

रा० टी०—पक्षिण इति । पक्षिणो मृगाश्च प्रत्यादित्यं सूर्याभिमुखं रुदन्ति अर्धं पृथक्—कराल इति । विकटः भयंकराकृतिः अत एव करालो भयंकरो मुण्डः छिन्नकेशः कृष्णपिङ्गलः इत्कालः पुरुषः कालेकाले प्रतिसंध्यासमये सर्वेषां गृहाणि अन्ववेक्षते एतान्युक्तानि अन्यानि च निमित्तानि उत्पतन्ति । श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

रा० टी०—विष्णुमिति । मानुषं रूपमास्थितं रामं विष्णुं स्वप्रतापद्वारा सर्वत्र पूर्णं मन्यामहे अतः अयं राघवः मानुषमात्रः अस्मद्ज्ञानविषयीभूतमनुष्यशरीरवान् प्राकृतविलक्षणः परपुरुष इत्यर्थः ॥ ३६ ॥

रा० टी०—येनेति । येन सेतुर्बद्धः तेन रामेण सन्धिं कुरुष्व ॥ ३७ ॥

गो० टी०—कराल इति । करालः भयंकरः । विकटः

---

१ अनिशमिति गो. पाठः । २ भुञ्जत इति गो. पाठः । ३ विहङ्गा इति गो. पाठः । ४ वीची इति गो. पाठः । ५ वाश्यन्त्य इति गो. पाठः । ६ पेषिण इति गो. पाठः । ७ चेति गो. पाठः । ८ विकट इति गो. रा. पाठः ।

कालो गृहाणि सर्वेषां काले कालेऽन्ववेक्षते । एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च ॥
[ विष्णुं मन्यामहे रामं मानुषं रूपमास्थितम् । न हि मानुषमात्रोऽसौ राघवो दृढ विक्रमः ॥
येनबद्धः समुद्रे च सेतुः स परमाद्भुतः । कुरूष्व नरराजेन सन्धिं रामेण रावण ॥ ][1]
ज्ञात्वावैधार्य[2] कर्माणि[3] क्रियतामायतिक्षमम् । ॥ ३४ ॥
इदं वचस्तस्य[4] निगद्य माल्यवान्परीक्ष्य रक्षोधिपतेर्मनः पुनः ।
अनुत्तमेषूत्तमपौरुषो बली बभूव तूष्णीं समवेक्ष्य रावणम् ॥ ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकिय आदिकाव्ये युद्धकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ।

रावणः माल्यवतो वचनं हितमप्यधिक्षिप्यामात्यैर्मन्त्रयित्वा नगर्याः प्रागादिप्रतीहारचतुष्टये प्रहस्तादीन् प्रत्यर्थिनिरोधाय नियुज्य कृतकृत्यंमन्योऽवरोधं विवेश ।

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः । न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ १ ॥
स बद्ध्वाभ्रुकुटिं वक्त्रे क्रोधस्य वशमागतः । अमर्षात्परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २ ॥
हितबुद्ध्या यदहितं वचः परुषमुच्यते । परपक्षं प्रविश्यैव नैतच्छ्रोत्रगतं[5] मम ॥ ३ ॥

विकटाङ्गः विकल इति पाठे हीनाङ्ग इत्यर्थः परुषः परुषवर्णः कालः मृत्युः काले काले सायं प्रातश्च गृहाण्यन्ववेक्षते अन्वीक्षमाण इव दृश्यत इत्यर्थः ॥ ३६ ॥

३४ ] ति० टी०—कालः कालरूपः स पुरुषः सर्वेषां गृहाणि काले काले संध्याकालेषु सर्वेषां नो गृहाण्यवेक्षते । एतदग्रे 'रामं मन्यामहे विष्णुं मानुषं रूपमास्थितम् । नहि मानुषमात्रोऽसौ राघवो दृढविक्रमः ॥ येन बद्धः समुद्रे च सेतुः स परमाद्भुतः । कुरुष्व नरराजेन सन्धिं रामेण रावण ॥' इत्यादि श्लोकद्वयं प्रक्षिप्तमिति प्राचीनैर्न व्याख्यातमिति कतकः । ज्ञात्वेति । अस्य रामस्य कर्माण्येतानि निमित्तानि च ज्ञात्वा, आयतिक्षममुत्तरकालसुखदं यत्कर्म तदवधार्य यदुचितं तत्क्रियताम् ॥ ३४ ॥

रा० टी०—उपसंहरन्नाह—ज्ञात्वेति । कर्माणि रामकृत्यानि ज्ञात्वा आयतिक्षमम् उत्तरकाले सुखयोग्यं कर्म अवधार्य निश्चित्य क्रियताम् अर्थं पृथक्—इदमिति । अनुत्तमेषु निकृष्टेषु राक्षससमाजेषु स्थितः उत्तमपौरुषो माल्यवान् इदं वचो निगद्य रावणं समवेक्ष्य रक्षोधिपतेर्मनः परीक्ष्य ज्ञात्वेत्यर्थः, तूष्णीं बभूव ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

गो० टी०—एतानीति । एतानि ज्ञात्वा कर्माणि कर्तव्यानि । प्रधार्य निर्धार्य । यत् आयतिक्षमम् उत्तरकालार्हम् तत्क्रियताम् कर्माणि च सीताप्रदानादीनि ॥ ३६ ॥

३५ ] ति० टी०—तस्य । तस्मै रावणायेत्यर्थः मनः परीक्ष्य मदुक्तमस्मै न रोचत इति ज्ञात्वेत्यर्थः तूष्णीं बभूव किमपि नोवाच ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

गो० टी०—इदमिति । अनुत्तमेषु मन्त्रिश्रेष्ठेषु उत्तमपौरुषो माल्यवान् इदं वचः तत्र सभायाम् निशम्य श्रावयित्वा अन्तर्भावितण्यर्थोयम् रावणं रावणाकारम् समवेक्ष्य इङ्गितादिदर्शनपुरःसरं दृष्ट्वा रक्षोधिपतेर्मनः परीक्ष्य अनिवर्त्यं ज्ञात्वा तूष्णीं बभूव उपदेशाद्विररामेत्यर्थः ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

१-२ ] ति० टी०—तत्त्विति ॥ १ ॥ २ ॥

रा० टी०—माल्यवद्वचनश्रवणानन्तरकालिकं रावणवृत्तान्तमाह—तदित्यादिभिः । माल्यवत उक्तं हितं वाक्यं कालस्य वशमागतो दशाननो न मर्षयति नाङ्गीचकार ॥ १ ॥

गो० टी०—अथ लङ्कागुप्तिकरणं षट्त्रिंशे—तत्त्विति । हितमुक्तं हितं यथा भवति तथा उक्तम् न मर्षयति नामर्षयत् ॥ १ ॥

रा० टी०—स इति । अमर्षात् परिवृत्ते अक्षिणी यस्य स रावणः माल्यवन्तमब्रवीत् ॥ २ ॥

गो० टी०—स इति । परिवृत्ताक्षः घूर्णिताक्षः ॥ २ ॥

३ ] ति० टी०—परपक्षं तत्प्राबल्यं प्रविश्यैव परिगृह्यैव, वस्तुतोऽहितं वचः परुषं हितबुद्ध्या यदुच्यते नैतन्मम श्रोत्रगतं मच्छ्रोत्रेण नैव गृहीतम् ॥ ३ ॥

१ श्लोकद्वयमेतदधिकं रा. पाठे । २ प्रेति गो. पाठः । ३ कार्याणीति गो. पाठः । ४ तत्र निशम्येति गो. पाठः । ५ श्रोत्रं गतमिति गो. पाठः ।

मानुषं कृपणं राममेकं शाखामृगाश्रयम् । समर्थं मन्यसे केन त्यक्तं पित्रा वनाश्रयम् ॥ ४ ॥
रक्षसामीश्वरं मां च देवानां च भयंकरम् । हीनं मां मन्यसे केन अहीनं सर्वविक्रमैः ॥ ५ ॥
वीरद्वेषेण वा शङ्के पक्षपातेन वा रिपोः । त्वयाहं परुषाण्युक्तो मम प्रोत्साहनेन वा ॥ ६ ॥
प्रभवन्तं पदस्थं हि परुषं कोऽभिभाषते । पण्डितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनेन वा ॥ ७ ॥
आनीय च वनात्सीतां पद्महीनामिव श्रियम् । किमर्थं प्रतिदास्यामि राघवस्य भयादहम् ॥ ८ ॥
वृत्तं वानरकोटीभिः ससुग्रीवं सलक्ष्मणम् । पश्य कैश्चिदहोभिश्च राघवं निहतं मया ॥ ९ ॥
द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे । स कस्माद्रावणो युद्धे भयमाहारयिष्यति ॥ १० ॥
द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् । एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥ ११ ॥

---

रा० टी०—तदाकारमाह—हितेत्यादिभिः । हितबुद्ध्या अयं मां हितं जानात्विति विचारेण त्वया परपक्षं प्रविश्य आश्रित्य यद्यस्मात् हेतोः अहितं परुषमुच्यते तस्मात् हेतोः एतदुक्तं मम श्रोत्रगतं न न गृहीतमित्यर्थः ॥ ३ ॥

गो० टी०—हितबुद्ध्येति । परपक्षं प्रविश्यैव शत्रुषु स्नेहमनुसृत्यैव हितबुद्ध्या हितमित्ययं ज्ञास्यतीति बुद्ध्या अहितं परुषं च यद्वच उक्तम् एतत् मम श्रोत्रं न गतमित्यन्वयः ॥ ३ ॥

४ ] ति० टी०—कुतस्तत्राह—मानुषमिति ॥ ४ ॥

रा० टी०—तद्वचनस्य परुषत्वं प्रकटयन्नाह—मानुषमित्यादिभिः । मानुषं रामं समर्थं केन हेतुना मन्यसे सहेतुर्नास्तीत्यर्थः ॥ ४ ॥

गो० टी०—भवतः परपक्षानुसारश्च न युक्त इत्याह—मानुषमिति । मानुषं जात्या हीनबलम् कृपणं प्रकृत्या हीनम् एकम् असहायम् शाखामृगाश्रयं क्षुद्रसहायम् पित्रा त्यक्तं निर्धनम् वनालयं[1] राज्यहीनम् रामम् केन कथंप्रकारेण समर्थं प्रबलं मन्यसे ॥ ४ ॥

५ ] ति० टी०—हीनम् । विक्रमैरिरयत्नुपज्यते ॥ ५ ॥

रा० टी०—रक्षसामिति । सर्वविक्रमैः अहीनं संयुक्तमित्यर्थः, मां हीनं केन हेतुना मन्यसे ॥ ५ ॥

गो० टी०—त्वस्मिन् तद्वैपरीत्यमाह—रक्षसामिति । हीनं दुर्बलम् ॥ ५ ॥

६ ] ति० टी०—यत्त्वयाहं परुषाण्युक्तस्तत्तु वीरद्वेषेण वा वीरे मयि द्वेषेण वा, आहोस्विद्रिपौ पक्षपातेन वा, मम प्रोत्साहनेन शत्रुप्रशंसायां क्रोधायुद्धाय प्रवर्तिष्यत इति प्रवर्तनेन वा हेतुनेति शङ्के न तु वाक्यस्य यथाश्रुतार्थे तात्पर्यमित्यर्थः ॥ ६ ॥

रा० टी०—वीरेति । त्वया यत्परुषाण्यहमुक्तः तद्वेषेण वा रिपोः पक्षपातेन वा ममप्रोत्साहनेन रिपूत्कर्षश्रवणमात्रेण तत्परिहारे प्रवृत्तो भवतीति बुद्ध्या वा इत्यहं शङ्के अन्यतममनुमिनोमीत्यर्थः ॥ ६ ॥

गो० टी०—एवं परप्राबल्यस्वदौर्बल्ययोरभावेपि परुषोक्तौ हेतुमाशङ्कते—वीरद्वेषेणेति । वीरद्वेषेण सजातीयवीरद्वेषेण । रिपोः पक्षपातेन शत्रौ पक्षपातेन ॥ ६ ॥

७ ] ति० टी०—तदेव समर्थयन्नाह—प्रभवन्तमिति । प्रभवन्तं युद्धादिसमर्थं पदस्थमव्याहतस्वराज्यस्थं राजानं विना प्रोत्साहनं रिपुवधप्रवृत्तिप्रेरणाप्रयोजनं विना पण्डितत्वादिगुणविशिष्टः कः परुषमभिभाषते न कोऽपीति निश्चयः । वाशब्दो निश्चये ॥ ७ ॥

रा० टी०—अन्तिमं निश्चिनोति—प्रभवन्तमिति । प्रभवन्तम् अतिप्रभावविशिष्टं पदस्थं राज्ये स्थितं प्रोत्साहनेन विना परुषं कः पण्डितोभिभाषते न कोऽपीत्यर्थः ॥ ७ ॥

गो० टी०—परप्रोत्साहनेनेत्येतदुपपादयति—प्रभवन्तमिति । प्रभवन्तं प्रभावयुक्तम् पदस्थं परिपक्वबुद्धिम् परप्रोत्साहनाभावे पण्डितस्य पदस्थविषयकपरुषवचनम् नोपपद्यत इत्यर्थः ॥ ७ ॥

८-१० ] ति० टी०—पद्महीनामित्यनेन लक्ष्मीत्वाभावबोधनमप्युपादेयत्वबोधनं च ॥ ८ ॥ १० ॥

रा० टी०—आनीयेति । किमर्थं राघवस्य भयात् भयं प्राप्य सीतांप्रति दास्यामि ॥ ८ ॥

गो० टी०—अस्तु त्वदुक्तं परमार्थः तथापि दुर्लभवस्तुविशेषः कथं त्याज्य इत्याह—आनीयेति । किमर्थं केन हेतुना । राघवस्य राघवात् ॥ ८ ॥

रा० टी०—वृतमिति । वानरकोटीभिर्वृतमपि मया निहतं पश्य ॥ ९ ॥

गो० टी०—वृतमिति । स्पष्टोर्थः ॥ ९ ॥

रा० टी०—द्वन्द्वे इति । यस्य द्वन्द्वे संयुगे दैवतान्यपि न तिष्ठन्ति स रावणः भयं कस्मादाहारयिष्यति प्राप्स्यति॥१०॥

गो० टी०—द्वन्द्व इति । द्वन्द्वे द्वन्द्वयुद्धे । युद्धे रामयुद्धे॥१०॥

११ ] ति० टी०—एवमपि रामस्य महत्त्वेऽपि द्विधा भज्येयमितरवेणुवत् न नमेयं वेतसवत् सहज आजानसिद्धः ननु

---

१ वनालयमिति गो. पाठः । २ देवतानामिति गो. पाठः । ३ हीत्यधिकं गो. पाठे । ४ परेति गो. पाठः । ५ भास्यतीति गो. पाठः । ६ प्रोत्साहनाद्रिपोरिति गो. पाठः । ७ स्वमिति गो. पाठः ।

यदि तावत्समुद्रे तु सेतुर्बद्धो यदृच्छया । रामेण विस्मयः कोऽत्र येन ते भयमागतम् ॥ १२ ॥
स तु तीर्त्वार्णवं रामः सह वानरसेनया । प्रतिजानामि ते सत्यं न जीवन्प्रतियास्यति ॥ १३ ॥
एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् । व्रीडितो माल्यवान्वाक्यं नोत्तरं प्रत्यपद्यत ॥ १४ ॥
जयाशिषा तु राजानं व[र्ध]यित्वा यथोचितम् । माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनम् ॥ १५ ॥
रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च । लङ्कायास्तु तदा गुप्तिं कारयामास राक्षसः ॥ १६ ॥
व्यादिदेश च पूर्वस्यां प्रहस्तं द्वारि राक्षसम् । दक्षिणस्यां महावीर्यौ महापार्श्वमहोदरौ ॥ १७ ॥
पश्चिमायामथ द्वारि पुत्रमिन्द्रजितं तदा । व्यादिदेश महामायं राक्षसैर्बहुभिर्वृतम् ॥ १८ ॥
उत्तरस्यां पुरद्वारि व्या[दि]श्य शुकसारणौ । स्वयं तत्र गमिष्यामि मन्त्रिणस्तानुवाच ह ॥ १९ ॥

---

दोषश्चेत्त्यज्यतां तत्राह-स्वभाव इति । नह्यग्निः कदापि शीतलो भवतीति भावः ॥ ११ ॥

रा० टी०-द्विधेति । अहं द्विधा भज्येयमपि यदि तदापि कस्यचिन्न नमेयम् एष मे दोषः सहजः जन्मनैव जातः अयं मम स्वभाव इत्यर्थः । ननु तस्यान्याय्यत्वे त्यज्यतामित्यत आह-स्वभावो दुरतिक्रमः न त्यक्तुं शक्य इत्यर्थः ॥ ११ ॥

गो० टी०-अत्यन्तहितपरं वृद्धं मातामहं कथमेवं परुषमुक्तवानस्मीत्यनुतापेनाह-द्विधेति । राम आगत्य भयं जनयिष्यतीति त्वयोक्तम् न केवलं भयमात्रम् द्विधा भज्येयं शिरश्छेदं प्राप्नुयाम् एवमपि न नमेयम् कस्यचित् न केवलं रामस्य ततोपि शतगुणबलवत्तोपि द्विधा भङ्गादपि कस्यचिन्नमनमत्यन्तदुःसहमित्यर्थः । तर्हि हीयमानेन सन्धिः कार्य नीतिशास्त्रविरोधः स्यात्तत्राह-एष मे सहजो दोष इति । इति यदि दोषत्वमनुमतं तर्हि स त्याज्य एवेत्याशङ्क्याह-स्वभाव इति। न हि तिक्तो निम्बो मधुरायत इति भावः॥ ११ ॥

१२-१३ ] ति० टी०-ननु रामः कथं मानुष इत्युच्यते, समुद्रे सेतोर्मनुष्यासाध्यत्वादत आह-यदीति । तावत्प्रथमतो रामेण समुद्रे सेतुर्बद्ध इति विस्मयो यदि कोऽत्र विस्मयः, यतः सः यदृच्छया दैवगत्या घुणाक्षरन्यायेन, न तु स्वसामर्थ्येनेत्यर्थः येन सेतुबन्धनेन मे इदं भयमागतम् ॥ १२ ॥ १३ ॥

रा० टी०-यदीति । येन दर्शनेन ते भयमागतं स सेतुः यदि रामेण तावत्पूर्वं बद्धः तर्हि कं विस्मयः आश्चर्यं वयमेवमनेकशः कर्तुं समर्था इत्यर्थः ॥ १२ ॥

गो० टी०-अथ सेतुबन्धेन विस्मयस्ते चेत् तदपि काकतालीयम् अतो माभूत्ते भयमित्याह-यदीति । तावत् समुद्रे स्वल्पसमुद्र इत्यर्थः ॥ १२ ॥

रा० टी०-स इति । अर्णवं तीर्त्वा आगतः स रामः जीवन्न प्रतियास्यति इत्यहं सत्यं प्रतिजानामि ॥ १३ ॥

गो० टी०-स त्विति । अर्णवं तीर्त्वा स्थितो राम इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०-संरब्धं युद्धे संरम्भवन्तम् । रुष्टं कुपितम् । उत्तरं वाक्यं न प्रत्यपद्यत ॥ १४ ॥

रा० टी०-एवमिति । एवं ब्रुवाणं रावणं संरब्धं युद्धोद्योगवन्तं रुष्टं क्रुद्धं च विज्ञाय माल्यवान् उत्तरं वाक्यं न प्रत्यपद्यत अकथयदित्यर्थः ॥ १४ ॥

गो० टी०-एवमिति । संरब्धम् अहंकारयुक्तम् । व्रीडित इति । स्वोपदेशवैफल्यादिति भावः ॥ १४ ॥

१५-१६ ] ति० टी०-अभ्यनुज्ञातो रावणेन ॥१५॥१६॥

रा० टी०-जयेति जयाशिषा विजयहेतुकाशीर्वचनेन वर्धयित्वा अभ्यनुज्ञातो माल्यवान् स्वनिवेशनं गृहं जगाम ॥१५॥

गो० टी०-जयेति । यथोचितमिति । प्रत्युत्थानादिनेति भावः ॥ १५ ॥

रा० टी०-रावण इति । रावणो मन्त्रयित्वा विमृश्य विचार्य च लङ्कायाः गुप्तिं रक्षां कारयामास ॥ १६ ॥

गो० टी०-रावण इति । मन्त्रयित्वा कर्तव्यम् विचार्य । विमृश्य निश्चित्य ॥ १६ ॥

१७ ] ति० टी०-गुप्तिप्रकारः-व्यादिदेशेति ॥ १७ ॥

रा० टी०-तत्प्रकारमाह-व्यादिदेशेत्यादिभिः । पूर्वस्यां द्वारि तद्रक्षणार्थमित्यर्थः प्रहस्तं व्यादिदेश दक्षिणस्यां तु महापार्श्वमहोदरौ व्यादिदेश ॥ १७ ॥

गो० टी०-स इति । व्यादिदेश रक्षणायेति शेषः ॥१७॥

१८ ] ति० टी०-महामायमित्यादीन्द्रजिद्विशेषणम्॥१८॥

रा० टी०-पश्चिमायामिति । महामायमिन्द्रजितं व्यादिदेश ॥ १८ ॥

गो० टी०-पश्चिमायामिति । स्पष्टः ॥ १८ ॥

१९ ] ति० टी०-व्यादिश्य तन्मुखतो वृत्तान्तश्रवणोत्तरं तौ तिरस्कृत्येत्यर्थः । अत्रोत्तरद्वारे । स्वयं च स्वयमेव गमिष्यामीति तान्मन्त्रिण उवाच ॥ १९ ॥

रा० टी०-उत्तरस्यामिति । उत्तरस्यां द्वारि शुकसारणौ व्यादिश्य अत्र आदिष्टराक्षसस्थितदिक्षु अहं गमिष्यामि यथाकालं सर्वं द्रक्ष्यामीत्यर्थः, इति मन्त्रिण उवाच ॥ १९ ॥

गो० टी०-उत्तरस्यामिति । भविष्यामीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ १९ ॥

---

१ चेति गो. पाठः । २ लङ्कायामतुलामिति गो. पाठः । ३ स व्यादिदेशेति गो. पाठः । ४ अथो इति गो. पाठः । ५ तथेति गो. पाठः । ६ भविष्यामीति गो. पाठः ।

राक्षसं तु विरूपाक्षं महावीर्यपराक्रमम् । मध्यमेऽस्थापयद्गुल्मे बहुभिः सह राक्षसैः ॥ २० ॥
एवं विधानं लङ्कायां कृत्वा राक्षसपुंगवः । कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥ २१ ॥
विसर्जयामास ततः स मन्त्रिणो विधानमाज्ञाप्य पुरस्य पुष्कलम् ।
जयाशिषा मन्त्रिगणेन पूजितो विवेश सोऽन्तःपुरमृद्धिमन्महत् ॥ ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ।

राघवसुग्रीवयोरन्येषु हनुमदादिषु हरिषु च लङ्काभ्यर्णं प्राप्य कार्यसिद्धौ मन्त्रयमाणेषु बिभीषणः स्वसचिवचतुष्टयेन विहगरूपिणा रक्षोबलं प्रविश्य सर्वं वीक्ष्य प्रतिनिवृत्तेन कथितं पौलस्त्यकृतद्वाररक्षणं न्यवेदयत् रामोऽपि प्रतिद्वारं कपीन्नियुज्य ससैन्यः सुवेलमारुरुक्षत् ।

नरवानरराजानौ स तु वायुसुतः कपिः । जाम्बवानृक्षराजश्च राक्षसश्च बिभीषणः ॥ १ ॥
अङ्गदो वालिपुत्रश्च सौमित्रिः शरभः कपिः । सुषेणः सहदायादो मैन्दो द्विविद एव च ॥ २ ॥
गजो गवाक्षः कुमुदो नलोऽथ पनसस्तथा । अमित्रविषयं प्राप्ताः समवेताः समर्थयन् ॥ ३ ॥
इयं सा लक्ष्यते लङ्का पुरी रावणपालिता । सासुरोरगगन्धर्वैः सर्वैरपि सुदुर्जया ॥ ४ ॥
कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये । नित्यं संनिहितो यत्र रावणो राक्षसाधिपः ॥ ५ ॥

---

२०-२१ ] ति० टी०—वीर्यं क्रमणसामर्थ्यम् । मध्यमे पुरमध्यवर्तिनि सेनासंनिवेशेऽस्थापयत् ॥ २० ॥ २१ ॥

रा० टी०—राक्षस इति । विरूपाक्षं मध्यमे गुल्मे अस्थापयत् ॥ २० ॥

गो० टी०—राक्षसमिति । मध्यमे गुल्म इति । गुल्मो नाम नगरमध्यचैत्यस्थानम् ॥ २० ॥

रा० टी०—एवमिति । राक्षसपुङ्गवः लङ्कायामेवं विधानं कृत्वा आत्मानं कृतकृत्यमिव मन्यते मेने ॥ २१ ॥

गो० टी०—एव मिति । विधानं रक्षणसंविधानम् ॥२१॥

२२ ] ति० टी०—जयाशिषा जयाशीर्बोधकशब्दैः ॥२२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रा० टी०—विसर्जयामासेति । स रावणः पुरस्य पुष्कलं बहुविधानमाज्ञाप्य मन्त्रिणो विसर्जयामास मन्त्रिगणेन जयाशिषा पूजितः स रावणः महत् ऋद्धिमत् अन्तःपुरमाविवेश ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

गो० टी०—विसर्जयामासेति । पुष्कलं समग्रम् ॥ २२॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

---

१ ] ति० टी०—नरेति । रामसुग्रीवौ टजभाव आर्षः ॥१॥

२ ] ति० टी०—सहदायादः सबन्धुः ॥ २ ॥

३ ] ति० टी०—अमित्रविषयं शत्रुदेशम् । समर्थयन्मन्त्रमकुर्वन् ॥ ३ ॥

रा० टी०—रावणवृत्तान्तमुक्त्वा रामवृत्तान्तमाह—नरेत्यादिभिः । अमित्रविषयं रिपुदेशं प्राप्ताः नराणां वानराणां च राजानौ रामसुग्रीवौ समासान्तविधेरनित्वाट्टजभावः वायुसुतादयश्च समर्थयन् समार्थयन् अतर्कयन् । श्लोकत्रयमेकान्वयि ॥ १-३ ॥

गो० टी०—अथ रामस्य सेनागुप्तिविधानं सप्तत्रिंशे—नरवानरेत्यादिश्लोकत्रयमेकान्वयम् । सहदायादः सबान्धवः दायादौ सुतबान्धवावित्यमरः। इदं विशेषणं सर्वत्र यथार्हमन्वेति। अमित्रविषयं शत्रुदेशम् । समर्थयन् अमन्त्रयन् ॥ १-३ ॥

४ ] ति० टी०—मन्त्रप्रकारः—इयमिति । असुरादिसहितैः सर्वैर्देवैरपि यासु दुर्जया श्रूयते सेयम् ॥ ४ ॥

रा० टी०—तत्प्रकारमाह—इयमिति । सुरादिभिरपि सुदुर्जया इयं लङ्का लक्ष्यते ॥ ४ ॥

गो० टी०—अथ विचारप्रकारमेवाह—इयमित्यादिना । सा हनुमता पूर्वमुक्ता। कार्यसिद्धिं विजयसिद्धिम् पुरस्कृत्य प्रधानीकृत्य विनिर्णये निमित्ते मन्त्रयध्वम् विजयसाधककार्यनिर्णयाय मन्त्रः प्रवर्त्यतामित्यर्थः ॥ ४ ॥ ५ ॥

५ ] ति० टी०—कार्यसिद्धिं शत्रुहननरूपकार्यसिद्धिं पुरस्कृत्य तदुपायनिश्चयाय मन्त्रः क्रियताम् । नित्यं यत्र रावणः संनिहितः सेयं लङ्केति शेषः ॥ ५ ॥

---

१ लङ्काया इति गो. पाठः । २ चेति गो. पाठः । ३ राजौ ताविति गो. पाठः । ४ शरभ इति गो. पाठः । ५ अमरैरपीति गो. पाठः । ६ यत्रेति गो. पाठः ।

अथ[1] तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् । वाक्यमग्राम्यपदवत्पुष्कलार्थं विभीषणः ॥ ६ ॥
अनलः पनस[2]श्चैव संपातिः प्रमति[3]स्तथा । गत्वा लङ्कां ममामात्या पुरीं पुनरिहागताः ॥ ७ ॥
भूत्वा शकुनयः सर्वे प्रविष्टाश्च रिपोर्बलम् । विधानं विहितं यच्च तद्दृष्ट्वा समुपस्थिताः ॥ ८ ॥
संविधानं यथाहु[4]स्ते रावणस्य दुरात्मनः । राम तद्ब्रुवतः सर्वं याथातथ्येन[5] मे शृणु ॥ ९ ॥
पूर्वं प्रहस्तः सबलो द्वारमासाद्य तिष्ठति । दक्षिणं च महावीर्यौ[6] महापार्श्वमहोदरौ ॥ १० ॥
इन्द्रजित्पश्चिमं[7] द्वारं राक्षसैर्बहुभिर्वृतः[8] । पट्टिशासिधनुष्मद्भिः शूलमुद्गरपाणिभिः ॥ ११ ॥
नानाप्रहरणैः शूरैरावृतो रावणात्मजः । राक्षसानां सहस्रैस्तु बहुभिः शस्त्रपाणिभिः ॥ १२ ॥
युक्तः परमसंविग्नो[9] राक्षसैः सह[10] मन्त्रवित् । उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥ १३ ॥
विरूपाक्षस्तु महता शूलमुद्गरधनुष्मता । बलेन राक्षसैः सार्धं मध्यमं गुल्ममाश्रितः ॥ १४ ॥
एतानेवंविधान्गुल्मांल्लङ्काया[11] समुदीक्ष्य ते । मामका मन्त्रिणः[12] सर्वे शीघ्रं पुनरिहागताः ॥ १५ ॥
गजानां दश[13]साहस्रं रथानामयुतं तथा[14] । हयानामयुते द्वे च साग्रां[15] कोटिं च रक्षसाम् ॥ १६ ॥

रा० टी०—कार्येति । यत्र रावणो नित्यं संनिहितः तत्र प्राप्ता यूयमिति शेषः, कार्यसिद्धिं पुरस्कृत्य उद्दिश्य विनिर्णये कृत्यनिर्णयार्थं मन्त्रयध्वम् ॥ ५ ॥

६-७ ] ति० टी०—अग्राम्यपदवदग्राम्यार्थपदवदपशब्दहीनं च पुष्कलार्थं बह्वर्थाल्पशब्दम् ॥ ६ ॥ ७ ॥

रा० टी०—अथेति । तेषु रामादिषु ब्रुवाणेषु सत्सु रावणावरजो विभीषणः पुष्कलार्थं बह्वर्थविशिष्टम् अग्राम्यपदवत् अपशब्दहीनं वाक्यमब्रवीत् ॥ ६ ॥

गो० टी०—तथेति । अग्राम्यपदवत्संस्कृतपदवत् । सर्वेषां स्फुटप्रतिपत्तये स्वदेशभाषापदरहितमुक्तवानित्यर्थः ॥६॥

रा० टी०—तदाकारमाह—अनल इत्यादिभिः । अनलादयो ममामात्याः लङ्कां गत्वा पुनरिहागताः ॥ ७ ॥

गो० टी०—अनल इत्यादिश्लोकत्रयम् । विधानं नगररक्षणसंविधानम् । ते दुरात्मनो रावणस्य यत्संविधानमाहुः तद्यथातत्त्वेन याथार्थ्येन ब्रुवतः मे मत्तः शृणु ॥ ७ ॥ ९ ॥

८-९ ] ति० टी०—यच्च विधानं विहितम् । पुररक्षार्थमिति शेषः । समुपस्थिता मम समीपं प्राप्ताः ॥ ८ ॥ ९ ॥

रा० टी०—गमनप्रयोजनं बोधयन्नाह—भूत्वेति । शकुनयः पक्षिणो भूत्वा रिपोर्बलं प्रविष्टाः सर्वेऽमात्याः यद्विधानं पुररक्षोपायो विहितं कृतं तद्दृष्ट्वा समुपस्थिताः पुनरागताः॥८॥

रा० टी०—संविधानमिति । रावणस्य संविधानमुपायं तेऽमात्याः यथाहुः तथा याथातथ्येन ब्रुवतो मे शृणु ॥ ९ ॥

१०-११ ] ति० टी०—पूर्वं द्वारमित्यन्वयः ॥ १० ॥ ११ ॥

रा० टी०—तद्वचनमेवाह—पूर्वमित्यादिभिः । पूर्वं द्वारमासाद्य प्रहस्तस्तिष्ठति ॥ १० ॥

गो० टी०—पूर्वमिति । स्पष्टः ॥ १० ॥

रा० टी०—इन्द्रजिदिति । पश्चिमं द्वारं रावणात्मज इन्द्रजित्तिष्ठति उत्तरं तु युक्तो नियोजनकर्ता स्वयं रावण आस्थितः श्लोकत्रयमेकान्वयि ॥ ११-१३ ॥

गो० टी०—इन्द्रजिदिति । पट्टिशासिधनुष्मद्भिः शूलमुद्गरपाणिभिः बहुभी राक्षसैः प्रधानराक्षसैर्वृतः नानाप्रहरणैः शूरैरावृतः रावणात्मजः इन्द्रजित्पश्चिमद्वारम् आसाद्य तिष्ठतीत्यनुकृष्यते ॥ ११ ॥

१२ ] ति० टी०—राक्षसानां सहस्रैरित्यादि रावणविशेषणम् ॥ १२ ॥

१३-१५ ] ति० टी०—परमसंविग्नः शुकसारणावेदितमहाबलस्मरणादन्तःकरणेऽतिभीतः ॥ १३-१५ ॥

गो० टी०—राक्षसानामित्यादि । असंविग्नः अकम्पितहृदयः । राक्षसैः प्रधानभूतैः ॥ १२ ॥ १३ ॥

रा० टी०—विरूपाक्ष इति । विरूपाक्षो मध्यमं गुल्ममाश्रितः ॥ १४ ॥

गो० टी०—विरुपाक्षस्त्विति । बलेन सेनया । राक्षसैः मुख्यैः ॥ १४ ॥

रा० टी०—एतानिति । एते मन्त्रिणः एवंविधान् गुल्मान् समुदीक्ष्य पुनरिहागताः ॥ १५ ॥

गो० टी०—एतानिति । गुल्मान् सेनाः । गुल्मो रुक्स्तम्बसेनास्वित्यमरः ॥ १५ ॥ ॥

१६ ] ति० टी०—तद्बलाधिष्ठातृंस्तदुचितैःस्वबलैः प्रतिरोधकानुपदिश्य तत्रत्यबलस्य समाधिकन्यूनतापरिज्ञानाय तत्परिच्छेदमाह—गजानामिति । गजयोधिनामित्यर्थः । रथानां रथिनामयुतं दशसाहस्रम् । साग्रकोटिः किंचिल्लक्षसंख्याधिका कोटिरित्यर्थः ॥ १६ ॥

१ तथेति गो. पाठः । २ अरभ इति गो. पाठः । ३ प्रघस इति गो. पाठः । ४ यथाहुरिति गो. पाठः । ५ यथातत्त्वेनेति गो.पाठः । ६ वीर्याविति रा. पाठः । ७ पश्चिमद्वारमिति गो. पाठः । ८ बहुभिर्वृत इति गो. पाठः । ९ खड्गेति गो. पाठः । १० आस्थित इति गो. पाठः । ११ लङ्कायामिति गो. पाठः । १२ सचिवा इति गो. पाठः । १३ च सहस्रं चेति गो. पाठः । १४ पुरे इति गो. पाठः । १५ साग्रकोटिरिति गो. पाठः ।

विक्रान्ता बलवन्तश्च संयुगेष्वाततायिनः । इष्टा राक्षसराजस्य नित्यमेते निशाचराः ॥ १७ ॥
एकैकस्यात्र युद्धार्थे राक्षसस्य विशांपते । परीवारः[1] सहस्राणां सहस्रमुपतिष्ठति[2] ॥ १८ ॥
एतां प्रवृत्तिं लङ्कायां मन्त्रिप्रोक्तां विभीषणः । एवमुक्त्वा महाबाहू राक्षसांस्तानदर्शयत् ॥ १९ ॥
लङ्कायां सचिवैः सर्वं[3] रामाय प्रत्यवेदयत् । रामं कमलपत्राक्षमिदमुत्तरमब्रवीत् ॥ २० ॥
रावणावरजः श्रीमान्राममियचिकीर्षया । कुबेरं तु यदा राम रावणः प्रतियुद्ध्यति[4] ॥ २१ ॥
षष्टिः शतसहस्राणि तदा निर्यान्ति राक्षसाः[5] । पराक्रमेण वीर्येण तेजसा सत्त्वगौरवात् ॥
सदृशा ह्यत्र[6] दर्पेण रावणस्य दुरात्मनः । ॥ २२ ॥
अत्र मन्युर्न कर्तव्यः कोपये[7] त्वां न भीषये । समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे ॥ २३ ॥

---

रा० टी०–गजानामिति । साम्रा किञ्चिल्लक्षाधिका एव कोटिरस्तीति शेषः ॥ १६ ॥

गो० टी०–गजानामित्यादि । गजानां गजयोधिनाम् । रथानां हयानामित्यत्राप्येवं द्रष्टव्यम् । हयानां साम्रकोटिः द्वे अयुते चेत्यन्वयः । एते एतावन्तः । यद्वा गजानामित्यादिशब्दा गजादिपराः एवमुत्तरोत्तराधिकसङ्ख्योच्यते । हयानां द्वे अयुते । रक्षसां साम्रकोटिः पूर्णा कोटिः । एते रावणस्येष्टा अन्तरङ्गाः । स्वसेविन इत्यर्थः । आततायिनः क्रूरा इत्यर्थः ॥ १६ ॥ १७ ॥

१७ ] ति० टी०–आततायिनः शस्त्रपाणयः एते यूथपा गणिताः ॥ १७ ॥

रा० टी०–विक्रान्ता इति । एते उक्तसंख्याकाः राक्षसाः राक्षसराजस्य नित्यमिष्टाः ॥ १७ ॥

१८ ] ति० टी०–सहस्राणां सहस्रम् । अनेकलक्षमित्यर्थः । एकैकस्य राक्षसस्य परिवाराः परैर्युद्धार्थे । उक्तसंख्या उपतिष्ठन्ति ते ॥ १८ ॥

रा० टी०–एकैकस्येति । एकैकस्य राक्षसस्य सहस्राणां सहस्रं बहुसहस्रमित्यर्थः, परीवारः युद्धार्थं उपतिष्ठति ॥ १८ ॥

गो० टी०–एकैकस्येति । अत्र राक्षसेषु एकैकस्य राक्षसस्य सहस्राणां सहस्रं दशलक्षसङ्ख्याविशिष्टः परिवारः इदानीं युद्धार्थे युद्धनिमित्तम् । उपतिष्ठत इत्यन्वयः ॥ १८ ॥

१९ ] ति० टी०–एतां मन्त्रिप्रोक्तां प्रवृत्तिम् । एवं प्रकारेणोत्क्रान्तान्राक्षसाननलादींश्चतुरो मन्त्रिणोऽदर्शयत् ॥ १९ ॥

रा० टी०–एतामिति । विभीषणः मन्त्रिप्रोक्तां लङ्कायामेतां प्रवृत्तिमेवमुक्त्वा राक्षसान् अनलादीन् स्वमन्त्रिणः अदर्शयत्, एतैरेव दृष्टमित्यबोधयत् ॥ १९ ॥

गो० टी०–एतामिति सार्धश्लोकः । तान् मन्त्रिभूतान् । दर्शनानन्तरं सचिवैः प्रयोज्यकर्तृभिः । लङ्कायां सर्वां प्रवृत्तिमित्यनुषज्यते । रामाय प्रत्यवेदयत् सचिवैरपि तं वृत्तान्तमावेदयदित्यर्थः ॥ १९ ॥

२०–२१ ] ति० टी०–तैः सचिवैः करणभूतैः सर्वलङ्कायां यद्वृत्तं तत्प्रत्यवेदयत् तदुत्तरं राममिदमब्रवीच ॥ २० ॥ २१ ॥

२२ ] ति० टी०–षष्टिः शतसहस्राणि षष्टिलक्षमित्यर्थः । इदानीं बह्वधिकमित्यर्थः । पराक्रमादिना रावणस्य सदृशाः, सत्त्वगौरवाद्धैर्यातिशयाच तत्सदृशाः ॥ २२ ॥

रा० टी०–लङ्कायामिति । सचिवैः करणभूतैः लङ्कायां यद्वृत्तं तत्सर्वं रावणावरजो विभीषणः प्रत्यवेदयत् अकथयत् इदमुत्तरं स्वयमब्रवीच । सार्धं श्लोक एकान्वयी ॥ २० ॥

रा० टी०–तद्वचनाकारमाह–कुबेरमित्यादिभिः । हे राम ! यदा रावणः कुबेरं प्रत्ययुध्यत तदा अत्र युद्धे पराक्रमादिना ये रावणस्य सदृशाः तेषां रक्षसां षष्टिशतसहस्राणि षष्टिलक्षमित्यर्थः, निर्याति । अर्द्धचतुष्टयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०–राममित्यादि श्लोकत्रयम् । उत्तरम् अनन्तरवक्तव्यम् । दिग्विजयकालिकबलादाधुनिकबलमधिकमिति कथयितुं पूर्वबलं परिगणयति–कुबेरमिति । निर्यान्ति निर्ययुः । पराक्रमेण पराभिभवसामर्थ्येन । वीर्येण युद्धे स्वयमविकृतत्वेन तेजसा प्रतापेन सत्त्वगौरवात् धैर्यातिशयेनेत्यर्थः दर्पेण च रावणस्य अत्र ये सदृशास्तादृशा राक्षसा इति पूर्वेणान्वयः ॥ २०–२२ ॥

२३ ] ति० टी०–अत्र रावणबलवर्णनविषये मन्युः स्वान्तःकरणे दैन्यमपि रोषश्च न कार्यो रावणवत् । यतस्त्वां रावणं प्रति रोषये इत्यर्थः । तत्रहेतुमाह—समर्थ इति ॥२३॥

रा० टी०–अत्रेति । यतः सुराणामपि निग्रहे त्वं समर्थोऽसि अतः अत्र युद्धे मन्युरतिकोपो न कर्तव्यः अतिकोपमन्तरैव ते विजयो भविष्यतीति तात्पर्यम् अत एव त्वा न कोपये नापि भीषये ॥ २३ ॥

गो० टी०–स्वामिसन्निधौ शत्रुबलवर्णनमयुक्तमित्याशङ्क्य परिहरति–अत्रेति । अत्र बलवर्णने सति मन्युः क्रोधः न कर्तव्यः । रोषये शत्रुनिरसनाय रोषमुत्पादये न भीषये शत्रुबलवर्णनेन न भीतिमुत्पादये । रोषोत्पादनस्य फलमाह—समर्थो हीति ॥ २३ ॥

---

१ परिवार इति गो. पाठः । २ तिष्ठते इति गो. पाठः । ३ सर्वानिति गो. पाठः । ४ प्रत्ययुध्यतेति गो. रा. पाठः । ५ रक्षसामिति रा. पाठः । ६ वेऽत्रेति गो. पाठः । ७ रोषये इति गो. पाठः ।

तद्भवांश्चतुरङ्गेण बलेन महता वृतम् । व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम् ॥ २४ ॥
रावणावरजे वाक्यमेवं ब्रुवति राघवः । शत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् ॥ २५ ॥
पूर्वद्वारं तु लङ्काया नीलो वानरपुंगवः । प्रहस्तं प्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः ॥ २६ ॥
अङ्गदो वालिपुत्रस्तु बलेन महता वृतः । दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ॥ २७ ॥
हनूमान्पश्चिमद्वारं निष्पीड्य पवनात्मजः । प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ॥ २८ ॥
दैत्यदानवसङ्घानामृषीणां च महात्मनाम् । विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः ॥ २९ ॥
परिक्रमति यः सर्वाँल्लोकान्संतापयन्प्रजाः । तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः ॥ ३० ॥
उत्तरं नगरद्वारमहं सौमित्रिणा सह । निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः ॥ ३१ ॥
वानरेन्द्रश्च बलवानृक्षराजश्च वीर्यवान् । राक्षसेन्द्रानुजश्चैव गुल्मे भवतु मध्यमे ॥ ३२ ॥
न चैव मानुषं रूपं कार्यं हरिभिराहवे । एषा भवतु नः संज्ञा युद्धेऽस्मिन्वानरे बले ॥ ३३ ॥

२४-२५ ] ति० टी०—यस्मात्तेन तत्तद्वारेषु सर्वा सेना विभज्य स्थापिता, तत्तस्माद्भवानपीदं वानरानीकं तद्वदेव विभागेन व्यूह्य व्यूहितेन चतुरङ्गेण बलेन वृतं रावणं निर्मथिष्यसि ॥ २४ ॥ २५ ॥

रा० टी०—तदिति । इदं वानरानीकं व्यूह्य व्यूहरचनया संस्थाप्य रावणं भवान् निर्मथिष्यसि निर्मथिष्यति व्यत्ययेन मध्यमः पुरुषः ॥ २४ ॥

गो० टी०—तदिति । तत् राक्षसबलस्य व्यूढत्वात् महता बलेन वृतो भवानपि चतुरङ्गेण रावणसेनावच्चतुरवयवेन व्यूह्य विभज्य निर्मथिष्यसि मध्यमपुरुषत्वमार्षम् । चतुरङ्गकार्यकरत्वाच्चतुरङ्गत्वमित्यन्ये ॥ २४ ॥

रा० टी०—रावणेति । रावणावरजे एवं ब्रुवति सति शत्रूणां प्रतिघातार्थं राघवोऽब्रवीत् ॥ २५ ॥

गो० टी०—रावणेति । प्रतिघातार्थं प्रतिक्रियार्थम् ॥ २५ ॥

२६-२७ ] ति० टी०—प्रहस्तं प्रतियोद्धा प्रहस्तस्य सेनापतेः प्रतियोद्धा ॥ २६ ॥ २७ ॥

रा० टी०—तदाकारमाह—पूर्वेत्यादिभिः । लङ्कायां पूर्वद्वारे विद्यमानं प्रहस्तं प्रति वानरपुङ्गवो नीलः प्रतियोद्धा स्यात् प्रहस्तेन सह युध्यतामित्यर्थः ॥ २६ ॥

गो० टी०—पूर्वेति । पूर्वद्वारे स्थित्वेति शेषः ॥ २६ ॥

रा० टी०—अङ्गद इति । वालिपुत्रोऽङ्गदः दक्षिणे विद्यमानौ महापार्श्वमहोदरौ बाधताम् ॥ २७ ॥

गो० टी०—अङ्गद इति । स्पष्टः ॥ २७ ॥

२८ ] ति० टी०—हनूमान्पश्चिमद्वारमिति । तस्येन्द्रजिद्द्वारत्वात्तदुचितमहाबलनियोजनम् । तदेवौचित्यमाह—अप्रमेयात्मा ॥ २८ ॥

रा० टी०—हनूमानिति । हनूमान् पश्चिमद्वारं तत्स्थमिन्द्रजितं निष्पीड्य प्रविशतु ॥ २८ ॥

गो० टी०—हनुमानिति । अप्रमेयात्मेति मायाविन इन्द्रजितोयमेवार्ह इति भावः ॥ २८ ॥

२९ ] ति० टी०—विप्रकारो वधः ॥ २९ ॥

३०-३२ ] ति० टी०—सर्वाँल्लोकान्परिक्रमति दिग्विजयाय । अहं तस्य वधे धृतः कृतप्रतिज्ञो यतः, अतोऽहमेवोत्तरं द्वारं प्रवेक्ष्यामीत्युत्तरश्लोकेन योजना ॥ ३०—३२ ॥

रा० टी०—दैत्येति । दैत्यादीनां विप्रकारः अपकार एव प्रियो यस्य स यो रावणः प्रजाः संतापयन् सन् सर्वान् लोकान् परिक्रामति तस्य राक्षसेन्द्रस्य वधे स्वयं धृतः कृतनिश्चयोऽहम् उत्तरं नगरद्वारं निष्पीड्य यत्र रावणस्तत्राभिप्रवेक्ष्यामि । अर्द्धषट्कमेकान्वयि ॥ २९—३१ ॥

गो० टी०—स्वस्य चोत्तरद्वारनिरोधहेतुमाह—दैत्यदानवेत्यादि । श्लोकत्रयम् विप्रकारप्रियः प्रियविप्रकारः । "वा प्रियस्य" इति पूर्वनिपातः विप्रकारः पीडा । क्षुद्रः क्षुद्रबुद्धिः प्रजाः संतापयन् लोकान् परिक्रामतीत्यन्वयः । तस्याहमिति श्लोके यत्तच्छब्दाध्याहारेणाहंशब्दद्वयनिर्वाहः योहं धृतः निश्चितः सोहं प्रवेक्ष्यामीत्यन्वयः स्वयमेव अद्वारेण । यद्वा तस्याहमित्यर्धान्तमेकं वाक्यम् । उत्तरमित्यादि भिन्नं वाक्यम् ॥ २९-३१ ॥

रा० टी०—वानरेन्द्र इति । वानरेन्द्रप्रभृतिर्मध्यमे गुल्मे भवतु तिष्ठतु ॥ ३२ ॥

गो० टी०—वानरेन्द्र इति । गुल्मो भवतु मध्यमः मध्यमसेना भवत्वित्यर्थः । बलवद्भ्यां रावणेन्द्रजिद्भ्यामधिष्ठितयोरुत्तरपश्चिमयोः मध्यमगुल्मो भवत्वित्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—अथ वानराणामपि कामरूपतया रूपान्तरकरणे युद्धे स्वीयपरकीयविवेकासंभवादाह—न चैवेति । संज्ञा नित्यवानररूपधारणसंकेतः । एवं चास्मान्सप्त हित्वा मनुष्याकारो निःशङ्कं वध्यः वानररूपधारी वानरैर्युध्यते तदा वध्य एवेति भावः ॥ ३३ ॥

रा० टी०—राक्षसानां वानराणां च कामरूपित्वात् मनु-

१ वृत्त इति गो. पाठः । २ द्वारे इति गो. पाठः । ३ लङ्कायामिति रा. पाठः । ४ प्रहस्तप्रतीति गो.पाठः । ५ निपीड्येति गो.पाठः । ६ क्रामतीति गो. पाठः । ७ गुल्म इति गो. पाठः । ८ मध्यम इति गो. पाठः ।

वानरा एव वैश्चिह्नं स्वजनेऽस्मिन्भविष्यति । वयं तु मानुषेणैव सप्त योत्स्यामहे परान् ॥ ३४ ॥
अहमेव सह भ्रात्रा लक्ष्मणेन महौजसा । आत्मना पञ्चमश्चायं सखा मम विभीषणः ॥ ३५ ॥
स रामः कृत्यसिद्ध्यर्थमेवमुक्त्वा विभीषणम् । सुवेलारोहणे बुद्धिं चकार मतिमान्प्रभुः ॥
रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम् ॥　　　॥ ३६ ॥
ततस्तु रामो महता बलेन प्रच्छाद्य सर्वां पृथिवीं महात्मा ।
प्रहृष्टरूपोऽभिजगाम लङ्कां कृत्वा मतिं सोऽरिवधे महात्मा ॥　　　॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

ण्यरूपधारणे स्वपक्षपरपक्षयोर्विज्ञानं न स्यात् इत्यत आह—नेति । हरिभिर्वानरैः मानुषं रूपम् आहवे नैव कार्यं नोऽस्माकं वानरबले अस्मिन् युद्धे एषा संज्ञा चिह्नं भवतु ॥ ३३ ॥

गो० टी०—न चैवेति । संज्ञा संकेतः । अस्य प्रयोजनमाह—वानरा इति । नः अस्माकम् । वानरा एवास्मिन् स्वजने चिह्नं भविष्यतीति । अस्माकं वानरत्वमेवात्मीयत्वज्ञापकं भविष्यतीत्यर्थः । यदि वानरा अपि कामरूपधारणेन युद्ध्येयुः राक्षसानामपि तादृशत्वादात्मपरविवेको न स्यात् वानरत्वन्तु जघन्यतया न ते भजिष्यन्तीति भावः । इदानीं मानुषरूपपरिग्रहप्रतिषेधसामर्थ्यादितःपूर्वं मानुषरूपं परिगृह्य स्थिता इति गम्यते ॥ ३३ ॥ ३४ ॥

गो० टी०—वयं त्विति । मानुषेण मनुष्यसंबन्धिना । रूपेणेति शेषः । विभीषणादीनामपि मानुषरूपसंस्थानसादृश्यादेवमुच्यते ॥ ३५ ॥

३४ ] ति० टी०—संकेतप्रकारमाह—वानरा एवेति । वो युष्माकं स्वजने स्वजनत्वपरिज्ञाने वानरा एव वानरत्वविशिष्टा एव चिह्नम् । तद्वैशिष्ट्यमेव चिह्नमित्यर्थः । मानुषेण रूपेणेति शेषः ॥ ३४ ॥

रा० टी०—वानरा इति । वो युष्माकं स्वजने तत्परिज्ञाने वानराः तद्रूपमेव चिह्नं भविष्यति वयं सप्त तु मानुषेण रूपेणैव परान् रिपून् योत्स्यामहे एतेनाऽस्माकं मानुषरूपमेव चिह्नमिति सूचितम् ॥ ३४ ॥

३५ ] ति० टी०—के सप्त तत्राह—अहमिति । आत्मना पञ्चमः । मन्त्रिचतुष्टयसहितो विभीषण इत्यर्थः ॥ ३५ ॥

रा० टी०—सप्तैवाह—अहमिति । आत्मना स्वशरीरेण पञ्चमोऽयं विभीषणः सखा एतस्मिन् पञ्चमत्वं तु चतुरमात्यापेक्षया ॥ ३५ ॥

३६–३७ ] ति० टी०—रक्षसामपि संस्थानं मनुष्यवदेवेतीत एव ज्ञायते । कतककृत्—रक्षोरूपाणामपि तेषां मानुषत्वेन प्रच्छादनं स्वार्थानुरोधेन परेषामपरिज्ञानार्थं च । तदेवाह—कृत्यसिद्ध्यर्थं विभीषणमेवमुक्त्वेति । मानुषरूपेण स्वसमीपे स्थित्वा योद्धव्यमित्युक्त्वेत्यर्थ इत्याह । स वेलारोहणे बुद्धिं चकार । तस्य दुर्गत्वाद्रात्रौ तत्रावस्थानस्य सुखत्वाच्च । 'मतिमान्मतिम्' इति पाठे मतिमर्थनिर्धारणात्मिकां बुद्धिमित्यर्थः । अर्थनिर्धारणं मतिरिति तीर्थः ॥ ३६ ॥ ३७ ॥

एतदग्रे 'ततस्तु रामः' इति पद्यं पठन्ति तत्र । वक्ष्यमाणसंग्रहो नाप्युक्तानुवादो नाप्यत्र प्रकरणविच्छेद इतीमं श्लोकं वृथा प्रक्षिप्यात्र सर्गच्छेदं कुर्वन्ति भ्रान्ता इति कतककृत् ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

रा० टी०—स इति । रामः विभीषणमेवमुक्त्वा सुवेलस्य गिरेस्तटं रमणीयतरं दृष्ट्वा सुवेलस्यारोहणे बुद्धिं चकार सार्धश्लोक एकान्वयी ॥ ३५ ॥ ३६ ॥

रा० टी०—तत इति । महात्मा पूज्यस्वरूपो रामः अरिवधे मतिं कृत्वा बलेन सर्वां पृथिवीमाच्छाद्य महात्मा अतिप्रयत्नवान्सन् लङ्कामभिजगाम ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

गो० टी०—स राम इत्यादिसार्धश्लोक एकान्वयः । कृत्यसिद्ध्यर्थं कार्यसिद्ध्यर्थम् । वेलारोहणे विषये । बुद्धिः बुद्धिमान् मतुब्लोप आर्षः । मतिम् इच्छाम् । सुवेलारोहणे बुद्धिं चकार मतिमान् मतिमिद्धि च पाठः । सुवेलारोहणबुद्धिमेव मतिं चकार नान्यामित्यर्थः । आरोहणेच्छाहेतुमाह—रमणीयतरमिति सौन्दर्यावलोकनमेव तदारोहणहेतुः नतु लङ्काप्राप्तिः अत एव लङ्कोपरोधायावरोहणं वक्ष्यति—ततस्त्विति । पृथिवीं सुवेलकटकभूमिम् महात्मा महाबुद्धिः प्रहृष्टरूपःअतिशयेन प्रहृष्टः । "प्रशंसायां रूपप्" । लङ्कां लङ्कैकदेशसुवेलम् । महाधृतिरिति द्वितीयमहात्मशब्दार्थः । अभिजगाम । आरोहणायेति भावः ॥ ३६ ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने युद्धकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

१ न इति गो. पाठः । २ एष इति गो. पाठः । ३ बुद्धिरिति गो. पाठ. मतिमिति गो. पाठः ।

## अष्टात्रिंशः सर्गः ।

रामः सलक्ष्मणविभीषणः सुग्रीवादिभिश्च युतो मन्त्रयित्वा सुवेलगिरिमधिरुह्य लङ्कां न्यशामयत् । हरिप्रवीरा अपि युयुत्सवो भृशं नेदुस्तस्मिन्नेव महीध्रे रामेण समं तां निशामूषुश्च ।

स तु कृत्वा सुवेलस्य मतिमारोहणं प्रति । लक्ष्मणानुगतो रामः सुग्रीवमिदमब्रवीत् ॥ १ ॥
विभीषणं च धर्मज्ञमनुरक्तं निशाचरम् । मन्त्रज्ञं च विधिज्ञं च श्लक्ष्णया परया गिरा ॥ २ ॥
सुवेलं साधुशैलेन्द्रमिमं धातुशतैश्चितम् । अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ॥ ३ ॥
लङ्कां चालोकयिष्यामो निलयं तस्य रक्षसः । येन मे मरणान्ताय हृता भार्या दुरात्मना ॥ ४ ॥
येन धर्मो न विज्ञातो न वृत्तं न कुलं तथा । राक्षस्या नीचया बुद्ध्या येन तद्गर्हितं कृतम् ॥ ५ ॥
[ तस्मिन्मे वर्तते रोषः कीर्तिते राक्षसाधमे । यस्यापराधान्नीचस्य वधं द्रक्ष्यामि रक्षसाम् ॥
एको हि कुरुते पापं कालपाशवशं गतः । नीचेनात्मापचारेण कुलं तेन विनश्यति ॥ ]
एवं संमन्त्रयन्नेव सक्रोधो रावणं प्रति । रामः सुवेलमासाद्य चित्रसानुमुपारुहत् ॥ ६ ॥
पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत्समाहितः । सशरं चापमुद्यम्य सुमहद्विक्रमे रतः ॥ ७ ॥
तमन्वारोहत्सुग्रीवः सामात्यः सविभीषणः । [ हनुमानङ्गदो नीलो मैन्दो द्विविद एव च ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥
पनसः कुमुदश्चैव हरो रम्भश्च यूथपः । जाम्बवांश्च सुषेणश्च ऋषभश्च महामतिः ॥

---

१ ] ति० टी०—स त्विति ॥ १ ॥

२ ] ति० टी०—विधिज्ञं कार्यविदम् ॥ २ ॥

रा० टी०—सुग्रीवादिकं प्रति रामोक्तिमाह—स इत्यादिभिः । लक्ष्मणेनानुगतो रामः सुवेलस्यारोहणं प्रति मतिं कृत्वा सुग्रीवं विभीषणं चाब्रवीत् । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—अथ लङ्कादर्शनार्थं सुवेलारोहणमष्टात्रिंशे—स त्वित्यादिश्लोकद्वयमेकान्वयम् । धर्मज्ञेत्यादि सुग्रीवस्यापि विशेषणम् । सुवेलो नाम लङ्कासमतुङ्गताको गिरिविशेषः । विधिज्ञं कार्यज्ञम् ॥ १ ॥ २ ॥

३ ] ति० टी०—अध्यारोहाम आरोक्ष्यामहे ॥ ३ ॥

रा० टी०—तदाकारमाह—सुवेलमित्यादिभिः । धातुशतैः अनेकधातुभिः चितं सुवेलं वयं सर्वे अध्यारोहामहे इमां निशां वत्स्यामश्च ॥ ३ ॥

गो० टी०—सुवेलमिति । चितं व्याप्तम् । अध्यारोहामहे आरोक्ष्यामः । अयं च समुद्रतरणदिवसवृत्तान्तः पूर्वं संग्रहेणोक्तः अथ सविशेषमुच्यते ॥ ३ ॥

४ ] ति० टी०—मरणान्ताय मरणपर्यन्तदुःखमनुभवितुम् ४

५ ] ति० टी०—राक्षस्या रक्षः संबन्धिन्या नीचया क्रूरया। तत्सीताहरणरूपम् ॥ ५ ॥

रा० टी०—आरोहणप्रयोजनमाह—लङ्कामिति । मरणान्ताय स्वमरणपर्यवसानाय येन राक्षस्या बुद्ध्या धर्मादिर्न ज्ञातः अत एव येन मे भार्या हृता अत एव येन गर्हितं निन्दितं कर्म ऋषीपीडनादि कृतं तस्य रक्षसः निलयं लङ्कामालोकयिष्यामः । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—लङ्कामित्यादिश्लोकद्वयमेकान्वयम् । लङ्कालोकने निमित्तमाह—निलयमिति । मे भार्येति संबन्धः । मरणान्ताय मरणरूपफलाय तत् प्रसिद्धम् वृत्तं धर्मशास्त्रविहितस्वकुलाचारः कुलं स्वकुलातिशयः एतत्सर्वं भार्यापहरणनिवृत्तिहेतुः तन्नासीदित्यर्थः । तर्हि केन हेतुना कृतमित्यत्राह—राक्षस्येति । तद्भार्यापहरणम् ॥ ४ ॥ ५ ॥

६–७ ] ति० टी०—संमन्त्रयन्संचिन्तयन् । चित्रसानुं सुवेलमित्यन्वयः ॥ ६ ॥ ७ ॥

रा० टी०—एवमिति । एवं संमन्त्रयन् एव रामः चित्रसानुमुपारुहत् ॥ ६ ॥

गो० टी०—एतादृशस्य निलयदर्शने किं फलं तत्राह—तस्मिन्निति । वर्तते उत्पद्यते । तर्हि तन्मात्रवधे यत्नः क्रियतामित्यत्राह—यस्येति ॥ ६ ॥

गो० टी०—अन्यस्य दोषेणान्यवधः किमर्थं क्रियत इत्यत्राह—एक इति । एकः पापं कुरुते नीचेन तेन कर्त्रा आत्मापचारेण तद्दोषेण कारणेन कुलं तत्संबन्धिनः सर्वे विनश्यन्ति ॥ ७ ॥

गो० टी०—एवमिति । संमन्त्रयन् वदन् । उपारुहत् उपारुक्षत् ॥ ८ ॥

रा० टी०—पृष्ठत इति । चापमुद्यम्य लक्ष्मणश्च पृष्ठतोऽन्वगच्छत् ॥ ७ ॥

---

१ तद्वृत्तमिति गो. पाठः । २ श्लोकद्वयमेतदधिकं गो. पाठे । ३ वासायेति गो. पाठे । ४ एवमिति रा. पाठः । ५ एतच्छ्लोकत्रयमधिकं गो.पाठे । ६ परमश्चेति रा. पाठः । ७ कपिरिति रा. पाठः ।

दुर्मुखश्च महातेजास्तथा शतबलिः कपिः । एते चान्ये च बहवो वानराः शीघ्रगामिनः ॥ ]
ते वायुवेगप्रवणास्तं गिरिं गिरिचारिणः ॥ ॥ ८ ॥
अध्यारोहन्त शतशः सुवेलं यत्र राघवः । ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः ॥ ९ ॥
ददृशुः शिखरे तस्य विषक्तामिव खे पुरीम् । तां शुभां प्रवरद्वारां प्राकारवरशोभिताम् ॥ १० ॥
लङ्कां राक्षससंपूर्णां ददृशुर्हरियूथपाः । प्राकारवरसंस्थैश्च तथा नीलैश्च राक्षसैः ॥
ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम् ॥ ॥ ११ ॥
तं दृष्ट्वा वानराः सर्वे राक्षसान्युद्धकाङ्क्षिणः । मुमुचुर्विविधान्नादांस्तस्य रामस्य पश्यतः ॥ १२ ॥
ततोऽस्तमगमत्सूर्यः संध्यया प्रतिरञ्जितः । पूर्णचन्द्रप्रदीप्ता च क्षपा समतिवर्तत ॥ १३ ॥
ततः स रामो हरिवाहिनीपतिर्विभीषणेन प्रतिनन्द्य सत्कृतः ।
सलक्ष्मणो यूथपयूथसंवृतः सुवेलपृष्ठे न्यवसद्यथासुखम् ॥ ॥ १४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

---

गो० टी०–पृष्ठत इत्यादि । सार्धश्लोकः सुसमाहित सावधानः ॥ ९ ॥

८ ] ति० टी०–वायुवेगप्रवणा वायुवेगगतयः ॥ ८ ॥

९ ] ति० टी०–यत्र राघवः । येन राघव आरूढ इत्यर्थः ॥ ९ ॥

रा० टी०–तमिति । तं सुवेलं गिरिं सुग्रीवप्रभृतिः अन्वारोहत् । श्लोकत्रयमेकान्वयि ॥ ८–१० ॥

रा० टी०–एते इति । एते अन्ये च शतशो वानराः यत्र राघवः तत्र सुवेलमध्यारोहन्त । सार्धं श्लोक एकान्वयी ॥११॥

गो० टी०–सामान्य इत्युक्तं विवृणोति—हनुमानित्यादिचतुःश्लोकी । हनुमानिति पृथगुक्त्या रामलक्ष्मणौ पद्भ्यामेवारूढाविति गम्यते ते प्रसिद्धाः एते चान्ये च वायुवेगप्रवणाः वायुवेगेन गच्छन्तः । " प्रुङ्, गतौ " इति धातोर्बहुलग्रहणात्कर्तरि ल्युट् अत एव शीघ्रगामिनः सन्तः अध्यारोहन्त ॥ १०–१३ ॥

१० ] ति० टी०–शिखरे तस्येति स्थितेति शेषः । खे आकाशे विषक्तां रचितामिव ॥ १० ॥

रा० टी०–ते इति । ते वानराः अदीर्घेणैव कालेन गिरिमारुह्य शिखरे स्थित्वेति शेषः खे विषक्तामिव पुरीं ददृशुः ॥ १२ ॥

गो० टी०–ते त्विति । ते रामादयः तस्य प्रसिद्धस्य त्रिकूटस्य खे विषक्ताम् आकाशे लम्बमानामिव स्थिताम् पुरीं लङ्काम् सर्वतो ददृशुः ॥ १४ ॥

११–१२ ] ति० टी०–रक्षार्थं प्राकारवरसंस्थैर्निशाचरैरपरं प्राकारं कृतमिव ददृशुः ॥ ११ ॥ १२ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह—तामिति । प्रवराणि द्वाराणि यस्याः तां लङ्कां हरियूथपाः ददृशुः ॥ १३ ॥

गो० टी०–वानराश्च ददृशुरित्याह–तामिति । स्पष्टः ॥१५॥

रा० टी०–प्राकारेति । प्राकारवरसंस्थैः रक्षणार्थं प्रवरप्राकारेषु स्थितैर्नीलैः राक्षसैः कृतं रचितमपरं प्राकारं प्राकारतया प्रतीयमानं राक्षससमूहमित्यर्थः, हरिश्रेष्ठाः ददृशुः ॥ १४ ॥

गो० टी०–प्राकारेति । प्राकारस्य चयः वप्रम् तत्र स्थितैः । स्याच्चयो वप्रमस्त्रियामित्यमरः ॥ १६ ॥

रा० टी०–तमिति । तं राक्षसगणं वानराः दृष्ट्वा युद्धकाङ्क्षिणः सन्तः रामस्य पश्यतः नादान् मुमुचुः ॥ १९ ॥

गो० टी०–त इति । स्पष्टः ॥ १७ ॥

१३–१४ ] ति० टी०–प्रतिरञ्जितः प्रतिप्रापितरागः । पूर्णचन्द्रप्रदीप्ता क्षपेत्यनेन पौषशुक्लचतुर्दश्यां पूर्णिमायां वा सुवेलारोहणमिति बोध्यम् । 'सुवेलाग्रे रामः सैन्यं न्यवेशयत्' इत्यग्रिवेश्योक्तेः । अत्र पूर्णचन्द्रत्वोक्तिः पूर्णकल्पत्वादिति ॥१४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

रा० टी०–तत इति । ततोऽनतरं संध्यया प्रतिरञ्जितः प्राप्तारुण्यः सूर्यः अस्तमगमत् पूर्णचन्द्रेण प्रदीप्ता क्षपा रात्रिः समभिवर्तत समभ्यवर्तत ॥ १६ ॥

गो० टी०–तत इति । प्रतिरञ्जितः रक्तवर्णीकृतः । पूर्णचन्द्रप्रदीप्तेति । अनेन पौर्णमास्यां सुवेलारोहणमित्युक्तम् प्रथमायां युद्धारम्भ इत्याहुः । यद्वा पूर्णचन्द्रतुल्यप्रदीपवतीति वार्थः संभवन्ति हि वानरसेनायामपि प्रकाशार्थमारोपिता दीपाः ॥ १८ ॥

रा० टी०–तत इति । विभीषणेन प्रतिनन्द्य सत्कृतः स लक्ष्मणः स प्रसिद्धो रामः यूथपयूथसंवृतो हरिवाहिनीपतिः

---

१ परीति गो. पाठः । २ चयेति गो. पाठः । ३ तदेति गो. पाठः । ४ निशाचरैरिति गो. पाठः । ५ ते इति गो. पाठः । ६ तत्रेति गो. पाठः । ७ अभिवर्तते इति गो. पाठः । ८ वृत इति गो. पाठः ।

# एकोनचत्वारिंशः सर्गः ।

तां रात्रिमुषिता स्तत्र हरियूथपा लङ्कायाः वनोपवनानि निखिलैर्मनोज्ञतरुपुष्पादिभिरधिष्ठितानि ददृशुः केचित्सुग्रीवनिदेशेन लङ्कामेव जग्मुः रामस्तु सर्वाङ्गहृद्यां तां पुरीमवेक्ष्य विस्मितः ।

तां रात्रिमुषितास्तत्र सुवेले हरियूथपाः । लङ्कायां ददृशुर्वीरा वनान्युपवनानि च ॥ १ ॥
समसौम्यानि रम्याणि विशालान्यायतानि च । दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २ ॥
चम्पकाशोकबकुलशालतालसमाकुला । तमालपनसच्छन्ना नागमालासमावृता ॥ ३ ॥
हिन्तालैरर्जुनैर्नीपैः सप्तपर्णैः सुपुष्पितैः । तिलकैः कर्णिकारैश्च पाटलैश्च समन्ततः ॥ ४ ॥
शुशुभे पुष्पिताग्रैश्च लतापरिगतद्रुमैः । लङ्का बहुविधैर्दिव्यैर्यथेन्द्रस्यामरावती ॥ ५ ॥
विचित्रकुसुमोपेतै रक्तकोमलपल्लवैः । शाद्वलैश्च तथा नीलैश्चित्राभिर्वनराजिभिः ॥ ६ ॥
गन्धाढ्यान्यतिरम्याणि पुष्पाणि च फलानि च । धारयन्त्यगमास्तत्र भूषणानीव मानवाः ॥ ७ ॥
तच्चैत्ररथसंकाशं मनोज्ञं नन्दनोपमम् । वनं सर्वर्तुकं रम्यं शुशुभे षट्पदायुतम् ॥ ८ ॥

---

सुग्रीवश्च सुवेलपृष्ठे यथासुखं न्यवसत । स रामादिरयं हरिवाहिनीपतिविशेषणं वा ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

गो० टी०—तत इति । वाहिनीपतिः वानरसेनानिर्वाहकः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्यानेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

१ ] ति० टी०—तामिति ॥ १ ॥

रा० टी०—सुवेलेनिवासकालकं वानरवृत्तान्तमाह—तामित्यादिभिः । सुवेले तां रात्रिमुषिताः हरियूथपाः वीराः लङ्कायाः समसौम्यानि समानि उन्नतनिम्नरहितानि सौम्यानि व्याघ्राद्युपद्रवरहितानि अत एव रम्याणि मनोहराणि अत एव दृष्टिरम्याणि दृष्टिप्रियाणि वनान्युपवनानि च ददृशुः दृष्ट्वा जातविस्मया बभूवुश्च । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—अथ लङ्कादर्शनमेकोनचत्वारिंशे—तामिति । तां रात्रिमित्यत्यन्तसंयोगे द्वितीया । ददृशुः प्रातरिति सिद्धम् । वनानि अकृत्रिमाणि उपवनानि कृत्रिमाणि ॥ १ ॥

२ ] ति० टी०—समसौम्यान्यायामविस्ताराभ्यां समानि समभूतलानि च दुष्टमृगाद्युपद्रवराहित्येन सौम्यानि, अत एव क्रीडादौ रम्याणीत्यर्थः इति तीर्थः । 'समसाम्यानि' इति पाठः । समप्रदेशे साम्यसंस्थानानि, रम्याणि मृगाद्युपद्रवराहित्यादिति कतकः । विशालानि विपुलानि आयतानि दीर्घाणि दृष्टिरम्याणि चक्षुःप्रियाणि ॥ २ ॥

गो० टी०—समेति । समानि च तानि सौम्यानि च समसौम्यानि निम्नोन्नतत्वरहितानि स्निग्धानि चेत्यर्थः अत एव रम्याणि रमणीयानि विशालानि विपुलानि आयतानि दीर्घाणि दृष्टिरम्याणि नयनाकर्षणानि वनान्युपवनानि चेत्याकृष्यान्वयः ॥ २ ॥

३–४ ] ति० टी०—चम्पकेत्यादिलङ्काविशेषणम् । नागमाला नागवृक्षपङ्क्तिः ॥ ३ ॥ ४ ॥

५ ] ति० टी०—द्रुमैरुपलक्षिता दृश्यैर्दृष्टिप्रियतरतमैरुपलक्षिता ॥ ५ ॥

६ ] ति० टी०—दृश्यान्येवाह—विचित्रेति ॥ ६ ॥

रा० टी०—चम्पकेति । चम्पकादिभिः समाकुला तमालपनसैः छन्ना नागानां तदभिधतरूणां मालाभिः समावृता सुपुष्पितैर्हिंतालादिभिरुपलक्षिता पुष्पितानि अग्राणि येषां तैः अत एव विचित्रकुसुमोपेतैः रक्तकोमलपल्लवविशिष्टैः लताभिः अनेकविधवल्लीभिः परिगतैर्व्याप्तैः अत एव दृश्यैर्दर्शनयोग्यैर्बहुविधैर्द्रुमैरन्यतरुभिश्च शाद्वलैश्च वनराजिभिश्चोपलक्षिता लङ्का इन्द्रस्यामरावतीव शुशुभे । श्लोकचतुष्टयमेकान्वयि ॥ ३–६ ॥

गो० टी०—चम्पकेत्यादि । श्लोकचतुष्टयमेकान्वयम् । नागमाला नागकेसरमाला । हिन्तालैरित्यादि । उपलक्षितेति शेषः । दिव्यैः पारिजातादिभिः । अत्राप्युपलक्षितेति शेषः । विचित्रेत्यादि । पदद्वयमपि दिव्यद्रुमविशेषणम् । शाद्वलैरित्यादावप्युपलक्षणे तृतीया । लङ्काशब्दश्चात्र सुवेलपरः । उत्तरत्र वानरप्रवेशोक्तेः । शुशुभे शोभमाना दृश्यत इत्यन्वयः ३–६

७ ] ति० टी०—अगमा वृक्षाः ॥ ७ ॥

रा० टी०—गन्धेति । तत्र लङ्कायामगमाः वृक्षाः मानवा भूषणानीव पुष्पाणि फलानि च धारयन्ति ॥ ७ ॥

गो० टी०—गन्धेति । तत्र वनेषु धारयन्ति अधारयन् । अगमाः वृक्षाः ॥ ७ ॥

८ ] ति० टी०—सर्वे ऋतवो यस्मिंस्तत्सर्वर्तुकम् ॥ ८ ॥

रा० टी०—तदिति । षट्पदैरायुतं व्याप्तं तल्लङ्कासंबन्धि वनं शुशुभे ॥ ८ ॥

---

१ पुंगवा इति गो. पाठः । २ पुन्नागेति गो. पाठः । ३ वनसमिति गो. पाठः । ४ चेति गो. पाठः । ५ गतैरिति गो. रा. पाठः । ६ लङ्केति गो. पाठः । ७ दिव्यैरिति गो. पाठः । ८ अभीति गो. पाठः ।

दात्यूहकोयष्टिवकैर्नृत्यमानैश्च बर्हिणैः । रुतं परभृतानां च शुश्रुवे वननिर्झरे ॥ ९ ॥
नित्यमत्तविहंगानि भ्रमराचरितानि च । कोकिलाकुलखण्डानि विहंगाभिरुतानि च ॥ १० ॥
भृङ्गराजाभिगीतानि कुररस्वनितानि च । [ कोणालकविघुष्टानि सारसाभिरुतानि च ] ॥
विविशुस्ते ततस्तानि वनान्युपवनानि च ॥ ॥ ११ ॥
हृष्टाः प्रमुदिता वीरा हरयः कामरूपिणः । तेषां प्रविशतां तत्र वानराणां महौजसाम् ॥ १२ ॥
पुष्पसंसर्गसुरभिर्ववौ प्राणसमोऽनिलः । अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः ॥
सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीम् ॥ ॥ १३ ॥
वित्रासयन्तो विहगांस्त्रासयन्तो मृगद्विपान् । कम्पयन्तश्च तां लङ्कां नादैः स्वैर्नदतां वराः ॥ १४ ॥
कुर्वन्तस्ते महावेगा महीं चरणपीडिताम् । रजश्च सहसैवोर्ध्वं जगाम चरणोत्थितम् ॥ १५ ॥
ऋक्षाः सिंहाश्च महिषा वारणाश्च मृगाः खगाः । तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥ १६ ॥
शिखरं तु त्रिकूटस्य प्रांशु चैकं दिविस्पृशम् । समन्तात्पुष्पसंछन्नं महारजतसंनिभम् ॥ १७ ॥

गो० टी०–तत्रैवेति । सर्वे ऋतवो यस्मिन् तत्सर्वर्तुकम् । " शेषाद्विभाषा " इति कप्प्रत्ययः षट्पदायतं षट्पदैरासमन्तायुतम् ॥ ८ ॥

९ ] ति० टी०–बर्हिणैर्मयूरैः । परभृताः कोकिलाः । वननिर्झरे निर्झरयुते वने राजदन्तादिः ॥ ९ ॥

रा० टी०–दात्यूहेति । दात्यूहादिभिरुपलक्षितानां परभृतानां कोकिलानां रुतं शब्दः वननिर्झरे वनसंबन्धिनिर्झरसमीपे शुश्रुवे कोयष्टिवकाः जलकुक्कुटविशेषाः ॥ ९ ॥

गो० टी०–नत्यूहेति । वननिर्झरे नत्यूहैः कोयष्टिभकैः जलकुक्कुटविशेषैः नृत्यमानैः नृत्यद्भिः बर्हिणैश्च महितानां परभृतानां रुतं शुश्रुवुरिति योजना ॥ ९ ॥

१०–१२ ] ति० टी०–कोकिलैराकुलाः खण्डा वृक्षखण्डा येषु तानि वनोपवनानि । अग्रेऽपि बहुव्रीहिरेव ॥ १० ॥ १२ ॥

रा० टी०–नित्येति । नित्यमत्ता विहङ्गा येषु अत एव विहङ्गाभिरुतानि कुररैः स्वनितानि वनान्युपवनानि च हृष्टास्तुष्टाः अत एव प्रमुदिताः ते हरयो विविशुः । श्लोकत्रयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०–वनरामणीयकाकृष्टास्तत्र विविशुरित्याह—नित्येत्यादिना कामरूपिण इत्यन्तेन श्लोकत्रयेण । विहगाः वक्ष्यमाणकोकिलादिव्यतिरिक्ताः । षण्डाः वृक्षसमूहाः । विहङ्गभृङ्गसंचारस्य तन्नादस्य च वनशोभाहेतुत्वात्तत्संचारमुक्त्वा तन्नादमाह—विहगेत्यादिना । विहगानामभिरुतं येषु तानि विहगाभिरुतानि एवमुत्तरत्रापि विग्रहः । कोणालकः खञ्जनः । सारसाभिरुतानीत्यनेन वनादीनां सरःसमीपवर्तित्वमुक्तम् । हृष्टाः पुलकिताः । प्रमुदिताः सन्तुष्टाः । वीराः शत्रुवनप्रवेशेऽपि निर्भयाः कामरूपिणः सूक्ष्मविपुलप्रवेशानुगुणस्थूलसूक्ष्मशरीरवन्तः ॥ १०–१२ ॥

रा० टी०–तेषामिति । पुष्पसंसर्गसुरभिर्वानराणां प्राणसमोऽनिलो ववौ ॥ १२ ॥

गो० टी०–तेषामिति । स्पष्टः ॥ १२ ॥

१३–१५ ] ति० टी०–प्राणसमत्वेन मन्दता । अन्ये तु वनोपवनप्रवेष्टृव्यतिरिक्ता यूथान्निष्क्रम्य लङ्कां जग्मुः॥१३–१५॥

रा० टी०–अन्ये इति । सुग्रीवेणाभ्यनुज्ञाताः अन्ये यूथपाः हरिवीराणां यूथान्निष्क्रम्य निर्गत्य लङ्कां कम्पयन्तो महीं चरणपीडितां कुर्वन्तश्च सन्तः लङ्कां जग्मुः अत एव चरणोत्थितं रजः ऊर्ध्वं जगाम श्लोकत्रयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०–अन्ये त्वित्यादिसार्धश्लोकद्वयमेकान्वयम् स्पष्टम् ॥ १४ ॥ १५ ॥

गो० टी०–रजश्चेत्यर्धमेकं वाक्यम् । चरणोत्थितं वानरपादाहतिजनितम् रजः ऊर्ध्वं जगाम उत्थितमित्यर्थः ॥ १६ ॥

१६ ] ति० टी०–वारणा वनगजाः ॥ १६ ॥

रा० टी०–ऋक्षा इति । तेन शब्देन वित्रस्ताः ऋक्षादयः दश दिशो जग्मुः ॥ १६ ॥

गो० टी०–ऋक्षा इति । अत्र ऋक्षादयो लङ्कावनवासिनः भीताः दर्शनादेव भीताः तेन शब्देन वित्रस्ताः विशेषेण त्रस्ताः दश दिशो जग्मुः यथायथं जग्मुरित्यर्थः ॥ १७ ॥

१७ ] ति० टी०–एकमखण्डम् । दिविस्पृशं दिविस्पृक् । पूर्वपदे ' हृद्द्युभ्यां च ' इति ङेरलुक् । स्पृशेः कप्रत्ययश्चार्षः । समन्तात् परित इत्यर्थः । महारजतं स्वर्णम् ॥ १७ ॥

१ नत्यूहेति गो. पाठः । २ कोयष्टिभकैरिति गो. पाठः । ३ बर्हिभिरिति गो. पाठः । ४ शुश्रुवुरिति गो. पाठः । ५ अभीति गो. पाठः । ६ भ्रमरैः सेवितानीति गो. पाठः । ७ अर्धमेतदधिकं गो. पाठे । ८ कोयष्टिकेति रा. पाठः । ९ प्राणसुख इति गो. पाठः । १० त्रासयन्त इति गो. पाठः । ११ ते इति गो. पाठः । १२ वराहाश्च महिषा वारणा मृगा इति गो. पाठः । १३ तदिति गो. पाठः ।

शतयोजनविस्तीर्णं विमलं चारुदर्शनम् । श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥ १८ ॥
मनसापि दुरारोहं किं पुनः कर्मणा जनैः । निविष्टा तस्य शिखरे लङ्का रावणपालिता ॥ १९ ॥
दशयोजनविस्तीर्णा विंशद्योजनमायता । सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसंनिभैः ॥
काञ्चनेन च शालेन राजतेन च शोभते ॥ ॥ २० ॥
प्रासादैश्च विमानैश्च लङ्का परमभूषिता । घनैरिवातपापाये मध्यमं वैष्णवं पदम् ॥ २१ ॥
यस्यां स्तम्भसहस्रेण प्रासादः समलंकृतः । कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ॥ २२ ॥
चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम् । शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ॥ २३ ॥
मनोज्ञां काञ्चनवतीं पर्वतैरुपशोभिताम् । नानाधातुविचित्रैश्च उद्यानैरुपशोभिताम् ॥ २४ ॥
नानाविहगसंघुष्टां नानामृगनिषेविताम् । नानाकुसुमसंपन्नां नानाराक्षससेविताम् ॥ २५ ॥

---

१८-१९ ] ति० टी०- शतयोजनेति । अनेकयोजनेत्यर्थः श्लक्ष्णं कुट्टिमभूमिवत् ॥ १८ ॥ १९ ॥

रा० टी०-शिखरमिति । प्रांशु स्वसमीपवर्ति शिखरद्वयापेक्षयोन्नतं पुष्पैः संछन्नं महारजतस्य सुवर्णस्य सन्निभः प्रकाशो यस्मिन् अत एव श्रीमत् अतिशोभाविशिष्टम् अत एव महत्प्रशंसनीयं शकुनैरपि दुष्प्रापं प्राप्तुमशक्यम् अत एव जनैरितरजन्तुभिर्मनसाऽपि दुरारोहं किं पुनः कर्मणा यत् तस्य प्रसिद्धस्य त्रिकूटस्य शिखरं तस्मिन् शिखरे रावणपालिता लङ्का निविष्टा अर्धपञ्चकमेकान्वयि ॥ १७ ॥ १९ ॥

गो० टी०-एवं त्रिकूटस्य प्रथमशिखरं सुवेलाख्यमुक्त्वा मध्यमशिखरं वर्णयति-शिखरं तदित्यादिना । सार्धश्लोकद्वयमेकान्वयम् । तत् प्रसिद्धम् प्रांशु पार्श्ववर्तिशिखरद्वयापेक्षया उन्नतम् एकम् अद्वितीयम् मध्यममित्यर्थः । स्पृशतीति स्पृशम् इगुपधलक्षणः कप्रत्ययः । समन्तात्पुष्पसंछन्नम् अत एव महारजतसन्निभं पुष्परजतसन्निभम् । यद्वा सुवर्णसन्निभमिति स्वरूपोक्तिः । चारुदर्शनं सुन्दरदर्शनम् एवंभूतं शिखरम् अदृश्यतेत्यध्याहारः ॥ १८ ॥ १९ ॥

गो० टी०-निविष्टेत्यादिश्लोकपञ्चकमेकान्वयम् । सालेन प्राकारेण । प्रासादैरिति । प्रासादादिलक्षणं प्रागेव लिखितम् आतपापाये वर्षारम्भसमये । मध्यमं वैष्णवं पदमिति । त्रिविक्रमावतारे त्रिभिः पदैः सर्वलोकक्रमणे मध्यमपदेनान्तरिक्षं क्रान्तमिति आकाशं मध्यमं वैष्णवं पदमिति उच्यते । यस्यामिति । उल्लिखन् व्याप्नुवन् । चैत्य इति । नगरमध्यचतुष्पथं चैत्यम् तत्र भवश्चैत्यः राक्षसेन्द्रस्य पुरभूषणमित्यन्वयः । यः समग्रेण रक्षसां शतेन नित्यं रक्ष्यते । यश्च राक्षसेन्द्रस्य पुरभूषणं बभूव । स्तम्भसहस्रेण समलंकृतः कैलासशिखराकारः खमुल्लिखन्निव स्थितः चैत्यः स प्रासादः यस्यां दृश्यते तादृशी रावणपालितत्वादिविशेषणविशिष्टा तत्र शिखरे निविष्टा लङ्का अदृश्यतेत्यध्याहारेणान्वयः ॥ २०-२४ ॥

२० ] ति० टी०-दशयोजनेति । इदं च लङ्कारूपमहादुर्गान्तर्वर्तिरावणवासस्थानभूतान्तर्दुर्गपरम् । 'शतयोजनविस्तीर्णा त्रिंशद्योजनमायता' इत्यत्रैवान्यत्र स्थल उक्तः । काञ्चनेन राजतेन शालेन प्राकारेण ॥ २० ॥

रा० टी०-दशेति । पाण्डुराम्बुदसन्निभैः उच्चैर्गोपुरैः पुरद्वारैः शालेन प्राकारेण चोपलक्षिता सा लङ्का शोभते सार्धश्लोक एकान्वयी ॥ २० ॥

२१ ] ति० टी०-प्रासादभूषितत्वे उपमानम्—घनैरित्यादि । मध्यमं वैष्णवं पदम् आकाशमित्यर्थः ॥ २१ ॥

२२ ] ति० टी०-तत्र रावणगृहं प्रासादविशेषेण लक्ष्यत इत्याह—यस्यामिति । स्तम्भसहस्रेण निर्मित इति शेषः२२

रा० टी०-प्रासादैरिति । यस्यां स्तम्भसहस्रेण समलंकृतः खमुल्लिखन्निव प्रासादो दृश्यते सा आतपापाये ग्रीष्मापगमसमये घनैर्मध्यमं वैष्णवं पदमाकाशमिव प्रासादैर्विमानैश्च परमभूषिता लङ्का दृश्यते । श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

२३-२५ ] ति० टी०-स एव पुरभूषणं प्रासादो राक्षसेन्द्रस्य । चैत्य आलयः । 'चैत्यमायतनं तुल्ये' । पुंस्त्वमार्षम् । समग्रेण रक्षसां शतेन समग्रसंनाहवता । अनेकेनेत्यर्थः२३-२५

रा० टी०-चैत्य इति । यः रक्षसां समग्रेण मिलितेन शतेन रक्ष्यते स चैत्यः पुरभूषणं बभूव मनोज्ञामिति समृद्धाः परिपूर्णाः अर्थाः यस्याम् अत एव समृद्धाम् अतिप्रवृद्धां त्रिदिवप्रख्यां नगरीं लङ्कां दृष्ट्वेति शेषः, लक्ष्मणाग्रजः विस्मयं प्राप श्लोकत्रयमेकान्वयि ॥ २३ ॥ २६ ॥

गो० टी०-एवं वानराणामग्रगतानां लङ्कादर्शनमुक्त्वा रामस्यापि तद्दर्शनमाह—मनोज्ञामित्यादिश्लोकत्रयमेकान्वयम् । पर्वतैः क्रीडाशैलैः । नानाधातुविचित्रैः इति पर्वतविशेषणम् । उद्यानैः कृत्रिमवनैः । नानाकाननेति । पूर्वं काननवत्त्वमुक्तम् अत्र तन्नानात्वमिति भिदा । समृद्धाम् उन्नताम् । समृद्धार्थां समृद्धद्रव्याम् । लक्ष्मीवान् नगरदर्शनजप्रीतिविकसितकान्तिः ॥ २६-२७ ॥

---

१ तत्रेति गो. पाठः । २ शतेति गो. पाठः । ३ त्रिंशदिति गो. पाठः । ४ बलेनेति गो. पाठः । ५ काननेति गो. पाठः । ६ काननसंतानामिति गो. पाठः ।

तां समृद्धां समृद्धार्थां लक्ष्मीवाँल्लक्ष्मणाग्रजः । [ रावणस्य पुरीं रामो ददर्श सह वानरैः ॥
तां महागृहसंबाधां दृष्ट्वा लक्ष्मणपूर्वजः ।] नगरीं त्रिदिवप्रख्यां विस्मयं प्राप वीर्यवान् ॥ २६ ॥
तां रत्नपूर्णां बहुसंविधानां प्रासादमालाभिरलङ्कृतां च ।
पुरीं महायन्त्रकवाटमुख्यां ददर्श रामो महता बलेन ॥ ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

ततो राघवे सकपिबले सुवेलमारुह्य लङ्काया गोपुरस्थं रावणं पश्यति सहसा सुग्रीवः समुत्प्लुत्य पौलस्त्यस्य मुकुटं भुवि पातयित्वा तेन सार्धं चिरं युध्वा वञ्चयित्वा च तं विजयी पुना रामपार्श्वमाजगाम ।

ततो रामः सुवेलाग्रं योजनद्वयमण्डलम् । उपारोहत्ससुग्रीवो हरियूथैः समन्वितः ॥ १ ॥
स्थित्वा मुहूर्तं तत्रैव दिशो दश विलोकयन् । त्रिकूटशिखरे रम्ये निर्मितां विश्वकर्मणा ॥ २ ॥
ददर्श लङ्कां सुन्यस्तां रम्यकाननशोभिताम् । तस्य गोपुरशृङ्गस्थं राक्षसेन्द्रं दुरासदम् ॥ ३ ॥
श्वेतचामरपर्यन्तं विजयच्छत्रशोभितम् । रक्तचन्दनसंलिप्तं रक्ताभरणभूषितम् ॥ ४ ॥
नीलजीमूतसंकाशं हेमसंछादिताम्बरम् । ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ५ ॥
शशलोहितरागेण संवीतं रक्तवाससा । संध्यातपेन संछन्नं मेघराशिमिवाम्बरे ॥ ६ ॥

---

२६-२७] ति० टी०—नगरीम् । दृष्ट्वेति शेषः॥२६॥२७॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

गो० टी०—तामिति । अमरप्रख्यः देवसदृशः ॥ २८ ॥

रा० टी०—तामिति । बहूनि संविधानानि रचनाविशेषाः यस्यां महायन्त्रयुक्ताः कपाटमुख्या यस्यां तां महता बलेनोपलक्षितां पुरीं लङ्कां रामो ददर्श ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

गो० टी०—पुनः संग्रहेणाह—तामिति । रत्नानि श्रेष्ठवस्तूनि । संविधानं रक्षणम् ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

१-३]ति० टी०—योजनद्वयमण्डलं योजनद्वयविस्तरम्१-३

४ ] ति० टी०—श्वेतचामरे पर्यन्ते वीज्यमाने यस्य । विजयच्छत्रेण श्वेतच्छत्रेण राजचिह्नेन शोभितम् ॥ ४ ॥

५ ] ति० टी०—हेमसंछादिताम्बरं हेममालोपरचितहंसादिचित्रैः संछादितमम्बरमन्तरीयवासो यस्य । ऐरावतविषाणाग्रकरणकैरुत्कृष्टैर्विलेखनैर्जातः किणो वक्षसि यस्य तम् ॥ ५ ॥

६ ] ति० टी०—शशलोहितं शशरुधिरं तत्सदृशरागवता रक्तवाससोत्तरीयवस्त्रेण संवीतम् ॥ ६ ॥

रा० टी०—रामवृत्तान्तमेवाह—तत इत्यादिभिः । योजनद्वयं तत्परिमितं मण्डलं विस्तारो यस्य तत् सुवेलाग्रं राम उपारोहत् ॥ १ ॥

गो० टी०—अथ सुग्रीवरावणयोर्द्वन्द्वयुद्धकथनं चत्वारिंशे अत्र प्रथमश्लोकः पूर्वोक्तानुवादः—ततः इति । योजनद्वयमण्डलं योजनद्वयविस्तारमण्डलम् ॥ १ ॥

रा० टी०—स्थित्वेति । तत्र सुवेलाग्रे मुहूर्तं स्थित्वा त्रिकूटशिखरे विश्वकर्मणा निर्मितां लङ्कां ददर्श । सार्धश्लोक एकान्वयी ॥ २ ॥

गो० टी०—स्थित्वेत्यादि । सुन्यस्तां सुष्ठु निवेशिताम्॥२॥

रा० टी०—तस्यामिति । तस्यां लङ्कायां गोपुरशृङ्गस्थं श्वेतचामरे पर्यन्ते समीपे वीज्यमाने यस्य तं विजयच्छत्रेण शोभितं हेम्ना संछादितं सौवर्णविविधरचनया रचितमम्बरं यस्य तम् ऐरावतस्य विषाणाग्रैः दन्तकोटिभिः उत्कृष्टेन युद्धादौ भेदनेन किणं व्रणं वक्षसि यस्य तं शशलोहितरागेण शशरुधिरसदृशारुण्यविशिष्टेन वाससा संवीतम् अत एव संध्यातपेन संध्याकालिकरवितेजसा संछन्नमम्बरे मेघराशिमिव राक्षसेन्द्र पश्यतां वानरेन्द्राणां पश्यतो राघवस्य चताननादृत्य अपृष्ट्वेत्यर्थः राक्षसेन्द्रस्य दर्शनात् सुग्रीव उत्थितो बभूवेति शेषः । सार्धश्लोकचतुष्टयमेकान्वयि ॥ ३ ॥ ७ ॥

गो० टी०—तस्यामित्यादि । सार्धश्लोकत्रयमेकान्वयम् । अत्र ददर्शेत्यनुषज्यते । श्वेते चामरे पर्यन्ते पार्श्वद्वये यस्य स श्वेतचामरपर्यन्तः । उभयतो वीज्यमानचामर इत्यर्थः । विजयच्छत्रं विजयसूचकच्छत्रम् । रत्नाभरणं पद्मरागाभरणम् ।

---

१ श्लोकोऽयमधिकः गो. पाठे । २ अमरप्रख्य इति गो. पाठः । ३ कपाटेति रा. पाठः । ४ मारुरोहेति गो. पाठः । ५ यूथपसंवृत इति गो. पाठः । ६ तस्यामिति गो. रा. पाठः । ७ रत्नेति गो. पाठः । ८ संवीतमिति गो. पाठः ।

पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः । दर्शनाद्राक्षसेन्द्रस्य सुग्रीवः सहसोत्थितः ॥ ७ ॥
क्रोधवेगेन संयुक्तः सत्त्वेन च बलेन च । अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ॥ ८ ॥
स्थित्वा मुहूर्तं संप्रेक्ष्य निर्भयेनान्तरात्मना । तृणीकृत्य च तद्रक्षः सोऽब्रवीत्परुषं वचः ॥ ९ ॥
लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस। न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा ॥ १० ॥
इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि । आकृष्य मुकुटं चित्रं पातयामास तद्भुवि ॥ ११ ॥
समीक्ष्य तूर्णमायान्तं बभाषे तं निशाचरः । सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि ॥ १२ ॥
इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले । कन्दुवत्स समुत्थाय बाहुभ्यामाक्षिपद्धरिः ॥ १३ ॥
परस्परं स्वेदविदिग्धगात्रौ परस्परं शोणितरक्तदेहौ ।
परस्परं श्लिष्टनिरुद्धचेष्टौ परस्परं शाल्मलिकिंशुकाविव ॥ ॥ १४ ॥

---

हेमसंछादिताम्बरं तत्र तत्र सुवर्णचित्राम्बरम् । सुवर्णसूत्रिताम्बरमिति वार्थः । उत्कृष्टकिणवक्षसम् उपपादितकिणवक्षसम् । उत्कृष्टस्य उल्लिखितस्य किणः वक्षसि यस्य स तथेति वार्थः । शशलोहितरागेण शशरुधिरसमानरागेण । रक्तशब्दविवरणमिदम् रक्तवाससा उत्तरीयेण । संवीतं परिवीतम् ॥ ३–६ ॥

७ ] ति० टी०–पश्यताम् । पश्यतोऽनादृत्येत्यर्थः ॥७॥

गो० टी०–हतं च रावणं सङ्ख्ये दर्शनादवधारयेति रामसन्निधौ पूर्वं प्रतिज्ञातमर्थं साधयितुमुत्थितः सुग्रीव इत्याह—पश्यतामित्यादिना । पश्यतामित्यनादरे षष्ठी । अत्रानादरणमनुक्त्वा गमनम् । सप्तम्यर्थे षष्ठी वा । दर्शनात् दर्शनमात्रात् । क्रोधवेगेन कथं मत्स्वामिनोऽग्रे स्वयं राजोपचारेण तिष्ठति दुरात्मेति कोपातिशयेनेत्यर्थः । सत्त्वेन मनोबलेन । बलेन कायबलेन । पुप्लुवे गोपुरमुद्दिश्येति शेषः ॥ ७ ॥ ८ ॥

८–९ ] ति० टी०–सत्त्वेन सत्त्वकार्योत्साहेन । अचलाग्रात्सुवेलाग्राद्गोपुरस्थले रावणावस्थितिस्थाने ॥ ८ ॥ ९ ॥

रा० टी०–क्रोधेति । क्रोधवेगेन सत्त्वेन तत्कार्यभूतयुद्धोत्साहेन च संयुक्तः सुग्रीवः अचलाग्रात् सुवेलशृङ्गात् उत्थाय गोपुरस्थले लङ्कापुरद्वारभूमौ पुप्लुवे उत्प्लुत्य प्राप ॥ ८ ॥

रा० टी०–स्थित्वेति । निर्भयेनान्तरात्मनोपलक्षितः स सुग्रीवो मुहूर्तं स्थित्वा संप्रेक्ष्य च तद्रक्षस्तृणीकृत्य परुषमब्रवीत् ॥ ९ ॥

गो० टी०–स्थित्वेति । गोपुरस्थले स्थित्वेत्यन्वयः । अन्तरात्मना मनसा ॥ ९ ॥

१० ] ति० टी०–पार्थिवेन्द्रस्य तेजसानुगृहीतेन मया न मोक्ष्यसे । रामाभिप्रायेण सखा, स्वाभिप्रायेण दास इति बोध्यम् ॥ १० ॥

रा० टी०–तदाकारमाह–लोकेति । रामस्याहं सखा दासश्चास्मि अतः पार्थिवेन्द्रस्य रामस्य तेजोपलक्षितेन मया त्वं न मोक्ष्यसे ॥ १० ॥

गो० टी०–लोकनाथस्येति । रामाभिप्रायेण सखा वस्तुतो दासोऽस्मीति भावः । मया मत्तः । औद्धत्यं परिहरति—पार्थिवेन्द्रस्य तेजसेति ॥ १० ॥

११ ] ति० टी०–उत्पत्य । गोपुरादिति शेषः । तस्योपरि पुप्लुवे । प्लुत्यागत इत्यर्थः । चित्रमद्भुतं तत्प्रसिद्धं मुकुटमाकृष्य शिरसो गृहीत्वा भुवि पातयामास । तत्पातयित्वा स्वयं भूमौ पपात ॥ ११ ॥

रा० टी०–इतीति । इत्युक्त्वा तस्य रावणस्योपरि पुप्लुवे मुकुटमाकृष्य पातयामास च ॥ ११ ॥

गो० टी०–इत्युक्त्वेति । स्पष्टम् ॥ ११ ॥

१२ ] ति० टी०–तूर्णमायान्तम् । पुनर्भूतलादिति शेषः । मे परोक्षमेव त्वं सुग्रीवः । इदानीं मद्दृष्टयग्रे हीनग्रीवो भविष्यसि ॥ १२ ॥

रा० टी०–समीक्ष्येति । तूर्णमायान्तं सुग्रीवं समीक्ष्य निशाचरो बभाषे । तदाकारमाह–मे परोक्षमसन्निधाने एव सुग्रीवः शोभनग्रीवावान् त्वं हीनग्रीवो भविष्यसि ॥ १२ ॥

गो० टी०–समीक्ष्येति । आयान्तं सुग्रीवमिति शेषः । परोक्षं ममासन्निधाने त्वं सुग्रीवः शोभनग्रीवः । प्रत्यक्षं तु हीनग्रीवो भविष्यसीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०–तले भूतले क्रीडायां तलाहतकन्दुको यथा द्राग्उत्तिष्ठति तद्वत्समुत्थाय बाहुभ्यामाक्षिपत् । भूमाविति शेषः ॥ १३ ॥

रा० टी०–इतीति इत्युक्त्वोत्थाय तं सुग्रीवं बाहुभ्यां तले भूतले आक्षिपत् हरिः स सुग्रीवोऽपि कन्दुवत् समुत्थाय बाहुभ्यां तं रावणं भूतले आक्षिपत् ॥ १३ ॥

गो० टी०–इत्युक्त्वेति । तले गोपुरतले । आक्षिपत् अपातयत् । कन्तुवत्समुत्थाय कन्तुकवज्झटित्युत्पत्येत्यर्थः ॥१३॥

१४ ] ति० टी०–शोणितेन रुधिरेण रक्तवर्णौ देहौ ययोस्तौ परस्परं श्लिष्टौ श्लिष्टत्वादेव तौ च तौ निरुद्धचेष्टौ शाल्मलिकिंशुकाविव । पुष्पिताविति शेषः ॥ १४ ॥

रा० टी०–परस्परमिति । स्वेदेन विदग्धे व्याप्ते गात्रे

---

१ पातयित्वाऽपतदिति गो. पाठः । २ कन्तुवत्तमिति गो. रा. पाठः । ३ दिग्धेति गो. पाठः । ४ ययोति गो. पाठः ।

मुष्टिप्रहारैश्च तलप्रहारैररत्निघातैश्च कराग्रघातैः ।
तौ चक्रतुर्युद्धमसह्यरूपं महाबलौ राक्षसवानरेन्द्रौ ॥ ॥ १५ ॥
कृत्वा नियुद्धं भृशमुग्रवेगौ कालं चिरं गोपुरवेदिमध्ये ।
उत्क्षिप्य चोत्क्षिप्य विनम्य देहौ पादक्रमाद्गोपुरवेदिलग्नौ ॥ ॥ १६ ॥
अन्योन्यमापीड्य विलग्नदेहौ तौ पेततुः सालनिखातमध्ये ।
उत्पेततुर्भूमितलं स्पृशन्तौ स्थित्वा मुहूर्तं त्वभिनिःश्वसन्तौ ॥ ॥ १७ ॥
आलिङ्ग्य चालिङ्ग्य च बाहुयोक्त्रैः संयोजयामासतुराहवे तौ ।
संरम्भशिक्षाबलसंप्रयुक्तौ संचेरतुः संप्रति युद्धमार्गे ॥ ॥ १८ ॥
शार्दूलसिंहाविव जातदंष्ट्रौ गजेन्द्रपोताविव संप्रयुक्तौ ।
संहत्य संवेद्य च तौ कराभ्यां तौ पेततुर्वै युगपद्धरायाम् ॥ ॥ १९ ॥

पयोः शोणितेन रुधिरसम्पर्केण रक्तावरुणौ देहौ ययोः श्लेषेण युद्धचातुर्यसंपादितबन्धनविशेषेण निरुद्धे चेष्टे पयोः शाल्मलिकिंशुकाविव रक्तौ बभूवतुरिति शेषः ॥ १४ ॥

गो० टी०–परस्परमित्यादि । श्लोकद्वयमेकान्वयम् । आरम्भे दृढपरीरम्भेण स्वेदसिक्तगात्रा ततः खरतरनखक्षतेन शोणितलिप्तशरीरौ ततौ दृढाश्लिष्टतया निरुद्धचेष्टौ निष्पन्दौ ततः परस्परत्यागे कुसुमितशाल्मलीकिंशुकाविव स्थितौ तौ वानरराक्षसेन्द्रौ मुष्टिप्रहारैः मुर्ध्नां व्यथायां तलप्रहारैः । तत्पीडायाम् अरत्निघातैः निष्कनिष्ठमुष्टियुक्तप्रकोष्ठप्रहारैः । अरत्निस्तु निष्कनिष्ठेन मुष्टिनेत्यमरः । तद्बाधायां कराग्रघातैः । असह्यरूपम् अत्यन्तासह्यम् । प्रशंसायां रूपप्प्रत्ययः । युद्धं चक्रतुः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०–अरत्निघातैर्निष्कनिष्ठमुष्टिघातैः । 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः । असह्यरूपमत्यन्तासह्यम् ॥ १५ ॥

रा० टी०–मुष्टीति । मुष्टिप्रहरादिभिः राक्षसवानरेन्द्रौ असह्यरूपम् अन्यैः सोढुमशक्यमित्यर्थः युद्धं चक्रतु; ॥ १५ ॥

१६ ] ति० टी०–नियुद्धं बाहुयुद्धम् । विनम्य पादक्रमात्पादविक्षेपाद्धतोः । गोपुरवेदिलग्नौ । भूपतितावित्यर्थः ॥१६॥

रा० टी०–कृत्वेति । उग्रवेगौ राक्षसवानरेन्द्रौ चिरं कालं युद्धं बाहुयोधनं कृत्वा उत्क्षिप्योत्क्षिप्य पादक्रमादेहौ विनम्य च गोपुरवेदिलग्नौ बभूवतुरिति शेषः ॥ १६ ॥

गो० टी०–कृत्वेत्यादिसार्द्धश्लोक एकान्वयः । नियुद्धं मल्लयुद्धं बाहुयुद्धं वा नियुद्धं बाहुयुद्धं स्यादित्यमरः । गोपुरवेदिमध्ये चिरं कालं नियुद्धं कृत्वा । तत उत्क्षिप्य परस्परमूर्ध्वं क्षिप्त्वा आक्षिप्य आकृष्य । परस्परं देहौ विनम्य विनाम्य पादक्रमात् पादविन्यासविशेषात् । गोपुरवेदिलग्नौ पदात्पदं पश्चाच्चलित्वा पुनर्युद्धार्थमवसरप्रतीक्षतया गोपुरवेदिकायां निश्चलं स्थितावित्यर्थः । आविध्य बाहुभ्यां संवेष्ट्य विलग्नदेहौ श्लिष्टदेहौ सन्तौ । सालनिखातयोः प्राकारपरिखयोर्मध्ये पेततुः ॥ १६ ॥

१७] ति० टी०–सालनिखातमध्ये प्राकारपरिखयोर्मध्ये । 'निघातः–' इति पाठेऽप्ययमेवार्थः । अभिनिःश्वसन्तौ मुहूर्तं स्थित्वालिङ्ग्येत्यन्वयः ॥ १७ ॥

रा० टी०–अन्योन्यमिति । अन्योन्यमापीड्य अत्यन्तं पीडयित्वा विलग्नदेहौ विभक्तशरीरौ तौ शालनिखातस्य प्राकारपरिखायाः मध्ये पेततुः मुहूर्तं भूमितलं स्पृशन्तौ सन्तौ उत्पेततुश्च ॥ १७ ॥

गो० टी०–उत्पेततुरिति । लाघवातिशयेन भूतलमस्पृष्ट्वैव उत्पेततुः । ततो मुहूर्तं तूष्णीं स्थित्वा श्रमवशादभिनिःश्वसन्तौ पुनरालिङ्ग्य स्वयमेव स्वशरीरमालिङ्ग्य आवल्य आप्लुत्य बाहुयोक्त्रैः बाहुपाशैः संयोजयामासतुः । देहाविति शेषः । निबिडं बबन्धतुरित्यर्थः ॥ १७ ॥

१८ ] ति० टी०–बाहुरूपैर्योक्त्रै रज्जुभिः संयोजयामासतुर्बबन्धतुः । संरम्भः क्रोधः । शिक्षा नियुद्धाभ्यासः । बलं सहजं प्राणीयं तैः संयुक्तौ ॥ १८ ॥

रा० टी०–आलिङ्ग्येति । संरम्भेन कोपेन शिक्षयाभ्यासेन च बलेन च संप्रयुक्तौ तौ आलिङ्ग्यालिङ्ग्य बाहुयोक्त्रैर्बाहुरूपरज्जुभिः संयोजयामासतुः अत एव युद्धमार्गे संचेरतुः ॥ १८ ॥

गो० टी०–संरम्भेति । संरम्भः अभिनिवेशः शिक्षा अभ्यासः बलं शक्तिः एतैः संप्रयुक्तौ संयुक्तौ सन्तौ संप्रति युद्धमार्गैः चातुर्येण । परस्परग्रहणानुकूलक्रमैरित्यर्थः । संप्रति तदानीमित्यर्थ इत्येके । शार्दूलसिंहौ शार्दूलश्रेष्ठौ । संप्रयुक्तौ सन्तौ गजेन्द्रपोतौ कलभौ ॥ १८ ॥

१९ ] ति० टी०–पोतो बालः । संवेदनं प्रेरणम् ॥ १९ ॥

रा० टी०–शार्दूलेति । जातदंष्ट्रौ बालावित्यर्थः, शार्दूलसिंहाविव गजेन्द्रस्य पोतौ बालाविव च संप्रयुक्तौ कृतयुद्धप्रयोगौ तौ संहत्य उरोभ्यामन्योन्यमापीड्य कराभ्यां संवेद्य परस्परं बलं ज्ञात्वा च धरायां युगपत्पेततुः ॥ १९ ॥

१ वानरराक्षसेन्द्राविति गो.पाठः । २ चाक्षिप्येति गो.पाठः । ३ आविध्येति गो.पाठः । ४ भूतलमस्पृशन्ताविति गो.पाठः । ५ चावलुप्येति गो.पाठः । ६ समिति गो. रा. पाठः । ७ मार्गैरिति गो. पाठः । ८ दर्पाविति गो पाठः । ९ चापीड्य च तावुरोभ्यां निपेततुरिति गो.पाठः । १० धरण्यामिति गो.पाठः ।

उद्यम्य चान्योन्यमधिक्षिपन्तौ संचक्रमाते बहु युद्धमार्गे ।
व्यायामशिक्षाबलसंप्रयुक्तौ क्लमं न तौ जग्मतुराशु वीरौ ॥ ॥ २० ॥
बाहूत्तमैर्वारणवारणाभैर्निवारयन्तौ परवारणाभौ ।
चिरेण कालेन भृशं प्रयुद्धौ संचेरतुर्मण्डलमार्गमाशु ॥ ॥ २१ ॥
तौ परस्परमासाद्य यत्तावन्योन्यसूदने । मार्जाराविव भक्षार्थेऽवतस्थाते मुहुर्मुहुः ॥ २२ ॥
मण्डलानि विचित्राणि स्थानानि विविधानि च । गोमूत्रकाणि चित्राणि गतप्रत्यागतानि च ॥ २३ ॥

गो० टी०—संहत्येति । संहत्य संयोज्य । उरोभ्यामन्योन्यमापीड्य धरण्यां युगपन्निपेततुः । अथ उद्यम्य उद्धृत्य अधिक्षिपन्तौ पातयन्तौ । एवं बहुयुद्धमार्गैः बहुयुद्धप्रकारैः । संचक्रमाते संचेरतुः ॥ १९ ॥

२० ] ति० टी०—व्यायामो नियुद्धोत्साहः ॥ २० ॥

रा०टी०—उद्यम्येति। उद्यम्य युद्धविहितोद्योगं कृत्वा अन्योऽन्यमधिक्षिपन्तौ व्यायामेन युद्धोत्साहेन संप्रयुक्तौ तौ युद्धमार्गे बहु अनेकविधं संचक्रमाते क्लमं ग्लानिं तु न जग्मतुः ॥ २० ॥

गो० टी०—व्यायामेति । खुरल्यां श्रमजयाय कृतोऽभ्यासो व्यायामः तद्रूपा या शिक्षा तद्बलेन तदतिशयेन संप्रयुक्तौ संयुक्तौ । वार्यन्ते एभिरिति वारणाः आलानस्तम्भाः । वारणवारणाभैः बाहूत्तमैः अन्योन्यमाशु निवारयन्तावपि क्लमं श्रमम् न जग्मतुः ॥ २० ॥

२१ ] ति० टी०—वारयन्त्येभिः प्रतिगजानिति वारणो महागजः । द्वितीयवारणशब्दः करिहस्तवाची । करिकराभैरित्यर्थः । परवारणो मत्तगजः । मण्डलमार्गम् । मण्डलाकारत्वसाधको मार्गो गतिभेदः ॥ २१ ॥

रा० टी०—बह्विति । वारणवारणाभैः गजशुण्डादण्डसदृशैर्बाहूत्तमैर्भृशं प्रयुद्धौ निवारयन्तौ अन्योन्यप्रहारं वञ्चयन्तौ परवारणाभौ मत्तगजसदृशौ तौ मण्डलमार्गं संचेरतुः ॥ २१ ॥

गो० टी०—चिरेणेत्यर्द्धम् । चिरेण कालेन बहुकालेन । संप्रयुक्तौ युद्ध्यमानौ तौ । मण्डलमार्गं चक्राकारमार्गम् । चेरतुः चक्रतुरित्यर्थः । अयं च वक्ष्यमाणमार्गान्तराणामप्युपलक्षणम् ॥ २१ ॥

२२ ] ति० टी०—भक्षार्थे भक्षरूपप्रयोजननिमित्तं यथा क्रुद्धाववतस्थाते तथेत्यर्थः ॥ २२ ॥

रा० टी०—ताविति । अन्योन्यसूदने परस्परनिपातने भक्ष्यार्थे मार्जाराविव यत्तौ कृतोद्योगौ तौ परस्परमासाद्य अवतस्थाते ॥ २२ ॥

गो० टी०—तदेव प्रपञ्चयति—ताविव्यादिना । परस्परमासाद्य अन्योन्यसूदने अन्योन्यहिंसने यत्तौ यत्नवन्तौ । भक्ष्यत इति भक्षः भक्ष्यद्रव्यम् । तदर्थे तन्निमित्तम् । मार्जाराविव वितस्थाते विशेषेण तस्थतुः ! "समवप्रविभ्यस्थः" इत्यात्मनेपदम् । भक्षग्रहणदत्तावधानौ मार्जाराविव निश्चलं तस्थतुरित्यर्थः। मुहुर्मुहुरित्यनेन मध्ये मध्ये मण्डलादिसंचारो व्यज्यते ॥ २२ ॥

२३ ] ति० टी०—विचित्राणि मण्डलानि चारिकरणखण्डमहामण्डलाख्यमण्डलभेदात् । तानि तु—'एकपादप्रचारेण चारिसंज्ञं तु मण्डलम् । द्विपादक्रमणं यत्र करणाख्यं तु मण्डलम्। करणानां समायोगात्खण्डमण्डलमीरितम् । खण्डैस्त्रिभिश्चतुर्भिर्वा महामण्डलमीरितम् ॥' इति भरतोक्तानि । विविधानि स्थानानि । 'वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमनालीढं स्थानान्येतानि षण्णृणाम् ॥' इति भरतोक्तानि । पादयोः पूर्वापरविक्षेपतिर्यग्विक्षेपादिविन्यासविशेषरूपाणीति तीर्थः । गोमूत्रकाणि गोमूत्ररेखाकारकुटिलगमनानि चित्राणि गतप्रत्यागतानि नानाप्रकारापसर्पणोपसर्पणानि ॥ २३ ॥

रा० टी०—मण्डलानीति । विचित्राणि अनेकविधानि मण्डलानि चारिकरणखण्डमहामण्डलाभिधानि विविधानि स्थानानि वैष्णवाभिधादीनि च गोमूत्रकानि तदाकाराणि चित्राणि अनेकविधानि गतप्रत्यागतानि च—एकपादप्रचारेण चारिसंज्ञं तु मण्डलम् । द्विपादक्रमणं यत्र करणाख्यं तु मण्डलम् करणानां समं योगात्खण्डमण्डलमीरितम् । खण्डैस्त्रिभिश्चतुर्भिर्वा महामण्डलमीरितम् । इति भारतः ॥ २३ ॥

गो० टी०—मण्डलानीत्यादि चतुःश्लोक्येकान्वया । मण्डलानि परिभ्रमणविशेषान् । यथाह भरतः—'एकपादप्रचारो यः स चारीत्यभिधीयते । द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् । करणानां समायोगात्खण्डमित्यभिधीयते । खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥' इति । विचित्राणि सव्यमपसव्यं सव्यापसव्यमर्द्धभ्रमणमित्यादिभेदाद्भिन्नानि । स्थानानि व्याघ्रसिंहादितुल्यावस्थानानि वैष्णवादिस्थानानि । पादयोः पूर्वापरतिर्यग्विक्षेपादिका विन्यासविशेषा इति यावत् । तदाह भरतः—'वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षण्णृणाम् ॥' इति । पञ्चेति धनुर्वेदे । एषां लक्षणादिकथने ग्रन्थगौरवं स्यादिति तन्नाद्रियते । गोमूत्रिकाणि गोमूत्रसरणिसदृशानि गमनानि । गोमूत्रशब्दात्तदाकारगमनवाचकान्मत्वर्थे ठन्प्रत्ययः । गोमूत्रिकाणां चित्रत्वं गमनागमनादिभेदात् । गतप्रत्यागतानि उपसर्प-

१ वेरेति गो. पाठः । २ तु संप्रयुक्ताविति गो. पाठः । ३ प्रयुक्ताविति रा. पाठः । ४ वीति गो. पाठः ।

तिरश्चीनगतान्येव तथा वक्रगतानि च । परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ २४ ॥
अभिद्रवणमाप्लावमेवस्थानं सविग्रहम् । परावृत्तमपावृत्तमपद्रुतमवप्लुतम् ॥ २५ ॥
उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ । तौ विचेरतुरन्योन्यं वानरेन्द्रश्च रावणः ॥ २६ ॥
एतस्मिन्नन्तरे रक्षो मायाबलमथात्मनः । आरब्धुमुपसंपेदे ज्ञात्वा तं वानराधिपः ॥ २७ ॥
उत्पपात तदाकाशं जितकाशी जितक्लमः । रावणः स्थित एवात्र हरिराजेन वञ्चितः ॥ २८ ॥
अथ हरिवरनाथः प्राप्तसङ्ग्रामकीर्तिर्निशिचरपतिमाजौ योजयित्वा श्रमेण ।
गगनमतिविशालं लङ्घयित्वार्कसूनुर्हरिगणबलमध्ये रामपार्श्वं जगाम ॥ ॥ २९ ॥

णापसर्पणानि । एते उभयगतिप्रचारभेदाः ॥ तिरश्चीनगतानि तिर्यग्गमनानि । वक्रगतानि सव्यापसव्यसंचरणानि । परिमोक्षं स्थानचालनेन प्रहाराणां मोघकरणम् । वर्जनं प्रतिप्रयोगेन परिहरणम् । परिधावनम् एकस्य तिष्ठतः समन्तादन्यस्य गमनागमनम् । अभिद्रवणम् आभिमुख्येन शीघ्रं गमनम् । आप्लावम् अल्पाङ्गत्वानल्पाङ्गत्वादिभिर्विनम्य गमनम् । ईषद्गमनं वा । मण्डूकवद्गमनमित्यर्थः । आस्थानं च सविग्रहं विग्रहसहितमास्थानम् । विगृह्य केवलासनं प्रगृह्य निर्भयावस्थानमिति वार्थः । परावृत्तं पराङ्मुखगमनम् । अपावृत्तं स्थित्वैव पश्चाचलनम् । अवद्रुतं जिघृक्षया शरीरं संकुच्यावनम्य गमनम् । अवप्लुतं प्रतियोधिनं पादेन प्रहर्तुमधोमुखेन प्लवनम् । उपन्यस्तं प्रतियोधिबाहुग्रहणार्थं स्वबाहुप्रसारणम् । अपन्यस्तं प्रतियोधिग्रहणवञ्चनार्थं स्वबाह्वोरपक्षेपणम् । एवं खड्गविद्यामल्लशास्त्रादिषूपदिश्यते । तत्तन्निदर्शने नितान्तं ग्रन्थगौरवं स्यात् । अतस्तदुपेक्ष्यते ॥ २३–२६ ॥

२४ ] ति० टी०–तिरश्चीनगतानि तिर्यग्गतानि वक्रगतानि सव्यापसव्यसंचारणानि । प्रहाराणां परदत्तप्रहाराणाम् । परिमोक्षं स्थानचलनादिना व्यर्थीकरणम् । वर्जनं स्वप्रहारवैफल्यापादकस्थाने तद्वर्जनम् । परिधावनमेकस्य तिष्ठतः परितो धावनम् । भ्रमणमित्यर्थः ॥ २४ ॥

रा० टी०–तिरश्चीनगतानि तिर्यग्गमनानि वक्रगतानि परस्परं विपरीतगमनानि च प्रहाराणां मुष्ट्यादीनां परिमोक्षं प्रक्षेपं वर्जनं यत्नतस्तन्निवारणं च परिधावनं परिभ्रमणं च २४

२५ ] ति० टी०–अभिद्रवणमभिमुखेन शीघ्रगमनम् । आप्लवनमीषदीषद्गमनम् । अवस्थानं कृत्वाकृत्वा गमनमिति यावत् । सविग्रहमवस्थानं विगृह्याभिमुख्येनावस्थानम् । परावृत्तं पराङ्मुखगमनम् । अपावृत्तं पार्श्वतोऽपसरणम् । अपद्रुतं परस्परजान्वादिप्रहारायावनतकायतया धावनम् । अवप्लुतं प्रतिभटं पादेन प्रहर्तुमभिगमनम् ॥ २५ ॥

रा० टी०–अभिद्रवणं शीघ्रं संमुखगमनम् आप्लवमुत्प्लवनं च सविग्रहमवस्थानं विग्रहं प्रदर्श्य एकत्र देशेस्थितिमित्यर्थः, परावृत्तं युद्धोपयोगचातुरीविशेषेण पराङ्मुखगमनम् अपावृत्तं पार्श्वतो गमनं अपद्रुतं युद्धनैपुण्यविशेषप्रदर्शनाय अवनतकायेन धावनं अवप्लुतं प्रहर्तुं पादमुत्थाय गमनम् ॥ २५ ॥

२६ ] ति० टी०–उपन्यस्तं परेण स्वबाह्वोर्ग्रहाय स्वोरःसमीपस्थानम् । अपन्यस्तं प्रतिभटबाहुग्रहणार्थं स्वबाहुप्रसारणम् कुर्वन्तौ तौ विचेरतुरित्यन्वयः ॥ २६ ॥

रा० टी०–उपन्यस्तं रिपुणा स्वबाह्वोर्ग्रहणाभावाय उन्नततया स्थितिं अपन्यस्तं रिपूणां ग्रहणाय स्वबाहुप्रसारणञ्च कुर्वन्ताविति शेषः युद्धमार्गविशारदौ वानरेन्द्रो रावणश्च विचेरतुः । श्लोकचतुष्टयमेकान्वयि ॥ २६ ॥

२७ ] ति० टी०–एतस्मिन्नन्तरे सुग्रीवादात्मानं बलतो मोचयितुमशक्यत्वावसरे मायाबलमारब्धुमुपसंपेदे उपचक्रमे । तमुपक्रान्तमायं ज्ञात्वा ॥ २७ ॥

२८ ] ति० टी०–जितकाशी जितश्वासः वञ्चितः क्व गत इत्यज्ञातहरिराजगमनः ॥ २८ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे सुग्रीवपराभवकरणस्य शक्यत्वाभावज्ञानसमये रक्षः आत्मनो मायाबलमारब्धुमुपसंपेदे इयेष वानराधिपः तं मायाकरणेच्छावन्तं रावणं ज्ञात्वा जितकाशी जितश्वासः सन् आकाशमुत्पपात हरिराजेन वञ्चितो रावणस्तु स्थित एव बभूवेति शेषः श्लोकद्वयं संमिलितान्वयि ॥ २७ ॥ २८ ॥

गो० टी०–एतस्मिन्नित्यादिश्लोकद्वयमेकान्वयम् । अन्तरे अवकाशे । मायाबलं [1] रितोनेकरावणप्रदर्शनम् । आरब्धुमुपसंपेदे कर्तुमुपचक्रमे । तं मायोपक्रमम् । जितेन जयेन काशते प्रकाशत इति जितकाशी । रावणस्य मायाबलोपक्रम एव निर्मायं युद्ध्यमानस्य सुग्रीवस्य जय इति ज्ञेयम् । जितक्लमः जितश्रमः । बलिना चिरं मल्लयुद्धकरणादिति भावः । अत्र प्रासादे स्थित एव रावणो वञ्चितः पुनरागमने प्रतारितः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०–प्राप्ता सङ्ग्रामकीर्तिर्येन । तदेव दर्शयति–निशिचरपतिमाजौ श्रमेण योजयित्वेति । निशिचरेत्यार्षम् । अतिविशालं गगनमतिदूरं लङ्घयित्वेत्यर्थः ॥ २९ ॥

रा० टी०–अथेति । प्राप्तसंग्रामकीर्तिः अर्कसूनुः सुग्रीवः

१ आस्थानं चेति गो. पाठः । २ बलेति गो. पाठः । ३ समिति गो. पाठः । ४ प्राप्येति गो. पाठः । ५ वारणेति गो. पाठः ।

स इति सवितृसूनुस्तत्र तत्कर्म कृत्वा पवनगतिरनीकं प्राविशत्संप्रहृष्टः ।
रघुवरनृपसूनोर्वर्धयन्युद्धहर्षं तरुमृगगणमुख्यैः पूज्यमानो हरीन्द्रः ॥ ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

## एकचत्वारिंशः सर्गः ।

रामस्तु सुग्रीवस्य साहसेन नाति हृष्टो यतो दुष्टानुत्पातानपश्यत्, राज्ञैवं न कर्तव्यमित्युपदिश्य लङ्कायाः चतुर्णां द्वाराणां रोधनाय कपीनादिश्य च रावणोपदेशार्थमङ्गदं प्राहिणोत् अङ्गदोऽपि रावणं यथान्यायमुपदिश्याप्यकृतकृत्यो राक्षसांस्तर्जयित्वा च रामपार्श्वमाजगाम।

अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः । सुग्रीवं संपरिष्वज्य रामो वचनमब्रवीत् ॥ १ ॥
असंमन्त्र्य मया सार्धं तदिदं साहसं कृतम् । एवं साहसयुक्तानि न कुर्वन्ति जनेश्वराः ॥ २ ॥
संशये स्थाप्य मां चेदं बलं चेमं विभीषणम् । कष्टं कृतमिदं वीर साहसं साहसप्रिय ॥ ३ ॥
इदानीं मा कृथा वीर एवंविधमरिंदम । त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ॥ ४ ॥
भरतेन महाबाहो लक्ष्मणेन यवीयसा । शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः ॥ ५ ॥

निशिचरं रावणं श्रमेण योजयित्वा श्रमं प्रापय्येत्यर्थः गगनं लङ्घयित्वा गगनेन गत्वेत्यर्थः रामपार्श्वं जगाम ॥ २९ ॥

गो० टी०—अथेति । हरिगणनाथः क्षणेन रावणहरणादिपरिकरनियन्ता । रामभक्तिरेव स्वयंगमनहेतुरिति भावः । प्राप्य संग्रामकीर्तिम् । रामस्य युद्धादागतां कीर्तिं स्वयमाजहारेति भावः । निशिचरपतिम् । तत्सदृशेष्वनेकेषु विद्यमानेष्वपि तान् तृणीकृत्य तेनैव युद्धं कृतवानिति भावः । आजौ । रावणवन्न च्छद्मना युद्धकृत्, किन्तु मर्यादयेति भावः । योजयित्वा श्रमेण इतः पूर्वं तदज्ञातेन श्रमेण योजयित्वा । योजनं हि पूर्वमसंभावितस्यैव रावणस्य श्रमफलम् । आत्मनस्तु कीर्तिरिति भावः । गगनमतिविशालं लङ्घयित्वार्कसुतः स्वस्यादित्यपुत्रत्वज्ञापनायाकाशमार्गेणालङ्घयत् । अर्कसुतः अज्ञातगमनवेगः । हरिवरगणमध्ये विनयेन स्वातिशयमप्रकाशयन् वानरेष्वन्यतमं इति स्थितः । रामपार्श्वं जगाम रावणशिरोऽनादायागतोऽहं कथमस्याग्रे तिष्ठेयमिति पार्श्वे स्थितः । निशिचरपतिं श्रमेण योजयित्वा जगामेत्यनेन रामस्य प्रतिज्ञाहानिर्मा प्रसाङ्क्षीदिति रावणमहत्वैवागत इति सूचितम् । मायाप्रयोगारम्भे समागमनं स्वेनापि मायाप्रयोगे रामस्य कोपः स्यादित्यभिप्रायात् ॥ २९ ॥

३० ] ति० टी०—उक्तमर्थमुपसंहरति—स इति । तरुमृगा वानरास्तद्गणमुख्या हनुमदादयः ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । पवनगतिः सवितृसुतः सुग्रीवः तत् रावणपराभवरूपं कर्म कृत्वा रघुवरनृपसूनोः रामस्य युद्धहर्षं वर्धयन् सन् अनीकं सैन्यं प्राविशत् ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

गो० टी०—इतीति । रघुवरनृपसूनोः रामस्य । तरुमृगगणमुख्यैः वानरगणमुख्यैः ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

१ ] ति० टी०—तस्मिन्सुग्रीवे । निमित्तानि क्षतजादिरूपाणि युद्धचिह्नानि ॥ १ ॥

रा० टी०—सुग्रीवागमनानन्तरकालिकं रामवृत्तान्तमाह—अथेत्यादिभिः । रामः तस्मिन्समये निमित्तानि दृष्ट्वा सुग्रीवं संपरिष्वज्य अब्रवीत् ॥ १ ॥

गो० टी०—अथ लङ्कावरोध एकचत्वारिंशे—अथेति । तस्मिन्सुग्रीवे । निमित्तानि युद्धचिह्नानि । निमित्तं हेतुलक्ष्मणोरित्यमरः ॥ १ ॥

२ ] ति० टी०—जनेश्वरा नृपाः ॥ २ ॥

रा० टी०—तदाकारमाह—असंमन्त्र्येति । असंमन्त्र्य संमतिमलब्ध्वा तदिदं गमनं साहसं कृतम् अविचारेण प्रवृत्तम् । ननु तत्र का क्षतिरित्यत आह—जनेश्वराः राजानः एवं साहसयुक्तानि कर्माणि न कुर्वन्ति ॥ २ ॥

गो० टी०—असंमन्त्र्येति । जनेश्वराः राजानः । न कुर्वन्ति अस्मादृशपरिजने विद्यमाने न कुर्वन्तीत्यादरोक्तिः ॥ २ ॥

३ ] ति० टी०—संशये स्थाप्येति । अतिघोरशत्रुसमीपं गतः कथमागमिष्यति राजेति बहुचिन्तामग्नं कृत्वा ॥ ३ ॥

रा० टी०—तत्र दोषमाह—संशय इति । मत्प्रभृतिं संशये प्रबलशत्रुसमीपं गतोऽयं कथमागमिष्यतीति संदेहे स्थाप्य स्थापयित्वा कष्टं क्लेशसंपादकं साहसमिदं कर्म त्वया कृतम् सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०—संशय इति । संशये संशयपदे । त्वत्साहसेऽस्मदादीनां जीवनं दुर्लभमिति भावः ॥ ३ ॥

४–५ ] ति० टी०—इदानीं घोरयुद्धप्रासावेवंविधमस्माभिः

१ तदर्थं गो. पाठः । २ कर्माणीति गो. पाठः । ३ च स इति गो. पाठः । ४ वीरा इति रा. पाठः । ५ अचिन्तितमिति गो. पाठः ।

त्वयि चानागते पूर्वमिति मे निश्चिता मतिः । जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ॥ ६ ॥
हत्वाहं रावणं युद्धे सपुत्रबलवाहनम् । अभिषिच्य च लङ्कायां विभीषणमथापि च ॥ ७ ॥
भरते राज्यमारोप्य त्यक्ष्ये देहं महाबल । तमेवं वादिनं रामं सुग्रीवः प्रत्यभाषत ॥ ८ ॥
तव भार्यापहर्तारं दृष्ट्वा राघव रावणम् । मर्षयामि कथं वीर जानन्विक्रममात्मनः ॥ ९ ॥
इत्येवं वादिनं वीरमभिनन्द्य च राघवः । लक्ष्मणं लक्ष्मिसंपन्नमिदं वचनमब्रवीत् ॥ १० ॥
परिगृह्योदकं शीतं वनानि फलवन्ति च । बलौघं संविभज्येमं व्यूह्य तिष्ठाम लक्ष्मण ॥ ११ ॥

---

महात्मंमन्त्र्य कार्यमितः परं मा कृथाः । त्वयि किंचित्समापन्ने दैवात्त्वापमानादिप्राप्तावित्यर्थः । 'नाश्लीलं कीर्तयेत्' इत्युक्तेरेत्र वादः ॥ ४ ॥ ६ ॥

रा० टी०—ननु त्वत्प्रयोजनसिद्ध्यर्थमेवेदं कृतमित्यत आह—त्वयीति । त्वयि किंचित् अवमानादि समापन्ने प्राप्ते सति सीतादिना मम किं कार्यं त्वदवमानाद्येव महद्दुःखमित्यर्थः । सार्धश्लोक एकान्वयी ॥ ४ ॥ ६ ॥

गो० टी०—इदानीमित्यादि श्लोकद्वयम् । इदानीम् अद्यप्रभृति अचिन्तितम् अविचारितम् एवंविधं साहसं मा कृथाः । कुत इत्यत्राह—त्वयीति । त्वयि किञ्चित्समापन्ने । वानरेति संबोधनम् । प्राप्ते मम सीतया किं कार्यं किं प्रयोजनम् । अभिनववत्सवात्सल्येन पूर्ववत्समनभिलपन्ती वत्सला गौरिव नित्यानपायिनीमपि सीतामनादृत्य तदानीमाश्रिते वानरमात्रेऽप्यभिनिवेशं कुर्वतो रामस्य वात्सल्यातिशय उच्यते । सीतया अर्थो वा एष आत्मनो यत्पत्नीत्यर्धशरीरभूतया न मे किञ्चित्कार्यम् । भरतेन यवीयसेति कनिष्ठत्वमुच्यते । भ्राता स्वा मूर्तिरात्मन इत्युक्तभरतादिनापि न मे किञ्चित्प्रयोजनम् । स्वशरीरेण वा, आत्मानं सर्वथा रक्षेद्दारैरपि धनैरपीत्युक्तशरीरेण वा किं क्रियते ॥ ४ ॥ ६ ॥

६ ] ति० टी०—त्वयि चानागते पूर्वं त्वदागमनात्पूर्वम् । यदि तव विपत्तिः स्यात् तर्हीति शेषः । इति वक्ष्यमाणप्रकारा मतिर्मे निश्चिताभूत् । भगवन्कथमेवं मयि तव प्राकृत इव शङ्केत्यत्राह—जानतश्चापीति । 'अतिस्नेहः पापशङ्की' इति न्यायादित्याशयः ॥ ६ ॥

७ ] ति० टी०—तां मतिं दर्शयति—हत्वेति । अभिषिच्येति प्रतिज्ञायाः साधनीयत्वादित्याशयः ॥ ७ ॥

रा० टी०-त्वयीति । पूर्वं त्वयि अनागते सति ते वीर्यं जानतोऽपि मे मतिः रावणं हत्वा विभीषणमभिषिच्य भरते राज्यमारोप्य न्यस्य देहं देहभूतमिदं राज्यादि त्यक्ष्ये इत्येवं निश्चिताऽभवत् एतेन तस्मिन् काले तवागमनसंभावनैव नोदितेति व्यञ्जितम् सार्धश्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०—एतदेव प्रपञ्चयति—त्वयीत्यादिना । पूर्वं त्वय्यनागते सति । इति वक्ष्यमाणप्रकारेण मे मतिः निश्चितासीत् । जानतश्चापीति विशेषणेन अस्थाने भयशङ्कित्वोक्त्या वात्सल्यातिशय उक्तः । इतिशब्दार्थमाह—हत्वेति । प्रतिज्ञानिर्वाहार्थमिति भावः । अभिषिच्येति । अन्यथा शरणागतिवैफल्यादिति भावः । भरत इति । अन्यथा कुलधर्मोच्छेदादिति भावः । महाबलेत्यनन्तरमितिकरणस्यान्वयः ॥६॥७॥

८ ] ति० टी०—महाबलेत्यन्तं मतिकथनम् ॥ ८ ॥

रा० टी०—तमिति । एवंवादिनं रामं सुग्रीवः प्रत्यभाषत अर्थपृथक् ॥ ८ ॥

गो० टी०—तमेवमित्यादि सार्धश्लोकः । पौरुषं त्वदास्वरूपं पुरुषधर्ममित्यर्थः । अत एव हि पूर्वं रावणान्तिके दासोऽस्मीत्युक्तवान् । जानन्नित्यनेन दासस्य कर्मैवेदं न तु साहसमित्युच्यते ॥ ८ ॥ ९ ॥

९ ] ति० टी०—आत्मनो विक्रमं स्वस्य परपराक्रमसंहारसामर्थ्यं जानन्स्वानुभवेनावगच्छन्कथं मर्षयामि न कथमपीत्यर्थः ॥ ९ ॥

रा० टी०—तदाकारमाह—तवेति । आत्मनो विक्रमं जानन्नहं तव भार्यापहर्तारं कथं मर्षयामि ॥ ९ ॥

१० ] ति० टी०—अभिनन्द्य सौहृदस्यातिबलसंपत्तेश्चेदमेव युक्तमिति श्लाघां कृत्वेत्यर्थः । लक्ष्मिसंपन्नमिति ह्रस्व आर्षः१०

रा० टी०—इतीति । एवंवादिनं सुग्रीवमभिनन्द्य राघवो लक्ष्मिसंपन्नं लक्ष्मीयुक्तं लक्ष्मणमब्रवीत् ॥ १० ॥

गो० टी०—अथ रामस्योत्साहविशेषं दर्शयति—इत्येवमिति । लक्ष्मिसम्पन्नमित्यत्र "इको ह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वः लक्ष्मीरत्र निमित्तदर्शनजः सन्तोषः ॥ १० ॥

११ ] ति० टी०—शीतमुदकं तद्वतो जलाशयान्फलवन्ति वनानि च परिगृह्य । बलौघं व्यूह्य व्यूहविशेषपूर्वं संविभज्य विभागेन स्थापयित्वा ॥ ११ ॥

रा० टी०—तदाकारमाह—परीति । शीतमुदकं परिगृह्य आसृत्य इमं बलौघं संविभज्य तिष्ठाम ॥ ११ ॥

गो० टी०—परिगृह्येति । संविभज्य तत्तद्यूथपाधीनं कृत्वा व्यूह्य गरुडादिरूपेण स्थापयित्वा ॥ ११ ॥

---

१ आविश्येति गो. पाठः । २ महाबलः इति रा. पाठः । ३ पौरुषमिति गो. पाठः । ४ स इति गो. पाठः । ५ तिष्ठेमेति गो. पाठः ।

लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ १२ ॥
वाता [1]हि परुषं वान्ति कम्पते च वसुंधरा । पर्वताग्राणि वेपन्ते [2]नदन्ति धरणीधराः ॥ १३ ॥
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्व[3]राः । क्रूराः क्रूरं प्र[4]वर्षन्ते मिश्रं शोणितबिन्दुभिः ॥ १४ ॥
रक्तचन्दनसंकाशा संध्या परमदारुणा । ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ १५ ॥
आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम् । दीना दीनस्वराः क्रू[5]रा अप्रशस्ता मृगद्विजाः ॥ १६ ॥
रजन्यामप्रका[6]शस्तश्च संतापयति चन्द्रमाः । कृष्णरक्तांशुपर्यन्तो यथा लोकस्य संक्षये ॥ १७ ॥
ह्रस्वो रूक्षो प्रशस्तश्च परिवेषः सुलोहितः । आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ १८ ॥
दृश्य[7]ते न यथावच्च नक्षत्राण्यभिवर्तते । युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति ॥ १९ ॥
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च । शिवाश्चाप्य[8]शुभा वाचः प्रवदन्ति महास्वनाः ॥ २० ॥
[9]शैलैः शूलैश्च खड्गैश्च विमुक्तैः कपिराक्षसैः । भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ २१ ॥
क्षिप्रमद्य दुराधर्षां [10]पुरीं रावणपालिताम् । अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ २२ ॥
इत्येवं तु वदन्वीरो लक्ष्मणं लक्ष्मणाग्रजः । तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ॥ २३ ॥
अवतीर्य तु धर्मात्मा तस्माच्छैलात्स राघवः । परैः परमदुर्धर्षं ददर्श बलमात्मनः ॥ २४ ॥

---

१२-१८] ति० टी०—व्याख्यातप्राया इमे श्लोकाः१२-१८

रा० टी०—लोकेति । ऋक्षवानररक्षसां निबर्हणं पीडकं भीमं भयं पश्यामि ॥ १२ ॥

गो० टी०—लोकेति । लोकक्षयकरं लोकक्षयसूचकम् भीमं भयंकरम् भयं भयनिमित्तम् । न केवलं लोकस्य प्रवीराणां चेत्याह—निबर्हणमिति । विनाशसूचकमित्यर्थः ॥१२॥

रा० टी०—भयमेवाह—वाता इत्यादिभिः । धरणीधराः दिग्गजा नदन्ति ॥ १३ ॥

गो० टी०—तदेव भयनिमित्तं प्रपञ्चयति—वाता इति । पतन्ति अनिमित्तमिति शेषः ॥ १३ ॥

रा० टी०—मेघा इति । क्रव्यादसंकाशाः हिंसकसदृशाः मेघाः शोणितबिन्दुभिर्मिश्रं जलमिति शेषः, क्रूरं यथा भवति तथा प्रवर्षन्ते ॥ १४ ॥

गो० टी०—मेघा इति । क्रव्यादसंकाशाः श्येनादिसदृशसंस्थानाः परुषाः क्रूरवेषाः क्रूराः लोकक्षयसूचकाः मिश्रं जलमिति शेषः ॥ १४ ॥

रा० टी०—रक्तेति । सन्ध्यारक्तचन्दनसंकाशा अत एव दारुणा भयावहा दृश्यते इति शेषः आदित्यात् ज्वलदग्निमण्डलं निपतति ॥ १५ ॥

गो० टी०—रक्तेति । स्पष्टः ॥ १५ ॥

रा० टी०—आदित्यमिति । अप्रशस्ताः निषिद्धाः मृगद्विजाः शृगालगृध्रप्रभृतयः भयं जनयन्तः सन्तः आदित्यमभिवाश्यन्ति नदन्ति ॥ १६ ॥

गो० टी०—आदित्यमिति । आदित्यमभि आदित्याभिमुखम् दीनाः दीनवेषाः दीनस्वराः दैन्यसूचकस्वरवन्तः अत एव घोराः भयंकराः अप्रशस्ताः हीनाः शिवादयः ॥१६॥

रा० टी०—रजन्यामिति । कृष्णरक्तौ अन्तपर्यन्तौ यस्य कृष्णान्तभागकः रक्ततत्समीपभागकश्चेत्यर्थः रजन्यामप्यप्रकाशः चन्द्रमाः लोकस्य संक्षय इव सन्तापयति ॥ १७ ॥

गो० टी०—रजन्यामिति । कृष्णरक्तान्तपर्यन्तः कृष्णान्तो रक्तपर्यन्तश्चेत्यर्थः ॥ १७ ॥

रा० टी०—ह्रस्व इति । अप्रशस्तः अशुभकरः सुलोहितः परिवेषः नीलं लक्ष्म च आदित्यमण्डले दृश्यते ॥ १८ ॥

गो० टी०—ह्रस्व इति । ह्रस्वः व्याममात्रः रूक्षः भयंकरः अप्रशस्तः अशुभकरः सुलोहितः रक्तमध्यः परिवेषः लोकस्य संक्षये यथा तथा । दृश्यत इति शेषः ॥ १८ ॥

गो० टी०—आदित्येत्यादिसार्धश्लोकः । लक्ष्म चन्द्रकलङ्क इवेत्यर्थः । तथैव छान्दोग्ये—यदादित्यस्य कृष्णं रूपमित्यत्र उत्पातकाले तथा दृश्यत इति व्याख्यातम् । नक्षत्राणि यथावत् यथाप्रकारेण न दृश्यन्ते । मलिनानि दृश्यन्त इत्यर्थः । उक्तं निमित्तजातं लोकस्य युगान्तं शंसतीवाभिवर्तत इति योजना ॥ १९ ॥

१९ ] ति० टी०—यच्च नक्षत्राण्यभिवर्तते प्रकाशगत्यादिकं तच्च यथावन्न दृश्यते इत्यन्वयः। हे लक्ष्मण ! उक्तदुर्निमित्तजालं लोकस्य युगान्तं शंसतीव पश्य ॥ १९ ॥

रा० टी०—दृश्यन्त इति । नक्षत्राणि यथावत् यथापूर्वं न दृश्यन्ते अत एव लोकस्य लोके अभिवर्तते अभिवर्तमानाय जनाय युगान्तमिव शंसति बोधयति दर्शनमिति शेषः ॥ १९ ॥

२०-२४ ] ति० टी०—श्येनादयो नीचैर्निपतन्ति२०-२४

रा० टी०—काका इति । काकादयः नीचैरधः परिपन्तति शिवाः शृगालकलत्राणि अशुभाः वाचः प्रवदन्ति ॥ २० ॥

---

१ च परुषा इति गो. पाठः । २ पतन्ति धरणीरुहा इति गो. पाठः । ३ स्वना इति गो.पाठः । ४ वर्षन्तीति गो.पाठः । ५ घोरा इति गो.पाठः। ६ प्रकाश इति गो. पाठः । ७ दृश्यन्ते इति गो. पाठः । ८ आशिवा इति गो. पाठः । ९ श्लोकोऽयं गो. नास्ति । १० लङ्कामिति गो. पाठः ।

संनह्य तु ससुग्रीवः कपिराजबलं महत् । कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ २५ ॥
ततः काले महाबाहुर्बलेन महता वृतः । प्रविष्टः पुरतो धन्वी लङ्कामभिमुखः पुरीम् ॥ २६ ॥
तौ विभीषणसुग्रीवौ हनूमाञ्जाम्बवान्नलः । ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ॥ २७ ॥
ततः पश्चात्सुमहती पृतनर्क्षवनौकसाम् । प्रच्छाद्य महतीं भूमिमनुयाति स्म राघवम् ॥ २८ ॥
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् । जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २९ ॥
तौ त्वदीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ । रावणस्य पुरीं लङ्कामासेदतुररिंदमौ ॥ ३० ॥
पताकामालिनीं रम्यामुद्यानवनशोभिताम् । चित्रवप्रां सुदुष्प्रापामुच्चैः प्राकारतोरणाम् ॥ ३१ ॥
तां सुरैरपि दुर्धर्षां रामवाक्यप्रचोदिताः । यथा निदेशं संपीड्य न्यविशन्त वनौकसः ॥ ३२ ॥
लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् । रामः सहानुजो धन्वी जुगोप च रुरोध च ॥ ३३ ॥

---

गो० टी०—काका इति । नीचैः ह्रस्वं वेदिकास्थानं परिपतन्ति प्राप्नुवन्ति । शिवा इति । अप्रशस्तमृगजात्युक्तावपि पुनरुक्तिरशुभाधिक्यात् ॥ २० ॥

रा० टी०—तत्फलमाह—शैलैरिति । कपिराक्षसैर्विमुक्तैः शैलादिभिराहता अत एव मांसादिविशिष्टा भूमिर्भविष्यति॥२१॥

रा० टी०—क्षिप्रमिति । रावणपालितां पुरीं क्षिप्रमभियाम ॥ २२ ॥

गो० टी०—क्षिप्रमिति । अभियामेति वर्तमानकाले लोट् ॥ २१ ॥

रा० टी०—इतीति । इति वदन् लक्ष्मणाग्रजः पर्वताग्रात् अवातरत् ॥ २३ ॥

गो० टी०—इत्येवमिति । स्पष्टः ॥ २२ ॥

रा० टी०—अवतीर्येति । राघवः परैः रिपुभिः परमदुर्धर्षमात्मनो बलं ददर्श ॥ २४ ॥

गो० टी०—अवतीर्येति । तस्मात्सुवेलात् । बलमित्यनेन सर्वं बलं न सुवेलमारुहदिति गम्यते ॥ २३ ॥

२५ ] ति० टी०—ससुग्रीवः सुग्रीवसहितः । कपिराजबलं संनह्य कृतसन्नाहं कृत्वा काले ज्योतिःशास्त्रोक्तकाले संयुगाय युद्धायाभ्यचोदयत् ॥ २५ ॥

रा० टी०—संनह्येति । ससुग्रीवो राघवः संनह्य काले संग्रामसमये संयुगाय अभ्यचोदयत् ॥ २५ ॥

गो० टी०—संनह्येति । राघवः ससुग्रीवः सन् कपिराजबलं कपिश्रेष्ठानां बलम् संनह्य प्रोत्साह्य काले युद्धकाले संयुगाय युद्धाय अभ्यचोदयत् ॥ २४ ॥

२६–२७ ] ति० टी०—काले स्वरशास्त्रोक्ते युद्धयोग्ये काले प्रविष्टः प्रवेष्टुं प्रस्थितः ॥ २६ ॥ २७ ॥

रा० टी०—तत इति । काले युद्धे योग्यमुहूर्ते धन्वी रामः लङ्कामभिमुखः सन् पुरतः पूर्वं प्रविष्टः प्रवेष्टुं प्रस्थितः ॥ २६ ॥

गो० टी०—तत इति । काले प्रातःकाले ॥ २५ ॥

रा० टी०—ताविति । तदा रामः प्रस्थानसमये विभीषणप्रभृतयः अन्वयुः ॥ २७ ॥

गो० टी०—तमिति । स्पष्टः ॥ २६ ॥

२८ ] ति० टी०—ऋक्षवनौकसां पृतनेति छेदः ॥ २८ ॥

रा० टी०—तत इति । ततः पश्चात् ऋक्षवनौकसां पृतना सेना राघवमनुयाति स्म ॥ २८ ॥

गो० टी०—तत इति । पृतना सेना ॥ २७ ॥

२९–३१ ] ति० टी०—परवारणाः शत्रुनिवारकाः २९–३१

३२ ] ति० टी०—यथानिदेशं रामनिदेशमनतिक्रम्य संपीड्य लङ्कां रुद्ध्वा ॥ ३२ ॥

रा० टी०—शैलेति । परवारणाः रिपुनिवारणसमर्थाः शतशो वानराः शैलशृङ्गाणि महीरुहां स्तरूंश्च जगृहुः ॥ २९ ॥

गो० टी०—शैलेति । कुञ्जरप्रख्याः गजतुल्याः परवारणाः शत्रुवारकाः ॥ २८ ॥

रा० टी०—ताविति । रामलक्ष्मणौ लङ्कामासेदतुः ॥ ३० ॥

गो० टी०—ताविति । स्पष्टः ॥ २९ ॥

रा० टी०—पताकेति । पताकामालिनीं पताकासमूहविशिष्टाम् उच्चैः प्राकारे तोरणं यस्याः सुरैरपि दुर्धर्षां तां लङ्कां रामवाक्यप्रचोदिता वनौकसः यथानिदेशं संपीड्य न्यविशन्त श्लोकद्वयमेकान्वयि ॥ ३१ ॥ ३२ ॥

गो० टी०—पताकेत्यादिश्लोकद्वयम् । पताकमालिनीमित्यत्र "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः । उद्यानं कृत्रिमवनम् चित्रवप्रां चित्रचयाम् यथानिवेशं यथास्थानम् । रामवचोऽन्यूनं स्वं स्वं स्थानमनतिक्रम्येत्यर्थः । संपीड्य उपरुध्य ॥ ३० ॥ ३१ ॥

३३ ] ति० टी०—तस्यैव प्रपञ्चः—लङ्काया इति । उत्तरद्वारं रुरोध तद्द्वारनिरोधकमात्मबलं जुगोप च ॥ ३३ ॥

रा० टी०—तत्प्रकारमाह—लङ्काया इत्यादिभिः । उत्तरं द्वारं रामो जुगोप रुरोध च ॥ ३३ ॥

गो० टी०—लङ्कायामिति । जुगोप परपरिभवादात्मीयं बलं ररक्षेत्यर्थः । रुरोधेत्यनेन शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशमित्युक्तत्रिकूटशिखरारोहणमर्थसिद्धम् ॥ ३२ ॥

---

१ प्रस्थित इति गो. पाठः । २ तमिति गो. पाठः ।

लङ्कामुपनिविष्टस्तु रामो दशरथात्मजः। लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् ॥ ३४ ॥
उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः। नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् ॥ ३५ ॥
रावणाधिष्ठितं भीमं वरुणेनेव सागरम्। सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः ॥ ३६ ॥
लघूनां त्रासजननं पातालमिव दानवैः। विन्यस्तानि च योधानां बहूनि विविधानि च ॥ ३७ ॥
ददर्शायुधजालानि तथैव कवचानि च। पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः ॥ ३८ ॥
अतिष्ठत्सह मैन्देन द्विविदेन च वीर्यवान्। अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ॥ ३९ ॥
ऋषभेण गवाक्षेण गजेन गवयेन च। हनूमान्पश्चिमद्वारं ररक्ष बलवान्कपिः ॥ ४० ॥
प्रजङ्घतरसाभ्यां च वीरैरन्यैश्च संगतः। मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत ॥ ४१ ॥
सह सर्वैर्हरिश्रेष्ठैः सुवर्णपवनोपमैः। वानराणां तु षट्त्रिंशत्कोट्यः प्रख्यातयूथपाः ॥ ४२ ॥
निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः। शासनेन तु रामस्य लक्ष्मणः सविभीषणः ॥ ४३ ॥
द्वारे द्वारे हरीणां तु कोटिं कोटीर्न्यवेशयत्। पश्चिमेन तु रामस्य सुषेणः सहजाम्बवान् ॥ ४४ ॥

---

३४ ] ति० टी०—उक्तमेवार्थं स्थैर्यायाह—लङ्कामिति ३४

३५-३६ ] ति० टी०—तद्द्वारं तद्द्वाररोधिकां सेनाम् ३५।३६

रा० टी०—लङ्कामिति । यत्र रावणस्तिष्ठति तदुत्तरद्वारमासाद्य अवरुध्य रामो लङ्कामुपनिविष्टः तत्र तस्यैवोपनिवेशे हेतुः तद्द्वारं रामादन्यः परिरक्षितुं न समर्थः श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०—लङ्कामित्यादिसार्धश्लोक एकान्वयः। लक्ष्मणानुचरो वीर इति पाठः। रावणो यत्र तिष्ठति तदुत्तरद्वारमासाद्य लङ्कामुपनिविष्ट इत्यन्वयः। ॥ ३३ ॥

रा० टी०—रावणेति । वरुणेन सागरमिव दानवैः पातालमिव रावणेनाधिष्ठितमत एव राक्षसैः समन्ततोऽभिगुप्तम् अत एव लघूनामल्पवीर्याणां त्रासजननं यदुत्तरं द्वारं तस्मिन्विन्यस्तानि योधानामायुधजालानि कवचानि च ददर्श सार्धश्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

गो० टी०—रामेणैव निरोद्धव्यत्वे हेतुमाह—नान्य इत्यादिश्लोकद्वयेन । लघूनाम् अल्पसाराणाम् ॥ ३४ ॥ ३५ ॥

३७-४० ] ति० टी०—लघूनामल्पवीर्याणाम् । दानवैः पातालमिव गुप्तं राक्षसैर्गुप्तं द्वारमित्यन्वयः । विन्यस्तानि । युद्धकाले यथोचितपरिग्रहार्थमिति शेषः ॥ ३७-४० ॥

गो० टी०—विन्यस्तानीति । विन्यस्तानि द्वारोपान्तवेदिकादिष्विति शेषः ॥ ३६ ॥

रा० टी०—पूर्वमिति । पूर्वं द्वारमासाद्य नीलोऽतिष्ठत् ३८

गो० टी०—पूर्वमिति । मैन्देन द्विविदेन चेत्यादिना प्रतिद्वारमधिकयूथपतिगमनस्यात्रोक्तत्वात्पूर्वं रामेण ते नियुक्ता इति ज्ञेयम् ॥ ३७ ॥

रा० टी०—अङ्गद इति । ऋषभादिना युक्तोऽङ्गदो दक्षिणं द्वारं जग्राह ॥ ३९ ॥

गो० टी०—अङ्गद इति । स्पष्टः ॥ ३८ ॥

रा० टी०—हनुमानिति । प्रजङ्घतरसाभ्यां वानराभ्याम् अन्यैर्वीरैश्च संगतो हनुमान् पश्चिमं द्वारं ररक्ष ॥ ४० ॥

गो० टी०—हनुमानिति । स्पष्टः ॥ ३९ ॥

४१ ] ति० टी०—मध्यमे गुल्मेऽतिदुर्जयरावणेन्द्रजिदधिष्ठितयोरुत्तरपश्चिमद्वारयोर्मध्ये वायुदिशि । तदुभयद्वारनिरोधकानां मध्यमणिन्यायेन साहाय्यं कर्तुं सुग्रीवः समतिष्ठतेत्यर्थः ४१

रा० टी०—मध्यम इति । सर्वैः हरिश्रेष्ठैः सह सुग्रीव. मध्यमे गुल्मे समतिष्ठत ॥ ४१ ॥

गो० टी०—मध्यम इति । दुर्जयरावणेन्द्रजिदधिष्ठितयोरुत्तरपश्चिमद्वारयोर्मध्ये तदुभयद्वारनिरोधकानां काकाक्षिन्यायेन साहाय्यं कर्तुं सुग्रीवः स्वयमतिष्ठदिति ज्ञेयम् । पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् । अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥ इति वक्ष्यमाणत्वात् । सुपर्णः गरुडः ॥ ४० ॥

४२-४३ ] ति० टी०—सर्वैर्हरिश्रेष्ठैर्द्वारनिरोधनियुक्तेभ्योऽवशिष्टैः प्रख्यातयूथपाः षट्त्रिंशत्कोट्यः । अप्रख्यातयूथपानां तत्सेनानां च गणनाभाव इति भावः ॥ ४२ ॥ ४३ ॥

रा० टी०—वानराणामिति । षट्त्रिंशत्कोट्यः वानराणां मध्ये प्रख्यातयूथपाः वानराः यत्र सुग्रीवः तत्र निपीड्य तत्स्थराक्षसान् पीडयित्वा उपनिविष्टाः अभवन्निति शेषः ॥ ४२ ॥

गो० टी०—वानराणामिति । स्पष्टः ॥ ४१ ॥

रा० टी०—शासनेनेति । रामस्य शासनेन सविभीषणो लक्ष्मणः द्वारे द्वारे हरीणां कोटिंकोटीः न्यवेशयत् यथोचितमस्थापयत् ॥ ४३ ॥

गो० टी०—शासनेनेति । स्पष्टः ॥ ४२ ॥ ४३ ॥

४४ ] ति० टी०—द्वारनिरोधनियुक्तसेनाप्रमाणमाह—द्वारे इति ॥ ४४ ॥

रा० टी०—पश्चिमेनेति । सहजाम्बवान् सुषेणः मध्यमे

---

१ चेति गो.पाठः। २ तत्रैति गो.पाठः। ३ प्रमाथिप्रघसाभ्यामिति गो.पाठः। ४ सुपर्णश्वसनेति गो.पाठः। ५ कोटिमिति गो.पाठः। ६ सुग्रीव इति गो.पाठः।

अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः । ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः ॥
गृहीत्वा द्रुमशैलाग्रान्हृष्टा युद्धाय तस्थिरे ॥ ॥ ४५ ॥
सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रानखायुधाः । सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः ॥ ४६ ॥
दशनागबलाः केचित्केचिद्दशगुणोत्तराः । केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ ४७ ॥
सन्ति चौघबलाः केचित्केचिच्छतगुणोत्तराः । अप्रमेयबलाश्चान्ये तत्रासन्हरियूथपाः ॥ ४८ ॥
अद्भुतश्च विचित्रश्च तेषामासीत्समागमः । तत्र वानरसैन्यानां शलभानामिवोद्गमः ॥ ४९ ॥
प्रतिपूर्णमिवाकाशं संपूर्णेव च मेदिनी । लङ्कामुपनिविष्टैश्च संपतद्भिश्च वानरैः ॥ ५० ॥
शतं शतसहस्राणां पृतनार्क्षवनौकसाम् । लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः ॥ ५१ ॥
आवृतः स गिरिः सर्वैस्तैः समन्तात्प्लवङ्गमैः । अयुतानां सहस्रं च पुरीं तामभ्यवर्तत ॥ ५२ ॥
वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः । सर्वतः संवृता लङ्का दुष्प्रवेशापि वायुना ॥ ५३ ॥
राक्षसा विस्मयं जग्मुः सहसाभिनिपीडिताः । वानरैर्मेघसंकाशैः शक्रतुल्यपराक्रमैः ॥ ५४ ॥

---

गुल्मे एव रामस्य पश्चिमेन पृष्ठभागावष्टम्भेन अदूरात् समीपे एव तस्थौ ॥ ४४ ॥

४५ ] ति० टी०—अदूरात्पश्चिमेनासन्नपृष्ठभागावष्टम्भेन ४५

रा० टी०—ते इति । दंष्ट्रिणः शार्दूला इव वानरशार्दूलाः द्रुमशैलाग्रान् गृहीत्वा युद्धाय तस्थिरे ॥ ४५ ॥

गो० टी०—ते त्विति । वानरशार्दूलाः वानरश्रेष्ठाः । शैलाग्रानिति पुंस्त्वमार्षम् ॥ ४४ ॥

४६ ] ति० टी०—विकृतलाङ्गूलाः । क्रोधामर्षवशादिति शेषः ॥ ४६ ॥

रा० टी०—सर्व इति । विकृतलाङ्गूला अतिक्रोधावेशवशात् विकृतलाङ्गूलत्वादिविशिष्टाः सन्तीति शेषः ॥ ४६ ॥

गो० टी०—सर्व इति । विकृतलाङ्गूलाः ऊर्ध्वं प्रसारितपुच्छाः । विकृतचित्राङ्गा इत्यत्र विकृतत्वं कोपरक्तमुखनेत्रत्वम् । अत एव चित्रं चित्रवर्णम् अङ्गं येषां ते तथोक्ता इति विग्रहः । विकृताननाः राक्षसविडम्बनाय कुटिलितमुखाः ॥ ४५ ॥

४७ ] ति० टी०—दशगुणोत्तराः शतनागबलाः । नागसहस्रस्य नागसहस्रेण ॥ ४७ ॥

रा० टी०—दशेति ॥ ४७ ॥

गो० टी०—दशेति । दशगुणोत्तराः शतनागबला इत्यर्थः ॥ ४६ ॥

४८ ] ति० टी०—ओघबला ओघसंख्यनागबलाः ॥ ४८ ॥

रा० टी०—सन्तीति । केचित् अमोघबलाः अमोघसंख्याकनागबलविशिष्टाः सन्ति अन्ये अप्रमेयबलाः आसन् ॥ ४८ ॥

गो० टी०—सन्तीति । ओघबलाः ओघसङ्ख्याकनागबलाः । शतगुणोत्तराः ओघसङ्ख्याकनागबलेभ्यः शतगुणेन उत्तराः श्रेष्ठा इत्यर्थः । अप्रमेयबलाः अपरिच्छेद्यबलाः ॥ ४७ ॥

४९ ] ति० टी०—शलभानामिति । उत्पातकाले इति शेषः ॥ ४९ ॥

रा० टी०—अद्भुत इति । शलभानामुद्गम इव तेषां वानरसैन्यानां समागमः विचित्रोऽनेकविधः अद्भुत आश्चर्य आसीत् ॥ ४९ ॥

गो० टी०—अद्भुत इति । अद्भुतः आश्चर्यभूतः । विचित्रः वानरगोपुच्छभल्लूकजुष्टतया नानावर्णः । तत्र लङ्कायाम् । तेषां वानरसैन्यानाम् समागमः आगमनं शलभानां शरभाणाम् अष्टपादमृगाणाम् उद्यमः समागम इव आसीत् । तथा भयङ्करोऽभूदित्यर्थः । यद्वा यथा शलभानां समागमो युगपत् भवति तथेति युगपत्पतने दृष्टान्तः ॥ ४८ ॥

५० ] ति० टी०—संपतद्भिराकाशं पूर्णं निविष्टैर्मेदिनी पूर्णा ॥ ५० ॥

रा० टी०—प्रतीति । लङ्कामुपनिविष्टैः संस्थितैः संपतद्भिः आगच्छद्भिश्च वानरैः प्रतिपूर्णमाकाशमिव मेदिन्यपि प्रतिपूर्णाऽभवदिति शेषः एक इवशब्दोऽप्यर्थे ॥ ५० ॥

गो० टी०—परिपूर्णमिति । अत्र इवशब्दद्वयमपि वाक्यालङ्कारे । उपनिविष्टैः पृथिवी पूर्णा । संपतद्भिः आगच्छद्भिस्तु आकाशं पूर्णम् । भूमाववकाशाभावादिति भावः ॥ ४९ ॥

५१ ] ति० टी०—ऋक्षवनौकसां शतसहस्राणाम् । शतकोटिरित्यर्थः । एवं च कोटिसंख्याः पृतना लङ्काद्वाराण्युपाजग्मुः । पृतनाः ऋक्षेत्यत्र संधिरार्षः । एते पूर्वनियुक्ताधिका इति बोध्यम् । अन्येऽवशिष्टाः समन्ततो युद्धं परितो योद्धुं जग्मुः ॥ ५१ ॥

रा० टी०—शतमिति । शतसहस्राणामृक्षवनौकसां शतं पृतनाः लङ्काद्वाराणि उपाजग्मुः अन्येऽवशिष्टाः समन्तत उपाजग्मुः ॥ ५१ ॥

गो० टी०—शतमिति । शतसहस्राणाम् ऋक्षवनौकसां शतं पूर्वनियुक्तेभ्योऽतिरिक्तम् लङ्काद्वाराण्युपाजगाम । अन्ये वानराः समन्ततः युद्धार्थमुपाजग्मुरित्यन्वयः ॥ ५० ॥

५२-५४ ] ति० टी०—स गिरिस्त्रिकूटः । 'अयुतानां

---

१ उद्यम इति गो. पाठः । २ परीति गो. पाठः । ३ छन्नेति गो. पाठः । ४ पृथगृक्षेति गो पृतनर्क्षेति च रा. पाठः ।

महाञ्छब्दोऽभवत्तत्र बलौघस्याभिवर्ततः । सागरस्येव भिन्नस्य यथा स्यात्सलिलस्वनः ॥ ५५ ॥
तेन शब्देन महता सप्राकारा सतोरणा । लङ्का प्रचलिता सर्वा सशैलवनकानना ॥ ५६ ॥
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी । बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ॥ ५७ ॥
राघवः संनिवश्यैवं स्वसैन्यं रक्षसां वधे । संमन्त्र्य मन्त्रिभिः सार्धं निश्चित्य च पुनः पुनः॥ ५८ ॥
आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् । विभीषणस्यानुमते राजधर्ममनुस्मरन् ॥ ५९ ॥
अङ्गदं वालितनयं समाहूयेदमब्रवीत् । गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात्कपे ॥ ६० ॥
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः । भ्रष्टश्रीकं गतैश्वर्यं मुमूर्षो नष्टचेतनम् ॥ ६१ ॥
ऋषीणां देवतानां च गन्धर्वाप्सरसां तथा । नागानामथ यक्षाणां राज्ञां च रजनीचर ॥ ६२ ॥

---

सहस्रं च पुरीं तामभ्यवर्तत' । सर्वद्वारवर्तिस्वसेनासर्ववृत्तान्तग्रहणार्थं संचरतामिति शेषः ॥ ५२ ॥ ५४ ॥

रा० टी०–आवृत इति । तैः प्लवङ्गमैर्गिरिः सुवेलप्रभृतिः आवृतः आसीदिति शेषः अयुतानां सहस्रं कोटिपरिमितं तु पुरीमभ्यवर्तत्सर्वद्वारस्थितस्वसेनावृत्तान्तबोधनाय पुरीचतुर्दिक्षु अगच्छन्नित्यर्थः ॥ ५२ ॥

गो०टी०–आवृत इत्यर्धमेकं वाक्यम्। स गिरिः त्रिकूटः५१

गो० टी०–अयुतानामित्यर्धम् । अयुतानां सहस्रं च तां पुरीमभ्यवर्ततेत्यनेन पूर्वोक्तस्य द्वारावरणस्यानन्तरम् । अयुतानां सहस्रं च पुरीं तां पर्यवारयदित्युच्यते ॥ ५२ ॥

रा० टी०–वानरैरिति । वानरैः संवृता लङ्का वायुनाऽपि दुष्प्रवेशा बभूव ॥ ५३ ॥

गो० टी०–वानरैरिति । दुष्प्रवेशा बभूवेत्यन्वयः ॥५३॥

रा० टी०–राक्षसा इति । वानरैर्निपीडिताः राक्षसाः विस्मयं जग्मुः ॥ ५४ ॥

गो० टी०–राक्षसा इति । अभिनिपीडिताः उपरुद्धाः राक्षसाः । विस्मयमाश्चर्यं जग्मुः ॥ ५४ ॥

५५–५८ ] ति० टी०–बलौघस्य वानरीयस्याभिवर्ततोऽभिवर्तमानस्य, भिन्नस्य सागरस्य कृतसेतुविभेदनस्य । अभूतोपमेयम् ॥ ५५ ॥ ५८ ॥

५९ ] ति० टी०–आनन्तर्यमनन्तरकर्तव्यमभिप्रेप्सुः प्राप्तुमिच्छुः । क्रमयोगार्थतत्त्ववित्सामाद्युपायानां क्रमयोगं क्रमप्रयोगं तत्साध्यमर्थं तत्त्वं तत्प्रयोजनं च वेत्ति सः । विभीषणस्यानुमते स्थित इति शेषः । यदि रावणो भवन्तं शरणमुपेयात्तदा लङ्काराज्यं तस्यैव देयमिति विभीषणमते स्थित इत्यर्थः । राजधर्ममनुस्मरन्सामादिष्वुपायसाध्येऽर्थे दण्डो न मोक्तव्यः प्रजानाशहेतुरित्येवंरूपं राजधर्ममनुचिन्तयन् ॥५९॥

रा० टी०–महानिति । अभिवर्ततः अभिवर्तमानस्य सैन्यस्य महान् शब्दोऽभवत् तत्र दृष्टान्तः भिन्नस्य विदीर्णसेतोः सागरस्य सलिलस्वनो यथा अभूतोपमेयमिति भट्टाः ॥ ५५ ॥

गो० टी०–महानिति । तत्र त्रिकूटशिखरे । भिन्नस्य भिन्नमर्यादस्य । सागरस्येव अभिवर्ततः अभिवर्तमानस्य बलौघस्य । सलिलस्वनो यथा स्यात् तथा महाञ्छब्दो बभूवेति योजना । अतो न यथाशब्दवैयर्थ्यम् ॥ ५५ ॥

रा० टी०–तेनेति । लङ्का तेन शब्देन प्रचलिता बभूवेति शेषः ॥ ५६ ॥

गो० टी०–तेनेति । सशैलवनकाननेत्यत्र वनम् उद्यानम् ५६

रा० टी०–रामेति । रामलक्ष्मणगुप्ता सुग्रीवेण महिता सा वाहिनी दुर्धर्षतरा बभूव ॥ ५७ ॥

गो० टी०–रामेति । सुग्रीवेणेति रक्ष्यसाहित्यमुच्यते ५७

रा० टी०–राघव इति । क्रमयोगार्थतत्त्ववित् क्रमेण योगः संबन्धो येषां तेषां सामादीनाम् अर्थानां तत्प्रयोजनानां च तत्त्वं याथार्थ्यं वेत्ति सः आनन्तर्यम् उत्तरकाले कर्तव्यं अभिप्रेप्सुः कर्तुमिच्छुः राजधर्ममनुस्मरन् सन् विभीषणस्यानुमते स्थित इति शेषः । राघवः स्वसैन्यं संन्यवेश्य मन्त्रिभिः सार्धं संमन्त्र्य च अङ्गदमाहूय अब्रवीत् सार्धश्लोकद्वयमेकान्वयि ॥ ५८ ॥ ५९ ॥

गो० टी०–राघव इत्यादिसार्धश्लोकद्वयमेकान्वयम् । वधे विषये । आनन्तर्यम् अनन्तरकर्तव्यम् अभिप्रेप्सुः प्राप्तुमिच्छुः संमन्त्र्य दूतः प्रेषणीय इति विचार्य निश्चित्य अङ्गद एव प्रेषणीय इति निर्धार्य । क्रमयोगार्थतत्त्ववित् क्रमयुक्ता योगाः सामाद्युपायाः तेषामर्थः फलं तस्य तत्त्वं याथार्थ्यं वेत्तीति तथोक्तः । राजधर्ममनुस्मरन् युयुत्सया शत्रुपुरं प्रत्यागता राजानः युद्धार्थं दूतमुखेन प्रथममाह्वयन्तीत्येवं रूपम् राजधर्ममनुस्मरन् । विभीषणस्यानुमते अनुमतौ सत्याम् अङ्गदं समाहूयेदमब्रवीदिति सबन्धः ॥ ५८ ॥ ५९ ॥

६० ] ति० टी०–इदं वक्ष्यमाणमङ्गदमाहूयाब्रवीत् ॥ ६० ॥

रा० टी०–तदाकारमाह–गत्वेति । लङ्कां पुरीं तत्स्थराक्षसान् लङ्घयित्वा अनादृत्य भयं त्यक्त्वा च दशग्रीवं गत्वा गतव्यथः सन् मद्वचनाद्ब्रूहि ॥ ६० ॥

गो० टी०–गत्वेति । हे सौम्य ! गतव्यथः गतश्रमः सन् । लङ्कां पुरीं तत्प्राकारं लङ्घयित्वा भयं त्यक्त्वा दशग्रीवं मद्वचनात् ब्रूहि मयोक्तमिति ब्रूहीत्यर्थः । कपे इत्यनेन लङ्घनसामर्थ्यं द्योतयति ॥ ६० ॥

६१–६२ ] ति० टी०–लङ्घयित्वा समुद्रम् । गतव्यथो

---

१ पवमिति रा. पाठः । २ सैन्यं स्वमिति गो. पाठः । ३ श्रीक गतैश्वर्य मुमूर्षो नष्टचेतनेति गो. रा. पाठः ।

यच्च पापं कृतं मोहादवलिप्तेन राक्षस । नूनं [१]ते विगतो दर्पः स्वयंभूवरदानजः ॥ ६३ ॥
[ [२]तस्यपापस्य संप्राप्ता व्युष्टिरद्य दुरासदा ।
[३]यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः । दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः ॥ ६४ ॥
पदवीं देवतानां च महर्षीणां च राक्षस । राजर्षीणां च सर्वेषां गमिष्यसि [४]युधि स्थिरः ॥ ६५ ॥
बलेन येन वै सीतां मायया राक्षसाधम । मामति[५]क्रमयित्वा त्वं हृतवांस्तन्निदर्शय ॥ ६६ ॥
अराक्षस[६]मिमं लोकं कर्तास्मि निशितैः शरैः । न चेच्छरणमभ्येषि [७]तामादाय तु मैथिलीम् ॥ ६७ ॥
धर्मात्मा [८]राक्षसश्रेष्ठः संप्राप्तोऽयं विभीषणः । लङ्कै[९]श्वर्यमिदं श्रीमान्[१०]ध्रुवं प्राप्नोत्यकण्टकम् ॥ ६८ ॥

---

निरुपद्रवः । भयं त्यक्त्वा त्वद्बलं तृणीकृत्य लङ्कासंपादणंच-मिति शेषः । अतो भ्रष्टेत्यादि तादृशं ब्रूहीत्यन्वयः ॥६१॥६२॥

६३ ] ति० टी०—यच्च पापं कृतं प्राणान्तनानाप्रकार-पीडनं तत्करणीभूतः स्वयंभूवरदानजो दर्पस्ते त्वत्संबन्ध्यद्य विगतः ॥ ६३ ॥

रा० टी०—तदाकारमाह—भ्रष्टेत्यादिभिः । हे भ्रष्टश्रीकत्वा-दिविशिष्ट! अवलिप्तेन गर्वितेन त्वया मोहात् अविवेकाद्धेतोः ऋषिप्रभृतीनां यत् पापमपराधः कृतं तस्य पापस्य व्युष्टिः फलभोगावसरः संप्राप्ता अतः स्वयंभूवरदानजः ते गर्वो गतो विध्वस्तः सार्धश्लोकद्वयमेकान्वयि ॥ ६१ ॥ ६३ ॥

गो० टी०—भ्रष्टश्रीकेत्यादि । भ्रष्टश्रीक भ्रष्टप्रायद्रविण गतैश्वर्य गतप्रायनियन्तृत्व संपदि भ्रष्टायामपि लोके नियन्तृत्वं संभवति तदपि नास्तीत्यर्थः । तद्भयाभावेपि जीव-नाशा संभवति सापि नास्तीत्याह—मुमूर्षो इति । तदानीमपि ज्ञानं संभवति तदपि नास्तीत्याह—नष्टचेतनेति । नागानां सर्पाणाम् । अवलिप्तेन गर्वितेन त्वया ऋषिप्रमुखानां यत्पापं कृतं यो द्रोहः कृतः तस्य कारणभूतः स्वयंभूवरदानजो दर्पो गतः गतप्राय इत्यन्वयः । तत्र हेतुमाह—यस्येति । दण्डधरः नियन्ता अहं यस्य ते दण्डं धारयमाणः करिष्यमाण इत्यर्थः ॥ ६१ ॥ ६३ ॥

६४ ] ति० टी०—दण्डं धारयमाणो निरुच्छ्वासं पुरोपरो धरूपनिग्रहं कुर्वाणः ॥ ६४ ॥

रा० टी०—तस्येति । दण्डधरः अपराधिनां निग्रहकर्ता दाराहरणकर्शितोऽहं तस्यापकारिणस्तव दण्डं धारयमाण सन् लङ्काद्वारे व्यवस्थितः ॥ ६४ ॥

६५ ] ति० टी०—ऋष्यादीनां पदवीं गमिष्यसि । तद्वत्त-वापि मरणं भविष्यतीति भावः । किं च युधि स्थिरत्वे स्वयं-भूपासकस्य ते तदनुग्रहान्मत्तो मरणे पुण्यलोकप्राप्तिस्तवेति भावः । 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥' इत्युक्तेः ॥ ६५ ॥

रा० टी०—पदवीमिति । युधि स्थिरस्त्वं देवप्रभृतीनां पदवीं चरमगतिं परलोकमित्यर्थः, गमिष्यसि प्राप्स्यसि ॥६५॥

गो० —एवंविधस्य नियमने तव किं भविष्यतीत्यत्राह पदवीमिति । पदवीं तेषु कृतं परिभवं तर्मापि गमिष्यसी-त्यर्थः । यद्वा पदवीं लोकम् । युद्धे स्थितः सन् तेषां लोकं गमिष्यसि । युद्धे स्थित्वा सर्वपापविशुद्धः सन् गतिं गमि-ष्यसि । ततस्तूर्णमागच्छेति भावः ॥ ६४ ॥

६६ ] ति० टी०—युद्ध्यस्व, मा पलायितोऽभूरित्याह—बलेनेत्यादि ॥ ६६ ॥

रा० टी०—बलेनेति । येन बलेन मामतिक्रामयित्वा अतिकाम्य सीतां हृतवान् तद्बलं निदर्शय ॥ ६६ ॥

गो० टी०—बलेनेति । मायया मारीचमायया । माम् अतिक्रामयित्वा अप्राप्य । ल्यबभाव आर्षः । येन बलेन यद्ब-लमवलम्ब्य सीतां हृतवानसि तद्बलं निदर्शयेत्यन्वयः ॥ ६५ ॥

६७ ] ति० टी०—यदि मरणभीत्या युयुत्सा नास्ति तदापि ते हितं ब्रवीमीत्याह—अराक्षसमिति ॥ ६७ ॥

रा० टी०—अराक्षसमिति । चेयदि शरणं मां नाभ्येषि प्राप्नोषि तर्हीमं लोकमराक्षसं कर्ताऽस्मि ॥ ६८ ॥

गो० टी०—अराक्षसमिति । मैथिलीमुपादाय समर्प्य मां शरणं नाभ्येषि चेदिमं लोकमराक्षसं कर्तास्मि । शरणागतौ तु सर्वं क्षमिष्य इति भावः । मैथिलीमुपादायेत्यनेन स्वर्ण-स्तेये स्वर्णप्रत्यर्पणमन्तरेण प्रायश्चित्तानधिकारवत्सीताप्रत्य-र्पणाभावे शरणागतौ तु नाधिकार इत्युक्तम् । रावणेन शर-णागतौ कृतायां विभीषणाय कोसलराज्यं दास्यामीत्य-भिप्रायः ॥ ६६ ॥

६८ ] ति० टी०—शरणगतिं विना जीवनं राज्यं च सुतरां दुर्लभमित्याह—धर्मात्मेत्यादि । इहागत्य मां शरणं प्राप्तो विभीषण इदं लङ्कैश्वर्यमकण्टकं त्वद्रूपकण्टकरहितं ध्रुवं प्राप्नोति । तत्प्राप्तियोग्यतां धर्मात्मेत्यादिविशेषणैर्दर्शयति—धर्मात्मा धर्मप्रधाना नित्यं धर्मचित्तश्च । इदमैश्वर्यस्य साक्षा-न्निदानम् । राक्षसश्रेष्ठेत्यनेन त्वदनन्तरं न्यायप्राप्तं तस्य राज्य-मिति दर्शितम् । श्रीमानित्यनेन तदैश्वर्यप्रापकाशेषलक्षणव-त्त्वम् । मां प्राप्येत्यनेन तत्प्रापकसमग्रसामग्रीसंपद्दर्शिता॥६८॥

रा० टी०—धर्मात्मेति । संप्राप्तोऽयं विभीषणः लङ्कै-श्वर्यं प्राप्नोति ॥ ६९ ॥

---

१ अद्येति गो. पाठः । २ अर्धमेतदधिकं रा. पाठे । ३ तस्येति रा. पाठः । ४ मया हत इति गो. पाठः । ५ क्रामयित्वेति गो. पाठः । ६ इदमिति गो. पाठः । ७ मामुपेति गो. पाठः । ८ रक्षसां श्रेष्ठ इति गो. पाठः । ९ ध्रुवमिति गो. पाठः । १० भयमिति गो. पाठः ।

नहि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया । शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥ ६९ ॥
युध्यस्व मा धृतिं कृत्वा शौर्यमालम्ब्य राक्षस । मच्छरैस्त्वं रणे शान्तस्ततः शान्तो भविष्यसि ॥ ७० ॥
यद्याविशसि लोकांस्त्रीन्पक्षीभूतो निशाचर । मम चक्षुःपथं प्राप्य न जीवन्प्रतियास्यसि ॥ ७१ ॥
ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदेहिकम् । सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥ ७२ ॥
इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा । जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ॥ ७३ ॥
सोऽतिपत्य मुहूर्तेन श्रीमान्रावणमन्दिरम् । ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ७४ ॥
ततस्तस्याविदूरेण निपत्य हरिपुंगवः । दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ॥ ७५ ॥

---

गो० टी०—शरणागत्यकरणे स्वकर्तव्यमाह—धर्मात्मेति । यद्वा शरणागतौ प्राणत्राणं करिष्यामि न तु राज्यं दास्यामीत्यभिप्रायेणाह—धर्मात्मेति । धर्मात्मा धर्मबुद्धिः रक्षसां श्रेष्ठः राक्षसनायक इत्यर्थः अयं विभीषणः संप्राप्तः मां प्रपन्नः । तस्माल्लङ्कैश्वर्यमयं प्राप्नोति उत्तरक्षणे प्राप्स्यतीत्यर्थः । श्रीमान् तदनुगुणानुकूल्यवान् । एवं क्रियाभेदादयं शब्दद्वयोपपत्तिः ॥ ६७ ॥

६९]ति०टी०—ननु मयि जीवति कथं लङ्कैश्वर्यप्राप्तिस्तस्येत्यत्राह—नहीति । अधर्मेणान्यायेन । न शक्यमित्यत्र हेतुः—मूर्खसहायेनेति । विभीषणाय मया राज्यस्य दत्तत्वात्तव तद्भोगो न न्याय्य इति भावः ॥ ६९ ॥

रा० टी०—नेति । मूर्खसहायेन अविवेकिसहायविशिष्टेन त्वया राज्यं भोक्तुं न शक्यं युध्यस्वेति वा मत्समीपगमनाभावपक्षे धृतिं कृत्वा युध्यस्व तत्फलमाह—मच्छरैः शान्तः मृत इत्यर्थः, शान्तः अपराधपापरहितो भविष्यसि एतेन पलायनं न कर्तव्यमिति सूचितम् ॥ ७१ ॥

गो० टी०—एवं विभीषणस्य राज्ययोग्यतामुक्त्वा रावणस्य तदभावमाह—न हीति । अधर्मेण धर्मरहितेन अत एव पापेन पापिष्ठेन अत एवाविदितात्मना अस्वाधीनमनस्केन मूर्खसहायेन त्वया न शक्यमित्यन्वयः ॥ ६८ ॥

७० ] ति० टी०—शरणव्रजने तु जीवितमेकांशेन राज्यं च तवापि दास्यामि तदभावे तु दण्डाधिकारिणा मया सर्वथा वध्यस्त्वम् युद्धवधश्च परमं हितं तवेति परमदयालुर्भगवांस्तदेवोपदिशति—युद्धयस्वेति । मा माम् धृतिं कृत्वा युद्धयस्व । 'युध्यस्व मां धृतिं कृत्वा' इति पाङ्कः पाठः । मच्छरैः पापशोधनाधिकृतस्य मम शरैः रणे शान्तः समाप्तस्तत एव हेतोः शान्त आजन्मकृतात्पापात्पूतो भविष्यसि दर्शननामस्मरणैः पापशोधनफलक एवायमवतारस्तत्त्वेन ज्ञायते, तथा ज्ञानाभावेऽपि मत्तो मरणे किंचित्कालोत्तरमुत्तमक्षत्रियकुले जन्मप्राप्तिरिति भावः ॥ ७० ॥

गो० टी०—सीतामादाय शरणमागतोसि चेद्विभीषणाय राज्यं दत्त्वा त्वत्प्राणान् रक्षामि अन्यथा युद्धयस्वेत्याह—युद्धयस्वेति । शान्तः मृतः । पूत इति । युद्धे अपराङ्मुखस्या मृतेः सर्वपापप्रायश्चित्तत्वादिति भावः ॥ ६९ ॥

७१ ] ति० टी०—पुनरपि धैर्याय वधनिश्चयमवलम्ब्यैतदुचितकृत्यं कुर्वित्युपदिशति—यदीति । न स देशोऽस्ति यत्र न मे चक्षुःप्राप्तिरिति भावः ॥ ७१ ॥

रा० टी०—तत्र हेतुमाह—यदीति । मम चक्षुःपथं प्राप्य पक्षिभूतः सन् यदि त्रीन् लोकान् आविशसि तदापि जीवन्न प्रतियास्यसि ॥ ७२ ॥

गो० टी०—यद्येति ॥ ७० ॥

७२ ] ति० टी०—देहादूर्ध्वं प्राप्त ऊर्ध्वदेहः परलोकस्तत्र हितं दानादिकमौर्ध्वदेहिकम् । सुदृष्टा क्रियताम् । इतः परं दर्शनाभावात् ॥ ७२ ॥

रा० टी०—ब्रवीमीति । यतस्ते जीवितं मयि स्थितं मदाधीनमित्यर्थः अतः और्ध्वदेहिकं परलोकसुखकारकं दानादि क्रियताम् अत एव लङ्का सुदृष्टा क्रियताम् लङ्कादर्शनं पुनर्न भविष्यतीत्यर्थः इति हितं वाक्यं त्वां ब्रवीमि ॥ ७३ ॥

गो० टी०—ब्रवीमीति । क्रियतामौर्ध्वदेहिकमिति अराक्षसकरणेन श्राद्धकर्त्रभावात्स्वयमेव जीवच्छ्राद्धं कुर्वित्यर्थः । सुदृष्टेति । म्रियमाणा हि चापलेन पुत्रकलत्रादिसुखदर्शनं कुर्वन्ति तद्वदिति भावः । मयि स्थितं मदायत्तम् । अवश्यं त्वां नाशयामीत्यर्थः ॥ ७१ ॥

७३ ] ति० टी०—मूर्तिमान्हव्यवाडिति । वानरवेषोऽग्निरित्यर्थः ॥ ७३ ॥

रा० टी०—इतीति । हव्यवाट् वह्निरिव तारेयोऽङ्गदः आकाशमाविश्य जगाम ॥ ७४ ॥

गो० टी०—इत्युक्त इति । मूर्तिमान् करचरणादिसंस्थानवान् । हव्यवाट् अग्निः ॥ ७२ ॥

७४-७५ ] ति० टी०—अतिपत्यातिक्रम्य । मार्गमिति शेषः ॥ ७४ ॥ ७५ ॥

रा० टी०—स इति । सोऽङ्गदः मुहूर्तेन रावणमन्दिरम् । अतिपत्य गत्वा आसीनं रावणं ददर्श ॥ ७५ ॥

गो० टी०—स इति । अतिपत्य प्राप्य । अव्यग्रं ददर्शेत्यन्वयः । श्रीमानित्यनेन हर्षवत्त्वमुच्यते ॥ ७३ ॥

---

१ नेति गो. रा. पाठः । २ पूत इति गो. पाठः । ३ यद्येति गो. पाठः । ४ पक्षिभूतो मनोजव इति गो. पाठः । ५ दूरे स इति गो. पाठः ।

तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् । सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ७६ ॥
दूतोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मणः । वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ७७ ॥
आह त्वां राघवो रामः कौसल्यानन्दवर्धनः । निष्पत्य प्रतियुध्यस्व नृशंस पुरुषो भव ॥ ७८ ॥
हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम् । निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ॥ ७९ ॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् । शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम् ॥ ८० ॥
विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि । न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ॥ ८१ ॥
इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुंगवे । अमर्षवशमापन्नो निशाचरगणेश्वरः ॥ ८२ ॥
ततः स रोषमापन्नः शशास सचिवांस्तदा । गृह्यतामिति[1] दुर्मेधा वध्यतामिति चासकृत् ॥ ८३ ॥
रावणस्य वचः श्रुत्वा दीप्ताग्निमिव[3] तेजसा । जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ॥ ८४ ॥
ग्राहयामास तारेयः स्वयमात्मानमात्मवान् । बलं दर्शयितुं वीरो यातुधानगणे तदा ॥ ८५ ॥

रा० टी०—तत इति । तस्य रावणस्य अविदूरेण निकटे निपत्य प्राप्य अङ्गदस्तस्थौ ॥ ७६ ॥

गो० टी०—तत इति । स्पष्टः ॥ ७४ ॥

७६ ] ति० टी०—तद्रामवचनमिति । संक्षेपकथनं वक्ष्यमाणस्य ॥ ७६ ॥

रा० टी०—तदिति । आत्मानं निवेद्य बोधयित्वा रामवचनम् अन्यूनाधिकं यथा भवति तथा सामात्यं रावणं श्रावयामास ॥ ७७ ॥

गो० टी०—तदिति । उत्तमं पथ्यम् । सामात्यं रावणमिति शेषः । आत्मना स्वयम् आत्मानं निवेद्य आत्मनो वालिपुत्रत्वादिनिवेदनपूर्वकं रामवचनं कथयामासेत्यर्थः ॥ ७९ ॥

७७ ] ति० टी०—तस्यैव प्रपञ्चः—दूतोऽहमिति । यदीत्यसंदिग्धे संदिग्धवचनम् 'वेदाः प्रमाणं चेत्' इतिवत् । श्रोत्रमागत एव । एतेन स्वस्य स्वीयानां च बलादि तुभ्यं न वाच्यमेव त्वया ज्ञातत्वादिति भावः ॥ ७७ ॥

रा० टी०—तदाकारमाह—दूत इत्यादिभिः । यदि कदाचित्ते श्रोत्रमागतः श्रुत इत्यर्थः, अङ्गदो नाम रामस्यदूतोऽहमस्मीति शेषः ॥ ७८ ॥

गो० टी०—दूत इति । यदि ते श्रोत्रमागतः मां श्रुतवानसि किमित्यर्थः ॥ ७६ ॥

७८–८० ] ति० टी०—निष्पत्य पुरान्निष्क्रम्य । पुरुषो भव शूरो भव ॥ ७८ ॥ ८० ॥

रा० टी०—आहेति । त्वा त्वां राघव आह । तदाकारमाह—हे नृशंस निष्पत्य नगरान्निष्क्रम्य प्रतियुध्यस्व अत एव पुरुषो भव अन्यथा त्वयि क्लीबत्वं प्राप्स्यतीत्यर्थः ॥ ७९ ॥

गो० टी०—आह त्वामिति । राघव इत्यादिना छद्मना न योत्स्यत इत्युक्तम् । कौसल्यानन्दवर्धन इत्यनेन बहुतपःप्रभावजनिततया धार्मिकत्वमुक्तम् । निष्पत्य पुरान्निर्गत्य । पुरुषो भव शूरो भवेत्यर्थः । पुरुषाधमेति पाठे पुरोपरोधेऽप्यनिर्गमने नूनं पुरुषाधम एवासीति भावः ॥ ७७ ॥

रा० टी०—हन्तेति । त्वयि हते सति त्रयो लोकाः निरुद्विग्नाः भविष्यन्ति अतः त्वां हन्तास्मि ॥ ८० ॥

गो० टी०—हन्तेति । अहमिति शेषः । निरुद्विग्नाः निर्भयाः ॥ ७८ ॥

रा० टी०—देवेति । देवप्रभृतीनां शत्रुमत एव ऋषीणां कण्टकं त्वाम् उद्धरिष्यामि ॥ ८१ ॥

गो० टी०—देवेति । उद्धरिष्यामि उन्मूलयिष्यामि । कण्टकं बाधकमित्यर्थः ॥ ७९ ॥

८१–८४ ] ति० टी०—वैदेहीं सत्कृत्य क्षमापनं कृत्वा मां प्रणिपत्य न चेत्प्रदास्यसि तदा त्वयि हते विभीषणस्यैश्वर्यं भविष्यति ॥ ८१ ॥ ८४ ॥

रा० टी०—विभीषणस्येति । सत्कृत्य प्रणिपत्य न चेद्यदि वैदेहीं न प्रदास्यसि तर्हि त्वयि हते सति बिभीषणस्यैश्वर्यं भविष्यति ॥ ८२ ॥

गो० टी०—बिभीषणस्येति ॥ ८० ॥

रा० टी०—इतीति । हरिपुङ्गवे एवं परुषं ब्रुवाणे सति निशाचरगणेश्वरः अमर्षवशम् अक्षमाधीनत्वमापन्नः प्राप्तः ॥ ८३ ॥

गो० टी०—इत्येवमिति । आपन्नः प्राप्तः बभूव ॥ ८१ ॥

रा० टी०—तत इति । रोषमापन्नः स रावणः गृह्यतां वध्यतामिति सचिवान् असकृत् शशास ॥ ८४ ॥

गो० टी०—तत इति । दुर्मेधाः दुर्बुद्धिः । न दूतो वध्य इति शास्त्रानभिज्ञ इत्यर्थः । असकृच्छशासेत्यन्वयः । यद्वा दुर्मेधा इत्यङ्गदमेवाह ॥ ८२ ॥

रा० टी०—रावणस्येति । चत्वारो रजनीचरास्तमङ्गदं जगृहुः ॥ ८६ ॥

गो० टी०—रावणस्येति । स्पष्टः ॥ ८३ ॥

८५ ] ति० टी०—ग्राहयामास स्वेच्छया ग्रहणं कारयामास । किमर्थमिदं तत्राह—बलमित्यादि ॥ ८५ ॥

रा० टी०—ग्राहयामासेति । यातुधानगणे बलं स्वपराक्रमं दर्शयितुं तारेयः आत्मानं स्वशरीरं स्वयं ग्राहयामास ॥ ८६ ॥

१ तत्राक्ष इति गो. पाठः । २ ध्व इति गो. पाठः । ३ ज्वालितमतेजस इति गो. पाठः ।

स तान्बाहुद्वयासक्तानादाय पतगानिव । प्रासादं शैलसंकाशमुत्पपाताङ्गदस्तदा ॥ ८६ ॥
तैस्योत्पतनवेगेन निर्धूतास्तत्र राक्षसाः । भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ॥ ८७ ॥
ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम् । चैक्राम राक्षसेन्द्रस्य वालिपुत्रः प्रतापवान् ॥ ८८ ॥
पैफाल च तदाक्रान्तं दशग्रीवस्य पश्यतः । पुरा हिमवतः शृङ्गं वज्रेणेव विदारितम् ॥ ८९ ॥
भङ्क्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः। विनद्य सुमहानादमुत्पपात ँविहायसा ॥ ९० ॥
व्यथयन्राक्षसान्सर्वान्हर्षयंश्चापि वानरान् । स वानराणां मध्ये तु रामपार्श्वमुपागतः ॥ ९१ ॥
रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् । विनाशं चात्मनः पश्यन्निःश्वासपरमोऽभवत् ॥ ९२ ॥
रामस्तु बहुभिर्हृष्टैर्विनैदद्भिः प्लवंगमैः । वृतो रिपुवधाकाङ्क्षी युद्धायैवाभिवर्तत ॥ ९३ ॥
सुषेणस्तु महावीर्यो गिरिकूटोपमो हरिः । बहुभिः संवृतस्तत्र वानरैः कामरूपिभिः ॥ ९४ ॥
सँ तु द्वाराणि संयम्य सुग्रीववचनात्कपिः । पर्यक्रामत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ॥ ९५ ॥
तेषामक्षौहिणिशतं समवेक्ष्य वनौकसाम् । लङ्कामुपनिविष्टानां सागरं चाभिवर्तताम् ॥ ९६ ॥
राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथापरे । अपरे सैंमरे हर्षाद्धर्षमेवोपपेदिरे ॥ ९७ ॥

---

गो० टी०—ग्राहयामासेति । यातुधानगणे विषये स्वबलं दर्शयितुम् आत्मवान् धृतिमान् स्वयम् आत्मानं ग्राहयामास ग्रहीतुमनुमेने ॥ ८४ ॥

८६-८७ ] ति० टी०—बलमेव दर्शयति—स तानित्यादि ॥ ८६ ॥ ८७ ॥

रा० टी०—स इति । सोऽङ्गदः बाहुद्वयासक्तान् तान् चतुरो राक्षसान् पतगानिव आदाय प्रासादमुत्पपात ॥ ८७ ॥

गो० टी०—स तानिति । स्पष्टः ॥ ८५ ॥

रा० टी०—तस्येति । तस्याङ्गदस्य उत्पतनवेगेन निर्धूताः प्रकम्पिताः राक्षसाः भूमौ निपतिताः ॥ ८८ ॥

गो० टी०—तेन्तरिक्षादिति । स्पष्टः ॥ ८६ ॥

८८ ] ति० टी०—वालिपुत्रः प्रासादशिखरम् ददर्शेति शेषः । दृष्ट्वा च तच्चक्राम पदाक्रान्तवान् ॥ ८८ ॥

रा० टी०—तत इति । वालिपुत्रः राक्षसेन्द्रस्य प्रासादशिखरं चक्राम ॥ ८९ ॥

गो० टी०—तत इति । स्पष्टः ॥ ८७ ॥

८९-९१ ] ति० टी०—तदाक्रान्तं च प्रासादशिखरं पश्यतो दशग्रीवस्य पफाल शतधा विशीर्णमभूत् ॥ ८९-९१ ॥

रा० टी०—पफालेति । वज्रेण विदारितं हिमवतः शृङ्गमिव तदा आक्रान्तं प्रासादशृङ्गं पफाल बिभेद ॥ ९० ॥

गो० टी०—तत्पफालेति । पफाल व्यशीर्यत ॥ ८८ ॥

रा० टी०—भङ्क्त्वेति । आत्मनो नाम विश्राव्य उच्चैः श्रावयित्वा विहायसा आकाशेनोत्पपात ॥ ९१ ॥

गो० टी०—भङ्क्त्वेति । विश्राव्य विशेषेण श्रावयित्वा ८९

रा० टी०—व्यथयन्निति । सोऽङ्गदः वानराणां मध्ये विद्यमानं रामपार्श्वमुपागतः प्राप्तः ॥ ९२ ॥

गो० टी०—व्यथयन्निति ॥ ९० ॥

९२ ] ति० टी०—पश्यन्निति । एकोऽपि समग्रे मम बलं पराभूय निर्भयं गच्छति, एवंविधेष्वनेकेषु मन्नाशोद्यतेषु कथं जीवनमिति पर्यालोचयन्नित्यर्थः ॥ ९२ ॥

रा० टी०—रावण इति । प्रासादधर्षणाद्धेतोः रावणः परं क्रोधं चक्रे आत्मनो विनाशं पश्यन् सन् निःश्वासपरमोऽभवच्च ॥ ९३ ॥

गो० टी०—रावण इति । प्रासादधर्षणात् प्रासादभञ्जनात् पश्यन् तर्कयन् निःश्वासपरमः अधिकनिःश्वासः ॥ ९१ ॥

९३-९४ ] ति० टी०—युद्धायैवाभिवर्तताभ्यवर्तत ९३।९४

रा० टी०—राम इति । प्लवङ्गमैर्वृतो रामस्तु अरिपुवधाकाङ्क्षी सन् युद्धाय एव अभिवर्तत अभ्यवर्तत ॥ ९४ ॥

गो० टी०—राम इति । अङ्गदागमनं दृष्ट्वेति शेषः ॥९२॥

रा० टी०—सुषेण इति । सुषेणस्तु बहुभिर्वानरैः संवृतोऽभवदिति शेषः ॥ ९५ ॥

गो० टी०—सुषेण इति । संवृतः बभूवेति शेषः । उत्तरश्लोकेनैकवाक्यत्वे हरिकपिशब्दयोः पौनरुक्त्यं स्यात् ॥ ९३ ॥

९५ ] ति० टी०—पर्यक्रामत सर्वबलरक्षार्थं सर्वद्वारवृत्तान्तग्रहणार्थं च । नक्षत्राण्यश्विन्यादीनि ॥ ९५ ॥

रा० टी०—स इति । सुषेणः सुग्रीववचनात् हेतोः नक्षत्राणि चन्द्रमा इव पर्यक्रामत ॥ ९६ ॥

गो० टी०—चतुरिति । न्यूनताव्यावृत्त्यर्थं सर्वाणीत्युक्तम् कपिः सुषेणः पर्यक्रामत परितश्चचार नक्षत्राणि नक्षत्रनिरूपितराशीनित्यर्थः ॥ ९४ ॥

९६-९७ ] ति० टी०—अक्षौहिणिशतम् आर्षो ह्रस्वः ।

---

१ द्वये सक्तानिति गो.पाठः । २ तेऽन्तरिक्षाद्विनिर्धूतास्तस्य वेगेनेति गो.पाठः । ३ ददर्शेति गो. पाठः । ४ तत्पफाल पदेति गो.पाठः । ५ विहायसमिति गो.पाठः। ६ निनदद्भिरिति गो.पाठः। ७ अभ्यवर्ततेति गो.पाठः। ८ चतुरिति गो.पाठः। ९ अतीति गो.पाठः । १० समरोद्धर्षादिति गो. पाठः ।

कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरम् । ददृशू राक्षसा दीनाः प्राकारं वानरीकृतम् ॥
हाहाकारमकुर्वन्त राक्षसा भयमागताः ॥ ॥ ९८ ॥
तस्मिन्महाभीषणके प्रवृत्ते कोलाहले राक्षसराजयोधाः ।
प्रगृह्य रक्षांसि महायुधानि युगान्तवाता इव संविचेरुः ॥ ॥ ९९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः ।

राक्षसा रावणमेत्य लङ्का रामेण कपिभी रुद्धेति कथयामासुः ततः स प्रासादमारुह्य कथं कपीनां नाशो भवेदिति चिन्तयन्राघवं हरींश्च धैर्येण ददर्श । रामस्तु लङ्कां दृष्ट्वा सीता मत्कृते पीड्यते इति कपीन्राक्षसवधाय चतुर्णां द्वाराणां निरोधायादिश्य स्वयमुत्तरद्वारं सलक्ष्मणो रुरुधे । एतद्रावणः श्रुत्वा स्वबलं युद्धायादिशत्ततो राक्षसाः समेरीशब्दं स्वनादमकुर्वन् ।

ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् । न्यवेदयन्पुरीं रुद्धां रामेण सह वानरैः ॥ १ ॥
रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः । विधानं द्विगुणं श्रुत्वा प्रासादं चाप्यरोहत ॥ २ ॥
स ददर्श वृतां लङ्कां सशैलवनकाननाम् । असंख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ॥ ३ ॥

'अक्षाद्दूहिन्याम्' इति वृद्धिः । यावन्तोऽक्षौहिण्यां गजाश्वरथिपदातयस्तत्संख्या वानरा इत्यर्थः शतशब्दोऽनन्तवाची सागरं चाभिवर्तताम् सागरपर्यन्तमभिव्याप्य वर्तमानानामित्यर्थः ॥ ९६ ॥ ९७ ॥

रा० टी०—तेषामिति । वनौकसाम् अक्षौहिणिशतम् अक्षौहिणीशतं समवेक्ष्य राक्षसाः विस्मयं जग्मुः अपरे राक्षसा त्रासं जग्मुः अपरे अन्ये समरे हर्षान् अन्यसमरहर्षस्मरणात् हर्षमेव उपपेदिरे श्लोकद्वयमेकान्वयि ॥ ९७ ॥ ९८ ॥

गो० टी०—तेषामित्यादि । अक्षौहिणिशतमित्यत्र "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः अनेकाक्षौहिणीमित्यर्थः । सागरं चाभिवर्ततां सागरसमीपे वर्तमानानामित्यर्थः । राक्षसा इति । राक्षसाः धीरा इति शेषः । अपरे अधीरा इत्यर्थः । उद्धर्षात् गर्वात् ॥ ९५ ॥ ९६ ॥

९८ ] ति० टी०—वानरीकृतं वानररूपनिर्मितरूपमिव कृतम् ॥ ९८ ॥

रा० टी०—कृत्स्नमिति । कृत्स्नं प्राकारपरिखान्तरं कपिभिर्व्याप्तम् अत एव राक्षसाः वानरीकृतं वानरचितमिव प्राकारं ददृशुः अत एव भयमागता राक्षसाः हाहाकारमकुर्वन्त । सार्धश्लोक एकान्वयी ॥ ९९ ॥

गो० टी०—कृत्स्नमिति । हरिभिर्व्याप्तं प्राकारपरिखान्तरं प्राकारपरिखयोरन्तरालम् वानरीकृतं वानरप्रचुरतया कृतम् अपरमिव प्राकारं ददृशुरित्यर्थः ॥ ९७ ॥

गो० टी०—हाहेत्यर्धम् ॥ ९८ ॥

९९ ] ति० टी०—राक्षसराजयोधरूपाणि रक्षांसीत्यर्थः ९९

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकचत्वारिंशः सर्गः ॥ ४१ ॥

रा० टी०—तस्मिन्निति । महाभीषणके अतिकोलाहलं तस्मिन् शब्दे प्रवृत्ते सति राक्षसराजधान्यां रक्षांसि महायुधानि प्रगृह्य महावाता इव संविचेरुः ॥ १०० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

गो० टी०—तस्मिन्निति । स्पष्टः ॥ ९९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—रावणवृत्तान्तं वर्णयितुं तं प्रति राक्षसोक्तिमाह तत इति । राक्षसाः रामेण रुद्धां पुरीं लङ्कां न्यवेदयन् ॥ १ ॥

गो० टी०—अथ युद्धारम्भो द्विचत्वारिंशे—तत इति । तत्र तस्मिन् काले ॥ १ ॥

२-३ ] ति० टी०—विधानम् । द्वाराणां रक्षाविधानमित्यर्थः ॥ २ ॥ ३ ॥

रा० टी०—रुद्धामिति । निशाचरो रावणः नगरीं रुद्धां श्रुत्वा द्विगुणं विधानं पुररक्षार्थं राक्षसनियोगं कृत्वा प्रासादमरोहत ॥ २ ॥

गो० टी०—रुद्धामिति । विधानं रक्षणविधिम् द्विगुणं पूर्वस्मादधिकम् ॥ २ ॥

रा० टी०—स इति । हरिगणैरावृतां लङ्कां ददर्श ॥ ३ ॥

गो० टी०—स इति । सर्वत आवृतामित्यन्वयः ॥ ३ ॥

१ कारं प्रकुर्वन्तीति गो. पाठः । २ मोहिता इति गो. पाठः । ३ धान्यामिति गो. रा. पाठः । ४ कृत्वेति गो. पाठः । ५ सोऽध्येति गो. पाठः ।

स दृष्ट्वा वानरैः सर्वैर्वसुधां कपिलीकृताम् । कथं क्षपयितव्याः स्युरिति चिन्तापरोऽभवत् ॥ ४ ॥
स चिन्तयित्वा सुचिरं धैर्यमालम्ब्य रावणः । राघवं हरियूथांश्च ददर्शायतलोचनः ॥ ५ ॥
राघवः सह सैन्येन मुदितो नाम पुप्लुवे । लङ्कां ददर्श गुप्तां वै सर्वतो राक्षसैर्वृताम् ॥ ६ ॥
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् । जगाम मनसा सीतां दूयमानेन चेतसा ॥ ७ ॥
अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा । पीड्यते शोकसंतप्ता कृशा स्थण्डिलशायिनी ॥ ८ ॥
निपीड्यमानां धर्मात्मा वैदेहीमनुचिन्तयन् । क्षिप्रमाज्ञापयद्रामो वानरान्द्विषतां वधे ॥ ९ ॥
एवमुक्ते तु वचसि रामेणाक्लिष्टकर्मणा । संघर्षमाणाः प्लवगाः सिंहनादैरपूरयन् ॥ १० ॥
शिखरैर्विकिरामैतां लङ्कां मुष्टिभिरेव वा । इति स्म दधिरे सर्वे मनांसि हरियूथपाः ॥ ११ ॥
उद्यम्य गिरिशृङ्गाणि महान्ति शिखराणि च । तरूंश्चोत्पाद्य विविधांस्तिष्ठन्ति हरियूथपाः ॥ १२ ॥

४-५ ] ति० टी०-कपिलीकृतां कपिलवर्णवत्सदृशीकृताम् ॥ ४ ॥ ५ ॥

रा० टी०-स इति । वानरैः कपिलीकृतां कपिलवर्णं प्रापितां वसुधां दृष्ट्वा कथं क्षपयितव्याः वानरा विनाशनीयाः स्युरितिचिन्तापरोऽभवत् ॥ ४ ॥

गो० टी०-स दृष्ट्वेति । कवलीकृताम् आच्छादितम् । कपिलीकृतामिति पाठे वानरवर्णेन कपिलीकृताम । क्षपयितव्याः नाशयितव्याः एत इति शेषः ॥ ४ ॥

रा० टी०-स इति । स रावणः धैर्यमालम्ब्य स्वीकृत्य राघवं हरियूथांश्च ददर्श ॥ ५ ॥

गो० टी०-स इति । आयतलोचन इत्यनेन विस्मयातिशय उच्यते ॥ ५ ॥

६ ] ति० टी०-मुदितः पुप्लुवे । नामशब्दो वाक्यालंकारे प्राकारसमीपमिति शेषः । रामाधिरूढवानरप्लवनं रामे उपचर्यते ॥ ६ ॥

रा० टी०-राघव इति । मुदितो राघवः सैन्येन सह पुप्लुवे राक्षसैः सर्वतो वृतामत एव गुप्तां लङ्कां ददर्श च राघवस्य प्लवनं तु योग्यतया आरोह्यमाणवानरद्वारा बोध्यम् ॥ ६ ॥

गो० टी०-राघव इति । पुप्लुवे नाम पूर्वस्थानात् प्राकारसंनिकृष्टं प्रदेशं प्राप्त इत्यर्थः ॥ ६ ॥

७ ] ति० टी०-मनसा जगाम सस्मार ॥ ७ ॥

रा० टी०-दृष्ट्वेति । दाशरथिः दूयमानेन चेतसोपलक्षितां सीतां मनसा जगाम ॥ ७ ॥

गो० टी०-दृष्ट्वेति । दूयमानेनेति । सीतां स्मृत्वा दुःखितोभूदित्यर्थः ॥ ७ ॥

८ ] ति० टी०-मत्कृते मन्निमित्तं शोकसंतप्तापि पीड्यते । मदर्थं रामस्यैवं महाक्लेशोऽजायत इति खिन्ना भवतीत्यर्थः ॥८॥

रा० टी०-चिन्ताकारमाह-अत्रेति । मत्कृते शोकसंतप्ता अत एव कृशा जनकात्मजा पीड्यते अतिदुःखेनेति शेषः ॥८॥

गो० टी०-अत्रेति । मृगशावाक्षीत्यनेन शोकानर्हत्वमुच्यते स्थण्डिलशायिनी भूतलशायिनी ॥ ८ ॥

९ ] ति० टी०-निपीड्यमानाम् । उक्तरीत्येति शेषः । आज्ञापयदाज्ञप्तवान् ॥ ९ ॥

रा० टी०-निपीड्यमानामिति । वैदेहीमनुचिन्तयन् रामः द्विषतां वधे वानरानाज्ञापयत् ॥ ९ ॥

गो० टी०-पीड्यमानामिति । पीड्यमानां राक्षसीभिरिति शेषः । धर्मात्मेत्यनेन दयालुत्वमुच्यते ॥ ९ ॥

१० ] ति० टी०-संघर्षमाणा अग्रे भवितुं परस्परं स्पर्धमानाः ॥ १० ॥

रा० टी०-एवमिति । वचसि रिपुविघातार्थकवचने रामेणैवमुक्ते सति संघर्षमाणाः अहमेव पूर्वं हनिष्यामीतीच्छन्तः प्लवगाः सिंहनादैः तत्सदृशस्वस्वनैरपूरयन् ॥ १० ॥

गो० टी०-एवमुक्त इति । वचने आज्ञापनरूपे । सङ्घर्षमाणाः स्पर्धमानाः अनादयन् लङ्कामिति शेषः ॥ १० ॥

११ ] ति० टी०-विकिराम विदारयाम ॥ ११ ॥

रा० टी०-शिखरैरिति । एनां लङ्कां शिखरैः मुष्टिभिरेव वा विकिराम भित्त्वा प्रक्षिपाम इति मनांसि इच्छा हरियूथपाः दधिरे ॥ ११ ॥

गो० टी०-शिखरैरिति । विकिराम चूर्णयाम । मनांसि दधिरे निश्चयं चक्रुरित्यर्थः ॥ ११ ॥

१२ ] ति० टी०-गिरिशृङ्गाणि सूक्ष्माणि । 'शृङ्गं स्यात्पर्वतस्याग्रे शिखरे खण्डशैलके' इति निघण्टुः ॥ १२ ॥

रा० टी०-उद्यम्येति । गिरिशृङ्गाणि शिखराणि शैलखण्डानि च तरूंश्च उत्पाट्य उद्यम्य उत्थाप्य हरियूथपास्तिष्ठन्ति 'शृङ्गं स्यात्पर्वतस्याग्रं शिखरं खण्डशैलकम्' इति निघण्टुः ॥ १२ ॥

गो० टी०-उद्यम्येति । शिखराणि पर्वतखण्डान् । शिखरं शैलखण्डमिति संग्रहकारः । तिष्ठन्ति अतिष्ठन् ॥ १२ ॥

१ सर्वामिति गो. पाठः । २ कवलीकृतामिति गो. पाठः । ३ सहसेति गो. पाठः । ४ पीड्यमानां स इति गो. पाठः । ५ आज्ञापयामासेति गो. पाठः । ६ वचने इति गो. पाठः । ७ अनादयन्निति गो. पाठः । ८ एनामिति गो. पाठः ।

प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः । राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ १३ ॥
ते ताम्रवक्त्रा हेमाभा रामार्थे त्यक्तजीविताः । लङ्कामेवाभ्यवर्तन्त सालभूधरयोधिनः ॥ १४ ॥
ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवंगमाः । प्राकाराग्राण्यसंख्यानि ममन्थुस्तोरणानि च ॥ १५ ॥
परिखान्पूरयन्तश्च प्रसन्नसलिलाशयान् । पांसुभिः पर्वताग्रैश्च तृणैः काष्ठैश्च वानराः ॥ १६ ॥
ततः सहस्रयूथाश्च कोटियूथाश्च यूथपाः । कोटियूथशताश्चान्ये लङ्कामारुरुहुस्तदा ॥ १७ ॥
काञ्चनानि प्रमर्दन्तस्तोरणानि प्लवंगमाः । कैलासशिखराग्राणि गोपुराणि प्रमथ्य च ॥ १८ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवंगमाः । लङ्कां तामभिधावन्ति महावारणसंनिभाः ॥ १९ ॥
जयत्युरुबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २० ॥
इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवंगमाः । अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥ २१ ॥
वीरबाहुः सुबाहुश्च नलश्च पनसस्तथा । निपीड्योपनिविष्टास्ते प्राकारं हरियूथपाः ॥
एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम् ॥ ॥ २२ ॥

१३-१५ ] ति० टी०—प्रेक्षतः । प्रेक्षन्तमनादृत्येत्यर्थः । राघवस्य प्रियो यः कामो मनोरथस्तत्सिद्ध्यर्थमारुरुहुर्लङ्काम् । लङ्काप्राकारमित्यर्थः ॥ १३ ॥ १५ ॥

रा० टी०—प्रेक्षत इति । राक्षसेन्द्रस्य प्रेक्षतः सतः तानि रामसंबन्धीनि अनीकानि लङ्कां तत्प्राकारमारुरुहुः ॥ १३ ॥

गो० टी०—प्रेक्षत इति । प्रेक्षतः प्रेक्षमाणमनादृत्य तान्यनीकानि वानरानीकानि । भागशः स्वस्वनियुक्तप्रदेशे लङ्कां लङ्काप्राकारम् । राघवप्रियकामार्थं रामप्रीतिसिद्ध्यर्थमित्यर्थः ॥ १३ ॥

रा० टी०— ते इति । सालभूधरयोधिनः ते वानराः लङ्कां तत्प्राकारमभ्यवर्तन्त ॥ १४ ॥

गो० टी०—त इति । त्यक्तजीविताः " आशंसायां भूतवच्च " इति क्तः ॥ १४ ॥

रा० टी०—ते इति । ते प्लवङ्गमाः प्राकाराग्राणि तोरणानि च ममन्थुः ॥ १५ ॥

गो० टी०—ते द्रुमैरिति । अरण्यानि उद्यानानि तोरणानि बहिर्द्वाराणि ममन्थुः बभञ्जुरित्यर्थः ॥ १५ ॥

१६-१७] ति० टी०—परिखानिति पुंस्त्वमार्षम्॥१६॥१७

रा० टी०—परिखा इति । पांसुप्रभृतिभिः परिखाः प्रसन्नसलिलाशयांश्च पूरयन्तः सहस्रं यूथानि येषां तत्प्रभृतयो यूथपाः लङ्कामारुरुहुः श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०—परिखा इति । स्पष्टः ॥ १६ ॥

गो० टी०—तत इति । कोटीशतयुताः कोटीशतयूथयुताः ॥ १७ ॥

१८ ] ति० टी०—काञ्चनानि तन्मयानि कैलासशिखराग्राणि तद्वदुच्चावचानि गोपुराणि ॥ १८ ॥

रा० टी०—काञ्चनानीति । कैलासशिखराग्राणि तद्वदुन्नतानि गोपुराणि प्रमथ्य तोरणानि प्रमर्दन्तो बभूवुरिति शेषः ॥ १८ ॥

गो० टी०—काञ्चनानीत्यादिश्लोकद्वयम् । काञ्चनानि काञ्चनकृतानि प्रमृद्नन्तः चूर्णयन्तः आप्लवन्तः प्लवन्तश्च गमनागमने कुर्वन्तः ॥ १८ ॥ १९ ॥

१९-२१ ] ति० टी०—आप्लवन्तः समन्तात्प्लवन्तः । प्लवन्तः प्राकाराभिमुखं प्लवन्तः ॥ १९ ॥ २१ ॥

रा० टी०—आप्लवन्त इति । महावारणसन्निभाः प्लवङ्गमाः आप्लवन्तः सर्वतः परिधावन्तः प्लवन्तः प्राकाराभिमुखं गच्छन्तश्च सन्तः लङ्कामभिधावन्ति ॥ १९ ॥

रा० टी०—जयतीति । उरुबलो रामप्रभृतिर्जयति इत्येवं घोषयन्तः प्लवङ्गमाः लङ्कायाः प्राकारमभ्यधावन्त । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०—जयतीति । स्पष्टः ॥ २० ॥

गो० टी०—इत्येवमिति । घोषयन्तः घुष्यन्तः । गर्जन्तः सिंहनादं कुर्वन्तः ॥ २१ ॥

२२ ] ति० टी०—प्राकारं निपीड्योपनिविष्टा इति सेनाप्रवेशार्थं बहिः प्राकारं भङ्क्त्वा स्थिताः । एतस्मिन्नन्तरे बहिः प्राकारं भङ्क्त्वा सेनाप्रवेशसमये । स्कन्धावारस्य सेनानिवेशस्य निवेशनं व्यूहभावेन स्थापनम् ॥ २२ ॥

रा० टी०—वीरेति । वीरबाहुप्रभृतयो हरियूथपाः प्राकारं निपीड्योपनिविष्टाः सन्तः स्कन्धावारस्य सैन्यसंनिवेशस्य निवेशनं व्यूहत्वेन स्थापनं चक्रुः । सार्धश्लोक एकान्वयी ॥२२॥

गो० टी०—वीरबाहुरित्यादि सार्धश्लोक एकान्वयः । एतस्मिन्नन्तरे प्रसिद्धाः वीरबाह्वादयः प्राकारं निपीड्योपनिविष्टाः सन्तः स्कन्धावारस्य शिबिरस्य निवेशनं निर्माणं चक्रुः । युद्धेन्तरान्तरा विश्रमार्थं वासस्थानं स्कन्धावारः यद्वा व्यूहीभावेन सेनास्थापनं स्कन्धावारः ॥ २२ ॥

१ तालशिलायुधा इति गो. पाठः । २ अरण्यानीति गो. पाठः । ३ परिखाः पूरयन्ति स्मेति गो. परिखा इति रा. पाठः । ४ सलिलयुता इति गो. पाठः । ५ वानरा इति गो. पाठः । ६ मृद्नन्त इति गो. पाठः । ७ शिखराभाणीति गो. पाठः । ८ अतीति गो पाठः । ९ वनगोचर इति गो. पाठः ।

पूर्वद्वारं तु कुमुदः कोटिभिर्दशभिर्वृतः । आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः ॥ २३ ॥
सहायार्थं तु तस्यैव निविष्टः प्रसभो हरिः । पनसश्च महाबाहुर्वानरैरभिसंवृतः ॥ २४ ॥
दक्षिणद्वारमासाद्य वीरः शतबलिः कपिः । आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः ॥ २५ ॥
सुषेणः पश्चिमद्वारं गत्वा तारापिता बली । आवृत्य बलवांस्तस्थौ कोटिकोटिभिरावृतः ॥ २६ ॥
उत्तरद्वारमागम्य रामः सौमित्रिणा सह । आवृत्य बलवांस्तस्थौ सुग्रीवश्च हरीश्वरः ॥ २७ ॥
गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः । वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ॥ २८ ॥
ऋक्षाणां भीमकोपानां धूम्रः शत्रुनिबर्हणः । वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ॥ २९ ॥
संनद्धस्तु महावीर्यो गदापाणिर्विभीषणः । वृतो यत्तैस्तु सचिवैस्तस्थौ यत्र महाबलः ॥ ३० ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः । समन्तात्परिधावन्तो ररक्षुर्हरिवाहिनीम् ॥ ३१ ॥
ततः कोपपरीतात्मा रावणो राक्षसेश्वरः । निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ॥ ३२ ॥
एतच्छ्रुत्वा तदा वाक्यं रावणस्य मुखेरितम् । सहसा भीमनिर्घोषमुद्घुष्टं रजनीचरैः ॥ ३३ ॥

---

२३ ] ति० टी०—तत्प्रकारः—पूर्वद्वारमित्यादि । पूर्वादिशब्दा ईशानाग्निनिर्ऋतिवायुदिक्पराः नीलादीनां साक्षात्पूर्वादिद्वारनिरोधकतायाः प्रागुक्तत्वात् एवं च तदुपोद्बलनार्थमेषां तत्तत्कोणे स्थितिः । पूर्वद्वारं पूर्वद्वारोपदेशमित्यर्थः ॥ २३ ॥

रा० टी०—तत्प्रकारमाह—पूर्वेत्यादिभिः । पूर्वद्वारमावृत्य कुमुदस्तस्थौ अत्र पूर्वादिशब्दाः अग्न्यादिकोणपराः पूर्वादिषु नीलादीनां स्थापनस्य प्रागुक्तत्वात् ॥ २३ ॥

गो० टी०—निवेशनप्रकारमेवाह—पूर्वद्वारमित्यादिना । कुमुदः पूर्वद्वारमावृत्य तस्थौ ईशानकोणे स्थित्वा पूर्वद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २३ ॥

२४–२६ ] ति० टी०—तस्यैवेशानदिग्वर्तिकुमुदस्यैव २४-२६

रा० टी०—सहायेति । तस्य कुमुदस्य सहायार्थं एव प्रसभो पनसश्च निविष्टः ॥ २४ ॥

गो० टी०—साहाय्यार्थन्त्विवति । स्पष्टः ॥ २४ ॥

रा० टी०—दक्षिणेति । दक्षिणद्वारमासाद्य शतबलिस्तस्थौ ॥ २५ ॥

गो० टी०—दक्षिणमिति । शतबलिः दक्षिणद्वारमावृत्य तस्थौ । आग्नेयकोणे स्थित्वा दक्षिणद्वारमाक्रम्य स्थितवान् इत्यर्थः ॥ २५ ॥

रा० टी०—सुषेण इति । पश्चिमद्वारं गत्वा तस्थौ ॥ २६ ॥

गो० टी०—सुषेण इति । सुषेणः पश्चिमद्वारं गतः आवृत्य तस्थौ नैर्ऋतकोणे स्थित्वा पश्चिमद्वारमाक्रम्य स्थितवानित्यर्थः ॥ २६ ॥

२७–२९ ] ति० टी०—सुग्रीवश्चेति । अयं च वायुकोणस्थ इति प्रागेवोक्तम् ॥ २७–२९ ॥

रा० टी०—उत्तरेति । उत्तरद्वारमागम्य रामस्तस्थौ ॥ २७ ॥

गो० टी०—उत्तरमिति । सुग्रीवश्चोत्तरं द्वारमावृत्य तस्थौ । पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् । अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः । इत्युक्तप्रकारेण वायव्यकोणे स्थितस्य सुग्रीवस्य उत्तरद्वारनिरोधकत्वाभिधानादेतदनुसारेण कुमुदादीनां तत्तत्कोणावस्थितत्वेन तत्तद्द्वारनिरोधकत्वमिति व्याख्यातम् ॥ २७ ॥

रा० टी०—गोलाङ्गूल इति । गोलाङ्गूलो गवाक्षः रामपार्श्वतस्तस्थौ ॥ २८ ॥

गो० टी०—गोलाङ्गूल इति । स्पष्टः ॥ २८ ॥

रा० टी०—ऋक्षाणामिति । ऋक्षाणां कोट्या वृतः धूम्रश्च रामस्य पार्श्वतस्तस्थौ ॥ २९ ॥

गो० टी०—ऋक्षाणामिति । स्पष्टः ॥ २९ ॥

३० ] ति० टी०—यत्र महाबलो रामस्तत्र तस्थावित्यन्वयः ॥ ३० ॥

रा० टी०—सन्नद्ध इति । यत्तैः सचिवैर्वृतो विभीषणः यत्र महाबलो रामस्तत्र तस्थौ ॥ ३० ॥

गो० टी०—सन्नद्ध इति । स्पष्टः ॥ ३० ॥

३१–३२ ] ति० टी०—गवाक्ष इति । अयं गवाक्षो रामपार्श्वस्थगवाक्षादन्यो ज्ञेयः ॥ ३१ ॥ ३२ ॥

रा० टी०—गज इति । गजप्रभृतयः समन्तात्परिधावन्तः सन्तः हरिवाहिनीं ररक्षुः ॥ ३१ ॥

गो० टी०—गजो गवाक्ष इति । रामपार्श्वस्थात् गवाक्षादन्यो ज्ञेयः ॥ ३१ ॥

रा० टी०—तत इति । ततः रामोद्योगदर्शनानन्तरं रावणः सर्वसैन्यानां निर्याणं निर्गमनमाज्ञापयत् ॥ ३२ ॥

गो० टी०—तत इति । ततः वानरसेनासन्निवेशाद्धेतोः । तदा तस्मिन् सन्निवेशकाले ॥ ३२ ॥

३३ ] ति० टी०—एतद्वाक्यं निर्याणाज्ञावाक्यम् । भीमनिर्घोषं यथा तथा रजनीचरैरुद्घुष्टमुद्घोषितमभूत् ॥ ३३ ॥

---

१ प्रथस इति गो. पाठः । २ बहुभिर्वृत इति गो. पाठः । ३ आगम्येति गो. पाठः । ४ गत इति गो. पाठः । ५ हरिरिति गो. पाठः । ६ षष्टिरिति गो. हरीति रा.पाठः । ७ आसाद्येति गो.पाठः । ८ वेगानामिति गो.पाठः । ९ तत्रेति गो.पाठः । १० तत इति गो. पाठः । ११ मुखोद्गतमिति गो.पाठः ।

ततः प्रबोधिता भेर्यश्चन्द्रपाण्डुरपुष्कराः । हेमकोणैरभिहता राक्षसानां समन्ततः ॥ ३४ ॥
विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः । राक्षसानां सुघोराणां मुखमारुतपूरिताः ॥ ३५ ॥
ते बभुः शुकनीलाङ्गाः सशङ्खा रजनीचराः । विद्युन्मण्डलसंनद्धाः सबलाका इवाम्बुदाः ॥ ३६ ॥
निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः । समये पूर्यमाणस्य वेगा इव महोदधेः ॥ ३७ ॥
ततो वानरसैन्येन मुक्तो नादः समन्ततः । मलयः पूरितो येन ससानुप्रस्थकंदरः ॥ ३८ ॥
शङ्खदुन्दुभिनिर्घोषः सिंहनादस्तरस्विनाम् । पृथिवीं चान्तरिक्षं च सागरं चाभ्यनादयत् ॥ ३९ ॥
गजानां बृंहितैः सार्धं हयानां हेषितैरपि । रथानां नेमिनिर्घोषै रक्षसां पदनिःस्वनैः ॥ ४० ॥
एतस्मिन्नन्तरे घोरः सङ्ग्रामः समपद्यत । रक्षसां वानराणां च यथा देवासुरे पुरा ॥ ४१ ॥
ते गदाभिः प्रदीप्ताभिः शक्तिशूलपरश्वधैः । निजघ्नुर्वानरान्सर्वान्कथयन्तः स्वविक्रमान् ॥ ४२ ॥

---

रा० टी०–एतदिति । रावणस्य मुखेरितम् एतद्वाक्यं श्रुत्वा रजनीचरैः भीमनिर्घोषं यथा भवति तथा उद्घुष्टम्॥३३॥

गो० टी०–एतदिति । भीमनिर्घोषं यथा भवति तथा उद्घुष्टम् । उच्चैः सिंहनादः कृत इत्यर्थः ॥ ३३ ॥

३४–३५] ति० टी०–चन्द्रवत्पाण्डुराणि पुष्कराणि मुखानि यासां ताः । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः । हेमकोणैरभिहताः स्वर्णमयवादनदण्डाभिहताः॥३४॥३५॥

रा० टी०–तत इति । चन्द्रवत् पाण्डुराणि पुष्कराणि मुखानि यासां ताः हेमकोणैः हेममयदण्डैः अभिहताः राक्षसैः प्रचोदिताः वादिताः भेर्यो विनेदुः राक्षसानां मुखमारुतपूरिताः शतसहस्रशः शङ्खाश्च विनेदुः 'पुष्करं करिहस्ताग्रे वाद्यभाण्डे मुखे जले' इत्यमरः । अर्धचतुष्टयमेकान्वयि ॥ ३४ ॥ ३५॥

गो० टी०–तत इति । प्रचोदिताः सेनाग्रे प्रेरिताः चन्द्रपाण्डुरपुष्कराः चन्द्रशुभ्रमुखाः संमार्जनसंस्कारविशेषेण तासां शुभ्रत्वम् पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जल इत्यमरः । कोणो वाद्यताडनदण्डः विनेदुरित्यनुकर्षः । अथवा प्रचोदिताः सस्वनुरित्यर्थः ॥ ३४ ॥ ३५ ॥

३६ ] ति० टी०–विद्युन्मण्डलसंनद्धत्वस्थाने राक्षसेषु भूषणभूषितत्वं ज्ञेयम् ॥ ३६ ॥

रा० टी०–ते इति । शुकवन्नीलान्यङ्गानि येषां ते सशङ्खा रजनीचराः विद्युन्मण्डलैः सन्नद्धाः सबलाका अम्बुदा इव बभुः विद्युन्मण्डलस्थानीयानि निशाचराणां भूषणानि बोध्यानि ॥ ३६ ॥

गो० टी०–त इति । शुभनीलाङ्गाः आभरणप्रभाभिः शोभमानानि नीलानि चाङ्गानि येषां ते अत एव विद्युन्मण्डलसन्नद्धा इति नाधिकोपमा । विद्युन्मण्डलसन्नद्धा इत्युपमानविशेषणेनोपमेयेषु राक्षसेषु सभूषणत्वं गम्यत इत्यप्याहुः ॥३६॥

३७ ] ति० टी०–सैन्याः । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः । समये प्रलयकाले । पूर्यमाणस्य । महामेघैरिति शेषः । वेगास्तरङ्गाः ॥ ३७ ॥

रा० टी०–निष्पतन्तीति । रावणचोदिताः सैन्याः सेनासमवेतराक्षसाः समये प्रलयकाले महोदधेः वेगा इव निष्पतन्ति 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः ॥ ३७ ॥

गो० टी०–निष्पतन्तीति । सैन्याः सेनायां समवेताः जनाः । सेनायां समवेता ये सैन्यास्ते सैनिकाश्च त इत्यमरः । समये प्रलये चन्द्रोदये वा वेगाः पूराः ॥ ३७ ॥

३८ ] ति० टी०–येनातिदूरवर्ती मलयोऽपि पूरितः स्यात्तादृशो नादो मुक्तः । सानुर्महाप्रस्थः प्रस्थः क्षुद्रः ॥ ३८ ॥

रा० टी०–तत इति । ससानुप्रस्थकन्दरः सानुप्रस्थाभ्यां बृहत्क्षुद्रश्रृङ्गाभ्यां कन्दरेण दर्या च सहितो मलयः येन पूरितः सनादः वानरसैन्येन मुक्तः ॥ ३८ ॥

गो० टी०–तत इति । मलयः त्रिकूटः । सः प्रसिद्धः । सानुप्रस्थकन्दरः अनुप्रस्थं प्रस्थे प्रस्थे स्थिताः याः कन्दरास्ताभिः सह वर्तत इति विग्रहः । यद्वा सानुः वप्रः प्रस्थः तटः कन्दरा गुहेत्यर्थः । सानुः महाप्रस्थः प्रस्थः क्षुद्रतटः कन्दरदरी तैः सह वर्तत इति ससानुप्रस्थकन्दर इत्यप्याहुः ॥ ३८ ॥

३९] ति० टी०–अभ्यनादयत्प्रतिध्वनियुक्तानकरोत्॥३९॥

४० ] ति० टी०–गजानां बृंहितैरित्यादीनामभ्यनादयन्नित्यनेनान्वयः ॥ ४० ॥

रा० टी०–शङ्खेति । गजबृंहितादिभिः सार्धं शङ्खदुन्दुभिनिर्घोषः तरस्विनां सिंहसदृशो नादश्च पृथिव्यादि अभ्यनादयत । श्लोकद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

गो० टी०–शङ्खदुदुन्भीत्यादिश्लोकद्वयम् शङ्खदुन्दुभिसंघुष्टः शङ्खदुन्दुभिसंघोषयुक्तः तरस्विनां बलवताम् सिंहनादः गजबृंहितादिभिः सह, पृथिव्यादिकं नादयन् अनादयत् ॥ ३९ ॥ ४० ॥

४१–४२ ] ति० टी०–देवासुरे तद्युद्धे ॥ ४१ ॥ ४२ ॥

रा० टी०–एतस्मिन्निति । देवासुरे देवासुरयुद्धे इव राक्षसानां वानराणां संग्रामः समपद्यत ॥ ४१ ॥

गो० टी०–एतस्मिन्निति । देवासुरे यथा देवासुरविरोधे

---

१ प्रचोदिता इति गो. रा. पाठः । २ कोणाहता भीमा इति गो. पाठः । ३ शुभेति गो. पाठः । ४ संघुष्ट इति गो. पाठः । ५ चैव नादयन्निति गो. पाठः । ६ घोषैश्चेति गो. पाठः । ७ वदनस्वन् इति गो. पाठः । ८ समवर्ततेति गो. पाठः । ९ घोरा इति गो. पाठः ।

तथा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः । निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिनः ॥ ४३ ॥
राजा जयति सुग्रीव इति शब्दो महानभूत् । राजञ्जयजयेत्युक्त्वा स्वस्वनामकथां ततः ॥ ४४ ॥
राक्षसास्त्वपरे भीमाः प्राकारस्था महीं गतान् । वानरान्भिन्दिपालैश्च शूलैश्चैव व्यदारयन् ॥ ४५ ॥
वानराश्चापि संक्रुद्धाः प्राकारस्थान्महीं गताः । राक्षसान्पातयामासुः खमाप्लुत्य स्वबाहुभिः ॥ ४६ ॥
स संप्रहारस्तुमुलो मांसशोणितकर्दमः । रक्षसां वानराणां च संबभूवाद्भुतोपमः ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ।

रक्षसां हरीणां च द्वन्द्वयुद्धेऽङ्गदेन्द्रजितोश्च महति सङ्ग्रामे प्रवृत्तेऽन्यत्र रामेण दुर्धर्षमित्रघ्नाग्निकेतुयज्ञकोपनानां नीलेन निकुम्भस्य च शिरांसि छिन्नानि तथा सुषेणेन हतो विद्युन्माली च गतासुर्भूमौ निपपातेत्यादि ।

युध्यतां तु ततस्तेषां वानराणां महात्मनाम् । रक्षसां संबभूवाथ बलरोषः सुदारुणः ॥ १ ॥

देवानामसुराणामित्यर्थः । यद्वा षष्ठीबहुवचनस्य "सुपां सुलुक्०" इत्यादिना शेआदेशः ॥ ४१ ॥

रा० टी०—ते इति । स्वविक्रमान् कथयन्तो राक्षसाः गदादिभिर्निजघ्नुः ॥ ४२ ॥

गो० टी०—त इति । स्पष्टः ॥ ४२ ॥

४३ ] ति० टी०—वृक्षा मृदूनां युद्धसाधनानि । पर्वताग्रादीनि क्रूरक्रूरतराणामिति विवेकः ॥ ४३ ॥

रा० टी०—तथेति । महाकायाः वानराः वृक्षादिभिः रक्षांसि तथैव निजघ्नुः ॥ ४३ ॥

गो० टी०—राजेत्यर्धम् । स्पष्टम् ॥ ४३ ॥

४४ ] ति० टी०—राजन्रावण, जयजयेति रक्षसामुक्तिः । स्वस्वनामरूपां कथां शब्दं चोक्त्वा वानरान्व्यदारयन्निति संबन्धः ॥ ४४ ॥

रा० टी०—राजेति । राजा सुग्रीवो जयतीति महान् शब्दोऽभूत् वानरसेनायामिति शेषः । अर्धं पृथक् ॥ ४४ ॥

गो० टी०—राजन्नित्यादिसार्धश्लोकः । स्वस्वनामकथां तत इति । नामकथां चोक्त्वा ततो निजघ्नुरित्युत्तरत्रान्वयः । नामकथानाम् अन्ततः अन्ते इति वा योजना । वेगिताः सञ्जातवेगाः । वेपिता इति पाठे कोपेन कम्पमाना इत्यर्थः ॥ ४४ ॥

४५–४७ ] ति० टी०—अत्र 'राक्षसास्त्वपरे' इत्यर्धं प्रक्षिप्तमिति कतकः एतद्युद्धोत्तरं प्रत्यवहारः सेनाया इति भारताल्लभ्यते—

ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया ॥
ततो निविशमानांस्तान्सैनिकान्रावणानुगाः ।
अभिजग्मुर्गणा एके पिशाचक्षुद्ररक्षसाम् ॥
ततोऽभिपततां तेषां मदृश्यानां दुरात्मनाम् ।
अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ॥'
॥ ४५–४७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विचत्वारिंशः सर्गः ॥४२॥

रा० टी०—राजन्निति । प्राकारस्थाः अपरे राक्षसाः राजन् हे रावण ! त्वं जय जयेति स्वस्वनामकथां चोक्त्वा महीगतान् वानरान् भिन्दिपालादिभिर्व्यदारयन् । सार्धश्लोक एकान्वयी ॥ ४५ ॥

गो० टी०—राक्षसा इति । भिन्दिपालैः गदाभेदैः ॥४५॥

रा० टी०—वानरा इति । महीं गताः वानरा अपि खमाप्लुत्य बाहुभिः राक्षसान् पातयामासुः ॥ ४६ ॥

गो० टी०—वानरा इति । समाप्लुत्य प्राकाराग्रपर्यन्तमुत्पत्य । प्लवनं प्लुतगतिं गच्छन्तीति प्लवङ्गमाः । असंज्ञायामपि खशार्षः । अनेन प्लुतगतिमत्त्वमुक्तम् । अतो न वानरशब्देन पुनरुक्तिः ॥ ४६ ॥

रा० टी०—मांसशोणितान्येव कर्दमाः यस्मिन् सः रक्षसां वानराणां च संप्रहारः अद्भुतोपमः संबभूव ॥ ४७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

गो० टी०—स इति । संप्रहारः युद्धम् । तुमुलः परस्परसंकुलः । मांसशोणितान्येव कर्दमो यस्मिन् स मांसशोणितकर्दमः । अद्भुतोपमः दुर्लभोपम इति यावत् ॥ ४७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

१ ] ति० टी०—बलरोषः परस्परबलदर्शनजो रोषः । एतावद्दिनयुद्धेऽपि बहव एव तिष्ठन्तीत्येवं रोष इति भावः ॥१॥

१ पर्वताग्रैश्च वृक्षैश्च इति पाठव्यत्यासः गो. पाठः । २ वेगिता इति गो. पाठः । ३ महीगतानिति गो. पाठः । ४ भिन्दिपालैश्च खड्गैश्चेति गो. पाठः । ५ महीगता इति गो. पाठः । ६ समिति गो. पाठः । ७ प्लवङ्गमा इति गो. पाठः । ८ कोप इति गो. पाठः ।

ते हयैः काञ्चनापीडैर्गजैश्चाग्निशिखोपमैः । रथैश्चादित्यसंकाशैः कवचैश्च मनोरमैः ॥ २ ॥
निर्ययू राक्षसा वीरा नादयन्तो दिशो दश । राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ३ ॥
वानराणामपि चमूर्बृहती जयमिच्छताम् । अभ्यधावत तां सेनां रक्षसां घोरकर्मणाम् ॥ ४ ॥
एतस्मिन्नन्तरे तेषामन्योन्यमभिधावताम् । रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ॥ ५ ॥
अङ्गदेनेन्द्रजित्सार्धं वालिपुत्रेण राक्षसः । अयुध्यत महातेजास्त्र्यम्बकेण यथान्धकः ॥ ६ ॥
प्रजङ्घेन च संपातिर्नित्यं दुर्धर्षणो रणे । जम्बुमालिनमारब्धो हनूमानपि वानरः ॥ ७ ॥
संगतस्तु महाक्रोधो राक्षसो रावणानुजः । समरे तीक्ष्णवेगेन शत्रुघ्नेन विभीषणः ॥ ८ ॥
तपनेन गजः सार्धं राक्षसेन महाबलः । निकुम्भेन महातेजा नीलोऽपि समयुध्यत ॥ ९ ॥
वानरेन्द्रस्तु सुग्रीवः प्रघसेन सुसंगतः । संगतः समरे श्रीमान्विरूपाक्षेण लक्ष्मणः ॥ १० ॥
अग्निकेतुः सुदुर्धर्षो रश्मिकेतुश्च राक्षसः । मित्रघ्नो यज्ञकोपश्च रामेण सह संगताः ॥ ११ ॥
वज्रमुष्टिश्च मैन्देन द्विविदेनाशनिप्रभः । राक्षसाभ्यां सुघोराभ्यां कपिमुख्यौ समागतौ ॥ १२ ॥
वीरः प्रतपनो घोरो राक्षसो रणदुर्धरः । समरे तीक्ष्णवेगेन नलेन समयुध्यत ॥ १३ ॥
धर्मस्य पुत्रो बलवान्सुषेण इति विश्रुतः । स विद्युन्मालिना सार्धमयुध्यत महाकपिः ॥ १४ ॥
वानराश्चापरे घोरा राक्षसैरपरैः सह । द्वन्द्वं समीयुः सहसा युद्ध्वा च बहुभिः सह ॥ १५ ॥
तत्रासीत्सुमहद्युद्धं तुमुलं रोमहर्षणम् । रक्षसां वानराणां च वीराणां जयमिच्छताम् ॥ १६ ॥

---

रा० टी०–युद्धवृत्तान्तमेवाह–युध्यतामित्यादिभिः । वानराणां युध्यतां सतां रक्षसां सुदारुणः बलरोषः वानरसेनाकोपो बभूव ॥ १ ॥

अथ द्वन्द्वयुद्धं वर्णयति त्रिचत्वारिंशे–युद्ध्यतां त्वित्यादि । वानराणां युद्ध्यतां वानरेषु युध्यमानेषु । बलकोपः सेनायाः कोपः । बलेत्यविभक्तिकनिर्देशः ॥ १ ॥

२ ] ति० टी०–काञ्चनापीडैः काञ्चनभूषणवद्भिः अग्निशिखोपमैस्तद्वद्दुर्धर्षैः ॥ २ ॥

३–४ ] ति० टी०–निर्ययुरिति । अनेन वाल्मीकिनापि प्रत्यवहारो ध्वनितः ॥ ३ ॥ ४ ॥

रा० टी०–ते इति । काञ्चनापीडैः स्वर्णभूषणवद्भिर्हयैर्गजादिभिश्चोपलक्षिताः राक्षसाः बहुराक्षसविशिष्टाः राक्षसाः निर्ययुः । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

रा० टी०–वानराणामिति । वानराणामपि बृहती चमूः जयमिच्छतां रक्षसां सेनामभ्यधावत ॥ ४ ॥

गो० टी०–ते हयैरित्यादिश्लोकद्वयमेकान्वयम् । काञ्चनापीडैः स्वर्णमयशेखरैः । हयैरित्याद्युपलक्षणे तृतीया । राक्षसव्याघ्राः राक्षसश्रेष्ठाः राक्षसश्रेष्ठत्वेपि जात्यन्तरत्वं संभवतीति राक्षसा इत्युक्तम् ॥ २–६ ॥

५ ] ति० टी०–अन्योन्यमभिधावताम् । द्वन्द्वयुद्धार्थमिति भावः ॥ ५ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे समये द्वन्द्वयुद्धमवर्तत ॥ ५ ॥

६ ] ति० टी०–तान्येव द्वन्द्वयुद्धान्याह–अङ्गदेनेति॥६॥

रा० टी०–तत्प्रकारमाह–अङ्गदेनेत्यादिभिः । त्र्यम्बकेन शिवेन अन्धक इव अङ्गदेनेन्द्रजिदयुध्यत प्रजङ्घेन तदभिधरक्षसा सम्पातिरयुध्यत हनूमांस्तु जम्बुमालिनं योद्धुमिति शेषः आरब्धः श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

७ ] ति० टी०–प्रजङ्घेन तदाख्यरक्षसा । 'संपातिस्तु त्रिभिर्बाणैः प्रजङ्घेन समाहतः' इति लिङ्गात् । दुर्धर्षणो दुःसहः आरब्धो युद्धमारब्धवान् ॥ ७ ॥

गो० टी०–प्रजङ्घेनेति । दुर्मर्षणः दुःसहः । प्रजङ्घो राक्षसः संपातिः विभीषणसचिवः आरब्धः हन्तुमिति शेषः ॥७-१०॥

८–११ ] ति० टी०–शत्रुघ्नेन तदाख्यरक्षसा । 'मित्रघ्नेन' इति क्वचित्पाठः ॥ ८ ॥ ११ ॥

रा० टी०–संगत इति । शत्रुघ्नेन तदभिधराक्षसेन विभीषणः संगतः अयुध्यत इत्यर्थः ॥ ८ ॥

रा० टी०–तपनेनेति । तपनेन राक्षसेन गजः निकुम्भेन नीलश्च समयुध्यत ॥ ९ ॥

रा० टी०–वानरेन्द्र इति । सुग्रीवः प्रघसेन सङ्गतः लक्ष्मणस्तु विरूपाक्षेण सङ्गतः ॥ १० ॥

रा० टी०–अग्नीति । अग्निकेतुप्रभृतयः रामेण सह सङ्गताः ॥ ११ ॥

गो०टी०–अग्निकेतुरिति। सुप्तघ्नयज्ञकोपौ चेति वा पाठः११

१२–१६ ] ति० टी०–राक्षसाभ्यां वज्रमुष्ट्यशनिप्रभाभ्याम् ॥ १२ ॥ १६ ॥

---

१ राक्षसव्याघ्रा इति गो. पाठः । २ कामरूपिणामिति गो. पाठः । ३ अन्तक इति गो. पाठः । ४ दुर्मर्षण इति गो. पाठः । ५ मित्रघ्नेनेति गो. पाठः । ६ समागत इति गो. पाठः । ७ सुप्तघ्न इति गो. पाठः । ८ भीमा इति गो. पाठः । ९ बहुधेति गो. पाठः ।

हरिराक्षसदेहेभ्यः प्रसृताः केशशाद्वलाः । शरीरसंघाटवहाः प्रसुस्रुः शोणितापगाः ॥ १७ ॥
आजघानेन्द्रजित्क्रुद्धो वज्रेणेव शतक्रतुः । अङ्गदं गदया वीरं शत्रुसैन्यविदारणम् ॥ १८ ॥
तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिम् । जघान गदया श्रीमानङ्गदो वेगवान्हरिः ॥ १९ ॥
संपातिस्तु प्रजङ्घेन त्रिभिर्बाणैः समाहतः । निजघानाश्वकर्णेन प्रजङ्घं रणमूर्धनि ॥ २० ॥
जम्बुमाली रथस्थस्तु रथशक्त्या महाबलः । बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ २१ ॥
तस्य तं रथमास्थाय हनूमान्मारुतात्मजः । प्रममाथ तलेनाशु सह तेनैव रक्षसा ॥ २२ ॥
नदन्प्रतपनो घोरो नलं सोऽभ्यनुधावत । नलः प्रतपनस्याशु पातयामास चक्षुषी ॥ २३ ॥
भिन्नगात्रः शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा । ग्रसन्तमिव सैन्यानि प्रघसं वानराधिपः ॥ २४ ॥

---

रा० टी०–वज्रेति । मैन्देन द्विविदेन राक्षसाभ्यां वज्रमुष्टिः अशनिप्रभश्च कपिमुख्यौ समागतौ ॥ १२ ॥

गो० टी०–वज्रमुष्टिरिति । राक्षसाभ्यां वज्रमुष्ट्यशनिप्रभाभ्याम् कपिमुख्यौ मैन्दद्विविदौ । अनेन परस्परसंगतिरुक्ता ॥ १२ ॥

रा० टी०–वीर इति । प्रतपनो राक्षसः नलेन समयुध्यत ॥ १३ ॥

रा० टी०–धर्मस्येति । सुषेणः विद्युन्मालिना सार्धमयुध्यत ॥ १४ ॥

गो० टी०–वीर इति । रणदुर्धरः रणे दुर्निग्रहः १३–१४

रा० टी०–वानरा इति । अपरेऽपि वानराः बहुभिरपरैः सह युध्वा द्वन्द्वं युद्धं समीयुः ॥ १५ ॥

गो० टी०–वानरा इति । द्वन्द्वं द्वन्द्वत्वम् । बहुधा युद्धाय शस्त्रास्त्रबाहुचरणप्रभृतिभिर्युद्धाय । बहुभिरिति राक्षसविशेषणाद्वानराश्चेत्यत्रापि बहव इति विशेषणं विज्ञेयम् ॥१५॥

रा० टी०–तत्रेति । तत्र तस्मिन्समये सुमहद्युद्धमासीत्१६

गो० टी०–तत्रेति । तुमुलं व्याकुलम् ॥ १६ ॥

१७] ति० टी०–केशैः शाद्वलवत्यः केशशाद्वलाः शरीराण्येव संघाटाः काष्ठसंचयास्तद्वहाः प्रसुस्रुः प्रसुस्रुवुरित्यर्थः ॥ १७ ॥

रा० टी०–हरीति । हरिराक्षसदेहेभ्यः प्रसृताः निर्गताः केशा एव शाद्वलाः शैवाला यासु ताः शरीराण्येव संघाटाः काष्ठनिचयाःतान् वहन्ति ताः शोणितापगाः रुधिरनद्यः प्रसुस्रुः प्रसुस्रुवुः ॥ १७ ॥

गो० टी०–हरीति । केशशाद्वलाः केशैः शाद्वलवत्यः । संघाटः काष्ठसंचयः ॥ १७ ॥

१८ ] ति० टी०–अनुक्रान्तानां क्रमेण युद्धकथनम्—आजघानेति । शत्रुसैन्यविदारणमित्यङ्गदविशेषणम् ॥१८॥

रा० टी०–आजघानेति । वज्रेण शतक्रतुरिवेन्द्रजित् गदया शत्रुसैन्यविदारणमङ्गदमाजघान ॥ १८ ॥

गो० टी०–आजघानेति । आजघान ताडयामास१८–२०

१९ ] ति० टी०–तस्येन्द्रजितः । तस्य रथं तस्यैव गदया स्वापहृतया जघान ॥ १९ ॥

रा० टी०–तस्येति । तस्येन्द्रजितः साश्वं ससारथिं काञ्चनचित्राङ्गं रथमङ्गदो जघान ॥ १९ ॥

२० ] ति० टी०–अश्वकर्णो वृक्षविशेषः तेन प्रजङ्घमाजघान । संपातिरित्यनुकर्षः ॥ २० ॥

रा० टी०–संपातिरिति । त्रिभिर्बाणैः प्रजङ्घेन समाहतः संपातिः अश्वकर्णेन तरुविशेषेण प्रजङ्घं निजघान ॥ २० ॥

२१ ] ति० टी०–रथस्था शक्ती रथशक्तिः ॥ २१ ॥

रा० टी०–जम्बुमालीति । जम्बुमाली तु रथस्थया शक्त्या स्तनान्तरे हनुमन्तं बिभेद ॥ २१ ॥

२२–२३ ] ति० टी०–तेन रक्षसा सह तस्य रथं प्रममाथ तेन जम्बुमाली मृत इति गम्यते ॥ २२ ॥ २३ ॥

रा० टी०–तस्येति । हनुमान् तस्य जम्बुमालिनः रथमास्थाय तेन रक्षसा जम्बुमालिना सह तं रथं तलेनैव प्रममाथ दध्वंसे ॥ २२ ॥

गो० टी०–जम्बुमालीति । रथशक्त्या रथ एव सदा वर्तमानया शक्त्या ॥ २१ ॥

गो० टी०–तस्येति । आस्थाय आरुह्य ॥ २२ ॥

रा० टी०–नदन्निति । नदन् प्रतपनः नलमभ्यनुधावत अभ्यन्वधावत क्षिप्रहस्तेन रक्षसा शरैर्भिन्नगात्रः स नलः प्रतपनस्य चक्षुषी पातयामास निःसार्य चिक्षेप सार्धश्लोक एकान्वयी॥२३॥

गो० टी०–नदन्नित्यर्धमेकं वाक्यम् ॥ २३ ॥

गो० टी०–नल इति । रक्षसा प्रतपनेन । भिन्नगात्र इत्यस्य पूर्वेणान्वयः ॥ २४ ॥

२४ ] ति० टी०–तीक्ष्णैः शरैर्भिन्नगात्रो नलः प्रतपनस्य चक्षुषी पातयामास । नखैराकृष्येति शेषः । ग्रसन्तमित्यादिना प्रघससुग्रीवयोः ॥ २४ ॥

रा० टी०–ग्रसन्तमिति । वानराधिपः सुग्रीवः सैन्यानि ग्रसन्तमिव प्रघसं सप्तपर्णेन तरुविशेषेण निजघान ॥ २४ ॥

गो० टी०–ग्रसन्तमिति । सप्तपर्णेन सप्तपर्णवृक्षेण॥२५॥

---

१ प्रसृता इति गो. पाठः । २ समरे इति गो: पाठः । ३ प्रीति गो. पाठः ।

सुग्रीवः सप्तपर्णेन निजघान जवेन च । प्रपीड्य शरवर्षेण राक्षसं भीमदर्शनम् ॥ २५ ॥
निजघान विरूपाक्षं शरेणैकेन लक्ष्मणः । अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ॥
मित्रघ्नो यज्ञकोपश्च रामममादीपयच्छरैः ॥ २६ ॥
तेषां चतुर्णां रामस्तु शिरांसि समरे शरैः । क्रुद्धश्चतुर्भिश्चिच्छेद घोरैरग्निशिखोपमैः ॥ २७ ॥
वज्रमुष्टिस्तु मैन्देन मुष्टिना निहतो रणे । पपात सरथः साश्वः सुराट्ट इव भूतले ॥ २८ ॥
निकुम्भस्तु रणे नीलं नीलाञ्जनचयप्रभम् । निर्बिभेद शरैस्तीक्ष्णैः करैर्मेघमिवांशुमान् ॥ २९ ॥
पुनः शरशतेनाथ क्षिप्रहस्तो निशाचरः । बिभेद समरे नीलं निकुम्भः प्रजहास च ॥ ३० ॥
तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे । शिरश्चिच्छेद समरे निकुम्भस्य च सारथेः ॥ ३१ ॥
वज्राशनिसमस्पर्शो द्विविदश्च सममभम् । जघान गिरिशृङ्गेण मिषतां सर्वरक्षसाम् ॥ ३२ ॥
द्विविदं वानरेन्द्रं तं द्रुमयोधिनमाहवे । शरैरशनिसंकाशैः स विव्याधाशनिप्रभः ॥ ३३ ॥
स शरैरभिविद्धाङ्गो द्विविदः क्रोधमूर्च्छितः । सालेन सरथं साश्वं निजघानाशनिप्रभम् ॥ ३४ ॥
विद्युन्माली रथस्थस्तु शरैः काञ्चनभूषणैः । सुषेणं ताडयामास ननाद च मुहुर्मुहुः ॥ ३५ ॥
तं रथस्थमथो दृष्ट्वा सुषेणो वानरोत्तमः । गिरिशृङ्गेण महता रथमाशु न्यपातयत् ॥ ३६ ॥
लाघवेन तु संयुक्तो विद्युन्माली निशाचरः । अपक्रम्य रथात्तूर्णं गदापाणिः क्षितौ स्थितः ॥ ३७ ॥
ततः क्रोधसमाविष्टः सुषेणो हरिपुंगवः । शिलां सुमहतीं गृह्य निशाचरमभिद्रवत् ॥ ३८ ॥
तमापतन्तं गदया विद्युन्माली निशाचरः । वक्षस्यभिजघानाशु सुषेणं हरिपुङ्गवम् ॥ ३९ ॥

२५-२६ ] ति० टी०—सप्तपर्णो वृक्षविशेषः ॥२५॥२६॥

रा० टी०—प्रपीड्येति । लक्ष्मणः विरूपाक्षं राक्षसं शरवर्षेण प्रपीड्य एकेन शरेण निजघान ॥ २५ ॥

रा० टी०—अग्नीति । अग्निकेतुप्रभृतयः चत्वारः शरैः रामं निर्बिभिदुः भेदनानुकूलव्यापारं चक्रुः ॥ २६ ॥

गो० टी०—अग्निकेतुरिति । स्पष्टः ॥ २६ ॥

२७ ] ति० टी०—चतुर्भिश्चिच्छेद । नाधिकैरित्यर्थः॥२७॥

रा० टी०—तेषामिति। रामस्तु चतुर्णां शिरांसि चतुर्भिः शरैश्चिच्छेद ॥ २७ ॥

गो०टी०—तेषामिति। अग्निशिखोपमैः अग्निज्वालोपमैः२७

२८-३० ] ति० टी०—अट्टः क्षौममिति कतकः । विमानमित्यन्ये ॥ २८ ॥ ३० ॥

रा० टी०—वज्रेति । मैन्देन मुष्टिना निहतो वज्रमुष्टिः सुराट्टो देवविमानमिव भूतले पपात ॥ २८ ॥

गो० टी०—वज्रमुष्टिरिति । पुराट्टः पुरवलभिः ॥ २८ ॥

रा० टी०—निकुम्भ इति । निकुम्भस्तु नीलाञ्जनचयप्रभं नीलम् अंशुमान् सूर्यः करैर्मेघमिव शरैर्निर्बिभेद ॥ २९ ॥

गो० टी०—निकुम्भ इति । स्पष्टः ॥ २९ ॥

रा० टी०—पुनरिति । क्षिप्रहस्तो निकुम्भः शरशतेन पुनर्बिभेद प्रजहास च ॥ ३० ॥

गो० टी०—पुनरिति । क्षिप्रहस्तः क्षिप्रकारिहस्तः । निकुम्भः प्रजहास चेति पाठः सम्यक् ॥ ३० ॥

३१ ] ति० टी०—रथस्य चक्रं रथचक्रम् । निकुम्भस्य च निकुम्भस्य तत्सारथेश्च शिरश्चिच्छेद ॥ ३१ ॥

रा० टी०—तस्येति । नीलस्तु तस्य निकुम्भस्य रथचक्रेणैव निकुम्भस्य सारथेश्च शिरः विष्णुरिव चिच्छेद ॥ ३१ ॥

गो० टी०—तस्यैवेति । शिरश्चिच्छेद सारथेरित्यनन्तरं वज्राशनिसमस्पर्श इति श्लोकः । ततो द्विविदं वानरेन्द्रं त्विति श्लोकः ॥ ३१-३३ ॥

३२-३६ ] ति० टी०—वज्राशनिसमस्पर्शः तथा क्रूरमुष्टिप्रहार इत्यर्थः ॥ ३२ ॥ ३६ ॥

रा० टी०—वज्रेति । वज्राशनिना तुल्यवज्रेण समः स्पर्शो यस्य स द्विविदः गिरिशृंगेण अशनिप्रभं जघान ॥ ३२ ॥

रा० टी०—द्विविदमिति । अशनिप्रभः शरैर्वानरेन्द्रं द्विविदं विव्याध जघान ॥ ३३ ॥

रा० टी०—स इति । शरैरभिविद्धाङ्गो द्विविदः शालेन तरुविशेषेण अशनिप्रभं निजघान ॥ ३४ ॥

गो० टी०—स इति । स्पष्टः ॥ ३४ ॥

रा० टी०—विद्युन्मालीति । रथस्थो विद्युन्माली शरैः सुषेणं ताडयामास ननाद च ॥ ३५ ॥

गो० टी०—विद्युदिति । स्पष्टः ॥ ३५ ॥

रा० टी०—तमिति । सुषेणस्तु रथस्थं तं विद्युन्मालिनं दृष्ट्वा महता गिरिशृङ्गेण रथं न्यपातयत् ॥ ३६ ॥

गो० टी०—तमिति । स्पष्टः ॥ ३६ ॥

३७-३९ ] ति० टी०—अपक्रम्यावरुह्य ॥ ३७ ॥ ३९ ॥

१ निर्बिभेद जघान चेति गो.पाठः । २ एतदादिः श्लोको गो. नास्ति । ३ सुराट्ट इति गो.पाठः । ४ रामं निर्बिभिदुरिति गो. रा. पाठः । ५ निशितैरिति गो.पाठः । ६ पुराट्ट इति गो.पाठः । ७ ऽप्यशनिप्रभमिति गो. चाशनिप्रभामिति रा.पाठः। ८ तु नगेति गो.पाठः । ९ सत्तममिति गो.पाठः ।

गदाप्रहारं तं घोरमचिन्त्य प्लवगोत्तमः । तां तूष्णीं पातयामास तस्योरसि महामृधे ॥ ४० ॥
शिलाप्रहाराभिहतो विद्युन्माली निशाचरः । निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह ॥ ४१ ॥
एवं तैर्वानरैः शूरैः शूरास्ते रजनीचराः । द्वन्द्वे विमथितास्तत्र दैत्या इव दिवौकसैः ॥ ४२ ॥
भल्लैश्चान्यैर्गदाभिश्च शक्तितोमरसायकैः । अपविद्धैश्चापि रथैस्तथा साङ्ग्रामिकैर्हयैः ॥ ४३ ॥
निहतैः कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः । चक्राक्षयुगदण्डैश्च भग्नैर्धरणिसंश्रितैः ॥ ४४ ॥
बभूवायोधनं घोरं गोमायुगणसेवितम् । कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् ॥
विमर्दे तुमुले तस्मिन्देवासुररणोपमे ॥ ४५ ॥
निहन्यमाना हरिपुंगवैस्तदा निशाचराः शोणितगन्धमूर्च्छिताः ।
पुनः सुयुद्धं तरसा समाश्रिता दिवाकरस्यास्तमयाभिकाङ्क्षिणः ॥ ४६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

रा० टी०—लाघवेनेति । लाघवेन संयुक्तो विद्युन्माली रथादपक्रम्य क्षितौ स्थितो बभूवेति शेषः ॥ ३७ ॥

गो० टी०—लाघवेनेति । अपक्रम्य अवप्लुत्य ॥ ३७ ॥

रा० टी०—तत इति । सुषेणः महतीं शिलां गृह्य गृहीत्वा निशाचरमभिद्रवत् अभ्यद्रवत् ॥ ३८ ॥

गो० टी०—तत इति । अभिद्रवत् अभ्यद्रवत् ॥ ३८ ॥

रा० टी०—तमिति । विद्युन्माली आपतन्तं सुषेणं गदया वक्षस्यभिजघान ॥ ३९ ॥

गो० टी०—तमिति । स्पष्टः ॥ ३९ ॥

४०–४१ ] ति० टी०—अचिन्त्याचिन्तयित्वा तां पूर्वगृहीतां शिलाम् ॥ ४० ॥ ४१ ॥

रा० टी०—गदेति । प्लवगोत्तमः गदाप्रहारमचिन्त्य अचिन्तयित्वा तस्योरसि तां सुमहतीं शिलां पातयामास ॥ ४० ॥

गो० टी०—गदाप्रहारमिति । अचिन्त्य अचिन्तयित्वा ॥ ४० ॥

रा० टी०—शिलेति । शिलाप्रहाराभिहतः अत एव निष्पिष्टहृदयः अत एव गतासुः विद्युन्माली भूमौ निपपात॥४१॥

गो० टी०—शिलेति । स्पष्टः ॥ ४१ ॥

४२–४५ ] ति० टी०—दिवौकसैर्देवैः । आर्षः प्रयोगः ॥ ४२ ॥ ४५ ॥

रा० टी०—एवमिति । दिवौकसैर्देवैर्दैत्या इव वानरैः रजनीचराः विमथिताः हिंसिताः अभवन्निति शेषः ॥ ४२ ॥

गो० टी०—एवमिति । दिवौकसैरित्यकारान्तत्वमार्षम् ४२

रा० टी०—भल्लैरिति । अन्यैर्विलक्षणैर्भल्लादिभिः अपविद्धैर्विध्वस्तैः रथैश्च निहतैः सांग्रामिकैर्हयैः कुञ्जरैश्च वानरराक्षसैश्च भग्नैः अत एव धरणिसंश्रितैर्भूमौ पतितैः चक्रादिभिश्चोपलक्षितम् अत एव घोरं भयंकरमायोधनं संग्रामभूमिः गोमायुगणैः शृगालैः सेवितं बभूव। सार्धश्लोकद्वयमेकान्वयि ४३-४५

गो० टी०—भग्नैरित्यादिसार्धश्लोकद्वयमेकान्वयम् । अपविद्धैरिति रथविशेषणम् भिन्नैरिति हयविशेषणम् । सांग्रामिकैः संग्रामे साधुभिः । अक्षं चक्ररन्ध्रम् । युगदण्डः अश्वबन्धनदण्डः ॥ ४३ ॥ ४४ ॥

रा० टी०—कबन्धानीति । देवासुररणोपमे तस्मिन् विमर्दे संग्रामे कबन्धानि दिक्षु समुत्पेतुः ॥ ४६ ॥

गो० टी०—कबन्धानीति । कबन्धानि शिरोहीनशरीराणि । विमर्दे युद्धे ॥ ४५ ॥

४६ ] ति० टी०—अस्तमयाभिकाङ्क्षिणः रात्रौ रक्षसां बलाधिक्यात् ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीय रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

रा० टी०—निहन्यमाना इति । हरिपुङ्गवैर्निहन्यमानाः अत एव शोणितगन्धमूर्च्छिताः निशाचराः दिवाकरस्यास्तमभिकाङ्क्षिणः सन्तः युद्धं पुनः समाश्रिता बभूवुरिति शेषः तेषाम् अस्ताकाङ्क्षित्वं तु स्वबलवृद्धये निशितबुद्धिस्तु सर्वत्र प्रसिद्धेति बोध्यम् ॥ ४७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

गो० टी०—विदार्यमाणा इति । दिवाकरस्येति । रात्रौ राक्षसानां बलाधिक्यादिति भावः ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

१ पट्टिशैरिति गो. पाठः । २ च भिन्नैश्च रथैरिति गो. पाठः । ३ संकुलमिति गो. पाठः । ४ विदार्येति गो. पाठः । ५ त्वरमाणा इति गो. पाठः । ६ आश्रिता इति गो. पाठः । ७ अकेति रा. पाठः ।

## चतुश्चत्वारिंशः सर्गः ।

वानराणां राक्षसानां च रात्रियुद्धे निशायां रात्रिंचराणां बलाधिक्याद्योद्धुमुत्सुकैरपि यातुधानैः कपयोऽप्यभीतास्तुमुलं युयुधिरे-ऽथापि रावणिमङ्गदेन जितं पश्यन्तोऽत्यर्थं जहृषुश्च राघवावपि शरधाराभिरपरिमेयामित्रानपलाययतां सतुरन्ते अन्तर्हितेन्द्रजित्प्रयुक्त-नागमयशरपाशैर्बद्धौ तौ ।

युध्यतामेव तेषां तु तदा वानररक्षसाम् । रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १ ॥
अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम् । संप्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ॥ २ ॥
राक्षसोऽसीति हरयो वानरोऽसीति राक्षसाः । अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥ ३ ॥
हत दारय चैहीति कथं विद्रवसीति च । एवं सुतुमुलः शब्दस्तस्मिन्सैन्ये[3] तु शुश्रुवे ॥ ४ ॥
कालाः काञ्चनसंनाहास्तस्मिंस्तमसि राक्षसाः । सं[4]प्रदृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ५ ॥
तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्च्छिताः । परिपेतुर्महावेगा भक्षयन्तः प्लवंगमान् ॥ ६ ॥
ते हयान्काञ्चनापीडान्ध्वजांश्चाशीविषोपमान् । आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन् ॥ ७ ॥
वानरा बलिनो युद्धेऽक्षोभयन्राक्षसीं चमूम् । कुञ्जरान्कुञ्जरारोहान्पताकाध्वजिनो रथान् ॥ ८ ॥
चकर्षुश्च ददंशुश्च दशनैः क्रोधमूर्च्छिताः । लक्ष्मणश्चापि रामश्च शरैराशीविषोपमैः ॥ ९ ॥

---

१ ] ति० टी०—युध्यतामिति ॥ १ ॥

रा० टी०—रात्रियुद्धवर्णनमुपक्रमते—**युध्यतामिति** । वानररक्षसां युध्यतां सतां रविरस्तं गतः अत एव प्राणहारिणी निशाचरातिरिक्तानां भयावहेत्यर्थः रात्रिः प्रवृत्ता ॥१॥

गो० टी०—अथ रात्रियुद्धप्रवृत्तिश्चतुश्चत्वारिंशे—**युध्यतामेवेत्यादि** । युध्यतां युध्यमानेषु । प्राणहारिणी वानराणामिति शेषः ॥ १ ॥

२–३ ] ति० टी०—निशायुद्धं प्रवृत्तम् । परस्परं बहुसेनादर्शनजदोषादिति भावः । पौषपौर्णमास्यां सुवेलारोहणस्य स्पष्टप्रतीतेः, तेनाविभागादिना पौषकृष्णेऽतीते माघशुक्लप्रतिपदि युद्धारम्भे बहुदिनपर्यन्तं संकुलं युद्धं सामान्येनोक्तम्, तदुत्तरदिने चेदं निशायुद्धं प्रवृत्तम् । 'ततो जज्ञे महायुद्धं संकुलं कपिरक्षसाम् । मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूत् ॥' इति पाद्मोक्तेः । अत्र तत्त्वं वक्ष्यामः ॥ २ ॥ ३ ॥

रा० टी०—अन्योन्यमिति । जयमिच्छतां वानररक्षसां निशायुद्धं संप्रवृत्तम् ॥ २ ॥

गो० टी०—अन्योन्यमिति । स्पष्टः ॥ २ ॥

रा० टी०—तत्प्रकारमाह—**राक्षस इत्यादिभिः** । राक्षसोऽसीति वानरोऽसीति च क्रमेणोक्त्वेति शेषः हरयो राक्षसाश्च दारुणे तमसि अन्धकारसमये अन्योन्यं जघ्नुः ॥ ३ ॥

गो० टी०—राक्षस इति । हरिश्चासीति राक्षसा इति । दारुणतमस्कत्वेन रक्षसामपि मोहोऽभूदिति भावः ॥ ३ ॥

४ ] ति० टी०—हत । इदं हन्तेर्लोटि मध्यमपुरुषबहुवचनम् हननं कुरुतेत्यर्थः । दारय विदारणं कुरु एह्यागच्छ । कथं विद्रवसि कथं पलायसे एवं तुमुलः शब्दस्तस्मिन्सैन्ये शुश्रुवे ॥ ४ ॥

रा० टी०—हतेति । यूयं हत त्वं दारय एहीति च कथं विद्रवसीति च एवं सुतुमुलः शब्दः सैन्ये शुश्रुवे ॥ ४ ॥

गो० टी०—जहीति । स्पष्टः ॥ ४ ॥

५–७ ] ति० टी०—कालाः कृष्णवर्णाः । काञ्चनसंनाहाः सुवर्णकवचाः ॥ ५ ॥ ७ ॥

रा० टी०—**काला इति** । काञ्चनसंनाहाः सुवर्णमयकवचविशिष्टाः कालाः श्यामवर्णाः राक्षसाः दीप्तानि ओषधिवनानि येषु ते शैलेन्द्रा इव संप्रदृश्यन्त संप्रादृश्यन्त ॥ ५ ॥

गो० टी०—**काला इति** । कालाः नीलाः । काञ्चनसंनाहाः काञ्चनकवचाः । दीप्तौषधिवनाः दीप्ततृणज्योतिर्वनाः ॥ ५ ॥

रा० टी०—**तस्मिन्निति** । तस्मिन् तमसि अन्धकारे प्लवङ्गमान् भक्षयन्तो राक्षसाः परिपेतुः वानरसैन्येष्विति शेषः ॥ ६ ॥

गो० टी०—**तस्मिन्निति** । परिपेतुः संचेरुः ॥ ६ ॥

रा० टी०—**ते इति** । ते वानराः काञ्चनापीडान् स्वर्णमयभूषणविशिष्टान् हयान् शिखरोपमान् ध्वजांश्च आप्लुत्य दशनैर्व्यदारयन् ॥ ७ ॥

गो० टी०—**त इति** । ते वानराः । काञ्चनापीडान् सुवर्णशेखरान् ॥ ७ ॥

८–९ ] ति० टी०—अक्षोभयन्निति पदम् । पताकाध्वजिनः पताकोपेतध्वजवन्तः ॥ ८ ॥ ९ ॥

रा० टी०—**वानरा इति** । वानराः कुञ्जरादीन् चकर्षुः चकृषुः अत एव राक्षसीं चमूम् अक्षोभयन् । सार्धश्लोक एकान्वयी ॥ ८ ॥

गो० टी०—**वानरा इत्यादिसार्धश्लोकः** । युद्धेऽक्षोभयन्नित्यत्र अक्षोभयन्निति पदच्छेदः ॥ ८ ॥

---

१ हरिश्चेति गो.पाठः । २ जहीति गो.पाठः । ३ तमसीति गो.पाठः । ४ प्रादृश्यन्तेति गो.पाठः । ५ काञ्चनशिखरेति गो. शिखरोपमानिति रा.पाठः ।

दृश्यादृश्यानि रक्षांसि प्रवराणि निजघ्नतुः । तुरंगखुरविध्वस्तं रथनेमिसमुत्थितम् ॥ १० ॥
रुरोध कर्णनेत्राणि युध्यतां धरणीरजः । वर्तमाने तथा घोरे सङ्ग्रामे लोमहर्षणे ॥
रुधिरौघा महाघोरा नद्यस्तत्र विसुस्रुवुः ॥ ११ ॥
ततो भेरीमृदङ्गानां पणवानां च निःस्वनः । शङ्खनेमिस्वनोन्मिश्रः संबभूवाद्भुतोपमः ॥ १२ ॥
हयानां स्तनमानानां राक्षसानां च निःस्वनः । शस्तानां वानराणां च संबभूवात्र दारुणः ॥ १३ ॥
हतैर्वानरमुख्यैश्च शक्तिशूलपरश्वधैः । निहतैः पर्वताकारै राक्षसैः कामरूपिभिः ॥ १४ ॥
शस्त्रपुष्पोपहारा च तत्रासीद्युद्धमेदिनी । दुर्ज्ञेया दुर्निवेशा च शोणितास्रावकर्दमा ॥ १५ ॥
सा बभूव निशा घोरा हरिराक्षसहारिणी । कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा ॥ १६ ॥
ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे । राममेवाभ्यवर्तन्त संहृष्टाः शरवृष्टिभिः ॥ १७ ॥
तेषामापततां शब्दः क्रुद्धानामपि गर्जताम् । उद्वर्त इव सत्त्वानां समुद्राणामभूत्स्वनः ॥ १८ ॥
तेषां रामः शरैः षड्भिः षड् जघान निशाचरान् । निमेषान्तरमात्रेण शरैरग्निशिखोपमैः ॥ १९ ॥

---

रा० टी०—लक्ष्मण इति । लक्ष्मणो रामश्च दृश्यादृश्यानि दृश्यानि अदृश्यानि च प्रवराणि श्रेष्ठानि रक्षांसि निजघ्नतुः॥९॥

गो० टी०—लक्ष्मण इति । दृश्यादृश्यानि ईषद्दृश्यानीत्यर्थः ॥ ९ ॥

१० ] ति टी०—प्रवराणि श्रेष्ठानि ॥ १० ॥

रा० टी०—तुरङ्गेति । तुरङ्गाणां खुरैर्विध्वस्तं रथनेमिना समुत्थितं धरणीरजः युध्यतां कर्णनेत्राणि रुरोध ॥ १० ॥

गो० टी०—तुरङ्गेति । विध्वस्तं चूर्णितम् ॥ १० ॥

११-१२ ] ति० टी०—रथनेमिसमुद्धतं रजो युध्यतां कर्णनेत्राणि रुरोध ॥ ११ ॥ १२ ॥

रा० टी०—वर्तमान इति । वर्तमाने घोरे संग्रामे रुधिरौघाः रुधिरसमूहवत्यो महानद्यो विसुस्रुवुः ॥ ११ ॥

गो० टी०—वर्तमान इति । रुधिरोदाः । असंज्ञायामप्युदकशब्दस्योदादेश आर्षः ॥ ११ ॥

रा० टी०—तत इति । शङ्खानां नेमीनां च ध्वनैर्मिश्रः भेरीप्रभृतीनां निस्वनः अद्भुतोपमः संबभूव ह ॥ १२ ॥

गो० टी०—ततो भेरीति । स्पष्टः ॥ १२ ॥

१३ ] ति० टी०—स्तनमानानां स्तनताम् । शस्तानां हिंसितानाम् ॥ १३ ॥

रा० टी०—हयानामिति । तत्र तस्मिन्समये हयादीनां निस्वनः शस्तादीनां च निस्वनो बभौ ॥ १३ ॥

गो० टी०—हतानामिति । स्तनमानानां स्तनताम् । शस्तानां हिंसितानाम् ॥ १३ ॥

१४ ] ति० टी०—कामरूपिभिरुपलक्षिता मेदिनी शस्त्राण्येव पुष्पोपहारो यस्यां तादृशीवासीत् ॥ १४ ॥

१५ ] ति० टी०—शोणितानामास्रावैः कर्दमो यस्यां सा॥१५

रा० टी०—हतैरिति । शक्त्यादिभिर्हतैर्वानरमुख्यैर्निहतैः राक्षसैश्चोपलक्षिता अत एव शोणितास्रावैः रुधिरप्रवाहैः कर्दमो यस्याम् अत एव दुर्निवेशा अत एव दुर्ज्ञेया युद्धमेदिनी शस्त्रपुष्पोपहारा शस्त्ररूपपुष्पोपहारयुक्ता आसीत् । अर्धचतुष्टयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—हतैरित्यादिश्लोकद्वयमेकान्वयम् । निहतैरिति राक्षसविशेषणम् । पर्वताग्रैः वानरप्रेरितैः । उपलक्षणे तृतीया । शस्त्राण्येव पुष्पोपहाराः पुष्पबलयो यस्यां सा । तत्र तदा । दुर्ज्ञेया कृच्छ्रज्ञेया । प्रतियोधिनः दुर्निवेशा दुष्प्रवेशा॥१४॥१५॥

१६-१७ ] ति० टी०—कालरात्री संहाररात्रिः॥१६॥१७॥

रा० टी०—सेति । हरिराक्षसहारिणी सा निशा कालरात्रीव भूतानां दुरतिक्रमा बभूव ॥ १६ ॥

गो० टी०—सेति । कालरात्रिः भीमरथिरात्रिः । रात्रिर्भीमरथिर्नाम सर्वप्राणिभयावहेत्युक्तेः । शक्तिर्वा । सती च कालरात्रिश्च भैरवी गणनायिकेत्युक्तेः ॥ १६ ॥

रा० टी०—तत इति । तमसि संहृष्टाः ते राक्षसाः शरवृष्टिभिः राममेव अभ्यवर्तन्त ॥ १७ ॥

गो० टी—तत इति । संसृष्टाः संमिलिताः ॥ १७ ॥

१८ ] ति० टी०—उद्वर्ते प्रलयकाले ॥ १८ ॥

रा० टी०—तेषामिति । आपततां तेषां रक्षसां शब्दः उद्वर्ते प्रलयकाले समानां समुद्राणां स्वन इव अभूत् ॥ १८ ॥

गो० टी०—तेषामिति । उद्वर्ते अभिवृद्धौ । प्रलये वा ॥१८॥

१९ ] ति० टी०—षड्भिः षडिति । प्रधानानिति शेषः॥१९॥

रा० टी०—तेषामिति । तेषां मध्ये यज्ञशत्रुप्रभृतयो ये षट् निशाचरास्तान् षट्निशाचरान् निमेषान्तरमात्रेण रामो जघान श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

---

१ महेवि गो. पाठः । २ रुधिरोदा इति गो. पाठः । ३ प्रेति गो. पाठः । ४ वेणिवति गो. पाठः । ५ हतानामिति गो. पाठः । ६ शस्त्राणामिति रा. पाठः । ७ स बभौ तत्र निस्वन इति रा. पाठः । ८ अतीति गो. पाठः । ९ वीरैरिति गो. पाठः । १० पर्वताग्रैश्चेति गो. पाठः । ११ सृष्टा इति गो. पाठः । १२ प्रक्षुब्धे इवि गो. पाठः । १३ शितैरिति गो. घोरैरिति रा. पाठः ।

यज्ञशत्रुश्च दुर्धर्षो महापार्श्वमहोदरौ । वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ॥ २० ॥
ते तु रामेण बाणौघैः सर्वेमर्मसु ताडिताः । युद्धादपसृतास्तत्र सावशेषायुषोऽभवन् ॥ २१ ॥
²निमेषान्तरमात्रेण घोरैरग्निशिखोपमैः । दिशश्चकार विमलाः प्रदिशश्च महारथः ॥ २२ ॥
ये त्वन्ये राक्षसा वीरा रामस्याभिमुखे स्थिताः । तेऽपि नष्टाः समासाद्य पतङ्गा इव पावकम् ॥ २३ ॥
सुवर्णपुङ्खैर्विशिखैः संपतद्भिः समन्ततः । बभूव रजनी चित्रा खद्योतैरिव शारदी ॥ २४ ॥
राक्षसानां च निनदैर्भेरीणां चैव निःस्वनैः । सा बभूव निशा घोरा भूयो घोरतराभवत् ॥ २५ ॥
तेन शब्देन महता प्रवृद्धेन समन्ततः । त्रिकूटः कन्दरः कीर्णः प्रव्याहरदिवाचलः ॥ २६ ॥
गोलाङ्गूला महाकायास्तमसा तुल्यवर्चसः । संपरिष्वज्य बाहुभ्यां भक्षयन्रजनीचरान् ॥ २७ ॥
अङ्गदस्तु रणे शत्रून्निहन्तुं समुपस्थितः । रावणिं निजघानाशु सारथिं च हयानपि ।
वर्तमाने तदा घोरे संग्रामे भृशदारुणे ॥ ]
इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः । अङ्गदेन महायस्तस्तत्रैवान्तरधीयत ॥ २८ ॥
तत्कर्म वालिपुत्रस्य सर्वे देवाः सहर्षिभिः । तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ॥ २९ ॥

---

गो० टी०—तेषामिति । तेषां राक्षसानां मध्ये षट् निशाचरान् अग्निशिखोपमैः शितैः शरैः जघान ॥ १९ ॥

२० ] ति० टी०—ते षड्गण्यन्ते—यज्ञशत्रुरिति । दुर्धर्ष इति यज्ञशत्रोर्विशेषणम् । महाकाय इति वज्रदंष्ट्रस्य । इमौ शुकसारणौ चारत्वेन प्रेषिताभ्यामन्यावेवेति बहवः । ताविति पदस्वारस्याच्चारत्वेन प्रेषितावेवेमौ राज्ञा धिक्कृतावपि राजसंनिधिं परित्यज्य युद्धे सृतावित्यन्ये ॥ २० ॥

गो० टी०—के ते षडित्यपेक्षायामाह—यमेति । दुर्धर्षः धर्षितुमशक्यः । यमशत्रुः । महोदरमहापार्श्वौ । महाकायः वज्रदंष्ट्रः । तौ उत्तरद्वाररक्षकत्वेन पूर्वोक्तौ उभौ शुकसारणौ चेति षट् । अत्र महाकाय इति वज्रदंष्ट्रविशेषणम् । अपसृताः पलायिताः । सावशेषायुषः आयुःशेषयुक्ता इति जीवने हेतुः ॥ २० ॥ २१ ॥

२१–२४ ] ति० टी०—यतः सावशेषायुषः, अतो युद्धादपसृता अभवन् ॥ २१ ॥ २४ ॥

रा० टी०—ते इति । रामेण सर्वमर्मसु ताडिताः अत एव सावशेषायुषः किञ्चिन्मात्रावशिष्टायुर्बलाः आसन्नमरणा इत्यर्थः ते षड्राक्षसाः युद्धादपसृताः निवृत्ता अभवन् ॥ २१ ॥

रा० टी०—निमेषेति । महारथो रामः अग्निशिखोपमैः शरैः दिशः प्रदिशश्च विमलाश्चकार ॥ २२ ॥

गो० टी०—तत्रेति । महाबलः रामः ॥ २२ ॥

रा० टी०—ये इति । रामस्य अभिमुखे स्थिताः येऽन्ये राक्षसाः तेऽपि पावकं समासाद्य पतङ्गा इव नष्टाः ॥ २३ ॥

गो० टी०—ये त्विति । पावकं समासाद्येत्यन्वयः ॥ २३ ॥

रा० टी०—सुवर्णेति । सुवर्णमयाः पुङ्खाः येषु तैः संपतद्भिर्विशिखैः खद्योतैश्चित्रा शारदी निशेव चित्रा रजनी बभूव ॥ २४ ॥

गो० टी०—सुवर्णपुङ्खैरिति । स्पष्टः ॥ २४ ॥

२५–२६ ] ति० टी०—घोरा सा निशा भूयो घोरतरा बभूव ॥ २५ ॥ २६ ॥

रा० टी०—राक्षसानामिति । घोरा निशा या बभूव सा राक्षसनिनदादिभिर्भूयो घोरतराऽभवत् ॥ २५ ॥

गो० टी०—राक्षसानामिति । पूर्वमेव घोरा सा भूयः विशिष्य घोरतरा बभूव ॥ २५ ॥

रा० टी०—तेनेति । महता तेन शब्देन त्रिकूटोऽचलः प्रव्याहरत् शब्दमकरोदिव ॥ २६ ॥

गो० टी०—तेनेति । प्रव्याहरदिव प्रतिव्याहरदिवेत्यर्थः २६

२७ ] ति० टी०—भक्षयन्नभक्षयन् ॥ २७ ॥

रा० टी०—गोलाङ्गूला इति । तमसा तुल्यवर्चसो गोलाङ्गूलाः रजनीचरान् संपरिष्वज्य परिष्वङ्गेन निहत्य भक्षयन् अभक्षयन् आदिभिरखादयन् ॥ २७ ॥

गो० टी०—गोलाङ्गूला इति । भक्षयन् अभक्षयन् २७

२८–२९ ] ति० टी०—अङ्गदेन हताश्वः, अत एव महायस्तो महाखेदं प्राप्त इन्द्रजित्तु तत्रैवान्तरधीयतेत्यन्वयः ॥ २८ ॥ २९

रा० टी०—अङ्गद इति । शत्रुमिन्द्रजितं हन्तुं समुपस्थितोऽङ्गदस्तु रावणिप्रभृतिं निजघान ॥ २८ ॥

रा० टी०—इन्द्रजिदिति । अङ्गदेन हताश्वादिः महामाय इन्द्रजित्तु तत्रैवान्तरधीयत ॥ २९ ॥

गो० टी०—पूर्वप्रसक्तस्याङ्गदेन्द्रजितोर्द्वन्द्वयुद्धस्य शेषं वक्तुमुपक्रमते—अङ्गदस्त्वित्यादिना ॥ २८ ॥

गो० टी०—वर्तमान इति । तत्रैव तस्मिन् देश एव २९

रा० टी०—तदिति । वालिपुत्रस्याङ्गदस्य तत्कर्म देवप्रभृतयस्तुष्टुवुः ॥ ३० ॥

---

१ सर्वे इति गो. पाठः । २ तत्र काञ्चनचित्राङ्गैः शरैरिति गो. पाठः । ३ बल इति गो. पाठः । ४ सहसा इति गो. पाठः । ५ करीणां चापीति गो. पाठः । ६ तदेति गो. पाठः । ७ श्लोकोऽयमधिकः गो. रा. पाठे । ८ कायस्तत्रैवेति गो. माय इति रा. पाठः ।

प्रभावं सर्वभूतानि विदुरिन्द्रजितो युधि । ततस्तेन महात्मानं दृष्ट्वा तुष्टाः प्रधर्षितम् ॥ ३० ॥
ततः प्रहृष्टाः कपयः ससुग्रीवविभीषणाः । साधुसाध्विति नेदुश्च दृष्ट्वा शत्रुं पराजितम् ॥ ३१ ॥
इन्द्रजित्तु तदानेन निर्जितो भीमकर्मणा । संयुगे वालिपुत्रेण क्रोधं चक्रे सुदारुणम् ॥ ३२ ॥
[ एतस्मिन्नन्तरे रामो वानरान्वाक्यमब्रवीत् । सर्वे भवन्तस्तिष्ठन्तु कपिराजेन संगताः ॥
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् । भवतामर्थसिद्ध्यर्थं कालेन सुसमागतः ॥
अद्यैव क्षमितव्यं मे भवन्तो विगतज्वराः । ]
सोऽन्तर्धानगतः पापो रावणी रणकर्शितः । ब्रह्मदत्तवरो वीरो रावणिः क्रोधमूर्च्छितः ॥ ३३ ॥
अदृश्यो निशितान्बाणान्मुमोचाशनिवर्चसः । रामं च लक्ष्मणं चैव घोरैर्नागमयैः शरैः ॥ ३४ ॥
बिभेद समरे क्रुद्धः सर्वगात्रेषु राघवौ । मायया संवृतस्तत्र मोहयन्राघवौ युधि ॥ ३५ ॥
अदृश्यः सर्वभूतानां कूटयोधी निशाचरः । बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥ ३६ ॥
तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैः शरैः । सहसाभिहतौ वीरौ तदा प्रैक्षन्त वानराः ॥ ३७ ॥
प्रकाशरूपस्तु यदा न शक्तस्तौ बाधितुं राक्षसराजपुत्रः ।
मायां प्रयोक्तुं समुपाजगाम बबन्ध तौ राजसुतौ दुरात्मा ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकिय आदिकाव्ये युद्धकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

गो० टी०—तदिति । पूजनार्हस्य स्तुत्यर्हस्य ॥ ३० ॥

३०–३५ ] ति० टी०—यत इन्द्रजितो युधि प्रभावं विदुः, अतस्तेनाङ्गदेन तमिन्द्रजितं प्रधर्षितं दृष्ट्वा महात्मानं तमङ्गदं दृष्ट्वा तुष्टाः ॥ ३०–३५ ॥

३६ ] ति० टी०—शरबन्धेन शरपरिणतनागपाशबन्धेन । अयं शरबन्धो भाद्रकृष्णान्त्यदिनेषु इत्यग्रे निरूपयिष्यामः ६३

रा० टी०—प्रभावमिति । यस्येन्द्रजितः प्रभावं सर्वभूतानि विदुः ततः तं महात्मानमतिप्रयत्नवन्तमिन्द्रजितं तेनाङ्गदेन प्रधर्षितं दृष्ट्वा तुष्टाः वानरादयो बभूवुरिति शेषः ॥३१॥

गो० टी०—प्रभावमिति । ते तानि लिङ्गव्यत्यय आर्षः। महात्मानं महाधैर्यम् तेन अङ्गदेन प्रधर्षितं पराजितम् दृष्ट्वा तुष्टाः ॥ ३१ ॥

रा० टी०—तत इति । शत्रुं पराजितं दृष्ट्वा कपयः साधु साध्विति नेदुः ॥ ३२ ॥

गो० टी०—तत इति । स्पष्टः ॥ ३२ ॥

रा० टी०—इन्द्रजिदिति । अनेनाङ्गदेन निर्जित इन्द्रजित्तु सुदारुणं क्रोधं चक्रे ॥ ३३ ॥

गो० टी०—इन्द्रजित्त्विति । स्पष्टः ॥ ३३ ॥

रा० टी०—स इति । रणकर्शितो यो रावणिः अन्तर्द्धानगतः स रावणिः अदृश्यः सन् निशितान् बाणान् मुमोच । सार्धश्लोक एकान्वयी ॥ ३४ ॥

गो० टी०—एतस्मिन्नित्यर्धम् ॥ ३४ ॥

गो० टी०—सर्व इत्यर्धम् ॥ ३५ ॥ ३६ ॥

गो०टी०—स इति । अन्तर्धानगतः अन्तर्धानविद्यां प्राप्तः ३७

रा० टी०—राममिति । रामं लक्ष्मणं च राघवौ नागमयैः शरैः क्रुद्धो रावणिः सर्वगात्रेषु बिभेद भेदानुकूलव्यापारं चकार ॥ ३५ ॥

गो० टी०—स इति । सर्वगात्रेषु सर्वावयवेषु ॥ ३८ ॥

रा० टी०—माययेति । मायया संवृतः अत एव सर्वभूतानामदृश्यः कूटयोधी कपटयोद्धा निशाचर इन्द्रजित् शरबन्धेन बबन्ध । सार्धश्लोक एकान्वयी ॥ ३६ ॥ ३७ ॥

गो० टी०—माययेति । मायया संवृतः मायया युक्तः । अत एव अदृश्यः कूटयोधी कपटयोधी राघवौ रघुकुलोद्भवौ रामलक्ष्मणौ शरबन्धेन शररूपबन्धकेन बबन्ध । वेष्टनदंशनादिना नागमयत्वम् वेदनादिना शरमयत्वम् ॥ ३९ ॥

३७ ] ति० टी०—अभिहतौ बद्धौ ॥ ३७ ॥

रा० टी०—ताविति । तेनेन्द्रजिता अभिहतौ तात्विकबन्धनं प्राप्ताविव तौ रामलक्ष्मणौ वानराः प्रैक्षन्त ॥ ३८ ॥

गो० टी०—तौ तेनेति । स्पष्टः ॥ ४० ॥

३८ ] ति० टी०—उक्तानुवादः—प्रकाशेत्यादि । समुपाजगामोपचक्रमे । भ्रूभङ्गमात्रेण सर्वजगत्संहर्तुरपि भगवतो नागपाशबन्धनसहनं स्वकृतमर्यादारूपब्रह्मवरदानपालनार्थम् विरोधेनापि नित्यमात्मानं स्मरतो रावणस्य रावणेश्च परमभक्ततया कीर्तेर्लोकेषु दृढयर्थं चेति तत्त्वम् ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

१ प्रधर्षितमिति गो.पाठः । २ तेनेति गो.पाठः । ३ एतदादि सार्धं श्लोकद्वयमधिकं गो.पाठे । ४ कर्कश इति गो. पाठः । ५ अर्धमेतत् गो.नास्ति । ६ स राममिति गो. पाठः । ७ राक्षस इति गो. पाठः । ८ निहताविति गो. पाठः । ९ प्रैक्षन्तेति गो. पाठः । १० महात्मेति गो. पाठः ।

## पञ्चचत्वारिंशः सर्गः ।

शरपाशबद्धौ सवीरनादमन्यैः क्रूरबाणैश्चेन्द्रजिता विद्धौ राघवौ वीक्ष्यार्तौ हरयो विषादं परमं जग्मुः ।

स तस्य गतिमन्विच्छन्राजपुत्रः प्रतापवान् । दिदेशातिबलो रामो दश वानरयूथपान् ॥ १ ॥
द्वौ सुषेणस्य दायादौ नीलं च प्लवगाधिपम्[1] । अङ्गदं वालिपुत्रं च शरभं च तरस्विनम् ॥ २ ॥
[2]द्विविदं च हनूमन्तं सानुप्रस्थं महाबलम् । ऋषभं चर्षभस्कन्धमादिदेश परंतपः ॥ ३ ॥
ते संप्रहृष्टा हरयो भीमानुद्यम्य पादपान् । आकाशं विविशुः सर्वे मार्गमाणा दिशो दश ॥ ४ ॥
तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः । अस्त्रवित्परमास्त्रेण वारयामास रावणिः ॥ ५ ॥
तं भीमवेगा हरयो नाराचैः क्षतविक्षताः । अन्धकारे न ददृशुर्मेघैः सूर्यमिवावृतम् ॥ ६ ॥
रामलक्ष्मणयोरेव सर्वदेहभिदः शरान् । भृशमावेशयामास रावणिः समितिंजयः ॥ ७ ॥
निरन्तरशरीरौ तु तावुभौ रामलक्ष्मणौ । क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः ॥ ८ ॥
तयोः क्षतजमार्गेण सुस्राव रुधिरं बहु । तावुभौ च प्रकाशेते पुष्पिताविव किंशुकौ ॥ ९ ॥
ततः पर्यन्तरक्ताक्षो भिन्नाञ्जनचयोपमः । रावणिर्भ्रातरौ वाक्यमन्तर्धानगतोऽब्रवीत् ॥ १० ॥

---

रा० टी०—मायोत्पादने हेतुं वदन् तदेवाह—प्रकाशेति । राक्षसराजपुत्रः प्रकाशरूपः प्रकटशरीरः सन् तौ रामलक्ष्मणौ बाधितुमभिभवितुं यदा न शक्तः तदा मायां प्रयोक्तुं कर्तुं समुपाजगाम आरेभे अत एव बबन्ध बन्धनानुकूलव्यापारं चकार ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

गो० टी०—मायाप्रयोगः किमर्थस्तत्राह—प्रकाशेति । समुपाजगाम उपचक्रमे । बबन्ध च । महात्मा महाबुद्धिः ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

१-४ ] ति० टी०—उक्तस्यैव राघवयोरिन्द्रजित्कृतबन्धनस्य प्रपञ्चः—स इति । तस्येन्द्रजितो गतिमवस्थानप्रदेशमन्विच्छञ्ज्ञातुमिच्छन्दिदेशादिदेश ॥ १-४ ॥

रा० टी०—इन्द्रजित्कर्तृकमायारम्भानन्तरकालिकं रामवृत्तान्तमाह—स इत्यादिभिः । तस्येन्द्रजितो गतिं स्थितिदेशम् अन्विच्छन् ज्ञातुमिच्छन् रामः दशवानरयूथपान् दिदेश अन्वेषयितुमाज्ञापयामास ॥ १ ॥

गो० टी०—अथ नागपाशबन्धः पञ्चचत्वारिंशे—स तस्येत्यादि । गम्यत इति गतिः स्थानम् ॥ १ ॥

रा० टी०—दशानां नामनिर्दिशन्नाह—द्वावित्यादिभिः । सुषेणदायादप्रभृतीन् आदिदेश दायादौ पुत्रौ 'दायादौ पुत्रबान्धवौ' इत्यमरः । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—तानेव दश यूथपान् दर्शयति—द्वावित्यादिना । दायादौ पुत्रौ दायादौ सुतबान्धवावित्यमरः ॥ २ ॥ ३ ॥

रा० टी०—ते इति ते आज्ञप्ताः हरयः भीमान् पादपानुद्यम्य दशदिशो मार्गमाणाः सन्तः आकाशं विविशुः ॥ ४ ॥

गो० टी०—त इति । मार्गमाणाः मार्गितुमित्यर्थः ॥ ४ ॥

५-६ ] ति० टी०—परमास्त्रेण ब्रह्मास्त्रेण मन्त्रितैरिषुभिर्वारयामास ॥ ५ ॥ ६ ॥

रा० टी०—तेषामिति । अस्त्रवित् रावणिः तेषां वानराणां वेगं शीघ्रगतिं परमास्त्रेण ब्रह्मास्त्रमन्त्रेण अभिमन्त्रितैरिति शेषः वेगवत्तरैरिषुभिर्वारयामास ॥ ५ ॥

गो० टी०—तेषामिति । परमास्त्रैरिषुभिः परमास्त्ररूपैरिषुभिः ॥ ५ ॥

रा० टी०—तमिति । नाराचैः बाणविशेषैः क्षतविक्षताः अल्पाधिकव्रणयुक्ताः हरयः मेघैरावृतं सूर्यमिव अन्धकारे आवृतं रावणिं तं न ददृशुः ॥ ६ ॥

गो० टी०—तमिति । स्पष्टः ॥ ६ ॥

७ ] ति० टी०—आवेशयामास प्रवेशयामास ॥ ७ ॥

रा० टी०—रामेति । सर्वेषां देवादीनां देहं भिन्दन्ति तान् शरान् रामलक्ष्मणयोरुपरि रावणिर्भृशमावेशयामास प्रवेशानुकूलव्यापारं चकार ॥ ७ ॥

गो० टी०—रामेति । भृशं सर्वदेहभिदः शरान् रामलक्ष्मणयोरेवाधिकरणयोरावेशयामास ॥ ७ ॥

८ ] ति० टी०—निरन्तरशरीरौ तु कृताविति शेषः ॥ ८ ॥

रा० टी०—निरन्तरेति । इन्द्रजिता शरतां गतैः प्राप्तैः पन्नगैः रामलक्ष्मणौ निरन्तरशरीरौ उपरिभागे अन्तररहितदेहौ कृतौ ॥ ८ ॥

गो० टी०—निरन्तरेति । निरन्तरशरीरौ कृताविति शेषः । शरतां गतैः शरकार्यं भेदनादिकं कुर्वद्भिरित्यर्थः ॥ ८ ॥

९-१० ] ति० टी०—क्षतजमार्गेण क्षतेन व्रणेन जातो यो मार्गस्तेन ॥ ९ ॥ १० ॥

रा० टी०—तयोरिति । क्षतजमार्गेण रुधिरविषयकविचारेण रामलक्ष्मणशरीरे भीतिजनकरुधिरप्रदर्शनायेत्यर्थः, तयो

---

१ प्लवगर्षभमिति गो.पाठः। २ विनतं जाम्बवन्तं चेति गो.पाठः। ३ अस्त्रैस्तु इति गो.पाठः। ४ विग्रहा इति गो.पाठः। ५ तौ भ्रातराविति गो.पाठः।

युध्यमानमनालक्ष्यं शक्रोऽपि त्रिदशेश्वरः । द्रष्टुमासादितुं वापि न शक्तः किं पुनर्युवाम् ॥ ११ ॥
प्रापिताविषुजालेन राघवौ कङ्कपत्रिणा । एष रोषपरीतात्मा नयामि यमसादनम् ॥ १२ ॥
एवमुक्त्वा तु धर्मज्ञौ भ्रातरौ रामलक्ष्मणौ । निर्बिभेद शितैर्बाणैः प्रजहर्ष ननाद च ॥ १३ ॥
भिन्नाञ्जनचयश्यामो विस्फार्य विपुलं धनुः । भूय एव शरान्घोरान्विससर्ज महामृधे ॥ १४ ॥
ततो मर्मसु मर्मज्ञो मज्जयन्निशिताञ्शरान् । रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १५ ॥
बद्धौ तु शरबन्धेन तावुभौ रणमूर्धनि । निमेषान्तरमात्रेण न शेकतुरवेक्षितुम् ॥ १६ ॥
ततो विभिन्नसर्वाङ्गौ शरशल्याचितौ कृतौ । ध्वजाविव महेन्द्रस्य रज्जुमुक्तौ प्रकम्पितौ ॥ १७ ॥
तौ संप्रचलितौ वीरौ मर्मभेदेन कर्शितौ । निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ १८ ॥

---

रामलक्ष्मणयोरुपरि बहु रुधिरं सुस्राव मायया स्रावयामास अन्तर्भावितणिजर्थः स्रवतिः अत एव तौ रामलक्ष्मणौ पुष्पितौ किंशुकौ पलाशाविव प्रकाशेते ॥ ९ ॥

गो० टी०–तयोरिति । क्षतेन जातो मार्गः क्षतजमार्गः । ननु, न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः । न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवेत्यादिभिः रामलक्ष्मणयोर्दिव्यविग्रहस्याप्राकृतत्वस्मरणात्कथं रुधिरोद्गम इति चेदत्राहुः । वस्तुतोनयो रुधिराभावेपि मनुष्यभावनानुरोधेन नट इव रुधिराणि दर्शयतः स्म । नन्वेवं निर्बन्धेन मनुष्यभावं भावयतः किं प्रयोजनं शृणु । सर्वात्मना मनुष्यभावनानुरोधे जन एवं मन्येत नायं मर्त्यः किं तु देवः तेन तद्वदस्माकं न शक्यमनुष्ठातुं धर्मानिति सर्वथा मनुष्यभावनायां तु महाजनानुष्ठानदर्शनेन स्वयमनुष्ठास्यति लोक इति रहस्यम् । रावणस्य मनुष्यैकवध्यत्वेन तद्भावनेत्यप्याहुः । नागपाशबद्धतयावस्थानं तु धर्मनिरतानामपि कदाचिदापदुपतिष्ठति निवर्तते च झटितीति लोकानां प्रदर्शनायेति एवं मोहादिष्वपि द्रष्टव्यम् ॥ ९ ॥

रा० टी०–तत इति । पर्यन्तरक्ताक्षः अरुणप्रान्तविशिष्टयनविशिष्टः नभिन्नाञ्जनचयोपमः सिद्धाञ्जनसमूहसदृशः अन्तर्धानगतो रावणिरब्रवीत् ॥ १० ॥

गो० टी०–तत इति । पर्यन्तरक्ताक्ष इत्यनेन ईषत्कोपवत्त्वं लक्ष्यते ॥ १० ॥

११ ] ति० टी०–अनालक्ष्यमशक्यदर्शनम् ॥ ११ ॥

रा० टी०–तदाकारमाह—युध्यमानमिति । अनालक्ष्यमन आसमन्ताद्भावेन लक्ष्यते अन्तर्हितमित्यर्थः, मां शक्रोऽपि द्रष्टुमासादितुं वा न शक्तः तर्हि युवां किम् ॥ ११ ॥

गो० टी०–युद्ध्यमानमिति । अनालक्ष्यं यथा भवति तथा युद्ध्यमानं मां शक्रस्त्रिदशेश्वरोपि द्रष्टुं मायया बलान्तरेण आसादितुं वापि न शक्तः । किं पुनर्युवां मानुषावित्यर्थः ॥११॥

१२-१५ ] ति० टी०–प्रापितौ बन्धनमिति शेषः१२-१५

रा० टी०–प्रावृताविति । कोपपरीतात्मा एषोऽहम् इषुजालेन प्रावृतौ युवां यमसादनं नयामि ॥ १२ ॥

गो० टी०–प्रावृताविति । राघवाविति संबोधनम् । अत्रापि युवामिति द्वितीयान्ततया विपरिणम्यानुषञ्जनीयम् । कङ्कपत्रिणा कङ्कपत्रवता एष इत्यव्यवधानद्योतनाय ॥ १२ ॥

रा० टी०–एवमिति । रामलक्ष्मणौ एवमुक्त्वा बाणैः निर्बिभेद निर्भेदानुकूलव्यापारं चकार ॥ १३ ॥

गो० टी०–एवमिति । धर्मज्ञाविति । शब्दवेधप्रयोगासहिष्णू इत्यर्थः ॥ १३ ॥

रा० टी०–भिन्नेति । विपुलं महद्धनुः विस्फार्य शरान् भूयो विससर्ज ॥ १४ ॥

गो० टी०–भिन्नेति । अञ्जनोपरिप्रदेशस्य दूरत्वसंभवात् भिन्नेत्युक्तम् ॥ १४ ॥

रा० टी०–तत इति । रामलक्ष्मणयोर्मर्मसु शरान् मज्जयन् तदनुकूलव्यापारं कुर्वन् मुहुर्मुहुर्ननाद ॥ १५ ॥

गो० टी०–तत इति । स्पष्टः ॥ १५ ॥

१६–१८ ] ति० टी०–न शेकतुरवेक्षितुं तादृशाविव स्थितौ मनुष्यत्वनाटनायेति बोध्यम् ॥ १६–१८ ॥

रा० टी०–बद्धाविति । शरबन्धेन बद्धाविव तौ रामलक्ष्मणौ अवेक्षितुम् आत्मानं दर्शयितुं न शेकतुः सामर्थ्यं ददतुः अन्तर्भावितणिजर्थः, एतेन रामस्य मर्यादापालकत्वं ध्वनितम् । तुशब्द इवार्थे ॥ १६ ॥

गो० टी०–बद्धौ त्विति । निमेषान्तरमात्रेण निमेषावकाशमात्रेण । क्षणमात्रेणेत्यर्थः ॥ १६ ॥

रा० टी०–तत इति । शरशल्याभ्यां बाणविशेषाभ्याम् आचितौ व्याप्ताविव अत एव विभिन्नसर्वाङ्गाविव अत एव प्रकम्पितौ स्वसेनाप्रकम्पनकर्तारौ रामलक्ष्मणौ रज्जुमुक्तौ रज्जुभिः रहितौ भूमौ स्थापितावित्यर्थः, महेन्द्रस्य ध्वजाविव कृतौ दृष्टावित्यर्थः । इवक्लितयान्वयी ॥ १७ ॥

रा० टी०–ताविति । संप्रचलितौ सर्वेषां बुद्धिचालकौ तौ रामलक्ष्मणौ मर्मभेदनकर्शिताविव सन्तौ जगत्यां निपेततुः तादृक्स्वावस्थादर्शनेन वानरान्निपातयामासतुः ॥ १८ ॥

गो० टी०–तत इति । शरशल्याचितौ शराग्रप्रोतौ कृतौ रज्जुमुक्तौ मुक्तरज्जू अत एव प्रकम्पितौ महेन्द्रस्य ध्वजाविव कृतौ जगत्यां भूमौ जगतीपती-भूपती ॥ १७ ॥ १८ ॥

---

१ प्रावृताविति गो. रा. पाठः । २ भूय इति गो. पाठः । ३ वदीक्षितुमिति गो. पाठः । ४ उभाविति गो. पाठः । ५ चलिताविति गो. रा.पाठः ।

तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ । शरवेष्टितसर्वाङ्गावार्तौ परमपीडितौ ॥ १९ ॥
नह्यविद्धं तयोर्गात्रे बभूवाङ्गुलमन्तरम् । नानिर्विण्णं न चाध्वस्तमाकराग्रादजिह्मगैः ॥ २० ॥
तौ तु क्रूरेण निहतौ रक्षसा कामरूपिणा । असृक्सुस्रुवतुस्तीव्रं जलं प्रस्रवणाविव ॥ २१ ॥
पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः । क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ॥ २२ ॥
रुक्मपुङ्खैः प्रसन्नाग्रैः रजोगतिभिराशुगैः । नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि ॥
विव्याध वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा ॥ २३ ॥
स वीरशयने शिश्येऽविज्यमाविध्य कार्मुकम् । भिन्नमुष्टिपरीणाहं त्रिनतं रुक्मभूषितम् ॥ २४ ॥

---

१९ ] ति० टी०—वीरशयने युद्धभूमौ शरवेष्टितसर्वाङ्गौ शरभूतसर्पवेष्टितसर्वगात्रौ ॥ १९ ॥

रा० टी०—ताविति । वीरशयने शयानौ रुधिरेण मायापातितरक्तेन उक्षितौ सिक्तौ तौ आर्ताविव परमपीडिताविव च बभूवतुरिति शेषः । आर्तपरमपीडितशब्दौ आचारक्विबन्तप्रकृतिककर्तृक्विबन्तौ ॥ १९ ॥

गो० टी०—ताविति । वीराः शेरतेऽस्मिन्निति वीरशयनं रणभूमिः शरतल्पं वा शरवेष्टितसर्वाङ्गौ शरभूतसर्पवेष्टितसर्वाङ्गौ आर्तौ मनःपीडावन्तौ परमपीडितौ शारीरकपीडावन्तौ । अभूतामिति शेषः ॥ १९ ॥

२० ] ति० टी०—अविद्धं वेधरहितम् । अङ्गुलमङ्गुलप्रमाणमन्तरमवकाशो नाभूत् । आकराग्रात्कराग्रमभिव्याप्याध्वस्तमक्षोभितम् । 'अस्तब्धम्' इति पाठे चेष्टावत् । अजिह्मगैर्बाणैरनिर्विण्णमविदारितं चाङ्गं नाभूत् ॥ २० ॥

रा० टी०—नेति । अन्तरं प्राकृतविलक्षणमित्यर्थः, अत एव अविद्धं नित्यं भेदनसंसर्गरहितमानिर्विण्णं नित्यं स्वजनानुरागि तयोर्गात्रम् आकराग्रात् कराग्रमभिव्याप्य अजिह्मगैः शरैः आस्तब्धं वस्तुत ईषदपि गृहीतम् अङ्गुलम् अङ्गुलपरिमितमपि न बभूव न बभूव न बभूव ॥ २० ॥

गो० टी०—न हीति । अङ्गुलम् अङ्गुलिप्रमाणम् । अथवा अङ्गुलिरङ्गुल मिति त्रिकाण्डीस्मरणात् अङ्गुलिप्रमाणवाच्यङ्गुलशब्दोकारान्तोऽप्यस्ति । तयोर्गात्रमङ्गुलमात्रेऽप्यवकाशे अविद्धं नाभूदिति भावः । यद्वा तयोर्गात्रम् अङ्गुलम् अङ्गुलसंबन्ध्यप्यन्तरमवकाशः । आकराग्रात्कराग्रपर्यन्तम् । अजिह्मगैः सर्परूपशरैः । आविद्धं न बभूव । अस्तब्धम् अनिश्चलं च न बभूव । अनिर्भिन्नं च न बभूव ॥ २० ॥

२१ ] ति० टी०—प्रस्रवणौ प्रस्रवणाख्यपर्वताविव ॥ २१ ॥

रा० टी०—ताविति । क्रूरेण रक्षसा निहतौ ताडितौ तौ असृक्मायाद्यष्टिप्रभवरुधिरं प्रस्रवणौ जलमिव सुस्रुवतुः पातयामासतुः ॥ २१ ॥

गो० टी०—ताविति । तीव्रम् अत्यन्तम् । प्रस्रवणौ गिरिविशेषौ ॥ २१ ॥

२२ ] ति० टी०—इन्द्रजित्त्वं कुतस्तत्राह—येनेति ॥ २२ ॥

रा० टी०—पपातेति । येन पुरा शक्रो विनिर्जितस्तेनेन्द्रजिता मार्गणैर्बाणैर्मर्मस्वप्यविद्धो रामः प्रथमं पपात । एतेन रामस्य मर्यादापालकत्वं सूचितं प्रथममित्यनेन मस्कर्तृकपतनदर्शनमन्तरा लक्ष्मणो न पतिष्यतीति हेतुर्व्यञ्जितः ॥ २२ ॥

गो० टी०—पपातेति । इन्द्रजित्त्वं निर्वक्ति—येनेति ॥ २२ ॥

२३ ] ति० टी०—रजोगतिभिर्वायुना विस्तीर्यमाणरजोवन्नीरन्ध्रं संपतद्भिः । अर्धनाराचैरर्धभागे नाराचतुल्यैः अञ्जलिकैरञ्जल्याकारमुखैः वत्सदन्तादयस्तत्तदाकाराः ॥ २३ ॥

रा० टी०—बाणस्वरूपं निर्दिशन्नाह—रुक्मेति । प्रसन्नानि स्वच्छानि अग्राणि येषां रजसामिव गतिः रन्ध्ररहितेऽपि गमनं येषां तैर्नाराचैः बाणविशेषैः अर्धनाराचैः अर्धभागे नाराचसदृशैश्च अञ्जलिकैः अञ्जलिसदृशमुखैर्वत्सदन्तैर्वत्सदन्ताद्याकारैश्च भल्लैर्विव्याध सार्धश्लोक एकान्वयी ॥ २३ ॥

गो० टी०—नागास्त्रप्रयोगानन्तरं केवलशरैरपि विव्याधेत्याह—रुक्मपुङ्खैरित्यादिना । प्रसन्नाग्रैः उन्मृष्टाग्रैरित्यर्थः प्रहर्तुराकाशस्थत्वेनाधोगतिभिः आशुगैः वक्ष्यमाणविशेषभिन्नैः नाराचैः ऋजुवृत्ताग्रैः अर्धनाराचैः मध्ये भिन्ननाराचतुल्यैः भल्लैः परश्वधाग्रैः अञ्जलिकैः अञ्जलिसदृशाग्रैः वत्सदन्तैः वत्सदन्तसदृशाग्रैः सिंहदंष्ट्रैः सिंहदंष्ट्रासदृशाग्रैः क्षुरैः क्षुराग्रैः अत्रेन्द्रजिदित्यध्याहार्यम् ॥ २३ ॥

२४ ] ति० टी०—आविध्य त्यक्त्वा । भिन्नो मुष्टिपरीणाहो मुष्टिप्रदेशो मुष्टिग्रहणं वा यस्य । त्रिषु स्थानेषु निम्नम् ॥ २४ ॥

रा० टी०—स इति । अविज्यं ज्यासहितमित्यर्थः, भिन्नः प्राकृतविलक्षणः मुष्टिपरीणाहः मुष्टिग्रहणदेशो यस्य तत् त्रिषु देशेषु नतं कार्मुकम् आविध्य दृढं गृहीत्वा वीरशयने वीरोचितदेशे शिश्ये तस्थौ ॥ २४ ॥

गो० टी०—स इति । भिन्नमुष्टिपरीणाहं शिथिलमुष्टिबन्धम् । भिन्नतन्त्रिषु स्थानेषु पार्श्वयोर्मध्ये च नतम् । रुक्मभूषितं रुक्मपट्टबन्धम् । विज्यं शरसंधानप्रसङ्गाभावाद्विगतज्यम् । कार्मुकं धनुः आदाय अवलम्ब्य । वीरशयने रणभूमौ शिश्ये ॥ २४ ॥

---

१ भिन्नमिति गो. पाठः । २ अस्तब्धमिति गो. रा. पाठः । ३ अथ इति गो. पाठः । ४ आदायेति गो. पाठः ।

बाणपातान्तरे रामं [1]पतितं पुरुषर्षभम् । स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् ॥ २५ ॥
रामं कमलपत्राक्षं [2]शरण्यं रणतोषिणम् । शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले ॥ २६ ॥
हरयश्चापि तं दृष्ट्वा संतापं परमं गताः । [3]शोकार्ताश्चुक्रुशुर्घोरमश्रुपूरितलोचनाः ॥ २७ ॥
बद्धौ तु [4]तौ वीरशये शयानौ [5]ते वानराः संपरिवार्य तस्थुः ।
समागता वायुसुतप्रमुख्या विषादमार्ताः परमं च जग्मुः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ।

नागपाशबद्धौ राघवौ वीक्ष्य शत्रुं जिघांसवोऽपि हरयो नापश्यन् विभीषणस्तथापि मायाच्छन्नमिन्द्रजितं दृष्ट्वा भयग्रस्तं सुग्रीवं नायमुद्वेगकालो न भेतव्यमित्याद्युपदिदेश इन्द्रजित्तु राघवौ मृतौ ज्ञात्वा सहर्षं पुरं प्रविश्य पित्राभिनन्दितश्च ।

ततो द्यां पृथिवीं चैव वीक्षमाणा वनौकसः । ददृशुः संततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १ ॥
वृष्ट्वेवोपरते देवे कृतकर्मणि राक्षसे । आजगामाथ तं देशं ससुग्रीवो विभीषणः ॥ २ ॥
[6]नीलश्च द्विविदो मैन्दः सुषेणः कुमुदोऽङ्गदः । तूर्णं हनुमता सार्धमन्वशोचन्त राघवौ ॥ ३ ॥
अचेष्टौ मन्दनिःश्वासौ [7]शोणितेन परिप्लुतौ । शरजालाचितौ स्तब्धौ शयानौ शरतल्पगौ ॥ ४ ॥

२५-२८] ति० टी०—बाणपातान्तरे शरतल्पमध्ये २५-२८
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रा० टी०—बाणेति । बाणपातान्तरे पतितबाणमध्ये पातितं स्थापितं रामं लक्ष्मणो दृष्ट्वा जीविते लोकपालने निराशोऽभवत् ॥ २५ ॥

गो० टी०—बाणेति । बाणपातान्तरे शरतल्पे ॥ २५ ॥

रा० टी०—राममिति । धरणीतले पतितं निश्चलतया स्थितमित्यर्थः, रामं दृष्ट्वा शुशोच ॥ २६ ॥

गो० टी०—राममिति । शरबन्धपरिक्षतम् । बन्धः क्षतश्चेति द्वयमत्र शरकार्यमुच्यते ॥ २६ ॥

रा० टी०—हरय इति । तं रामं दृष्ट्वा परमं संतापं गताः अत एव शोकार्ताः हरयः चुक्रुशुः ॥ २७ ॥

गो० टी०—हरयश्चेत्यर्धम् ॥ २७ ॥

रा० टी०—बद्धाविति । बद्धौ स्वाज्ञायां निखिलजगद्बन्धकौ तौ रामलक्ष्मणौ आर्ताः राक्षसस्वरूपादर्शनेनोदासीनाः वायुसुतप्रमुख्याः संपरिवार्य तस्थुः परमं विषादं जग्मुश्च ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

गो० टी०—बद्धाविति । आदौ नागपाशबद्धौ । अथ शयानौ तु तौ वीरौ संपरिवार्य वायुसुतादयो वानरास्तस्थुः विषादं दुःखं जग्मुश्चेत्यन्वयः ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकीरीटाख्याने युद्धकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४९ ॥

१ ] ति० टी०—द्यां पृथिवीं च वीक्षमाणाः अतिभयादिति शेषः । संततौ व्याप्तौ ॥ १ ॥

रा० टी०—वानराणां वृत्तान्तमेवाह—तत इत्यादिभिः । वीक्षमाणाः राक्षसोद्देशेनावलोकयन्तो वनौकसो वानराः बाणैः सन्ततौ व्याप्तौ रामलक्ष्मणौ ददृशुः ॥ १ ॥

गो० टी०—अथ पूर्वसर्गोक्तमनुवदति—तत इत्यादि । द्याम् आकाशम् । सन्ततौ व्याप्तौ ॥ १ ॥

२-४ ] ति० टी०—देवे इन्द्रे वृष्ट्वेव कृतकर्मणि तस्मिन्राक्षस उपरते सति ॥ २-४ ॥

रा० टी०—वृष्ट्वेति । अदेवे देवविरोधिनि कृतकर्मणि राक्षसे उपरते बाणप्रक्षेपात् किंचिन्निवृत्ते सति दृष्ट्वा राममिति शेषः तं देशं ससुग्रीवो विभीषणः आजगाम ॥ २ ॥

गो० टी०—वृष्ट्वेति । वृष्ट्वा उपरते देव इव स्थिते राक्षसे । कृतकर्मणि कृतशरवर्षरूपकर्मणि सति तं देशं रामस्थानम् ॥ २ ॥

रा० टी०—नील इति । हनूमता सार्धं नीलप्रभृतयः अचेष्टौ व्यापाररहितौ मन्दनिःश्वासौ तत्त्वेन प्रतीयमानौ शरजालाचितौ मायिकबाणसमूहावृतौ शरतल्पगाविव स्तब्धौ निश्चलतया स्थितौ अत एव शयानाविव शरतल्पगशयानशब्दावाचारक्विबन्तौ राघवौ अन्वशोचन्त । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—नीलेति । नीलादयः सुग्रीवात्पूर्वमेवागताः ॥ ३ ॥

गो० टी०—अचेष्टावित्यादिचतुःश्लोक्येकान्वया ॥ अचेष्टावत एव स्तब्धौ निश्चलौ । मध्ये मध्ये मन्दनिश्वासौ मध्ये मध्ये निश्चेष्टौ । कदाचित्सर्पाविव निःश्वसन्तौ कदाचिन्मन्दचे-

१ पतितमिति गो. पाठः । २ शरबन्धपरिक्षतमिति गो.पाठः । ३ अर्धमेतत् गो. नास्ति । ४ वीरौ पतिताविति गो.पाठः । ५ ताविति गो.पाठः । ६ नीलद्विविदमैन्दाश्च सुषेणकुमुदाङ्गदाः इति गो. पाठः । ७ शोणितौघेति गो. पाठः । ८ तल्पयोरिति गो. पाठः ।

निः श्वसन्तौ यथा सर्पौ निश्चेष्टौ [1]दीनविक्रमौ । रुधिरस्रावदिग्धाङ्गौ [2]तपनीयाविव ध्वजौ ॥ ५ ॥
तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ । यूथपैः [3]स्वैः परिवृतौ [4] बाष्पव्याकुललोचनैः ॥ ६ ॥
राघवौ पतितौ दृष्ट्वा शरजालसमन्वितौ । बभूवुर्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७ ॥
अन्तरिक्षं निरीक्षन्तो दिशः सर्वाश्च वानराः । न चैनं मायया छन्नं ददृशू रावणिं रणे ॥ ८ ॥
तं तु मायाप्रतिच्छन्नं माययैव विभीषणः । वीक्षमाणो ददर्शाग्रे भ्रातुः पुत्रमवस्थितम् ॥
तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे । ९ ॥
ददर्शान्तर्हितं वीरं वरदानाद्विभीषणः । तेजसा यशसा चैव विक्रमेण च [6]संयुतः ॥ १० ॥
इन्द्रजित्त्वात्मनः कर्म तौ शयानौ समीक्ष्य च । उवाच परमप्रीतो हर्षयन्सर्वराक्षसान् ॥ ११ ॥
दूषणस्य च हन्तारौ खरस्य च महाबलौ । सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १२ ॥
नेमौ मोक्षयितुं शक्यावेतस्मादिषुबन्धनात् । सर्वैरपि समागम्य सर्षिसङ्घैः सुरासुरैः ॥ १३ ॥
यत्कृते चिन्तयानस्य शोकार्तस्य पितुर्मम । अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी ॥ १४ ॥
कृत्स्नेयं यत्कृते लङ्का नदी वर्षास्विवाकुला । सोऽयं मूलहरोऽनर्थः सर्वेषां शमितो मया ॥ १५ ॥
रामस्य लक्ष्मणस्यैव सर्वेषां च वनौकसाम् । विक्रमा निष्फलाः सर्वे यथा शरदि तोयदाः ॥ १६ ॥

---

ष्टितौ च । अत्र पुनरुक्तयो दुःखातिरेकात् । यद्वा अचेष्टाविति श्लोकः पूर्वश्लोकेनान्वितः ॥ ४—७ ॥

५–७] ति० टी०—रुधिरस्य स्रावः प्रवाहस्तेन दिग्धाङ्गौ ५–७

रा० टी०—तदेव भङ्ग्यन्तरेणाह—निश्वसन्ताविति । सर्पाविव निश्वसन्तौ निश्चेष्टौ व्यापाररहितौ दीनार्थं विक्रमो ययोः तपनीयौ स्वर्णमयौ ध्वजाविव मन्दं चेष्टितं वानराणां चेष्टा याभ्यां तौ बाष्पव्याकुललोचनैः यूथपैः परिवृतौ शरजालसमन्वितौ राघवौ दृष्ट्वा सर्वे वानरा व्यथिताः बभूवुः मायया सर्वं संभवतीति मन्दनिःश्वासौ निश्वसन्तौ यथा सर्पौ इत्यनयोर्न विरोधः । श्लोकत्रयमेकान्वयि ॥ ५–७ ॥

८] ति० टी०—मायया छन्नमेनं रावणिं वानरा न ददृशुः॥८॥

रा० टी०—अन्तरिक्षमिति । अन्तरिक्षं सर्वा दिशश्च निरीक्षन्तो वानराः मायया छन्नं रावणिं नैव ददृशुः ॥ ८ ॥

गो० टी०—अन्तरिक्षमिति । स्पष्टः ॥ ८ ॥

९ ] ति० टी०—किं तु मायाप्रतिच्छन्नं तं भ्रातुः पुत्रं रावणिं विभीषण एव मायया ददर्श ॥ ९ ॥

रा० टी०—तमिति । विभीषणः मायाप्रतिच्छन्नं भ्रातुः पुत्रं मायया तत्कारणीभूतविद्ययैव ददर्श ॥ ९ ॥

गो० टी०—तं त्विति । माययैवेति । अन्तर्हितवस्तुदर्शनहेतुभूतया विद्ययेत्यर्थः ॥ ९ ॥

१० ] ति० टी०—वरदानाद्ब्रह्मवरदानलब्धयान्तर्धानविद्यान्तर्हितम् ॥ १० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तमिति । वरदानात् अन्तर्हितम् अत एव अप्रतिमकर्माणं तमिन्द्रजितं तेजआदिभिः संयुतो विभीषणो ददर्श सार्धश्लोकएकान्वयी ॥ १० ॥

गो० टी०—तमिति । अप्रतिद्वन्द्वं निःसमम् । वरदानादन्तर्हितमित्यन्वयः । तेजसेत्यर्थं पूर्वेणान्वेति ॥ १० ॥ ११ ॥

११–१३ ] ति० टी०—आत्मनः कर्म समीक्ष्य शयानौ तौ च समीक्ष्य ॥ ११–१३ ॥

रा० टी०—इन्द्रजिदिति । इन्द्रजित् शयानौ तौ समीक्ष्य आत्मनः कर्मोवाच ॥ ११ ॥

गो० टी०—इन्द्रजित्त्विति । आत्मनः कर्म नागास्त्रबन्धरूपम् । शयानौ तौ च वीक्ष्येत्यन्वयः ॥ १२ ॥

रा० टी०—तदाकारमाह—दूषणस्येति । दूषणादेर्हन्तारौ रामलक्ष्मणौ मामकैर्बाणैः सादितौ हिंसितप्रायौ ॥ १२ ॥

गो० टी०—दूषणस्येति । सादितौ पश्यतेति शेषः ॥१३॥

रा० टी०—तत्र ज्ञापकमाह—नेति । इषुबन्धनात् सुरासुरैरपि मोक्षयितुम् इमौ न शक्यौ ॥ १३ ॥

गो० टी०—नेमाविति । समागम्य सङ्घीभूय ॥ १४ ॥

१४–१६ ] ति० टी०—यत्कृते ययो राघवयोर्निमित्तम् । तद्भयेनेति यावत् । गात्रैः शयनमस्पृष्ट्वैव त्रियामा रात्रिर्याति । अनिद्र एव निशाः क्षपयतीत्यर्थः ॥ १४–१६ ॥

रा० टी०—यदिति । यत्कृते यदर्थं चिन्तयानस्य मम पितुर्गात्रैः शयनं शय्यामस्पृष्ट्वैव शर्वरी रात्रिर्याति यत्कृते च वर्षासु नदीव इयं लङ्का आकुला व्याकुला सः सर्वेषामस्माकं मूलहरः सैन्यादिविघातकः अत एव अनर्थः सर्वार्थनिवर्तकः अयं रामो मया शमितः । अर्धचतुष्टयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—यदिति । यत्कृते यन्निमित्तम् । गात्रैः शयनमस्पृष्ट्वा चिन्तयानस्यैव मम पितुः त्रियामा याति । यत्पौरुषभयान्मम पिता सर्वयामेकस्मिन्नपि यामे न निद्रातीत्यर्थः॥१५॥

---

१ मन्देति गो. पाठः । २ तापनीयाविति गो. पाठः । ३ तैरिति गो. पाठः । ४ समावृताविति गो. पाठः । ५ अथेति गो. पाठः । ६ संयुतमिति गो. पाठः । ७ नैर्ऋतानिति गो. पाठः । ८ निहत इति गो. पाठः । ९ अपीति गो. पाठः ।

एवमुक्त्वा तु तान्सर्वान्राक्षसान्परिपश्यतः । यूथपानपि तान्सर्वांस्ताडयत्स च रावणिः ॥ १७ ॥
नीलं नवभिराहत्य मैन्दं सद्विविदं तथा । त्रिभिस्त्रिभिरमित्रघ्नस्तताप परमेषुभिः ॥ १८ ॥
जाम्बवन्तं महेष्वासो विद्ध्वा बाणेन वक्षसि । हनूमतो वेगवतो विससर्ज शरान्दश ॥ १९ ॥
गवाक्षं शरभं चैव तावप्यमितविक्रमौ । द्वाभ्यां द्वाभ्यां महावेगो विव्याध युधि रावणिः ॥ २० ॥
गोलाङ्गूलेश्वरं चैव वालिपुत्रमथाङ्गदम् । विव्याध बहुभिर्बाणैस्त्वरमाणोऽथ रावणिः ॥ २१ ॥
तान्वानरवरान्भित्त्वा शरैरग्निशिखोपमैः । ननाद बलवांस्तत्र महासत्त्वः स रावणिः ॥ २२ ॥
तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् । प्रजहास महाबाहुर्वचनं चेदमब्रवीत् ॥ २३ ॥
शरबन्धेन घोरेण मया बद्धौ चमूमुखे । सहितौ भ्रातरावेतौ निशामयत राक्षसाः ॥ २४ ॥
एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः । परं विस्मयमापन्नाः कर्मणा तेन हर्षिताः ॥ २५ ॥
विनेदुश्च महानादान्सर्वे ते जलदोपमाः । हतो राम इति ज्ञात्वा रावणिं समपूजयन् ॥ २६ ॥
निष्पन्दौ तु तदा दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । वसुधायां निरुच्छ्वासौ हतावित्यन्वमन्यत ॥ २७ ॥
हर्षेण तु समाविष्ट इन्द्रजित्समितिंजयः । प्रविवेश पुरीं लङ्कां हर्षयन्सर्वनैर्ऋतान् ॥ २८ ॥
रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते । सर्वाणि चाङ्गोपाङ्गानि सुग्रीवं भयमाविशत् ॥ २९ ॥

---

गो० टी०–कुलघ्नेति । लङ्का लङ्कास्थजनः । आकुला नदीपक्षे आविलेत्यर्थः । लङ्कापक्षे व्यग्रेत्यर्थः । सर्वेषामस्माकं मूलहरः अनर्थः अनर्थकरो रामः ॥ १६ ॥

रा० टी०–रामस्येति । शरदि तोयदा मेघा इव रामादीनां विक्रमाः निष्फलाः ॥ १६ ॥

गो० टी०–रामस्येति । विक्रमाः सेतुबन्धनादयः ॥१७॥

१७–१८ ] ति० टी०–यूथपान् । वानराणामिति शेषः । ताडयदताडयत् ॥ १७ ॥ १८ ॥

रा० टी०–एवमिति । राक्षसान् एवमुक्त्वा परिपश्यतो यूथपानपि रावणिस्ताडयत् अताडयत् ॥ १७ ॥

गो० टी०–एवमिति । परिपार्श्वतः समीपतः ॥ १८ ॥

रा० टी०–तत्प्रकारमाह—नीलमित्यादिभिः । नवभिः परमेषुभिर्नीलमाहत्य सद्विविदं मैन्दं त्रिभिस्त्रिभिराहत्य तताप१८

गो० टी०–नीलमित्याति । हनूमतः हनूमदर्थमित्यर्थः । सम्बन्धसामान्ये षष्ठी । गोलाङ्गूलेश्वरं गवाक्षम् ॥ १९–२२ ॥

१९–२०] ति० टी०–हनूमतः । उपरीति शेषः॥१९॥२०॥

रा० टी०–जाम्बवन्तमिति । महेष्वास इन्द्रजित् जाम्बवन्तं वक्षसि बाणेन विद्ध्वा हनूमतो वक्षसि दश शरान् विससर्ज१९

रा० टी०–गवाक्षमिति । रावणिः अमितविक्रमौ गवाक्षं शरभं च द्वाभ्यां द्वाभ्यां शराभ्यां विव्याध ॥ २० ॥

२१–२३] ति० टी०–त्वरमाणस्त्वरां वेगं कुर्वन्२१–२३

रा० टी०–गोलाङ्गूलेति । गोलाङ्गूलेश्वरं वालिपुत्रमङ्गदं रावणिर्विव्याध ॥ २१ ॥

रा० टी०–तानिति । रावणिर्वानरवरान् भित्त्वा ननाद२२

गो० टी०–तानिति । स्पष्टः ॥ २३ ॥

रा० टी०–तानिति । वानरान् बाणौघैरर्दयित्वा त्रासयित्वा च प्रजहास अब्रवीच्च ॥ २३ ॥

गो० टी०–तानर्दयित्वेति । स्पष्टः ॥ २४ ॥

२४–२८ ] ति० टी०–निशामयत पश्यत ॥ २४–२८ ॥

रा० टी०–तदाकारमाह–शरेत्यादिभिः । घोरेण शरबन्धेन चमूमुखे संग्राममध्ये बद्धौ भ्रातरौ निशामयत पश्यत ॥ २४ ॥

गो० टी०–शरबन्धेनेति । निशामयत पश्यत ॥ २५ ॥

रा० टी०–एवमिति । एवमुक्ताः तेन कर्मणा परमविस्मयमापन्नाश्च राक्षसा हर्षिताः बभूवुरिति शेषः ॥ २५ ॥

गो० टी०–एवमिति । कूटयोधिनः कपटयोधिनः ॥ २६॥

रा० टी०–विनेदुरिति । रामो हत इति ज्ञात्वा ते राक्षसाः महानादान् विनेदुः रावणिं समपूजयंश्च ॥ २६ ॥

गो० टी०–विनेदुश्चेति । स्पष्टः ॥ २७ ॥

रा० टी०–निष्पन्दाविति । निष्पन्दौ क्रियारहितौ वसुधायां पतिताविति शेषः, रामलक्ष्मणौ दृष्ट्वा हतौ इति अन्वमन्यत इन्द्रजिदित्यपकृष्यते ॥ २७ ॥

गो० टी०–निष्पन्दाविति । स्पष्टः ॥ २८ ॥

रा० टी०–हर्षेणेति । इन्द्रजित् नैर्ऋतान् हर्षयन् सन् लङ्कां प्रविवेश ॥ २८ ॥

गो० टी०–हर्षेण त्विति । स्पष्टः ॥ २९ ॥

२९ ] ति० टी०–तयोः शरीरे सायकैश्चिते सर्वाण्यङ्गान्युपाङ्गानि च सायकैश्चितानि दृष्ट्वा ॥ २९ ॥

रा० टी०–रामेति । सायकैश्चिते व्याप्ते रामलक्ष्मणयोः शरीरे चितान्यङ्गोपाङ्गानि च दृष्ट्वा सुग्रीवं भयमाविशत् ॥२९॥

गो० टी०–रामलक्ष्मणयोरिति । शरीरे इति प्रत्येका-

---

१ पार्श्वत इति गो. पाठः । २ ताडयामासेति गो. पाठः । ३ चेति गो. पाठः । ४ प्रवरेति गो. पाठः । ५ द्वाविति गो. पाठः । ६ तेजसाविति गो. पाठः । ७ आजघ्नुरिति गो. पाठः । ८ सर्वत इति गो. पाठः । ९ तावुभाविति गो. पाठः । १० राक्षसानिति गो. पाठः ।

तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः । सबाष्पवदनं दीनं क्रोधव्याकुललोचनम् ॥
अलं त्रासेन सुग्रीव बाष्पवेगो निगृह्यताम् ॥ ३० ॥
एवं प्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः । सभाग्यशेषतास्माकं यदि वीर भविष्यति ॥ ३१ ॥
मोहमेतौ प्रहास्येते महात्मानौ महाबलौ । पर्यवस्थापयात्मानमनाथं मां च वानर ॥
सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् ॥ ३२ ॥
एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना । सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः ॥ ३३ ॥
ततः सलिलमादाय विद्यया परिजप्य च । सुग्रीवनेत्रे धर्मात्मा प्रममार्ज विभीषणः ॥ ३४ ॥
विमृज्य वदनं तस्य कपिराजस्य धीमतः । अब्रवीत्कालसंप्राप्तमसंभ्रान्तमिदं वचः ॥ ३५ ॥
न कालः कपिराजेन्द्र वैक्लव्यमवलम्बितुम् । अतिस्नेहोऽपि कालेऽस्मिन्मरणायोपकल्पते ॥ ३६ ॥

---

पक्षया द्विवचनम् अङ्गानि करादीनि उपाङ्गानि अङ्गुल्यादीनि । अत्रापि शरैश्चितानीति योज्यम् । दृष्ट्वा स्थितं इति सुग्रीवो विशेषणीयः ॥ ३० ॥

३० ] ति० टी०–सबाष्पवदनं बाष्पसहितवदनम् ॥ ३० ॥

रा० टी०–तमिति । परित्रस्तं तादृशरामदर्शनेन भीतम् अत एव सबाष्पवदनं क्रोधेन राक्षसविषयककोपेन व्याकुले लोचने यस्य तं वानरेन्द्रं विभीषण उवाच ॥ ३० ॥

रा० टी०–तदाकारमाह—अलमित्यादिभिः । एवं प्रायाणि एतादृशानि मायामयानीत्यर्थः, यानि युद्धानि तत्र विजयः मायिककर्तृकपराभवो नैष्ठिकः निश्चितो न माययापीदृशदर्शनसंभवादिति तात्पर्यम् अतः त्रासेनालं न कर्तव्य इत्यर्थः अत एव बाष्पवेगो निगृह्यताम् ॥ ३१ ॥

गो० टी०–तमिति । स्पष्टः ॥ ३१ ॥

गो० टी०–अलमिति । एवंप्रायाणि एवं विधानि । प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपीति विश्वः । नैष्ठिकः नियतः ३२

गो० टी०–सशेषभाग्यतेति । अस्माकं भाग्यशेषं यद्यस्तीत्यर्थः ॥ ३३ ॥

३१ ] ति० टी०–एवंप्रायाणि एवंविधः प्रायो बाहुल्यं येषां तानि प्रायेणैवंविधानीत्यर्थः नैष्ठिको नित्यैकान्तः भाग्यशेषेण सहिताः सभाग्यशेषास्तेषां भावस्तत्ता भाग्यशेषसाहित्यम् । तद्वैशिष्ट्यं यद्यस्माकमित्यर्थः ॥ ३१ ॥

रा० टी०–सेति । अस्माकं सभाग्यशेषता भाग्यशेषेण सहिताः सभाग्यशेषाः तेषां भावः यदि भविष्यति तदा एतौ महाबलौ मोहं प्रहास्येते त्यक्ष्यतः ॥ ३२ ॥

गो० टी०–पर्यवस्थापयेति । पर्यवस्थापयात्मानं मनो निश्चलं कुरु । स्वात्मपर्यवस्थापनेन मां च पर्यवस्थापय । धैर्यं कारयेत्यर्थः पर्यवस्थापने हेतुमाह—सत्येति । मृत्युकृतम् अपमृत्युकृतम् ॥ ३४ ॥

३२-३३ ] ति० टी०–अनाथमशरणं मां च पर्यवस्थापयाश्वासय । तव तु स्वतन्त्रं राज्यमप्यस्ति, अहं त्वगतिरेवेति भावः ॥ ३२ ॥ ३३ ॥

रा० टी०–परीति । सत्यधर्माभिरक्तानां नित्यसत्यधर्मे निरतानां जनानां मृत्युकृतं भयं नास्ति अतः आत्मानं मां च पर्यवस्थापय स्वास्थ्यं प्रापय तव स्वास्थ्येनैव ममापि स्वास्थ्यं भविष्यतीति तात्पर्यम् ॥ ३३ ॥

रा० टी०–एवमिति । विभीषणः क्लिन्नेन आर्द्रेण पाणिना सुग्रीवस्य नेत्रे प्रममार्ज अश्रूणि निवर्तयामासेत्यर्थः ॥ ३४ ॥

गो० टी०–एवमिति । जलक्लिन्नेन जलसिक्तेन ॥ ३५ ॥

३४ ] ति० टी०–ततः सामान्यतः प्रमार्जनानन्तरम् । विद्यया तिरस्करणीविद्या तिरस्कारकविद्यया परिजप्य 'परिवीक्ष्य' इति पाठेऽप्ययमेवार्थः । राक्षसमायापरिज्ञानेन धैर्यसंपादनं चैतत्प्रमार्जनस्य फलम् वस्तुतः 'ततः सलिलम्' इति श्लोको बहुपुस्तकेषु नास्तीति प्रायेण प्रक्षिप्तोऽयम् तेनेन्द्रजितं ददर्शेति तत्कार्यप्रकाशकोत्तरवाक्याभावात् ॥ ३४ ॥

रा० टी०–तत इति । ततोऽनन्तरं सलिलमादाय विद्यया शोकनिवारकमन्त्रविशेषेण परिजप्य अभिमन्त्र्य च सुग्रीवस्य नेत्रे प्रममार्ज ॥ ३५ ॥

गो० टी०–एवममाङ्गल्यनिवृत्त्यर्थं श्रान्तिनिवृत्त्यर्थं वा नेत्रे प्रमृज्य राक्षसमायापरिज्ञानेनाप्यस्य धैर्यसंपादनाभिप्रायेण विद्याभिमन्त्रितजलेनापि ममार्जेत्याह–तत इति । विद्यया राक्षसमायादर्शनहेतुमन्त्रेण परिजप्य अभिमन्त्र्य ॥ ३६ ॥

३५ ] ति० टी०–कालसंप्राप्तं कालौचित्येन प्राप्तम् ॥ ३५ ॥

रा० टी०–विमृज्येति । कपिराजस्य वदनं विमृज्य कालसंप्राप्तं तत्कालयोग्यम् असंभ्रान्तं संभ्रान्तिनिवर्तकमिदं वचोऽब्रवीत् ॥ ३६ ॥

गो० टी०–प्रमृज्येति । कालसंप्राप्तं तत्कालोचितम् असंभ्रमम् अव्याकुलमिति क्रियाविशेषणम् ॥ ३७ ॥

३६ ] ति० टी०–अतिस्नेहोऽप्यतिस्नेहमूलरोदनादिव्यापारोऽपि अस्मिन्काल ईदृशे विषमकाले ॥ ३६ ॥

रा० टी०–तदाकारमाह—नेत्यादिभिः । वैक्लव्यमवलम्बितुं प्रकटयितुमयं कालो न अत एव अतिस्नेहः तत्सूचक-

---

१ शोकेति गो. पाठः । २ स इति गो. पाठः । ३ प्रेति गो. पाठः । ४ असममिति गो. पाठः । ५ मनुवर्तितुमिति गो. पाठः ।

तस्मादुत्सृज्य वैक्लव्यं सर्वकार्यविनाशनम् । हितं रामपुरोगाणां सैन्यानामनुचिन्तय ॥ ३७ ॥
अथ वा रक्ष्यतां रामो यावत्संज्ञाविपर्ययः । लब्धसंज्ञौ हि काकुत्स्थौ भयं नौ व्यपनेष्यतः ॥ ३८ ॥
नैतत्किंचन रामस्य न च रामो मुमूर्षति । नह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम् ॥ ३९ ॥
तस्मादाश्वासयात्मानं बलं चाश्वासय स्वकम् । यावत्सैन्यानि सर्वाणि पुनः संस्थापयाम्यहम् ॥ ४० ॥
एते हि फुल्लनयनास्त्रासादागतसाध्वसाः । कर्णे कर्णे प्रकथिता हरयो हरिसत्तम ॥ ४१ ॥
मां तु दृष्ट्वा प्रधावन्तमनीकं संप्रहर्षितम् । त्यजन्तु हरयस्त्रासं भुक्तपूर्वामिव स्रजम् ॥ ४२ ॥

रोदनाद्यपि अस्मिन्नकाले अनुचितसमये मरणाय उपकल्पते प्रापयति ॥ ३७ ॥

गो० टी०–न काल इति। वैक्लव्यम् अधैर्यम् । किं करोमि अतिस्नेह एवं बाधत इत्यत्राह–अतिस्नेहोऽपीति ॥ ३८ ॥

३७ ] ति० टी०–यदेवमतः—तस्मादित्यादि । हितं तत्समाश्वासनम् ॥ ३७ ॥

रा० टी०–तस्मादिति । तस्मादुक्तहेतोः वैक्लव्यम् उत्सृज्य त्यक्त्वा सैन्यानां हितमनुचिन्तय ॥ ३८ ॥

गो० टी०–एवं त्यक्तव्यमुक्त्वा कर्तव्यमुपदिशति—तस्मादिति । वैक्लव्यमिति स्नेहस्याप्युपलक्षणम् । रामपुरोगाणां रामप्रभृतीनाम् । रामशरण्यानामित्यर्थः ॥ ३९ ॥

३८ ] ति० टी०–यदि तव सेनासमाश्वासने धैर्यं नास्ति तदा तदहं करिष्यामि, त्वया तु रामो रक्षणीय इत्याह–अथवेति । संज्ञाविपर्ययो मोहो यावत्तावत्पर्यन्तम्, मोहमात्रमेवानयोर्न त्वन्यसंभावनेत्याह–लब्धसंज्ञाविति । नावावयोः ॥ ३८ ॥

रा० टी०–अत्यन्तविकलं सुग्रीवं निरीक्ष्य पक्षान्तरमाह–अथवेति । यावत्कालं संज्ञायाः विपर्ययो यस्मात् मोह इत्यर्थः तावत्काले रामो रक्ष्यतां हि यतः लब्धसंज्ञौ काकुत्स्थौ नौ आवयोर्भयं व्यपनेष्यतः ॥ ३९ ॥

गो० टी०–अथवेति । संज्ञाविपर्ययः मूर्च्छा यावदनुवर्तते तावद्रक्ष्यतामित्यर्थः ॥ ४० ॥

३९ ] ति० टी०–व्यपनेष्यत इतीममेवार्थं स्पष्टयति—नैतदिति । रामस्य नैतत्किंचन । अपायकरणमित्यर्थः । कुतस्तत्राह—न चेति । मुमूर्षाभावे लिङ्गमाह—नहीति । या गतायुषां दुर्लभा सा लक्ष्मीरेनं न हास्यति इदानीं न जहात्ये वाग्रेऽपि न हास्यतीत्यर्थः ॥ ३९ ॥

रा० टी०–संज्ञालाभे हेतुमाह—नेति । एतदल्पकालं प्रति भासमानं मोहादि रामस्य समीपे किंचन न तुच्छमित्यर्थः, अत एव रामो न मुमूर्षति अस्मान् मारयितुं नेच्छति अत एव गतायुषां दुर्लभाया लक्ष्मीः शरीरशोभा सा एनं रामं न हास्यते त्यजति ॥ ४० ॥

गो० टी०–एवंभूतयोः कथं संज्ञाप्राप्तिस्तत्राह—नैतदिति । एतत् शरबन्धनम् रामस्य न किंचन इदमसत्प्रायम् बाधकं न भवतीत्यर्थः अतो न मुमूर्षति । मरिष्यतीति शङ्का न कर्तव्येत्यर्थः । "आशङ्कायामुपसंख्यानम्" इति म्रियतेः सन् । एतच्च जीवनलिङ्गशरीरसौभाग्येन निश्चीयत इत्याह—नहीति । गतायुषां मृतानाम् या लक्ष्मीः मुखकान्तिः दुर्लभा । सा च एनं न हास्यते । न जहातीत्यर्थः । जीवनानुकूला लक्ष्मीर्दृश्यत इत्यर्थः ॥ ४१ ॥

४० ] ति० टी०–स्वकं बलं स्वकं प्राणम् । अहं यावत्सैन्यानि सर्वाणि पुनः स्थापयामि स्थिराणि करोमि तावदात्मानमात्मप्राणं चाश्वासय ॥ ४० ॥

रा० टी०–तस्मादिति । तस्मादुक्तहेतोः सैन्यानि यावत्कालं संस्थापयामि तावत्कालम् आत्मानं बलं च आश्वासय ॥ ४१ ॥

गो० टी०–तस्मादिति । यावत् यावत्पर्यन्तम् । सर्वाणि कार्याणि कर्तव्यानि पुनः संस्थापयामि । तावत्पर्यन्तमाश्वासयेत्यन्वयः । केचित्तु यावत्कार्याणि यावन्ति कर्तव्यानि तानि सर्वाणीत्याहुः ॥ ४२ ॥

४१ ] ति० टी०–एते फुल्लनयनत्वादिगुणका हरयः कर्णे कर्णे प्रकथिता रामविपद्विषयप्रकथनवन्तो भवन्ति । हरिसत्तम सुग्रीव ॥ ४१ ॥

रा० टी०–एत इति । त्रासात् उद्वेगाद्धेतोः आगतसाध्वसाः प्राप्तभयाः अत एव फुल्लनयनाः घूर्णितलोचनाः इमे हरयः कर्णे कर्णे प्रकथिताः रामवृत्तान्तकथनवन्तः सन्तीति शेषः ॥४२॥

गो० टी०–पर्यवस्थापनं किमर्थमित्यत्राह—एते हीति । आगतसाध्वसाः प्राप्तभयविकाराः । ते च विकाराः पुलकादयः । प्रकथिताः पलायनार्थं प्रवृत्तकथा इत्यर्थः । संप्रहर्षितुमित्यनन्तरम् अर्हसीत्यध्याहार्यम् । प्रधावन्तम् इन्द्रजिद्वधमेणेति भावः । इदमनीकविशेषणम् । गच्छामीति वाध्याहार्यम् संप्रहर्षितुं भयान्निवर्तयितुमिति यावत् । तदेवाह—त्यजन्त्विति ॥ ४३ ॥ ४४ ॥

४२ ] ति० टी०–अनीकप्रत्याश्वासनार्थं मां धावन्तं दृष्ट्वा तु संप्रहर्षितं प्राप्तहर्षमनीकं तद्रूपा हरयो भुक्तपूर्वां स्रजमिव त्रासं त्यजन्तु ॥ ४२ ॥

रा० टी०–मामिति । प्रधावन्तं मां दृष्ट्वा अत एव प्रहर्षितमनीकं दृष्ट्वा हरयः भुक्तपूर्वां स्रजमिव त्रासं त्यजन्तु॥४३॥

१ चिन्त्यतामिति गो. पाठः । २ कार्याणीति गो. पाठः । ३ हर्षितुमिति गो. पाठः ।

समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः। विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः ॥ ४३ ॥
इन्द्रजित्तु महामायः सर्वसैन्यसमावृतः। विवेश नगरीं लङ्कां पितरं चाभ्युपागमत् ॥ ४४ ॥
तत्र रावणमासाद्य अभिवाद्य कृताञ्जलिः। आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ॥ ४५ ॥
उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे। रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ ॥ ४६ ॥
उपाघ्राय च तं मूर्ध्नि पप्रच्छ प्रीतमानसः। पृच्छते च यथावृत्तं पित्रे तस्मै न्यवेदयत् ॥
यथा तौ शरबन्धेन निश्चेष्टौ निष्प्रभौ कृतौ ॥ ॥ ४७ ॥
स हर्षवेगानुगतान्तरात्मा श्रुत्वा ⁴गिरं तस्य महारथस्य।
जहौ ज्वरं दाशरथेः समुत्थं प्रहृष्टवाचाभिननन्द पुत्रम् ॥ ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः।

इन्द्रजिति लङ्कां प्रविष्टे हनुमदादयो हरयः राघवं परिवार्य ररक्षुः। अथ हृष्टो रावणो विसृज्येन्द्रजितं सीतारक्षणी राक्षसीः तादृशौ राघवौ सीतां दर्शयतेत्यादिशत्। त्रिजटादयश्च ताः पुष्पकेण सीतां नीत्वा रामलक्ष्मणावदर्शयन्। सीता तु तथाविधं पतिं देवरं चावलोक्य भृशं व्यलपत्।

तस्मिन्प्रविष्टे लङ्कायां कृतार्थे रावणात्मजे। राघवं परिवार्याथ ररक्षुर्वानरर्षभाः ॥ १ ॥
हनुमानङ्गदो नीलः सुषेणः कुमुदो नलः। गजो गवाक्षः पनसः सानुप्रस्थो महाहरिः ॥ २ ॥

४३-४८ ] ति० टी०-समाश्वास्य । उक्तरीत्येति शेषः ॥ ४३-४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्चत्वारिं : सर्गः ॥ ४६ ॥

रा० टी०-समाश्वास्येति । विभीषणः सुग्रीवं समाश्वास्य वानरानीकं समाश्वासयत् ॥ ४४ ॥

गो० टी०-समाश्वास्य त्विति । समाश्वासयत् नाहमिन्द्रजित्किंतु विभीषण इति समाश्वासयदित्यर्थः ॥ ४१ ॥

रा० टी०-इन्द्रजिदिति । इन्द्रजित्तु लङ्कां विवेश पितरमभ्युपागमच्च ॥ ४१ ॥

गो० टी०-कथासंघट्टनाय पूर्वोक्तमनुवदति—इन्द्रजित्त्विति ॥ ४६ ॥

रा० टी०-तत्रेति । तत्र तस्मिन् समये रावणमासाद्य अभिवाद्य च रामलक्ष्मणौ निहतौ इति प्रियं वचः पित्रे आचचक्षे कथयामास ॥ ४६ ॥

गो० टी०-तत्रेति । रामलक्ष्मणावित्यनन्तरमितिकरणं ज्ञेयम् ॥ ४७ ॥

रा० टी०-उत्पपातेति । शत्रू निपातितौ श्रुत्वा हृष्टो रावणः उत्पपात उत्तस्थौ पुत्रं परिषस्वजे च ॥ ४७ ॥

गो० टी०-उत्पपातेति । उत्पपात आसनादिति शेषः ४८

रा० टी०-उपाघ्रायेति । तं पुत्रं मूर्ध्नि उपाघ्राय प्रीतमानसो रावणः पप्रच्छ पृच्छते पित्रे यथा तौ रामलक्ष्मणौ शरबन्धेन निश्चेष्टौ कृतौ तद्वृत्तं यथा यथावत् न्यवेदयत। सार्धश्लोक एकान्वयी ॥ ४८ ॥ ४९ ॥

गो० टी०-पृच्छते चेति । यथावृत्तं वृत्तमनतिक्रम्य । इदमेव विवृणोति—यथा ताविति ॥ ४९ ॥

रा० टी०-स इति । महारथस्य पुत्रस्य गिरं श्रुत्वा हर्षवेगेन अनुगतः प्राप्तोऽन्तरात्मा यस्य स रावणः दाशरथेः समुत्थं ज्वरं संतापं जहौ पुत्रमभिननन्द च ॥ ५० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०-स इति । हर्षवेगः हर्षातिशयः तेनानुगतो व्याप्तः अन्तरात्मा मनो यस्य स तथोक्तः । दाशरथेः निमित्तात् । ज्वरं चिन्तासंतापम् । अनया राघ्या प्रविपद्यते-त्युचे ॥ ५० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

१-२ ] ति० टी०-तस्मिन्निति ॥ १ ॥ २ ॥

रा०टी०-वानरवृत्तान्तमाह—तस्मिन्नित्यादिभिः। कृतार्थे रावणात्मजे लङ्कायां प्रविष्टे सति वानरर्षभाः राघवं परिवार्य ररक्षुः ॥ १ ॥

गो० टी०-अथ सीतायै वीरशयनस्थरामलक्ष्मणप्रदर्शनं सप्तचत्वारिंशे—प्रतिप्रविष्ट इत्यादि ॥ १ ॥

१ आसीनमिति गो. पाठः। २ स मूर्ध्न्येनमिति गो. पाठः। ३ सर्वमिति गो. पाठः। ४ वच इति गो. पाठः। ५ समुत्थितं प्रहृष्येति गो.पाठः। ६ प्रतीति गो. पाठः। ७ लङ्कां त्विति गो. पाठः। ८ आर्ता इति गो. पाठः। ९ गवयः शरभो गन्धमादन इति गो. पाठः।

जाम्बवानृषभः सुन्दो रम्भः शतबलिः पृथुः । व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्वतः ॥ ३ ॥
वीक्षमाणा दिशः सर्वास्तिर्यगूर्ध्वं च वानराः । तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥ ४ ॥
रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम् । आजुहाव ततः सीतारक्षणी राक्षसीस्तदा ॥ ५ ॥
राक्षस्यस्त्रिजटा चापि शासनात्तमुपस्थिताः । ता उवाच ततो हृष्टो राक्षसी राक्षसाधिपः ॥ ६ ॥
हताविन्द्रजिताख्यात वैदेह्या रामलक्ष्मणौ । पुष्पकं तत्समारोप्य दर्शयध्वं रणे हतौ ॥ ७ ॥
यदाश्रयादवष्टब्धा नेयं मामुपतिष्ठते । सोऽस्या भर्ता सह भ्रात्रा निहतो रणमूर्धनि ॥ ८ ॥
निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली । मामुपस्थास्यते सीता सर्वाभरणभूषिता ॥ ९ ॥
अद्य कालवशं प्राप्तं रणे रामं सलक्ष्मणम् । अवेक्ष्य विनिवृत्ता सा चान्यां गतिमपश्यती ॥
अनपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम् ॥ ॥ १० ॥
तस्य तद्वचनं श्रुत्वा रावणस्य दुरात्मनः । राक्षस्यस्तास्तथेत्युक्त्वा जग्मुर्वै यत्र पुष्पकम् ॥ ११ ॥
ततः पुष्पकमादाय राक्षस्यो रावणाज्ञया । अशोकवनिकास्थां तां मैथिलीं समुपानयन् ॥ १२ ॥
तामादाय तु राक्षस्यो भर्तृशोकपराजिताम् । सीतामारोपयामासुर्विमानं पुष्पकं तदा ॥ १३ ॥

रा० टी०—रक्षणप्रकारमाह—हनूमानित्यादिभिः । व्यूढानि व्यूहरचनया स्थापितानि अनीकानि यैः ते अत एव यत्ताः हनुमदादयः सर्वाः दिशः सर्वतः सर्वं तिर्यगूर्ध्वं च वीक्षमाणाः सन्तः तृणेषु अपि चेष्टत्सु सत्सु राक्षसा इति मेनिरे । श्लोकत्रयमेकान्वयि ॥ २–४ ॥

गो० टी०—ये ररक्षुस्तानाह—हनुमानित्यादिना ॥ २ ॥

३ ] ति० टी०—व्यूढानि गरुडाद्याकारव्यूहवन्त्यनीकानि येषां ते ॥ ३ ॥

गो० टी०—अन्यान् वानरानाह—व्यूढानीकाश्चेति । व्यूढानीकाः कृतव्यूहसेनावन्तः । चेष्टत्सु चेष्टमानेषु ॥ ३ ॥

४ ] ति० टी०—राक्षसा इत्यस्यागता इति शेषः ॥ ४ ॥

५–६ ] ति० टी०—सीतारक्षणीः सीतारक्षिका राक्षसीराजुहाव । ता राक्षस्यस्त्रिजटा च तमुपस्थिताः ॥ ५ ॥ ६ ॥

रा० टी०—रावण इति । संहृष्टो रावणः इन्द्रजितं विसृज्य त्यक्त्वा सीतारक्षणीः राक्षसीः आजुहाव ॥ ५ ॥

गो० टी०—रावणश्चेति । स्पष्टः ॥ ४ ॥

रा० टी०—राक्षस्य इति । शासनात् राजाज्ञाश्रवणात् राक्षस्यः त्रिजटा च तं रावणमुपस्थिताः बभूवुरिति शेषः राक्षसाधिपस्तु ता उवाच ॥ ६ ॥

गो० टी०—राक्षस्य इत्यर्धम् ॥ ५ ॥

गो० टी०—ता उवाचेत्यर्धम् ॥ ६ ॥

७ ] ति० टी०—आख्यात कथयत । रणे हतौ राघवौ तस्यै तद्दर्शयध्वम् ॥ ७ ॥

रा० टी०—तदाकारमाह—हताविति । इन्द्रजिता रामलक्ष्मणौ हतौ इति वैदेह्याः समीपे स्वयमाख्यात पुष्पकमारोप्य रणे हतौ दर्शयध्वं च सीतामिति शेषः ॥ ७ ॥

गो० टी०—हतावित्यादि । आख्यात कथयत ॥ ७ ॥

८ ] ति० टी०—यदाश्रयादवष्टब्धा गर्विता ॥ ८ ॥

९ ] ति० टी०—निर्विशङ्का रामशङ्कारहिता, निरुद्विग्ना निःशोका, निरपेक्षा रामो मिलिष्यतीत्याशारहिता ॥ ९ ॥

रा० टी०—यदिति । यदाश्रयात् अवष्टब्धा गर्विता इयं सीता मां लङ्कासंपत्तिं नोपतिष्ठते गणयति सोऽस्याः भर्ता रणमूर्धनि निहतः अतः निर्विशङ्का रामशङ्कारहिता अत एव निरुद्विग्ना अत एव निरपेक्षा अयोध्याप्राप्त्यपेक्षारहिता मैथिली सर्वाभरणभूषिता सती मां लङ्कासंपत्तिम् उपस्थास्यते अत्रैव निवत्स्यतीत्यर्थः । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०—यदाश्रयादिति । अवष्टब्धा गर्विता निर्विशङ्का । निर्विचारा निरुद्विग्ना निःशोका भावे निष्ठा निरपेक्षा रामः समेष्यतीत्याशारहिता ॥ ८ ॥ ९ ॥

१०–१३ ] ति० टी०—अवेक्ष्य विनिवृत्ता प्रत्यागता सा च सा त्वन्यां मत्तोऽन्यां रामरूपां गतिं प्राप्यं वस्त्वपश्यती अनपेक्षा रामापेक्षारहिता ॥ १०–१३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अद्येति । कालवशं प्राप्तं राममवेक्ष्य विनिवृत्ता आशा यस्याः अत एव अन्यां गतिमपश्यन्ती अनपेक्षा लङ्कासंपत्त्यपेक्षारहिताऽपि सीता मां लङ्कासंपत्तिं स्वयमुपस्थास्यते । सार्धश्लोक एकान्वयी ॥ १० ॥

गो० टी०—अद्येत्यादिसार्धश्लोक एकान्वयः । अन्यां गतिम् चापश्यती आगमशासनस्यानित्यत्वाच्नुमभावः । अन्याम् मत्तोन्याम् । गम्यत इति गतिः प्राप्यम् । विनिवृत्ताशा रामाद्विनिवृत्तभावा ॥ १० ॥

रा० टी०— तस्येति । रावणस्य वचनं श्रुत्वा तथेत्युक्त्वा राक्षस्यः यत्र पुष्पकं तत्र जग्मुः ॥ ११ ॥

गो० टी०—तस्येति । स्पष्टः ॥ ११ ॥

१ स्कन्ध इति गो. पाठः । २ चैवेति गो. पाठः । ३ चेति गो.पाठः । ४ निरस्त इति गो.पाठः । ५ त्वाशेति रा.पाठः । ६ निरपेक्षेति गो. पाठः ।

ततः पुष्पकमारोप्य सीतां त्रिजटया सह । [ जग्मुर्दर्शयितुं तस्यै राक्षस्यो रामलक्ष्मणौ ॥ ]
रावणश्चारयामास पताकाध्वजमालिनीम् । ॥ १४ ॥
प्राघोषयत हृष्टश्च लङ्कायां राक्षसेश्वरः । राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ १५ ॥
विमानेनापि गत्वा तु सीता त्रिजटया सह । ददर्श वानराणां तु सर्वं सैन्यं निपातितम् ॥ १६ ॥
प्रहृष्टमनसश्चापि ददर्श पिशिताशनान् । वानरांश्चातिदुःखार्तान्रामलक्ष्मणपार्श्वतः ॥ १७ ॥
ततः सीता ददर्शोभौ शयानौ शरतल्पगौ । लक्ष्मणं चैव रामं च विसंज्ञौ शरपीडितौ ॥ १८ ॥
विध्वस्तकवचौ वीरौ विप्रविद्धशरासनौ । सायकैश्छिन्नसर्वाङ्गौ शरस्तम्बमयौ क्षितौ ॥ १९ ॥
तौ दृष्ट्वा भ्रातरौ तत्र प्रवीरौ पुरुषर्षभौ । शयानौ पुण्डरीकाक्षौ कुमाराविव पावकी ॥ २० ॥
शरतल्पगतौ वीरौ तथाभूतौ नरर्षभौ । दुःखार्ता करुणं सीता सुभृशं विललाप ह ॥ २१ ॥
भर्तारमनवद्याङ्गी लक्ष्मणं चासितेक्षणा । प्रेक्ष्य पांसुषु चेष्टन्तौ रुरोद जनकात्मजा ॥ २२ ॥
सबाष्पशोकाभिहता समीक्ष्य तौ भ्रातरौ देवसुतप्रभावौ ।
वितर्कयन्ती निधनं तयोः सा दुःखान्विता वाक्यमिदं जगाद ॥ ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

रा० टी०—तत इति । पुष्पकमादाय मैथिलीं समुपानयन् प्रापयन् ॥ १२ ॥

गो० टी०—तत इति । स्पष्टः ॥ १२ ॥

रा० टी०—तामिति । भर्तृशोकेन राक्षसीवचनश्रवणजनितभर्तृविषयकपश्चात्तापेन पराजितां सीतामादाय करैर्गृहीत्वा पुष्पकमारोपयामासुः ॥ १३ ॥

गो० टी०—तामिति । स्पष्टः ॥ १३ ॥

१४ ] ति० टी०—पताकाध्वजमालिनीं लङ्कां चारयामास रणस्थौ तौ द्रष्टुमिति शेषः ॥ १४ ॥

रा० टी०—तत इति । त्रिजटया सह सीतां पुष्पकमारोप्य पताकाध्वजमालिनीं लङ्कां रावणश्चारयामास ॥ १४ ॥

गो० टी०—तत इति । त्रिजटया सह सीतामारोप्य । उभयोरेव विमानारोहणमनुज्ञायेत्यर्थः । पुत्रीत्वान्निपुणतया च त्रिजटाया विमानारोहणानुज्ञा ॥ १४ ॥

१५] ति० टी०—घोषणप्रकारः—राघवो लक्ष्मणश्चेति १५

रा० टी०—प्राघोषयतेति । इन्द्रजिता राघवो लक्ष्मणश्च हतौ इति लङ्कायां प्राघोषयत ॥ १५ ॥

गो० टी०—रावण इत्यादि । इन्द्रजिता रण इत्यनन्तरमितिकरणं बोध्यम् ॥ १५ ॥

१६–१८ ] ति० टी०—सर्वम् बह्वित्यर्थः ॥ १६–१८ ॥

रा० टी०—विमानेनेति । त्रिजटया सह सीता विमानेनैव गत्वा निपातितं वानराणां सैन्यं ददर्श ॥ १६ ॥

गो० टी०—विमानेनेति । स्पष्टः ॥ १६ ॥

रा० टी०—प्रहृष्टेति । पिशिताशनान् राक्षसान् प्रहृष्टमनसः वानरान् अतिदुःखार्तांश्च ददर्श ॥ १७ ॥

गो० टी०—प्रहृष्टेति । स्पष्टः ॥ १७ ॥

रा० टी०—तत इति । शरतल्पगौ सन्तौ शयानौ लक्ष्मणं रामं चोभौ ददर्श ॥ १८ ॥

गो० टी०—ततः सीतेत्यादिश्लोकद्वयम् । विप्रविद्धशरासनौ भ्रष्टचापौ । सायकैश्छिन्नसर्वाङ्गौ अत एव शरस्तम्बमयौ शरगुल्ममयौ । स्तम्बः समूह इत्येके । क्षितौ शरतल्पयोः शयानाविति संबन्धः ॥ १८ ॥ १९ ॥

१९–२२ ] ति० टी०—विप्रविद्धशरासनौ भ्रष्टधनुष्कौ शरस्तम्बः शरसमूहस्तन्मयौ ॥ १९–२२ ॥

रा० टी०—विध्वस्तेति । विध्वस्ताः जनस्थाने विनाशिताः कवचाः राक्षसवर्माणि याभ्यां विप्रविद्धानि शरासनानि याभ्यां सायकैः छिन्नानि सर्वाङ्गानि याभ्यां तौ शरस्तम्बमयौ पावकी पावकापत्ये कुमाराविव क्षितौ शयानौ दृष्ट्वा दुःखार्ता सीता करुणं यथा स्यात्तथा नरर्षभौ रामलक्ष्मणौ भृशमुच्चैर्विललाप उच्चारयामास । अर्धषट्कमेकान्वयि ॥ १९–२१ ॥

गो० टी०—तावित्यादिश्लोकद्वयम् । पावकी पावकपुत्रौ स्कन्दविशाखौ । अत्रोत्तरो वीरशब्दः कुमारावित्यस्य विशेषणम् ॥ २० ॥ २१ ॥

रा० टी०—भर्तारमिति । पांसुषु चेष्टन्तौ भर्तारं लक्ष्मणं च प्रेक्ष्य रुरोद ॥ २२ ॥

गो० टी०—भर्तारमिति । स्पष्टः ॥ २२ ॥

२३ ] ति० टी०—वितर्कयन्ती चिन्तयन्तीत्येव ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

१ श्लोकोऽयमधिकः गो. पाठे । २ ऽकारयल्लङ्कामिति गो. पाठः । ३ तल्पयोरिति गो. पाठः । ४ अपीति गो. पाठः । ५ वीरौ सेति गो. पाठः । ६ सुचिरमिति गो. पाठः । ७ वेष्टन्ताविति गो. पाठः । ८ सा इति गो. रा. पाठः । ९ समेति गो. पाठः ।

# अष्टचत्वारिंशः सर्गः ।

सामुद्रिकलक्षणज्ञा मामविधवां पुत्रिणीं चाहुः कथमिदमेकपदे दुर्विधिना दर्शितम् । ज्ञानिभिरुक्तं ननु मृषा भवेदित्यादि शोचन्तीं वैदेहीं तादात्विकसुलक्षणदर्शनादिना त्रिजटा सान्त्वयित्वा तच्चित्तं प्रसाद्याशोकवनिकां प्रवेशयामास पुनः ।

**भर्तारं निहतं दृष्ट्वा लक्ष्मणं च महाबलम् । विललाप भृशं सीता करुणं शोककर्शिता ॥ १ ॥**

**ऊचुर्लाक्षणिका[1] ये मां पुत्रिण्यविधवेति च । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ २ ॥**

**यज्वनो महिषीं ये मामूचुः पत्नीं च सत्रिणः । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ३ ॥**

**[2]वीरपार्थिवपत्नीनां[3] ये विदुर्भर्तृपूजिताम् । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ४ ॥**

**ऊचुः संश्रवणे ये मां द्विजाः कार्तान्तिकाः शुभाम् । तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५ ॥**

---

रा० टी०—सेति । देवकृतप्रभातौ भ्रातरौ तौ तथाभूतौ समीक्ष्य सा दुःखा सीतादुःखदर्शनजनितात्यन्तदुःखेन सहिता या त्रिजटा तया अन्विता युक्ता शोकाभिहता सा सीता तयोर्निधनं वितर्कयन्ती सती इदं वाक्यं जगाद ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

गो० टी०—सेति । अत्र वीक्षणगदनरूपक्रियाभेदात्तच्छब्दद्वयम् ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

१ ] ति० टी०—विललापेति । सर्वथापि देवी राक्षसानामाञ्चर्यत्रिस्थैर्याय मतवद्विललापेत्यर्थः । निहतं निहतमिव स्थितम् ॥ १ ॥

रा० टी०—सीताविलापमाह—भर्तारमित्यादिभिः । शोककर्शिता सीता करुणं यथा भवति तथा विललाप ॥ १ ॥

गो० टी०—अथ सीताप्रलापोऽष्टचत्वारिंशे—भर्तारमिति । करुणं यथा तथा विललाप ॥ १ ॥

२ ] ति० टी०—लाक्षणिकाः सामुद्रिकलक्षणज्ञाः ॥ २ ॥

रा० टी०—तदाकारमाह—ऊचुरित्यादिभिः । ये लाक्षणिकाः शुभाशुभसूचकलक्षणज्ञाः पुत्रिणी प्रशस्तपुत्रविशिष्टेति अविधवेति च मामूचुः ते सर्वे रामे हते सति अनृतवादिनो भविष्यन्तीति शेषः ॥ २ ॥

गो० टी०—ऊचुरिति । लक्षणिन इति । लक्षणशब्देनात्र लक्षणज्ञानं लक्ष्यते तदेषामस्तीति लक्षणिनः । षड्डुत्तरषष्टिलक्षणसामुद्रिकशास्त्रज्ञा इत्यर्थः । षष्टिष्षड्डुत्तरा योषिदङ्गलक्षणमीरितमित्युक्तेः । अत एवाविधवा विधवालक्षणरहिता । निर्लोमहृदयं यस्याः सम निम्नत्ववर्जितम् । ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम च सा लभेत् ॥ इत्युक्तलक्षणेत्यर्थः । पुत्रिणी पुत्रलाभलक्षणवती दीर्घाङ्गुलिश्च या नारी दीर्घकेशी च या भवेत् । दीर्घमायुरवाप्नोति पुत्रैश्च सह वर्तते ॥ इत्युक्तलक्षणवतीत्यर्थः । ज्ञानिनो लक्षणज्ञामवन्तः । अनृतवादिनः आसन्निति शेषः ॥ २ ॥

३ ] ति० टी०—अयमेव पाठः पाठ इति कतकः । यज्वनोऽश्वमेधादियागकर्तुः सत्रिणोः बहुदिनसाध्यबहुकर्तृकयागकर्तुः ॥ ३ ॥

रा० टी०—यज्वन इति । यज्वनः अश्वमेधप्रभृतियागकर्तुः सत्रिणः चिरकालसाध्यबहुकर्तृकयज्ञकर्तुः रामस्य महिषीं मुख्यां पत्नीं ये मामूचुः ॥ ४ ॥

गो० टी०—यज्वनो महिषीं ये मामूचुः पत्नीं च सत्रिण इति ॥ यज्वनः कृताश्वमेधादिकस्य यज्वा तु विधिनेष्टवानित्यमरः । बहुयजमानकानि गवामयनप्रभृतीनि सत्राणि तत्कर्ता सत्री तस्य महिषीं कृताभिषेकाम् । कृताभिषेका महिषीत्यमरः । पत्नीं यज्ञसंयोगवतीम् । “ पत्युर्नो यज्ञसंयोगे ” इति पतिशब्दस्य नकारान्तादेशः । ततो “ ऋन्नेभ्यो ङीप् ” इति ङीप् ॥ ३ ॥

४ ] ति० टी०—वीरपार्थिवपत्नीनाम् । पूजनीयामिति शेषः । भर्तृपूजितां सुमङ्गलीं ये प्राहुः ॥ ४ ॥

रा० टी०—वीरेति । वीरपार्थिवपत्नीनां वीरा ये पार्थिवा राजानः तेषां पत्नीनां मध्ये ये मां भर्तृपूजितां सुमङ्गलीं विदुः प्राहुरित्यर्थः ते ज्ञानिनोऽनृतवादिनो भविष्यन्ति ॥ ३ ॥

गो० टी०—वीरेति । त्वं वीरपार्थिवपत्नी धन्या चेति ये विदुः । विदित्वा ऊचुरित्यर्थः । तेप्यनृतवादिन इति पूर्वेणान्वयः ॥ ५ ॥

५ ] ति० टी०—सम्यक्श्रवणं यस्मिन्निति संश्रवणं संनिधिस्तस्मिन् । मत्समक्षमिति यावत् । कार्तान्तिका ज्योतिःकृतान्तविदः । शुभामविधवाम् । ज्ञानिन इति छेदः ॥ ५ ॥

रा० टी०—ऊचुरिति । कार्तान्तिकाः ज्योतिषशास्त्रसिद्धान्ताभिज्ञाः ये द्विजाः संश्रवणे मत्सन्निधौ मां शुभां वैधव्यरहितामूचुस्ते ॥ ६ ॥

गो० टी०—ऊचुरिति । संश्रवणे मम सम्यक् श्रवणे । मयि शृण्वन्त्यामित्यर्थः । यद्वा सम्यक् श्रवणमस्मिन्निति संश्रवणः सन्निधिः । मत्सन्निधावित्यर्थः । मात्रादिसमीप इति शेषः । कृतान्तः कालः तद्विदः कार्तान्तिकाः । स्युर्मौहूर्तिकमौहूर्तज्ञा-

---

१ लक्षणिन इति गो. पाठः । २ एतदादि श्लोकद्वयं व्यत्यस्तं गो. रा. पाठः । ३ पत्नीत्वं ये धन्येति च मां विदुरिति गो. पाठः ।

इमानि खलु पद्मानि पादयोर्वै[1] कुलस्त्रियः । आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिः सह ॥ ६ ॥
वैधव्यं यान्ति यैर्नार्योऽलक्षणैर्भाग्यदुर्लभाः । नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ ७ ॥
सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः । तान्यद्य निहते रामे वितथानि भवन्ति मे ॥ ८ ॥
केशाः सूक्ष्माः समा नीला भ्रुवौ चासंहते मम । वृत्ते चारोमके जङ्घे दन्ताश्चाविरला मम ॥ ९ ॥
शङ्खे नेत्रे करौ पादौ गुल्फावूरू समौ चितौ । अनुवृत्तनखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥ १० ॥

निकार्तान्तिका अपीत्यमरः । शुभां नित्यमङ्गलाम् । स्मितं प्रशस्तं सुदृगामनिमीलितलोचनम् । समवृत्तपुटा नासा लघुच्छिद्रा शुभावह ॥ इत्याद्युक्तलक्षणैरिति शेषः ॥ ४ ॥

६ ] ति० टी०—यैर्लक्षणैः स्त्रियो नरेन्द्रैः पतिभिः सहाधिराज्येऽभिषिच्यन्ते तानीमानि पद्मानि पाणिपादवर्तिरेखारूपपद्मानि मयि वर्तन्त इति शेषः ॥ ६ ॥

रा० टी०—इमानीति । यैः चिह्नैः नरेन्द्रैः पतिभिः सह अधिराज्ये कुलस्त्रियोऽभिषिच्यन्ते तानीमानि पद्मानि तदाकाररेखारूपलक्षणानि मम पादयोर्वर्तन्त इति शेषः ॥ ६ ॥

गो० टी०—इमानीति । यैः पद्मैरुपलक्षिताः स्त्रियः आधिराज्येभिषिच्यन्ते किलेत्यैतिह्ये । तानीमानि पद्मानि रेखारूपाणि दृश्यन्त इति शेषः । खल्विति प्रसिद्धौ । स्पष्टं दृश्यन्त इत्यर्थः । कथमेषां निष्फलत्वमिति भावः ॥ ६ ॥

७ ] ति० टी०—यैरलक्षणैर्भाग्यदुर्लभा दुर्लभभाग्या वैधव्यं यान्ति तान्यात्मनो न पश्यामि । सुलक्षणानि पश्यन्त्यपि हतलक्षणा निष्फललक्षणा जातास्मीति शेषः । इदं पद्यं प्रक्षिप्तमिति बहवः ॥ ७ ॥

रा० टी०—वैधव्यमिति । भाग्यं दुर्लभं याभिः दुर्भगा इत्यर्थः, नार्यः यैर्लक्षणैर्वैधव्यं यान्ति तानि लक्षणानि पश्यन्ती अन्वेषयन्ती तलक्षणा तलयोः पाणिपादतलयोः क्षणम् उत्सवप्रदचिह्नं यस्याः साऽहमात्मनो नैव पश्यामि एतेन रामनिधनं न संभवतीति सूचितम् । ह एवार्थे ॥ ७ ॥

गो० टी०—वैधव्यमिति । भाग्यदुर्लभाः दुर्लभभाग्याः नार्यः यैर्लक्षणैर्वैधव्यं यान्ति तानि लक्षणानि पश्यन्ती विमृशन्ती न पश्यामि । कुत्रापि वैधव्यहेतुदुर्लक्षणं न पश्यामीत्यर्थः । किंतु केवलं हतलक्षणा निष्फललक्षणास्मीत्यर्थः । तादृशलक्षणानि च सामुद्रिकोक्तानि । परस्परं समारूढाः पादाङ्गुल्यो भवन्ति चेत् । हत्वा बहूनपि पतीन् परप्रेष्या तथा भवेत् ॥ यस्याः कनिष्ठिका भूमिं न गच्छन्त्याः परिस्पृशेत् । पतिद्वयं निहन्त्याद्या द्वितीया च पतित्रयम् ॥ एकरोमा राजपत्नी द्विरोमातिसुखान्विता । त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभागित्यादिना ॥ ७ ॥

८ ] ति० टी०—लक्षणैर्लक्षणज्ञैस्तत्प्रतिपादकशास्त्रैश्च सत्यनामान्यमोघफलानि । तानि शास्त्राणि तत्प्रतिपादितलक्षणानि च ॥ ८ ॥

रा० टी०—सत्येति । लक्षणैः लक्षणाभिज्ञैः सत्यनामानि अमोघफलानि स्त्रीणां यानि पद्मानि उक्तानि तानि अद्य मे वितथा भवन्ति ॥ ८ ॥

गो० टी०—सत्येति । पदि पदे मा श्रीर्येषां तानि पद्मानीत्येवं सत्यनामानि । पदश्रीकराणीत्यर्थः । यद्वा पद्मावत्त्वात् पद्मशब्दवाच्यानि रेखारूपाणि यानि पद्मानि सत्यनामानि अन्वर्थनामानि पद्मशब्दादर्शआद्यचि कृते रूपम् । केचित्सत्यनामानि अमोघफलानीत्याहुः । लक्षणैः ध्वजादिलक्षणैः सह यानि सत्यनामानि पद्मान्युक्तानि तानि मे वितथानि निष्फलानि भवन्तीति योजना ॥ ८ ॥

९ ] ति० टी०—असंहते अपरस्पराश्लिष्टे ॥ ९ ॥

रा० टी०—स्वशरीरगतानि सुलक्षणान्तराण्याह—केशा इत्यादिभिः । सूक्ष्मत्वादित्रितयविशिष्टाः मम केशाः असंहते परस्परममिलिते वृत्ते वर्तुले अरोमके मम जङ्घे च विरलाः परस्परमसंश्लिष्टाः दन्ताश्च ॥ ९ ॥

गो० टी०—केशा इत्यादिचतुःश्लोक्येकान्वयः ॥ अहं सूक्ष्मकेशत्वादिलक्षणलक्षितास्मि । अतो मां शुभलक्षणामूचुरित्यन्वयः । समाः न्यूनाधिक्यरहिताः । असंगते परस्परमसंयुक्ते । अरोमशे रोमरहिते । वृत्ते वर्तुले । अत्र स्कान्दम्—रोमहीने शुभे स्निग्धे यज्जङ्घे क्रमवर्तुले । सा राजपत्नी भवति विशिरे सुमनोहरेति ॥ शङ्खे नेत्रोपान्तभूतललाटपार्श्वे । चितौ उपचितौ । एतच्छङ्खे नेत्रे इत्यत्र लिङ्गव्यत्ययेन योजनीयम् । अनुवृत्तनखाः वृत्तनखाः । अङ्गुलयः पादहस्ताङ्गुल्यः । तदुक्तं स्कान्दे—स्निग्धाः समुन्नतास्तत्र वृत्ताः पादनखाः शुभा इति । समाः हस्तपरिमाणसदृशाः । नातिदीर्घा नातिह्रस्वा इत्यर्थः । यद्वा एकहस्तवद्धस्तान्तरेपि तुल्यपरिमाणा इत्यर्थः । अन्यूनाधिकसंख्याका इति वार्थः । अविरलौ निरन्तरौ । मग्नचूचुकौ ईषन्मग्नाग्रौ । मग्ना गम्भीरा । उत्सङ्गिनी उन्नतपर्यन्तप्रदेशः । पार्श्वोरस्काः पार्श्वे च उरस्कं च । आर्षो लिङ्गव्यत्ययः । चिताः उचिताः । मणिनिभः मणिवत्स्निग्धवर्णः । प्रतिष्ठितां द्वादशभिः दशभिः पादाङ्गुलिभिः द्वाभ्यां पादतलाभ्यां च भूमौ सुप्रतिष्ठिताम् ॥ ९–१२ ॥

१० ] ति० टी०—शङ्खे नयनोपान्त्यभागौ ललाटफलके इति कतकः । चितावुपचितौ अनुवृत्ता आनुपूर्व्येण वृत्तत्वगुणयुक्ताः समाः सममध्याः ॥ १० ॥

रा० टी०—चितौ मांसलौ मे शङ्खप्रभृतिद्वन्द्वौ तत्र शङ्खे

१ यैरिति गो. पाठः । २ अधिराज्ये इति रा. पाठः । ३ च मे इति गो. रा. पाठः ।

स्तनौ चाविरलौ पीनौ मामकौ मग्नचूचुकौ । मग्ना चोत्सेधनी नाभिः पार्श्वोरस्कं च मे चितम्॥ ११ ॥
मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च । प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणाम् ॥ १२ ॥
समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् । मन्दस्मितेत्येव च मां कन्यालाक्षणिका विदुः ॥ १३ ॥
आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह । कृतान्तकुशलैरुक्तं तत्सर्वं वितथीकृतम् ॥ १४ ॥
शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य च । तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ ॥ १५ ॥
ननु वारुणमाग्नेयमैन्द्रं वायव्यमेव च । अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यत ॥ १६ ॥
अदृश्यमानेन रणे मायया वासवोपमौ । मम नाथावनाथाया निहतौ रामलक्ष्मणौ ॥ १७ ॥
नहि दृष्टिपथं प्राप्य राघवस्य रणे रिपुः । जीवन्प्रतिनिवर्तेत यद्यपि स्यान्मनोजवः ॥ १८ ॥

नेत्रोपान्तदेशौ अनुवृत्ताः अनुपूर्वेण क्रमेण वृत्तं वर्तनं येषां तानि नखानि यासां स्निग्धाः समाङ्गुलयश्च ॥ १० ॥

११ ] ति० टी०—अविरलौ परस्परसंसक्तौ, मग्नचूचुकौ निमग्नाग्रभागौ, उत्सेधन्युन्नतपर्यन्तप्रदेशा पार्श्वं चोरस्कं च स्वार्थे कः तत्पार्श्वोरस्कम् प्राण्यङ्गत्वादेकवचनम् । चितमुपचितम् ॥ ११ ॥

रा० टी०—अविरलौ परस्परं मिलितौ मग्नौ चूचुकौ ययोः तौ मामकौ स्तनौ मग्ना निगूढा उत्सेधिनी उन्नतप्रदेशा मे नाभिः चितं मांसलं मे पार्श्वोरस्कं पार्श्वौ उरश्च प्राण्यङ्गत्वात्समाहारद्वन्द्वः ॥ ११ ॥

१२ ] ति० टी०—वर्णः कान्तिः । मणिनिभः शाणवृष्टमणिवदुज्ज्वलः । अङ्गरुहाणि रोमाणि । द्वादशभिः प्रतिष्ठितां पादद्वयवर्त्यङ्गुलिदशकं द्वे पादतले च, एवं द्वादशभिः सुप्रतिष्ठितां सुस्पष्टभूमिकाम् । एवं केशादिपादान्तलक्षणैर्मां शुभलक्षणामूचुः ॥ १२ ॥

रा० टी०—मणिनिभः शाणसंस्कृतमणिसदृशः मम वर्णः कान्तिः मृदूनि ममाङ्गरुहाणि लोमानि च द्वादशभिः दशभिरिन्द्रियैर्मनोबुद्धिभ्यां च प्रतिष्ठितां मां शुभलक्षणामूचुः । श्लोकद्वयमेकान्वयि ॥ १२ ॥

१३ ] ति० टी०—समग्रयवमङ्गुलिपर्वमध्यगसमग्रयवप्रमाणद्विद्विरेखावत्, अच्छिद्रं नीरन्ध्राङ्गुल्यन्तरालम् वर्णवत्प्रशस्तकान्ति मन्दस्मिता मन्दस्मितवत्स्वरूपसुलक्षणवती कन्यालाक्षणिकाः कन्यावर्तिसामुद्रिकलक्षणज्ञाः ॥ १३ ॥

रा० टी०—समग्रेति । समग्राः खण्डरहिता यवाः अङ्गुलिपर्वमध्यगततदाकारद्विद्विरेखा यस्मिन् नच्छिद्रमङ्गुल्यन्तरालं यस्मिन् वर्णवत् प्रशस्तकान्तिविशिष्टं यतो मम पाणिपादम् अतः कन्यालक्षणविदः मां मन्दस्मितेत्येव विदुः ॥१३॥

गो० टी०—समग्रेति । समग्रयवं संपूर्णयवाकाररेखम् । अच्छिद्रं श्लिष्टाङ्गुल्यन्तरालम् । वर्णवत् अरुणवर्णम् । मामूचुरित्यनुषञ्जनीयम् । मन्दस्मितेत्येवेत्येवकारः अयोगव्यवच्छेदार्थः । नित्यमन्दस्मितेत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—कृतान्तनिपुणैर्ज्योतिःशास्त्रसिद्धान्तज्ञैः, आधिराज्येऽभिषेको भावीत्युक्तमित्यन्वयः ॥ १४ ॥

रा० टी०—अधीति । कृतान्तकुशलैः ज्योतिःशास्त्रसिद्धान्ताभिज्ञैर्ब्राह्मणैः अधिराज्ये पतिना सह मे अभिषेक उक्तं तत्सर्वं वितथीकृतं विधिनेति शेषः, सामान्ये नपुंसकम् ॥१४॥

गो० टी०—आधिराज्य इति । कृतान्तकुशलैः ज्यौतिषिकसिद्धान्तनिपुणैः । अत्र इतिकरणं द्रष्टव्यम् । अभिषेक इत्युक्तमित्यन्वयः । चक्रवर्तिस्त्रियाः पाणौ नन्द्यावर्तः प्रदक्षिण इत्याद्युक्तनन्द्यावर्तादिलक्षणैरिति भावः । सर्वं वितथीकृतमित्यतः परं यज्वनो महिषीं ये मामित्यधस्तनश्लोकः केषुचित्कोशेषु दृश्यते स तु लेखकप्रमादकृतः ॥ १४ ॥

१५ ] ति० टी०—सागरं समुद्रं राक्षससेनासागरं चाक्षोभ्यं तीर्त्वा गोष्पदेऽल्पावशिष्टसैन्ये हतावित्यर्थः । अनेन बहुदिनयुद्धोत्तरमल्पावशिष्टे सैन्ये कतिपययूथपरूपेऽयं शरबन्ध इति लभ्यते ॥ १५ ॥

रा० टी०—शोधयित्वेति । जनस्थानं शोधयित्वा दुष्टवधेन संशोध्य प्रवृत्तिं हनुमत्प्रेषणादिना मद्वृत्तान्तमुपलभ्य च सागरं तीर्त्वा च भ्रातरौ युवां गोष्पदे हतौ ॥ १५ ॥

गो० टी०—शोधयित्वेति । शोधयित्वा अन्विष्य । प्रवृत्तिं वृत्तान्तम् । गोष्पदे इन्द्रजिन्मायामात्र इति भावः ॥ १५ ॥

१६-१८ ] ति०टी०—प्रत्यपद्यत प्रत्यपद्येताम् । एकवचनमार्षम् । नन्वितः पूर्वं तत्किमिदानीं न स्मृतमिति शेषः १६–१८

रा० टी०—नन्विति । वारुणायस्त्रं राघवौ प्रत्यपद्यत प्रत्यपद्येताम् एतेन तन्निधनमाश्चर्यमिति तात्पर्यम् ॥ १६ ॥

गो० टी०—नन्विति । ब्रह्मशिरः अस्त्रविशेषः । प्रत्यपद्यतां नन्वित्यन्वयः परस्मैपदमार्षम् । नन्विति प्रसिद्धौ आमन्त्रणे वा प्रभावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमरः । प्रलापे निर्निमित्तमामन्त्रणं संभवति ॥ १६ ॥

रा० टी०—अदृश्यमानेनेति । अदृश्यमानेनैव रक्षसा मम नाथौ निहतौ हि यतः राघवस्य दृष्टिपथं प्राप्य मनोजवोऽपि रिपुः जीवन्न प्रतिनिवर्तेत । श्लोकद्वयमेकान्वयि ॥१७॥१८॥

गो० टी०—अदृश्यमानेनेति । स्पष्टः ॥ १७ ॥

१ ममेमाविति गो.पाठः । २ उत्सङ्गिनी इति गो.पाठः । ३ उरस्काश्चेति गो.पाठः। ४ चिता इति गो.पाठः । ५ लक्षणिनो द्विजा इति गो.पाठः ।

न कालस्यातिभारोऽस्ति कृतान्तश्च सुदुर्जयः । यत्र रामः सह भ्रात्रा शेते युधि निपातितः ॥ १९ ॥
न शोचामि तथा रामं लक्ष्मणं च महारथम् । नात्मानं जननीं चापि यथा श्वश्रूं तपस्विनीम् ॥ २० ॥
सा तु चिन्तयते नित्यं समाप्तव्रतमागतम् । कदा द्रक्ष्यामि सीतां च लक्ष्मणं च सराघवम् ॥ २१ ॥
परिदेवयमानां तां राक्षसी त्रिजटाब्रवीत् । मा विषादं कृथा देवि भर्तायं तव जीवति ॥ २२ ॥
कारणानि च वक्ष्यामि महान्ति सदृशानि च । यथेमौ जीवतो देवि भ्रातरौ रामलक्ष्मणौ ॥ २३ ॥
नहि कोपपरीतानि हर्षपर्युत्सुकानि च । भवन्ति युधि योधानां मुखानि निहते पतौ ॥ २४ ॥
इदं विमानं वैदेहि पुष्पकं नाम नामतः । दिव्यं त्वां धारयेन्नेदं यद्येतौ गतजीवितौ ॥ २५ ॥
हतवीरप्रधाना हि गतोत्साहा निरुद्यमा । सेना भ्रमति संख्येषु हतकर्णेव नौर्जले ॥ २६ ॥

गो० टी०—दृश्यमानत्वे नैवं हन्तुं शक्नुयादित्याह—नहीति ॥ १८ ॥

१९-२२ ] ति० टी०—कालस्य शुभाशुभफलप्रापकस्य तत्प्रापणेऽतिभारो नास्ति. अतस्तदुपस्थापितफलनिर्वर्तको यः कृतान्तो दैवं स न सुदुर्जयः सामान्यरूपस्यार्थस्य विशेषेण समर्थनरूपोऽर्थान्तरन्यासः । प्रकृतकथनरूपो यत्रेत्यादिः । यत्र यस्मादित्यर्थः ॥ १९-२२ ॥

रा० टी०—नेति । यत्र यदा निपातितो रामः शेते तदा कृतान्तः कालः सुदुर्जयः कैश्चिदपि जेतुं शक्यः अत एव कालस्य अतिभारोऽतिर्भीतिर्नास्ति रावणमेवाश्रित्य सर्वे निर्भयाः भविष्यन्तीति सूचितम् ॥ १९ ॥

गो० टी०—नेति । शुभाशुभप्रापकस्य कालस्यातिभारो नास्ति । अशक्यार्थो नास्तीत्यर्थः । कृतान्तः दैवम् । यत्र यतः । रामः अतिबलपराक्रमशाल्यपीति भावः ॥ १९ ॥

रा० टी०—नेति । यथा श्वश्रूं कौसल्यां शोचामि तथा रामप्रभृतीन्न शोचामि ॥ २० ॥

गो० टी०—न शोचामीति । जननीं मन्मातरम् ॥ २० ॥

रा० टी०—तत्र हेतुमाह—सेति । समाप्तो व्रतो नियमो येन अत एव आगतं राघवं लक्ष्मणं च सीतां च कदा द्रक्ष्यामि इति सा कौसल्या नित्यं चिन्तयते ॥ २१ ॥

गो० टी०—उक्तार्थे हेतुमाह—सेति । समाप्तव्रतम् अथ आगतं सराघवं लक्ष्मणं सीतां च कदा द्रक्ष्यामीति अनुचिन्तयत इत्यन्वयः ॥ २१ ॥

रा० टी०—परीति । परिदेवयमानां सीतां त्रिजटा अब्रवीत् । तदाकारमाह—हे देवि ! अयं तव भर्ता जीवति अतो विषादं मा कृथाः ॥ २२ ॥

गो० टी०—परीति । परिदेवयमानां विलपन्तीम् ॥२२॥

गो० टी०—मा विषादमित्यर्धम् ॥ २३ ॥

२३ ] ति० टी०—एवं दशां प्राप्तस्य कथं जीवनं तत्राह—कारणानीति । महान्तीदानीमपि सजीवत्वोपपादकानि । सदृशान्यनुभूतैस्तुल्यानि दृष्टसंवादानि । यथेमौ जीवत इति प्रतिपद्येथास्तथा कारणानि वक्ष्यामीत्यन्वयः ॥ २३ ॥

रा० टी०—ननु कथमिदं विज्ञायते इत्यत आह—कारणानीति । यथा यैः कारणैः इमौ जीवतः तानि सदृशानि योग्यानि महान्ति कारणानि वक्ष्यामि ॥ २३ ॥

गो० टी०—कारणानीति । इमौ रामलक्ष्मणौ जीवत इति यथा ज्ञातुं शक्यते तथा महान्ति स्फुटानि सदृशानि पूर्वानुभूततुल्यानि । दृष्टसंवादानीति यावत् । कारणानि हेतून् वक्ष्यामीत्यन्वयः ॥ २४ ॥

२४ ] ति० टी०—तान्येव व्यतिरेकमुखेनाह—नहीति । पतौ पत्यौ निहते सति योधानां मुखानि क्षणेन शत्रुं हनिष्यामः क्व गच्छतीत्येवं कोपेन व्याप्तानि न भवन्ति । हर्षपर्युत्सुकानि हर्षजनकमोहशान्तिदर्शनोत्सुकानि न भवन्ति, अपि तु रुदन्ति केवलम् । नैवं प्रकृते, अतो जीवतीति निश्चिनु॥२४॥

रा० टी०—कारणान्येवाह—नेत्यादिभिः । पतौ पत्यौ निहते सति योधानां मुखानि कोपेन परीतानि युक्तानि हर्षपर्युत्सुकानि मोहशान्तिहेतुकहर्षयुक्तानि नैव भवन्ति एतेन विपर्यभेदेनेमौ स्त इति सूचितम् तेन तयोरेव कारणत्वं ध्वनितम् ॥ २४ ॥

गो० टी०—तान्येव कारणानि व्यतिरेकमुखेनाह—न हीति । हर्षेण पर्युत्सुकानि । प्रसन्नानीति यावत् ॥ २५ ॥

२५] ति० टी०—इतोऽप्येवमेवेत्याह—इदं विमानमिति२५

रा० टी०—इदमिति । नामतः पुष्पकमिदं दिव्यं विमानं यदि एतौ गतजीवितौ तर्हि त्वां न धारयेत् विधवां न धारयतीत्यर्थः एतेन धारणरूपं हेत्वन्तरं सूचितम् ॥ २५ ॥

गो० टी०—इदमिति । स्पष्टः ॥ २६ ॥

२६ ] ति० टी०—पुनर्लिङ्गान्तरमाह—हतेति । हतोवीरः शूरः प्रधानो राजा यस्याः सा भ्रमतीतस्ततो व्याकुला भवति हतकर्णा हतकर्णधाराधिष्ठितफलका हतकर्णधारा वा ॥ २६ ॥

रा० टी०—हतेति । हतौ वीरप्रधानौ यस्याः सा सेना गतोत्साहा निरुद्यमा च सती जले हतकर्णा निहतकर्णधारा नौरिव संख्येषु भ्रमति भ्रान्तिं प्राप्नोति इयं सेना तु असंभ्रान्ता निरुद्विग्ना उद्वेगरहिता सती मया प्रीत्या निवेदितौ

१ बलमिति गो. पाठः । २ वेति गो. पाठः । ३ नैवमिति गो. पाठः ।

इयं पुनरसंभ्रान्ता निरुद्विग्ना तपस्विनि । सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ॥ २७ ॥
सा त्वं भव सुविस्रब्धा अनुमानैः सुखोदयैः । अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते ॥ २८ ॥
अनृतं नोक्तपूर्वं मे न च वक्ष्यामि मैथिलि । चारित्रसुखशीलत्वात्प्रविष्टासि मनो मम ॥ २९ ॥
नेमौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः । तादृशं दर्शनं दृष्ट्वा मया चोदीरितं तव ॥ ३० ॥
इदं तु सुमहच्चित्रं शरैः पश्यस्व मैथिलि । विसंज्ञौ पतितावेतौ नैव लक्ष्मीर्विमुञ्चति ॥ ३१ ॥
प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् । दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥ ३२ ॥
त्यज शोकं च दुःखं च मोहं च जनकात्मजे । रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम् ॥ ३३ ॥
श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा । कृताञ्जलिरुवाचेमामेवमस्त्विति मैथिली ॥ ३४ ॥
विमानं पुष्पकं तत्तु संनिवर्त्य मनोजवम् । दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ॥ ३५ ॥
ततस्त्रिजटया सार्धं पुष्पकादवरुह्य सा । अशोकवनिकामेव राक्षसीभिः प्रवेशिता ॥ ३६ ॥

प्रविश्य सीता बहुवृक्षखण्डां तां राक्षसेन्द्रस्य विहारभूमिम् ।
संप्रेक्ष्य संचिन्त्य च राजपुत्री परं विषादं समुपाजगाम ॥ ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

उक्तजीवनवृत्तान्तौ काकुत्स्थौ रक्षति एतेनेदमपि गमकमिति सूचितम् । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—हतवीरेति । हतकर्णा हतकर्णधारा ॥ २७ ॥

२७–२८ ] ति० टी०—तस्य विपर्यये पर्यवसानं दर्शयति—इयं पुनरिति । निवेदितौ निवेदितजीवनौ तुभ्यं कृतौ २७॥२८

२९ ] ति० टी०—चारित्रेण पातिव्रत्येन सुखशीलत्वात्सु-खावहस्वान्मन्मनःसुखावहस्वभावत्वान्मन्मनः प्रविष्टासि । हृदयं-गमासीत्यर्थः । अत एतत्सर्वं स्वस्वामिनो रावणस्य विरुद्धमपि मया सर्वोक्तमिति भावः ॥ २९ ॥

गो० टी०—इयमिति । निवेदितौ निवेदितजीवितौ॥२८॥

रा० टी०—सेति । सुखोदयैः सुखेन प्रतिभासमानैः अनु-मानैर्हेतुभिः सुविस्रब्धा व्याप्तविश्वासा त्वं काकुत्स्थौ अहतौ पश्य एतत् यया मया अनृतं नोक्तपूर्वं याऽहं न च वक्ष्यामि साऽहं ते स्नेहाद्ब्रवीमि । स्नेहे हेतुमाह—चारित्रेण निर्मलाचर-णेन युक्तं सुखं सुखोत्पादकं शीलं यस्याः तत्वाद्धेतोः त्वं मम मनः प्रविष्टासि । श्लोकद्वयमेकान्वयि ॥ २८ ॥ २९ ॥

गो० टी०—सा त्वमित्यादि । अनुमानैः चिह्नैः । सु-खोदयैः सुखजनकैरित्यर्थः । चारित्रसुखशीलत्वात् । चरित्रमेव चारित्रं पातिव्रत्यम् तदेव सुखं प्रियं शीलं स्वभावः यस्या सा तस्याः भावश्चारित्रसुखशीलत्वं तस्मात् । यद्वा चारित्रेणाह्ला-दकस्वभावत्वादित्यर्थः । प्रविष्टासि मनो मम । त्वयि मम स्नेहो वर्तत इत्यर्थः ॥ २९ ॥ ३० ॥

३० ] ति० टी०—तादृशं दर्शनं जीवनसूचकमनयोः सैनि-कानां चाकारं दृष्ट्वा मया तवानयोर्जीवनमुदीरितं निवेदितम् । दृश्यत इति दर्शनः कर्मणि ल्युट् । 'राजभोजनाः शालयः' इतिवत् ॥ ३० ॥

रा० टी०—कारणान्तरमाह—नेति । इमौ जेतुं न शक्यौ । ननु कथमिदं विज्ञातमित्यत आह—तादृशं पराभवाभावसूचकं दर्शनं लक्षणं दृष्ट्वा तव सन्निधौ मया उदीरितम् ॥ ३० ॥

गो० टी०—नेमाविति । तादृशं तादृग्विधम् । जीवनव्य-ञ्जकमिति यावत् । दृश्यते ज्ञायतेऽनेनेति दर्शनं सैन्यमुखप्रसा-दादिकम् । पूर्वदृष्टं स्वप्नमिति वार्थः । शनैः पश्यस्व सावधा-नेन पश्येत्यर्थः ॥ ३१ ॥

३१–३२ ] ति० टी०—'लक्ष्मीर्नैव वियुज्यते' इति पाठेऽपि न मुञ्चतीत्येवार्थः ॥ ३१ ॥ ३२ ॥

रा० टी०—लक्षणान्तरमाह—इदमिति । शरैः सह पतितौ विसंज्ञौ एतौ लक्ष्मीः परमशोभा नैव विमुञ्चति इदं सुमहच्चित्रं पश्यस्व पश्य ॥ ३१ ॥

गो० टी०—निःसंज्ञाविति । न वियुज्यते न जहाति । गतायुषाम् अत एव गतसत्त्वानां गतप्राणानाम् । द्रव्यासुव्य-वसायेषु सत्त्वमस्त्री तु जन्तुष्वित्यमरः । वैकृतं विकृतिः ॥३२॥

रा० टी०—प्रायेणेति । गतायुषाम् । अत एव गतसत्त्वानां निर्गतप्राणानां पुरुषाणां दृश्यमानेषु वक्त्रेषु परमवैकृतं विकारो भवति अत्र नास्तीति तात्पर्यम् ॥ ३२ ॥

३३–३७ ] ति० टी०—रामलक्ष्मणयोरर्थे शोकं त्यज । एवं प्रसन्नमुखाभ्यामजीवितुं जीवनराहित्येनावस्थातुमशक्यम् । अतो जीवतीति निश्चिन्विति शेषः ॥ ३३ ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

१ तपस्विनी इति रा. पाठः । २ वक्ष्ये कदाचनेति गो. पाठः । ३ चावेदितमिति गो. पाठः । ४ चेति गो. पाठः । ५ चिह्नमिति गो. पाठः । ६ इदमिति गो. पाठः ।

## एकोनपञ्चाशः सर्गः ।

तत्र प्रतिबुद्धो रामः प्रभूतप्रहारविषण्णं लक्ष्मणं वीक्ष्य बहु विललाप कपयोऽपि विलोक्यैतत् विषादस्य परां काष्ठामारुरुहुरन्ते राममुपागच्छन्तं विभीषणं निरीक्ष्य रावणबुद्ध्या पलायामासुः ।

**घोरेण शरबन्धेन बद्धौ दशरथात्मजौ । निःश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १ ॥**
**सर्वे ते वानरश्रेष्ठाः ससुग्रीव[1]महाबलाः । परिवार्य महात्मानौ तस्थुः शोकपरिप्लुताः ॥ २ ॥**
**एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् । स्थिरत्वात्सत्त्वयोगाच्च शरैः संदानितोऽपि सन् ॥ ३ ॥**
**ततो दृष्ट्वा सरुधिरं निषण्णं गाढमर्पितम् । भ्रातरं दीनवदनं पर्यदेवयदातुरः ॥ ४ ॥**
**किं नु मे सीतया कार्यं[2] लब्धया जीवितेन वा । शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥ ५ ॥**

रा० टी०–त्यजेति । अजीवितुं रामलक्ष्मणयोर्जीवनं निवर्तयितुं न शक्यम् अतः रामलक्ष्मणयोरर्थे शोकं मोहं च त्यज ॥ ३३ ॥

गो० टी०–त्यजेति । रामलक्ष्मणयोरर्थे शोकं शोककृतं मुखविकारम् मोहं विपरीतबुद्धिम् दुःखं मनोव्यथां च त्यज । अजीवितुं न शक्यं जीवितुं शक्यमेवेत्यर्थः ॥ ३३ ॥

रा० टी०–श्रुत्वेति । तस्याः त्रिजटायाः वचनं श्रुत्वा एवमस्त्विति इमां त्रिजटामुवाच ॥ ३४ ॥

गो० टी०–श्रुत्वेति । कृताञ्जलिरित्यनेन भगवद्विषयोपदेष्टा योपि कोप्यादरणीय इत्युक्तम् । इदं शब्दविवरणमेवमस्त्विति ॥ ३४ ॥

रा० टी०–विमानमिति । दीना सीता त्रिजटया विमानं सन्निवर्त्य लङ्कामेव प्रवेशिता ॥ ३५ ॥

गो० टी०–विमानमिति । सन्निवर्तने प्रवेशे च त्रिजटैव कर्त्री ॥ ३५ ॥

रा० टी०–तत इति । पुष्पकादवरुह्य उत्तार्य राक्षसीभिः सा सीता अशोकवनिकामेव प्रवेशिता ॥ ३६ ॥

गो० टी०–तत इति । राक्षसीभिरित्यनेन त्रिजटादर्शनायानीतेति गम्यते ॥ ३६ ॥

रा० टी०–प्रविश्येति । बहुवृक्षाणां षण्डः समूहो यस्यां तां राक्षसेन्द्रस्य विहारभूमिम् अशोकवनिकां प्रविश्य संप्रेक्ष्य सर्वत्रावलोक्य च राजपुत्रौ संचिन्त्य च सीता परमं विषादं समुपाजगाम ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गो० टी०–प्रविश्येति । विहारभूमिं प्रमदावनम् । संप्रेक्ष्य संचिन्त्य । प्रेक्षितप्रकारेण संचिन्त्येत्यर्थः । यद्वा भावनाप्रकर्षात्पुरः स्थितौ संप्रेक्ष्येत्यर्थः ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्यानेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

१–२ ] ति० टी०–घोरेणेति ॥ १ ॥ २ ॥

रा० टी०–रामवृत्तान्तमेवाह—घोरेणेत्यादिभिः । शरबन्धेन बद्धाविव दशरथात्मजौ परिवार्य वानरश्रेष्ठाः तस्थुः । बद्धशब्दः आचारक्विबन्तप्रकृतिकप्रथमान्तः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–अथ रामप्रबोधनमेकोनपञ्चाशे–घोरेणेत्यादि श्लोकद्वयमेकान्वयम् । नागौ यथा नागाविव निश्वसन्तावित्यन्वयः । शोकपरिप्लुताः शोकपूर्णाः ॥ १ ॥ २ ॥

३ ] ति० टी०–स्थिरत्वादतिदृढगात्रत्वात्, सत्त्वयोगान्महाबलयुक्तत्वात्, संदानितोऽपि बद्धोऽपि ॥ ३ ॥

रा० टी०–एतस्मिन्निति । शरैः संदानितो बद्धोऽपि रामः सत्त्वयोगात् नित्यं प्राकृतविलक्षणसत्तासम्बन्धात् अत एव स्थिरत्वात् उद्वेगसंसर्गरहितत्वाद्धेतोः वीर्यवान् रामः एतस्मिन्नन्तरे समये प्रत्यबुध्यत 'बद्धः संदानितो मितः' इत्यमरः एतेन पूर्वं तादृशप्रबोधतिरोभावः स्वनियम्यब्रह्मादिमर्यादापालनायैवेति सूचितम् ॥ ३ ॥

गो० टी०–एतस्मिन्निति । स्थिरत्वात् धीरत्वात् । सत्त्वयोगाद्बलयोगात् । संदानितोपि बद्धोपि । बद्धे संदानितं मूतमित्यमरः ॥ ३ ॥

४–५ ] ति० टी०–गाढमर्पितं शरैर्गाढबद्धम् ॥ ४ ॥ ५ ॥

रा० टी०–तत इति । स रामः गाढमर्पितं प्रक्षिप्तं रुधिरं विषण्णं भ्रातरं च दृष्ट्वा आतुरः सन् पर्यदेवयत् व्यलपत् ॥ ४ ॥

गो० टी०–तत इति । अर्पितं शरैरिति शेषः ॥ ४ ॥

रा० टी०–तदाकारमाह—किमित्यादिभिः । योऽहं युधिनिर्जितमिव भ्रातरं पश्यामि तस्य मे सीतया जीवितेन वा किम् । निर्जितशब्द आचारक्विबन्तप्रकृतिकद्वितीयान्तः ॥ ५ ॥

गो० टी०–किं न्वित्यादिश्लोकद्वयम् । विचिन्वता मयेति शेषः । सचिवः सहायः । साम्परायिकः युद्धे साधुः । युद्धायत्योः सम्पराय इत्यमरः ॥ ५ ॥ ६ ॥

१ सुग्रीवा इति गो. पाठः । २ किं कार्यमिति गो. पाठः ।

शक्या सीतासमा नारी मर्त्यलोके विचिन्वता । न लक्ष्मणसमो भ्राता सचिवः सांपरायिकः ॥ ६ ॥
परित्यक्ष्याम्यहं प्राणान्वानराणां तु पश्यताम् । यदि पञ्चत्वमापन्नः सुमित्रानन्दवर्धनः ॥ ७ ॥
किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम् । कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ॥ ८ ॥
विवत्सां वेपमानां च वेपन्तीं कुररीमिव । कथमाश्वासयिष्यामि यदि यास्यामि तं विना ॥ ९ ॥
कथं वक्ष्यामि शत्रुघ्नं भरतं च यशस्विनम् । मया सह वनं यातो विना तेनाहमागतः ॥ १० ॥
उपालम्भं न शक्ष्यामि सोढुमम्बासुमित्रया । इहैव देहं त्यक्ष्यामि नहि जीवितुमुत्सहे ॥ ११ ॥
धिङ्मां दुष्कृतकर्माणमनार्यं मत्कृते ह्यसौ । लक्ष्मणः पतितः शेते शरतल्पे गतासुवत् ॥ १२ ॥
त्वं नित्यं सुविषण्णं मामाश्वासयसि लक्ष्मण । गतासुर्नाद्य शक्तोऽसि मामार्तमभिभाषितुम् ॥ १३ ॥
येनाद्य बहवो युद्धे निहता राक्षसाः क्षितौ । तस्यामेवाद्य शूरस्त्वं शेषे विनिहतः शरैः ॥ १४ ॥
शयानः शरतल्पेऽस्मिन्सशोणितपरिप्लुतः । शरभूतस्ततो भासि भास्करोऽस्तमिव व्रजन् ॥ १५ ॥

६-९ ] ति० टी०–सचिवः सहायः । सांपरायिको युद्धे साधुः युद्धार्ह इति यावत् ॥ ६ ॥ ९ ॥

रा० टी०–शक्येति । सीतासमा नारी विचिन्वता सेनासंचयं कुर्वता मया मर्त्यलोके न शक्या लब्धुमिति शेषः, सांपरायिकः युद्धकर्मणि साधुः सचिवः साचिव्यकर्ता लक्ष्मणसमो भ्राता च न शक्यः एतेन तत्सदृशयोरभावः सूचितः ' युद्धायत्योः संपरायः ' इत्यमरः विनिगमनाविरहाच्च उभयान्वयी मर्त्यलोक इति लोकान्तराणामप्युपलक्षकम् ॥ ६ ॥

रा० टी०–परीति । सुमित्रानन्दवर्द्धनः यदि पञ्चत्वं लोकान्तरमापन्नः तदा प्राणान् लोकरक्षाः अहं परित्यक्ष्यामि तत्समीपे एव गमिष्यामीति तात्पर्यम् ॥ ७ ॥

गो० टी०–परित्यक्ष्यामीति । पञ्चत्वं मृतिम् ॥ ७ ॥

रा० टी०–किमिति । तं लक्ष्मणं विना यदि यास्यामि तर्हि विवत्सां वेपन्तीं कुररीमिव वेपमानां कौसल्याप्रभृति कथं केन प्रकारेण किं वक्ष्यामि तत्र वचनयोग्यता नास्तीत्यर्थः अत एव कथमाश्वासयिष्यामि । श्लोकद्वयमेकान्वयि ॥८॥९॥

गो० टी०–किं न्वित्यादिश्लोकद्वयमेकान्वयम् । अहं तं लक्ष्मणं विना अयोध्यां यदा यास्यामि तदा कौसल्यां केकयीं च किं वक्ष्यामि । सुमित्रां कथमाश्वासयिष्यामि ॥ ८ ॥ ९ ॥

१० ] ति० टी०–यो मया सह वनं गतस्तेन लक्ष्मणेन विना गतोऽहं किं वक्ष्यामि ॥ १० ॥

रा० टी०–कथमिति । यो मया सह वनं यातः तेन विनाऽहमागतः इति वचनं कथं वक्ष्यामि ॥ १० ॥

गो० टी०–कथमित्यर्धम् । यशस्विनमित्यनेन तद्यशो मया न लब्धमिति खिद्यति ॥ १० ॥

गो० टी०–मयेति । यो मया सह वनं यातः तेन विनायोध्यां गतोहं सुमित्रया कृतमुपालम्भम् उक्तप्रकारं सोढुं कथं वक्ष्यामि ॥ ११ ॥

११-१२ ] ति० टी०–अम्बासुमित्रयेति । क्रियमाणमिति शेषः ॥ ११ ॥ १२ ॥

रा० टी०–उपालम्भमिति । अम्बाभ्यां सहितया सुमित्रया क्रियमाणमिति शेषः, उपालम्भम् उरस्ताडनादि सोढुं न शक्ष्यामि अतो जीवितुं पालयितुं नोत्सहे अतो देहं तद्वत्पालनीयसेनाम् इह अस्मिन् समये एव त्यक्ष्यामि ॥ ११ ॥

गो० टी०–इहैवेत्यर्धम् ॥ १२ ॥

रा० टी०–धिगिति । यतो मत्कृते मदर्थं लक्ष्मणो गतासुवत् शेते अतो मां धिक् ॥ १२ ॥

गो० टी०–धिगिति । दुष्कृतकर्माणं लक्ष्मणवनानयनमेव दुष्कृतं कर्म ॥ १३ ॥

१३-१४ ] ति० टी०–गतासुर्गतासुरिव ॥ १३ ॥ १४ ॥

रा० टी०–लक्ष्मणमुद्दिश्य आह–त्वमिति । हे लक्ष्मण ! यस्त्वं मां नित्यमाश्वासयसि स त्वं गतासुरिव मामभिभाषितुं न शक्तोऽसि पुरोहितोऽयं राजेत्यादाविव गतासुशब्दो लाक्षणिकः ॥ १३ ॥

गो० टी०–त्वमिति । स त्वमित्यन्वयः ॥ १४ ॥

रा० टी०–येनेति । येन त्वया यस्यां क्षितौ युद्धे बहवो राक्षसाः निहताः स त्वं तस्यामेव क्षितौ शरैर्विनिहितस्ताडितः सन् शेषे ॥ १४ ॥

गो० टी०–येनेति । स्पष्टः ॥ १५ ॥

१५ ] ति० टी०–शरभूतः शरैर्व्याप्तशरीरत्वाच्छररूपं प्राप्तः । अस्तं व्रजन्भास्कर इव तत्तद्रन्ध्रनिःसरद्रुधिरव्याप्तशराः किरणस्थानीयाः ॥ १५ ॥

रा० टी०–शयान इति । शोणितपरिप्लुतः शरभूतः शरैरावृतोऽत एव शरतल्पे शयानस्त्वम् अस्तं व्रजन् भास्कर इव भासि शराणां किरणस्थानीयत्वम् ॥ १५ ॥

गो० टी०–शयान इति । अयमिति शेषः । अत्र शर-

१ प्राणांमति गो. पाठः । २ क्रोशन्तीमिति गो. पाठः । ३ गतः पुनरिति गो. पाठः । ४ वनेति गो. पाठः । ५ वधिति गो. पाठः । ६ पतित इति गो० रा. पाठः । ७ सेति गो. पाठः । ८ शक्तोषीति गो. पाठः । ९ निहता युद्धे राक्षसा विनिपातिता इति गो. पाठः । १० क्षितौ वीरः स शेते निहतः परैरिति गो. पाठः । ११ प्लुत इति गो. पाठः । १२ जालैश्चितो भातीति गो. पाठः ।

बाणाभिहतमर्मत्वान्न शक्नोषीह भाषितुम् । रुजा चाब्रुवतो यस्य दृष्टिरागेण सूच्यते ॥ १६ ॥
यथैव मां वनं यान्तमनुयातो महाद्युतिः । अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १७ ॥
इष्टबन्धुजनो नित्यं मां च नित्यमनुव्रतः । इमामद्य गतोऽवस्थां ममानार्यस्य दुर्नयैः ॥ १८ ॥
सुरुष्टेनापि वीरेण लक्ष्मणेन न संस्मरे । परुषं विप्रियं चापि श्रावितं तु कदाचन ॥ १९ ॥
विससर्जैकवेगेन पञ्च बाणशतानि यः । इष्वस्त्रेष्वधिकस्तस्मात्कार्तवीर्याच्च लक्ष्मणः ॥ २० ॥
अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः । सोऽयमुर्व्यां हतः शेते महार्हशयनोचितः ॥ २१ ॥
तच्च मिथ्या प्रलप्तं मां प्रधक्ष्यति न संशयः । यन्मया न कृतो राजा राक्षसानां विभीषणः ॥ २२ ॥
अस्मिन्मुहूर्ते सुग्रीव प्रतियातुमितोऽर्हसि । सत्त्वहीनं मया राजन्रावणोऽभिभविष्यति ॥ २३ ॥
अङ्गदं तु पुरस्कृत्य ससैन्यं सपरिच्छदम् । सागरं तर सुग्रीव नीलेन च नलेन च ॥ २४ ॥

---

तल्पस्थानीयोत्तगिरिः शरस्थाने किरणाः शोणितस्थाने रक्तवर्णत्वम् ॥ १६ ॥

१६ ] ति० टी०—अब्रुवतोऽपि यस्य रुजा व्यथा दृष्ट्या रागेणान्यया मुखशोभया च सूच्यते । दृष्टीत्यनेन दर्शनशक्तिमत्वं सूच्यते ॥ १६ ॥

रा० टी०—बाणेति । बाणैः अभिहतानि व्याप्तानि मर्माणि यस्य तत्त्वाद्धेतोः अब्रुवतो यस्य तव दृष्टिरागेण नयनारुण्येन रुजा पीडा सूच्यते स त्वम् इह इदानीं भाषितुं न शक्नोषि॥१६॥

गो० टी०—बाणेति । रुजा व्यथा । दृष्टिरागेण वीक्षणप्रेम्णा ॥ १७ ॥

१७ ] ति० टी०—यमक्षयं यमगृहं यास्यामीत्यन्वयः । यथायं मात्रादिषु स्नेहमपर्यालोच्यैव मामनुगतस्तथाहमपि तत्स्नेहं त्यक्त्वानुयास्यामीति भावः ॥ १७ ॥

रा० टी०—यथेति । वनं यान्तं मां यथा त्वमनुयातः तथैव यमक्षयं कालागम्यं लोकं यान्तमेनं त्वामहमप्यनुयास्यामि ॥ १७ ॥

गो० टी०—यथैवेति । तथैव तेन प्रकारेण । मात्रादिस्नेहमविचार्येत्यर्थः । यमक्षयमित्यत्रापि यान्तमित्यनुषज्यते ॥ १८ ॥

१८ ] ति० टी०—इष्टो बन्धुजनो यस्य सः ॥ १८ ॥

रा० टी०—इष्टेति । इष्टो बन्धुजनो यस्य सः मां नित्यमनुव्रतश्च त्वम् । अनार्यस्य राक्षसस्य दुर्नयैः मायाभिरित्यर्थः ममाग्रे इमामवस्थां गतोऽसि ॥ १८ ॥

गो० टी०—इष्टेति । स्पष्टः ॥ १९ ॥

१९ ] ति० टी०—विप्रियमहितं कदाचन श्रावितं त्वेति न सस्मरे न स्मरामीत्यर्थः ॥ १९ ॥

रा० टी०—सुरुष्टेनेति । सुरुष्टेनापि लक्ष्मणेन परुषं विप्रियं च कदाचन न श्रावितम् इत्यहं संस्मरे जानामि ॥१९॥

गो० टी०—सुरुष्टेनेति । विप्रियम् अहितम् । सुरुष्टेनापि लक्ष्मणेन श्रावितं विप्रियं परुषं वाक्यम् न स्मरामीत्यर्थः॥२०॥

२०-२१ ] ति० टी०—य एकवेगेन पञ्चबाणशतानि विससर्ज कार्तवीर्यस्तस्मात्कार्तवीर्यात्सहस्रबाहोरयं द्विबाहुरेकेन वेगेन तावतो बाणान्विसृजन्नधिक इत्यर्थः ॥ २० ॥२१॥

रा० टी०—विससर्जेति । यः एकवेगेन पञ्च बाणशतानि विससर्ज स लक्ष्मणः इष्वस्त्रेषु इषुप्रयोगेषु कार्तवीर्यात् सहस्रबाहोरप्यधिकः ॥ २० ॥

गो० टी०—विससर्जेति । यः कार्तवीर्यः । एकेन वेगेन एकप्रयत्नेन । यत्सहस्रबाहुः कार्तवीर्यः । यावता कालेन पञ्चबाणशतानि विससर्ज प्रायुङ्क्त । द्विभुजोप्ययं लक्ष्मणः तावतैव कालेन तावतो बाणान् विसृजन् । इष्वस्त्रेषु विषये तस्मात्कार्तवीर्यादधिक इत्यर्थः ॥ २१ ॥

रा० टी०—अस्त्रैरिति । शक्रस्यापि अस्त्राणि अस्त्रैर्यो हन्यात् सोऽयं हतस्ताडितः सन् उर्व्यां शेते ॥ २१ ॥

गो० टी०—अस्त्रैरिति । हन्यात् हन्तुं शक्तः । शकि लिङ् ॥ २२

२२ ] ति० टी०—विभीषणो राजा न कृत इति यद्यतः, तस्मात्तद्विभीषणमभिषेक्ष्यामीति मिथ्या प्रलप्तं प्रलपितं मां प्रधक्ष्यति ॥ २२ ॥

रा० टी०—तदिति । राक्षसानां राजा विभीषणः यद्यस्मान्मया कृतः तत्तस्माद्धेतोः प्राप्तं विभीषणमभिषेक्ष्यामीति मम वचनं मिथ्या सत् मां प्रधक्ष्यति अत्र संशयो न ॥ २२ ॥

गो० टी०—यदिति । यत् यस्मात् । विभीषणो राक्षसानां राजा न कृतः । तस्मात् मिथ्याप्रलप्तम् राजानं त्वां करिष्यामीति मिथ्या प्रलपितं मां प्रधक्ष्यति । दहतीत्यर्थः । आश्रुतकार्यनिर्वाहाभावेन मिथ्येत्युच्यते । आश्रुतं प्रतिज्ञातम् ॥२३॥

२३] ति० टी०—सत्त्वहीनं शोकवता मया बलहीनम्॥२३॥

रा० टी०—सुग्रीवं प्रत्याह—अस्मिन्निति । हे सुग्रीव ! मया सह सत्वहीनं शोकेन बलरहितं त्वां रावणोऽभिभविष्यति अतः अस्मिन्मुहूर्ते एव त्वं प्रतियातुमर्हसि ॥ २३ ॥

गो० टी०—अस्मिन्निति । प्रतियातुं किष्किन्धामिति शेषः । हीनं त्वामिति शेषः ॥ २४ ॥

२४ ] ति० टी०—नीलेनेत्यादौ सहेति शेषः ॥ २४ ॥

---

१ शक्नोत्यभीति गो. पाठः । २ ऽप्यस्येति गो. पाठः । ३ नेति गो. पाठः । ४ श्लोकोऽयं व्यत्यस्तः गो. पाठे । ५ चेति गो. पाठः । ६ कृत इति गो. पाठः । ७ मत्वेति गो. पाठः । ८ इवेद्बलीति गो. पाठः । ९ सुहृज्जन इति गो. पाठः ।

कृतं हि[1] सुमहत्कर्म यदन्यैर्दुष्करं रणे । ऋक्षराजेन तुष्यामि गोलाङ्गूलाधिपेन च ॥ २५ ॥
अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च । युद्धं केसरिणा संख्ये घोरं संपातिना कृतम् ॥ २६ ॥
गवयेन गवाक्षेण शरभेण गजेन च । अन्यैश्च हरिभिर्युद्धं दुर्धरं त्यक्तजीवितैः ॥ २७ ॥
न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः । यत्तु शक्यं वयस्येन सुहृदा वा परं मम ॥ २८ ॥
कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा । मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ॥ २९ ॥
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ । शुश्रुवुस्तस्य ये[4] सर्वे वानराः परिदेवितम् ॥
वर्तयांचक्रिरेऽश्रूणि नेत्रैः कृष्णेतरेक्षणाः ॥ ॥ ३० ॥
ततः सर्वाण्यनीकानि स्थापयित्वा विभीषणः । आजगाम गदापाणिस्त्वरितं यत्र राघवः ॥ ३१ ॥
तं दृष्ट्वा त्वरितं यान्तं नीलाञ्जनचयोपमम् । वानरा दुद्रुवुः सर्वे मन्यमानास्तु रावणिम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

रा० टी०—अङ्गदमिति । अङ्गदं पुरस्कृत्य नीलादिना सह सागरं तर ॥ २४ ॥

गो० टी०—अङ्गदमिति । स्पष्टः ॥ २५ ॥

२५-२६ ] ति० टी०—हनुमदादिभिर्मदर्थे यत्कृतं तेन तुष्यामि ॥ २५ ॥ २६ ॥

रा० टी०—कृतमिति । हनुमता ऋक्षराजेन च अन्यैर्दुष्कृतं कर्म कृतं अतोऽहं तुष्यामि ॥ २५ ॥

रा० टी०—अङ्गदेनेति । अङ्गदादिना घोरं युद्धं कर्म कृतम् ॥ २६ ॥

गो० टी०—कृतमित्यादिसार्धश्लोकत्रयम् । संपातिना वनरेण ॥ २६-२८ ॥

२७] ति० टी०—हरिभिर्युद्धं कृतमिति पूर्वेण संबन्धः॥२७॥

रा० टी०—गवयेनेति । गवयादिना अन्यैश्च हरिभिर्दुर्धरं युद्धं कृतम् ॥ २७ ॥

२८ ] ति० टी०—अतिप्रबलसहायेनापि दैवं दुर्जयमित्याह—न चातिक्रमितुमिति । वयस्यः केवलसखा सुहृदुपक्रियामूलसखा ॥ २८ ॥

रा० टी०—ननु पराभवसखे सर्वं निरर्थकमित्यत आह—नेति । हे सुग्रीव ! दैवं परमात्मविहितम् । अतिक्रमितुं मानुषैर्जनैर्न शक्यं तथापि यच्छक्यं तत्सर्वं मम कार्यं वयस्येन सुहृदा भवता कृतम् । सार्धश्लोक एकान्वयी ॥ २८ ॥

गो० टी०—यत्त्विति । वयस्येन मित्रेण । सुहृदा च शोभनहृदयेन वा । चशब्दो वाशब्दार्थकः । धर्मभीरुणा धर्मो नश्यतीति भीरुणेत्यर्थः । अधर्मभीरुणेति वा पदच्छेदः ॥ २९ ॥

२९ ] ति० टी०—अधर्मभीरुणेति छेद इति तीर्थस्तद्विफलमेव । धर्मभीरुणेति छेदेऽपि धर्मत्यागाद्भीरुणेति व्याख्यातुं शक्यत्वात् ॥ २९ ॥

रा० टी०—मित्रेति । हे वानरर्षभाः ! मित्रकार्यं भवद्भिः कृतम् अतो मयाऽनुज्ञाता यूयं गन्तुमर्हथ ॥ २९ ॥

गो० टी०—मित्रेति ॥ ३० ॥

३०-३१ ] ति० टी०—परिदेवितं परिदेवनप्रवृत्तं वचः । कृष्णेतरेक्षणाः पिङ्गाक्षाः ॥ ३० ॥ ३१ ॥

रा० टी०—शुश्रुवुरिति । ये कृष्णेतरेक्षणाः पिङ्गलनयनाः वानराः तस्य परिदेवितं शुश्रुवुः ते सर्वे नेत्रैः अश्रूणि वर्तयाञ्चक्रिरे ॥ ३० ॥

गो० टी०—शुश्रुवुरिति । वर्तयांचक्रुः प्रवर्तयांचक्रुः । कृष्णेतरेक्षणाः रक्तेक्षणा इत्यर्थः ॥ ३१ ॥

रा० टी०—तत इति । ततस्तस्मिन् समये अनीकानि स्थापयित्वा यत्र राघवः तत्र विभीषण आजगाम ॥ ३१ ॥

गो० टी०—तत इत्यादिश्लोकद्वयम् ॥ ३२ ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥४९॥

३२] ति० टी०—तं दूरपलायितसेनाः परावर्त्य स्थापयित्वा गतम् । वानरा दुद्रुवुः । सुग्रीवसमीपस्था इति शेषः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनपञ्चाशः सर्गः ॥४९॥

रा० टी०—तमिति । त्वरितं यान्तं तं विभीषणं दृष्ट्वा रावणिं मन्यमाना वानराः दुद्रुवुः ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

१ हनुमता कार्यमिति गो. रा. पाठः । २ मदर्थे इति गो. पाठः । ३ च परंतपेति गो. पाठः । ४ ते इति गो. पाठः । ५ देवनामिति गो. पाठः । ६ त्वरित इति गो. पाठः ।

## पञ्चाशः सर्गः ।

सुग्रीवेणाङ्गदः पृष्टः शोकहेतुमाचष्ट ततः प्राप्तं विभीषणं दृष्ट्वा सुग्रीवो जाम्बवन्तं वानरान्समाश्वासयितुमादिश्य स्वयं विभीषणं सान्त्वयित्वा सुषेणं यदावोचत्तदेवागते गरुत्मति झटिति राघवौ नागपाशविमुक्तौ लक्ष्मणं च लब्धसंज्ञमालोक्याखिलः कपयो जहृषुः ।

अथोवाच महातेजा हरिराजो महाबलः । किमियं व्यथिता सेना मूढवातेव नौर्जले ॥ १ ॥
सुग्रीवस्य वचः श्रुत्वा वालिपुत्रोऽङ्गदोऽब्रवीत् । न त्वं पश्यसि रामं च लक्ष्मणं च महारथम् ॥ २ ॥
शरजालाचितौ वीरावुभौ दशरथात्मजौ । शरतल्पे महात्मानौ शयानौ रुधिरोक्षितौ ॥ ३ ॥
अथाब्रवीद्वानरेन्द्रः सुग्रीवः पुत्रमङ्गदम् । नानिमित्तमिदं मन्ये भवितव्यं भयेन तु ॥ ४ ॥
विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः । पलायन्तेऽत्र हरयस्त्रासादुत्फुल्ललोचनाः ॥ ५ ॥
अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः । विप्रकर्षन्ति चान्योन्यं पतितं लङ्घयन्ति च ॥ ६ ॥
एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः । सुग्रीवं वर्धयामास राघवं च जयाशिषा ॥ ७ ॥

---

१ ] ति० टी०–मूढवाता दिग्भ्रामोहकरवात्यावातवती । मूढेति भावे निष्ठा ॥ १ ॥

रा० टी०–सुग्रीवोक्तिमाह—अथेति । मूढो मोहकारको वातो यस्यां सा किञ्च वातेन मूढा मूढवाता नौरिव इयं सेना किं किमर्थं व्यथिता इति हरिराजः सुग्रीव उवाच ॥ १ ॥

गो० टी०–अथ रामस्य नागपाशविमोचनं पञ्चाशे—अथोवाचेत्यादि । तादात्विकसेनापलायननिमित्तमजानानः पृच्छति–किमिति । किं किमर्थम् । उवाच वानरानिति शेषः । मूढः मूर्च्छितः । विरुद्धदिग्वाय्वन्तराभिहत इत्यर्थः । वात्याहतेति यावत् ॥ १ ॥

२–३ ] ति० टी०–सुग्रीवस्य वचः सेनापलायनप्रश्नहेतुरूपम् । अङ्गदस्तु प्रस्तुतमेव निमित्तमाह—न त्वमिति । एवं विशेषणकौ दशरथात्मजौ न पश्यसि किम् एतदेव निमित्तमिति वृथा प्रश्न इति भावः ॥ २ ॥ ३ ॥

रा० टी०–सुग्रीवस्येति । सुग्रीवस्य वचःश्रुत्वा अङ्गदोऽब्रवीत् । अर्थं पृथक् । तदाकारमाह—नेति । शरजालेन भाचितौ शरतल्पे शयानौ रामं लक्ष्मणं च दशरथात्मजौ त्वं न पश्यसि एतेन एतदर्थमेव संचलनमिति सूचितम् । सार्धश्लोक एकान्वयी ॥ २ ॥ ३ ॥

गो० टी०–सुग्रीवस्येत्यर्धम् ॥ २ ॥

गो० टी०–रामव्यथां विना किमन्यन्निमित्तमित्युत्तरयति–न त्वमिति । अत्र काकुः । त्वं न पश्यसि किमित्यर्थः । रामं लक्ष्मणं चेत्युभावित्यन्वयः ॥ ३ ॥

४ ] ति० टी०–सुग्रीवो नेदमिदानीं पलायननिमित्तमित्याह—अथेति । इदं पलायननिमित्तं त्वदुक्तनिमित्तान्यनिमित्तहीनमिति न मन्ये, किं तु केनचित्सांप्रतिकेन पलायनहेतुना भयेन भवितव्यमित्यर्थः ॥ ४ ॥

रा० टी०–अथेति । सुग्रीवोऽब्रवीत् तदाकारमाह—भयेन भीतियुक्तेन अस्मदादिनेति शेषः भवितव्यं तत्र हेतुः—इदं शरशयननिमित्तं विशेषनिमित्तरहितं न मन्ये किञ्च यत इदमनिमित्तं नातो भयेन अस्मद्भीत्या भवितव्यम् ॥ ४ ॥

गो० टी०–स्वयमुद्घाटयति—अथेत्यादिना । इदं रघुसिंहयोः शरतल्पशयनम् अनिमित्तं न भवतीति मन्ये । अन्येन भयनिमित्तेन भवितव्यमित्यर्थः । तत्र हेतुमाह–विषण्णेत्यादिना । त्यक्तप्रहरणाः त्यक्तशिलाद्यायुधाः । अन्योन्यस्य अन्योन्यम् विप्रकर्षन्ति द्रुतगमनार्थमाकर्षन्ति ॥ ४–६ ॥

५ ] ति० टी०–तदेव स्पष्टयति—विषण्णेति । विषण्णवदनास्त्यक्तप्रहरणाश्च सन्त एतावत्पर्यन्तमिहैव स्थिताः । संप्रति तु इतो दिशः प्रतिपलायन्ते, तत्तु त्रासात्सांप्रतिकादेव नान्यथेत्यर्थः ॥ ५ ॥

रा० टी०–विषण्णेति । त्रासादुत्फुल्ललोचनाः अत एव त्यक्तानि प्रहरणान्यायुधानि यैस्ते हरयः पलायन्ते ॥ ५ ॥

६ ] ति० टी०–न लज्जन्ते । शूरगर्हिते पलायने क्रियमाणे न लज्जां प्राप्नुवन्तीत्यर्थः । पृष्ठतः । वर्तमानपदार्थानिति शेषः । विप्रकर्षन्ति । पलायनप्रतिरोधकानिति शेषः ॥ ६ ॥

रा० टी०–अन्योन्यस्येति । अन्योन्यस्य न लज्जन्ते पृष्ठतो न निरीक्षन्ति च अन्योन्यं विप्रकर्षन्ति च पतितं लङ्घयन्ति भीत्या नोत्थापयन्तीत्यर्थः ॥ ६ ॥

७ ] ति० टी०–वर्धयामास । विजयी भवेति वचनेनेति भावः ॥ ७ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे समये विभीषणः सुग्रीवं राघवं च जयाशिषा वर्धयामास ॥ ७ ॥

गो० टी०–एतस्मिन्निति । स्पष्टः ॥ ७ ॥

---

१ बलमिति गो. पाठः । २ प्रपलायन्तीति गो. पाठः । ३ निरैक्षतेति गो. पाठः ।

विभीषणं च सुग्रीवो दृष्ट्वा वानरभीषणम् । ऋक्षराजं महात्मानं समीपस्थमुवाच ह ॥ ८ ॥
विभीषणोऽयं संप्राप्तो यं दृष्ट्वा वानरर्षभाः । द्रवन्त्यायतसंत्रासा रावणात्मजशङ्कया ॥ ९ ॥
शीघ्रमेतान्सुसंत्रस्तान्बहुधा विप्रधावितान् । पर्यवस्थापयाख्या हि विभीषणमुपस्थितम् ॥ १० ॥
सुग्रीवेणैवमुक्तस्तु जाम्बवानृक्षपार्थिवः । वानरान्सान्त्वयामास संनिवर्त्य प्रधावतः ॥ ११ ॥
ते निवृत्ताः पुनः सर्वे वानरास्त्यक्तसाध्वसाः । ऋक्षराजवचः श्रुत्वा तं च दृष्ट्वा विभीषणम् ॥ १२ ॥
विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम् । लक्ष्मणस्य तु धर्मात्मा बभूव व्यथितस्तदा ॥ १३ ॥
जलक्लिन्नेन हस्तेन तयोर्नेत्रे [6]विमृज्य च । शोकसंपीडितमना रुरोद विललाप च ॥ १४ ॥
इमौ तौ सत्त्वसंपन्नौ विक्रान्तौ प्रियसंयुगौ । इमामवस्थां गमितौ राक्षसैः कूटयोधिभिः ॥ १५ ॥
भ्रातृपुत्रेण चैतेन दुष्पुत्रेण दुरात्मना । राक्षस्या जिह्मया बुद्ध्या वञ्चितावृजुविक्रमौ ॥ १६ ॥
शरैरिमावलं विद्धौ रुधिरेण समुक्षितौ । वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव ॥ १७ ॥
ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया । ताविमौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ ॥ १८ ॥
जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः । प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः ॥ १९ ॥
एवं विलपमानं तं परिष्वज्य विभीषणम् । सुग्रीवः सत्त्वसंपन्नो हरिराजोऽब्रवीदिदम् ॥ २० ॥

८-९ ] ति० टी०-वानरभीषणं वानराणां भयनिमित्तम् ॥ ८ ॥ ९ ॥

रा० टी०-विभीषणमिति । वानरभीषणं वानरभयहेतुं विभीषणं सुग्रीवो दृष्ट्वा ऋक्षराजं जाम्बवन्तमुवाच ॥ ८ ॥

गो० टी०-विभिषणमिति । स्पष्टः ॥ ८ ॥

रा० टी०-तदाकारमाह—विभीषण इति । यं दृष्ट्वा रावणात्मजशङ्कया आगतसंत्रासाः वानरर्षभाः द्रवन्ति सोऽयं संप्राप्तो विभीषणः ॥ ९ ॥

गो० टी०-बिभीषणोयमिति । विप्रधावितान् पलायमानान् ॥ ९-१९ ॥

१०-१२] ति० टी०-पर्यवस्थापय प्रतिष्ठापय॥१०॥१२॥

रा० टी०-शीघ्रमिति । बहुधानेकप्रकारेण विप्रधावितान् पलायितान् एतान् पर्यवस्थापय उपस्थितं विभीषणमाख्याहि च ॥ १० ॥

रा० टी०-सुग्रीवेणेति । जाम्बवान् प्रधावतो वानरान् संनिवर्त्य सान्त्वयामास ॥ ११ ॥

रा० टी०-ते इति । ऋक्षराजवचः श्रुत्वा त्यक्तसाध्वसाः परित्यक्तभयाः सर्वे वानराः निवृत्ताः ॥ १२ ॥

१३-१६] ति०टी०-लक्ष्मणस्य तु लक्ष्मणस्य च॥१३॥१६॥

रा० टी०-विभीषण इति । शरैश्चितं व्याप्तं गात्रं दृष्ट्वा विभीषणो व्यथितो बभूव ॥ १३ ॥

रा० टी०-जलेति । तयोः रामलक्ष्मणयोः नेत्रे हस्तेन विमृज्य शोकसंपीडितमनाः बिभीषणः रुरोद विललाप च॥१४॥

रा० टी०-विलापाकारमाह—इमावित्यादिभिः । सत्त्वसंपन्नौ नित्यसत्तावन्तौ इमौ कूटयोधिभिः कपटयुद्धकर्तृभिः इमामवस्थां गमितौ प्रापितौ ॥ १५ ॥

रा० टी०-भ्रातृ इति । एतेन भ्रातृपुत्रेण जिह्मया कुटिलया राक्षस्या बुद्ध्या ऋजुविक्रमौ कापट्यसंसर्गरहितविक्रमविशिष्टौ रामलक्ष्मणौ वञ्चितौ ॥ १६ ॥

गो० टी०-भ्रातुरिति । दुष्पुत्रेण कपटयुद्धेन पितुरवद्यावहेन चालितौ वञ्चितौ ऋजुविक्रमौ अकपटविक्रमौ ॥ १६ ॥

१७ ] ति० टी०-शल्यकः श्वावित् ॥ १७ ॥

रा० टी०-शरैरिति । शरैः अलं विद्धौ अत्यन्तं व्याप्तौ रुधिरेण समुक्षितौ संसिक्तौ इमौ शल्यकाविव वसुधायां सुप्तौ दृश्येते ॥ १७ ॥

गो० टी०-शरैरिति । सुप्तौ सुप्तसदृशौ । शल्यकौ कण्टकिवराहौ ॥ १७ ॥

१८ ] ति० टी०-प्रतिष्ठा राज्ये स्थितिः ॥ १८ ॥

रा० टी०-ययोरिति । ययोर्वीर्यं पराक्रममुपाश्रित्य प्रतिष्ठा मया काङ्क्षिता ताविमौ देहनाशायास्मद्वृद्धिप्रध्वंसनाय प्रसुप्तौ ॥ १८ ॥

गो० टी०-ययोरित्यादिचतुःश्लोकी । अत्र वक्तव्यं सर्वमभयप्रदाने दर्शितम् ॥ १८—२१ ॥

१९-२० ] ति० टी०-अद्य जीवन्नपि विपन्नोऽस्मि मृतोऽस्मि प्राप्तप्रतिज्ञो निर्वृत्तसीतापरित्यागाभावप्रतिज्ञः सकामः पूर्णमनोरथश्च पुत्रेण कृतः ॥ १९ ॥ २० ॥

रा० टी०-जीवन्निति । नष्टः राज्यमनोरथो यस्य सोऽहं जीवन्नपि विपन्नो मृतः रिपुः रावणः प्राप्तप्रतिज्ञः सन् सकामः प्राप्तमनोरथः कृतः कालेनेति शेषः ॥ १९ ॥

रा० टी०-एवमिति । एवं विलपमानं तं विभीषणं सुग्रीवः परिष्वज्य अब्रवीत् ॥ २० ॥

१ समीपस्थं जाम्बवन्तमिति गो. पाठः । २ विद्रवन्ति परित्रस्ता इति गो. पाठः । ३ रुध्येति गो. पाठः । ४ संभ्रमा इति गो. पाठः । ५ इन्द्रियम् इति गो. पाठः । ६ प्रेति गो. पाठः । ७ भ्रातुःपुत्रेण मे तेनेति गो. पाठः । ८ चालिताविति गो. पाठः । ९ उभाविति गो. पाठः ।

राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नेह संशयः । रावणः सह पुत्रेण स्वकामं नेह लप्स्यते ॥ २१ ॥
गरुडाधिष्ठितावेतावुभौ राघवलक्ष्मणौ । त्यक्त्वा मोहं वधिष्येते सगणं रावणं रणे ॥ २२ ॥
तमेवं सान्त्वयित्वा तु समाश्वास्य तु राक्षसम् । सुषेणं श्वशुरं पार्श्वे सुग्रीवस्तमुवाच ह ॥ २३ ॥
सह शूरैर्हरिगणैर्लब्धसंज्ञावरिंदमौ । गच्छ त्वं भ्रातरौ गृह्य किष्किन्धां रामलक्ष्मणौ॥ २४ ॥
अहं तु रावणं हत्वा सपुत्रं सहबान्धवम् । मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम् ॥ २५ ॥
श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत् । देवासुरं महायुद्धमनुभूतं पुरातनम् ॥ २६ ॥
तदा स्म दानवा देवाञ्शरसंस्पर्शकोविदान् । निर्जघ्नुः शस्त्रविदुषश्छादयन्तो मुहुर्मुहुः ॥ २७ ॥
तानार्तान्नष्टसंज्ञांश्च गतासूंश्च बृहस्पतिः । विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २८ ॥
तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम् । जवेन वानराः शीघ्रं संपातिपनसादयः ॥ २९ ॥
हरयस्तु विजानन्ति पार्वती ते महौषधी । संजीवकरणीं दिव्यां विशल्यां देवनिर्मिताम् ॥ ३० ॥

---

२१ ] ति० टी०—रावणः पुत्रेण सह स्वकामं स्वमनोरथमिह लङ्कायां न लप्स्यते ॥ २१ ॥

रा० टी०—तदाकारमाह—राज्यमिति । इह लङ्कायां त्वं राज्यं प्राप्स्यसि रावणस्तु इह लङ्कायां स्वकामं न लप्स्यते २१

२२ ] ति० टी०—कुतस्तत्राह—गरुडाधिष्ठिताविति । गरुडोपासकतया विज्ञातावित्यर्थः तीर्थस्तु—'न रुजा पीडितावेतौ' इति पठित्वा न मरणपर्यवसायिरुजापीडिताविमौ, किंतु मोहमात्रं प्राप्तौ, अतस्त्यक्त्वेत्येवं व्याचष्टे ॥ २२ ॥

रा० टी०—तत्र हेतुमाह—गरुडेति । एतौ रामलक्ष्मणौ गरुडाधिष्ठितौ सन्तौ मोहं त्यक्त्वा रावणं वधिष्येते एतेन सुग्रीवस्य त्रिकालज्ञत्वं व्यक्तम् ॥ २९ ॥

गो० टी०—न रुजेति । न रुजापीडितौ इयं रुजा अनयोरात्यन्तिकहानिकरी न भवति । किंतु मोहमात्रकारिणीत्यर्थः ॥ २२–२९ ॥

२३ ] ति० टी०—तमेवं सान्त्वयित्वा । गरुडानुग्रहसंभावनयेत्यर्थः । सान्त्वयित्वेत्यस्यैवार्थकथनम्—समाश्वास्य त्विति । अनेन सुग्रीववाक्येन रामविषयं स्वस्य भगवदवतारत्वज्ञानं सूचितम् ॥ २३ ॥

रा० टी०—तमिति । राक्षसं तं विभीषणमेवमाश्वास्य बोधयित्वा सान्त्वयित्वा तापं निरस्य सुषेणं श्वशुरमुवाच॥२३॥

२४-२५ ] ति० टी०—यावल्लब्धसंज्ञौ भविष्यतस्तावदनयो रक्षार्थमेतौ गृहीत्वा शूरैर्हरिगणैः सह किष्किन्धां गच्छ२४॥२५

तदाकारमाह—सहेति । लब्धसंज्ञौ रामलक्ष्मणौ गृह्य गृहीत्वा शूरैर्हरिगणैःसह गच्छ ॥ २४ ॥

रा० टी०—अहमिति । अहं तु रावणं हत्वा शक्रो नष्टां श्रियमिव मैथिलीमानयिष्यामि आनेष्यामि ॥ २५ ॥

२६ ] ति० टी०—एतद्वाक्यं रक्षणोपायबोधकं वाक्यम् । तदेवाह—देवासुरमिति ॥ २६ ॥

२७ ] ति० टी०—स्पृश्यत इति स्पर्शो विषयः । शरसंस्पर्शे शरविषये लक्ष्यवेधनरूपे कोविदानपि शस्त्रविदुषोऽपि मुहुर्मुहुश्छादयन्तो माययेन्द्रजिद्वदात्मानं प्रच्छादयन्तो जघ्नुः ॥ २७ ॥

रा० टी०—श्रुत्वेति । वानरेन्द्रस्य एतद्वचः श्रुत्वा सुषेणोऽब्रवीत् । अर्थं पथक् । तदाकारमाह—देवेत्यादिभिः । पुरातनं देवासुरं युद्धमनुभूतमस्माभिरिति शेषः । तदा तस्मिन् युद्धे शराणां संस्पर्शो येषु ते लक्ष्या इत्यर्थः तेषां कोविदान् तज्ज्ञाने निपुणान् शस्त्रविदुषः शस्त्रप्रयोगाभिज्ञान् देवान् छादयन्तो दानवाः निर्जघ्नुः। सार्धश्लोक एकान्वयी ॥२६॥२७॥

गो० टी०—दैवासुरमिति । अनुभूतं मया ज्ञातम् । शरसंस्पर्शकोविदाः शरप्रयोगसमर्थाः । स्पर्शो दानमिति पर्यायः ॥ २६ ॥ २७ ॥

२८ ] ति० टी०—आर्तत्वादिधर्मवतोपि तान्बृहस्पतिर्विद्याभिर्गरुडाविध्यानरूपामृतजीवनीभिस्तादृशीभिरोषधीभिश्च चिकित्सत्यचिकित्सत् ॥ २८ ॥

रा० टी०—तानिति। नष्टसंज्ञान् तान् देवान् मन्त्रयुक्ताभिर्विद्याभिःओषधीभिश्च बृहस्पतिश्चिकित्सति अचिकित्सत्॥२८॥

गो० टी०—तानिति । मन्त्रयुक्ताभिः मन्त्रप्रचुराभिः विद्याभिर्मृतसंजीविनीप्रभृतिभिः चिकित्सति अचिकित्सत्॥२८॥

२९] ति० टी०—अस्तु, किं प्रकृते तत्राह—तानीति॥२९॥

रा० टी०—तानीति । संपातिपनसादयो वानराः औषधानि आनयितुमानेतुं क्षीरोदं सागरं यान्तु ॥ २९ ॥

गो० टी०—तान्यौषधानीत्यादिसार्धश्लोकः । स्पष्टः २९

३० ] ति० टी०—नतु ज्ञाने किलानयनं तत्राह—हरयस्त्विति । संपात्यादयो हरयः पार्वती पर्वतप्रतिष्ठिते ते ओषधी विजानन्ति । पार्वती इति द्विवचनमार्षम् । तयोर्नामाह—संजीवेति । विशल्यां विशल्यकरणीम् । देवेन ब्रह्मणा निर्मिताम् ॥ ३० ॥

---

१ अत्रेति गो. पाठः । २ न रुजा पीडिताविति गो पाठः । ३ एनामिति गो. पाठः । ४ दैवासुरमिति गो. पाठः । ५ महदिति गो. पाठः । ६ सुदारुणमिति गो. पाठः । ७ कोविदा इति गो. पाठः । ८ निरिति रा. पाठः । ९ पार्वतीरु॰ महौषधीरिति गो. पाठः ।

चन्द्रश्च नाम द्रोणश्च क्षीरोदे सागरोत्तमे । अमृतं यत्र मथितं तत्र ते परमौषधी ॥ ३१ ॥
तौ तत्र विहितौ देवैः पर्वतौ तौ महोदधौ । अयं वायुसुतो राजन्हनूमांस्तत्र गच्छतु ॥ ३२ ॥
एतस्मिन्नन्तरे वायुर्मेघाश्चापि सविद्युतः । पर्यस्य सागरे तोयं कम्पयन्निव पर्वतान् ॥ ३३ ॥
महता पक्षवातेन सर्वद्वीपमहाद्रुमाः । निर्भग्नविटपाः सलिले लवणाम्भसि ॥ ३४ ॥
अभवन्पन्नगास्त्रस्ता भोगिनस्तत्रवासिनः । शीघ्रं सर्वाणि यादांसि जग्मुश्च लवणार्णवम् ॥ ३५ ॥
ततो मुहूर्ताद्गरुडं वैनतेयं महाबलम् । वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ॥ ३६ ॥
तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः । यैस्तु तौ पुरुषौ बद्धौ शरभूतैर्महाबलैः ॥ ३७ ॥
ततः सुपर्णः काकुत्स्थौ स्पृष्ट्वा प्रत्यभिनन्द्य च । विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥ ३८ ॥
वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः । सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः ॥ ३९ ॥

---

रा० टी०—हरय इति । देवेन परमात्मना निर्मितां संजीवकरणीं तदभिधां विशल्यां तदभिधां च पार्वती पर्वतोद्भवे महौषधी हरयो विजानन्ति ॥ ३० ॥

गो० टी०—संजीवकरणीमित्यर्धमेकं वाक्यम् । अत्रानयितुं यान्त्वित्यनुषज्यते । पूर्वोक्तक्षीरोदमध्ये संजीवकरणीं विशल्यां चानयितुं यान्त्वित्यर्थः । तयोरेवात्रोपयोगादिति भावः ॥ ३० ॥

३१ ] ति० टी०—क पर्वते ते तत्राह—चन्द्रश्चेति । क्षीरोदे तौ पर्वतौ स्तः, तयोश्चौषध्यौ । को नाम सागरोत्तमस्तत्राह—अमृतमिति ॥ ३१ ॥

रा० टी०—औषधस्थलं निर्दिशन्नाह—चन्द्र इति । अमृतं यत्र मथितं तत्र सागरोत्तमे चन्द्रो नामद्रोणश्च नाम पर्वतौ तत्र तयोः पर्वतयोस्ते परमौषधी स्त इति शेषः ॥ ३१ ॥

गो० टी०—ते कुत्र विद्येते इत्यत्राह—चन्द्रश्चेत्यादिना। सागरोत्तमे क्षीरोदे यत्र प्रदेशे अमृतं मथितं तत्र चन्द्रद्रोणाख्यौ पर्वतौ स्तः तयोस्ते महौषधी स्त इत्यर्थः । तत्रावस्थाने हेतुमाह—ते तत्रेति । पर्वते पर्वतयोः जात्येकवचनम् ॥ ३१ ॥

३२ ] ति० टी०—यद्यपि पनसादयो जानन्ति तथापि शीघ्रमागमनार्थं वायुसुतो यातु ॥ ३२ ॥

रा० टी०—एककर्तृकगमनेनैव कार्यं सेत्स्यतीत्यभिप्रेत्याह—ते इति । देवैर्महोदधौ विहितौ संस्थापितौ यौ पर्वतौ तत्र ते औषधी आनेतुमिति शेषः तत्र संपात्यादीनां मध्ये हनुमान् गच्छतु एतेन हनुमतो वेगातिशयः सूचितः ॥ ३२ ॥

गो० टी०—अयमित्यर्धम् । औषध्यन्तरानयने पनसादयो गच्छन्तु । संजीवविशल्यानयने तु हनुमान् गच्छत्विति विज्ञेयम् ॥ ३२ ॥

३३ ] ति० टी०—एतस्मिन्नन्तरे ओषध्यानयनवार्ताकाले सागरे तोयं पर्यस्यातिलहरीयोगि कृत्वा पर्वतान्कम्पयन्पक्षवायुरभूत्, सविद्युतो मेघाश्चासन् ॥ ३३ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे समये सागरे तोयं पर्यस्य परितः संचाल्य पर्वतान् कम्पयन्निव वायुः सविद्युतो मेघाश्चाभवन्निति शेषः ॥ ३३ ॥

गो० टी०—एतस्मिन्निति । मेघान् सागरतोयं च पर्यस्यन् पर्वतान् कम्पयन्निव गरुडपक्षवायुरुदभूदिति शेषः । सर्वद्वीपमहाद्रुमाः सर्वपदं द्रुमविशेषणम् । द्वीपं च लङ्का । लवणाम्भसि लवणसमुद्रे ॥ ३३ ॥ ३४ ॥

३४ ] ति० टी०—सर्वे द्वीपा लवणसमुद्रान्तर्वर्तिनः ॥ ३४ ॥

रा० टी०—महतेति । पक्षवातेन भग्नविटपाः सर्वद्वीपमहाद्रुमाः लवणाम्भसि सलिले निपेतुः ॥ ३४ ॥

३५–३७ ] ति० टी०—तत्रवासिनो मलयवासिनो भोगिनो महाकाया यादांसि सर्वाणि लवणार्णवं जग्मुः भयादन्तर्मग्रा नीत्यर्थः ॥ ३५ ॥ ३७ ॥

रा० टी०—अभवन्निति । तत्र वासिनः तत्समीपमलयनिवासिनो भोगिनो महाकायाः पन्नगाः यादांसि च लवणार्णवं जग्मुः एतेन गरुडस्य रामाभिप्रायाभिज्ञत्वं सूचितम् ॥ ३५ ॥

रा० टी०—तत इति । ततो मुहूर्तादनन्तरं वानराः गरुडं ददृशुः ॥ ३६ ॥

रा० टी०—तमिति । तं गरुडमागतमभिप्रेक्ष्य अवलोक्य यैस्तौ रामलक्ष्मणौ बद्धौ तत्वेन प्रतीतौ ते नागाः विप्रदुद्रुवुः पलायिता बभूवुः ॥ ३७ ॥

गो० टी०—अभवन्निति । भोगिनः प्रशस्तकायाः । तत्रवासिनः लङ्काद्वीपवासिनः । यादांसि जलजन्तवश्च । लवणार्णवं लवणार्णवमध्यम् । भयादन्तर्मग्ना इत्यर्थः ॥ ३५–३८ ॥

३८ ] ति० टी०—प्रत्यभिनन्द्य विजयाशिषा प्रतिपूज्य । मुखे रामलक्ष्मणयोः ॥ ३८ ॥

रा० टी०—तत इति । सुपर्णो गरुडः काकुत्स्थौ स्पृष्ट्वा प्रत्यभिनन्द्य च जयाशिषा प्रतिपूज्य मुखे तयोरानने पाणिना विममर्श ॥ ३८ ॥

३९ ] ति० टी०—संरुरुहुर्यथापूर्वं संरूढमांसा अभूवन् । सुवर्णे शोभनकान्तियुक्ते तनू शरीरे ॥ ३९ ॥

---

१ ते तत्र निहते देवैः पर्वते परमौषधी इति गो. ते तवेति रा. पाठः । २ मेघांश्चापीति गो. पाठः । ३ पर्यस्यन्निति गो. पाठः । ४ मेदिनीमिति गो. पाठः । ५ भिन्नेति गो. पाठः । ६ समूला इति गो.पाठः । ७ तौसदिति गो.पाठः । ८ बद्धाविति गो.पाठः । ९ दृष्ट्वा प्रत्यभिनन्दित इति गो.पाठः ।

तेजो वीर्यं बलं चौज उत्साहश्च महागुणाः । प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणा तयोः ॥ ४० ॥
तावुत्थाप्य महातेजा गरुडो वासवोपमौ । उभौ च सस्वजे हृष्टो रामश्चैनमुवाच ह ॥ ४१ ॥
भवत्प्रसादाद्व्यसनं रावणिप्रभवं महत् । उपायेन व्यतिक्रान्तौ शीघ्रं च बलिनौ कृतौ ॥ ४२ ॥
यथा तातं दशरथं यथाजं च पितामहम् । तथा भवन्तमासाद्य हृदयं मे प्रसीदति ॥ ४३ ॥
को भवान्रूपसंपन्नो दिव्यस्रगनुलेपनः । वसानो विरजे वस्त्रे दिव्याभरणभूषितः ॥ ४४ ॥
तमुवाच महातेजा वैनतेयो महाबलः । पतत्रिराजः प्रीतात्मा हर्षपर्याकुलेक्षणम् ॥ ४५ ॥
अहं सखा ते काकुत्स्थ प्रियः प्राणो बहिश्चरः । गरुत्मानिह संप्राप्तो युवयोः साह्यकारणात् ॥ ४६ ॥
असुरा वा महावीर्या वानरा वा महाबलाः । सुराश्चापि सगन्धर्वाः पुरस्कृत्य शतक्रतुम् ॥ ४७ ॥
नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम् । मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा ॥ ४८ ॥

रा० टी०—वैनतेयेनेति । वैनतेयेन संस्पृष्टाः तयोर्व्रणाः नागानां स्थित्या व्रणवद्वभासमानावनतप्रदेशाः संरुरुहुः यथा पूर्वं बभूवुः सुवर्णं शोभनवर्णविशिष्टे तयोस्तन स्निग्धे बभूवतुः तद्वत्वेन प्रत्यभासेताम् ॥ ३९ ॥

गो० टी०—वैनतेयेनेति । व्रणाः क्षतानि । संरुरुहुः संरूढाः अव्रणस्वरूपा बभूवुरित्यर्थः ॥ ३९ ॥

४०-४१ ] ति० टी०—तेजः पराभिभवसामर्थ्यम्, वीर्यं पराक्रमः, बलं शारीरम्, ओजः कान्तिः, उत्साह प्रसिद्धः, प्रदर्शनं शब्दानुमानाभ्यां परोक्षार्थनिश्चयः, बुद्धिरपरोक्षनिश्चयः । द्विगुणा वैनतेयस्पर्शात्पूर्वतो ऽप्यधिका । अत्रान्यैर्देवैरवतीर्य भगवतो रामस्य मूलमूर्तेराज्ञयोपकारः संपादितः गरुडेन तु स्वरूपत एवेति बोध्यम् ॥ ४० ॥ ४१ ॥

रा० टी०—तेज इति । तयोस्तेजःप्रभृतिर्द्विगुणा तद्वत्वेन प्रतीयमाना अभवदिति शेषः ॥ ४० ॥

गो० टी०—तेज इति । तेजः पराभिभवनसामर्थ्यम् पराधिक्षेपासहनं वा वीर्यं पराक्रमः बलं शारीरम् ओजः कान्तिः उत्साहः लोकोत्तरकार्येषु स्थिरतरप्रयत्नः दर्शनं सूक्ष्मार्थपरिज्ञानम् बुद्धिः विवेकः स्मृतिः अनुभूतार्थाविस्मरणम् एतत् सर्वं द्विगुणम् वैनतेयसंस्पर्शवशात् पूर्वतोऽप्यधिकं जातमित्यर्थः । अत्र धीरिति गायत्र्याः सप्तदशाक्षरम् । षोडशसहस्रश्लोका गताः ॥ ४० ॥

रा० टी०—ताविति । महातेजा गरुडः उभौ तौ रामलक्ष्मणौ उत्थाप्य सस्वजे चरणानामालिङ्गनं चकार रामश्चैनं गरुडमुवाच ॥ ४१ ॥

गो० टी०—ताविति । क्रियाभेदात्तच्छब्दद्वयम् ॥ ४१ ॥

४२ ] ति० टी०—व्यतिक्रान्तौ लङ्घितवन्तौ ॥ ४२ ॥

रा० टी०—तदाकारमाह—भवदित्यादिभिः । रावणिप्रभवं व्यसनं दुःखं भवत्प्रसादात् आवां व्यतिक्रान्तौ अत एव उपायेन यत्नेन त्वया बलिनौ कृतौ ॥ ४२ ॥

गो० टी०—भवदिति । व्यतिक्रान्तौ लङ्घितवन्तौ । गत्यर्थत्वात् कर्तरि क्तः ॥ ४२ ॥ ४३ ॥

४३ ] ति० टी०—यथा तातं दशरथं स्वावतारोचितं कश्यपप्रजापत्यंशम् अजं च पितामहं चतुर्मुखब्रह्मांशम् मे हिरण्यगर्भात्मनस्तदंशस्य ॥ ४३ ॥

रा० टी०—यथेति । यथा दशरथं यथाजं चासाद्य प्राप्य मे हृदयं प्रसीदति तथा भवन्तमासाद्य प्रसीदति एतेन गरुडस्य वृद्धत्वं सूचितम् ॥ ४३ ॥

४४ ] ति० टी०—को भवानिति । अयं प्रश्नोऽपि मनुष्यशरीरोचितव्यवहार एव तत्सत्यत्वप्रख्यापनार्थः अत्र रामसमीपागमनपर्यन्तं पक्ष्याकारेणैवागत्य संनिधिमात्रेण नागबन्धनं च निरस्य राघवस्पर्शनार्थं पुरुषाकारेण व्यवहृतवानिति बोध्यम् । तदाह—रूपसंपन्न इति । दिव्य रूपसंपन्न इत्यर्थः ॥ ४४ ॥

रा० टी०—क इति । विरजे निर्मले वस्त्रे वसानो भवान् कः ॥ ४४

गो० टी०—को भवानिति । विरजे निर्मले ॥ ४४ ॥ ४५ ॥

४५ ] ति० टी०—हर्षपर्याकुलेक्षणं राममुवाचेत्यन्वयः ॥ ४५ ॥

रा० टी०—तमिति । वैनतेयो हर्षपर्याकुलेक्षणं तं राममुवाच एतेन गरुडस्याभीष्टसिद्धिर्जातेति ध्वनितम् तेन गरुडस्य रामपरिचर्यायामभिलाषातिशयः सूचितः ॥ ४५ ॥

४६ ] ति० टी०—अहं सखेति । सखित्वात्सुग्रीवादिवदेव साह्यकरणार्थमागत इति भावः ॥ ४६ ॥

रा० टी०—तदाकारमाह—अहमित्यादिभिः । बहिश्चरः प्राण इव ते सखा ईदृग्भावनावानित्यर्थः गरुत्मानहम् अत एव युवयोः साह्यकारणादिह संप्राप्तः ॥ ४६ ॥

गो० टी०—अहमिति । सखा वाहनत्वेन सहाय इति गूढोक्तिः । युवाभ्यां युवयोः षष्ठ्यर्थे तृतीया । साह्यकारणात्साहाय्यार्थम् ॥ ४६–४८ ॥

४७-४८ ] ति० टी०—इदं च साहाय्यं मदेकसाध्यमित्याह—असुरा वेति ॥ ४७ ॥ ४८ ॥

रा० टी०—स्वागमनप्रयोजनमाह—असुरा इति । इन्द्रजिता मायाबलात् निर्मितमिमं शरबन्धं मोक्षयितुम् असुरादयः शतक्रतुं पुरस्कृत्य सुरा वा न शक्ताः एतेन मोचनार्थमेवाहमागत इति ध्वनितम् श्लोकद्वयमेकान्वयि ॥ ४७ ॥ ४८ ॥

१ महागुण इति रा. पाठः । २ द्विगुणमिति गो. पाठः । ३ वीर्याविति गो. पाठः । ४ ताविति गो. पाठः । ५ हृष्टाविति गो. पाठः । ६ आवामिहेति गो. पाठः । ७ पूर्ववदिति गो. पाठः । ८ ईक्षण इति गो. पाठः । ९ युवाभ्यामिति गो. पाठः । १० दानवा इति गो. पाठः ।

एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः । रक्षोमायाप्रभावेण शरभूतास्त्वदाश्रयाः ॥ ४९ ॥
सभाग्यश्चासि धर्मज्ञ राम सत्यपराक्रम । लक्ष्मणेन सह भ्रात्रा समरे रिपुघातिना ॥ ५० ॥
इमं श्रुत्वा तु विक्रान्तस्त्वरमाणोऽहमागतः । सहसैवावयोः स्नेहात्सखित्वमनुपालयन् ॥ ५१ ॥
मोक्षितौ च महाघोरादस्मात्सायकबन्धनात् । अप्रमादश्च कर्तव्यो युवाभ्यां नित्यमेव हि ॥ ५२ ॥
प्रकृत्या राक्षसाः सर्वे सङ्ग्रामे कूटयोधिनः । शूराणां शुद्धभावानां भवतामार्जवं बलम् ॥ ५३ ॥
तन्न विश्वसनीयं वो राक्षसानां रणाजिरे । एतेनैवोपमानेन नित्यं जिह्मा हि राक्षसाः ॥ ५४ ॥
एवमुक्त्वा तदा रामं सुपर्णः स महाबलः । परिष्वज्य च सुस्निग्धमाप्रष्टुमुपचक्रमे ॥ ५५ ॥
सखे राघव धर्मज्ञ रिपूणामपि वत्सल । अभ्यनुज्ञातुमिच्छामि गमिष्यामि यथासुखम् ॥ ५६ ॥
न च कौतूहलं कार्यं सखित्वं प्रति कांक्षिणा । कृतकर्मा रणे वीर सखित्वं प्रतिवेत्स्यसि ॥ ५७ ॥
बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः । रावणं तु रिपुं हत्वा सीतां त्वमुपलप्स्यसे ॥ ५८ ॥
इत्येवमुक्त्वा वचनं सुपर्णः शीघ्रविक्रमः । रामं च [11]नीरुजं कृत्वा मध्ये तेषां वनौकसाम् ॥ ५९ ॥
प्रदक्षिणं ततः कृत्वा परिष्वज्य च वीर्यवान् । जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥ ६० ॥
[12]नीरुजौ राघवौ दृष्ट्वा ततो वानरयूथपाः । सिंह[13]नादं तदा नेदुर्लाङ्गूलं दुधुवुश्च ते ॥ ६१ ॥

---

४९ ] ति० टी०—रक्षोमायया शरभूता एते नागास्त्वदाश्रया इति बहुव्रीहिः । त्वां प्राप्ता इत्यर्थः ॥ ४९ ॥

रा० टी०—तत्र हेतुमाह—एते इति । काद्रवेयाः कद्रुसुता एतेनागाः रक्षोमायाप्रभावेण शरभूताः सन्तः त्वदाश्रयाः त्वामाश्रयन्तेत्यर्थः ॥ ४९ ॥

गो० टी०—एत इति । काद्रवेयाः कद्रूपुत्राः । मायाबलात् आश्चर्यशक्तिरूपबलात् ॥ ४९ ॥ ५० ॥

५० ]ति० टी०—मम दुर्नयैरित्यादिना यदात्मनिन्दनं कृतं तत्परिहरति—सभाग्य इति । अनुकूलतरशुभदैववानसि । समरे समरविषये ॥ ५० ॥

रा० टी०—सभाग्य इति । रिपुघातिना समरे कृतमिमं वृत्तान्तं श्रुत्वा आवयोः स्नेहात् सखित्वमनुपालयन् संपादयितुमित्यर्थः त्वरमाणोऽहमागतः सायकबन्धनात् मया युवां मोक्षितौ च अतः सभाग्योसि अनायासेनैव ते कार्यसिद्धिर्भवतीति तात्पर्यम् । सार्धश्लोकद्वयमेकान्वयि ॥ ५० ॥ ५१ ॥

५१ ] ति० टी०—इमं वृत्तान्तं नागबन्धवृत्तान्तं श्रुत्वा । देवतानां मुखादिति शेषः स्नेहादेवागतः ॥ ५१ ॥

गो० टी०—इममिति । सहसा जवेन ॥ ५१ ॥

५२–५३ ] ति० टी०—स्नेहादेव च युवां मोक्षितौ मोचितौ । अप्रमादः सावधानता ॥ ५२ ॥ ५३ ॥

रा० टी०—अप्रमाद इति । प्रकृत्या स्वभावेनैव राक्षसाः कूटयोधिनो भवन्ति अतो युवाभ्यामप्रमादः प्रमादराहित्यं कर्तव्यः ॥ ५२ ॥

गो० टी०—मोक्षिताविति । अप्रमादश्च कर्तव्य इति । तत्तदवस्थानुगुणप्रत्यवायप्रयोगेषु सावधानाभ्यां भवितव्यमित्यर्थः ५२

रा० टी०—शूराणामिति । शुद्धभावानां भवतां बलमार्जवं कापट्यहीनमस्ति तत्तस्माद्धेतोः राक्षसानां रणाजिरे वो युष्माकं न विश्वसनीयम् सावधानतया स्थातव्यमित्यर्थः ॥ ५३ ॥

गो० टी०—प्रकृत्येत्यादिश्लोकद्वयम् । एतेनैवोपमानेनेति । अनेन दृष्टान्तेन राक्षसा जिह्मा ज्ञेया इत्यर्थः ॥ ५३–५५ ॥

५४ ] ति० टी०—तन्न विश्वसनीयम् । यथा वयमृजवो धर्मपरास्तथा पुरुषत्वाविशेषाद्रक्षांस्यपि तथैवेति कल्पितं रक्षोगतमार्जवं न विश्वसितव्यमित्यर्थः । उक्तमेवार्थमनुभवतः स्पष्टीकरोति—एतेनैवेति । इन्द्रजित्कापट्येनैवेत्यर्थः ॥ ५४ ॥

रा० टी०—एतेनेति । एतेन इन्द्रजिता उपमानेन दृष्टान्तभूतेन राक्षसाः नित्यं जिह्माः सकपटाः बोध्या इति शेषः । अर्धं पृथक् ॥ ५४ ॥

५५-५६ ]ति० टी०—आप्रष्टु गमनानुज्ञां कारयितुम् ५५ ॥ ५६

रा० टी०—एवमिति । सुपर्णः सुस्निग्धं राममेवमुक्त्वा परिष्वज्य च आप्रष्टुं स्वगमनाय प्रार्थयितुमुपचक्रमे ॥ ५५ ॥

रा० टी०—तदाकारमाह—सखे इति । हे राघव! अभ्यनुज्ञातुं स्वगमनाय भवदाज्ञां ग्रहीतुमिच्छामि अत एव यथासुखं गमिष्यामि ॥ ५६ ॥

गो० टी०—सखे इति । रिपूणामपि वत्सलेत्यनेन इन्द्रजिद्वधोपायो न ज्ञात इति द्योत्यते ॥ ५६ ॥

५७–५९ ] ति० टी०—मदुक्तसखित्वं प्रति लोकप्रतारणायापि विस्मयो न कार्य इत्याह—न चेति । अनुवेत्स्यसि । एतैः सर्वैः सहेति शेषः ॥ ५७ ॥ ५९ ॥

६०–६१ ] ति० टी०—प्रदक्षिणं कृत्वेत्यनेन दिव्यदेवतावतारो राम इति सर्वान्प्राकृतकपीन्प्रत्यपि बोधितम् ॥ ६० ॥ ६१ ॥

---

१ त्वरा भूत्वा त्वदाश्रिता इति गो. पाठः । २ वृत्तान्तमिति गो. रा. पाठः । ३ सहसा युवयोरिति गो. पाठः । ४ विश्वसितव्यमिति गो. पाठः । ५ तव इति गो. पाठः । ६ सुहृदिति गो. पाठः । ७ गतमिति गो. पाठः । ८ वीरः इति गो. पाठः । ९ चेति गो. पाठः । १० समिति गो. पाठः । ११ विरुजमिति गो. पाठः । १२ विरुजाविति गो. पाठः । १३ नादानिति गो. पाठः । १४ तदेति गो. पाठः ।

ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाप्यवादयन् । दध्मुः शङ्खान्संप्रहृष्टा क्ष्वेलन्त्यपि यथापुरम् ॥ ६२ ॥
अपरे स्फोटच विक्रान्ता वानरा नगयोधिनः । द्रुमानुत्पाट्य विविधांस्तस्थुः शतसहस्रशः ॥ ६३ ॥
विसृजन्तो महानादांस्त्रासयन्तो निशाचरान् । लङ्काद्वाराण्युपाजग्मुर्युद्धकामाः प्लवंगमाः ॥ ६४ ॥
तेषां सुभीमस्तुमुलो निनादो बभूव शाखामृगयूथपानाम् ।
क्षये निदाघस्य यथा घनानां नादः सुभीमो नदतां निशीथे ॥ ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ।

वानरारवं तुमुलमाकर्ण्यानुयुक्तै रक्षचरैर्निवेदितं राघवयोरुरगपाशमोचनम् । ततः खिन्नेन दशाननेन रामवधार्थं धूम्राक्षः प्रहितः शुभेतरानुत्पातानिरीक्ष्य व्यथितोऽपि कथमपि निवर्तनमनिच्छन्रामचमूमपश्यत् ।

तेषां तु तुमुलं शब्दं वानराणां महौजसाम् । नर्दतां राक्षसैः सार्धं तदा शुश्राव रावणः ॥ १ ॥

रा० टी०—ननु कथं मया तव सख्यमित्यत आह—नेति । रणे कृतकर्मा त्वं सखित्वं प्रति वेत्स्यसि ज्ञास्यसि अतः सखित्वं प्रति कौतूहलम् इदानीं प्रश्न इत्यर्थः न कार्यम् ॥ ५७ ॥

गो० टी०—अहं सखा ते काकुत्स्थेत्यादिनोक्तं सखित्वं कथमिति रामाशयमाशङ्क्य रहस्यत्वादिदानीं तद्विषयप्रश्नो न कर्तव्यः रावणवधानन्तरं स्वयमेव ज्ञास्यसीत्याह—न चेति । सखित्वं प्रति सखित्वप्रश्नं प्रतीत्यर्थः ॥ ५७ ॥

रा० टी०—रणवृत्तं बोधयन्नाह—बालेति । शरोर्मिभिः लङ्कां बालवृद्धानामवशेषो यस्यां तां कृत्वा रावणं च हत्वा सीतामुपलप्स्यसे ॥ ५८ ॥

गो० टी०—रामस्योत्साहवर्धनाय भाविनमर्थं कथयति—बालेत्यादिना । शरोर्मिभिः शरपरम्पराभिः ॥ ५८ ॥

रा० टी०—इतीति । सुपर्णः शोभनपक्षविशिष्टः सुपर्णो वनौकसां मध्ये एवमुक्त्वा रामं निरुजं कृत्वा प्रकटय्येत्यर्थः प्रदक्षिणं कृत्वा च पवन इव आकाशमाविश्य जगाम । श्लोकद्वयमेकान्वयि ॥ ५९ ॥ ६० ॥

गो० टी०—इत्येवमिति । शीघ्रविक्रमः शीघ्रगतिः । क्रियाभेदेन सुपर्णपदद्वयान्वयः ॥ ५९ ॥ ६० ॥

रा० टी०—निरुजाविति । वानरयूथपाः राघवौ निरुजौ दृष्ट्वा सिंहनादं नेदुः लाङ्गूलं दुधुवुश्च ॥ ६१ ॥

गो० टी०—विरुजाविति । सिंहनादं नेदुः सिंहनादं चक्रुरित्यर्थः । दुधुवुः अकम्पयन् ॥ ६१ ॥

६२–६४ ] ति० टी०—यथापुरं यथापूर्वम् ॥ ६२ ॥६४॥

रा० टी०—तत इति । भेरीः समाजघ्नुः यथापुरं क्ष्वेलन्ति च ॥ ६२ ॥

रा० टी०—अपर इति । अमोघविक्रमाः नगयोधिनः अपरे वानराः सहस्रशो द्रुमानुत्पाट्य तस्थुः ॥ ६३ ॥

रा० टी०—विसृजन्त इति । प्लवङ्गमाः लङ्काद्वाराणि उपाजग्मुः ॥ ६४ ॥

गो० टी०—तत इति । यथापुरं यथापूर्वम् । ननु, पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान् । अङ्गुल्यग्रेण तान् हन्यामित्युक्तनिरवधिकशक्तिसंपन्नः सर्वज्ञो रामः कथमज्ञ इवाशक्त इवेन्द्रजिता हतो लोहिताक्तो भूमौ स्थित इवाभावयत् । उच्यते । लोके समाचारप्रवर्तनायैवं स्थितः । इन्द्रजित्पराजयेन ह्ययमर्थोऽवगम्यते । शुचीनां शुद्धभावानामृजूनां प्राणसन्देहदायिविपद्यपि न विनाशः । विपरीतानां पापिष्ठानां तु करतलगतापि कार्यसिद्धिर्विगलति अतः शुचित्वार्जवादिगुणयुक्तैः पुम्भिर्भवितव्यमिति सतां धर्मनिश्चयप्रतिपत्तिर्जायते । ननु रावणवधार्थं देवैरर्थितो हि विष्णू रामत्वेनावतीर्णः सत्यं, दुष्कृद्विनाशवद्धर्मसंस्थापनमपि ह्यवतारप्रयोजनम् रावणवधमात्रस्य प्रयोजनत्वे ह्येतावान् प्रयासो व्यर्थः स्यात् । अत एवोक्तम्—चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यतीति । न च धर्मोपदेशमात्रेण तत्सिद्धिः तादृशोपदेशस्य श्रुतिस्मृतिभिरेव कृतत्वात् । स्वाचारमुखेन धर्मप्रवचनाय हि मानुषभावना च कृता । अतः स्वाचारमुखेन धर्मप्रवर्तनमित्यादिप्रबन्धवादावेवोक्तम् ॥ ६२–६५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

६५] ति० टी०—निशीथे यथा घनानां नादस्तथा वानराणां नाद इत्यर्थः अत्र स्थाने दिनद्वयं युद्धावहार इत्याग्निवेश्यः॥६५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

रा० टी०—तेषामिति । निदाघस्य क्षये निशीथे नदतां घनानां भीमो नाद इव शाखामृगयूथपानां भीमो निनादो बभूव ॥६५॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

१ ] ति० टी०—अथ श्रुतवानरनादेन रावणेन धूम्राक्षप्रेषणम्—तेषामिति । राक्षसैर्विभीषणादिभिः ॥ १ ॥

१ आस्फोट्यास्फोट्येति गो.पाठः । २ योद्धुकामा इति गो.पाठः । ३ तस्थिवांसि इति गो.पाठः । ४ तरस्विनामिति गो.पाठः । ५ नर्दतामिति गो.पाठः ।

स्निग्धगम्भीरनिर्घोषं श्रुत्वा तं निनदं भृशम् । सचिवानां ततस्तेषां मध्ये वचनमब्रवीत् ॥ २ ॥
यथासौ संप्रहृष्टानां वानराणामुपस्थितः । बहूनां सुमहान्नादो मेघानामिव गर्जताम् ॥ ३ ॥
सुव्यक्तं महती प्रीतिरेतेषां नात्र संशयः । तथा हि विपुलैर्नादैश्चुक्षुभे लवणार्णवः ॥ ४ ॥
तौ तु बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ । अयं च सुमहान्नादः शङ्कां जनयतीव मे ॥ ५ ॥
एवं च वचनं चोक्त्वा मन्त्रिणो राक्षसेश्वरः । उवाच नैर्ऋतांस्तत्र समीपपरिवर्तिनः ॥ ६ ॥
ज्ञायतां तूर्णमेतेषां सर्वेषां च वनौकसाम् । शोककाले समुत्पन्ने हर्षकारणमुत्थितम् ॥ ७ ॥
तथोक्तास्ते सुसंभ्रान्ताः प्राकारमधिरुह्य च । ददृशुः पालितां सेनां सुग्रीवेण महात्मना ॥ ८ ॥
तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ । समुत्थितौ महाभागौ विषेदुः सर्वराक्षसाः ॥ ९ ॥
संत्रस्तहृदयाः सर्वे प्राकारादवरुह्य ते । विवर्णा राक्षसा घोरा राक्षसेन्द्रमुपस्थिताः ॥ १० ॥
तदप्रियं दीनमुखा रावणस्य च राक्षसाः । कृत्स्नं निवेदयामासुर्यथावद्वाक्यकोविदाः ॥ ११ ॥
यौ ताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ । निबद्धौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ ॥ १२ ॥
विमुक्तौ शरबन्धेन दृश्येते तौ रणाजिरे । पाशानिव गजौ छित्त्वा गजेन्द्रसमविक्रमौ ॥ १३ ॥
तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः । चिन्तारोषसमाक्रान्तो विवर्णवदनोऽभवत् ॥ १४ ॥

रा० टी०—इन्द्रजित् कृतमायाविध्वंसानन्तरकालिकं रावणवृत्तान्तमाह—तेषामित्यादिभिः । नदतां वानराणां तुमुलं शब्दं रावणो राक्षसैः सार्धं शुश्राव ॥ १ ॥

गो० टी०—अथ धूम्राक्षनिर्गम एकपञ्चाशे—तेषामित्यादि । राक्षसैः सह शुश्रावेत्यन्वयः ॥ १ ॥

२ ] ति० टी०—स्निग्धगम्भीरत्वेन दुःखमूलरोदनादिशब्दव्यावृत्तिः॥ २ ॥

रा० टी०—स्निग्धेति । स्निग्धत्वादिविशिष्टं निनदं श्रुत्वा सचिवानां मध्ये इदमब्रवीत् रावण इत्यनुकृष्यते स्निग्धादिविशेषणेन तेषां शोकापगमः सूचितः ॥ २ ॥

गो० टी०—स्निग्धेति । निर्घोषः ध्वनिः ॥ २ ॥

३ ] ति० टी०—यथा । यस्मादित्यर्थः । एवमेषां नादः समुत्थितः ॥ ३ ॥

रा० टी०—वचनाकारमाह—यथेत्यादिभिः । मेघानामिव गर्जतां वानराणां यथा यतः सुमहान्नादः तथा तस्मात् एषां महती प्रीतिः सुव्यक्तम् अत्र संशयो न सामान्ये नपुंसकम् अत एव एषां नादैः लवणार्णवः चुक्षुभे श्लोकद्वयमेकान्वयि ॥३॥४॥

गो० टी०—यथा सावित्यादिसार्धश्लोक एकान्वयः । यथा येन प्रकारेण । सुमहानादः समुत्थितः ततः एतेषां सुमहती प्रीतिः । अस्तीति शेषः ॥ ३ ॥

४ ] ति० टी०—तस्मादेषां महती प्रीतिर्जातेति मन्ये । तत्रैव युक्त्यन्तरम्—तथा हीति ॥ ४ ॥

गो० टी०—तथाहीत्यर्धम् । तथा प्रसिद्धप्रकारः ॥ ४ ॥

५–६ ] ति० टी०—शङ्कां बन्धमोक्षणशङ्कां जनयतीव जनयत्येव ॥ ५ ॥ ६ ॥

रा० टी०—ताविति यतोरामलक्ष्मणौ बद्धौ अतः अयं सुमहान् नादो मे शङ्कां जनयत्येव इव एवार्थे ॥ ५ ॥

रा० टी०—एवमिति । राक्षसेश्वरः मन्त्रिणः एवमुक्त्वा नैर्ऋतान् राक्षसानुवाच ॥ ६ ॥

गो० टी०—तौ त्विति । तुशब्दश्चार्थः । तौ च बद्धौ नादश्च श्रूयते । स च प्रकृतविरुद्धो नादः । शङ्कां राजपुत्रयोः शरबन्धापगमशङ्काम् जनयतीव । इव शब्दः संभावनायाम् ॥ ५ ॥ ६ ॥

७ ] ति० टी०—किं हर्षकारणमुत्थितं तज्ज्ञायताम् ॥ ७ ॥

रा० टी०—तदाकारमाह—ज्ञायतामिति । वनौकसां शोककाले समुत्पन्नेसति उत्थितं हर्षकारणं ज्ञायताम् कथमयं हर्षो जात इति निश्चीयतामित्यर्थः ॥ ७ ॥

गो० टी०—ज्ञायतामिति । उत्थितं हर्षकारणं ज्ञायतामित्यन्वयः ॥ ७–९ ॥

८ ] ति० टी०—प्राकारमधिरुह्येति । अनेनात्रावहारः सूचितः ॥ ८ ॥

९–१४ ] ति० टी०—समुत्थितौ । दृष्टेति शेषः ॥९॥१४॥

१ स इति गो. पाठः । २ समुत्थित इति गो. पाठः । ३ महानाद इति गो. पाठः । ४ व्यक्तं सुमहतीति गो. पाठः । ५ वरुणालय इति गो. पाठः । ६ एतांस्त्विति गो. पाठः । ७ वनचारिणामिति गो. पाठः । ८ ते इति गो. पाठः । ९ वेगाविति गो. पाठः । १० प्रेक्ष्येति गो. रा. पाठः । ११ विषण्णवदना इति गो. पाठः । १२ निशाचरा इति गो. रा. पाठः । १३ तौ दृश्येते इति गो. पाठः । १४ शोकेति गो. पाठः । १५ विषण्णेति गो. पाठः । १६ अभवीदिति गो. पाठः ।

घोरैर्दत्तवरैर्बद्धौ शरैराशीविषोपमैः । अमोघैः सूर्यसंकाशैः प्रमथ्येन्द्रजिता युधि ॥ १५ ॥
तदस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम । संशयस्थमिदं सर्वमनुपश्याम्यहं बलम् ॥ १६ ॥
निष्फलाः खलु संवृत्ताः शराः पावकतेजसः । आदत्तं यैस्तु सङ्ग्रामे रिपूणां जीवितं मम ॥ १७ ॥
एवमुक्त्वा तु संक्रुद्धो निःश्वसन्नुरगो यथा । अब्रवीद्रक्षसां मध्ये धूम्राक्षं नाम राक्षसम् ॥ १८ ॥
बलेन महता युक्तो राक्षसैर्भीमविक्रमः । त्वं वधायाशु निर्याहि रामस्य सह वानरैः ॥ १९ ॥
एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता । परिक्रम्य ततः शीघ्रं निर्जगाम नृपालयात् ॥ २० ॥
अभिनिष्क्रम्य तद्द्वारं बलाध्यक्षमुवाच ह । त्वरयस्व बलं शीघ्रं किं चिरेण युयुत्सतः ॥ २१ ॥
धूम्राक्षवचनं श्रुत्वा बलाध्यक्षो बलानुगः । बलमुद्योजयामास रावणस्याज्ञया भृशम् ॥ २२ ॥
ते बद्धघण्टा बलिनो घोररूपा निशाचराः । विनर्दमानाः संहृष्टा धूम्राक्षं पर्यवारयन् ॥ २३ ॥

---

रा० टी०–तथेति । तथोक्ताः अत एव सुसंभ्रान्ताः सर्वराक्षसाः प्राकारमभिरुह्य सुग्रीवेणाभिपालितां सेनां शरबन्धेन मुक्तौ राघवौ च ददृशुः अत एव विषेदुः श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

रा० टी०–सन्त्रस्तेति । संत्रस्तहृदयाः राक्षसाः प्राकारादवरुह्य राक्षसेन्द्रमुपस्थिता बभूवुरिति शेषः ॥ १० ॥

गो० टी०–संत्रस्तेति । उपस्थिताः प्राप्ताः ॥ १० ॥

रा० टी०–तदिति । वाक्यकोविदा राक्षसाः रावणस्याप्रियं तद्वृत्तं यथावन्निवेदयामासुः ॥ ११ ॥

रा० टी०–निवेदनप्रकारमाह—याविति । इन्द्रजिता यौ शरबन्धेन निबद्धौ अत एव निष्प्रकम्पभुजौ कृतौ तौ रामलक्ष्मणौ पाशान् क्षिप्त्वा गजाविव शरबन्धेन विमुक्तौ दृश्येते श्लोकत्रयमेकान्वयि ॥ १२ ॥ १३ ॥

रा० टी०–तदिति । तेषां वचनं श्रुत्वा राक्षसेन्द्रः चिन्ताशोकाभ्यां समाक्रान्तः अत एव विवर्णवदनोऽभवत् ॥ १४ ॥

गो० टी०–तदप्रियमित्यादि । यौ तौ । यावित्यर्थः । पाशानिति । पाशान् क्षित्वा स्थितौ गजाविव भासमानावित्यर्थः ॥ १२–१४ ॥

१५ ] ति० टी०–दत्तवरैरिति दत्ता दत्तवरास्तैः । चिरकालदुःखतपसा वरप्राप्तैरित्यर्थः । युधि प्रमथ्य बद्धावित्यन्वयः॥१५॥

१६ ] ति० टी०–संशयस्थम् । इन्द्रजिद्बलमवष्टभ्य स्थितस्य मे एतद्बलस्य वैफल्यात्प्रायोऽस्माकमपजय इति मन्ये इत्यर्थः ॥ १६ ॥

रा० टी०–चिन्ताकारमाह–घोरैरित्यादिभिः । दत्तवरैः प्राप्ताभयप्रदानैः अत एव अमोघैः शरैः प्रमथ्य इन्द्रजिता बद्धौ मम रिपू यदि तदस्त्रबन्धमासाद्य प्राप्य मुक्तौ तदा इदं राक्षसबलं संशयस्थमनुपश्यामि विजयो भवेन्नवेति संशयं प्राप्नोमीत्यर्थः । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०–घोरैरित्यादि । दत्तवरैः वरदत्तैः । प्रमथ्य बलात्कृत्य । बद्धौ अभूतामिति शेषः । संशयस्थं प्राणसंशयस्थं आदत्तम् आत्तम् ॥ १५–१८ ॥

१७–१९ ] ति० टी०–तदेवाह—निष्फला इति । यैः शरैरिन्द्रजित्प्रयुक्तैः सङ्ग्रामे मम रिपूणां जीवितमादत्तं ते निष्फलाः संवृत्ताः खलु तस्मात्संशयस्थमिदम् ॥ १७ ॥ १९ ॥

रा० टी०–निष्फला इति । यैः रिपूणां जीवितमादत्तं ते शराः निष्फलाः संवृत्ता भूताः ॥ १७ ॥

रा० टी०–एवमिति । एवमुक्त्वा धूम्राक्षं नाम राक्षसमब्रवीत् ॥ १८ ॥

रा० टी०–तदाकारमाह—बलेनेति । महता बलेन युक्तस्त्वं वानरैः सह रामस्य वधाय निर्याहि ॥ १९ ॥

गो० टी०–बलेनेति । त्वं वधायाभिनिर्याहीत्यमङ्गलसूचकं वचः ॥ १९ ॥ २० ॥

२० ] ति० टी०–परिक्रम्य रावणं प्रदक्षिणीकृत्य ॥ २० ॥

रा० टी०–एवमिति । एवमुक्तो धूम्राक्षः नृपालयात् निर्जगाम ॥ २० ॥

२१–२२ ] ति० टी०–तद्द्वारं रावणगृहद्वारमभिनिष्क्रम्य ततो निर्गम्य युयुत्सतः पुंसः किं चिरेण किं विलम्बेन विलम्बो व्यर्थ इत्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०–अभीति । तद्द्वारमभिनिष्क्रम्य युयुत्सतो जनस्य चिरेण किम् न प्रयोजनमित्यर्थः अतो बलं शीघ्रं त्वरयस्व इति बलाध्यक्षमुवाच ॥ २१ ॥

गो० टी०–अभिनिष्क्रम्येति । द्वारमभिनिष्क्रम्य द्वारान्निष्क्रम्य । युयुत्सतः ममेति शेषः । किं चिरेण किं विलम्बेन ॥ २१ ॥

रा० टी०–धूम्राक्षेति । बलाध्यक्षो धूम्राक्षवचनम् श्रुत्वा रावणस्याज्ञया बलमुद्योजयामास ॥ २२ ॥

गो० टी०–धूम्राक्षेति । रावणस्याज्ञया रावणाज्ञाकृतं धूम्राक्षवचनं श्रुत्वेत्यर्थः ॥ २२ ॥

२३ ] ति० टी०–बद्धघण्टाः प्रासशक्त्यादिष्विति शेषः॥२३

---

१ वासुकीनि गो. रा. पाठः । २ मयिजीवितमिति रा. ममजीवितमिति गो. पाठः । ३ विक्रमेति गो. रा. पाठः । ४ अभीति गो.पाठः । ५ कृत्वाप्रणामं संहृष्ट इति गो.पाठः । ६ द्रुतमिति गो. पाठः । ७ गर्जमाना इति गो. पाठः ।

विविधायुधहस्ताश्च शूलमुद्गरपाणयः । गदाभिः पट्टिशैर्दण्डैरायसैर्मुसलैरपि ॥ २४ ॥
परिघैर्भिन्दिपालैश्च भल्लैः पाशैः परश्वधैः । निर्ययू राक्षसा घोरा नर्दन्तो जलदा यथा ॥ २५ ॥
रथैः कवचिनस्त्वन्ये ध्वजैश्च समलंकृतैः । सुवर्णजालविहितैः खरैश्च विविधाननैः ॥ २६ ॥
हयैः परमशीघ्रैश्च गजैश्चैव मदोत्कटैः । निर्ययुर्नैर्ऋतव्याघ्रा व्याघ्रा इव दुरासदाः ॥ २७ ॥
मृगसिंहमुखैर्युक्तं खरैः कनकभूषितैः । आरुरोह रथं दिव्यं धूम्राक्षः खरनिःस्वनः ॥ २८ ॥
स निर्यातो महावीर्यो धूम्राक्षो राक्षसैर्वृतः । हसन्वै पश्चिमद्वाराद्धनूमान्यत्र तिष्ठति ॥ २९ ॥
रथप्रवरमास्थाय खरयुक्तं खरस्वनम् । प्रयान्तं तु महाघोरं राक्षसं भीमदर्शनम् ॥ ३० ॥
अन्तरिक्षगताः क्रूराः शकुनाः प्रत्यषेधयन् । रथशीर्षे महाभीमो गृध्रश्च निपपात ह ॥ ३१ ॥
ध्वजाग्रे ग्रथिताश्चैव निपेतुः कुणपाशनाः । रुधिरार्द्रो महाञ्श्वेतः कबन्धः पतितो भुवि ॥ ३२ ॥
विस्वरं चोत्सृजन्नादान्[14]धूम्राक्षस्य निपातितः[15] । ववर्ष रुधिरं देवः संचचाल च मेदिनी ॥ ३३ ॥

रा० टी०—ते इति । बद्धघण्टाः पाशशक्त्यादिषु यैः ते शूलमुद्गरपाणयः स्वाभाविकशूलादियुक्तपाणिविशिष्टास्ते निशाचराः विविधायुधहस्तास्सन्तो विनद्यमानाः धूम्राक्षं पर्यवारयन् सार्द्धश्लोक एकान्वयी ॥ २३ ॥

गो० टी०—त इति । बद्धघण्टाः शूरत्वज्ञापनाय कटिबद्धघण्टा इत्यर्थः । ते पूर्वोक्तसेनास्थाः । विविधेति । आयुधानि शूलादिभिन्नानि । अस्यार्थस्य पूर्वेणान्वयः ॥ २३ ॥

२४-२५ ] ति० टी०—गदादिभिरुपलक्षिताः ॥२४॥२५॥

रा० टी०—आयुधानि निर्दिशन्नाह—गदाभिरिति । गदाभिरुपलक्षिताः जलदा इव गर्जन्तो राक्षसा निर्ययुः सार्द्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०—गदाभिरित्यादि । गदा प्रसिद्धा पट्टिशः दण्डविशेषः परिघः भिन्दिपालः भल्लः अयोमयः शरः प्रासैः परश्वधैः दिग्भ्यो जलदा इवेत्यन्वयः ॥ २४ ॥ २५ ॥

२६-२८ ] ति० टी०—समलंकृतैरिति रथध्वजयोर्विशेषणम् । सुवर्णजालविहितैस्तेन विहितालंकारैः ॥ २६ ॥ २८ ॥

रा० टी०—रथैरिति । अन्ये एके कवचिनो व्याघ्र इव दुरासदाः नैर्ऋतव्याघ्राः ध्वजैस्समलंकृतैस्सुवर्णजालेन विहितैः रचितैर्विविधाननैः खरैस्सन्नद्धैः रथैर्हयादिभिश्च निर्ययुः श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

रा० टी०—वृकेति । वृकाणां सिंहानां च मुखानीव मुखानि येषां तैः कनकभूषितैः खरैर्युक्तं रथं धूम्राक्ष आरुरोह ॥ २८ ॥

गो० टी०—रथैरिति । अन्ये कवचिनः । ध्वजैः विविधाननैः खरैश्च समलङ्कृतै रथैर्निर्ययुः । अन्ये हयैः अन्ये गजैश्च निर्ययुरित्यन्वयः ॥ २६—२९ ॥

२९-३० ] ति० टी०—पश्चिमद्वारात् यत्र द्वारे हनूमान्रोधकस्तस्मादेव पश्चिमद्वाराद्धनुमता योद्धुं निर्गतः ॥ २९ ॥ ३० ॥

रा० टी०—स इति । राक्षसैर्वृतो धूम्राक्षः यत्र हनूमान् तिष्ठति तस्मात् पश्चिमद्वारादेव हसन् सन् निर्यातः ॥ २९ ॥

रा० टी०—रथेति । खरयुक्तं रथप्रवरमास्थाय प्रयान्तं खरस्वनं राक्षसं धूम्राक्षं क्रूराः शकुनाः प्रत्यषेधयन् सार्धश्लोक एकान्वयी ॥ ३० ॥

गो० टी०—प्रयान्तमिति । शकुनाः निमित्तसूचकाः पक्षिणः ॥ ३० ॥

३१ ] ति० टी०—शकुना दुःशकुनाः प्रत्यषेधयन् मृत्युसूचनेनेति शेषः ॥ ३१ ॥

रा० टी०—क्रूरशकुनानेवाह—रथेत्यादिभिः । रथशीर्षं रथस्योपरि मध्यभागे गृध्रो निपपात अद्धं पृथक् ॥ ३१ ॥

गो० टी०—रथशीर्ष इति । कुणपाशनाः गृध्राः ग्रथिताः मिलिताः ॥ ३१ ॥

३२ ] ति० टी०—ग्रथिता मालावत्परस्परसक्ताः कुणपाशना गृध्राः ॥ ३२ ॥

रा० टी०—ध्वजेति । ग्रथिताः मालेव परस्परं संयुक्ताः कुणपाशनाः गृध्राः निपेतुः रुधिरार्द्रः श्वेतो महान् कबन्धो भुवि तदग्रभूमौ पतितः ॥ ३२ ॥

गो० टी०—रुधिरेति । विस्वरमिति क्रियाविशेषणम् ३२

३३ ] ति० टी०—धूम्राक्षस्य समीपे निपातितो निपतितः कबन्ध इति शेषः ॥ ३३ ॥

रा० टी०—विस्वरमिति । निपातितः कबन्धः विस्वरं नादमुत्सृजन् समवर्ततेति शेषः देवो रुधिरं ववर्ष मेदिनी संचचाल धूम्राक्षस्य समीपत इति पाठे तु विस्वरनादोत्सर्जनकर्तापि देव एव बोध्यः ॥ ३३ ॥

गो० टी०—ववर्षेत्यादि । देवः पर्जन्यः । प्रतिलोमं प्रतिकूलम् ॥ ३३—३५ ॥

१ भृशमिति गो. पाठः । २ दिग्भ्य इति गो. पाठः । ३ गजेन्द्रैश्चेति गो. पाठः । ४ राक्षसेति गो. पाठः । ५ वृकेति गो. पाठः । ६ भूषणैरिति गो. पाठः । ७ प्रहसन्निति गो. पाठः । ८ द्वारमिति गो. पाठः । ९ यूथप इति गो. पाठः । १० विक्रममिति गो. पाठः । ११ घोरा इति गो. पाठः । १२ ववारयन्निति गो. पाठः । १३ महानिति गो. पाठः । १४ नादमिति गो. रा. पाठः । १५ समीपत इति गो. पाठः ।

प्रतिलोमं ववौ वायुर्निर्घातसमनिःस्वनः। तिमिरौघावृतास्तत्र दिशश्च न चकाशिरे ॥ ३४ ॥
स तूत्पातांस्ततो दृष्ट्वा राक्षसानां भयावहान्। प्रादुर्भूतान्सुघोरांश्च धूम्राक्षो व्यथितो भवत् ॥
मुमुहू राक्षसाः सर्वे धूम्राक्षस्य पुरःसराः ॥ ॥ ३५ ॥
ततः सुभीमो बहुभिर्निशाचरैर्वृतोऽभिनिष्क्रम्य रणोत्सुको बली।
ददर्श तां राघवबाहुपालितां महौघकल्पां बहु वानरीं चमूम् ॥ ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः।

कपीनां धूम्राक्षेण तुमुले विग्रहे मारुतिर्गिरिश्टङ्गेण तं मूर्ध्नि ताडयित्वा भूमौ पातितवान् स धूम्राक्षो मृतश्च।

धूम्राक्षं प्रेक्ष्य निर्यान्तं राक्षसं भीमविक्रमम्। विनेदुर्वानराः सर्वे प्रहृष्टा युद्धकाङ्क्षिणः ॥ १ ॥
तेषां सुतुमुलं युद्धं संजज्ञे कपिरक्षसाम्। अन्योन्यं पादपैर्घो[3]रैर्निघ्नतां शूलमुद्गरैः ॥ २ ॥
राक्षसैर्वानरा घोरा विनिकृत्ताः समन्ततः। वानरै राक्षसाश्चापि द्रुमैर्भूमिसमीकृताः ॥ ३ ॥
राक्षसास्त्वभिसंक्रुद्धा वानरान्निशितैः शरैः। विव्यधुर्घोरसंकाशैः कङ्कपत्रैरजिह्मगैः ॥ ४ ॥
ते गदाभिश्च भीमाभिः पट्टिशैः कूटमुद्गरैः। घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संश्रितैः ॥ ५ ॥

गो० टी०–मुमुहुरित्यर्धम्। पुरःसराः अग्रगाः ॥ ३६ ॥
३४–३५ ] ति० टी०–प्रतिलोमं प्रतिकूलम् ॥ ३४ ॥ ३५ ॥
रा० टी०–प्रतीति। वायुः निर्घातसमन्वितस्सन् प्रतिलोममननुकूलं ववौ तिमिरौघैरावृता दिशो न चकाशिरे ॥ ३४ ॥
रा० टी०–स इति। प्रादुर्भूतान् सुघोरान् उत्पातान् दृष्ट्वा धूम्राक्षो व्यथितोऽभवत् अत एव धूम्राक्षस्य पुरस्सराः राक्षसाः मुमुहुः सार्धश्लोक एकान्वयी ॥ ३५ ॥
३६ ] ति० टी०–अभिनिष्क्रम्य। पुरादिति शेषः महौघः प्रलयसमुद्रस्तत्कल्पाम् ॥ ३६ ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकपञ्चाशः सर्गः ॥ ५१ ॥
रा० टी०–तत इति। निशाचरैर्वृतः अत एव सुभीमः रणोत्सुकः धूम्राक्षः महौघः प्रलयपयोधिः तत्कल्पां तत्सदृशीं राघवबाहुपालितां बहुवानरीं चमूं ददर्श ॥ ३६ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥
गो० टी०–तत इति। अभिनिष्क्रम्य पुरादिति शेषः। महौघकल्पां महानोघो अस्मिन्निति महौघः सागरः तत्कल्पाम् बहुवानरीम् ङीबनार्षः। द्वितीयायां प्रातर्धूम्राक्षनिर्गमः ॥ ३७ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

१–२ ] ति० टी०–धूम्राक्षमिति ॥ १ ॥ २ ॥
रा० टी०–धूम्राक्षागमनानन्तरकालिकं वानरवृत्तान्तमाह–धूम्राक्षमित्यादिभिः। निर्यान्तं धूम्राक्षं प्रेक्ष्य युद्धकांक्षिणो वानराः विनेदुः ॥ १ ॥
रा० टी०–तेषामिति। पादपैः शूलमुद्गरैश्च अन्योन्यं निघ्नतां कपिरक्षसां सुतुमुलं युद्धं सञ्जज्ञे ॥ २ ॥
गो० टी०–अथ धूम्राक्षवधो द्विपञ्चाशे–धूम्राक्षमित्यादि ॥ १ ॥ २ ॥
३ ] ति० टी०–भूमिसमीकृताः भूमौ समतां प्रापिताः हता इति यावत् ॥ ३ ॥
रा० टी०–राक्षसैरिति। राक्षसैः वानराः विनिकृत्ता विहिंसिताः वानरैश्च राक्षसाः भूमिसमीकृताः भूमिसादृश्यं प्रापिताः विहिंसिता इत्यर्थः ॥ ३ ॥
गो० टी०–घोरैरिति। संहतैः संगतैः। राक्षसविशेषणमेतत् ॥ ३ ॥
४ ] ति० टी०–घोरसंकाशैर्घोररूपैः ॥ ४ ॥
रा० टी०–राक्षसा इति। अभिसंक्रुद्धाः राक्षसाः अजिह्मगैस्शरैर्विव्यधुः ॥ ४ ॥
गो० टी०–वानरैरित्यादि। समीकृताः पातिताः घोरसंकाशैः घोरकालाग्न्यादितुल्यैः। अजिह्मगैः अवक्रगैः कङ्कपत्रैः कङ्कपत्राण्येव पत्राणि येषां ते कङ्कपत्राः तैः ॥ ४ ॥
५ ] ति० टी०–संश्रितैर्गृहीतैः ॥ ५ ॥

१-ततेति गो.पाठः। २ हरीति गो.पाठः। ३ घोरमिति गो.पाठः। ४ भूमाविति गो.पाठः। ५ चापीति गो.पाठः। ६ इदमर्धं तृतीयपद्यस्यादौ गो.पाठे।

विदार्यमाणा रक्षोभिर्वानरास्ते महाबलाः । अमर्षजनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् ॥ ६ ॥
शरनिर्भिन्नगात्रास्ते शूलनिर्भिन्नदेहिनः । जगृहुस्ते द्रुमांस्तत्र शिलाश्च हरियूथपाः ॥ ७ ॥
ते भीमवेगा हरयो नर्दमानास्ततस्ततः । ममन्थुराक्षसान्वीरान्नामानि च बभाषिरे ॥ ८ ॥
तद्बभूवाद्भुतं घोरं युद्धं वानररक्षसाम् । शिलाभिर्विविधाभिश्च बहुशाखैश्च पादपैः ॥ ९ ॥
राक्षसा मथिताः केचिद्वानरैर्जितकाशिभिः । ववमू रुधिरं केचिन्मुखै रुधिरभोजनाः ॥ १० ॥
पार्श्वेषु दारिताः केचित्केचिद्राशीकृता द्रुमैः । शिलाभिश्चूर्णिताः केचित्केचिद्दन्तैर्विदारिताः ॥ ११ ॥
ध्वजैर्विमथितैर्भग्नैः खड्गैश्च विनिपातितैः । रथैर्विध्वंसिताः केचिद्व्यथिता रजनीचराः ॥ १२ ॥
गजेन्द्रैः पर्वताकारैः पर्वताग्रैर्वनौकसाम् । मथितैर्वाजिभिः कीर्णं सारोहैर्वसुधातलम् ॥ १३ ॥
वानरैर्भीमविक्रान्तैराप्लुत्योत्प्लुत्य वेगितैः । राक्षसाः करजैस्तीक्ष्णैर्मुखेषु विनिर्दारिताः ॥ १४ ॥
विषण्णवदना भूयो विप्रकीर्णशिरोरुहाः । मूढाः शोणितगन्धेन निपेतुर्धरणीतले ॥ १५ ॥
अन्ये तु[12] परमक्रुद्धा राक्षसा भीमविक्रमाः[13] । तलैरेवाभिधावन्ति वज्रस्पर्शसमैर्हरीन् ॥ १६ ॥

६ ] ति० टी०—जनितोद्धर्षाः संजातोत्साहाः अभीतवन्निर्भयाः सन्तः ॥ ६ ॥

रा० टी०—ते इति । रक्षोभिः गदादिभिः करणैर्विदार्यमाणाः महाबलास्ते ते वानराः अमर्षेण तदसहनेन जनितः उद्धर्षो युद्धोत्साहो येषां तथाभूतास्सन्तः अभीतवत् भीतिरहितं यथा भवति तथा कर्माणि युद्धोत्साहोद्योगान् चक्रुः श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—त इति । जनितोद्धर्षा जनितोत्साहाः ॥५॥६॥

७-९ ] ति० टी०—शूलनिर्भिन्नदेहिनः । इन्नन्तत्वमार्षम् ॥ ७ ॥ ९ ॥

रा० टी०—शरेति । शरनिर्भिन्नगात्राः ते ते हरियूथपाः द्रुमान् जगृहुः ॥ ७ ॥

गो० टी०—शरेति । शूलनिर्भिन्नदेहिनः । कर्मधारयाद्दिन्निरार्षः ॥ ७

रा० टी०—ते इति । नर्दमानाः हरयः राक्षसान् ममन्थुः नामानि स्वस्वाभिधाश्च बभाषिरे ॥ ८ ॥

रा० टी०—तदिति । वानररक्षसां शिलादिभिर्युद्धमद्भुतं बभूव ॥ ९ ॥

गो० टी०—त इति । नामानि स्वनामानि ॥ ८—११ ॥

१० ] ति० टी०—जितकाशिभिर्जितभयैर्जितश्वासैर्वा॥१०॥

रा० टी०—राक्षसा इति । वानरैर्मथिताः रुधिरभोजनाः केचिद्राक्षसाः रुधिरं प्रवेमुः ॥ १० ॥

११-१२ ] ति० टी०—द्रुमै राशीकृताः द्रुमप्रहारैर्हत्वा राशीकृता इत्यर्थः ॥ ११ ॥ १२ ॥

रा० टी०—पार्श्वेष्विति । राशीकृता एकत्र स्थापिताः केचित्केचित् द्रुमादिभिः पार्श्वेषु दारिताः केचित् चूर्णिताः केचिद्दन्तैः सह विदारिताः ॥ ११ ॥

रा० टी०—ध्वजैरिति । विमथितैर्विध्वंसितैर्ध्वजैर्भग्नैः खड्गैश्च विनिपातितैरथैश्चोपलक्षिताः केचिद्रजनीचराः विध्वंसिताः अत एव व्यथिताः ॥ १२ ॥

गो० टी०—ध्वजैरिति । वनौकसां पर्वताग्रैः वानरप्रेरितपर्वताग्रैः तैर्मथितैः गजेन्द्रैः सारोहैः साधिष्ठातृभिः वसुधातलं कीर्णमभूत् ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—गजेन्द्रैर्मृतगजेन्द्रशरीरैः ॥ १३ ॥

रा० टी०—गजेन्द्रैरिति । वनौकसां वनौकोभिर्मथितैस्सारोहैस्सादिसहितैर्गजैर्वाजिभिश्च वसुधातलं कीर्णम् ॥ १३ ॥

१४ ] ति० टी०—करजैर्नखैः ॥ १४ ॥

१५-१६ ] ति० टी०—मूढा मूर्च्छिताः ॥ १५ ॥ १६ ॥

रा० टी०—वानरैरिति । वेगितैर्वानरैस्तीक्ष्णैः करजैः करणैः राक्षसाः मुखेषु विनिदारिताः अत एव विषण्णवदनाः अत एव विकीर्णशिरोरुहाः शोणितगन्धेन मूढाः संज्ञारहिताः राक्षसाः धरणीतले निपेतुः श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

रा० टी०—अन्य इति । तलैरुपलक्षिता अन्ये राक्षसाः हरीन् अभिधावन्ति ॥ १६ ॥

गो० टी०—वानरैरित्यादि । भीमविक्रान्तैः भीमविक्रमैः । वेगितैः संजातवेगैः वानरैः कर्तृभिः । करजैः नखैः करणैः आक्रम्याक्रम्य मुखेषु विनिकर्तिताः खण्डिताः । मूढाः मूर्च्छिताः ॥ १४ ॥ १५ ॥

गो० टी०—अन्य इति । तलैरेवाभिधावन्ति । हस्ततलान्येवायुधस्थाने कृत्वा अभ्यधावन्नित्यर्थः ॥ १६ ॥

१ अमर्षादिति गो. पाठः । २ भीमानिति गो. पाठः । ३ बहुशश्चैवेति गो. पाठः । ४ ववमुरिति गो. पाठः । ५ खरैश्चेति गो. पाठः । ६ तैश्चापीति गो. पाठः । ७ पतितैरिति गो. पाठः । ८ चैरैरिति गो. पाठः । ९ आप्लुत्येति गो. रा. पाठः । १० कर्तिता इति गो. पाठः । ११ वितर्णेति गो. पाठः । १२ परमसंक्रुद्धा इति गो. पाठः । १३ निस्त्रना इति गो. पाठः ।

वानरैः पातयन्तस्ते वेगिता वेगवत्तरैः । मुष्टिभिश्चरणैर्दन्तैः पादपैश्चावपोथिताः ॥ १७ ॥
सैन्यं तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः । रोषेण कदनं चक्रे वानराणां युयुत्सताम् ॥ १८ ॥
प्रासैः प्रमथिताः केचिद्वानराः शोणितस्रवाः । मुद्गरैराहताः केचित्पतिता धरणीतले ॥ १९ ॥
परिघैर्मथिताः केचिद्भिन्दिपालैश्च दारिताः । पट्टिशैर्मथिताः केचिद्विह्वलन्तो गतासवः ॥ २० ॥
केचिद्विनिहता भूमौ रुधिरार्द्रा वनौकसः । केचिद्विद्राविता नष्टाः संक्रुद्धे राक्षसैर्युधि ॥ २१ ॥
विभिन्नहृदयाः केचिदेकपार्श्वेन शायिताः । विदारितास्त्रिशूलैश्च केचिदान्त्रैर्विनिःसृताः ॥ २२ ॥
तत्सुभीमं महद्युद्धं हरिराक्षससंकुलम् । प्रबभौ शस्त्रबहुलं शिलापादपसंकुलम् ॥ २३ ॥
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितम् । मन्दस्तनितगीतं तं तद्युद्धगान्धर्वमाबभौ ॥ २४ ॥
धूम्राक्षस्तु धनुष्पाणिर्वानरान्रणमूर्धनि । हसन्विद्रावयामास दिशस्ताञ्छरवृष्टिभिः ॥ २५ ॥
धूम्राक्षेणार्दितं सैन्यं व्यथितं प्रेक्ष्य मारुतिः । अभ्यवर्तत संक्रुद्धः प्रगृह्य विपुलां शिलाम् ॥ २६ ॥
क्रोधाद्द्विगुणताम्राक्षः पितृतुल्यपराक्रमः । शिलां तां पातयामास धूम्राक्षस्य रथं प्रति ॥ २७ ॥
आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य संभ्रमात् । रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ॥ २८ ॥

---

१७-१९ ] ति० टी०-अवपोथिता हिंसिताः ॥१७॥१९॥

रा० टी०-वानरैरिति । पातयन्तो वेगितास्ते राक्षसाः वेगवत्तरैर्वानरैर्मुष्ट्यादिभिरवपोथिताः ॥ १७ ॥

गो० टी०-वानरैरिति । अवपोथिताः हिंसिताः । "व्यथ, हिंसायाम्" इति धातुः ॥ १७ ॥

रा० टी०-सैन्यमिति । धूम्राक्षः सैन्यं विद्रावितं दृष्ट्वा युयुत्सतां वानराणां कदनं हिंसनं चक्रे ॥ १८ ॥

गो० टी०-सैन्यं त्विति । कदनं हिंसनम् ॥ १८ ॥

रा० टी०-तत्प्रकारमाह—प्रासैरित्यादिभिः । केचिद्वानराः प्रासैः प्रमथिताः अत एव शोणितस्रवास्सन्तो धरणीतले पतिताः केचित् मुद्गरैराहतास्सन्तः पतिताः ॥ १९ ॥

गो० टी०-प्रासैरित्यादिचतुःश्लोकी ॥ विह्वलन्तः विवशाः । गतासवः अभवन्निति शेषः । अन्त्रैर्विनिःसृताः विनिःसृतान्त्रा इत्यर्थः ॥ १९—२३ ॥

२०-२१ ] ति० टी०-विह्वलन्तो विवशाः ॥२०॥२१॥

रा० टी०-परिघैरिति । मथिताः अत एव विव्हलन्तः सन्तः गतासवो बभूवुरिति शेषः ॥ २० ॥

रा० टी०-केचिदिति । विद्राविता बभूवुरिति शेषः॥२१॥

२२-२३ ] ति० टी०-आन्त्रैर्विनिःसृताः निःसृतान्त्रा इत्यर्थः । आन्त्राणि पुरीतत इति कतकः ॥ २२ ॥ २३ ॥

रा० टी०-विभिन्नेति । केचिद्विभिन्नहृदया एकपार्श्वेन शायिताः त्रिशूलैर्विदारिताः केचित् आन्त्रैर्विनिस्सृताः निर्गतान्त्रा अभवन्नित्यर्थः ॥ २२ ॥

रा० टी०-तदिति । हरिभिः राक्षसैश्च संकुलं शस्त्राणां बहुलमाधिक्यं यस्मिन् शिलाभिः पादपैश्च सङ्कुलमत एव सुभीमं युद्धं प्रबभौ ॥ २३ ॥

२४-२८ ] ति० टी०-युद्धगान्धर्वं युद्धरूपसंगीतविद्या तद्रूपकोपपादकम् धनुरित्यादि । धनुर्ज्यारूपा या तन्त्री वीणा तया मधुरम् । तन्त्रिमधुरमिति ह्रस्व आर्षः हिक्काश्चेष्टा तद्रूपतालेन युक्तम् मन्दानां मन्दाख्यगजविशेषाणां स्तनितं बृंहितमेव गीतं यत्र तत् ॥ २४ ॥ २८ ॥

रा० टी०-युद्धं गान्धर्वत्वेनवर्णयति-धनुरिति । धनुर्ज्यैव तन्त्री यस्मिन् हिक्का अश्वानां हेषैव तालं तेन समन्वितं मन्दानां तदभिधगजानां स्तनितमेव गीतं यस्मिन् तन्मधुरं श्रमनोहारि युद्धं गान्धर्वं तत्वेन प्रतिभासमानमाबभौ समासान्तविधेरनित्यत्वात् कन्नभावः ॥ २४ ॥

गो० टी०-धनुरिति । तन्त्री वीणा आर्षो ह्रस्वः तया मधुरं रम्यम् । हिक्का विरम्य विरम्य कण्ठात् पवनोद्गमः । मन्दस्तनितम् अशक्त्या मन्दभाषणं तदेव संगीतं सम्यग्गानं यस्मिन् तत् तथोक्तम् । युद्धगान्धर्वं युद्धसंगीतम् संगीतं नृत्तगीतवाद्यम् ॥ २४ ॥

रा० टी०-धूम्राक्ष इति । धूम्राक्षो हसन् सन् शरवृष्टिभिस्तान् वानरान् दिशो विद्रावयामास ॥ २५ ॥

गो० टी०-धूम्राक्ष इति । दिशः दिशः प्रति ॥ २५ ॥

रा० टी०-धूम्राक्षेणेति । मारुतिः धूम्राक्षेणार्दितं सैन्यं प्रेक्ष्य शिलां प्रगृह्य अभ्यवर्त्तत ॥ २६ ॥

गो० टी०-धूम्राक्षेणेति । व्यथितं दुःखितम् । दृश्य दृष्ट्वा । मारुतिः हनुमान् ॥ २६ ॥

---

१ आपतन्त इति गो. पाठः । २ वानरैर्हन्यमानास्ते राक्षसा विप्रदुद्रुवुरित्यधिकं गो. पाठे । ३ विद्रावितमिति रा. पाठः । ४ क्रोधेनेति गो. पाठः । ५ वीति गो. पाठः । ६ आहता इति गो. पाठः । ७ शूलैरिति गो. पाठः । ८ सबलैरिति गो. पाठः । ९ दारिता इति गो. पाठः । १० महायुद्धम् इति गो. पाठः । ११ शब्देति गो. पाठः । १२ संगीतमिति गो. पाठः । १३ स्विति गो. पाठः । १४ तुल्येति गो. पाठः । १५ पितृतुल्येति गो. पाठः ।

सा प्रमथ्य रथं तस्य निपपात शिला भुवि । सचक्रकूबरमुखं सध्वजं सशरासनम् ॥ २९ ॥
स त्यक्त्वा तु रथं तस्य हनूमान्मारुतात्मजः । रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ॥ ३० ॥
विभिन्नशिरसो भूत्वा राक्षसा रुधिरोक्षिताः । द्रुमैः प्रमथिताश्चान्ये निपेतुर्धरणीतले ॥ ३१ ॥
विद्राव्य राक्षसं सैन्यं हनूमान्मारुतात्मजः । गिरेः शिखरमादाय धूम्राक्षमभिदुद्रुवे ॥ ३२ ॥
तमापतन्तं धूम्राक्षो गदामुद्यम्य वीर्यवान् । विनर्दमानः सहसा हनूमन्तमभिद्रवत् ॥ ३३ ॥
तस्य क्रुद्धस्य रोषेण गदां तां बहुकण्टकाम् । पातयामास धूम्राक्षो मस्तकेऽथ हनूमतः ॥ ३४ ॥
ताडितः स तया तत्र गदया भीमवेगया । स कपिर्मारुतबलस्तं प्रहारमचिन्तयन् ॥ ३५ ॥
धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत् । स विस्फारितसर्वाङ्गो गिरिशृङ्गेण ताडितः ॥ ३६ ॥
पपात सहसा भूमौ विकीर्ण इव पर्वतः । धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ॥
त्रस्ताः प्रविविशुर्लङ्कां वध्यमानाः प्लवंगमैः ॥ ॥ ३७ ॥

स तु पवनसुतो निहत्य शत्रून्क्षतजवहाः सरितश्च संविकीर्य ।
रिपुवधजनितश्रमो महात्मा मुदमगमत्कपिभिः सुपूज्यमानः ॥ ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

रा० टी०–क्रोधादिति । क्रोधाद्धेतोः द्विगुणे ताम्रे अरुणे अक्षिणी यस्य स हनूमान् धूम्राक्षस्य रथंप्रति पातयामास ॥ २७ ॥

रा० टी०–आपतन्तीमिति । शिलामापतन्तीं दृष्ट्वा गदामुद्यम्य संभ्रमात् भयात् रथादाप्लुत्य वसुधायां व्यतिष्ठत ॥ २८ ॥

गो० टी०–क्रोधादिति । पिता वायुः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०–सा शिला तस्य चक्रादिसहितं रथं प्रमथ्य भुवि निपपात । 'कूबरोऽस्त्री युगंधरः' । अवप्लुतिकाले रथे त्यक्तशरासनसहितम् ॥ २९ ॥

रा० टी०–सेति । सा हनुमता निपातिता शिला तस्य धूम्राक्षस्य चक्रादिसहितं रथं प्रमथ्य भुवि निपपात ॥ २९ ॥

गो० टी०–सेति । कूबरः युगंधरः । कूबरस्तु युगंधरः इत्यमरः ॥ २९–३२ ॥

३० ] ति० टी०–रथं भग्नं रथम् रक्षसां कदनं चक्रे स्वसेनारक्षणार्थमिति शेषः स्कन्धः स्थूलशाखा विटपः सूक्ष्मा सा ३०

रा० टी०–स इति । हनूमान् तस्य रथं त्यक्त्वा स्कन्धविटपसहितैर्द्रुमैः रक्षसां कदनं चक्रे तत्र स्कन्धो महाशाखा विटपोऽल्पशाखेति भेदः ॥ ३० ॥

३१–३२ ] ति० टी०–भूत्वेत्यस्य पतिता इति शेषः ३१ ॥ ३२

रा० टी०–विभिन्नेति । अन्ये बहवो राक्षसाः द्रुमैः प्रमथिताः अत एव रुधिरोक्षिताः अत एव भिन्नशिरसो भूत्वा धरणीतले निपेतुः ॥ ३१ ॥

रा० टी०–विद्राव्येति । हनूमान् राक्षसं सैन्यं विद्राव्य गिरेः शिखरमादाय धूम्राक्षमभिदुद्रुवे ॥ ३२ ॥

३३–३८ ] ति० टी०–अभिद्रवदभ्यद्रवत् ॥ ३३ ॥ ३८ ॥

धूम्राक्षवधो भाद्रशुक्लद्वितीयायामित्याहुः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

रा० टी०–तमिति । धूम्राक्षो गदामुद्यम्य विनर्दमानः सन् हनूमन्तमभिद्रवत् अभ्यद्रवत् ॥ ३३ ॥

गो० टी०–तमिति । अभिद्रवत् अभ्यद्रवत् आगमशासनस्यानित्यत्वादडभावः ॥ ३३ ॥

रा० टी०–तस्येति । धूम्राक्षो बहुकंटकां गदां तस्य हनूमतो मस्तके पातयामास ॥ ३४ ॥

गो० टी०–तत इति । बहुकण्टकां बहुकीलाम् ॥ ३४ ॥

रा० टी०–ताडित इति । गदया ताडितःस कपिः कपित्वसहितः स हनूमान् तं प्रहारमचिंतयन् सन् धूम्राक्षस्य शिरोमध्ये गिरिश्रृङ्गमपातयत् सार्द्धश्लोक एकान्वयी ॥ ३५ ॥

रा० टी०–स इति । गिरिश्रृङ्गेण ताडितः अत एव विस्फारितानि विदीर्णानि सर्वाङ्गानि यस्य सः धूम्राक्षो विकीर्णः पर्वत इव भूमौ पपात ॥ ३६ ॥

गो० टी०–ताडित इति । ताडितः आसीदिति शेषः ॥ ३५ ॥ ३६ ॥

रा० टी०–धूम्राक्षमिति । प्लवङ्गमैर्वध्यमानाः अत एव त्रस्ताः हतशेषा निशाचराः लङ्कां प्रविविशुः ॥ ३७ ॥

गो० टी०–स इति । विह्वलितानि विवशीकृतानि ३७ ॥ ३८

रा० टी०–स इति । पवनसुतः शत्रून् निहत्य अत एव

---

२ कूबरं साग्रमिति गो. पाठः । २ मरुत्वेति गो. पाठः । ३ शोणितेति गो. पाठः । ४ ततः क्रुद्धस्तुवेगेनेति गो. पाठः । ५ स्थिति गो. पाठः । ६ रूपयेति गो. पाठः । ७ विह्वलितेति गो. पाठः । ८ सत्रुमिति गो. पाठः । ९ नीति गो. पाठः । १० चेति गो. पाठः ।

## त्रिपञ्चाशः सर्गः ।

धूम्राक्षे निहतेऽतिरुष्टेन रावणेन प्रहितेन वज्रदंष्ट्राभिधेन निशाचरेण कपीनां दारुणो रणः ।

धूम्राक्षं निहतं श्रुत्वा रावणो राक्षसेश्वरः । क्रोधेन महताविष्टो निःश्वसन्नुरगो यथा ॥ १ ॥
दीर्घमुष्णं विनिःश्वस्य क्रोधेन कलुषीकृतः । अब्रवीद्राक्षसं क्रूरं वज्रदंष्ट्रं महाबलम् ॥ २ ॥
गच्छ त्वं वीर निर्याहि राक्षसैः परिवारितः । जहि दाशरथिं रामं सुग्रीवं वानरैः सह ॥ ३ ॥
तथेत्युक्त्वा द्रुततरं मायावी राक्षसेश्वरः । निर्जगाम बलैः सार्द्धं बहुभिः परिवारितः ॥ ४ ॥
नागैरश्वैः खरैरुष्ट्रैः संयुक्तः सुसमाहितः । पताकाध्वजचित्रैश्च बहुभिः समलंकृतः ॥ ५ ॥
ततो विचित्रकेयूरमुकुटैश्च विभूषितः । तनुत्रं च समावृत्य सधनुर्निर्ययौ द्रुतम् ॥ ६ ॥
पताकालंकृतं दीप्तं तप्तकाञ्चनभूषितम् । रथं प्रदक्षिणं कृत्वा समारोहच्चमूपतिः ॥ ७ ॥
ऋष्टिभिस्तोमरैश्चित्रैः श्लक्ष्णैश्च मुसलैरपि । भिन्दिपालैश्च चापैश्च शक्तिभिः पट्टिशैरपि ॥ ८ ॥
खड्गैश्चक्रैर्गदाभिश्च निशितैश्च परश्वधैः । पदातयश्च निर्यान्ति विविधाः शस्त्रपाणयः ॥ ९ ॥
विचित्रवाससः सर्वे दीप्ता राक्षसपुंगवाः । गजा मदोत्कटाः शूराश्चलन्त इव पर्वताः ॥ १० ॥

---

क्षतजवहाः सारतः संविकीर्य परिवाह्य रिपुवधेन जनितः श्रमो यस्य स कपिभिः सुपूज्यमानश्च सन् मुदमगमत् ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्विपंचाशः सर्गः ॥ ५२ ॥

**गो० टी०—स त्विति** । वहन्तीति वहाः क्षतजस्य वहाः क्षतजवहाः सन्निकीर्य उत्सार्येत्यर्थः ॥ द्वितीयायां धूम्राक्षवधः ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

**१–२ ] ति० टी०—धूम्राक्षमिति** ॥ १ ॥ २ ॥

**रा० टी०—**धूम्राक्षवधानन्तरकालिकं रावणवृत्तान्तमाह—**धूम्राक्षमित्यादिभिः** । धूम्राक्षं निहतं श्रुत्वा क्रोधेनाविष्टो रावणः उरग इव निःश्वसन्नास्तेति शेषः ॥ १ ॥

**रा० टी०—दीर्घमिति** । क्रोधेन कलुषीकृतो रावणः वज्रदंष्ट्रं राक्षसमब्रवीत् ॥ २ ॥

**गो० टी०—**अथ वज्रदंष्ट्रयुद्धं त्रिपञ्चाशे—**धूम्राक्षमित्यादि** । आविष्टः अभूदिति शेषः ॥ १ ॥ २ ॥

**३–४ ] ति० टी०—**गच्छ निर्याहीत्याभ्यां सर्वथा गन्तव्यमिति बोध्यते ॥ ३ ॥ ४ ॥

**रा० टी०—**तदाकारमाह—**गच्छेति** । त्वं गच्छ राक्षसानिह प्रापय तैः राक्षसैः परिवारितः सन् निर्याहि दाशरथिं सुग्रीवं च जहि ॥ ३ ॥

**गो० टी०—गच्छ त्वं वीर निर्याहीति** । इतो गच्छ पुरान्निर्याहीत्यर्थः ॥ ३ ॥

**रा० टी०—तथेति** । बलैः परिवारितो नागादिभिः संयुक्तः पताकादिभिः समलंकृतो राक्षसेश्वरो वज्रदंष्ट्रो बलैः सार्धमेव निर्जगाम एकं बलैरिति प्रत्यासत्त्या लब्धम् श्लोकद्वयमेकान्वयि ४॥५

**गो० टी०—तथेत्युक्त्वेति** । बहुभिः बलाध्यक्षैरिति शेषः ॥ ४ ॥

**५ ] ति० टी०—**बहुभिः । बलाध्यक्षैरिति शेषः ॥ ५ ॥

**गो० टी०—नागैरित्यादि** । रथैरित्यस्य संयुक्त इत्यनेनान्वयः । समलंकृतः चन्दनकुङ्कुमादिभिरलङ्कृतः तनुत्राणि कवचतलत्रकण्ठत्रशिरस्त्राणानि संरुद्ध्य संबध्य धृत्वेत्यर्थः ॥५-७॥

**६–७] ति० टी०—**तनुत्रं कवचम् । समावृत्याामुच्य॥६॥७॥

**रा० टी०—**तदेवभङ्ग्यन्तरेणाह—**तत इति** । विचित्राणि केयूराणि यस्य स राक्षसः तनुत्रं वर्म समावृत्य संधार्य ततो रावणसमीपान्निर्ययौ ॥ ६ ॥

**रा० टी०—पताकेति** । ऋष्ट्यादिभिः संयुक्तं पताकयालंकृतं रथं प्रदक्षिणं कृत्वा चमूपतिस्समारोहत् सार्धश्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

**८–१० ] ति० टी०—**ऋष्टिः सूक्ष्मखड्गः । ऋष्ट्याद्युपलक्षिताः पदातयो निर्यान्तीत्यर्थः ॥ ८ ॥ १० ॥

**गो० टी०—यष्टिभिरित्यादि** सार्धश्लोकद्वयम् ॥ ८ ॥ ९॥

**रा० टी०—पदातय इति** । शस्त्रपाणयः विविधाः पदातयो राक्षसपुङ्गवाः पर्वता इव चलंतो युद्धकुशलास्तोमराङ्कुशपाणिभिर्हस्तिपैः रूढा मदोत्कटा गजाः अरारूढा अन्ये मदोत्कटभिन्नाश्च गजाः निर्यान्ति सार्द्धश्लोकद्वयमेकान्वयि ॥ ९–११ ॥

**गो० टी०—गजा इति** । अत्र निर्यान्तीत्यनुवर्त्यते ।

---

१ शूरमिति गो. पाठः । २ रथैश्चेति गो. पाठः । ३ केयूर इति रा. पाठः । ४ मुकुटैश्चेति गो. पाठः । ५ तनुत्राणीति गो. पाठः । ६ यष्टिभिरिति गो. पाठः । ७ पाशैश्चेति गो. पाठः ।

ते युद्धकुशला रूढास्तोमराङ्कुशपाणिभिः । अन्ये लक्षणसंयुक्ताः शूरारूढा महाबलाः ॥ ११ ॥
तद्राक्षसबलं सर्वं विप्रस्थितमशोभत । प्रावृट्काले यथा मेघा नर्दमानाः सविद्युतः ॥ १२ ॥
निःसृता दक्षिणद्वारादङ्गदो यत्र यूथपः । तेषां निष्क्रममाणानामशुभं समजायत ॥ १३ ॥
आकाशाद्विघनात्तीव्रादुल्मुकान्यपतंस्तदा । वमन्तः पावकज्वालाः शिवा घोरा ववाशिरे ॥ १४ ॥
व्याहरन्त मृगा घोरा रक्षसां निधनं तदा । समापतन्तो योधास्तु प्रास्खलंस्तत्र दारुणम् ॥ १५ ॥
एतानौत्पातिकान्दृष्ट्वा वज्रदंष्ट्रो महाबलः । धैर्यमालम्ब्य तेजस्वी निर्जगाम रणोत्सुकः ॥ १६ ॥
तांस्तु विद्रवतो दृष्ट्वा वानरा जितकाशिनः । प्रणेदुः सुमहानादान्दिशः शब्देन पूरयन् ॥ १७ ॥
ततः प्रवृत्तं तुमुलं हरीणां राक्षसैः सह । घोराणां भीमरूपाणामन्योन्यवधकाङ्क्षिणाम् ॥ १८ ॥
निष्पतन्तो महोत्साहा भिन्नदेहशिरोधराः । रुधिरोक्षितसर्वाङ्गा न्यपतन्धरणीतले ॥ १९ ॥
केचिदन्योन्यमासाद्य शूराः परिघबाहवः । चिक्षिपुर्विविधाञ्शस्त्रान्समरेष्वनिवर्तिनः ॥ २० ॥
द्रुमाणां च शिलानां च शस्त्राणां चापि निस्वनः । श्रूयते सुमहांस्तत्र घोरो हृदयभेदनः ॥ २१ ॥
रथनेमिस्वनस्तत्र धनुषश्चापि घोरवत् । शङ्खभेरीमृदङ्गानां बभूव तुमुलः स्वनः ॥ २२ ॥

---

गजानेव विशिनष्टि—ते युद्धेत्यादिना । तोमराङ्कुशपाणिभिः यन्तृभिः रूढाः आरूढा इत्यर्थः ॥ १० ॥

११ ] ति० टी०—तोमराङ्कुशपाणिभी रूढा आरूढा युद्धकुशला ये गजास्ते च निर्याता इत्यन्वयः । लक्षणसंयुक्ता अन्येऽश्वाश्च शूरारूढा निर्याताः ॥ ११ ॥

गो० टी०—अन्ये लक्षणसंयुक्ता इति । अत्रापि गजा निर्यान्तीत्यनुषङ्गः ॥ ११–१३ ॥

१२ ] ति० टी०—विप्रस्थितं विशेषेण कृतप्रस्थानम् । सविद्युतः नीलस्य रक्षोबलस्य स्वर्णभूषणबहुलत्वात्सविद्युन्मेघोपमेयत्वम् ॥ १२ ॥

रा० टी०—तदिति । विप्रस्थितं कृतप्रस्थानं तद्बलमशोभत अर्द्धं पृथक् प्रावृडिति सविद्युतः नर्दमानाः प्रावृट्काले मेघा इव राक्षसाः यत्राङ्गदो यूथपः तस्माद्दक्षिणद्वारान्निःसृताः ॥ १२ ॥

१३ ] ति० टी०—निःसृताः । राक्षसा इति शेषः ॥ १३ ॥

रा० टी०—तेषामिति । तेषां निष्क्रममाणानां सतामशुभं दुःशकुनसमजायत अर्द्धम्पृथक् ॥ १३ ॥

१४ ] ति० टी०—दुर्निमित्तरूपमशुभमेवाह—आकाशादिति । विघनान्निर्मेघात् ॥ १४ ॥

रा० टी०—अशुभानेवाह—आकाशादिति । विघनात् घनरहितात् आकाशात् उल्मुकान्यपतन् पावकज्वालाः वमन्तः शिवाः शृगालाः ववाशिरे स्वस्वजातीयशब्दं चक्रिरे ॥ १४ ॥

गो० टी०—आकाशादित्यादि । विघनात् घनशून्यात् ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—घोरा मृगा रक्षसां निधनं व्याहरन्त व्याहरन् ॥ १५ ॥

रा० टी०—व्याहरन्तेति । घोराः मृगाः रक्षसां निधनं यथा भवति तथा व्याहरन्त समापतन्त आगच्छन्तो योधाः प्रास्खलन् भूमौ निपेतुः ॥ १५ ॥

१६ ] ति० टी०—औत्पातिकानशुभसूचकान् ॥ १६ ॥

रा० टी०—एतानिति । औत्पातिकान् दृष्ट्वापि रणोत्सुको वज्रदंष्ट्रः धैर्यमालम्ब्य निर्जगाम ॥ १६ ॥

गो०टी०—एतानिति । औत्पातिकान् अशुभसूचकान्१६

१७ ] ति० टी०—विद्रवतो विशेषेण स्वसंमुखमागच्छतः पूरयन्पूरयन्तः आर्षमेकवचनम् ॥ १७ ॥

रा० टी०—तानिति । विद्रवतस्तान् राक्षसान् दृष्ट्वा वानराः सुमहानादान् प्रणेदुः अत एव शब्देन दिशः पूरयन् अपूरयन्१७

गो० टी०—तांस्त्विति । पूरयन् अपूरयंश्चेत्यर्थः । केचित्तु पूरयन् पूरयन्त इत्यर्थः, वचनव्यत्यय आर्ष इत्याहुः ॥ १७ ॥

१८–२० ] ति० टी०—तुमुलं रणसंकटम् ॥ १८ ॥ २०॥

रा० टी०—तत इति । अन्योन्यवधकाङ्क्षिणां राक्षसैः सह हरीणां तुमुलं युद्धं प्रवृत्तम् ॥ १८ ॥

रा० टी०—निष्पतन्त इति । निष्पतन्तो युद्धार्थमागच्छन्तः महोत्साहा वानरराक्षसाः भिन्नदेहशिरोधरास्सन्तः धरणीतले न्यपतन् ॥ १९ ॥

रा० टी०—केचिदिति । परिघबाहवः केचित् शूराः विविधान् शस्त्रान् चिक्षिपुः ॥ २० ॥

गो० टी०—तत इति । तुमुलं रणसङ्कुलम् । तुमुलं रणसङ्कुले इत्यमरः ॥ १८–२२ ॥

२१–२२ ] ति० टी०—हृदयभेदनः भयंकर इत्यर्थः २१॥२२

रा० टी०—द्रुमाणामिति । हृदयभेदनः द्रुमादीनां सुमहान् निस्वनः शब्दः श्रूयते ॥ २१ ॥

रा० टी०—रथेति । सागरस्य घोषवत् रथनेमिस्वनः शंखादीनाञ्च स्वनस्तुमुलो बभूव ॥ २२ ॥

---

१ कुशलैरिति गो. पाठः । २ घोरमिति गो. पाठः । ३ तीव्रा इति गो. पाठः । ४ उल्काश्चाभीति गो. पाठः । ५ निष्क्रमत इति गो. पाठः । ६ पूरयंश्च दिशोदशेति गो.पाठः। ७ जगती इति गो.पाठः। ८ पणव इति गो.पाठः। ९ सागरस्येति रा.पाठः। १० घोषवदिति रा.निःस्वन इति गो.पाठः।

केचिदस्त्राणि संत्यज्य बाहुयुद्धमकुर्वत। तलैश्च चरणैश्चापि मुष्टिभिश्च द्रुमैरपि ॥ २३ ॥
जानुभिश्च हताः केचिद्भग्नदेहाश्च राक्षसाः। शिलाभिश्चूर्णिताः केचिद्वानरैर्युद्धदुर्मदैः ॥ २४ ॥
वज्रदंष्ट्रोऽथ तं दृष्ट्वा रणे वित्रासयन्हरीन्। चचार लोकसंहारे पाशहस्त इवान्तकः ॥ २५ ॥
बलवन्तोऽस्त्रविदुषो नानाप्रहरणा रणे। जघ्नुर्वानरसैन्यानि राक्षसाः क्रोधमूर्छिताः ॥ २६ ॥
जघ्ने तान्राक्षसान्सर्वान्धृष्टो वायुसुतो रणे। क्रोधेन द्विगुणाविष्टः संवर्तक इवानलः ॥ २७ ॥
तान्राक्षसगणान्सर्वान्वृक्षमुद्यम्य वीर्यवान्। अङ्गदः क्रोधताम्राक्षः सिंहः क्षुद्रमृगानिव ॥ २८ ॥
चकार कदनं घोरं शक्रतुल्यपराक्रमः। अङ्गदाभिहतास्तत्र राक्षसा भीमविक्रमाः ॥ २९ ॥
विभिन्नशिरसः पेतुर्निकृत्ता इव पादपाः। रथैश्चित्रैर्ध्वजैरश्वैः शरीरैर्हरिरक्षसाम् ॥ ३० ॥
रुधिरौघेण संछन्ना भूमिर्भयकरी तदा। हारकेयूरवस्त्रैश्च छत्रैश्च समलंकृता ॥ ३१ ॥
भूमिर्भाति रणे तत्र शारदीव यथा निशा। अङ्गदस्य च वेगेन तद्राक्षसबलं महत् ॥
प्राकम्पत तदा तत्र पवनेनाम्बुदो यथा ॥ ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

२३-२४ ] ति० टी०-अस्त्राणि संत्यज्य सर्वाण्यस्त्राणि प्रयुज्य तदनन्तरमस्त्राभावाद्बाहुयुद्धमकुर्वत ॥ २३ ॥ २४ ॥

रा० टी०-केचिदिति। केचित् बाहुयुद्धमकुर्वत अर्द्धस्पृथक् तलैरिति केचिद्राक्षसाः तलादिभिर्वानरैर्भग्नदेहास्सन्तः हता केचित् शिलाभिश्चूर्णीकृताः। सार्द्धश्लोक एकान्वयी॥२३॥२४॥

गो० टी०-केचिदिति। अस्त्राणि संसृज्य सर्वाण्यस्त्राणि प्रयुज्य तदनन्तरमस्त्राभावात् बाहुयुद्धमकुर्वतेत्यर्थः॥२३-२५॥

२५ ] ति० टी०-वज्रदंष्ट्रोथ तं दृष्ट्वा। स्वसेनाविनाशमित्यर्थः। लोकसंहारे तन्निमित्तम् ॥ २५ ॥

रा० टी०-वज्रदंष्ट्र इति। वज्रदंष्ट्रः तं स्वसेनाविध्वंसं दृष्ट्वा लोकसंहारे अन्तक इव हरीन् वित्रासयन् चचार ॥२५॥

२६ ] ति० टी०-अस्त्रविदुषः अस्त्रविद्वांस इत्यर्थः॥२६॥

रा० टी०-बलवन्त इति। बलवन्तोऽस्त्रविदुषोऽस्त्रविद्वांसो राक्षसाः वानरसैन्यानि जघ्नुः ॥ २६ ॥

गो० टी०-बलवन्त इति। अस्त्रविदुषः अस्त्रविद्वांसः। प्रथमार्थे द्वितीया ॥ २६ ॥

२७ ] ति० टी०-संवर्तके प्रलयकाले ॥ २७ ॥

२८-३० ] ति० टी०-तान्राक्षसगणान्। निजघानेति शेषः ॥ २८ ॥ ३० ॥

रा० टी०-जघ्नुरिति। क्रोधेन द्विगुणाविष्टः द्विगुणक्रोधेन युक्तः अत एव क्रोधताम्राक्षो वालिसुतोऽङ्गदः संवर्तके प्रलयकाले अनिल इव राक्षसान् जघ्ने अत एव घोरं कदनं चकार सार्धद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

रा० टी०-अङ्गदेति। अङ्गदाभिहताः भीमविक्रमाः राक्षसाः विभिन्नशिरसस्सन्तः निकृत्ताः छिन्नाः पादपा इव पेतुः ॥२९॥

रा० टी०-रथैरिति। हरिरक्षसां शरीरैः रुधिरौघेण च रथादिभिश्च संछन्ना अत एव भयंकरी भूमिरभवदिति शेषः३०

गो० टी०-निघ्नत इत्यादिश्लोकद्वयमेकान्वयम्॥ संवर्तके प्रलयकाले। तान् राक्षसगणानित्यत्र निजघानेति विपरिणामः ॥ २७-३० ॥

३१ ] ति० टी०-भयकरी भयंकरी अभूदिति शेषः मुमभाव आर्षः ॥ ३१ ॥

रा० टी०-हारेति। कृत्तैः छिन्नैः हारादिभिः समलंकृता भूमिः शारदी निशेव भाति ॥ ३१ ॥

गो० टी०-हारेति। शारदीव यथा निशेत्यत्र इव शब्द-यथाशब्दावेकार्थकौ। अपिचेतिवत् इवशब्दः पादपूरण इत्येके ॥ ३१ ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

३२ ] ति० टी०-पवनेनाम्बुदो यथेत्युत्तरं सर्गच्छेदः। क्वचित्सोऽयुक्तो वृत्तभेदप्रकरणभेदाद्यभावादिति कतकः ॥३२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रा० टी०-अङ्गदस्येति। अङ्गदस्य वेगेन राक्षसं बलं पवनेनाम्बुद इव प्राकम्पत ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

१ संसृज्येति गो. पाठः। २ भिन्नेति गो. पाठः। ३ भूरि बाणैरिति गो. पाठः। ४ निघ्नतो राक्षसान्दृष्ट्वा सर्वानिति गो. पाठः। ५ वालीति गो. रा.

## चतुःपञ्चाशः सर्गः ।

अङ्गदवज्रदंष्ट्रयोर्महति सङ्ग्रामे वज्रदंष्ट्रप्रहृतेषु भीमविक्रमेष्वपि हरिषु भग्नगात्रेषु प्रायस्तद्वधनिराशेष्वङ्गदं प्रधावत्सु वज्रदंष्ट्रस्य शिरोऽङ्गदो भूमावपातयत् ।

स्वबलस्य च घातेन अङ्गदस्य बलेन च । राक्षसः क्रोधमाविष्टो वज्रदंष्ट्रो महाबलः ॥ १ ॥
विस्फार्य च धनुर्घोरं शक्राशनिसमप्रभम् । वानराणामनीकानि प्राकिरच्छरवृष्टिभिः ॥ २ ॥
राक्षसाश्चापि मुख्यास्ते रथैश्च समवस्थिताः । नानाप्रहरणाः शूराः प्रायुध्यन्त तदा रणे ॥ ३ ॥
वानराणां च शूरास्तु ते सर्वे प्लवगर्षभाः । अयुध्यन्त शिलाहस्ताः समवेताः समन्ततः ॥ ४ ॥
तत्रायुधसहस्राणि तस्मिन्नायोधने भृशम् । राक्षसाः कपिमुख्येषु पातयांचक्रिरे तदा ॥ ५ ॥
वानराश्चैव रक्षःसु गिरिवृक्षान्महाशिलाः । प्रवीराः पातयामासुर्मत्तवारणसंनिभाः ॥ ६ ॥
शूराणां युध्यमानानां समरेष्वनिवर्तिनाम् । तद्राक्षसगणानां च सुयुद्धं समवर्तत ॥ ७ ॥
प्रभग्नशिरसः केचिच्छिन्नैः पादैश्च बाहुभिः । शस्त्रैरर्दितदेहास्तु रुधिरेण समुक्षिताः ॥ ८ ॥
हरयो राक्षसाश्चैव शेरते गां समाश्रिताः । कङ्कगृध्रबलैराढ्याश्च गोमायुकुलसंकुलाः ॥ ९ ॥
कबन्धानि समुत्पेतुर्भीरूणां भीषणानि वै । भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्च भूतले ॥ १० ॥

१–३ ] ति० टी०–स्वबलस्य चेति ॥ १ ॥ ३ ॥

रा० टी०–वज्रदंष्ट्रवृत्तान्तमाह—स्वबलस्येत्यादिभिः । अङ्गदस्य बलेन अतिपराक्रमदर्शनेन स्वबलस्य घातेन च हेतुना क्रोधमाविष्टो वज्रदंष्ट्रः धनुर्विस्फार्य वानराणामनीकानि शरवृष्टिभिः प्राकिरत् श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

रा० टी०–राक्षसा इति । रथैः समवस्थिताः मुख्या राक्षसा अपि प्रायुध्यन्त ॥ ३ ॥

गो० टी०–अथ वज्रदंष्ट्रवधश्चतुःपञ्चाशे—बलस्य चेत्यादिश्लोकद्वयमेकान्वयम् ॥ १–३ ॥

४ ] ति० टी०–वानराणामिति निर्धारणे षष्ठी ॥ ४ ॥

रा० टी०–वानराणामिति । वानराणां मध्ये ये शूराः अतिशौर्यविशिष्टास्तेऽपि प्लवगर्षभाः अयुध्यन्त ॥ ४ ॥

गो० टी०–वानराणामिति । निर्धारणे षष्ठी ॥ ४ ॥

५–६ ] ति० टी०–तत्र वीरक्षयकारणे तस्मिन्प्रसिद्धे आयोधने युद्धे ॥ ५ ॥ ६ ॥

रा० टी०–तत्रेति । तत्र तस्मिन् समये राक्षसाः कपिमुख्येषु आयुधसहस्राणि पातयाञ्चक्रिरे ॥ ५ ॥

रा० टी०–वानरा इति । प्रवीरा वानरा रक्षस्सु महावृक्षान् महाशिलाश्च पातयामासुः ॥ ६ ॥

गो० टी०–तत्रेति । तत्र कपिमुख्येष्वित्यन्वयः । आयोधने युद्धे ॥ ५ ॥ ६ ॥

७ ] ति० टी०–तद्राक्षसगणानाम् तच्छब्देन वानराः वानरराक्षसगणानामित्यर्थः ॥ ७ ॥

रा० टी०–शूराणामिति । राक्षसगणानां चकारेण वानराणां च सुयुद्धं समवर्तत ॥ ७ ॥

गो० टी०–शूराणामिति । तद्राक्षसगणानां चेति । ते च राक्षसगणाश्च तद्राक्षसगणाः तेषाम् तच्छब्देन वानरा उच्यन्ते । युद्ध्यमानानां सुयुद्धं समवर्ततेत्यनेन उत्तरोत्तरयुद्धाधिक्यमुच्यते ॥ ७ ॥

८ ] ति० टी०–छिन्नैः पादैर्बाहुभिरुपलक्षिताः ॥ ८ ॥

रा० टी०–प्रभग्नेति । छिन्नैः पादैर्बाहुभिश्चोपलक्षिताः केचित्प्रभग्नशिरसः शस्त्रैरर्दिता देहाः कबन्धा येषां ते सन्तः रुधिरेण समुक्षिताः बभूवुरिति शेषः ॥ ८ ॥

गो० टी०–प्रभिन्नेति । पादैश्च बाहुभिरित्युपलक्षणे तृतीया । अर्पितदेहाः आरोपितदेहाः । गां भूमिम् । कङ्कः अत्रः स च श्येनविशेषः गृध्रः दूरदर्शी बलः श्येनविशेषः काकश्च तैराढ्याः व्याप्ताः ॥ ८ ॥ ९ ॥

९–१० ] ति० टी०–बला वायसाः कङ्कादिभिराढ्याः । व्याप्ता इत्यर्थः ॥ ९ ॥ १० ॥

रा० टी०–हरय इति । शस्त्रेगं समाश्रिताः हरयो राक्षसाश्च कंकादिभिराढ्याः पूर्णाः गोमायुकुलसंकुलाश्च बभूवुरिति शेषः तत्र बलाः काकाः ॥ ९ ॥

रा० टी०–कबन्धानीति । भीरूणां भीषणानि भयंकराणि कबन्धानि शिरोरहितदेहाः समुत्पेतुः अर्द्धं पृथक् तदेव भङ्ग्यन्तरेणाह—भुजेति । भुजादिभिः छिन्नाः भेदितभुजादय इत्यर्थः छिन्नानि विदीर्णानि कायानि कबन्धानि येषां ते वानरा राक्षसाश्च भूतले निपेतुः ॥ १० ॥

गो० टी०–कबन्धानीत्यर्थम् ॥ १० ॥

गो० टी०–पुनः केषांचित्पतनमाह–भुजेति । भुजपाणिशिरस्सु छिन्नाः छिन्नकायाः छिन्नमध्यकायाः ॥ ११ ॥

१ बलस्य च नीति गो. पाठः । २ जयेनेति गो. पाठः । ३ सविस्फार्येति गो. पाठः । ४ रथेष्विति गो. पाठः । ५ तु शूरा ये सर्वे ते इति गो. पाठः । ६ आ इति गो. पाठः । ७ गिरीन्वृक्षान्वि गो. महावृक्षानिति रा. पाठः । ८ प्रभिन्नेति रा. गो. पाठः । ९ भिन्नैरिति गो. पाठः । १० अर्पितेति गो. पाठः । ११ बलैराढ्या इति गो. पाठः । १२ गणेति गो. पाठः ।

वानरा राक्षसाश्चापि निपेतुस्तत्र भूतले । ततो वानरसैन्येन हन्यमानं निशाचरम् ॥ ११ ॥
प्राभज्यत बलं सर्वं वज्रदंष्ट्रस्य पश्यतः । राक्षसान्भयवित्रस्तान्हन्यमानान्प्लवंगमैः ॥ १२ ॥
दृष्ट्वा स रोषताम्राक्षो वज्रदंष्ट्रः प्रतापवान् । प्रविवेश धनुष्पाणिस्त्रासयन्हरिवाहिनीम्[1] ॥ १३ ॥
शरैर्विदारयामास कङ्कपत्रैरजिह्मगैः । बिभेद वानरांस्तत्र सप्ताष्टौ नव पञ्च च ॥ १४ ॥
विव्याध परमक्रुद्धो वज्रदंष्ट्रः प्रतापवान् ॥
त्रस्ताः सर्वे हरिगणाः शरैः संकृत्तदेहिनः[2] । अङ्गदं संप्रधावन्ति प्रजापतिमिव प्रजाः ॥ १५ ॥
ततो हरिगणान्भग्नान्दृष्ट्वा वालिसुतस्तदा । क्रोधेन वज्रदंष्ट्रं तमुदीक्षन्तमुदैक्षत ॥ १६ ॥
वज्रदंष्ट्रोऽङ्गदश्चोभौ योयुध्येते[3] परस्परम् । चेरतुः परमक्रुद्धौ हरिमत्तगजाविव ॥ १७ ॥
ततः शतसहस्रेण हरिपुत्रं महाबलम् । जघान मर्मदेशेषु शरैरग्निशिखोपमैः[4] ॥ १८ ॥
रुधिरोक्षितसर्वाङ्गो वालिसूनुर्महाबलः । चिक्षेप वज्रदंष्ट्राय वृक्षं भीमपराक्रमः ॥ १९ ॥
दृष्ट्वा पतन्तं तं वृक्षमसंभ्रान्तश्च राक्षसः । चिच्छेद बहुधा सोऽपि मथितः[5] प्रापतद्भुवि[6] ॥ २० ॥
तं दृष्ट्वा वज्रदंष्ट्रस्य विक्रमं प्लवगर्षभः । प्रगृह्य विपुलं शैलं चिक्षेप च ननाद च ॥ २१ ॥
तमापतन्तं[7] दृष्ट्वा[8] स रथादाप्लुत्य वीर्यवान् । गदापाणिरसंभ्रान्तः पृथिव्यां समतिष्ठत ॥ २२ ॥
अङ्गदेन[9] शिला क्षिप्ता गत्वा तु रणमूर्धनि । सचक्रकूबरं साश्वं प्रममाथ रथं तदा ॥ २३ ॥
ततोऽन्यं[10] च्छिखरं गृह्य विपुलं[11] द्रुमभूषितम् । वज्रदंष्ट्रस्य शिरसि पातयामास वानरः[12] ॥ २४ ॥
अभवच्छोणितोद्गारी वज्रदंष्ट्रः सुमूर्छितः[13] । मुहूर्तमभवन्मूढो गदामालिङ्ग्य निःश्वसन् ॥ २५ ॥
स लब्धसंज्ञो गदया वालिपुत्रमवस्थितम् । जघान परमक्रुद्धो वक्षोदेशे निशाचरः ॥ २६ ॥
गदां त्यक्त्वा ततस्तत्र मुष्टियुद्धमकुर्वत । अन्योन्यं जघ्नतुस्तत्र तावुभौ हरिराक्षसौ ॥ २७ ॥
रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ । बभूवतुः सुविक्रान्तावङ्गारकबुधाविव ॥ २८ ॥

---

११ ] ति० टी०—निशाचरम् नैशाचरमित्यर्थः ॥ ११ ॥

रा० टी०—तत इति । वानरसैन्येन हन्यमानं निशाचरं निशाचरसंबन्धिबलं प्राभज्यत व्यदीर्यत ॥ ११ ॥

गो० टी०—तत इति । निशाचरं निशाचरसंबन्धि । अण्वृद्ध्यभाव आर्षः । यद्वा निशायां चरतीति योगमात्रविवक्षा १२

१२-१३ ति० टी०—प्राभज्यत भग्नमभूत ॥ १२ ॥ १३ ॥

रा० टी०—राक्षसानिति । वज्रदंष्ट्रः प्लवङ्गमैर्हन्यमानान् अत एव भयवित्रस्तान् राक्षसान् दृष्ट्वा हरिवाहिनीं त्रासयन् सन् प्रविवेश शरैर्विदारयामास च श्लोकद्वयमेकान्वयि १२ ॥ १३

गो० टी०—राक्षसानित्यादि । भयवित्रस्तान् भयहेतुभ्यो वित्रस्तान् ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—सप्ताष्टौ नव पञ्च च । वानरानेकेनैव शरेण बिभेदेत्यर्थः १४ ॥

रा० टी०—तत्प्रकारमाह—बिभेदेति । तत्र एकैकबाणप्रक्षेपं सप्ताद्यन्यतमान् एकोनविंशत्संख्याकान्वा वानरान् बिभेद अर्थं पृथक् ॥ १४ ॥

गो० टी०—बिभेदेति । सप्ताष्टौ नव पञ्च चेति एकैकप्रयोगेणेति शेषः ॥ १५ ॥ १६ ॥

रा० टी०—विव्याधेति । परमक्रुद्धो वज्रदंष्ट्रः विव्याध वानरानिति शेषः अत एव शरैस्संकृतदेहिनः त्रस्ताः हरिगणाः प्रजाः प्रजापतिमिव अङ्गदं सम्प्रधावन्ति सार्द्धश्लोक एकान्वयी ॥ १५ ॥

१५ ] ति० टी०—संप्रधावन्ति स्म ॥ १५ ॥

१६ ] ति० टी०—क्रोधेनोदीक्षन्तं क्रोधेनोदैक्षत ॥ १६ ॥

रा० टी०—तत इति । वालिसुतः हरिगणान् भग्नान् दृष्ट्वा क्रोधेन उदीक्षन्तं वज्रदंष्ट्रं क्रोधेन उदैक्षत ॥ १६ ॥

गो० टी०—तत इति । उदीक्षन्तम् उदीक्षमाणम् ॥ १७ ॥

१७ ] ति० टी०—योयुध्येते । पुनः पुनर्युद्धमकुरुतामित्यर्थः हरिमत्तगजाविव हरिरिह शार्दूलः सिंहेन गजस्य युद्धासंभवात् स्वप्नेऽपि सिंहदर्शनेन गजानां मरणादिति कतकः ॥ १७ ॥

रा० टी०—वज्रदंष्ट्र इति । वज्रदंष्ट्रोऽङ्गदश्च परस्परं योयुध्येते अतिशयेन युद्धमकुरुतामत एव हरिमत्तगजाविव चेरतुः अत्र हरिपदेन शार्दूलः सिंहेन सह गजयुद्धासम्भवात् स्वप्नेपि सिंहदर्शनमात्रेण गजमरणप्रसिद्धेः अभूतोपमा वा ॥ १७ ॥

गो० टी०—वज्रदंष्ट्र इति । हरिमत्तगजौ सिंहमत्तगजौ १८-२३

१८-२८ ] ति० टी०—हरिपुत्रं वालिपुत्रम् ॥ १८ ॥ २८ ॥

---

१ यूथपानिति रा. पाठः । २ कंधरा इति गो. पाठः । ३ संगतौ हरिराक्षसाविति गो. पाठः । ४ मातङ्गमिव तोमरैरिति गो. पाठः । ५ निकृत्त इति गो. पाठः । ६ पतित इति गो. पाठः । ७ समिति गो. पाठः । ८ तं दृष्ट्वेति गो. पाठः । ९ साङ्गदेन गदेति गो. पाठः । १० अन्यं गिरिमाक्षिप्येति गो. पाठः । ११ विपुलद्रुमेति रा. पाठः । १२ सोऽङ्गद इति गो. पाठः । १३ स इति गो. पाठः ।

ततः परमतेजस्वी अङ्गदः प्लवगर्षभः। उत्पाट्य वृक्षं स्थितवानासीत्पुष्पफलैर्युतः ॥ २९ ॥
जग्राह चार्षभं चर्म खड्गं च विपुलं शुभम्। किङ्किणीजालसंछन्नं चर्मणा च परिष्कृतम् ॥ ३० ॥
चित्रांश्च रुचिरान्मार्गांश्चेरतुः कपिराक्षसौ। जघ्नतुश्च तदान्योन्यं नर्दन्तौ जयकाङ्क्षिणौ ॥ ३१ ॥
व्रणैः सैमुत्थैः शोभेतां पुष्पिताविव किंशुकौ। युध्यमानौ परिश्रान्तौ जानुभ्यामवनीं गतौ ॥ ३२ ॥
निमेषान्तरमात्रेण अङ्गदः कपिकुञ्जरः। उदतिष्ठत दीप्ताक्षो दण्डाहत इवोरगः ॥ ३३ ॥

रा० टी०-तत इति। हरिपुत्रमङ्गदं शतसहस्रेण शरैः मर्मदेशेषु जघान वज्रदंष्ट्र इति शेषः ॥ १८ ॥

रा० टी०-रुधिरेति। रुधिरेणोक्षितानि सर्वाङ्गानि यस्य स वालिसुतः वज्रदंष्ट्राय वृक्षं चिक्षेप ॥ १९ ॥

रा० टी०-दृष्ट्वेति। राक्षसः आपतन्तं वृक्षं दृष्ट्वा बहुधा चिच्छेद अत एव स वृक्षः मथितो भिन्नः सन् भुवि प्रापतत् २०

रा० टी०-तमिति। प्लवगर्षभोऽङ्गदः वज्रदंष्ट्रस्य विक्रमं दृष्ट्वा शैलं प्रगृह्य चिक्षेप ननाद च ॥ २१ ॥

रा० टी०-तमिति। आपतन्तं तं शैलं स राक्षसो दृष्ट्वा रथादाप्लुत्य पृथिव्यां समतिष्ठत ॥ २२ ॥

गो० टी०-सेति। सा वज्रदंष्ट्रधृता गदा आक्षिप्ता अपहृता ॥ २४ ॥

रा० टी०-अङ्गदेनेति। अङ्गदेन क्षिप्ता शिला रणमूर्धनि गत्वा रथं प्रममाथ ॥ २३ ॥

रा० टी०-तत इति। ततः अन्यच्छिखरं गृह्य गृहीत्वा वज्रदंष्ट्रस्य शिरसि पातयामास ॥ २४ ॥

गो० टी०-स चकेति। सः अङ्गदक्षिप्तशैलः ॥२५॥२६॥

रा० टी०-अभवदिति। शोणितोद्गारी सन् वज्रदंष्ट्रः सम्मूर्छितोऽभवत् अत एव गदामालिङ्ग्य निश्वसन् सन् मुहूर्तं मूढो विवेकरहितोऽभवत् ॥ २५ ॥

गो० टी०-अभवदिति। शोणितोद्गारी रक्तोद्गारी। गदाम् अन्याम्। यद्वा, जघान परमक्रुद्धो वक्षोदेशे निशाचर इत्यस्यानन्तरं, साङ्गदेन गदा क्षिप्ता गत्वा तु रणमूर्धनीत्यर्धं योज्यम् ॥ २७ ॥

रा० टी०-स इति। लब्धसञ्ज्ञस्स निशाचरः गदया वालिपुत्रं वक्षोदेशे जघान ॥ २६ ॥

रा० टी०-गदामिति। ततोऽनन्तरं गदां त्यक्त्वा मुष्टियुद्धमकुर्वत अकुरुताम् अत एव अन्योन्यं जघ्नतुः ॥ २७ ॥

रा० टी०-रुधिरेति। प्रहारैरिति। जनितश्रमौ रुधिरोद्गारिणौ तौ अङ्गारकबुधाविव छविकान्तौ शोभनपादविक्षेपयुक्तौ बभूवतुः ॥ २८ ॥

गो० टी०-स इत्यादि। अवर्तत अवर्त्तयत् ॥२८॥२९॥

२९ ] ति० टी०-पुष्पफलैर्हस्तधृतवृक्षीयैस्तैर्युत आसीत् २९

रा० टी०-तत इति। परमतेजस्वी अङ्गदः वृक्षमुत्पाट्य स्थितवान् अत एव पुष्पफलैर्युतः आसीत् ॥ २९ ॥

गो० टी०-ततः परमतेजस्वीत्यादिश्लोकद्वयमेकान्वयम् ॥ वृक्षोत्पाटनार्षभचर्मखण्डग्रहणादिकमङ्गदस्योच्यमानमितरस्याप्युपलक्षणम्। विचित्रांश्चेरतुर्मार्गानिति वक्ष्यमाणयुद्धस्य उभयोरविशेषेण वर्णनात्। अङ्गदेन वृक्षे गृहीते राक्षसोपि वृक्षं जग्राह। अङ्गदेन खड्गादौ गृहीते राक्षसोपि खड्गादिकं जग्राहेति भावः। आर्षभं चर्म ऋषभचर्मपिनद्धं फलकम्। चर्मणा खड्गकोशेन ॥ ३० ॥ ३१ ॥

३०-३१ ] ति० टी०-आर्षभं चर्म ऋषभचर्मनिर्मितं फलकम् चर्मणा च परिष्कृतम् कोशरूपेणेत्यर्थः जग्राह वज्रदंष्ट्रोऽङ्गदश्चेति शेषः ॥ ३० ॥ ३१ ॥

रा० टी०-जग्राहेति। आर्षभं ऋषभचर्मनिर्मितं किङ्किणीजालसंवृतं चर्मणा कोशेन परिष्कृतं खड्गं च जग्राह राक्षस इति शेषः ॥ ३० ॥

रा० टी०-विचित्रानिति। जयकाङ्क्षिणौ अत एव नर्दन्तौ कपिराक्षसौ विचित्रान् मार्गान् चेरतुः अत एव अन्योऽन्यं जघ्नतुः ॥ ३१ ॥

गो० टी०-विचित्रानिति। मार्गान् पूर्वोक्तमण्डलादिमार्गान्। निर्दयं जघ्नतुरित्यन्वयः ॥ ३२ ॥

३२-३३ ] ति० टी०-व्रणैः समुत्थैः तत्सम्रुत्थितैरुधिरैरित्यर्थः ॥ ३२ ॥ ३३ ॥

रा० टी०-व्रणैरिति। युध्यमानौ परिश्रान्तौ अत एव जानुभ्यामवनीं गतौ कपिराक्षसौ समुत्थैः परस्पराघातेन जनितैः व्रणैः पुष्पितौ किंशुकाविव शोभेताम् ॥ ३२ ॥

गो० टी०-व्रणैरिति। सास्रैः सरुधिरैः। अस्रमसृणि शोणित इत्यमरः। अवनीं गतौ अभूतामिति शेषः ॥ ३३ ॥

रा० टी०-निमेषेति। अङ्गदः निमेषान्तरमात्रेण दण्डाहत उरग इव उदतिष्ठत ॥ ३३ ॥

गो० टी०-निमेषेति। निमेषान्तरमात्रेण निमेषावकाशमात्रेण ॥ ३४ ॥

१ कपिकुञ्जर इति गो.पाठः। २ बहुपुष्पफलान्वितमिति गो.पाठः। ३ विचित्रांश्चेरतुर्मार्गान् रुचिरे इति गो. विचित्रान् रुचिरान् मार्गानिति च रा. पाठः। ४ निर्दयमिति गो. पाठः। ५ सास्रैरिति गो. पाठः।

निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः । जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ॥ ३४ ॥
रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा । तच्च तस्य परीताक्षं शुभं खड्गहतं शिरः ॥ ३५ ॥
वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः । त्रस्ता ह्यभ्यद्रवल्लंकां वध्यमानाः प्लवंगमैः ॥
विषण्णवदना दीना ह्रिया किंचिदवाङ्मुखाः ॥ ॥ ३६ ॥
निहत्य तं वज्रधरः प्रतापवान्स वालिसूनुः कपिसैन्यमध्ये ।
जगाम हर्षं महितो महाबलः सहस्रनेत्रस्त्रिदशैरिवावृतः ॥ ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ।

वज्रदंष्ट्रे हते व्याकुलचेतसो रावणस्याज्ञया समरमागतस्य महत्या राक्षससेनयानुगतस्यापि दुरुत्पातदर्शनखिद्यमानसस्याकम्पना-ख्यरक्षसः कपीनां च विस्मयजनको रणः ।

वज्रदंष्ट्रं हतं श्रुत्वा वालिपुत्रेण रावणः । बलाध्यक्षमुवाचेदं कृताञ्जलिमुपस्थितम् ॥ १ ॥
शीघ्रं निर्यान्तु दुर्धर्षा राक्षसा भीमविक्रमाः । अकम्पनं पुरस्कृत्य सर्वशस्त्रास्त्रकोविदम् ॥ २ ॥
एष शास्ता च गोप्ता च नेता च युधि सत्तमः । भूतिकामश्च मे नित्यं नित्यं च समरप्रियः ॥ ३ ॥
एष जेष्यति काकुत्स्थौ सुग्रीवं च महाबलम् । वानरांश्चापरान्घोरान्हनिष्यति न संशयः ॥ ४ ॥
परिगृह्य स तमाज्ञां रावणस्य महाबलः । बलं संप्रेरयामास तदा लघुपराक्रमः ॥ ५ ॥
ततो नानाप्रहरणा भीमाक्षा भीमदर्शनाः । निष्पेतू राक्षसा मुख्या बलाध्यक्षप्रचोदिताः ॥ ६ ॥

---

३४-३६ ] ति० टी०—खड्गेनाच्छिद्य गृहीतेन वज्रदंष्ट्रीयेण ॥ ३४ ॥ ३६ ॥

रा० टी०—निर्मलेनेति । सुधौतेन शाणसंस्कृतेन अत एव निर्मलेन खड्गेन वज्रदंष्ट्रस्य महच्छिरो वालिसूनुर्जघान॥३४॥

रा० टी०—रुधिरेति । रुधिरोक्षितगात्रस्य तस्य राक्षसस्य खड्गहतमत एव परीते परावृत्ते अक्षिणी यस्मिन् तत् शिरः पतितं सत् द्विधा बभूव ॥ ३५ ॥

गो० टी०—निर्मलेनेति । सुधौतेन शाणोल्लिखितेन अत एव निर्मलेन। अस्य वज्रदंष्ट्रस्येत्यन्वयः। केचित्तु स जग्राहार्षभं चर्मेति पठित्वा सः वज्रदंष्ट्रः खड्गं जग्राह अङ्गदो वृक्षं जग्राहेति व्याख्याय, खड्गेनास्य महच्छिर इत्यत्र वृक्षे प्रतिहतेऽङ्गदोपि चर्मासी जग्राहेति अनेनावगम्यत इत्यपि वर्णयन्ति॥३५॥३६॥

३७ ] ति० टी०—महितः पूजितः ॥ ३७ ॥

तत्तृतीयायां वज्रदंष्ट्रवधः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

रा० टी०—वज्रेति । प्लवङ्गमैर्वध्यमानाः अत एव भयमोहिताः अत एव त्रस्ताः उद्विग्नाः अत एव विषण्णवदनाः अत एव ह्रिया लज्जया किंचिदवाङ्मुखाः राक्षसाः वज्रदंष्ट्रं हतं दृष्ट्वा लंकामभ्यद्रवन् सार्धश्लोक एकान्वयी ॥ ३६ ॥ ३७ ॥

रा० टी०—निहत्येति । वज्रधर इव प्रतापवान् वालिसूनुः तं वज्रदंष्ट्रं निहत्य त्रिदशैरावृतः सहस्रनेत्र इव कपिसैन्यमध्ये महितः प्रशंसितस्सन् हर्षं जगाम ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

गो० टी०—वज्रदंष्ट्रमित्यादि । विषण्णवदनाः शुष्कवदनाः ॥ ३७ ॥ ३८ ॥

तृतीयायां वज्रदंष्ट्रवधः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

१-२ ] ति० टी०—बलाध्यक्षं प्रहस्तम् ॥ १ ॥ २ ॥

रा० टी०—वज्रदंष्ट्रवधानंतरकालिकं रावणवृत्तान्तमाह—वज्रेत्यादिभिः । रावणः वालिपुत्रेण वज्रदंष्ट्रं हतं श्रुत्वा बलाध्यक्षमुवाच ॥ १ ॥

रा० टी०—तदाकारमाह—शीघ्रमिति । सर्वशस्त्रास्त्रकोविदमकम्पनं तदभिधराक्षसं पुरस्कृत्य राक्षसाः शीघ्रं निर्यान्तु॥२॥

गो० टी०—अथाकम्पनयुद्धं पञ्चपञ्चाशे—वज्रदंष्ट्रमित्यादि । बलाध्यक्षं प्रहस्तम् ॥ १ ॥ २ ॥

३-६ ] ति० टी०—शास्ता शत्रूणाम्, गोप्ता स्वबलस्य, नेता नायको युद्धस्य ॥ ३ ॥ ६ ॥

---

१ सरोषपरिवृत्ताक्षामिति गो. पाठः । २ प्रत्यपतन्निति गो. पाठः । ३ वज्रधरप्रभाव इति गो. पाठः । ४ जयेति गो. पाठः । ५ प्रेति गो. पाठः । ६ भ्रमत इति गो. पाठः । ७ परंतप इति गो. पाठः । ८ संप्रेरयामासेति गो.पाठः ।

रथमास्थाय विपुलं तप्तकाञ्चनभूषणम् । मेघाभो मेघवर्णश्च मेघस्वनमहास्वनः ॥ ७ ॥
राक्षसैः संवृतो घोरैस्तदा निर्यात्यकम्पनः । नहि कम्पयितुं शक्यः सुरैरपि महामृधे ॥ ८ ॥
अकम्पनस्ततस्तेषामादित्य इव तेजसा । तस्य निर्धावमानस्य संरब्धस्य युयुत्सया ॥ ९ ॥
अकस्माद्दैन्यमागच्छद्धयानां रथवाहिनाम् । विस्फुरन्नयनं चास्य सव्यं युद्धाभिनन्दिनः ॥ १० ॥
विवर्णो मुखवर्णश्च गद्गदश्चाभवत्स्वनः । अभवत्सुदिने काले दुर्दिनं रूक्षमारुतम् ॥ ११ ॥
ऊचुः खगमृगाः सर्वे वाचः क्रूरा भयावहाः । । सिंहोपचितस्कन्धः शार्दूलसमविक्रमः ॥ १२ ॥
तानुत्पातानचिन्त्यैव निर्जगाम रणाजिरम् । तथा निर्गच्छतस्तस्य रक्षसः सह राक्षसैः ॥ १३ ॥
बभूव सुमहान्नादः क्षोभयन्निव सागरम् । तेन शब्देन वित्रस्ता वानराणां महाचमूः ॥ १४ ॥
द्रुमशैलप्रहाराणां योद्धुं समुपतिष्ठताम् । तेषां युद्धं महारौद्रं संजज्ञे कपिरक्षसाम् ॥ १५ ॥

---

रा० टी०–प्रोत्साहनार्थमकम्पनस्य गुणानाह–एष इति । एषः अकम्पनः शास्ता रिपूणां निग्रहकर्ता गोप्ता स्वबलरक्षकश्च अत एव युधि नेता अग्रणीर्मे नित्यं भूतिकामश्चास्तीति शेषः॥३॥

रा० टी०–एष इति । एषः वानरान् हनिष्यति अत एव काकुत्स्थौ सुग्रीवं च जेष्यति ॥ ४ ॥

गो० टी०–एष इति । शास्ता परसैन्यनिग्राहकः गोप्ता स्वबलरक्षकः नेता नायकः सेनापतिरित्यर्थः । संमतः प्रसिद्धः ॥ ३ ॥ ४ ॥

रा० टी०–परीति । सबलाध्यक्षः प्रहस्त इत्यर्थः रावणस्याज्ञां परिगृह्य बलं संप्रेरयामास ॥ ५ ॥

गो० टी०–परिगृह्येति । बलचोदनेन स्वचोदनमर्थसिद्धं मत्वेत्यर्थः ॥ ५ ॥

रा० टी०–तत इति । बलाध्यक्षप्रचोदिताः मुख्याः राक्षसाः अकम्पनप्रभृतयो निष्पेतुः ॥ ६ ॥

गो० टी०–तत इति । निष्पेतुः पुरान्निर्ययुः ॥ ६ ॥

७ ] ति० टी०–मेघाभो मेघसमानदेहप्रमाणः मेघवर्णस्तद्वन्नीलवर्णः मेघस्य स्वन इव महान्स्वनो यस्य स तथा॥७॥

रा० टी०–तत्प्रकारमाह—रथमिति । मेघाभो मेघाकारशरीरो मेघवर्णस्तद्वन्नीलो मेघस्य स्वन इव महास्वनो यस्य सोऽकम्पनः रथमास्थाय निर्याति सार्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०–रथमित्यादि । मेघाभः मेघवत् स्थूलः मेघस्वनमहास्वनः सप्तम्युपमानपूर्वपदस्येत्यादिना उत्तरपद लोपस्य वैकल्पिकत्वे प्रथमस्वनपदश्रवणम् ॥ ७ ॥

८ ] ति० टी०–निर्याति याति स्म ॥ ८ ॥

रा० टी०–नेति । सुरैरपि कम्पयितुं न शक्यः ततः तस्माद्धेतोः अकम्पनः तेजसा आदित्य इव तेषां वानराणां दुष्प्रेक्षो बभूवेति शेषः ॥ ८ ॥

गो० टी०–प्रसङ्गादाह—न हीति । हि यस्मात् महामृधे महायुद्धेपि कम्पयितुं न शक्यते अतो हेतोरकम्पनः अकम्पन शब्दवाच्यः । तेषां रक्षसाम् मध्ये तेजसा आदित्य इव स्थित इत्यर्थः ॥ ८ ॥ ९ ॥

९ ] ति० टी०–तेषां वानराणां तेजसादित्य इव दुष्प्रेक्षोऽभूदिति शेषः ॥ ९ ॥

रा० टी०–पराभवलक्षणान्याह—तस्येत्यादिभिः । युयुत्सया संरब्धस्य कोपाविष्टस्य अत एव युयुत्सया निर्धावमानस्य तस्याकम्पनस्य हयानामकस्मात् दृष्टकारणाभावात् दैन्यं ग्लानिरगच्छत् ॥ ९ ॥

१०] ति० टी०–रथवहनकर्तृणां हयानामकस्मान्निर्हेतुकमेव दैन्यमागच्छत् मन इति शेषः ॥ १० ॥

रा० टी०–व्यस्फुरन्निति । युद्धाभिनन्दिनोऽस्याकम्पनस्य सव्यं नयनं व्यस्फुरत् मुखवर्णो विवर्णो विपरीतवर्णः स्वनो गद्गदश्चाभवत् ॥ १० ॥

गो० टी०–व्यस्फुरदित्यादि । विवर्णः विपरीतवर्णः दुर्दिनं मेघच्छन्नदिनम् । मेघच्छन्नेऽह्नि दुर्दिनमित्यमरः॥१०॥११॥

११–१२ ] ति० टी०–सुदिने वर्षादिकृतदुर्दिनप्रसक्तिरहिते ॥ ११ ॥ १२ ॥

रा० टी०–अभवदिति । सुदिने शोभनदिनेहेतौ दुर्दिनायोग्ये इत्यर्थः काले रूक्षः मारुतो यस्मिन् तद्दुर्दिनं मेघनिबिडत्वादि अभवत् क्रूराः खगमृगाः भयावहा वाच ऊचुः ॥११॥

रा० टी०–स इति । सिंहवत् उपचितौ उन्नतौ स्कंधौ यस्य सोऽकम्पनः तानुत्पातान् अचिन्त्यैव रणाजिरं निर्जगाम॥१२॥

गो० टी०–स इति । सिंहोपचितस्कन्धः सिंहस्येवोन्नतस्कन्धवान् ॥ १२–१४ ॥

१३–१५ ] ति० टी०–अचिन्त्येत्यार्षम् ॥ १३ ॥ १५ ॥

रा० टी०–तथेति । राक्षसैस्सह निर्गच्छतो रक्षसः तस्याकम्पनस्य सुमहान्नादः सागरं क्षोभयन्निव बभूव ॥ १३ ॥

रा० टी०–तेनेति । तेन शब्देन द्रुमशैलप्रहाराणां वानराणां महाचमूः वित्रस्ता ॥ १४ ॥

रा० टी०–तेषामिति । रामरावणयोरर्थे समभित्यक्ताः समर्पिताः ये देहाः तद्वतां कपिरक्षसां युद्धं संजज्ञे ॥ १५ ॥

गो० टी०–तेषामिति । समभित्यक्तजीवितानां तृणीकृतशरीराणामित्यर्थः ॥ १५ ॥

---

१ कुण्डल इति गो. पाठः । २ भीमैरिति गो. पाठः । ३ व्यस्फुरदिति गो. रा. पाठः । ४ खगा मृगा इति गो. पाठः । ५ तदेति गो. पाठः । ६ समवतिष्ठतेति गो. पाठः । ७ इतीति गो. पाठः ।

रामरावणयोरर्थे समभित्यक्तदेहिनः[1] । सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसंनिभाः ॥ १६ ॥
हरयो राक्षसाश्चैव परस्परजिघांसया[2] । तेषां विनर्दतां शब्दः संयुगेऽतितरस्विनाम् ॥ १७ ॥
शुश्रावे[3] सुमहान्कोपा[4]दन्योन्यमभिगर्जताम् । रजश्चारुणवर्णाभं सुभीममभवद्भृशम् ॥ १८ ॥
उद्धृतं[5] हरिरक्षोभिः संरुरोध दिशो दश । अन्योन्यं रजसा तेन कौशेयोद्धू[6]तपाण्डुना ॥ १९ ॥
संवृतानि च भूतानि ददृशुर्न रणाजिरे । न ध्वजो[7] न पताका वा चर्म वा तुरगोऽपि वा ॥ २० ॥
आयुधं स्यन्दनो[8] वापि ददृशे तेन रेणुना । शब्दश्च सुमहांस्तेषां नर्दतामभिधावताम् ॥ २१ ॥
श्रूयते तुमुलो[9] युद्धे न रूपाणि चकाशिरे । हरीनेव सुसंरुष्टा[10] हरयो जघ्नुराहवे ॥ २२ ॥
राक्षसा राक्षसांश्चापि निजघ्नुस्तिमिरे तदा । ते[11] परांश्च विनिघ्नन्तः स्वांश्च वानरराक्षसाः ॥ २३ ॥
रुधिरार्द्रां तदा चक्रुर्महीं पङ्कानुलेपनाम् । ततस्तु रुधिरौघेण सिक्तं ह्यपगतं[12] रजः ॥ २४ ॥
शरीरशवसंकीर्णा बभूव च वसुंधरा । द्रुमशक्तिगदा[13]प्रासैः शिला[14]परिघतोमरैः ॥ २५ ॥
राक्षसा हरयस्[15]तूर्णं जघ्नुरन्योन्यमोजसा । बाहुभिः परिघाकारैर्युध्यन्तः पर्वतोपमान्[16] ॥ २६ ॥
हरयो भीमकर्माणो राक्षसाञ्जघ्नुराहवे । राक्षसास्त्व[17]भिसंक्रुद्धाः प्रासतोमरपाणयः ॥ २७ ॥
कपीन्निजघ्निरे तत्र शस्त्रैः परमदारुणैः । अकम्पनः सुसंक्रुद्धो राक्षसानां चमूपतिः ॥ २८ ॥

---

१६-१७ ] ति० टी०—समभित्यक्ता देहिन आत्मानो यैस्ते आत्मरक्षानिरपेक्षा इति यावत् ॥ १६ ॥ १७ ॥

रा० टी०—सर्व इति । हरयो राक्षसाश्च परस्परं जिघांसवो बभूवुरिति शेषः ॥ १६ ॥

गो० टी०-सर्व इति। परस्परजिघांसवः आसन्निति शेषः१६

रा० टी०—तेषामिति । कोपात् अन्योऽन्यमभिगर्जतां युद्धार्थमाह्वयतामत एव विनर्दतां तेषां सुमहान् शब्दः शुश्रुवे१७

गो० टी०—तेषामिति । विनर्दतां सिंहनादं कुर्वताम् अभिगर्जताम् आभिमुख्येन गर्जनं कुर्वताम् ॥ १७ ॥

१८ ] ति० टी०—अरुणवर्णाभं धूम्रवर्णस्य वस्तुन आभा यस्मिंस्तत् । अरुणशब्दो धूम्रपर्यायोऽपि ॥ १८॥

रा० टी०—रज इति । हरिरक्षोभिः उद्धूतमरुणवर्णाभमरुणवर्णा आभा दीप्तिर्यस्य तत् सुभीममतिभयङ्करं भृशं रजोऽभवत् अत एव दिशस्संरुरोध ॥ १८ ॥

गो० टी०—रजश्चेति । अरुणवर्णेन रक्तिम्ना आभातीत्यरुणवर्णाभम् ॥ १८ ॥

१९ ] ति० टी०—कौशेयोद्धतपाण्डुनोद्धतकौशेयवदीषत्पाण्डुरवर्णेन ॥ १९ ॥

रा० टी०—अन्योन्यमिति । कौशेयोद्धतवत् उद्धतकौशेयवत्पाण्डुना ईषदरुणवर्णेनेत्यर्थः अन्योन्यरजसा संवृतानि भूतानि वानरादयः रणाजिरे न ददृशुः ॥ १९ ॥

गो० टी०—अन्योन्यमिति । कौशेयोद्धूतपाण्डुना उद्धूतकौशेयपाण्डुना आहिताग्न्यादित्वात् परनिपातः । रजसो रक्तत्वपाण्डुत्वे भूभेदादिति ज्ञेयम् । संवृतानि छन्नानि भूतानि वस्तूनि न ददृशुः वानरा राक्षसाश्चेति शेषः ॥ १९ ॥

२० ] ति० टी०—भूतानि कपिरक्षोलक्षणप्राणिनः ॥ २० ॥

रा० टी०—नेति । रेणुना ध्वजप्रभृतिर्न ददृशे ॥ २० ॥

गो० टी०-उक्तं विवृणोति—न ध्वजा इति । चर्मादिष्वपि नञनुवर्तनीयः ॥ २० ॥

२१ ] ति० टी०—आयुधादि न ददृशे इत्यन्वयः ॥ २१ ॥

रा० टी०—शब्द इति । नर्दतां तेषां तुमुलश्शब्दः श्रूयते रूपाणि तु न चकाशिरे ॥ २१ ॥

गो० टी०—परस्परादर्शनादिजन्यं शब्दान्तरमाह—शब्दश्चेति । रूपाणि पदार्थान्तराणि ॥ २१ ॥

२२-२४ ] ति० टी०—शब्द एव श्रूयते न च रूपाणि चकाशिरे सुसंरुष्टाः सुतरां सम्यक्क्रुद्धाः ॥ २२ ॥ २४ ॥

रा० टी०—हरीनिति । तदा तस्मिन् तिमिरे हरयो हरीनपि जघ्नुः राक्षसा राक्षसानपि जघ्नुः ॥ २२ ॥

गो० टी०—अदर्शनफलमाह—हरीनिति ॥ २२ ॥

रा० टी०—ते इति । परान् स्वांश्च विनिघ्नन्तो वानरराक्षसाः महीं रुधिरार्द्रामत एव पंकानुलेपनां चक्रुः ॥ २३ ॥

गो० टी०—परानिति । प्रथमं रक्तार्द्राम् अथ च रणक्षोदेन पङ्किलामित्यर्थः । पङ्कानुलेपनां पङ्कानुलिप्ताम् । कर्मणि ल्युट्२३

रा० टी०—तत इति । रुधिरौघेण सिक्तं सत् रजोपगतं वसुन्धरा तु शरीरशवेन शवरूपशरीरेण संकीर्णा बभूव ॥२४॥

गो० टी०—तत इति । शरीरशवसंकीर्णा शवभूतशरीरसंकीर्णा ॥ २४ ॥

२५-२८ ] ति० टी०—शरीरशवसंकीर्णा शवरूपैः शरीरैः संकीर्णा ॥ २५ ॥ २८ ॥

---

१ जीविनामिति गो. देहिनामिति रा. पाठः । २ जिघांसव इति गो. रा. पाठः । ३ शुश्रुव इति गो. रा. पाठः । ४ क्रोधादिति गो. पाठः । ५ उद्धतमिति गो. पाठः । ६ उद्धतेति गो. पाठः । ७ ध्वजा इति गो. पाठः । ८ स्यन्दनामिति गो. पाठः । ९ तुमुले इति गो. पाठः । १० क्रुद्धा इति गो. पाठः । ११ परांश्चैव विनिघ्नन्त इति गो. पाठ । १२ व्यपेति गो. पाठः । १३ शिलेति गो. पाठः । ४१ गदेति गो. पाठः । १५ हरयो राक्षसाश्चेति गो. पाठः । १६ उपमा इति गो. पाठः । १७ अपीति गो. पाठः ।

संहर्षयति तान्सर्वान्राक्षसान्भीमविक्रमान् । हरयस्त्वपि रक्षांसि महाद्रुममहाश्मभिः ॥ २९ ॥
विदारयन्त्यभिक्रम्य शस्त्राण्याच्छिद्य वीर्यतः । एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः ॥ ३० ॥
मैन्दश्च परमक्रुद्धश्चक्रुर्वेगमनुत्तमम् । ते तु वृक्षैर्महावीरा राक्षसानां चमूमुखे ॥ ३१ ॥
कदनं सुमहच्चक्रुर्लीलया हरिपुंगवाः । ममन्थू राक्षसान्सर्वे नानाप्रहरणैर्भृशम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

## षट्पञ्चाशः सर्गः ।

हनुमत्कृतोऽकम्पनस्य वधः ।

तद्दृष्ट्वा सुमहत्कर्म कृतं वानरसत्तमैः । क्रोधमाहारयामास युधि तीव्रमकम्पनः ॥ १ ॥
क्रोधमूर्च्छितरूपस्तु धुन्वन्परमकार्मुकम् । दृष्ट्वा तु कर्म शत्रूणां सारथिं वाक्यमब्रवीत् ॥ २ ॥
तत्रैव तावत्त्वरितो रथं प्रापय सारथे । एते च बलिनो घ्नन्ति सुबहून्राक्षसान्रणे ॥ ३ ॥
एते च बलवन्तो वा भीमकोपाश्च वानराः । द्रुमशैलप्रहरणास्तिष्ठन्ति प्रमुखे मम ॥ ४ ॥

रा० टी०—द्रुमेति । राक्षसाः हरयश्च द्रुमादिभिरन्योन्यं जघ्नुः ॥ २५ ॥

गो० टी०—द्रुमेति । द्रुमशैला वानरीयाः । शक्त्यादयो राक्षसीयाः ॥ २५ ॥

रा० टी०—बाहुभिरिति । परिघाकारैः बाहुभिर्युध्यन्तो हरयः पर्वतोपमान् राक्षसान् जघ्नुः ॥ २६ ॥

गो० टी०—बाहुभिरिति । बाहुभिः परिघाकारैरित्यस्योत्तरार्धः, हरयो भीमकर्माणो राक्षसान् जघ्नुराहव इति ॥२६॥

रा० टी०—राक्षसा इति । प्रासतोमरपाणयो राक्षसाः कपीन् निजघ्निरे ॥ २७ ॥

गो०टी०—राक्षसास्त्वपीति। शस्त्रैः उक्तप्रासादिभिः॥२७॥

रा० टी०—अकम्पन इति । अकम्पनो राक्षसान् संहर्षयति प्रशंसयतीत्यर्थः ॥ २८ ॥

गो० टी०—अकम्पन इति। संहर्षयति उत्साहयति॥२८॥

२९ ] ति० टी०—संहर्षयति समहर्षयत् ॥ २९ ॥

रा० टी०—हरय इति । हरयः वीर्यतः पराक्रमातिशयात् शस्त्राणि राक्षसायुधानि आच्छिद्य महाद्रुममहाश्मभिः रक्षांसि अभिक्रम्य विदारयन्ति ॥ २९ ॥

गो० टी०—हरयस्त्विति । अभिक्रम्य अभिमुखीभूय । आच्छिद्य अपहृत्य ॥ २९ ॥

३०-३१ ] ति० टी०—शस्त्राण्याच्छिद्य वानराः परहस्तादिति शेषः ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०—नानाप्रहरणैर्भृशमित्यत्र सर्गावच्छेदः प्रमादादिति कतकः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे समये कुमुदादयो हरयः उत्तमं वेगं चक्रुः ॥ ३० ॥

रा० टी०—ते इति । ते महावीराः हरिपुङ्गवाः राक्षसानां चमूमुखे सेनाग्रभागे वृक्षैर्नानाप्रहरणैश्च राक्षसान् ममन्थुः अत एव महत् कदनं हिंसां चक्रुः सार्धश्लोक एकान्वयी ॥३१॥३२॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

गो० टी०—एतस्मिन्निति । स्पष्टः ॥ ३० ॥

गो० टी०—ते त्वित्यादिसार्धश्लोकः ॥ लीलया अनायासेन ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

१-३ ] ति० टी०—तदिति ॥ १ ॥ ३ ॥

रा० टी०—सैन्यपराभवानंतरकालिकमकम्पनकृत्यमाह—तदित्यादिभिः । अकम्पनः वानरसत्तमैः कृतं सुमहत्कर्म दृष्ट्वा तीव्रं कोपमाहारयामास दधार ॥ १ ॥

रा० टी०—क्रोधेति । शत्रूणां कर्म दृष्ट्वा क्रोधमूर्च्छितरूपोऽकम्पनः सारथिमब्रवीत् ॥ २ ॥

रा० टी०—तदाकारमाह—तत्रेति । एते वानराः यत्र राक्षसान् घ्नन्ति तत्रैव रथं प्रापय ॥ ३ ॥

गो०टी०—अथाकम्पनवधः षट्पञ्चाशे—तद्दृष्ट्वेत्यादि १-३

४ ] ति० टी०—एते चेत्यस्य यत्रेत्यादिः बलवन्तो वा वाशब्दो वैशब्दस्यार्थे ॥ ४ ॥

१ द्विविदः क्रुद्धा इति गो. पाठः । २ वेगा इति गो. पाठः । ३ यूथपा इति गो.पाठः । ४ वानरा गणश इति गो.पाठः । ५ यत्रैव इति गो.पाठः । ६ अत्रेति गो. रा. पाठः । ७ घ्नीति गो. वो इति रा. पाठः । ८ कायाश्चेति गो. पाठः ।

एतान्निहन्तुमिच्छामि समरश्लाघिनो ह्यहम् । एतैः प्रमथितं सर्वं राक्षसां दृश्यते बलम् ॥ ५ ॥
ततः प्रचलिताश्वेन रथेन रथिनां वरः । हरीनभ्यपतद्दूराच्छरजालैरकम्पनः ॥ ६ ॥
न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे । अकम्पनशरैर्भग्नाः सर्वे एवाभिदुद्रुवुः ॥ ७ ॥
तान्मृत्युवशमापन्नानकम्पनशरानुगान् । समीक्ष्य हनुमाञ्ज्ञातीनुपतस्थे महाबलः ॥ ८ ॥
तं महाप्लवगं दृष्ट्वा सर्वे ते प्लवगर्षभाः । समेत्य समरे वीराः संहिताः पर्यवारयन् ॥ ९ ॥
व्यवस्थितं हनूमन्तं ते दृष्ट्वा प्लवगर्षभाः । बभूवुर्बलवन्तो हि बलवन्तमुपाश्रिताः ॥ १० ॥
अकम्पनस्तु शैलाभं हनूमन्तमवस्थितम् । महेन्द्र इव धाराभिः शरैरभिववर्ष ह ॥ ११ ॥
अचिन्तयित्वा बाणौघाञ्शरीरे पातितान्कपिः । अकम्पनवधार्थाय मनो दध्रे महाबलः ॥ १२ ॥
स प्रहस्य महातेजा हनूमान्मारुतात्मजः । अभिदुद्राव तद्रक्षः कम्पयन्निव मेदिनीम् ॥ १३ ॥
तस्याथ नर्दमानस्य दीप्यमानस्य तेजसा । बभूव रूपं दुर्धर्षं दीप्तस्येव विभावसोः ॥ १४ ॥
आत्मानं त्वप्रहरणं ज्ञात्वा क्रोधसमन्वितः । शैलमुत्पाटयामास वेगेन हरिपुंगवः ॥ १५ ॥
गृहीत्वा सुमहाशैलं पाणिनैकेन मारुतिः । स विनद्य महानादं भ्रामयामास वीर्यवान् ॥ १६ ॥
ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनम् । पुरा हि नमुचिं संख्ये वज्रेणेव पुरंदरः ॥ १७ ॥

---

५-७ ] ति० टी०—एतान्निहन्तुमिच्छामि प्रथमतः स्वसेनारक्षणार्थम् ततः परबलं हनिष्यामीति शेषः तदेवाह—एतैरिति ॥ ५ ॥ ७ ॥

रा० टी०—एते इति । द्रुमशैलप्रहरणाः ये एते वानराः मम सम्मुखे तिष्ठन्ति यैरेतैः रक्षसां बलं प्रमथितं तान् एतान् निहन्तुमिच्छामि श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—एत इति । प्रमुखे अग्रे ॥ ४ ॥ ५ ॥

रा० टी०—तत इति । अकम्पनः शरजालैरुपलक्षितस्सन् हरीनभ्यपतत् ॥ ६ ॥

रा० टी०—नेति । अकम्पनशरैर्भग्नाः वानराः स्थातुं न शेकुः किं पुनर्योद्धुमत एव अभिदुद्रुवुः ॥ ७ ॥

गो० टी०—तत इति । प्रजवनाश्वेन वेगवदश्वेन ॥६॥ ७ ॥

८ ] ति० टी०—ज्ञातीन्कुमुदनलादीनुपतस्थे । स्वस्थानादिति शेषः ॥ ८ ॥

रा० टी०—तानिति । अकम्पनशराः अनुगाः येषामत एव मृत्युवशमापन्नान् ज्ञातीन् समीक्ष्य हनुमानुपतस्थे ॥ ८ ॥

गो० टी०—तानिति । उपतस्थे अकम्पनसमीपमाजगाम ॥ ८-११ ॥

९ ] ति० टी०—ते प्लवगर्षभाः कुमुदादयः ॥ ९ ॥

रा० टी०—तमिति । तं हनूमन्तं दृष्ट्वा सहिताः ऐकमत्यं प्राप्ताः सर्वे प्लवगर्षभाः समेत्य प्राप्य पर्यवारयन् ॥ ९ ॥

१०-१४ ] ति० टी०—ते बलवन्तो बभूवुः, यतो बलवन्तमुपाश्रिताः ॥ १० ॥ १४ ॥

रा० टी०—व्यवस्थितमिति । बलवन्तं हनूमन्तमुपाश्रिता प्लवगर्षभाः बलवन्तो बभूवुः ॥ १० ॥

रा० टी०—अकम्पन इति । अकम्पनः अवस्थितं शैलाभं हनूमन्तं धाराभिर्महेन्द्र इव शरैरभिववर्ष ॥ ११ ॥

रा० टी०—अचिंतयित्वेति । कपिः शरीरे पतितान् बाणौघान् अचिंतयित्वा अपरिगणय्य अकम्पनवधार्थाय मनो दध्रे ॥ १२ ॥

रा० टी०—स इति । हनूमान् प्रहस्य तद्रक्षोऽभिदुद्राव॥१३॥

गो० टी०—अचिन्तयित्वेति । अकम्पनवधार्थाय अकम्पनवधरूपप्रयोजनाय ॥ १२ ॥ १३ ॥

रा० टी०—तस्येति । तेजसा दीप्यमानस्य तस्य हनूमतो रूपं दीप्तस्य विभावसोरिव दुर्धर्षं बभूव ॥ १४ ॥

गो० टी०—तस्येति । तस्य हनुमतः ॥ १४ ॥

१५-१६ ] ति० टी०—अप्रहरणमायुधहीनम् ॥१५॥१६॥

रा० टी०—आत्मानमिति । क्रोधसमन्वितो हरिपुङ्गव आत्मानमप्रहरणमायुधरहितं ज्ञात्वा शैलमुत्पाटयामास ॥१५॥

गो० टी०—आत्मानमिति । अप्रहरणम् अनायुधम् ॥१५॥

रा० टी०—गृहीत्वेति । स हनूमान् एकेन पाणिना महाशैलं गृहीत्वा महानादं विनद्य भ्रामयामास ॥ १६ ॥

गो० टी०—तमिति । महानादं विनद्य महानादं कृत्वेत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—पुरा हीति प्रसिद्धौ ॥ १७ ॥

रा० टी०—तत इति । पुरन्दरो वज्रेण नमुचिमिव अकम्पनमभिदुद्राव हनूमानिति शेषः ॥ १७ ॥

---

१ दृश्यते राक्षसमिति गो. पाठः । २ जविनेति गो. पाठः । ३ अभ्यद्रवत्क्रोधादिति गो. पाठः । ४ वीति गो. पाठः । ५ वशंगतानिति. गो. पाठः । ६ प्लवगयूथपा इति गो. पाठः । ७ संहृष्टा इति गो. पाठः । ८ अवेति गो. पाठः । ९ हरियूथपा इति गो. पाठः । १० समिति गो. पाठः । ११ शितानिति गो. पाठः । १२ प्रसह्येति गो. पाठः । १३ अभीति गो. पाठः । १४ तु रहितो गो. पाठः । १५ सं गृहीत्वा महाशैलमिति गो.पाठः ।

अकम्पनस्तु तद्दृष्ट्वा गिरिशृङ्गं समुद्यतम् । दूरादेव महाबाणैरर्धचन्द्रैरदारयत् ॥ १८ ॥
तं पर्वताग्रमाकाशे रक्षोबाणविदारितम् । विकीर्णं पतितं दृष्ट्वा हनूमान्क्रोधमूर्च्छितः ॥ १९ ॥
सोऽश्वकर्णं समासाद्य रोषदर्पान्वितो हरिः । तूर्णमुत्पाटयामास महागिरिमिवोच्छ्रितम् ॥ २० ॥
तं गृहीत्वा महास्कन्धं सोऽश्वकर्णं महाद्युतिः । प्रगृह्य परया प्रीत्या भ्रामयामास भूतले ॥ २१ ॥
प्रधावन्नुरुवेगेन बभञ्ज तरसा द्रुमान् । हनूमान्परमक्रुद्धश्चरणैर्दारयन्महीम् ॥ २२ ॥
गजांश्च सगजारोहान्सरथान्रथिनस्तथा । जघान हनुमान्भीमान्राक्षसांश्च पदातिगान् ॥ २३ ॥
तमन्तकमिव क्रुद्धं सद्रुमं प्राणहारिणम् । हनूमन्तमभिप्रेक्ष्य राक्षसा विप्रदुद्रुवुः ॥ २४ ॥
तमापतन्तं संक्रुद्धं राक्षसानां भयावहम् । ददर्शाकम्पनो वीरश्चुक्षोभ च ननाद च ॥ २५ ॥
स चतुर्दशभिर्बाणैर्निशितैर्देहदारणैः । निर्बिभेद महावीर्यं हनूमन्तमकम्पनः ॥ २६ ॥
स तथा विप्रकीर्णस्तु नाराचैः शितशक्तिभिः । हनूमान्ददृशे वीरः प्ररूढ इव सानुमान् ॥ २७ ॥
विरराज महावीर्यो महाकायो महाबलः । पुष्पिताशोकसंकाशो विधूम इव पावकः ॥ २८ ॥
ततोऽन्यं वृक्षमुत्पाट्य कृत्वा वेगमनुत्तमम् । शिरस्याभिजघानाशु राक्षसेन्द्रमकम्पनम् ॥ २९ ॥
स वृक्षेण हतस्तेन सक्रोधेन महात्मना । राक्षसो वानरेन्द्रेण पपात च ममार च ॥ ३० ॥
तं दृष्ट्वा निहतं भूमौ राक्षसेन्द्रमकम्पनम् । व्यथिता राक्षसाः सर्वे क्षितिकम्प इव द्रुमाः ॥ ३१ ॥
त्यक्तप्रहरणाः सर्वे राक्षसास्ते पराजिताः । लङ्कामभिययुस्त्रासाद्वानरैस्तैरभिद्रुताः ॥ ३२ ॥

गो० टी०—तत इति । तत्र सः शैलेनेत्यध्याहार्यम् । स हनुमान् अकम्पनं पुरन्दरो नमुचिं यथा तथा शैलेन वज्रेणेवाभिदुद्राव ॥ १७ ॥ १८ ॥

१८ ] ति० टी०—तद्दृष्ट्वा हनूमन्मुक्तं शैलशृङ्गम् ॥ १८ ॥

रा० टी०—अकम्पन इति । अकम्पनस्तत् हनुमता प्रक्षिप्तं गिरिशृङ्गं दूरादेव दृष्ट्वा बाणैरदारयत् ॥ १८ ॥

१९–२१ ] ति० टी०—तम् तदित्यर्थः क्रोधमूर्च्छितः अभूदिति शेषः ॥ १९ ॥ २१ ॥

रा० टी०—तमिति । आकाशे एव रक्षोबाणविदारितमत एव विकीर्णमत एव पतितं पर्वताग्रं हनूमान् दृष्ट्वा क्रोधमूर्छितोऽभवदिति शेषः ॥ १९ ॥

रा० टी०—स इति । स हनूमान् महागिरिमिवोच्छ्रितमुच्छ्रतमश्वकर्णं तदभिधतरुमासाद्य तूर्णमुत्पाटयामास ॥ २० ॥

रा० टी०—तमिति । स हनुमान् अश्वकर्णं गृहीत्वा प्रहस्य भ्रामयामास ॥ २१ ॥

गो० टी०—तदिति । क्रोधमूर्छितः अभूदिति शेषः १९-२१

२२–२६ ] ति० टी०—चारणैश्चरणन्यासैः ॥ २२ ॥ २६ ॥

रा० टी०—प्रधावन्निति । उरुवेगेन प्रधावन् अत एव महीं दारयन् हनूमान् द्रुमान् बभञ्ज ॥ २२ ॥

गो० टी०—प्रधावन्निति । चरणैः चरणन्यासैः । दारयत् अदारयत् ॥ २२ ॥

रा० टी०—गजानिति । हनूमान् गजादीन् पदातिगान् पदातित्वेन गच्छन्ति तांश्च जघान किञ्च अतिगान् शीघ्रगमनकर्तॄन् गजादीन् पदा एकचरणेन जघान ॥ २३ ॥

रा० टी०—तमिति । अन्तकमिव प्राणहारिणं सद्रुमं हनूमन्तमभिप्रेक्ष्य राक्षसाः विप्रदुद्रुवुः ॥ २४ ॥

रा० टी०—तमिति । राक्षसानां भयावहमापतन्तं हनूमन्तमकम्पनो ददर्श चुक्षोभ च ननाद च ॥ २५ ॥

रा० टी०—स इति । सोऽकम्पनो देहदारणैर्देहदारणशीलैश्चतुर्दशभिर्बाणैर्हनूमन्तं निर्बिभेद ॥ २६ ॥

गो० टी०—गजांश्चेति । पदातितया गच्छन्तीति पदातिगाः तान् ॥ २३–२६ ॥

२७–३० ] ति० टी०—प्ररूढः सानुमानिव बहुशराचितशरीरत्वात्प्ररूढबहुवृक्षो गिरिरिव जनैर्ददृश इत्यर्थः ॥ २७ ॥ ३० ॥

रा० टी०—स इति । नाराचैः शितशक्तिभिश्च विप्रकीर्णो हनूमान् प्ररूढः अनेकतरुभिर्विशिष्टः सानुमान् पर्वत इव ददृशे २७

रा० टी०—विरराजेति । पुष्पिताशोकसंकाशो हनूमान् विधूमः पावक इव विरराज ॥ २८ ॥

रा० टी०—तत इति । ततोऽनन्तरमन्यं वृक्षमुत्पाट्य अकम्पनं शिरसि अभिजघान ॥ २९ ॥

गो० टी०—स इति । प्ररूढः प्ररूढवृक्षः ॥ २७–२९ ॥

गो० टी०—स इति । वानरेन्द्रेण कर्त्रा । तेन वृक्षेण हत इत्यन्वयः ॥ ३० ॥

३१–३२] ति० टी०—क्षितिकम्पे भूकम्पकाले ॥ ३१ ॥ ३२ ॥

१ व्यदारयदिति गो. पाठः । २ तदिति गो. पाठः । ३ विशीर्णमिति गो. पाठः । ४ प्रहस्येति गो. रा. पाठः । ५ संयुग इति गो. पाठः । ६ प्रभञ्जन्निति गो. पाठः । ७ क्षितिमिति गो. पाठः । ८ धीमानिति गो. पाठः । ९ समर इति गो. पाठः । १० चुक्रोधेति गो. पाठः । ११ शितैर्देहविदारणैरिति गो. पाठः । १२ हनूमन्तं महावीर्यमिति गो. पाठः । १३ स तदा प्रति विद्धस्तु बह्वीभिः शरवृष्टिभिरिति गो. पाठः । १४ महाकायो महावीर्यो महामना इति गो. पाठः । १५ त्रस्ता इति गो. पाठः ।

ते मुक्तकेशाः संभ्रान्ता भग्नमानाः पराजिताः । भयाच्छ्रमजलैरङ्गैः प्रस्रवद्भिर्विदुद्रुवुः ॥ ३३ ॥
अन्योन्यं ते प्रमथ्नन्तो विविशुर्नगरं भयात् । पृष्ठतस्ते तु संमूढाः प्रेक्षमाणा मुहुर्मुहुः ॥ ३४ ॥
तेषु लङ्कां प्रविष्टेषु राक्षसेषु महाबलाः । समेत्य हरयः सर्वे हनूमन्तमपूजयन् ॥ ३५ ॥
सोऽपि प्रहृष्टस्तान्सर्वान्हरीन्संप्रत्यपूजयत् । हनूमान्सत्त्वसंपन्नो यथार्हमनुकूलतः ॥ ३६ ॥
विनेदुश्च यथाप्राणं हरयो जितकाशिनः । चकृषुश्च पुनस्तत्र सप्राणानेव राक्षसान् ॥ ३७ ॥

स वीरशोभामभजन्महाकपिः समेत्य रक्षांसि निहत्य मारुतिः ।
महासुरं भीममित्रनाशनं विष्णुर्यथैवोरुबलं चमूमुखे ॥ ॥ ३८ ॥
अपूजयन्देवगणास्तदा कपिं स्वयं च रामोतिबलश्च लक्ष्मणः ।
तथैव सुग्रीवमुखाः प्लवंगमा विभीषणश्चैव महाबलस्तदा ॥ ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ।

अकम्पनवधश्रवणकुपितः पौलस्त्यो मन्त्रिभिः संमन्त्र्य सेनापतिं प्रहस्तं बहुमानैः संपूज्य समराङ्गणं गन्तुं समादिशति ।

अकम्पनवधं श्रुत्वा क्रुद्धो वै राक्षसेश्वरः । किंचिद्दीनमुखश्चापि सचिवांस्तानुदैक्षत ॥ १ ॥

---

रा० टी०—व्यथिता इति । क्षितिकम्पे सर्वे द्रुमा इव सर्वे राक्षसाः व्यथिताः अत एव राक्षसाः पराजिता बभूवुरिति शेषः ॥ ३० ॥

रा० टी०—लङ्कामिति । वानरैः पराजिताः अत एव अभिद्रुताः अत एव मुक्तकेशाः अत एव भग्नमानाः राक्षसाः लङ्कामभिययुः ॥ ३१ ॥

गो० टी०—तमिति । क्षितिकम्पे भूकम्पे ॥ ३१–३९ ॥

३३ ] ति० टी०—श्रमजलैः स्वेदजलैः ॥ ३३ ॥

रा० टी०—स्रवदिति । स्रवन्ति श्रमजलानि येभ्यः तैरङ्गैः उपलक्षिताः श्वसन्तो राक्षसाः विप्रदुद्रुवुः भयात् मुहुर्मुहुः पृष्ठतः प्रेक्षमाणाः अन्योन्यं प्रमथ्नन्तश्च ते नगरं विविशुश्च सार्धश्लोक एकान्वयी ॥ ३२ ॥

३४–३५] ति० टी०—भयादन्योन्यं प्रमथ्नन्तो द्वारदेशे संमर्दं कुर्वाणाः ॥ ३४ ॥ ३५ ॥

रा० टी०—तेष्विति । राक्षसेषु लङ्कां प्रविष्टेषु सत्सु हरयस्समेत्य हनूमन्तमपूजयन् सत्वसम्पन्नः स हनूमानपि प्रहृष्टान् हरीन् यथार्हं संप्रत्यपूजयत् अर्धचतुष्टयमेकान्वयि ॥३३॥३४॥

३६ ] ति० टी०—सोऽपि यथार्हमनुकूलतोऽनुकूलदर्शनवचनालिङ्गनैः संप्रत्यपूजयत् ॥ ३६ ॥

गो० टी०—सोपीति । प्रत्यभ्यपूजयत् भवत्साहाय्येनैव मया जितमित्येवमिति भावः ॥ ३६–३९ ॥

चतुर्थ्यामकम्पनवधः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

३७ ] ति० टी०—यथाप्राणं यावद्बलं सप्राणानेव चकृषुः प्राणनाशार्थमिति शेषः ३७ ॥

रा० टी०—विनेदुरिति । जितकाशिनः विजितरिपुप्रकाशाः हरयः यथा प्राणं यावद्बलं विनेदुः स प्राणान् जीवतो राक्षसान् चुकुशुश्च ॥ ३९ ॥

३८ ] ति० टी०—यथा विष्णुरुरुबलं बलवन्तं महाबलं मधुकैटभादिरूपं हत्वा वीरशोभामभजत्तथैवेत्यर्थः ॥ ३८ ॥

रा० टी०—स इति । मारुतिः रक्षांसि समेत्य प्राप्य निहत्य च वीरशोभामभजत् तत्र दृष्टान्तः उरुबलं महासुरं मधुकैटभप्रभृतिं निहत्य अमित्रनाशनो विष्णुर्यथा ॥ ३६ ॥

३९ ] ति० टी०—रामादयोऽप्यपूजयन्नित्यनुकर्षः ॥३९॥

भाद्रशुक्लचतुर्थ्यामकम्पनवधः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

रा० टी०—अपूजयन्निति । तदा देवगणादयः कपिमपूजयन् तदैव रामप्रभृतयश्चापूजयन् ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१ ] ति० टी०—अथ प्रहस्तनिर्गमः—अकम्पनवधमिति ॥ १ ॥

रा० टी०—अकम्पनवधानन्तरकालिकं रावणवृत्तान्तमाह—अकम्पनेत्यादिभिः । अकम्पनवधं श्रुत्वा किञ्चिद्दीनमुखः क्रुद्धश्च राक्षसेश्वरः सचिवानुदैक्षत ॥ १ ॥

---

१ स्रवद्भिरिति गो. पाठः । २ श्वसन्तो विप्रदुद्रुवुरिति गो. रा. पाठः । ३ प्रममन्थुस्त इति गो. पाठः । ४ स्थिति गो. पाठः । ५ प्रहृष्ट इति गो. प्रहृष्टानिति रा. पाठः । ६ प्रवमीति गो. पाठः । ७ चुक्रुशुरिति रा. पाठः । ८ अपीति गो. पाठः । ९ नाशन इति रा.पाठः । १० तथेति गो.पाठः

स तु ध्यात्वा मुहूर्तं तु मन्त्रिभिः संविचार्य च । ततस्तु रावणः पूर्वदिवसे राक्षसाधिपः ॥
पुरीं परिययौ लङ्कां सर्वान्गुल्मानवेक्षितुम् । ॥ २ ॥
तां राक्षसगणैर्गुप्तां गुल्मैर्बहुभिरावृताम् । ददर्श नगरीं राजा पताकाध्वजमालिनीम् ॥ ३ ॥
रुद्धां तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः । उवाचात्महितं काले प्रहस्तं युद्धकोविदम् ॥ ४ ॥
पुरस्योपनिविष्टस्य सहसा पीडितस्य हि । नान्यं युद्धात्प्रपश्यामि मोक्षं युद्धविशारदाः ॥ ५ ॥
अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम । इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥ ६ ॥
सत्त्वं बलमतः शीघ्रमादाय परिगृह्य च । विजयायाभिनिर्याहि यत्र सर्वे वनौकसः ॥ ७ ॥
निर्याणादेव तूर्णं च चलिता हरिवाहिनी । नर्दतां राक्षसेन्द्राणां श्रुत्वा नादं द्रविष्यति ॥ ८ ॥
चपला ह्यविनाताश्च चलचित्ताश्च वानराः । न सहिष्यन्ति ते नादं सिंहनादमिव द्विपाः ॥ ९ ॥
विद्रुते च बले तस्मिन्रामः सौमित्रिणा सह । अवशस्ते निरालम्बः प्रहस्तवशमेष्यति ॥ १० ॥
आपत्संशयिता श्रेयो नात्र निःसंशयीकृता । प्रतिलोमानुलोमं वा यत्तु नो मन्यसे हितम् ॥ ११ ॥
रावणेनैवमुक्तस्तु प्रहस्तो वाहिनीपतिः । राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना ॥ १२ ॥

गो० टी०—अथ युद्धाय प्रहस्तनिर्याणं सप्तपञ्चाशे—अकम्पनवधमित्यादि ॥ १ ॥

२-४] ति० टी०-पूर्वदिवसे पूर्वाह्णे सर्वान्गुल्मान्सेनाव्यूहविशेषान् ॥ २ ॥ ४ ॥

रा० टी०—स इति । पूर्वदिवसे एव मुहूर्तं ध्यात्वा मनसा सञ्चिन्त्य मन्त्रिभिस्संविचार्य च रावणस्सर्वान् गुल्मान् अवेक्षितुं लङ्कां पुरीं परिययौ परितो जगाम सार्धश्लोक एकान्वयी॥२॥

रा० टी०—तामिति । बहुभिर्गुल्मैरावृतां तां लङ्कां राजा ददर्श ॥ ३ ॥

गो० टी०—स त्वित्यादिसार्धश्लोक एकान्वयः । तत स रावणः पुरीं परिययौ । पूर्वदिवसे दिवसस्य पूर्वभागे पूर्वाह्ण इत्यर्थः । गुल्मान् सेनाव्यूहान् ॥ २ ॥ ३ ॥

रा० टी०—रुद्धामिति । रावणो नगरीं रुद्धां दृष्ट्वा काले आपत्कालेपि आत्महितं प्रहस्तमुवाच ॥ ४ ॥

गो० टी०—रुद्धामिति । काले निदेशार्हसमये ॥ ४ ॥

५-६ ] ति० टी०—पुरस्योपनिविष्टस्य अतिसमीपनिविष्टशत्रुबलस्येत्यर्थः अतएव सहसा बलात्कारेण पीडितस्य अन्यद्युद्धादन्यकर्तृकयुद्धादेतोर्मोक्षमुपरोधमोक्षं न प्रपश्यामि॥५॥६॥

रा० टी०—तदाकारमाह—पुरस्येत्यादिभिः । उपनिविष्टस्य रिपुभिः प्रविष्टस्य अत एव पीडितस्य पुरस्य लङ्कायाः मोक्षं मोक्षोपायं युद्धादन्यं न पश्यामि ॥ ५ ॥

गो० टी०—पुरस्येति । उप समीपे निविष्टं परसेनानिवेशो यस्य तस्य उपरुद्धस्येत्यर्थः । अत एव वाशब्दश्चार्थे । पीडितस्य च मोक्षं मोक्षोपायम् ॥ ५ ॥

रा० टी०—अहमिति । ईदृशं भारं वानरसेनाकृतपीडारूपभरं मदादय एव वहेयुः ॥ ६ ॥

गो० टी०—अहमिति । वहेयुरिति शकि लिङ् ॥ ६ ॥

७ ] ति० टी०—अतोऽस्माद्गुल्मात् ॥ ७ ॥

रा० टी०—स इति । बलमादाय रथमास्थितस्त्वं यत्र वनौकसः तत्र विजयाय अभिनिर्याहि ॥ ७ ॥

गो० टी०—स इति । शीघ्रमादाय परिगृह्य स्वाधीनं कृत्वा यत्र वनौकसो वर्तन्ते तत्र इतो निर्याहीत्यन्वयः ॥ ७ ॥

८-९ ] ति० टी०—द्रविष्यति पलायिष्यते ॥ ८ ॥ ९ ॥

रा० टी०—निर्याणादिति । निर्याणात् भवतां निर्गमादेव चलिता चञ्चलचित्ता हरिवाहिनी राक्षसेन्द्राणां नादं श्रुत्वा द्रविष्यति पलायिष्यते ॥ ८ ॥

रा० टी०—पलायने हेतुमाह—चपला इति । चपलत्वादिविशिष्टाः वानराः ते नादं द्विपाः सिंहनादमिव न सहिष्यन्ति॥९॥

गो० टी०—निर्याणादिति । चपला धैर्यरहिता ॥८॥९॥

१० ] ति० टी०—अवशो वशं प्रभुत्वं तद्रहितः 'वशमिच्छाप्रभुत्वयोः' इति विश्वः अत एव निरालम्बः ॥ १० ॥

रा० टी०—विद्रुत इति । तस्मिन् बले विद्रुते सति अवशोपि रामः प्रहस्तवशमेष्यति ॥ १० ॥

गो० टी०—विद्रुत इति । अवशः प्रभुत्वरहितः वशमिच्छाप्रभुत्वयोरिति विश्वः । हे प्रहस्त ते तव वशमेष्यतीत्यन्वयः ॥ १० ॥

११-१२ ] ति० टी०—ननु युद्धे मज्जीवनेऽपि संदेहात्कथं निरालम्बो वशमेष्यतीत्युच्यते तत्राह—आपदिति । युद्धे आपन्मृतिः संशयिता संदेहविषया श्रेयो विजयस्तु तव न संशयितो न संदेहविषयः तवातिबलत्वाद्बहुशो दृष्टविजयत्वाच्च इन्द्रजिद्वच्छ्रेयःप्राप्तिरेवोत्कटकोटिका किञ्च श्रेयो न संदिग्धम् युद्धे जीवने मरणे च श्रेयः तस्मात् जीवने राज्यम्,

१ लङ्कामिति गो. पाठः । २ अमर्षन्त इति गो. पाठः । ३ वेति गो. पाठः । ४ अन्यमिति गो. रा. पाठः । ५ निशारदेति गो. रा. पाठः । ६ ते नूनमिति गो. पाठः । ७ चपलेति गो. पाठः । ८ ते इति गो. पाठः । ९ यदेति गो. पाठः ।

राजन्मन्त्रितपूर्वं नः कुशलैः सह मन्त्रिभिः । विवादश्चापि नो वृत्तः समवेक्ष्य परस्परम् ॥ १३ ॥
प्रदानेन तु सीतायाः श्रेयो व्यवसितं मया । अप्रदाने पुनर्युद्धं दृष्टमेवं तथैव नः ॥ १४ ॥
सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया । सान्त्वैश्च विविधैः काले किं न कुर्यां हितं तव ॥ १५ ॥
नहि मे जीवितं रक्ष्यं पुत्रदारधनानि च । त्वं पश्य मां जुहूषन्तं त्वदर्थे जीवितं युधि ॥ १६ ॥

मृतावुत्तमलोकः अतोऽत्र युद्धे प्रवृत्तिरेव निःसंशयीकृता 'यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥' इत्यादि शास्त्रादिति भावः मम त्वयं युद्धमेव हितं प्रतिभाति प्रकारान्तरमस्ति चेद्ब्रूहीत्याह—प्रतिलोमेत्यादि । मनोऽनुकूलं वा भवतु प्रतिकूलं वा यत्तु नो हितं मन्यसे तद्वदेति शेषः ॥ ११ ॥ १२ ॥

रा० टी०—ननु जयपराजययोः परमात्मायत्तत्वात् कथं वशमेष्यतीत्युच्यते इत्यत आह—आपदिति । यद्यपि आपत् युद्धे मृतिः संशयिता संशयविषयीभूता तथापि श्रेयः तव विजयो न संशयितं भविष्यत्येवेत्यर्थः लिङ्गविपरिणामे नाप्यन्वयः एतेन प्रहस्तस्यातिबलत्वदृष्टविजयत्वादयो हेतव सूचितम् अत एव निःसंशयीकृता युद्धप्रवृत्तिरिति शेषः किञ्च आपत् न निःसंशयीकृता कैश्चिदपीति शेषः अतः संशयिता तथापि श्रेयः कल्याणं न संशयितं विजये ऐहिकफलप्राप्तिः मरणे आमुष्मिकफलप्राप्तिरिति कल्याणं निश्चितमेवेत्यर्थः स्वसम्मतिं निवेश्य तदभिप्रायं जिज्ञासुराह प्रतिलोमं मदुक्तात्प्रतिकूलमनुलोममनुकूलं वा यत् हितं मन्यसे तद्वदेति शेषः ॥ ११ ॥

रा० टी०—रावणेनेति । रावणेनैवमुक्तः प्रहस्तः राक्षसेन्द्रमुशना असुरेन्द्रमिवोवाच ॥ १२ ॥

गो० टी०—ननु युद्धे सत्यात्महानेरपि संभवात्तदकरणमेव श्रेय इत्याशङ्क्य तथात्वे शत्रुकृताया हानेर्निश्चितत्वात् युद्धकरणे तस्याः संदेहात् । यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः, इत्युक्तरीत्या इदानीं युद्धमेव श्रेय इत्याह—आपदिति । संशयिता वितर्किता । आपत् मृतिः श्रेयः । युद्धे मृतिः श्रेयस्करीत्यर्थः । जयापजययोर्व्यवस्थितत्वेन पाक्षिकजयस्यापि संभवादिति भावः । पक्षान्तरं प्रतिक्षिपति—नत्विति । निस्संशयीकृता निश्चिता मृतिस्तु युद्धं विना शत्रुभिर्मरणं तु न श्रेयः एतन्मम मतम् । त्वन्मतं तु किमित्याह—प्रतिलोमेति । प्रतिलोमं मदुक्तप्रकारविपरीतप्रकारम् । अनुलोमं वा नोऽस्माकं यद्धितं मन्यसे तद्वदेति शेषः । वेति पक्षान्तरे । अहं तदेव श्रेयो मन्ये त्वमन्यथा यदि मन्यसे तद्वद । तदेवास्माकं हितमित्यर्थः ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—कुशलैर्मन्त्रिभिर्विभीषणमाल्यवदादिभिर्यदा मन्त्रितं तदा नः परस्परं परस्परमतं समवेक्ष्य विवादोऽनैकमत्यं वृत्तम् ॥ १३ ॥

रा० टी०—सदाकारमाह—राजन्नित्यादिभिः । समवेक्ष्य विचार्य मन्त्रिभिर्माल्यवदादिभिस्सह नोऽस्माकं मन्त्रितपूर्वं पूर्वं मंत्रितं नोऽस्माकं परस्परं विवादश्च वृत्तः प्रवृत्तः एतेन कर्तव्ये सर्वसम्मतिस्तदानीं न जातेति सूचितम् ॥ १३ ॥

गो० टी०—मन्त्रसमये मया यथा निर्धारितं तत्तथा प्रवृत्तमित्याह—राजन्नित्यादिना । कुशलैर्मन्त्रिभिः विभीषणादिभिः सह नः अस्माभिः इदं वक्ष्यमाणं मन्त्रितपूर्वम् । तर्हि मन्त्रितत्वे तथा किमिति नानुष्ठितम् तत्राह—विवाद इति । परस्परं समवेक्ष्य बहुमतितया आलोच्य । नः अस्माकं विवादश्चापि वृत्तः । येन विभीषणो निरगच्छदिति भावः ॥ १३ ॥

१४] ति० टी०—सीताप्रदानेनैव श्रेय इति च तदा व्यवसितं निश्चितम् अप्रदाने च युद्धं दृष्टं तत्तथैव न इदानीं प्राप्तम् ॥१४॥

रा० टी०—स्वसम्मतिमाह—प्रदानेनेति । सीतायाः प्रदानेनैव श्रेयः सर्व कल्याणं इति मया व्यवसितं निश्चितम् अप्रदानेपु तु युद्धमेव दृष्टं ज्ञातम् ॥ १४ ॥

गो० टी०—मन्त्रितमर्थमाह—प्रदानेन त्विति । सीतायाः प्रदानेन तु श्रेयः । अप्रदाने तु युद्धमिति च मम व्यवसितमित्यर्थः । सर्वमरणं युद्धशब्देनोपचर्यते । यथैव व्यवसितं तथैव नः अस्माभिः दृष्टं च ॥ १४ ॥

१५ ] ति० टी०—अतःपरं तु यत्प्राप्तमस्माकं युद्धं तदेव मयानुष्ठेयमित्याह—सोऽहमिति । तव प्रियं न कुर्यां किम्, अपि तु कुर्यामेव ॥ १५ ॥

रा० टी०—स इति । त्वया दानादिभिः सततं पूजितोऽहं तव हितं किं न कुर्याम् कुर्यामेवेत्यर्थः ॥ १५ ॥

गो० टी०—एवं स्वमतमुक्त्वा संप्रति त्वन्मतानुसारेण युद्धमेव करिष्यामीत्याह—सोहमित्यादिना । दानैः भूषणादिप्रदानैः मानैः त्वदधीनं जीवितमित्यादिप्रियभाषणैः पूजितः उत्कर्षमापादितः । काले आपत्काले । किन्न कुर्यां जीवितत्यागमपि कुर्यामित्यर्थः ॥ १५ ॥

१६ ] ति० टी०—यत्र जीवितं जुहूषन्तं होतुमिच्छन्तम् ॥ १६ ॥

रा० टी०—नहीति । मे जीवितं न रक्ष्यं पुत्रादीनि च रक्ष्याणि अतो युधि जीवितं स्वजीवनं जुहूषन्तं होतुमिच्छन्तं त्यक्ष्यन्तमित्यर्थः मां पश्य ॥ १६ ॥

गो० टी०—उक्तमेव विशदयति—न हीति । जुहूषन्तं होतुमिच्छन्तम् जुहोतेः सन् प्रत्ययः अनेन जीवितस्य हविष्ट्वं युद्धस्याग्निरूपत्वं च गम्यते । तेन चात्महविः प्रदानस्य महाफलत्वं युद्धसङ्कृतिमात्रेण स्वविनाशश्च द्योत्यते । गतानुगति-

१ पतदिति गो. पा. । २ प्रियमिति गो. पा. । ३ वेति गो. पा. । ४ त्वदर्थमिति गो. पा. । ५ सूचिता इति युक्तमथवा इति सूचितमितिवा ।—

एवमुक्त्वा तु भर्तारं रावणं वाहिनीपतिः । उवाचेदं बलाध्यक्षान्प्रहस्तः पुरतः स्थितान् ॥ १७ ॥
समानयत मे शीघ्रं राक्षसानां महाबलम्[1] । मद्बाणानां[2] तु वेगेन हतानां तु रणाजिरे ॥ १८ ॥
अद्य तृप्यन्तु मांसादाः पक्षिणः काननौकसः[3] । तस्य[4] तद्वचनं श्रुत्वा बलाध्यक्षा महाबलाः[5] ॥ १९ ॥
बलमुद्योजयामासुस्तस्मिन्राक्षसमन्दिरे । सा बभूव मुहूर्तेन भीमैर्नानाविधायुधैः[6] ॥ २० ॥
लङ्का राक्षसवीरैस्तैर्गजैरिव समाकुला । हुताशनं तर्पयतां ब्राह्मणांश्च नमस्यताम् ॥ २१ ॥
आज्यगन्धप्रतिवहः सुरभिर्मारुतो ववौ । स्रजश्च विविधाकारा जगृहुस्त्वभिमन्त्रिताः ॥ २२ ॥
सङ्ग्रामसज्जाः संहृष्टा धारयन्राक्षसास्तदा । सधनुष्काः कवचिनो वेगादुत्सृज्य[7] राक्षसाः ॥ २३ ॥
रावणं प्रेक्ष्य राजानं प्रहस्तं पर्यवारयन् । अथामन्त्र्य तु[8] राजानं भेरीमाहत्य भैरवाम् ॥ २४ ॥
आरुरोह रथं युक्तः प्रहस्तः सज्जकल्पितम् । हयैर्महाजवैर्युक्तं सम्यक्सूतं[10] सुसंयतम् ॥ २५ ॥
महाजलदनिर्घोषं साक्षाच्चन्द्रार्कभास्वरम् । उरगध्वजदुर्धर्षं सुवरूथं स्वपस्करम्[11] ॥ २६ ॥
सुवर्णजालसंयुक्तं प्रहसन्तमिव श्रिया[9] । ततस्तं रथमास्थाय रावणार्पितशासनः ॥ २७ ॥

कास्तु जुहूषन्तं त्यक्तुमिच्छन्तमित्यर्थः । जुहोतेर्दानार्थत्वादित्याहुः ॥ १६ ॥ १८ ॥

१७-२२ ] ति० टी०—बलाध्यक्षान्सर्वबलाध्यक्षेण स्वेन बलनियोजनाधिकृतपुरुषानित्यर्थः ॥ १७ ॥ २२ ॥

रा० टी०—एवमिति । प्रहस्तः रावणमेव मुक्त्वा पुरतः स्थितान् बलाध्यक्षान् उवाच ॥ १७ ॥

रा० टी०—तदाकारमाह—समिति । मे राक्षसानां महाबलं समानयत अहं पृथक् ॥ १८ ॥

रा० टी०—मदिति । मद्बाणानां वेगेन हतानां हतैः तन्मांसैरित्यर्थः मांसादा गृध्रादयः अद्य तृप्यन्तु ॥ १९ ॥

रा० टी०—तस्येति । तस्य प्रहस्तस्य वचनं श्रुत्वा बलाध्यक्षाः राक्षसमन्दिरे बलमुद्योजयामासुः ॥ २० ॥

रा० टी०—सेति । गजैरिव राक्षसवीरैः लङ्का समाकुला बभूव ॥ २१ ॥

गो० टी०—मद्बाणेति । हतानां काननौकसां तृप्यन्त्वित्यन्वयः । " पूरणगुण० " इत्यादिना समासप्रतिषेधेन सुहितार्थयोगे ज्ञापिता षष्ठी ॥ १९ ॥ २१ ॥

रा० टी०—हुताशनमिति । हुताशनं तर्पयतां ब्रह्मणान् नमस्यतां च सतां आज्यगन्धप्रतिवहः अत एव सुरभिर्मारुतो ववौ ॥ २२ ॥

गो० टी०—हुताशनमिति । हुताशनं तर्पयताम् अग्नौ बहुधा शान्तिहोमानाचरताम् ब्राह्मणांश्च नमस्यतां गन्धपुष्पादिभिरर्चयताम् सम्बन्धी आज्यगन्धप्रतिवहः ब्राह्मणार्चनकुसुमादिना सुरभिर्मारुतो ववौ ॥ २२ ॥

रा० टी०—स्रज इति । संग्रामाय सज्जाः सन्नद्धाः राक्षसाः अभिमंत्रिताः स्रजः जगृहुः धारयन् अधारयंश्च ॥ २३ ॥

गो० टी०—स्रजश्चेति । संग्रामसज्जाः संग्रामायोद्युक्ताः । राक्षसाः अभिमन्त्रिताः विजयमन्त्रेणाभिमन्त्रिताः स्रजः जगृहुः धारयन् अधारयंश्च ॥ २३ ॥

२३-२४ ] ति० टी०—सङ्ग्रामसज्जाः सङ्ग्रामाय संनद्धाः धारयन्नधारयन् अभिमन्त्रितस्रज इत्यनुकर्षः उत्सृज्य वाहनानीति शेषः ॥ २३ ॥ २४ ॥

रा० टी०—सेति । राक्षसाः रावणं प्रेक्ष्य उत्सृज्य वाहनानि त्यक्त्वा प्रहस्तं पर्यवारयन् ॥ २४ ॥

गो० टी०—सधनुष्का इति । रावणं प्रेक्ष्य स्वामितया प्रधानं रावणमभिवन्द्येत्यर्थः ॥ २४ ॥

रा० टी०—अथेति । प्रहस्तः राजानमामन्त्र्य तदाज्ञां गृहीत्वा सज्जकल्पितं सर्वायुधयुक्तं रथमारुरोह ॥ २५ ॥

गो० टी०—अथेत्यादिश्लोकत्रयम् । सज्जकल्पितं सज्जसंयुक्तम् सर्वायुधादिसमवेतत्वेन कल्पितमित्यर्थः सुसंयतं नियमितम् साक्षाच्चन्द्रार्कभास्वरं चन्द्रार्कतुल्यं भास्वरं च साक्षात् प्रत्यक्षतुल्ययोरित्यमरः आह्लादकत्वेन चन्द्रसाम्यम् तेजसार्कसाम्यम् सुवरूथं शोभनरथगुप्तिकम् रथगुप्तिर्वरूथो नेत्यमरः । स्ववस्करं शोभनरथाङ्गम् । " अवस्करो रथाङ्गम् " इति निपातनात् सुडागमः । जालं गवाक्षम् प्रहसन्तमिव श्रिया स्वकान्त्या सर्वकान्तिमद्वस्तु परिहसन्तमिव स्थितम् ॥ २५-२७ ॥

२५ ] ति० टी०—सज्जकल्पितं सर्वायुधसमेततया कल्पितम् । सम्यक्समीचीनः सूतो यस्य तम् ॥ २५ ॥

२६-२७ ] ति० टी०—सुवरूथम् । वरूथो रथगुप्तिः । स्वपस्करं शोभनरथाङ्गम् ॥ २६ ॥ २७ ॥

रा० टी०—रथं वर्णयन्नाह—हयैरिति । हयैरश्वैर्युक्तं सम्यक् निपुणः सूतो यस्मिन् सुसंयुतं शोभनावयवैर्युतं महाज-

१ महद्बलमिति गो. पाठः । २ मद्बाणशतेति गो. पाठः । ३ काननौकसामिति गो. पाठः । ४ इत्युक्तास्तेप्रहस्तेनेति गो. पाठः । ५ कृतत्वरा इति गो. पाठः । ६ स्रिग्भिरिति गो. पाठः । ७ आप्लुत्येति गो. पाठः । ८ चेति गो. पाठः । ९ दिव्यमिति गो. पाठः । १० सूतसुसंयतमिति गो. पाठः । ११ स्ववस्करमिति गो. रा. पाठः

लङ्काया निर्ययौ तूर्णं बलेन महता वृतः । ततो दुन्दुभिनिर्घोषः पर्जन्यनिनदोपमः ॥
वादित्राणां च निनदः पूरयन्निव मेदिनीम् ॥ ॥ २८ ॥
शुश्रुवे शङ्खशब्दश्च प्रयाते वाहिनीपतौ । निनदन्तः स्वरान्घोरान्राक्षसा जग्मुरग्रतः ॥ २९ ॥
भीमरूपा महाकायाः प्रहस्तस्य पुरःसराः । नरान्तकः कुम्भहनुर्महानादः समुन्नतः ॥
प्रहस्तसचिवा ह्येते निर्ययुः परिवार्य तम् ॥ ॥ ३० ॥
व्यूढेनैव सुघोरेण पूर्वद्वारात्स निर्ययौ । गजयूथनिकाशेन बलेन महता वृतः ॥ ३१ ॥
सागरप्रतिमौघेन वृतस्तेन बलेन सः । प्रहस्तो निर्ययौ क्रुद्धः कालान्तकयमोपमः ॥ ३२ ॥
तस्य निर्याणघोषेण राक्षसानां च नर्दताम् । लङ्कायां सर्वभूतानि विनेदुर्विकृतैः स्वरैः ॥ ३३ ॥
व्यभ्रमाकाशमाविश्य मांसशोणितभोजनाः । मण्डलान्यपसव्यानि खगाश्चक्रू रथं प्रति ॥ ३४ ॥
वमन्ति पावकज्वालाः शिवा घोरा ववाशिरे । अन्तरिक्षात्पपातोल्का वायुश्च परुषं ववौ ॥ ३५ ॥
अन्योन्यमभिसंरब्धा ग्रहाश्च न चकाशिरे । मेघाश्च खरनिर्घोषा रथस्योपरि रक्षसः ॥ ३६ ॥

---

ध्वजवत् निर्घोषो यस्य चन्द्रार्काविव भास्वरं प्रकाशमानमुरगाकारध्वजेन दुर्धर्षं शोभनाः वरूथाः गुप्तयो यस्मिन् स्ववस्करं शोभनसामग्रीविशिष्टं श्रिया प्रहसन्तमिव रथमास्थाय रावणार्पितशासनः प्रहस्तः लङ्कायाः निर्ययौ श्लोकत्रयमेकान्वयि २६-२८

गो० टी०–ततस्तमिति । ततः आरोहणानन्तरम् ॥ २८ ॥

२८-३३ ] ति० टी०–दुन्दुभिनिर्घोष इत्यादेः शुश्रुवे इत्यनेनान्वयः ॥ २८ ॥ ३३ ॥

रा० टी०–तत इति । वाहिनीपतौ ततो लङ्कायाः प्रयाते सति मेदिनीं पूरयन्निव पर्जन्यनिनदोपमः दुन्दुभिनिर्घोषः वादित्राणां तूर्यादीनां निनदश्च शङ्खशब्दश्च शुश्रुवे सार्धश्लोक एकान्वयी ॥ २९ ॥

गो० टी०–तत इत्यादिसार्धश्लोक एकान्वयः पर्जन्यः मेघविशेषः ॥ २९ ॥

रा० टी०–निनदन्त इति । प्रहस्तस्य पुरस्सराः घोरान् स्वरान् निनदन्तस्सन्तो जग्मुः ॥ ३० ॥

रा० टी०–नरान्तक इति । नरान्तकप्रभृतयः प्रहस्तसचिवाः तं प्रहस्तं परिवार्य निर्ययुः ॥ ३१ ॥

गो० टी०–निनदन्त इति । पुरःसराः अग्रगाः ॥ ३० ॥ ३१ ॥

रा० टी०–व्यूढेनेति । व्यूढेन व्यूहरचनया रचितेन गजयूथैर्निकाशः प्रकाशो यस्य तेन बलेन वृतस्स प्रहस्तः पूर्वद्वारान्निर्ययौ ॥ ३२ ॥

गो० टी०–व्यूढेनेति । व्यूढेन सन्नद्धकङ्कटेन । व्यूढः सन्नद्धकङ्कट इत्यमरकोषे ॥ ३२ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह—सागरेति । सागरप्रतिमानां दुरवगाहत्वेन सागरसदृशानां राक्षसानां ओघः समूहो यस्मिन् तेन बलेन वृतः अत एव कालान्तकयमोपमः प्रहस्तो निर्ययौ तत्र कालः महाप्रलयः अन्तको मरणसमयो यमस्संयमनीपतिरिति विवेकः ॥ ३३ ॥

गो० टी०–सागरेति । कालान्तकयमोपमः काले प्रलयकाले अन्तको विनाशको यो यमस्तदुपमः ॥ ३३ ॥

रा० टी०–तस्येति । तस्य प्रहस्तस्य निर्याणघोषेण प्रयाणकालिकरथादिस्वनेन हेतुना राक्षसानां नर्दतां सतां लङ्कायां विद्यमानानि सर्वभूतानि विकृतैः स्वरैर्विनेदुः ॥ ३४ ॥

गो० टी०–तस्येति । तस्य प्रहस्तस्य निर्याणघोषेण निर्गमकालिकसिंहनादेन । राक्षसानां निर्याणघोषेण च प्रयोजनेन । सर्वभूतानि विकृतैः सर्वैरुपलक्षितानि सन्ति विनेदुरिति सम्बन्धः ॥ ३४ ॥

३४-३६ ] ति० टी०–तस्य दुर्निमित्तान्याह—व्यभ्रमित्यादि । मांसशोणितभोजनाः खगा अपसव्यानि मण्डलान्यपगता सव्यभागे विभ्रान्तिर्येषु मण्डलेषु भ्रामणेषु तान्यपसव्यानि प्रदक्षिणानि । गृध्रादीनां प्रदक्षिणमपि दुर्निमित्तमिति कतकः ॥ ३४ ॥ ३६ ॥

रा० टी०–व्यभ्रमिति । मांसशोणितभोजनाः खगाः व्यभ्रमभ्ररहितमाकाशमाविश्य रथं प्रति अपसव्यानि मण्डलानि चक्रुः ॥ ३५ ॥

गो० टी०–व्यभ्रमिति । अपसव्यानि अप्रदक्षिणानि । व्यभ्रमित्यनेन मण्डलकरणस्याकालिकत्वमुक्तम् । साभ्रकाले हि पक्षिणो मण्डलान्याचरन्ति यद्वात्र खगाः गरुडाः अपसव्यं प्रदक्षिणम् अपसव्यन्तु दक्षिणमित्यमरः गरुडानां अप्रदक्षिणं शोभनम् ॥ ३५ ॥

रा० टी०–वमन्तीति । शिवाः शृगालविशेषाः पावकज्वालाः वमन्ति ववाशिरे स्वजातीयशब्दं चक्रिरे च अन्तरिक्षादुल्का पपात च वायुः परुषं ववौ च ॥ ३६ ॥

रा० टी०–अन्योन्यमिति अन्योन्यसंरब्धाः [illegible] ग्रहाः न चकाशिरे खरनिर्घोषाः मेघाः रक्षसः रथस्योपरि

---

१ सागरमिति गो.पाठः। २ व्यूहेनेति रा.पाठः। ३ तूर्णमिति गो. पाठः। ४ वमन्त्य इति गो.पाठः। ५ घोरमिति गो.पाठः। ६ परुष इति गो.पाठः।

ववर्षू रुधिरं चास्य सिषिचुश्च पुरःसरान् । केतुमूर्धनि गृध्रस्तु विलीनो दक्षिणामुखः ॥ ३७ ॥
नदन्नुभयतः पार्श्वं समग्रां श्रियमाहरत । सारथेर्बहुशश्चात्र सङ्ग्राममनिवर्तिनः ॥ ३८ ॥
प्रतोदो न्यपतद्धस्तात्सूतस्य हयसादिनः । निर्याणश्रीश्च या च स्याद्भास्वरा च सुदुर्लभा ॥ ३९ ॥
सा ननाश मुहूर्तेन समे च स्खलिता हयाः । प्रहस्तं तं हि निर्यान्तं प्रख्यातगुणपौरुषम् ॥
युधि नानाप्रहरणा कपिसेनाऽभ्यवर्तत ॥ ॥ ४० ॥
अथ घोषः सुतुमुलो हरीणां समजायत । वृक्षानारुजतां चैव गुर्वीर्[9] गृह्णतां शिलाः ॥ ४१ ॥
नर्दतां राक्षसानां च वानराणां च गर्जताम् । उभे प्रमुदिते सैन्ये रक्षोगणवनौकसाम् ॥ ४२ ॥
वेगितानां समर्थानामन्योन्यवधकाङ्क्षिणाम् । परस्परं चाह्वयतां निनादः श्रूयते महान् ॥ ४३ ॥
ततः प्रहस्तः कपिराजवाहिनीमभिप्रतस्थे विजयाय दुर्मतिः ।
विवृद्धवेगैश्च विवेशितां चमूं यथा मुमूर्षुः शलभो विभावसुम् ॥ ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रुधिरं ववर्षुः ववृषुः पुरस्सरान् सिषिचुश्च सार्धश्लोक एकान्वयः ॥ ३७ ॥ ३८ ॥

गो० टी०—वमन्त्य इत्यादि । ग्रहाः चन्द्रसूर्यादयः । तत्काले ग्रहयुद्धमासीदित्यर्थः ॥ ३६ ॥ ३८ ॥

३७ ] ति० टी०—केतूपरि लीनत्वादिगुणको गृध्रो नदञ्शब्दं कुर्वन्नुभयतः पार्श्वं कण्डूयमान इति शेषः । तथा कुर्वन्नस्य समग्रां संपूर्णां प्रभां मुखादिशोभां जयश्रियं चाहरत् ३७

रा० टी०—केतुरिति । केतुमूर्धनि केतूपरिभागे विलीनः स्थितः दक्षिणामुखः उभयतः पार्श्वे कण्डूयमान इति शेषः गृध्रो नदन् सन् अस्य प्रहस्तस्य समग्रां प्रभामहरत् ॥ ३९ ॥

गो० टी०—केत्विति । नुदन्नुभयतः पार्श्वम् । उभौ पक्षौ मुखेन कण्डूयमानः समग्रामहरत् प्रभां प्रहस्तस्येति शेषः । ध्वजाग्रारूढगृध्रदर्शनेन प्रहस्तमुखं विवर्णमासीदित्यर्थः ॥ ३९ ॥

३८–४१ ] ति० टी०—सूतस्य सूतवंशजस्य सारथेः । हयसादिनोऽश्वशिक्षकस्य । प्रतोदस्तोत्रम् ॥ ३८ ॥ ४१ ॥

रा० टी०—सारथेरिति । हयसादिनः हयानां नियन्तुः सूतस्य सूतकुलप्रभूतस्य बहुशोऽनेकवारं सङ्ग्राममभिवर्त्तिनः सारथेः प्रतोदः तोत्रं न्यपतत् बहुश इतिन्यपतदित्यत्र विशेषणं वा ॥ ४० ॥

गो० टी०—सारथेरिति । सूतस्य सूतजातस्य । हयसादिनः हयप्रस्थापकस्य । प्रतोदः तोत्रम् । यद्वा सूतस्य सूतकुलोत्पन्नस्य । अभ्यस्तप्रतोदधारणस्यापीत्यर्थः । हयसादिनः अश्वगतिशिक्षकस्य ॥ ४० ॥

रा० टी०—निर्याणेति । समे निम्नोन्नतत्वरहितदेशे हयाः प्रस्खलिताः अत एव सुदुर्लभा या निर्याणश्रीरासीत् सा मुहूर्तेन ननाश ॥ ४१ ॥

गो० टी०—निर्याणेति । वसुदुर्लभा अष्टवसुदुर्लभा । भास्वरा वसुदुर्लभेति पाठः । निर्याणश्रीः निर्गमकालिकश्रीः । निरुत्साहः प्रहस्तोऽभूदित्यर्थः । स्खलिताः चस्खलुः । कर्तरि क्तः ॥ ४१ ॥

रा० टी०—प्रहस्तमिति । अभिनिर्यान्तं प्रहस्तं नानाप्रहरणा कपिसेना अभ्यवर्त्तत सम्मुखमगच्छत् ॥ ४२ ॥

गो० टी०—प्रहस्तमिति । नानाप्रहरणा शिलावृक्षादिनानाप्रहरणा ॥ ४२ ॥

रा० टी०—अथेति । वृक्षान् आरुजतामुत्पादयतां शिलाः गृह्णतांच हरीणां सुतुमुलो घोषः समजायत ॥ ४३ ॥

गो० टी०—अथेति । आरुजताम् उन्मूलयताम् । आगृह्णताम् आसमन्तात् गृह्णताम् ॥ ४३ ॥

४२–४४ ] ति० टी०—रक्षोगणवनौकसामित्यस्य निनादः श्रूयत इत्युत्तरेण संबन्धः ॥ ४२ ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रा०टी०—नर्दतामिति । राक्षसानां नर्दतां वानराणां गर्जतां च सतां रक्षोगणवनौकसां सैन्ये प्रमुदिते बभूवतुरिति शेषः ॥ ४४ ॥

रा० टी०—वेगितानामिति । वेगितानामतिवेगवतामन्योन्यवधकाङ्क्षिणामत एव परस्परमाह्वयतां रक्षोगणवनौकसां महान्निनादः श्रूयते ॥ ४५ ॥

गो० टी०—नर्दतामिति । त्रिपादश्लोकः रक्षोगणवनौकसामित्युत्तरशेषः ॥ ४४ ॥ ४५ ॥

रा० टी०—तत इति । प्रहस्तः विजयाय कपिराजवाहिनीमभिप्रतस्थे अत एव शलभो विभावसुमिव तां चमूं हरिसेनां विवेश ॥ ४६ ॥

इति श्रीमद्वाल्मीकीरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

१ ववृषुरिति गो. पाठः । २ मस्येति गो. पाठः । ३ महत्प्रभामिति गो.पाठः । ४ मस्येति गो.पाठः । ५ भवगाहत इति गो.पाठः । ६ वास्यासीदिति गो. वाचासीदिति च रा. पाठः । ७ त्वभिनिर्यान्तमिति गो. रा. पाठः । ८ बकेति गो. पाठः । ९ वा इति गो. पाठः । १० नर्दतामिति रा.पाठः । ११ वेगामिति गो. पाठः

## अष्टपञ्चाशः सर्गः ।

नीलेन नरान्तककुम्भहन्वादिस्वभक्तिपरिवृतराक्षसबलानुयातोऽपि प्रहस्तश्चिरं युध्वा वैवस्वतालयातिथिः कृतः ।

ततः प्रहस्तं निर्यान्तं दृष्ट्वा रणकृतोद्यमम् । उवाच सस्मितं रामो विभीषणमरिंदमः ॥ १ ॥
क एष सुमहाकायो बलेन महता वृतः । आगच्छति महावेगः किंरूपबलपौरुषः ॥ २ ॥
आचक्ष्व मे महाबाहो वीर्यवन्तं निशाचरम् । राघवस्य वचः श्रुत्वा प्रत्युवाच विभीषणः ॥ ३ ॥
एष सेनापतिस्तस्य प्रहस्तो नाम राक्षसः । लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृतः ॥
वीर्यवानस्त्रविच्छूरः सुप्रख्यातपराक्रमः ॥ ४ ॥
ततः प्रहस्तं निर्यान्तं भीमं भीमपराक्रमम् । गर्जन्तं सुमहाकायं राक्षसैरभिसंवृतम् ॥ ५ ॥
ददर्श महती सेना वानराणां बलीयसाम् । अभिसंजातघोषाणां प्रहस्तमभिगर्जताम् ॥ ६ ॥
खड्गशक्त्यृष्टिशूलाँश्च बाणानि मुसलानि च । गदाश्च परिघाः प्रासा विविधाश्च परश्वधाः ॥ ७ ॥
धनूंषि च विचित्राणि राक्षसानां जयैषिणाम् । प्रगृहीतान्यराजन्त वानरानभिधावताम् ॥ ८ ॥

गो० टी०—तत इति । कपिराजवाहिनीमभिप्रतस्थे तां चमूं विवेश च ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

१-३ ] ति० टी०—तत इति । सस्मितम् । एवंसेनया किलास्मान्भीषयतीति स्मितम् ॥ १ ॥ ३ ॥

रा० टी०—प्रहस्तागमनानन्तरकालिकं रामवृत्तान्तमाह—तत इत्यादिभिः । रामः निर्यान्तं प्रहस्तं दृष्ट्वा विभीषणमुवाच ॥ १ ॥

गो० टी०—अथ प्रहस्तवधोऽष्टपञ्चाशे—ततः प्रहस्तमित्यादि । सस्मितमिति । चलच्चलत्वदर्शनहर्षेणेति भावः । तदेव व्यनक्ति—अरिन्दम इति ॥ १ ॥

रा० टी०—तदाकारमाह—क इति । महता बलेन वृतः एषः क आगच्छति ननु लङ्कायां राक्षसानामेव सत्वाद्राक्षस एवेत्यत आह किंरूपादिविशिष्टोऽस्ति ॥ २ ॥

रा० टी०—आचक्ष्वेति । हे महाबाहो वीर्यवंतं निशाचरमाचक्ष्व राघवस्य वचः श्रुत्वा विभीषणः प्रत्युवाच ॥ ३ ॥

गो० टी०—क एष इति । ननु प्रहस्तः पूर्वद्वारान्निर्गतः, रामस्तु उत्तरद्वारि तिष्ठति स्म, कथमस्यानेकयोजनस्थसाक्षात्कारः । उच्यते आप्तवचनेन प्रत्यक्षतुल्येन महाकायः कश्चन गच्छतीति विदित्वा एष इत्याह । आचक्ष्व तमिति शेषः॥२॥३॥

४-५ ] ति० टी०—लङ्कायामित्यादि । राक्षसेन्द्रसंबन्धिलङ्कास्थबलस्य तृतीयभागेन संवृत इत्यर्थः ॥ ४ ॥ ५ ॥

६-८ ] ति० टी०—प्रहस्तमभि तदभिमुखेन गर्जतां वानराणां महती सेना निर्यान्तं प्रहस्तं ददर्शेति संबन्धः॥६॥८॥

रा० टी०—तदाकारमाह—एष इत्यादिभिः । राक्षसेन्द्रस्य त्रिभागबलैः संवृतः वीर्यवान् एषः प्रहस्तो नाम राक्षसेन्द्रस्य सेनापतिः सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०—एष इत्यादिसार्धश्लोक एकान्वयः । तस्य रावणस्य असभ्यतया नामाग्रहणम् । संवृतशब्दोऽन्तर्भावितण्यर्थः रावणेन लङ्कायां स्वबलस्य तृतीयभागेन संवारित इत्यर्थः लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृत इति पाठः । रावणस्य सैन्येषु भागत्रयमस्याधीनमिति भावः वीर्यवान् बलवान् वीर्यं बले प्रभावे चेत्यमरः । शूरः रणेष्वपराङ्मुखः । पराक्रमे परपरिभवने । अत्रेति करणं बोध्यम् ॥ ४ ॥

रा० टी०—तत इति । ततः रामविभीषणसंवादसमये निर्यान्तं प्रहस्तं संजातरोषाणां प्रहस्तमुद्दिश्य अभिगर्जतां वानराणां सेना ददर्श विशेषतोऽश्लोके अर्द्धचतुष्टयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—तत इत्यादिश्लोकद्वयम् । भीमं भयंकरवेषम् ॥ ५ ॥ ६ ॥

रा० टी०—खड्गेति । वानरान् अभिधावतां राक्षसानां राक्षसैः प्रगृहीतानि खड्गादीनि अराजन्त अर्द्धचतुष्टयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०—खड्गेत्यादिश्लोकद्वयम् राक्षसानामिति तृतीयार्थे षष्ठी । राक्षसैरित्यर्थः ॥ ७ ॥ ८ ॥

१ भीमपराक्रममिति गो. पाठः । २ इदमर्धं गो. पुस्त. नास्ति । ३ सुख्यातबलपराक्रमे इति गो. पाठः । ४ बाणानीति गो. पाठः । ५ शूलानीति गो. पाठः । ६ अक्षोभ्यमिति गो. पाठः । ७ भीषयत रति युक्तं भाति ।

जगृहुः पादपांश्चापि पुष्पितांस्तु गिरींस्तथा । शिलाश्च विपुला दीर्घा योद्धुकामाः प्लवंगमाः ॥ ९ ॥
तेषामन्योन्यमासाद्य संग्रामः सुमहानभूत् । बहूनामश्मवृष्टिं च शरवर्षं च वर्षताम् ॥ १० ॥
बहवो राक्षसा युद्धे बहून्वानरपुंगवान् । वानरा राक्षसांश्चापि निजघ्नुर्बहवो बहून् ॥ ११ ॥
शूलैः प्रमथिताः केचित्केचिंत्तु परमायुधैः । परिघैराहताः केचित्केचिच्छिन्नाः परश्वधैः ॥ १२ ॥
निरुच्छ्वासाः पुनः केचित्पतिता जगतीतले । विभिन्नहृदयाः केचिदिषुसंधानसंधिताः ॥ १३ ॥
केचिद्द्विधा कृताः खड्गैः स्फुरन्तः पतिता भुवि । वानरा राक्षसैः शूरैः पार्श्वतश्च विदारिताः ॥ १४ ॥
वानरैश्चापि संक्रुद्धै राक्षसौघाः समन्ततः । पादपैर्गिरिशृङ्गैश्च संपिष्टा वसुधातले ॥ १५ ॥
वज्रस्पर्शतलैर्हस्तैर्मुष्टिभिश्च हता भृशम् । वेमुःशोणितमास्येभ्यो विशीर्णवदनेक्षणाः ॥ १६ ॥
आर्तस्वनं च स्वनतां सिंहनादं च नर्दताम् । बभूव तुमुलः शब्दो हरीणां रक्षसामपि ॥ १७ ॥
वानरा राक्षसाः क्रुद्धा वीरमार्गमनुव्रताः । विवृत्तवदनाः क्रूराश्चक्रुः कर्माण्यभीतवत् ॥ १८ ॥
नरान्तकः कुम्भहनुर्महानादः समुन्नतः । एते प्रहस्तसचिवाः सर्वे जघ्नुर्वनौकसः ॥ १९ ॥

---

९-११ ] ति० टी०—गिरींस्तथा जगृहुरित्यनुकर्षः । गिरिशृङ्गाणीति यावत् ॥ ९ ॥ ११ ॥

रा० टी०—जगृहुरिति । प्लवङ्गमाः पादपादीन् जगृहुः ॥ ९ ॥

रा० टी०—एषामिति । अन्योन्यमासाद्य विद्यमानानाम् अश्मवृष्टिं शरवर्षं च वर्षतां तेषां हरिरक्षसां सुमहान् संग्रामोऽभूत् ॥ १० ॥

रा० टी०—बहव इति । राक्षसाः बहून् वानरपुङ्गवान् वानरा बहून् राक्षसांश्च निजघ्नुः ॥ ११ ॥

गो० टी०—जगृहुरिति । वानरश्रेष्ठत्वेऽप्यवानरत्ववारणाय प्लवङ्गमा इत्युक्तम् । यद्वा प्लवङ्गमाः युद्धोत्साहेन प्लवगत्या गच्छन्तः असंज्ञायां खशार्षः ॥ ९ ॥ ११ ॥

१२ ] ति० टी०—परमायुधैश्चक्रैः । 'चक्रं तु परमायुधम्' इति कोशः ॥ १२ ॥

रा० टी०—तत्प्रकारमाह—शूलैरित्यादिभिः । केचित् वानरा राक्षसैः शूलैः प्रमथिताः केचित्तु परमायुधैर्दिव्यशस्त्रैः प्रमथिताः केचित् परिघैराहताः बभूवुः ॥ १२ ॥

गो० टी०—शूलैरित्यादि । परमायुधैः चक्रैः । चक्रं तु परमायुधमिति निघण्टुः ॥ १२ ॥

१३ ] ति० टी०—इषूणां संधानं सम्यग्विसर्जनं तेन सादिताः खण्डिताः । 'संधानसंधिताः' इति पाठे इषव एव संधानानि बन्धनरज्जवस्तैः संधिताः संस्यूता इत्यर्थः ॥ १३ ॥

रा० टी०—निरिति । निरुच्छ्वासाः तद्दर्शनजनितमूर्च्छाहेतुकपूर्ववत्श्वासरहिताः केचित् सादिताः विहिंसिताः केचित् विभिन्नहृदयाः बभूवुरिति शेषः ॥ १३ ॥

गो० टी०—शस्त्रपातादिकार्यं दर्शयति—निरुच्छ्वासा इत्यादि । निरुच्छ्वासाः कृताः । इषुसन्धानसंदिताः इषव एव संधानानि बन्धनरज्जवः तैः संदिताः संस्यूताः । स्फुरन्तः लुठन्तः । अवदारिताः भिन्नाः ॥ १३ ॥ १४ ॥

१४-१५ ] ति० टी०—स्फुरन्त उच्छलन्तः ॥ १४ ॥ १५ ॥

रा० टी०—केचिदिति । स्फुरन्तः केचित् खड्गैर्द्विधा कृताः पार्श्वतो विदारिताश्च सन्तो भुवि पतिताः ॥ १४ ॥

रा० टी०—वानरैरिति । वानरैः पादपादिभिः संपिष्टाः राक्षसौघाः वसुधातले निपेतुरिति शेषः ॥ १५ ॥

गो० टी०—वानरैरित्यादि । संपिष्टाः चूर्णिताः । वेमुः वमनं चक्रुः ॥ १५ ॥ १६ ॥

१६-१७ ] ति० टी०—वमनवमन् । 'वेमुः' इति पाठान्तरम् ॥ १६ ॥ १७ ॥

रा० टी०—वज्रेति । वज्रस्पर्शवत् तलानि तलस्पर्शा येषां तैर्हस्तैर्मुष्टिभिश्च भृशं हताः अत एव विशीर्णानि वदनेक्षणानि येषां ते राक्षसाः आस्येभ्यो मुखेभ्यश्शोणितं वमन् अवमन् १६

रा० टी०—आर्तेति । आर्त्तस्वनं स्वनतां सिंहनादं च नर्दतां हरीणां रक्षसामपि तुमुलश्शब्दो बभूव ॥ १७ ॥

गो० टी०—आर्तेति । स्वनतां नर्दतामित्यत्र कुर्वतामित्यर्थः । तुमुलः निबिडितः । रक्षसां वानराणां च ॥ १७ ॥

१८-१९ ] ति० टी०—वीरमार्गमनुव्रता वीरमार्गोऽपराङ्मुखत्वलक्षणस्तमनुव्रता अनुगताः । अभीतवदभीतार्हाणि ॥ १८ ॥ १९ ॥

रा० टी०—वानरा इति । विवृत्तवदनाः वानराः राक्षसाश्च अभीतवत् भीतिरहितं यथा भवति तथा कर्माणि युद्धक्रियाः चक्रुः ॥ १८ ॥

रा० टी०—नरान्तक इति । नरान्तकादयः प्रहस्तसचिवाः वनौकसो जघ्नुः ॥ १९ ॥

गो० टी०—वानरा इति । वीरमार्गं युद्धकौशलम् । विवृ-

---

१ पुष्पितान्वानरर्षभा इति गो. पाठः । २ चेति गो. पाठः । ३ धरणीति गो. पाठः । ४ सन्दिता इति गो. रा. पाठः । ५ शूलैरिति गो. पाठः । ६ भवेति गो. पाठः । ७ वेमुरिति गो. पाठः । ८ दशनेति गो. पाठः । ९ युधीति गो. पाठः । १० नयना इति गो. पाठः ।

तेषां निपततां शीघ्रं निघ्नतां चापि वानरान् । द्विविदो गिरिशृङ्गेण जघानैकं नरान्तकम् ॥ २० ॥
दुर्मुखः पुनरुत्थाय कपिः सविपुलद्रुमम् । राक्षसं क्षिप्रहस्तं तु समुन्नतमपोथयत् ॥ २१ ॥
जाम्बवांस्तु सुसंक्रुद्धः प्रगृह्य महतीं शिलाम् । पातयामास तेजस्वी महानादस्य वक्षसि ॥ २२ ॥
अथ कुम्भहनुस्तत्र तारेणासाद्य वीर्यवान् । वृक्षेण महता सद्यः प्राणान्संत्याजयद्रणे ॥ २३ ॥
अमृष्यमाणस्तत्कर्म प्रहस्तो रथमाश्रितः । चकार कदनं घोरं धनुष्पाणिर्वनौकसाम् ॥ २४ ॥
आवर्त इव संजज्ञे सेनयोरुभयोस्तदा । क्षुभितस्याप्रमेयस्य सागरस्येव निःस्वनः ॥ २५ ॥
महता हि शरौघेण राक्षसो रणदुर्मदः । अर्दयामास संक्रुद्धो वानरान्परमाहवे ॥ २६ ॥
वानराणां शरीरैस्तु राक्षसानां च मेदिनी । बभूवातिचिता घोरैः पर्वतैरिव संवृता ॥ २७ ॥
सा मही रुधिरौघेण प्रच्छन्ना संप्रकाशते । संछन्ना माधवे मासि पलाशैरिव पुष्पितैः ॥ २८ ॥
हतवीरौघवप्रां तु भग्नायुधमहाद्रुमाम् । शोणितौघमहातोयां यमसागरगामिनीम् ॥ २९ ॥

---

सनयनाः भ्रान्तनेत्राः । कर्माणि युद्धकर्माणि । अभीतवत् भयरहितं यथा भवति तथा ॥ १८ ॥ १९ ॥

२० ] ति० टी०—तेषामिति निर्धारणे षष्ठी ॥ २० ॥

रा० टी०—तेषामिति । तेषां सचिवानां निपततां वानरान् निघ्नतां च मतां द्विविदो नरान्तकं जघान ॥ २० ॥

गो० टी०—तेषामिति । इयं निर्धारणे षष्ठी । एकं मुख्यम् ॥ २० ॥

२१] ति०टी०—समुन्नतं तदाख्यम् अपोथयद्धतवान्॥२१॥

रा० टी०—दुर्मुख इति । दुर्मुखः कपिः विपुलद्रुमस्सन् समुन्नतं तदभिधं राक्षसमपोथयत् ॥ २१ ॥

गो० टी०—दुर्मुख इति । उत्थाय उद्धृत्य । समुन्नताख्यं राक्षसम् अपोथयन् अमारयत् । " पुथ, हिंसायाम् " इति धातुः ॥ २१ ॥ २२ ॥

२२ ] ति० टी०—महानादस्य तदाख्यस्य ॥ २२ ॥

रा० टी०—जाम्बवानिति । जाम्बवान् महतीं शिलां प्रगृह्य महानादस्य वक्षसि पातयामास ॥ २२ ॥

२३ ] ति० टी०—तारेणासाद्य संबध्य । युयुधे इति शेषः । ततः स तारस्तस्य कुम्भहनोर्महता वृक्षेण प्राणान्संत्याजयत्समत्याजयत् ॥ २३ ॥

रा० टी०—अथेति । कुम्भहनुः तारेणासाद्य अयुध्यतेति शेषः महता वृक्षेण प्राणान् कुम्भहनोर्जीवनानि संत्याजयत् समत्याजयत् तार इति शेषः किंच कुम्भहनुस्तारेण सह आसाद्य युद्धं प्राप्य वृक्षेण तारप्रहततरुणाप्राणान् सन्त्याजयत् अत्यजत् ॥ २३ ॥

गो० टी०—अथेति । तत्र प्रहस्तसचिवेषु । सन्त्याजयत् संतत्याज । स्वार्थिको णिच् प्रत्ययः ॥ २३ ॥ २४ ॥

२४ ] ति० टी०—तत्कर्म क्षणादेव सचिवचतुष्टयमारणकर्म ॥ २४ ॥

रा० टी०—अमृष्यमाण इति । तत् वानरकृतं कर्म अमृष्यमाणः प्रहस्तः रथमास्थितस्सन् वनौकसां घोरं कदनं चकार२४

२५–२८ ] ति० टी०—उभयोः सेनयोरितस्ततो भ्रमणेनावर्त इव संजज्ञे । क्षुभितस्य सागरस्य निःस्वन इव निःस्वनश्च जज्ञे ॥ २५–२८ ॥

रा० टी०—आवर्त्त इति । उभयोस्सेनयोः आवर्त्ते इतस्ततो भ्रमणे सति सागरस्य निःस्वन इव निःस्वनो जज्ञे॥२५॥

गो० टी०—आवर्त इति । आवर्ते संवर्ते प्रलय इव स्थिते तस्मिन् युद्धे क्षुभितस्य सागरस्य निःस्वन इव सेनाया निःस्वनः संजज्ञे ॥ २५ ॥

रा० टी०—महतेति । राक्षसः प्रहस्तः शरौघेण वानरान् अर्दयामास ॥ २६ ॥

गो० टी०—तेषु प्रहस्तप्रकर्षं प्रतिपादयितुं पुनराह—महतेत्यादि ॥ २६ ॥

रा० टी०—वानराणामिति । वानराणां राक्षसानाञ्च शरीरैराचिता व्याप्ता मेदिनी पर्वतैस्संवृतेव बभूव ॥ २७ ॥

रा० टी०—सेति । रुधिरौघेण प्रच्छन्ना सा मही पुष्पितैः पलाशैःसञ्छन्नेव प्रकाशते ॥ २८ ॥

गो० टी०—वानराणामिति । निचिता व्याप्ता॥२७॥२८॥

२९ ] ति० टी०—युद्धभूमिं नदीत्वेन वर्णयति—हतेत्यादि । वप्रं तटम् । यम एव सागरस्तद्गामिनीम् ॥ २९ ॥

रा० टी०—संग्रामभूमिं नदीत्वेन वर्णयन्नाह—हतेत्यादिभिः । हतवीरौघावेव वप्रौ यस्याः भग्नायुधान्येव महाद्रुमा यस्याम् शोणितौघा महातोयानि यस्याम् यमः तापसलोक एव सागरः तद्गामिनीम् ॥ २९ ॥

गो० टी०—अपरिच्छिन्नवानरवधो वृत्त इति द्योतयितुं युद्धभूमिं नदीत्वेन वर्णयति—हतेत्यादिना । उभयसेनाश्रयोर्हतवीराणामोघः समूह एव वप्रं तटं यस्यास्ताम् । भग्नायुधा-

---

१ ना-इति गो. पाठः । २ हस्तस्विति गो. पाठः । ३ मभिहतो मूर्ध्नीति गो. पाठः । ४ उभयोः सेनयोरिति गो.पाठः । ५ प्रहस्त इति गो.पाठः । ६ चेति गो. पाठः । ७ निचिता घोरा पतितैरिव पर्वतैरिति गो. पाठः .

यकृत्प्लीहमहापङ्कां विनिकीर्णान्त्रशैवलाम् । भिन्नकायशिरोमीनामङ्गावयवशाद्वलाम् ॥ ३० ॥
गृध्रहंसवराकीर्णां कङ्कसारससेविताम् । मेदःफेनसमाकीर्णामार्तस्तनितनिःस्वनाम् ॥ ३१ ॥
तां कापुरुषदुस्तारां युद्धभूमिमयीं नदीम् । नदीमिव घनापाये हंससारससेविताम् ॥ ३२ ॥
राक्षसाः कपिमुख्यास्ते तेरुस्तां दुस्तरां नदीम् । यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ॥ ३३ ॥
ततः सृजन्तं बाणौघान्प्रहस्तं स्यन्दने स्थितम् । ददर्श तरसा नीलो विधमन्तं प्लवंगमान् ॥ ३४ ॥
उद्धूत इव वायुः खे महदभ्रबलं बलात् । समीक्ष्याभिद्रुतं युद्धे प्रहस्तो वाहिनीपतिः ॥ ३५ ॥
रथेनादित्यवर्णेन नीलमेवाभिदुद्रुवे । स धनुर्धन्विनां श्रेष्ठो विकृष्य परमाहवे ॥ ३६ ॥
नीलाय व्यसृजद्बाणान्प्रहस्तो वाहिनीपतिः । ते प्राप्य विशिखा नीलं विनिर्भिद्य समाहिताः ॥ ३७ ॥
महीं जग्मुर्महावेगा रोषिता इव पन्नगाः । नीलः शरैरभिहतो निशितैर्ज्वलनोपमैः ॥ ३८ ॥
स तं परमदुर्धर्षमापतन्तं महाकपिः । प्रहस्तं ताडयामास वृक्षमुत्पाट्य वीर्यवान् ॥ ३९ ॥
स तेनाभिहतः क्रुद्धो नर्दन्राक्षसपुंगवः । ववर्ष शरवर्षाणि प्लवंगानां चमूपतौ ॥ ४० ॥

---

न्येव महाद्रुमाः भग्नाः तीरमहाद्रुमा यस्यास्ताम् । शोणितौघा एव महातोयानि कलुषजलानि यस्यास्ताम् यमसागरगामिनीं युद्धभूमौ यमो जीवग्रहणाय सन्निधत्त इति प्रसिद्धिः । तद्रूपसागरगामिनीम् । यकृत्प्लीहशब्दौ हृदयस्य दक्षिणवामभागस्थमांसविशेषपरौ । अन्त्राणां शैवलत्वनिरूपणं लम्बमयत्वात् । भिन्नकायशिरसोर्मीनत्वनिरूपणं स्फुरितवत्त्वात् । अङ्गावयवाः करचरणाद्यङ्गानामवयवाः अङ्गुलय इत्यर्थः । त एव शाद्वलानि शाद्वलभूजन्यतृणानि यस्यास्ताम् । कङ्कः धवलवर्णः श्येनः । सारसो हंसविशेषः मेदः रुधिरमण्डलम् । आर्तानां स्तनितः शब्द इति यावत् तदेव निम्नोन्नतपतनजनितस्वनो यस्यास्ताम् । यद्यपि रुधिरप्रवाहस्यापि स्वत एव घोषोऽस्ति तथापि रूपकत्वायैवमुक्तम् । कापुरुषाः भीरवः तैः दुस्ताराम् वह्निरार्षी युद्धभूमिमयीमिति स्वार्थे मयट् । व्यस्तरूपकम् । प्रावर्तयन्नित्यध्याहार्यम् । यद्वा तेरुरिति वक्ष्यमाणमत्राप्यनुषज्यते । अत्र सावयवरूपकालंकारः ॥२९॥३१॥

३०-३१ ] ति० टी०—यकृत्प्लीहानौ हृदयदक्षिणभागस्थमांसविशेषौ ॥ ३० ॥ ३१ ॥

रा० टी०—यकृत्प्लीहानौ हृदयदक्षिणभागस्थमांसविशेषौ महापङ्कानि यस्याम् विनिकीर्णानि अन्त्राणि शैवाला यस्याम् भिन्नानि कायशिरांसि मीना यस्याम् अङ्गावयवाः शाद्वला यस्याम् ॥ ३० ॥

रा० टी०—गृध्ररूपहंसगणैराकीर्णाम् कङ्करूपैस्सारसैः सेविताम् मेदोरूपफेनेन समाकीर्णाम् आर्तस्तनितरूपनिस्वनविशिष्टाम् ॥ ३१ ॥

३२ ] ति० टी०—युद्धभूमिमयीं तद्रूपां नदीं प्रवर्तयित्वा घनापाये हंसादिसेवितां नदीमिव तां तेरुः ॥ ३२ ॥

रा० टी०—कापुरुषैर्दुस्तराम् घनापाये हंसादिसेवितां नदीं शरद्वर्तिनीं नदीमिव युद्धभूमिमयीं नदीम् ॥ ३२ ॥

गो० टी०—उपमानमुखेनापि तत्तरणं दर्शयति—नदीमिति । घनापाये वर्षान्ते । तां पूर्वत्र रूपकेण दर्शिताम् । केचित्तु अत्रोत्तरश्लोकस्थनदीपदवैयर्थ्यभयेन युद्धभूमिमयीं नदीं प्रवर्तयित्वेत्यध्याहरन्ति ॥ ३२ ॥

३३ ] ति० टी०—पद्मरजोयुतां यथा गजयूथपास्तेरुस्तथेत्यर्थः ॥ ३३ ॥

रा० टी०—राक्षसाः कपिमुख्याश्च तेरुः तत्र दृष्टान्तः गजयूथपाः पद्मरजोध्वस्तां नलिनीमिव अर्द्धदशकमेकान्वयि ॥ ३३ ॥

गो० टी०—उक्तानां रक्षोवानराणामुपमामाह—यथेति । पद्मरजोभिः ध्वस्तां वर्णान्तरं प्राप्तां नलिनीं सरसीं यथा गजयूथपास्तरन्ति तीर्त्वा रक्ततनवो भवन्तीति यावत् । तथा अरुणशरीरा उत्तेरुरित्यर्थः ॥ ३३ ॥

३४ ] ति० टी०—तत उच्यमानगुणं प्रहस्तं नीलो ददर्श ॥ ३४ ॥

रा० टी०—तत इति । बाणौघान् सृजन्तं स्यन्दने स्थितं प्लवङ्गमान् विधमन्तं नीलो ददर्श ॥ ३४ ॥

गो० टी०—तत इति । स्यन्दने रथे स्थितम् । बाणौघान् सृजन्तं मुञ्चन्तम् । तरसा वेगेन । प्लवङ्गमान् विनिघ्नन्तं प्रहस्तं ददर्श ॥ ३४ ॥

३५-४० ] ति० टी०—वाहिनीपतिः प्रहस्तः ख उद्धूतो वायुर्महदभ्रबलमिव बलवदभ्रमिव युद्धेऽभिद्रुतं स्वं प्रत्याभिमुख्येनागच्छन्तं नीलं समीक्ष्य तं नीलमेवाभिदुद्रुवे ॥३५–४०॥

रा० टी०—उद्धूत इति । खे उद्धूतो यो वायुः तेन वायुना अभ्रबलम् बलमभ्रमिव अभिद्रुतं स्वसैन्यं समीक्ष्य प्रहस्तो रथेन नीलमपि दुद्रुवे किंच उद्धूतो वायुरिव प्रहस्तः महदभ्रबलमभ्रवद्वानरसैन्यमभिद्रुतं समीक्ष्य रथेन नीलमेवाभिदुद्रुवे॥३५॥

रा० टी०—स इति । धन्विनां श्रेष्ठः प्रहस्तः नीलाय बाणान् व्यसृजत् ॥ ३६ ॥

---

१ आर्तस्तनितेति गो.रा.पाठः। २ चेति गो.पाठः। ३ प्राप्येति गो.पाठः। ४ रुषिता इति गो.पाठः। ५ नर्दतीति गो.रा.पाठः। ६ प्रवर्तीति पुस्तं भाति।

तस्य बाणगणानेवं राक्षसस्य दुरात्मनः । अपारयन्वारयितुं प्रत्यगृह्णान्निमीलितः ॥
यथैव गोवृषो वर्षं शारदं शीघ्रमागतम् ॥ ४१ ॥
एवमेव प्रहस्तस्य शरवर्षान्दुरासदान् । निमीलिताक्षः सहसा नीलः सेहे दुरासदान् ॥ ४२ ॥
रोषितः शरवर्षेण सालेन महता महान् । प्रजघान हयान्नीलः प्रहस्तस्य महाबलः ॥ ४३ ॥
ततो रोषपरीतात्मा धनुस्तस्य दुरात्मनः । बभञ्ज तरसा नीलो ननाद च पुनः पुनः ॥ ४४ ॥
विधनुः स कृतस्तेन प्रहस्तो वाहिनीपतिः । प्रगृह्य मुसलं घोरं स्यन्दनादवपुप्लुवे ॥ ४५ ॥
तावुभौ वाहिनीमुख्यौ जातवैरौ तरस्विनौ । स्थितौ क्षतजसिक्ताङ्गौ प्रभिन्नाविव कुञ्जरौ ॥ ४६ ॥
उल्लिखन्तौ सुतीक्ष्णाभिर्दंष्ट्राभिरितरेतरम् । सिंहशार्दूलसदृशौ सिंहशार्दूलचेष्टितौ ॥ ४७ ॥
विक्रान्तविजयौ वीरौ समरेष्वनिवर्तिनौ । काङ्क्षमाणौ यशः प्राप्तुं वृत्रवासवयोरिव ॥ ४८ ॥
आजघान तदा नीलं ललाटे मुसलेन सः । प्रहस्तः परमायत्तस्ततः सुस्राव शोणितम् ॥ ४९ ॥
ततः शोणितदिग्धाङ्गः प्रगृह्य च महातरुम् । प्रहस्तस्योरसि क्रुद्धो विससर्ज महाकपिः ॥ ५० ॥

गो० टी०–उद्धूत इत्यादिसार्धश्लोकमेकं वाक्यम् । खे स्वदेशभूते । उद्धूतः उल्बणः वायुः अभ्रबलं अभ्रजालमिव । युद्धे बलादभिद्रुतम् आभिमुख्येनायान्तं नीलं समीक्ष्य रथेन नीलमेवाभिदुद्रुवे इति योजना ॥ ३५ ॥ ३६ ॥

रा० टी०–ते इति । समाहिताः प्रहस्तेन प्रक्षेपिताः नीलं प्रेत्य प्राप्य निर्भिद्य च रोपिताः पन्नगा इव महीं जग्मुः ॥३७॥

गो० टी०–त इति । रुपिताः पन्नगा इव स्थिताः समाहिताः ऋजवः नीलं विनिर्भिद्य महीं जग्मुः विविशुरित्यर्थः॥३७॥

रा० टी०–नील इति । शरैरभिहतो नीलः आपतन्तं प्रहस्तं वृक्षमुत्पाट्य ताडयामास सार्धश्लोक एकान्वयी ॥ ३८ ॥ ३९ ॥

रा० टी०–स इति । तेन नीलपातिततरुणा अभिहतो राक्षसपुङ्गवः प्लवङ्गानां चमूपतौ नीले शरवर्षाणि ववर्ष ॥४०॥

गो० टी०–नील इत्यादि सार्धश्लोकः ॥ ३८ ॥ ४० ॥

४१–४६ ] ति० टी०–अपारयन्वारयितुमशक्तः सन् । शारदं वर्षम् । गोवृषस्य शरत्काले प्राबल्यं कालस्वभावात् वर्षस्य त्वन्यथा तत एव । तेन नातिक्लेशकरस्तस्य शरवर्ष इति सूचितम् ॥ ४१–४६ ॥

रा० टी०–तस्येति । तस्य प्रहस्तस्य बाणगणान् वारयितुमपारयन् अशक्नुवन् निमीलिताक्षस्सन्नीलः प्रत्यगृह्णात्॥४१

गो० टी०–तस्येति । अपारयन् अशक्नुवन् ॥ ४१ ॥

रा० टी०–तदेव दृष्टान्तमाह—यथेति । गोवृषो शीघ्रमागतं शारदं वर्षं यथा सेहे एवं तथा प्रहस्तस्य शरवर्षान् नीलः सेहे सार्धश्लोक एकान्वयी ॥ ४२ ॥

रा० टी०–रोषित इति । शरवर्षेण रोषितो नीलः सालेन तरुणा प्रहस्तस्य हयान् प्रजघान ॥ ४३ ॥

रा० टी०–तत इति । नीलः तस्य प्रहस्तस्य धनुर्बभञ्ज॥४४॥

रा० टी०–विधनुरिति । तेन नीलेन विधनुः कृतः प्रहस्तः मुसलं प्रगृह्य स्यन्दनात् अवपुप्लुवे ॥ ४५ ॥

गो० टी०–यथैवेत्यादिसार्धश्लोकः यथैवेत्यत्र एवकारोऽत्यन्तायोगव्यवच्छेदार्थकः । शारदमित्यनेन शरपातस्य क्षयित्वं व्यनक्ति ॥ ४२ ॥ ४५ ॥

रा० टी०–ताविति । जातवैरौ क्षतजेन सिक्ते अङ्गे ययोः तौ उभौ हरिराक्षसौ प्रभिन्नौ मत्तौ कुञ्जराविव स्थितौ ॥४६॥

गो० टी०–तावुभावित्यादिश्लोकत्रयमेकं वाक्यम् । प्रभिन्नौ मत्तौ । सिंहशार्दूलसदृशाविति बले साम्यम् । विक्रान्तविजयौ सर्वत्र प्राप्तविजयौ । काङ्क्षमाणौ अभूतामिति शेषः ॥ ४६ ॥ ४८ ॥

४७ ] ति० टी०–सुतीक्ष्णाभिर्दंष्ट्राभी राक्षसानामप्यस्ति दंष्ट्राप्राबल्यम् ॥ ४७ ॥

४८ ] ति० टी०–विक्रान्तविजयौ प्राप्तप्रायविजयौ ॥४८॥

रा० टी०–उल्लिखन्ताविति । दंष्ट्राभिः इतरेतरमुल्लिखन्तौ विक्रान्तौ वशीकृताविव विजयौ याभ्यामत एव समरेषु अनिवर्तिनौ अत एव वृत्रवासवयोरिव यशः प्राप्तुं काङ्क्षमाणौ बभूवतुरिति शेषः अर्धचतुष्टयमेकान्वयि ॥ ४७ ॥ ४८ ॥

४९–५० ] ति० टी०–परमायत्तः परमोद्युक्तः॥४९–५०॥

रा० टी०–आजघानेति । परमायत्तः स प्रहस्तः मुसलेन नीलं ललाटे आजघान ततोऽनन्तरं शोणितं सुस्राव ॥ ४९ ॥

रा० टी०–तत इति । शोणितदिग्धाङ्गो नीलः महातरुं प्रगृह्य प्रहस्तस्योरसि विससर्ज ॥ ५० ॥

गो० टी०–आजघानेति । परमायत्तः परमोद्युक्तः ४९।५०

१ घोरानिति गो. पाठः । २ महाबल इति गो. पाठः । ३ शरवर्षं दुरासदमिति गो. पाठः । ४ सुदारुणमिति गो. पाठः । ५ मनोजवानिति गो. पाठः । ६ स चापमुद्गृह्य प्रहस्तस्य महाबल इति गो. पाठः । ७ स्थिति गो. पाठः । ८ दिग्धेति गो. पाठः । ९ इतरेतराविति रा. पाठः । १० समाविति गो. पाठः । ११ तस्येति गो. पाठः । १२ स्थिति गो. पाठः ।

तमचिन्त्य प्रहारं स प्रगृह्य मुसलं महत् । अभिदुद्राव बलिनं बलान्नीलं प्लवंगमम् ॥
तमुग्रवेगं संरब्धमापतन्तं महाकपिः ॥ ॥ ५१ ॥
ततः संप्रेक्ष्य जग्राह महावेगो महाशिलाम् । तस्य युद्धाभिकामस्य मृधे मुसलयोधिनः ॥ ५२ ॥
प्रहस्तस्य शिलां नीलो मूर्ध्नि तूर्णमपातयत् । नीलेन कपिमुख्येन विमुक्ता महती शिला ॥
बिभेद बहुधा घोरा प्रहस्तस्य शिरस्तदा ॥ ॥ ५३ ॥
स गतासुर्गतश्रीको गतसत्त्वो गतेन्द्रियः । पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥ ५४ ॥
विभिन्नशिरसस्तस्य बहु सुस्राव शोणितम् । शरीरादपि सुस्राव गिरेः प्रस्रवणो यथा ॥ ५५ ॥
हते प्रहस्ते नीलेन तदकम्प्यं महाबलम् । राक्षसानामहृष्टानां लङ्कामभिजगाम ह ॥ ५६ ॥
न शेकुः समवस्थातुं निहते वाहिनीपतौ । सेतुबन्धं समासाद्य विशीर्णं सलिलं यथा ॥ ५७ ॥
हते तस्मिंश्चमूमुख्ये राक्षसास्ते निरुद्यमाः । रक्षःपतिगृहं गत्वा ध्यानमूकत्वमागताः ॥
प्राप्ताः शोकार्णवं तीव्रं विसंज्ञा इव तेऽभवन् ॥ ॥ ५८ ॥

ततस्तु नीलो विजयी महाबलः प्रशस्यमानः सुकृतेन कर्मणा ।
समेत्य रामेण सलक्ष्मणेन प्रहृष्टरूपस्तु बभूव यूथपः ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

५१-५२ ] ति० टी०—अचिन्त्याचिन्तयित्वा॥५१-५२॥

रा० टी०—तमिति । स प्रहस्तः तं कपिकृतं प्रहारमचिन्त्य अचिन्तयित्वा नीलं प्लवङ्गममभिदुद्राव ॥ ५१ ॥

रा० टी०—तमिति । महाकपिः आपतन्तं प्रहस्तं संप्रेक्ष्य महाशिलाम् जग्राह ॥ ५२ ॥

रा० टी०—तस्येति । मुशलयोधिनः प्रहस्तस्य मूर्ध्नि नीलः शिलामपातयत् ॥ ५३ ॥

गो० टी०—तमिति । अचिन्त्य अचिन्तयित्वा॥५१॥५५॥

५३-५४ ति० टी०—तूर्णम् । मुसलप्रहारात्पूर्वमेवेत्यर्थः । प्रहस्तस्य शिरो बहुधा बिभेद ॥ ५३ ॥ ५४ ॥

रा० टी०—नीलेनेति । नीलेन विमुक्ता घोरा शिला प्रहस्तस्य शिरः बहुधा अनेकप्रकारं बिभेद ॥ ५४ ॥

रा० टी०—स इति । गतासुत्वादिविशिष्टः स प्रहस्तः छिन्नमूलो द्रुम इव भूमौ पपात ॥ ५५ ॥

५५-५६ ] ति० टी०—विभिन्नशिरसो गिरेः । प्रस्रवणो निर्झरः ॥ ५५ ॥ ५६ ॥

रा० टी०—विभिन्नेति । गिरेः प्रस्रवणो निर्झरो यथा सुस्राव तथा तस्य प्रहस्तस्य विभिन्नशिरसः शरीरादपि शोणितं सुस्राव ॥ ५६ ॥

रा० टी०—हत इति । नीलेन प्रहस्ते हते सति अहृष्टानां नष्टहर्षाणामकम्प्यमपि महाबलं लङ्कामभिजगाम ॥ ५७ ॥

गो० टी०—प्रभिन्नेति । प्रभिन्नशिरसः प्रभिन्नाच्छिरसः शरीरादपीति समुच्चयः । प्रस्रवणं निर्झरः ॥ ५६ ॥ ५७ ॥

५७ ] ति० टी०—विशीर्णं भग्नं सेतुबन्धमित्यन्वयः॥५७॥

रा० टी०—नेति । वाहिनीपतौ निहते सति विशीर्णं भग्नं सेतुबन्धमासाद्य सलिलमिव समवस्थातुं न शेकुः प्रहस्तसैन्यानीति शेषः ॥ ५८ ॥

गो० टी०—न शेकुरिति । विकीर्णं भग्नम् ॥ ५८ ॥

५८ ] ति० टी०—ध्यानमूकत्वं ध्यानेन देवताध्यानेन ये मूका मौनिनस्तेषां भावस्तत्त्वम् । भयदुःखमोहैः किमपि वक्तुं नाशक्नुवन्नित्यर्थः । तदेवाह—प्राप्ता इति ॥ ५८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—हत इति । चमूमुख्ये हते सति शोकार्णवं प्राप्ताः अत एव निरुद्यमाः अत एव ध्याने देवतास्मरणसमये ये मूकाः तत्त्वमागता इव आगतशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः राक्षसाः रक्षःपतिगृहं गत्वा विसञ्ज्ञा अभवन् सार्द्धश्लोक एकान्वयी॥५९॥५७॥

गो० टी०—हत इत्यादि सार्द्धश्लोकः । ध्यानमूकत्वं ध्यानेन वाग्व्यापारशून्यत्वम् तीव्रं घोरम् शोकार्णवं प्राप्ताः । शोकार्णवे मग्ना इत्यर्थः ॥ ५९ ॥

५९ ] ति० टी०—सलक्ष्मणेन रामेण समेत्य प्रशस्यमानः, अत एव प्रहृष्टरूपोऽतिप्रहृष्टः प्रशंसायां रूपप् ॥ ५९ ॥

तत्पञ्चम्यां प्रहस्तवधः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

रा० टी०—तत इति । ततोऽनन्तरं सुकृतेन कर्मणा प्रश-

---

१ सा तेनेति गो. पाठः । २ स्रवणमिति गो. पाठः । ३ महदिति गो. पाठः । ४ रक्षसामप्रहृष्टानामिति गो. पाठः । ५ विकीर्णामिति गो. पाठः । ६ मास्थिता इति गो. पाठः । ७ निःसंज्ञा इति गो. पाठः । ८ स्वेति गो. पाठः ।

# एकोनषष्टितमः सर्गः ।

प्रहस्ते हते रोषाविष्टः पौलस्त्यो रिपुर्नावज्ञातव्य इति स्वयमेव योद्धुं जगाम तदा च रामोऽपि रणाय सन्नद्धानां राक्षसवीराणां विभीषणमुखान्नामान्यश्रृणोत् रावणस्तु सुग्रीवेण हनुमता सौमित्रिणान्यैश्च हरिवीरैर्घोरं युद्धान्ते रामेण संगतस्तेन हततुरंगसारथिः कृत्तधनुर्हृतकिरीटश्च दयया जीवन्मुक्तो मग्नदर्पः सन् लङ्कां विवेश ।

तस्मिन्हते राक्षससैन्यपाले प्लवंगमानामृषभेण युद्धे ।
भीमायुधं सागरवेगैतुल्यं विदुद्रुवे राक्षसराजसैन्यम् ॥ ॥ १ ॥
गत्वा तु रक्षोधिपतेः शशंसुः सेनापतिं पावकसूनुशस्तम् ।
तच्चापि तेषां वचनं निशम्य रक्षोधिपः क्रोधवशं जगाम ॥ ॥ २ ॥
संख्ये प्रहस्तं निहतं निशम्य क्रोधार्दितः शोकपरीतचेताः ।
उवाच तान्राक्षसयूथमुख्यानिन्द्रो यथा निर्जरयूथमुख्यान् ॥ ॥ ३ ॥
नावज्ञा रिपवे कार्या यैरिन्द्रबलसादनः । सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥ ॥ ४ ॥
सोऽहं रिपुविनाशाय विजयायाविचारयन् । स्वयमेव गमिष्यामि रणशीर्षं तदद्भुतम् ॥ ॥ ५ ॥
अद्य तद्वानरानीकं रामं च सहलक्ष्मणम् । निर्दहिष्यामि बाणौघैर्वनं दीप्तैरिवाग्निभिः ॥
[ अद्य संतर्पयिष्यामि पृथिवीं कपिशोणितैः । ] ॥ ६ ॥

---

स्यमानो नीलो यूथपः रामेण लक्ष्मणेन च संगम्य प्रहृष्टरूपो बभूव ॥ ६१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

गो० टी०—ततस्त्विति । स्वकृतेन कर्मणा रिपुवधेन प्रहृष्टरूपः अतिशयेन प्रहृष्टः प्रशंसायां रूपप् । पञ्चम्यां प्रहस्तवधः ॥ ६० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

१ ] ति० टी०—तस्मिन्निति । प्रहस्ते इत्यर्थः । प्लवंगमानामृषभेण नीलेन ॥ १ ॥

रा० टी०—प्रहस्तवधानन्तरकालिकं राक्षसवृत्तान्तमाह—तस्मिन्नित्यादिभिः । प्लवङ्गमानामृषभेण नीलेन तस्मिन् प्रहस्ते हते सति राक्षसराजसैन्यं विदुद्रुवे ॥ १ ॥

गो० टी०—अथ रावणमुकुटभङ्गः एकोनषष्टितमे—तस्मिन् हत इत्यादि ॥ १ ॥

२ ] ति० टी०—पावकसूनुशस्तं नीलेन हतम् ॥ २ ॥

रा० टी०—गत्वेति । रक्षोधिपतेः रावणस्य समीपं गत्वा सेनापतिं प्रहस्तं पावकसूनुना नीलेन शस्तं हिंसितं शशंसुः राक्षसा इति शेषः रक्षोधिपः तेषां वचनं निशम्य क्रोधवशं जगाम ॥ २ ॥

गो० टी०—गत्वेति । पावकसूनुशस्तं पावकसूनुना नीलेन शस्तं हतम् । तच्चापीत्यनेन रावणेन स्वप्नेपि न तच्चिन्तितमिति सूच्यते । यद्वा शत्रोरुपचये स्वस्यापचये समाश्रयः कार्य- इति नीतिः । तथापि रावणः कालचोदिततया समाश्रयणं विहाय अस्थाने क्रोधवशं गत इत्यपिशब्देन सूच्यते ॥ २ ॥३॥

३ ] ति० टी०—निर्जरा देवाः ॥ ३ ॥

रा० टी०—सङ्ख्य इति । प्रहस्तं निहतं निशम्य शोकपरीतचेताः अत एव क्रोधार्दितो रावणः राक्षसयूथमुख्यान् इन्द्रो निर्जरयूथमुख्यानिव उवाच ॥ ३ ॥

४ ] ति० टी०—रिपवे रिपुभ्यस्तेषु रिपुष्ववज्ञा एते कपयः किं करिष्यन्तीत्येवंरूपा न कार्या, यैरिन्द्रबलसादनो मे सैन्यपालो वानररूपैः सूदितः ॥ ४ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । यैः इन्द्रबलसादनः सानुयात्रः अनुयायिवर्गसहितः मे सैन्यपालः सूदितः तेषां रिपवे रिपूणामवज्ञा इमे तुच्छा इति बुद्ध्या अनादरो न कार्या ॥ ४ ॥

गो० टी०—नावज्ञेति । रिपवे रामाय नावज्ञा कार्या उपेक्षा न कर्तव्या क्रियाग्रहणं कर्तव्यमिति चतुर्थी । यैश्च वानरैर्हेतुभिः मम सैन्यपालः प्रहस्तः सानुयात्रः सानुचरः सकुञ्जरश्च सूदितः तेभ्योपि नावज्ञा कार्येत्यर्थः । केचित्तु रिपवे रिपुभ्यः, अवज्ञा एते कपयः किं करिष्यन्तीत्येवंरूपा न कार्या । कुत इत्यत्राह—यैरित्यादीत्याहुः ॥ ४ ॥

५–६ ] ति० टी०—अविचारयन्रिपुबलं तृणीकुर्वन् । रणशीर्षं रणमूर्धानम् । युद्धभूमिमित्यर्थः ॥ ५ ॥ ६ ॥

---

१ तुल्यवेगमिति गो. पाठः । २ कथेति गो. रा. पाठः । ३ शोकेति गो. पाठः । ४ क्रोधेति गो. पाठः । ५ नैर्ऋतयोधेति गो. पाठः ६ चामरयोधेति गो. पाठः । ७ सूदन इति गो. पाठः । ८ इदमर्धमधिकं गो. पाठे ।

स एवमुक्त्वा ज्वलनप्रकाशं रथं तुरंगोत्तमराजियुक्तम् ।
प्रकाशमानं वपुषा ज्वलन्तं समारुरोहामरराजशत्रुः ॥ ॥ ७ ॥
स शङ्खभेरीपणवप्रणादैरास्फोटितक्ष्वेडितसिंहनादैः ।
पुण्यैः स्तवैश्चापि सुपूज्यमानस्तदा ययौ राक्षसराजमुख्यः ॥ ॥ ८ ॥
स शैलजीमूतनिकाशरूपैर्मांसाशनैः पावकदीप्तनेत्रैः ।
बभौ वृतो राक्षसराजमुख्यो भूतैर्वृतो रुद्र इवामरेशः ॥ ॥ ९ ॥
ततो नगर्याः सहसा महौजा निष्क्रम्य तद्वानरसैन्यमुग्रम् ।
महार्णवाभ्रस्तनितं ददर्श समुद्यतं पादपशैलहस्तम् ॥ ॥ १० ॥
तद्राक्षसानीकमतिप्रचण्डमालोक्य रामो भुजगेन्द्रबाहुः ।
विभीषणं शस्त्रभृतां वरिष्ठमुवाच सेनानुगतः पृथुश्रीः ॥ ॥ ११ ॥
नानापताकाध्वजछत्रजुष्टं प्रासासिशूलायुधशस्त्रजुष्टम् ।
कस्येदमक्षोभ्यमभीरुजुष्टं सैन्यं महेन्द्रोपमनागजुष्टम् ॥ ॥ १२ ॥

---

रा० टी०—स इति । सः श्रुतसेनापतिविनाशोहं रिपुविजयाय च आत्मन इति शेषः अविचारयन् रिपूंस्तुच्छतया गणयन्नहं रणशीर्षं स्वयमेव गमिष्यामि ॥ ५ ॥

रा० टी०—अद्येति । दीप्तैरग्निभिर्वनमिव बाणौघैः वानरानीकादि निर्दहिष्यामि निर्धक्ष्यामि ॥ ६ ॥

गो० टी०—सोहमिति । अद्भुतं दुर्बलैः प्रबलविनाशनादाश्चर्यम् ॥ ५ ॥ ६ ॥

७ ] ति० टी०—तुरंगोत्तमराजियुक्तम् । अनेन बह्वश्वयुक्तत्वं रथस्योक्तम् । वपुषा ज्वलन्तम्, अत एव स्वभासा प्रकाशमानम् ॥ ७ ॥

रा० टी०—स इति । अमरराजशत्रुः स रावणः ज्वलनप्रकाशमग्नितुल्यप्रकाशविशिष्टं राक्षसपृथमुख्यमेवं वचनमुक्त्वा प्रकाशमानं स्वर्णमयत्वेन स्वतः प्रकाशितं वपुषा रावणशरीरकान्त्या ज्वलन्तं प्रकाशमानं च रथं समारुरोह ॥ ७ ॥

गो० टी०—स एवमिति । तुरङ्गोत्तमराजैः तुरङ्गश्रेष्ठतमैः युक्तम् । प्रकाशमानम् अलङ्कारैर्भासमानम् वपुषा ज्वलन्तं स्वरूपत एव प्रकाशमानम् ॥ ७ ॥

८–९ ] ति० टी०—आस्फोटितानि भुजास्फालनानि क्ष्वेडितानि स्वशौर्यप्रकाशकशब्दाः । आस्फोटितादीन्यत्र सैनिकानाम् ॥ ८ ॥ ९ ॥

रा० टी०—सेति । शङ्खादिप्रणादसहितैः आस्फोटितादिभिः पुण्यैः स्तवैश्च सुपूज्यमानः राक्षसराजमुख्यो रावणो ययौ तत्र आस्फोटितानि भुजास्फालनानि क्ष्वेडिताः स्वस्वशौर्यप्रकाशकशब्दाः सिंहनादाः अट्टाट्टहासाः ॥ ८ ॥

गो० टी०—स शङ्खेति । आस्फोटितक्ष्वेलितसिंहनादैः आस्फोटितं भुजास्फालनम् । क्ष्वेलितशब्दः शब्दमात्रपरः । आस्फोटितजनितशब्दैः सिंहनादैश्चेत्यर्थः । पुण्यैः चारुभिः॥८॥

रा० टी०—स इति । शैलजीमूतनिकाशानि गिरिमेघयोः सदृशानि रूपाणि येषां तैर्मांसाशनैः राक्षसैर्वृतो राक्षसराजमुख्यो रावणो भूतैर्वृतोऽमरेशो रुद्र इव बभौ ॥ ९ ॥

गो० टी०—स इति । काठिन्यसिद्धये शैलौपम्यम् । संकोचविकासार्हत्वसिद्धयै मेघौपम्यम् । रूपं शरीरम् । रुद्रस्यामरेश्वरत्वं तामसप्रकृतित्वात् । तदुक्तं मैत्रायणीयामामुपनिषदि—यो ह वा अस्य तामसोंशः सोसौ रुद्र इति ॥ ९ ॥

१०] ति० टी०—महार्णवस्याभ्रस्य महामेघस्येव च स्तनितं यस्य तत् ॥ १० ॥

रा० टी०—तत इति । महौजा रावणः नगर्याः निष्क्रम्य महार्णवाभ्रयोरिव स्तनितं शब्दो यस्मिन् तत् समुद्यतं वानरसैन्यं ददर्श ॥ १० ॥

गो० टी०—तत इति । महार्णवाभ्रस्तनितं महार्णवाभ्रयोरिव स्तनितं घोषो यस्येति तथा ॥ १० ॥

११ ] ति० टी०—सेनयानुगतः सेनानुगतः ॥ ११ ॥

रा० टी०—तदिति । सेनामनुगतो रामः अतिप्रचण्डं राक्षसानीकमालोक्य विभीषणमुवाच ॥ ११ ॥

गो० टी०—तदिति । अतिप्रचण्डम् अत्यन्तकोपनम् । भुजगेन्द्रबाहुः युद्धोत्सुक्येन प्रवर्धमानबाहुरित्यर्थः पृथुश्रीः युद्धहर्षेण सञ्जातलक्ष्मीकः सेनानुगतः स्वामिसंरक्षणाय सर्वतः समवेतसेनापरिवृतः शस्त्रभृतां वरिष्ठं वीरभटतारतम्यज्ञमिति भावः ॥ ११ ॥

१२] ति० टी०—ध्वजछत्र इत्यभाव आर्षः । महेन्द्रोपमनागजुष्टं महेन्द्रपर्वततुल्यगजयुक्तम् । अभीरुभी रक्षोभिर्जुष्टम् १२

रा० टी०—तदाकारमाह—नानेति । पताकादिभिर्जुष्टं प्रासादिभिर्जुष्टं अभीरुभिः राक्षसैर्जुष्टं महेन्द्रोपमनागैर्जुष्टं अक्षोभ्यमिदं सैन्यं कस्य ॥ १२ ॥

---

१ राजेति गो.पाठः। २ अभीति गो.पाठः। ३ भदनैरिति गो.पाठः। ४ असुरेति गो.पाठः। ५ शङ्खेति गो.पाठः। ६ पूर्वोत्तरपादौ व्यत्यस्तौ गो.पाठे।

ततस्तु रामस्य निशम्य वाक्यं विभीषणः शक्रसमानवीर्यः ।
शशंस रामस्य बलप्रवेकं महात्मनां राक्षसपुंगवानाम् ॥ ॥ १३ ॥
योऽसौ गजस्कन्धगतो महात्मा नवोदितार्कोपमताम्रवक्त्रः ।
[1]संकम्पयन्नागशिरोऽभ्युपैति ह्यकम्पनं त्वेनमवेहि राजन् ॥ ॥ १४ ॥
योऽसौ रथस्थो मृगराजकेतुर्धून्वन्धनुः शक्रधनुः[2]प्रकाशम् ।
करीव भात्युग्रविवृत्तदंष्ट्रः स इन्द्रजिन्नाम वरप्रधानः ॥ ॥ १५ ॥
यश्चैष विन्ध्यास्तमहेन्द्रकल्पो धन्वी रथस्थोऽतिरथोऽतिवीरः ।
विस्फारयंश्चापमतुल्यमानं नाम्नातिकायोऽतिविवृद्धकायः ॥ ॥ १६ ॥
योऽसौ नवार्कोदितताम्रचक्षुरारुह्य घण्टानिनदप्रणादम् ।
गजं खरं गर्जति वै महात्मा महोदरो नाम स एष वीरः ॥ ॥ १७ ॥
योऽसौ हयं काञ्चनचित्रभाण्डमारुह्य संध्याभ्रगिरिप्रकाशः ।
प्रासं समुद्यम्य मरीचिनद्धं पिशाच एषोऽशनितुल्यवेगः ॥ ॥ १८ ॥

---

गो० टी०—नानेति । पताकाध्वजयोर्मात्रया भेदः प्रथमं शस्त्रशब्दः उपात्तः प्रासादिभिन्नपरः आयुधं धनुः । इन्द्रायुधमित्यादौ तथा प्रयोगात् । प्रासासिशूलायुधरूपैः शस्त्रैर्जुष्टमित्यर्थः वज्रजुष्टमिति पाठान्तरम् ॥ १२ ॥

१३ ] ति० टी०—बलप्रवेकं बलश्रेष्ठम् ॥ १३ ॥

रा० टी०—तत इति । विभीषणो रामस्य वाक्यं निशम्य राक्षसपुङ्गवानां बलप्रवेकं श्रेष्ठसैन्यं शशंस 'प्रवेकानुत्तमोत्तमाः' इत्यमरः ॥ १३ ॥

गो० टी०—तत इति । शक्रसमानवीर्य इत्यनेन वक्ष्यमाणं न भीतिमूलमिति द्योत्यते । बलप्रवेकं बलप्रवरम् । प्रवेकानुत्तमोत्तमा इत्यमरः । महात्मनां महाधैर्याणाम् ॥ १३ ॥

१४ ] ति० टी०—महात्मा महादेहः अयमकम्पनः पूर्वहतादन्य इति बोध्यम् । स्वशरीरभारात्स्वारूढनागस्य गजस्य शिरः संकम्पयन्नेति ॥ १४ ॥

रा० टी०—तदाकारमाह—य इत्यादिभिः । नवोदितार्कोपमं ताम्रवक्त्रं यस्य सः योऽसौ नागशिरस्संकम्पयन् अभ्युपैति तमेनमकम्पनमवेहि पूर्वहतादयमकम्पनोऽन्य इति नासम्भवः ॥ १४ ॥

गो० टी०—योसावीति । महात्मा महाकायः । नवोदितार्कोपमं ताम्रवक्त्रं यस्य स तथा । बालसूर्यमुखरागतुल्योस्य मुखराग इत्यर्थः । योसौ गजस्कन्धगतो दृश्यते स गजस्कन्धगतः स्वशरीरभारान्नागशिरः कम्पयन्नुपैति एनमकम्पनं रावणपुत्रमवेहि ॥ १४ ॥

१५ ] ति० टी०—उग्रा विवृत्ता दंष्ट्रा यस्य सः, तथा वरेण ब्रह्मदत्तवरेण प्रधानो राक्षसश्रेष्ठः ॥ १५ ॥

रा० टी०—य इति । मृगराजः मृगराजरेखाविशिष्टः केतुर्यस्य शक्रधनुःप्रकाशं धनुर्विधुन्वन् उग्रविवृत्तदंष्ट्रः योऽसौ विभाति सः वरः प्रधानो यस्य स इन्द्रजिन्नाम ॥ १५ ॥

गो० टी०—योऽसाविति । मृगराजकेतुः सिंहध्वजः । धनुः धून्वन्नित्यनेन भुजबलाधिक्यमुच्यते । करीवेत्यनेन कायबलम् । करितुल्यत्वे हेतुरुग्रविवृत्तदंष्ट्र इति । वरप्रधानः ब्रह्मदत्तान्तर्धानवरप्रधानः अनेन वरबलमुक्तम् ॥ १५ ॥

१६ ] ति० टी०—विन्ध्याचलास्ताचलमहेन्द्रपर्वतकल्पः शरीरेण । अतुल्यमानमनुपमप्रमाणम् ॥ १६ ॥

रा० टी०—यश्चेति । विन्ध्यस्य अस्तस्य अस्ताचलस्य महेन्द्रस्य च कल्पस्सदृशः य एषः अतुल्यमानं चापं विस्फारयन् दृश्यत इति शेषः सोऽतिकायः ॥ १६ ॥

गो० टी०—यश्चेति । विन्ध्यादित्रयौपम्येन उन्नतत्वपरतेजोभिभावकत्वनिश्चलत्वान्युच्यन्ते । अतिरथः सहस्राश्वयुक्तत्वेनातिशयितरथः । अतिवीरः मायाबलाभावेपीन्द्रजितोप्यतिशयितवीर्यः । अतुल्यमानम् अतिशयितपरिमाणं चापम् विस्फारयन् आकर्षन्नित्यर्थः । अत्रासावित्यध्याहार्यम् ॥ १६ ॥

१७ ] ति० टी०—घण्टानिनदैः प्रणादो यस्य तं खरं क्रूरं गजमारुह्य गर्जति ॥ १७ ॥

रा० टी०—योऽसाविति । नवार्कोदितवत् ताम्रे चक्षुषी यस्य सः घण्टानिनादेन प्रकृष्टः नादो यस्य तं खरं क्रूरं गजमारुह्य यो गर्जति स एष महोदरो नाम वीरः ॥ १७ ॥

गो० टी०—योऽसौ नवेति । नवार्कोदितताम्रचक्षुः नवोदितार्कताम्रचक्षुः घण्टानिनदप्रणादं घण्टानिनदेन प्रकृष्टो नादः स्वनो यस्य तम् । खरमिति क्रियाविशेषणम् ॥ १७ ॥

१८ ] ति० टी०—भाण्डमश्वाभरणम् । काञ्चनानि चित्रभाण्डानि यस्य तमश्वम् । पिशाचनामा ॥ १८ ॥

---

१ प्रेति गो. पाठः । २ प्रकाशमिति गो. पाठः ।

यश्चैष शूलं निशितं प्रगृह्य विद्युत्प्रभं किंकरवज्रवेगम् ।
वृषेन्द्रमास्थाय शशिप्रकाशमायाति योऽसौ त्रिशिरा यशस्वी ॥ ॥ १९ ॥
असौ च जीमूतनिकाशरूपः कुम्भः पृथुव्यूढसुजातवक्षाः ।
समाहितः पन्नगराजकेतुर्विस्फारयन्याति धनुर्विधुन्वन् ॥ ॥ २० ॥
यश्चैष जाम्बूनदवज्रजुष्टं दीप्तं सधूमं परिघं प्रगृह्य ।
आयाति रक्षोबलकेतुभूतो यो[3]ऽसौ निकुम्भोऽद्भुतवीरकर्मा ॥ ॥ २१ ॥
यश्चैष चापासिशरौघजुष्टं पताकिनं पावकदीप्तरूपम् ।
रथं समास्थाय विभात्युदग्रो नरान्तकोऽसौ नगशृङ्गयोधी ॥ ॥ २२ ॥
यश्चैष नानाविधघोररूपैर्व्याघ्रोष्ट्रनागेन्द्रमृगाश्ववक्त्रैः ।
भूतैर्वृतो भाति विवृत्तनेत्रैर्योऽसौ सुराणामपि दर्पहन्ता ॥ ॥ २३ ॥
यत्रैतदिन्दुप्रतिमं विभातिच्छत्रं सितं सूक्ष्मशलाकमग्र्यम् ।
अत्रैवं रक्षोधिपतिर्महात्मा भूतैर्वृतो रुद्र इवावभाति ॥ ॥ २४ ॥

---

रा० टी०–य इति । काञ्चनमयं चित्रं भाण्डमाभरणं यस्य तं हयमारुह्य योऽसौ मरीचिनद्धं दीप्तिसहितं प्रासं समुद्यम्य सन्ध्याभ्रगिरिप्रकाशः सन्ध्याभ्रगिरिभ्यामिव प्रकाशते स एषः पिशाचः तदभिधः ॥ १८ ॥

गो० टी०–योसौ हयमिति । काञ्चनचित्रभाण्डं काञ्चनमयनानाविधाश्वाभरणम् । स्याद्भाण्डमश्वाभरण इत्यमरः । अत एव सन्ध्याभ्रगिरिप्रकाशं सन्ध्याभ्रयुक्तगिरिप्रकाशम् हयमारुह्य । मरीचिनद्धं किरणैर्बद्धं प्रासमुद्यम्य गर्जतीति पूर्वश्लोकादनुषज्यते । एष पिशाचः पिशाचनामकः ॥ १८ ॥

१९ ] ति० टी०–किंकरभूतो वज्रवेगो यस्मिंस्तम् । त्रिशिराः, अत्रापि कश्चित्रिशिराः ॥ १९ ॥

रा० टी०–य इति । किङ्करः अकिञ्चित्कर इत्यर्थः वज्रवद् वेगा यस्मिन् तद् विद्युत्प्रभं शूलं प्रगृह्य शशिप्रकाशं वृषेन्द्रमास्थाय यो वायुवेग इव यः एष आयाति सोऽसौ त्रिशिराः ॥ १९ ॥

गो० टी०–यश्चेति । किंकरो वज्रवेगो यस्य तत् किङ्करवज्रवेगम् । वज्रवेगादप्यधिकवेगमित्यर्थः । वृषेन्द्रं वृषभेन्द्रम् । योसौ प्रसिद्धोऽसावित्यर्थः आयाति सोऽसौ त्रिशिरा इत्यपि पठन्ति ॥ १९ ॥

२० ] ति० टी०–कुम्भस्तन्नामा ॥ २० ॥

रा० टी०–असाविति । जीमूतनिकाशं मेघसदृशं रूपं यस्य स पृथु पीनं व्यूढं विशालं सुजातं सुंदरं वक्षो यस्य समाहितः युद्धैकमनाः पन्नगराजविशिष्टः केतुर्यस्य सोऽसौ कुम्भः धनुर्विस्फारयन् अतिस्फूर्तिं प्रापयन् धनुर्विधुन्वन् याति आयाति ॥ २० ॥

गो० टी०–असाविति । पृथुव्यूढसुजातवक्षाः पृथु पीनं व्यूढं विशालं सुजातं सुन्दरं च वक्षो यस्य स तथोक्तः । समाहितः सन्नद्धः । धनुर्विस्फारयन् ज्यामवलम्ब्य कर्षन् । पुनर्लीलया विधून्वन् असौ कुम्भो याति । अत्र यच्छब्दाप्रयोगः सन्निहितत्वादिति भाव्यम् ॥ २० ॥

२१ ] ति० टी०–जाम्बूनदवज्रजुष्टं जाम्बूनदेन वज्रैर्हीरकादिरत्नैश्च युक्तम्, अत एव दीप्तम् सधूमं नीलमणिकान्त्या सधूममिव ॥ २१ ॥

रा० टी०–य इति । जाम्बूनदवज्राभ्यां सुवर्णहीरकाभ्यां जुष्टं संयुक्तं सधूमं संयुक्तनीलमणिना धूमविशिष्टत्वेन प्रतीयमानं परिघं प्रगृह्य य एष आयाति यश्च अद्भुतवीरकर्मा सोऽसौ निकुम्भः ॥ २१ ॥

गो० टी०–यश्चेति । जाम्बूनदवज्राभ्यामन्योन्यमिलिताभ्यां जुष्टम् अत एव दीप्तं ज्वालायुक्तम् सधूमं सधूममिव स्थितम् अभेदनिर्देशः सर्वथा सादृश्यप्रतिपत्तये । रक्षोबलकेतुभूतः रक्षोबलप्रधानभूत इत्यर्थः ॥ २१ ॥

२२ ] ति० टी०–पावकवद्दीप्तं रूपं यस्य तम् । नगशृङ्गयोधी । प्रतियोद्धभावाद्भुजकण्डूनिवृत्त्यर्थमिति भावः ॥२२॥

रा० टी०–य इति । चापादिसमूहैः सेवितं रथं समास्थाय उदग्रो अत्युन्नतः योऽसौ विभाति सः नगश्रृंगयोधी नरान्तकः तदभिधः । नगश्रृंगयोधीत्यनेन स्वसदृशं योद्धारं स न लभते इति सूचितम् ॥ २२ ॥

गो० टी०–यश्चैष इति । उदग्रः उन्नतः । नगश्रृङ्गैः साधनैः युध्यत इति नगश्रृङ्गयोधी । प्रतियोद्धभावात् भुजकण्डूनिवृत्त्यर्थं नगैः सह युध्यत इति वार्थः ॥ २२ ॥

२३] ति० टी०–योऽसौ कोऽसौ तत्राह—यः सुराणामपि दर्पहा । रावण इति शेषः । भूतैर्भूतगणैः ॥ २३ ॥

२४] ति टी०–क्वासौ तत्राह–यत्रेति । यत्र देशे इन्दुप्रतिमत्वादिगुणकं छत्रं भात्यत्रैव रक्षोधिपतिः । भूतैर्भूतगणैः॥२४॥

---

१ गिरीति गो. पाठः । २ भातीति गो. पाठः । ३ त्वसाविति गो. पाठः । ४ योगेति गो. पाठः । ५ तत्रैवेति रा. अत्रैष इति गो. पाठः ।

असौ किरीटी चलकुण्डलास्यो नगेन्द्रविन्ध्योपमभीमकायः ।
महेन्द्रवैवस्वतदर्पहन्ता रक्षोधिपः सूर्य इवावभाति ॥ ॥ २५ ॥
प्रत्युवाच ततो रामो विभीषणमरिंदमः । अहो दीप्तमहातेजा रावणो राक्षसेश्वरः ॥ २६ ॥
आदित्य इव दुष्प्रेक्ष्यो रश्मिभिर्भाति रावणः । नै व्यक्तं लक्षये ह्यस्य रूपं तेजःसमावृतम् ॥ २७ ॥
देवदानववीराणां वैपुर्नैवंविधं भवेत् । यादृशं राक्षसेन्द्रस्य वपुरेतद्विराजते ॥ २८ ॥
सर्वे पर्वतसंकाशाः सर्वे पर्वतयोधिनः । सर्वे दीप्तायुधधरा योधास्तस्य महात्मनः ॥ २९ ॥
विभाति रक्षोराजोऽसौ प्रदीप्तैर्भीमदर्शनैः । भूतैः परिवृतैस्तीक्ष्णैर्देहवद्भिरिवान्तकः ॥ ३० ॥
दिष्ट्यायमद्य पापात्मा मम दृष्टिपथं गतः । अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम् ॥ ३१ ॥
एवमुक्त्वा ततो रामो धनुरादाय वीर्यवान् । लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमम् ॥ ३२ ॥
ततः स रक्षोधिपतिर्महात्मा रक्षांसि तान्याह महाबलानि ।
द्वारेषु चर्यागृहगोपुरेषु सुनिर्वृतास्तिष्ठत निर्विशङ्काः ॥ ॥ ३३ ॥

---

रा० टी०-य इति । सूक्ष्मा शलाका यस्मिन् इन्दुप्रतिमम् इन्दुसदृशं सितमर्घ्यं श्रेष्ठमिदं छत्रं यत्र विभाति तत्रैव व्याघ्रादीनां वक्त्राणीव वक्त्राणि येषां तैः भूतैर्वृतो यो भाति योऽसौ सुराणामपि दर्पहंता स एव रक्षोधिपतिः रावणः भूतैर्वृतो रुद्र इव अवभाति । श्लोकद्वयमेकान्वयि ॥२३॥२४॥

गो० टी०-अथ त्रिभिः रावणं दर्शयति—यश्चेति । विवृत्तनेत्रैः घूर्णितनेत्रैः ॥ २३ ॥ २४ ॥

२५-२६ ] ति० टी०-नगेन्द्रो यो विन्ध्यस्तद्वद्भीमः कायो यस्य सः ॥ २५ ॥ २६ ॥

रा० टी०-रावणमेवाह—असाविति । किरीटी प्रशस्तकिरीटवान् चलकुण्डलैः युक्तानि आस्यानि यस्य नगेन्द्रो यो विन्ध्यः तदुपमो भीमः कायो यस्य स रक्षोधिपो रावणः सूर्य इव अवभाति ॥ २५ ॥

गो० टी०-असाविति । नगेन्द्रः हिमवान् ॥ २५ ॥

रा० टी०-प्रतीति । रामो विभीषणं प्रत्युवाच तदाकारमाह—महातेजा रावणः अहो आश्चर्यं दीप्तः ॥ २६ ॥

गो० टी०-अहो इति । दीप्तः कान्तिमान् । महातेजाः महाप्रतापः ॥ २६ ॥

२७-२९ ] ति० टी०-न व्यक्तं लक्षये इत्यत्र हेतुः—तेजःसमावृतमिति । रूपं सूक्ष्मावयवसंस्थानम् ॥२७-२९॥

रा० टी०-आश्चर्यत्वमेवाह—आदित्य इति । रावणः रश्मिभिः आदित्य इव दुष्प्रेक्ष्योऽस्तीति शेषः अत एव तेजस्समावृतमस्य रूपं व्यक्तं न लक्षये ॥ २७ ॥

गो० टी०-आदित्य इति । आदित्य इव रश्मिभिः दुष्प्रेक्ष्यः प्रेक्षितुमशक्यः । अनयोरर्धयोर्भिन्नवाक्यत्वान्न पुनरुक्तिशङ्का ॥ २७ ॥

रा० टी०-देवेति । यादृशं राक्षसेंद्रस्य एतद्वपुर्विराजते एवंविधं वपुः देवदानवयोर्वीराणां भवति ॥ २८ ॥

रा० टी०-सर्वे इति । महात्मनो रावणस्य सर्वे योधाः पर्वतसंकाशप्रभृतयस्सन्तीति शेषः ॥ २९ ॥

गो० टी०-देवेत्यर्धद्वयमेकं वाक्यम् ॥ २८ ॥ २९ ॥

३०-३२ ] ति० टी०-देहवद्भिः प्रशस्तदेहैः ॥३०-३२॥

रा० टी०-विभातीति । देहवद्भिर्भूतैः परिवृतोऽसौ रावणः अन्तक इव विभाति ॥ ३० ॥

गो० टी०-भातीति । देहवद्भिः प्रशस्तदेहैः ॥ ३० ॥

रा० टी०-दिष्ट्येति । सीताहरणसम्भवं क्रोधमद्य विमोक्ष्यामि अतः दिष्ट्या अतिभाग्योदयेन अयं रावणो मम दृष्टिपथं गतः ॥ ३१ ॥

रा० टी०-एवमिति । रामः एवमुक्त्वा धनुरादाय शरोत्तमं समुद्धृत्य तस्थौ ॥ ३२ ॥

गो० टी०-दिष्ट्येति । क्रोधं विमोक्ष्यामि क्रोधं कार्यकरं करिष्यामीत्यर्थः । मम दृष्टिपथं गत इति पाठः ॥ ३१ ॥ ३२ ॥

३३ ] ति० टी०-द्वारेषु लङ्कायाश्चतुर्ष्वपि द्वारेषु । चर्या महामार्गाः, गृहं मूलायतनम्, तस्य गोपुराणि बहिर्द्वारप्रासादाः सुनिर्वृताः सुखिनः । निर्विशङ्का निर्भयाः ॥ ३३ ॥

रा० टी०-तत इति । रक्षोधिपतिः रक्षांसि आह तदाकारमाह—द्वारेषु लङ्कानिर्गमनिखिलद्वारेषु चर्याणां महामार्गाणां यानि गृहाणि तेषां गोपुरेषु बहिर्द्वारेषु च निर्विशङ्काः शङ्कारहिताः अत एव सुनिर्वृताः सानंदाः यूयं तिष्ठत ॥ ३३ ॥

गो० टी०-तत इति । द्वारेषु अन्तर्द्वारेषु । चर्यागृहाः पुरद्वारेषु गोपुरपार्श्वयोः भटनिवासार्थं निर्मिता चित्रकूटा गृहाः चर्यागृहाः सुनिर्वृताः अतिसुखिताः ॥ ३३ ॥

---

१ दुर्मार्गेति गो. पाठः । २ दीप्त इति गो. रा. पाठः । ३ स्त्विति गो.पाठः । ४ वपुरेवमिति रा. पाठः । ५ प्रकाशत इति गो.पाठः । ६ चास्यमहौजस इति गो. पाठः । ७ भाति राक्षस राज इति गो. पाठः । ८ प्रदीप्त इति रा. पाठः । ९ विक्रमैरिति गो. पाठः ।

इहागतं मां सहितं भवद्भिर्वनौकसश्छिद्रमिदं विदित्वा ।
शून्यां पुरीं दुष्प्रसहां प्रमथ्य प्रधर्षयेयुः सहसा समेताः ॥ ॥ ३४ ॥
विसर्जयित्वा सचिवांस्ततस्तान्गतेषु रक्षःसु यथानियोगम् ।
व्यदारयद्वानरसागरौघं महाझषः पूर्णमिवार्णवौघम् ॥ ॥ ३५ ॥
तमापतन्तं सहसा समीक्ष्य दीप्तेषुचापं युधि राक्षसेन्द्रम् ।
महत्समुत्पाट्य महीधराग्रं दुद्राव रक्षोधिपतिं हरीशः ॥ ॥ ३६ ॥
तच्छैलशृङ्गं बहुवृक्षसानुं प्रगृह्य चिक्षेप निशाचराय ।
तमापतन्तं सहसा समीक्ष्य चिच्छेद बाणैस्तपनीयपुङ्खैः ॥ ॥ ३७ ॥
तस्मिन्प्रवृद्धोत्तमसानुवृक्षे शृङ्गे विदीर्णे पतिते पृथिव्याम् ।
महाहिकल्पं शरमन्तकाभं समादधे राक्षसलोकनाथः ॥ ॥ ३८ ॥
स तं गृहीत्वानिलतुल्यवेगं सविस्फुलिङ्गज्वलनप्रकाशम् ।
बाणं महेन्द्राशनितुल्यवेगं चिक्षेप सुग्रीववधाय रुष्टः ॥ ॥ ३९ ॥
स सायको रावणबाहुमुक्तः शक्राशनिस्पर्शवपुः प्रकाशम् ।
सुग्रीवमासाद्य बिभेद वेगाद्गुहेरिता क्रौञ्चमिवोग्रशक्तिः ॥ ॥ ४० ॥

---

३४ ] ति० टी०—इदं छिद्रं रणभूमौ सपरिवारस्यागमनरूपम् ॥ ३४ ॥

रा० टी०—तत्प्रयोजनमाह—इहेति । भवद्भिः सहितमिहागतं मामिदं छिद्रमवकाशं विदित्वा समेताः वनौकसः पुरीं लङ्कां प्रमथ्य संपीड्य प्रधर्षयेयुः पराभवं प्रापयेयुः ॥ ३४ ॥

गो० टी०—इहेति । इहागतं मां विदित्वा इदम् छिद्रं विदित्वेत्यन्वयः प्रमथ्य ध्वंसित्वा । प्रधर्षयेयुः अभिभवेयुः॥३४॥

३५ ] ति० टी०—अर्णवौघं समुद्रजलसमूहम् ॥ ३५ ॥

रा० टी०—विसर्जयित्वेति । सचिवान् विसर्जयित्वा विसर्ज्य तत्तत्कार्ये नियुज्य रक्षःसु यथानियोगं गतेषु सत्सु महाझषः पूर्णमर्णवौघमिव वानरसागरौघं व्यदारयत् रावण इति शेषः ॥ ३५ ॥

गो० टी०—विसर्जयित्वेति । सहितान् संमिलितान् । महाझषः महामत्स्यः ॥ ३५ ॥

३६ ] ति० टी०—दीप्ता इषवश्चापश्च यस्य तम् ॥ ३६ ॥

रा० टी०—तमिति । हरीशः सुग्रीवः आपतन्तं राक्षसेन्द्रं समीक्ष्य महत् महीधराग्रं गिरिशृङ्गं समुत्पाट्य रक्षोधिपतिं दुद्राव जगाम ॥ ३६ ॥

गो० टी०—तमिति । दीप्ते इषुचापे यस्य स तथोक्तः । युधि संयुगनिमित्तं सहसा आपतन्तं राक्षसेन्द्रं समीक्ष्य महीधराग्रं पर्वतशृङ्गं समुत्पाट्य हरीशः सुग्रीवः रक्षोधिपतिं दुद्राव ॥ ३६ ॥

३७-३९ ] ति० टी०—शृङ्गशब्दोऽर्धर्चादिः पुंस्यपि ३७-३९

रा० टी०—तदिति । बहुवृक्षसानुमनेकविधतरुप्रस्तरविशिष्टं तत् शैलशृङ्गं प्रगृह्य निशाचराय चिक्षेप शृङ्गशब्दः अर्धर्चादित्वात्पुमानपि आपतन्तं शृङ्गं समीक्ष्य बाणैः चिच्छेद रावण इति शेषः ॥ ३७ ॥

रा० टी०—तस्मिन्निति । प्रवृद्धाः उत्तमसानुवृक्षाः यस्मिन् तस्मिन् शृङ्गे विदीर्णे पतिते च सति महाहिकल्पम् अन्तकवत्प्रतीयमानं शरं राक्षसलोकनाथः समादधे ॥ ३८ ॥

गो० टी०—बहुवृक्षसानुं । बहुतरुयुततटम् । तपनीयं स्वर्णम् ॥ ३७ ॥ ३८ ॥

रा० टी०—स इति । अनिलतुल्यवेगं सविस्फुलिङ्गो यो ज्वलनो वह्निः तद्वत्प्रकाशो यस्य तं बाणं रुष्टो रावणः चिक्षेप ॥ ३९ ॥

गो० टी०—स तमिति । महेन्द्राशनिः वज्रम् । औत्पातिकाशनिव्यावृत्तये महेन्द्रपदम् । यद्वा महेन्द्रसंबन्धोक्तिः अभ्यासवता मुक्तत्वेनातिवेगद्योतनाय ॥ ३९ ॥

४० ] ति० टी०—शक्राशनिस्पर्शवच्छरीरः सुग्रीवमासाद्य प्राप्य, अर्थात्तमेव बिभेद । गुहेरितोग्रशक्तिः क्रौञ्चमिव ॥४०॥

रा० टी०—स इति । रावणबाहुना मुक्तः प्रच्युतः स सायकः शक्राशनिस्पर्शवत् यद्वपुः तेन प्रकाशते तं सुग्रीवमासाद्य प्राप्य गुहेरितोग्रशक्तिः क्रौञ्चमिव बिभेद ॥ ४० ॥

गो० टी०—स इति । शक्राशनिप्रख्यं शक्राशनितुल्यं वपुः यस्य । गुहः स्कन्दः ॥ ४० ॥

---

१ बिभेदेति गो. पाठः । २ विकीर्णे इति गो. पाठः । ३ प्रख्येति गो. पाठः ।

स सायकार्तो विपरीतचेताः कूजन्पृथिव्यां निपपात वीरः ।
तं वीक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टा युधि यातुधानाः ॥ ॥ ४१ ॥
ततो गवाक्षो गवयः सुषेणस्त्वृषभो ज्योतिमुखो नलश्च ।
शैलान्समुत्पाट्य विवृद्धकायाः प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम् ॥ ॥ ४२ ॥
तेषां प्रहारान्स चकार मोघान्रक्षोधिपो बाणशतैः शिताग्रैः ।
तान्वानरेन्द्रानपि बाणजालैर्बिभेद जाम्बूनदचित्रपुङ्खैः ॥
ते वानरेन्द्रास्त्रिदशारिबाणैर्भिन्ना निपेतुर्भुवि भीमकायाः ॥ ॥ ४३ ॥
ततस्तु तद्वानरसैन्यमुग्रं प्रच्छादयामास स बाणजालैः ।
ते वध्यमानाः पतिताश्च वीरा नानद्यमाना भयशल्यविद्धाः ॥
शाखामृगा रावणसायकार्ता जग्मुः शरण्यं शरणं स्म रामम् ॥ ॥ ४४ ॥
ततो महात्मा स धनुर्धनुष्मानादाय रामः सहसा जगाम ।
तं लक्ष्मणः प्राञ्जलिरभ्युपेत्य उवाच रामं परमार्थयुक्तम् ॥ ॥ ४५ ॥
काममार्य सुपर्याप्तो वधायास्य दुरात्मनः । विधमिष्याम्यहं चैतमनुजानीहि मां विभो ॥ ४६ ॥
तमब्रवीन्महातेजा रामः सत्यपराक्रमः । गच्छ यत्नपरश्चापि भव लक्ष्मण संयुगे ॥ ४७ ॥

४१-४३ ] ति० टी०—विपरीतचेताः । अचेता इति यावत् ॥ ४१-४३ ॥

रा० टी०—स इति । सायकेनार्तः पीडितः अत एव विपरीतचेताः स सुग्रीवः पृथिव्यां निपपात भूमौ पतितं तं वीक्ष्य यातुधानाः प्रहृष्टाः बभूवुरिति शेषः ॥ ४१ ॥

गो० टी०—स सायकेति । विपरीतचेताः भ्रान्तचित्तः ॥ ४१

रा० टी०—तत इति । गवाक्षप्रभृतयश्शैलान् समुद्यम्य उत्पाट्य राक्षसेन्द्रं प्रदुद्रुवुः ॥ ४२ ॥

रा० टी०—तेषामिति । रक्षोधिपः तेषां गवाक्षादीनां प्रहारान् बाणशतैः मोघान् निष्फलांश्चकार तत्प्रक्षिप्तशैलान् विदारयामासेत्यर्थः वानरेन्द्रान् गवाक्षादीनपि बाणजालैर्बिभेद ४३

रा० टी०—ते इति । त्रिदशारेः रावणस्य बाणैर्भिन्नाः वानरेन्द्राः भुवि निपेतुः ततोऽनन्तरमुग्रवानरसैन्यं बाणजालैः स रावणः छादयामास ॥ ४४ ॥

गो० टी०—तत इति । ज्योतिमुखः ज्योतिर्मुखः ॥ ४२-४४ ॥

४४ ] ति० टी०—भयमेव शल्यं तेन विद्धाः शरण्यं रामं शरणं जग्मुः ॥ ४४ ॥

रा० टी०—ते इति । वध्यमानाः अत एव रावणसायकार्ताः अत एव भयशल्येन भयङ्करशरेण विद्धाः अत एव पतिताः क्वचित् क्वचित् स्खलिताः ते वानराः शरणं दुर्जनविघातकं शरण्यं रामं जग्मुः ॥ ४५ ॥

गो० टी०—ते वध्यमाना इति । ते प्रसिद्धाः वानरेन्द्राः न तु क्षुद्राः वध्यमानाः प्रथमं हिंस्यमानाः । ततः पतिताः रावणवेगेन भूमौ पतिताः । तदानीं रक्षकान्तरादर्शनान्नानद्यमानाः अतिशयेन नदन्तः । "नदतेर्यङि सन्यङोः" इत्यभ्यासदीर्घादिः । भयशल्यविद्धाः तादृशहेतुना भयरूपशल्येन विद्धाः शाखामृगाः वनचारित्वेनैतादृशभयानभिज्ञाः । उक्तप्रकारेण सायकार्ताः सन्तः शरण्यं सर्वलोकशरणार्हं रामं शरणं जग्मुः । एतेनार्तिरेव शरणागतिप्रयोजिका न तु देशकालाधिकारिफलनियमा इत्युक्तम् ॥ ४५ ॥

४५ ] ति० टी०—धनुष्मान्प्रशस्तधनुष्कः स धनुरादायेत्यन्वयः ॥ ४५ ॥

रा० टी०—तत इति । ततो वानरप्राप्त्यनन्तरं धनुष्मान् प्रशस्तधनुस्स्वामी स प्रसिद्धो रामः जगाम लक्ष्मणः तं गच्छन्तं रामं प्राञ्जलिः सन् अभ्युपेत्य परमार्थयुक्तं वचनमुवाच ॥ ४६ ॥

गो० टी०—शरणागतकृत्यमुक्त्वा शरण्यकृत्यमाह—तत इति । अत्र प्रपत्तेरार्तप्रपत्तिरूपतया तस्याः सद्यःफलद्योतनाय तत इत्युक्तम् । प्रपत्त्युत्तरक्षण इत्यर्थः । महात्मा शरणागततारतम्यज्ञः धनुष्मान् प्रशस्तधनुष्कः धनुर्युद्धसमर्थ इत्यर्थः । सहसेत्यनेन लक्ष्मणः स्वयं गमिष्यामीति तत्पूर्वमेवाश्रितत्राणत्वरया सधनुः सन् जगामेत्युक्तम् । तथैव घट्टकुट्यां प्रभातमित्याह—तमिति । तम् आर्तत्राणत्वरया व्रजन्तम् । लक्ष्मणः रामकैङ्कर्यलक्ष्मीसंपन्नः । अनतिक्रमणाय नाथं निगलयति—प्राञ्जलिरिति । अभ्युपेत्य अभितः उपेत्य । अनेन लक्ष्मणागमनमजानन्निव नानापार्श्वेषु रामोनेकधा जगामेत्यवगम्यते । परमार्थयुक्तं न तूपचारयुक्तम् । यद्वा परमार्थयुक्तं परमप्रयोजनयुक्तम् । शेषिविषये कैङ्कर्यस्य शेषभूतं प्रति परमप्रयोजनत्वात् ॥ ४६ ॥

४६-४७ ] ति० टी०—पर्याप्तः । अहमिति शेषः ॥ ४६ ॥ ४७ ॥

१ सुदंष्ट्रस्तथर्षभ इति गो. पाठः । २ नभ इति गो. पाठः । ३ समुत्क्षिप्येति गो. पाठः । ४ गणैरिति गो. पाठः । ५ प्रेति गो. पाठः । ६ वाक्यमिति गो. पाठः । ७ आर्यः इति गो. पाठः । ८ चैनमिति रा. नीचं मिति गो. पाठः । ९ प्रभो इति गो. पाठः ।

रावणो हि महावीर्यो रणेऽद्भुतपराक्रमः । त्रैलोक्येनापि संक्रुद्धो दुष्प्रसह्यो न संशयः ॥ ४८ ॥
तस्यच्छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय । चक्षुषा धनुषात्मानं गोपायस्व समाहितः ॥ ४९ ॥
राघवस्य वचः श्रुत्वा [2]संपरिष्वज्य पूज्य च । अभिवाद्य [3]च रामाय ययौ सौमित्रिराहवे[4] ॥ ५० ॥
स रावणं वारणहस्तबाहुं ददर्श भीमोद्यतदीप्तचापम् ।
प्रच्छादयन्तं शरवृष्टिजालैस्तान्वानरान्भिन्नविकीर्णदेहान् ॥ ॥ ५१ ॥
तमालोक्य महातेजा हनूमान्मारुतात्मजः । निवार्य शरजालानि वि[5]दुद्राव स रावणम् ॥ ५२ ॥
रथं तस्य समासाद्य [6]बाहुमुद्यम्य दक्षिणम् । त्रासयन्रावणं धीमान्हनूमान्वाक्यमब्रवीत् ॥ ५३ ॥
देवदानवगन्धर्वैर्यक्षैश्च सह राक्षसैः । अवध्यत्वं त्वया प्राप्तं वानरेभ्यस्तु ते भयम् ॥ ५४ ॥

रा० टी०–तदाकारगाह–काममिति । हे आर्य अस्य वधाय सुपर्याप्तोहमेनं कामं विधमिष्यामि अतो मामेव आज्ञापय ॥ ४७ ॥

गो० टी०–काममिति । हे आर्य, अस्य दुरात्मनः परदारापहरणविषयदुर्बुद्धेः कामं प्रकामं वधाय सुपर्याप्तः सुशक्तोसि । तथापि नीचं भवता योद्धुमनर्हम् अहं वधिष्यामि । महाबलेन भवता नीचोऽयं न योद्धुमर्ह इति भावः । यद्वा अस्य वधायाहं पर्याप्तोस्मीत्यर्थः । तर्हि स्वयमेव गम्यतामित्यत्राह–अनुजानीहीति । प्रभो शेषिन् त्वं मां शेषभूतमनुजानीहि । भवदनुज्ञामन्तरेण मे कार्यकरणं स्वरूपहानिकरमिति भावः॥४७

रा० टी०–तमिति । रामस्तं लक्ष्मणमब्रवीत् तदाकारमाह हे लक्ष्मण गच्छ संयुगे यत्नपरश्च भव ॥ ४८ ॥

गो० टी०–तमिति । तं विनयेनोक्तवन्तम् । महातेजाः तादात्विकहर्षप्रकर्षावेदकसुषमाविशेषशाली । सति कस्मिंश्चिद्विधेये सति । अपराक्रमः निवृत्तपराक्रमः अब्रवीत् ॥ ४८ ॥

गो० टी०–गच्छेत्यादि । नीचपदसूचितमनादरं वारयति–यत्नपर इति । युद्धे यत्नपरश्चापि भव यथा युद्धपरोसि एवं यत्नपरो भव । यत्नस्यावश्यकर्तव्यत्वे हेतुमाह–रावण इति । अद्भुतपराक्रमः एकमस्त्रमाददान इवापरं सन्धत्ते तत्संदधान इवापरं मोक्षयतीत्यर्थः । त्रिलोक्येव त्रैलोक्यं तेन । युगपद्युद्धप्रवृत्तेनेत्यर्थः । यत्नपरत्वं दर्शयति–तस्येति । चक्षुषा तस्य रावणस्य । छिद्राणि अनवधानादीनि । यत्नान्मार्गस्व अन्वेषयस्व । स्वच्छिद्राणि लक्षय काकान् पश्येतिवत् स्वस्य छिद्राणि यथा न भवन्ति तथा पश्येत्यर्थः । यद्वा लक्षय लक्षित्वा प्रच्छादयेत्यर्थः । एवं समाहितः सावधानः सन् धनुषा आत्मानं रक्ष ॥ ४९ ॥ ५० ॥

४८ ] ति० टी०–त्रैलोक्येनापि । तद्वर्तिदेवादिसमूहैरित्यर्थः ॥ ४८ ॥

रा० टी०–तत्र हेतुमाह रावण इति । महावीर्यः अत एव रणे अद्भुतपराक्रमः संक्रुद्धो रावणः त्रैलोक्येन त्रिलोकीवर्तिजनेन दुःप्रसह्यः सोढुमशक्यः संशयः अत्र संदेहो न ॥४९॥

४९–५४ ] ति० टी०–छिद्राणि प्रहारावसरान् । स्वच्छिद्राणि चेत्यस्य गोपायेति शेषः । चक्षुषा स्वच्छिद्रं च लक्षय सम्यगवलोकय । ततो धनुषा धनुर्व्यापारेणात्मानं रक्ष॥४९–५४॥

रा० टी०–तस्येति । तस्य रावणस्य छिद्राणि प्रहारसमयान् मार्गस्व विचारय अत एव समाहितस्सावधानस्सन् आत्मानं गोपायस्व स्वच्छिद्राणि स्वप्रहारसमयांश्च चक्षुषा लक्षय अत एव धनुषा धनुस्सन्धितशरप्रहारेण रिपुं जहीति शेषः ॥ ५० ॥

रा० टी०–राघवस्येति । सौमित्रिः रामाय अभिवाद्य आहवे ययौ ॥ ५१ ॥

गो० टी०–राघवस्येति । अभिपूज्य प्रदक्षिणीकृत्येत्यर्थः ॥ ५१ ॥ ५२ ॥

रा० टी०–स इति । स लक्ष्मणो भीममुद्यतं दीप्तं चापं यस्य तं शरवृष्टिजालैर्भिन्ना विदीर्णाः प्रक्षिप्ता देहा येषां तान् वानरान् शरवृष्टिजालैः प्रच्छादयन्तं वारणहस्ता इव बाहवो यस्य तं रावणं ददर्श ॥ ५२ ॥

रा० टी०–तमिति । महातेजा हनुमान् तं रावणमालोक्य शरजालानि निवार्य शैलप्रक्षेपादिना भित्त्वा विदुद्राव तत्समीपं ययौ ॥ ५३ ॥

गो० टी०–तमालोक्येति । भृत्ये मयि विद्यमाने कथमसौ समासीदतीति जगामेत्यर्थः ॥ ५३ ॥ ५४ ॥

रा० टी०–रथमिति । तस्य रावणस्य रथं समासाद्य रावणं त्रासयन् सन् दक्षिणं बाहुमुद्यम्य उत्थाप्य हनुमान् वाक्यमब्रवीत् ॥ ५४ ॥

रा० टी०–तदाकारमाह—देवेति । देवादिभिरेव अवध्यत्वं त्वया प्राप्तमतो वानरेभ्यः प्राकृतनरसदृशेभ्यः प्राकृतविलक्षणजनेभ्य इत्यर्थस्ते भयमस्त्येव ॥ ५५ ॥

गो० टी०–देवेति । भयं प्राप्तमिति शेषः ॥ ५५ ॥

१ यत्नाद्रक्षात्मानमिति गो. पाठः । २ परिष्वज्याभिपूज्य चेति गो. पाठः । ३ ततो राममिति गो. पाठः । ४ आहवमिति गो. पाठः । ५ बाहुरिति गो. पाठः । ६ प्रेति गो. पाठः । ७ भुजामिति गो. पाठः ।

एष मे दक्षिणो बाहुः पञ्चशाखः समुद्यतः । विधमिष्यति ते देहे[1] भूतात्मानं चिरोषितम् ॥ ५५ ॥
श्रुत्वा हनूमतो वाक्यं रावणो भीमविक्रमः । संरक्तनयनः क्रोधादिदं वचनमब्रवीत् ॥ ५६ ॥
क्षिप्रं प्रहर निःशङ्कं स्थिरां कीर्तिमवाप्नुहि । ततस्त्वां ज्ञातविक्रान्तं नाशयिष्यामि वानर ॥ ५७ ॥
रावणस्य वचः श्रुत्वा वायुसूनुर्वचोऽब्रवीत् । प्रहृतं[2] हि मया पूर्वमक्षं तव सुतं स्मर ॥ ५८ ॥
एवमुक्तो महातेजा रावणो राक्षसेश्वरः । आजघानानिलसुतं तलेनोरसि वीर्यवान् ॥
स तलाभिहतस्तेन चचाल च मुहुर्मुहुः ॥ ॥ ५९ ॥
स्थितो[3] मुहूर्तं तेजस्वी स्थैर्यं कृत्वा महामतिः । आजघान च संक्रुद्धस्तलेनैवामरद्विषम् ॥ ६० ॥
ततः स[4] तेनाभिहतो वानरेण महात्मना । दशग्रीवः समाधूतो यथा भूमिचलेऽचलः ॥ ६१ ॥
सङ्ग्रामे तं तथा दृष्ट्वा रावणं तलताडितम् । ऋषयो वानराः सिद्धा नेदुर्देवाः सुरासुरैः[5] ॥ ६२ ॥
अथाश्वस्य[6] महातेजा रावणो वाक्यमब्रवीत् । साधु वानर वीर्येण श्लाघनीयोऽसि मे रिपुः ॥ ६३ ॥
रावणेनैवमुक्तस्तु मारुतिर्वाक्यमब्रवीत् । धिगस्तु मम वीर्यस्य[7] यत्त्वं जीवसि रावण ॥ ६४ ॥
सकृत्तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे । ततस्त्वां मामको[8] मुष्टिर्नयिष्यति यमक्षयम् ॥ ६५ ॥
ततो मारुतिवाक्येन कोपस्तस्य प्रजज्वले[10] । संरक्तनयनो यत्नान्मुष्टिमावृत्य[11] दक्षिणम् ॥
पातयामास वेगेन वानरोरसि वीर्यवान् ॥ ६६ ॥

५५-५६ ] ति० टी०-पञ्चशाखः पञ्चाङ्गुलियुक्तः । तव देहे चिरोषितं भूतात्मानं तव देहाद्विधमिष्यत्यपहरिष्यति ५५॥५६

रा० टी०-ननु किं तेनेत्यत आह-एष इति । पंचशाखः पञ्चाङ्गुलिमुद्यत एष मे दक्षिणो बाहुः ते देहे चिरोषितं भूतात्मानं प्राणानित्यर्थः विधमिष्यति विध्वंसयिष्यति ॥ ५६ ॥

रा०टी०-श्रुत्वेति । हनुमतो वाक्यं श्रुत्वा रावणोऽब्रवीत्५७

गो० टी०-एष इति । पञ्चशाखः पञ्चाङ्गुलिकः । भूतात्मानं विधमिष्यति निष्कामयिष्यति । धातूनामनेकार्थत्वात्॥५६॥५७॥

५७ ] ति० टी०-कीर्तिं हनूमानपि रावणं प्रहृतवानित्येवंरूपां कीर्तिम् । ज्ञातविक्रान्तं ज्ञातपराक्रमम् ॥ ५७ ॥

रा० टी०-तदाकारमाह-क्षिप्रमिति । क्षिप्रं प्रहर वृक्षादीन् प्रक्षेपय अत एव स्थिरां कीर्तिं हनूमानपि रावणं प्रति प्रक्षिप्तवान् इति यशोऽवाप्नुहि ततोऽनन्तरं ज्ञातविक्रान्तं त्वां नाशयिष्यामि ॥ ५८ ॥

गो० टी०-क्षिप्रमिति । स्थिरां कीर्तिमवाप्नुहीति सोपालम्भोक्तिः । हनुमान् रावणमुपसृत्य प्रहृतवानित्येतादृशीं कीर्तिमवाप्स्यसीत्यर्थः । ज्ञातविक्रान्तं ज्ञातविक्रमम् भावेक्तः ॥५८॥

५८-६० ] ति० टी०-रावणस्य वच इति । ज्ञातविक्रमं नाशयिष्यामीत्येवंरूपम् । पूर्वं मया प्रहृतमक्षं तन्नामानं सुतं स्मर । मत्पराक्रमज्ञानायेति शेषः । पूर्वमेव ज्ञातत्वादिदानीं किमपि मद्विक्रमविषये ज्ञातव्यं नास्तीति भावः ॥ ५८-६० ॥

रा०टी०-रावणस्येति। पूर्वं मया प्रहृतं तव सुतमक्षं स्मर एतेन त्वामपि हनिष्यामीति सूचितम् इति वचो वायुसूनुरब्रवीत्५९

गो० टी०-रावणस्येति । रावणवचनं ज्ञात्वा तदुचितमुत्तरमाह—प्रहृतं हीति ॥ ५९ ॥

रा० टी०-एवमिति । एवमुक्तो रावणः अनिलसुतं तलेनोरसि आजघान ॥ ६० ॥

रा० टी०-स इति । तेन रावणेन तलेनाभिहतः स हनूमान् चचाल इतस्ततो बभ्राम अर्द्धम् पृथक् स्थित इति तेजस्वी हनूमान् मुहूर्तं स्थितस्सन् स्थैर्यं स्वचित्तस्वास्थ्यंकृत्वा संक्रुद्धस्सन् तलेनैव अमरद्विषं रावणमाजघान ॥ ६१ ॥

गो० टी०-एवमुक्त इति । मर्मोद्घाटनेन संजातरोष इत्यर्थः ॥ ६० ॥

गो० टी०-स इत्यादि । तलेनेति । रावणेन तलेन प्रहरणात् स्वयमपि तलेनैव प्राहरदिति भावः ॥ ६१ ॥

गो० टी०-तत इति । समाधूतः कम्पितः अभूत् । भूमिचले भूकम्पे सति अचलः गिरिर्यथा ॥ ६२-६५ ॥

६१ ] ति०टी०-समाधूतः कम्पितः। भूमिचले भूमिकम्पे ६१

रा० टी०-तत इति । वानरेण हनूमता अभिहतो दशग्रीवः भूमिचले भूकम्पे अचलश्शैल इव समाधूतः प्रकम्पितोऽभवदिति शेषः ॥ ६२ ॥

६२-६३ ] ति० टी०-तथा ताडितं विसंज्ञतापर्यन्तताडनदुःखवन्तम् । नेदुः । संतोषादिति शेषः ॥ ६२ ॥ ६३ ॥

रा० टी०-संग्राम इति । तलताडितं रावणं दृष्ट्वा सुरासुरैस्सह ऋषिप्रभृतयः देवाः ब्रह्मादित्रयो नेदुः साधु साध्वित्यूचुः ॥ ६३ ॥

रा० टी०-अथेति । महातेजा रावणः आश्वस्य स्वचित्तं स्थिरीकृत्य हे वानर रिपुरपि त्वं वीर्येण मे श्लाघनीयोसि इति वाक्यमब्रवीत् ॥ ६४ ॥

६४-६६ ] ति० टी०-वीर्यस्य धिक् । वीर्यं धिगित्यर्थः । यत्त्वं जीवसि । मत्तलताडितोऽपीत्यर्थः ॥ ६४-६६ ॥

१ देहादिति गो. पाठः । २ प्रहृतमिति गो. पाठः । ३ स्थित्वेति गो. पाठः । ४ तलेनेति गो. पाठः । ५ सहेति गो. पाठः । ६ आश्वास्येति गो. पाठः । ७ वीर्येणेति गो. पाठः । ८ यस्त्वमिति गो. पाठः । ९ मामिकेति गो. पाठः । १० तदाज्वलदिति गो. पाठः । ११ उद्यम्येति गो. पाठः ।

हनूमान्वक्षसि व्यूढे संचचाल पुनः पुनः । विह्वलं तं तदा दृष्ट्वा हनूमन्तं महाबलम् ॥ ६७ ॥
रथेनातिरथः शीघ्रं नीलं प्रतिसमभ्यगात् । राक्षसानामधिपतिर्दशग्रीवः प्रतापवान् ॥ ६८ ॥
पन्नगप्रतिमैर्भीमैः परमर्माभिभेदनैः । शरैरादीपयामास नीलं हरिचमूपतिम् ॥ ६९ ॥
स शरौघसमायस्तो नीलो हरिचमूपतिः । करेणैकेन शैलाग्रं रक्षोधिपतयेऽसृजत् ॥ ७० ॥
हनूमानपि तेजस्वी समाश्वस्तो महामनाः । विप्रेक्षमाणो युद्धेप्सुः सरोषमिदमब्रवीत् ॥ ७१ ॥
नीलेन सह संयुक्तं रावणं राक्षसेश्वरम् । अन्येन युध्यमानस्य न युक्तमभिधावनम् ॥ ७२ ॥
रावणोऽथ महातेजास्तं शृंगं सप्तभिः शरैः । आजघान सुतीक्ष्णाग्रैस्तद्विशीर्णं पपात ह ॥ ७३ ॥
तद्विशीर्णं गिरेः शृंगं दृष्ट्वा हरिचमूपतिः । कालाग्निरिव जज्वाल कोपेन परवीरहा ॥ ७४ ॥
सोऽश्वकर्णद्रुमाञ्शालांश्चूतांश्चापि सुपुष्पितान् । अन्यांश्च विविधान्वृक्षान्नीलश्चिक्षेप संयुगे ॥ ७५ ॥
स तान्वृक्षान्समासाद्य प्रतिचिच्छेद रावणः । अभ्यवर्षच्च घोरेण शरवर्षेण पावकिम् ॥ ७६ ॥
अभिवृष्टः शरौघेण मेघेनेव महाबलः । ह्रस्वं कृत्वा ततो रूपं ध्वजाग्रे निपपात ह ॥ ७७ ॥
पावकात्मजमालोक्य ध्वजाग्रे समवस्थितम् । जज्वाल रावणः क्रोधात्ततो नीलो ननाद च ॥ ७८ ॥

---

रा० टी०–रावणेनेति । रावणेनैवमुक्तो मारुतिरब्रवीत् तदाकारमाह—यद्यस्मात् त्वं जीवसि मन्मुष्टिप्रहारं प्राप्यापि प्राणान् न त्यजसि तस्मात् मम वीर्यस्य वीर्यं धिगस्तु ॥६९॥

गो० टी०–धिगस्त्विति । वीर्येणेति द्वितीयाभाव आर्षः यस्त्वं जीवसि । मया प्रहृतोपीति शेषः । सकृत्तु प्रहर शत्रुणा प्रहृते पुनरात्मनः प्रहारो विक्रमपरिपाटीमाटीकते इति हनुमतो हृदयम् । इदानीमिति । पूर्वं मदनवधानाज्जीवसीति भावः । दुर्बुद्धे प्रहारतारतम्यानभिज्ञ किं किमर्थं विकत्थसे श्लाघसे । "कत्थ, श्लाघायाम्" इति धातुः । यमक्षयं यमनिलयम् । निलयापचयौ क्षयावित्यमरः ॥ ६६ ॥

रा० टी०–सकृदिति । किं किमर्थं कत्थसे इदानीं सकृदेकवारं प्रहर ततोऽनन्तरं मामको मुष्टिः त्वां यमक्षयं नयिष्यति नेष्यति ॥ ६६ ॥

गो० टी०–तत इति । ततः तेनेत्यर्थः । अन्यथा तदाशब्दोतिरिच्येत । अज्वलत् वब्रुध इत्यर्थः ॥ ६७ ॥

रा० टी०–तत इति । तस्य रावणस्य मारुतिवाक्येन कोपः प्रजज्वले अत एव संरक्तनयनो रावणः दक्षिणं मुष्टिमावृत्य वानरोरसि वेगेन पातयामास सार्द्धश्लोक एकान्वयी॥६७॥

गो० टी०–संरक्तेति । वीर्यवान् बलवान् । वीर्यं बले चेत्यमरः ॥ ६८ ॥

६७–६९ ] ति० टी०–व्यूढेऽतिविशाले वक्षसि हतो हनुमान्संचचाल ॥ ६७–६९ ॥

रा० टी०–हनूमानिति । व्यूढे विशाले वक्षसि पुनर्हतो हनुमान् चचाल अद्धं पृथक्—विव्हलमिति । अतिरथो दशग्रीवो रावणः विव्हलं हनुमन्तं दृष्ट्वा रथेन नीलं प्रति समभ्यगात् सार्द्धश्लोक एकान्वयी ॥ ६८ ॥ ६९ ॥

गो० टी०–हनुमानित्यर्धम् । व्यूढे विशाले ॥ [illegible] ॥

गो० टी०–विह्वलमिति । विह्वलं मूर्छितम् । महाबलं तदानीमपि परैरनभिभवनीयम् ॥ ७० ॥

गो० टी०–राक्षसानामिति । आदीपयामास आसमन्ताज्ज्वालयामास ॥ ७१ ॥

गो० टी०–स इति । समायस्तः आयासमनाः । एकेनेत्यनेन इतरेण शरवारणं गम्यते ॥ ७२ ॥

रा० टी०–पन्नगेति । पन्नगप्रतिमैः शरैः नीलमादीपयामास ॥ ७० ॥

७० ] ति० टी०–रक्षोधिपतयेऽसृजत् । तत्प्रहारं हन्तुमिवानित्यर्थः । समायस्तः खेदितः ॥ ७० ॥

रा० टी०–स इति । शरौघेण समायस्तः पीडितो नीलः एकेन करेण शैलाग्रमुत्पाट्येति शेषः रक्षोधिपतये असृजत् अक्षिपत् ॥ ७१ ॥

७१–७८ ] ति० टी०–समाश्वस्तो नीलेन सह युद्धकाले प्राप्तसमाश्वासः । पुनर्युद्धेप्सुर्नीलेन सह युद्धाय संसक्तं रावणं विप्रेक्षमाणो रावणं प्रत्यन्येन युध्यमानस्याभिधावनमयुक्तमितीदं वचोऽब्रवीत् ॥ ७१–७८ ॥

रा० टी०–हनूमानिति । समाश्वस्तो युद्धेप्सुरपि हनुमान अन्येन युध्यमानस्य समीपे अभिधावनं न युक्तमिदं वचो नीलेन सह संयुक्तं रावणमब्रवीत् श्लोकद्वयमेकान्वयि ॥ ७२ ॥ ७३ ॥

रा० टी०–रावण इति । सप्तभिः शरैः तं नीलेन प्रक्षिप्तं शृङ्गं रावण आजघान अत एव तच्छृङ्गं विशीर्णं सत् पपात शृङ्गशब्दस्य अर्द्धर्चादित्वात् तमिति विशेषणं न विरुद्धम्॥७४॥

रा० टी०–तदिति । हरिचमूपतिर्नीलो गिरेः शृङ्गं विशीर्णं दृष्ट्वा कोपेन कालाग्निरिव जज्वाल ॥ ७५ ॥

---

१ कपीति गो. पाठः । २ कपीति गो. पाठः । ३ तच्छृङ्गमिति गो. पाठः । ४ विकीर्णमिति गो. पाठः । ५ क्रोधेनेति गो. पाठः । ६ कर्णान्धवानिति गो. पाठः । ७ स्विति गो. पाठः । ८ महाबल इति गो. पाठः । ९ समुपेति गो. पाठः ।

ध्वजाग्रे धनुपश्चाग्रे किरीटाग्रे च तं हरिम् । लक्ष्मणोऽथ हनूमांश्च रामश्चापि सुविस्मिताः ॥ ७९ ॥
रावणोऽपि महातेजाः कपिलाघवविस्मितः । अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम् ॥ ८० ॥
ततस्ते चुक्रुशुर्हृष्टा लब्धलक्षाः प्लवंगमाः । नीललाघवसंभ्रान्तं दृष्ट्वा रावणमाहवे ॥ ८१ ॥
वानराणां च नादेन संरब्धो रावणस्तदा । संभ्रमाविष्टहृदयो न किंचित्प्रत्यपद्यत ॥ ८२ ॥
आग्नेयेनापि संयुक्तं गृहीत्वा रावणः शरम् । ध्वजशीर्षस्थितं नीलमुदैक्षत निशाचरः ॥ ८३ ॥
ततोऽब्रवीन्महातेजा रावणो राक्षसेश्वरः । कपे लाघवयुक्तोऽसि मायया परया सह ॥ ८४ ॥
जीवितं खलु रक्षस्व यदि शक्तोऽसि वानर । तानि तान्यात्मरूपाणि सृजसि त्वमनेकशः ॥ ८५ ॥
तथापि त्वां मया मुक्तः सायकोऽस्त्रप्रयोजितः । जीवितं परिरक्षन्तं जीविताद्भ्रंशयिष्यति ॥ ८६ ॥
एवमुक्त्वा महाबाहू रावणो राक्षसेश्वरः । संधाय बाणमस्त्रेण चमूपतिमताडयत् ॥ ८७ ॥
सोऽस्त्रमुक्तेन बाणेन नीलो वक्षसि ताडितः । निर्दह्यमानः सहसा स पपात महीतले ॥ ८८ ॥

---

रा० टी०–स इति । स नीलः अश्वकर्णादीन् वृक्षान् चिक्षेप ॥ ७६ ॥

गो० टी०–हनुमानपीत्यादि । ... अब्रवीदिति संबन्धः । अभिधावनम् अन्येन ... प्रत्यभिधावनमित्यर्थः । ... ॥ ७६–७७ ॥

रा० टी०–स इति । रावण. तान् वृक्षान् समासाद्य शरवर्षेण प्रतिचिच्छेद पावकिं नीलमभ्यवर्षत ॥ ७७ ॥

रा० टी०–अभीति । मेघेनेव शरौघेण अभिवृष्टो नीलो ... रूपं कृत्वा ध्वजाग्रे निपपात ॥ ७८ ॥

गो० टी०–स तानिति । समासाद्य समीपं प्राप्य । पावकिं पावकपुत्रम् ॥ ७८ ॥ ७९ ॥

रा० टी०–पावकेति । ध्वजाग्रे समवस्थितं पावकात्मजं नीलमालोक्य रावणः क्रोधाज्जज्वाल नीलस्तु ननाद चेत्यर्थः ७९

गो० टी०–पावकात्मजमिति । जज्वाल चुक्रोधेत्यर्थः ॥ ८० ॥ ८१ ॥

७९ ] ति० टी०–ध्वजाग्रादिषु । तं दृष्ट्वेति शेषः । रावणकिरीटादि स्थितेर्दृष्टं कमपि ... लक्ष्मणादयस्त्रयोऽपि विस्मिताः ॥ ७९ ॥

रा० टी०–ध्वजेति । ध्वजाग्रादौ हरिम् नीलं दृष्ट्वा लक्ष्मणादयः विस्मिताः अभवन्निति शेषः ॥ ८० ॥

८० ] ति० टी०–न केवलं स्वपक्ष्या एव, अपि तु शत्रु रावणोऽपीत्याह—रावणोऽपीति ॥ ८० ॥

रा० टी०–रावण इति । कपिलाघवेन विस्मितो रावणः दीप्तमाग्नेयमग्निदैवत्यमस्त्रमाहारयामास ॥ ८१ ॥

गो० टी०–रावणोऽपीति । आहारयामास आददे ॥८२॥

८१ ] ति० टी०–नीललाघवसंभ्रान्तं रावणं दृष्ट्वा लब्धलक्षा लब्धहर्षविषयाः, अत एव हृष्टाः प्लवङ्गमाश्चुक्रुशुः ॥८१॥

रा० टी०–तत इति । नीललाघवेन संभ्रान्तं रावणं दृष्ट्वा लब्धलक्षाः प्राप्तहर्षावसराः अत एव हृष्टाः प्लवङ्गमाः चुक्रुशुः८२

गो० टी०–तत इति । लब्धलक्षाः लब्धहर्षविषयाः । नीलमेन पश्यन्त इति चार्थः ॥ ८३ ॥

८२–८३ ] ति० टी०–संरब्धः क्रुद्धः ॥ ८२ ॥ ८३ ॥

रा० टी०–वानराणामिति । वानराणां नादेन संरब्धः क्रुद्धस्संभ्रमेण आविष्टं हृदयं यस्य स रावणः किञ्चिन्न प्रत्यपद्यत निश्चयमकरोत् ॥ ८३ ॥

रा० टी०–आग्नेयेनेति । आग्नेयेन अग्निदैवताकमन्त्रेण संयुक्तमभिमन्त्रितं शरं गृहीत्वा स्थितो रावणो नीलं ध्वजशीर्षस्थितमुदैक्षत ॥ ८४ ॥

गो० टी०–वानराणां चेति । चशब्देन नीललाघवं समुच्चीयते संभ्रमः व्यग्रता प्रत्यपद्यत अजानात् आग्नेयेन आग्नेयमन्त्रेण संयुक्तम् अभिमन्त्रितम् ॥ ८४ ॥ ८५ ॥

८४ ] ति० टी०–मायया वञ्चनया ॥ ८४ ॥

रा० टी०–तत इति । रावणोऽब्रवीत् तदाकारमाह हे कपे परया मायया छलविशेषेण लाघवयुक्तो यस्त्वमसि स त्वं यदि शक्तोसि तर्हि जीवितं स्वजीवनं रक्षस्व सार्धश्लोक एकान्वयी ॥ ८५ ॥

गो० टी०–कप इत्यादि । कपे चञ्चलप्रकृते इत्यर्थः अतो न वानरपदेन पौनरुक्त्यम् । तानि तान्यात्मरूपाणि सृजसि त्वमनेकश इति ॥ लाघवातिशयेन सृजसीव दृश्यस इत्यर्थः । ननु तानि तानीत्यनेन रावणो नीलं नानारूपपरिग्रहयुक्तं मन्यत इत्यवगम्यत इति चेन्न । कपे लाघवयुक्तोसीति पूर्वोक्तिविरोधात् । मुक्तः प्रयुक्तः । अस्त्रप्रयोजितः अस्त्रमन्त्रेणाभिमन्त्रितः । जीवितं परिरक्षन्तं त्वां जीविताद् भ्रंशयिष्यतीत्यन्वयः ॥ ८६–९० ॥

८५ ] ति० टी०–आत्मरूपाण्यात्मयोग्यानि स्वपराक्रमोचितानि तानि कर्माणि यद्यपि सृजसि ॥ ८५ ॥

८६–८८ ] ति० टी०–तथापि मया मुक्तोऽस्त्रप्रयोजितोऽयं सायकस्त्वां जीविताद्भ्रंशयिष्यति ॥ ८६–८८ ॥

---

१ दृष्ट्वा रामश्चविस्मिता इति गो. रा. पाठः । २ अनघेति गो. पाठः । ३ युक्त इति गो. पाठः । ४ नीति गो. पाठः ।

पितृमाहात्म्यसंयोगादात्मनश्चापि तेजसा । जानुभ्यामपतद्भूमौ न तु प्राणैर्व्ययुज्यत ॥ ८९ ॥
विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः । रथेनाम्बुदनादेन सौमित्रिमभिदुद्रुवे ॥ ९० ॥
आसाद्य रणमध्ये तं वारयित्वा स्थितो ज्वलन् । धनुर्विस्फारयामास राक्षसेन्द्रः प्रतापवान् ॥ ९१ ॥
तमाह सौमित्रिरदीनसत्त्वो विस्फारयन्तं धनुरप्रमेयम् ।
अवेहि मामद्य निशाचरेन्द्र न वानरांस्त्वं प्रतियोद्धुमर्हसि ॥ ॥ ९२ ॥
स तस्य वाक्यं प्रतिपूर्णघोषं ज्याशब्दमुग्रं च निशम्य राजा ।
आसाद्य सौमित्रिमुपस्थितं तं रोषान्वितं वाचमुवाच रक्षः ॥ ॥ ९३ ॥
दिष्ट्यासि मे राघव दृष्टिमार्गं प्राप्तोऽन्तगामी विपरीतबुद्धिः ।
अस्मिन्क्षणे यास्यसि मृत्युलोकं संसाद्यमानो मम बाणजालैः ॥ ॥ ९४ ॥
तमाह सौमित्रिरविस्मयानो गर्जन्तमुद्वृत्तशिताग्रदंष्ट्रम् ।
राजन्न गर्जन्ति महाप्रभावा विकत्थसे पापकृतां वरिष्ठ ॥ ॥ ९५ ॥

रा० टी०—तानीति । आत्मरूपाणि स्वयोग्यानि तानि तानि मायामयकर्माणि यद्यपि त्वं सृजसि तथापि अस्त्रप्रयोजितः अस्त्रमन्त्रेणाभिमन्त्रितो मया मुक्तस्सायकः जीवितं परिरक्षन्तं त्वां जीविताद् भ्रंशयिष्यति वियोजयिष्यति सार्द्धश्लोक एकान्वयी ॥ ८६ ॥ ८७ ॥

रा० टी०—एवमिति । रावण एवमुक्त्वा अस्त्रेण अस्त्रमन्त्रेणाभिमन्त्रितं बाणं संधाय चमूपतिमताडयत् ॥ ८८ ॥

रा० टी०—स इति । अस्त्रयुक्तेन बाणेन वक्षसि ताडितो नीलो निर्दह्यमानस्सन् महीतले निपपात ॥ ८९ ॥

८९–९० ] ति० टी०—पितुरग्नेर्माहात्म्यसंयोगात्तदाग्न्यस्त्राभिमन्त्रितो बाणोऽग्निं दग्धुमर्हतीति वियुज्यत व्ययुज्यत॥८९॥९०॥

रा० टी०—पित्रिति । पितुरग्नेः माहात्म्यसंयोगात् हेतोः आत्मनस्तेजसा च हेतुना जानुभ्यां भूमावपतदेव प्राणैस्तु न वियुज्यत व्ययुज्यत ॥ ९० ॥

रा० टी०—विसञ्ज्ञमिति । दशग्रीवः वानरं विसञ्ज्ञं दृष्ट्वा रथेन सौमित्रिमभिदुद्रुवे ॥ ९१ ॥

गो० टी०—पितृमाहात्म्येति । पितृमाहात्म्यम् अग्नेः पुत्रतया दयालुत्ववैभवम् ॥ ९१ ॥ ९२ ॥

९१ ] ति० टी०—तं सौमित्रिं वारयित्वेति । सर्वं कपिबलमिति शेषः ॥ ९१ ॥

रा० टी०—आसाद्येति । आसाद्य लक्ष्मणं प्राप्य वारयित्वा तदुत्तरगमनं निवार्य रणमध्ये ज्वलन् सन् स्थितो राक्षसेन्द्रो धनुर्विस्फारयामास ॥ ९२ ॥

गो० टी०—आसाद्येति । सौमित्रिमासाद्य । वारयित्वा सुग्रीवादीन् वारयित्वा । रणमध्ये ज्वलन् स्थितः धनुर्विस्फारयामासेत्यन्वयः ॥९३ ॥ ९४ ॥

९२–९३ ] ति० टी०—अवेहि पश्य ॥ ९२ ॥ ९३ ॥

रा० टी०—तमिति । हे निशाचरेन्द्र मामवेहि प्राप्तं जानीहि अतः वानरान् प्रति योद्धुं नार्हसि इति वचः अदीनसत्त्वः सौमित्रिः तं रावणमाह ॥ ९३ ॥

रा० टी०—स इति । रावणो राजा तस्य लक्ष्मणस्य वाक्यं प्रतिपूर्णः घोषो यस्मिन् तं ज्याशब्दं च निशम्य उपस्थितं सौमित्रिमासाद्य रोषान्वितां वाचमुवाच ॥ ९४ ॥

गो० टी०—स तस्येति । रक्षः रक्षोरूपः राजेत्यन्वयः९५

९४ ] ति० टी०—अन्तगाम्यन्तं नाशं प्राप्स्यतीत्यन्तगामी भविष्यति णिनिः । मया सह युद्धाय प्राणनाशार्थमागमनाद्विपरीतबुद्धिर्दुर्बुद्धिः । संसाद्यमानः पीड्यमानः ॥ ९४ ॥

रा० टी०—तदाकारमाह—दिष्ट्येति । अन्तगामी परलोकगमनशीलः अत एव विपरीता अयोद्धव्ये योधनविषया बुद्धिर्यस्य सः अत एव दिष्ट्या भाग्यवशेन मे दृष्टिमार्गं प्राप्तो यस्त्वमसि स त्वं मम बाणजालैस्संसाद्यमानः प्राप्यमानस्सन् मृत्युलोकं यास्यसि ॥ ९५ ॥

गो० टी०—दिष्ट्येति । अन्तगामी विनाशोन्मुखः अत एव विपरीतबुद्धिः त्वं दिष्ट्या यदृच्छया दृष्टिमार्गं प्राप्तोसि । संसाद्यमानः पीड्यमानः ॥ ९६ ॥

९५ ] ति० टी०—अविस्मयानस्तद्विक्रमादिदर्शनेऽपि स्मयरहितः । उद्वृत्तातितैक्ष्ण्यादतिस्थौल्यादत्युत्कटा शिता तीक्ष्णाग्रदंष्ट्रा यस्य ॥ ९५ ॥

रा० टी०—तमिति । अविस्मयानस्सौमित्रिः उद्वृत्तः उद्गतिविशिष्टः शिता अग्रदंष्ट्रा यस्य स एव स इति कर्मधारयः तं रावणमाह तदाकारमाह—पापकृतां वरिष्ठ हे पापिश्रेष्ठ यथा त्वं विकत्थसे तथा महाप्रभावाः जना न गर्जन्ति ॥ ९६ ॥

गो० टी०—तमिति । अविस्मयानः तूष्णीकुर्वन्नित्यर्थः । उद्वृत्तसिताग्रदंष्ट्रम् उन्नतधवलाग्रदंष्ट्रम् । न गर्जन्ति नात्मश्ला-

१ व्ययुज्यतेति गो. पाठः । २ कम्पयन्निव मेदिनीमिति गो. पाठः । ३ अभ्येहीति गो. पाठः । ४ अर्हं इति गो. पाठः । ५ अवेति गो. पाठः । ६ देष्ट्रमिति गो. पाठः ।

जानामि वीर्यं तव राक्षसेन्द्र बलं प्रतापं च पराक्रमं च ।
अवस्थितोऽहं शरचापपाणिरागच्छ किं मोघविकत्थनेन ॥ ॥ ९६ ॥
स एवमुक्तः कुपितः ससर्ज रक्षोधिपः सप्त शरान्सुपुङ्खान् ।
ताँल्लक्ष्मणः काञ्चनचित्रपुङ्खैश्चिच्छेद बाणैर्निशिताग्रधारैः ॥ ॥ ९७ ॥
तान्प्रेक्षमाणः सहसा निकृत्तान्निकृत्तभोगानिव पन्नगेन्द्रान् ।
लङ्केश्वरः क्रोधवशं जगाम ससर्ज चान्यान्निशितान्पृषत्कान् ॥ ॥ ९८ ॥
स बाणवर्षं तु ववर्ष तीव्रं रामानुजः कार्मुकसंप्रयुक्तम् ।
क्षुरार्धचन्द्रोत्तमकर्णिभल्लैः शरांश्च चिच्छेद न चुक्षुभे च ॥ ॥ ९९ ॥
स बाणजालान्यपि तानि तानि मोघानि पश्यंस्त्रिदशारिराजः ।
विसिस्मिये लक्ष्मणलाघवेन पुनश्च बाणान्निशितान्मुमोच ॥ ॥ १०० ॥
स लक्ष्मणश्चापि शिताञ्शिताग्रान्महेन्द्रतुल्योऽशनिभीमवेगान् ।
संधाय चापे ज्वलनप्रकाशान्ससर्ज रक्षोधिपतेर्वधाय ॥ ॥ १०१ ॥
स तान्प्रचिच्छेद हि राक्षसेन्द्रः शिताञ्शरांल्लक्ष्मणमाजघान ।
शरेण कालाग्निसमप्रभेण स्वयंभुदत्तेन ललाटदेशे ॥ ॥ १०२ ॥
स लक्ष्मणो रावणसायकार्तश्चचाल चापं शिथिलं प्रगृह्य ।
पुनश्च संज्ञां प्रतिलभ्य कृच्छ्राच्चिच्छेद चापं त्रिदशेन्द्रशत्रोः ॥ ॥ १०३ ॥
निकृत्तचापं त्रिभिराजघान बाणैस्तदा दाशरथिः शिताग्रैः ।
स सायकार्तो विचचाल राजा कृच्छ्राच्च संज्ञां पुनराससाद ॥ ॥ १०४ ॥

---

घां कुर्वन्तीत्यर्थः । पापकृतां वरिष्ठेति हेतुगर्भितविशेषणम् । पापकृद्वरिष्ठत्वाद्विकत्थस इत्यर्थः ॥ ९७ ॥

९६–९८ ] ति० टी०—जानामीति । चौर्यसीताहरणेनैवेति भावः । मोघविकत्थनेन व्यर्थात्मश्लाघनेन ॥ ९६–९८ ॥

रा० टी०—जानामीति । तव वीर्याद्यहं जानामि अतः शरचापपाणिरहमवस्थितः अतः आगच्छ मोघविकत्थनेन निष्फलस्वश्लाघया किम् ॥ ९७ ॥

गो० टी०—जानामीति । सोपहासोक्तिः । तव विजने यतिवेषेण सीतामपहृतवतः । प्रतापं शत्रुभीषणत्वं पराक्रमं शौर्यम् । शौर्योद्योगौ पराक्रमावित्यमरः । मोघविकत्थनेन निष्फलश्लाघनेन ॥ ९८ ॥

रा० टी०—स इति । एवमुक्तो रक्षोधिपः सप्त शरान् ससर्ज चिक्षेप तान् बाणान् लक्ष्मणो बाणैश्चिच्छेद ॥ ९८ ॥

गो० टी०—स इति । निशिते अग्रधारे अग्रपार्श्वे येषांतैः ९९

रा० टी०—तानिति । निकृत्तभोगान् छिन्नशरीरान् पन्नगेन्द्रानिव तान् बाणान् प्रेक्षमाणो लंकेश्वरः क्रोधवशं जगाम अत एव अन्यानपि पृषत्कान् बाणान् ससर्ज ॥ ९९ ॥

गो० टी०—तानिति । पृषत्कान् बाणान् ॥ १०० ॥

९९–१०४ ] ति० टी०—स रामानुजो रावणोपरि बाणवर्षं ववर्ष, तदीयाञ्शरांश्च क्षुरादिभिश्चिच्छेद, न चुक्षुभे च । चाप्र स्वस्थानतश्चचाल ॥ ९९–१०४ ॥

रा० टी०—स इति । रामानुजः कार्मुकेण धनुषा संप्रयुक्तं त्यक्तं तीव्रं बाणवर्षं ववर्ष चकार क्षुरादिभिः शरान् चिच्छेद च न चुक्षुभे च । क्रियाक्रियावतोरभेदविवक्षया संप्रयुक्तमित्यस्य विशेष्येन्वयाभासम्भवः ॥ १०० ॥

गो० टी०—स इति । कार्मुकसंप्रयुक्तं चापसंहितम् । क्षुरेति । क्षुरैः नापितशस्त्राकारैः अर्धचन्द्रैः अर्धचन्द्राकारमुखैः उत्तमैः कर्णिभिः कर्णिशरैः भल्लैः उभयपार्श्वधारैः शरान् रावणशरान् चिच्छेद तथापि न चुक्षुभे न कलुषितहृदयोभूत् ॥ १०१ ॥

रा० टी०—स इति । बाणजालानि लक्ष्मणलाघवेन मोघानि निष्फलानि पश्यन् त्रिदशारिराजः विसिष्मिये बाणान् पुनर्मुमोच ॥ १०१ ॥

गो० टी०—स इति । त्रिदशारिराजः राक्षसराजः॥१०२॥

रा० टी०—स इति । लक्ष्मणोपि शिताग्रान् शरान् रक्षोधिपतेर्वधाय ससर्ज ॥ १०२ ॥

रा० टी०—स इति । स रावणः तान् लक्ष्मणप्रयुक्तान्

---

१ कर्णीति गो. पाठः । २ सिष्मिये इति रा. गो.पा. ३ छित्वा च तानिति गो. पाठः ।

स कृत्तचापः शरताडितश्च मेदार्द्रगात्रो रुधिरावसिक्तः ।
जग्राह शक्तिं स्वयमुग्रशक्तिः स्वयंभुदत्तां युधि देवशत्रुः ॥ ॥ १०५ ॥
स तां सधूमानलसंनिकाशां वित्रासनां संयति वानराणाम् ।
चिक्षेप शक्तिं तरसा ज्वलन्तीं सौमित्रये राक्षसराष्ट्रनाथः ॥ ॥ १०६ ॥
तामापतन्तीं भरतानुजोऽस्त्रैर्जघान बाणैश्च हुताग्निकल्पैः ।
तथापि सा तस्य विवेश शक्तिर्भुजान्तरं दाशरथेर्विशालम् ॥ ॥ १०७ ॥
स शक्तिमाञ्शक्तिसमाहतः सञ्जज्वाल भूमौ स रघुप्रवीरः ।
तं विह्वलन्तं सहसाभ्युपेत्य जग्राह राजा तरसा भुजाभ्याम् ॥ ॥ १०८ ॥
हिमवान्मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न शक्यो भरतानुजः ॥ ॥ १०९ ॥

---

शरान् प्रचिच्छेद स्वयंभुदत्तेन शरेण ललाटदेशे लक्ष्मणमाजघान ॥ १०३ ॥

गो० टी०–स लक्ष्मण इति । महेन्द्रवज्राशनितुल्यवेगान् महेन्द्रवज्रस्याशनेश्च तुल्यवेगान् ॥ १०३ ॥ १०४ ॥

रा० टी०–स इति । रावणसायकार्तो लक्ष्मणः शिथिलं यथा भवति तथा चापं प्रगृह्य चचाल पुनस्संज्ञां प्रतिलभ्य त्रिदशेन्द्रशत्रोः चापं चिच्छेद ॥ १०४ ॥

रा० टी०–निकृत्तेति । निकृत्तं छिन्नं चापं यस्य तं रावणं दाशरथिः लक्ष्मणः त्रिभिर्बाणैराजघान सायकार्तः राजा रावणो विचचाल वैचित्यं प्राप पुनस्सञ्ज्ञां स्वास्थ्यं च आससाद प्राप ॥ १०५ ॥

रा० टी०–स इति । निकृत्तचापत्वादिविशिष्टः स्वयमुग्रशक्तिः देवशत्रुः रावणः स्वयंभुदत्तां शक्तिं जग्राह ॥ १०६ ॥

गो० टी०–स लक्ष्मण इति । शिथिलं यथा भवति तथा प्रगृह्य ॥ १०५ ॥ १०६ ॥

१०५ ] ति० टी०–मेदार्द्रगात्र इति संधिरार्षः । अथ रावणः प्राणान्तापदं प्राप्तः प्रकारान्तरेण जीवननिर्वाहमसंभाव्य ब्रह्मदत्ताममोघां शक्तिं जग्राहेत्याह—जग्राहेति॥१०५॥

गो० टी०–स कृत्तेति । मेदेत्यकारान्तत्वमार्षम् । समुदग्रशक्तिः समधिकसामर्थ्यः ॥ १०७ ॥

१०६ ] ति० टी०–सधूमानलसंनिकाशां सधूमानलसदृशीम् । राक्षसराष्ट्रनाथो रावणः ॥ १०६ ॥

रा० टी०–स इति । सधूमानलवत् सन्निकाशः प्रकाशो यस्याः तां वानराणां वित्रासनीं ज्वलन्तीं शक्तिं राक्षसराष्ट्रनाथः सौमित्रये चिक्षेप ॥ १०७ ॥

गो० टी०–स तामिति । राक्षसराष्ट्रनाथः राक्षससमूहनाथः ॥ १०८ ॥

१०७ ] ति० टी०–तथापि सेति । ब्राह्मत्वेनामोघत्वादित्यर्थः ॥ १०७ ॥

रा० टी०–तामिति । भरतानुजो लक्ष्मणः तां रावणप्रयुक्तां शक्तिं यद्यपि बाणैर्जघान तथापि सा हतापि शक्तिः भुजान्तरं भुजयोरन्तरालं विवेश लक्ष्मि सक्ताभवदित्यर्थः ॥ १०८ ॥

गो० टी०–तामिति । बाह्वन्तरं वक्षः ॥ १०९ ॥

१०८ ] ति० टी०–शक्तिमानपि महाबलवानपि शक्तिसमाहतः सञ्जज्वाल । 'पपात' इति पाठान्तरम् । विह्वलन्तं विकलं भवन्तं राजा रावणस्तरसा बलेन लक्ष्मणं भुजाभ्यां जग्राह । इन्द्रजिद्वधयोगपि पुनरुत्थानदर्शनादिदानीमपि पुनरुज्जीवनभयेन गृहीत्वा समुद्रे प्रक्षेपणीयः । तत्र गते रामोऽसहायो लङ्कां नत्येवेत्याशयेनायमारम्भः ॥ १०८ ॥

रा० टी०–स इति । शक्तिमान् तदाघातनिवारणसमर्थोपि रघुप्रवीरो लक्ष्मणः शक्तिसमाहतस्सन् भूमौ जज्वाल चकासे राजा रावणः विह्वलन्तं तमभ्युपेत्य भुजाभ्यां जग्राह शक्तिमानपि समाहत इत्यनेन तस्य मर्यादापालकत्वं ध्वनितम्॥१०९॥

गो० टी०–स इति । विह्वलन्तं मुह्यन्तम् ॥ ११० ॥

१०९ ] ति० टी०–न चोद्धर्तुमशक्नोदित्याह—हिमवानिति । येन रावणेन सुरासुरैः सहिता हिमवदादयोऽपि भुजाभ्यामुद्धर्तुं शक्यमभूत्तेन भरतानुजः संख्ये उद्धर्तुं शक्यो नाभूत् ॥ १०९ ॥

रा० टी०–हिमवानिति । भुजाभ्यामुद्धर्तुमुत्थापयितुममरैस्सह हिमवदादिशक्यं रावणेनेति शेषः भरतानुजस्तु उद्धर्तुं न शक्यः ॥ ११० ॥

गो० टी०–लक्ष्मणं भुजाभ्यामुद्धर्तुमुद्युक्तं रावणमृषिः परिहसति—हिमवानिति । शक्यमित्यव्ययम् । हिमवान् धैर्येण हिमवानिवेति । समस्तधीरोपमानभूतो हिमवानपि रावणस्य भुजाभ्यामुद्धर्तुं शक्यम् । तदेकदेशस्य कैलासस्य पुरा चालितत्वात् । मन्दरः सकलसागरप्रधानगभीरक्षीरोदक्षोभणक्षमोपि मन्दरो वा भुजाभ्यामुद्धर्तुं शक्यम् । स्वनिर्जितैरेव निर्जरैरमृतमथने जर्झरितत्वात् । मेरुः सकलकुलाचलवलयललामभूतोपि मेरुस्तथा कर्तुं शक्यम् । वायुनैव तच्छिखरस्य लङ्कायां अकूपारकुक्षौ निक्षिप्तत्वात् । त्रैलोक्यं पञ्चाशत्कोटिवि-

---

१ समुदग्रेति गो. पाठः । २ वित्रासिनीमिति गो. पाठः । ३ अग्र्यैरिति गो. पाठः । ४ बाह्वन्तरमिति गो. पाठः । ५ मुहुः प्रजज्वालेति गो.पाठः ।

शक्त्या ब्राह्मया तु सौमित्रिस्ताडितोऽपि स्तनान्तरे। विष्णोरमीमांस्यभागमात्मानं प्रत्यनुस्मरत् ११० ॥
ततो दानवदर्पघ्नं सौमित्रिं देवकण्टकः। तं पीडयित्वा बाहुभ्यां न प्रभुर्लङ्घनेऽभवत् ॥ १११ ॥
ततः क्रुद्धो वायुसुतो रावणं समभिद्रवत्। आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥ ११२ ॥
तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः। जानुभ्यामगमद्भूमौ चचाल च पपात च ॥ ११३ ॥

स्तीर्णमुत्तीर्णपरिमाणान्तरं त्रैलोक्यमपि तथा कर्तुं शक्यम्। तदेकदेशधरण्या हिरण्याक्षेण कक्षीकृतत्वात्। सहामरैः त्रैलोक्यनिर्वाहकगीर्वाणैः सहितमपि तथा कर्तुं शक्यम्। तदधिपतेर्निजतनुजेनैव निगृहीतत्वात्। भरतानुजः रामानुजानुजः रामचतुर्थभाग इत्यर्थः। रामचतुर्थभागोद्धरणेप्यशक्तः कथं रामेण योद्धुं शक्नोतीति भावः। अयोध्याकाण्डे पञ्चपञ्चाशे— सीतामादाय गच्छ त्वमग्रतो भरताग्रजेति वचनं बहुव्रीह्युक्तम्। भुजाभ्यामित्यनेन हिमवदादयो द्वाभ्यामेवोद्धर्तुं शक्यम्। अयं तु विंशतिभुजैरपि न शक्यत इति सूच्यते रिपूणामप्रकम्प्योपीत्यनुवादात्। सपरिकरेणापि रावणेन न शक्यमित्यपि सिद्धम्। कथं तर्हि हनुमतोद्धृत इत्यत्राह—संख्य इति। दुर्द्धर्षैर्नोद्धर्तुं शक्य इत्यर्थः। अतएव वक्ष्यति— वायुसूनोः सुहृत्त्वेनेति। अनेन हिमवदादिभ्योपि संख्ये पतितस्य लक्ष्मणशरीरस्य गरीयस्त्वोक्ता ॥ १११ ॥

११० ] ति० टी०—कुतस्तत्राह—शक्त्येति। अमोघया ब्रह्मदत्तया स्तनान्तर आहतः सौमित्रिर्विष्णोरमीमांस्यं निःसंशयविष्णुभागत्ववन्तमियत्तया चिन्तयितुमशक्यं वा विष्णोर्भागमात्मानं प्रत्यनुस्मरदन्वस्मरत। नहि स्वीयं स्वं हिनस्तीत्याशयेन ब्रह्मशक्तिमूलापत्राणार्थं भगवत्तेजोंश एवाहमस्मीति ध्यातवान्। नटवदङ्गीकृतमनुष्यत्वस्येतरेषां दृढप्रतीत्यर्थम्, परं न सर्वदा तथा ध्यानम्। एवं च ब्रह्मभावनया लक्ष्मणेन स्वशरीरस्य गरीयस्त्वमापादितमित्युक्तं भवति ॥ ११० ॥

रा० टी०—ननु तादृशदशायां कथं तच्छरीरस्य गुरुत्वमित्यत आह—शक्त्येति। ब्राह्मया शक्त्या स्तनान्तरे ताडितोपि सौमित्रिः विष्णोरपि अमीमांस्यः इयत्तया चिन्तयितुमशक्यः भाग ऐश्वर्यं यस्य तमात्मानं सर्वनियन्तारं रामं प्रत्यनुस्मरत् प्रत्यन्वस्मरत्, एतेन तदनुस्मृतिप्रभावादेव रावणोत्थापनाशक्यगुरुत्वं जातमिति सूचितम् ॥ १११ ॥

गो० टी०—कुतोस्यैतादृशी गरीयस्त्वमित्यत्राह—शक्त्येति। ब्राह्मया ब्रह्मसंबन्धिन्या शक्त्या स्तनान्तरे वक्षसि सौमित्रिस्ताडितः सन् विष्णोर्भागम् अंशभूतम् अचिन्त्यम् ईदृक्तया इयत्तया च चिन्तयितुमशक्यम् स्वमात्मानं स्वस्वरूपं, स्वात्मान्येनं विगाहत इति तथा प्रयोगात् स्वात्मांश इति गुरुव्यवहाराच्च। प्रत्यनुस्मरत् स्मृतवान्। स्वस्वरूपस्मरणातिरिक्तव्यापाराकरणोक्त्या स्वाभाविकमेवास्येदं गुरुत्वमित्युक्तम्। यत्तु स्वकीयांशस्मरणेन हेतुना लक्ष्मणेन स्वशरीरस्य गरीयस्त्वं संपादितमित्यनेनोक्तमिति तन्न अपवार्थत्वादवाक्यार्थत्वाच्च। स्वरूपस्मरणस्य गरीयस्त्वं प्रति कारणताग्राहकप्रमाणाभावाच्च। यदपि विपत्परिहारार्थं भगवन्तं स्वमूलकारणं विष्णुमस्मरदित्यर्थ इति तदपि न। स्वस्यैव विष्णुरूपत्वेन विपत्परिहारान्तराभावात्। ननु मनुष्यभावना क्रियमाणा विरुध्येत यदि स्वतो गौरवं भजेत, अतो विष्णुस्मरणमिति चेन्न। मानसभावनाया अपि लौकिकैरज्ञातत्वेन एवमपि मनुष्यभावनाया अनुपायात् अतः अपर्यनुयोज्यवस्तुस्वभावेनैव भक्ताभक्तयोः गरीयस्त्वागरीयस्त्वे अत एवाऽचिन्त्यमित्युक्तम् ॥ ११२ ॥

१११ ] ति० टी०—तत इति। तथानुसंधानमहिमत इत्यर्थः। अथानन्तरमुच्यमानविशेषणमेनं सौमित्रिं बाहुभ्यां पीडयित्वा लङ्घने चालनेऽपि न प्रभुरभवन्न समर्थोऽभवत् किं पुनरुद्धरण इति भावः ॥ १११ ॥

रा० टी०—तत इति। देवकंटको रावणस्सौमित्रिं बाहुभ्यां पीडयित्वापि लंघने पराभवे प्रभुः समर्थो नाभवत् ॥ ११२ ॥

गो० टी०—वस्तुस्वरूपस्यैवंविधत्वात्तोलयितुमशक्तोभवदित्युपसंहरति—तत इत्यादिसार्धश्लोक एकान्वयः। यतः स्वाभाविकमेव गरीयस्त्वं ततो हेतोः लङ्घने उद्धरणे अप्रभुः असमर्थः। अथ रणे पतनानन्तरं देवकण्टकः रावणः मानुषं देहमास्थितं दानवदर्पघ्नं वैष्णवं भागं सौमित्रिं भुजाभ्यां पीडयित्वा ततः वैष्णवभागरूपत्वाद्धेतोः लङ्घने अप्रभुरभवदित्यन्वयः। अत्रापि विशेषणसामर्थ्याद्वस्तुस्वरूपकृतमेवाकम्प्यत्वमित्युक्तम्। ननु च कथमंशांशिभावः विष्णुस्वरूपस्य निरवयवत्वात्। सत्यम्। स्वरूपेण नांशत्वमुच्यते, किन्तु गुणाविर्भावतारतम्यात्। 'गुणैः षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुगयुगलैर्हि त्रिभिरभूत्। व्यवस्थायां चैषां ननु वरद साविष्कृतिवशात् भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः'। इत्यभियुक्तैरुक्तत्वात्। मानुषरूपत्वं चास्य मानुषसमानाकृतिकत्वम् ॥ ११३ ॥ ११४ ॥

११२ ] ति० टी०—ततः। सौमित्रिक्लेशनात्क्रुद्धो वायुसुत इत्यर्थः ॥ ११२ ॥

रा० टी०—तत इति। क्रुद्धो वायुसुतः रावणं समभिद्रवत् समभ्यद्रवत् अत एव उरसि मुष्टिना आजघान ॥ ११३ ॥

११३ ] ति० टी०—जानुभ्यां रथपृष्ठरूपायां भूमावगमत्। एवं भूमौ पपात चचाल। चलितसंज्ञोऽभूदित्यर्थः ॥ ११३ ॥

रा० टी०—तेनेति। राक्षसेश्वरः जानुभ्यां भूमौ अगमत् चचाल च पपात च ॥ ११४ ॥

गो० टी०—तेनेत्यादि। जानुभ्यां रथभूमावपतत्। अथ

१ लिंगितं गो.पाठः। २ अचिन्त्यं स्वं भागमिति गो.पाठः। ३ अप्रभुरिति गो.पाठः। ४ अथ वायुसुतः क्रुद्ध इति गो.पाठः। ५ अपतदिति गो.पाठः।

आस्यैश्च नेत्रैः श्रवणैः पपात रुधिरं बहु । विघूर्णमानो निश्चेष्टो रथोपस्थ उपाविशत् ॥ ११४ ॥
विसंज्ञो मूर्च्छितश्चासीन्न च स्थानं समालभत् । विसंज्ञं रावणं दृष्ट्वा समरे भीमविक्रमम् ॥ ११५ ॥
ऋषयो वानराश्चैव नेदुर्देवाश्च सासुराः । हनूमानथ तेजस्वी लक्ष्मणं रावणार्दितम् ॥ ११६ ॥
आनयद्राघवाभ्याशं बाहुभ्यां परिगृह्य तम् । वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः ॥
शत्रूणामप्रकम्प्योऽपि लघुत्वमगमत्कपेः ॥ ॥ ११७ ॥
तं समुत्सृज्य सा शक्तिः सौमित्रिं युधि निर्जितम् । रावणस्य रथे तस्मिन्स्थानं पुनरुपागमत् ॥ ११८ ॥
रावणोऽपि महातेजाः प्राप्य संज्ञां महाहवे । आददे निशितान्बाणाञ्जग्राह च महद्धनुः ॥ ११९ ॥

चचाल ततः पपात अशयिष्ट दशभिरास्यैः रुधिरं ववाम सनेत्रश्रवणैरित्यनेन नेत्रेभ्यः श्रवणेभ्यश्च रुधिरं ववामेत्युच्यते ॥ ११५ ॥ ११६ ॥

११४ ] ति० टी०—आस्यैरिति बहुत्वं दशाननत्वात् । अस्येति शेषः । यतो रुधिरं पपात, अतो विघूर्णमान इत्यादि ॥ ११४ ॥

रा० टी०—आस्यैरिति । आस्यादिभिः बहु रुधिरं पपात अत एव विघूर्णमानः निश्चेष्टश्च सन् रथोपस्थे उपाविशत् ११५

गो० टी०—विघूर्णमान इति । किंचित्कालं विघूर्णमानः भ्रमन् पुनर्निश्चेष्टः सन् रथोपस्थे रथमध्ये उपाविशत् स्थितः ततो मूर्छितः अत एव विसंज्ञः संज्ञाशून्यश्चासीत् पुनः संज्ञां लब्ध्वापि स्थानं स्थितिम् नालभत नालभत चचालेत्यर्थः ॥ ११७ ॥

११५ ] ति० टी०—विसंज्ञो गतचेतनः । मूर्च्छितः स्वविषयग्रहाशक्तश्रोत्रादिकरणग्रामः । न च स्थानमत्रस्थितिस्थानं समालभज्ज्ञातवान् ॥ ११५ ॥

रा० टी०—विसञ्ज्ञ इति । यः विसंज्ञो मूर्छितश्चासीत् स स्थानं निश्चलतयास्थितिं न समालभत् पादादिविक्षेपं चकारेत्यर्थः अर्द्धं पृथक् । विसंज्ञमिति । रावणं विसंज्ञं दृष्ट्वा सासुराः ऋषिप्रभृतयो नेदुः साधु साध्विति शब्दं चक्रुः ॥ ११६ ॥

गो० टी०—विसंज्ञमिति । नेदुः हर्षेणेति शेषः ॥ ११८ ॥

११६ ] ति० टी०—नेदुः । संतोषादिति शेषः । सासुराः । रावणस्य देववदसुरेष्वपि क्लेशकरत्वेन तेषामपि वैरित्वात्११६

रा० टी०—हनूमानिति । हनूमान् बाहुभ्यां लक्ष्मणं परिगृह्य राघवाभ्याशं रामसमीपमानयत् ॥ ११७ ॥

गो० टी०—हनुमानिति । अभ्याशं समीपम् ॥ ११९ ॥

११७ ] ति० टी०—राघवाभ्याशमानयदित्युक्तम्, कथमेवं सुग्रहत्वं लक्ष्मणस्येत्यत्राह—वायुसूनोरिति । सुहृत्त्वेन सखित्वेन परमभक्त्या च लक्ष्मणः शत्रूणामप्रकम्प्योऽपि वायुसूनोर्लघुत्वमगमत् । शत्रूणामित्यनेन लक्ष्मणोद्धरणसमये रावणस्यानुचरैः साहाय्यं कृतमिति गम्यते । इदं च भक्तमात्रसुग्रहत्वं भगवतो भगवदवताराणां च स्वभावसिद्धमेवेति बोध्यम् । एवं च रामलक्ष्मणयोरज्ञानशक्तिमत्त्वतात्पर्यतया भासमानानि वचनानि मानुषत्वेपनिर्वहणमात्रपराणीति बोध्यम् । तदुक्तं भागवते—'मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः । कुतोऽन्यथा स्यु रमतः स्व आत्मन्सीताकृतानि व्यसनानीश्वरस्य ॥' इति । मर्त्यशिक्षणं तत्फलकमित्यर्थः । आत्मनीश्वरस्येत्यनेन लाघवगौरवप्राप्त्योरविरोध उक्तः ॥ ११७ ॥

रा० टी०—ननु रावणोत्थापनाशक्यं हनूमान् कथमुत्थापयामासेत्यत आह—वायोरिति । शत्रूणामकंप्योपि लक्ष्मणः वायुसूनोः सुहृत्त्वादिना लघुत्वमगमत् ॥ ११८ ॥

गो० टी०—ननु पूर्वं हिमवानित्यादिना लक्ष्मणस्याकम्प्यत्वमुक्तम्, तादृशस्य कपिना रामसमीपप्रापणं कथमित्याशङ्क्य विरोधं परिहरति—वायुसूनोरिति । सुहृत्त्वेन शोभनहृदयत्वेन अनुकूलहृदयत्वेनेत्यर्थः । हृदयानुकूल्यमेवालं भक्तिस्त्वधिकेत्याह—भक्त्या परमया चेति । चशब्दोन्वाचये । सः लक्ष्मणः शत्रूणां रावणस्य तत्परिकराणां चेत्यर्थः । अप्रकम्प्योपि कम्पितुमशक्योपि । कपेः कपेरपि हनुमत एकस्य लघुत्वमगमत् लघुत्वमकरोत् अनेन लघुत्वस्य बुद्धिपूर्वकत्वमुक्तम् । शत्रुमित्रयोर्दुष्प्रापत्वसुप्रापत्वे स्वरूपयुक्ते अस्येति भावः मूर्छितस्यापि लक्ष्मणस्य ज्ञानशक्तिप्रतिपादनेन तत्र तत्र राघवयोरज्ञानाशक्तिप्रत्यायकानि वचनानि मानुषत्वेपनिर्वहणपराणीति मन्तव्यानि ॥ १२० ॥

११८-११९ ] ति० टी०—तं समुत्सृज्य । अयस्त्वेन ध्यानात्तत्समुत्सर्गः । स्थानं स्थितिम् ॥ ११८ ॥ ११९ ॥

रा० टी०—तमिति । निर्जितं निर्जितप्रायं सौमित्रिं शक्तिः समुत्सृज्य रावणस्य रथे स्थानं स्थितिं पुनरुपागमत् ॥ ११९ ॥

गो० टी०—तमिति । दुर्जयमिति हेतुगर्भम् तस्य दुर्जयस्वरूपत्वाच्छक्तिस्तं त्यक्त्वा गतेति भावः । एतच्छ्लोकानन्तरमाश्वस्त इति श्लोकः । ततो रावणोपीति श्लोकः पठनीयः १२१

रा० टी०—रावण इति । रावणस्संज्ञां लक्ष्मणप्रभावविषयकातिबोधम् प्राप्य बाणानाददे अत एव धनुर्जग्राह ॥ १२० ॥

१ सनेत्रश्रवणैरिति गो. पाठः । २ ववामेति गो. पाठः । ३ सर्वं इति गो. पाठः । ४ ससासवा इति गो. पाठः । ५ दुर्जयमिति गो. पाठः । ६ उपागतेति गो. पाठः । ७ एतदाद्यद्वयोः पद्ययोर्व्यत्यासेन पाठो गो. पुस्तके ।

आश्वस्तश्च विशल्यश्च लक्ष्मणः शत्रुसूदनः । विष्णोर्भागममीमांस्यमात्मानं प्रत्यमनुस्मरन् ॥ १२० ॥
निपातितमहावीरां[1] वानराणां महाचमूम् । राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत् ॥ १२१ ॥
अथैनमनु[2]संक्रम्य हनूमान्वाक्यमब्रवीत् । मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि ॥ १२२ ॥
विष्णुर्यथा[3] गरुत्मन्तमारुह्यामरवैरिणम् । तच्छ्रुत्वा राघवो वाक्यं वायुपुत्रेण भाषितम् ॥ १२३ ॥
अथारुरोह[4] सहसा हनूमन्तं महाकपिम् । रथस्थं रावणं संख्ये ददर्श मनुजाधिपः ॥ १२४ ॥
तमालोक्य महातेजाः प्रदुद्राव स रावणम्[5] । वैरोचनमिव क्रुद्धो विष्णुरभ्युद्यतायुधः ॥ १२५ ॥
ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिष्ठुरम्[6] । गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह ॥ १२६ ॥
तिष्ठ तिष्ठ मम त्वं हि कृत्वा विप्रियमीदृशम् । क्व नु राक्षसशार्दूल गत्वा मोक्षमवाप्स्यसि ॥ १२७ ॥

यदीन्द्रवैवस्वतभास्करान्वा स्वयंभुवैश्वानरशंकरान्वा ।
गमिष्यसि त्वं दशधा दिशो वा[7] तथापि मे नाद्य गतो विमोक्ष्यसे ॥ ॥ १२८ ॥

१२० ] ति० टी०–पुनर्विष्णोर्भागमात्मानं स्मरन्नाश्वस्तः प्राप्ताश्वासेन्द्रियग्रामः विशल्यो नीरुक्सर्वगात्रः आसीदिति शेषः ॥ १२० ॥

रा० टी०–आश्वस्त इति । विष्णोरप्यमीमांस्यं भागं रामैश्वर्यमात्मानं स्वदासरूपत्वं च प्रत्यनुस्मरन् लक्ष्मणः विशल्यः शल्यरहितोऽभवदिति शेषः ॥ १२१ ॥

गो० टी०–आश्वस्त इति । आश्वस्तः लब्धसंज्ञः विशल्यः प्ररूढव्रणमुखः अभवदिति शेषः अकाण्डे शक्तिनिर्गमाश्वासनविशल्यत्वेषु को हेतुरत आह–विष्णोरिति । विरोधिप्रत्यनीकस्वभावत्वादिति भावः । अमीमांस्यम् अचिन्त्यम् अनुस्मरन्नित्यनेन साधनानुष्ठानं किमपि न कृतवानित्युक्तम् ॥ १२२ ॥ १२३ ॥

१२१-१२४ ] ति० टी० समभिद्रवच्छीघ्रमभ्यद्रवत् १२१-१२४

रा० टी०–निपातितेति । निपातिताः महावीरा यस्यां तां महाचमूं राघवो रामो दृष्ट्वा रावणं समभिद्रवत् समभ्यद्रवत् ॥ १२२ ॥

गो० टी०–निपातितेति । द्रवन्तीमिति । रावणस्य बाणसंधानदर्शनादिति भावः ॥ १२४ ॥

रा० टी०–अथेति । हनुमान् एनं राममनुसंक्रम्य प्राप्य विष्णुर्गरुत्मन्तमारुह्य अमरवैरिणं मधुप्रभृतिमिव मम पृष्ठमारुह्य राक्षसं शास्तुमर्हसि सार्धश्लोक एकान्वयी ॥ १२३ ॥ १२४ ॥

गो० टी०–अथेति । अर्हसीत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ १२५ ॥

रा० टी०–तदिति । वायुपुत्रेण भाषितं वाक्यं राघवः श्रुत्वा हनूमन्तमारुरोह ॥ १२५ ॥

गो० टी०–विष्णुर्यथेति । सार्धश्लोक एकान्वयः । वायुपुत्रेण भाषितं तद्वाक्यं श्रुत्वा समाहितः सन् विष्णुर्गरुत्मन्तं यथा तथा महाकपिं हनुमन्तमारुरोहेति योजना ॥ १२६ ॥

रा० टी०–रथेति । मनुजाधिपो रामः रावणं संख्ये ददर्श रावणमालोक्य वैरोचनं क्रुद्धो विष्णुरिव स रामः प्रदुद्राव सार्धश्लोक एकान्वयी ॥ १२६ ॥

गो० टी०–रथस्थमित्यर्धकं वाक्यम् ॥ १२७ ॥

१२५–१२६ ] ति० टी०–दुद्राव शीघ्रमगमत् ॥ १२६ ॥

गो० टी०–तमिति । तमालोक्येत्यनुवादः अव्यवहितपूर्वकालद्योतनार्थः । अभ्युद्यतायुधः क्रुद्धो राघवः विष्णुर्वैरोचनं बलिमिव प्रदुद्राव । साग्रहगमनमात्रे दृष्टान्तः ॥ १२८ ॥

रा० टी०–ज्याशब्दमिति । वज्रनिष्पेषवत् निष्ठुरं तीव्रं ज्याशब्दं रामोऽकरोत् अकारयत् गम्भीरया गिरा राक्षसेन्द्रमुवाच च ॥ १२८ ॥

गो० टी०–ज्याशब्दमित्यर्धम् । वज्रनिष्पेषः स्फूर्जथुः स्फूर्जथुर्वज्रनिष्पेष इत्यमरः ॥ १२९ ॥

गो० टी०–गिरेत्यर्धम् ॥ १३० ॥

१२७ ] ति० टी०–क्व गत्वेति योजना । न क्वापीत्यर्थः ॥ १२७ ॥

रा० टी०–तदाकारमाह—तिष्ठेति । मम विप्रियं कृत्वा क्व गत्वा मोक्षं मृत्युराहित्यमवाप्स्यसि न क्वापीत्यर्थः अतः तिष्ठ तिष्ठ ॥ १२९ ॥

गो० टी०–तिष्ठ तिष्ठेति । ईदृशं लक्ष्मणप्रहाररूपं सीताहरणरूपं वा । मोक्षं मत्त इति शेषः ॥ १३१ ॥

१२८ ] ति० टी०–तदेवाह—यदीति । यद्यपीन्द्रादीञ्शरणं गमिष्यसि, दशधा दिशो दशप्रकारा दिशो वा तदन्तान्वाश्य गमिष्यसि, तथापि तत्र गतोऽपि मे मत्तो न विमोक्ष्यसे । 'दश वा दिशो वा' इति पाठे दशापि दिश इत्यर्थः । वाशब्दोऽप्यर्थे ॥ १२८ ॥

रा० टी०–यदीति । यदि इन्द्रादीन् गमिष्यसि दशधा दिशो वा इन्द्रादिभ्योऽन्यत्रेत्यर्थः गमिष्यसि तथापि मे गतो मद्दृष्टिपथं प्राप्तस्त्वं मे मद्बाणात् न विमोक्ष्यसे किंच दशधा शिरोभेदेन दशप्रकारस्त्वम् आदिश उपदेशकर्तॄन् इन्द्रादीन् गमि-

१ द्रवन्तीं वानरीमिति गो. पाठः । २ उपसंगम्येति गो. पाठः । ३ बलवन्तं समाहित इति गो. पाठः । ४ आरुरोह महाशूरो बलवन्तमिति गो. पाठः । ५ राघव इति गो. पाठः । ६ निःस्वनमिति गो. पाठः । ७ अथवेति गो. पाठः ।

यश्चैष शक्त्या निहतस्त्वयाद्य गच्छन्विषादं सहसाभ्युपेत्य ।
स एष रक्षोगणराजमृत्युः सपुत्रपौत्रस्य तवाद्य युद्धे ॥ ॥ १२९ ॥
एतेन चात्यद्भुतदर्शनानि शरैर्जनस्थानकृतालयानि ।
चतुर्दशान्यात्तवरायुधानि रक्षःसहस्राणि निषूदितानि ॥ ॥ १३० ॥
राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महाबलः । वायुपुत्रं महावेगं वहन्तं राघवं रणे ॥ १३१ ॥
रोषेण महताविष्टः पूर्ववैरमनुस्मरन् । आजघान शरैर्दीप्तैः कालानलशिखोपमैः ॥ १३२ ॥
राक्षसेनाहते तस्य ताडितस्यापि सायकैः । स्वभावतेजोयुक्तस्य भूयस्तेजोऽभ्यवर्धत ॥ १३३ ॥
ततो रामो महातेजा रावणेन कृतव्रणम् । दृष्ट्वा प्लवगशार्दूलं क्रोधस्य वशमेयिवान् ॥ १३४ ॥
तस्याभिसंक्रम्य रथं सचक्रं साश्वध्वजच्छत्रमहापताकम् ।
ससारथिं साशनिशूलखड्गं रामः प्रचिच्छेद शितैः शराग्रैः ॥ ॥ १३५ ॥

---

त्यसि तदापि न विमोक्ष्यसे इति दिक् अत्र वैश्वानरशब्देनविष्णुः पूर्वोत्तरसाहचर्यात् तथाहि सूत्रम् वैश्वानरस्साधारणशब्दविशेषात् ॥ १३० ॥

गो० टी०—यदीति । इन्द्रादीन् वा स्वयम्भ्वादीन् वा यदि गमिष्यसि यद्यपि गमिष्यसि तथापि अद्य मत्समीपं गतस्त्वं मे बलतः न विमोक्ष्यसे । दश वा दिशो वेत्यत्र एको वाकारश्चार्थः ॥ १३२ ॥

१२९ ] ति० टी०—एवं परमक्रोधे हेतुमाह—य इति । अद्य त्वया युद्धं गच्छन्नसौ लक्ष्मणस्त्वया शक्त्या निहतस्ताडितः सन्सहसा विषादं गतः, अतोऽभ्युपेत्य प्रतिज्ञाय स एषोऽहं तद्दुःखशान्तये सपुत्रपौत्रस्य ते संख्ये मृत्युर्भविष्यामीति शेषः ॥ १२९ ॥

रा० टी०—य इति । हे रक्षोगणराज त्वया शक्त्या निहतः अत एव विषादमभ्युपेत्य गच्छन् इह प्राप्तः य एष लक्ष्मणः स एषः सपुत्रपौत्रस्य तव मृत्युः मृत्युहेतुः ॥ १३१ ॥

गो० टी०—यश्चैवेति । अद्य य एष त्वया शक्त्याभिहतः स एषः तव विषादमिच्छन् सन् सपुत्रदारस्य तव मृत्युः सन् सहसा अभ्युपेतः अभ्युपागतप्रायः । अचिरादागमिष्यतीत्यर्थः । यद्वा अभेदेनोच्यते । यः शक्त्याभिहतः स एवाहमागतवानस्मि । लक्ष्मणं प्राहरमिति मा गा गर्वमिति भावः ॥ १३३ ॥

१३०–१३२ ] ति० टी०—एतेन मया तावकानि रक्षांसि निषूदितानि ॥ १३०–१३२ ॥

रा० टी०—नन्वेवं त्वया मृषैवोच्यते इत्यत आह—एतेनेति । एतेन मया जनस्थानकृतालयानि चतुर्दशरक्षःसहस्राणि निषूदितानि एतेन तद्विघातने स्वसामर्थ्यं सूचितम् ॥ १३२ ॥

गो० टी०—लक्ष्मणेनाप्रहृतः कथं त्वया प्रहृतः स्यामित्याशङ्क्य स्वपराक्रमविशेषं दर्शयति—एतेनेति । एतच्छब्दः सन्निहितपरः एषोस्मीत्यादिप्रयोगात् अयं जन इति प्रयोगाच्च । मयेत्यर्थः । मृत्युशब्दापेक्षया वा एतेनेत्युक्तिः । चतुर्दशानि चतुर्दशशब्दादर्शआद्यचि टिलोपे कृते जसि रूपम् । यद्वा एतेनेति स्वाभेदेन लक्ष्मणो निर्दिश्यते ॥ १३४ ॥

रा० टी०—राघवस्येति । राक्षसेन्द्रः राघवस्य वचः श्रुत्वा पूर्ववैरमनुस्मरन् सन् राघवं वहन्तं वायुपुत्रं दीप्तैः शरैराजघान अर्द्धचतुष्टयमेकान्वयि ॥ १३३ ॥ १३४ ॥

गो० टी०—राघवस्येत्यर्धत्रयमेकं वाक्यम् । वहन्ततिमि । आत्मानं प्रहृत्य पुनरपि रामं वहतीति क्रोधादिति भावः ॥ १३५ ॥

१३३–१३४ ] ति० टी०—भूयस्तेजः शौर्यं विद्धमभूत् ॥ १३३ ॥ १३४ ॥

रा० टी०—राक्षसेनेति । राक्षसेन ताडितस्यापि स्वभावतेजोयुक्तस्य स्वाभाविकरामतेजसाभिरक्षितस्येत्यर्थः इममतः तेजो भूयोऽधिकमभ्यवर्द्धत ॥ १३५ ॥

गो० टी०—राक्षसेनेति । स्वभावतेजः स्वाभाविकतेजः ॥ १३६ ॥

रा० टी०—तत इति । रामः रावणेन कृतव्रणं व्रणाय कृतः प्रयत्नो यस्मिन् तं प्लवगशार्दूलं दृष्ट्वा क्रोधस्य प्रातीतिककोपस्य वशमिव एयिवान् वशशब्दः आधारक्तिबन्तप्रकृतिककर्तृक्तिबन्तः किंच क्रोधस्य क्रोधवतो वशं कान्तिमेयिवान् कोपवत्सदृशकान्तिमानभवदित्यर्थः ॥ १३६ ॥

गो० टी०—तत इति । एयिवान् प्राप्तः ॥ १३७ ॥

१३५ ] ति० टी०—अभिसंक्रम्य संमुखो भूत्वा ॥ १३५ ॥

रा० टी०—तस्येति । तस्य रावणस्य संमुखमभिसंक्रम्य सचक्रम् अश्वादिसहितम् अशनिप्रभृतिसहितम् रथम् रामः शराग्रैः प्रचिच्छेद ॥ १३७ ॥

गो० टी०—तस्येति । अभिसंक्रम्य पौनःपुन्येन समीपं गत्वा ॥ १३८ ॥

---

१ इच्छन्निति गो. पाठः । २ दारस्येति गो. पाठः । ३ कपिमिति गो. पाठः । ४ वीर्यमिति गो. पाठः । ५ इदमर्थं गो. पुस्तके नास्ति । ६ तीक्ष्णैरिति गो. पाठः । ७ कोपस्येति गो. पाठः । ८ चक्रस्येति गो. पाठः । ९ शरैःसुपुङ्खैरिति गो. पाठः ।

अथेन्द्रशत्रुं तरसा जघान बाणेन वज्राशनिसंनिभेन ।
भुजान्तरे व्यूढसुजातरूपे वज्रेण मेरुं भगवानिवेन्द्रः ॥ ॥ १३६ ॥
यो वज्रपाताशनिसंनिपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ ॥ १३७ ॥
तं विह्वलन्तं प्रसमीक्ष्य रामः समाददे दीप्तमथार्धचन्द्रम् ।
तेनार्कवर्णं सहसा किरीटं चिच्छेद रक्षोधिपतेर्महात्मा ॥ ॥ १३८ ॥
तं निर्विषाशीविषसंनिकाशं शान्तार्चिषं सूर्यमिवाप्रकाशम् ।
गतश्रियं कृत्तकिरीटकूटमुवाच रामो युधि राक्षसेन्द्रम् ॥ ॥ १३९ ॥
कृतं त्वया कर्म महत्सुभीमं हतप्रवीरश्च कृतस्त्वयाहम् ।
तस्मात्परिश्रान्त इति व्यवस्य न त्वां शरैर्मृत्युवशं नयामि ॥ ॥ १४० ॥

---

१३६ ] ति० टी०—व्यूढं विशालम् । सुजातरूपं राजार्हमहाभरणचन्दनादिभिः प्रशस्ताकारं तस्मिन् ॥ १३६ ॥

रा० टी०—अथेति । रामः व्यूढं पुष्टं सुजातं सुन्दरं रूपमाकृतिर्यस्य तस्मिन् भुजान्तरे इन्द्रशत्रुम् इन्द्रो मेरुमिव आजघान ॥ १३८ ॥

गो० टी०—अथेति । वज्राशनिसन्निभेनेति । बाणस्य वज्रसाम्यमुच्यते वज्रेण मेरुं भगवानिवेन्द्र इति प्रहर्तू रामस्येन्द्रसाम्यमित्यपुनरुक्तिः । भगवान् वीर्यवान् । भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिष्वित्यमरः ॥ १३९ ॥

१३७-१३८ ] ति० टी०—वज्रपातश्चाशनिसंनिपातश्चेति समाहारैकवस्त्वम् ॥ १३७ ॥ १३८ ॥

रा० टी०—य इति । वज्रपातात् अशनिसन्निपाताच्च समाहारद्वन्द्वः यो न चुक्षुभे न चचाल च स राजा रावणः रामबाणाभिहतस्सन् आर्तोऽभवदिति शेषः चचाल च चापं भूमौ मुमोच च ॥ १३९ ॥

गो० टी०—य इति । यः पुरा । वज्रपातयुक्ताशनिसन्निपातादिति मध्यमपदलोपिसमासः । वज्रम् इन्द्रायुधम् अशनिः औत्पातिकः न चुक्षुभे नार्तिं प्राप्तः नापि चचाल नार्तिनिमित्तं चलनं प्राप्तः । राजा अन्यूनराजभावश्च स्थितः । सः रामबाणाभिहतः भृशार्तः भृशमार्तः क्षुब्धः चचाल वीरोपि चापं मुमोच स्वस्य स्वरक्ष्यत्वात्स्वयं त्यक्तवान् रामैकरक्ष्यत्वद्योतनाय ॥ १४० ॥

रा० टी०—तमिति । विह्वलन्तं तं रावणं रामः प्रसमीक्ष्य अर्धचन्द्रं शरविशेषं समाददे तेनार्धचन्द्रेण रक्षोधिपतेः किरीटं चिच्छेद ॥ १४० ॥

गो० टी०—तमिति । विह्वलन्तं मूर्च्छितम् प्रसमीक्ष्य तस्यानन्यशरणत्वमवलोक्य अर्धचन्द्रं अर्धचन्द्राकाराग्रं बाणम् आददे तेन मुकुटं चिच्छेद मानभङ्गमकरोदित्यर्थः । महात्मा महामनाः दयालुरित्यर्थः । आभ्यां श्लोकाभ्यां भगवद्रक्षणे निमित्तं स्वयत्ननिवृत्तिरेवेत्युक्तम् ॥ १४१ ॥

१३९ ] ति० टी०—किरीटकूटं किरीटसमूहम् ॥ १३९ ॥

रा० टी०—तमिति । निर्विषा ये आशीविषा महासर्पाः तत्सन्निकाशं तत्सदृशं कृत्तः किरीटकूटः किरीटसमूहो यस्य अत एव गतश्रियं राक्षसेन्द्रं राम उवाच ॥ १४१ ॥

गो० टी०—तमिति । तं त्यक्तचापम् अत एव निर्विषाशीविषसन्निकाशं निर्विषसर्पतुल्यम् अप्रकाशं निस्तेजस्कम् अत एव शान्तार्चिषं शान्तकिरणं सूर्यमिव स्थितम् कृत्तकिरीटकूटं छिन्नकिरीटसमूहम् मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियामित्यमरः । अत एव गतश्रियं निष्प्रभम् उवाच ॥ १४२ ॥

१४० ] ति० टी०—हताः प्रवीरा यस्य तथा । तस्माद्युद्धधर्मज्ञानात् । व्यवस्य ज्ञात्वा ॥ १४० ॥

रा० टी०—तदाकारमाह—कृतमिति । त्वया महत् सुभीमं कर्म कृतम् अहं च त्वया हतप्रवीरोऽस्मि तस्मादपि परिश्रान्त एषः प्राप्तश्रम इति व्यवस्य निश्चित्य त्वां शरैर्मृत्युवशं न नयामि ॥ १४२ ॥

गो० टी०—कृतमिति । महत् अतितरदुष्करम् सुभीमं कर्म युद्धं कृतम् किं चाहं हतलक्ष्मणादिप्रवीरश्च कृतोस्मि तस्मात् अनेकवीरपतनावधिकरणकरणात् त्वं परिश्रान्तः आयुधधारणेपि श्रान्त इति व्यवस्य निश्चित्य त्वां मृत्युवशं मृत्योरधीनतां न नयामि । चिररणपरिश्रान्तकृन्तनकृतापवादापनोदाय संप्रति भवतः प्राणापहरणकर्मणो विरमामीत्यर्थः ॥ १४३ ॥

प्रयाहि जानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लङ्काम् ।
आश्वस्य निर्याहि रथी सधन्वी तदा बलं प्रेक्ष्यसि मे रथस्थः ॥ ॥ १४१ ॥
स एवमुक्तो हतदर्पहर्षो निकृत्तचापः स हताश्वसूतः ।
शरार्दितो भग्नमहाकिरीटो विवेश लङ्कां सहसा स्म राजा ॥ ॥ १४२ ॥
तस्मिन्प्रविष्टे रजनीचरेन्द्रे महाबले दानवदेवशत्रौ ।
हरीन्विशल्यान्सह लक्ष्मणेन चकार रामः परमाहवाग्रे ॥ ॥ १४३ ॥
तस्मिन्प्रभग्ने त्रिदशेन्द्रशत्रौ सुरासुरा भूतगणा दिशश्च ।
ससागराः सर्वमहोरगाश्च तथैव भूम्यम्बुचराः प्रहृष्टाः ॥ ॥ १४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ।

रावणो लङ्कां प्रविश्यासनं काञ्चनमयमध्यास्य रक्षांसि प्रेक्षमाण इदमब्रवीत् यत्खलु परमं तपस्तप्तं मया तन्मोघमथ यदिन्द्रसदृशोऽप्यहं मनुजेन रामेण जितः अत्रोमारम्भावेदवतीनन्दीश्वरानरण्यशापा एव हेतव इति स्मरामीति । अथ तेन लङ्कां गोपायितुं कुम्भकर्णं च प्रबोधयितुं कृतादेशैर्निशाचरैरनल्पयत्नेनानितरशक्येन कथमपि प्रबोधितः कुम्भकर्णोऽग्रजसमीपं गतः । ततस्तं वीक्ष्य सर्वे हरयो भीता दुद्रुवुः ।

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः । भग्नदर्पस्तदा राजा बभूव व्यथितेन्द्रियः ॥ १ ॥
मातंग इव सिंहेन गरुडेनेव पन्नगः । अभिभूतोऽभवद्राजा राघवेण महात्मना ॥ २ ॥

१४१-१४४ ] ति० टी०—इतो रणात्प्रयाहीति योजना । जानाम्यनुजानामि । प्रेक्ष्यसि प्रेक्षिप्यसि ॥ १४१-१४४ ॥

अयं रावणपराभवस्तन्मालीयशुक्लषष्ठ्यां सायंकाले ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

रा० टी०—प्रयाहीति । त्वं रणार्दित इत्यहं जानामि अतः प्रयाहि लङ्कां प्रविश्य आश्वास्य स्वास्थ्यं प्राप्य रथादिमान् सन् निर्याहि इहागच्छेत्यर्थः तदा मे बलं प्रेक्ष्यसि प्रेक्षिष्यसे ॥ १४३ ॥

गो० टी०—गच्छेति । रिपौ पुरो विलसति कथं गच्छेयमित्यत्राह—अनुजानामीति । रणार्दितः युद्धे श्रान्तः रात्रिंचरराज कूटयोधिन्निति सापहासोक्तिः आश्वास्य विश्रम्य रथी धन्वी च सन्निर्याहि ! स त्वं तदा तादृशं मे बलं रथस्थ इत्यपलक्षणं, धानुष्कश्च सन् द्रक्ष्यसीत्यन्वयः ॥ १४४ ॥

रा० टी०—स इति । एवमुक्तो राजा रावणः लङ्कां सहसा विवेश ॥ १४४ ॥

गो० टी०—स इति । अत्र क्रियाभेदात्तच्छब्दत्रयमिति न तद्वैयर्थ्यम् । सहसा मुकुटभङ्गकृतलज्जयेति भावः ॥ १४५ ॥

रा० टी०—तस्मिन्निति । रजनीचरेन्द्रे प्रविष्टे सति लङ्कामिति शेषः परमाहवाग्रे विद्यमानो लक्ष्मणेन सह रामः हरीन् विशल्यान् शररहितान् चकार ॥ १४५ ॥

गो० टी०—तस्मिन्निति । प्रविष्टे लङ्कामिति शेषः । दानवदेवशत्रावित्यनेन रावणनिर्गमो देवदानवहर्षहेतुरिति सूच्यते । सह लक्ष्मणेनेति सह लक्ष्मणस्य पूर्वमेव विशल्यत्वेप्यादरात् पुनः करणम् । परमाहवाग्र इत्यनेन विशल्यकरणं विना सुग्रीवादीनां हरीणामन्यत्रानयनासंभवः सूच्यते ॥ १४६ ॥

रा० टी०—तस्मिन्निति । त्रिदशेन्द्रशत्रौ तस्मिन् रावणे प्रभग्ने सति हरादयः प्रहृष्टा बभूवुरिति शेषः ॥ १४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

गो० टी०—पूर्वसूचितं देवादिहर्षं प्रपञ्चयति—तस्मिन्निति । प्रभिन्ने पराजिते दिशः दिक्पालाः सागराः सागरवासिनः अम्बुचराः सागरभिन्नाम्बुचराः हृष्टाः बभूवुरिति शेषः । षष्ठ्यां रावणमुकुटभङ्गः ॥ १४७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

१-२ ] ति० टी०—स इति ॥ १ ॥ २ ॥

१ गच्छानुजानामीति गो. पाठः । २ च धन्वीति गो. पाठः । ३ कृत्तेति गो. पाठः । ४ भिन्न इति गो. पाठः । ५ हर्षीति गो. पाठः । ६ चोति गो. पाठः ।

ब्रह्मदण्डप्रतीकानां विद्युच्चलितवर्चसाम् । स्मरन्राघवबाणानां विव्यथे राक्षसेश्वरः ॥ ३ ॥
स काञ्चनमयं दिव्यमाश्रित्य परमासनम् । विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ॥ ४ ॥
सर्वं तत्खलु मे मोघं यत्तप्तं परमं तपः । यत्समानो महेन्द्रेण मानुषेणै विनिर्जितः ॥ ५ ॥
इदं तद्ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् । मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा ॥ ६ ॥
देवदानगन्धर्वैर्यक्षराक्षसपन्नगैः । अवध्यत्वं मया प्रोक्तं मानुषेभ्यो न याचितम् ॥ ७ ॥
तमिमं मानुषं मन्ये रामं दशरथात्मजम् । इक्ष्वाकुकुलजातेन अनरण्येन यत्पुरा ॥ ८ ॥
उत्पत्स्यति हि मद्वंशे पुरुषो राक्षसाधम । यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् ॥ ९ ॥
निहनिष्यति सङ्ग्रामे त्वां कुलाधम दुर्मते । शप्तोऽहं वेदवत्या च यथा सा धर्षिता पुरा ॥ १० ॥

---

रा० टी०—रावणकर्तृकलङ्काप्रवेशानन्तरकालिकं रावणवृत्तान्तमाह स इत्यादिभिः रामबाणभयार्दितोऽत एव भग्नो दर्पो यस्य स राजा रावणः व्यथितेन्द्रियो बभूव ॥ १ ॥

गो० टी०—अथ कुम्भकर्णप्रबोधनं षष्टौ—स प्रविश्येत्यादि । रामबाणभयार्दितः किमिदानीमपि रामबाणाः पतेयुरिति भयपीडितः । व्यथितेन्द्रियः दुःखितमनस्कः ॥ १ ॥

रा० टी०—तदेव भंग्यन्तरेणाह मातङ्ग इति द्वाभ्याम् राजा रावणः राघवेणाभिभूतोऽभवत् ॥ २ ॥

गो० टी०—मनोव्यथामुपपादयितुं तद्धेतुं सदृष्टान्तमनुवदति—मातङ्ग इवेति । महात्मना महास्वभावेन । बलवतेत्यर्थः ॥ २ ॥

३–४ ] ति० टी०—ब्रह्मदण्डो युगान्तसमुत्थितोऽग्निवर्णो धूमकेतुः । यद्वा ब्रह्मास्त्रममोघत्वेन साम्यं राघवबाणानामिति कर्मणि शेषे षष्ठी ॥ ३ ॥ ४ ॥

रा० टी०—ब्रह्मेति । ब्रह्मदण्डेन युगान्तकालसमुत्थाग्निना प्रतीकानां सदृशानां विद्युदिव चलितं वर्चो येषां तेषां राघवबाणानां स्मरन् राक्षसेश्वरो विव्यथे ॥ ३ ॥

रा० टी०—स इति । स रावणः काञ्चनमयं परमासनमाश्रित्य रक्षांसि विप्रेक्षमाणस्सन् अब्रवीत् ॥ ४ ॥

गो० टी०—ब्रह्मदण्डेति । ब्रह्मदण्डः ब्रह्मशापः । सर्वाङ्गनिगरणक्षमो वसिष्ठदण्डो वा ब्रह्मास्त्रं वा । युगान्तकालसमुत्थितोग्निवर्णो धूमकेतुरित्येके । तत्प्रकाशानां बाणानामिति "अधीगर्थदयेशां कर्मणि" इति षष्ठी ॥ ३ ॥ ४ ॥

५ ] ति० टी०—महेन्द्रेण समान इति यत्तदपि मोघं निरर्थकम् । तत्र हेतुः—मानुषेणेति ॥ ५ ॥

रा० टी०—तदाकारमाह—सर्वमित्यादिभिः । यद्यस्मात् महेन्द्रेण समानोऽहं मानुषेण विनिर्जितः तस्मात् यत् परमं तपः मे तप्तं तत्सर्वं मोघं विफलमभवदिति शेषः ॥ ५ ॥

गो० टी०—सर्वमिति । मे मया यत्तपस्तप्तं तत् सर्वं मोघं जातमिति शेषः ॥ ५ ॥

६ ] ति० टी०—मानुषेभ्यस्तव भयमिति यदुक्तं तद्घोरं वाक्यम्, तदर्थो मामुपस्थितं तत्तथा संपत्स्यते चेति शेषः ६ ।

रा० टी०—इदमिति । त्वं मानुषेभ्यो भयं विजानीहि इदं ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितं मया स्मृतमित्यर्थः ॥ ६ ॥

गो० टी०—ब्रह्मवाक्यं तु फलितमित्याह—इदमिति । त्वं मानुषेभ्यो भयं विजानीहीति यत् ब्रह्मणो घोरं वाक्यं तदिदं मामभि मां प्रति उपस्थितं मयि फलितमित्यर्थः । यत्तस्तत् ब्रह्मवाक्यं तथा । नतु मोघं भविष्यतीत्यर्थः ॥ ६ ॥

७ ] ति० टी०—ननु भगवता तथा भयोपदेशः कुतस्तत्राह—देवेत्यादि । यस्मान्मनुष्येभ्यो न याचितं तस्मात्तेभ्यो भयं जानीहीत्युक्तमित्यन्वयः ॥ ७ ॥

रा० टी०—तथा ब्रह्मणोक्तौ हेतुमाह देवेति । देवादिभिरेव अवध्यत्वं मया प्रोक्तं याचितं मानुषेभ्यस्तु न याचितम् ॥ ७ ॥

गो० टी०—देवेति । प्राप्तं याचित्वा प्राप्तम् । मानुषेभ्योऽवध्यत्वं नैव याचितमित्यर्थः ॥ ७ ॥

८ ] ति० टी०—यो मानुषो भयहेतुरुक्तस्तमिमं दशरथात्मजमेव मन्ये । तत्रैतन्निश्चये हेतुमाह—इक्ष्वाकुकुलेत्यादि ॥ ८ ॥

रा० टी०—तमिति । तं मन्मरणकारकं रामं मानुषं मन्ये निश्चिनोमि तत्र हेतुमाह इक्ष्वाकुकुलजातेन अनरण्येन पुरा पूर्वं यद्यस्मात् शप्तमित्यपकृष्यते ॥ ८ ॥

गो० टी०—विदितमित्यादिसार्धश्लोकद्वयमेकान्वयम् । यस्त्वामित्यत्र तु आमिति छेदः । आमित्यङ्गीकारे । यस्तु पुरुषस्त्वां संग्रामे निहनिष्यति सः मद्वंशे उत्पत्स्यते आम् निश्चितम् इत्येवं प्रकारेण इक्ष्वाकुकुलनाथेन अनरण्येन यत् यस्मात् पुरा विदितं प्रतिज्ञातम् । विदितौ ज्ञातविश्रुताविति नानार्थरत्नमाला । तस्मात् मानुषं रामं दशरथात्मजं दशरथपुत्रत्वेन जातं मन्ये । राक्षसाधम कुलाधमेति जातितः कुलतश्च नीचत्वमुच्यते । दुःखातिरेकादनरण्योक्तपरुषानुवादः । अन्ये तु त्वामिति द्विरुक्तिरनुस्मरणार्थेत्याहुः अपरे त्वामत्यातिशयेन द्विरुक्तिरिति । त्वां प्रत्युत्पत्स्यत इति द्वितीयात्वांशब्दान्वय इत्येके ॥ ८ ॥ ९ ॥

९–१० ] ति० टी०—कुलाधम स्वकुलाधम । राक्षसकुला-

---

१ प्रकाशानामिति गो. पाठः । २ सदृशेति गो. पाठः । ३ अस्मीति गो. पाठः । ४ प्राप्तमिति गो. पाठः । ५ विदितमिति गो. पाठः । ६ नाथेनेति गो. पाठः । ७ आस्यने पद्यं गो. पुस्तके । ८ यदेति गो. पाठः ।

सेयं सीता महाभागा जाता जनकनन्दिनी । उमा नन्दीश्वरश्चापि रम्भा वरुणकन्यका ॥ ११ ॥
यथोक्तास्तन्मया प्राप्तं न मिथ्या ऋषिभाषितम् । एतदेवं समागम्य यत्नं कर्तुमिहार्हथ ॥ १२ ॥
राक्षसाश्चापि तिष्ठन्तु चर्यागोपुरमूर्धसु । स चाप्रतिमगाम्भीर्यो देवदानवदर्पहा ॥ १३ ॥
ब्रह्मशापाभिभूतस्तु कुम्भकर्णो विबोध्यताम् । समरे जितमात्मानं प्रहस्तं च निषूदितम् ॥ १४ ॥
ज्ञात्वा रक्षो भीमबलमादिदेश महाबलः । द्वारेषु यत्नः क्रियतां प्राकारश्चाधिरुह्यताम् ॥ १५ ॥
निद्रावशसमाविष्टः कुम्भकर्णो विबोध्यताम् । सुखं स्वपिति निश्चिन्तः कामोपहतचेतनः ॥ १६ ॥

यमेति यावत् । इतीति शेषः । शप्तोऽहमित्युभयान्वयि । वेदवत्या च शप्त इत्यन्वयः । शापहेतुमाह—यथा यतः सा धर्षिता ॥ ९ ॥ १० ॥

रा० टी०—तत्प्रकारमाह उत्पत्स्यतीति । हे राक्षसाधम यः पुत्रादिसहितं त्वां निहनिष्यति स पुरुषः त्वां त्वत्कृतोपद्रवमालक्ष्येति शेषः मद्वंशे उत्पत्स्यति सार्धश्लोक एकान्वयी ॥ ९ ॥

रा० टी०—शप्त इति यदा सा वेदवती पुरा धर्षिता मयेति शेषः तदा वेदवत्या अहं शप्तः अहमेव त्वद्वधं कारयिष्यामीत्युक्त इत्यर्थः अत एव सा हिंसाकारिकया तथाप्रतिज्ञाकर्त्र्येत्यर्थः वेदवत्यैव हेतुना तत्प्रार्थनयेत्यर्थः इयं सीता जाता यथा चायमर्थस्तथा बालकाण्डप्रथमसर्गे विराधोद्धारप्रकरणे निरूपितम् निरूपयिष्यामश्चोत्तरकाण्डे ॥ १० ॥

गो० टी०—शप्तोऽहमिति । किं चाहं पुरा वेदवत्या शप्तोस्मि । मत्कृते तव विनाशो भविष्यतीति । कदेत्यत्राह—यदेति । सा वेदवती यदा धर्षिता बलात्कृता तदा । अथ तया किं क्रियते सीता खेतदुपद्रवमूलमित्यत्राह—सेयमिति । सा वेदवती स्वशापनिर्वाहार्थं सीता जाता ॥ १० ॥

११ ] ति० टी०—सेयं वेदवत्येव जनकनन्दिनीत्यर्थः । भयकारणं शापान्तरमाह—उमेति ॥ ११ ॥

रा० टी०—शापान्तराण्यपि स्मरति उमेति । उमादयः यथा येन प्रकारेण उक्ताः उक्तवत्यः तत्तथा मया प्राप्तं तत्र हेतुः ऋषिभाषितं मंत्रद्रष्टृभिरुक्तं मिथ्या न ॥ ११ ॥

गो० टी०—उमेति । उमादयश्चत्वारः तपसा तपःप्रभावेन यथोक्ताः यथोक्तवन्तः तथा प्राप्तं सिद्धम् । ऋषिभाषितं न मिथ्या भवति हि । नन्दीश्वररम्भाशापावुत्तररामायणे प्रोक्तौ । उमावरुणकन्यकाशापौ चानेनैव सिद्धौ ॥ ११ ॥

१२ ] ति० टी०—यथोक्ता मन्नाशनिमित्तं शापं यथोक्तवन्तस्तत्तदथ मया प्राप्तम् । 'यदूचुस्तन्मया' इति पाठान्तरम् । तत्रोमाशापः कैलासशिखरचालनवेलायां रावणस्य स्त्रीनिमित्तं मरणमित्येवंरूप इत्याहुः । नन्दीश्वरशापस्तु—'यस्माद्वानरमूर्तिं मां दृष्ट्वा राक्षस दुर्मते । मौर्ख्यान्मामवजानीषे परिहासं च मुञ्चसि ॥ तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ॥' इति । रम्भेत्यनेन रम्भानिमित्तनलकूबरशाप उच्यते । 'यदा त्वकामां कामार्तो धर्षयिष्यसि योषितम् । मूर्धा ते सप्तधा रक्षः शकलीभविता तदा ॥' इति । वरुणकन्यका पुञ्जिकस्थला तन्निमित्तश्च ब्रह्मशापः स्त्रीधर्षणे मरणरूपः । तदुक्तस्यावश्यप्राप्तौ हेतुः—न मिथ्येति । ऋषिपदेन तपोयुक्ता उच्यन्ते । एतदेवोक्तं मन्नाशनिमित्तं समागम्य ज्ञात्वा यत्नमित्यादि । भयस्य निश्चितत्वान्निवृत्तियत्नं कुरुतेत्यर्थः ॥ १२ ॥

रा० टी०—एतदिति । एतत् मदुक्तं सर्वं समागम्य ज्ञात्वैव यत्नं कर्तुमर्हथ अथ पृथक् ॥ १२ ॥

गो० टी०—एतदिति । एतत् शापस्वरूपम् । अभ्युपागम्य ज्ञात्वा । इह प्रकृते शत्रुविजये कार्ये यत्नम् अवधानं कर्तुमर्हथ । चर्याः गोपुरपार्श्वस्थभटसंचारप्रदेशाः ॥ १२ ॥

१३ ] ति० टी०—कोऽसौ यत्नो योऽस्माभिः कार्यस्तत्राह—राक्षसा इति । चर्यागोपुरे व्याख्याते । अप्रतिमगाम्भीर्योऽनुपमगाम्भीर्यः ॥ १३ ॥

रा० टी०—यत्नाकारमाह—राक्षसा इति । चर्यासु राजमार्गेषु गोपुरमूर्धसु च राक्षसास्तिष्ठन्तु अप्रतिमगाम्भीर्यः असदृशगाम्भीर्यविशिष्टः ब्रह्मशापेनाभिभूतः सुप्त इत्यर्थः कुम्भकर्णः विबोध्यताम् ॥ १३ ॥

गो० टी०—स चेति । ब्रह्मशापाभिभूतः ब्रह्मशापकृतनिद्रापरवश इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—कुम्भकर्णविबोधनाशयं कविराह—समरे इति । आत्मानं पराजितं प्रहस्तं च निषूदितम् ॥ १४ ॥

रा० टी०—ननु महाभिमानोऽतिबली रावणस्साहाय्यार्थं भ्रातरं कथं प्रबोधयतीत्याशंक्य कविराह—स इति । स रावणः आत्मानं पराजितं ज्ञात्वा प्रहस्तं निषूदितं ज्ञात्वा रक्षः कुम्भकर्णं भीमबलं ज्ञात्वा आदिदेश कुम्भकर्णो विबोध्यतामित्याज्ञापयामास ॥ १४ ॥

गो० टी०—किमर्थं कुम्भकर्णो विबोध्यत इत्याशङ्क्य कविराह—स पराजितमिति । आदिदेश कुम्भकर्णविबोधनार्थमिति शेषः ॥ १४ ॥

१५–१६ ] ति० टी०—ज्ञात्वा एवं स्वस्य बलक्षये सहायार्हं भीमबलं रक्षः कुम्भकर्णं ज्ञात्वा भीमं बलमादिदेशेत्यादुत्त्यान्वयः । कुम्भकर्णबोधनार्थमिति शेषः ॥ १५ ॥ १६ ॥

रा० टी०—रावणोक्तिमाह—द्वारेष्विति । द्वारेषु यत्नः

१ तपसेति गो. पाठः । २ अभ्युपागम्येति गो. पाठः । ३ गम्भीरमिति गो. पाठः । ४ सपराजितमिति गो. पाठः । ५ रक्षोबलं भीममिति गो. पाठः । ६ कालेति गो. पाठः ।

नव सप्त दशाष्टौ च मासान्स्वपिति राक्षसः । मन्त्रं[2] कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि ॥ १७ ॥

प्रबलराक्षसस्थापनादि क्रियतां प्राकारश्चाधिरुह्यतां प्रबलराक्षसैरिति शेषः अहं पृथक् निद्रेति । निद्राया वशेन कांत्या समाविष्टः अत एव कामं यथा भवति तथा उपहता चेतना यस्य अत एव निश्चिन्तः यः कुम्भकर्णः सुखं स्वपिति स विबोध्यताम् ॥ १५ ॥

गो० टी०–द्वारेष्विति । द्वारेषु अवान्तरद्वारेषु । यत्नः क्रियतां, प्राकारश्चाधिरुह्यताम् । वानरानारोहार्थमिति भावः । निद्रावशसमाविष्टः निद्रावशेन शयानः । सद्यः कर्तव्यत्वाय पुनरुक्तिः ॥ १५ ॥

गो० टी०–सुखमिति । दुःखिते चिन्ताकुले अनवाप्तकामे मयि जाग्रति सतीति शेषः । न केवलमिदानीमेव सर्वदाप्येवमेवेत्याह—नवेति । कदाचिन्नवमासान् कदाचित् षण्मासान् कदाचित्सप्तमासान् कदाचिदष्टमासांश्चानियमेन स्वपितीत्यर्थः । अत एवोत्तरकाण्डे अविशेषेण वरप्रार्थना कुम्भकर्णेन क्रियते–स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितमिति । उत्तरत्र रामं प्रति विभीषणवचनं–शयिता ह्येष षण्मासानेकाहं जागरिष्यतीति वचनं तु पक्षान्तराणामप्युपलक्षकम् । अन्यूनाभिप्रायं वा सप्तमासादिस्वापसंभवेपि षण्मासस्वापः संभवत्येव । यद्वा, नवसप्तदशाष्टौ च मासान् स्वपिति राक्षस इति पाठः । दशाष्टौ दशमासहानौ सत्यां नवसप्तमासान् षण्मासानित्यर्थः । अष्टिरशनम् नाश इति यावत् । नवसप्तमासाः षोडशमासाः तेषु दशमासलोपे हि षण्मासा एवावशिष्यन्ते । अथवा षडहैर्मासान्संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्संपश्यन्त्यर्धमासैर्मासान्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान्संपश्यन्त्यमावास्यया मासान् संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान् संपश्यन्ति पौर्णमास्या मासान्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्संपश्यन्तीत्युक्तमासविकल्पेषु षडहानामपि मासत्वभवणात्तत्प्रकारेण नवषडित्युक्तत्रिंशन्मासा अपि अशीत्युत्तरशतदिनतया अमावास्यया पौर्णमास्या वा परिगणनेन षण्मासा एव संपद्यन्त इति न कश्चिद्विरोधः । तथा हि अस्ति किंचित् उत्सर्गिणामयनं नाम सत्रं गवामयनस्य विकृतिः । तत्र प्रकृतौ द्वादशमासेष्वनुष्ठेयानां सोमयागविशेषाणां त्रिंशतोऽनुष्ठेयत्वान्न किंचिदहरुत्स्रष्टुं शक्यते । तद्विकृतावत्र प्रतिमासमेकस्मिन्नहनि सोमयागपरित्यागो विधीयते । तत्र कतममहस्त्यज्यतामित्यपेक्षायामुच्यते अमावास्यया मासान्संपाद्याहरुत्सृजन्त्यमावास्यया हि मासान्संपश्यन्ति पौर्णमास्या मासान्संपाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्संपश्यन्तीति । अस्यार्थः अमावास्यायामनुष्ठेयेन यागेन पूर्वमासं परिसमाप्य उत्तरस्यादिभूतमहस्त्यज्यतामिति । पौर्णमास्यामनुष्ठेयेन यागेन पूर्वमासं परिसमाप्य उत्तरस्यादिभूतमहस्त्यज्यतामिति च । अस्मिन् विधाने अर्थवादे प्रसिद्धिवाचिना हिशब्देन अमावास्याया मासान्तत्वम् । उत्तरवाक्ये पौर्णमास्या मासान्तत्वं च श्रुतम् । एवम्, अर्धमासैर्मासान्संपाद्याहरुत्सृजन्त्यर्धमासैर्हि मासान् संपश्यन्ति षडहैर्मासान् संपाद्याहरुत्सृजन्ति षडहैर्हि मासान्संपश्यन्तीत्यत्रापि पक्षात्मकः षडहात्मकोपि मासोस्तीति हिशब्देन दर्शितम् । ननु च षडहैरिति बहुवचननिर्देशात् पञ्चभिः षडहैरिति व्याख्यानेन त्रिंशद्दिनात्मको मास एवात्र कथ्यत इति चेन्न । अर्धमासैरित्यत्रापि तथात्वापत्तेः । तदानीं बह्वर्धमासानां मासत्वस्वीकारे पक्षद्वयस्यापि मासत्वप्रसङ्गः । तत्र पक्षा वै मासा इत्युक्तरीत्या एकैकस्य पक्षस्य मासत्वस्वीकारे अत्राप्येकैकस्यैव षडहस्य मासत्वस्वीकारो युक्तः । पूर्वकल्पेष्विवात्रापि प्रसिद्धिवाचकहिशब्दप्रयोगात् । अन्यथा उत्तरानुवाके षडहैर्मासान्संपाद्य यत्सप्तममहस्तस्मिन्नुत्सृजेयुरिति वाक्यविरोधः स्यात् । सप्तमत्वं ह्यत्र विशिष्यते । षडहैर्मासानित्यत्र मासशब्दस्य मासैकदेशलक्षणाङ्गीकारे स एव दोषः । तस्मात् षडहात्मकोपि मासोऽस्तीति सिद्धम् । तमिमं श्रौतं षडहमासत्वपक्षमनुस्मरन्तः षण्मासानेव वदन्ति । नव षट् सप्त चाष्टौ च मासान् स्वपिति राक्षस इति ॥ १६ ॥

१७ ] ति० टी०–एतदुत्तरम् 'स हि संख्ये' इत्येव श्लोक इति कतकस्वरसः । क्वचित्तु सार्धश्लोकद्वयमधिकं पठ्यते—द्वारेष्वित्यादि । 'नव सप्त दशाष्टौ च मासान्स्वपिति राक्षसः' इतीदं निद्रायामनियमपरं वाक्यम् । 'शयिता ह्येष षण्मासानेकाहं जागरिष्यतः' इति तु षण्मासादर्वाक् न कदापि जागरणम्, तदुत्तरमपि तदेकाहमेवेति जागरण एव कालनियमपरम्, न तु शयने नियमपरम् । 'स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम्' इति तद्वरप्रार्थनस्योत्तरं वक्ष्यमाणत्वात् । तत्रैव रामं प्रत्यगस्त्यवाक्याच्च । 'तत्र निद्रासमाविष्टः कुम्भकर्णो महाबलः । बहून्यब्दसहस्राणि शयानो न च बुध्यते ॥' इति । केचित्तु नव सप्त षोडश तन्मध्ये दशानामष्टौ त्यागेऽवशिष्टषण्मासान्स्वपितीत्यर्थ इत्याहुः । तथैतदुत्तरम्—'मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि' इत्यर्धं पठ्यते तत्र । यच्च तस्य इतो युद्धप्रारम्भदिनात्प्राक्तने नवमेऽहनीति व्याख्यानं तदसंगतमेव । 'अयं ते सुमहान्कालः शयानस्य महाबल' इत्यनेन षण्मासादधिकत्वस्य सांप्रतनिद्रायां प्रतीतेः । अहःशब्दो लक्षणया मासपरो वा । एतच्चाग्रे स्फुटीकरिष्यते ॥ १७ ॥

रा० टी०–ननु सुप्तो जनो जागर्त्येवेति स्वयं जागरिष्यतीत्यत आह–नवेति–नव च सप्त च षोडशेत्यर्थः तेषां ये दश तेषामष्टौ निगरणे निस्सारणे सतीत्यर्थः मासान् अवशिष्टषण्मासानित्यर्थः राक्षसः कुम्भकर्णः मंत्रं कृत्वा स्वपिति अस्वपत् अतः प्रसुप्तोयमितो नवमेहनि जागरितेति शेषः तद्दिने एव स्वापावधिपूर्तिर्भवितेति तात्पर्यम् । अष्टिशब्दः भक्षणार्थ-

१ षट्सप्तचाष्टौ चेति गो. पाठः । २ मन्त्रयित्वेति गो. पाठः ।

काशधातुप्रकृतिकक्तिन्नन्तः वर्त्तमानसामीप्य इति भूते लट् अत एव शयिता शेषषण्मासानेकाहं जागरिष्यतीति षण्मासमात्रशयनप्रतिपादकवरदानवाक्येन न विरोधः। वस्तुतस्तु नवाद्यन्यतमान् मासान् स्वपितीत्यर्थः वरदानवाक्येन तु न विरोधः तस्य षण्मासाभ्यन्तरमात्रे प्रबोधाभावपरत्वात् तदुत्तरं स्वाभाविकनिद्राया निषेधाभावाच्च एवमेकाहं जागरिष्यतीति वाक्यस्यापि स्वापानन्तरकालिकैकदिने निश्शेषस्वापाभावपरत्वात् तदुत्तरदिने स्वाभाविकजागरणस्य न निषेधः यद्दिनादारभ्य स्वपिति तद्दिनादारभ्य षण्मासान् जागर्ति यद्दिने जागर्ति तदुत्तरदिने न स्वपितीति तात्पर्यम् अत एव स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितमिति वक्ष्यमाणोत्तरकाण्डीयतद्वरप्रार्थनस्य न नैरर्थक्यमत एव तत्र निद्रां समाविष्टः कुम्भकर्णो महाबलः बहून्यब्दसहस्राणि शयनान्न च बुध्यते इति रामं प्रत्यगस्त्यवचनं संगच्छते ॥ १६ ॥

गो० टी०—ननु सुप्तः कथं बोधयितुं शक्य इत्याशङ्क्य इदानीमेव स्वापारम्भात् सुप्रबोधोयमित्याशयेनाह—मन्त्रयित्वेति। अत्र केचित् एकाहं जागरिष्यतीति कुम्भकर्णस्य स्वापोत्सर्जनानन्तरमेकस्मिन् दिन एव प्रबोधनियमस्योक्तत्वान्मन्त्रकरणदिनसमनन्तरदिन एव कुम्भकर्णस्य स्वापारम्भः। आजगाम मुहूर्तेनेत्यनेन विभीषणागमनमपि मन्त्रदिन एव, विभीषणेनाशु जगाम संगममित्यनेन तदागमनानन्तरमेव तस्य स्वीकारः। तद्दिवसप्रभृति दिवसत्रये समुद्रप्रार्थनार्थं रामस्य दर्भशयनम्। तदनन्तरं पञ्चदिनेषु सेतुबन्धः। सेतुबन्धपूर्तिदिवस एव सायंकाले सुवेलारोहणम्। तस्यामेव रात्रौ सुग्रीवरावणयोर्द्वन्द्वयुद्धम्। समनन्तरदिने तुमुलयुद्धम्। तत्रैव रात्रौ नागपाशबन्धमोक्षौ। धूम्राक्षवज्रदंष्ट्राकम्पनवधश्च। अनन्तरदिने प्रहस्तवधः रावणमुकुटभङ्गश्च। एवं दिवसगणनोपपत्तिरिति वदन्ति। तच्चिन्त्यम्। सुवेलारोहणरात्रौ पूर्णचन्द्रोदयवर्णनेन सुवेलारोहणदिनं पौर्णमासीति सिद्धम्। रावणमरणदिनं चामावास्येति स्फुटम्। एवं च तदुक्तरीत्या द्वितीयायामेव मुकुटभङ्गे रावणस्य दर्शपर्यन्तं विलम्ब्य युद्धकरणं चिन्त्यम्। वस्तुतस्तु इतः प्रसक्तयुद्धारम्भदिनादित्यर्थः। तद्दिनमपहाय तत्पूर्वदिनापेक्षया नवमेहनि तत्पूर्वदिनकृतमन्त्रः प्रसुप्तः। तथा च पौर्णमास्यां सुवेलारोहणं प्रथमायां युद्धारम्भः। तत्पूर्वं नवमदिनं सप्तमी। तस्यां कुम्भकर्णः सुप्तः। रामस्य दर्भशयनारम्भश्च षष्ठ्याम्। कुम्भकर्णादिभिर्मन्त्रविचारः तस्यामेव विभीषणनिर्गम इति। इत्थं चाहुः। सीताहरणात् पूर्वं त्रयोदशसंवत्सरा गताः। चतुर्दशवर्षारम्भे सीता हृता पम्पातीरे वसन्तवर्णनात्। आषाढे वालिवधः। तदनन्तरं वर्षर्तुवर्णनात् आश्वयुजे सीतान्वेषणसमुत्साहनमिति स्फुटम्। स्वयंप्रभाबिले बहुकालो गतः। फाल्गुनशुद्धत्रयोदश्यां हनुमतो लङ्काप्रवेशः। पुष्पिताग्रान् वसन्तादौ ददर्श विविधान् द्रुमानिति वसन्तादिभूतफाल्गुनमासतासूचककटक्षाग्रपुष्पितत्वोक्त्या तथा प्रतीतेः। स्थितः ककुद्मानिव तीक्ष्णशृङ्ग इति श्लोके प्रतिपूर्णशृङ्ग इति पदेन प्रतिपूर्णशृङ्गवच्चन्द्रवर्णनस्य तस्यामेव संभवात्। यस्मिन्दिने रात्रौ लङ्कायां सीतान्वेषणं तदनन्तरदिन एव प्रातर्लङ्कादाहः। अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षय इत्युक्तत्वात्। अनन्तरं तस्मिन्नेव दिने अविलम्बेन प्रत्यागमनम्। यदि वा मन्यसे वीर वसैकाहमरिन्दमेति सीतया पृष्टः, एवमाश्वास्य वैदेहीं हनुमान्मारुतात्मजः। गमनाय मतिं चक्र इत्युक्तेः। उपसि लङ्कादाहानन्तरं तस्मिन्नेव दिने मध्याह्नात् पूर्वमेवाङ्गदादिभिर्मधुवनविधमनपूर्वकं रामप्राप्तिः। अरिष्टपर्वतारोहणे तद्वर्णनव्याजेन बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैरिति सूर्योदयसमयमुक्त्वा अनन्तरमस्तमयानुक्तेः। तस्मिन्नेव दिवसे चतुर्दशीशेषयुक्तपौर्णमासीयुतं मध्याह्नं युद्धयात्रा। अस्मिन्मुहूर्ते सुग्रीवप्रयाणमभिरोचये। युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकर इत्युक्तेः। यस्मिन्दिनेभिजिति प्रस्थानं तत्परेद्युरेव समुद्रतीरे सेनानिवेशः। सा स्म याति दिवारात्रं महती हरिवाहिनीत्यारभ्य, मुहूर्तं क्वापि नासतेत्युक्तेः। यत्र दिने लङ्कादाहस्तत्रैव दिवसे सभायां मन्त्रिभिः सह किंचिद्विचारमुक्त्वा, विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहमित्यन्तेन लङ्कादाहदिनवृत्तान्तं परिसमाप्य, ततः प्रत्युषसि प्राप्त इत्यादिना अनन्तरदिने उषःकाले विभीषणोपदेशं द्वितीयमुक्त्वा ततो मन्त्रविचाराय रावणे कुम्भकर्णविभीषणादिभिः सभां प्रविष्टे विभीषणस्य तृतीयमुपदेशमुक्त्वा, इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः। आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः॥ इत्यविच्छेदेन लङ्कादाहदिनानन्तरदिन एव समुद्रतीरे रामसकाशागमवर्णनेन च द्वितीयदिने रामेण समुद्रतीरं प्राप्तमित्यवगम्यते। समुद्रतीरप्राप्तिदिनं च शिष्टफाल्गुनपौर्णमासी अत एव, उत्तराफल्गुनी ह्यद्येति चतुर्थसर्गश्लोके प्रस्थानदिनस्य पौर्णमासीयुक्तत्ववचनमप्यविरुद्धम्। समुद्रतीरप्राप्तिदिनस्य पौर्णमासीयुक्तत्वं च, चण्डनक्रग्राहं घोरं क्षपादौ दिवसक्षये। चन्द्रोदयसमुद्धूतं प्रतिचन्द्रसमाकुलमिति, संध्यासमय एव चन्द्रोदयप्रतिपादनात् सिद्धम्। सेनानिवेशवृत्तान्तो विभीषणागमनवृत्तान्तश्च एकदिनभाव्यपि वाचः क्रमवर्तित्वात् क्रमेणोक्तः। प्रथमायां रामस्य दर्भशयनारम्भः कुम्भकर्णस्वापारम्भश्च। चतुर्थीपञ्चमीषष्ठीसप्तम्यष्टमीषु सेतुबन्धः। अष्टम्यां रात्रौ सुवेलारोहणम्। यत्तु सुवेले, पूर्णचन्द्रप्रदीपा च निशा समभिवर्तत इति वचनम्, तत्पूर्णचन्द्र इव प्रदीपा यस्यां निशायामित्येवमर्थकं व्याख्येयम्। सुग्रीवसेनायां भेर्यादीनामिव प्रदीपादीनामपि संभवात्। सुवेलारोहणानन्तरदिने दिवा लङ्कानिरोधः। तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः। लङ्कायां ददृशुर्वीरा वनान्युपवनानि चेत्युपक्रम्य युद्धवर्णनात्। तत्रैव प्रथमदिनयुद्धे रात्रौ नागपाशबन्धतद्विमोक्षादि। युध्यतामेव तेषां तु तथा वानररक्षसाम्। रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणीत्यारभ्य, सा बभूव

तं तु बोधयत क्षिप्रं कुम्भकर्णं महाबलम् ।
स हि संख्ये महाबाहुः ककुदं सर्वरक्षसाम् । वानरान्राजपुत्रौ च क्षिप्रमेव हनिष्यति ॥ १८ ॥
एष केतुः परं संख्ये मुख्यो वै सर्वरक्षसाम् । कुम्भकर्णः सदा शेते मूढो ग्राम्यसुखे रतः ॥ १९ ॥
रामेणाभिनिरस्तस्य सङ्ग्रामेऽस्मिन्सुदारुणे । भविष्यति न मे शोकः कुम्भकर्णे विबोधिते ॥ २० ॥

निशा घोरा हरिराक्षसहारिणी । ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे ॥ राममेवाभ्यवर्तन्त । तं भीमवेगा हरयो नाराचैः क्षतविग्रहाः । अन्धकारे न ददृशुरित्यादिभिस्तामेव रात्रिं प्रत्यभिज्ञाप्य, निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ । क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः, इत्यादिप्रतिपादनात् । तत्रैव निशीथे वानरहर्षनादकुपितेन रावणेन प्रेषितयोर्धूम्राक्षवज्रदंष्ट्रयोर्युद्धं तद्वधश्च । तयोर्युद्धे दिवा ज्ञापकाभावात् वानरहर्षानन्तर्यश्रवणाच्च । रात्रिविशेषेण तयोर्वधानन्तरं द्वितीयदिने अकम्पनयुद्धम् । तन्निर्गमनवेलायाम्—अभवत्सुदिने चापि दुर्दिनं रूक्षमारुतमिति दिवा ज्ञापकसत्त्वात् । अकम्पनवधानन्तरमेव रावणस्य पूर्वाह्ण एव पुरीपर्यटनम् । अकम्पनवधानन्तरं प्रहस्तयुद्धमविलम्बेन तस्मिन्नेव दिने मध्याह्ने । ननु, अन्योन्यमभिसंरब्धा ग्राहाश्च न चकाशिरे इति ग्रहाणां प्रकाशप्रतिषेधेन प्रहस्तयुद्धं रात्राविति चेन्न । उत्तरत्र दिवायुद्धेषु दिवादर्शनायोग्यानामप्यर्थानां प्रतिपादनात् । यथा रावणयुद्धे । प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् । समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः इत्यादि । न च सर्वरात्रमवर्ततेति पाठानुरोधाद्रात्रावेव तत्प्रतिपादनमिति वक्तुं शक्यम् । तदपपाठत्वस्यान्ते वक्ष्यमाणत्वात् । तस्मिन्नेव द्वितीयदिने रावणपराजयकुम्भकर्णप्रबोधनकुम्भकर्णयुद्धानि । कालविशेषमसंकीर्त्यानन्तरमविच्छेदेन तदुक्तिपूर्वकमग्रिमकल्पे ब्रह्मास्त्रबन्धनतद्विमोक्षरूपे कालविशेषकीर्तनात् । दृश्यते हि । सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् । अह्नः पञ्चमशेषेण वल्लभेन स्वयंभुवः इति ॥ अत्र अह्नः पञ्चमशेषो नाम सायंकाल एव । प्रातःसंगवमध्याह्नापराह्णाः सायमित्यमी । एकस्याह्नः पञ्च भागा विहिताः कालचिन्तकैरिति वचनात् ॥ तस्यामेव द्वितीयायां रात्रौ ब्रह्मास्त्रविमोक्षानन्तरं पुनर्लङ्कानिरोधतद्दाहकुम्भनिकुम्भयूपाक्षशोणिताक्षप्रजंघाकम्पनमकराक्षवधाः । ततोऽस्तंगत आदित्ये रात्रौ तस्मिन्निशामुखे । लङ्कामभिमुखस्योल्का जग्मुस्ते प्लवगर्षभा इत्युक्तेः ॥ एवं परिपूर्णदिनद्वयेन मूलबलेन्द्रजिद्रावणव्यतिरिक्तेषु व्यपदिष्टराक्षसेषु हतेषु तृतीयदिनमारभ्य दिनत्रयेणेन्द्रजिद्युद्धम् । अहो रात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातित इत्युक्तत्वात् । अथ षष्ठदिने मूलबलवधः । तस्मिन् दिने सायंकालमारभ्य दिवारात्रं रावणयुद्धम् । सप्तमदिने रावणवधः । अथवा सप्तमदिने रावणयुद्धम् । अष्टमदिने प्रातःकाले रावणवधः । अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् । कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृत इत्यादि संदर्भस्योभयथापि योजयितुं शक्यत्वात् । पुच्छामावस्यायां रावणवध इति कृत्वा अमावास्यायां रावणवध इति प्रवादः । एवं सति रामरावणयोर्युद्धं सप्तरात्रमवर्ततेत्यादिपाठोऽपि सेनासहितरावणयुद्धापेक्षया संगच्छते । मन्त्रयित्वा प्रद्रुतोऽयमितस्तु नवमेऽहनीति सकलकोशस्थितवचनं च संगच्छते । इतः अस्माद्दिनात् मम मुकुटभङ्गदिनादित्यर्थः । नवमेऽहनि एतद्दिनमपहाय एतत्पूर्वदिनापेक्षया नवमेऽहनि मन्त्रयित्वा प्रद्रुतः तत्पूर्वदिने मन्त्रं कृत्वा तस्मिन् दिने प्रद्रुत इत्यर्थः । ननु हनुमतो लङ्काप्रवेशकालो दशममास इत्यवगम्यते । तथाहि सीतां प्रति रावणः । द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृत इति । हनुमन्तं प्रति सीतावचनं च । द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः । वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गमेत्यादि । अतः कथमुक्तप्रक्रियासंगतिरिति चेत् मैवम् । ऊर्ध्वं मासान्न जीवेयम् । मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मजेत्यादिवचनविरोधेन तादृशवचनस्य रावणाभिप्रायविषयत्वात् । रावणो हि सीतासान्त्वनाय तथोक्तवान् । सीता तु वर्तमानमासमात्रेण चतुर्दशवर्षपूर्तिं जानती, मासादूर्ध्वं न जीविष्य इति संदिदेशेति सर्वं सुस्थम् ॥ १७ ॥

१८ ] ति० टी०—उक्तमेवाभिप्रायं रावण आह—स हीति । सर्वरक्षसां ककुदं श्रेष्ठम् । नित्यनपुंसकं ककुदमिति । तेन स महाबाहुरित्यनेन सामानाधिकरण्यमविरुद्धम् ॥ १८ ॥

रा० टी०—स इति । सर्वरक्षसां ककुदः श्रेष्ठः कुम्भकर्णः वानरादीन् क्षिप्रमेव हनिष्यति ॥ १७ ॥

गो० टी०—स त्विति । स तु अहमिव न शापग्रस्त इत्यर्थः । ककुदः प्रधानम् । प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियामित्यमरः ॥ १८-२० ॥

१९-२० ] ति० टी०—परं केतुः । अतिप्रकाशवीर्य इत्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—एष इति । ग्राम्यसुखे शयने रतः प्रीतिमान् अतः मूढस्सन् सदा शेते रक्षसां मुख्यो यः कुम्भकर्णः स एषः संख्ये संग्रामे परः केतुः केतुवत् सर्वोन्नतः भविष्यतीति शेषः ॥ १८ ॥

रा० टी०—रामेणेति । कुम्भकर्णे विबोधिते सति रामेणाभिनिरस्तस्य मे शोको न भविष्यति विनंक्ष्यतीत्यर्थः ॥ १९ ॥

१ एतदर्धमधिकं गो. पाठे । २ ककुद इति गो. रा. पाठः । ३ वधिष्यति इति गो. पाठः । ४ हीति गो. पाठः ।

किं करिष्याम्यहं तेन शक्रतुल्यबलेन हि । ईदृशे व्यसने घोरे[1] यो न साह्याय कल्पते ॥ २१ ॥
ते तु तद्वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः । जग्मुः परमसंभ्रान्ताः कुम्भकर्णनिवेशनम् ॥ २२ ॥
ते रावणसमादिष्टा मांसशोणितभोजनाः । गन्धं माल्यं महद्भक्ष्यमादाय सहसा ययुः ॥ २३ ॥
तां प्रविश्य महाद्वारां सर्वतो योजनायताम् । कुम्भकर्णगुहां रम्यां पुष्पगन्धप्रवाहिनीम् ॥ २४ ॥
कुम्भकर्णस्य निःश्वासादवधूता महाबलाः । प्रतिष्ठमानाः कृच्छ्रेण यत्नात्प्रविविशुर्गुहाम् ॥ २५ ॥
तां प्रविश्य गुहां रम्यां रत्नकाञ्चनकुट्टिमाम् । ददृशुर्नैर्ऋतव्याघ्राः शयानं भीमविक्रमम् ॥ २६ ॥
ते तु तं विकृतं सुप्तं विकीर्णमिव पर्वतम् । कुम्भकर्णं महानिद्रं समेताः प्रत्यबोधयन् ॥ २७ ॥
ऊर्ध्वलोमाञ्चिततनुं श्वसन्तमिव पन्नगम् । भ्रामयन्तं विनिःश्वासैः शयानं भीमविक्रमम् ॥ २८ ॥
भीमनासापुटं तं तु पातालविपुलाननम् । शयने न्यस्तसर्वाङ्गं मेदोरुधिरगन्धिनम् ॥ २९ ॥
काञ्चनाङ्गदनद्धाङ्गं किरीटेनार्कवर्चसम् । ददृशुर्नैर्ऋतव्याघ्रं कुम्भकर्णमरिंदमम् ॥ ३० ॥
ततश्चक्रुर्महात्मानः कुम्भकर्णस्य चाग्रतः । भूतानां मेरुसंकाशं राशिं परमतर्पणम् ॥ ३१ ॥
मृगाणां महिषाणां च वराहाणां च संचयान् । चक्रुर्नैर्ऋतशार्दूला राशिमन्नस्य चाद्भुतम् ॥ ३२ ॥
ततः शोणितकुम्भांश्च मांसानि विविधानि च । पुरस्तात्कुम्भकर्णस्य चक्रुस्त्रिदशशत्रवः ॥ ३३ ॥

२१-२३ ] ति० टी०—ननु त्वद्दुःखनाशसमर्थस्यापि कथमप्रबोधनमनुचितं भवेत्तत्राह—किं करिष्यामीति । व्यसने दुःखे ॥ २१-२३ ॥

रा० टी०—किमिति । ईदृशे व्यसने दुःखे प्राप्ते सति यः कुम्भकर्णः साह्याय न कल्पते सहायो न भवति तेन शक्रतुल्यबलेन अहं किं करिष्यामि ॥ २० ॥

गो० टी०—अकाले तत्प्रबोधनमनुचितमित्यत्राह—किं करिष्यामीति ॥ साह्याय साहाय्याय ॥ २१ ॥

रा० टी०—ते इति । राक्षसाः राक्षसेंद्रस्य वचनं श्रुत्वा परमसंभ्रान्ताः कुंभकर्णनिवेशनं जग्मुः ॥ २१ ॥

गो० टी०—ते त्विति । परमसंभ्रान्ताः कथमेनमकाले प्रबोधयिष्याम इति व्याकुलाः ॥ २२ ॥

रा० टी०—तदेव भंग्यंतरेणाह—ते इति । मांसशोणितभोजनाः राक्षसाः गंधादीन्यादाय सहसा ययुः ॥ २२ ॥

गो० टी०—त इति । प्रबोधशक्तिविवृद्ध्यर्थं मांसादिकं भुक्त्वा कुम्भकर्णस्य प्रबोधकालिकक्षुत्तापादिशान्तये गन्धमाल्यादिकं गृहीत्वा ययुरित्यर्थः ॥ २३ ॥

२४ ] ति० टी०—सर्वतः । प्राक्प्रत्यग्दक्षिणोत्तरतश्चेत्यर्थः । कुम्भकर्णगुहाम् । पातालवद्देवनिर्मितं भूबिलमित्यर्थः ॥ २४ ॥

२५ ] ति० टी०—प्रतिष्ठमानाः परिहृत्य गच्छन्तः ॥ २५ ॥

रा० टी०—तामिति । महद्द्वारं यस्याः सर्वतश्चतुर्दिक्षु योजनमायतं यस्याः पुष्पगंधानां प्रवाहस्तद्वतीम् कुम्भकर्णगुहां प्रविश्य किंचिद्दूरं गत्वा कुम्भकर्णस्य निश्वासादवधूता महाबलाः प्रतिष्ठमानाः बभूवुरिति शेषः यत्नात् अतिप्रयत्नेन गुहां प्रविविशुः पुनः प्रवेशं चक्रुः अर्द्धचतुष्टयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०—तामित्यादिश्लोकद्वयमेकान्वयम् । सर्वतः चतसृषु दिक्षु । सर्वगन्धप्रवाहिनीं कुम्भकर्णानुलिप्तचन्दनादिगन्धप्रवाहवतीम् । कुम्भकर्णगुहां प्रविश्य निश्वासादवधूताः सन्तः कृच्छ्रेण प्रतिष्ठमानाः अभिमुखं गच्छन्तः यत्नात्तां गुहां विविशुरिति योजना ॥ २४ ॥ २५ ॥

२६-२७ ] ति० टी०—रत्नकाञ्चनकुट्टिमां रत्नकाञ्चननिबद्धभूतलयुक्ताम् ॥ २६ ॥ २७ ॥

रा० टी०—तामिति । नैर्ऋतव्याघ्राः शयानं कुंभकर्णं ददृशुः ॥ २५ ॥

गो० टी०—तामिति । काञ्चनकुट्टिमां स्वर्णमयनिबद्धभूमिम् ॥ २६ ॥

रा० टी०—ते इति । समेताः ते राक्षसाः विकीर्णं पर्वतमिव विकृतं महती निद्रा यस्य तं सुप्तं कुम्भकर्णं प्रत्यबोधयन् ॥ २६ ॥

गो० टी०—ते तु तमिति । विकृतं निद्राकालिकविकारयुक्तम् । विकीर्णं शिथिलम् ॥ २७ ॥

२८-३३ ] ति० टी०—ऊर्ध्वलोमाञ्चिततनुमूर्ध्वलोमयुक्तशरीरं भ्रामयन्तं परिवर्तयन्तम् । जनानिति शेषः ॥ २८-३३ ॥

रा० टी०—कुम्भकर्णं वर्णयन्नाह—ऊर्ध्वेत्यादिभिः । ऊर्ध्वैर्लोमभिः अञ्चिता युक्ता तनुर्यस्य पन्नगं महासर्पमिव श्वसन्तं अत एव विनिश्वासैर्भ्रामयंतं राक्षसानितस्ततश्चालयंतं भीमे नासापुटे यस्य पातालवद्विपुलमाननं यस्य शयने शय्यायां

१ प्राप्ते इति गो. पाठः । २ गन्धमाल्यांस्तथा भक्ष्यानिति गो. पाठः । ३ सर्वतो वे गो. पाठः । ४ शुभामिति गो.पाठः । ५ दर्शनमिति गो.पाठः । ६ सहिता इति गो. पाठः । ७ रोमेति गो. पाठः । ८ त्रासयन्तमिति गो. पाठः । ९ दर्शनमिति गो. पाठः । १० शय्यायामिति गो.पाठः । ११ किरीटिनमरिंदममिति गो.पाठः । १२ महाबलमिति गो.पाठः । १३ कुम्भकर्णाग्रतस्तदेति गो.पाठः । १४ मांसानामिति गो.पाठः । १५ मद्यानीति गो.पाठः ।

लिलिपुश्च परार्ध्येन चन्दनेन परंतपम् । दिव्यैराश्वसयामासुर्माल्यैर्गन्धैश्च गन्धिभिः ॥ ३४ ॥
धूपैर्गन्धांश्च ससृजुस्तुष्टुवुश्च परंतपम् । जलदा इव चोनेदुर्यातुधानास्ततस्ततः ॥ ३५ ॥
शङ्खांश्च पूरयामासुः शशाङ्कसदृशप्रभान् । तुमुलं युगपच्चापि विनेदुश्चाप्यमर्षिताः ॥ ३६ ॥
नेदुरास्फोटयामासुश्चिक्षिपुस्ते निशाचराः । कुम्भकर्णविबोधार्थं चक्रुस्ते विपुलं स्वरम् ॥ ३७ ॥

स शङ्खभेरीपणवप्रणादं सास्फोटितक्ष्वेलितसिंहनादम् ।
दिशो द्रवन्तस्त्रिदिवं किरन्तः श्रुत्वा विहंगाः सहसा निपेतुः ॥ ॥ ३८ ॥
यदा भृशं तैर्निनदैर्महात्मा न कुम्भकर्णो बुबुधे प्रसुप्तः ।
ततो भुशुण्डीर्मुसलानि सर्वे रक्षोगणास्ते जगृहुर्गदाश्च ॥ ॥ ३९ ॥
तं शैलशृङ्गैर्मुसलैर्गदाभिर्वृक्षस्थले मुद्गरमुष्टिभिश्च ।
सुखप्रसुप्तं भुवि कुम्भकर्णं रक्षांस्युदग्राणि तदा निजघ्नुः ॥ ॥ ४० ॥

तस्य निःश्वासवातेन कुम्भकर्णस्य रक्षसः । राक्षसाः कुम्भकर्णस्य स्थातुं शेकुर्न चाग्रतः ॥ ४१ ॥

---

न्यस्तानि सर्वांगानि येन मेदोरुधिरयोरिव गन्धो यस्य अप्रक्षालितमुखमित्यर्थः कांचनाङ्गदेन नद्धमङ्गं यस्य किरीटेन अर्कवद्वर्चो यस्य तं शयानं नैर्ऋतव्याघ्रं कुम्भकर्णं ददृशुः प्रत्ययत्रयमालुलोकिरे अर्थपदक्रमेकान्वयि ॥ २७–२९ ॥

गो० टी०–ऊर्ध्वैरित्यादि श्लोकत्रयमेकान्वयम् । ऊर्ध्वरोमाञ्चिततनुम् ऊर्ध्वभूतरोमव्याप्ततनुम् । भीमनासापुटं भयंकरनासारन्ध्रम् । मेदोरुधिरेति । पीतावशिष्टेति शेषः ॥२८–३०॥

रा० टी०–तत इति । महात्मानोऽतिप्रयत्ना राक्षसाः मेरुसंकाशं मेरुतुल्यमत एव परमतर्पणम् कुम्भकर्णतृप्तिकरम् भूतानां राशिं कुम्भकर्णस्याग्रतोऽग्रे चक्रुः ॥ ३० ॥

गो० टी०–तत इति । अग्रतश्चक्रुः पुरतश्चिक्षिपुरित्यर्थः । परमतर्पणम् अत्यन्ततृप्तिकरम् ॥ ३१ ॥

रा० टी०–भूतानां नामनिर्दिशन्नाह—मृगाणामिति नैर्ऋतशार्दूलाः मृगादीनां संचयान् अन्नस्य राशिं च चक्रुः ॥ ३१ ॥

गो० टी०–मृगाणामिति । राशिं चक्रुः अग्रतो राशिं चक्रुरित्यर्थः ॥ ३२ ॥

रा० टी०–तत इति । त्रिदशशत्रवः शोणितकुंभान् मांसानि च कुंभकर्णस्य पुरस्ताच्चक्रुः संस्थापयामासुः ॥ ३२ ॥

गो० टी०–तत इत्यादि । मद्यानि मद्यकुम्भानीत्यर्थः । लिलिपुः लेपनं चक्रुः । परार्ध्येन श्लाघ्यगन्धेन माल्यगन्धैः माल्यचन्दनैः । ततस्ततः पुनः पुनरित्यर्थः । तुमुलं निरन्तरं यथा तथा । युगपद्विनेदुः अमर्षिताः महता प्रयत्नेनाप्यनुत्थानाज्जातक्रोधाः सन्तः नेदुः आस्फोटयामासुः ताडयामासुः । चिक्षिपुः शरीरं कम्पयामासुः । कुम्भेति । इत्थं कुम्भकर्णविबोधार्थं विपुलं स्वनं चक्रुरिति संग्रहः ॥ ३३–३७ ॥

३४–३६ ] ति० टी०–अथ क्रमेण मन्दमध्यतीव्रानुपायानाह—लिलिपुरिति । लेपनं चक्रुः । आश्वासयामासुः घ्रापयामासुः ॥ ३४–३६ ॥

रा० टी०–लिलिपुरिति । चंदनेन लिलिपुः सुगंधिभिर्माल्यगंधैः पुष्पैश्चन्दनैश्च आवासयामासुः ॥ ३३ ॥

रा० टी०–धूपेति । धूपगन्धान् ससृजुः आहुत्या निष्पादयामासुः परन्तपं कुम्भकर्णं तुष्टुवुश्च जलदा इवोन्नेदुश्च ॥३४॥

रा० टी०–शंखानिति । अमर्षिताः विलम्बासहनाः राक्षसाः युगपत् शंखान् पूरयामासुः तुमुलं विनेदुश्च ॥ ३५ ॥

३७ ] ति० टी०–नेदुरिति । चिक्षिपुर्हस्तैस्तच्छरीरस्य प्रणोदनं चक्रुः ॥ ३७ ॥

रा० टी०–नेदुरिति । केचिन्निशाचराः नेदुः आह्वानं चक्रुः केचिदास्फोटयामासुः बाह्वादीनां ताडनं चक्रुः केचित् चिक्षिपुः तत्पादावुत्थाप्य भूमौ निचिक्षिपुः । केचित् विपुलं स्वरं चक्रुः ॥ ३६ ॥

३८ ] ति० टी०–त्रिदिवं व्योम । किरन्त उद्गच्छन्त ॥३८॥

रा० टी०–सेति । शंखादिप्रणादसहितमास्फोटितादि श्रुत्वा विहङ्गाः दिशो द्रवंतः त्रिदिवमाकाशं किरन्तः उत्पतन्तश्च सन्तः सहसा निपेतुः ॥ ३७ ॥

गो० टी०–स शङ्खेति । आस्फोटितं बाहुताडनजन्यशब्दः । क्ष्वेलितशब्देन गर्जितमात्रमुच्यते । सिंहनादमित्येकवद्भावः । तद्विहङ्गाः श्रुत्वा भयेन सर्वा दिशो द्रवन्तः गच्छन्तः तत्रापि भयनिष्टरयदर्शनात् त्रिदिवम् आकाशम् किरन्तः विशन्तः । तत्रापि भयशान्तिमलभमानाः सहसा निपेतुः भूमौ निपतन्ति स्म ॥ ३८ ॥

३९–४१ ] ति० टी०–भुशुण्डीर्मुद्गरविशेषान् ॥३९–४१॥

रा० टी०–यदेति । यदा प्रसुप्तः कुम्भकर्णः भृशं तैर्निनदैर्न

---

१ आच्छादयामासुरिति गो.आवासयामासुरिति रा.पाठः। २ स्विति गो.पाठः। ३ धूपंसुगन्धमिति गो.पाठः। ४ चोन्नेदुरिति गो.पाठः। ५ आ इति गो.पाठः। ६ स्वनमिति गो.पाठः। ७ आस्फोटितेति गो.पाठः। ८ वृक्षैस्तलैरिति गो.पाठः। ९ नशक्तोऽपीति गो.रा.पाठः। १० नाशक्नुवन्पुर इति गो.रा.पाठः।

ततः परिहिता गाढं राक्षसा भीमविक्रमाः । मृदङ्गपणवान् भेरीः शङ्खकुम्भगणांस्तथा ॥ ४२ ॥
दश राक्षससाहस्रं युगपत्पर्यवारयत् । नीलाञ्जनचयाकारं ते तु तं प्रत्यबोधयन् ॥ ४३ ॥
अभिघ्नन्तो नदन्तश्च न च संबुबुधे तदा । यदा चैनं न शेकुस्ते प्रतिबोधयितुं तदा ॥ ४४ ॥
ततो गुरुतरं यत्नं दारुणं समुपाक्रमन् । अश्वानुष्ट्रान्खरान्नागाञ्जघ्नुर्दण्डकशाङ्कुशैः ॥ ४५ ॥
भेरीशङ्खमृदङ्गांश्च सर्वप्राणैरवादयन् । निजघ्नुश्चास्य गात्राणि महाकाष्ठकटंकरैः ॥ ४६ ॥
मुद्गरैर्मुसलैश्चैपि सर्वप्राणसमुद्यतैः । तेन नादेन महता लङ्का सर्वा प्रपूरिता ॥
सपर्वतवना सर्वा सोऽपि नैव प्रबुध्यते ॥ ॥ ४७ ॥
ततो भेरीसहस्रं तु युगपत्समहन्यत । मृष्टकाञ्चनकोणानामसक्तानां समन्ततः ॥ ४८ ॥

बुबुधे ततस्तदा सर्वे रक्षोगणाः भुशुण्डीप्रभृतीः जगृहुः भुशुण्डी मुद्गरविशेषः ॥ ३८ ॥

गो० टी०–यदेति । भृशार्तैः अत्यन्तार्तिपूर्वकैः उच्चावचैरित्यर्थः । भृशं तैरिति पाठान्तरम् । महात्मा महाशरीरः । ततः तदा । भुशुण्डी मुद्गरविशेषः ॥ ३९ ॥

रा० टी०–तमिति । उद्यमाणि महांति रक्षांसि भुवि सुसप्रसुप्तं कुम्भकर्णं वक्षस्थले शैलशृंगादिभिर्निजघ्नुः ॥ ३९ ॥

गो० टी०–गृहीत्वा प्रजघ्नुश्चेत्याह–तमिति ॥ ४० ॥

रा० टी०–तस्येति । बलवन्तोपि राक्षसाः कुम्भकर्णस्य निश्वासवातेन पुरः स्थातुं न अशक्नुवन् ॥ ४० ॥

गो० टी०–तस्येति । रक्षस इति विशेषणं निश्वासातिशयद्योतनाय ॥ ४१ ॥

४२ ] ति० टी०–गाढं परिहिताः परिहितवाससः । कुम्भगणान्कुम्भवाद्यानि । वादयामासुरिति शेषः । 'ततः प्रपूरिता गाढं राक्षसैर्भीमविक्रमैः' इति पाङ्कः पाठः । तत्र गुहेति शेषः । उत्तरार्धे राक्षसा इत्यादि ॥ ४२ ॥

रा० टी०–तत इति । गाढं परिहिताः धृतवस्त्राः राक्षसाः मृदङ्गादीन् वादयामासुरिति शेषः ॥ ४१ ॥

गो० टी०–तत इत्यर्धमेकं वाक्यम् । परिहिताः दृढीकृतपरिधानाः आसन् । वक्ष्यमाणकार्ये सावधाना आसन्नित्यर्थः ॥ ४२ ॥

गो० टी०–मृदङ्गेति । शङ्खकुम्भगणान् शङ्खकुम्भवाद्यगणान् । दशराक्षससाहस्राः दश राक्षससहस्राणि परिवारभूता येषां ते तथोक्ताः ॥ ४३ ॥

४३–४४ ] ति० टी०–दशराक्षससाहस्रं दश राक्षससहस्राणि ॥ ४३ ॥ ४४ ॥

रा० टी०–दशेति । नीलाञ्जनचयाकारं तं कुम्भकर्णम् राक्षससाहस्रं दश युगपत् एककालावच्छेदेन पर्यवारयन् ते परिवारितवन्तो राक्षसाः अभिघ्नन्तो नदन्तश्च सन्तः प्रत्यबोधयन् स तु तदा न संबुबुधे सार्धश्लोक एकान्वयी ॥ ४२ ॥ ४३ ॥

रा० टी०–यदेति । यदा राक्षसाः एनं कुम्भकर्णं प्रतिबोधयितुं न शेकुः तदा तत्तस्मात् बोधनयत्नात् गुरुतरं दारुणं यत्नं बोधनोपायं समुपाक्रमन् कर्तुमारभन्त ॥ ४४ ॥

गो० टी०–नीलेति । ते राक्षसाः अभिघ्नन्तो नदन्तश्च सन्तः तं प्रत्यबोधयन्नित्यनुवादः । प्रतिबोधनेपि स न संविविदे न बुबुधे । नीलाञ्जनचयाकारा इति परितः संचारित्वद्योतनायोक्तम् ॥ ४४ ॥

गो० टी०–यदेति । गुरुतरं यत्नमुपाक्रमन् प्रबलं बोधनोपायमारेभिर इत्यर्थः ॥ ४५ ॥

४५ ] ति० टी०–जघ्नुः । तदुपरि संचारेण तदुद्बोधनार्थमिति शेषः ॥ ४५ ॥

रा० टी०–यत्नानेवाह–अश्वानिति । अश्वादीन् दण्डैः कशाभिस्तोत्रैः अंकुशैश्च जघ्नुः तदुपरिसंचरणाय ताडयामासुः सर्वप्राणैर्निखिलबलैः अवादयंश्च ॥ ४५ ॥

गो० टी०–तमेव यत्नं दर्शयति–अश्वानिति । तस्योपरिपरिधावनायेति भावः । सर्वप्राणैः सर्वबलैः ॥ ४६ ॥

४६–४७ ] ति० टी०–सर्वप्राणैः सर्वबलेन । महाकाष्ठानां स्थूणादीनां कटंकरैः समूहैः । 'कटंकटैः' इति पाठः । कटंकटः स्तम्भभेद इति तीर्थः ॥ ४६ ॥ ४७ ॥

रा० टी०–निजघ्नुरिति । सर्वप्राणैर्निखिलबलेन । समुद्यतैः महाकाष्ठानां स्थूणादीनां कटंकरैः समूहैः मुद्गरैर्मुसलैश्च अस्य कुम्भकर्णस्य गात्राणि निजघ्नुः ॥ ४६ ॥

गो० टी०–निजघ्नुरिति । महाकाष्ठकटंकरैः महाकाष्ठाग्रस्तम्भैः । काष्ठाग्रस्थकशाभिरित्यर्थः कटंकरः स्तम्भभेद इति केचित् । सर्वप्राणसमुद्यतैः ॥ ४७ ॥

रा० टी०–तेनेति । महता तेन नादेन लंका प्रपूरिता सर्वासः सर्वेषां राक्षसानामासा विजयवाञ्छा येन किंच सर्वेषामसौ दीप्तिर्यस्मात् स कुम्भकर्णस्तु नैव प्रबुध्यते ॥ ४७ ॥

गो० टी०–तेनेति । प्रबुध्यते प्राबुध्यत ॥ ४८ ॥

४८ ] ति० टी०–मृष्टकाञ्चनकोणानां मृष्टकाञ्चननिर्मिताः कोणा वादनदण्डा यासां तादृशीनां भेरीणां सहस्रमित्यर्थः । आर्षः समासः ॥ ४८ ॥

१ सहस्रा इति गो. पाठः । २ अवादयन्निति गो. पाठः । ३ आकारा इति गो. पाठः । ४ नैव संविविदे तु स इति गो.पाठः । ५ प्रवेति गो. पाठः । ६ कम्पेति गो.पाठः । ७ समभिपूरितेति गो. पाठः । ८ सहस्रंभेरीणामिति गो. पाठः ।

एवमप्यतिनिद्रस्तु यदा नैव प्रबुध्यत । शापस्य वशमापन्नस्ततः क्रुद्धा निशाचराः ॥ ४९ ॥
ततः कोपसमाविष्टाः सर्वे भीमपराक्रमाः । तद्रक्षो बोधयिष्यन्तश्चक्रुरन्ये पराक्रमम् ॥ ५० ॥
अन्ये भेरीः समाजघ्नुरन्ये चक्रुर्महास्वनम् । केशानन्ये प्रलुलुपुः कर्णावन्ये दशन्ति च ॥ ५१ ॥
उदकुम्भशतानन्ये समसिञ्चन्त कर्णयोः । न कुम्भकर्णः पस्पन्दे महानिद्रावशं गतः ॥ ५२ ॥
अन्ये च बलिनस्तस्य कूटमुद्गरपाणयः । मूर्ध्नि वक्षसि गात्रेषु पातयन्कूटमुद्गरान् ॥ ५३ ॥
रज्जुबन्धनबद्धाभिः शतघ्नीभिश्च सर्वशः । वध्यमानो महाकायो न प्राबुध्यत राक्षसः ॥ ५४ ॥
वारणानां सहस्रं च शरीरेऽस्य प्रधावितम् । कुम्भकर्णस्तदा बुद्ध्वा स्पर्शं परमबुध्यत ॥ ५५ ॥

स पात्यमानैर्गिरिशृङ्गवृक्षैरचिन्तयंस्तान्विपुलान्प्रहारान् ।
निद्राक्षयात्क्षुद्भयपीडितश्च विजृम्भमाणः सहसोत्पपात ॥ ॥ ५६ ॥
स नागभोगाचलशृङ्गकल्पौ विक्षिप्य बाहू जितवज्रसारौ ।
विवृत्य वक्त्रं वडवामुखाभं निशाचरोऽसौ विकृतं जजृम्भे ॥ ॥ ५७ ॥

रा० टी०—तत इति । समन्ततः आसक्तानां यथायोग्यं संस्थापितानां मृष्टाः ये कांचनकोणाः स्वर्णमयदण्डाः तेषां तैः भेरीसहस्रं युगपत् समहन्यत सम्बन्धसामान्यविवक्षया षष्ठी४८

गो० टी०—तत इति । मृष्टकाञ्चनकोणानां मृष्टकाञ्चनं शोधितकाञ्चनं तन्निर्मिताः कोणाः वादनदण्डाः यासां ताः तथोक्ताः । आसक्तानां संहतानाम् ॥ ४९ ॥

४९–५२ ] ति० टी०—शापस्य ब्रह्मशापस्य ॥४९॥५२॥

रा० टी०—एवमिति । एवं कृतेपि शापस्य वशमापन्नः अत एव अत्यन्तं निद्रा यस्य स कुम्भकर्णः यदा नैव प्रबुध्यते तदा निशाचराः क्रुद्धाः क्रोधेन निवृत्ता इति तात्पर्यम् ॥ ४९ ॥

गो० टी०—एवमपीत्यादि । शापस्य ब्रह्मशापस्य । क्रुद्धाः पूर्वमेव कुपिताः । पुनरपि महाक्रोधसमाविष्टाः अभवन् ॥ ५० ॥

रा० टी०—तत इति । तद्रक्षो बोधयिष्यन्तः अन्ये सर्वे राक्षसाः पराक्रमं प्रहारं चक्रुः ॥ ५० ॥

रा० टी०—तत्प्रकारमाह—अन्ये इति । अन्ये कर्णौ दशन्ति ॥ ५१ ॥

रा० टी०—उदेति । अन्ये उदकुम्भशतान् शतसंख्याककुम्भोदकानि कर्णयोस्समसिञ्चन्त अत्यजन् कुम्भकर्णस्तु न पस्पन्दे ॥ ५२ ॥

गो० टी०—तद्रक्ष इत्यादि । पराक्रमं मुष्टिप्रहारादिकम् । महास्वनं महागर्जितम् । प्रलुलुपुः लुसवन्तः । दशन्ति अदशन् । उदकुम्भशतानि आदायेति शेषः ॥ ५१–५३ ॥

५३-५४ ] ति० टी०—पातयन्नपातयन् ॥ ५३ ॥ ५४ ॥

रा० टी०—अन्य इति । अन्ये मूर्धादिषु कूटमुद्गरान् पातयन् अपातयन् ॥ ५३ ॥

गो० टी०—अन्य इति । कूटमुद्गरपाणय इत्यनेन तत्प्रहारपरिचयो लक्ष्यते । पातयन् अपातयन् ॥ ५४ ॥

रा० टी०—रज्ज्विति । रज्जुरूपबन्धनैर्बद्धाभिः शतघ्नीभिः वध्यमानोऽपिराक्षसः न प्राबुध्यत ॥ ५४ ॥

गो० टी०—रज्ज्विति । बध्यन्ते एभिरिति बन्धनानि चर्मादीनि रज्जवश्च बन्धनानि च तैर्बद्धाभिः । रज्जुबन्धनादिना दृढीकृताभिरित्यर्थः । शतघ्नीभिः गदाविशेषैः । वध्यमानः पीड्यमानः ॥ ५५ ॥

५५ ] ति० टी०—परं स्पर्शं स्पर्शनज्ञानं प्राप्याबुध्यत ॥ ५५ ॥

रा० टी०—वारणानामिति । यदा अस्य शरीरे वारणानां गजानां सहस्रं राक्षसैः प्रधावितम् तदा कुम्भकर्णो बुध्वा परं केवलं स्पर्शमबुध्यत गजान् नाबुध्यत इत्यर्थः ॥ ५५ ॥

गो० टी०—वानराणामिति । स्पर्शं परमबुध्यत । वारणप्रधावनं केवलं स्पर्शमबुध्यत कीटादिस्पर्शोयमिति मन्यते स्म । बुद्धः विरतनिद्रः ॥ ५६ ॥

५६–५७ ] ति० टी०—उक्तार्थानुवादः—स पात्यमानैरिति ॥ ५६ ॥ ५७ ॥

रा० टी०—स इति । पात्यमानैः गिरिप्रभृतिभिः जातान् प्रहारान् अविचिंतयन् अगणयन् निद्राक्षयात् क्षुद्भयपीडितः स कुम्भकर्णः उत्पपात उत्तस्थौ ॥ ५६ ॥

गो० टी०—स पात्यमानैरिति । पात्यमानैः प्रबोधेप्युत्थानाय पुनः क्षिप्यमाणैः क्षुद्भयपीडितः क्षुद्भयाभ्यां पीडितः भयमत्राकालबोधनकृतम् । क्षुद्रूपभयपीडित इति वा । विजृम्भमाणः गात्रभङ्गं कुर्वाणः उत्पपात उदतिष्ठत् ॥ ५७ ॥

रा० टी०—स इति । सोसौ निशाचरः जिताः वज्रसाराः वज्राङ्गाः बहुयोद्धारो याभ्यां तौ बाहू विक्षिप्य वक्त्रं मुखं विवृत्य जजृम्भे ॥ ५७ ॥

गो० टी०—विजृम्भमाण इत्युक्तं विवृणोति—स इति ।

१ बुद्ध्यत इति गो. रा. पाठः । २ महाक्रोधेति गो. पाठः । ३ कर्णाविति गो. रा. पाठः । ४ सर्वत इति गो. पाठः । ५ स्वपिति गो. पाठः । ६ ततोबुद्ध इति गो. पाठः ।

तस्य जाजृम्भमाणस्य वक्त्रं पातालसंनिभम् । ददृशे मेरुशृङ्गाग्रे दिवाकर इवोदितः ॥ ५८ ॥
स जृम्भमाणोऽतिबलः प्रबुद्धस्तु निशाचरः । निःश्वासश्चास्य संजज्ञे पर्वतादिव मारुतः ॥ ५९ ॥
रूपमुत्तिष्ठतस्तस्य कुम्भकर्णस्य तद्बभौ । युगान्ते सर्वभूतानि कालस्येव दिधक्षतः ॥ ६० ॥
तस्याग्निदीप्तसदृशे विद्युत्सदृशवर्चसी । ददृशाते महानेत्रे दीप्ताविव महाग्रहौ ॥ ६१ ॥
ततस्त्वदर्शयन्सर्वान्भक्ष्यांश्च विविधान्बहून् । वराहान्महिषांश्चैव बभक्ष स महाबलः ॥ ६२ ॥
आदद्बुभुक्षितो मांसं शोणितं तृषितोऽपिबत् । मेदःकुम्भांश्च मद्यांश्च पपौ शक्ररिपुस्तदा ॥ ६३ ॥
ततस्तृप्त इति ज्ञात्वा समुत्पेतुर्निशाचराः । शिरोभिश्च प्रणम्यैनं सर्वतः पर्यवारयन् ॥ ६४ ॥
निद्राविशदनेत्रस्तु कलुषीकृतलोचनः । चारयन्सर्वतो दृष्टिं तानुवाच निशाचरान् ॥ ६५ ॥
स सर्वान्सान्त्वयामास नैर्ऋतान्नैर्ऋतर्षभः । बोधनाद्विस्मितश्चापि राक्षसानिदमब्रवीत् ॥ ६६ ॥

---

दैर्घ्ये नागभोगदृष्टान्तः । काठिन्ये अचलशृङ्गदृष्टान्तः । यद्वा पीनत्वे दृष्टान्तः गिरिशृङ्गसारौ गिरिशृङ्गबलौ । सारो बले स्थिरांशे चेत्यमरः विवृत्य व्यादाय । वडवा समुद्रमध्यवर्तिन्यश्वी । विकृतं भयंकरं यथा भवति तथा ॥ ५८ ॥

५८-६० ] ति० टी०—जाजृम्भमाणस्य पुनः पुनर्जृम्भां कुर्वतः वक्त्रमन्तः पातालसंनिभं ददृशे । उपरि तु मेरुशृङ्गाग्र उदितो दिवाकर इव ददृशे महाशरीरस्थत्वात् ॥ ५८ ॥ ६० ॥

रा० टी०—तस्येति । जाजृम्भमाणस्य तस्य कुंभकर्णस्य पातालसन्निभं वक्त्रं मेरुशृङ्गाग्रे उदितो दिवाकर इव ददृशे ॥५८॥

गो० टी०—तस्येति । जाजृम्भमाणस्य । यङ्लुकयात्मनेपदरुगागमाभावावार्षौ । मेरुशृङ्गाग्रे । मेरुरत्र सावर्णिमेरुः तदग्रस्यैव सूर्यसंबन्धसंभवात् । अत्र दिवाकरस्योदितत्वं महामेरोरुत्तरभागस्थपुर्यपेक्षया । यद्वा उदितः दृष्ट इत्यर्थः । गत्यर्थानां बुद्ध्यर्थत्वात् ॥ ५९ ॥

रा० टी०—स इति । निशाचरः प्रबुद्धः अस्य निशाचरस्य निश्वासस्तु पर्वतात् मारुत इव संजज्ञे ॥ ५९ ॥

गो० टी०—स जृम्भमाण इति । प्रतिबुद्धः अभूदिति शेषः । सम्यक् प्रबोधोऽत्र विवक्षितः ॥ ६० ॥

रा० टी०—रूपमिति । कुम्भकर्णस्य रूपं युगान्ते सर्वभूतानि दिधक्षतः दग्धुमिच्छतः कालस्य रूपमिव बभौ ॥६०॥

गो० टी०—रूपमिति । तस्य साभरणस्येत्यर्थः । अतः सबलाकस्येति नाधिकोपमा । विवर्धत इति नीलरूपातिशयोक्तिः ॥ ६१ ॥

६१ ] ति० टी०—अग्निदीप्तसदृशे दीप्ताग्निसदृशे ॥ ६१ ॥

रा० टी०—तस्येति । अग्निदीप्तसदृशे दीप्ताग्नितुल्ये विद्युत्सदृशे वर्चसी ययोः ते तस्य महानेत्रे प्रदीप्तौ ग्रहाविव ददृशाते ॥ ६१ ॥

गो० टी०—तस्येति । विद्युत्सदृशवर्चसीति निद्राविरामकालिकचाञ्चल्योक्तिः । महाग्रहौ शन्यङ्गारकाविति परपीडकत्वोक्तिः दीप्ताग्निसदृशे इति क्रौर्यातिशयोक्तिः ॥ ६२ ॥

६२ ] ति० टी०—अदर्शयन् । राक्षसा इति शेषः दर्शितांश्च तान् स बभक्ष ॥ ६२ ॥

रा० टी०—तत इति । ततोऽनन्तरं वराहादीन् भक्ष्यान् अदर्शयन् राक्षसा इति शेषः । अत एव महाबलः कुम्भकर्णो बभक्ष ॥ ६२ ॥

गो० टी०—ततस्त्वित्यादि । अदर्शयन् राक्षसा इति शेषः । सर्वान् सर्वविधान् तदवान्तरभेदतो विविधान् बहून् विपुलान् वराहान् वराहविकारान् बभक्ष भक्षयामास । बुभुक्षितो मांसमदन् बुभुक्षाशान्त्यर्थं मांसमदन्नित्यर्थः । तृषितः शोणितं पिबन् तृष्णाशान्त्यर्थं शोणितं पिबन्नित्यर्थः । पुनराप्यायनार्थं मेदःकुम्भान् मद्यं च पपौ । कुम्भपरिमितमेदांसीत्यर्थः ॥ ६३ ॥ ६४ ॥

६३ ] ति० टी०—आदत् । अदेर्लङ् ॥ ६३ ॥

रा० टी०—आददिति । बुभुक्षितः शक्ररिपुः मांसमादत् अभक्षयत् *गणकार्यस्यानित्यत्वात् शब्लुग्विरहः ॥ ६३ ॥

६४ ] ति० टी०—समुत्पेतुः संमुखमाजग्मुः ॥ ६४ ॥

रा० टी०—तत इति । निशाचराः तृप्त इति ज्ञात्वा समुत्पेतुः प्रणम्य पर्यवारयंश्च ॥ ६४ ॥

गो० टी०—ततस्तृप्त इति । समुत्पेतुरिति पूर्वं कुम्भकर्णभयादन्तर्धाय स्थिताः । इदानीं तृप्तत्वेन शान्तक्रोधत्वात् प्रकाशमाजग्मुरित्यर्थः ॥ ६५ ॥

६५ ] ति० टी०—निद्रया विशदं ईषदुन्मीलिते नेत्रे यस्य सः ॥ ६५ ॥

रा० टी०—निद्रेति । निद्रया विशदे ईषदुन्मीलिते नेत्रे यस्य अत एव कलुषीकृतलोचनः कुंभकर्णः सर्वतो दृष्टिं चारयन् सन् निशाचरानुवाच ॥ ६५ ॥

गो० टी०—निद्रेति । निद्रया अविशदं अप्रसन्नं ईषदुन्मीलितं नेत्रं यस्य स तथोक्तः ॥ ६६ ॥

६६ ] ति० टी०—विस्मित इति । स्वभावतो निद्रापगमाभावेनाकालबोधनादिति भावः ॥ ६६ ॥

---

१ तापन्ते सबलाकस्य मेघस्येव विवर्धत इति गो. पाठः । २ दीप्ताग्निसदृशे इति गो. पाठः । ३ स बभक्षेति गो. पाठः । ४ अदन्निति गो. पाठः । ५ तृषितः पिबन्निति गो. पाठः । ६ ददृशेति गो. पाठः । * वस्तुतस्तत्र 'अदः सर्वेषाम्' इत्यट् ।

किमर्थमहमादृत्य भवद्भिः प्रतिबोधितः । कच्चित्सुकुशलं राज्ञो भयं वा नेह किंचन ॥ ६७ ॥
अथ वा ध्रुवमन्येभ्यो भयं परमुपस्थितम् । यदर्थमेवं त्वरितैर्भवद्भिः प्रतिबोधितः ॥ ६८ ॥
अद्य राक्षसराजस्य भयमुत्पाटयाम्यहम् । दारयिष्ये महेन्द्रं वा शीतयिष्ये तथानलम् ॥ ६९ ॥
नह्यल्पकारणे सुप्तं बोधयिष्यति मादृशम् । तदाख्यातार्थतत्त्वेन मत्प्रबोधनकारणम् ॥ ७० ॥
एवं ब्रुवाणं संरब्धं कुम्भकर्णमरिंदमम् । यूपाक्षः सचिवो राज्ञः कृताञ्जलिरभाषत ॥ ७१ ॥
न नो देवकृतं किंचिद्भयमस्ति कदाचन । मानुषान्नो भयं राजंस्तुमुलं संप्रबाधते ॥ ७२ ॥
न दैत्यदानवेभ्यो वा भयमस्ति न नः क्वचित् । यादृशं मानुषं राजन्भयमस्मानुपस्थितम् ॥ ७३ ॥
वानरैः पर्वताकारैर्लङ्केयं परिवारिता । सीताहरणसंतप्ताद्रामान्नस्तुमुलं भयम् ॥ ७४ ॥
एकेन वानरेणेयं पूर्वं दग्धा महापुरी । कुमारो निहतश्चाक्षः सानुयात्रः सकुञ्जरः ॥ ७५ ॥
स्वयं रक्षोधिपश्चापि पौलस्त्यो देवकण्टकः । व्रजेति संयुगे मुक्तो रामेणादित्यवर्चसा ॥ ७६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । बोधनात् अकाले स्वनिद्रापगमनकरणात् विस्मितोपि नैर्ऋतर्षभः सान्त्वयामास इदमब्रवीच्च ॥ ६६ ॥

गो० टी०—स इति । बोधनात् अप्रबोध्यबोधनात् ॥ ६७ ॥

६७ ] ति० टी०—आदृत्यादरपूर्वम् । यत्नपूर्वमिति यावत् ६७

रा० टी०—तदाकारमाह—किमित्यादिभिः । भवद्भिः आदृत्य यत्नं कृत्वेत्यर्थः अहं किमर्थं प्रतिबोधितः राज्ञो रावणस्य कच्चित्सुकुशलमस्तीति शेषः ॥ ६७ ॥

गो० टी०—किमर्थमिति । राज्ञः रावणस्य सुकुशलं कच्चित् एष राजा च भयवान्न किम् भययुक्तो न भवति हि ॥ ६८ ॥

६८-६९ ] ति० टी०—अन्येभ्यः शत्रुभ्यः । यदर्थं यद्भयनिवृत्तये ॥ ६८ ॥ ६९ ॥

रा० टी०—स्वनिश्चितमाह—अथवेति । यदर्थं भवद्भिरहं प्रतिबोधितस्तदन्येभ्यो भयं ध्रुवमुपस्थितम् ॥ ६८ ॥

गो० टी०—एवं संशय्य पुनर्निश्चिनोति—अथवेति । तत्र हेतुमाह—यदर्थमिति यदर्थं यद्भयनिवृत्त्यर्थम् ॥ ६९ ॥

रा० टी०—अद्येति । राक्षसराजस्य भयमहमुत्पाटयामि तत्प्रकारमाह—महेन्द्रमपि दारयिष्ये अनलमपि शीतयिष्ये ६९

गो० टी०—अद्येति । शातयिष्ये शातयिष्यामि छेत्स्यामीत्यर्थः । "शद्लृ, शातने" इति धातोर्णिचि "शदेरगतौ तः" इति तादृशः ॥ ७० ॥

७०-७४ ] ति० टी०—अर्थतत्त्वेन याथार्थ्येन ॥ ७० — ७४ ॥

रा० टी०—स्वनिश्चये हेतुमाह—नहीति । अल्पकारणे सति मादृशं सुप्तं न बोधयिष्यति तत्तस्माद्धेतोः मत्प्रबोधनकारणमर्थतत्त्वेन याथार्थ्येनाख्यात यूयं कथयत ॥ ७० ॥

रा० टी०—एवमिति । एवं ब्रुवाणं कुंभकर्णं यूपाक्षस्तदभिधो राज्ञस्सचिवोऽभाषत ॥ ७१ ॥

गो० टी०—नहीति । अल्पकारणे अल्पकार्यनिमित्तम् । गुरुः अग्रजः । आख्यात कथयत । अर्थतत्त्वेन तत्त्वार्थेन याथार्थ्येनेति यावत् ॥ ७१ ॥ ७२ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । देवकृतं नोऽस्माकं भयं कदाचन किंचिन्नास्ति मानुषात्प्राप्तं तुमुलं भयं तु नोऽस्मान् संप्रबाधते ॥ ७२ ॥

गो० टी०—न न इति । दैवकृतम् इन्द्रादिकृतम् । मानुषादिति । नः अस्मान् मानुषाज्जातं तुमुलं भयं संप्रबाधत इत्यन्वयः ॥ ७३ ॥

रा० टी०—नेति । मानुषं यादृशं भयमस्मानुपस्थितं तादृशं दैत्यादिभ्यः क्वचिन्न ॥ ७३ ॥

रा० टी०—ननु कस्तादृशो मनुष्य इत्यत आह—वानरैरिति । रामान्नो भयमस्ति नन्वेकस्माद्रामात्कथं युष्माकं भयमित्यत आह वानरैर्लङ्का परिवारिता एतेन रामस्य वानरसहायकत्वं सूचितम् ॥ ७४ ॥

गो० टी०—न दैत्येति । वाशब्दार्थोऽनुक्तसमुच्चयार्थः । देवेभ्यश्चेत्यर्थः । मानुषं मनुष्यादागतम् ॥ ७४ ॥ ७५ ॥

७५ ] ति० टी०—नन्विन्द्रादिभिरपि दुष्करपीडनमस्मत्पुरं कथं वानरैः पीडितं तत्राह—एकेनेति ॥ ७५ ॥

रा० टी०—वानरप्रभावमाह—एकेनेति । एकेन वानरेण सानुयात्रः अनुयायिसहितः अक्षः कुमारो निहतः महापुरी लंका दग्धा च ॥ ७५ ॥

गो० टी०—इन्द्रादिभिरपि दुष्पीडमिदं नगरं कथं वानरैः पीड्यत इत्यत्राह—एकेनेत्यादि । सानुयात्रः सानुगः । एकेनैव महती पीडा कृता किं पुनरनेकैरिहागतैरिति भावः ॥ ७६ ॥

७६ ] ति० टी०—संयुगे मुक्तः । जीवन्मृत इत्युक्त्वेति शेषः ॥ ७६ ॥

रा० टी०—स्वयमिति । स्वयं रक्षोधिपो रावणो व्रज पराभूतत्वात् गच्छ इति रामेणोक्त्वा मुक्तः ॥ ७६ ॥

गो० टी०—स्वयमिति । मृतेति । हे मृतेत्युक्त्वा वस्तुतस्तु मृतेत्यविभक्तिकनिर्देशः मृत इति कृत्वेत्यर्थः मृतप्राय इति मत्वेत्यर्थ इत्यप्याहुः ॥ ७७ ॥

१ भयवानेष वा न किमिति गो. पाठः । २ एवमिति गो. पाठः । ३ पातयिष्य इति गो. पाठः । ४ शातयिष्ये इति गो. पाठः । ५ मां गुरुर्यदि गो. पाठः । ६ महाबलमिति गो. पाठः । ७ उवाचहेति गो. पाठः । ८ हि तादृशमिति गो. पाठः । ९ मृतेति गो. पाठः ।

यन्न देवैः कृतो राजा नापि दैत्यैर्न दानवैः । कृतः स इह रामेण विमुक्तः प्राणसंशयात् ॥ ७७ ॥
स यूपाक्षवचः श्रुत्वा भ्रातुर्युधि पराभवम् । कुम्भकर्णो विवृत्ताक्षो यूपाक्षमिदमब्रवीत् ॥ ७८ ॥
सर्वमद्यैव यूपाक्ष हरिसैन्यं सलक्ष्मणम् । राघवं च रणे जित्वा ततो द्रक्ष्यामि रावणम् ॥ ७९ ॥
राक्षसांस्तर्पयिष्यामि हरीणां मांसशोणितैः । रामलक्ष्मणयोश्चापि स्वयं पास्यामि शोणितम् ॥ ८० ॥
तत्तस्य वाक्यं ब्रुवतो निशम्य सगर्वितं रोषविवृद्धदोषम् ।
महोदरो नैर्ऋतयोधमुख्यः कृताञ्जलिर्वाक्यमिदं बभाषे ॥ ॥ ८१ ॥
रावणस्य वचः श्रुत्वा गुणदोषौ विमृश्य च । पश्चादपि महाबाहो शत्रून्युधि विजेष्यसि ॥ ८२ ॥
महोदरवचः श्रुत्वा राक्षसैः परिवारितः । कुम्भकर्णो महातेजाः संप्रतस्थे महाबलः ॥ ८३ ॥
सुप्तमुत्थाप्य भीमाक्षं भीमरूपपराक्रमम् । राक्षसास्त्वरिता जग्मुर्दशग्रीवनिवेशनम् ॥ ८४ ॥
तेऽभिगम्य दशग्रीवमासीनं परमासने । ऊचुर्बद्धाञ्जलिपुटाः सर्व एव निशाचराः ॥ ८५ ॥
कुम्भकर्णः प्रबुद्धोऽसौ भ्राता ते राक्षसेश्वर । कथं तत्रैव निर्यातु द्रक्ष्यसे तमिहागतम् ॥ ८६ ॥
रावणस्त्वब्रवीद्धृष्टो राक्षसांस्तानुपस्थितान् । द्रष्टुमेनमिहेच्छामि यथान्यायं च पूज्यताम् ॥ ८७ ॥
तथेत्युक्त्वा तु ते सर्वे पुनरागम्य राक्षसाः । कुम्भकर्णमिदं वाक्यमूचू रावणचोदिताः ॥ ८८ ॥
द्रष्टुं त्वां काङ्क्षते राजा सर्वराक्षसपुंगवः । गमने क्रियतां बुद्धिर्भ्रातरं संप्रहर्षय ॥ ८९ ॥
कुम्भकर्णस्तु दुर्धर्षो भ्रातुराज्ञाय शासनम् । तथेत्युक्त्वा महावीर्यः शयनादुत्पपात ह ॥ ९० ॥

७७-८० ] ति० टी०–यन्न कृतो यामवस्थां न प्रापितः, स रामेण कृतस्तामवस्थां प्रापितः प्राणसंशयात्तयावस्थया प्राप्तो विमुक्तश्च ॥ ७७ ॥ ८० ॥

रा० टी०–यदिति । राजा रावणः यथामवस्थां देवादिभिर्न कृतः प्रापितः तामवस्थां रामेण कृतः प्रापितः अवस्थामेवाह स रावणः प्राणसंशयात् रामेण विमुक्तः ॥ ७७ ॥

गो० टी०–यदित्यादि । यत् य इत्यर्थः । प्राणसंशयादिति ल्यब्लोपे पञ्चमी । यो राजा देवादिभिरपि प्राणसंशयं नीत्वा मुक्तो न कृतः स रावणो रामेण प्राणसंशयं नीत्वा अद्य विमुक्तः कृत इत्यर्थः । यद्वा राजा देवादिभिरपि यत् न कृतः न प्रापितः तत् रामेण कृतः प्राणसंशयाद्विमुक्तश्चेत्यर्थः ॥७८॥

रा० टी०– स इति । स कुंभकर्णः युधि भ्रातुः पराभवम् पराभवसूचकं यूपाक्षवचः श्रुत्वा विवृत्ताक्षस्सन् यूपाक्षमब्रवीत् ॥ ७८ ॥

रा० टी०–तदाकारमाह—सर्वमिति । हे यूपाक्ष अहमद्यैव हरिसैन्यादि जित्वा रावणं द्रक्ष्यामि ॥ ७९ ॥

रा० टी०–राक्षसानिति । हरिप्रभृतीनां मांसशोणितैः राक्षसान् तर्पयिष्यामि शोणितं पास्यामि च ॥ ८० ॥

गो० टी०–स इति । पराजयं पराजयबोधकम्॥७९–८१॥

८१-८२ ] ति० टी०–सगर्वितं सगर्वम् । रोषेण विवृद्धो दोषो दुर्नयरूपो यस्य तम् ॥ ८१ ॥ ८२ ॥

रा० टी०–तदिति । ब्रुवतस्तस्य कुंभकर्णस्य रोषेण विवृद्धो दोषः नीतिविरोधो यस्मिन् तत्सगर्वितं वाक्यं श्रुत्वा महोदरः इदं वाक्यं बभाषे ॥ ८१ ॥

रा० टी०–तदाकारमाह—रावणस्येति । गुणदोषौ रावणवचनेन गुणं दोषं च विमृश्य विचार्य शत्रून् युधि विजेष्यसि ८२

गो० टी०–तदिति । सगर्वितं सगर्वम् । रोषविवृद्धदोषं कोपविवृद्धदुर्नयं कुम्भकर्णमिति शेषः ॥ ८२ ॥ ८३ ॥

८३-८५ ] ति० टी०–संप्रतस्थे प्रस्थातुमुपचक्रमे ८३।८५

रा० टी०–महोदरेति । महोदरवचः श्रुत्वा कुंभकर्णः संप्रतस्थे ॥ ८३ ॥

रा० टी०–सुप्त इति । सुप्तं कुम्भकर्णमुत्थाप्य राक्षसा जग्मुः ॥ ८४ ॥

गो० टी०–महोदरेति । संप्रतस्थे प्रस्थातुमुपचक्रमे । शयनादुत्पपात हेत्युत्तरत्र वक्ष्यमाणत्वात् ॥ ८४ ॥ ८५ ॥

रा० टी०–ते इति । निशाचराः दशग्रीवमभिगम्य ऊचुः८५

गो० टी०–तत इति । गत्वा रावणनिवेशनं गत्वा । तत ऊचुरित्यन्वयः ॥ ८६ ॥

८६ ] ति० टी०–तत्रैव स्थितो युद्धाय निर्यात्वाहोस्विदिहागतं द्रक्ष्यसे ॥ ८६ ॥

रा० टी०–तदाकारमाह—कुम्भकर्ण इति । हे राक्षसेश्वर प्रबुद्धोसौ कुम्भकर्णः तत्र संग्रामभूमा एव निर्यातु इहागतं द्रक्ष्यसे वा कथं वार्थे ॥ ८६ ॥

गो० टी०–प्रबुद्ध इति । तत्रैव निर्यातु वा इहागतमेनं द्रक्ष्यसि वा कथं, कथं करोत्विति सम्बन्धः ॥ ८७ ॥

८७-९० ] ति० टी०–पूज्यताम् । स इति शेषः ८७।९०

१ परानयमिति गो. पाठः । २ हस्वेति गो. पाठः । ३ तं समुत्थाप्येति गो. पाठः । ४ ततो गत्वा दशग्रीवमिति गो. पाठः । ५ प्रबुद्धः कुम्भकर्णोपमिति गो. पाठः । ६ राक्षसर्षभेति गो. पाठः । ७ द्रक्ष्यस्येवमिति गो. पाठः । ८ महाबाहुरिति गो. पाठः ।

प्रक्षाल्य वदनं हृष्टः स्नातः परमहर्षितः । पिपासुस्त्वरयामास पानं बलसमीरणम् ॥ ९१ ॥
ततस्ते त्वरितास्तत्र राक्षसा रावणाज्ञया । मद्यं भक्ष्यांश्च विविधान्क्षिप्रमेवोपहारयन् ॥ ९२ ॥
पीत्वा घटसहस्रे द्वे गमनायोपचक्रमे । ईषत्समुत्कटो मत्तस्तेजोबलसमन्वितः ॥ ९३ ॥
कुम्भकर्णो बभौ रुष्टः कालान्तकयमोपमः । भ्रातुः स भवनं गच्छन्रक्षोबलसमन्वितः ॥
कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ॥ ९४ ॥

स राजमार्गं वपुषा प्रकाशयन्सहस्ररश्मिर्धरणीमिवांशुभिः ।
जगाम तत्राञ्जलिमालया वृतः शतक्रतुर्गेहमिव स्वयंभुवः ॥ ॥ ९५ ॥
तं राजमार्गस्थममित्रघातिनं वनौकसस्ते सहसा बहिः स्थिताः ।
दृष्ट्वाप्रमेयं गिरिशृङ्गकल्पं वितत्रसुस्ते सह यूथपालैः ॥ ॥ ९६ ॥
केचिच्छरण्यं शरणं स्म रामं व्रजन्ति केचिद्व्यथिताः पतन्ति ।
केचिद्दिशश्च व्यथिताः पतन्ति केचिद्भयार्ता भुवि शेरते स्म ॥ ॥ ९७ ॥
तमद्रिशृङ्गप्रतिमं किरीटिनं स्पृशन्तमादित्यमिवात्मतेजसा ।
वनौकसः प्रेक्ष्य विवृद्धमद्भुतं भयार्दिता दुद्रुविरे यतस्ततः ॥ ॥ ९८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

रा० टी०—रावण इति । एवं कुंभकर्णमिहैव द्रष्टुमिच्छामि अतो यथान्यायं भवद्भिः पूज्यतां सत्कारेणानीयताम् इति रावणोऽब्रवीत् ॥ ८७ ॥

गो० टी०—रावणस्त्विति । पूज्यताम् एष इति शेषः॥८८॥

रा० टी०—तथेति । राक्षसाः तथेत्युक्त्वा पुनरागम्य इदमूचुः ॥ ८८ ॥

रा० टी०—तदाकारमाह—द्रष्टुमिति । राजा रावणः त्वां द्रष्टुं काङ्क्षते अतो गमने बुद्धिः क्रियताम् अत एव भ्रातरं संप्रहर्षय ॥ ८९ ॥

रा० टी०—कुंभकर्ण इति । कुंभकर्णः तथेत्युक्त्वा शयनात् शय्याया उत्पपात उत्तस्थौ ॥ ९० ॥

९१ ] ति० टी०—बलसमीरणं बलवृद्धिकरम् ॥ ९१ ॥

रा० टी०—प्रक्षाल्येति । वदनं प्रक्षाल्य स्नातः कुंभकर्णः बलसमीरणं बलप्रवृद्धिकरं पानं पिपासुस्सन् त्वरयामास पानमानेतुं भ्रातृसमीपे दूतान् प्रेषयामासेत्यर्थः ॥ ९१ ॥

गो० टी०—प्रक्षाल्येति । बलसमीरणं बलवर्धनम् ॥९२॥

९२ ] ति० टी०—उपहारयन्नुपाहारयन् ॥ ९२ ॥

रा० टी०—तत इति । ते रावणसमीपं प्रेषिताः दूताः रावणाज्ञया त्वरितास्सन्तः मद्यादीन् क्षिप्रमेव उपहारयन् उपाहारयन् ॥ ९२ ॥

गो० टी०—ततस्त इति । रावणाज्ञया त्वरितास्ते क्षिप्रम् उपहारयन् उपाहारयमिति संबन्धः ॥ ९३ ॥

९३-९४ ] ति० टी०—ईषत्समुत्कटो मत्तः । तावन्मधुपानेनापीषदेव समुत्कटो मत्तश्चेत्यर्थः ॥ ९३ ॥ ९४ ॥

रा० टी०—पीत्वेति । द्वे घटसहस्रे तत्परिमितमद्यम् पीत्वा ईषत्समुत्कटः किंचिदुत्कटरूपः । ईषन्मत्तश्च कालान्तकयमोपमः कालाद्यन्यतमसदृशः रुष्टः कुंभकर्णो बभौ मार्द्धश्लोक एकान्वयी ॥ ९३ ॥

गो० टी०—पीत्वेति । ईषत्समुत्कटः पानेन ईषमन्दोत्कटः मत्तः स्वभावेनोन्मत्तश्चेत्यर्थः । कालान्तकयमोपमः काले प्रलयकाले योऽन्तकः संहारको यमस्तत्सदृश इत्यर्थः ॥ ९४ ॥

रा० टी०—भ्रातुरिति । भ्रातुर्भवनं गच्छन्कुंभकर्णः पदन्यासैर्मेदिनीमकम्पयत ॥ ९४ ॥

गो० टी०—भ्रातुरिति । रक्षोबलं राक्षससेना ॥ ९५ ॥

९५ ] ति० टी०—वपुषा देहकान्त्या ॥ ९५ ॥

रा० टी०—स इति । सहस्ररश्मिः सूर्यः अंशुभिर्धरणीमिव वपुषा राजमार्गं प्रकाशयन् अञ्जलिमालया कृताञ्जलिजनैरित्यर्थः वृतः स कुंभकर्णः स्वयंभुवो गेहं शतक्रतुरिव जगाम॥९५॥

गो० टी०—स इति । तत्र राजमार्गे । अञ्जलिमालया पौरजनकृतयेति शेषः ॥ ९६ ॥

९६-९७ ] ति० टी०—अप्रमेयत्वे हेतुः—गिरिशृङ्गकल्पत्वम् ॥ ९६ ॥ ९७ ॥

रा० टी०—तमिति । अप्रमेयमत्युन्नतमित्यर्थः अत एव गिरिशृंगकल्पं राजमार्गस्थममित्रघातिनं कुम्भकर्णं यूथपालैस्सह बहिःस्थिता वनौकसो दृष्ट्वा वितत्रसुः ॥ ९६ ॥

रा० टी०—केचित् । शरण्यं शरणे हितं रामं शरणं रक्षार्थं व्रजन्ति केचिद्व्यथितास्सन्तः पतन्ति केचित् व्यथितास्सन्तो दिशः प्रयान्ति केचित् भुवि शेरते ॥ ९७ ॥

गो० टी०—तमिति । यूथपाला इत्यत्र चकारो द्रष्टव्यः । अन्यथा तच्छब्दोऽतिरिच्येत ॥ ९७ ॥ ९८ ॥

९८ ] ति० टी०—आत्मतेजसादित्यं स्पृशन्तमिव ।

---

१ भक्षित इति गो. पाठः । २ मयकम्पानिति गो. पाठः । ३ गतेति गो. पाठः । ४ हरियथपाला इति गो. पाठः । ५ स्मेति गो. पाठः ।

## एकषष्टितमः सर्गः ।

रामोऽपि पलायितां स्वचमूं दृष्ट्वा तं चाप्यद्भुतदर्शनं पश्यन्कोऽसावित्यादि विभीषणं पप्रच्छ । सोऽप्यस्या बाल्यात्प्रभृति प्रबोधनान्तं सर्वं वृत्तं निवेद्य शीघ्रमेनं जहीति प्रार्थयत ततो रामो नीलं सेनान्यमाहूय कपीन्समाश्वासयितुमप्रमादेन योद्धुं च समादिशत् स तु यथादेशमनुष्ठितवान् ।

ततो रामो महातेजा धनुरादाय वीर्यवान् । किरीटिनं महाकायं कुम्भकर्णं ददर्श ह ॥ १ ॥
तं दृष्ट्वा राक्षसश्रेष्ठं पर्वताकारदर्शनम् । क्रममाणमिवाकाशं पुरा नारायणं यथा ॥ २ ॥
सतोयाम्बुदसंकाशं काञ्चनाङ्गदभूषणम् । दृष्ट्वा पुनः प्रदुद्राव वानराणां महाचमूः ॥ ३ ॥
विद्रुतां वाहिनीं दृष्ट्वा वर्धमानं च राक्षसम् । सविस्मितमिदं रामो विभीषणमुवाच ह ॥ ४ ॥
कोऽसौ पर्वतसंकाशः किरीटी हरिलोचनः । लङ्कायां दृश्यते वीरः सविद्युदिव तोयदः ॥ ५ ॥
पृथिव्यां केतुभूतोऽसौ महानेकोऽत्र दृश्यते । यं दृष्ट्वा वानराः सर्वे विद्रवन्ति ततस्ततः ॥ ६ ॥
आचक्ष्व सुमहान्कोऽसौ रक्षो वा यदि वासुरः । न मयैवंविधं भूतं दृष्टपूर्वं कदाचन ॥ ७ ॥
संपृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा । विभीषणो महाप्राज्ञः काकुत्स्थमिदमब्रवीत् ॥ ८ ॥
येन वैवस्वतो युद्धे वासवश्च पराजितः । सैष विश्रवसः पुत्रः कुम्भकर्णः प्रतापवान् ॥
अस्य प्रमाणसदृशो राक्षसोऽन्यो न विद्यते ॥ ॥ ९ ॥

एतेन देवा युधि दानवाश्च यक्षा भुजंगाः पिशिताशनाश्च ।
गन्धर्वविद्याधरपन्नगाश्च सहस्रशो राघव संप्रभग्नाः ॥ ॥ १० ॥

शूलपाणिं विरूपाक्षं कुम्भकर्णं महाबलम् । हन्तुं न शेकुस्त्रिदशाः कालोऽयमिति मोहिताः ॥ ११ ॥

---

तत्सदृशमिति यावत् । प्रायो दिनद्वये नास्य जागरः ॥ ९८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षष्टितमः सर्गः ॥ ६० ॥

रा० टी०—तमिति । अद्रिशृङ्गप्रतिमम् आत्मतेजसा आदित्यं स्पृशन्तमिव तं कुंभकर्णं वनौकसः प्रेक्ष्य भयार्दितास्सन्तो यतस्ततो दुद्रुविरे ॥ ९८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षष्टितमः सर्गः ॥ ६० ॥

गो० टी०—तमिति । आत्मतेजसा शरीरकान्त्या ॥९९॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

१ ] ति० टी०—ततो राम इति ॥ १ ॥

रा० टी०—कुंभकर्णदर्शनहेतुकवानरभीत्यनन्तरकालिकं रामवृत्तान्तमाह—तत इत्यादिभिः । ततः वृत्तान्तज्ञानानन्तरं धनुरादायोत्थितो रामः कुम्भकर्णं ददर्श ॥ १ ॥

गो० टी०—अथ रामेण कुम्भकर्णस्वरूपप्रश्नः विभीषणेन तदुत्तरं च क्रियत एकषष्टितमे—तत इत्यादि । सार्धश्लोकद्वयमेकान्वयम् । तं दृष्ट्वा धनुरादाय पुनर्विशेषेण ददर्शेति योजना । महाकायमुन्नतकायम् । पर्वताकारदर्शनम् दृश्यत इति दर्शनं शरीरं पर्वतवत् स्थूलशरीरमित्यर्थः । काञ्चनाङ्गदभूषणं काञ्चनमयाङ्गदभूषणम् अत एव सतोयाम्बुदः वर्षुकमेघः तत्सदृशम् ॥ १ ॥ २ ॥

२ ] ति० टी०—पर्वताकारं दर्शनं यस्य तं दृष्ट्वा । यत्तो बभूवेति शेषः ॥ २ ॥

रा० टी०—तमिति । पर्वताकारदर्शनं पुरा पूर्वमाकाशं क्रममाणं नारायणं वामनमिव तं कुंभकर्णं दृष्ट्वा रामः यत्तो बभूवेति शेषः ॥ २ ॥

३-४ ] ति० टी०—सतोयेति । सजलमेघसंकाशमित्यर्थः ॥ ३ ॥ ४ ॥

रा० टी०—सेति । तोयसहितो योऽम्बुदः तद्वत् संकाशते तं कुंभकर्णं दृष्ट्वा वानराणां महाचमूः पुनः प्रदुद्राव ॥ ३ ॥

गो० टी०—दृष्ट्वेत्यर्धम् । कुम्भकर्णमिति शेषः ॥ ३ ॥

रा० टी०—विद्रुतामिति । वाहिनीं सेनां विद्रुतां राक्षसं वर्द्धमानं च दृष्ट्वा रामो विभीषणं सविस्मितं श्रोतृविस्मयकारकमुवाच सर्वज्ञरामप्रश्नेन ज्ञातॄणां विस्मयो भवतीति तात्पर्यम् ॥ ४ ॥

गो० टी०—विद्रुतामिति । सविस्मयमिति क्रियाविशेषणम् । वर्धमानमिति । कामरूपत्वादिति भावः ॥ ४ ॥

५-११ ] ति० टी०—हरिलोचनः कपिलनेत्रः ॥ ५-११॥

---

१ प्रभुमिति गो.पाठः । २ वीरेति गो.पाठः । ३ तत इति गो.पाठः । ४ मे इति गो.पाठः । ५ प्रमाणादिति गो.पाठः । ६ भिन्नाश्चेति गो.पाठः ।

प्रकृत्या ह्येष तेजस्वी कुम्भकर्णो महाबलः । अन्येषां राक्षसेन्द्राणां वरदानकृतं बलम् ॥ १२ ॥
बालेन जातमात्रेण क्षुधार्तेन महात्मना । भक्षितानि सहस्राणि प्रजानां सुबहून्यपि ॥ १३ ॥
तेषु संभक्ष्यमाणेषु प्रजा भयनिपीडिताः । यान्ति स्म शरणं शक्रं तमप्यर्थं न्यवेदयन् ॥ १४ ॥
स कुम्भकर्णं कुपितो महेन्द्रो जघान वज्रेण शितेन वज्री ।
स शक्रवज्राभिहतो महात्मा चचाल कोपाच्च भृशं ननाद ॥ ॥ १५ ॥
तस्य नानद्यमानस्य कुम्भकर्णस्य रक्षसः । श्रुत्वा निनादं वित्रस्ताः प्रजा भूयो वितत्रसुः ॥ १६ ॥
ततः क्रुद्धो महेन्द्रस्य कुम्भकर्णो महाबलः । निष्कृष्यैरावताद्दन्तं जघानोरसि वासवम् ॥ १७ ॥
कुम्भकर्णप्रहारार्तो विजज्वाल स वासवः । ततो विषेदुः सहसा देवा ब्रह्मर्षिदानवाः ॥
प्रजाभिः सह शक्रश्च ययौ स्थानं स्वयंभुवः ॥ ॥ १८ ॥
कुम्भकर्णस्य दौरात्म्यं शशंसुस्ते प्रजापतेः । प्रजानां भक्षणं चापि शशंसुस्ते दिवौकसाम् ॥
आश्रमध्वंसनं चापि परस्त्रीहरणं तथा ॥ ॥ १९ ॥

रा० टी०–तदाकारमाह—क इत्यादिभिः । सविद्युत्तोयद इव हरिलोचनः कपिलनेत्रः किंच रिपुस्वास्थ्यापहारकनेत्रविशिष्टः यो लंकायां वीरो दृश्यते सोऽसौ कः ॥ ५ ॥

रा० टी०–पृथिव्या इति । यं दृष्ट्वा वानराः विद्रवन्ति सोऽसौ पृथिव्याः महान् केतुभूतः एक एव दृश्यते ॥ ६ ॥

रा० टी०–आचक्ष्वेति । रक्षो वा असुरो वा समहान् कोसौ आचक्ष्व कथय मया तु एवंविधं भूतं कदाचन न दृष्टपूर्वं प्रादुर्भावकालादारभ्य एतावत्कालपर्यन्तं नावलोकितमित्यर्थः ॥७॥

रा० टी०–रामेण संपृष्टो विभीषणः इदमब्रवीत् ॥ ८ ॥

गो० टी०–कोसाविति । हरिलोचनः कपिलेक्षणः । हरिर्ना कपिले त्रिषु इत्यमरः ॥ ५–८ ॥

रा० टी०–तदाकारमाह—येनेत्यादिभिः । येन वैवस्वतादिः पराजितः स विश्रवसः पुत्र एष कुंभकर्णः अस्य कुंभकर्णस्य प्रमाणसदृशः प्रमाणेन तुल्योऽन्यो राक्षसो न विद्यते सार्धश्लोक एकान्वयी ॥ ९ ॥

गो० टी०–येनेत्यादि । सैष इत्यत्र "सोचि लोपे चेत् पादपूरणम्" इति सुलोपः । प्रमाणं स्थौल्यौन्नत्ये ॥ ९ ॥

रा० टी०–एतेनेति । सहस्रशो देवादयः युधि सम्प्रभग्नाः ॥ १० ॥

गो० टी०–एतेनेति । संप्रभग्नाः अभज्यन्त ॥ १० ॥

रा० टी०–शूलपाणिमिति । विरूपे असदृशे सूक्ष्मे इत्यर्थः अक्षिणी यस्य तं कुंभकर्णं हन्तुं कालोऽयमिति मोहिताः त्रिदशाः न शेकुः ॥ ११ ॥

गो० टी०–शूलपाणिमिति । विरूपाक्षं विकटाक्षम् । मोहिताः भ्रान्ताः ॥ ११ ॥

१२–१७ ] ति० टी०–प्रकृत्येति । स्वभावतः पराभिभवसामर्थ्यवान् ॥ १२–१७ ॥

रा० टी०–प्रकृत्येति । अन्येषां राक्षसेन्द्राणां वरदानकृतं बलमस्ति एष कुंभकर्णस्तु प्रकृत्यैव तेजस्वी महाबलश्च ॥ १२ ॥

गो० टी०–प्रकृत्या तेजस्वी स्वप्रभावेन बलवान् । न तु वरप्रदानेनेत्यर्थः । अन्येषां रावणादीनां भवतीति शेषः ॥१२॥

रा० टी०–बलवत्त्वे लिंगमाह—बालेनेति । जातमात्रेण क्षुधार्तेन बालेन कुंभकर्णेन प्रजानां सुबहूनि सहस्राणि भक्षितानि ॥ १३ ॥

रा० टी०–तेष्विति । तेषु प्रजासहस्रेषु संभक्ष्यमाणेषु सत्सु भयनिपीडिताः प्रजाः शरणं रक्षकं शक्रं यांति स्म तमुपद्रवरूपमर्थं न्यवेदयंश्च ॥ १४ ॥

रा० टी०–स इति । कुपितो महेंद्रः वज्रेण कुंभकर्णं जघान शक्रवज्राभिहतः कुंभकर्णः चचाल कोपात् ननाद च॥१५॥

गो० टी०–प्रकृत्या तेजस्वित्वमुपपादयति—एतेनेत्यादिना ॥ १३–१९ ॥

रा० टी०–तस्येति । नानद्यमानस्य तस्य कुम्भकर्णस्य निनादं श्रुत्वा वित्रस्ताः प्रजाः भूयस्तत्रसुः ॥ १६ ॥

गो० टी०–तस्येति । नानद्यमानस्य अतिशयेन नदतः । वित्रस्ता भूमिः भूयो वितत्रसे उत्तरोत्तरं भीताभूत् ॥ १६ ॥

रा० टी०–तत इति । क्रुद्धः कुंभकर्णः ऐरावतात् दन्तं निष्कृष्य उत्पाट्य वासवमिन्द्रमुरसि जघान ॥ १७ ॥

गो० टी०–तत्रेति । तत्र तदानीम् । विकृष्य उत्पाट्य॥१७॥

१८–१९ ] ति० टी०–विजज्वाल रुधिरप्रवाहैर्ज्वालाव्याप्त इव बभूव ॥ १८ १९ ॥

रा० टी०–कुंभकर्णेति । कुंभकर्णप्रहारेण आर्तो वासवः विजज्वाल अतिसंतापं प्राप तत्तस्माद्धेतोः देवादयो विषेदुः॥१८

रा० टी०–प्रजाभिरिति । शक्रः प्रजाभिस्सह स्वयंभुवस्थानं ययौ अर्द्ध पृथक् ॥ १९ ॥

१ एतेनेति गो.पाठः । २ सत्त्वानामिति गो.पाठः । ३ भीमत इति गो.पाठः। ४ भूयो भूमिर्वितत्रसे इति गो. पाठः। ५ तत्र कोपादिति गो. पाठः। ६ वीति गो. पाठः । ७ देवब्रह्मेति गो. रा. पाठः । ८ देवानां चापि धर्षणामिति गो. धर्षणं च दिवौकसामिति रा. पाठः । ९ ऋषाणामिति गो. पाठः

एवं प्रजा यदि त्वेष भक्षयिष्यति नित्यशः । अचिरेणैव कालेन शून्यो लोको भविष्यति ॥ २० ॥
वासवस्य वचः श्रुत्वा सर्वलोकपितामहः । रक्षांस्यावाहयामास कुम्भकर्णं ददर्श ह ॥ २१ ॥
कुम्भकर्णं समीक्ष्यैव वितत्रास प्रजापतिः । कुम्भकर्णमथाश्वस्तः स्वयंभूरिदमब्रवीत् ॥ २२ ॥
ध्रुवं लोकविनाशाय पौलस्त्येनासि निर्मितः । तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे ॥ २३ ॥
ब्रह्मशापाभिभूतोऽथ निपपाताग्रतः प्रभोः । ततः परमसंभ्रान्तो रावणो वाक्यमब्रवीत् ॥ २४ ॥
प्रवृद्धः काञ्चनो वृक्षः फलकाले निकृत्यते । न नप्तारं स्वकं न्याय्यं शप्तुमेवं प्रजापते ॥ २५ ॥
न मिथ्यावचनश्च त्वं स्वप्स्यत्येव न संशयः । कालस्तु क्रियतामस्य शयने जागरे तथा ॥ २६ ॥

---

गो० टी०–प्रजाभिरित्यादि । ते शक्रादयः । प्रजापतेः प्रजापतये ॥ १९ ॥

गो० टी०–कुम्भकर्णेति । विजज्वाल चुकोपेति यावत्॥१८

रा० टी०–कुंभकर्णस्येति । ते शक्रादयः कुंभकर्णस्य दौरात्म्यादि एष कुंभकर्णः नित्यशः यद्येवं प्रजाः भक्षयिष्यति तर्हि लोकश्शून्यो भविष्यति इति च प्रजापतेस्समीपे शशंसुः सार्धश्लोक एकान्वयी ॥ २० ॥ २१ ॥

गो० टी०–दौरात्म्यं प्रपञ्चयति–प्रजानामित्यादि॥२०॥

२० ] ति० टी०–नित्यशः प्रतिदिनम् ॥ २० ॥

गो० टी०–एवमिति । एवम् इदानीं क्रियमाणप्रकारेण यदि भक्षयिष्यतीत्यन्वयः ॥ २१ ॥

२१ ] ति० टी०–रक्षांस्यावाहयामास गायत्रीलक्षणेन मन्त्रेणाजुहावेत्यर्थः ॥ २१ ॥

रा० टी०–वासवस्येति । सर्वलोकपितामहः रक्षांसि आवाहयामास स्वशक्त्या स्वसमीपं प्रापयामास अत एव कुंभकर्णं ददर्श ॥ २२ ॥

गो० टी०–वासवस्येति । प्राधान्याद्वासवग्रहणम् । कुम्भकर्णम् तेष्विति शेषः ॥ २२ ॥

२२ ] ति० टी०–आश्वस्तो जातविस्रम्भः परमसंभ्रान्त इति यावत् ॥ २२ ॥

रा० टी०–कुंभकर्णमिति । प्रजापतिः कुंभकर्णं समीक्ष्यैव वितत्रास अथानन्तरमाश्वस्तः स्वास्थ्यं प्राप्तः स्वयंभूः कुंभकर्णमब्रवीत् ॥ २३ ॥

गो० टी०–कुम्भकर्णमिति । इदं रक्षः इदं वक्ष्यमाणमिति इदंशब्दद्वयनिर्वाहः । विश्वास्य प्रलोभ्य सान्त्वपूर्वकं समीपमानीयेत्यर्थः ॥ २३ ॥

२३–२४ ] ति० टी०–पौलस्त्येन विश्रवसा । मृतकल्पः शयिष्यसे इति । अयं शापः ' स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् । एवमस्त्विति तं चोक्त्वा प्रहृष्टास्ते दिवौकसः ॥' इति तपश्चर्यानन्तरं प्रार्थनालब्धबहुवार्षिकनिद्रासमनन्तरकाल इति बोध्यम् । मृतकल्पः शयिष्यस इति शापस्य तपश्चर्यायसंभवात् । पूर्वं जातमात्रेणेत्युक्तिस्तु तपोविशिष्टतया जातमात्रेणेत्यर्थिका ॥ २३ ॥ २४ ॥

रा० टी०–तदाकारमाह—ध्रुवमिति । पौलस्त्येन लोकविनाशाय त्वं निर्मितोसि ध्रुवं निश्चितमेतत्प्रभाति तस्माद्धेतोः अद्यप्रभृति मृतकल्पं यथा भवति तथा शयिष्यसे ॥ २४ ॥

गो० टी०– ध्रुवमिति । पौलस्त्येन विश्रवसा । तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यस इत्ययं शापः । स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् । एवमस्त्विति तच्चोक्त्वा प्रहृष्टास्ते दिवौकसः ॥ इति तपश्चर्यानन्तरप्रार्थनालब्धबहुवार्षिकनिद्रासमनन्तरकालभावीत्यत्रगन्तव्यम् । अन्यथा मृतकल्पः शयिष्यस इति शापस्य तपश्चर्यायसंभवात् ॥ २४ ॥

रा० टी०–ब्रह्मेति । ब्रह्मशापाभिभूतः कुंभकर्णः प्रभोः अग्रतः अग्रे निपपात ततोऽनन्तरं परमसंभ्रान्तः अत्युद्विग्नो रावणः इदं वाक्यमब्रवीत् ॥ २५ ॥

गो० टी०–ब्रह्मेति । प्रभोः रावणस्य ॥ २५ ॥

२५ ] ति० टी०–प्रवृद्धः । प्रवर्धित इत्यर्थः । काञ्चनः काञ्चनफलकः । फलकाले काञ्चनरूपफलप्राप्तिकाले । निकृन्त्यते छिद्यते । साक्षात्स्वकं नप्तारमेवं शप्तुं न न्याय्यम्॥२५॥

रा० टी०–तदाकारमाह—प्रवृद्ध इति । काञ्चनः कांचनफलवान् प्रवृद्धो वृक्षः फलकाले सुवर्णरूपफलनिष्पत्त्यवसरे न निकृत्यते कैश्चित् छिद्यते अतः स्वकं नप्तारमेवं शप्तुं न न्याय्यम् ॥ २६ ॥

गो० टी०–विवृद्ध इति । काञ्चनः काञ्चनवत् स्पृहणीयः । चम्पकवृक्षो वा । विवृद्धः वर्धितः । फलकाले पुष्पकाले । निकृत्यते छिद्यते । नप्तारं पौत्रम् ॥ २६ ॥

२६ ] ति० टी०–पुनरपि रावण आह—न मिथ्येति । अतोऽयं स्वप्स्यत्येव न संशयः । जाग्रणे । गुणाभाव आर्षः । कालः कालनियमः ॥ २६ ॥

रा० टी०–नेति । यतस्त्वं न मिथ्यावचनः अतः एष स्वप्स्यत्येव अतः शयने जागरणे च कालः समयनियमः क्रियताम् ॥ २७ ॥

गो० टी०–नेति । कालः कालनियमः ॥ २७ ॥ २८ ॥

---

१ दृष्ट्वा विश्वास्य चैवेदमिति गो.पा.। २ मृतकल्पमिति रा.पा.। ३ वीति गो.पा. । ४ एष इति गो.पा. । ५ जागरे इति गो.जागरणे इति रा.पा. ।

रावणस्य वचः श्रुत्वा स्वयंभूरिदमब्रवीत् । शयिता ह्येष षण्मासमेकाहं जागरिष्यति ॥ २७ ॥
एकेनाह्ना त्वसौ वीरश्चरन्भूमिं बुभुक्षितः । व्यात्तास्यो भक्षयेल्लोकान्संवृद्ध इव पावकः ॥ २८ ॥
सोऽसौ व्यसनमापन्नः कुम्भकर्णमबोधयत् । त्वत्पराक्रमभीतश्च राजा संप्रति रावणः ॥ २९ ॥
स एष निर्गतो वीरः शिबिराद्भीमविक्रमः । वानरान्भृशसंक्रुद्धो भक्षयन्परिधावति ॥ ३० ॥
कुम्भकर्णं प्रतीक्ष्यैव हरयोऽद्य प्रदुद्रुवुः । कथमेनं रणे क्रुद्धं वारयिष्यन्ति वानराः ॥ ३१ ॥
उच्यन्तां वानराः सर्वे यन्त्रमेतत्समुच्छ्रितम् । इति विज्ञाय हरयो भविष्यन्तीह निर्भयाः ॥ ३२ ॥
विभीषणवचः श्रुत्वा हेतुमत्सुमुखोद्गतम् । उवाच राघवो वाक्यं नीलं सेनापतिं तदा ॥ ३३ ॥
गच्छ सैन्यानि सर्वाणि व्यूह्य तिष्ठस्व पावके । द्वाराण्यादाय लङ्कायाश्चर्याश्चास्याथ संक्रमान् ॥
शैलशृङ्गाणि वृक्षांश्च शिलाश्चाप्युपसंहरन् । भवन्तः सायुधाः सर्वे वानराः शैलपाणयः ॥ ३५ ॥
राघवेण समादिष्टो नीलो हरिचमूपतिः । शशास वानरानीकं यथावत्कपिकुञ्जरः ॥ ३६ ॥
ततो गवाक्षः शरभो हनूमानङ्गदस्तथा । शैलशृङ्गाणि शैलाभा गृहीत्वा द्वारमभ्ययुः ॥ ३७ ॥

२७-२८ ] ति० टी०-षण्मासं त्ववश्यं शयिता, न तु ततो न्यूनम् अधिकं तु न निवार्यते तद्बीजमुक्तम् जागरणं त्वेकाहमेव । सत्यत्याहितं कार्ये इति शेषः । अतएवेन्द्रलोकजयाय रावणस्य कुम्भकर्णेन सह गमने प्रथमदिने मधुपुरे वास उक्तः द्वितीयदिने कैलासे यत्र रम्भायां बलाद्रावणस्य प्रवृत्तिः, तदनन्तरम् ' कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः ' इत्यादिना तृतीयदिवसादिषु युद्धमुक्तम् । तेन युद्धप्रसङ्गेऽनेकदिनमपि जागरणं प्रतीयते ॥ २७ ॥ २८ ॥

रा० टी०-रावणस्येति । एषः षण्मासं शयिता एकाहं जागरिष्यति इदं स्वयम्भूरब्रवीत् ॥ २८ ॥

गो० टी०-शयितेति । षण्मासानित्येतदर्वाङ्निषेधपरम् । अन्यथा नव षट् सप्त चाष्टौ च मासानिति पूर्वोक्तविरोधात् २९

रा० टी०-एकाहजागरणस्य प्रयोजनमाह—एकेनेति । बुभुक्षितः चिरशयनेन जातबुभुक्षः असौ वीरः एकेनाह्ना भूमिं चरन् व्यात्तास्यस्सन् लोकान् भक्षयन् पावक इव संवृद्धोऽस्तु इति शेषः ॥ २९ ॥

२९ ] ति० टी०-इदानीं तस्याकाले बोधननिमित्तमाह-सोऽसाविति ॥ २९ ॥

रा० टी०-कुंभकर्णवृत्तान्तं संवर्ण्य प्रकृतमाह-स इति । व्यसनं पराभवदुःखमापन्नः अत एव त्वत्पराक्रमभीतः सोऽसौ राजा रावणः कुंभकर्णं प्रत्यबोधयत् ॥ ३० ॥

गो० टी०-सोऽसाविति । सोऽसौ रावणः ॥ ३० ॥

३० ] ति० टी०-शिबिरात्स्वगृहाद् भक्षयन् हेतौ शता भक्षार्थमित्यर्थः ॥ ३० ॥

रा० टी०-स इति । शिबिरात् राजभवनात् निर्गतः एष कुंभकर्णः वानरान् भक्षयन् भक्षयितुं परिधावति हेतौ शतृ॥३१॥

गो० टी०-स इति । शिबिरात् स्वनिलयात् । भक्षयन् परिधावति भक्षणहेतोः परिधाविष्यति । " लक्षणहेत्वोः क्रियायाः " इति शतृप्रत्ययः । वर्तमानसामीप्यादिना भविष्यदर्थे लट् ॥ ३१ ॥ ३२ ॥

३१] ति० टी०-पुना रामः पृच्छति-कथमेनमिति ३१

रा० टी०-कुंभकर्णमिति । कुंभकर्णं प्रतीक्ष्यैव हरयः प्रदुद्रुवुः अतः रणे वानराः एनं कथं वारयिष्यन्ति ॥ ३२ ॥

३२ ] ति० टी०-विभीषण उत्तरमाह—उच्यतामिति । समुच्छ्रितं रावणेन । मायया विभीषिकार्थं निर्मितं किंचिद्यन्त्रमात्रम्, अतो न किंचिदेतदित्येव वानरा उच्यन्तां मया स्वामिभिश्च, न तु रावणानुजत्वादिकमित्यर्थः । एवं च कार्यसिद्धिरित्याह-इतीति । इह एतस्मिन्विषये ॥ ३२ ॥

रा० टी०-ननु वानरस्वास्थ्यार्थं किं कर्तव्यमित्यत आह-उच्यन्तामिति । समुच्छ्रितमतिप्रवृद्धमेतत्प्रदृश्यमानं रक्षः यंत्रं मत्समीपे संकुचिततेजो भविष्यतीति शेषः इति सर्वे वानराः उच्यन्तामिति भवदुक्तं हरयो विज्ञाय निर्भयाः भविष्यन्ति॥३३॥

गो० टी०-उच्यन्तामिति । यन्त्रं विभीषिका । समुच्छ्रितमुन्नतम् ॥ ३३ ॥

३३ ] ति० टी०-हेतुमद्युक्तिमत् । सुमुखोद्गतं वानरलोकस्य सौमुख्यसंपादनायोद्गतमुपदिष्टं वचः प्रागुक्तं श्रुत्वा नीलं प्रति वाक्यमुवाच ॥ ३३ ॥

रा० टी०-विभीषणेति । हेतुमत् सयुक्तिकं सुमुखाय वानराणां युद्धसम्मुखाय उद्गतं कथितं विभीषणवचः श्रुत्वा राघवो नीलमुवाच ॥ ३४ ॥

गो० टी०-विभीषणेति । सुमुखेरितं सुमुखं यथा भवति तथा ईरितम् उक्तम् ॥ ३४ ॥

३४ ] ति० टी०-यथापूर्वं द्वारनिरोधे नियुङ्क्ते-गच्छेति । अनेन रावणपलायनोत्तरं मध्येऽवहारः सूचितः ॥ ३४ ॥

३५-३७ ] ति० टी०-शैलशृङ्गादीन्युपसंहरन् । उपसंहरन्तः संचिन्वन्तः । भवन्तस्तिष्ठन्त्विति शेषः ॥ ३५-३७ ॥

रा० टी०-तदाकारमाह-गच्छेति । पावके हे पावकापत्य

१ मासानिति गो. पाठः । २ संक्रुद्ध इति गो पाठः । ३ प्रविद्रुता इति गो. पाठः । ४ मुखेरितमिति गो. पाठः । ५ चाप्यथेति गो. पाठः ।
६ संक्रोशेति गो. पाठः । ७ निवसन्निति गो. पाठः ।

रामवाक्यमुपश्रुत्य हरयो जितकाशिनः । पादपैरर्दयन्वीरा वानराः परवाहिनीम् ॥ ३८ ॥
ततो हरीणां तदनीकमुग्रं रराज शैलोद्यतदीप्तहस्तम् ।
गिरेः समीपानुगतं यथैव महन्महाम्भोधरजालमुग्रम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ।

स कुम्भकर्णः सहस्रै राक्षसानां परिवृतः पुष्पवर्षेणावकीर्यमाणश्चाग्रजभवनं प्रविश्य तेन सत्कृतश्च पर्यङ्के निषण्णस्य तस्य चरणावभिवाद्य स्वयमप्यासनमलङ्कृत्य किं भयमद्यापतितं यतोहं प्रसुप्तोऽप्युत्थापित आर्येणेति क्रोधसंरक्तनयनोऽब्रवीत् रावणोऽपि तं राघवकृतस्वपराजयं शंसन् तूर्णमुत्तिष्ठ सपत्नवाहिनीं व्यथय मां चानन्दयेति प्रतिबभाषे ।

स तु राक्षसशार्दूलो निद्रामदसमाकुलः । राजमार्गं श्रिया जुष्टं ययौ विपुलविक्रमः ॥ १ ॥
राक्षसानां सहस्रैश्च वृतः परमदुर्जयः । गृहेभ्यः पुष्पवर्षेण कीर्यमाणस्तदा ययौ ॥ २ ॥
स हेमजालविततं भानुभास्वरदर्शनम् । ददर्श विपुलं रम्यं राक्षसेन्द्रनिवेशनम् ॥ ३ ॥
स तत्तदा सूर्य इवाभ्रजालं प्रविश्य रक्षोधिपतेर्निवेशनम् ।
ददर्श दूरेऽग्रजमासनस्थं स्वयंभुवं शक्र इवासनस्थम् ॥ ४ ॥
भ्रातुः स भवनं गत्वा रक्षोगणसमन्वितः । कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ५ ॥

---

नील गच्छ सैन्यानि व्यूह्य व्यूहरचनया संस्थाप्य अत एव लंकायाः द्वाराणि चर्याः राजमार्गांश्च संक्रमांश्चादाय स्ववशं प्रापय्य शैलशृंगादीनि उपसंहरन् सन् त्वं तिष्ठस्व शैलपाणयस्सन्तः सायुधाः वानराः तिष्ठन्तु अर्द्धचतुष्टयमेकान्वयि॥३५॥३६॥

रा० टी०—राघवेणेति । राघवेण समादिष्टो नीलः वानरानीकं यथावत् शशास ॥ ३७ ॥

रा० टी०—तत इति । शैलाभाः गवाक्षादयश्शैलशृङ्गाणि गृहीत्वा द्वारमभ्ययुः रुरुधुरित्यर्थः ॥ ३८ ॥

गो० टी०—गच्छेत्यादिश्लोकद्वयम् । आदाय स्वीकृत्य । आवृत्येति यावत् । उपसंहर राशीकुरु । युद्धसाधनशिलादिकमिदानीमेव संपादयेत्यर्थः । तिष्ठन्तु वानराः सर्वे सायुधाः शैलपाणयः इति पाठः । सायुधाः खड्गाद्यायुधवन्तः॥३५—३८॥

३८ ] ति० टी०—रामवाक्यं यन्त्रमात्रमिदमित्येवंरूपम् । जितकाशिनो निर्भयाः। परवाहिनीं पुराद्बहिः पुरीपरिसररक्षिणीं राक्षससेनामित्यर्थः ॥ ३८ ॥

रा० टी०—रामेति । रामवाक्यमुपाश्रुत्य हरयः रिपुप्रामहर्तारो वानराः परवाहिनीं पादपैरर्दयन् आर्दयन् ॥ ३९ ॥

गो० टी०—रामेति । परवाहिनीं नगररक्षार्थं बहिश्चरन्तीम् । यद्वा कुम्भकर्णं दृष्ट्वा पलायमानान् वानरान् प्रत्युद्युतां परवाहिनीमित्यर्थः ॥ ३९ ॥

३९ ] ति० टी०—शैलोद्यतेति । उद्यतशैलं वृक्षहस्तं च । गिरेः समीपानुगतम्, पर्वताग्रवर्तिलङ्कायाः परितो वर्तमानत्वात्तस्य, महन्महादेशव्यापिसंस्थानवत् ॥ ३९ ॥

इतिश्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकषष्टितमः सर्गः ॥ ६१ ॥

रा० टी०—तत इति । शैलाः उद्यतवृक्षाश्च हस्तेषु यस्य तत् हरीणामनीकम् गिरेस्समीपानुगतमुग्रं महाम्भोधरजालमिव रराज ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

गो० टी०—तत इति । शैलोद्यतदीप्तहस्तं शैलोद्यताः उद्यतशैलाः । महन्महाम्भोधरजालम् । महत् गुरु महाम्भोधरजालं मेघजालमित्यर्थः ॥ ४० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

१ ] ति० टी०—अथ रावणेन कुम्भकर्णनियोजनम्—स त्विति ॥ १ ॥

रा० टी०—कुम्भकर्णवृत्तान्तमाह—स इत्यादिभिः । निद्रामदेन समाकुलः कुंभकर्णः राजमार्गं ययौ ॥ १ ॥

गो० टी०—अथ कुम्भकर्णं प्रति रावणस्य सान्त्ववचनं द्विषष्टितमे—स त्वित्यादि । निद्रामदसमाकुलः निद्रया अकालोत्थितत्वेनानुवर्तमानया मदेन मद्यपानकृतेन च समाकुलः । गृहेभ्यः निर्गतेनेति शेषः ॥ १ ॥ २ ॥

२ ] ति० टी०—गृहेभ्यस्तत्तद्गृहवर्तिस्त्रीहस्तेभ्यः । निर्गतेनेति शेषः ॥ २ ॥

रा०टी०—तदेव भङ्ग्यन्तरेणाह-राक्षसानामिति । राक्षसानां सहस्रैर्वृतः कुंभकर्णः गृहेभ्यः पुष्पवर्षेण कीर्यमाणस्सन् ययौ२

गो० टी०—स हेमेति । हेमजालविततं स्वर्णमयगवाक्षविततम् । भानुभास्वरदर्शनम् दृश्यत इति दर्शनं रूपम् । भानुवत् प्रकाशमानमित्यर्थः ॥ ३ ॥

३-५ ] ति० टी०—भानुवत्सूर्यवद्भास्वरं दर्शनं यस्य तत्,

---

१ दीप्तेति गो. पाठः । २त्रामिति रा. पाठः । ३ गच्छन्निति गो. रा. पाठः ।

सोऽभिगम्य गृहं भ्रातुः कक्ष्यामभिविगाह्य च । ददर्शोद्विग्नमासीनं विमाने पुष्पके गुरुम् ॥ ६ ॥
अथ दृष्ट्वा दशग्रीवः कुम्भकर्णमुपस्थितम् । तूर्णमुत्थाय संहृष्टः संनिकर्षमुपानयत् ॥ ७ ॥
अथासीनस्य पर्यङ्के कुम्भकर्णो महाबलः । भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत् ॥ ८ ॥
पुनः स मुदितोत्पत्य रावणः परिषस्वजे । स भ्रात्रा संपरिष्वक्तो यथावच्चाभिनन्दितः ॥ ९ ॥
कुम्भकर्णः शुभं दिव्यं प्रतिपेदे वरासनम् । स तदासनमाश्रित्य कुम्भकर्णो महाबलः ॥ १० ॥
संरक्तनयनः क्रोधाद्रावणं वाक्यमब्रवीत् । किमर्थमहमादृत्य त्वया राजन्प्रबोधितः ॥ ११ ॥
शंस कस्माद्भयं तेऽत्र को वा प्रेतो भविष्यति । भ्रातरं रावणः क्रुद्धं कुम्भकर्णमवस्थितम् ॥
रोषेण परिवृत्ताभ्यां नेत्राभ्यां वाक्यमब्रवीत् ॥ १२ ॥
अयं ते सुमहान्कालः शयानस्य महाबल । सुषुप्तस्त्वं न जानीषे मम रामकृतं भयम् ॥ १३ ॥
एष दाशरथिः श्रीमान्सुग्रीवसहितो बली । समुद्रं लङ्घयित्वा तु कुलं नः परिकृन्तति ॥ १४ ॥

भानुभिः सूर्यकिरणैर्भास्वरं दर्शनं यस्येति च । श्लेषु सूर्यकिरणसंबन्धादधिकतेजोवत्त्वं गृहस्येति भावः । इदमेव युक्तम् ॥ ३–५ ॥

रा० टी०–स इति । भानुवत् भास्वरं दर्शनं यस्य तत् राक्षसेंद्रनिवेशनं स कुंभकर्णो ददर्श ॥ ३ ॥

रा० टी०–स इति । स कुंभकर्णः सूर्याभ्रजालमिव रक्षोधिपतेर्निवेशनं प्रविश्य शक्रस्स्वयम्भुवमिव आसनस्थमग्रजं दूरे ददर्श ॥ ४ ॥

रा टी०–भ्रातुरिति । कुंभकर्णः भ्रातुर्भवनं गच्छन् सन् पदन्यासैर्मेदिनीमकम्पयत ॥ ५ ॥

गो० टी०–स इति । दूरे कक्ष्यान्तरप्रदेशे ददर्श । उन्नतपुष्पकवत्त्वादिति भावः ॥ ४–६ ॥

६ ] ति० टी०–कक्ष्यामभिविगाह्य द्वाराणि तीर्त्वा ॥६॥

रा० टी०–स इति । स कुम्भकर्णः कक्षामभिविगाह्य उल्लंघ्य पुष्पके विमाने आसीनमुद्विग्नं गुरुं ज्येष्ठभ्रातरं ददर्श ॥ ६ ॥

७–८ ] ति० टी०–उपस्थितं प्राप्तम् ॥ ७ ॥ ८ ॥

रा० टी०–अथेति । दशग्रीवः उपस्थितमागतम् कुंभकर्णं दृष्ट्वा संहृष्टस्सन् सन्निकर्षं स्वसमीपमुपानयत् ॥ ७ ॥

गो० टी०–अथेति । सन्निकर्षं समीपम् ॥ ७ ॥

रा० टी०–अथेति । कुंभकर्णः पर्यंके आसीनस्य भ्रातुः चरणौ ववन्दे मया किं कृत्यमित्यब्रवीच्च ॥ ८ ॥

गो० टी०–अथेति । कृत्यं मया कर्तव्यम् ॥ ८–१० ॥

९–१० ] ति० टी०–स मुदितोत्पत्य । स रावणो मुदितः समुत्पत्य आसनादुत्थायेत्यर्थः संधिरार्षः ॥ ९ ॥ १० ॥

रा० टी०–पुनरिति । मुदितो रावणः पुनरुत्पत्य उत्थाय परिषस्वजे ॥ ९ ॥

रा० टी०–स इति । भ्रात्रा संपरिष्वक्तः अत एव अभिनन्दितः कुंभकर्णः वरासनं भ्रातृदत्तमुत्तममासनं प्रतिपेदे प्राप१०

रा० टी०–स इति । क्रोधात् संरक्तनयनः कुंभकर्णः तदासनमाश्रित्य रावणमब्रवीत् ॥ ११ ॥

११ ] ति० टी०–क्रोधादकाल उद्बोधनकोपात् । 'कोपात्, इति पाठान्तरम् । तदेव दर्शयति—किमर्थमिति । आदृत्य यत्नं कृत्वा ॥ ११ ॥

रा० टी०–तदाकारमाह—किमर्थमिति । त्वयाहं किमर्थं प्रबोधितः कस्मात्ते भयमत्र अस्मिन् समये कस्त्वद्भीतिहेतुः प्रेतो मृतो भविष्यति ॥ १२ ॥

गो० टी०–किमर्थमिति । आदृत्य स्थितेनेति शेषः । शंसेति । तमिति शेषः। प्रेतो भविष्यति मृतो भविष्यति॥११॥

१२ ] ति० टी०–प्रेतो भविष्यति । मया निहत इति शेषः । रोषेणेषत्परिवृत्ताभ्यां नेत्राभ्यामुपलक्षितं कुम्भकर्णमिदं वाक्यमब्रवीत् ॥ १२ ॥

रा० टी०–भ्रातरमिति । रोषेण परिवृत्ताभ्यां नेत्राभ्यामुपलक्षितो रावणः अवस्थितं क्रुद्धं कुम्भकर्णमब्रवीत्॥१३॥

गो० टी०–भ्रातरमिति । ईषत्परिवृत्ताभ्यामित्यनेन ईषत् कोपो लक्ष्यते ॥ १२ ॥

१३–१४ ति० टी०–सुमहान्कालः । गत इति शेषः । मया संमन्त्र्य । गमनानन्तरमिति भावः । सुमहानित्यनेन ब्रह्मकृतावधिभूतषण्मासादप्यधिकः कालो गत इति सूच्यते । 'शयिता ह्येष षण्मासानेकाहं जागरिष्यते ' इति तु षण्मासादर्वाग्जागरणाभावपरम् । ' मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि' इति पद्यं तु प्रक्षिप्तम् । तत्राहुःपदं मासपरं वेत्युक्तम् । अन्यथा षण्मासादर्वाकदापि जागरणाभावेन तावत्कालस्य तत्त्वापे नियतत्वात्ततोऽर्वाक्यासद्वयादिमध्ये एतत्प्रवृत्तौ सुमहानित्युक्तेरसंगत्यापत्तेः । अनेन मन्त्रं कृत्वा सुप्तस्याष्टनवमासरूपः कालो गत इति गम्यते । अनेनापि युद्धस्य षण्मासाधिककालव्यापिता सूचिता भवतीति ज्ञायते ॥ १३ ॥ १४ ॥

१ उत्पत्य चैनं मुदित इति गो. पाठः । २ वीति गो. पाठः । ३ तेऽस्ति कोऽद्येति गो. पाठः । ४ ईषत्स्थिति गो. पाठः । ५ अथ ते इति गो. पाठः । ६ सुखित इति गो. पाठः । ७ राम इति गो. पाठः । ८ सबलस्तीर्त्वेति गो. पाठः । ९ मूलमिति गो. पाठः ।

हन्त पश्यस्व लङ्कायां वनान्युपवनानि च । सेतुना सुखमागत्य वानरैकार्णवं कृतम् ॥ १५ ॥
ये राक्षसा मुख्यतमा हतास्ते वानरैर्युधि । वानराणां क्षयं युद्धे न पश्यामि कथंचन ॥
न चापि वानरा युद्धे जितपूर्वाः कदाचन । ॥ १६ ॥
तदेतद्भयमुत्पन्नं त्रायस्वेह महाबल । नाशय त्वमिमानद्य तदर्थं बोधितो भवान् ॥ १७ ॥
सर्वक्षपितकोशं च स त्वमभ्युपपद्य माम् । त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ॥ १८ ॥
भ्रातुरर्थे महाबाहो कुरु कर्म सुदुष्करम् । मयैवं नोक्तपूर्वो हि भ्राता कश्चित्परंतप ॥ १९ ॥
त्वय्यस्ति मम च स्नेहः परा संभावना च मे । देवासुरेषु युद्धेषु बहुशो राक्षसर्षभ ॥
त्वया देवाः प्रतिव्यूह्य निर्जिताश्चामरा युधि । ॥ २० ॥
तदेतत्सर्वमातिष्ठ वीर्यं भीमपराक्रम । नहि ते सर्वभूतेषु दृश्यते सदृशो बली ॥ २१ ॥

---

रा० टी०—तदाकारमाह—अयमित्यादिभिः । हे महाबल शयानस्य ते सुमहान् कालो व्यतीत इति शेषः अतः सुप्तस्त्वं रामकृतं भयं न जानीषे ॥ १४ ॥

गो० टी०—ईषत्त्वमेव विवृणोति—अद्येत्यादिना । सुमहान् कालः नवदिनपरिमितः । गत इति शेषः ॥ १३ ॥

रा० टी०—एषइति । एष रामः सुग्रीवसहितस्सन् नः कुलं परिकृन्तति ॥ १५ ॥

गो० टी०—एष इति । मूलं मूलबलम् । परिकृन्तति बाधत इत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—स्वलङ्कायां स्वीयद्वीपे । वानरैकार्णवं कृतं वानरमयैकार्णववत्कृतम् ॥ १५ ॥

रा० टी०—हतमिति । सेतुना सुखमागत्य रामादिभिरिति शेषः स्वलंकायां वनादीनि हतं हतानि पश्य वानराः एव एकार्णवो यस्मिन् तत् कृतं विनष्टं पुरं च पश्य ॥ १६ ॥

गो० टी०—मूलकृन्तनमुपपादयति—हन्तेति । लङ्कायां वनान्युपवनानि च सर्वम् । सेतुना सुखमागम्य स्वनिर्मितसेतुमात्रेण सुखमागम्य । रामेण । वानरैकार्णवीकृतं वानररूपैकार्णवीकृतम् । पश्यस्व । आत्मनेपदमार्षम् । यद्वा स्वलङ्कायामिति छेदः । आत्मीयलङ्कादीप इत्यर्थः ॥ १५–१७ ॥

१६–१७ ] ति० टी०—वानराणां क्षयं न पश्यामि । तिष्ठतु क्षयो युद्धे, मदीयै रक्षोभिर्जितपूर्वा अपि न दृश्यन्ते ॥ १६ ॥ १७ ॥

रा० टी०—ये इति । वानराणां क्षयं युद्धे न पश्यामि न वा वानराः युद्धे कदाचन जितपूर्वा दृष्टा इति शेषः ॥ १७ ॥

रा० टी०—तदिति । तत्तेभ्यः एतत् भयमुत्पन्नमतः इह अस्मिन् समये त्रायस्व तदुपायमाह इमान् त्वं नाशय तदर्थमेव भवान् बोधितः ॥ १८ ॥

गो० टी०—तदिति । तदेतत् एतादृशम् । भयमुत्पन्नम् । अस्माद्भयादिमां पुरीं त्रायस्व । इमान् वानरान् नाशय । तदर्थं नाशनार्थम् ॥ १८ ॥

१८–१९ ] ति० टी०—सर्वे क्षपिता नाशिताः कोशा ऐश्वर्याणि यस्य तं मामभ्युपपद्यानुगृह्य त्रायस्व ॥ १८ ॥ १९ ॥

रा० टी०—सर्वेति । सर्वक्षपिताः निश्शेषं नष्टाः कोशाः धनागाराणि यस्य तं मामुपपद्यानुगृह्य बालवृद्धावशेषितां लंकां त्रायस्व ॥ १९ ॥

गो० टी०—सर्वक्षपितेति । सर्वक्षपितकोशं क्षपितसर्वैश्वर्यम् कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः इत्यमरः । अभ्युपपद्य जानीहि इत्यर्थः । बालवृद्धावशेषितामित्यतिशयोक्तिः । मूलबलाद्युत्सादनस्य वक्ष्यमाणत्वात् ॥ १९ ॥

रा० टी०—भ्रातुरिति । भ्रातुरर्थे सुदुष्करं कर्म कुरु कश्चिद्भ्राता मया एवं नोक्तपूर्वः ॥ २० ॥

गो० टी०—भ्रातुरिति । कश्चिदिति प्रश्ने । कदाचिदपि नोक्तपूर्वोसीत्यर्थः । कश्चिदिति पाठे त्वदन्यः कश्चिदपि नैवमुक्तपूर्व इत्यर्थः ॥ २० ॥

२० ] ति० टी०—परा संभावना कार्यसिद्धिप्रत्याशा मे । त्वय्यस्तीति शेषः । प्रतिव्यूह्य प्रातिभटयं कृत्वा ॥ २० ॥

रा० टी०—त्वयीति । त्वयि मे स्नेहः परा संभावना अयं कार्यं साधयिष्यतीत्याशा चास्ति ॥ २१ ॥

रा० टी०—आशायां हेतुमाह—देवेति । अमराः मरणधर्मरहिताः अपि बहुशो देवाः प्रतिव्यूह्य भयमुत्पाद्य त्वया निर्जिताः ॥ २२ ॥

गो० टी०—त्वयीति । सम्भावना आदरः । दैवासुरेषु देवासुरसंबन्धिषु । प्रतिव्यूह्य विभज्य । असुराः असुरा अपीत्यर्थः ॥ २१ ॥

२१ ] ति० टी०—वीर्यमातिष्ठ वीर्यमवलम्बस्व ॥ २१ ॥

रा० टी०—तदिति । तत् लङ्कात्राणहेतोः एतत्सर्वं वीर्यमातिष्ठ स्मरेत्यर्थः हि यतः ते सदृशो बली न दृश्यते ॥ २३ ॥

---

१ आगम्येति गो. पाठः । २ अर्णवीकृतमिति गो. पाठः । ३ कदाचनेति गो. पाठः । ४ इमामिति गो. पाठः । ५ कश्चिद्भ्रातरिति गो. पाठः । ६ तु ममेति गो. पाठः । ७ असुरा इति गो. पाठः ।

कुरुष्व मे प्रियहितमेतदुत्तमं यथाप्रियं प्रियरण बान्धवप्रिय।
स्वतेजसा व्यथय सपत्नवाहिनीं शरद्घनं पवन इवोद्यतो महान् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः।

रावणस्य परिदेवितं निशम्य पापकर्मणो योग्यं फलमासादितं यत् सीताहरणादिके प्रियाया मन्दोदर्या अनुजस्य विभीषणस्य च हितं वचनमनादृतं भवता राजनीतिश्चापि नानुसृतेत्यादि वदन्तं कुम्भकर्णं सरोषं भर्त्सयामास रावणः। ततो रुष्टोयमिति ज्ञात्वा तत्कालानुगुणवीर्योत्साहजनिकां गिरमभाणीत्कुम्भकर्णः।

तस्य राक्षसराजस्य निशम्य परिदेवितम्। कुम्भकर्णो बभाषेदं वचनं प्रजहास च ॥ १ ॥
दृष्टो दोषो हि योऽस्माभिः पुरा मन्त्रविनिर्णये। हितेष्वनभियुक्तेन सोऽयमासादितस्त्वया ॥ २ ॥
शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः। निरयेष्वेव पतनं यथा दुष्कृतकर्मणः ॥ ३ ॥
प्रथमं वै महाराज कृत्यमेतदचिन्तितम्। केवलं वीर्यदर्पेण नानुबन्धो विचारितः ॥ ४ ॥

---

गो० टी०—तदेतदिति। आतिष्ठ अवलम्बस्व ॥ २२ ॥

२२ ] ति० टी०—हे प्रियरण हे बान्धवप्रिय, यथाप्रियं स्वप्रीत्यनुसारेण प्रियहितमुत्तमं हितं कुरुष्व ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

रा० टी०—कुरुष्वेति। शरद्घनमुद्यतो महान् पवन इव सपत्नवाहिनीं स्वतेजसा व्यथय एतन्मे प्रियहितं यथाप्रियं प्रीतिमनतिक्रम्य कुरुष्व ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

गो० टी०—कुरुष्वेति। यथाप्रियं यथास्नेहम् आवयोः प्रीत्यनुरूपमित्यर्थः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

१ ] ति० टी०—प्रजहास च। विभीषणवचोऽनङ्गीकारफलं प्राप्तं दुरात्मनेति हासः ॥ १ ॥

रा० टी०—रावणवचनश्रवणानंतरकालिकीं कुंभकर्णोक्तिमाह—तस्येत्यादिभिः। तस्य रावणस्य परिदेवितं विलापं निशम्य कुंभकर्णो बभाषे प्रजहास च ॥ १ ॥

गो० टी०—अथ कुम्भकर्णबुद्धिस्त्रिषष्टितमे—तस्येत्यादि। परिदेवितम् पूर्वोक्तवचनानां परिदेवनतुल्यत्वात् परिदेवितत्वम्। कुम्भकर्णो वचनं बभाषे जहास चेत्यत्र व्यत्ययः कार्यः उक्त्वा जहासेति वार्थः ॥ १ ॥

२ ] ति० टी०—तदेव प्रकाशयति—दृष्ट इति। मन्त्रविनिर्णये विभीषणेन सह मन्त्रविचारकाले हितेषु हितवादिषु, अनभियुक्तेनाश्रद्दधानेन, सोऽयमासादितः। मया विभीषणेन च दृष्टः। सर्वनाशप्राप्तिरूपदोष इत्यर्थः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—दृष्ट इत्यादिभिः। पुरा पूर्वस्मिन् मंत्रविनिर्णये विभीषणादिभिस्सह मन्त्रकरणसमये यो दोषो भवत्कृतदुर्नयफलमस्माभिर्दृष्टो दर्शितः सोऽयं दोषः हितेषु अनभियुक्तेन हिताकाङ्क्षारहितेन त्वया आसादितः तिरस्कृतः प्राप्तो वा ॥ २ ॥

गो० टी०—दृष्ट इति। पुरा मन्त्रनिर्णये क्रियमाणे अस्माभिः यो दोषो दृष्टः शत्रुभिस्तवापत् भविष्यतीति निश्चित. हितेषु हितपरेषु। अनभिरक्तेन असक्तेन हितपरवचनमश्रु ण्वतेत्यर्थः त्वया सोयं दोष आसादितः। पूर्वमेव चिन्तिता विपत् प्राप्तेत्यर्थः ॥ २ ॥

३ ] ति० टी०—लोके क्रमेण दोषं पुरुषाः प्रपद्यन्ते। त्वां तु 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इति न्यायेन शीघ्रमेव परदारग्रहणरूपदुष्कर्मणः फलं प्राप्तमित्याह—शीघ्रमिति। अभ्युपेतं प्राप्तं जातम्, यथा पापस्य प्रथमं निरयेष्वेव पतनं तद्वत् ॥ ३ ॥

रा० टी०—शीघ्रमिति। दुष्कृतकमणो निरयेषु पतनमिव पापस्य कर्मणः फलं त्वां शीघ्रमभ्युपेतम् ॥ ३ ॥

गो० टी०—शीघ्रमिति। पापस्य सीताहरणरूपस्य कर्मणः फलम् त्वाम् शीघ्रम् अभ्युपेतं प्राप्तम्। अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते इति न्यायात्। अत्रोदाहरणमाह—निरयेष्विति। दुष्कृतकर्मणः महापातकिनः पुरुषान्। निरयेष्वेव पतनं यथा प्राप्नोति तद्वत्। एवकारेणापरिहार्यत्वमुच्यते ॥ ३ ॥

४ ] ति० टी०—प्रथममेतत्कृत्यं सर्वनाशप्राप्तिरूपं केवलं वीर्यदर्पेण न चिन्तितम्, अनुबन्धो दोषोत्पादोऽपि न विचा-

---

१ विषमेति गो. पाठः।

यः पश्चात्पूर्वकार्याणि कुर्यादैश्वर्यमास्थितः । पूर्वं चोत्तरकार्याणि न स वेद नयानयौ ॥ ५ ॥
देशकालविहीनानि कर्माणि विपरीतवत् । क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ६ ॥
त्रयाणां पञ्चधा योगं कर्मणां यः प्रपद्यते । सचिवैः समयं कृत्वा स सम्यग्वर्तते पथि ॥ ७ ॥
यथागमं च यो राजा समयं च चिकीर्षति । बुध्यते सचिवैर्बुद्ध्या सुहृदश्चानुपश्यति ॥ ८ ॥

---

रितः । इदं दुष्टं कर्म तस्य चैवं फलं भावीति द्वयमपि न विचारितमित्यर्थः । 'दोषोत्पादेऽनुबन्धः स्यात्' इत्यमरः ॥४॥

रा० टी०–प्रथममिति । वीर्यदर्पेणैव एतदपहरणरूपं कृत्यमचिन्तितम् अन्याय्यमेतदिति न विचारितम् अत एव अनु बन्धः सीतारामयोः परस्परं प्रीतिर्न विचारितः तत्फलमेवेदमुपस्थितमिति तात्पर्यम् ॥ ४ ॥

गो० टी०–प्रथममिति । हे महाराज । केवलं वीर्यदर्पेण एतत्कृत्यं सीताहरणरूपं कार्यम् वै प्रथमं सीताहरणात् पूर्वम् न चिन्तितम् साध्वसाधु वेति त्वया न विचारितम् । अनुबध्नातीत्यनुबन्धः दोषोत्पादः दोषोत्पादेऽनुबन्धः स्यात् इत्यमरः ॥४॥

५ ] ति० टी०–पूर्वकार्याणि पूर्वकर्तव्यकार्याणि यः पश्चात्कुर्यात्तथोत्तरकार्याणि च पूर्वं स नयानयौ न वेद । अत्र पूर्वकार्यं विचारः, पश्चात्कार्यं सीताहरणम् ॥ ५ ॥

रा० टी०–य इति । ऐश्वर्यम् तज्जनितगर्वमाश्रितो यः पूर्वकार्याणि पश्चात्करोति उत्तरकार्याणि पूर्वंकरोति स नयानयौ न वेद ॥ ५ ॥

गो०टी०–प्रथमं विचार्य पश्चात् कर्म कर्तव्यमिति प्रेक्षावतां कृत्यं, त्वया तु तद्विपरीतं कृतमित्याह—य इति । ऐश्वर्यम् आस्थितः प्राप्तः यः पुमान् पूर्वकार्याणि कार्यारम्भात् पूर्वं कर्तव्यानि मन्त्रणादीनि कुर्यात् । अपरकार्याणि उत्तरकाले विचार्याणि च पूर्वं कुर्यात् सः नयानयौ नीत्यनीती न वेद ॥ ५ ॥

६ ] ति० टी०–तदेव प्रपञ्चयति—देशेति । उचितदेशकालरहितानि विपरीतकालदेशयुक्तानि त्वत्कृतैतत्कर्मवद्दुष्यन्ति दुःखाय भवन्ति । अप्रयतेष्वसावधानेष्वसंस्कृतेष्वग्निषु च हवींषीव ॥ ६ ॥

रा० टी०–देशेति । देशकालविहीनानि अनुचितदेशकालयुक्तानि क्रियमाणानि कर्माणि विपरीतवत् अयोग्यकर्तृकृतानीव दुष्यंति तत्र दृष्टान्तः अप्रयतेषु संस्कारायोग्येषु अतिनीचेषु हवींषीव ॥ ६ ॥

गो० टी०–एवं देशकालानुरोधेन कर्म कर्तव्यमित्युक्तम्, तदननुरोधे दोषमाह–देशेति । देशकालविहीनानि क्रियमाणानि अदेशे अकाले च कृतानि कर्माणि । विपरीतवत् देशकालवैकल्याद्विपरीतकर्माणीव । अप्रयतेषु मन्त्रानध्ययनादिना अपूतेषु अपात्रेषु हवींषीव दुष्यन्ति विफलानि भवन्तीत्यर्थः ॥ ६ ॥

७ ] ति० टी०–अथ यथाकालदेशप्रयुक्तात्सिद्धिमाह—त्रयाणामिति । क्षयवृद्धिस्थानलक्षणानां निश्चयपूर्वं कर्तव्यानां कर्मणां सामादीनां योगं प्रयोगं सचिवैः सह पञ्चधा पञ्चप्रकारं समयं प्रयोगसाधनविचारं कृत्वा यः प्रपद्यते स सम्यक्पथि वर्तते समीचीने नीतिमार्गे वर्तते । तानि पञ्चप्रकारसाधनानि—कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विपत्तिप्रतीकारः, कार्यसिद्धिश्चेति । सम्यगित्यव्ययम् ॥ ७ ॥

रा० टी०–त्रयाणामिति । सचिवैस्सह पञ्चधा पञ्चविधं समयं प्रयोगसाधनविचारं कृत्वा त्रयाणां विचारपूर्वककर्तव्यक्षयवृद्धिस्थानलक्षणानां सामादीनां कर्मणां योगमनुयोगं यः प्रपद्यते स पथि राजमार्गे सम्यग्वर्तते पञ्चविधत्वं तु कर्मारम्भोपाय १ पुरुषद्रव्यसम्पत् २ देशकालविभागः ३ विपत्तिप्रतीकार ४ कार्यसिद्धिभेदेन ॥ ५–७ ॥

गो० टी०–देशकालानुरोधस्य फलमाह—त्रयाणामिति । सचिवैः मन्त्रिभिः सह । समयं निश्चयरूपम् सिद्धान्तं कृत्वा । समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरः । त्रयाणाम् उत्तममध्यमाधमकर्मणाम् । तत्र आत्मोदयपरज्यानिसंभवसमये क्रियमाणं दण्डोपयोगि यानमुत्तमं कर्म । आत्मपरयोः बलसाम्ये क्रियमाणं संधानं मध्यमं कर्म । परोदयात्मज्यानिसमये क्रियमाणं दानपूर्वसमाश्रयणमधमं कर्म तेषां पञ्चधा योगम् । कर्मणामारम्भोपायः । पुरुषद्रव्यसंपत् । देशकालविभागः विनिपातप्रतीकारः । कार्यसिद्धिश्चेत्युक्तैः पञ्चभिर्योगम् यद्वा त्रयाणाम् उत्तममध्यमाधमभावेन त्रिविधानां कर्मणाम् पञ्चधा योगं देशकालात्मद्रव्यप्रयोजनसंबन्धवशात् पञ्चविधं संबन्धम् । यः पश्यति सः सभ्ये साधौ सभ्यः सामाजिके साधौ इति रत्नमाला पथि नीतिमार्गे वर्तते सम्यङ्नीतिफलं प्राप्नोतीत्यर्थः ॥ ७ ॥

८ ] ति० टी०–एवं वर्तमानस्य प्रथमं बुद्धिसिद्धिः फलमित्याह—यथागममिति । यथागमं नीतिशास्त्रमनतिक्रम्य यो राजा सचिवैः सह समयं चिकीर्षति क्षयादिकालोचितसामादिकर्मविचारयुक्तपञ्चप्रकारतत्प्रयोगसाधनसंपत्तिविचारं च कर्तुमिच्छति । तद्यथा—आत्मोपचयपरहानिसमये दण्डोपयोगियानम्, आत्मपरयोर्बलसाम्ये संधानम्, परोपचयात्महानिसमये दानपूर्वं समाश्रयणमिति । बुद्ध्या स्वबुद्ध्या सचिवैः सह सुहृदश्चानुपश्यति । अयं सुहृद्धितवक्ता, अयं प्रभोः सुखमात्रजननेच्छया वदति न सुहृदित्यनुपश्यति कार्यवशेन विचारयति । स बुध्यते कर्तव्याकर्तव्यविवेकबुद्धिं प्राप्नोति ॥ ८ ॥

रा० टी०–यथेति । यो राजा यथागमं नीतिशास्त्रमनति-

---

१ अपरेति गो. पाठः । २ सम्ये इति गो. पाठः । ३ वीति गो. पाठः । ४ सचिवानिति गो. पाठः ।

धर्ममर्थं हि कामं वा सर्वान्वा रक्षसां पते। भजते पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥ ९ ॥
त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते। राजा वा राजमात्रो वा व्यर्थं तस्य बहुश्रुतम् ॥ १० ॥
उपप्रदानं सान्त्वं च भेदं काले च विक्रमम्। योगं च रक्षसां श्रेष्ठ तावुभौ च नयानयौ ॥ ११ ॥
काले धर्मार्थकामान्यः संमन्त्र्य सचिवैः सह। निषेवेतात्मवाँल्लोके न स व्यसनमाप्नुयात् ॥ १२ ॥
हितानुबन्धमालोक्य कुर्यात्कार्यमिहात्मनः। राजा सहार्थतत्त्वज्ञैः सचिवैर्बुद्धिजीविभिः ॥ १३ ॥

क्रम्य समयं क्षयादिकालयोग्यसामादिविचारं प्रकारेण उक्तपञ्चप्रकारप्रयोगसाधनादिविचारं च चिकीर्षति कर्तुमिच्छति बुद्धया युक्तैस्सचिवैस्सह सुहृदोऽनुपश्यति इमे मे सुहृदः इत्यनेकविधमन्त्रकृतपरीक्षया जानाति स बुध्यते राजधर्मं वेत्ति आत्मोपचयरिपुहानिसमये दण्डदानमात्मापरयोर्बलसाम्ये सन्धानं परोपचयात्महानिसमये दानपूर्वं समाश्रयणमित्यादि नीतिशास्त्रे निर्णीतम् ॥ ८ ॥

गो० टी०—यथागममिति। यथागमं नीतिशास्त्रमनतिक्रम्य यो राजा समयं कार्यनिर्णयम् चिकीर्षति सचिवांश्च बुध्यते सचिवैः सहालोचयतीति यावत्। सुहृदश्चानुपश्यति सुहृद्भिः सह विचारयतीति यावत् स सत्पथे पथि वर्तत इति पूर्वेणान्वयः ॥ ८ ॥

९ ] ति० टी०—अथ बुद्धिफलं पुरुषार्थसिद्धिरित्याह—धर्ममिति। हिश्चार्थे। काले तत्र प्रातर्धर्मसेवा, ततोऽपराह्णेऽर्थसेवा, रात्रौ कामसेवेति स्वस्वकाले त्रीणि धर्मादीनि भजते युवराजादिस्तु द्वन्द्वानि वा द्वन्द्वान्येव धर्मकामद्विकान्येव भजते अवान्तरभेदाद्बहुत्वं सेवत इत्यर्थः ॥ ९ ॥

रा० टी०—धर्ममिति। काले यथोचितसमये पुरुषः नीतिनिपुणजनः धर्मादीन् भजते पूर्वाह्णमध्यान्हसायान्हकालेषु क्रमेण धर्मार्थकामान् सेवत इत्यर्थः त्रीणि वा काले त्रिष्वपि कालेषु भजते यथावसरं सेवते द्वन्द्वानि वा भजते तथाहि प्रातर्मध्यान्हविहितौ धर्मार्थौ प्रातस्सेवते मध्यान्हे च सेवते सायं विहितकामं मध्यान्हविहितमर्थं च सायंकाले भजते इति ॥९॥

गो० टी०—धर्ममिति। धर्ममर्थं कामं च प्रत्येकं वा त्रीणि द्वन्द्वानि वा धर्मार्थौ अर्थधर्मौ कामार्थौ वा सर्वान् वा कालेषु विहितेषु प्रातर्मध्याह्नसायाह्नेषु भजेत। अकाले न सेवेतेति भावः। एतदुक्तं भवति। प्रातःकाले धर्मो विहितः तं तदा सेवेत। मध्याह्ने अर्थो विहितः, तं तदा सेवेत। सायंकाले कामो विहितः, तं तदा सेवेतेति। यद्वा प्रातःकाले स्वकालविहितं धर्मं मध्याह्ने विहितमर्थं च सेवेत। मध्याह्ने स्वकालविहितमर्थं प्रातर्विहितं धर्मं च सेवेत। सायंकाले स्वकालविहितं कामं मध्याह्नविहितमर्थं च सेवेत। अथवा सायंकाले स्वविहितं कामं प्रातर्मध्याह्नयोर्विहितौ धर्मार्थौ च सेवेतेति। केवलकामं सर्वकालेष्वपि सेवमानः पुरुषाधम एवेत्यभिसंधिः ॥ ९ ॥

१० ] ति० टी०—अथ धर्मविरुद्धे कामे प्राप्ते धर्म एव सेव्य इत्याह—त्रिष्विति। एतेषु त्रिषु धर्मादिषु सर्वमूलत्वाद्यच्छ्रेष्ठं धर्मरूपं वस्तु तदाप्तेभ्यः श्रुत्वापि नावबुध्यते विरोधे धर्मस्यैवानुष्ठेयत्वं न बुध्यते यो राजा महाराजो राजमात्रं युवराजस्तस्य बहुश्रुतं व्यर्थम् ॥ १० ॥

रा० टी०—परस्परं विरुद्धेषु धर्मादिषु प्राप्तेषु धर्म एव सेव्य इत्याह—त्रिष्विति। एतेषु धर्मादिषु श्रेष्ठं धर्मं श्रुत्वापि यत् यस्मात् हेतोः राजा राजपुत्रो वा नावबुध्यते बुद्ध्या न प्रतिगृह्णाति तत्तस्मात् हेतोः तस्य बहुश्रुतमनेकविषश्रवणं व्यर्थम् १०

गो० टी०—एवं कर्तव्यमुक्त्वा तदकर्तारं निन्दति—त्रिष्विति। एतेषु पूर्वोक्तेषु त्रिषु भजनेषु धर्मार्थकामेषु वा यच्छ्रेष्ठं प्रत्येकभजनम् धर्मो वा तच्छ्रुत्वा यो राजा वा राजमात्रो वा राजसदृशो वा न बुध्यते आचरितुं न जानाति तस्य बहुश्रुतं शास्त्रश्रवणं व्यर्थम्। अनुष्ठानपर्यवसानाभावादिति भावः। एवं सामान्यरूपया अप्रस्तुतप्रशंसया त्रिवर्गेषु श्रेष्ठं धर्मं परित्यज्य जघन्यं काममेवाश्रितस्य ते शास्त्रश्रवणं समुद्रघोषमात्रमासीदिति प्रस्तुतोऽर्थोऽवगम्यते ॥ १० ॥

११-१२ ] ति० टी०—सान्त्वं साम। एवं दानादिचतुष्कम्, योगमुक्तपञ्चविधप्रयोगसाधनसंपादनम्। तावुभौ नयानयौ प्रसिद्धौ। प्रयोगाप्रयोगकालौ धर्मादींश्च काले सचिवैः सह संमन्त्र्यात्मवाञ्जितेन्द्रियो भूत्वा निषेवतेऽनुतिष्ठति स व्यसनं नाप्नुयात् ॥ ११ ॥ १२ ॥

रा० टी०—उपप्रदानमिति। सचिवैस्सह उभौ नयानयौ सम्मन्त्र्य मन्त्रेण निश्चित्य काले यथोचितसमये उपप्रदानादीनि काले धर्मादींश्च यो निषेवेत स लोके। व्यसनं नाप्नुयात्। श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—अकाले काम इवाकाले विक्रमोपि त्याज्य इत्याह—उपप्रदानमित्यादिश्लोकद्वयेन। काले तत्तदुचितकाले उपप्रदानं प्रतिपक्षिणः समीपं गत्वा द्रविणादिप्रदानम् सान्त्वं समीचीनभाषणम् भेदं मित्रादिवर्गस्य द्वैधीकरणम् विक्रमं दण्डं च प्रत्येकं तेषां योगं समवायं च तौ पूर्वोक्तौ नयानयौ तेषां निर्वाहप्रकारान् धर्मार्थकामांश्च सचिवैः संमन्त्र्य काले पूर्वोक्तकाले आत्मवान् वशीकृतमनस्कः यो निषेवेत स लोके व्यसनं नाप्नुयात् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—किं च स एव राजापि भवतीत्याह—हितानुबन्धमिति। य उच्यमानगुणैः सचिवैः सह हितानुबन्धं शुभमुदर्कफलमालोक्य विचार्यात्मनः कार्यं कुर्यात्स राजा भवतीत्यन्वयः ॥ १३ ॥

१ चेति गो. पाठः। २ भजेतेति गो. पाठः। ३ वेति गो. पाठः। ४ कार्याकार्यमिति गो. पाठः। ५ स हि जीवति इति गो. पाठः।

अनभिज्ञाय शास्त्रार्थान्पुरुषाः पशुबुद्धयः । प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रिष्वभ्यन्तरीकृताः॥ १४॥
अशास्त्रविदुषां तेषां कार्यं नाभिहितं वचः । अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छताम् ॥ १५ ॥
अहितं च हिताकारं धार्ष्ट्याज्जल्पन्ति ये नराः । अवश्यं मन्त्रबाह्यास्ते कर्तव्याः कृत्यदूषकाः ॥ १६ ॥
विनाशयन्तो भर्तारं सहिताः शत्रुभिर्बुधैः । विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥ १७ ॥
तान्भर्ता मित्रसंकाशानमित्रान्मन्त्रनिर्णये । व्यवहारेण जानीयात्सचिवानुपसंहितान् ॥ १८ ॥

रा० टी०–हितेति । बुद्धिरेव जीवो जीवनं तद्वद्भिः अत एव अर्थतत्त्वज्ञैस्सचिवैः आत्मनो हितानुबन्धं हितप्रवृद्धिमालोक्य विचार्य राजा कार्यं कुर्यात् ॥ १३ ॥

गो० टी०–हितेति । अत्र कार्यमित्यध्याहारः निषेवेतेत्यनुषङ्गः यो राजा अर्थतत्त्वज्ञैः सचिवैः सह हितानुबन्धं हितोदर्कम् आत्मनः कार्याकार्यं कर्तव्याकर्तव्यम् आलोच्य निश्चित्य कार्यमेव निषेवेत सः इह लोके जीवतीत्यर्थः हीत्यनेनायमर्थो लोकप्रसिद्ध इत्यवगम्यते । हितानुबन्धकार्याकार्यानालोचनात्त्वेदं व्यसनमापन्नमिति भावः॥ १३ ॥

१४ ] ति० टी०–अथोत्तममन्त्रिविभीषणादिमतमपहाय दुर्मन्त्रिभिर्मन्त्रणमूलः सर्वानर्थ इत्याह—अनभिज्ञायेति । प्रागल्भ्याच्छब्दरचनामात्रसामर्थ्यात् ॥ १४ ॥

रा० टी०–अनभिज्ञायेति । मन्त्रिषु अभ्यंतरीकृताः कथंचित् मध्यं प्रापिताः पशुबुद्धयः पुरुषाः शास्त्रार्थान् अनभिज्ञाय प्रागल्भ्यात् हेतोर्ये वक्तुमिच्छन्ति तेषामर्थशास्त्रानभिज्ञानामत एव अशास्त्रविदुषां शास्त्रोक्तभिन्नज्ञातॄणामभिहितं वचो न कार्यम् श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०–एवं सामान्येन राजानमधिक्षिप्य मन्त्रिणोऽप्यधिक्षिपति–अनभिज्ञायेति । शास्त्रार्थान् नीतिशास्त्रार्थान् अनभिज्ञाय गुरुमुखादश्रुत्वा वेषेण पुरुषाः पशुबुद्धयः आहारनिद्रादिमात्राभिज्ञाः भ्रान्तेन राज्ञा मन्त्रेषु राजकार्यविचारेषु अभ्यन्तरीकृता मन्त्रयितृत्वेन वृताः सन्तः प्रागल्भ्यात् ऊहापोहौ विना केवलधार्ष्ट्यात् । वक्तुमिच्छन्ति । नतु सम्यक् संगतं निश्चित्य वदन्तीत्यर्थः ॥ १४ ॥

१५ ] ति० टी०–अशास्त्रविदुषामित्यस्यैव व्याख्या—अर्थशास्त्रानभिज्ञानामिति । अथापि विपुलां श्रियं केवलं हठादेवेच्छतां वचनं न कार्यमित्यन्वयः ॥ १५॥

गो० टी०–अशास्त्रेति । शास्त्रानभिज्ञानां तेषां मन्त्रिणाम् अहितं वचः अर्थशास्त्रानभिज्ञानाम् अथापि विपुलां श्रियमिच्छतां राज्ञां न कार्यम् । राजभिस्तदुक्तप्रकारो नानुष्ठेय इत्यर्थः ॥ १५ ॥

१६ ] ति० टी०–राजभिर्मन्त्रकाले दुर्मन्त्रिनिरासः सर्वथा कार्य इत्याह—अहितं चेति । धार्ष्ट्यात्साहसाये जल्पन्ति ते मन्त्रबाह्या अवश्यं कर्तव्याः ॥ १६ ॥

रा० टी०–अहितमिति । धार्ष्ट्याद्धेतोः अहितं वचो हिताकारं ये जल्पन्ति ते कृत्यदूषकाः नराः अवश्यं मंत्रबाह्याः कर्तव्याः ॥ १६ ॥

गो० टी०–न केवलं तद्वचनाश्रवणं, मन्त्रेषु बहिष्कार्याश्च इत्याह–अहितमिति । वस्तुतः अहितं हिताकारं हितमिवापाततः प्रतीयमानमर्थम् धार्ष्ट्यात् शास्त्रज्ञानं विना केवलप्रागल्भ्यात् ये जल्पन्ति अक्रमेण वदन्ति कृत्यदूषणाः कार्यदूषकास्ते अवेक्ष्य पूर्वमेव परीक्ष्य मन्त्रबाह्याः मन्त्रबहिर्भूताः कर्तव्याः ॥ १६ ॥

१७ ] ति० टी०–विनाशयन्त इति । केचन दुर्मन्त्रिणो भर्तारं त्वां नाशयन्तः हेतौ शता तत्र नाशनिमित्तं विपरीतानि कृत्यानि कारयन्ति । केचित्सुमन्त्रिणो दुर्मन्त्रफलं तत्र नाशं पश्यन्तो बुधैः सर्वज्ञैस्तव शत्रुभिः सहिताः । स्वरक्षणं कुर्वन्तीति शेषः ॥ १७ ॥

रा० टी०–विनाशयन्त इति । इह लङ्कायाम् बुधैश्शत्रुभिः सहिताः तद्वशं प्राप्ता इत्यर्थः मंत्रिणो भर्तारं विनाशयन्तो विनाशयितुं विपरीतानि कृत्यानि कारयन्ति किंच शत्रुभिः शत्रुत्वैः सहिता मन्त्रिणः बुधैरपि भवद्भिर्विपरीतानि कारयन्ति ॥ १७ ॥

गो० टी०–न केवलमहितवचनं, विपरीतं च कुर्वन्तीत्याह–विनाशयन्त इत्यादि । मन्त्रिणः दुर्मन्त्रिणः । बुधैः उपायज्ञैः शत्रुभिः सहिताः प्रेरिताः विनाशयन्तः विनाशार्थम् इह प्रयोजनविषये विपरीतानि विपरीतफलकानि कृत्यानि भर्तारं कारयन्ति ॥ १७ ॥

१८ ] ति० टी०–सुमन्त्रित्वदुर्मन्त्रित्वनिर्णयः कथं तत्राह–तानिति । मन्त्रनिर्णये चिकीर्षिते तान्मित्रसंकाशानमित्रानुपसंहितानुत्कोचादिना शत्रुवशीकृतान्सचिवसंकाशान्व्यवहारेण तत्तन्मन्त्रजार्थक्रियालक्षणव्यवहारेण जानीयात् ॥ १८ ॥

रा० टी०–तानिति । अनुपसंहितान् उत्कोचादिना रिपुवशं प्राप्तान् अत एव मित्रसंकाशान् मित्रसदृशान् अमित्रान् सचिवान् मंत्रनिर्णये व्यवहारेण तदाचरणेन भर्ता राजा जानीयात् एतेन तान्निस्सारयेति ध्वनितम् ॥ १८ ॥

गो० टी०–दुर्मन्त्रित्वनिर्णयोपायमाह–तानिति । उपसंहितानुपजापितान् उत्कोचप्रदानादिना शत्रुभिर्भेदं प्रापितान् मित्रसंकाशान् मित्रवद्भावयतः कार्यतोऽमित्रान् सचिवान् व्यवहारेण व्यामिश्रभाषणेन जानीयात् ॥ १८ ॥

१ मन्त्रेष्विति गो. पाठः । २ न कार्यमहितमिति गो. पाठः । ३ अवेक्ष्येति गो. पाठः । ४ दूषणा इति गो. पाठः ।

चपलस्येह कृत्यानि सहसानुप्रधावतः । छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ १९ ॥
यो हि शत्रुमवज्ञाय आत्मानं नाभिरक्षति । अवाप्नोति हि सोऽनर्थान्स्थानाच्च व्यवरोप्यते ॥२०॥
यदुक्तमिह ते पूर्वं प्रियया मेऽनुजेन च । तदेव नो हितं वाक्यं यथेच्छसि तथा कुरु ॥२१॥
तत्तु श्रुत्वा दशग्रीवः कुम्भकर्णस्य भाषितम् । भ्रुकुटिं चैव संचक्रे क्रुद्धश्चैनमभाषत ॥ २२ ॥
मान्यो गुरुरिवाचार्यः किं मां त्वमनुशाससे । किमेवं वाक्श्रमं कृत्वा यद्युक्तं तद्विधीयताम् ॥ २३ ॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्याश्रयेण वा । नाभिपन्नमिदानीं यद्व्यर्था तस्य पुनः कथा ॥२४॥

१९ ] ति० टी०-चपलस्यापातसुखजनकवचनसंतुष्टस्य सहसाविचारेण कृत्यान्यनुप्रधावतः कुर्वतोऽन्ये शत्रवः क्षिप्रं खं रन्ध्रं प्रपद्यन्ते । द्विजाः पक्षिणः स्कन्दशक्तिविदारितक्रौञ्चस्य क्रौञ्चाख्याचलस्य खं रन्ध्रमिव ॥ १९ ॥

रा० टी०-तत्र हेतुमाह—चपलस्येति । चपलस्य चंचलचित्तस्य अत एव सहसा अविचारेण कृत्यानि अनुप्रधावतः कुर्वतः राज्ञः खं रन्ध्रं अन्ये रिपवः क्षिप्रं प्रपद्यन्ते तत्र दृष्टान्तः क्रौञ्चस्य तदभिधनिच्छिद्रपर्वतस्य खं स्कन्दशक्तिकृतछिद्रं द्विजाः पक्षिण इव ॥ १९ ॥

गो० टी०-स्वयमसमर्थो विपरीतबुद्धयो मन्त्रिणः किं करिष्यन्तीत्यत्राह—चपलस्येति । इह प्रस्तुते कार्ये विषये कृत्यानि उपसंहितमन्त्रिप्रेरितानि कार्याणि सहसा अचिरेण अनुप्रधावतः दुर्मन्त्रिषु मन्त्रित्वमनुसरतः चपलस्य झटिति कार्यं प्रवर्तमानस्य राज्ञः छिद्रं रन्ध्रम् अन्ये शत्रवः क्षिप्रं प्रपद्यन्ते स्वीकुर्वन्ति । कथमिव । द्विजाः पक्षिणः दन्तविप्राण्डजा द्विजा इत्यमरः । क्रौञ्चस्य स्कन्दशक्तिविदारितस्य क्रौञ्चाख्यपर्वतस्य खमिव । पण्डिताः शत्रवः उत्कोचप्रदानादिना वशीकृतैर्मन्त्रिभिः कुत्रचिच्चापलकार्ये राजानं प्रापय्य तदेव रन्ध्रमासाद्य अन्तः प्रविशन्तीति भावः ॥ १९ ॥

२० ] ति० टी०-अवज्ञायावमत्य । स्थानाद्राजपदव्याः । व्यवरोप्यते निवर्त्यते ॥ २० ॥

रा० टी०-य इति । शत्रुमवज्ञाय अपरिगणय्य आत्मानं यो नाभिरक्षति सः अनर्थानवाप्नोति अत एव स्थानात् राज्यपदात् व्यवरोप्यते भ्रश्यते ॥ २० ॥

गो० टी०-एवं कपटवृत्तेः शत्रोः स्वरूपापरिज्ञाने राजा विपद्यत इत्याह—यो हीति । यो हि राजा शत्रुं वञ्चनपरम् अविज्ञाय मन्त्रव्यवहारादिना अविज्ञाय आत्मानं च नाभिरक्षति दुर्मन्त्रिनिरासादिना नात्मानं प्रकृतौ स्थापयति । सोऽनर्थानवाप्नोति स्थानात् राजासनात् व्यवरोप्यते प्रच्याव्यते । इयता ग्रन्थेन तव कामव्यसनात् कुमन्त्रिवचनाश्चेयमापदिति दर्शितम् ॥ २० ॥ २१ ॥

२१-२२ ] ति० टी०-प्रियया मन्दोदर्या । मेऽनुजो विभीषणः । समानार्थे च तयोर्वाक्ये इति मन्दोदरीवाक्यं न पृथगुक्तम् । स्वमतिसदृशमतित्वान्मेऽनुज इत्युक्तम् ॥२१॥२२॥

रा० टी०-यदिति । प्रियया मन्दोदर्या मेऽनुजेन विभीषणेन च ते तुभ्यं यत् पूर्वमुक्तं तदेव वाक्यं नोऽस्माकं हितं ननु तन्न मह्यं रोचते इत्यत आह यथा येन प्रकारेण इच्छति तथा कुरु ॥ २१ ॥

रा० टी०-तदिति । दशग्रीवः कुंभकर्णस्य भाषितं श्रुत्वा भ्रुकुटीं भ्रुवोः कौटिल्यं संचक्रे एनं कुंभकर्णमभाषत च ॥२२॥

गो० टी०-तत्त्विति । क्रुद्धः सन् भ्रुकुटिं ऊर्ध्वीकृतभ्रुवं चक्रे । एनमभाषत चेत्यन्वयः ॥ २२ ॥

२३ ] ति० टी०-अहं तव गुरुरिव निषेककर्तेवाचार्य इव द्वितीयजन्मद इव च मान्यः । एवं वाक्श्रमं कृत्वा किं फलम्, न किमपि । अतोऽत्र काले यद्युक्तं तद्विधीयताम् ॥ २३ ॥

रा० टी०-तद्भाषणाकारमाह—मान्य इत्यादिभिः । मान्यो गुरुर्जनकः आचार्यः विद्याप्रद इव च त्वं किं किमर्थमनुशाससि अनुशासनयोग्यता त्वयि नास्तीत्यर्थः त्वदुक्तं न करिष्यामीति तात्पर्यम् अतः एवं च वाक्श्रमं कृत्वा किं फलं न किमपीत्यर्थः अतो यत् युक्तमस्मिन् काले तव योग्यं तद्विधीयताम् ॥ २३ ॥

गो० टी०-मान्य इति । हे कुम्भकर्ण त्वं मान्यः बहुमानार्हः आचार्यः आचारप्रवर्तकः गुरुरिव मां मान्यमाचार्यं गुरुम् अनुशाससि शिक्षसे आर्षः शप् वैपरीत्यमेवाचरसीत्यर्थः । एवं वचनं तवायुक्तमिति भावः । अफलं चेदं वचनमित्याह—किमेवमिति । एवम् उक्तप्रकारेण वाक्श्रमं कृत्वा प्रयासैकफलां वाचमुक्त्वेत्यर्थः किं फलम् किमपि प्रयोजनं नास्तीत्यर्थः । नीतिकालस्यातीतत्वादिति भावः । काले नयमार्गातीतकाले यद्युक्तं पराक्रमरूपम् तत् विधीयतां क्रियताम् ॥ २३ ॥

२४ ] ति० टी०-किं च त्वदुक्तं सत्यमेव । तथापि गते जले सेतुबन्धवदेषा कथा व्यर्थेत्यनुष्ठेयमनुतिष्ठेत्याह—विभ्रमादिति । विभ्रमो विपरीतज्ञानम्, चित्तमोहोऽज्ञानम्, तदादिदोषेण युष्मदुक्तं हितं तत्काले नाभिपन्नं नाङ्गीकृतम् । इदानीमतीतकालस्य पुनः कथा व्यर्थेत्यर्थः ॥ २४ ॥

रा० टी०-विभ्रमादिति । विभ्रमात् विपर्ययज्ञानात् चित्तमोहादविवेकाद्वा बलवीर्याश्रयेण वा यत् नाभिपन्नं स्वीकृतं तस्येदानीं पुनः कथा व्यर्था ॥ २४ ॥

१ छिद्रमिति गो. पाठः । २ अभोति गो. पाठ । ३ नात्मानमभीति गो. पाठः । ४ क्रियतामनुजेनेति गो. पाठः । ५ यदिच्छसि च तदिति गो. पाठः । ६ काले युक्तमिति गो. पाठः । ७ व्यर्था इति गो. पाठः । ८ कथा: इति गो. पाठः ।

अस्मिन्काले तु यद्युक्तं तदिदानीं विचिन्त्यताम् । [ गतं तु नानुशोचन्ति गतं तु गतमेव हि ]
ममापनयजं दुःखं विक्रमेण समीकुरु ॥ ॥ २५ ॥
यदि खल्वस्ति मे स्नेहो विक्रमं वाधिगच्छसि । यदि कार्यं ममैतत्ते हृदि कार्यतमं मतम् ॥ २६ ॥
स सुहृद्यो विपन्नार्थं दीनमभ्युपपद्यते । स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते ॥ २७ ॥
तमथैवं ब्रुवाणं स वचनं धीरदारुणम् । रुष्टोऽयमिति विज्ञाय शनैः श्लक्ष्णमुवाच ह ॥२८॥
अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् । कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥२९॥
शृणु राजन्नवहितो मम वाक्यमरिंदम । अलं राक्षसराजेन्द्र संतापमुपपद्य ते ॥
रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि ॥ ॥ ३० ॥

गो० टी०-पूर्वमनालोच्य कृतस्य निमित्तमाह-विभ्रमादिति । विभ्रमात् अनीतौ नीतिबुद्ध्या चित्तमोहात् ज्ञानात् उदयात् बलवीर्याश्रयेण बलवीर्ययोराश्रयणेन । गर्वेणेति यावत् । यत्कार्यं नाभिपन्नं न कृतम् तस्य पुनः कथाः पुनः पुनः कथनानि । इदानीमतीतकाले व्यर्थाः ॥ २४ ॥

२५ ] ति० टी०-यदेवमतः—अस्मिन्निति । अपनयजमनीतिजम् । विक्रमेण स्वीयेन ॥ २५ ॥

रा० टी०-अस्मिन्निति । अस्मिन् काले यद्युक्तं तदिदानीमेव विचिंत्यताम् अत एव यदि मे स्नेहो मद्विषयकप्रीतिरस्ति त्वयीति शेषः यदि च विक्रममभिगच्छसि विक्रमवानसीत्यर्थः यदि च एतत् प्रसिद्धं मम कार्यं ते हृदिकार्यतमं मतमिष्टं तदा मम अपनयजं दुर्नीतिजन्यं दुःखं समीकुरु मोचय । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०-अस्मिन्निति । इदानीं सद्यः । गतं तु गतमेव । न तत्पुनरायास्यतीति भावः ॥ २५ ॥

२६ ] ति० टी०-विक्रमं वेत्यस्य स्वस्मिन्नित्यादिः । एतत्कार्यं युद्धाद्यनुष्ठानरूपं यदि कार्यतममतिशयेनानुष्ठातुं योग्यं कार्यमिति तव संमतं तदा युद्धं कुर्विति संबन्धः ॥ २६ ॥

गो० टी०-ममेत्यादि । सार्धश्लोक एकान्वयः दोषं वैषम्यम् । शत्रुभिराक्रमणमिति यावत् । समीकुरु समतया कुरु । वैषम्यसमता नाम वैषम्यनाश एव । खलु वाक्यालङ्कारे । मे मयि यदि स्नेहोऽस्ति स्वकीयं विक्रमं यदि वा अवगच्छसि । स्वपराक्रममज्ञात्वैव नीत्युपन्यासस्त्वया कृत इति भावः । एतत् युद्धरूपं कार्यं ते हृदि कार्यतमम् अवश्यकर्तव्यम् मतम् इष्टम् अवश्यकर्तव्यत्वेन मन्यसे चेदित्यर्थः । तदा समीकुर्वित्यन्वयः ॥ २६ ॥

२७ ] ति० टी०-किं च यदि सुहृत्त्वं तदाऽवश्यमेवेदं कार्यमित्याह—स इति । विपन्नार्थं विनष्टसर्वकार्यम्, अतएव दीनम् । अभ्युपपद्यतेऽनुगृह्णाति स एव सुहृत् । बन्धुत्वेऽप्येतदेव न्याय्यमित्याह—स इति । अपनीतेष्वनीतिमार्गस्थेषु ॥ २७ ॥

रा० टी०-स इति । विपन्नो विनष्टो अर्थो यस्य अत एव दीनं योऽभ्युपपद्यते तत्साहाय्यकर्तृत्वेन प्राप्नोति स सुहृत् योपनीतेषु अपनीतिजनितप्राप्तदुःखेषु साहाऽय्यायोपकल्पते स बन्धुः ॥ २७ ॥

गो० टी०-इदानीं साहाय्याकरणे तव बन्धुत्वमेव भज्येतेति सदृष्टान्तमाह-स इति । विपन्नार्थं विपन्नः शङ्कितापायः अर्थः प्रयोजनं यस्य तम् दीनं मलिनमनस्कम् पुरुषम् यः सुहृत् अभ्यवपद्यते अभितः प्राप्नोति सदा सन्निधत्त इत्यर्थः स एव सुहृत् । यो बन्धुः अपनीतेषु विपमितनीतिषु पुरुषेषु सहाय्यायोपकल्पते साहाय्याय प्रभवति स एव बन्धुः । सर्वं वाक्यं सावधारणमिति न्यायात् ॥ २७ ॥

२८-२९ ] ति० टी०-धीरदारुणम् । इच्छा चेत्कुर्वित्युक्तेर्धीरत्वम् । स सुहृद्य इत्युक्तेर्दारुणत्वम् ॥ २८ ॥ २९ ॥

रा० टी०-तमिति । धीरदारुणं यद्युक्तं तद्विधीयतामित्युक्ते धीरत्वेन मान्यो गुरुरिवाचार्य इत्याद्युक्तेर्दारुणत्वेन च प्रतीयमानं वचनमेवं ब्रुवाणं रावणं रुष्टोयमिति विज्ञाय कुम्भकर्णः श्लक्ष्णं मृदु वचनमुवाच ॥ २८ ॥

गो० टी०-तमिति । धीरदारुणम् । यदि वा कार्यमित्युक्त्या धीरम् सुहृदित्याद्युक्त्या दारुणं निष्ठुरम् । रुष्टोयमिति विज्ञाय । भ्रुकुटिबन्धनेनानुमायेत्यर्थः ॥ २८ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-अतीवेति । कुंभकर्णः भ्रातरमतीव क्षुभितेन्द्रियं समालक्ष्य परिसान्त्वयन् सन् बभाषे ॥ २९

गो० टी०-उक्तमेवार्थं प्रपञ्चयन्नाह-अतीवेति । अतीव क्षुभितेन्द्रियमित्यनेन रुष्टपदं व्याख्यातम् । परिसान्त्वयन्नित्यनेन श्लक्ष्णपदम् ॥ २९ ॥

३० ] ति० टी०-संतापमुपपद्य प्राप्यालम् । तापो न कार्य इत्यर्थः ॥ ३० ॥

रा० टी०-तदाकारमाह—शृण्विति । हे राजन् अवहितः एकाग्रचित्तः सन् मम वाक्यं शृणु अहं पृथक् तत्स्वरूपमाह अलमिति । संतापं रोषमुपपद्य प्राप्य ते अलं न कार्य इत्यर्थः अतः संतापं रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि ॥ ३० ॥

गो० टी०-अलमिति । ते त्वया संतापम् उपपद्य प्राप्य

१ विधीयतामिति गो. पाठः । २ एतदर्धमधिकं गो. पुस्तके । ३ दोषमिति गो. पाठः । ४ अवेति गो. पाठः । ५ मा कार्यमेतदिति गो. पाठः । ६ अभ्यवेति गो. पाठः । ७ खिति गो. पाठः । ८ इदमर्धं गो. पुस्तके नास्ति ।

नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव । तमहं नाशयिष्यामि यत्कृते परितप्यते ॥ ३१ ॥
अवश्यं च हितं वाच्यं सर्वावस्थां गतं मया । बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ॥ ३२ ॥
सदृशं यच्च कालेऽस्मिन्कर्तुं स्नेहेन बन्धुना । शत्रूणां कदनं पश्य क्रियमाणं मया रणे ॥ ३३ ॥
अद्य पश्य महाबाहो मया समरमूर्धनि । हते रामे सह भ्रात्रा द्रवन्तीं हरिवाहिनीम् ॥ ३४ ॥
अद्य रामस्य तद्दृष्ट्वा मया नीतं रणाच्छिरः । सुखी भव महाबाहो सीता भवतु दुःखिता ॥ ३५ ॥
अद्य रामस्य पश्यन्तु निधनं सुमहत्प्रियम् । लङ्कायां राक्षसाः सर्वे ये ते निहतबान्धवाः ॥ ३६ ॥
अद्य शोकपरीतानां स्वबन्धुवधशोचिनाम् । शत्रोर्युधि विनाशेन करोम्यश्रुप्रमार्जनम् ॥ ३७ ॥
अद्य पर्वतसंकाशंससूर्यमिव तोयदम् । विकीर्णं पश्य समरे सुग्रीवं प्लवगेश्वरम् ॥ ३८ ॥
कथं च राक्षसैरेभिर्मया च परिसान्त्वितः । जिघांसुभिर्दाशरथिं व्यथसे त्वं सदानघ ॥ ३९ ॥

अलम् । संतापो न कर्तव्य इत्यर्थः । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वा प्रत्ययः । स्वस्थो भव स्वर्गस्थो भवेत्यर्थान्तरम् ॥ ३० ॥

३१ ] ति० टी०–एतद्दैन्यं यत्कृते यन्निमित्तम् ॥ ३१ ॥

रा० टी०–नेति । यत्कृते त्वं परितप्यसे तमहं नाशयिष्यामि अतो मयि जीवति सति एतत् दुःखं मनसि न कर्त्तव्यम्॥३१॥

गो० टी०–नैतदिति । नैतन्मनसि कर्तव्यम् विभ्रमाच्चित्तमोहाद्धेतोरयुक्तं मनसि न कर्तव्यमित्यर्थः । यत्कृते यस्य रामस्य कृते अर्थान्तरं तु मयि जीवति सति एतन्मनसि न कर्तव्यम्। यद्यहं जीविष्यामि तदा एवं न कर्तव्यम् । अहमेव न जीविष्यामीत्यर्थः । यत्कृते यस्य मम कृते परितप्यसे अयं सुखेन जीवन् मत्कार्यं न करोतीति परितप्तोसि । तं मां रामेण नाशयिष्यामीति ॥ ३१ ॥

३२ ] ति० टी०–सर्वावस्थां सुखदुःखादिसर्वावस्थां गतं प्राप्तम् । त्वां प्रतीति शेषः । 'विष्णोरभक्तिकावस्था सर्वावस्थति गीयते' इत्यन्ये ॥ ३२ ॥

रा० टी०–अवश्यमिति । बन्धुभावाद्बन्धुत्वात्स्नेहाद्धेतोः सर्वावस्थाद्य ते हितं मयाऽवश्यं वाच्यम् अत एव मया अभिहितं कथितम् ॥ ३२ ॥

गो० टी०–तर्हि किमर्थमेवमुक्तमित्यत्राह–अवश्यमित्यादि । बन्धुभावात् सामान्यस्नेहात् विशेषतो भ्रातृस्नेहाच्च। सर्वावस्थम् रोषहर्षादिसर्वावस्थावस्थितमित्यर्थः अवश्यं वाच्यं ते हितं मयाभिहितम् ॥ ३२ ॥

३३–३८ ] ति० टी०–यन्मम पराक्रमस्य सदृशमस्मिन्काले च स्निग्धेन बन्धुना कर्तुं योग्यं तन्मया क्रियमाणं शत्रूणां कदनं पश्य ॥ ३३–३८ ॥

रा० टी०–सदृशमिति । स्निग्धेन बन्धुना अस्मिन्काले कर्तुं यत् सदृशं योग्यम् तत् मया क्रियमाणं शत्रूणां कदनं पश्य॥३३॥

गो० टी०–सदृशमिति । अस्मिन् काले आपत्काले स्निग्धेन बन्धुना यत्कर्तुं सदृशं युक्तम् तादृशं कदनं मया क्रियमाणं पश्य । अत्र शत्रुकर्तृकं कदनमित्यर्थान्तरम् ॥३३॥

रा० टी०–अद्येति । मया रामे हते सति द्रवंतीं पलायमानां हरिवाहिनीं पश्य ॥ ३४ ॥

गो० टी०–अद्येति । अर्थान्तरम् । हे पर ज्येष्ठ, मया सह समरमूर्धनि हते भग्ने सति रामे रामनिमित्तम् द्रवन्तीम् आगच्छन्तीम् वाहिनीं पश्येति ॥ ३४ ॥

रा० टी०–अद्येति । मया नीतं रामस्य शिरो दृष्ट्वा त्वं सुखी भव सीता तु दुःखिता भवतु ॥ ३५ ॥

गो० टी०–अद्य रामस्येति । अर्थान्तरम् । मया सह रामस्य रणाद्धेतोः आनीतं दुरे क्षिप्तम् । शिरः मच्छिरः । दृष्ट्वा सुखी भव । तदानीं मयि रोषत्यागादिति भावः । सीता दुःखिता भवतु । सर्वलोकमातृत्वादिति भावः ॥ ३५ ॥

रा० टी०–अद्येति । निहतबान्धवाः ये राक्षसास्ते रामस्य निधनं पश्यन्तु ॥ ३६ ॥

गो० टी०–अद्य रामस्य पश्यन्त्विति । अर्थान्तरम् । रामस्येति कर्तरि षष्ठी । रामकर्तृकं मन्निधनम् ये निहतबान्धवाः ते राक्षसाः पश्यन्तु । न दुःखं पञ्चभिः सह इति न्यायादिति भावः उत्तरश्लोकेप्येवमेव योजना ॥ ३६ ॥ ३७ ॥

रा० टी०–अद्येति । स्वबन्धुवधशोचिनामत एव शोकपरीतानां राक्षसानां शत्रोर्विनाशेन अश्रुप्रमार्जनं करोमि ॥ ३७ ॥

रा० टी०–अद्येति । ससूर्यं तोयदमिव रुधिरारुणमित्यर्थः सुग्रीवं विकीर्णं पश्य ॥ ३८ ॥

गो० टी०–अद्येति । ससूर्यमिव तोयदमिति । रुधिराक्ततया ससूर्यप्रकाशं मेघमिव स्थितमित्यर्थः ॥ ३८ ॥

३९ ] ति० टी०–दाशरथिं जिघांसुभिरस्माभिः परिसान्त्वितोऽपि कथं व्यथसे ॥ ३९ ॥

रा० टी०–कथमिति । दाशरथिं जिघांसुभिः मया राक्षसैश्च परिसान्त्वितस्त्वं कथं व्यथसे ॥ ३९ ॥

गो० टी०–कथमिति । ससैन्यं दाशरथिं जिघांसुभिः एभिः राक्षसैः मया च परिरक्षितस्त्वं कथं रामेण वध्यस इति योजना । अर्थान्तरम् । जिघांसुभिः हननेच्छामात्रवद्भिः ।

१ स्विति गो. पाठः । २ सर्वावस्थं मया तवेति गो. सर्वावस्थासु ते मयेति रा. पाठः । ३ यत्त्विति गो. पाठः । ४ परेति गो. पाठः । ५ कारण[illegible] गो. पाठः । ६ उत्तममिति गो. पाठः । ७ स्वामिति गो. पाठः । ८ रक्षित इति गो. पाठः । ९ वध्यस इति गो. पाठः । १० इहेति गो. पाठः ।

मां निहत्य किल त्वां हि निहनिष्यति राघवः । नाहमात्मनि संतापं गच्छेयं राक्षसाधिप ॥ ४० ॥
कामं त्विदानीमपि मां व्यादिश त्वं परंतप । न परः प्रेक्षणीयस्ते युद्धायातुलविक्रम ॥ ४१ ॥
अहमुत्सादयिष्यामि शत्रूंस्तव महाबलान् । यदि शक्रो यदि यमो यदि पावकमारुतौ ॥ ४२ ॥
तानहं योधयिष्यामि कुबेरवरुणावपि । गिरिमात्रशरीरस्य शितशूलधरस्य मे ॥ ४३ ॥
नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाद्वै पुरंदरः । अथ वा त्यक्तशस्त्रस्य मृद्गतस्तरसा रिपून् ॥ ४४ ॥
न मे प्रतिमुखः कश्चित्स्थातुं शक्तो जिजीविषुः । नैव शक्त्या न गदया नासिना निशितैः शरैः ॥ ४५ ॥
हस्ताभ्यामेव संरभ्य हनिष्यामि सवज्रिणम् । यदि मे मुष्टिवेगं स राघवोऽद्य सहिष्यति ॥ ४६ ॥
ततः पास्यन्ति बाणौघा रुधिरं राघवस्य मे । चिन्तया तप्यसे राजन्किमर्थं मयि तिष्ठति ॥ ४७ ॥
सोऽहं शत्रुविनाशाय तव निर्यातुमुद्यतः । मुञ्च रामाद्भयं घोरं निहनिष्यामि संयुगे ॥ ४८ ॥
राघवं लक्ष्मणं चैव सुग्रीवं च महाबलम् । हनूमन्तं च रक्षोघ्नं येन लङ्का प्रदीपिता ॥ ४९ ॥
हरींश्च भक्षयिष्यामि संयुगे समुपस्थिते । असाधारणमिच्छामि तव दातुं महद्यशः ॥ ५० ॥

---

पराक्रमासमर्थैरित्यर्थः । कथं परिरक्षितः । प्रत्युत वध्यस इति । अत्र विभीषणः क्व गत इति कुम्भकर्णस्य प्रश्नः मया धिक्कृतो गत इति रावणस्योत्तरं च क्वचित् कोशे दृश्यते तत्पूर्वापरविरुद्धम् ॥ ३९ ॥

४०–४५ ] ति० टी०–व्यथाहेतुर्नास्तीत्याह—मामिति । मां निहत्य तदनन्तरं किल त्वां निहनिष्यति । तत्र ममैव हननं नेनाशक्यम्, अतएवाह—नात्मनि स्वविषये संतापं रामविषयं भयं गच्छेयम् ॥ ४०–४९ ॥

रा० टी०–ननु स्वजयस्यानिश्चयत्वेन कथमेवं ब्रूषे इत्यत आह—मामिति । राघवो मां निहत्य त्वां निहनिष्यति अहं तु आत्मनि स्वमरणनिमित्तं सन्तापं न गच्छेयम् ॥ ४० ॥

गो० टी०–अथेति । अत्र अथशब्दः प्रक्रमान्तरे । मयि हते सति हि पश्चात्त्वां न्यो हन्ति हनिष्यति । अहं च आत्मनि स्वस्मिन् संतापं शत्रु... न कदाचिदपि गच्छेयम् । न केनचिद्धन्तुं शक्य इत्यर्थः । अतः कुतस्ते भयमिति भावः । अर्थान्तरम् । अहमात्मनि विषये संतापम् न गच्छेयं न गच्छामि । "व्यत्ययो बहुलम्" इति लकारव्यत्ययः । मन्निधनं नानुशोचामीत्यर्थः । किं तु मयि हते सति । अथ राघवस्त्वां हन्ति हनिष्यतीति संतापं गच्छामीति ॥ ४० ॥

रा० टी०–काममिति । हे परंतप युद्धाय मां कामं यथेच्छं व्यादिश आज्ञापय परोऽन्यो न प्रेक्षणीयः मत्साहाय्यार्थं नान्वेषणीयः ॥ ४१ ॥

गो० टी०–काममिति । इदानीमपि इदानीमेव युद्धाय व्यादिश । ते त्वया परः अन्यः न प्रेषणीयः ॥ ४१ ॥

रा० टी०–अहमिति । यदि शक्राद्यन्यतमः स्यात्तर्हि तान् अहं योधयिष्यामि अतस्तव शत्रूनुत्सादयिष्यामि । सार्धश्लोक एकान्वयी ॥ ४२ ॥ ४३ ॥

रा० टी०–गिरीति । शितं तीक्ष्णं शूलं धरति तस्य नर्दतो मे पुरंदरो बिभीयात् ॥ ४४ ॥

गो० टी०–अहमित्यर्धमेकं वाक्यम् ॥ ४२ ॥

गो० टी०–उक्तं विवृणोति–यदीति ॥ ४३ ॥ ४४ ॥

रा० टी०–ननु रामादिभिश्शस्त्राणि छिद्यन्त इति तैस्सह कथं तव युद्धं भविष्यतीत्यत आह–अथवेति । रिपून् मृद्गतो विनाशयतस्त्यक्तशस्त्रस्यापि मे जिजीविषुः कश्चित् प्रतिमुखस्सम्मुखः सन् स्थातुं न शक्तः ॥ ४५ ॥

गो० टी०–अथवेति । मृद्गतः प्रहरतः । प्रतिमुखे अग्रे ॥ ४५ ॥ ४६ ॥

रा० टी०–नेति । सोऽहं शक्त्यादिना न हनिष्यामि किन्तु सवज्रिणमपि रिपुं हस्ताभ्यामेव संरभ्य प्रहृत्य हनिष्यामि॥४६॥

४६–५० ] ति० टी०–मे मुष्टिवेगं राघवो यदि सहिष्यति तदा राघवस्य बाणौघा मे रुधिरं पास्यन्ति । तत्सहनमेव तस्याशक्यमिति भावः ॥ ४६–५० ॥

रा० टी०–यदीति । स राघवः यदि मे मुष्टिवेगं सहिष्यति मुष्टिवेगेन न मरिष्यतीत्यर्थः तर्हि मे बाणौघाः राघवस्य रुधिरं पास्यन्ति एतेन स्वबाणानामभेद्यत्वं सूचितम् ॥ ४७ ॥

गो० टी०–यदीति । रामः प्रथमं मे मुष्टिप्रहारमेव न सहिष्यते कुतो मां प्रहरिष्यतीति भावः ॥ ४७ ॥

रा०टी०–चिन्तयेति । सोऽहं तव शत्रुविनाशाय निर्यातुमुद्यतोऽस्मि अतो मयि तिष्ठति सति चिन्तया त्वं किमर्थं तप्यसे ४८

गो० टी०–चिन्तयेति । उद्यतः अस्मीति शेषः ॥४८॥

रा० टी०–मुञ्चेति । यतोऽसाधारणं यशः तव तुभ्यं दातुमिच्छामि अतो राघवादीन् हनिष्यामि येन लङ्का प्रदीपिता तं हनुमन्तं हरींश्च भक्षयिष्यामि अतो रामाद्भयं मुञ्च । सार्धश्लोकद्वयमेकान्वयि ॥ ४९ ॥ ५० ॥

---

१ अथ पूर्वं हते तेन मयि त्वां हन्तीति गो. पाठः । २ प्रेषणीय इति गो. पाठः । ३ बलेति गो. पाठः । ४ चेतिगो. पाठः । ५ मुखे स्थातुं कश्चिदिति गो. पाठः । ६ संरब्ध इति गो. पाठः । ७ मपीति गो. पाठः । ८ ते इति गो. पाठः । ९ लिति गो. पाठः । १० बोध्यसे इति गो. पाठः । ११ राजन्हनिष्यामीहेति गो. पाठः । १२ लङ्का येनेति गो. पाठः । १३ चापि हनिष्यामीति गो. पाठः । १४ समयस्थितानिति गो. पाठः ।

यदि चेन्द्राद्भयं राजन्यदि चापि स्वयंभुवः । [ ततोऽहं नाशयिष्यामि नैशं तम इवांशुमान् ]
अपि देवाः शयिष्यन्ते मयि क्रुद्धे महीतले ॥ ॥ ५१ ॥
यमं च शमयिष्यामि भक्षयिष्यामि पावकम् । आदित्यं पातयिष्यामि सनक्षत्रं महीतले ॥ ५२ ॥
शतक्रतुं वधिष्यामि पास्यामि वरुणालयम् । पर्वतांश्चूर्णयिष्यामि दारयिष्यामि मेदिनीम् ॥ ५३ ॥
दीर्घकालं प्रसुप्तस्य कुम्भकर्णस्य विक्रमम् । अद्य पश्यन्तु भूतानि भक्ष्यमाणानि सर्वशः ॥
नन्विदं त्रिदिवं सर्वमाहारो मम पूर्यते ॥ ॥ ५४ ॥
वधेन ते दाशरथेः सुखावहं सुखं समाहर्तुमहं व्रजामि ।
निहत्य रामं सह लक्ष्मणेन खादामि सर्वान्हरियूथमुख्यान् ॥ ॥ ५५ ॥
रमस्व राजन्पिब चाद्य वारुणीं कुरुष्व कृत्यानि विनीय दुःखम् ।
मयाद्य रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ॥ ५६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

## चतुःषष्टितमः सर्गः ।

एवमुक्तवन्तं कुम्भकर्णं महोदर आक्षिप्य त्वदग्रजकृतमेव साधीयो न तु यद्भवानब्रवीत् इति रावणमेव प्रशस्य भो प्रभो अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दन इमे रामं गमिष्यामः जयेम चेद्वरं पराजिता अपि अस्माभिः सलक्ष्मणो रामो भक्षित इति सर्वत्रावघोषय तच्छ्रुत्वानाथा सीता अयत्नेन लभ्येतेति च रावणमुवाच ।

तदुक्तमतिकायस्य बलिनो बाहुशालिनः । कुम्भकर्णस्य वचनं श्रुत्वोवाच महोदरः ॥ १ ॥

गो० टी०—मुञ्चेत्यादिसार्धश्लोकद्वयमेकान्वयम् । अर्थान्तरम् । रामात् भयम् अस्तीति शेषः हनिष्यामीत्येतन्मुञ्चेति दातुं खण्डितुमित्यर्थान्तरम् ॥ ४९ ॥ ५० ॥

५१–५२ ] ति० टी०—इन्द्रादिभ्योऽपि यदि भयं तथापि तवासाधारणं यशो जयजं दातुमिच्छामि । तद्भयहेतवो देवादयोऽपि मयि क्रुद्धे महीतले शयिष्यन्ति किं पुनर्नरवानरा इत्यर्थः ॥ ५१ ॥ ५२ ॥

रा० टी०—यदीति । यदीन्द्रात् स्वयंभुवो वा भयं तदापि नैशं तमोंऽशुमानिवाहं नाशयिष्यामि अत एव मयि क्रुद्धे सति देवा अपि महीतले शयिष्यन्ति सार्धश्लोक एकान्वयी॥५१॥५२॥

रा० टी०—यममिति । सनक्षत्रमादित्यं पातयिष्यामि ५३

गो० टी०—यदि चेत्यर्धम् । इन्द्रात् स्वयंभुवश्च भयं यद्यस्ति तदपि मोचयिष्यामीत्युपस्कार्यम् ॥ ५१ ॥ ५४ ॥

५३–५४ ] ति० टी०—वरुणालयं समुद्रम् ॥ ५३॥५४ ॥

रा० टी०—शतक्रतुमिति । वरुणालयं समुद्रं पास्यामि५४

रा० टी०—दीर्घेति । भक्ष्यमाणानि भूतानि कुम्भकर्णस्य विक्रमं पश्यन्तु ॥ ५५ ॥

रा० टी०—विक्रममेवाह नेति । मम न पूर्यते उदरमिति शेषः अतः सर्वं त्रिदिवं ममाहार उदरपूरकं नेत्यर्थः अर्द्धं पृथक् वधेनेति । सुखावहं नित्यं सुखवन्तं त्वां ते रिपोर्दाशरथेर्वधेन सुखमधिकानन्दमाहर्तुं प्रापयितुमहं व्रजामि अत एव रामादीन् निहत्य खादामि ॥ ५६ ॥

गो० टी०—नन्विति । त्रिदिवं त्रिलोकी । आहारस्य न पूर्यते आहाराय न पूर्यते न पर्याप्तमित्यर्थः ॥ ५५ ॥

५५–५६ ] ति० टी०—सुखावहमुत्तरोत्तरमधिकसुखजनकं सुखम् ॥ ५५ ॥ ५६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०—वधेनेति । सुखार्हम् उत्तरोत्तरसुखावहम् । ते वधन दाशरथः सुखावहमित्यर्थान्तरम् ॥ ५६ ॥

रा० टी०—रमस्वेति । दुःखं विनीय दूरीकृत्य कृत्यानि कुरुष्व मया रामे यमक्षयं गमिते सति सीता अवशगा कान्तिरहिता भविष्यति ॥ ५७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०—रमस्वेति । मया निमित्तेन रमस्वेत्यादौ काकुः । इयमक्षयमितिच्छेदः । रामे विषये गमिता इयं सीता चिराय वशगा भविष्यतीत्यर्थान्तरम् ॥ ५७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

१ ] ति० टी०—अथाविचारकारी रावण इति यदुक्तमस-

१ चेति गो. पाठः । २ इदमर्धमधिकं रा. पाठे । ३ क्रुद्धे मयीति गो. पाठः । ४ नान्वति गो. पाठः । ५ आहारस्य नति गो. पाठः । ६ सुखार्हमिति गो. पाठः । ७ कामामाते गो. पाठः । ८ चाद्येति । गो. पाठः । ९ विनीयतां ज्वर इति गो. पाठः ।

कुम्भकर्ण कुले जातो धृष्टः प्राकृतदर्शनः । अवलिप्तो न शक्नोषि कृत्यं सर्वत्र वेदितुम् ॥ २ ॥
नहि राजा न जानीते कुम्भकर्ण नयानयौ । त्वं तु कैशोरकाद्धृष्टः केवलं वक्तुमिच्छसि ॥ ३ ॥
स्थानं वृद्धिं च हानिं च देशकालविधानवित् । आत्मनश्च परेषां च बुध्यते राक्षसर्षभः ॥ ४ ॥
यत्त्वशक्यं बलवता कर्तुं प्राकृतबुद्धिना । अनुपासितवृद्धेन कः कुर्यात्तादृशं नरः ॥ ५ ॥
यांस्तु धर्मार्थकामांस्त्वं ब्रवीषि पृथगाश्रयान् । अवबोद्धुं स्वभावेन नहि लक्षणमस्ति तान् ॥ ६ ॥

हाय एव योत्स्यामीति च तदुभयं दूषयति महोदर इत्याह—तदिति । अतिकायस्य कुम्भकर्णस्य तत्तेन प्रकारेणोक्तं वचनं श्रुत्वा महोदर उवाच ॥ १ ॥

रा०टी०—कुम्भकर्णवचनश्रवणानन्तरकालिकां तं प्रति महोदरोक्तिमाह—तदित्यादिभिः । बाहुशालिनः चलायमानबाहोः अतिकायस्य कुंभकर्णस्य वचनं श्रुत्वा महोदर उवाच ॥ १ ॥

गो० टी०—अथ मन्त्रिकृतानयमसहमानो महोदरः कुम्भकर्णं निर्भर्त्सयति—तदुक्तमित्यादिना । उक्तं सूचनं त्विना कण्ठरवेण दर्शितम् । अतिकायस्य महाशरीरस्य । प्रतिवचनानर्हत्वद्योतनाय विशेषणानि ॥ १ ॥

२ ] ति० टी०—कुले महाकुले जातोऽपि धृष्टोऽवलिप्तस्त्वं प्राकृतदर्शनः सन्सर्वकृत्यं कर्तव्यं वेदितुं न शक्नोषि ॥ २ ॥

रा० टी०—तदाकारमाह—कुंभकर्णेति । हे कुंभकर्ण कुले प्रशस्तवंशे जातः अत एव अवलिप्तः अतिगर्वः अत एव धृष्टः अत एव प्राकृतदर्शनः प्राकृतजन इव दृश्यमानस्त्वं सर्वत्र सर्वस्मिन् विषये वेदितुं ज्ञातुं न शक्नोषि ॥ २ ॥

गो० टी०—मन्त्रिभिः सहाविचार्यैव रावणेनाकार्यं कृतम् । अहमसहाय एव रामादिभिर्योत्स्यामीति यदुक्तं कुम्भकर्णेन तदुभयं दूषयितुमाह—कुम्भकर्णेत्यादिना । कुले जातोपि प्राकृतदर्शनः क्षुद्रबुद्धिः । केवलं धृष्टः न तु शास्त्रज्ञ इत्यर्थः । अवलिप्तः गर्वितः । त्वं सर्वत्र कार्ये कृत्यं मन्त्ररूपम् तद्वेदितुं न शक्नोषि ॥ २ ॥

३ ] ति० टी०—न स वेद नयानयाविति कुम्भकर्णोक्तं दूषयति—नहीति । राजा नयानयावुचितकृत्याकृत्ये न जानातीति न, किं तु जानीत एवेत्यर्थः । त्वं तु कैशोरकाद्बाल्याद्धृष्टः सन्नेवं वक्तुमिच्छसि । 'केवलं कर्तुमिच्छसि' इति पाठेऽसहायतया रामेण युद्धमिति शेषः ॥ ३ ॥

रा० टी०—तस्याज्ञानं प्रकटयितुमाह—नहीत्यादिभिः । राजा रावणः नयानयौ न जानीते इति न हि जानात्येवेत्यर्थः त्वं तु कैशोरकात् बाल्याद्धेतोः केवलं वक्तुमिच्छसि तत्त्वं न जानासीत्यर्थः । एतेन रावणो नयानयौ नजानातीति त्वदज्ञानं भ्रान्तिमूलकमेवेति सूचितम् ॥ ३ ॥

गो०टी०—केवलं वीर्यदर्पेण नानुबन्धो विचारितः, न स वेद नयानयावित्यादिना रावणोद्देशेन कुम्भकर्णोक्तं दूषयति—न हीत्यादिना । राजा नयानयौ न जानीत इति न जानीत एवेत्यर्थः । किशोरः बालः तस्य भावः कैशोरकं तस्मात् बाल्यात् । केवलं धृष्टः न तु शास्त्रज्ञानेनेति भावः ॥ ३ ॥

४ ] ति० टी०—राजा तु सर्वं वेत्तीत्याह—स्थानमिति । स्थानं वृद्धिक्षयराहित्येन यथाप्राप्ते स्वरूपेऽवस्थानम् । आत्मनो वृद्धिं परेषां हानिं च राजा बुध्यते । किं च देशकालविधानविद्देशकालयोरुचितकर्तव्यवित् ॥ ४ ॥

रा० टी०—रावणज्ञानमेवाह—स्थानमिति । देशकालविधानवित् यथोचितदेशकालकृत्यविज्ञाता राक्षसर्षभः आत्मनः परेषां रिपूणां च स्थानमिह लोके स्थितिनियमं वृद्धिं च हानिं च बुध्यते ॥ ४ ॥

गो० टी०—स्थानमिति । देशकालविभागवित् विविक्तादिमन्त्रोचिततद्भिन्नयोः देशयोः तथा मन्त्रोचितानुचितयोश्च कालयोर्विभागं वेत्तीति तथोक्तः । राक्षसर्षभः रावणः । आत्मनः शत्रूणां च वृद्धिं हानिं स्थानं समत्वं च बुध्यते । रावणो देशकालविभागाद्यनभिज्ञ इति त्वयोक्तं न युक्तमिति भावः ॥४॥

५ ] ति० टी०—सर्वथा राज्ञोऽविवेको नास्तीत्याह—यत्त्वशक्यमिति । अनुपासितवृद्धेन, अत एव प्राकृतबुद्धिना केवलं बलवता यत्तु कर्तुमशक्यं तादृशं को बुधो राजा कुर्यात्, न कोऽपि ॥ ५ ॥

रा० टी०—यदिति । न उपासितो वृद्धो महाजनो येन अत एव प्राकृतबुद्धिना बलवता केवलबलविशिष्टेनापि जनेन यत्कर्तुं न शक्यमनुचितमित्यर्थः तादृशं कर्म बुधो विज्ञाता कुर्यात् न कोपीत्यर्थः एतेन रावणकृतं समीचीनमेवेति सूचितं तेन प्रथमं वै महाराज कृत्यमेतदचिन्तितं केवलं वीर्यदर्पेण नानुबन्धो विचारितः इति च त्वदुक्तिरज्ञानमूलिकैवेति सूचितम् ॥ ५ ॥

गो० टी०—लोके कापुरुषेणापि यत् कर्तुमनर्हं तादृशं कर्म विवेकी रावणः कथं कुर्यादित्यभिप्रेत्याह—यत्त्विति । बलवता केवलशौर्यावलम्बिना प्राकृतबुद्धिना यत् कर्तुं शक्यं तादृशं कर्म बुधः कः कुर्यात् न कोपि कुर्यात् । किमुत रावण इति भावः॥५॥

६ ] ति० टी०—एतावता 'प्रथमं वै महाराज कृतमेतदचिन्तितम् । केवलं वीर्यदर्पेण नानुबन्धो विचारितः' । इति कुम्भकर्णोक्तं दूषणं परिहृतम् । अथ त्रिषु चैतेषु यच्छ्रेष्ठमित्यादिना धर्म एव सेव्यः, न तु कामस्तद्विरुद्ध इति यदुक्तं तत्राह—यांस्त्विति । यांश्च धर्मादीन्पृथगाश्रया धर्मादयः परस्परवि-

१ विभागेति गो. पाठः । २ बुध इति गो. पाठः । ३ जानीते गो. पाठः । ४ तान्नहीति गो. पाठः । ५ ते इति गो. पाठः ।

कर्म चैव हि सर्वेषां कारणानां प्रयोजनम् । श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥ ७ ॥
निःश्रेयसफलावेव धर्मार्थावितरावपि । अधर्मानर्थयोः प्राप्तं फलं च प्रात्यवायिकम् ॥ ८ ॥
ऐहलौकिकपारक्यं कर्म पुंभिर्निषेव्यते । कर्माण्यपि तु कल्पानि लभते काममास्थितः ॥ ९ ॥

रुद्धा नैकानुष्ठेया इति ब्रवीषि, तान्धर्मादीन्स्वभावेन तत्त्वतोऽवबोद्धुं ते लक्षणं सामर्थ्यं नह्यस्ति ॥ ६ ॥

रा० टी०—यानिति । यान् धर्मार्थकामान् पृथगाश्रयान् परस्परं विरुद्धत्वेनैकेनानुष्ठातुमयोग्यान् त्वं ब्रवीषि तान् धर्मादीन् स्वभावेन तत्वतोऽवबोद्धुं लक्षणं त्वत्सामर्थ्यं नास्ति एतेन त्रिषु चैतेषु यच्छ्रेष्ठमित्यादि त्वया न वक्तव्यमिति ध्वनितम् ॥ ६ ॥

गो० टी०—धर्माधर्मयोर्हिताहितसाधनत्वं निश्चित्य, शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मण इत्यादिना सीताहरणरूपात् पापात्तवायमनर्थः प्राप्त इति यदुक्तं कुम्भकर्णेन तदपि धर्माधर्मयोर्हिताहितफलनियमाभावान्न संगच्छत इति प्रतिपादयितुमाह—यांस्त्वित्यादिना । पृथगाश्रयान् पृथक्कारणान् भिन्नफलान् धर्मार्थकामान् ब्रवीषि । तान् स्वभावे अनुबोद्धुं स्वरूपतो ज्ञातुम् लक्षणं लक्ष्यतेनेनेति लक्षणं प्रमाणम् तव नास्तीत्यर्थः । सुखफलदयागादिधर्मानुष्ठानदशायां तात्कालिकशरीरायासजनितदुःखदर्शनात् दुःखजनकपरद्रव्यापहरणाद्यधर्माचरणसमये तात्कालिकसुखदर्शनाच्च । अर्थकामयोरप्येवं दर्शनाच्च । कर्मणामनियतफलकत्वान्नियतफलकत्वे न किंचित् प्रमाणमुपलभ्यत इत्यर्थः ॥ ६ ॥

७ ] ति० टी०—कुत इत्यत्र सर्वस्याप्येकानुष्ठेयत्वादेवेत्याह—कर्म चैवेति । सर्वेषां कारणानां सुखसाधनानां त्रिवर्गलक्षणानां कर्मैव प्रयोजनं प्रयोजकमुत्पादकम् , नह्यक्रियस्य कश्चनपुरुषार्थो धर्मादिः । एवमेकपुरुषयत्नसाध्यानां श्रेयःपापीयसां कर्मणां शुभाशुभव्यापाराणां फलमत्रैकस्मिन्नेव कर्तरि भवति । एवं च विरुद्धयोरपि धर्मकामयोरेकानुष्ठेयत्वदर्शनाद्धर्म एवानुष्ठेयः, न तु तद्विरुद्धः काम इति त्वदुक्तमयुक्तमिति भावः ॥ ७ ॥

रा० टी०—कर्मेति । कारणानां सुखदुःखभोगसाधकानां श्रेयःपापीयसां कल्याणाकल्याणानां सर्वेषां कर्मणां प्रयोजनं प्रयोजकमुत्पादकमित्यर्थः फलं च कर्मैव पूर्वोपार्जितकर्मजनितसंस्कारवशादुत्तरकर्मनिष्पत्तिः तज्जनितसंस्कारवशात् फलनिष्पत्तिरित्यर्थः एतेन पूर्वजनितसंस्कारायत्तकर्मप्रवृत्तेर्दुर्निवारत्वेन त्वत्कर्तृकनिवारणं निष्फलमिति सूचितम् ॥ ७ ॥

गो० टी०—तदेव प्रदर्शयति—कर्म चेत्यादिना । सर्वेषां कारणानां स्वर्गनरकरूपाणां फलानां कर्मैव प्रयोजकं साधकम् । आत्येकवचनम् । किं तु अत्र कर्मजाते पापीयसामपि कर्मणां श्रेयः-फलं भवति ॥ ७ ॥

८ ] ति० टी०—तत्र पुरुषयत्नसाध्येष्वप्येषु धर्मार्थयोः कामात्कश्चिद्विशेषोऽस्तीत्याह—निःश्रेयसेति । धर्मार्थौ निःश्रेयसफलावेव सन्तौ कामनाविशेषेणेतरावपि स्वर्गाभ्युदयफलावपि भवतः । अत्र धर्मशब्देनार्थनिरपेक्षो जपध्यानादिः । अर्थशब्देन चार्थसाध्यो यागदानादिः । 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इति भगवद्वचनात् । तेषां चित्तशुद्धिद्वारा मोक्षसाधनत्वमस्ति । कामस्तु न कदापि निःश्रेयसफल इति भावः । तयोरपरमपि कामाद्विशेषमाह—अधर्मानर्थयोरिति । जपादिरूपे क्रियामये वा नित्यधर्मे लुप्ते सत्यधर्मानर्थौ प्राप्तौ भवतः, तयोश्च सतोः प्रात्यवायिकं विहिताकरणप्रयुक्तप्रत्यवायजन्यं फलं पुंसः प्राप्तं भवति । न तु काम्याकरणे प्रत्यवाय इति भावः ॥ ८ ॥

रा० टी०—निःश्रेयसेति । निःश्रेयसं मोक्षः फलं ययोः तावपि धर्मार्थौ इतरौ स्वर्गैहिकराज्यादिफलावपि भवत इति शेषः तयोः फलान्तरमाह अधर्मानर्थयोः प्राप्तं प्राप्तिश्चैव प्रात्यवायिकं प्रात्यवायिनामपराधिनां कं सुखं यस्मात्तत्फलमपि भवति प्रत्यवायस्यापि अर्थधर्माभ्यां निवृत्तिरिति तात्पर्यम् ॥ ८ ॥

गो० टी०—उक्तमेवार्थं विशदयति—निःश्रेयसेति । धर्मार्थौ धर्मार्थसाधनभूते कर्मणी इतरौ अधर्मानर्थसाधनभूते कर्मणी च निःश्रेयसफलौ एतानि चतुर्विधानि निःश्रेयसकराण्येव किं तु कदाचिदधर्मानर्थयोः प्रत्यवायिकम् अश्रेय इति यावत् । प्रत्यवायोस्मिन् कारणतयास्तीति प्रत्यवायिकम् । "अत इनिठनौ" इति ठन् । प्राप्यत इति प्राप्तिः फलम् कर्मणि क्तिन्प्रत्ययः । एतेनाधर्मानर्थयोः श्रेयस्तदितरच्चोभयं फलं भवतीत्युक्तम् ॥ ८ ॥

९ ] ति० टी०—कीदृशं तत्फलं तत्राह—ऐहलौकिकेति । इह लोके परत्र च भवं कर्म कर्मफलम् । इह ऋणदारिद्र्यादिरूपम्, परत्र नरकयातनादिरूपं निषेव्यतेऽनुभूयते । एवं धर्मफलमपि । अथ कामस्य धर्मार्थाभ्यां वैलक्षण्यमाह—कर्माणीति । कामं तत्पुरुषार्थसिद्धिमुद्दिश्य कर्माणि यत्नेनास्थितोऽनुतिष्ठन्नपि कल्पानि शुभानि तु विशिष्यात्रापि साक्षाल्लभते, न तु धर्मार्थवत्कालान्तरे लोकान्तरे वा । एवं च धर्मार्थकामा एकेनैव सेव्याः । धर्मविरुद्धो यदि कामस्तदा स स्वतपोविक्रमादिना समाधेयः । नहि 'भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रियन्ते' इति न्यायादिति भावः ॥ ९ ॥

रा० टी०—ननु कर्मकर्तुः कर्मणां चेहैव विनष्टत्वात् पूर्वकर्मजनितसंस्कारायत्तकर्मप्रवृत्तिर्दुर्निवारेति त्वदुक्तिर्व्याहता अत एव स्वर्गः कर्तृक्रियाकर्मविनाशेपि च यज्वनाम् तदा दावाग्निदग्धानां फलं स्याद्भूरिभूरुहाम् मृतानामपि जन्तूनां

१ जकमिति गो. पाठः । २ प्राप्तिरिति गो. पाठः । ३ पारत्रमिति गो. पाठः । ४ कल्याणीति गो. पाठः ।

तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः। शत्रौ हि साहसं यत्तत्किमिवात्रापनीयते[२] ॥ १० ॥
एकस्यैवाभियाने तु हेतुर्यः प्रहृतस्त्वया। तत्राप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥ ११ ॥

पिण्डिश्चेतृप्तिकारकः निर्वाणस्य च दीपस्य स्नेहः संवर्द्धयेच्छिखामित्याद्युक्तमित्याशङ्क्यं निवर्त्तयितुमाह ऐहेति। कामं संकल्पमास्थितश्शिष्टजनः कल्पानि फलोत्पादकदृढसंस्कारोत्पादने समर्थानि कर्माणि लभते करोतीत्यर्थः अत एव ऐहलौकिकपारक्यमुभयलोकजन्यं कर्म क्रियाफलं पुंभिराप्तजनैर्निषेव्यते भुज्यते एतेनाप्ताचरणप्रामाण्येनात्मनां ध्वंसाप्रतियोगित्वं कर्मणां चावश्यं फलदातृत्वं सूचितम् अत एव वेदानां नाप्रामाण्यम् उक्तश्लोकौ तु वेदविरुद्धत्वेन भ्रांतिमूलकाविति न दोषः ॥ ९ ॥

गो० टी०–एवं धर्माधर्मयोरव्यवस्थितफलत्वमुक्त्वा कामस्यापि तदाह–ऐहलौकिकेति। ऐहलौकिकं इहलोकोपयोगि पारत्रं परलोकोपयोगि च कर्म पुंभिर्निषेव्यते तत्फलं चानुभूयते तथैव काममास्थितः यथेच्छाचारोपि कल्याणि कर्माणि कल्याणानि कर्मफलानि लभते अतो विहितमेव शुभप्रदम्, निषिद्धं तु तथा न भवतीति नियमो नास्तीत्यर्थः ॥ ९ ॥

१० ] ति० टी०–इदानीमनभिज्ञाय शास्त्रार्थमित्यादिना दुर्मन्त्रिसंबन्धस्त्याज्य इत्युक्तं तत्परिहरति–तत्रेति। तत्र त्रयाणामेकानुष्ठेयत्वे सिद्धे सति राज्ञामिदं कामपुरुषार्थसाधनं कार्यं कर्तुं योग्यम्। तथा हृदि क्लृप्तं निश्चितं च नोऽस्माकं मन्त्रिणां मतमनुमतं च। बलवद्विषये न्याय्यत्वस्योक्तत्वात्, अतो राज्ञि नास्मासु च किंचिदचातुर्यम्। अथ साहसप्रवृत्तिरूपं प्रागुक्तदोषमुद्धरति–शत्रौ हीति। शत्रौ हि प्रसिद्धं साहसं बलवतो बलात्प्रवृत्तिरूपम्। अत्रैतदनुष्ठाने किमिवापनीयते कोऽपनयः, न कोऽपि। उचितमेव कृतमित्यर्थः। यत्तु तीर्थेनोक्तम्, धर्माधर्मयोर्हिताहितसाधनत्वं निश्चित्य परदाराहरणरूपाधर्माद्राज्ञो दुःखमित्युक्तं तद्धर्माधर्मयोर्हिताहितफलनियमाभावादसंगतमित्याह—यांस्तु धर्मार्थेति। पृथगाश्रयान्पृथक्फलजनकान्वदसि तान्स्वभावेनावबोद्धुं स्वरूपतो ज्ञातुं लक्ष्यतेऽनेनेति लक्षणं कारणं च नास्ति। सुखफलकयागादिधर्मानुष्ठानेऽपि तात्कालिकशरीरायासदर्शनात्, दुःखजनकपरदारगमनादावपि तात्कालिकसुखदर्शनाच्चेति भावः। तदेव प्रदर्शयति–कर्म चेति। सर्वेषां कारणानाम्। सुखानामित्यर्थः। कर्म कर्ममात्रं प्रयोजनं प्रयोजकम्। साधकमित्यर्थः। अत्रास्मिन्पुण्यकर्मणि फलं भवति। अश्रेयोऽपीति शेषः। पापीयसां कर्मणां श्रेयः सुखं च फलं भवति। एतदेव विशदयति–निःश्रेयसेति। धर्मार्थौ तत्साधनीभूते कर्मणी, इतरावधर्मानर्थौ तत्साधनभूते कर्मणीति यावत् निःश्रेयसफलावेव चतुर्विधकर्माण्यपि श्रेयस्कराण्येवेत्यर्थः। किं तु कदाचिदधर्मानर्थयोः प्रात्यवायिकं प्रत्यवायाकारणकं दुःखं फलं सुखं च। प्राप्यत इति प्राप्तिः कर्मणि किन् प्राप्यं भवतीत्यर्थः। एतेनाधर्मानर्थयोः सुखदुःखोभयफलत्वमुक्तम् धर्मार्थयोरव्यवस्थितफलमुक्त्वा कामस्याप्याह–ऐहलौकिकेति। इहलोकपरलोकोपयोगि कर्म धर्मार्थरूपं निषेव्यते तत्फलं चानुभूयते। तथा काममास्थितोऽपि यथेच्छाचारोऽपि कल्पानि शुभानि कर्माणि कर्मफलानि लभते एवं च विहितमेव शुभदं निषिद्धमशुभदमिति नियमो नेति भावः। एतत्पक्षानुसारेणैव सीताहरणं रावणेन कृतमस्माभिश्चानुमतमित्याह–तत्रेति। तथा सति इदं कार्यं सीताहरणरूपं राज्ञा हृदि निश्चितमस्माभिरनुमतं च किं च शत्रुविषये रावणेन यत्साहसं कृतं तत्किमिव न किमपीत्यर्थः। अत्र साहसविषयेऽपनीयतां पृथक्कृत्य प्रदर्श्यताम्। अत्र पक्षे रावणेनाविचार्य कृतं किमपि दर्शयितुं न शक्यमित्यर्थ इति पञ्चश्लोकीव्याख्यानम्, तन्न। धर्मात्सुखस्याधर्माद्दुःखस्य सर्वसंमतत्वात्। यदप्युक्तं यागादौ नान्तरीयकं दुःखमिति, तन्न तस्य धर्मस्य फलम्, किं तु प्राक्कृतकर्मान्तरस्यैव। एवमधर्मविषयेऽपि अनया रीत्या सर्वं पलालप्रायतया दूष्यतां मतिमद्भिरित्यलम् ॥ १० ॥

रा० टी०–तत्रेति। राज्ञा हृदि क्लृप्तं निश्चितम् तत्र तस्मिन् समये एव नोस्माकं मतं सम्मतिविषयीभूतमत एव कार्यं कर्तव्यम् यदिदं शत्रौ साहसं तत् अत्र अस्मिन्समये किमपनीयते अपनीतमिदं त्वया कथमुच्यते इत्यर्थः एतेन नानभिज्ञाय शास्त्रार्थमित्यादि त्वयोक्तमज्ञानमूलकमिति सूचितम् इव एवार्थे ॥ १० ॥

गो० टी०–धर्मादीनां फलनियमो नास्ति, सर्वं सर्वस्य फलमित्यस्मिन् पक्षे स्थित्वा रावणेन सीताहरणं कृतमस्माभिश्चानुमतमित्याह—तत्र क्लृप्तमिति। तत्र राज्ञा कामसेव्यपि सुखानि लभत इति मते स्थितेन राज्ञा इदं कार्यं सीताहरणरूपं कार्यम् हृदि क्लृप्तं हृदि चिन्तितम्। नः अस्माकमपि मतं संमतम्। शत्रौ शत्रुविषये यत् साहसं स्यात् अत्र अस्मिन् साहसकर्मणि किमिवापनीयते न किंचित् क्रियते इत्यर्थः ॥ १० ॥

११ ] ति० टी०–अथेदानीमेव मां राजन्त्यादिश, अहमुत्सादयिष्यामीत्यादिनाऽसहायतया यो रिपुसंहारवाद उक्तस्तं दूषयति–एकस्यैवेति। एकस्यासहायस्यैवाभियाने यो हेतुः स्वबललक्षणः प्राहृत उक्तस्तत्रापि यदनुपपन्नमुपपत्तिरहितम्, अतएवासाधु वचोऽस्ति तत्ते वक्ष्यामि ॥ ११ ॥

रा० टी०–एकस्येति। एकस्य स्वस्यैव अभियाने गमने यो हेतुः स्वबलवत्तानिश्चयः त्वया प्राहृतः उक्तः तत्रोक्तौ अनु-

१ तस्यामिति गो. पाठः। २ तामिति गो. पाठः। ३ प्रकृत इति गो. पाठः।

येन पूर्वं जनस्थाने बहवोऽतिबलास्तदा । राक्षसा राघवं ध्वस्ताः कथमेको जयिष्यसि ॥ १२ ॥
ये पूर्वं निर्जितास्तेन जनस्थाने महौजसः । राक्षसांस्तान्पुरे सर्वान्भीतानद्य न पश्यसि ॥ १३ ॥
तं सिंहमिव संक्रुद्धं रामं दशरथात्मजम् । सर्पं सुप्तमहो बुद्ध्वा प्रबोधयितुमिच्छसि ॥ १४ ॥
ज्वलन्तं तेजसा नित्यं क्रोधेन च दुरासदम् । कस्तं मृत्युमिवासह्यमासादयितुमर्हति ॥ १५ ॥
संशयस्थमिदं सर्वं शत्रोः प्रतिसमासने । एकस्य गमनं तात नहि मे रोचते भृशम् ॥ १६ ॥
हीनार्थस्तु समृद्धार्थं को रिपुं प्राकृतं यथा । निश्चितं जीवितत्यागे वशमानेतुमिच्छति ॥ १७ ॥
यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम । कथमाशंससे योद्धुं तुल्येनेन्द्रविवस्वतोः ॥ १८ ॥
एवमुक्त्वा तु संरब्धं कुम्भकर्णं महोदरः । उवाच रक्षसां मध्ये रावणं लोकरावणम् ॥ १९ ॥

---

पपन्नमनुपपत्तिमत एव यत् असाधु साधुतारहित्यं तच्च ते वक्ष्यामि ॥ ११ ॥

गो० टी०–एवं रावणस्याविमृश्यकारित्वपक्षं प्रतिक्षिप्य कुम्भकर्णस्यैकस्यैवाभियानपक्षं निरस्यति–एकस्येत्यादिना । एकस्यासहायस्य । अभियाने युद्धाय निर्गमे यो हेतुः बलपराक्रमरूपः त्वया प्रकृतः प्रस्तावितः तत्रापीत्यपिशब्देन पूर्वं निराकृतः पक्षः समुच्चीयते । यदनुपपन्नमयुक्तम् । असाधु अहितं च तद्वक्ष्यामि ॥ ११ ॥

१२ ] ति० टी०–अनुपपत्तिमेवाह–येनेति । येनातिबला हतास्तं राघवमित्यन्वयः ॥ १२ ॥

रा० टी०–तदाकारमाह—येनेत्यादिभिः । येन राघवेण बहवो राक्षसाः जनस्थाने पूर्वं हताः तं राघवमेकस्सहायरहितस्त्वं कथं जयिष्यसि जेष्यसि ॥ १२ ॥

गो० टी०–अनुपपत्तिमुपपादयति–येनेति ॥ १२ ॥

१३ ] ति० टी०–जनस्थाने तेन ये निर्जिता विद्राविताः स्तानद्यापि भीतानत्र पुरे विद्यमानान्राक्षसान्न पश्यसि किम् १३

रा० टी०–ये इति । ये राक्षसाः तेन रामेण पूर्वं निर्जिताः तान् पुरे लंकायां विद्यमानान् राक्षसान् अद्य न पश्यसि ॥ १३ ॥

गो० टी०–असाधुत्वं दर्शयति–ये पुरेति । तान् तज्जातीयानित्यर्थः ॥ १३ ॥

१४–१५ ] ति० टी०–सिंहमिव सुप्तं सर्पमिव च बुद्ध्वापि प्रबोधयितुमिच्छसि अहो ते मौर्ख्यमिति भावः ॥१४॥१५॥

रा० टी०–तमिति । संक्रुद्धं सिंहमिव सुप्तं सर्पमिव रामं बुद्ध्वापि प्रबोधयितुमिच्छसि इदं नोचितमित्यर्थः ॥ १४ ॥

गो० टी०–तमिति । संक्रुद्धं सिंहमिव संक्रुद्धसिंहसदृशम् तमबुध्य अबुद्ध्वा सुप्तं सर्पमिव प्रबोधयितुमिच्छसीत्यन्वयः॥१४॥

रा० टी०–ज्वलन्तमिति । असह्यं मृत्युमिव क्रोधेन दुरासदं तं राममासादयितुं कोऽर्हति नकोपीत्यर्थः ॥ १५ ॥

गो० टी०–ज्वलन्तमिति । असह्यं सोढुमशक्यम् । अपरिहार्यपराक्रममित्यर्थः । आसादयितुमासादितुम् ॥ १५ ॥

१६ ] ति० टी०–इदं सर्वं बलं शत्रोः प्रतिसमासने प्रतिमुखावस्थाने संशयस्थं संशयिजीवनविषयम्, अत एकस्य गमनं न मे रोचत इत्यन्वयः ॥ १६ ॥

रा० टी०–संशयस्थमिति । शत्रोः प्रतिसमासने साम्मुख्येनावस्थाने सति सर्वमिदं सैन्यं संशयस्थं विजयविषयकसंशयविशिष्टमत एव एकस्य गमनं भृशमत्यन्तं मे न रोचते १६

गो० टी०–संशयस्थमिति । यत्र शत्रोः प्रतिसमासने प्रतिमुखस्थितौ इदं सर्वं बलं संशयस्थं भवति तत्र एकस्य तव गमनं न रोचते ॥ १६ ॥

१७–१९ ] ति० टी०–हीनार्थो हीनबलोऽसहायः सन् कः पुमान्समृद्धार्थं ससहायं जीवितत्यागे निश्चितं स्वप्राणं तृणीकृत्य शत्रुसंहारादिदृढोद्योगं रिपुं प्राकृतं यथा प्राकृतमिवोक्तविशेषणरहितमिव वशमानेतुमिच्छति ॥ १७–१९ ॥

रा० टी०–हीनेति । हीनार्थः सहायरहितः को जनः समृद्धार्थं पूर्णसहायं जीवितत्यागे निश्चितं निश्चयवन्तं प्राकृतमपि रिपुं वशमानेतुमिच्छति काका नेत्यर्थः किञ्च प्राकृतं यथा प्राकृतविलक्षणमित्यर्थः जीवितस्य रिपुजीवनस्य त्यागे त्याजने निश्चितं रामं को वशमानेतुमिच्छति न कोपीत्यर्थः ॥ १७ ॥

गो० टी०–हीनार्थ इति । हीनार्थः हीयमानबलः कः पुमान् जीवितत्यागे विषये निश्चित्य निश्चयं कृत्वा समृद्धार्थं वर्धमानबलं रिपुम् प्राकृतं यथा क्षुद्रपुरुषमिव । वशमानेतुमिच्छतीत्यन्वयः । जीवितत्यागे निश्चयोऽस्ति चेत्तं प्रति युद्धाय याहीत्यर्थः ॥ १७ ॥

रा० टी०–यस्येति । मनुष्येषु यस्य सदृशो नास्ति तेन इन्द्रविवस्वतोस्तुल्येन योद्धुं कथमाशंससे ॥ १८ ॥

रा० टी०–एवमिति । महोदरः संरब्धं कुम्भकर्णमेवमुक्त्वा रावणमुवाच ॥ १९ ॥

गो० टी०–यस्येति । यस्य मनुष्येषु सदृशो नास्ति किं तु देवयोः इन्द्रविवस्वतोः इन्द्रसूर्ययोस्तुल्येन तेन रामेणेति शेषः । योद्धुं कथमाशंससे । वक्तुमेव न शक्यं किमुत कर्तुमिति शेषः ॥ १८ ॥ १९ ॥

---

१ हता इति गो. रा. पाठः । २ तस्वमिति गो. रा. पाठः । ३ पुरेति गो. पाठः । ४ मपीति गो. पाठः । ५ मिवासुब्धेति गो. पाठः । ६ तत्रेति गो. पाठः । ७ स्विति गो. पाठः । ८ निश्चित्येति गो. पाठः । ९ संरब्ध इति गो. पाठः ।

लब्ध्वा पुरस्ताद्वैदेहीं किमर्थं त्वं विलम्बसे । यदीच्छसि तदा सीता वशगा ते भविष्यति ॥२०॥
दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः । रुचितश्चेत्त्वया बुद्ध्या राक्षसेन्द्र ततः शृणु ॥२१॥
अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दनः । पञ्च रामवधायैते निर्यान्तीत्यवघोषय ॥ २२ ॥
ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः । जेष्यामो यदि ते शत्रून्नोपायैः कार्यमस्ति नः २३
अथ जीवति नः शत्रुर्वयं च कृतसंयुगाः । ततः समभिपत्स्यामो मनसा यत्समीक्षितम् ॥२४॥
वयं युद्धादिहैष्यामो रुधिरेण समुक्षिताः । विदार्य स्वतनुं बाणै रामनामाङ्कितैः शरैः ॥२५॥
भक्षितो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः । ततः पादौ ग्रहीष्यामस्त्वं नः कामं प्रपूरय ॥२६॥
ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव । हतो रामः सह भ्रात्रा ससैन्य इति सर्वतः ॥२७॥

२० ] ति० टी०—पूर्वमेव वैदेहीं लब्ध्वापि त्वं किमर्थं विलम्बसे तद्भोगायेति शेषः। भोगार्थं सीतया वशगया भाव्यमिति यदीच्छसि तदा सीता ते वशगा भविष्यति ॥ २० ॥

रा० टी०—तदाकारमाह—लब्ध्वेत्यादिभिः । वैदेहीं लब्ध्वा त्वं किमर्थं विलम्बसे स्वविजयलाभायेति शेषः एतेन त्वत्प्रार्थितवैदेहीद्वारा रामस्त्वत एव तव वशो भविष्यतीति त्वद्विजयोऽर्थात्सेत्स्यति किं युद्धोद्यमेनेति सूचितम् ननु सीतायाः वशगात्वं दुर्लभमित्यत आह यत् यदा इच्छसि सीताप्रार्थनमिति शेषः तदैव आसीता आ निखिलप्राणनकर्त्ता रामः तेन सहिता सीता ते तव वशगा भविष्यति ॥ २० ॥

गो० टी०—लब्ध्वेत्यादिश्लोकद्वयमेकान्वयम् । संप्रजल्पसि बहुविधं भाषसे अयेति शेषः । यदीच्छसि वक्ष्यमाणोपायमिति शेषः । तदा तदैव मे मया उपस्थानं स्वयमेव समीपागमनम् । रुचिरः प्रियः त्वया बुद्ध्या शृणु न तु परबुद्धिमनुसरेत्यर्थः ॥ २०–२२ ॥

२१ ] ति० टी०—कुतस्तत्राह—दृष्ट इति । सीतोपस्थानस्य सीतानुकूल्यस्य कारकः साधनं कश्चिदुपायो मे मया दृष्टोऽस्ति तं शृणु । तं श्रुत्वा त्वया बुद्ध्या पर्यालोच्य रुचितश्चेत्तमनुतिष्ठेति शेषः ॥ २१ ॥

रा० टी०—ननु प्रार्थनातिरिक्तमुपायं वदेत्यत आह—दृष्ट इति । सीतायाः उपस्थानस्य वशगात्वस्य कारकः कश्चिदुपायो मे मया दृष्टः विचारितः चेद्यदि त्वया बुद्ध्या रुचितः रुचिविषयीभूतो मदुक्तप्रयत्न इति शेषः ततस्तदा शृणु ॥२१॥

२२ ] ति० टी०—तमुपायमाह—अहमिति । पञ्चैते निर्यान्तीत्यवघोषय ॥ २२ ॥

रा० टी०—उपायमेवाह—अहमित्यादिभिः । एते मदादयः पञ्च रामवधाय निर्यान्ति इति शब्दमवघोषय सर्वत्र परिपूरय ॥ २२ ॥

२३ ] ति० टी०—ततो गत्वा तस्य रामस्य युद्धं दास्यामः । यदि दैवात्तव शत्रूञ्जेष्यामस्तदा नोऽस्माकमुपायैः सीतावशीकरणोपायानुष्ठानैर्न किंचित्कृत्यमस्ति । रामं प्रत्याशानिवृत्त्या स्वत एव तदानुकूल्यस्य सिद्धत्वादिति भावः ॥ २३ ॥

रा० टी०—तत इति । ततोऽनन्तरं गत्वा तस्य रामस्य युद्धं वयं दास्यामः यदि ते शत्रून् जेष्यामः तदा उपायैर्नः कार्यं नास्ति ॥ २३ ॥

गो० टी०—तत इति । उपायैः सीताहरणोपायैः कृत्यं साध्यम् नास्ति सिद्धे साधनायोगादिति भावः ॥ २३ ॥

२४ ति० टी०—अथ पक्षान्तरे नोऽस्माकं शत्रुरस्माभिरसाध्यनाशत्वाद्यदि जीवति, कृतसंयुगा वयं च यदि जीवाम ततो मनसा यत्समीक्षितं तत्समभिपत्स्यामः प्राप्स्यामः ॥२४॥

रा० टी०—अथेति । अथ पक्षान्तरे नः शत्रुर्यदि जीवति अस्माभिर्जेतुमशक्य इत्यर्थः ततस्तदा मनसा यत्समीक्षितं तत्समभिपत्स्यामः प्राप्स्यामः करिष्याम इत्यर्थः ॥ २४ ॥

गो० टी०—अथेति । अथ जीवति यदि जीवतीत्यर्थः । ततः तदा समीक्षितमालोचितम् यत् तत् अभिपत्स्यामः । करिष्याम इति यावत् ॥ २४ ॥

२५ ] ति० टी०—किं तत्त्राह—वयमिति । स्वतनुं रामनामाङ्कितैर्बाणैर्विदार्य कृतविदारणां संपाद्य यावत्प्राणसंकटं युद्ध्वेत्यर्थः। एवं युद्ध्वा रुधिरोक्षिता युद्धात्परावृत्त्येहैष्यामः॥२५॥

रा० टी०—तदाकारमाह—वयमित्यादिभिः । शरैर्विघातकैः रामनामांकितैर्बाणैस्स्वतनुं विदार्य विशेषेण दारयित्वा अत एव रुधिरेण समुक्षिताः वयं युद्धात् इह एष्यामः ॥ २५ ॥

गो० टी०—तत् किमित्यत्राह—वयमित्यादि । वयं बाणैः स्वतनुं विदार्य रामेण विदारितां कारयित्वा रुधिरेण समुक्षिताः रामनामाङ्कितैः शरैः सह युद्धादिहैष्याम इति योजना । इदं च रामयुद्धं कृतमिति सीतासमाश्वासाय ॥ २५ ॥

२६–२७ ] ति० टी०—इति वादिन इत्येवं मिथ्यावादिनः, त्वं नः कामं पूरय जित्वागतानिव संमानय ॥२६॥२७॥

रा० टी०—भक्षित इति । राघवो लक्ष्मणश्चास्माभिर्भक्षित इति त्वं नः कामं प्रपूरयेति च वादिनो वयं तव पादौ ग्रहीष्यामः ॥ २६ ॥

गो० टी०—भक्षित इति । ततः आगमनानन्तरम् रामो लक्ष्मणश्च रिपुः निःशेषं भक्षित इति तव पादौ ग्रही-

१ पुनस्त्वमिति गो.पाठः । २ संप्रजल्पसीति गो. पाठः । ३ रुचिर इति गो.पाठः । ४ ईश्वर तमिति गो.पाठः । ५ कृत्यमिति गो.पाठः । ६ तद्विति

प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिंदम । भोगांश्च परिवारांश्च कामान्वसु च दापय ॥ २८ ॥
ततो माल्यानि वासाँसि वीराणामनुलेपनम् । देयं च बहु योधेभ्यः स्वयं च मुदितः पिब ॥ २९ ॥
ततोऽस्मिन्बहुलीभूते कौलीने सर्वतो गते । भक्षितः ससुहृद्रामो राक्षसैरिति विश्रुते ॥ ३० ॥
प्रविश्याश्वास्य चापि त्वं सीतां रहसि सान्त्वयन् । धनधान्यैश्च कामैश्च रत्नैश्चैनां प्रलोभय ॥ ३१ ॥
अनयोपधया राजन्भूयः शोकानुबन्धया । अकामा त्वद्वशं सीता नष्टनाथा गमिष्यति ॥ ३२ ॥
रमणीयं हि भर्तारं विनष्टमधिगम्य सा । नैराश्यात्स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते ॥ ३३ ॥
सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्षिता । त्वय्यधीनं सुखं ज्ञात्वा सर्वथैव गमिष्यति ॥ ३४ ॥
एतत्सुनीतं मम दर्शनेन रामं हि दृष्ट्वैव भवेदनर्थः ।
इहैव ते सेत्स्यति मोत्सुको भूर्महानयुद्धेन सुखस्य लाभः ॥ ॥ ३५ ॥

---

प्याम: । त्वं संतोषातिशयव्यञ्जनार्थम् नः कामं प्रपूरय । अभीष्टं पारितोषिकं देहीत्यर्थः ॥ २६ ॥

रा० टी०—तत इति । गजस्कंधेन तत्स्थजनेन रामो हतः इति सर्वतस्सर्वत्र अवघोषय ॥ २७ ॥

गो० टी०—तत इति । गजस्कन्धेन गजस्कन्धगतपुरुषेण ॥ २७ ॥

२८ ] ति० टी०—प्रीतो नाम । नामेत्यपरमार्थे प्रीत इव भूत्वेत्यर्थः । परिवारान्दासीदासान् ॥ २८ ॥

रा० टी०—प्रीत इति । प्रीतस्त्वं भृत्यानां भोगादीन् दापय ॥ २८ ॥

गो० टी०—प्रीत इति । नामेत्यलीके । परिवारान् दासदासीः गजाश्वादीन् परिच्छदान् वा । स्याज्जङ्गमे परीवार इत्यमरः । कामान् काम्यमानानभीष्टान् । वसु सुवर्णम् ॥२८॥२९॥

२९ ] ति० टी०—योधेभ्यो बहु देयम्, देहीति शेषः । मुदितः पिब मुदित इव पिब ॥ २९ ॥

रा० टी०—तत इति । बहु योधेभ्यः वीराणां वीरेभ्यो माल्यादीनि देयम् मुदित इव स्वयं पिब मद्यमिति शेषः ॥२९॥

३० ] ति० टी०—कौलीने जनवादे रामादयो भक्षिता इत्येवंरूपे विश्रुते लोकमुखतः सीतयेति शेषः ॥ ३० ॥

३१]ति०टी०—आश्वास्य भर्तृविपत्तिदुःखितामिति शेषः३१

रा० टी०—तत इति । सर्वतः कौ लङ्काभूमौ लीने व्याप्ते अत एव बहुलीभूते राक्षसैर्विश्रुते विश्राविते रामो भक्षित इत्यस्मिन् शब्दे गते सीतया ज्ञाते सति सीतां सान्त्वयन्सांत्वयितुं प्रविश्याश्वास्य च धनादिभिः प्रलोभय श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

गो० टी०—तत इत्यादिश्लोकद्वयम् । कौलीने लोकवादे । स्यात्कौलीनं लोकवाद इत्यमरः । कौलीनमेव विशदयति—भक्षित इति । प्रविश्य । समीपं गत्वेत्यर्थः । आश्वास्य रामात्ययजं शोकं निवार्य सान्त्वय मयि प्रीतिं कुर्वित्येवं सान्त्ववादं कथयेत्यर्थः । धनैः सुवर्णैः ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०—उपधया वञ्चनया भूयोऽधिकं सीतायाः शोकोऽनुबन्धो यस्यास्तुपधायां तया । अकामा तादृश्यपि ॥ ३२ ॥

रा० टी०—अनयेति । भूयोऽधिकः शोकानुबन्धः सीताशोकसम्बन्धो यया तया अनया उपधया वञ्चनया नष्टनाथानाथविध्वंसविषयकज्ञाना अकामा इह वासेच्छारहितापि सीता त्वद्वशं गमिष्यति इहैव वत्स्यतीत्यर्थः ॥ ३२ ॥

गो० टी०—अनयेति । उपधया कपटोपायेन । भयशोकानुबन्धया संपादितसीताभयशोकेनेत्यर्थः । अकामा पूर्वं त्वदनभिलाषिणी ॥ ३२ ॥

३३ ] ति० टी०—रमणीयमनुवर्तितुं योग्यम् ॥ ३३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—रमणीयमिति । सा सीता भर्तारं विनष्टमधिगम्य ज्ञात्वा नैराश्यात्स्त्रीलघुत्वात् स्त्रीत्वप्रयुक्तलघुस्वभावात् नैराश्याद्धेतोः त्वद्वशं प्रतिपत्स्यते राक्षसकर्तृकभक्षणभिया स्वरक्षार्थं त्वदधीना भविष्यतीत्यर्थः एतेन तस्मिन्समये रामो जीवतीति वृत्तान्तमुक्त्वा तद्द्वारा रामोपि त्वद्वशगो भविष्यतीति सूचितम् ॥ ३३ ॥

गो० टी०—रञ्जनीयमिति । स्त्रीलघुत्वात् स्त्रीचापलात् ३३

३४ ] ति० टी०—गमिष्यति । त्वद्वशत्वमिति शेषः ॥३४॥

रा० टी०—सेति । पुरा पूर्वं सुखसंवृद्धा अत एव सुखार्हा दुःखकर्षिता इदानींतनदुःखाक्रांता सीता सुखं रामस्याप्यानन्दं सर्वथा त्वदधीनं ज्ञात्वोपगमिष्यति रामं तद्वशं प्रापयिष्यति ॥ ३४ ॥

गो० टी०—सेति । त्वय्यधीनं त्वयि विषये अधीनं परतन्त्रम् उपगमिष्यति । त्वामिति शेषः ॥ ३४ ॥

३५ ] ति० टी०—एतन्मम दर्शनेन मत्या सुनीतं निश्चितः सुखोपायः, युद्धं तु नोपाय इत्याह—रामं दृष्ट्वैव तद्दर्शनमात्रेणैवानर्थो वधो भवेत्, यदेवमतो युद्धे रामदर्शनार्थं मोत्सुको भूः । इहैव स्थितस्य ते महान्सुखस्य लाभोऽयुद्धेन सेत्स्यति ॥ ३५ ॥

रा० टी०—एतदिति । रामं दृष्ट्वैव अनर्थः त्वद्वधो भवेत्

---

१ च वस्त्विति गो. पाठः । २ पेयमिति गो. पाठः । ३ सान्त्वयेति गो. पाठः । ४ भयेति गो. पाठः । ५ रञ्जनीयमिति गो.पाठः । ६ उपेति गो. रा. पाठः ।

अनष्टसैन्यो ह्यनवाप्तसंशयो रिपुं त्वयुद्धेन जयञ्जनाधिप ।
यशश्च पुण्यं च महान्महीपतिः श्रियं च कीर्तिं च चिरं समश्नुते ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ।

इति भाषमाणं महोदरं निर्भर्त्स्य अहं तु न प्रलपामि कर्म दर्शयामि रणे भवादृशैः प्रियवादिभिः राजशोभा कृता कृतार्थोऽहं योत्स्य इति वदन् कुम्भकर्णः सादरं श्लाघितो भ्रात्रा गृहीतसर्वाङ्गाभरणश्च बहुनिशाचरानुगतः शितशूलभृत्प्राकारं पद्भ्यामेव विलङ्घ्य प्रस्थितस्तदा तच्छूले गृध्रनिपातस्तत्सव्यबाहुकम्पनं चेत्येवमादयोऽनेकविधदुरुत्पाताः समभवन् ॥ १ ॥

स तथोक्तस्तु निर्भर्त्स्य कुम्भकर्णो महोदरम् । अब्रवीद्राक्षसश्रेष्ठं भ्रातरं रावणं ततः ॥ १ ॥
सोऽहं तव भयं घोरं वधात्तस्य दुरात्मनः । रामस्याद्य प्रमार्जामि निर्वैरो हि सुखी भव ॥ २ ॥
गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः । पश्य संपद्यमानं तु गर्जितं युधि कर्मणा ॥ ३ ॥
न मर्षयन्ति चात्मानं संभावयितुमात्मना । अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ ४ ॥

---

अतः उत्सुकः युद्धे रामदर्शनविषयकोत्कटेच्छावान् त्वं मा भूः अयुद्धेन युद्धाभावेनैव महान् ते सुखस्य लाभः इहैव सेत्स्यति मम दर्शनेन बुद्ध्या एतत्सुनीतं निश्चितम् ॥ ३९ ॥

गो० टी०—उक्तमर्थं निगमयति—एतदिति । एतत् मम दर्शनेन बुद्ध्या सुनीतं निर्णीतम् रामं दृष्ट्वा स्थितस्य तव अनर्थो भवेत् मोत्सुको भूः मारणोत्सुको भूः । अयुद्धेन युद्धव्यतिरिक्तासनबलेन प्रसज्य प्रतिषेधेऽपि समासस्येष्टत्वात् साधुः ॥३९॥

३६ ] ति० टी०—स्वोक्तोपायानुष्ठानमेव ते सुखावहमित्युपसंहरति—अनष्टेति ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

रा० टी०—उपसंहरन्नाह—अनष्टेति । अयुद्धेन रिपून् जयन् अत एव न नष्टं सैन्यं यस्य अत एव अनवाप्तसंशयो महीपतिः यशः प्रभृतीनि चिरं समश्नुते प्राप्नोति ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

गो० टी०—तदेवायुद्धं स्तौति—अदृष्टेति । अदृष्टसैन्यः अदृष्टशत्रुसैन्यः अत एवानवाप्तसंशयः अप्राप्तप्राणसंदेहः अयुद्धेन जयन् युद्धव्यतिरिक्तोपायेन जयन्नित्यर्थः । महत् पुण्यं पुण्यफलं सुखम् श्रियं श्रीमत्प्रियालाभेन जनितां संपदम् कीर्तिं प्रसादम् विस्तारं वा कीर्तिः प्रसादे यशसि कर्दमे विस्तृतावपि इति रत्नमाला । महीपते इति संबोधनम् सीतानुरागाभावेन नैराश्याद्रामः स्वयं विनश्यतीति महोदरहृदयम् ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥ ६४ ॥

१ ] ति० टी०—स तथोक्त इति । दुरू न कर्तव्यमित्युक्तः ॥ १ ॥

रा० टी०—महोदरवचनश्रवणानन्तरकालिकं कुम्भकर्णवृत्तान्तमाह—स इत्यादिभिः । ततस्तस्मिन्समये महोदरेण तथोक्तः कुम्भकर्णः महोदरं निर्भर्त्स्य रावणमब्रवीत् ॥ १ ॥

गो० टी०—अथ युद्धाय कुम्भकर्णनिर्याणं पञ्चषष्टितमे—स तथोक्तस्त्वित्यादि । निर्भर्त्स्य गर्जन्तीत्यादिवक्ष्यमाणप्रकारेणेति शेषः ॥ १ ॥

२ ] ति० टी०—निर्वैरोऽशत्रुः ॥ २ ॥

रा० टी०—तदाकारमाह—स इत्यादिभिः । तव भयं रामस्य वधात् प्रमार्जामि अतः त्वं निर्वैरः रिपुरहितस्सन् सुखी भव ॥ २ ॥

गो० टी०—सोऽहमिति । प्रमार्जामि । निवर्तयिष्यामीत्यर्थः वर्तमानसामीप्ये वर्तमानवत् प्रयोगः ॥ २ ॥

३ ] ति० टी०—वृथा न गर्जन्ति शत्रोरसमक्षं स्वशौर्यं वृथा न कत्थन्ते युधि कर्मणा संपद्यमानं तु मे गर्जितं पश्य ॥३॥

रा० टी०—मदुक्तं न मृषैवेति बोधयन्नाह—गर्जन्तीति । निर्जलाः तोयदा इव वृथा न गर्जन्ति सार्थमेव गर्जन्तीत्यर्थः अतः कर्मणा संपद्यमानं संयुक्तं मे गर्जितं पश्य जानीहि ॥३॥

गो० टी०—गर्जन्तीति । वृथा कर्मणा विना मया तु कर्मणा संपाद्यमानं गर्जितं पश्य गर्जितानुसारेण कर्म करोमीत्यर्थः ॥ ३ ॥

४ ] ति० टी०—आत्मनात्मानं सम्भावयितुं श्लाघयितुं न मर्षयन्ति न सहन्ते नेच्छन्तीति यावत् । अपि त्वदर्शयित्वा वाचा स्वसामर्थ्यमप्रकाश्य दुष्करं कर्म कुर्वन्ति ॥ ४ ॥

रा० टी०—नेति । आत्मना आत्मानं सम्भावयितुं प्रशं-

---

१ अदृष्टेति गो. पाठः । २ रिपूनिति गो. रा. पाठः । ३ नराधिप इति गो. जनाधिप इति रा. पाठः । ४ महीपते इति गो. पाठः । ५ संपाद्यमानमिति गो. पाठः । ६ मर्षयतीति गो. पाठः । ७ भाषपतिनेति गो. पाठः ।

विक्लवानां ह्यबुद्धीनां राज्ञां पण्डितमानिनाम् । रोचते त्वद्वचो नित्यं कथ्यमानं महोदर ॥ ५ ॥
युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः । राजानमनुगच्छद्भिः सर्वं कृत्यं विनाशितम् ॥ ६ ॥
राजशेषा कृता लङ्का क्षीणः कोशो बलं हतम् । राजानमिममासाद्य सुहृच्चिह्नममित्रकम् ॥ ७ ॥
एष निर्याम्यहं युद्धमुद्यतः शत्रुनिर्जये । दुर्नयं भवतामद्य समीकर्तुं महाहवे ॥ ८ ॥
एवमुक्तवतो वाक्यं कुम्भकर्णस्य धीमतः । प्रत्युवाच ततो वाक्यं प्रहसन्राक्षसाधिपः ॥ ९ ॥
महोदरोऽयं रामात्तु परित्रस्तो न संशयः । नहि रोचयते तात युद्धं युद्धविशारद ॥ १० ॥
कश्चिन्मे त्वत्समो नाऽस्ति सौहृदेन बलेन च । गच्छ शत्रुवधाय त्वं कुम्भकर्णजयाय च ॥ ११ ॥
शयानः शत्रुनाशार्थं भवान्संबोधितो मया । अयं हि कालः सुमहान्राक्षसानामरिंदम ॥ १२ ॥
संगच्छ शूलमादाय पाशहस्त इवान्तकः । वानरान्राजपुत्रौ च भक्षयादित्यतेजसौ ॥ १३ ॥

सितुं शूरा न मर्षयन्ति इच्छन्ति अतः अदर्शयित्वा स्वपराक्रममबाधयित्वा दुष्करं कर्म कुर्वन्ति ॥ ४ ॥

गो० टी०—न मर्षयतीति । शूराः परकृतामवमानोक्तिम् न मर्षयति न मर्षयन्ति न सहन्ते आत्मना स्वयम् आत्मानं न संभावयति न संभावयन्ति न बहु मन्यन्ते उभयत्रापि व्यत्ययेनैकवचनम् । किं तु अदर्शयित्वा अप्रकाश्य आत्मपौरुषमनुक्त्वेत्यर्थः । दुष्करमपि कर्म कुर्वन्ति ॥ ४ ॥

५ ] ति० टी०—अशूरस्वरूपवैक्लव्यादिगुणानां त्वद्वचो युद्धनिवृत्तिपरं रोचते न तु वीराणामित्यर्थः । 'शृण्वतां सादितमिदं त्वद्विधानाम्' इति पाठे विक्लवत्वादिगुणानां त्वद्विधानां वचः शृण्वतामिदं सादितम् ईदृशं दुःखं प्राप्तं भवतीत्यर्थ इति तीर्थः ॥ ५ ॥

रा० टी०—महोदरं प्रत्याह—विक्लवानामिति । हे महोदर ! कथ्यमानं त्वद्वचः अबुद्धीनां राज्ञां रोचते रावणाय न रोचते इत्यर्थः ॥ ५ ॥

गो० टी०—विक्लवानामिति । अत्र पञ्चम्यर्थे षष्ठी । सादितमिति भावे निष्ठा विक्लवेभ्यः कातरेभ्यः अबुद्धिभ्यः पण्डितमानिभ्यः त्वद्विधेभ्यः शृण्वता राज्ञा इदमीदृशम् सादितं प्राप्तं भवति ॥ ५ ॥

६ ] ति० टी०—एवमादिपापिष्ठमन्त्रैरयं राजा नाशित इत्याह—युद्ध इति । युद्धे प्राप्तकाले सति कापुरुषैः कुत्सितैर्भीरुभिः पुरुषैः प्राप्तमन्त्रकाले प्रियवादिभिः, अत एव तदा राजानमनुगच्छद्भिर्भवद्भिरेतद्राज्ञः सर्वं कृत्यं नाशितमित्यर्थः॥६॥

रा० टी०—युद्ध इति । प्रियवादिभिः अहितमपि प्रियत्वेनोक्तवद्भिः अत एव कापुरुषैः भवद्भिः सर्वं कृत्यं रावणस्य कर्तव्यं विनाशितम् ॥ ६ ॥

गो० टी०—इदंशब्दनिर्दिष्टं दर्शयति—युद्ध इति । युद्धे कापुरुषैः युद्धभीरुभिरित्यर्थः । राजानमनुगच्छद्भिः राजेच्छानुसारिभिरित्यर्थः । एतत् प्रकृतयुद्धपर्यवसायि सीताहरणकृत्यं सादितं संपादितम् ॥ ६ ॥

७ ] ति० टी०—किं नाशितं तदाह—राजशेषेति । यदेवमतो राजानमिममासाद्य सुहृच्चिह्नं सौहार्दप्रच्छादितम् अमित्रकम् अमित्रकार्यं कृतमिति शेषः ॥ ७ ॥

रा० टी०—राजेति । इमं रावणमासाद्य मंत्रित्वेन प्राप्य लङ्का राजशेषा विनाशितबहुमहाबलेत्यर्थः कृता कोशः क्षीणः क्षपितः अत एव बलं सामर्थ्यं हतं विनाशितम् अत एव सुहृच्चिह्नं सुहृत्त्वेन प्रतिभासमानममित्रकं शत्रुस्त्वमसीति शेषः॥७॥

गो० टी०—राजशेषेति । अत्राप्यनुगच्छद्भिः भवद्भिरित्यनुषञ्जनीयम् सुहृच्चिह्नं सुहृद्व्यपदेश्यम् अमित्रकं भवताममित्रभूतम् इमं राजानमासाद्य अनुगच्छद्भिः भवद्भिः लङ्का राजशेषा कृता । अकार्यप्रवृत्तो राजा यैर्न निवार्यते स तेषाममित्र इत्यभिप्रायेण अमित्रकमित्युक्तम् ॥ ७ ॥

८ ] ति० टी०—किं वृथाप्रलापेन, इदानीं युद्धस्यैव न्याय्यत्वात्तदेव करोमीत्याह—एष इति । युद्धं प्रत्युद्यतोऽहं शत्रुनिर्जये तन्निमित्तं निर्यामि भवतां दुर्मन्त्रिणां दुर्नयं दुर्मन्त्रमूलानर्थमाहवेन समीकर्तुं यामीत्यनुकर्षः ॥ ८ ॥

रा० टी०—एष इति । भवतां दुर्नयं समीकर्तुं योद्धुमुद्यतः एषोहं शत्रुनिर्जये शत्रूणां निर्जयार्थम् निर्यामि ॥ ८ ॥

गो० टी०—एष इति । दुर्नयं समीकर्तुम् शत्रुनिर्जये तद्विनाश इत्यर्थः । उद्यतः उद्युक्तः सन् युद्धं युद्धभूमिं प्रति एष निर्यामि अद्यैव निर्यास्यामीत्यर्थः ॥ ८–११ ॥

९ ] ति० टी०—धीमत इति । श्रुत्वेति शेषः ॥ ९ ॥

रा० टी०—एवमिति । एवमुक्तवतः कुम्भकर्णस्य वाक्यं श्रुत्वेति शेषः राक्षसाधिपः प्रत्युवाच ॥ ९ ॥

१०–११ ] ति० टी०—प्रहासाशयं स्वयमेवाह—महोदरोऽयमिति । तातेत्युपलालने ॥ १० ॥ ११ ॥

रा० टी०—तदाकारमाह—महोदर इत्यादिभिः । अयं महोदरः रामात्परित्रस्तः अत एव युद्धं न रोचयते इच्छति॥१०॥

रा० टी०—कश्चिदिति । सौहृदादिना त्वत्समः मे कश्चिन्नास्ति अत एव त्वं गच्छ ॥ ११ ॥

१२–१३ ] ति० टी०—अयं कालः युद्धगमनायेति शेषः ॥ १२ ॥ १३ ॥

१ अबुद्धीनामिति गो. रा. पाठः । २ राज्ञेति गो. पाठः । ३ शृण्वतासादितमिदं त्वद्विधानामिति गो. पाठः । ४ कृत्यमेतद्धि सादितमिति गो. पाठः । ५ तस्मात्तुभयनाशार्थमिति गो. पाठः । ६ तद्गच्छेति गो. त्वंगच्छेति रा. पाठः ।

समालोक्य तु ते रूपं विद्रविष्यन्ति वानराः । रामलक्ष्मणयोश्चापि हृदये प्रस्फुटिष्यतः ॥ १४ ॥
एवमुक्त्वा महातेजाः कुम्भकर्णं महाबलम् । पुनर्जातमिवात्मानं मेने राक्षसपुंगवः ॥ १५ ॥
कुम्भकर्णबलाभिज्ञो जानंस्तस्य पराक्रमम् । बभूव मुदितो राजा शशाङ्क इव निर्मलः ॥ १६ ॥
इत्येवमुक्तः संहृष्टो निर्जगाम महाबलः । राज्ञस्तु वचनं श्रुत्वा योद्धुमुद्युक्तवांस्तदा ॥ १७ ॥
आददे निशितं शूलं वेगाच्छत्रुनिबर्हणः । सर्वं कालायसं दीप्तं तप्तकाञ्चनभूषणम् ॥ १८ ॥
इन्द्राशनिसमप्रख्यं वज्रप्रतिमगौरवम् । देवदानवगन्धर्वयक्षपन्नगसूदनम् ॥ १९ ॥
रक्तमाल्यमहादामं स्वतश्चोद्गतपावकम् । आदाय विपुलं शूलं शत्रुशोणितरञ्जितम् ॥ २० ॥
कुम्भकर्णो महातेजा रावणं वाक्यमब्रवीत् । गमिष्याम्यहमेकाकी तिष्ठत्विह बलं महत् ॥ २१ ॥
अद्य तान्क्षुधितः क्रुद्धो भक्षयिष्यामि वानरान् । कुम्भकर्णवचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥ २२ ॥
सैन्यैः परिवृतो गच्छ शूलमुद्गरपाणिभिः । वानरा हि महात्मानः शूराः सुव्यवसायिनः ॥ २३ ॥
एकाकिनं प्रमत्तं वा नयेयुर्दशनैः क्षयम् । तस्मात्परमदुर्धर्षैः सैन्यैः परिवृतो व्रज ॥
रक्षसामहितं सर्वं शत्रुपक्षं निषूदय ॥ ॥ २४ ॥
अथासनात्समुत्पत्य स्रजं मणिकृतान्तराम् । आबबन्ध महातेजाः कुम्भकर्णस्य रावणः ॥ २५ ॥

रा० टी०—शयान इति । राक्षसानामयं सुमहान् कालः प्राप्त इति शेषः अत एव शयानो भवान् शत्रुनाशार्थं मया संबोधितः ॥ १२ ॥

रा० टी०—त्वमिति । पाशहस्तोऽन्तक इव शूलमादाय त्वं गच्छ तत्प्रयोजनमाह भक्षय च ॥ १३ ॥

गो० टी०—तस्मादिति । तस्मात् भवतो निःसमत्वात् । संबोधितः प्रबोधितः अयं हि कालः युद्धायेति शेषः ॥१२-१४॥

१४-१७ ] ति० टी०—प्रस्फुटिष्यतो विदीर्णे भविष्यतः ॥ १४-१७ ॥

रा० टी०—समालोक्येति । ते रूपं समालोक्य वानराः विद्रविष्यन्ति पलायिष्यन्ते अत एव रामलक्ष्मणयोरपि हृदये प्रस्फुटिष्यतः ॥ १४ ॥

रा० टी०—एवमिति । राक्षसपुङ्गवः कुम्भकर्णमेव मुक्त्वा आत्मानं पुनर्जातमिव मेने ॥ १५ ॥

रा० टी०—कुम्भकर्णेति । कुम्भकर्णबलाभिज्ञो रावणः तस्य कुम्भकर्णस्य पराक्रमं जानन् संस्मरन् सन् निर्मलः शशांक इव मुदितो बभूव ॥ १६ ॥

गो० टी०—एवमिति । पुनर्जातमिव मेने जेष्यत्ययमिति विश्वासादिति भावः ॥ १५ ॥ १६ ॥

रा० टी०—इतीति । इत्येवमुक्तः कुम्भकर्णो निर्जगाम अर्थं पृथक् राज्ञो वचनं श्रुत्वा निश्चित्य योद्धुमुद्युक्तवान् कुम्भकर्णो निशितं शूलमाददे ॥ १७ ॥

गो० टी०—इत्येवमित्यर्धम् । निर्जगाम निर्गन्तुमुद्युक्तः ॥१७

गो० टी०—राज्ञस्त्वित्यादि । सर्वकालायसम् बहुकार्ष्णायसमयमित्यर्थः । महाधाम महातेजः । स्वतश्चोद्गतपावकं क्रौर्यात् स्वत एवोत्पन्नाग्निकणम् ॥ १८-२२ ॥

१८ ] ति० टी०—सर्वं कालायसं, सर्वेष्ववयवेषु दण्डादिष्वपि कालायसनिर्मितम् ॥ १८ ॥

१९ ] ति० टी०—इन्द्राशनिसमा प्रख्या कान्तिर्यस्य तम् १९

२०-२४ ] ति० टी०—रक्तमाल्यान्येव महादामानि यस्य तम्, स्वतश्चोद्गतपावकमुद्गताचिषम् ॥ २०-२४ ॥

रा० टी०—सर्वमिति । सर्वं प्रत्यवयवं कालायसं तन्निर्मितं तप्तकांचनमयानि भूषणानि यस्मिन् तम् वज्रप्रतिमं वज्रसदृशं गौरवं गुरुत्वं यस्य देवादीनां सूदनं रक्तमाल्यमयानि महादामानि यस्मिन् स्वत उद्गतः पावको यस्मात् शत्रुशोणितेन रञ्जितं शूलमादाय कुम्भकर्णोऽब्रवीत् अर्धषट्कमेकान्वयि ॥ १८-२० ॥

रा० टी०—तदाकारमाह—गमिष्यामीति । अहमेकाक्येव गमिष्यामि बलं तु इहैव तिष्ठतु अर्धं पृथक् ॥ २१ ॥

रा० टी०—अद्येति । अद्य क्षुधितोऽहं वानरान् भक्षयिष्यामि कुम्भकर्णवचः श्रुत्वा रावणोऽब्रवीत् ॥ २२ ॥

रा० टी०—तदाकारमाह—सैन्यैरिति । सैन्यैः परिवृतस्त्वं गच्छ हि यतः महात्मानो वानराः एकाकिनं प्रमत्तं च त्वां दशनैः क्षयं नयेयुः सार्धश्लोक एकान्वयी ॥ २३ ॥

रा० टी०—तस्मादिति । तस्मादुक्तहेतोः सैन्यैः परिवृतस्त्वं व्रज रक्षसां पक्षं रक्षस्य शत्रुपक्षं निषूदय च ॥ २४ ॥

गो० टी०—सैन्यैरित्यादि । महात्मानः महाबुद्धयः । शीघ्राः वेगवन्तः सुव्यवसायिनः दृढनिश्चयाः ॥ २३ ॥ २४ ॥

२५ ] ति० टी०—स्रजं काञ्चनीं मणिकृतान्तरां मणिरचितमध्यदेशाम् ॥ २५ ॥

रा० टी०—अथेति । रावणः आसनात्समुत्पत्य उत्थाय

१ कुम्भकर्णः समुक्त इति गो. पाठः । २ सर्वं कालायसमिति गो. पाठः । ३ समं भीममिति गो. पाठः । ४ किंचरेति गो. पाठः । ५ रक्तमाल्यमहाधामेति गो. पाठः । ६ निशितमिति गो. पाठः । ७ ममेति गो. पाठः ।

अङ्गदान्यङ्गुलीवेष्टान्वराण्याभरणानि च । हारं च शशिसंकाशमाबबन्ध महात्मनः ॥ २६ ॥
दिव्यानि च सुगन्धीनि माल्यदामानि रावणः । गात्रेषु सज्जयामास श्रोत्रयोश्चास्य कुण्डले ॥ २७ ॥
काञ्चनाङ्गदकेयूरनिष्काभरणभूषितः । कुम्भकर्णो बृहत्कर्णः सुहुतोऽग्निरिवाबभौ ॥ २८ ॥
श्रोणीसूत्रेण महता मेचकेन विराजता । अमृतोत्पादने नद्धो भुजंगेनेव मन्दरः ॥ २९ ॥
स काञ्चनं भारसहं निवातं विद्युत्प्रभं दीप्तमिवात्मभासा ।
आबध्यमानः कवचं रराज संध्याभ्रसंवीत इवाद्रिराजः ॥ ॥ ३० ॥
सर्वाभरणसर्वाङ्गः शूलपाणिः स राक्षसः । त्रिविक्रमकृतोत्साहो नारायण इवाबभौ ॥ ३१ ॥
भ्रातरं संपरिष्वज्य कृत्वा चापि प्रदक्षिणम् । प्रणम्य शिरसा तस्मै प्रतस्थे स महाबलः ॥ ३२ ॥
[ निष्पतन्तं महाकायं महानादं ] महाबलम् ।
तमाशीर्भिः प्रशस्ताभिः प्रेषयामास रावणः । शङ्खदुन्दुभिनिर्घोषैः सैन्यैश्चापि वरायुधैः ॥ ३३ ॥
तं गजैश्च तुरंगैश्च स्यन्दनैश्चाम्बुदस्वनैः । अनुजग्मुर्महात्मानो रथिनो रथिनां वरम् ॥ ३४ ॥

---

मणिभिः कृतो रचितः अन्तरो मध्यप्रदेशो यस्याः तां स्रजं स्वर्णमालां कुम्भकर्णस्य आबबन्ध गले सन्धारयामास ॥२५॥

गो० टी०—अर्थेति । स्रजं काञ्चनमालाम् । कुम्भकर्णस्य आबबन्ध कुम्भकर्णं आबबन्धेत्यर्थः ॥ २५ ॥

२६-२७ ] ति० टी०—अङ्गुलीवेष्टानङ्गुलीयकानि॥२६-२७॥

रा० टी०—अङ्गदानीति । महात्मनः कुम्भकर्णस्य अङ्गदादीनि आबबन्ध तत्राङ्गुलीवेष्टाः अङ्गुलीयकाः ॥ २६ ॥

रा० टी०—दिव्यानीति । रावणः अस्य कुम्भकर्णस्य गात्रेषु सुगन्धीनि शोभनगन्धविशिष्टानि दिव्यानि माल्यदामानि सज्जयामास श्रोत्रयोश्च कुण्डले सज्जयामास ॥ २७ ॥

गो० टी०—अङ्गदानीति। अङ्गुलीवेष्टान् अङ्गुलीयकानि २६

गो० टी०—दिव्यानीति । आसञ्जयामास बबन्धेत्यर्थः । अत्र केयूरादीनामप्युपलक्षणम् । काञ्चनाङ्गदकेयूर इत्यनुवादात् ॥ २७ ॥ २८ ॥

२८ ] ति० टी०—निष्कमुरोभूषणम् ॥ २८ ॥

रा० टी०—काञ्चनेति । बृहत्कर्णः कुम्भकर्णः सुहुतोऽग्निरिवाबभौ ॥ २८ ॥

२९ ] ति० टी०—श्रोणीसूत्रं कटिसूत्रम् ॥ २९ ॥

रा० टी०—श्रोणीति । मेचकेन कृष्णवर्णेन विराजता अतिशोभमानेन श्रोणीसूत्रेणोपलक्षितः कुम्भकर्णः अमृतोत्पादने तत्समये भुजंगेन नद्धो मन्दर इव आबभावित्युत्प्रेक्ष्यते २९

गो० टी०—श्रोणीसूत्रेणेति । अमृतोत्पादने नद्ध इति निमित्तसप्तमी । भुजङ्गेन वासुकिना ॥ २९ ॥

३० ] ति० टी०—भारसहं युद्धेऽभिघातसहम् । निवातम् । शस्त्राभेद्यं तु यद्वर्म तन्निवातमुदाहृतम्' । आबध्यमान आबध्नन् आर्षो विकरणव्यत्ययः ॥ ३० ॥

रा० टी०—स इति । भारसहमायुधाघातमगणयन्तमित्यर्थः, आत्मभासा दीप्तं प्रज्वलितमिव अत एव विद्युत्प्रभं काञ्चनं निवातं शस्त्रैरभेद्यं कवचमाबध्यमानः कुम्भकर्णः सन्ध्याभ्रेण संवीतस्संयुक्तोऽद्रिराज इव रराज 'शस्त्राभेद्यं तु यद्वर्म तन्निवातमुदाहृत'मिति कोशः ॥ ३० ॥

गो० टी०—स इति । भारसहम् आयुधादिभिः प्रहारेष्वशिथिलमित्यर्थः । दृढमिति वार्थः । यद्वा उपनीतायां तुलायां स्थाप्यमानान् बहून् भारान् सहत इति भारसहः अनेकभारपरिमाण इत्यर्थः । निवातं वातप्रवेशनिवारकम् निरन्तरमिति यावत् । आत्मभासा कवचकान्त्या यद्वा निवातं शस्त्राभेद्यम् । निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् इत्यमरः । आबध्यमानः आबध्नन् । आर्षविकरणव्यत्ययेन श्यन्प्रत्ययः ॥ ३० ॥

३१-३३ ] ति० टी०—सर्वाभरणसर्वाङ्गः सर्वाभरणयुक्तसर्वाङ्गः । ' नद्धाङ्गः ' इति पाठान्तरम् । त्रिषु विक्रमेषु पादन्यासेषु कृतोत्साहः ॥ ३१-३३ ॥

३४ ] ति० टी०—अम्बुदस्वनैः स्यन्दनैश्च सह प्रेषयामासेति योजना ॥ ३४ ॥

रा० टी०—सर्वेति । सर्वैराभरणैर्युक्तानि सर्वाङ्गानि यस्य स राक्षसः त्रिषु लोकेषु विक्रमाय पादन्यासाय कृतः उत्साहो येन स नारायण इवाबभौ ॥ ३१ ॥

रा० टी०—भ्रातरमिति । भ्रातरं रावणं संपरिष्वज्य तस्मै तमनुकूलयितुं प्रतस्थे ॥ ३२ ॥

रा० टी०—तमिति । प्रशस्ताभिराशीर्भिर्योजितं तं कुम्भकर्णं रावणः प्रेषयामास अर्धं पृथक् ॥ ३३ ॥

रा० टी०—शङ्खेति । महात्मानो राक्षसाः शङ्खादिघोषविशिष्टैः वरायुधैः सैन्यैः अम्बुदस्वनैर्गजादिभिश्च तं कुम्भकर्णमनुजग्मुः सार्धश्लोक एकान्वयी ॥ ३४ ॥

---

१ श्रोत्रे चासंजयामास श्रीमती इति गो. पाठः । २ व्यराजतेति गो. पाठः । ३ संप्रतस्थ इति गो. पाठः । ४ इदमर्धमधिकं गो. पाठे ।

सर्पैरुष्ट्रैः खरैश्चैव सिंहद्विपमृगद्विजैः। अनुजग्मुश्च तं घोरं कुम्भकर्णं महाबलम् ॥ ३५ ॥
स पुष्पवर्षैरवकीर्यमाणो धृतातपत्रः शितशूलपाणिः।
महोत्कटः शोणितगन्धमत्तो विनिर्ययौ दानवदेवशत्रुः ॥ ॥ ३६ ॥
पदातयश्च बहवो महानादा महाबलाः। अन्वयू राक्षसा भीमा भीमाक्षाः शस्त्रपाणयः ॥ ३७ ॥
रक्ताक्षाः सुबहुव्यामा नीलाञ्जनचयोपमाः। शूलानुद्यम्य खङ्गांश्च निशितांश्च परश्वधान् ॥ ३८ ॥
भिन्दिपालांश्च परिघान्गदाश्च मुसलानि च। तालस्कन्धांश्च विपुलान्क्षेपणीयान्दुरासदान् ॥ ३९ ॥
अथान्यद्वपुरादाय दारुणं घोरदर्शनम्। निष्पपात महातेजाः कुम्भकर्णो महाबलः ॥ ४० ॥
धनुःशतपरिणाहः स षट्शतसमुच्छ्रितः। रौद्रः शकटचक्राक्षो महापर्वतसंनिभः ॥ ४१ ॥
संनिपत्य च रक्षांसि दग्धशैलोपमो महान्। कुम्भकर्णो महावक्त्रः प्रहसन्निदमब्रवीत् ॥ ४२ ॥
अद्य वानरमुख्यानां तानि यूथानि भागशः। निर्दहिष्यामि संक्रुद्धः पतङ्गानिव पावकः ॥ ४३ ॥
नापराध्यन्ति मे कामं वानरा वनचारिणः। जातिरस्मद्विधानां सा पुरोद्यानविभूषणम् ॥ ४४ ॥
पुररोधस्य मूलं तु राघवः सहलक्ष्मणः। हते तस्मिन्हतं सर्वं तं वधिष्यामि संयुगे ॥ ४५ ॥

---

गो० टी०—सर्वेति। सर्वाभरणसर्वाङ्गः सर्वाभरणयुक्तसर्वाङ्गः। त्रिविक्रमकृतोत्साहः त्रिषु विक्रमेषु पदन्यासेषु कृतोत्साहः ॥ ३१–३६ ॥

३५–३७ ] ति० टी०—अनुजग्मुरिति। रावणप्रेषिता इति शेषः सर्पादिभिर्वाहनैर्जग्मुः ॥ ३५–३७ ॥

३८–३९ ] ति टी०—सकरयोर्बाह्वोस्ततयोस्तिर्यगन्तरालं व्यामः सुबहुव्यामाः सुतरां बहुव्यामप्रमाणाः ॥ ३८ ॥ ३९ ॥

रा० टी०—सर्पैरिति। सर्पादिभिर्वाहनैः कुम्भकर्णमनुजग्मुः ॥ ३५ ॥

गो० टी०—सर्पैरिति। सर्पादीनां महाशरीराणां वाहनत्वं संभवतीति बोध्यम्। द्विपाः गजाः। द्विजाः हंसादयः ॥ ३६ ॥

रा० टी०—स इति। शिति कृष्णं शूलं पाणौ यस्य महोत्कटोऽतिभयङ्करः शोणितगन्धेन मत्तः स कुम्भकर्णः पुष्पवर्षैरवकीर्यमाणस्सन् विनिर्ययौ ॥ ३६ ॥

गो० टी०—स इति। मदोत्कटः स्वाभाविकमदेन मत्तः। मत्ते शौण्डोत्कटक्षीबा इत्यमरः ॥ ३७ ॥

रा० टी०—पदातय इति। पदातयो बहवो राक्षसाः शूलादीनुद्यम्य अन्वयुः अर्द्धषट्कमेकान्वयि तत्र सुबहुव्यामाः सुबहुव्यामपरिमिताः तथाचामरः व्यामोबाह्वोस्सकरयोस्ततयोस्तिर्य्यगन्तरम् ॥ ३७–३९ ॥

गो० टी०—पदातयश्चेत्यादि। बहुव्यामान् अनेकव्यामप्रमाणान्। व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् इत्यमरः। तालस्कन्धान् तालकाण्डान् ॥ ३८–४१ ॥

४० ] ति० टी०—अथान्यत्सालंकारसौम्यादन्यत् ॥ ४० ॥

रा० टी०—अथेति। अन्यत् शृङ्गारवैलक्षण्याद्विलक्षणं वपुरादाय कुम्भकर्णो निष्पपात ॥ ४० ॥

४१ ] ति० टी०—तस्यैव प्रदर्शनम्—धनुःशतेति। परिणाहो विशालता। तिर्यग्देहप्रमाणमिदम् षट्शतधनुःप्रमाण ऊर्ध्वोच्छ्रायः ॥ ४१ ॥

४२–४३ ] ति० टी०—संनिपत्य व्यूह्य ॥ ४२ ॥ ४३ ॥

रा० टी०—धनुरिति। धनुश्शतपरीणाहः शतसंख्याकधनुष्परिमितः विस्तृतः सषट्शतसमुच्छ्रितः षट्सहितशतसंख्याकधनुष्परिमितोच्छ्रायविशिष्टः शकटचक्रे इव अक्षिणी यस्य दग्धशैलोपम स्स कुम्भकर्णः इदमब्रवीत् अर्द्धचतुष्टयमेकान्वयि ॥ ४१ ॥ ४२ ॥

गो० टी०—धनुःशतेत्यादि। धनुःशतपरीणाहः धनुःशत विशालः षट्छतसमुच्छ्रितः षट्छतधनुरुच्छ्रायः सन्निपत्य स्वानुगमनायोद्युक्तानां राक्षसानां समीपं गत्वेत्यर्थः ॥ ४२ ॥ ४३॥

रा० टी०—तदाकारमाह—अद्येत्यादिभिः। वानरमुख्यानां यूथानि निर्दहिष्यामि निर्धक्ष्यामि ॥ ४३ ॥

गो० टी०—अद्येत्यादि। सा जातिः वानरजातिः। अस्मद्विधानां क्रीडापराणाम् ॥ ४४–४७ ॥

४४ ] ति० टी०—वानरमुख्यानां यूथानि हनिष्यामीत्युक्त्वा निरपराधास्ते न हन्तव्याः, किं तु राम एव सर्वापराधमूलं हन्तव्य इत्याह—नापराध्यन्तीति। ते नापराध्यन्ति स्वत इति शेषः। किं तु सा जातिर्वानरजातिरस्मद्विधानां पुरोद्यानानां विभूषणमलंकारः ॥ ४४ ॥

रा० टी०—वस्तुतस्तु वानरवधो न न्याय्य इत्याह—नेति। येषां वानराणां सा प्रसिद्धा जातिः अस्मद्विधानां पुरोद्यानविभूषणं भवति ते वानराः कामं स्वेच्छातो मे नापराध्यन्ति एतेन ते न हन्तव्या इति सूचितम् ॥ ४४ ॥

४५ ] ति० टी०—अतस्तैः सह पुररोधस्य मूलं राघव एव हन्तव्यः तस्मिन्हते सर्वं हतं भवति अतस्तमेव युधि वधिष्यामि ॥ ४५ ॥

---

१ अश्वैरिति गो. पाठः। २ नादा इति गो. पाठः। ३ सुमहाकाया इति गो. पाठः। ४ बहुव्यामानिति गो. पाठः।

एवं तस्य ब्रुवाणस्य कुम्भकर्णस्य रक्षसः । नादं चक्रुर्महाघोरं कम्पयन्त इवार्णवम् ॥ ४६ ॥
तस्य निष्पततस्तूर्णं कुम्भकर्णस्य धीमतः । बभूवुर्घोररूपाणि निमित्तानि समन्ततः ॥ ४७ ॥
उल्काशनियुता मेघा बभूवुर्गर्दभारुणाः । ससागरवना चैव वसुधा समकम्पत ॥ ४८ ॥
घोररूपाः शिवा नेदुः सज्वालकवलैर्मुखैः । मण्डलान्यपसव्यानि बबन्धुश्च विहंगमाः ॥ ४९ ॥
निष्पपात च गृध्रोऽस्य शूले वै पथि गच्छतः । प्रास्फुरन्नयनं चास्य सव्यो बाहुरकम्पत ॥ ५० ॥
निष्पपात तदा चोल्का ज्वलन्ती भीमनिःस्वना । आदित्यो निष्प्रभश्चासीन्न वाति च सुखोऽनिलः ॥ ५१ ॥
अचिन्तयन्महोत्पातानुदितान्रोमहर्षणान् । निर्ययौ कुम्भकर्णस्तु कृतान्तबलचोदितः ॥ ५२ ॥
स लङ्घयित्वा प्राकारं पद्भ्यां पर्वतसंनिभः । स ददर्श घनप्रख्यं वानरानीकमद्भुतम् ॥ ५३ ॥
ते दृष्ट्वा राक्षसश्रेष्ठं वानराः पर्वतोपमम् । वायुनुन्ना इव घना ययुः सर्वा दिशस्तदा ॥ ५४ ॥

तद्वानरानीकमतिप्रचण्डं दिशो द्रवद्भिन्नमिवाभ्रजालम् ।
स कुम्भकर्णः समवेक्ष्य हर्षान्ननाद भूयो घनवद्घनाभः ॥ ॥ ५५ ॥
ते तस्य घोरं निनदं निशम्य यथा निनादं दिवि वारिदस्य ।
पेतुर्धरण्यां बहवः प्लवंगा निकृत्तमूला इव शालवृक्षाः ॥ ॥ ५६ ॥

---

रा० टी०—ननु तैरेव लंका अवरुध्यते इति कथमिवमुच्यते इत्यत आह—पुरेति । पुररोधस्य मूलं तु राघवः अतस्तमेव वधिष्यामि ननु स्वामिनोपराधित्वे तत्सेवका अप्यपराधिन एवेति वानरा अपि हन्तव्याः इत्यत आह तस्मिन् मूलभूतरामे हते सति सर्वं हतं निहतमिव भविष्यतीति शेषः ४५

४६–४७ ] ति० टी०—रक्षसः वाक्यं श्रुत्वेति शेषः । नादं चक्रुः राक्षसा इति शेषः ॥ ४६ ॥ ४७ ॥

रा० टी०—एवमिति । कुम्भकर्णस्य एवं ब्रुवाणस्य सतः अर्णवं कम्पयन्त इव राक्षसाः नादं चक्रुः ॥ ४६ ॥

रा० टी०—तस्येति । कुम्भकर्णस्य निष्पततस्सतः घोररूपाणि निमित्तानि बभूवुः ॥ ४७ ॥

गो० टी०—तस्येति । घोररूपाणि अत्यन्तघोराणि ॥४८॥

४८ ] ति० टी०—गर्दभारुणा गर्दभधूम्राः ॥ ४८ ॥

रा० टी०—निमित्ताकारमाह—उल्केत्यादिभिः । गर्दभवदरुणाः धूम्रवर्णाः उल्काशनिभ्यां युताः मेघाः बभूवुः वसुधा समकम्पत च ॥ ४८ ॥

गो० टी०—उल्केत्यादि । गर्दभारुणाः गर्दभवदव्यक्तरागाः अव्यक्तरागस्त्वरुण इत्यमरः । निष्पपातेति । गच्छतोस्य उपरिप्रदेशे गृध्रो मालेव निष्पपातेत्यन्वयः । गृध्र इति जात्येकवचनम् । सव्यशब्दो लिङ्गव्यत्ययेन नयनशब्देनापि संबध्यते कम्पते अकम्पत उल्का मेघनिर्गतज्वालाविशेषः ॥ ४९–५१ ॥

४९ ] ति० टी०—सज्वालकवलैः साङ्गारपिण्डैः ॥ ४९ ॥

रा० टी०—घोरेति । सज्वालकवलैः अंगाररूपकवलसहितैर्मुखैः शिवाः नेदुः विहंगमाः अपसव्यानि दक्षिणक्रमवन्ति मण्डलानि बबन्धुः ॥ ४९ ॥

५०–५१ ] ति० टी०—नयनं वामम् ॥ ५० ॥ ५१ ॥

रा० टी०—निष्पपातेति । अस्य शूलाग्रे गृध्रो निष्पपात सव्यं वामं नयनं प्रास्फुरच्च सव्यो बाहुरकम्पत च सव्य इति लिङ्गविपरिणामेन पूर्वत्राप्यन्वेति ॥ ५० ॥

रा० टी०—निष्पपातेति । अग्रतः उल्का निष्पपात आदित्यो निष्प्रभ आसीत् अनिलस्सुखो न वाति ॥ ५१ ॥

५२ ] ति० टी०—अचिन्तयन्नगणयन् ॥ ५२ ॥

रा० टी०—अचिन्तयन्निति । कृतान्तस्य कालस्य बलेन चोदितः कुम्भकर्णस्तु महोत्पातान् अचिन्तयन्नगणयन् सन् निर्ययौ ॥ ५२ ॥

५३–५६ ] ति० टी०—तद्वहनक्षमवाहनाभावात्पद्भ्यामिति ॥ ५३–५६ ॥

रा० टी०—स इति । स कुम्भकर्णः पद्भ्यां प्राकारं लंघयित्वा अभ्रघनप्रख्यं निबिडाभ्रसदृशं वानरानीकं ददर्श ५३

रा० टी०—ते इति । वानराः राक्षसश्रेष्ठं दृष्ट्वा वायुना नुन्नाः प्रेरिताः घना इव सर्वा दिशो ययुः ॥ ५४ ॥

रा० टी०—तदिति । अतिप्रचण्डमपि वानरानीकं भिन्नमभ्रजालमिव दिशोऽद्रवत् कुम्भकर्णस्तु समवेक्ष्य भूयो ननाद ५५

रा० टी०—ते इति । ते वानराः घोरं निनादं निशम्य निकृत्तमूलाः शालवृक्षा इव धरण्यां पेतुः ॥ ५६ ॥

गो० टी०—स इति । अभ्रघनः अभ्रसंघातः ॥ ५४–५७॥

---

१ राक्षसा इति गो. पाठः । २ मालेव गृध्रोऽस्येति गो. पाठः । ३ न कम्पत इति गो. पाठः । ४ प्रयातीति गो. पाठः । ५ दर्शितानिति गो. पाठः । ६ ददर्शाभ्रेति गो. पाठः ।

विपुलपरिघवान्स कुम्भकर्णो रिपुनिधनाय विनिःसृतो महात्मा ।
कपिगणभयमाददत्सुभीमं प्रभुरिव किंकरदण्डवान्युगान्ते ॥ ॥ ९७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।

नगरादायान्तं भृशं नदन्तं च कुम्भकर्णं विलोक्य प्रद्रुतान्कपीन्नलादीनभिजनवीर्यादीनि विस्मृत्य क्षुद्राइव किं पलायध्व एवं भाषमाणोऽङ्गदो निवर्तयामास कथमपि योद्धुं प्रवृत्तांस्तेन मथितानतएव पर्वताश्रितान्कांश्चिद्वृक्षसमारूढानन्यान्पलायितांश्च हरीन्पुनरप्यङ्गदो वीरधर्मानुपदिश्य स्थिरीचकार ।

स लङ्घयित्वा प्राकारं गिरिकूटोपमो महान् । निर्ययौ नगरात्तूर्णं कुम्भकर्णो महाबलः ॥ १ ॥
ननाद च महानादं समुद्रमभिनादयन् । विजयन्निव निर्घातान्विधमन्निव पर्वतान् ॥ २ ॥
तमवध्यं मघवता यमेन वरुणेन वा । प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥ ३ ॥
तांस्तु विप्रद्रुतान्दृष्ट्वा राजपुत्रोऽङ्गदोऽब्रवीत् । नलं नीलं गवाक्षं च कुमुदं च महाबलम् ॥ ४ ॥
आत्मनस्तानि विस्मृत्य वीर्याण्यभिजनानि च । क्व गच्छत भयत्रस्ताः प्राकृता हरयो यथा ॥ ५ ॥
साधु सौम्या निवर्तध्वं किं प्राणान्परिरक्षथ । नालं युद्धाय वै रक्षो महतीयं विभीषिका ॥ ६ ॥
महतीमुत्थितामेनां राक्षसानां विभीषिकाम् । विक्रमाद्विधमिष्यामो निवर्तध्वं प्लवंगमाः ॥ ७ ॥
कृच्छ्रेण तु समाश्वस्य संगम्य च ततस्ततः । वृक्षान्गृहीत्वा हरयः संप्रतस्थू रणाजिरे ॥ ८ ॥

---

९७ ] ति० टी०—विपुलपरिघवानिति । शलवदिदमप्यस्यायुधम् । किंकरदण्डवान्किंकराः संहारपरिकराः कालदण्डा अस्य सन्ति तथा युगान्ते प्रभुः कालाग्निरुद्र इव विनिःसृतः ॥ ९७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

रा० टी०—विपुलेति । विपुलपरिघवान् अनेकविधपरिघविशिष्टः कुम्भकर्णः कपिगणभयमाददत्सन् युगान्ते किंकरदण्डवान् किंकरीभूतप्रजादण्डदायकः प्रभुः काल इव रिपुनिधनाय विनिःसृतोभवदिति शेषः ॥ ९७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पंचषष्टितमः सर्गः ॥ ६५ ॥

गो० टी०—विपुलेति । प्रभुः अन्तकः किंकरदण्डवान् किंकरोमीत्यवस्थायी सचेतनो दण्डः तद्वान् ॥ ९८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

१ ] ति० टी०—स इति ॥ १ ॥

रा० टी०—लंकानिर्गमनानंतरकालिकं वृत्तान्तमाह—स इत्यादिभिः । कुम्भकर्णो नगरान्निर्ययौ निर्घातान् अशनिरवान् विजयन्निव महानादं ननाद च श्लोकद्वयमेकान्वयि ॥१॥२॥

गो० टी०—अथ कुम्भकर्णयुद्धप्रवृत्तिः—स इत्यादि ॥ १॥

२ ] ति० टी०—निर्घातानशनिघोषान् ॥ २–४ ॥

रा० टी०—तमिति । मघवदादिभिरवध्यमायान्तं कुंभकर्णं प्रेक्ष्य वानराः विप्रदुद्रुवुः ॥ ३ ॥

रा० टी०—तानिति । विप्रद्रुतान् नलादीन् तान् वीक्ष्य अङ्गदोऽब्रवीत् ॥ ४ ॥

गो० टी०—स ननादेति । विधमन् दहन् ॥ २–४ ॥

५ ] ति० टी०—आत्मन आत्मसंबन्धीनि वीर्याणि पराक्रमान् ॥ ५ ॥

रा० टी०—तदाकारमाह—आत्मन इत्यादिभिः । आत्मनो वीर्याणि अभिजनानि स्वजनांश्च विस्मृत्य प्राकृता हरय इव भयत्रस्ता यूयं क्व गच्छत ॥ ५ ॥

गो० टी०—आत्मानमिति । अभिजनानि प्रशस्तकुलानि ॥ ५ ॥

६–८ ] ति० टी०—एतद्रक्षो युद्धायास्माभिर्नालं न समर्थम् ॥ ६–८ ॥

रा० टी०—साध्विति । हे सौम्याः यूयं निवर्तध्वं प्राणान् किं किमर्थं परिरक्षथ ननु अतिबलवतो रक्षोभितैवेत्यत आह महती विभीषिका भयप्रापकप्रतिमेवेयं रक्षः युद्धाय अलं पर्याप्तं न ॥ ६ ॥

रा० टी०—महतीमिति । राक्षसानां मध्ये विभीषिका मुत्थितामेनां वयं विधमिष्यामः ॥ ७ ॥

रा० टी०—कृच्छ्रेणेति । कृच्छ्रेण अतिकष्टेन समाश्वस्य

---

१ वालीति गो. पाठः । २ आत्मानमत्रेति गो. पाठः । ३ वृक्षाद्रिहस्ता इति गो. पाठः । ४ अजिरमिति गो. पाठः ।

ते निवर्त्य[1] तु संरब्धाः कुम्भकर्णं वनौकसः । निजघ्नुः[2] परमक्रुद्धाः समदा इव कुञ्जराः ॥ ९ ॥
प्रांशुभिर्गिरिशृङ्गैश्च शिलाभिश्च महाबलाः[3] । पादपैः पुष्पिताग्रैश्च हन्यमानो न कम्पते ॥ १० ॥
तस्य गात्रेषु पतिता भिद्यन्ते बहवः[4] शिलाः । पादपाः पुष्पिताग्राश्च भग्नाः पेतुर्महीतले ॥ ११ ॥
सोऽपि सैन्यानि संक्रुद्धो वानराणां महौजसाम् । ममन्थ परमायत्तो वनान्यग्निरिवोत्थितः ॥ १२ ॥
लोहितार्द्रास्तु बहवः शेरते वानरर्षभाः । निरस्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः ॥ १३ ॥
लङ्घयन्तः प्रधावन्तो वानरा नावलोकयन् । केचित्समुद्रे पतिताः केचिद्गगनमास्थिताः ॥ १४ ॥
वध्यमानास्तु ते वीरा राक्षसेन च[5] लीलया । सागरं येन ते तीर्णाः पथा तेनैव[6] दुद्रुवुः ॥ १५ ॥
ते स्थलानि तदा निम्नं विवर्णवदना भयात् । ऋक्षा वृक्षान्समारूढाः केचित्पर्वतमाश्रिताः ॥ १६ ॥
[ [7]ममज्जुरर्णवे केचिद्गुहाः केचित्समाश्रिताः । ]
[8]निपेतुः केचिदपरे केचिन्नैवावतस्थिरे । केचिद्भूमौ निपतिताः केचित्सुप्ता मृता इव ॥ १७ ॥
तान्समीक्ष्याङ्गदो भग्नान्वानरानिदमब्रवीत् । अवतिष्ठत युध्यामो निवर्तध्वं प्लवंगमाः ॥ १८ ॥
भग्नानां वो न पश्यामि परिक्रम्य[9] महीमिमाम् । स्थानं सर्वे निवर्तध्वं किं प्राणान्परिरक्षथ ॥ १९ ॥

---

आश्वासनं संवृत्य अत एव ततस्ततस्संगम्य संप्राप्य वृक्षान् गृहीत्वा हरयस्संप्रतस्थुः ॥ ८ ॥

गो० टी०—साध्वित्यति । विभीषिका भयजनकः कृत्रिमपुरुषवेषः ॥ ६–८ ॥

९ ] ति० टी०—निवर्त्य निवृत्ता भूत्वा ॥ ९ ॥

रा० टी०—ते इति । समदाःकुञ्जरा इव परमक्रुद्धाः अत एव संरब्धाः कृतयुद्धोद्योगाः ते वनौकसः निवर्त्य कुम्भकर्णं निजघ्नुः ॥ ९ ॥

गो० टी०—त इति । परमक्रुद्धा इति कुञ्जरविशेषणम् ९॥

१०–१३ ] ति० टी०—प्रांशुभिरुच्चैः ॥ १०–१३ ॥

रा० टी०—प्रांशुभिरिति । महाबलैर्वानरैः प्रांशुभिरुन्नतैः गिरिशृंगप्रभृतिभिः हन्यमानोऽपि कुम्भकर्णो न कम्पते १०॥

रा० टी०—तस्येति । तस्य कुम्भकर्णस्य गात्रेषु पतिताः शिलाः पादपाश्च भिद्यन्ते भग्नास्सन्तः महीतले पेतुश्च ॥ ११ ॥

गो० टी०—प्रांशुभिरिति । प्रांशुभिः उन्नतैः महाबलः कुम्भकर्णः ॥ १० ॥ ११ ॥

रा० टी०—स इति । संक्रुद्धः स कुम्भकर्णोऽपि अग्निर्वनानीव वानराणां सैन्यानि ममन्थ ॥ १२ ॥

गो० टी०—सोऽपीति । ममन्थ । ददाहेत्यर्थः ॥ १२ ॥

रा० टी०—लोहितेति । लोहितेन रुधिरेणार्द्राः बहवो वानरर्षभाः ताम्रपुष्पा द्रुमा इव भूमौ पतितास्सन्तः शेरते मूर्छिता बभूवुः ॥ १३ ॥

गो० टी०—लोहितार्द्रा इति । निरस्ताः उत्क्षिप्ताः ॥१३॥

१४–१५ ] ति० टी०—नावलोकयन्नप्रपृष्ठदेशं नालोकितवन्तः ॥ १४ ॥ १५ ॥

रा० टी०—लंघयन्त इति । लंघयन्तः प्रधावन्तो वानराः न अवलोकयन् अवालोकयन् स्वजनानपीति शेषः अत एव केचित्समुद्रे पतिताः ॥ १४ ॥

गो० टी०—लङ्घयन्त इत्यर्धम् । नावलोकयन् नावालोकयन् पृष्ठदेशमित्यर्थः ॥ १४ ॥

गो० टी०—केचिदिति । केचित्ते वानरा इति योजना १५

रा० टी०—वध्यमाना इति । राक्षसेन वध्यमाना वानराः येन पथा सागरं तीर्णास्तेनैव पथा दुद्रुवुः ॥ १५ ॥

गो० टी०—सागरमित्यर्धम् । ते वानराः ॥ १६ ॥

१६ ] ति० टी०—स्थलानि प्रदुद्रुवुरित्यनुकर्षः ॥ १६ ॥

रा० टी०—ते इति । भयाद्विवर्णवदनाः ते वानराः स्थलानि निम्नं यथा भवति तथा दुद्रुवुरिति शेषः केचित् ऋक्षाः वृक्षान् समारूढाः ॥ १६ ॥

गो० टी०—ते स्थलानीति । स्थलानि अतिधावनयोग्यान् देशान् उन्नतप्रदेशान् वा आश्रिता इत्यन्वयः ॥ १७॥

१७–१८ ] ति० टी०—निपेतुः युद्धार्थमिति शेषः१७।१८

रा० टी०—निपेतुरिति ॥ १७ ॥

गो० टी०—ममज्जुरित्यादि । निपेदुः भूमौ पतिता इव तस्थुः ॥ १८ ॥

रा० टी०—तानिति । भग्नान् वानरान् समीक्ष्याङ्गदोऽब्रवीत् तदाकारमाह यूयमवतिष्ठत निवर्तध्वं वयं युध्यामः ॥१८॥

गो० टी०—अवतिष्ठतेत्यादि । परिगम्य प्रदक्षिणीकृत्येत्यर्थः । स्थानं न पश्यामीत्यन्वयः ॥ १९ ॥

१९ ] ति० टी०—युद्धे भग्नानां वो युष्माकं सर्वां महीं परिक्रम्यापि गत्वापि स्थानं प्रतिष्ठां न पश्यामि सुग्रीवाज्ञां विना गतानां वध एव सर्वथेति भावः अतः सर्वे निवर्तध्वम् ॥ १९ ॥

---

१ निवृत्य तु संक्रुद्धा इति गो. पाठः । २ नीति गो. पाठः । ३ बक इति गो. पाठः । ४ शतश इति गो. पाठः । ५ बलीयसेति गो. पाठः । ६ तेन प्रदुद्रुवुरिति गो. पाठः । ७ इदमर्धमधिकं गो. पाठे । ८ निपेतुःप्लवगाः केचिदिति गो. पाठः । ९ परिगम्येति गो. पाठः ।

निरायुधानां क्रमतामसङ्गगतिपौरुषाः । दारा ह्युपहसिष्यन्ति स वै घातः सुजीवितताम् ॥ २० ॥
कुलेषु जाताः सर्वेऽस्मिन्विस्तीर्णेषु महत्सु च । क्व गच्छत भयत्रस्ताः प्राकृता हरयो यथा ॥
अनार्याः खलु यद्भीतास्त्यक्त्वा वीर्यं प्रधावत ॥ ॥ २१ ॥
विकत्थनानि वो यानि भवद्भिर्जनसंसदि । तानि वः क्व नु यातानि सोदग्राणि हितानि च॥ २२ ॥
भीरोः प्रवादाः श्रूयन्ते यस्तु जीवति धिक्कृतः । मार्गः सत्पुरुषैर्जुष्टः सेव्यतां त्यज्यतां भयम् ॥ २३ ॥
शयामहे वा निहताः पृथिव्यामल्पजीविताः । प्राप्नुयामो ब्रह्मलोकं दुष्प्रापं च कुयोधिभिः ॥ २४ ॥
अवाप्नुयामः कीर्तिं वा निहत्वा शत्रुमाहवे । निहता वीरलोकस्य भोक्ष्यामो वसु वानराः ॥ २५ ॥

रा० टी०—भग्नानामिति । भग्नानामत एव महीं परिक्रम्यापि गतानां वो युष्माकं स्थानं निर्भयस्थलं न पश्यामि- विद्रुतान् सर्वान् सुग्रीवो हनिष्यतीति तात्पर्यम् अतः सर्वे यूयं निवर्तध्वम् ॥ १९ ॥

२० ] ति० टी०—हेऽसङ्गगतिपौरुषाः, निरायुधानां पाषाणवृक्षाद्यायुधरहितानां द्रवतां दारा उपहसिष्यन्ति स स्वदारोपहासो जीवतां युष्माकं घातो मृत्योरप्यधिकदुःखदो भविष्यति ॥ २० ॥

रा० टी०—निरायुधानामिति । न सक्तौ रिपुभिः प्राप्यौ गतिपौरुषौ येषां तत्सम्बोधनं निरायुधानां क्रमतां दाराः उपहसिष्यन्ति स दारोपहासः जीवतामपि भवतां घातो मरणमेव एतेन विद्रवणमत्यन्तमनुचितमिति सूचितम् असङ्गगतिपौरुषा इति दारविशेषणं वा तत्पक्षे अर्थस्तु न सक्तौ ज्ञातौ गतिपौरुषौ यैरिति ॥ २० ॥

गो० टी०—निरायुधानामिति । असङ्गगतिपौरुषाः अप्रतिबद्धपराक्रमा इति वानरसंबोधनम् । निरायुधानां द्रवतां निरायुधेषु द्रवत्सु यद्वा निरायुधानां द्रवतां दारास्तान् अपहसिष्यन्तीति सः अपहासः घातः मृतिः ॥ २० ॥

२१ ] ति० टी०—यद्यस्माद्वीर्यं पराक्रमं त्यक्त्वा भीताः सन्तः प्रधावत, ततोऽनार्याः स्वामिद्रोहिणः खलु ॥ २१ ॥

रा० टी०—कुलेष्विति । महत्सु कुलेषु जातास्सर्वे भवन्तः प्राकृता हरय इव भयत्रस्तास्सन्तः क्व गच्छत ॥ २१ ॥

रा० टी०—अनार्या इति । यद्यस्माद्धेतोः वीर्यं त्यक्त्वा प्रधावत तस्मात् यूयमनार्याः क्षुद्रबुद्धयः अहं पृथक् विकत्थनानीति । तदा पूर्वस्मिन् काले जनसंसदि सोदग्राणि स्वस्वोदग्रताबोधनसहितानि हितानि स्वामिहितकारकत्वसूचकानि यानि वो युष्माकं विकत्थनानि तानि क्व यातानि गतानि २२

गो० टी०—कुलेष्विति सर्वे वयमिति शेषः विस्तीर्णेषु ज्ञातिपरम्परया विततेषु महत्सु प्रशस्तेषु ॥ २१ ॥

गो० टी०—अनार्या इत्यर्धम् । यद्यस्मात् भीताः प्रधावत पलायध्व तस्मादनार्याः खलु ॥ २२ ॥

२२ ] ति० टी०—वो युष्माकं जनसंसदि यानि विकत्थनानि सोदग्राणि स्वस्वोदग्रताप्रतिपादनसहितानि च स्वामिहितकराणि च कृतानि तानि सर्वाण्ययायुध्यतां क्व यातानि २२

गो० टी०—विकत्थनानीति । सोदग्राणि उदग्रतायुक्तानि महान्ति भूयांसीत्यर्थः ॥ २३ ॥

२३ ] ति० टी०—यः सत्पुरुषैर्धिक्कृतो जीवति तस्य जीवनं धिगित्येवं भीरूणां वीरैः क्रियमाणाः प्रवादा धिक्काररूपाः श्रूयन्ते मरणादप्यधिकदुःखदाः, अतो भयं त्यज्यताम् । सत्पुरुषैर्जुष्टो मार्गो युद्धं सेव्यताम् ॥ २३ ॥

रा० टी०—भीरोरिति । यः सत्पुरुषैर्धिक्कृतस्सन् जीवति तस्य भीरोः प्रवादाः नरकपातादिप्रतिपादकवचनानि श्रूयन्ते अतः सत्पुरुषैर्जुष्टो मार्गस्सेव्यताम् ॥ २३ ॥

गो० टी०—भीरुप्रवादा इति । यस्तु धिक्कृतो जीवति तद्विषये भीरुप्रवादाः भीरुत्वापवादाः श्रूयन्ते सत्पुरुषैः शूरैः जुष्टः सेवितः ॥ २४ ॥

२४ ] ति० टी०—'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इत्याशयवानाह—शयामहे इति श्लोकद्वयेन । यदि दैवगत्या निहताः शयामहे तदा कुयोधिभिर्दुष्प्रापं ब्रह्मलोकं प्राप्नुयामः । वा शब्दो व्यवस्थितविकल्पे ॥ २४ ॥

रा० टी०—नन्वत्र स्थितावपि मरणमेव भविष्यतीति किं स्थित्येत्यत आह—शयामहे इति । वा यदि अल्पजीविताः अत एव निहताः वयं पृथिव्यां शयामहे तदा कुयोधिभिः युद्धभीरुभिः दुष्प्रापं ब्रह्मलोकं प्राप्नुयामः ॥ २४ ॥

गो० टी०—सत्पुरुषजुष्टो मार्गः क इत्यपेक्षायामाह—शयामहे इत्यादि । युद्धमरणं हि सत्पुरुषजुष्टो मार्ग इत्यर्थः । समरान्निवृत्य पलायितानामपि मरणस्यावश्यंभावित्वप्रदर्शनार्थमल्पजीविता इत्युक्तम् समरानिवर्तिनां वीराणां तु मरणजीवनयोरुभयोरपि श्रेयस्करत्वं प्रतिपादयति—दुष्प्रापमिति । निहत्वा निहत्य । जीवितमिति । वीरलोकस्य वीराणां लोको ब्रह्मलोकः तस्य वसु मूल्यभूतं जीवितं मोक्ष्यामः ॥ २५॥२६ ॥

२५ ] ति० टी० शत्रुमाहवे निहत्वा निहत्य कीर्तिं वा प्राप्नुयामः । उक्तमर्थं दार्ढ्याय पुनराह—निहता इति । निहताश्चेद्वीरलोकस्य वीरैः स्वर्गद्वारा प्राप्यस्य ब्रह्मलोकस्य वसु धनं

१ द्रवतामिति गो. पाठः । २ ह्यपेति गो. रा. पाठः । ३ स्विति गो. पाठः । ४ जीवितामिति गो. पाठः । ५ स्मेति गो.पाठः । ६ हरयः प्राकृता इति गो. पाठ । ७ तदावै इति गो. पाठः । ८ महान्तिचेति गो. पाठः । ९ अथेति गो. पाठः । १० दुष्प्रापं ब्रह्मलोकं वा प्राप्नुमो युधि सुदिता इति गो. पाठः । ११ समिति गो. पाठः । १२ जीवितमिति गो. पाठः ।

न कुम्भकर्णः काकुत्स्थं दृष्ट्वा जीवन्गमिष्यति । दीप्यमानमिवासाद्य पतङ्गो ज्वलनं यथा ॥ २६ ॥
पलायनेन चोद्दिष्टाः प्राणान्रक्षामहे वयम् । एकेन बहवो भग्ना यशोनाशं गमिष्यति ॥ २७ ॥
एवं ब्रुवाणं तं शूरमङ्गदं कनकाङ्गदम् । द्रवमाणास्ततो वाक्यमूचुः शूरविगर्हितम् ॥ २८ ॥
कृतं नः कदनं घोरं कुम्भकर्णेन रक्षसा । न स्थानकालो गच्छामो दयितं जीवितं हि नः ॥ २९ ॥
एतावदुक्त्वा वचनं सर्वे ते भेजिरे दिशः । भीमं भीमाक्षमायान्तं दृष्ट्वा वानरयूथपाः ॥ ३० ॥
द्रवमाणास्तु ते वीरा अङ्गदेन वलीमुखाः । सान्त्वनैश्चानुमानैश्च ततः सर्वे निवर्तिताः ॥ ३१ ॥
प्रहर्षमुपनीताश्च वालिपुत्रेण धीमता । आज्ञाप्रतीक्षास्तस्थुश्च सर्वे वानरयूथपाः ॥ ३२ ॥

ऋषभशरभमैन्दधूम्रनीलाः कुमुदसुषेणगवाक्षरम्भताराः ।
द्विविदपनसवायुपुत्रमुख्यास्त्वरिततराभिमुखं रणं प्रयाताः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

हिरण्यगर्भभूमानन्दं भोक्ष्यामोऽनुभविष्यामः । 'जीवितं वीरलोकस्य मोक्ष्यामः' इति पाठोऽपाङ्क्तः, नापि तत्रार्थसामञ्जस्यम् तत्र हि ब्रह्मलोकस्य वस्तु मूल्यभूतं जीवितं मोक्ष्याम इत्यर्थं तीर्थ आह ॥ २५ ॥

रा० टी०–अत्र स्थितौ कल्याणमेवेति बोधयन्नाह—अवाप्नुयाम इति । हे वानराः शत्रुं निहत्वा निहत्य कीर्तिमवाप्नुयामः वा यदि निहताः तदा वीरलोकस्य वीरप्राप्यब्रह्मभवनस्य वस्तु धनं भोक्ष्यामः ॥ २५ ॥

२६ ] ति० टी०–ननु कथमपि जयप्रत्याशाभावेन स्थित्या न प्रयोजनमत आह—न कुम्भकर्ण इति ॥ २६ ॥

रा० टी०–वस्तुतस्तु विजय एव भविष्यतीति बोधयन्नाह—नेति । कुम्भकर्णः काकुत्स्थं रामं दृष्ट्वा दीप्यमानं ज्वलनं वह्निमासाद्य पतङ्ग इव जीवन्नगमिष्यति ॥ २६ ॥

गो० टी०–न कुम्भकर्ण इति । दीप्यमानं ज्वलनमिव राममासाद्य कुम्भकर्णः पतङ्गो यथेति यथेवशब्दयोर्निर्वाहः २७

२७–३० ] ति० टी०–उद्दिष्टा महावीरेषु गणिता बहवो वयमेकेन भग्नाः पलायनेन यदि प्राणान्रक्षामहे तदा यशो नाशं गमिष्यति । यद्वोद्दिष्टा एते पलायिता इति जनैर्निर्दिष्टा इत्यर्थः ॥ २७–३० ॥

रा० टी०–पलायनेनेति । उद्दिष्टाः वीरेषु ख्याताः बहवो वयं यद्येकेन भग्नास्सन्तः पलायनेन प्राणान् रक्षामहे तदा यशोऽस्माकं कीर्तिर्नाशं गमिष्यति ॥ २७ ॥

गो० टी०–पलायनेनेति । उद्दिष्टाः व्यपदिष्टाः बहवो वयमनेन कुम्भकर्णेन भग्नाः पलायनेन प्राणान् रक्षामहे यदि ततो यशो नाशं गमिष्यतीति योजना ॥ २८ ॥

रा० टी०–एवमिति । एवं ब्रुवाणमङ्गदं द्रवमाणाः वानराः शूरैर्विगर्हितं वाक्यमूचुः ॥ २८ ॥

गो० टी०–एवमिति । शूरं पराक्रमवन्तम् । कनकाङ्गदमुत्साहातिशयेन प्रकाशितस्वर्णाङ्गदम् ॥ २९ ॥

रा० टी०–तदाकारमाह–कृतमिति । कुम्भकर्णेन नः कदनं कृतमतः स्थानकालः स्थितिसमयो न तत्र हेतुः हि यतः जीवितं नोऽस्माकं दयितं प्रियम् ॥ २९ ॥

रा० टी०–एतावदिति । वानरयूथपाः भीमाक्षं कुम्भकर्णमायान्तं दृष्ट्वा एतावद्वचनमुक्त्वा दिशो भेजिरे ॥ ३० ॥

गो० टी०–कृतमिति । कदनं मर्दनम् दयितमिष्टम् ॥ ३० ॥ ३१

३१ ] ति० टी०–अनुमानैर्नागपाशमुक्तिसप्ततालभेदरूपैर्जयानुमापकैः ॥ ३१ ॥

रा० टी०–द्रवमाणा इति । वलीयुक्तानि मुखानि येषां ते द्रवमाणाः वीराः अङ्गदेन सान्त्वनैः सान्त्वनकारकैरनुमानैः वालिवधादिसमये अनुभूतराममहापराक्रमरूपकुम्भकर्णविघातप्रत्यायकहेतुभिर्निवर्तिताः ॥ ३१ ॥

गो० टी०–द्रवमाणा इति । अनुमानैः सालगिरिभेदनादिदृष्टान्तपुरस्कृतैर्युक्तिविशेषैः ॥ ३२ ॥

३२ ] ति० टी०–आज्ञाप्रतीक्षा युद्धानुज्ञाप्रतीक्षाः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

रा० टी०–प्रहर्षमिति । वालिपुत्रेण प्रहर्षमुपनीताः अत एव आज्ञाप्रतीक्षाः वानरयूथपाः तस्थुः ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

गो० टी०–प्रहर्षमिति । आज्ञाप्रतीक्षाः सुग्रीवाद्याज्ञाप्रतीक्षाः ॥ ३३ ॥

गो० टी०–ऋषभशरभेति । त्वरिततराभिमुखं त्वरिततरम् अभिमुखं चेति क्रियाविशेषणम् । अत्र वायुपुत्रस्तु न पलाय्य निवृत्तः । किं तु ऋषभादिभिर्मिलित्वा कुम्भकर्णेन सह युद्धार्थं निवृत्त इति ज्ञेयम् ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

१ सान्त्वैश्चेति गो. पाठः । २ इदंपद्यमधिकं गो. पाठे ।

## सप्तषष्टितमः सर्गः ।

अत्र सुघोरं युध्यमानस्य कुम्भकर्णस्य कपिभिः सङ्ग्रामः तत्रापि हनुमताङ्गदेन सुग्रीवेण च कलहे सुग्रीवकृतकुम्भकर्णकर्णनासेन्द्रियच्छेदनं हनुमत्कृततच्छूलभञ्जनमन्ते रामेण संगमे बाहुकर्तनपूर्वकः कुम्भकर्णस्यवधः ।

ते निवृत्ता महाकायाः श्रुत्वाङ्गदवचस्तदा । नैष्ठिकीं बुद्धिमास्थाय सर्वे सङ्ग्रामकाङ्क्षिणः ॥ १ ॥
समुदीरितवीर्यास्ते[2] समारोपितविक्रमाः । पर्यवस्थापिता वाक्यैरङ्गदेन बलीयसा[3] ॥ २ ॥
प्रयाताश्च गता हर्षं मरणे कृतनिश्चयाः । चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविताः ॥ ३ ॥
अथ वृक्षान्महाकायाः सानूनि सुमहान्ति च । वानरास्तूर्णमुद्यम्य कुम्भकर्णमभिद्रवन्[4] ॥ ४ ॥
कुम्भकर्णः सुसंक्रुद्धो[5] गदामुद्यम्य वीर्यवान् । धर्षयन्[6]स महाकायः समन्ताद्व्यक्षिपद्रिपून्[7] ॥ ५ ॥
शतानि सप्त चाष्टौ च सहस्राणि च वानराः । प्रकीर्णाः शेरते भूमौ कुम्भकर्णेनताडिताः[8] ॥ ६ ॥
षोडशाष्टौ च दश च विंशत्त्रिंशत्तथैव च । परिक्षिप्य च बाहुभ्यां खादन्स[9] परिधावति ॥
भक्षयन्भृशसंक्रुद्धो गरुडः पन्नगानिव ॥ ॥ ७ ॥
कृच्छ्रेण च समाश्वस्ताः संगम्य च ततस्ततः । वृक्षाद्रिहस्ता हरयस्तस्थुः सङ्ग्राममूर्धनि ॥ ८ ॥
ततः पर्वतमुत्पाट्य द्विविदः प्लवगर्षभः । दुद्राव गिरिशृङ्गाभं विलम्ब इव तोयदः ॥ ९ ॥

१ ] ति० टी०—अत्र सर्गावच्छेदोऽसांप्रदायिकः । एकप्रकरणत्वाद्वृत्तभेदाभावाच्चेति कतकः ॥ उक्तार्थानुवादः—ते निवृत्ता इति । नैष्ठिकीं स्थिराम् निष्ठानाशस्तत्संबन्धिनीं मरणपर्यवसायिनीमित्यर्थ इति तीर्थः ॥ १ ॥

रा० टी०—पलायनान्निवृत्तानां वानराणां वृत्तान्तमाह—ते इत्यादिभिः । अङ्गदवचश्श्रुत्वा नैष्ठिकीमचलां बुद्धिं स्थितिविषयकमतिमास्थाय संग्रामकांक्षिणोऽभवन्निति शेषः ॥ १ ॥

गो० टी०—ते निवृत्ता इत्यादि । चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविता इत्यन्तमेकं वाक्यम् । नैष्ठिकीं निष्ठा नाशः तत्संबन्धिनीम् मरणव्यवसायिनीमित्यर्थः । समुदीरितवीर्याः कथितात्मपराक्रमाः समारोपितविक्रमाः समवलम्बितपराक्रमाः । मरणनिश्चयहेतुमाह—त्यक्तजीविता इति । जीवनाशारहिता इत्यर्थः ॥ १-४ ॥

२-८ ] ति० टी०—समुदीरितवीर्याः समुदीरितविक्रमाः कथितात्मीयपूर्वपराक्रमाः समारोपितविक्रमा इति गृहीतविक्रमाः ॥ २—८ ॥

रा० टी०—समिति । अङ्गदेन वाक्यैः पर्यवस्थापिताः प्रबोधिताः अत एव समुदीरितानि संस्मृतानि वीर्याणि यैः ते वानराः समारोपितविक्रमाः प्रकटीकृतपराक्रमाः अभवन्निति शेषः ॥ २ ॥

रा० टी०—प्रयाता इति । प्रयाताः अङ्गदसमीपं प्राप्ताः हर्षं युद्धोत्साहं गताः प्राप्ताः अत एव मरणे कृतनिश्चयाः अत एव त्यक्तजीविताः परित्यक्तभोजनादिव्यापाराः वानराः सुतुमुलं युद्धं चक्रुः ॥ ३ ॥

रा० टी०—अथेति । वानराः महान्ति सानूनि उद्यम्य कुम्भकर्णमभिद्रवन् अभ्यद्रवन् ॥ ४ ॥

रा० टी०—कुम्भकर्ण इति । सुसंक्रुद्धः कुम्भकर्णः गदामुद्यम्य धर्षयन् स्वप्रागल्भ्यं प्रकटयन् रिपून् व्यक्षिपत् ॥ ५ ॥

गो० टी०—स इति । व्याक्षिपत् अपातयत् ॥ ५ ॥

रा० टी०—शतानीति । कुम्भकर्णेन ताडिताः अत एव प्रकीर्णाः शतप्रभृतयो वानराः भूमौ शेरते ॥ ६ ॥

गो० टी०—शतानीति । प्रकीर्णाः शिथिलावयवाः पोथिताः हिंसिताः कुम्भकर्णस्यैकेन व्यापारेण शतादिसंघरूपेण पतिता इत्यर्थः ॥ ६ ॥

रा० टी०—षोडशेति । षोडशप्रभृतीन् वानरान् बाहुभ्यां परिक्षिप्य पन्नगान् भक्षयन् गरुड इव खादन्सन् परिधावति सार्द्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०—षोडशेत्यादि । परिक्षिप्य परिगृह्य खादन् भक्षयन् । पन्नगान् भक्षयन्निवेति गरुडविशेषणम् ॥ ७ ॥

रा० टी०—कृच्छ्रेणेति । कृच्छ्रेण अनेकविधयत्नेनेत्यर्थः समाश्वस्ताः स्वास्थ्यं प्राप्ताः अत एव वृक्षाद्रिहस्ता हरयः संग्राममूर्धनि तस्थुः ॥ ८ ॥

गो० टी०—कृच्छ्रेणेति । हरयः बलवन्त इति शेषः । संगम्य संभूय ॥ ८ ॥

९ ] ति० टी०—विशेषेण लम्बत इति विलम्बः ॥ ९ ॥

रा० टी०—तत इति । तोयद इव विलम्बः प्रलम्बशरीरो द्विविदः गिरिशृङ्गाभं कुम्भकर्णं दुद्राव ॥ ९ ॥

१ आसाद्येति गो. पाठः । २ चेति गो. पाठः । ३ वलीमुखा इति गो. पाठः । ४ द्रुता इति गो. पाठः । ५ स कुम्भकर्णः संक्रुद्ध इति गो. पाठः । ६ अर्दयन्निति गो. पाठः । ७ व्याक्षिपदिति गो. पाठः । ८ पोथिता इति गो. पाठः । ९ वीति गो. पाठः ।

तं समुत्पाट्य[1] चिक्षेप कुम्भकर्णाय[2] वानरः । तमप्राप्य[3] महाकायं[4] तस्य सैन्येऽपतत्तदा[5] ॥ १० ॥
ममर्दाश्वान्गजांश्चापि रथांश्चापि नगोत्तमान्[8] । तानि चान्यानि रक्षांसि एवं[9] चान्यद्गिरेः शिरः[10] ॥ ११ ॥
तच्छैलवेगाभिहतं[6] हताश्वं हतसारथिम् । रक्षसां रुधिरक्लिन्नं बभूवायोधनं महत् ॥ १२ ॥
रथिनो वानरेन्द्राणां शरैः कालान्तकोपमैः । शिरांसि नर्दतां[11] जह्नुः सहसा भीमनिःस्वनाः ॥ १३ ॥
वानराश्च महात्मानः समुत्पाट्य महाद्रुमान्[12] । रथानश्वान्गजानुष्ट्रान्राक्षसानभ्यसूदयन् ॥ १४ ॥
हनूमाञ्शैलशृङ्गाणि शिलाश्च विविधान्द्रुमान्[13] । ववर्ष कुम्भकर्णस्य शिरस्यम्बरमास्थितः ॥ १५ ॥
तानि पर्वतशृङ्गाणि शूलेन स बिभेद ह । बभञ्ज वृक्षवर्षं च कुम्भकर्णो महाबलः ॥ १६ ॥

ततो हरीणां तदनीकमुग्रं दुद्राव शूलं निशितं प्रगृह्य ।
तस्थौ[14] स[15] तस्यापततः पुरस्तान्महीधराग्रं हनुमान्प्रगृह्य ॥ ॥ १७ ॥
स कुम्भकर्णं कुपितो जघान वेगेन शैलोत्तमभीमकायम् ।
[16]संचुक्षुभे तेन तदाभिभूतो मेदार्द्रगात्रो रुधिरावसिक्तः ॥ ॥ १८ ॥
स शूलमाविध्य तडित्प्रकाशं गिरिर्यथा प्रज्वलिताग्निशृङ्गम् ।
बाह्वन्तरे मारुतिमाजघान गुहोऽचलं क्रौञ्चमिवोग्रशक्त्या ॥ ॥ १९ ॥

गो० टी०—तत इति । विशेषेण लम्बत इति विलम्बः पचाद्यच् । गिरिशृङ्गाभं गिरिशृङ्गवदुन्नतम् ॥ ९ ॥

१० ] ति० टी०—तमप्राप्य तं कुम्भकर्णम् तस्य कुम्भकर्णस्य सैन्ये ॥ १० ॥

रा० टी०—तमिति । वानरो द्विविदः तं पर्वतं समुत्क्षिप्य उत्थाप्य कुम्भकर्णाय चिक्षेप शैलस्तु तं कुम्भकर्णमप्राप्तस्सन् तत्सैन्ये न्यपतत् ॥ १० ॥

गो० टी०—तमिति । तं कुम्भकर्णं समुत्पत्य समीपमागत्य कुम्भकर्णस्य कुम्भकर्णाय ॥ १० ॥

११-१२ ] ति० टी०—तानि प्रसिद्धानि च रक्षांस्युद्दिश्यान्यदेकं गिरेः शिरः शृङ्गं चिक्षेप ॥ ११ ॥ १२ ॥

रा० टी०—ममर्देति । नगोत्तमः अश्वादीन् तानि समीपस्थानि रक्षांसि च ममर्द अन्यानि रक्षांस्युद्दिश्य गिरेरन्यच्छिरः पुनरादद्दे ॥ ११ ॥

गो० टी०—ममर्देत्यादि त्रिपादश्लोकः । तानि प्रसिद्धानि रक्षांसि ममर्देति पूर्वेणान्वयः । पुनश्चेति पादश्लोकः । अन्यतो गिरेः शृङ्गं चिक्षेपेति योज्यम् ॥ ११ ॥

रा० टी०—तदिति । शैलवेगेन अभिहतमभिहननं यस्मिन् अत एव रक्षसां रुधिरक्लिन्नमायोधनं महद्बभूव ॥ १२ ॥

गो० टी०—तदिति । तच्छैलशृङ्गाभिहतम् अनन्तरप्रयुक्तशैलशृङ्गाभिहतसैन्यम् । आयोधनं युद्धम् ॥ १२ ॥

१३-१६ ] ति० टी०—रथिनो राक्षसाः शरैर्वानरेन्द्राणां शिरांसि जह्नुः ॥ १३—१६ ॥

रा० टी०—रथिन इति । वानरेन्द्राणां रथिनः शरैर्नर्दतां राक्षसानां शिरांसि जन्हुः ॥ १३ ॥

गो० टी०—रथिन इति । कालान्तकः प्रलयकालरुद्रः १३

रा० टी०—वानरा इति । वानराः रथादीन् अभ्यसूदयन् ॥ १४ ॥

रा० टी०—हनूमानिति । अम्बरमास्थितो हनूमान् कुम्भकर्णस्य शिरसि शैलशृङ्गादीनि ववर्ष ॥ १५ ॥

रा० टी०—तानीति । स कुम्भकर्णः पर्वतशृङ्गाणि बिभेद वृक्षवर्षं च बभञ्ज ॥ १६ ॥

गो० टी०—वानराश्चेति । अभ्यसूदयन् अघ्नन् ॥१४-१६

१७ ] ति० टी०—हरीणामनीकं कर्म । तस्य कुम्भकर्णस्य पुरस्तात् ॥ १७ ॥

रा० टी०—तत इति । कुम्भकर्णः शूलं प्रगृह्य हरीणामनीकं दुद्राव आपततः तस्य कुम्भकर्णस्य पुरस्तात् अग्रे महीधराग्रं प्रगृह्य हनूमान् तस्थौ ॥ १७ ॥

गो० टी०—तत इति । दुद्राव द्रावयामास ॥ १७ ॥

१८-१९ ] ति० टी०—तेन हनुमन्मुक्तगिरिशृङ्गेण संचुक्षुभे ॥ १८ ॥ १९ ॥

रा० टी०—स इति । कुपितस्सन् हनूमान् कुम्भकर्णं जघान तेन हननेन अभिभूतः पराभूतः अत एव मेदार्द्रगात्रः कुम्भकर्णः संचुक्षुभे ॥ १८ ॥

गो० टी०—स इति । मेदार्द्रेत्यत्र संधिरार्षः ॥ १८ ॥

रा० टी०—स इति । स कुम्भकर्णः गिरेः प्रज्वलिताग्नि-

१ समुत्पत्येति गो. समुत्क्षिप्येतिच रा. पाठः ।२ कर्णस्येति गो. पाठः ।३ अप्राप्त इति गो. पाठः । ४ काय इति रा. पाठः । ५ तत्सैन्येऽन्यपतदिति रा पाठः ।६ तदेति गो. रा. पाठः ।७ चैवेति गो. पाठः ।८ नगोत्तम इति गो. रा. पाठः ।९ पुनश्चेति गो. पाठः ।१० शृङ्गेति गो. पाठः । ११ नर्दतामिति रा. पा. । १२ वृक्षानिति गो. पाठः ।१३ बहूनिति गो. पाठः । १४ ततोऽस्येति गो. पाठः ।१५ स इति गो. पाठः । १६ अग्रेति गो.। पाठः ।

स शूलनिर्भिन्नमहाभुजान्तरः प्रविह्वलः शोणितमुद्वमन्मुखात् ।
ननाद भीमं हनुमान्महाहवे युगान्तमेघस्तनितस्वनोपमम् ॥ ॥ २० ॥

ततो विनेदुः सहसा प्रहृष्टा रक्षोगणास्तं व्यथितं समीक्ष्य ।
प्लवंगमास्तु व्यथिता भयार्ताः प्रदुद्रुवुः संयति कुम्भकर्णात् ॥ ॥ २१ ॥

ततस्तु नीलो बलवान्पर्यवस्थापयन्बलम् । प्रविचिक्षेप शैलाग्रं कुम्भकर्णाय धीमते ॥ २२ ॥
तदापतन्तं संप्रेक्ष्य मुष्टिनाभिजघान ह । मुष्टिप्रहाराभिहतं तच्छैलाग्रं व्यशीर्यत ॥
सविस्फुलिङ्गं सज्वालं निपपात महीतले ॥ ॥ २३ ॥
ऋषभः शरभो नीलो गवाक्षो गन्धमादनः । पञ्च वानरशार्दूलाः कुम्भकर्णमुपाद्रवन् ॥ २४ ॥
शैलैर्वृक्षैस्तलैः पादैर्मुष्टिभिश्च महाबलाः । कुम्भकर्णं महाकायं निर्जघ्नुः सर्वतो युधि ॥ २५ ॥
स्पर्शानिव प्रहारांस्तान्वेदयानो न विव्यथे । ऋषभं तु महावेगं बाहुभ्यां परिषस्वजे ॥ २६ ॥
कुम्भकर्णभुजाभ्यां तु पीडितो वानरर्षभः । निपपातर्षभो भीमः प्रमुखागतशोणितः ॥ २७ ॥
मुष्टिना शरभं हत्वा जानुना नीलमाहवे । आजघान गवाक्षं तु तलेनेन्द्ररिपुस्तदा ॥ २८ ॥
पादेनाभ्याहनत्क्रुद्धस्तरसा गन्धमादनम् ।
दत्तप्रहारव्यथिता मुमुहुः शोणितोक्षिताः । निपेतुस्ते तु मेदिन्यां निकृत्ता इव किंशुकाः ॥२९॥
तेषु वानरमुख्येषु पातितेषु महात्मसु । वानराणां सहस्राणि कुम्भकर्णं प्रदुद्रुवुः ॥ ३० ॥
तं शैलमिव शैलाभाः सर्वे तु प्लवगर्षभाः । समारुह्य समुत्पत्य ददंशुः प्लवगर्षभाः ॥ ३१ ॥
तं नखैर्दशनैश्चापि मुष्टिभिर्बाहुभिस्तथा । कुम्भकर्णं महाबाहुं निर्जघ्नुः प्लवगर्षभाः ॥ ३२ ॥

---

शृङ्गमिव शूलमाविध्य करतलेनापीड्य उग्रशक्त्या गुहः क्रौञ्चमचलमिव मारुतिं बाह्वन्तरे आजघान ॥ १९ ॥

रा० टी०—स इति । आविध्य भ्रामयित्वा गुहः स्कन्दः १९

२०–२५ ] ति० टी०—ननाद भीमम् । शूलाभिघातजरुजेति शेषः । युगान्ते मेघस्तनितस्य यः स्वनस्तदुपमम् ॥२०॥२५॥

रा० टी०—स इति । शूलेन निर्भिन्नं महाभुजयोरन्तरं यस्य अत एव प्रविह्वलो हनूमान् शोणितमुद्वमन् सन् युगान्तमेघस्तनितस्वनोपमं यथा भवति तथा ननाद ॥ २० ॥

गो० टी०—स इति । प्रविह्वलः प्रस्खलन् । युगान्तेति । युगान्तमेघस्य स्तनितरूपो यः स्वनः तत्तुल्यमिति क्रियाविशेषणम् ॥ २० ॥

रा० टी०—तत इति । तं हनूमन्तं व्यथितं समीक्ष्य प्रहृष्टाः रक्षोगणाः विनेदुः कुम्भकर्णात् ‥ र्ताः प्लवङ्गमास्तु प्रदुद्रुवुः ॥ २१ ॥

गो० टी०—तत इति । कुम्भकर्णात् भयार्ता इत्यन्वयः । संयति युद्धे ॥ २१ ॥

रा० टी०—तत इति । नीलः बलं पर्यवस्थापयन् सन् कुम्भकर्णाय शैलाग्रं प्रविचिक्षेप ॥ २२ ॥

गो० टी०—तत इति । पर्यवस्थापयन् बलमिति पलायमानान् सन्निवर्तयन्नित्यर्थः ॥ २२ ॥

रा० टी०—तदेति । आपतन्तं शैलाग्रं संप्रेक्ष्य मुष्टिना अभिजघान कुम्भकर्ण इति शेषः अत एव शैलाग्रं व्यशीर्यत विभिदे अत एव महीतले निपपात सार्द्धश्लोक एकान्वयी ॥२३॥२४॥

रा० टी०—ऋषभ इति । ऋषभादयः पञ्च कुम्भकर्णमुपाद्रवन् ॥ २५ ॥

गो० टी०—तमापतन्तमिति । व्यशीर्यत शीर्णमभूत् ॥ २३–२५ ॥

रा० टी०—शैलैरिति । शैलादिभिः कुम्भकर्णं निजघ्नुः २६

गो० टी०—शैलैरिति । पादैः प्रहारोद्यतैः । सर्वत्रोपलक्षणे तृतीया ॥ २६ ॥

२६ ] ति० टी०—स्पर्शानिव मालादिस्पर्शानिव वेदयानो जानन् ॥ २६ ॥

रा० टी०—स्पर्शानिति । तान् ऋषभादिकृतान् प्रहारान् स्पर्शान् पुष्पमालादिसंयोगानिव वेदयानो जानन् कुम्भकर्णो न विव्यथे ऋषभं तु बाहुभ्यां परिषस्वजे दृढं जग्राहेत्यर्थः ॥२७॥

गो० टी०—स्पर्शानिति । स्पर्शानिव सुखस्पर्शानिव सुखमर्दनमिव जानन्नित्यर्थः ॥ २७ ॥

२७–३२ ] ति० टी०—प्रमुखेति । प्रकर्षेण मुखे आगतं शोणितं यस्य सः ॥ २७–३२ ॥

---

१ मुखादिति गो. पाठः । २ तमिति गो. पाठः । ३ सर्वतोऽभिप्रदुद्रुवुरिति गो. पाठः । ४ प्रमुखाद्वान्तेति गो. पाठः । ५ इदमर्धमधिकं गो. पाठः । ६ ते इति गो. पाठः । ७ च महाबला इति गो. पाठः । ८ जानुभिरिति गो. पाठः । ९ कायमिति गो. पाठः । १० ते इति गो. पाठः ।

स वानरसहस्रैस्तु विचितः पर्वतोपमः । रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ॥ ३३ ॥
बाहुभ्यां वानरान्सर्वान्प्रगृह्य स महाबलः । भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥ ३४ ॥
प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसंनिभे । नासापुटाभ्यां संजग्मुः कर्णाभ्यां चैव वानराः ॥३५॥
भक्षयन्भृशसंक्रुद्धो हरीन्पर्वतसंनिभः । बभञ्ज वानरान्सर्वान्संक्रुद्धो राक्षसोत्तमः ॥ ३६ ॥
मांसशोणितसंक्लेदां कुर्वन्भूमिं स राक्षसः । चचार हरिसैन्येषु कालाग्निरिव मूर्च्छितः ॥ ३७ ॥
वज्रहस्तो यथा शक्रः पाशहस्त इवान्तकः । शूलहस्तो बभौ युद्धे कुम्भकर्णो महाबलः ॥ ३८ ॥
यथा शुष्काण्यरण्यानि ग्रीष्मे दहति पावकः । तथा वानरसैन्यानि कुम्भकर्णो ददाह सः ॥ ३९ ॥
ततस्ते वध्यमानास्तु हतयूथाः प्लवंगमाः । वानरा भयसंविग्ना विनेदुर्विकृतैः स्वरैः ॥ ४० ॥
अनेकशो वध्यमानाः कुम्भकर्णेन वानराः । राघवं शरणं जग्मुर्व्यथिता भिन्नचेतसः ॥ ४१ ॥
प्रभग्नान्वानरान्दृष्ट्वा वज्रहस्तात्मजात्मजः । अभ्यधावत वेगेन कुम्भकर्णं महाहवे ॥ ४२ ॥
शैलशृङ्गं महद्गृह्य विनदन्स मुहुर्मुहुः । त्रासयन्राक्षसान्सर्वान्कुम्भकर्णपदानुगान् ॥ ४३ ॥
चिक्षेप शैलशिखरं कुम्भकर्णस्य मूर्धनि । स तेनाभिहतो मूर्ध्नि शैलेनेन्द्ररिपुस्तदा ॥ ४४ ॥
कुम्भकर्णः प्रजज्वाल क्रोधेन महता तदा । सोऽभ्यधावत वेगेन वालिपुत्रममर्षणम् ॥ ४५ ॥
कुम्भकर्णो महानादस्त्रासयन्सर्ववानरान् । शूलं ससर्ज वै रोषादङ्गदे तु महाबलः ॥ ४६ ॥

---

रा० टी०–कुम्भकर्णेति। पीडितोऽतएव प्रकर्षेण मुखादागतं शोणितं यस्य सः वानरर्षभः ऋषभः निपपात ॥ २८ ॥

रा० टी०–मुष्टिनेति। इन्द्ररिपुः कुम्भकर्णः तलेन गवाक्षमाजघान ॥ २९ ॥

रा० टी०–दन्तेति। दन्तेन प्रहारेण व्यथिताः अत एव शोणितोक्षिताः ते शरभादयः निकृत्ताः किंशुका इव निपेतुः ३०

रा० टी०–तेष्विति। वानरमुख्येषु पातितेषु सत्सु वानराणां सहस्राणि प्रदुद्रुवुः ॥ ३१ ॥

गो० टी०–कुम्भकर्णेति। प्रेति छेदः। मुखात् वान्तशोणितः पपातेत्यन्वयः। "व्यवहिताश्च" इत्युपसर्गस्य व्यवहितप्रयोगः। वान्तशोणितः उद्गीर्णरक्तः ॥ २८-३१ ॥

रा० टी०–तमिति। शैलाभाः ये प्लवगर्षभाः ते प्लवगर्षभाः शैलमिव तं कुम्भकर्णं समारुह्य ददंशुः ॥ ३२ ॥

रा० टी०–तमिति। तं कुम्भकर्णं नखादिभिर्निजघ्नुः ३३

गो० टी०–तमिति। समारुह्य समुत्पत्य समुत्पत्य समारुह्येति क्रमः ॥ ३२ ॥ ३३ ॥

३३-४१ ] ति० टी०–विचितो व्याप्तः 'मूर्च्छितः' इति पाठान्तरम्। आत्मरुहैर्वृक्षैः ॥ ३३-४१ ॥

रा० टी०–स इति। वानरसहस्रैर्विचितो व्याप्तः पर्वतोपमः कुम्भकर्णः आत्मरुहैः तरुप्रभृतिभिः गिरिरिव रराज ॥ ३४ ॥

रा० टी०–बाहुभ्यामिति। स कुम्भकर्णः बाहुभ्यां वानरान् प्रगृह्य भक्षयामास ॥ ३५ ॥

रा० टी०–प्रक्षिप्ता इति। कुम्भकर्णेन वक्त्रे प्रक्षिप्ताः वानराः नासापुटाभ्यां कर्णाभ्यां च निर्जग्मुः ३६ ॥

गो० टी०–स इति। आचितः व्याप्तः आत्मरुहैः वृक्षैः ३४-३६

रा० टी०–भक्षयन्निति। भृशमत्यन्तं संक्रुद्धाः संक्रोधिताः वानराः येन स संक्रुद्धः कुम्भकर्णः हरीन् भक्षयन् सन् वानरान् बभञ्ज ॥ ३७ ॥

गो० टी०–भक्षयन्निति। भक्षयन् बभञ्ज। भक्षणार्थं बभञ्जेत्यर्थः ॥ ३७ ॥

रा० टी०–मांसेति। भूमिं मांसशोणितसंक्लेदां कुर्वन् स कुम्भकर्णः मूर्छितः प्रवृद्धः कालाग्निरिव हरिसैन्येषु चचार॥३८॥

रा० टी०–वज्रहस्त इति। कुम्भकर्णः युद्धे बभौ॥३९॥

गो० टी०–मांसेति। मांसशोणितसंक्लेदां मांसशोणितसंसिक्तामित्यर्थः ॥ ३८ ॥ ३९ ॥

रा० टी०–यथेति। पावको ग्रीष्मे शुष्काणि अरण्यानीव वानरसैन्यानि अनिर्दहत् निरदहत् ॥ ४० ॥

गो० टी०–यथेति। विनिर्दहत् विनिरदहत् ॥ ४० ॥

रा० टी०–तत इति। वध्यमानाः वानराः विकृतैः स्वरैर्विनेदुः ॥ ४१ ॥

रा० टी०–अनेकश इति। कुम्भकर्णेन वध्यमानाः अनेकशो वानराः राघवं शरणं जग्मुः ॥ ४२ ॥

रा० टी०–प्रभग्नानिति। वज्रहस्तात्मजस्य वालिनः आत्मजोऽङ्गदः वानरान् प्रभग्नान् दृष्ट्वा कुम्भकर्णमभ्यधावत ४३

गो० टी०–तत इति। विनायकाः विगतनायकाः ४१-५३

४२-४६ ] ति० टी०–वज्रहस्तात्मजस्य वालिनः पुत्रोऽङ्गदः ॥ ४२-४६ ॥

---

१ स्विति गो. पाठः। २ निरिति गो. पाठः। ३ संख्य इति गो. पाठः। ४ विनिर्दहदिति गो. व्यनिर्दहदिति च रा. पाठः। ५ विनायका इति गो. पाठः। ६ विस्वरं भृशमिति गो. पाठः। ७ खिन्नेति गो. पाठः। ८ सुतेति गो. पाठः। ९ चेति गो. पाठः। १० अत्यर्थं गिरिशृङ्गेण मूर्धनीति गो. पाठः। ११ अमर्षण इति गो. पाठः।

तदापतन्तं बलवान्युद्धमार्गविशारदः । लाघवान्मोक्षयामास बलवान्वानरर्षभः ॥ ४७ ॥
उत्पत्य चैनं तरसा तलेनोरस्यताडयत् । स तेनाभिहतः कोपात्प्रमुमोहाचलोपमः ॥ ४८ ॥
स लब्धसंज्ञोऽतिबलो मुष्टिं संगृह्य राक्षसः । अपहासेन चिक्षेप विसंज्ञः स पपात ह ॥ ४९ ॥
तस्मिन्प्लवगशार्दूले विसंज्ञे पतिते भुवि । तच्छूलं समुपादाय सुग्रीवमभिदुद्रुवे ॥ ५० ॥
तमापतन्तं संप्रेक्ष्य कुम्भकर्णं महाबलम् । उत्पपात तदा वीरः सुग्रीवो वानराधिपः ॥ ५१ ॥
स पर्वताग्रमुत्क्षिप्य समाविध्य महाबलः । अभिदुद्राव वेगेन कुम्भकर्णं महाबलम् ॥ ५२ ॥
तमापतन्तं संप्रेक्ष्य कुम्भकर्णः प्लवंगमम् । तस्थौ विवृत्तसर्वाङ्गो वानरेन्द्रस्य संमुखः ॥ ५३ ॥
कपिशोणितदिग्धाङ्गं भक्षयन्तं महाकपीन् । कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवो वाक्यमब्रवीत् ॥ ५४ ॥
पातिताश्च त्वया वीराः कृतं कर्म सुदुष्करम् । भक्षितानि च सैन्यानि प्राप्तं ते परमं यशः ॥ ५५ ॥
त्यज तद्वानरानीकं प्राकृतैः किं करिष्यसि । सहस्वैकं निपातं मे पर्वतस्यास्य राक्षस ॥ ५६ ॥
तद्वाक्यं हरिराजस्य सत्त्वधैर्यसमन्वितम् । श्रुत्वा राक्षसशार्दूलः कुम्भकर्णोऽब्रवीद्वचः ॥ ५७ ॥
प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजःसुतः । धृतिपौरुषसंपन्नस्तस्माद्गर्जसि वानर ॥ ५८ ॥

रा० टी०—शैलेति । महच्छैलशृङ्गं गृह्य गृहीत्वा सोऽङ्गदश्शैलशिखरं कुम्भकर्णस्य मूर्द्धनि चिक्षेप सार्द्धश्लोक एकान्वयी ४४

रा० टी०—स इति । तेनाङ्गदेन कर्त्रा तेन शैलेन अभिहतः कुम्भकर्णः क्रोधेन प्रजज्वाल ॥ ४५ ॥

रा० टी०—स इति । महानादः कुम्भकर्णो वालिपुत्रमभ्यधावत ॥ ४६ ॥

रा० टी०—शूलमिति । महाबलः कुम्भकर्णः अङ्गदे शूलं ससर्ज अदूं पृथक् ॥ ४७ ॥

४७-५७] ति० टी०—तदा पतन्तम् । पुंस्त्वमार्षम् ४७--५७

रा० टी०—तदेति । बलवान् प्रशस्तबलविशिष्टोऽङ्गदः आपतन्तं शूलं लाघवात् मोक्षयामास वञ्चयामास ॥ ४८ ॥

रा० टी०—उत्पत्येति । सोऽङ्गदः उत्पत्य एनं कुम्भकर्णं तलेन उरसि अताडयत् तेन तलेनाभिहतोऽचलोपमः कुम्भकर्णः प्रमुमोह ॥ ४९ ॥

रा० टी०—स इति । लब्धसंज्ञस्स कुम्भकर्णः मुष्टिं संगृह्य चिक्षेप अत एव विसंज्ञस्संज्ञारहितः सोऽङ्गदः पपात ॥ ५० ॥

रा० टी०—तस्मिन्निति । तस्मिन्नङ्गदे भुवि पतिते सति शूलं समुपादाय सुग्रीवमभिदुद्रुवे कुम्भकर्ण इति शेषः ॥ ५१ ॥

रा० टी०—तमिति । आपतन्तं कुम्भकर्णं संप्रेक्ष्य सुग्रीव उत्पपात ॥ ५२ ॥

रा० टी०—स इति । स सुग्रीवः पर्वताग्रमुत्क्षिप्य समाविध्य दृढं गृहीत्वा कुम्भकर्णमभिदुद्राव ॥ ५३ ॥

रा० टी०—तमिति । कुम्भकर्णः आपतन्तं प्लवङ्गमं संप्रेक्ष्य विवृत्तसर्वांगस्सन् तस्थौ ॥ ५४ ॥

रा० टी०—कपीति । कपीनां शोणितेन दिग्धं व्याप्तमङ्गं यस्य तं महाकपीन् भक्षयन्तं कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवोऽब्रवीत् ॥ ५५ ॥

रा० टी०—तदाकारमाह—पातिता इति । त्वया वीराः पातिताः सैन्यानि च भक्षितानि अत एव सुदुष्करं कर्म कृतमत एव परमं यशः ते त्वया प्राप्तं तत्तस्माद्धेतोः वानरानीकं त्यज प्राकृतैः तत्कदनैः किंकरिष्यसि मे मद्गृहीतस्य एकं केवलं निपातं सहस्व श्लोकद्वयमेकान्वयि ॥ ५६ ॥ ५७ ॥

रा० टी०—तदिति । हरिराजस्य वाक्यं श्रुत्वा कुम्भकर्णोऽब्रवीत् ॥ ५८ ॥

गो० टी०—तमिति । समुन्मुखः अभिमुखः ॥ ५४–५८ ॥

५८ ] ति० टी०—प्रजापतेः पौत्रश्चतुर्मुखजृम्भणजनितः ऋक्षरजःपुत्रत्वात्सुग्रीवस्य ब्रह्मपौत्रत्वम् ॥ ५८ ॥

रा० टी०—तदाकारमाह—प्रजापतेरिति । यस्मात् ऋक्षरजःसुतः विजृम्भितचतुर्मुखजनितऋक्षरजसः पुत्रः अत एव प्रजापतेः पौत्रः अत एव धृतिपौरुषसम्पन्नस्त्वमसीति शेषः तस्माद्गर्जसि ॥ ५९ ॥

गो० टी०—प्रजापतेरिति । इदमैतिह्यमनुसंधेयम् । पुरा किल ब्रह्मणो जृम्भमाणस्य वदनादृक्षरजा नाम वानरो जातः । स कदाचित् पर्यटन् ब्रह्मलोकेऽप्सरोरूपकारिणि कस्मिंश्चित् सरसि निमज्याप्सरोरूपमभजत् । तां दृष्ट्वा काममोहिताविन्द्रादित्यौ हस्तेन युगपद्गृह्णीताम् । तत्रान्तरे तयोः क्षुभितं रेतोऽपतत् । तत्र द्वौकुमारावभवताम् । वाले पतनाद्वाली ग्रीवायां पतनात् सुग्रीवः । तं दृष्ट्वा प्रहस्य ब्रह्मा अप्सरोरूपधारिणम् ऋक्षरजसं यथापूर्वरूपप्राप्तये कुमारौ गृहीत्वा अन्यस्मिन् वानररूपकारिणि सरसि निमज्जेत्यभ्यधात् । सोपि तथा कृत्वा कुमाराभ्यां सह वानररूपमभजदृक्षरजाः । तत्पुत्रौ

१ तमिति गो. पाठः । २ युध्वाविति गो. पाठः । ३ मोचयामासेति गो. पाठः । ४ बलवान्मुष्टिमावर्त्येति गो.पाठः । ५ पर्वताग्रं समुत्क्षिप्येति गो. पाठः । ६ महाकपिरिति गो.पाठः । ७ समुन्मुख इति गो.पाठः । ८ प्लवङ्गमातिति गो.पाठः । ९ एकनिपात मिति गो. पाठः । १० कस्मादिति गो.पाठः ।

स कुम्भकर्णस्य वचो निशम्य व्याविध्य शैलं सहसा मुमोच ।
तेनाजघानोरसि कुम्भकर्णं शैलेन वज्राशनिसंनिभेन ॥ ॥ ५९ ॥
तच्छैलशृङ्गं सहसा विभिन्नं भुजान्तरे तस्य तदा विशाले ।
ततो विषेदुः सहसा प्लवंगा रक्षोगणाश्चापि मुदा विनेदुः ॥ ॥ ६० ॥
स शैलशृङ्गाभिहतश्चुकोप ननाद रोषाच्च विवृत्य वक्त्रम् ।
व्याविध्य शूलं च तडित्प्रकाशं चिक्षेप हर्यृक्षपतेर्वधाय ॥ ॥ ६१ ॥
तत्कुम्भकर्णस्य भुजप्रणुन्नं शूलं शितं काञ्चनदामयष्टिम् ।
क्षिप्रं समुत्पत्य निगृह्य दोर्भ्यां बभञ्ज वेगेन सुतोऽनिलस्य ॥ ॥ ६२ ॥
कृतं भारसहस्रस्य शूलं कालायसं महत् । बभञ्ज जानुमारोप्य तदा हृष्टः प्लवंगमः ॥ ६३ ॥
शूलं भग्नं हनुमता दृष्ट्वा वानरवाहिनी । हृष्टा ननाद बहुशः सर्वतश्चापि दुद्रुवे ॥ ६४ ॥
बभूवाथ परित्रस्तो राक्षसो विमुखोऽभवत् । सिंहनादं च ते चक्रुः प्रहृष्टा वनगोचराः ॥
मारुतिं पूजयांचक्रुर्दृष्ट्वा शूलं तथागतम् ॥ ॥ ६५ ॥
स तत्तथा भग्नमवेक्ष्य शूलं चुकोप रक्षोधिपतिर्महात्मा ।
उत्पाट्य लङ्कामलयात्सशृङ्गं जघान सुग्रीवमुपेत्य तेन ॥ ॥ ६६ ॥
स शैलशृङ्गाभिहतो विसंज्ञः पपात भूमौ युधि वानरेन्द्रः ।
तं वीक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टा युधि यातुधानाः ॥ ॥ ६७ ॥

---

वालिसुग्रीवाविति । तदनेन प्रकारेण सुग्रीवः प्रजापतेः पौत्रः ऋक्षरजसः पुत्रश्च । काश्यपात् प्रजापतेर्विवस्वान् विवस्वतः सुग्रीव इत्यन्ये ॥ ५९ ॥

५९--६५ ] ति० टी०–व्याविध्य संतोल्य ॥ ५९--६५ ॥

रा० टी०–स इति । स सुग्रीवः कुम्भकर्णस्य वचो निशम्य व्याविद्धशैलं गृहीतगिरिं मुमोच तेन शैलेन कुम्भकर्णमुरसि आजघान ॥ ६० ॥

रा० टी०–तदिति । तस्य कुम्भकर्णस्य भुजान्तरे प्राप्तं शैलशृङ्गं विभिन्नं सत्तस्माद्धेतोः प्लवङ्गाः वानराः विषेदुः रक्षोगणाः मुदा विनेदुश्च ॥ ६१ ॥

रा० टी०–स इति । शैलशृङ्गाभिहतः स कुम्भकर्णः चुकोप ननाद च व्याविद्धं विशेषेण आविद्धं हिंसा यस्मात्तत् शूलं चिक्षेप च ॥ ६२ ॥

रा० टी०–तदिति । कुम्भकर्णस्य भुजात् प्रणुन्नं प्रचलितं शूलमनिलस्य सुतो हनुमान् वेगेन समुत्पत्य दोर्भ्यां निगृह्य बभंज ॥ ६३ ॥

गो० टी०–स इति । व्याविध्य तोलयित्वा ॥ ६०–६३॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–कृतमिति । भारसहस्रस्य कृतं निर्मितं शूलं जानुमारोप्य प्रहृष्टः प्लवङ्गमो हनुमान् बभञ्ज ॥ ६४ ॥

गो० टी०–कृतमिति । भारसहस्रस्य भारसहस्रेण कृतं जानुन्यारोप्य बभञ्जेत्यन्वयः ॥ ६४ ॥

रा० टी०–शूलमिति । हनुमता भग्नं शूलं दृष्ट्वा हृष्टा वानरवाहिनी बहुशो ननाद दुद्रुवे च ॥ ६५ ॥

रा० टी०–बभूवेति । राक्षसः शूलं द्विधा कृतं दृष्ट्वा परित्रस्तः सन् विमुखः उदासीनमुखोऽभवत् वनगोचराः वानराः सिंहनादं चक्रुः मारुतिं पूजयांचक्रुश्च । सार्धश्लोक एकान्वयी ६६

गो० टी०–शूलमिति । सर्वतः सर्वस्मात् प्रदेशात् दुद्रुवे आजगाम ॥ ६५ ॥ ६६ ॥

६६–६७ ] ति० टी०–लङ्कामलयाल्लङ्कासमीपवर्तिमलयात् ॥ ६६ ॥ ६७ ॥

रा० टी०–स इति । स कुम्भकर्णः शूलं तथा भग्नमवेक्ष्य चुकोप अत एव लङ्कामलयात् शृङ्गमुत्पाट्य तेन जघान ॥६७॥

रा० टी०–स इति । शैलशृङ्गाभिहतः अत एव विसंज्ञः वानरेन्द्रः पपात । भूमौ पतितं तं सुग्रीवं वीक्ष्य प्रहृष्टा यातुधानाः नेदुः ॥ ६८ ॥

गो० टी०–स इति । सुग्रीवमुपेत्य तेन शृङ्गेण जघान । त्रिकूटशिखरस्थलङ्काद्वारे स्थित्वा युध्यतः कुम्भकर्णस्य प्रदेशान्तरस्थलङ्कामलयशृङ्गोत्पाटनं कथमुपपद्यत इति चेत् तद-

---

१ विशीर्णमिति गो. पाठः । २ हर्यृक्षेति गो. पाठः । ३ प्रविद्धमिति गो. पाठः । ४ जुष्टमिति गो. रा. पाठः । ५ जानुनीति गो. पाठः । ६ प्रहृष्टः प्लवगर्षभ इति गो. पाठः । ७ इदमर्धं गो. पुस्तके नास्ति । ८ द्विधाकृतमिति रा. पाठः । ९ प्रेक्ष्येति गो. पाठः । १० स्वथेति गो. पाठः ।

समभ्युपेत्याद्भुतघोरवीर्यं स कुम्भकर्णो युधि वानरेन्द्रम् ।
जहार सुग्रीवमभिप्रगृह्य यथानिलो मेघमिवं प्रचण्डः ॥ ॥ ६८ ॥
स तं महामेघनिकाशरूपमुत्पाट्य गच्छन्युधि कुम्भकर्णः ।
रराज मेरुप्रतिमानरूपो मेरुर्यथा ह्युच्छ्रितघोरशृङ्गः ॥ ॥ ६९ ॥
ततस्तमादाय जगाम वीरः संस्तूयमानो युधि राक्षसेन्द्रैः ।
शृण्वन्निनादं त्रिदिवालयानां प्लवंगराजग्रहविस्मितानाम् ॥ ॥ ७० ॥
ततस्तमादाय तदा स मेने हरीन्द्रमिन्द्रोपममिन्द्रवीर्यः ।
अस्मिन्हते सर्वमिदं हतं स्यात्सराघवं सैन्यमितीन्द्रशत्रुः ॥ ॥ ७१ ॥
विद्रुतां वाहिनीं दृष्ट्वा वानराणामितस्ततः । कुम्भकर्णेन सुग्रीवं गृहीतं चापि वानरम् ॥ ७२ ॥
हनूमांश्चिन्तयामास मतिमान्मारुतात्मजः । एवं गृहीते सुग्रीवे किं कर्तव्यं मया भवेत् ॥ ७३ ॥
यद्वै न्याय्यं मया कर्तुं तत्करिष्याम्यसंशयम् । भूत्वा पर्वतसंकाशो नाशयिष्यामि राक्षसम् ॥ ७४ ॥
मया हते संयति कुम्भकर्णे महाबले मुष्टिविशीर्णदेहे ।
विमोचिते वानरपार्थिवे च भवन्तु हृष्टाः प्लवगाः समग्राः ॥ ॥ ७५ ॥
अथवा स्वयमप्येष मोक्षं प्राप्स्यति वानरः । गृहीतोऽयं यदि भवेत्रिदशैः सासुरोरगैः ॥ ७६ ॥

---

त्रिगुणप्रमाणशरीरत्वान्न दोषः । लङ्कामलयशब्देन त्रिकूटं वोपचर्यते ॥ ६७-६९ ॥

६८ ] ति० टी०-अभिगृह्य कक्षपुटे कृत्वा जहार सैन्यमध्यादन्यदेशं निनाय ॥ ६८ ॥

रा० टी०-समिति । अद्भुतं घोरं वीर्यं यस्य तं सुग्रीवमनिलो मेघमिव अभिप्रगृह्य कुम्भकर्णो जहार ॥ ६९ ॥

६९ ] ति० टी०-विशेषेणोच्छ्रितान्युन्नतानि घोराणि शृङ्गाणि यस्य सः ॥ ६९ ॥

रा० टी०-स इति । महामेघनिकाशरूपं तं सुग्रीवमुत्पाट्य समुत्थाय गच्छन् मेरुप्रतिमानरूपः कुम्भकर्णः व्युच्छ्रितानि अत्युन्नतानि घोरशृंगाणि यस्य स मेरुरिव रराज ॥ ७० ॥

गो० टी०-स तमिति । अभ्युच्छ्रितम् उन्नतम् । स्वाकारसादृश्याय प्रथमं मेरूपादानम् । द्वितीयं तु सुग्रीवधारणकालिकसादृश्याय ॥ ७० ॥

७०-७५ ] ति० टी०-ततस्तमादाय जगामेति लङ्कामिति शेषः । त्रिदिवालयानां निनादं दुःखजं शृण्वन् ॥ ७०-७५ ॥

रा० टी०-तत इति । संस्तूयमानो राक्षसेन्द्रः प्लवङ्गराजग्रहेण विस्मितानां त्रिदिवालयानां निनादं शृण्वन् सन् जगाम ॥ ७१ ॥

गो० टी०-तत इति । उत्पाट्य उद्धृत्य त्रिदशालयानां स्वर्गिणाम् ॥ ७१ ॥

रा० टी०-तत इति । इन्द्रशत्रुः कुम्भकर्णः हरीन्द्रं सुग्रीवं समादाय अस्मिन् हते सति सराघवमिदं सैन्यं हतं स्यादिति मेने ॥ ७२ ॥

रा० टी०-विद्रुतामिति । कुम्भकर्णेन गृहीतं सुग्रीवं विद्रुतां वानराणां वाहिनीं च दृष्ट्वा हनुमान् चिन्तयामास । सार्धश्लोक एकान्वयी ॥ ७३ ॥

रा० टी०-तदाकारमाह—एवमिति । सुग्रीवे एवं गृहीते सति मया किं कर्तव्यं भवेत् । अर्धं पृथक् ॥ ७४ ॥

रा० टी०-निश्चित्याह—यद्वेति । मया कर्तुं यन्न्याय्यं तत्करिष्यामि । न्याय्यमेवाह । पर्वतसंकाशो भूत्वा राक्षसं नाशयिष्यामि ॥ ७५ ॥

रा० टी०-मयेति । कुम्भकर्णे मया हते सति अत एव वानरपार्थिवे सति सुग्रीवे विमोचिते सति प्लवङ्गाः हृष्टास्तुष्टा भवन्तु ॥ ७६ ॥

गो० टी०-बलवान् कुम्भकर्णो युद्धे पतितं सुग्रीवं किमर्थं हृतवानित्यत्राह-ततस्तमादायेति ॥ ७२-७६ ॥

७६ ] ति० टी०-अथवैष वानरो वानरराजो महाबलत्वात्स्वयमेव कुम्भकर्णान्मोक्षं प्राप्स्यति । यदि न मोचयिष्यत्यात्मानं तदा मोचयितव्यो मयेति क्षणमात्रं प्रतीक्ष्य स्थितः । सासुरोरगैस्त्रिदशैर्गृहीतोऽपि यद्ययं भवेत्तथापि महाबलत्वात्स्वयमेव मोक्षं प्राप्स्यति किं पुनरनेन राक्षसापसदेनेति भावः ॥ ७६ ॥

रा० टी०-निश्चयान्तरमाह—अथवेति । अयमेष सुग्रीवः

---

१ तमिति गो. पाठः । २ मेघमतीति गो. पाठः । ३ अमीति गो. पाठः । ४ उत्पाट्येति गो. पाठः । ५ राक्षसेन्द्रैरिति गो. पाठः । ६ त्रिदशालयानामिति गो. पाठः । ७ ततइति गो. पाठः । ८ यद्वै इति गो. रा. पाठः । ९ सर्वथेति गो. पाठः । १० विकीर्णेति गो. पाठः । ११ पार्थिव इति गो. पाठः ।

मन्ये न तावदात्मानं बुध्यते वानराधिपः । शैलप्रहाराभिहतः कुम्भकर्णेन संयुगे ॥ ७७ ॥
अयं मुहूर्तात्सुग्रीवो लब्धसंज्ञो महाहवे । आत्मनो वानराणां च यत्पथ्यं तत्करिष्यति ॥ ७८ ॥
मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः । अप्रीतिश्च भवेत्कष्टा कीर्तिनाशश्च शाश्वतः ॥ ७९ ॥
तस्मान्मुहूर्तं काङ्क्षिष्ये विक्रमं मोक्षितस्य तु । भिन्नं च वानरानीकं तावदाश्वासयाम्यहम् ॥ ८० ॥
इत्येवं चिन्तयित्वाथ हनूमान्मारुतात्मजः । भूयः संस्तम्भयामास वानराणां महाचमूम् ॥ ८१ ॥

स कुम्भकर्णोऽथ विवेश लङ्कां स्फुरन्तमादाय महाहरिं तम् ।
विमानचर्यागृहगोपुरस्थैः पुष्पाग्र्यवर्षैरभिपूज्यमानः ॥ ॥ ८२ ॥

लाजगन्धोदवर्षैस्तु सेव्यमानः शनैः शनैः । राजवीथ्यास्तु शीतत्वात्संज्ञां प्राप महाबलः ॥ ८३ ॥

ततः स संज्ञामुपलभ्य कृच्छ्राद्बलीयसस्तस्य भुजान्तरस्थः ।
अवेक्षमाणः पुरराजमार्गं विचिन्तयामास मुहुर्महात्मा ॥ ॥ ८४ ॥
एवं गृहीतेन कथं नु नाम शक्यं मया संप्रति कर्तुमद्य ।
तथा करिष्यामि यथा हरीणां भविष्यतीष्टं च हितं च कार्यम् ॥ ॥ ८५ ॥

---

सासुरोरगैः त्रिदशैरपि यदि गृहीतो भवेत् तदापि स्वयमेव मोक्षं प्राप्स्यति एतेनैतद्ग्रहणमकिञ्चित्करमिति सूचितम् ॥ ७७ ॥

गो० टी०–अथवेति । सासुरोरगैः सुरैः गृहितोप्ययं मोक्षं प्राप्तुं शक्नोति किं पुनरनेन राक्षसापसदेनेति भावः॥७७॥

७७–७८ ] ति० टी०–कथं तर्हि नेदानीं मोचयतीत्यत आह—मन्ये इति । मोहवशादात्मानं परेण गृहीतं न बुध्यत इति मन्ये इत्यर्थः ॥ ७७ ॥ ७८ ॥

रा० टी०–मन्य इति । कुम्भकर्णेन शैलप्रहाराभिहतो यो वानराधिपः तावदिदानीमात्मानं न बुध्यते सोयं सुग्रीवः मुहूर्त्ताल्लब्धसंज्ञस्सन् यत्पथ्यं हितं तत्करिष्यति इत्यहं मन्ये । अर्द्धचतुष्टयमेकान्वयि ॥ ७८ ॥ ७९ ॥

गो० टी०–तर्हि मोचयित्वात्मानं किमिति न निवर्तत इत्यत्राह–मन्य इत्यादिना । तावदित्यवधारणे आत्मानमेव न बुध्यत इत्यर्थः । पथ्यं हितम् ॥ ७८ ॥ ७९ ॥

७९ ] ति० टी०–कृच्छ्रगतत्वेऽपि मया नायं मोचयितुमुचित इत्याह—मया त्विति ॥ ७९ ॥

रा० टी०–मयेति । मया मोचितस्य सुग्रीवस्य कीर्तिनाशः अत एव कष्टा अनिवारणीया अप्रीतिः अयं मत्पुरुषार्थविघातक इति विचारजनितद्वेषश्च भवेत् ॥ ८० ॥

गो० टी०–कृच्छ्रगतः स्वामी भृत्येनावश्यं मोचनीय एवेत्याशङ्क्याह–मया त्विति ॥ ८० ॥

८०–८१ ] ति० टी०–काङ्क्षिष्ये प्रतीक्षिष्ये । 'तस्मात्क्षणं प्रतीक्षिष्ये' इति पाठान्तरम् । मोक्षितस्य कृतमोक्षणस्य विक्रमं तु द्रक्ष्यामीति शेषः ॥ ८० ॥ ८१ ॥

रा० टी०–तस्मादिति । तस्मादुक्तहेतोः नः पार्थिवस्य सुग्रीवस्य विक्रमं क्षणं प्रतीक्षिष्ये तावत्कालं भिन्नं वानरानीकमाश्वासयामि च ॥ ८१ ॥

गो० टी०–तस्मादिति । तावत् सुग्रीवागमनपर्यन्तम् ८१

रा० टी०–इतीति । हनुमान् इत्येवं चिन्तयित्वा वानराणां महाचमूं भूयस्संस्तम्भयामास ॥ ८२ ॥

गो० टी०–इतीति । संस्तम्भयामास गमनान्निवर्तयामास ॥ ८२ ॥

८२ ] ति० टी०–पुष्पाग्र्यवर्षैरुत्तमपुष्पवर्षैः ॥ ८२ ॥

रा० टी०–स इति । महाहरिं सुग्रीवमादाय कुम्भकर्णो लंकां विवेश अत एव विमानादिस्थैः पुष्पाग्र्यवर्षैः अभिपूज्यमानो बभूवेति शेषः ॥ ८३ ॥

गो०टी०-स इति । पुष्पाग्र्यवर्षैः श्लाघ्यपुष्पवृष्टिभिः ८३-८५

८३–८४ ] ति० टी०–लाजगन्धोदवर्षैः सिच्यमानः दैवगत्या मोहनिवृत्तये सुग्रीव इति शेषः ॥ ८३ ॥ ८४ ॥

रा० टी०–लाजेति । महाबलस्सुग्रीवः राजवीथ्याः शीतत्वात् हेतोः लाजादिवर्षैः शनैश्शनैः सिच्यमानस्सन् सञ्ज्ञां प्राप ॥ ८४ ॥

रा० टी०–तत इति । तस्य कुम्भकर्णस्य भुजांतरस्थः स सुग्रीवः सञ्ज्ञामुपलभ्य राजमार्गमवेक्षमाणस्सन् चिन्तयामास ॥ ८५ ॥

८५ ] ति० टी०–संप्रतिकर्तुं सम्यक्प्रतिकर्तुम् ॥ ८५ ॥

रा० टी०–तदाकारमाह—एवमिति । एवं गृहीतेन मया सम्प्रतिकर्त्तुं सम्यक् प्रतिकर्त्तुं कथं शक्यमतः यथा येन प्रकारेण हरीणामिष्टं हितं च भविष्यति तथा कार्यं करिष्यामि ॥ ८६ ॥

गो० टी०–एवमिति । संप्रतिकर्तुं सम्यक् प्रतिकर्तुम् । अन्यथा अद्येति पुनरुक्तिः स्यात् ॥ ८६ ॥

---

१ पार्थिवस्येति गो.पाठः । २ कपिमिति गो. पाठः । ३ अवकीर्यमाण इति गो. पाठः । ४ सिच्यमान इति गो. पाठः । ५ मार्गस्येति गो. पाठः।

ततः कराग्रैः सहसा समेत्य राजा हरीणाममरेन्द्रशत्रोः ।
खरैश्च कर्णौ दशनैश्च नासां ददंश पादैर्विददार पार्श्वौ ॥ ॥ ८६ ॥
स कुम्भकर्णो हृतकर्णनासो विदारितस्तेन रदैर्नखैश्च ।
रोषाभिभूतः क्षतजार्द्रगात्रः सुग्रीवमाविध्य पिपेष भूमौ ॥ ॥ ८७ ॥
स भूतले भीमबलाभिपिष्टः सुरारिभिस्तैरभिहन्यमानः ।
जगाम खं कन्दुकवज्जवेन पुनश्च रामेण समाजगाम ॥ ॥ ८८ ॥
कर्णनासाविहीनस्तु कुम्भकर्णो महबालः । रराज शोणितोत्सिक्तो गिरिः प्रस्रवणैरिव ॥ ८९ ॥
शोणितार्द्रो महाकायो राक्षसो भीमदर्शनः । अमर्षाच्छोणितोद्गारी शुशुभे रावणानुजः ॥ ९० ॥
नीलाञ्जनचयप्रख्यः ससंध्य इव तोयदः । युद्धायाभिमुखो भीमो मनश्चक्रे निशाचरः ॥ ९१ ॥
गते च तस्मिन्सुरराजशत्रुः क्रोधात्प्रदुद्राव रणाय भूयः ।
अनायुधोऽस्मीति विचिन्त्य रौद्रो घोरं तदा मुद्गरमाससाद ॥ ॥ ९२ ॥
ततः सपुर्याः सहसा महात्मा निष्क्रम्य तद्वानरसैन्यमुग्रम् ।
बभक्ष रक्षो युधि कुम्भकर्णः प्रजा युगान्ताग्निरिव प्रवृद्धः ॥ ॥ ९३ ॥
बुभुक्षितः शोणितमांसगृध्नुः प्रविश्य तद्वानरसैन्यमुग्रम् ।
चखाद रक्षांसि हरीन्पिशाचानृक्षांश्च मोहाद्युधि कुम्भकर्णः ॥
यथैव मृत्युर्हरते युगान्ते स भक्षयामास हरींश्च मुख्यान् ॥ ॥ ९४ ॥
एकं द्वौ त्रीन्बहून्क्रुद्धो वानरान्सह राक्षसैः । समादायैकहस्तेन प्रचिक्षेप त्वरन्मुखे ॥ ९५ ॥

८६-८७ ] ति० टी०—खरैस्तीक्ष्णैः कराग्रैर्नखैः कर्णौ लुलुञ्चेति शेषः । पादैः पादनखैः ॥ ८६ ॥ ८७ ॥

रा० टी०—तत इति । हरीणां राजा सुग्रीवः समेत्य एवं विचार्य खरैस्तीक्ष्णैः कराग्रैः अमरेन्द्रशत्रोः कुम्भकर्णस्य कर्णौ दशनैर्नासां च ददंश विदारयामास पादैः पार्श्वौ विददार च ८७

गो० टी०—तत इति । खरैः तीक्ष्णैः कराग्रैः कर्णौ समेत्य संहृत्य दशनैः नासां च ददंश पार्श्वेषु कपोलयोरंसयोरुदरान्तरयोश्च पादाभ्याम् विददारेति शेषः ॥ ८७ ॥

रा० टी०—स इति । तेन सुग्रीवेण रदैर्दन्तैर्नखैश्च विदारितः अत एव हृतकर्णनासः अत एव क्षतजेन रुधिरेण आर्द्रं गात्रं यस्य अत एव रोषाभिभूतः कुम्भकर्णः सुग्रीवं भूमावाविध्य निपात्य पिपेष संचूर्णानुकूलव्यापारं चकार ॥ ८८ ॥

गो० टी०—स इति । विमर्दितः संपीडितः ॥ ८८ ॥ ८९ ॥

८८-९० ] ति० टी०—सुरारिभी राक्षसैः ॥ ८८-९० ॥

रा० टी०—स इति । भीमबलेन कुम्भकर्णेन अभिपिष्ट इव अत एव सुरारिभिः राक्षसान्तरैः अभिहन्यमानः सुग्रीवः जवेन खमाकाशं जगाम अत एव रामेण समाजगाम ॥ ८९ ॥

रा० टी०—कर्णेति । शोणितोत्सिक्तः कुम्भकर्णः प्रस्रवणैर्निर्झरैर्गिरिरिव रराज ॥ ९० ॥

गो० टी०—कर्णेति । प्रस्रवणैः निर्झरैः ॥ ९० ॥

रा० टी०—शोणितेति । शोणितोद्गारी रुधिरवमनशीलः रावणानुजः अमर्षात् शुशुभे ॥ ९१ ॥

गो० टी०—शोणितार्द्र इति । अभिमुखः सन् युद्धाय मनश्चक्र इति संबन्धः ॥ ९१-९४ ॥

९१-९३ ] ति० टी०—नीलाञ्जनेत्यनेन निध्यञ्जनादिव्यावृत्तिः ॥ ९१-९३ ॥

रा० टी०—नीलेति । नीलाञ्जनचयवत् प्रख्या आकृतिर्यस्य ससन्ध्यः सन्ध्याकालिकतोयद इव निशाचरः अभिमुखस्सन् युद्धाय मनश्चक्रे ॥ ९२ ॥

रा० टी०—गते इति । सुरराजशत्रुः कुम्भकर्णः तस्मिन् सुग्रीवे गते सति रणाय भूयः प्रदुद्राव अत एव अनायुधोहमस्मीति विचिंत्य मुद्गरमाससाद जग्राह च ॥ ९३ ॥

रा० टी०—तत इति । कुम्भकर्णः पुर्याः लंकायाः निष्क्रम्य प्रवृद्धो युगांताग्निः प्रजा इव वानरसैन्यं बभक्ष ॥ ९४ ॥

९४-९५ ] ति० टी०—रक्षआदेरपि खादने हेतुः— मोहादिति । मद्यादिनेव रक्तपानजमदवैवश्यादिति भावः । यथा मृत्युर्हरते तथा स भक्षयामासेत्यर्थः ॥ ९४ ॥ ९५ ॥

रा० टी०—बुभुक्षित इति । बुभुक्षितः अत एव शोणितमांसगृध्नुः कुम्भकर्णः मोहादविवेकाद्धेतोः रक्षःप्रभृतीन् चखाद ९५

रा० टी०—तदेव भङ्ग्यन्तरेणाह—यथेति । युगान्ते मृत्युर्यथा हरते तथा मुख्यान् हरीन् तदुपलक्षितराक्षसादीन् संभक्षयामास अर्द्धं पृथक् ॥ ९६ ॥

१ शत्रुमिति गो. पाठः । २ पार्श्वेषु च कुम्भकर्णमिति गो. पाठः । ३ विमर्दितश्चेति गो. पाठः । ४ वेगवदभ्युपेत्येति गो. पाठः । ५ शोणितैः सिक्त इति गो. पाठः । ६ एतदादौ उत्तरपद्योत्तरार्धं युद्धायेत्यादि गो. पाठः । ७ महौजा इति गो. पाठः ।

संप्रस्रवंस्तदा मेदः शोणितं च महाबलः । वध्यमानो नगेन्द्राग्रैर्भक्षयामास वानरान् ॥ ९६ ॥
ते भक्ष्यमाणा हरयो रामं जग्मुस्तदा गतिम् । कुम्भकर्णो भृशं क्रुद्धः कपीन्खादन्प्रधावति ॥ ९७ ॥
शतानि सप्त चाष्टौ च विंशत्त्रिंशत्तथैव च । संपरिष्वज्य बाहुभ्यां खादन्विपरिधावति ॥ ९८ ॥
मेदोवसाशोणितदिग्धगात्रः कर्णावसक्तग्रथितान्त्रमालः ।
ववर्ष शूलानि सुतीक्ष्णदंष्ट्रः कालो युगान्तस्थ इव प्रवृद्धः ॥ ॥ ९९ ॥
तस्मिन्काले सुमित्रायाः पुत्रः परबलार्दनः । चकार लक्ष्मणः क्रुद्धो युद्धं परपुरंजयः ॥१००॥
स कुम्भकर्णस्य शरान्शरीरे सप्त वीर्यवान् । निचखानाददे चान्यान्विससर्ज च लक्ष्मणः ॥१०१॥
पीड्यमानस्तदस्त्रं तु विशेषं तत्स राक्षसः । ततश्चुकोप बलवान् सुमित्रानन्दवर्धनः ॥१०२॥
अथास्य कवचं शुभ्रं जाम्बूनदमयं शुभम् । प्रच्छादयामास शरैः संध्याभ्रमिव मारुतः ॥१०३॥
नीलाञ्जनचयप्रख्यः शरैः काञ्चनभूषणैः । अपीड्यमानः शुशुभे मेघैः सूर्य इवांशुमान् ॥१०४॥
ततः स राक्षसो भीमः सुमित्रानन्दवर्धनम् । सावज्ञमेव प्रोवाच वाक्यं मेघौघनिःस्वनः ॥१०५॥
अन्तकस्याप्यकष्टेन युधि जेतारमाहवे । युध्यता मामभीतेन ख्यापिता वीरता त्वया ॥१०६॥
प्रगृहीतायुधस्येह मृत्योरिव महामृधे । तिष्ठन्नप्यग्रतः पूज्यः किमु युद्धप्रदायकः ॥१०७॥
ऐरावतं समारूढो वृतः सर्वामरैः प्रभुः । नैव शक्रोऽपि समरे स्थितपूर्वः कदाचन ॥१०८॥
अद्य त्वयाहं सौमित्रे बालेनापि पराक्रमैः । तोषितो गन्तुमिच्छामि त्वामनुज्ञाप्य राघवम् ॥१०९॥
यत्तु वीर्यबलोत्साहैस्तोषितोऽहं रणे त्वया । राममेवैकमिच्छामि हन्तुं यस्मिन्हते हतम् ॥११०॥
रामे मयात्र निहते येऽन्ये स्थास्यन्ति संयुगे । तानहं योधयिष्यामि स्वबलेन प्रमाथिना ॥१११॥
इत्युक्तवाक्यं तद्रक्षः प्रोवाच स्तुतिसंहितम् । मृधे घोरतरं वाक्यं सौमित्रिः प्रहसन्निव ॥११२॥
यस्त्वं शक्रादिभिर्देवैरसह्यः प्राप्य पौरुषम् । तत्सत्यं नान्यथा वीर दृष्टस्तेऽद्य पराक्रमः ॥११३॥
एष दाशरथी रामस्तिष्ठत्यद्रिरिवाचलः । इति श्रुत्वा ह्यनादृत्य लक्ष्मणं स निशाचरः ॥११४॥
अतिक्रम्य च सौमित्रिं कुम्भकर्णो महाबलः । राममेवाभिदुद्राव कम्पयन्निव मेदिनीम् ॥११५॥
अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन् । कुम्भकर्णस्य हृदये ससर्ज निशिताञ्शरान् ॥११६॥
तस्य रामेण विद्धस्य सहसाभिप्रधावतः । अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः ॥११७॥

---

रा० टी०—भक्षणप्रकारमाह—एकमिति । एकप्रभृतीन् राक्षसैः सह वानरान् एकहस्तेन समादाय मुखे प्रचिक्षेप ॥ ९७ ॥

गो० टी०—बुभुक्षित इति । शोणितमांसगृध्नुः शोणितमांसलोलुपः ॥ ९५–९७ ॥

९६ ] ति० टी०—संप्रस्रवत् अडभाव आर्षः । भक्षितवानरसंबन्धिशोणितादि ॥ ९६ ॥

रा० टी०-समिति । नगेन्द्राग्रैर्वध्यमानोपि कुम्भकर्णः वानरान् भक्षयामास अत एव मेदः शोणितं च संप्रस्रवत् संप्रास्रवत् ९८ ॥

गो० टी०—संप्रस्रवन्निति । संप्रस्रवन् तालुभ्यामुद्वमन् शोणितं मेदश्च भक्षितवानरसंबन्धि ॥ ९८ ॥

९७–९८ ] ति० टी०—गतिं शरणम् ॥ ९७ ॥ ९८ ॥

रा० टी०—ते इति । भक्ष्यमाणाः हरयो रामं जग्मुः । कुम्भकर्णस्तु कपीन् खादन् सन् प्रधावति ॥ ९९ ॥

गो० टी०—स इत्यर्धम् । गतिं शरणम् ॥ ९९ ॥

गो० टी०—कुम्भकर्ण इत्यर्धम् । प्रधावति प्राधावत् । उत्तरश्लोकेप्येवमेव ॥ १०० ॥ १०१ ॥

रा० टी०—तत्प्रकारमाह—शतानीति । शतादीन् संपरिष्वज्य विपरिधावति ॥ १०० ॥

९९–१०१ ] ति० टी०—कर्णावसक्तेत्यनेनाधोभागे एव कर्णलुञ्चनं सुग्रीवेण कृतमिति गम्यते । कर्णावसक्ता ग्रथिताः परस्परसंलग्ना अन्त्रमाला यस्य सः ॥ ९९–१०१ ॥

रा० टी०—मेद इति । मेदःप्रभृतिभिः दिग्धं गात्रं यस्य कर्णयोः तन्मूलप्रदेशयोरवसक्ता संलग्ना ग्रथिता ग्रन्थियुक्ता अन्त्रमाला यस्य स कुम्भकर्णः युगान्तस्य काल इव शूलानि ववर्ष ॥ १०१ ॥

रा० टी०—तस्मिन्निति । तस्मिन्काले क्रुद्धो लक्ष्मणः युद्धं चकार ॥ १०२ ॥

गो० टी०—तस्मिन् काल इति । स्पष्टः ॥ १०२ ॥

रा० टी०—स इति । स लक्ष्मणः कुम्भकर्णस्य शरीरे सप्तशरान् निचखान अन्यांश्च शरानाददे विससर्ज च ॥ १०३ ॥

गो० टी०—स कुम्भकर्णस्येति । स्पष्टः ॥ १०३ ॥

१०२–११७ ] ति० टी०—पीड्यमानः स राक्षसस्तदस्त्रं विशेषमस्त्रान्तरेण विगतशेषं चकारेत्यर्थः ॥ १०२–११७ ॥

---

१ प्रस्रवन्निति गो.पा. । २ इदं पद्यं गो.पुस्तके नास्ति । ३ बाणानिति गो.पा. । ४ एतस्मादारभ्य त्रयोदश पद्यानि गो.पुस्तके न सन्ति । ५ दारयन्निवेति गो.पा. ।

रामास्त्रविद्धो घोरं वै नर्दन्राक्षसपुङ्गवः । अभ्यधावत तं[२] क्रुद्धो हरीन्विद्रावयन्रणे ॥११८॥
तस्योरसि निमग्नास्ते शरा बर्हिणवाससः । हस्ताच्चास्य परिभ्रष्टा गदा[४] चोर्व्यां पपात ह ॥११९॥
आयुधानि च सर्वाणि विप्रकीर्यन्त[५] भूतले । स निरायुधमात्मानं यदा मेने महाबलः ॥१२०॥
मुष्टिभ्यां च कराभ्यां च चकार कदनं महत् । स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ॥
रुधिरं परिसुस्राव गिरिः प्रस्रवणं यथा ॥ ॥१२१॥
स तीव्रेण च कोपेन रुधिरेण च मूर्च्छितः । वानरान्राक्षसानृक्षान्खादन्स परिधावति ॥१२२॥
अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः । चिक्षेप राममुद्दिश्य बलवानन्तकोपमः ॥
अप्राप्तमन्तरा रामः सप्तभिस्तमजिह्मगैः । चिच्छेद[६] गिरिशृङ्गं तं पुनः संधाय कार्मुकम्॥१२३॥

---

रा० टी०-पीड्यमान इति । पीड्यमानः लक्ष्मणशरैर्बाध्यमानस्स कुम्भकर्णः अन्नं विशेषं विगतशेषं चकारेति शेषः विध्वंसयामासेत्यर्थः। ततस्तस्माद्धेतोस्सुमित्रानन्दवर्द्धनः चुकोप ॥ १०४ ॥

रा० टी०-अथेति । अस्य कुम्भकर्णस्य कवचं संध्याभ्रं मारुत इव शरैः प्रच्छादयामास । लक्ष्मण इति शेषः ॥१०५॥

रा० टी०-नीलेति । कांचनभूषणैः शरैरापीड्यमान आच्छाद्यमानः नीलाञ्जनचयप्रख्यः कुम्भकर्णः मेघैराच्छाद्यमानस्सूर्य इव शुशुभे ॥ १०६ ॥

रा० टी०-तत इति । स कुम्भकर्णः सावज्ञं कृतस्वानादरं सुमित्रानन्दवर्द्धनं प्रोवाच ॥ १०७ ॥

रा० टी०-तदाकारमाह—अन्तकस्येत्यादिभिः । अन्तकस्यापि अकष्टेन अल्पप्रयत्नेनेत्यर्थः जेतारं मां युध्यता अत एव अभीतेन त्वया वीरता ख्यापिता ॥ १०८ ॥

रा० टी०-वीरताख्यापने हेतुमाह—प्रगृहीतेति । मृत्योरिव प्रगृहीतायुधस्य मे अग्रतः अग्रेतिष्ठन्नपि जनः पूज्यो भवति युद्धप्रदायकः पूज्यश्चेत्किमु वक्तव्यम् ॥ १०९ ॥

रा० टी०-ननु कथं तव मृत्युसादृश्यमित्यत आह—ऐरावतेति । सर्वामरैर्वृतश्शक्रोपि समरे मत्संग्रामे स्थितपूर्वः कदाचन न ॥ ११० ॥

रा० टी०-अद्येति । बलेन पराक्रमैः प्रभावैश्च त्वया तोषितोऽहं त्वामनुज्ञाप्य त्वदाज्ञां गृहीत्वा गन्तुमिच्छामि॥१११॥

रा० टी०-यदिति । यद्यस्माद्धेतोः वीर्यबलोत्साहैः त्वयाहं तोषितस्तस्माद्धेतोः यस्मिन् हते हतं निखिलं सैन्यमिति शेषः। तमेकं राममेव हंतुमिच्छामि त्वां हंतुं नेच्छामीत्यर्थः ॥११२॥

रा० टी०-राम इति । मया रामे निहते सति येऽन्ये स्थास्यन्ति तानहं स्वबलेन स्वसैन्येन योधयिष्यामि ॥११३॥

रा० टी०-इतीति । इत्यनेन प्रकारेण उक्तं वाक्यं येन तत् घोरतरं रक्षः स्तुत्या संहितं मिश्रितं वाक्यं सौमित्रिरुवाच ॥ ११४ ॥

रा० टी०-तदाकारमाह—य इति । शक्रादिभिर्देवैः असह्यं पौरुषं प्राप्य ब्रूपे इति शेषः। तत्सत्यमन्यथा न यतस्ते पराक्रमो दृष्टः ॥ ११५ ॥

रा० टी०-ननु रामः क्वास्तीत्यत आह अद्रिरिवाचलो राम एष तिष्ठति। अर्द्ध पृथक्—इतीति । इति श्रुत्वा लक्ष्मणमनादृत्य अत एवातिक्रम्य संत्यज्य कुम्भकर्णः राममेवाभिदुद्राव सार्द्धश्लोक एकान्वयी ॥ ११६ ॥ ११७ ॥

गो० टी०-अतिक्रम्येति । स्पष्टः ॥ १०४ ॥

रा० टी०-अथेति । रामः अस्त्रं प्रयोजयन् अनुसंदधत् सन् कुम्भकर्णस्य हृदये शरान् ससर्ज ॥ ११८ ॥

गो० टी०-अथेति । स्पष्टः ॥ १०५ ॥

रा० टी०-तस्येति । रामेण विद्धस्य अत एव क्रुद्धस्य अत एव प्रधावतः कुम्भकर्णस्य मुखात् अर्चिषोऽग्निकणाः निश्चेरुः ॥ ११९ ॥

गो० टी०-तस्येति । अर्चिषः ज्वालाः ॥ १०६ ॥

११८] ति०टी-अभ्यधावत तं रामं विसृज्येतिशेषः॥११८॥

रा० टी०-रामेति । रामास्त्रविद्धः अत एव घोरं नर्दन् राक्षसपुङ्गवो हरीन् विद्रावयन् सन् अभ्यधावत ॥ १२० ॥

गो० टी०-रामास्त्रेति । स्पष्टः ॥ १०७ ॥

११९] ति० टी०-ते रौद्रास्त्रप्रयोजिताः शराः११९॥१२०

रा० टी०-तस्येति । बर्हिणवाससः शराः तस्य कुम्भकर्णस्य उरसि निमग्नाः अत एव अस्य हस्तात्परिभ्रष्टा गदा उर्व्यां पपात सर्वाणि आयुधानि विप्रकीर्यन्त विप्राकीर्यन्त च। सार्धश्लोक एकान्वयी ॥ १२१ ॥

गो० टी०-तस्येति सार्धः । बर्हिणवाससः बर्हिणं बर्हिपत्रं वासो वास स्थानं येषां ते तथोक्ताः । आयुधानि खड्गादीनि ॥ १०८ ॥

रा० टी०-स इति । स कुम्भकर्णः आत्मानं यदा निरायुधं मेने तदा मुष्टिभ्यां बद्धहस्ताभ्यां कराभ्यां प्रसृताङ्गुलिकहस्ताभ्यां च कदनं हिंसनं चकार ॥ १२२ ॥

गो०टी०-स इति । कदनं वानराणामिति शेषः॥१०९॥

१२१-१२३] ति० टी०-प्रस्रवणं निर्झरः ॥१२१-१२३॥

---

१ नदन्निति गो. पाठः । २ समिति गो. पाठः । ३ चेति गो. पाठः । ४ पपातोर्व्यां महागदेति गो.पाठः । ५ प्राकीर्यन्तेति गो. पाठः । ६ इदमर्धमधिकं रा. पुस्तके ।

त[1]तस्तु रामो धर्मात्मा तस्य शृ[2]ङ्गं महत्तदा । शरैः काञ्चनचित्राङ्गैश्चिच्छेद भरतौ[3]ग्रजः ॥१२४॥
तन्मेरुशिखराका[4]रैर्द्योतमानामिव श्रिया । द्वे शते वानराणां च पतमानमपातयत् ॥१२५॥
तस्मिन्काले स धर्मात्मा लक्ष्मणो राममब्रवीत् । कुम्भकर्णवधे युक्तो योगान्परिमृशन्बहून् ॥१२६॥
नैवायं वानरान्राजन्न वि[5]जानाति राक्षसान् । मत्तः शोणितगन्धेन स्वान्परांश्चैव खादते ॥१२७॥
साध्वेनमधिरोहन्तु सर्वतो वानरर्षभाः । यूथपाश्च यथा मुख्यास्तिष्ठन्त्व[6]स्मिन्समन्ततः॥१२८॥
अ[7]द्यायं दुर्मतिः काले गुरुभारप्रपीडितः । प्रचरन्राक्षसो भूमौ नान्यान्हन्यात्प्लवंगमान्॥१२९॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः । ते समारुरुहुर्हृष्टाः कुम्भकर्णं महाबलाः ॥१३०॥
कुम्भकर्णस्तु संक्रुद्धः समारूढः प्लवं[8]गमैः । व्यधूनयत्तान्वेगेन दुष्टहस्तीव हस्तिपान् ॥१३१॥
तान्दृष्ट्वा निर्धुतान्रामो रुष्टोऽयमिति राक्षसम् । समुत्पपात वेगेन धनुरुत्तममाददे ॥१३२॥
क्रोधर[9]क्तेक्षणो धीरो[10] निर्दहन्निव चक्षुषा । राघवो राक्षसं वेगा[11]दभिदुद्राव वेगितः ॥
यूथपान्हर्षयन्सर्वान्कुम्भकर्णबलै[12]रर्दितान् । ॥१३३॥
स चापमादाय भुजंगकल्पं दृढज्यमुग्रं तपनीयचित्रम् ।
हरीन्समाश्वास्य समुत्पपात रामो निबद्धोत्तमतूणबाणः ॥ ॥१३४॥

रा० टी०—स इति । क्षतजेन समुक्षितः सिक्तः स कुम्भकर्णः प्रस्रवणान् गिरिरिव रुधिरं परिसुस्राव ॥ १२३ ॥

गो० टी०—स बाणैरिति । स्पष्टः ॥ ११० ॥

रा० टी०—सुतीव्रेणेति । सुतीव्रेण कोपेन रुधिरेण च मूर्छितो व्याप्तः स कुम्भकर्णः वानरादीन् खादन् सन् परिधावति ॥ १२४ ॥

गो० टी०—स तीव्रेणेति । मूर्च्छितः व्याप्तः ॥ १११ ॥

रा० टी०—अथेति । भीमं शृङ्गं समाविध्य दृढं गृहीत्वा चिक्षेप ॥ १२५ ॥

गो० टी०—अथेति । स्पष्टः ॥ ११२ ॥

रा० टी०—अप्राप्तमिति । रामः कार्मुकं पुनः सन्धाय सप्तभिश्शरैः अप्राप्तमेव गिरिशृङ्गमन्तरा मध्ये चिच्छेद॥१२६॥

गो० टी०—अप्राप्तमिति । स्पष्टः ॥ ११३ ॥

१२४-१२५ ] ति० टी०—ततो धर्मात्मा रामस्तस्य महत्तच्छृङ्गमन्तरा मध्यमार्गं सप्तभिरजिह्मगत्वादिगुणविशिष्टैः शरैश्चिच्छेद ॥ १२४ ॥ १२५ ॥

रा० टी०—तत इति । रामः तस्य कुम्भकर्णस्य वर्म चिच्छेद ॥ १२७ ॥

रा० टी०—तदिति । श्रिया द्योतमानमत एव मेरुशिखराकारं पतमानं तत् भिन्नं शिखरं वानराणां द्वेशते अपातयत्॥१२८॥

गो० टी०—तन्मेरुशिखरेति । द्वे शते उद्दिश्य पतमानं गच्छन्तम् अपातयत् । शरैरिति शेषः ॥ ११४ ॥

१२६-१३१ ] ति० टी०—योगानुपायान् । अनेन वधकाले लक्ष्मणसाहित्यं रामस्य गम्यते ॥ १२६-१३१ ॥

रा० टी०—तस्मिन्निति । कुम्भकर्णवधे युक्तः पूर्वं रामेण नियुक्तः अत एव योगान् तद्वधोपायान् परिमृशन् लक्ष्मणः राममब्रवीत् ॥ १२९ ॥

गो० टी०—तस्मिन् काल इति । योगान् परिमृशन् उपायान् विचारयन् ॥ ११५ ॥

रा० टी०—तदाकारमाह—नेति । अयं कुम्भकर्णः वानरादीन् नैव विजानाति राक्षसांश्च नैव विजानाति अत एव स्वान् परांश्च खादति ॥ १३० ॥

गो० टी०—नैवायमिति । स्पष्टः ॥ ११६ ॥

रा०टी०—साध्विति । वानरर्षभाः एनं कुम्भकर्णं साध्वधिरोहन्तु मुख्याः यूथपास्तु अस्य समन्ततः यथावत्तिष्ठन्तु॥१३१॥

गो० टी०—साध्विति । यथा यथायोग्यम् ॥ ११७ ॥

रा० टी०—तत्प्रयोजनमाह—अद्येति। गुरुभारप्रपीडितः अयं कुम्भकर्णः प्रचरन् सन् अन्यान् प्लवङ्गमान् न हन्यात्॥१३२॥

गो० टी०—अप्ययमिति । भारः वानरारोहणरूपः ११८

रा० टी०—तस्येति । तस्य लक्ष्मणस्य वचनं श्रुत्वा ते वानराः कुम्भकर्णं समारुरुहुः ॥ १३३ ॥

गो० टी०—तस्येति । स्पष्टः ॥ ११९ ॥

रा० टी०—कुम्भकर्ण इति । प्लवङ्गमैस्समारूढः अत एव संक्रुद्धः कुम्भकर्णः व्यधूनयत् ॥ १३४ ॥

गो० टी०—कुम्भकर्णस्त्विति । स्पष्टः ॥ १२० ॥

१३२-१३४ ] ति० टी०—राक्षसं रुष्टोऽयमिति मत्वा वेगेन समुत्पपात ॥ १३२-१३४ ॥

रा० टी०—तानिति । रामः तान् वानरान् निर्धुतान् दृष्ट्वा अयं राक्षसो रुष्ट इति दृष्ट्वा ज्ञात्वा च राक्षसमुद्दिश्य उत्पपात उत्तमं धनुरादद्दे च ॥ १३५ ॥

१ इदमर्धं गो. पुस्तके नास्ति । २ वर्मेति रा. पाठः । ३ पुरुषर्षभ इति गो. पाठः । ४ आकारमिति गो. पाठः । ५ अपीति गो. पा. । ६ अस्येति गो. पा. । ७ अपीति गो. पा. । ८ प्लवंगमा इति गो. पा. । ९ ताम्रेति गो. पा. । १० वीर इति गो.पा. । ११ रोषादिति गो.पा. । १२ भयेति गो.पा. ।

स वानरगणैस्तैस्तु वृतः परमदुर्जयैः[1] । लक्ष्मणानुचरो वीरः संप्रतस्थे महाबलः ॥१३५॥
स ददर्श महात्मानं किरीटिनमरिंदमम् । शोणिताप्लुतं[2]रक्ताक्षं कुम्भकर्णं महाबलः ॥१३६॥
सर्वान्समभिधावन्तं यथारुष्टं दिशागजम् । मार्गमाणं हरीन्क्रुद्धं राक्षसैः परिवारितम् ॥१३७॥
विन्ध्यमन्दरसंकाशं काञ्चनाङ्गदभूषणम् । स्रवन्तं रुधिरं वक्त्राद्वर्षं[3] मेघमिवोत्थितम् ॥१३८॥
जिह्वया परिलिह्यन्तं सृक्किणी शोणितोक्षिते[4] । मृद्नन्तं वानरानीकं कालान्तकयमोपमम् ॥१३९॥
तं दृष्ट्वा राक्षसश्रेष्ठं प्रदीप्तानलवर्चसम् । विस्फारयामास तदा कार्मुकं पुरुषर्षभः ॥१४०॥
स तस्य चापनिर्घोषात्कुपितो राक्षसर्षभः । अमृष्यमाणस्तं घोषमभिदुद्राव राघवम् ॥१४१॥

ततस्तु वातोद्धतमेघकल्पं[5] भुजंगराजोत्तमभोगबाहुम्[6] ।
तमापतन्तं धरणीधराभमुवाच रामो युधि कुम्भकर्णम् ॥ ॥१४२॥
आगच्छ रक्षोधिप मा विषादमवस्थितोऽहं प्रगृहीतचापः ।
अवेहि मां राक्षसवंशनाशनं[7] यस्त्वं मुहूर्ताद्भविता विचेताः ॥ ॥१४३॥

रामोऽयमिति विज्ञाय जहास विकृतस्वनम् । अभ्यधावत संक्रुद्धो हरीन्विद्रावयन्रणे ॥१४४॥
दारयन्निव सर्वेषां हृदयानि वनौकसाम् । प्रहस्य विकृतं भीमं स मेघस्तनितोपमम् ॥१४५॥
कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् । नाहं विराधो विज्ञेयो न कबन्धः खरो न च ॥
न वाली न च मारीचः कुम्भकर्णः समागतः ॥ ॥१४६॥
पश्य मे मुद्गरं[10] भीमं सर्वं कालायसं महत् । अनेन निर्जिता देवा दानवाश्च पुरा मया॥१४७॥

गो० टी०–तानिति । निर्धुतानिति ह्रस्व आर्षः ॥१२१॥

रा० टी०–क्रोधेति । राघवः यूथपान् हर्षयन् सन् राक्ष-समभिदुद्राव सार्द्धश्लोक एकान्वयी ॥ १३६ ॥

गो० टी०–क्रोधताम्रेत्यादिसार्धश्लोकमेकं वाक्यम् १२२

रा० टी०–स इति । निबद्धोत्तमतूणबाणो रामः दृढा ज्यां यस्मिन् तच्चापमादाय समुत्पपात कुम्भकर्णसमीपं जगाम १३७

गो० टी०–स चापमिति । निबद्धोत्तमतूणबाणः निबद्धोत्तमबाणतूण इत्यर्थः ॥ १२३ ॥ १२४ ॥

१३५-१३८] ति० टी०–लक्ष्मणानुचरः बहुव्रीहिः लक्ष्मणसहितः ॥ १३५-१३८ ॥

१३९-१४१ ] ति० टी०–कालान्तकयमानामवस्थाकृतो भेद इति तीर्थः ॥ १३९-१४१ ॥

रा० टी०–स इति । वानरगणैर्वृतः लक्ष्मणोऽनुचरो यस्य स रामः संप्रतस्थे कुम्भकर्णसमीपे तस्थौ ॥ १३८ ॥

रा० टी०–स इति । स रामः कुम्भकर्णं ददर्श ॥ १३९॥

रा० टी०–सर्वानिति । रुष्टं दिशां गजमिव हरीन् मार्गमाणमत एव सर्वान् समभिधावन्तमुत्थितं वर्षमेघमिव रुधिरं स्रवन्तं शोणितोक्षिते सृक्किणी परिलिह्यन्तं वानरानीकं मृद्नन्तं कुम्भकर्णं दृष्ट्वा पुरुषर्षभो रामः कार्मुकं विस्फारयामास । अर्द्धाष्टकमेकान्वयि ॥ १४०-१४३ ॥

रा० टी०–स इति । तस्य रामस्य चापनिर्घोषात् कुपितः अत एव घोषममृष्यमाणः स कुम्भकर्णः राघवमभिदुद्राव१४४

गो० टी०–सददर्शेत्यादिचतुःश्लोक्येकान्वया । कालान्तकयमोपमम् रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वेतिवत् । एकस्यैवावस्थाभेदात् कालादिनामभेदः । यद्वा । काले युगान्तकाले अन्तको नाशको यमः उपमा यस्य स तथोक्तः ॥१२५-१३१॥

१४२ ] ति० टी०–भुजंगराजस्य शेषस्योत्तमो भोगस्तद्वद्बाहुर्यस्य सः ॥ १४२ ॥

रा० टी०–तत इति । भुजङ्गराजस्य उत्तमभोगवत् बाहू यस्य स रामः आपतन्तं कुम्भकर्णमुवाच ॥ १४५ ॥

१४३ ] ति० टी०–हे रक्षोधिप, विषादं मा आगच्छ योऽहं प्रगृहीतचापः स्थितस्तं मां राममवेहि तस्मान्मामेवागच्छ । मुहूर्तात्त्वं विचेता निर्जीवो मृतो भवितेति युधि रामः कुम्भकर्णमुवाचेत्यन्वयः ॥ १४३ ॥

रा० टी०–तदाकारमाह—आगच्छेति । हे रक्षोधिप ! यस्त्वं मुहूर्तात् विचेताः भविता स त्वं विषादं स्वकुलविध्वंसजनितखेदं मा गच्छ प्राप्नुहि यतः प्रगृहीतचापोऽहमत्रस्थितः ननु किं तेनेत्यत आह मां राक्षसवंशनाशनमवेहि ॥ १४६ ॥

गो० टी०–आगच्छेति । मा माम् अविषादम् आगच्छेत्यन्वयः । यद्वा विषादं मा गच्छ मरणेन शरीरभरणक्लेशं त्यजेत्यर्थः । आङ् उपसर्गमात्रम् ॥ १३२ ॥

१४४-१४७ ] ति० टी०–रामोऽयमिति विज्ञाय । रामवचसेति शेषः ॥ १४४-१४७ ॥

१ दुर्जय इति गो. पा. । २ आप्लुतसर्वाङ्गमिति गो. पा. । ३ वर्षमेघमिति गो. रा. पा. । ४ शोणितं शोणितेक्षणमिति गो. पा. । ५ वातेति गो. पा. । ६ बाहुमिति गो. पा. । ७ शक्रसपत्न रामं मयेति गो. पा. । ८ पातयन्निति गो. पा. । ९ अहमिति गो. पा. । १० घोरमिति गो. पा. ।

विकर्णनास इति मां नावज्ञातुं त्वमर्हसि । स्वल्पापि हि न मे पीडा कर्णनासाविनाशनात् ॥१४८॥
दर्शयेक्ष्वाकुशार्दूल वीर्यं गात्रेषु मेऽनघ । ततस्त्वां भक्षयिष्यामि दृष्टपौरुषविक्रमम् ॥१४९॥
स कुम्भकर्णस्य वचो निशम्य रामः सुपुङ्खान्विससर्ज बाणान् ।
तैराहतो वज्रसमप्रवेगैर्न चुक्षुभे न व्यथते सुरारिः ॥ ॥१५०॥
यैः सायकैः सालवरा निकृत्ता वाली हतो वानरपुंगवश्च ।
ते कुम्भकर्णस्य तदा शरीरं वज्रोपमानं व्यथयांप्रचक्रुः ॥ ॥१५१॥
स वारिधारा इव सायकांस्तान्पिबञ्शरीरेण महेन्द्रशत्रुः ।
जघान रामस्य शरप्रवेगं व्याविध्य तं मुद्गरमुग्रवेगम् ॥ ॥१५२॥
ततस्तु रक्षः क्षतजानुलिप्तं वित्रासनं देवमहाचमूनाम् ।
व्याविध्य तं मुद्गरमुग्रवेगं विद्रावयामास चमूं हरीणाम् ॥ ॥१५३॥

---

रा० टी०—राम इति । क्रुद्धः कुम्भकर्णः रामोऽयमिति विज्ञाय जहास हरीन् विद्रावयन् सन् अभ्यधावत च ॥१४७॥

गो० टी०—रामोयमित्यादि । स्पष्टः ॥ १३३॥१३४ ॥

रा० टी०—दारयन्निति । कुम्भकर्णः विकृतं यथा भवति तथा मेघस्तनितोपमं प्रहस्य राघवमब्रवीत् । सार्द्धश्लोक एकान्वयी ॥ १४८ ॥ १४९ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । विराधादन्य-तमोऽहं न विज्ञेयः किन्तु कुम्भकर्णोहम् । एतेनविराधादीनामल्प-बलवत्त्वं सूचितम् ॥ १५० ॥

गो० टी०—प्रहस्येति । विकृतमित्यादिविशेषणत्रयं क्रि-याविशेषणम् ॥ १३५ ॥

गो० टी०—नाहमिति । स्पष्टः ॥ १३६ ॥

रा० टी०—पश्येति । मे मुद्गरं त्वं पश्य अनेन मुद्गरेण मया देवा दानवाश्च निर्जिताः ॥ १५१ ॥

गो० टी०—पश्य मे मुद्गरमिति । यद्यपि निरायुधत्वं पूर्वमुक्तं तथाप्यत्र मुद्गरं गृहीतवानिति ज्ञेयम् । सर्वकालायसं बहुलायसमयमित्यर्थः ॥ १३७ ॥

१४८-१४९ ] ति० टी०—विकर्णनास इत्येतावन्मात्रेण मामवज्ञातुं दुर्बल इत्यवगन्तुं नार्हसि । नहि विराधादिवदहं लीलया त्वया वध्यः, अतो मयि यत्नवान्भवेत्यर्थः । ननु कथं न दुर्बलस्तत्राह—स्वल्पापीति ॥ १४८ ॥ १४९ ॥

रा० टी०—विकर्णेति । विगते कर्णनासे यस्य स इति हेतोः मामवज्ञातुमल्पपराक्रमोऽयमिति तिरस्कर्तुं त्वं नार्हसि तत्र हेतुः कर्णनासाविनाशनात् स्वल्पापि मे पीडा न ॥ १५२ ॥

गो० टी०—विकर्णनास इति ॥ १३८ ॥

रा० टी०—दर्शयेति । वीर्यं स्वपराक्रमं मे गात्रेषु दर्शय यावच्छक्ति शरान् प्रक्षिपेत्यर्थः । ततोऽनन्तरं दृष्टपौरुषविक्रमं त्वां भक्षयिष्यामि ॥ १५३ ॥

गो० टी०—दर्शयेति । लघु क्षिप्रम् । दृष्टपौरुषविक्रमं दृष्टबलपराक्रमम् ॥ १३९ ॥

१५० ] ति० टी०—न व्यथते न विव्यथे ॥ १६० ॥

रा० टी०—स इति । रामः कुम्भकर्णस्य वचो निशम्य बाणान् विससर्ज । तैर्बाणैराहतः सुरारिः कुम्भकर्णः न चुक्षुभे न व्यथते विव्यथे च ॥ १५४ ॥

गो० टी०—स इति । चक्षुभ इति । क्षोभोत्र मानसः १४०

१५१ ] ति० टी०—व्यथयांप्रचक्रुरित्यार्ष आमन्तस्य व्यवहितप्रयोगः ॥ १६१ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—यैरिति । वज्रोपमास्ते सायकाः कुम्भकर्णस्य शरीरं न व्यथयांप्रचक्रुः ॥ १५५ ॥

गो० टी०—यैः सायकैरिति । सालभेदकस्य वालिविना-शकस्य च बाणस्यैकत्वेपि बहुवचनं तद्वर्गाणामनेकत्वादुप-पद्यते ॥ १४१ ॥

१५२ ] ति० टी०—वारिधाराः पर्वत इव सायकाञ्शरी-रेण पिबन्निति योजना । एतेन सर्वे सायकाः शरीरे मग्ना अपि न व्यथयन्तीति दर्शितम् । उग्रवेगं तं मुद्गरं व्याविध्य भ्रामयित्वा रामस्य शरप्रवेगं जघान ॥ १६२ ॥

रा० टी०—स इति । महेन्द्रशत्रुः कुम्भकर्णः वारिधारा इव सायकान् शरीरेणापिबन् सन् रामस्य शरप्रवेगं जघान॥१५६॥

गो० टी०—स इति । शरीरेण पिबन् । शरीरनिमग्नबाण इत्यर्थः । जघान मोघीचकार ॥ १४२ ॥

१५३ ] ति० टी०—ततो रामं मुक्त्वा हरीणां चमूं विद्रावयामास ॥ १६३ ॥

रा० टी०—तत इति । कुम्भकर्णः देवमहाचमूनां वित्रासनं मुद्गरं व्याविध्य हरीणां चमूं विद्रावयामास ॥ १५७ ॥

गो० टी०—ततस्त्विति । विव्याध अचालयत् ॥१४३॥

---

१ लघ्वि गो.पा.। २ स्विति गो.रा.पा.। ३ शरीरे वज्रोपमा नेति गो. शरीरं वज्रोपमा नेति च रा.पा.। ४ अन्विति गो.पा.। ५ विव्याधेति गो.पा.।

वायव्यमादाय ततोऽपरास्त्रं रामः प्रचिक्षेप निशाचराय ।
समुद्गरं तेन जहार बाहुं स कृत्तबाहुस्तुमुलं ननाद ॥ ॥१५४॥
स तस्य बाहुर्गिरिशृङ्गकल्पः समुद्गरो राघवबाणकृत्तः ।
पपात तस्मिन्हरिराजसैन्ये जघान तां वानरवाहिनीं च ॥ ॥१५५॥
ते वानरा भग्नहतावशेषाः पर्यन्तमाश्रित्य तदा विषण्णाः ।
प्रपीडिताङ्गा ददृशुः सुघोरं नरेन्द्ररक्षोधिपसंनिपातम् ॥ ॥१५६॥
स कुम्भकर्णोऽस्त्रनिकृत्तबाहुर्महासिकृत्ताग्र इवाचलेन्द्रः ।
उत्पाटयामास करेण वृक्षं ततोऽभिदुद्राव रणे नरेन्द्रम् ॥ ॥१५७॥
तं तस्य बाहुं सहतालवृक्षं समुद्यतं पन्नगभोगकल्पम् ।
ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ॥ ॥१५८॥
स कुम्भकर्णस्य भुजो निकृत्तः पपात भूमौ गिरिसंनिकाशः ।
विचेष्टमानो निजघान वृक्षाञ्शैलाञ्शिलावानरराक्षसांश्च ॥ ॥१५९॥
तं छिन्नबाहुं समवेक्ष्य रामः समापतन्तं सहसा नदन्तम् ।
द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ॥ ॥१६०॥
तौ तस्य पादौ प्रदिशो दिशश्च गि[3]रेगुहाश्चैव महार्णवं च ।
लङ्कां च सेनां कपिराक्षसानां विनादयन्तौ विनिपेततुश्च ॥ ॥१६१॥
निकृत्तबाहुर्विनिकृत्तपादो विदार्य वक्त्रं वडवामुखाभम् ।
दुद्राव रामं सहसाभिगर्जन्राहुर्यथा चन्द्रमिवान्तरिक्षे ॥ ॥१६२॥

---

१५४-१५५ ] ति० टी०—समुद्गरं मुद्गरसहितम् । तेन वायव्यास्त्रेण ॥ १५४ ॥ १५५ ॥

रा० टी०—वायव्यमिति । रामः वायव्यं माहास्त्रमादाय प्रचिक्षेप तेन प्रक्षिप्तमहास्त्रेण समुद्गरं बाहुं कुम्भकर्णभुजं चकर्त चिच्छेद कृत्तबाहुः स कुम्भकर्णः तुमुलं ननाद ॥१५८॥

गो० टी०—वायव्यमिति । स्पष्टः ॥ १४४ ॥

रा० टी०—स इति । राघवबाणेन कृत्तः छिन्नः तस्य कुम्भकर्णस्य बाहुः हरिराजसैन्ये पपात अत एव वानरवाहिनीं कांचित्सेनां जघान ॥ १५९ ॥

गो० टी०—स तस्येति । स्पष्टः ॥ १४५ ॥

१५६ ] ति० टी०—भग्नहतावशेषा भग्नसमुद्गरपतितबाहुहतावशिष्टाः । पर्यन्तमाश्रित्य समुद्गरबाहुपातप्रदेशसमीपमाश्रित्य । विषण्णाः स्थिताः ॥ १५६ ॥

रा० टी०—ते इति । भग्नेन समुद्गरकुम्भकर्णबाहुपातेन हतात् हननात् अवशेषाः पर्यंतं देशान्तरमाश्रित्य विषण्णाः स्थिताः ते वानराः नरेन्द्ररक्षोधिपयोः सन्निपातं युद्धं ददृशुः ॥ १६० ॥

गो० टी०—ते वानरा इति । सन्निपातं द्वन्द्वयुद्धम् ॥ १४६ ॥ १४७ ॥

१५७-१५८ ] ति० टी०—करेण कृत्तेतरेण ॥१५७॥१५८॥

रा० टी०—स इति । अस्त्रेण निकृत्तो बाहुर्यस्य अत एव महासिना कृत्तमग्रं शृङ्गं यस्य स अचलेंद्र इव कुम्भकर्णः करेण उर्वरितहस्तेन शालमुत्पाटयामास । ततोऽनन्तरं नरेन्द्रं राममभिदुद्राव ॥ १६१ ॥

रा० टी०—तमिति । समुद्यतं सहसालवृक्षं तस्य कुम्भकर्णस्य बाहुमैन्द्रास्त्रयुक्तेन इन्द्रास्त्रमन्त्राभिमन्त्रितेन बाणेन रामो जघान ॥ १६२ ॥

गो० टी०—स तस्येति । ऐन्द्रास्त्रयुक्तेन ऐन्द्रास्त्रमन्त्राभिमन्त्रितेन ॥ १४८ ॥

१५९-१६० ] ति० टी०—विचेष्टमानः । भूमाविति शेषः ॥ १५९ ॥ १६० ॥

रा० टी०—स इति । निकृत्तः कुम्भकर्णस्य भुजः भूमौ पपात अत एव विचेष्टमानः विविधं पतन् वृक्षादीन् जघान ॥ १६३ ॥

गो० टी०—स कुम्भकर्णस्येति । विचेष्टमानः विवर्तमानः ॥ १४९ ॥

रा० टी०—तमिति । रामः समापतन्तं कुम्भकर्णं समीक्ष्य द्वौ अर्द्धचन्द्रौ बाणविशेषौ प्रगृह्य राक्षसस्य पादौ चिच्छेद १६४

गो० टी०—तमिति । प्रगृह्य युगपत् संधाय ॥ १५० ॥

१६१-१६२ ] ति० टी०—विनादयन्तौ दिगादीन्प्रतिध्वनयन्तौ ॥ १६१ ॥ १६२ ॥

---

१ वेपिताङ्गमिति गो. पा. । २ अभीति गो. पा. । ३ गिरीनिति गो. पा. ।

अपूरयत्तस्य मुखं शिताग्रै रामः शरैर्हेमपिनद्धपुङ्खैः ।
संपूर्णवक्त्रो न शशाक वक्तुं चुकूज कृच्छ्रेण मुमूर्च्छ चापि ॥ ॥१६३॥
अथाददे सूर्यमरीचिकल्पं सब्रह्मदण्डान्तककालकल्पम् ।
अरिष्टमैन्द्रं निशितं सुपुङ्खं रामः शरं मारुततुल्यवेगम् ॥ ॥१६४॥
तं वज्रजाम्बूनदचारुपुङ्खं प्रदीप्तसूर्यज्वलनप्रकाशम्
महेन्द्रवज्राशनितुल्यवेगं रामः प्रचिक्षेप निशाचराय ॥ ॥१६५॥
स सायको राघवबाहुचोदितो दिशः स्वभासा दश संप्रकाशयन् ।
[1]विधूमवैश्वानरभीमदर्शनो जगाम शक्राशनिभीमविक्रमम् ॥ १६६ ॥
स तन्महापर्वतकूटसंनिभं सुवृत्तदंष्ट्रं चलचारुकुण्डलम् ।
चकर्त रक्षोधिपतेः शिरस्तदा यथैव वृत्रस्य पुरा पुरंदरः ॥ १६७ ॥
कुम्भकर्णशिरो भाति कुण्डलालंकृतं महत् ।
आदित्येऽभ्युदिते रात्रौ मध्यस्थ इव चन्द्रमाः ॥ १६८ ॥

रा० टी०–ताविति । तौ छिन्नौ तस्य कुम्भकर्णस्य पादौ प्रदिगादीन् विनादयन्तौ सन्तौ विनिपेततुः ॥ १६९ ॥

गो० टी०–ताविति । विनाशयन्तौ दिगादीन् प्रतिध्वनयन्तौ ॥ १६१ ॥

रा० टी०–निकृत्तेति । निकृत्तबाहुः कुम्भकर्णः वडवामुखाभं वक्रं विदार्य राहुश्चन्द्रमिव रामं दुद्राव ॥ १६६ ॥

गो० टी०–निकृत्तेति । दुद्राव राममिति ऊरुशेषाभ्यामिदम् । अन्यथेदं गमनं वक्ष्यमाणं पतनं च न संभवतः । राहुर्यथेति । चन्द्रमिव स्थितं रामम् राहुर्यथा तथा कुम्भकर्ण इत्यर्थः ॥ १६२ ॥

१६३] ति० टी०–चुकूज । अवर्णेन शब्देनेति शेषः॥१६३॥

रा० टी०–अपूरयदिति । तस्य कुम्भकर्णस्य मुखं रामश्शरैरपूरयत् अत एव सम्पूर्णवक्त्रस्सन् वक्तुं न शशाक कृच्छ्रेण चुकूज मुमूर्च्छ च ॥ १६७ ॥

गो० टी०–अपूरयदिति । स्पष्टः ॥ १६३ ॥

१६४-१६५]ति०टी०–अरिष्टं रिपूणामशुभदम्१६४।१६५

रा० टी०–अथेति । रामः सूर्यमरीचिकल्पं ब्रह्मदण्डादिकल्पमरिष्टं शत्रूणामतिविदारकं शरमाददे ॥ १६८ ॥

गो० टी०–अथेति । अरिष्टं रिपूणामशुभप्रदम् । अरिष्टे तु शुभाशुभे इत्यमरः ॥ १६४ ॥

रा० टी०–तमिति । वज्रादिभिश्चारुः पुङ्खो यस्य प्रदीप्तयोः सूर्यज्वलनयोरिव प्रकाशो यस्य तं शरं रामः प्रचिक्षेप ॥ १६९ ॥

गो० टी०–तमिति । स्पष्टः ॥ १६५ ॥

१६६ ] ति० टी०–शक्राशन्योरिव शक्राशनेरिव वा भीमो विक्रमो यस्य तं कुम्भकर्णं जगाम ॥ १६६ ॥

रा० टी०–स इति । राघवबाहुना चोदितः स सायकः स्वभासा दश दिशः प्रकाशयन् सन् जगाम ॥ १७० ॥

गो० टी०–स इति । वैश्वानरः अग्निः ॥ १६६ ॥

१६७ ] ति० टी०–चले गते चारुणी रमणीये कुण्डले यस्मात्तच्चलचारुकुण्डलम् ॥ १६७ ॥

रा० टी०–स इति । स रामः महापर्वतकूटसन्निभं रक्षोधिपतेश्शिरः वृत्रस्य शिरः पुरन्दर इव चकर्त ॥ १७१ ॥

गो० टी०–स तदिति । स्पष्टः ॥ १६७ ॥

१६८ ] ति० टी०–कुम्भकर्णशिर इति । कुण्डलाभ्यामलंकृतं विनाकृतम् । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । कुम्भकर्णस्य शिरः । अरात्रौ प्रातःकाले आदित्ये उदिते गगनमध्यस्थचन्द्रमा इव निष्प्रभं भातीत्यर्थः । अयं श्लोकः प्रक्षिप्त इति बहवः ॥ १६८ ॥

रा० टी०–कुम्भकर्णेति । कुण्डलाभ्यामलंकृतं कुम्भकर्णशिरः आदित्ये सूर्यद्वये अभ्युदिते सति मध्यस्थश्चन्द्रमा इव भाति ॥ १७२ ॥

गो० टी०–कुम्भकर्णेति । कर्तनवेगादुद्गतं गगनं स्थितं रात्रौ आदित्ये अदितिदेवताके पुनर्वसुनक्षत्रे तारकाद्वयात्मके अभ्युदिते तन्मध्यगतश्चन्द्रमा इव बभातीत्यर्थः॥१६८

१ स इति गो. पा. । २ सेति गो. पा. । ३ क्रम इति गो. पा. ।

तद्रामबाणाभिहतं पपात रक्षःशिरः पर्वतसन्निकाशम् ।
बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चं तमपातयच्च ॥ १६९ ॥
तच्चातिकायं हि महत्प्रकाशं रक्षस्तदा तोयनिधौ पपात ।
ग्राहान्परान्मीनवरान्भुजंगमान्ममर्द भूमिं च तथा विवेश ॥ १७० ॥
तस्मिन्हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे ।
चचाल भूर्भूमिधराश्च सर्वे हर्षाच्च देवास्तुमुलं प्रणेदुः ॥ १७१ ॥
ततस्तु देवर्षिमहर्षिपन्नगाः सुराश्च भूतानि सुपर्णगुह्यकाः ।
सयक्षगन्धर्वगणा नभोगताः प्रहर्षिता रामपराक्रमेण ॥ १७२ ॥
ततस्तु ते तस्य वधेन भूरिणा मनस्विनो नैर्ऋतराजबान्धवाः ।
विनेदुरुच्चैर्व्यथिता रघूत्तमं हरिं समीक्ष्यैव यथा मतंगजाः ॥ १७३ ॥
स देवलोकस्य तमो निहत्य सूर्यो यथा राहुमुखाद्विमुक्तः ।
तथा व्यभासीद्धरिसैन्यमध्ये निहत्य रामो युधि कुम्भकर्णम् ॥ १७४ ॥
प्रहर्षमीयुर्बहवश्च वानराः प्रबुद्धपद्मप्रतिमैरिवाननैः ।
अपूजयन्राघवमिष्टभागिनं हते रिपौ भीमबले नृपात्मजम् ॥ १७५ ॥

१६९-१७२ ] ति० टी०-उच्चं प्राकारं लङ्कायां इति शेषः । शिरः कर्तनवेगोत्थितं लङ्कायां पपात । देहस्तु कर्तनवगविलुठन्समुद्रे पपात पतितः । यद्यपि 'तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिवरोपमम् । स पपात महावीरो दिव्यास्त्राभिहतो रणे ॥ तं दृष्ट्वा वृत्रसंकाशं कुम्भकर्णं तरस्विनम् । गतासुं पतितं भूमौ राक्षसाः प्राद्रवन्भयात् ॥' इति महाभारतोक्त्या लक्ष्मणतः कुम्भकर्णवधः प्रतीयते तथापि न विरोधः । रामलक्ष्मणाभ्यां मिलित्वा तद्वधकरणात्, अत एव पूर्वं लक्ष्मणानुचर इत्यत्र लक्ष्मणसहित इति व्याख्यातम् । प्राधान्यात्त्वत्र रामस्यैव तद्धन्तृत्वोक्तिः । लक्ष्मणसाहित्येन हननात्तु व्यासो लक्ष्मणस्य हन्तृत्वमुक्तवान् ॥ १६९—१७२ ॥

रा० टी०-तदिति । रामबाणाभिहतं रक्षश्शिरः पपात अत एव चर्यादीनि बभञ्ज उच्चं प्राकारमपातयत् च ॥ १७३ ॥

गो० टी०-तदिति । चर्याः प्राकारोपान्तक्रमभटसंचारार्हप्रदेशाः ॥ १५९ ॥

गो० टी०-न्यपतदिति । कोटयः कोटीः ॥ १६० ॥

रा० टी०-तदिति । हिमवत्प्रकाशं तद्रक्षःकायमपि तोयनिधौ पपात बाणवेगवशेन प्राप अत एव ग्राहादीन् ममर्द अत एव भूमिं समाविवेश ॥ १७४ ॥

गो० टी०-तच्चातिकायमिति । रक्षः कबन्धरूपं भूमिं तदा विवेश भूमिमस्पृशदित्यर्थः ॥ १६१ ॥

रा० टी०-तस्मिन्निति । कुम्भकर्णे हते सति हर्षाद्भूमिश्चचाल महीधराश्चेलुः देवाः तुमुलं प्रणेदुश्च ॥ १७५ ॥

गो० टी०-तस्मिन् हत इति । स्पष्टः ॥ १६२ ॥

रा० टी०-तत इति । रामपराक्रमेण देवादयः प्रहर्षिताः बभूवुरिति शेषः ॥ १७६ ॥

गो० टी०-ततस्त्विति । ॥ १६३ ॥ १६४ ॥

१७३ ] ति० टी०-भूरिणा महता ॥ १७३ ॥

रा० टी०-तत इति । भूरिणा महता तस्य कुंभकर्णस्य वधेन व्यथिताः नैर्ऋतराजबान्धवाः हरिं सिंहं समीक्ष्य मतङ्गजाइव रघूत्तमं समीक्ष्य उच्चैर्विनेदुः ॥ १७७ ॥

१७४ ] ति० टी०-देवलोकस्याकाशस्य मध्ये इति शेषः । व्यभासीद्विशेषेण भाति स्म ॥ १७४ ॥

रा० टी०-स इति । देवलोकस्य आकाशस्य तमोन्धकारं निहत्य राहुमुखाद्विमुक्तः सूर्यो यथा व्यभासीत् तथा कुम्भकर्णं निहत्य रामो व्यभासीत् ॥ १७८ ॥

गो० टी०-स इति । वानरौघे वानरौघमध्ये ॥ १६५ ॥

१७५ ] ति० टी०-प्रबुद्धपद्मप्रतिमैरिव प्रबुद्धपद्मरूपैरिव, अतो नेवशब्दवैयर्थ्यम् । इष्टभागिनमिष्टप्राप्तिमन्तम् ॥ १७५ ॥

रा० टी०-प्रहर्षमिति । प्रबुद्धपद्मप्रतिमैः विकसितकमलसदृशैराननैरुपलक्षिताः बहवोनेकविधाः वानराः प्रहर्षमीयुः अत एव इष्टभागिनमभीष्टप्राप्तिमन्तं राममपूजयन् ॥ १७९ ॥

गो० टी०-प्रहर्षमिति । प्रबुद्धपद्मप्रतिमैरिति । प्रतिमाशब्दोत्र रूपवचनः नतु सदृशवचनः इवशब्दप्रयोगात् इष्टभागिनं जयरूपेष्टभाजम् ॥ १६६ ॥

१ तत इति गो. पा. । २ वरानिति गो. रा. पा. । ३ भुजङ्गानिति गो. पा. । ४ तदेति गो समा इति रा.पा. । ५ सुरादिता इति गो. सुराहिता इति रा. पा. । ६ भुवि वानरौघ इति गो. पा. । ७ त्विति गो. पा. । ८ दुरासद इति गो. रा. पा. ।

स कुम्भकर्णं सुरसैन्यमर्दनं महत्सु युद्धेषु कदाचनाजितम् ।
ननन्द हत्वा भरताग्रजो रणे महासुरं वृत्रमिवामराधिपः ॥ १७६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ।

कुम्भकर्णं हतं निशम्य रावणो मुमोह पपात च देवान्तनरान्तकौ त्रिशिराश्चातिकायश्च महोदरमहापार्श्वौ च शोकपीडिता रुरुदुः कुम्भकर्णमुद्दिश्य रावणस्य विलापः विभीषणोपदेशानादरणजनितोऽनुतापश्च ।

कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना । राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १ ॥
राजन्स[1] कालसंकाशः संयुक्तः कालकर्मणा । विद्राव्य वानरीं सेनां भक्षयित्वा च वानरान् ॥ २ ॥
प्रतपित्वा मुहूर्तं तु[2] प्रशान्तो रामतेजसा । कायेनार्धप्रविष्टेन समुद्रं भीमदर्शनम् ॥ ३ ॥
निकृत्तनासाकर्णेन विक्षरद्रुधिरेण[3] च । रुद्ध्वा द्वारं शरीरेण लङ्कायाः पर्वतोपमः ॥ ४ ॥
कुम्भकर्णस्तव[4] भ्राता काकुत्स्थशरपीडितः । अगण्डभूतो[5] विवृतो दावदग्ध इव द्रुमः ॥ ५ ॥
श्रुत्वा[6] विनिहतं संख्ये कुम्भकर्णं महाबलम् । रावणः शोकसंतप्तो मुमोह च पपात च ॥ ६ ॥

---

१७६ ] ति० टी०—कदाचन न कदाप्यजयवन्तम् ॥ १७६ ॥

अत्र दिनद्वयेन कुम्भकर्णोत्थानम्, ततः सप्तम-
वासरे वध इति भाद्रपदपूर्णिमायामेव-
द्वध इति पाद्मसंमतिपूर्वकमग्रे
स्फुटीभविष्यति ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय
आदिकाव्ये युद्धकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रा० टी०—स इति । महत्सु युद्धेषु कदाचन सर्वदापि अजितं कुंभकर्णं हत्वा वृत्रं हत्वा अमराधिप इव भरताग्रजो रामो ननन्द ॥ १८० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ
युद्धकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

गो० टी०—स कुम्भकर्णमिति । पराजितश्रमं त्यक्तश्रमम् । अत्र सर्गे अधिकाः केचन श्लोकाः क्वापि क्वापि दृश्यन्ते ते न व्याख्याताः अस्मिन्सर्गे सार्धषट्षष्ठ्युत्तरशत-श्लोकाः ॥ १६७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटा-
ख्याने युद्धकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

१ ] ति० टी०—कुम्भकर्णमिति ॥ १ ॥

रा० टी०—कुम्भकर्णवधानन्तरकालिकं राक्षसवृत्तान्तमाह-कुंभकर्णमित्यादिभिः । राघवेण कुंभकर्णं हतं दृष्ट्वा राक्षसाः राक्षसेन्द्राय न्यवेदयन् ॥ १ ॥

गो० टी०—कुम्भकर्णवधश्रवणेन रावणस्य प्रलापः—कुम्भकर्णमित्यादि । अत्र रावणायेत्यत्र यकारो गायत्र्या अष्टादशाक्षरम् । सप्तदशसहस्रश्लोका गताः ॥ १ ॥

२ ] ति० टी०—कालसंकाशः कुम्भकर्णः । कालकर्म मृत्युः समुद्रमर्धप्रविष्टेन कबन्धरूपेण कायेनोपलक्षितः ॥ २ ॥

रा० टी०—तदाकारमाह—राजन्नित्यादिभिः । कालसंकाशः स कुम्भकर्णः वानरीं सेनां वानरांश्च विद्राव्य भक्षयित्वा च कालधर्मणा मृत्युना संयुक्तोऽभवदिति शेषः ॥ २ ॥

गो० टी०—कालकर्मणा कालस्य मृत्योः कर्मणा मरणरूपक्रिययेति यावत् । यद्वा काले कर्मणा कालकर्मणा परिपक्वकर्मणेत्यर्थः ॥ २ ॥

३ ] ति० टी०—मुहूर्तं प्रतपित्वा विक्रम्य ॥ ३ ॥

४ ] ति० टी०—निकृत्तनासाकर्णत्वादिगुणेन शरीरेण शिरोलक्षणेन लङ्काद्वारं रुद्ध्वा पर्वतोपमः कुम्भकर्णो रामतेजसा प्रशान्त इति पूर्वश्लोकेनान्वयः ॥ ४ ॥

५–६ ] ति० टी०—अगण्डभूतः । 'अशिरःपाणिपादस्तु कबन्धोऽगण्ड उच्यते' । विवृतो विस्तृतकायः । अवक्रत्वात् । दावदग्धो द्रुम इव प्रशान्त इत्यन्वयः ॥ ५ ॥ ६ ॥

रा० टी०—तत्प्रकारमाह—प्रतपित्वेति । समुद्रमर्द्धप्रविष्टेन कायेन कबन्धरूपेण मुहूर्तं प्रतपित्वा प्रताप्य कृत्ते नासाकर्णौ यस्मात्तेन अत एव विक्षरत् रुधिरं यस्मात्तेन शरीरेण शिरसेत्यर्थः लंकाया द्वारं रुद्ध्वा काकुत्स्थशरपीडितः अत एव दावदग्धद्रुम इव विकृतः अत एव अगण्डभूतः कुम्भकर्णोयमिति बोधकचिह्नाभावं प्राप्तः पर्वतोपमः कुम्भकर्णः रामतेजसा प्रशान्तोऽभवदिति शेषः । श्लोकत्रयमेकान्वयि ॥ ३–५ ॥

---

१ संयेति गो. पा. । २ पराजितश्रममिति गो. अजितं कदाचनेति रा. पा. । ३ स्विति गो. पा. । ४ चेति गो. पा. । ५ कष्टोरुभुज इति गो. पा. । ६ निःसृतं रुधिरं बहिरिति गो. पा. । ७ सगण्ड इति गो. पा. । ८ तं श्रुत्वा निहतमिति गो. पा. ।

पितृव्यं निहतं श्रुत्वा देवान्तकनरान्तकौ । त्रिशिराश्चातिकायश्च रुरुदुः शोकपीडिताः ॥ ७ ॥
भ्रातरं निहतं श्रुत्वा रामेणाक्लिष्टकर्मणा । महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः ॥ ८ ॥
ततः कृच्छ्रात्समासाद्य संज्ञां राक्षसपुंगवः । कुम्भकर्णवधाद्दीनो विललापाकुलेन्द्रियः ॥ ९ ॥
हा वीर रिपुदर्पघ्न कुम्भकर्ण महाबल । त्वं मां विहाय वै दैवाद्यातोऽसि यमसादनम् ॥ १० ॥
मम शल्यमनुद्धृत्य बान्धवानां महाबल । शत्रुसैन्यं प्रताप्यैकः कै मां संत्यज्य गच्छसि ॥ ११ ॥
इदानीं खल्वहं नास्मि यस्य मे पतितो भुजः । दक्षिणोऽयं समाश्रित्य न बिभेमि सुरासुरात् ॥ १२ ॥
कथमेवंविधो वीरो देवदानवदर्पहा । कालाग्निप्रतिमो ह्यद्य राघवेण रणे हतः ॥ १३ ॥
यस्य ते वज्रनिष्पेषो न कुर्याद्व्यसनं सदा । स कथं रामबाणार्तः प्रसुप्तोऽसि महीतले ॥ १४ ॥
एते देवगणाः सार्धमृषिभिर्गगने स्थिताः । निहतं त्वां रणे दृष्ट्वा निनदन्ति प्रहर्षिताः ॥ १५ ॥
ध्रुवमद्यैव संहृष्टा लब्धलक्षाः प्लवंगमाः । आरोक्ष्यन्तीह दुर्गाणि लङ्काद्वाराणि सर्वशः ॥ १६ ॥
राज्येन नास्ति मे कार्यं किं करिष्यामि सीतया । कुम्भकर्णविहीनस्य जीविते नास्ति मे मतिः ॥ १७ ॥
यद्यहं भ्रातृहन्तारं न हन्मि युधि राघवम् । ननु मे मरणं श्रेयो न चेदं व्यर्थजीवितुम् ॥ १८ ॥

---

रा० टी०—श्रुत्वेति । कुम्भकर्णं विनिहतं श्रुत्वा शोकसंतप्तो रावणः मुमोह पपात च ॥ ६ ॥

गो० टी०—प्रतपित्वा । पराक्रम्य, एतदारभ्य श्लोकत्रयमेकान्वयम् । अर्धप्रविष्टेन अर्धेन कबन्धमात्रेण प्रविष्टेन कायेन समुद्रं रुद्ध्वा शरीरेण उत्तमाङ्गेन द्वारं रुद्ध्वा लगण्डभूतः पिण्डीभूतः । लगण्डोजगर इत्येके । विकृतः विकृतशरीरः रामतेजसा प्रशान्त इत्यन्वयः ॥ ३–१० ॥

७ ] ति० टी०—देवान्तकादयो रावणपुत्राः ॥ ७ ॥

रा० टी०—पितृव्यमिति । पितृव्यं कुम्भकर्णं निहतं श्रुत्वा देवान्तकप्रभृतयः शोकपीडिता रुरुदुः । देवान्तकप्रभृतयो रावणात्मजा बोध्याः ॥ ७ ॥

८–१० ] ति० टी०महोदरमहापार्श्वौ विमातृजौ भ्रातरौ तस्य ॥ ८–१० ॥

रा० टी०—भ्रातरमिति । भ्रातरं निहतं दृष्ट्वा श्रुत्वा महोदरमहापार्श्वौ शोकेनाक्रान्तौ बभूवतुः ॥ ८ ॥

रा० टी०—तत इति । राक्षसपुङ्गवो रावणः कृच्छ्रात्सञ्ज्ञां समासाद्य विललाप ॥ ९ ॥

रा० टी०—तदाकारमाह—हेति । हे कुम्भकर्ण मां विहाय यमसादनं संयमिनां स्थानं जातोसि ॥ १० ॥

११ ] ति० टी०—बान्धवानां च शल्यमनुद्धृत्येत्यन्वयः॥ ११॥

रा० टी०—ममेति । शत्रुसैन्यं प्रताप्यापि मम बान्धवानां च शल्यं रिपुरूपशरमनुद्धृत्य मां संत्यज्य क्व गच्छसि ॥ ११ ॥

गो० टी०—ममेति । मम बान्धवानां च शल्यं शोकमित्यर्थः ॥ ११ ॥

१२–१३ ] ति० टी०—अहं नास्मि । अहमपि मृतप्राय इत्यर्थः । सुरासुरात्सुरासुरेभ्यः ॥ १२ ॥ १३ ॥

रा० टी०—इदानीमिति । अयं भ्रातृरूपः यस्य मे दक्षिणो भुजस्समाश्रित्य प्राप्य इदानीं पतितो मृत इत्यर्थः सोहं नास्मि मृतप्राय इत्यर्थः अत एव सुरासुरात् न बिभेमि कृतमरणनिश्चयस्य न कुतश्चिद्भीतिरित्यर्थः ॥ १२ ॥

रा० टी०—कथमिति । एवंविधो वीरः राघवेण कथं हतः ॥ १३ ॥

गो० टी०—इदानीमिति । सुरासुरान् सुरासुरेभ्यः १२-१५

१४–१५ ] ति० टी०—वज्रनिष्पेषस्तदाघातोऽपि यस्य व्यसनं दुःखं न कुर्यात् ॥ १४ ॥ १५ ॥

रा० टी०—बुद्धिस्थं कुम्भकर्णमुद्दिश्याह—यस्येति । यस्य ते तव वज्रनिष्पेषः तदाघातः व्यसनं दुःखं सदा न कुर्यात् स त्वं रामबाणार्तस्सन् कथं प्रसुप्तोसि ॥ १४ ॥

रा० टी०—एते इति । निहतं त्वां दृष्ट्वा प्रहर्षिताः देवगणाः निनदन्ति ॥ १५ ॥

१६ ] ति० टी०—लब्धलक्षा लब्धावसराः ॥ १६ ॥

रा० टी०—ध्रुवमिति । प्लवङ्गमाः इह अस्मिन् समये लंकाद्वाराणि आरोक्ष्यन्ति ॥ १६ ॥

गो० टी०—ध्रुवमिति । लब्धलक्षाः लब्धावसराः १६–१७

१७–१८ ] ति० टी०—जीविते नास्ति मे मतिः । सजीवतयावस्थाने बुद्धिर्नास्तीत्यर्थः ॥ १७ ॥ १८ ॥

रा० टी०—राज्येनेति । यस्य मे जीविते मतिर्नास्ति तस्य मे राज्येन कार्यं नास्ति अतः सीतया किं करिष्यामि एतेन राज्यकल्याणार्थमेव रावणकर्तृकसीताप्रसादकरणेच्छाऽभवदिति सूचितम् ॥ १७ ॥

रा० टी०—यदीति । यद्यहं राघवं न हन्मि तर्हि मे मरणं श्रेयः इदं भ्रातृविघातकवधरहितं व्यर्थजीवितं न श्रेयः ॥ १८ ॥

---

१ दृष्ट्वेति गो. पा. । २ स रावण इति गो. रा. पा. । ३ त्वामिति गो. पा. । ४ दक्षिण इति गो. रा. पा. । ५ पतित इति गो. रा.पा. । ६ रुद्रप्रतिम इति गो. पा. । ७ रणे रामेण वै इति गो. पा. । ८ जीवितमिति गो. रा. पा. ।

अद्यैव तं गमिष्यामि देशं यत्रानुजो मम । नहि भ्रातॄन्समुत्सृज्य क्षणं जीवितुमुत्सहे ॥ १९ ॥
देवा हि मां हसिष्यन्ति दृष्ट्वा पूर्वापकारिणम् । कथमिन्द्रं जयिष्यामि कुम्भकर्ण हते त्वयि ॥ २० ॥
तदिदं मामनुप्राप्तं विभीषणवचः शुभम् । यदज्ञानान्मया तस्य न गृहीतं महात्मनः ॥ २१ ॥
विभीषणवचस्तावत्कुम्भकर्णप्रहस्तयोः । विनाशोऽयं समुत्पन्नो मां व्रीडयति दारुणः ॥ २२ ॥
तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः । यन्मया धार्मिकः श्रीमान्स निरस्तो विभीषणः॥ २३ ॥
इति बहुविधमाकुलान्तरात्मा कृपणमतीव विलप्य कुम्भकर्णम् ।
न्यपतदपि दशाननो भृशार्तस्तमनुजमिन्द्ररिपुं हतं विदित्वा ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे ऽष्टषष्टितमः सर्गः ॥ ६८ ॥

## एकोनसप्ततितमः सर्गः ।

ततो विलपन्तं रावणं त्रिशिरा नाम तनयो भो रक्षोऽधिपते त्रिभुवनस्याप्येकाकी पर्याप्तो भवान् किमन्यैः, प्राकृतवद्रोदनमसाम्प्रतं साम्प्रतमेव तिष्ठ त्वमहमेवशत्रुमुद्धरिष्यामीत्युवाच ततस्त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ महोदरमहापार्श्वौ तद्रक्षणाय रावणप्रेषितौ मत्तयुद्धोन्मत्तौ चेति योद्धुं निर्गतास्ततनरान्तकः सुतुमुलं युद्धान्तेऽङ्गदेन यमपुरातिथीकृतः ।

एवं विलपमानस्य रावणस्य दुरात्मनः । श्रुत्वा शोकाभिभूतस्य त्रिशिरा वाक्यमब्रवीत् १ ॥
एवमेव महावीर्यो हतो नस्तातमध्यमः । न तु सत्पुरुषा राजन्विलपन्ति यथा भवान्॥ २ ॥

---

गो० टी०–यद्यहमिति । भ्रातृहन्तारं न हन्मि यदि तदा इदं व्यर्थजीवितम् श्रेयः न च नैवेत्यर्थः । किंतु मरणमेव श्रेयो नन्विति संबन्धः ॥ १८ ॥

१९–२१ ] ति० टी०–भ्रातॄनित्यनेन खरादयोऽप्यनुस्मृता इति ज्ञायते ॥ १९—२१ ॥

रा० टी०–अद्येति । यत्र ममानुजः तं देशमद्यैव गमिष्यामि हि यतः भ्रातॄन् समुत्सृज्य जीवितुं नोत्सहे ॥ १९ ॥

रा० टी०–देवा इति । पूर्वापकारिणं मां दृष्ट्वा देवा हसिष्यंति। ननु ते पुनर्जेतव्या इत्यत आह इंद्रं कथं जयिष्यामि जेष्यामि ॥ २० ॥

रा० टी०–तदिति । यत् यस्मात् शुभं विभीषणवचोऽज्ञानात् अनिश्चयात् मया न गृहीतं स्वीकृतं तत्तस्मात् महात्मनस्तस्योक्तमिति शेषः इदं दुःखं मामनुप्राप्तम् ॥ २१ ॥

गो० टी०–अद्यैवेति। भ्रातॄनिति बहुवचनं पूजार्थम्१९-२१

२२ ] ति० टी०–यावद्यदारभ्य कुम्भकर्णप्रहस्तयोर्दारुणोऽयं विनाश उत्पन्नस्तावत्तदारभ्य विभीषणवचो मां व्रीडयतीत्यर्थः । इष्टं भ्रातृवचो न गृहीतमिति लज्जितोऽस्मीत्यर्थः२२

रा० टी०–विभीषणेति । यावत् यस्मिन् काले कुम्भकर्णप्रहस्तयोः अयं विनाशस्समुत्पन्नः तावत्कालादारभ्य विभीषणवचः मां व्रीडयति ॥ २२ ॥

गो० टी०–विभीषणेति । कुम्भकर्णप्रहस्तयोरयंदारुणो विनाशः यावत् यदा समुत्पन्नः तत आरभ्य विभीषणवचो मां व्रीडयति पीडयतीत्यर्थः ॥ २२–२४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

२३–२४ ] ति० टी०–अपि च धार्मिकस्य निष्कासनफलमिदमित्याह—तस्यायमित्यादि ॥ २३ ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

रा० टी०–तस्येति । यद्यस्माद्धेतोः मया विभीषणो निरस्तः तस्मात् मम शोकदः तस्य निरासकरणरूपस्य कर्मणः विपाकः फलं मया प्राप्तः ॥ २३ ॥

रा० टी०–इतीति । इन्द्ररिपुमनुजं हतं विदित्वा भृशार्तो दशाननः इति अनेन प्रकारेण बहुविधमतीव विलप्य न्यपतत् २४

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

१ ] ति० टी०–एवमिति । विलपमानस्य विलपतः श्रुत्वा विलापमिति शेषः ॥ १ ॥

रा० टी०–रावणविलापानन्तरकालिकं वृत्तान्तमाह—एवमित्यादिभिः । एवं विलपमानस्य रावणस्य वाक्यं श्रुत्वा त्रिशिरा अब्रवीत् ॥ १ ॥

गो० टी०–अथातिकायनिर्गमः—एवमित्यादि ॥ १ ॥

२ ] ति० टी०–एवमेव देवदानवदर्पहा कालाग्निप्रतिम इत्याद्युक्तप्रकारेण महावीर्यो हतः । दैवादिति शेषः । सत्पुरुषाः शूराः ॥ २ ॥

रा० टी०–तत्प्रकारमाह—एवमित्यादिभिः । महावीर्यः नोऽस्माकं तातमध्यमः हतः इत्येवमेव अत्र संशयो नास्तीत्यर्थः । तथापि भवानिव सत्पुरुषा न विलपन्ति ॥ २ ॥

---

१ यावदिति गो. रा. पा. ।

नूनं त्रिभुवनस्यापि पर्याप्तस्त्वमसि प्रभो । स कस्मात्प्राकृत इव शोचस्यात्मानमीदृशम् ॥ ३ ॥
ब्रह्मदत्तास्ति ते शक्तिः कवचं सायको धनुः । सहस्रखरसंयुक्तो रथो मेघसमस्वनः ॥ ४ ॥
त्वयासकृद्धि शस्त्रेण विशस्ता देवदानवाः । स सर्वायुधसंपन्नो राघवं शास्तुमर्हसि ॥ ५ ॥
कामं तिष्ठ महाराज निर्गमिष्याम्यहं रणे । उद्धरिष्यामि ते शत्रून्गरुडः पन्नगानिव ॥ ६ ॥
शम्बरो देवराजेन नरको विष्णुना यथा । तथाद्य शयिता रामो मया युधि निपातितः ॥ ७ ॥
श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः । पुनर्जातमिवात्मानं मन्यते कालचोदितः ॥ ८ ॥
श्रुत्वा त्रिशिरसो वाक्यं देवान्तकनरान्तकौ । अतिकायश्च तेजस्वी बभूवुर्युद्धहर्षिताः ॥ ९ ॥
ततोऽहमहमित्येवं गर्जन्तो नैर्ऋतर्षभाः । रावणस्य सुता वीराः शक्रतुल्यपराक्रमाः ॥ १० ॥
अन्तरिक्षगताः सर्वे सर्वे मायाविशारदाः । सर्वे त्रिदशदर्पघ्नाः सर्वे समरदुर्मदाः ॥ ११ ॥
सर्वे सुबलसंपन्नाः सर्वे विस्तीर्णकीर्तयः । सर्वे समरमासाद्य न श्रूयन्ते स्म निर्जिताः ॥ १२ ॥
देवैरपि सगन्धर्वैः सकिंनरमहोरगैः । सर्वेऽस्त्रविदुषो वीराः सर्वे युद्धविशारदाः ॥
सर्वे प्रवरविज्ञानाः सर्वे लब्धवरास्तथा । ॥ १३ ॥

गो० टी०—एवमिति । तातमध्यमः तातेषु मध्यमः मध्यमपितेत्यर्थः । एवमेव महावीर्यः त्वदुक्तप्रकारेणैव महावीर्यः हतः दैवादिति शेषः ॥ २ ॥

३-४ ] ति० टी०—ईदृशं त्रैलोक्यविजयसमर्थम् । शोचसि शोकवन्तं करोषि ॥ ३ ॥ ४ ॥

रा० टी०—शोकस्यानुचितत्वमाह—नूनमिति । यस्त्वं त्रिभुवनस्यापि विजय इति शेषः । पर्याप्तः स त्वं प्राकृत इव आत्मानं कस्मात् शोचसि ॥ ३ ॥

गो० टी०—नूनमिति । ईदृशमिति शोकक्रियाविशेषणम् आत्मानम् उद्दिश्येति शेषः ॥ ३ ॥

रा० टी०—ब्रह्मेति । ब्रह्मदत्ता शक्तिप्रभृतिस्तेऽस्ति एतेन तव पराजयो न भविष्यतीति सूचितम् ॥ ४ ॥

गो० टी०—ब्रह्मदत्तेत्यादिश्लोकद्वयमेकान्वयम् । विशस्त्रेण निरायुधेन ॥ ४-६ ॥

५-६ ] ति० टी०—असकृत्त्वया विशस्ता इत्यन्वयः । 'वित्रस्ताः' इति पाठे वित्रासिता इत्यर्थः ॥ ५ ॥ ६ ॥

रा० टी०—त्वयेति । विशस्त्रेण शस्त्ररहितेनापि येन त्वया असकृद्बहुवारं देवदानवाः विशस्ताः विहिंसिताः स त्वं राघवं शास्तुमर्हसि ॥ ५ ॥

रा० टी०—काममिति । हे महाराज त्वं कामं यथेष्टं तिष्ठ अहं रणे गमिष्यामि ते शत्रून् उद्धरिष्यामि हनिष्यामि ॥ ६ ॥

७ ] ति० टी०—नरको विष्णुनेति । अयं सिंहिकायां विप्रचित्तेर्जातो नरको भौमात्नरकात्कृष्णहतादन्य इति तीर्थः ॥७॥

रा० टी०—शम्बर इति । देवराजेन शम्बरो यथा निपातितः तथाद्य मया निपातितो रामः शयिता ॥ ७ ॥

गो० टी०—शम्बर इति । नरकोत्र सिंहिकायां विप्रचित्तेर्जातेषु वातापिप्रमुखेष्वन्यतमः । वातापिर्नमुचिश्चैव इल्वलः सृमरस्तथा । अन्धको नरकश्चैव कालनाभस्तथैव चेत्युक्तेः । न तु कृष्णहतो भूसुतो नरकासुरः । तस्य वाल्मीकिप्रबन्धनिर्माणकाले असंजातत्वात् ॥ ७ ॥ ८ ॥

८-१० ] ति० टी०—पुनर्जातमिवात्मानं मन्यते । त्रिशिरसो वचनमात्रेण संतुष्टो बभूव । ननु कुम्भकर्णनाशेऽप्यर्थे कथं रावणस्य तस्माज्जयप्रत्याशया संतोषस्तत्राह—कालचोदित इति । तन्नाशप्रवृत्तकालात्मकभगवत्प्रेरणया पुनस्तस्य युद्धबुद्ध्युत्पन्नपरम इत्यर्थः ॥ ८—१० ॥

रा० टी०—श्रुत्वेति । रावणो रोदनकर्ता रावणः त्रिशिरसो वाक्यं श्रुत्वा आत्मानं पुनर्जातमिव मन्यते ॥ ८ ॥

रा० टी०—श्रुत्वेति । देवान्तकादयः युद्धहर्षिता बभूवुः ॥९॥

रा० टी०—तत इति । ततः युद्धहर्षाद्धेतोः शक्रतुल्यपराक्रमत्वादिविशिष्टाः रावणस्य सुताः नैर्ऋतर्षभाः अहमेव गमिष्याम्यहमेवगमिष्यामीति गर्जन्तो बभूवुरिति शेषः । सार्धश्लोकचतुष्टयमेकान्वयि ॥ १०—१३ ॥

गो० टी०—श्रुत्वा त्रिशिरस इत्यादि । त्रिशिरसो वचनं स्वेषामपि तुल्यत्वाद्देवान्तकादयोपि युद्धोद्युक्ता बभूवुरित्यर्थः ॥ ९ ॥ १० ॥

११ ] ति० टी०—अन्तरिक्षे गतं गमनं येषां ते ॥ ११ ॥

गो० टी०—अन्तरिक्षेति । अन्तरिक्षे गतं गमनं येषां तेऽन्तरिक्षगताः ॥ ११ ॥

१२ ] ति० टी०—विस्तीर्णकीर्तयो विशालकीर्तयः ॥१२॥

गो० टी०—सर्वे इत्यादि । देवादिभिः सह समरमासाद्य पराजिता न श्रूयन्त इत्यन्वयः ॥ १२ ॥

१३ ] ति० टी०—प्रवरविज्ञानाः श्रेष्ठज्ञानवन्तः ॥ १३ ॥

१ त्वनो महानिति गो. पा. । २ रणमिति गो. पाठः । ३ चारेणेति गो. पाठः । ४ पराजिता इति गो. पाठः ।

स तैस्तथा भास्करतुल्यदर्शनैः सुतैर्वृतः शत्रुबलश्रियार्दनैः ।
रराज राजा मघवान्यथामरैर्वृतो महादानवदर्पनाशनैः ॥ १४ ॥
स पुत्रान्संपरिष्वज्य भूषयित्वा च भूषणैः । आशीर्भिश्च प्रशस्ताभिः प्रेषयामास वै रणे॥ १५ ॥
युद्धोन्मत्तं च मत्तं च भ्रातरौ चापि रावणः । रक्षणार्थं कुमाराणां प्रेषयामास संयुगे ॥ १६ ॥
तेऽभिवाद्य महात्मानं रावणं लोकरावणम् । कृत्वा प्रदक्षिणं चैव महाकायाः प्रतस्थिरे ॥ १७ ॥
सर्वौषधीभिर्गन्धैश्च समालभ्य महाबलाः । निर्जग्मुर्नैर्ऋतश्रेष्ठाः षडेते युद्धकाङ्क्षिणः ॥ १८ ॥
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ । महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः॥ १९ ॥
ततः सुदर्शनं नागं नीलजीमूतसंनिभम् । ऐरावतकुले जातमारुरोह महोदरः ॥ २० ॥
सर्वायुधसमायुक्तस्तूणीभिश्चाप्यलंकृतः । रराज गजमास्थाय सवितेवास्तमूर्धनि ॥ २१ ॥
हयोत्तमसमायुक्तं सर्वायुधसमाकुलम् । आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः ॥ २२ ॥
त्रिशिरा रथमास्थाय विरराज धनुर्धरः । सविद्युदुल्कः सज्वालः सेन्द्रचाप इवाम्बुदः॥ २३ ॥
त्रिभिः किरीटैस्त्रिशिराः शुशुभे स रथोत्तमे । हिमवानिव शैलेन्द्रस्त्रिभिः काञ्चनपर्वतैः ॥ २४ ॥
अतिकायोऽतितेजस्वी राक्षसेन्द्रसुतस्तदा । आरुरोह रथश्रेष्ठं श्रेष्ठः सर्वधनुष्मताम् ॥ २५ ॥

---

गो० टी०—सर्वे इति । विद्वषः विद्यावन्तः । प्रवरविज्ञानाः उत्कृष्टशास्त्रज्ञानाः ॥ १३ ॥

१४ ] ति० टी०—शत्रूणां बलस्य श्रीणां चार्दनैरित्यर्थे श्रियार्दनैरित्यार्षम् ॥ १४ ॥

रा० टी०—स इति । शत्रुबलश्रियोरर्दनैस्सुतैर्वृतो राजा स रावणः महादानवदर्पनाशनैरमरैर्वृतो मघवानिव रराज । श्रियार्दनैरित्यार्षमिति भट्टाः । शत्रुबलप्रमर्दनैरिति क्वचित्पाठः । व्याख्या तु नैतस्य ॥ १४ ॥

गो० टी०—स तैरिति । तुल्यवर्चसैरित्यत्र समासान्त आर्षः ॥ १४ ॥

१५ ] ति० टी०—आशीर्भिरित्यस्य संयुज्येति शेषः ॥१५॥

रा० टी०—स इति । स रावणः पुत्रान् संपरिष्वज्य आशीर्भिस्संयोज्येति शेषः रणे प्रेषयामास ॥ १५ ॥

गो० टी०—स इति । आशीर्भिः सहेति शेषः ॥ १५ ॥

१६-१७ ] ति० टी०—युद्धोन्मत्तमत्तशब्दौ महोदरमहापार्श्वयोः पर्यायनामनी ॥ १६ ॥ १७ ॥

रा० टी०—युद्धेति । युद्धोन्मत्तं महोदरं मत्तं महापार्श्वं च भ्रातरौ कुमाराणां रक्षणार्थं प्रेषयामास ॥ १६ ॥

गो० टी०—युद्धोन्मत्तं च मत्तं च भ्रातरौ चापि रावण इति । अत्र युद्धोन्मत्तौ महोदरमहापार्श्वपर्यायनामानौ रावणभ्रातरौ एतौ परत्र प्रकाशयिष्येते ॥ १६ ॥

रा० टी०—ते इति । महाकायास्ते पुत्रादयः प्रतस्थिरे॥१७॥

गो० टी०—त इति । रिपून् रावयतीति रिपुरावणः ॥१७॥

१८-२० ] ति० टी०—सर्वौषधीभिरायुधप्रहारनिवारकौषधिविशेषैः ॥ १८—२० ॥

रा० टी०—सर्वेति । षडेते महाबलाः सर्वौषधीभिरायुधाघातनिवारकौषधिजातैर्गन्धैश्च समालभ्य संस्पृश्य निर्जग्मुः १८

रा० टी०—तेषां नामानि निर्दिशन्नाह—त्रिशिरा इति । त्रिशिरःप्रभृतयो निर्जग्मुः ॥ १९ ॥

रा० टी०—तत इति । महोदरः सुदर्शनं नागमारुरोह॥२०॥

गो० टी०—सर्वौषधीभिरिति । सर्वौषधीभिः कोष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दने । वचाचम्पकमुस्ताश्च सर्वौषध्यो दश स्मृताः । इत्युक्ताभिः आयुधप्रहारनिवर्तिकाभिओषधीभिरित्याहुः । समालभ्य समालिप्य ॥ १८-२० ॥

२१-२२ ] ति० टी०—सवितेवास्तमूर्धनीत्यनेन शीघ्रं नाशः सूचितः ॥ २१ ॥ २२ ॥

रा० टी०—सर्वेति । सर्वायुधसमायुक्तो महोदरः गजमास्थाय अस्तमूर्द्धनि अस्ताचलश्रृङ्गे सवितेव रराज ॥ २१ ॥

रा० टी०—हयेति । हयोत्तमैः समायुक्तं रथश्रेष्ठं त्रिशिरा आरुरोह ॥ २२ ॥

गो० टी०—सर्वायुधेति । अस्तमूर्धनीत्येतदुत्तरक्षणे विनाशसूचनाय ॥ २१-२३ ॥

२३ ] ति० टी०—विद्युद्भिरुल्काभिः सहितः ॥ २३ ॥

रा० टी०—त्रिशिरा इति । त्रिशिरा विरराज । अर्द्धं पृथक् । तदेव विशदयन्नाह—सेति । स विद्युदुल्कः विद्युदुल्काभ्यां सहितः सज्वालः ज्वालसहितः सेन्द्रचापोऽम्बुद इव त्रिभिः काञ्चनपर्वतैरुपलक्षितो हिमवानिव च त्रिभिः किरीटैरुपलक्षितः त्रिशिराः शुशुभे । सार्द्धश्लोक एकान्वयी ॥ २३ ॥ २४ ॥

२४-२५ ] ति० टी०—काञ्चनपर्वतैः शिखरभूतैर्युक्तो हिमवानिव ॥ २४ ॥ २५ ॥

---

१ वर्चसैरिति गो.पा. । २ बलमर्दनैरिति गो.पा. । ३ संयुग इति गो. पा. । ४ रिपुरिति गो.पा. । ५ नामेति गो.पा. । ६ युक्तमिति गो.रा.पा. । ७ अलंकृतमिति रा. स्वलङ्कृतानिति गो.पा. । ८ शैलाग्र इति गो.पा. । ९ शुशुभे विशि रा. इति गो.पा. । १० स्यन्दनोत्तम इति रा.पा. । ११ अपीति गो. पाठः ।

सुचक्राक्षं सुसंयुक्तं सानुकर्षं सकूबरम् । तूणीबाणासनैर्दीप्तं प्रासासिपरिघाकुलम् ॥ २६ ॥
स काञ्चनविचित्रेण किरीटेन विराजता । भूषणैश्च बभौ मेरुः प्रभाभिरिव भासयन् ॥ २७ ॥
स रराज रथे तस्मिन्राजसूनुर्महाबलः । वृतो नैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः ॥ २८ ॥
हयमुच्चैःश्रवःप्रख्यं श्वेतं कनकभूषणम् । मनोजवं महाकायमारुरोह नरान्तकः ॥ २९ ॥
गृहीत्वा प्रासमुल्काभं विरराज नरान्तकः । शक्तिमादाय तेजस्वी गुहः शिखिगतो यथा ॥ ३० ॥
देवान्तकः समादाय परिघं हेमभूषणम् । परिगृह्य गिरिं दोर्भ्यां वपुर्विष्णोर्विडम्बयन् ॥ ३१ ॥
महापार्श्वो महातेजा गदामादाय वीर्यवान् । विरराज गदापाणिः कुबेर इव संयुगे ॥ ३२ ॥
ते[7] प्रतस्थुर्महात्मानोऽमरावत्याः सुरा इव । तान्गजैश्च तुरङ्गैश्च रथैश्चाम्बुदनिःस्वनैः ॥ ३३ ॥
अनूत्पेतुर्महात्मानो राक्षसाः प्रवरायुधाः । ते विरेजुर्महात्मानः कुमाराः सूर्यवर्चसः ॥ ३४ ॥
किरीटिनः श्रिया जुष्टा ग्रहा दीप्ता इवाम्बरे । प्रगृहीता बभौ तेषां शस्त्राणामावलिः शिर्वा ॥ ३५ ॥
शरदभ्रप्रतीकाशा हंसावलिरिवाम्बरे । मरणं वापि निश्चित्य शत्रूणां वा पराजयम् ॥ ३६ ॥
इति कृत्वा मतिं वीराः [10]संजग्मुः संयुगार्थिनः । जगर्जुश्च प्रणेदुश्च चिक्षिपुश्चापि सायकान् ॥ ३७ ॥

---

२६-३० ] ति० टी०–सुसंयुक्तं सुसंयुक्ताश्वम् । सानुकर्षं रथाक्षोपरि कूबराधारतया स्थापितो दारुविशेषोऽनुकर्षः । ‘अनुकर्षो दार्वधस्थम्’ इत्यमरः । सकूबरम् । ‘कूबरस्तु युगंधरः’ ॥ २६—३० ॥

गो० टी०–त्रिभिरिति । त्रिभिः काञ्चनपर्वतैः शिखरभूतैर्हिमवानिवेत्यर्थः ॥ २४ ॥

रा० टी०–अतिकाय इति । राक्षसेन्द्रसुतोऽतिकायः शोभने चक्रे अक्षश्च यस्मिन् शोभनास्संयुक्ताः अश्वा इत्यर्थः यस्मिन् अनुकर्षेण रथाक्षोपरिदेशे कूबराधारतया स्थापितदारुविशेषेण सहितं तूणीभिर्बाणासनैश्चापैश्च दीप्तं प्रासादिभिराकुलं रथश्रेष्ठमारुरोह ‘अनुकर्षोदार्वधस्थमित्यमरः’ । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०–अतिकाय इत्यादिश्लोकद्वयमेकान्वयम् । सुसंयुक्तं सुदृढम् स्वनुकर्षं अनुकर्षो दार्वधस्थमित्यमरः । सुकूबरं शोभनयुगंधरम् । कूबरस्तु युगंधर इत्यमरः ॥ २५ ॥ २६ ॥

रा० टी०–स इति । प्रभाभिर्मेरुरिव विराजता शोभमानेन किरीटेन भूषणैश्च भासयन् सोऽतिकायो बभौ ॥२७॥

रा० टी०–स इति । नैर्ऋतशार्दूलैर्वृतस्सोऽतिकायो रथे रराज ॥ २८ ॥

रा० टी०–हयमिति । नरान्तकः हयमारुरोह ॥ २९ ॥

रा० टी०–गृहीत्वेति । शक्तिमादाय शिखिगतो मयूरारूढो गुह इव प्रासं गृहीत्वा नरान्तको रराज ॥ ३० ॥

गो० टी०–स इति । किरणैः भासयन् भासमानः । मेरुरिव बभावित्यन्वयः ॥ २७—३० ॥

३१-३२ ] ति० टी०–परिघं समादाय स्थितो देवान्तको दोर्भ्यां गिरिं समुद्रमथने मन्दरगिरिं परिगृह्य स्थितस्य विष्णोर्वपुर्विडम्बयन्विरराजेत्यनुकर्षः ॥ ३१ ॥ ३२ ॥

रा० टी०–देवांतक इति । देवान्तकः परिघं समादाय दोर्भ्यां गिरिं समुद्रमथनाय मन्दराचलं परिगृह्य विद्यमानस्य विष्णोः वपुर्विडम्बयन्ननुकुर्वन् सन् रराजेत्यनुकृष्यते ॥ ३१ ॥

रा० टी०–महापार्श्व इति । महापार्श्वः गदामादाय गदापाणिः कुबेर इव विरराज ॥ ३२ ॥

गो० टी०–देवान्तक इति । अत्रापि विरराजेति संबध्यते । देवान्तकः परिघमादाय समुद्रमथने गिरिं मन्दरगिरिम् परिगृह्य तिष्ठतो विष्णोर्वपुर्विडम्बयन् विरराज ॥ ३१–३६ ॥

३३-३५ ] ति० टी०–अमरावत्याः सुरा इव लङ्कायाः प्रतस्थुरित्यन्वयः ॥ ३३—३५ ॥

रा० टी०–ते इति । ते त्रिशरःप्रभृतयः अमरावत्याः सुरा इव पतस्थुः अत एव महात्मानो राक्षसाः गजादिभिः तानन्वत्पेतुः। सार्धश्लोक एकान्वयी ॥ ३३ ॥

रा० टी०–ते इति । श्रिया जुष्टास्ते कुमाराः अम्बरे दीप्ता ग्रहा इव विरेजुः ॥ ३४ ॥

रा० टी०–प्रगृहीतेति । प्रगृहीता शरदभ्रप्रतीकाशा तेषां शस्त्राणामावलिः अम्बरे हंसावलिरिव बभौ ॥ ३५ ॥

३६ ] ति० टी०–निश्चित्य निश्चयेन मरणं शत्रुपराजयं वा । करिष्याम इति शेषः ॥ ३६ ॥

रा० टी०–मरणमिति । मरणं पराजयं रिपुकर्मकजयं वा करिष्यामीति शेषः । इति मतिं कृत्वा संयुगार्थिनो वीरास्संजग्मुः ॥ ३६ ॥

गो० टी०–मरणं वेत्यर्धे निर्जग्मुरित्युपस्कार्यम् ॥३७॥

३७ ] ति० टी०–चिक्षिपुः शत्रुविषयाक्षेपवचनान्यूचुः । सायकानित्यस्य जगृहुरित्यनेनान्वयः ॥ ३७ ॥

रा० टी०–जगर्जुरिति । युद्धदुर्मदा राक्षसाः गर्जनादि चक्रुः ॥ ३७ ॥

---

१ स्वनुकर्षं सुकूबरमिति गो. पाठः । २ किरणैरिति गो. पाठः । ३ वज्रेति गो. रा. पाठः । ४ भूषितामिति रा. पाठः । ५ प्रतस्थिर इति गो.पाठः। ६ बलैरप्रतिमैर्वृता इति गो. रा. पाठः । ७ जग्मुरिति गो. पाठः । ८ सितेति गो. पाठः । ९ शारदेति गो. पाठः । १० निरिति गो. रा. पाठे ।

जगृहुश्च [1]महात्मानो [2]निर्याता युद्धदुर्मदाः । [3]क्ष्वेडितास्फोटितैतानां वै संचचालेव मेदिनी ॥ ३८ ॥
रक्षसां सिंहनादैश्च सं[4]स्फोटितमिवाम्बरम् । तेऽभिनिष्क्रम्य मुदिता राक्षसेन्द्रा महाबलाः ॥ ३९ ॥
ददृशुर्वानरानीकं समुद्यतशि[5]लानगम् । हरयोऽपि महात्मानो ददृशू रा[6]क्षसं बलम् ॥ ४० ॥
हस्त्यश्वरथसंबाधं किङ्किणीशतनादितम् । नीलजीमूतसंकाशं समुन्नतमहायुधम् ॥ ४१ ॥
दीप्तानलरविप्रख्यैर्नै[7]ऋतैः सर्वतो वृतम् । तद्दृष्ट्वा बलमायातं लब्धलक्षाः प्लवंगमाः ॥ ४२ ॥
समुद्यतमहाशैलाः संप्रणेदुर्मु[8]हुर्मुहुः । अमृष्यमाणा रक्षांसि प्रति[9]नर्दन्त वानराः ॥ ४३ ॥
ततः स[10]मुत्कृष्टरवं निशम्य रक्षोगणा वानरयूथपानाम् ।
अमृष्यमाणाः परहर्षमुग्रमहाबला भीमतरं प्रणे[11]दुः ॥ ॥ ४४ ॥
ते राक्षसबलं घोरं प्रविश्य हरियूथपाः । विचेरुरुद्यतैः शै[12]लैर्नगाः शिखरिणो यथा ॥ ४५ ॥
केचिदाकाशमाविश्य केचिदुर्व्यां प्लवंगमाः । रक्षःसैन्येषु संक्रुद्धाः केचि[12]द्द्रुमशिलायुधाः ॥ ४६ ॥
द्रुमांश्च विपुलस्कन्धान्गृह्य वानरपुंगवाः । तद्युद्धमभवद्घोरं रक्षोवानरसंकुलम् ॥ ४७ ॥
ते पादपशिलाशैलैश्चक्रुर्वृष्टिमनूपमाम् । बाणौघैर्वार्यमाणाश्च हरयो भीमविक्रमाः ॥ ४८ ॥
सिंहनादान्विनेदुश्च रणे रा[13]क्षसवानराः । शिलाभिश्चूर्णयामासुर्यातुधानान्प्लवंगमाः ॥ ४९ ॥
नि[14]र्जघ्नुः सं[15]युगे क्रुद्धाः कवचाभरणावृतान् । केचिद्रथगतान्वीरान्गजवाजिगतानपि ॥ ५० ॥

गो० टी०—इति कृत्वेत्यर्धम् । इत्थं कर्तव्यमित्येवं रूपां मतिं कृत्वेत्यर्थः ॥ ३८ ॥

३८–३९ ] ति० टी०—क्ष्वेडितास्फोटितानां च । तैरित्यर्थः ॥ ३८ ॥ ३९ ॥

रा० टी०—क्ष्वेडितेति । क्ष्वेडिताः अनेकविलासाः तेषामास्फोटननिनदैः प्रस्फुटननिनादैर्मेदिनी चचाल अम्बरं तु रक्षसां सिंहनादैः संस्फोटितमिव ॥ ३८ ॥

रा० टी०—ते इति । राक्षसेन्द्राः अभिनिष्क्रम्य समुद्यताः शिलाः नगाः तरवश्च यस्मिन् तद्वानरानीकं ददृशुः ॥३९॥

गो० टी०—जगर्जुश्चेति । जगर्जुः मेघध्वनिं चक्रुः । प्रणेदुः सिंहनादं चक्रुः चिक्षिपुः क्षेपवचनान्यूचुः सायकान् जगृहुरित्यन्वयः ॥ ३९–४३ ॥

४०–४२ ] ति० टी०—समुद्यतशिलानगं समुद्यता. शिला नगा वृक्षाश्च येन तत् ॥ ४०—४२ ॥

रा० टी०—हरय इति । हरयोपि हस्त्यादिभिस्सम्बाधं निबिडं नैर्ऋतैःसर्वतोवृतं राक्षसं बलं ददृशुः । अर्द्धचतुष्टयमेकान्वयि ॥ ४० ॥ ४१ ॥

रा० टी०—तमिति । आयान्तं बलं दृष्ट्वा लब्धलक्षाः प्राप्तप्रहारविषयाः अत एव समुद्यतमहाशैलाः प्लवङ्गमाः संप्रणदुः ॥ ४२ ॥

गो० टी०—तदित्यादि । लब्धलक्षाः लब्धपराक्रमविषयाः ॥ ४४–४६ ॥

४३ ] ति० टी०—प्रतिनर्दन्त प्रत्यनर्दन्त ॥ ४३ ॥

रा० टी०—अमृष्यमाणा इति । रक्षांसि अमृष्यमाणा वानराः प्रतिनर्दन्त प्रत्यनर्दन्त समुदायस्य कर्मत्वान्न द्वितीया । अर्द्धं पृथक् ॥ ४३ ॥

४४–४५ ] ति० टी०—परहर्षं शत्रुहर्षममृष्यमाणाः ४४-४५

रा० टी०—तत इति । वानरयूथपानां समुत्कृष्टरवं निशम्य श्रुत्वा परहर्षममृष्यमाणाः रक्षोगणाः भीमतरं विनेदुः ४४

रा० टी०—ते इति । हरियूथपाः उद्यतैश्शैलैश्शैलशृङ्गैः शिखरिणो नगाः शैला इव हरियूथपाः राक्षसबलं प्रविश्य विचेरुः ॥ ४५ ॥

४६–५० ] ति० टी०—केचिद्द्रुमशिलायुधा इति स्वभावोक्तिः । तादृशाः प्लवंगमा रक्षःसैन्येषु संक्रुद्धा आकाशमाविश्य चेरुः । केचिद्विपुलस्कन्धान्द्रुमान्गृहीत्वोर्व्यां चेरुः ४६-५०

रा० टी०—केचिदिति । संक्रुद्धाः द्रुमशिलायुधाः द्रुमशिलाभिर्योधनशीलाः अत एव द्रुमान् चकारात् शैलांश्च गृह्य गृहीत्वा विद्यमानाः वानरपुङ्गवाः केचित्प्लवङ्गमाः आकाशमाविश्य केचिदुर्व्यामाविश्य स्थित्वा केचिद्रक्षस्सैन्येषु आविश्य विचेरुरिति शेषः। अत एव तद्युद्धं घोरमभवत् । श्लोकद्वयमेकान्वयि ॥ ४६ ॥ ४७ ॥

गो० टी०—संचारप्रकारमेवाह—केचिदित्यादिसार्धश्लोक एकान्वयः।द्रुमशिलायुधाः इति स्वभावोक्तिः॥४७–४८॥

रा० टी०—ते इति । बाणौघैर्वार्यमाणाः ते हरयः पादपादिभिरनूपमां वृष्टिं चक्रुः ॥ ४८ ॥

रा० टी०—सिंहेति । अराक्षसाः राक्षसविरोधिनो वा-

१ अपि ते वीरा इति गो.रा.पाठः । २ निर्यान्त इति गो. निर्जग्मुरिति रा.पाठः । ३ आस्फोटननिनदैश्चचाल च वसुंधरेति गो.रा.पाठः । ४ पुस्फोटेव तदाम्बरमिति गो.पाठः। ५ आयुधमिति रा.पाठः। ६ नैर्ऋतमिति गो.रा.पाठः। ७ सर्वतो नैर्ऋतैरिति गो.पाठः। ८ महाबला इति गो.पा.। ९ नर्दन्तीति गो.पा.। १० मुत्कृष्टेति गो.पा.। ११ विनेदुरिति गो.रा.पा.। १२ चेरुरिति गो.पा.। १३ वानरराक्षसा इति गो.पा.। १४ नीति गो.रा.पाठः। १५ समर इति रा.पा.।

निर्जघ्नुः सहसा वीरैर्यातुधानान्प्लवंगमाः। शैलशृङ्गान्विताङ्गास्ते मुष्टिभिर्वान्तलोचनाः ॥ ५१ ॥
चेलुः पेतुश्च नेदुश्च तत्र राक्षसपुंगवाः। राक्षसाश्च शरैस्तीक्ष्णैर्बिभिदुः कपिकुञ्जरान् ॥ ५२ ॥
शूलमुद्गरखड्गैश्च जघ्नुः प्रासैश्च शक्तिभिः। अन्योन्यं पातयामासुः परस्परजयैषिणः ॥ ५३ ॥
रिपुशोणितदिग्धाङ्गास्तत्र वानरराक्षसाः। ततः शैलैश्च खड्गैश्च विसृष्टैर्हरिराक्षसैः ॥ ५४ ॥
मुहूर्तेनावृता भूमिरभवच्छोणितोक्षिता। विकीर्णैः पर्वताकारै रक्षोभिरभिमर्दितैः ॥
आसीद्वसुमती पूर्णा तदा युद्धमदान्वितैः ॥ ॥ ५५ ॥
आक्षिप्ताः क्षिप्यमाणाश्च भग्नशैलैश्च वानरैः। पुनरङ्गैस्तदा चक्रुर्वानरा युद्धमद्भुतम् ॥ ५६ ॥
वानरान्वानरैरेव जघ्नुस्ते नैर्ऋतर्षभाः। राक्षसान्राक्षसैरेव जघ्नुस्ते वानरा अपि ॥ ५७ ॥
आक्षिप्य च शिलाः शैलाञ्जघ्नुस्ते राक्षसास्तदा। तेषां चाच्छिद्य शस्त्राणि जघ्नू रक्षांसि वानराः॥ ५८ ॥
निर्जघ्नुः शैलशृङ्गैश्च बिभिदुश्च परस्परम्। सिंहनादान्विनेदुश्च रणे राक्षसवानराः ॥ ५९ ॥
छिन्नवर्मतनुत्राणा राक्षसा वानरैर्हताः। रुधिरं प्रस्रुतास्तत्र रससारमिव द्रुमाः ॥ ६० ॥
रथेन च रथं चापि वारणेनापि वारणम्। हयेन च हयं केचिन्निजघ्नुर्वानरा रणे ॥ ६१ ॥
क्षुरप्रैरर्धचन्द्रैश्च भल्लैश्च निशितैः शरैः। राक्षसा वानरेन्द्राणां विभिदुः पादपाञ्शिलाः ॥ ६२ ॥

---

नराः नरसदृशाः प्लवङ्गमास्सिंहनादान्विनेदुः शिलाभिश्चूर्णयामासुश्च किं च यद्यपि वानरा राक्षसाश्च सिंहनादं विनेदुस्तथापि प्लवङ्गमाश्चूर्णयामासुः। चो यद्यपीत्यर्थे ॥ ४९ ॥

रा० टी०—निजघ्नुरिति । केचिद्वानराः कवचाभरणावृतान् राक्षसान् निजघ्नुः ॥ ५० ॥

गो० टी०—त इति । अनुपमाम् अनुपमाम् ॥४९—५६॥

५१-५५] ति० टी०—शैलशृङ्गान्विताङ्गा गिरिशिखरैर्व्याप्तदेहाः। मुष्टिभिर्मुष्टिप्रहारैर्वान्तलोचना बहिर्निर्गतलोचनाः ५१-५५

रा० टी०—निजघ्नुरिति । वान्तलोचनाः बहिर्निर्गतनयनाः किंच अन्तानि आघूर्णनमात्रेण रिपुविनाशकानि लोचनानि येषां ते शैलशृङ्गान्विताः अपि प्लवङ्गमाः उत्प्लुत्य यातुधानान्निजघ्नुः ॥ ५१ ॥

रा० टी०—चेलुरिति । राक्षसपुंगवाः राक्षसाः चलनादि चक्रुः शरैः कपिकुंजरान् विभिदुश्च शूलादिभिर्जघ्नुश्च । सार्द्धश्लोक एकान्वयी ॥ ५२ ॥

रा० टी०—अन्योन्यमिति । रिपुशोणितैर्दिग्धानि प्रलिप्तान्यङ्गानि येषां ते परस्परजयैषिणो वानरराक्षसाः अन्योन्यं पातयामासुः ॥ ५३ ॥

रा० टी०—तत इति । भूमिः हरिराक्षसैर्विसृष्टैः त्यक्तैश्शैलादिभिरावृता अत एव शोणितोक्षिताऽभवत् ॥ ५४ ॥

रा० टी०—विकीर्णैरिति । युद्धमदान्वितैररिमर्दनैर्विकीर्णैः इतस्ततस्संस्थितैरक्षोभिः वसुमती पूर्णा आसीत् ॥ ५५ ॥

५६-५७ ] ति० टी०—आक्षिप्ताः क्षिप्यमाणा इति नियुद्धप्रकारकथनम् । भग्नशैलैश्च वानरै राक्षसभग्नस्वयुद्धसाधनशैलादिभिः अतएव पुनरङ्गैर्हस्तपादादिभिरासन्ना भूत्वा युद्धं चक्रुः ॥ ५६ ॥ ५७ ॥

रा० टी०—आक्षिप्ता इति । भग्नाः शैलाः वानरगृहीतगिरयो यैस्तै राक्षसैराक्षिप्ता इतस्ततश्चालिताः क्षिप्यमाणाः चाल्यमानाश्च वानराः आसन्ना राक्षससमीपं प्राप्तास्संतः अङ्गैः करचरणादिभिः युद्धं चक्रुः ॥ ५६ ॥

रा० टी०—युद्धाकारमाह—वानरानिति । नैर्ऋतर्षभाः वानरान् वानरैरेव जघ्नुः हरियूथपास्तु राक्षसान् राक्षसैरेव जघ्नुः ॥ ५७ ॥

गो० टी०—आक्षिप्ता इति । आक्षिप्ता क्षिप्यमाणाश्चेति नियुद्धप्रकारकथनम् । अङ्गैः हस्तपादादिभिः ॥ ५७—६० ॥

५८-५९ ] ति० टी०—आक्षिप्य बलाद्गृहीत्वा ॥५८॥५९॥

रा० टी०—आक्षिप्येति । राक्षसाः तेषां वानराणां शिलाः आक्षिप्य आक्षिप्य हरीन् निजघ्नुः वानरा अपि तेषां रक्षसां शस्त्राणि आछिद्य रक्षांसि जघ्नुः ॥ ५८ ॥

रा० टी०—निजघ्नुरिति । राक्षसवानराः शैलशस्त्रैः परस्परं निजघ्नुः चिच्छिदुश्च ॥ ५९ ॥

६०-६२ ] ति० टी०—प्रस्रुताः स्रुतवन्तः । रससारो निर्यासः ॥ ६०—६२ ॥

रा० टी०—छिन्नेति । वानरैः छिन्नानि चर्मतनुत्राणानि येषामत एव हताः राक्षसाः द्रुमा रससारं निर्यासमिव रुधिरं प्रस्रुताः प्रस्रवणकर्त्तारो बभूवुरिति शेषः ॥ ६० ॥

गो० टी०—छिन्नेति । छिन्नवर्मतनुत्राणाःछिन्नवर्मरूप

---

१ आकुल्येति गो.रा.पाठः। २ आचिताङ्गाश्चेति गो.पाठः। ३ आप्लुत्येति गो.पाठः। ४ विकीर्णपर्वतेति गो.पाठः। ५ मर्दनैरिति गो.रा.पाठः। ६ शूला इति गो.पाठः। ७ वानरा इति रा.पाठः। ८ आसन्ना इति गो.रा.पाठः। ९ रजनीचरा इति गो.पाठः। १० हरियूथपा इति रा.पाठः। ११ तेषां निजघ्नूराक्षसा हरीनिति गो.रा.पाठः। १२ शूलाद्यैरिति गो. शस्त्राद्यैरिति च रा.पाठः। १३ वानरराक्षसा इति गो.पाठः। १४ मवेति गो. पाठः। १५ चिच्छिदुरिति गो.पा.।

विकीर्णा पर्वतास्तैश्च द्रुमच्छिन्नैश्च संयुगे । हतैश्च कपिरक्षोभिर्दुर्गमा वसुधाभवत् ॥ ६३ ॥
ते वानरा गर्वितहृष्टचेष्टाः सङ्ग्राममासाद्य भयं विमुच्य ।
युद्धं स्म सर्वे सह राक्षसैस्ते नानायुधाश्चक्रुरदीनसत्त्वाः ॥ ॥ ६४ ॥
तस्मिन्प्रवृत्ते तुमुले विमर्दे प्रहृष्यमाणेषु वलीमुखेषु ।
निपात्यमानेषु च राक्षसेषु महर्षयो देवगणाश्च नेदुः ॥ ॥ ६५ ॥
ततो हयं मारुततुल्यवेगमारुह्य शक्तिं निशितां प्रगृह्य ।
नरान्तको वानरसैन्यमुग्रं महार्णवं मीन इवाविवेश ॥ ॥ ६६ ॥
स वानरान्सप्त शतानि वीरः प्रासेन दीप्तेन विनिर्बिभेद ।
एकः क्षणेनेन्द्ररिपुर्महात्मा जघान सैन्यं हरिपुंगवानाम् ॥ ॥ ६७ ॥
ददृशुश्च महात्मानं हयपृष्ठप्रतिष्ठितम् । चरन्तं हरिसैन्येषु विद्याधरमहर्षयः ॥ ६८ ॥
स तस्य ददृशे मार्गो मांसशोणितकर्दमः । पतितैः पर्वताकारैर्वानरैरभिसंवृतः ॥ ६९ ॥
यावद्विक्रमितुं बुद्धिं चक्रुः प्लवगपुंगवाः । तावदेतानतिक्रम्य निर्बिभेद नरान्तकः ॥ ७० ॥
ददाह हरिसैन्यानि वनानीव विभावसुः । यावदुत्पाटयामासुर्वृक्षाञ्शैलान्वनौकसः ॥ ७१ ॥
तावत्प्रासहताः पेतुर्वज्रकृत्ता इवाचलाः । ज्वलन्तं प्रासमुद्यम्य सङ्ग्रामान्ते नरान्तकः ॥ ७२ ॥
दिक्षु सर्वासु बलवान्विचचार नरान्तकः । प्रमृद्नन्सर्वतो युद्धे प्रावृट्काले यथानिलः ॥ ७३ ॥
न शेकुर्धावितुं वीरा न स्थातुं स्पन्दितुं कुतः । उत्पतन्तं स्थितं यान्तं सर्वान्विव्यध वीर्यवान् ॥ ७४ ॥
एकेनान्तककल्पेन प्रासेनादित्यतेजसा । भग्नानि हरिसैन्यानि निपेतुर्धरणीतले ॥ ७५ ॥
वज्रनिष्पेषसदृशं प्रासस्याभिनिपातनम् । न शेकुर्वानराः सोढुं ते विनेदुर्महास्वनम् ॥ ७६ ॥
पततां हरिवीराणां रूपाणि प्रचकाशिरे । वज्रभिन्नाग्रकूटानां शैलानां पततामिव ॥ ७७ ॥

---

तनुत्राणाः रुधिरं प्रस्रुताः स्रुतवन्तः मुमुचुरिति यावत् । रससारं निर्यासम् ॥ ६१—६४ ॥

रा० टी०—रथेनेति । केचिद्वानराः रथादिभिः रथादीन् निजघ्नुः ॥ ६१ ॥

रा० टी०—क्षुरप्रैरिति । राक्षसा वानरेन्द्राणां पादपान् शिलाश्च क्षुरप्रादिभिश्शरैश्शरविशेषैः बिभिदुः ॥ ६२ ॥

गो० टी०—क्षुरप्रैरिति । शिलाः शिलाश्चेत्यर्थः ॥६५—६६॥

६३] ति टी०—पर्वतास्तैर्निरस्तपर्वतैः द्रुमच्छिन्नैश्छिन्नद्रुमैः विकीर्णा व्याप्ता ॥ ६३ ॥

रा० टी०—विकीर्णैरिति । विकीर्णैर्भग्नैः पर्वताग्रैः छिन्नैर्द्रुमैश्च हतैः कपिरक्षोभिश्च वसुधा दुर्गमाभवत् ॥ ६३ ॥

६४ ] ति० टी०—गर्वितहृष्टचेष्टाः संजातगर्वा हृष्टाश्चेष्टा येषां ते नानायुधा द्रुमशैलदन्तनखादिनानाप्रहरणयुताः ॥६४॥

रा० टी०—ते इति । गर्विता गर्वविशिष्टा एव हृष्टा चेष्टा येषां ते वानराः संग्राममासाद्य भयं विमुच्य अगृहीत्वेत्यर्थः राक्षसैस्सह युद्धं चक्रुः ॥ ६४ ॥

गो० टी०—ते वानरा इति । गर्वितं हृष्टं च यथा भवति तथा चेष्टन्त इति गर्वितहृष्टचेष्टाः नानायुधाः गृहीतराक्षसायुधा इत्यर्थः ॥ ६७ ॥

६५–६८ ] ति० टी०—प्रहृष्यमाणेषु प्रहृष्यत्सु वलीमुखेषु वानरेषु ॥ ६५—६८ ॥

रा० टी०—तस्मिन्निति । तुमुले युद्धे प्रवृत्ते सति वलीमुखेषु वानरेषु प्रहृष्यमाणेषु सत्सु राक्षसेषु निपात्यमानेषु सत्सु च महर्षिप्रभृतयो नेदुः ॥ ६५ ॥

रा० टी०—तत इति । नरान्तको हयमारुह्य महार्णवं मीन इव वानरराजसैन्यमाविवेश ॥ ६६ ॥

गो० टी०—तस्मिन्निति । विमर्दे युद्धे ॥ ६८ ॥ ६९ ॥

रा० टी०—स इति । एक एव स नरान्तकः सप्तशतानि वानरान् प्रासेन निर्बिभेद अत एव वानरपुङ्गवानां सैन्यं क्षणेन जघान ॥ ६७ ॥

रा० टी०—ददृशुरिति । हयपृष्ठे प्रतिष्ठितं हरिसैन्येषु चरन्तं नरान्तकं विद्याधरमहर्षयो ददृशुः ॥ ६८ ॥

गो० टी०—स वानरानिति । जघानेति । इत्थमिति शेषः ॥ ७०—७३ ॥

६९–७७ ] ति० टी०—मार्गो युद्धार्थं गमनमार्गः पतितैर्वानरैरभिसंवृतो मांसशोणितकर्दमः सन्ददृशे दृष्टः ॥६९–७७॥

रा० टी०—स इति । पतितैः वानरैरभिसंवृतः अत एव

---

१ स्विति गो. पाठः । २ तैरिति गो. रा. पाठः । ३ आयुधैरिति रा. पाठः । ४ राजसैन्यमिति गो. रा. पाठः । ५ एकेतिसमस्तो गो. पाठः । ६ पृष्ठे इति गो. रा. पाठः । ७ उत्तरपद्योत्तरार्धमेतदादौ गो. पुस्तके । ८ धावितुमिति गो. पाठः । ९ भयादिति गो. रा. पाठः ।

ये तु पूर्वं महात्मानः कुम्भकर्णेन पातिताः । ते स्वस्था वानरश्रेष्ठाः सुग्रीवमुपतस्थिरे ॥ ७८ ॥
प्रेक्षमाणः स सुग्रीवो ददृशे हरिवाहिनीम् । नरान्तकभयत्रस्तां विद्रवन्तीं यतस्ततः ॥ ७९ ॥
विद्रुतां वाहिनीं दृष्ट्वा स ददर्श नरान्तकम् । गृहीतप्रासमायान्तं हयपृष्ठप्रतिष्ठितम् ॥ ८० ॥
दृष्ट्वोवाच महातेजाः सुग्रीवो वानराधिपः । कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम् ॥ ८१ ॥
गच्छैनं राक्षसं वीरं योऽसौ तुरगमास्थितः । भक्षयन्तं परबलं क्षिप्रं प्राणैर्वियोजय ॥ ८२ ॥
स भर्तुर्वचनं श्रुत्वा निष्पपाताङ्गदस्तदा । अनीकान्मेघसंकाशादंशुमानिव वीर्यवान् ॥ ८३ ॥
शैलसंघातसंकाशो हरीणामुत्तमोऽङ्गदः । रराजाङ्गदसंनद्धः स धातुरिव पर्वतः ॥ ८४ ॥
निरायुधो महातेजाः केवलं नखदंष्ट्रवान् । नरान्तकमभिक्रम्य वालिपुत्रोऽब्रवीद्वचः ॥ ८५ ॥
तिष्ठ किं प्राकृतैरेभिर्हरिभिस्त्वं करिष्यसि । अस्मिन्वज्रसमस्पर्शं प्रासं क्षिप ममोरसि ॥ ८६ ॥
अङ्गदस्य वचः श्रुत्वा प्रचुक्रोध नरान्तकः । संदश्य दशनैरोष्ठं निःश्वस्य च भुजंगवत् ॥
अभिगम्याङ्गदं क्रुद्धो वालिपुत्रं नरान्तकः । ॥ ८७ ॥

मांसशोणित एव कर्दमो यस्मिन् स तस्य नरान्तकस्य मार्गो ददृशे ॥ ६९ ॥

रा० टी०—यावदिति । प्लवगपुङ्गवाः विक्रमितुं विक्रमं कर्तुं यावद्बुद्धिं चक्रुः तावदेव एतान् वानरानतिक्रम्य नरान्तको निर्बिभेद ॥ ७० ॥

रा० टी०—ददाहेति । वनौकसः वृक्षादीन् यावदुत्पाटयामासुः तावदेव विभावसुर्वनानीव हरिसैन्यानि ददाह नरान्तक इति शेषः अत एव वज्रकृत्ता अचला इव प्रासहताः वानराः पेतुः। सार्धश्लोक एकान्वयी ॥ ७१ ॥ ७२ ॥

रा० टी०—ज्वलन्तमिति । नरान्तकः जनानां विघातको नरान्तकः प्रमृद्नन् विहिंसन् सन् अनिल इव सर्वासु दिक्षु विचचार । सार्धश्लोक एकान्वयी ॥ ७३ ॥

गो० टी०—ज्वलन्तमिति । ज्वलन्तं ज्वलन्तमिव स्थितम् । विभावसुः वह्निः ॥ ७४ ॥ ७५ ॥

गो० टी०—दिक्ष्विति । प्रमृद्नन् मर्दयन् ॥ ७६ ॥

रा० टी०—नेति । उत्पतनादि कुर्वन्तं नरान्तकः भाषितुं स्थातुं च स्यन्दितुं किंचिच्चलितुं च वीरा न शेकुः अत एव वीर्यवान् नरांतकः सर्वान् वानरान् विव्याध ॥ ७४ ॥

रा० टी०—एकेनेति । एकेन नरान्तकेन भग्नानि हरिसैन्यानि निपेतुः ॥ ७५ ॥

रा० टी०—वज्रेति । प्रासस्याभिनिपातनं सोढुं वानराः न शेकुः अत एव महास्वनं विनेदुः ॥ ७६ ॥

रा० टी०—पततामिति । हरिवीराणां रूपाणि पततां शैलानां रूपाणीव प्रचकाशिरे ॥ ७७ ॥

गो० टी०—न शेकुरिति । यतो हेतोरुत्पतन्तं स्थितं यान्तं च विव्याध अतः स्पन्दनादौ न शेकुरित्यर्थः॥७७-८०॥

७८-८१ ] ति० टी०—स्वस्थाः स्वस्थचित्तेन्द्रियाः । वानरश्रेष्ठा अङ्गदादयः ॥ ७८—८१ ॥

रा० टी०—ये इति । महात्मानः ये पूर्वं कुम्भकर्णेन निपातिताः ते वानरश्रेष्ठाः स्वस्थास्सन्तस्सुग्रीवमुपतस्थिरे ॥७८॥

रा० टी०—प्रेक्षमाण इति । प्रेक्षमाणः इतस्ततोऽवलोकयन् सुग्रीवः नरांतकभयत्रस्तां हरिवाहिनीं ददर्श ॥ ७९ ॥

रा० टी०—विद्रुतामिति । स सुग्रीवः आयान्तं नरान्तकं ददर्श ॥ ८० ॥

रा० टी०—दृष्ट्वेति । सुग्रीवोऽङ्गदमुवाच ॥ ८१ ॥

गो० टी०—कुम्भकर्णेन पातितानां नीलादीनामुत्तरत्र पौरुषकथनसांगत्यायैषां लब्धसंज्ञत्वमाह—येत्विति ॥८१-८५॥

८२]ति०टी०—गच्छैनं राक्षसमिति। हन्तुमिति शेषः८२

रा०टी०—तदाकारमाह—गच्छेति । यस्तुरगमास्थितः तं हरिबलं क्षोभयन्तमेनं राक्षसं गच्छ प्राणैर्वियोजय च ॥ ८२ ॥

८३] ति० टी०—मेघसंकाशादनीकात्स्वसेनामध्यात्॥८३॥

रा० टी०—स इति । सोऽङ्गदो मेघसंकाशात् अनीकात्स्वसैन्यात् अंशुमानिव निष्पपात ॥ ८३ ॥

गो० टी०—स इति । मेघसंकाशादिति निबिडत्वलक्षणसमानधर्मप्रयुक्तेयमुपमा । मेघानीकादित्यत्र तु निष्क्रमणापादानत्वधर्मप्रयुक्तेत्युपमाद्वयस्य निर्वाहः ॥ ८६ ॥

८४-८५ ] ति० टी०—अङ्गदेन दिव्यभुजाभरणेन संनद्धो युक्तः ॥ ८४ ॥ ८५ ॥

रा० टी०—शैलेति । अङ्गदेन भुजाभरणेन सन्नद्धो युक्तो हरीणां मध्ये उत्तमः श्रेष्ठोऽङ्गदस्सधातुः पर्वत इव रराज॥८४॥

रा० टी०—निरायुध इति । निरायुधोऽङ्गदः नरान्तकमभिक्रम्य प्राप्याब्रवीत् ॥ ८५ ॥

गो० टी०—शैलेति । संघातः निबिडसंवेशः । अङ्गदसन्नद्धः सन्नद्धाङ्गदः ॥ ८७—९० ॥

गो० टी०—अभिगम्येति । अयमुत्तरशेषः ॥ ९१-९७ ॥

८६-८७] ति०टी०—अस्मिन्ममोरसि क्षिपेत्यन्वयः८६-८७

१ विप्रेक्षमाण इति गो. पाठः । २ इत इति गो. रा. पाठः । ३ पृष्ठे इति गो. रा. पाठः । ४ स्वमिति गो. पाठः । ५ क्षोभयन्तं हरिबलमिति गो. रा. पाठः । ६ ततोऽङ्गद इति रा. पाठः । ७ तत इति गो. पाठः । ८ मेघानीकादिवां शुमानिति गो. पाठः ।

स प्रासमाविध्य तदाङ्गदाय समुज्ज्वलन्तं सहसोत्ससर्ज ।
स वालिपुत्रोरसि वज्रकल्पे बभूव भग्नो न्यपतच्च भूमौ ॥ ॥ ८८ ॥
तं प्रासमालोक्य तदा विभग्नं सुपर्णकृत्तोरगवीर्यकल्पम् ।
तलं समुद्यम्य स वालिपुत्रस्तुरंगमस्याभिजघान मूर्ध्नि ॥ ॥ ८९ ॥
निमग्नपादः[1] स्फुटिताक्षितारो निष्क्रान्तजिह्वोऽचलसंनिकाशः ।
स तस्य वाजी निपपात भूमौ तलप्रहारेण विकीर्णमूर्धा ॥ ॥ ९० ॥
नरान्तकः क्रोधवशं जगाम हतं तुरंगं पतितं समीक्ष्य ।
स मुष्टिमुद्यम्य महाप्रभावो जघान शीर्षे युधि वालिपुत्रम् ॥ ॥ ९१ ॥
अथाङ्गदो मुष्टिविशीर्णमूर्धा सुस्राव तीव्रं रुधिरं भृशोष्णम् ।
मुहुर्विजज्वाल मुमोह चापि संज्ञां समासाद्य विसिस्मिये च ॥ ॥ ९२ ॥
अथाङ्गदो मृत्युसमानवेगं संवर्त्य मुष्टिं गिरिशृङ्गकल्पम् ।
निपातयामास तदा महात्मा नरान्तकस्योरसि वालिपुत्रः ॥ ॥ ९३ ॥
स मुष्टिनिर्भिन्ननिमग्नवक्षा ज्वाला वमञ्शोणितदिग्धगात्रः ।
नरान्तको भूमितले पपात यथाचलो वज्रनिपातभग्नः ॥ ॥ ९४ ॥
तदान्तरिक्षे त्रिदशोत्तमानां वनौकसां चैव महाप्रणादः ।
बभूव तस्मिन्निहतेऽग्र्यवीर्ये[6] नरान्तके वालिसुतेन संख्ये ॥ ॥ ९५ ॥

रा० टी०–तदाकारमाह—तिष्ठेति । प्राकृतैर्हरिभिः त्वं किं करिष्यसि तैर्युद्धं न कुर्वित्यर्थः अतस्तिष्ठ स्वस्थो भव ममोरसि प्रासं क्षिप च ॥ ८६ ॥

रा० टी०–अङ्गदस्येति । अङ्गदस्य वचः श्रुत्वा नरान्तकः प्रवृद्धक्रोध अत एव दशनैर्दन्तैः ओष्ठं संदश्य विनिश्वस्य च अङ्गदमभिगम्य तत्सम्मुखं प्राप्य च अतिष्ठदिति शेषः । सार्धश्लोक एकान्वयी ॥ ८७ ॥

८८-८९ ] ति० टी०–वालिपुत्रमभिगम्य प्रासमुत्ससर्ज स प्रासो भग्नोऽभवद्भूमौ पपात च ॥ ८८ ॥ ८९ ॥

रा० टी०–स इति । स नरान्तकः प्रासमाविध्य दृढं गृहीत्वा अङ्गदाय उत्ससर्ज स प्रासः वज्रकल्पे वालिपुत्रोरसि भग्नो बभूव न्यपतच्च ॥ ८८ ॥

रा० टी०–तमिति । सुपर्णः कृत्तो विदारितो येन स एव उरगवत् वीर्यं स्वपराक्रमं कल्पयति तं प्रासं विभग्नमालोक्य वालिपुत्रः तलं समुद्यम्य अस्य नरान्तकस्य तुरङ्गं मूर्ध्नि अभिजघान ॥८९॥

९०-९३ ] ति० टी०–स्फुटिताक्षितारः स्फुटिता विशीर्णाक्ष्णस्तारा कनीनिका यस्य सः ॥ ९०—९३ ॥

रा० टी०–निर्भग्नेति । निर्भग्नाः पादा यस्य स्फुटिता अक्षितारा यस्य निष्क्रान्ता जिह्वा यस्य तलप्रहारेण विभिन्नमूर्धा तस्य नरान्तकस्य वाजी भूमौ निपपात ॥ ९० ॥

रा० टी०–नरान्तक इति । नरान्तकः तुरंगं पतितं समीक्ष्य क्रोधवशं जगाम अत एव मुष्टिमुद्यम्य वालिपुत्रं शीर्षे जघान ९१

रा० टी०–अथेति । मुष्टिविशीर्णो मूर्धा यस्य सोऽङ्गदः भृशोष्णं रुधिरं सुस्राव विजज्वाल च मुमोह च सञ्ज्ञां विवेकं समासाद्य विसिस्मिये च ॥ ९२ ॥

गो० टी०–स मुष्टीति । ज्वालारूपेण वमता उद्गच्छता शोणितेन दिग्धगात्रः ॥ ९८ ॥ ९९ ॥

रा० टी०–अथेति । अङ्गदः मुष्टिं संवर्त्य उद्यम्य नरान्तकस्योरसि निपातयामास ॥ ९३ ॥

गो० टी०–अथेति । तत् कृतवानित्यत्र तदित्यव्ययं पदम् तस्मादित्यर्थः । अङ्गदः हि यस्मात् सुदुष्करम् अत एव राममनःप्रहर्षणं विक्रमं कृतवान् तस्मादित्यर्थः । विसिस्मिये । सोपीत्यत्र तच्छब्देन राममनःप्रहर्षणमित्यत्र गुणीभूतो रामशब्दः परामृश्यते । हर्षितः विस्मितेन रामेण श्लाघया तोषितः । स च अङ्गदश्च पुनः युद्धे बभूव । युद्धविषये सन्नद्धो बभूवेत्यर्थः ॥ १०० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

९४-९५ ] ति० टी०–मुष्टिना निर्भिन्नम्, अत एव निमग्नं वक्षो यस्य सः ज्वाला अभिघातोत्था वमन् ॥ ९४ ॥ ९५ ॥

रा० टी०–स इति । मुष्टेर्निष्पिष्टेन वेगेन विभग्नं वक्षो यस्य अत एव शोणितदिग्धगात्रो नरान्तकः ज्वालां तन्मयरुधिरं वमन्सन् वज्रनिपातभग्नोऽचल इव भूमितले पपात ॥ ९४ ॥

रा० टी०–तदेति । अग्र्यमुत्तमं वीर्यं यस्य तस्मिन् नरान्तके वालिसुतेन निहते सति अन्तरिक्षे त्रिदशोत्तमानां वनौकसां च महाप्रणादो हर्षसूचकशब्दो बभूव ॥ ९५ ॥

१ भोगेति गो.रा.पा.। २ तुरङ्गमं तस्येति गो.पा.। ३ तालुरिति गो.पा.। ४ विशीर्णेति गो. विभिन्नेतिच रा.पा.। ५ निरिति गो.पा.। ६ वीर इति गो.पा.।

अथाङ्गदो राममनःप्रहर्षणं सुदुष्करं तं कृतवान्हि विक्रमम् ।
विसिष्मिये सोऽप्यथ भीमकर्मा पुनश्च युद्धे स बभूव हर्षितः ॥ ॥ ९६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

## सप्ततितमः सर्गः ।

नरान्तके हतेऽवशिष्टैः पीडितमङ्गदं मोचयितुमागतेन हनुमता देवान्तको हतः नीलेनापि महोदरो गतासुः पातितः त्रिशिरा अपि वायुसुतेन पञ्चत्वं प्राप्तः ऋषभेण च मत्तो हतः ।

नरान्तकं हतं दृष्ट्वा चुक्रुशुर्नैर्ऋतर्षभाः । देवान्तकस्त्रिमूर्धा च पौलस्त्यश्च महोदरः ॥ १ ॥
आरूढो मेघसंकाशं वारणेन्द्रं महोदरः । वालिपुत्रं महावीर्यमभिदुद्राव वेगवान् ॥ २ ॥
भ्रातृव्यसनसंतप्तस्तदा देवान्तको बली । आदाय परिघं घोरमङ्गदं समभिद्रवत् ॥ ३ ॥
रथमादित्यसंकाशं युक्तं परमवाजिभिः । आस्थाय त्रिशिरा वीरो वालिपुत्रमथाभ्यगात् ॥ ४ ॥
स त्रिभिर्देवदर्पघ्नै राक्षसेन्द्रैरभिद्रुतः । वृक्षमुत्पाटयामास महाविटपमङ्गदः ॥ ५ ॥
देवान्तकाय तं वीरश्चिक्षेप सहसाङ्गदः । महावृक्षं महाशाखं शक्रो दीप्तमिवाशनिम् ॥ ६ ॥
त्रिशिरास्तं प्रचिच्छेद शरैराशीविषोपमैः । स वृक्षं कृत्तमालोक्य उत्पपात तदाङ्गदः ॥ ७ ॥
स ववर्ष ततो वृक्षाञ्शिलाश्च कपिकुञ्जरः । तान्प्रचिच्छेद संक्रुद्धस्त्रिशिरा निशितैः शरैः ॥ ८ ॥
परिघाग्रेण तान्वृक्षान्बभञ्ज स महोदरः । त्रिशिराश्चाङ्गदं वीरमभिदुद्राव सायकैः ॥ ९ ॥
गजेन समभिद्रुत्य वालिपुत्रं महोदरः । जघानोरसि संक्रुद्धस्तोमरैर्वज्रसंनिभैः ॥ १० ॥
देवान्तकश्च संक्रुद्धः परिघेण तदाङ्गदम् । उपगम्याभिहत्याशु व्यपचक्राम वेगवान् ॥ ११ ॥
स त्रिभिर्नैर्ऋतश्रेष्ठैर्युगपत्समभिद्रुतः । न विव्यथे महातेजा वालिपुत्रः प्रतापवान् ॥ १२ ॥

---

९६ ] ति० टी०—राममनःप्रहर्षणं राममनसः प्रहर्षणम् । सोऽपि रामोऽपि । अथातिभीमकर्माङ्गदः पुनश्च युद्धे युद्धनिमित्तं हर्षितो बभूव तुष्टः सन्संनद्धो बभूवेत्यर्थः ॥ ९६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

रा० टी०—अथेति । अङ्गदः राममनःप्रहर्षणं सुदुष्करं विक्रमं कृतवान् अत एव स रामोऽपि विसिष्मिये अथानन्तरं भीमकर्माङ्गदः पुनर्युद्धे युद्धार्थं प्रहर्षितो बभूव ॥ ९६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

१–५ ] ति० टी०—अत्र सर्गविच्छेदो बहुषु पुस्तकेषु न दृश्यत इत्यस्माभिरपि न कृतः । पूर्वोत्तरवाक्ययोरेककर्तृकयुद्धवर्णनादिति कतकः ॥ १—५ ॥

रा० टी०—नरान्तकवधानन्तरकालिकं वृत्तान्तमाह—नरान्तकमित्यादिभिः । नरान्तकं हतं दृष्ट्वा देवांतकादयो नैर्ऋतर्षभाः चुक्रुशुः रुरुदुः ॥ १ ॥

रा० टी०—आरूढ इति । वारणेन्द्रं महागजमारूढो महोदरः वालिपुत्रमभिदुद्राव ॥ २ ॥

गो० टी०—नरान्तकमित्यादि । पौलस्त्य इति त्रिमूर्धविशेषणम् । न तु महोदरस्य । देवान्तकादयस्त्रयश्चुक्रुशुरिति संबन्धः ॥ १ ॥ २ ॥

रा० टी०—भ्रात्रिति । भ्रातुर्व्यसनेन मरणेन सन्तप्तो देवान्तकः अङ्गदं समभिद्रवत् ॥ ३ ॥

रा० टी०—रथमिति । त्रिशिराः रथमास्थाय वालिपुत्रमथाभ्ययात् ॥ ४ ॥

रा० टी०—स इति । देवदर्पघ्नैः त्रिभिर्देवान्तकनरांतकत्रिशिरोभिरभिद्रुतोऽङ्गदो महाविटपं बृहच्छाखावन्तं वृक्षमुत्पाटयामास ॥ ५ ॥

गो० टी०—भ्रातृव्यसनेति । समभिद्रवत् समभ्यद्रवत् ॥ ३–१० ॥

६ ] ति० टी०—दीप्तामशनिमिव वृक्षं चिक्षेप ॥ ६ ॥

रा० टी०—देवान्तकायेति । शक्रः दीप्तामशनिमिव अङ्गदो महावृक्षं देवांतकाय चिक्षेप ॥ ६ ॥

७–१२ ] ति० टी० त्रिशिरास्तमिति । देवान्तकाय प्रक्षिप्तं वृक्षम् तत्सहायार्थमिति शेषः ॥ ७—१२ ॥

---

१ तद्विति गो. पाठः । २ अतिवीर्यविक्रम इति गो. पाठः । ३ वीर्यवानिति गो. पाठः । ४ दीप्तमिति गो. पाठः । ५ अयादिति गो. रा. पाठः । ६ नैर्ऋतेति गो. पाठः । ७ शैलानिति गो. पाठः । ८ न सुरान्तक इति गो. पाठः ।

स वेगवान्महावेगं कृत्वा परमदुर्जयः । तलेन समभिद्रुत्य जघानास्य महागजम् ॥
तस्य तेन प्रहारेण नागराजस्य संयुगे । ॥ १३ ॥
पेततुर्नयने तस्य विननाश स कुञ्जरः । विषाणं चास्य निष्कृष्य वालिपुत्रो महाबलः ॥ १४ ॥
देवान्तकमभिद्रुत्य ताडयामास संयुगे । स विह्वलस्तु तेजस्वी वातोद्धूत इव द्रुमः ॥ १५ ॥
लाक्षारससवर्णं च सुस्राव रुधिरं महत् । अथाश्वस्य महातेजाः कृच्छ्राद्देवान्तको बली ॥ १६ ॥
आविध्य परिघं वेगादाजघान तदाङ्गदम् । परिघाभिहतश्चापि वानरेन्द्रात्मजस्तदा ॥ १७ ॥
जानुभ्यां पतितो भूमौ पुनरेवोत्पपात ह । तमुत्पतन्तं त्रिशिरास्त्रिभिर्बाणैरजिह्मगैः ॥ १८ ॥
घोरैर्हरिपतेः पुत्रं ललाटेऽभिजघान ह । ततोऽङ्गदं परिक्षिप्तं त्रिभिर्नैर्ऋतपुंगवैः ॥ १९ ॥
हनूमानथ विज्ञाय नीलश्चापि प्रतस्थतुः । ततश्चिक्षेप शैलाग्रं नीलस्त्रिशिरसे तदा ॥ २० ॥
तद्रावणसुतो धीमान्बिभेद निशितैः शरैः । तद्बाणशतनिर्भिन्नं विदारितशिलातलम् ॥ २१ ॥
सविस्फुलिङ्गं सज्वालं निपपात गिरेः शिरः । स विजृम्भितमालोक्य हर्षाद्देवान्तको बली ॥ २२ ॥

रा० टी०—त्रिशिरा इति । तं वृक्षं त्रिशिराश्शरैः चिच्छेद अङ्गदस्तु कृत्तं छिन्नं वृक्षमालोक्य उत्पपात ॥ ७ ॥

रा० टी०—स इति । सोऽङ्गदो वृक्षान् शिलाश्च ववर्ष । त्रिशिरास्तु तान् प्रचिच्छेद ॥ ८ ॥

रा० टी०—परिघेति । महोदरः परिघाग्रेण तान् त्रिशिरश्छेदनोर्वरितान् वृक्षान् बभञ्ज त्रिशिरास्तु अङ्गदमभिदुद्राव ॥ ९ ॥

रा० टी०—गजेनेति । महोदरः वालिपुत्रं समभिद्रुत्य उरसि जघान ॥ १० ॥

रा० टी०—देवेति । संक्रुद्धो देवान्तकः अङ्गदमुपगम्य परिघेणाभिहत्य व्यपचक्राम अपससार ॥ ११ ॥

रा० टी०—स इति । त्रिभिः महोदरप्रभृतिभिः नैर्ऋतश्रेष्ठैः युगपत् समभिद्रुतोऽपि वालिपुत्रः न विव्यथे ॥ १२ ॥

गो० टी०—देवान्तकश्चेति । व्यपचक्राम पश्चादाजगाम ॥ ११ ॥ १२ ॥

१३-१५ ] ति० टी०—अस्य महागजं महोदरस्य गजम् ॥ १३—१५ ॥

रा० टी०—स इति । स वालिपुत्रः समभिद्रुत्य तलेन अस्य देवान्तकस्य महागजं जघान ॥ १३ ॥

गो० टी०—स इति । अस्य महोदरस्य ॥ १३ ॥

रा० टी०—तस्येति । तस्याङ्गदस्य प्रहारेण तस्य नागराजस्य नयने पेततुः अत एव कुंजरो विननाश ॥ १४ ॥

गो० टी०—तस्येति । तस्य अङ्गदस्य तस्य नागराजस्येति द्वितीयतच्छब्दान्वयः ॥ १४ ॥

रा० टी०—विषाणमिति । अस्य कुंजरस्य विषाणं दंतं निष्कृष्य अभिद्रुत्य देवांतकं ताडयामास ॥ १५ ॥

रा० टी०—स इति । वातोद्धूतो द्रुम इव विह्वलस्स देवांतकः लाक्षारसेन समानं वर्णं यस्य तद्रुधिरं मुखात् सुस्राव ववाम ॥ १६ ॥

गो० टी०—विषाणमिति । महाबलः वालिपुत्रः अस्य महोदरवाहनस्य गजस्य विषाणं निष्कृष्य अभिप्लुत्य वेगेन सन्निपत्य देवान्तकं ताडयामासेति संबन्धः ॥ १५—२२ ॥

१६-१७ ] ति० टी०—लाक्षारसेन समानो वर्णो यस्य तद्रुधिरम् ॥ १६ ॥ १७ ॥

रा० टी०—अथेति । देवांतकः कृच्छ्रादाश्वस्य परिघमाविध्य दृढं गृहीत्वा अङ्गदमाजघान ॥ १७ ॥

रा० टी०—परिघेति । परिघेणाभिहतः अत एव जानुभ्यां भूमौ पतितो वानरेन्द्रात्मजः पुनरुत्पपात ॥ १८ ॥

१८-२१] ति० टी०—अजिह्मगैर्ऋजुगामिभिः ॥ १८-२१ ॥

रा० टी०—तमिति । त्रिशिराः उत्पतन्तं हरिपतेः पुत्रं त्रिभिर्बाणैर्ललाटे अभिजघान ॥ १९ ॥

रा० टी०—तत इति । हनूमान्नीलश्च त्रिभिर्नैर्ऋतपुङ्गवैः परिक्षिप्तं प्राप्तमङ्गदं विज्ञाय प्रतस्थतुः ॥ २० ॥

रा० टी०—तत इति । नीलः त्रिशिरसे शैलाग्रं चिक्षेप तच्छैलाग्रं रावणसुतः त्रिशिराः बिभेद ॥ २१ ॥

रा० टी०—तद्दिति । बाणशतेन निर्भिन्नमत एव विदारितं शिलातलं यस्य तद्गिरेः शिरः सविस्फुलिङ्गं निपपात ॥ २२ ॥

गो० टी०—तत इति । जृम्भितं भग्नमिति यावत् जृम्भितं तद्धनुर्दृष्ट्वेत्यादिवत् ॥ २३—२९ ॥

२२ ] ति० टी०—गिरेः शिरः पर्वतस्य शृङ्गम् । विजृम्भितं त्रिशिरसः पर्वतशिखरभेदनरूपं जृम्भणमालोक्य ॥ २२ ॥

रा० टी०—स इति । देवान्तकः विजृंभितं क्रोधावेशेन परिणतरूपं मारुतात्मजमालोक्य परिघेणोपलक्षितस्सन् अभिदुद्राव ॥ २३ ॥

१ इद मर्धमधिकं गो. रा. पुस्तके । २ लोचने इति गो.पाठः । ३ विननाद सवारण इति गो. पाठः । ४ विह्वलितसर्वाङ्ग इति गो. पाठः । ५ मुखाद्विति गो. रा. पाठः । ६ घोरामिति गो. पाठः । ७ तत इति गो. पाठः । ८ तदेति गो. पाठः ।

परिघेणाभिदुद्राव मारुतात्मजमाहवे । तमापतन्तमुत्पत्य हनूमान्कपिकुञ्जरः ॥ २३ ॥
आजघान तदा मूर्ध्नि वज्रकल्पेन मुष्टिना । शिरसि प्राहरद्वीरस्तदा वायुसुतो बली ॥
नादेनाकम्पयच्चैव राक्षसान्स महाकपिः । ॥ २४ ॥
स मुष्टिनिष्पिष्टविभिन्नमूर्धा निर्वान्तदन्ताक्षिविलम्बिजिह्वः ।
देवान्तको राक्षसराजसूनुर्गतासुरुर्व्यां सहसा पपात ॥ ॥ २५ ॥
तस्मिन्हते राक्षसयोधमुख्ये महाबले संयति देवशत्रौ ।
क्रुद्धस्त्रिशीर्षो निशितास्त्रमुग्रं ववर्ष नीलोरसि बाणवर्षम् ॥ ॥ २६ ॥
महोदरस्तु संक्रुद्धः कुञ्जरं पर्वतोपमम् । भूयः समधिरुह्याशु मन्दरं रश्मिवानिव ॥ २७ ॥
ततो बाणमयं वर्षं नीलस्योपर्यपातयत् । गिरौ वर्षं तडिच्चक्रं स गर्जन्निव तोयदः ॥ २८ ॥
ततः शरौघैरभिवर्ष्यमाणो विभिन्नगात्रः कपिसैन्यपालः ।
नीलो बभूवाथ विसृष्टगात्रो विष्टम्भितस्तेन महाबलेन ॥ ॥ २९ ॥
ततस्तु नीलः प्रतिलब्धसंज्ञः शैलं समुत्पाट्य सवृक्षखण्डम् ।
ततः समुत्पत्य महोग्रवेगो महोदरं तेन जघान मूर्ध्नि ॥ ॥ ३० ॥
ततः स शैलाभिनिपातभग्नो महोदरस्तेन महाद्विपेन ।
व्यामोहितो भूमितले गतासुः पपात वज्राभिहतो यथाद्रिः ॥ ॥ ३१ ॥
पितृव्यं निहतं दृष्ट्वा त्रिशिराश्चापमाददे । हनूमन्तं च संक्रुद्धो विव्याध निशितैः शरैः ॥ ३२ ॥
स वायुसूनुः कुपितश्चिक्षेप शिखरं गिरेः । त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेद बहुधा बली ॥ ३३ ॥
तद्व्यर्थं शिखरं दृष्ट्वा द्रुमवर्षं तदा कपिः । विससर्ज रणे तस्मिन्रावणस्य सुतं प्रति ॥ ३४ ॥
तमापतन्तमाकाशे द्रुमवर्षं प्रतापवान् । त्रिशिरा निशितैर्बाणैश्चिच्छेद च ननाद च ॥ ३५ ॥

२३-२४] ति० टी०–तं परिघहस्तं देवान्तकम् ॥ २३ ॥ २४ ॥

रा० टी०–तमिति । हनूमान् आपतंतं तं देवांतकमुत्पत्य मूर्ध्नि आजघान ॥ २४ ॥

रा० टी०–शिरसीति । वायुसुतः यदा शिरसि प्राहरत् तदा नादेन सर्वान् राक्षसानकम्पयत् ॥ २५ ॥

२५-२६ ] ति० टी०–निर्वान्ता बहिर्निर्गता दन्ता अक्षिणी विलम्बिजिह्वा च यस्य सः ॥ २५ ॥ २६ ॥

रा० टी०–स इति । मुष्टेः निष्पिष्टेनाघातेन विशीर्णः मूर्धा यस्य अत एव निर्वान्ता बहिर्निर्गता दन्ताः अक्षिणी च विलम्बिनी अतिलम्बायमाना जिह्वा च यस्य अत एव गतासुर्देवांतकः उर्व्यां पपात ॥ २६ ॥

रा० टी०–तस्मिन्निति । तस्मिन्देवान्तके हते सति क्रुद्धः त्रिशीर्षा निशितास्त्रं बाणवर्षं च नीलोरसि ववर्ष ॥ २७ ॥

२७ ] ति० टी०–भूयः समधिरुह्येति । युद्धागमनवेलायामारूढगजस्याङ्गदेन हतत्वादिति भावः ॥ २७ ॥

रा० टी०–महोदर इति । संक्रुद्धो महोदरोऽपि मंदरं रश्मिवान् सूर्य इव कुञ्जरं भूयस्समधिरुह्य नीलस्योरसि बाणमयं वर्षमपातयत् तत्र दृष्टान्तः तडिच्चक्रचापवान् तडिदादिविशिष्टः तोयदः गिरौ वर्षमिव । अर्धचतुष्टयमेकान्वयि ॥ २८ ॥

२८] ति० टी०–तडिच्चक्रं चापमिन्द्रधनुश्च यस्यास्ति सः २८

रा० टी०–तत इति । शरौघैः अभिवर्ष्यमाणः अत एव विभिन्नानि विदारितानि गात्राणि यस्य स नीलः विसृष्टगात्रः शिथिलशरीरो बभूव अत एव महाबलेन महोदरेण विष्टम्भितो बभूव २९

गो० टी०–तत इति । विसृष्टगात्रः शिथिलगात्रः । विष्टम्भितः स्तब्धीकृतः एतद्विसृष्टत्वे हेतुः ॥ ३० ॥ ३१ ॥

२९–३१ ] ति० टी०–विसृष्टगात्रः श्लथगात्रः । विष्टम्भितो निरुद्धपराक्रमः ॥ २९—३१ ॥

रा० टी०–तत इति । प्रतिलब्धसंज्ञो नीलः सवृक्षखण्डं शैलं समुत्पाट्य समुत्पत्य च तेन शैलेन महोदरं मूर्ध्नि जघान ॥ ३० ॥

रा० टी०–तत इति । शैलाभिनिपातेन भग्नः अत एव महाद्विपेन तद्गजेन व्यपोथितः प्रक्षिपितो महोदरः गतासुस्सन् भूमितले पपात ॥ ३१ ॥

गो० टी०–ततः स शैलेति । विपोथितः हिंसितः ३२-३९

३२-३५ ] ति० टी०–पितृव्यं महोदरम् ॥ ३२-३५ ॥

१ उत्प्लुत्येति गो. पाठः । २ मारुतात्मज इति गो. रा. पाठः । ३ प्राहरन्निति गो. पाठः । ४ विकीर्णेति गो. विशीर्णेति च रा. पाठः । ५ मूर्धेति गो. पाठः । ६ अग्र्यमिति गो. पाठः । ७ उरसीति गो. रा. पाठः । ८ चक्रचापवानिवेति गो. रा. पाठः । ९ वर्ष्यमाण इति गो. रा. पाठः । १० लब्ध्य संज्ञामिति गो. पाठः । ११ षण्डमिति गो. पाठः । १२ भूयेति गो. पाठः । १३ विपोथित इति गो. रा. पा. । १४ महेति गो. पाठः ।

हनूमांस्तु समुत्पत्य हयं त्रिशिरसस्तदा । विददार नखैः क्रुद्धो नागेन्द्रं मृगराडिव ॥ ३६ ॥
अथ शक्तिं समासाद्य कालरात्रिमिवान्तकः । चिक्षेपानिलपुत्राय त्रिशिरा रावणात्मजः ॥ ३७ ॥
दिवः क्षिप्तामिवोल्कां तां शक्तिं क्षिप्तामसंगताम् । गृहीत्वा हरिशार्दूलो बभञ्ज च ननाद च ॥ ३८ ॥
तां दृष्ट्वा घोरसंकाशां शक्तिं भग्नां हनूमता । प्रहृष्टा वानरगणा विनेदुर्जलदा यथा ॥ ३९ ॥
ततः खड्गं समुद्यम्य त्रिशिरा राक्षसोत्तमः । निचखान तदा खड्गं वानरेन्द्रस्य वक्षसि ॥ ४० ॥
खड्गप्रहाराभिहतो हनूमान्मारुतात्मजः । आजघान त्रिमूर्धानं तलेनोरसि वीर्यवान् ॥ ४१ ॥
स तलाभिहतस्तेन स्रस्तहस्ताम्बरो भुवि । निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥ ४२ ॥
स तस्य पततः खड्गं तमाच्छिद्य महाकपिः । ननाद गिरिसंकाशस्त्रासयन्सर्वराक्षसान् ॥ ४३ ॥
अमृष्यमाणस्तं घोषमुत्पपात निशाचरः । उत्पत्य च हनूमन्तं ताडयामास मुष्टिना ॥ ४४ ॥
तेन मुष्टिप्रहारेण संचुकोप महाकपिः । कुपितश्च निजग्राह किरीटे राक्षसर्षभम् ॥ ४५ ॥

स तस्य शीर्षाण्यसिना शितेन किरीटजुष्टानि सकुण्डलानि ।
क्रुद्धः प्रचिच्छेद सुतोऽनिलस्य त्वष्टुः सुतस्येव शिरांसि शक्रः ॥ ॥ ४६ ॥
तान्यायताक्षाण्यगसंनिभानि प्रदीप्तवैश्वानरलोचनानि ।
पेतुः शिरांसीन्द्ररिपोः पृथिव्यां ज्योतींषि मुक्तानि यथेन्द्रमार्गात् ॥ ॥ ४७ ॥
तस्मिन्हते देवरिपौ त्रिशीर्षे हनूमता शक्रपराक्रमेण ।
नेदुः प्लवंगाः प्रचचाल भूमी रक्षांस्यथो दुद्रुविरे समन्तात् ॥ ॥ ४८ ॥

---

रा० टी०—पितृव्यमिति । पितृव्यं महोदरं निहतं दृष्ट्वा चापमाददे । शरैर्हनूमन्तं विव्याध च ॥ ३२ ॥

रा० टी०—स इति । कुपितो वायुसुतः गिरेः शिखरं चिक्षेप त्रिशिरास्तु तत् शिखरं शरैर्बहुधा बिभेद ॥ ३३ ॥

रा० टी०—तदिति । कपिर्हनूमान् तत् शिखरं व्यर्थं दृष्ट्वा रावणस्य सुतं प्रति द्रुमवर्षं ससर्ज ॥ ३४ ॥

रा० टी०—तमिति । त्रिशिराः आपतंतं तं द्रुमवर्षं बाणैः चिच्छेद ननाद च ॥ ३५ ॥

३६–३७ ] ति० टी०—विददार विदारितवान् ॥ ३६ ॥ ३७ ॥

रा० टी०—हनूमानिति । क्रुद्धो हनूमान् समुत्पत्य त्रिशिरसो हयं नागेन्द्रं मृगराट् सिंह इव नखैर्विददार ॥ ३६ ॥

रा० टी०—अथेति । अन्तकः कालरात्रिमिव त्रिशिराः शक्तिं समासाद्य अनिलपुत्राय चिक्षेप ॥ ३७ ॥

३८ ] ति० टी०—दिवः क्षिप्तामाकाशान्निर्गताम् । असंगतामनर्गलगतिम् ॥ ३८ ॥

रा० टी०—दिव इति । दिवः क्षिप्तामुल्कामिव असङ्गतामनर्गलगतिमाक्षिप्तां शक्तिं हरिशार्दूलो गृहीत्वा बभञ्ज ननाद च ३८

३९–४१ ] ति० टी०—घोरसंकाशां भयंकरस्वरूपाम् ॥ ३९ ॥

रा० टी०—तामिति । हनूमता भग्नां शक्तिं दृष्ट्वा वानरगणा विनेदुः ॥ ३९ ॥

गो० टी०—तामिति । घोरसंकाशां भयंकरप्रकाशाम् ॥ ४० ॥

रा० टी०—तत इति । त्रिशिराः खड्गं समुद्यम्य वानरेन्द्रस्य वक्षसि खड्गेन निजघान ॥ ४० ॥

रा० टी०—खड्गेति । खड्गप्रहाराभिहतोऽपि हनूमान् त्रिमूर्धानं तलेनोरसि आजघान ॥ ४१ ॥

गो० टी०—तत इति । व्यूढे विशाले ॥ ४१ ॥ ४२ ॥

४२–४४ ] ति० टी०—त्यक्तचेतनो विसंज्ञः ॥ ४२--४४ ॥

रा० टी०—स इति । तेन हनूमता तलाभिहतः त्रिशिराः त्यक्तचेतनः सञ्ज्ञारहितस्सन् निपपात ॥ ४२ ॥

रा० टी०—स इति । पततः तस्य त्रिशिरसः खड्गं समाच्छिद्य महाकपिर्हनूमान् सर्वनैर्ऋतान् त्रासयन् ननाद ॥ ४३ ॥

रा० टी०—अमृष्यमाण इति । तं हनुमत्कृतं घोषममृष्यमाणो निशाचरः त्रिशिराः उत्पपात उत्पत्य हनूमन्तं ताडयामास च ॥ ४४ ॥

गो० टी०—स इति । त्यक्तचेतनः मूर्छित इत्यर्थः ४३-४६

४५ ] ति० टी०—किरीटे किरीटप्रदेशे ॥ ४५ ॥

रा० टी०—तेनेति । महाकपिर्हनूमान् मुष्टिप्रहारेण संचुकोप । कुपितश्च सन् राक्षसर्षभं त्रिशिरसं किरीटे किरीटप्रदेशे निजग्राह ॥ ४५ ॥

४६ ] ति० टी०—त्वष्टुः सुतस्य विश्वरूपस्य ॥ ४६ ॥

रा० टी०—स इति । अनिलस्य सुतः किरीटेन जुष्टानि संयुक्तानि सकुण्डलानि तस्य त्रिशिरसः शीर्षाणि प्रचिच्छेद ४६

गो० टी०—स तस्येति । त्वष्टुः सुतः विश्वरूपः । विश्वरूपो वै त्वाष्ट्रः पुरोहित इत्यादि श्रुतिप्रसिद्धः ॥ ४७ ॥

४७–४८ ] ति० टी०—आयताक्षाण्यायतेन्द्रियाणि ४७ ॥ ४८

---

१ ततो हनूमानुत्पत्येति गो. पा. । २ आदायेति गो. पा. । ३ श्वेति गो.पा. । ४ जघानेति गो. रा.पा. । ५ च खड्गेनेति रा. व्यूढे इति गो.पा. । ६ शिरसमिति गो.पा. । ७ आयुध इति गो.पा. । ८ समिति गो.रा.पा. । ९ नैर्ऋतानिति गो.रा.पा. । १० धरण्यामिति गो.रा.पा. । ११ अर्केति गो.रा.पा. ।

हतं त्रिशिरसं दृष्ट्वा युद्धोन्मत्तं तथैव च । हतौ प्रेक्ष्य दुराधर्षौ देवान्तकनरान्तकौ ॥ ४९ ॥
चुकोप परमामर्षी मत्तो राक्षसपुंगवः । जग्राहार्चिष्मतीं चापि गदां सर्वायसीं तदा ॥ ५० ॥
हेमपट्टपरिक्षिप्तां मांसशोणितफेनिलाम् । विराजमानां विपुलां शत्रुशोणिततर्पिताम् ॥ ५१ ॥
तेजसा संप्रदीप्ताग्रां रक्तमाल्यविभूषिताम् । ऐरावतमहापद्मसार्वभौमभयावहाम् ॥ ५२ ॥
गदामादाय संक्रुद्धो मत्तो राक्षसपुंगवः । हरीन्समभिदुद्राव युगान्ताग्निरिव ज्वलन् ॥ ५३ ॥
अथर्षभः समुत्पत्य वानरो रावणानुजम् । मत्तानीकमुपागम्य तस्थौ तस्याग्रतो बली ॥ ५४ ॥
तं पुरस्तात्स्थितं दृष्ट्वा वानरं पर्वतोपमम् । आजघानोरसि क्रुद्धो गदया वज्रकल्पया ॥ ५५ ॥
स तयाभिहतस्तेन गदया वानरर्षभः । भिन्नवक्षाः समाधूतः सुस्राव रुधिरं बहु ॥ ५६ ॥
स संप्राप्य चिरात्संज्ञामृषभो वानरेश्वरः । क्रुद्धो विस्फुरमाणौष्ठो महापार्श्वमुदैक्षत ॥ ५७ ॥
स वेगवान्वेगवदभ्युपेत्य तं राक्षसं वानरवीरमुख्यः ।
संवर्त्य मुष्टिं सहसा जघान बाह्वन्तरे शैलनिकाशरूपः ॥ ॥ ५८ ॥
स कृत्तमूलः सहसेव वृक्षः क्षितौ पपात क्षतजोक्षिताङ्गः ।
तां चास्य घोरां यमदण्डकल्पां गदां प्रगृह्याशु तदा ननाद ॥ ॥ ५९ ॥
मुहूर्तमासीत्स गतासुकल्पः प्रत्यागतात्मा सहसा सुरारिः ।
उत्पत्य संध्याभ्रसमानवर्णस्तं वारिराजात्मजमाजघान ॥ ॥ ६० ॥
स मूर्च्छितो भूमितले पपात मुहूर्तमुत्पत्य पुनः ससंज्ञः ।
तामेव तस्याद्रिवराद्रिकल्पां गदां समाविध्य जघान संख्ये ॥ ॥ ६१ ॥
सा तस्य रौद्रा समुपेत्य देहं रौद्रस्य देवाध्वरविप्रशत्रोः ।
बिभेद वक्षः क्षतजं च भूरि सुस्राव धात्वम्भ इवाद्रिराजः ॥ ॥ ६२ ॥
अभिदुद्राव वेगेन गदां तस्य महात्मनः । तां गृहीत्वा गदां भीमामाविध्य च पुनः पुनः ॥ ६३ ॥
मत्तानीकं महात्मा स जघान रणमूर्धनि । स स्वया गदया भग्नो विशीर्णदशनेक्षणः ॥ ६४ ॥
निपपात तदा मत्तो वज्राहत इवाचलः । विशीर्णनयनो भूमौ गतसत्त्वो गतायुषः ॥
पतिते राक्षसे तस्मिन्विद्रुतं राक्षसं बलम् ॥ ॥ ६५ ॥

---

रा० टी०—तानीति । आयतानि अक्षाणीन्द्रियाणि येषु प्रदीप्तवैश्वानरवत् लोचनानि येषु तानि इन्द्ररिपोः त्रिशिरसः शिरांसि धरण्यां पेतुः ॥ ४७ ॥

रा० टी०—तस्मिन्निति । हनूमता त्रिशीर्षे हते सति प्लवङ्गाः नेदुः भूमिश्चचाल हर्षेण चकम्पे रक्षांसि समन्तादुद्रुविरे ॥ ४८ ॥

गो० टी०—तानीति । भुक्तानि अनुभूतपुण्यफलानि । अर्कमार्गात् आकाशात् ॥ ४८ ॥ ४९ ॥

४९ ] ति० टी०—युद्धोन्मत्तं महोदरम् । तथैव च हतमिति शेषः । एतद्वधो हनूमता कृत इत्यनुवादबलाद्रष्टव्यम् ॥ ४९ ॥

५०–५१] ति० टी०—मत्तस्तदाख्यो महापार्श्वः॥५०॥५१॥

५२–६५ ] ति० टी०—ऐरावतादयो दिग्गजाः ॥५२-६५॥

रा० टी०—हतमिति । त्रिशिरसं महोदरं च हतं दृष्ट्वा देवान्तकनरान्तकौ च हतौ प्रेक्ष्य महापार्श्वः चुकोप अत एव गदां जग्राह । अर्द्धचतुष्टयमेकान्वयि ॥ ४९ ॥ ५० ॥

रा० टी०—हेमेति । हेमपट्टपरिक्षिप्तां सर्वतोयुक्तामैरावतादिगजजातीनां भयावहां गदामादाय संक्रुद्धो मत्तो महापार्श्वः युगान्ताग्निरिव ज्वलन् सन् हरीन् समभिदुद्राव । अर्द्धषट्कमेकान्वयि ॥ ५१–५३ ॥

गो० टी०—हतं त्रिशिरसमित्यादिश्लोकचतुष्टयमेकान्वयः ।

---

१ महोदरमथापि चेति रा. तथैव च महोदरमिति गो. पाठः । २ घोरामिति । गो. पाठः । ३ शुभामिति गो. रा. पाठः । ४ लेपनामिति रा. पाठः । ५ वपुषेति गो. रा. पाठः । ६ रञ्जितामिति गो. पाठः । ७ ऋषभ इति गो. रा. पाठः । ८ इत आरभ्य धात्वम्भ इवाद्रिराज इत्यन्तानि सार्धपञ्च पद्यानि गो. पुस्तके न सन्ति । ९ पपात भूमाविति रा. पाठः १० भूमाविति रा. पाठः ११ गृहीत्वा तामिति गो. पाठः । १२ महात्मानमिति गो. पाठः । १३ नयने इति गो. रा. पाठः १४ सत्त्वे इति गो. रा. पाठः । १५ आयुषीति गो. रा. पाठः १६ रक्षसामिति गो. पाठः ।

[ उन्मत्तस्तु तदा दृष्ट्वा गतासुं भ्रातरं रणे । चुकोप परमक्रुद्धः प्रलयाग्निसमद्युतिः ॥
ततः समादाय गदां स वीरो वित्रासयन् वानरसैन्यमुग्रम् ।
दुद्राव वेगेन तु सैन्यमध्ये दहन् यथा वह्निरतिप्रचण्डः ॥
आपतन्तं तदा दृष्ट्वा राक्षसं भीमविक्रमम् । शैलमादाय दुद्राव गवाक्षः पर्वतोपमः ॥
जिघांसू राक्षसं भीमं तं शैलेन महाबलः । आपतन्तं तदा दृष्ट्वा उन्मत्तोऽपि महागिरिम् ॥
चिच्छेद गदया वीरः शतधा तत्र संयुगे । चूर्णीकृतं गिरिं दृष्ट्वा रक्षसा कपिकुञ्जरः ॥
विस्मितोभून्महाबाहुर्जगर्जे च मुहुर्मुहुः । उन्मत्तस्तु सुसंक्रुद्धो ज्वलन्तं राक्षसोत्तमः ॥
गदामादाय वेगेन कपेर्वक्षस्यताडयत् । स तया गदया वीरस्ताडितः कपिकुञ्जरः ॥
पपात भूमौ निःसंज्ञः सुस्राव रुधिरं बहु । पुनः संज्ञामथास्थाय वानरः स समुत्थितः ॥
तलेन ताडयामास ततस्तस्य शिरः कपिः । तेन प्रताडितो वीरो राक्षसः पर्वतोपमः ॥
विस्रस्तदन्तनयनो निपपात महीतले । सुस्राव रुधिरं सोष्णं गतासुश्च ततोऽभवत् ॥ ]
तस्मिन्हते भ्रातरि रावणस्य तन्नैर्ऋतानां बलमर्णवाभम् ।
त्यक्तायुधं केवलजीवितार्थं दुद्राव भिन्नार्णवसंनिकाशम् ॥ ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

मत्तः महापार्श्वः मत्त इति महापार्श्वस्य नामान्तरम् मांसशोणितफेनिलामिति युद्धकालिकरूपम् शत्रुशोणितरञ्जितामिति पूर्वकालिकरूपम् महापद्मः पुण्डरीकाह्वयदिग्गजः ॥ ५०–५४ ॥

रा० टी०–अथेति । अथानन्तरं ऋषभो वानरः मत्तानीकं महापार्श्वमुपागम्य तस्याग्रतस्तस्थौ ॥ ५५ ॥

रा० टी०–तमिति । पुरस्तात्स्थितं तमृषभं वानरं दृष्ट्वा क्रुद्धो महापार्श्वः गदया उरसि आजघान ॥ ५५ ॥

गो० टी०–अथेति । मत्तानीकम् मत्तानीक इति च महापार्श्वस्य नामान्तरम् ॥ ५५ ॥ ५६ ॥

रा० टी०–स इति । तेन महापार्श्वेन गदया अभिहतः अत एव भिन्नवक्षाः अत एव समाधूतः वानरर्षभो रुधिरं सुस्राव५६

गो० टी०–स तयेति । समाधूतः कम्पितः ॥ ५७ ॥

रा० टी०–स इति । ऋषभः चिरात्संज्ञां संप्राप्य महापार्श्वमुदैक्षत ॥ ५७ ॥

रा० टी०–स इति । वेगवान् स ऋषभः तं महापार्श्वं वेगवदभ्युपेत्य मुष्टिं संवर्त्य बाह्वन्तरे आजघान ॥ ५८ ॥

रा० टी०–स इति । क्षतजेन उक्षितमङ्गं यस्य स महापार्श्वः कृत्तमूलो वृक्ष इव भूमौ पपात । अस्य महापार्श्वस्य गदां प्रगृह्य ननाद ऋषभ इति शेषः । एव इवार्थे ॥ ५९ ॥

रा० टी०–मुहूर्तमिति । स महापार्श्वः मुहूर्तं गतासुकल्पः गतप्राणसदृश आसीत् । सहसा पुनः प्रत्यागतात्मा प्राप्तप्राणश्चासीत् अत एव सन्ध्याभ्रसमानवर्णो महापार्श्वः तमृषभमाजघान ॥ ६० ॥

रा० टी०–स इति । मूर्छितस्स ऋषभः पपात । ससंज्ञस्सन् पुनरुत्पत्य तां पूर्वं गृहीतां तस्य महापार्श्वस्य गदां ऋषभः समाविध्य दृढं गृहीत्वा जघान ॥ ६१ ॥

रा० टी०–सेति । रौद्रा भयावहा सा गदा रौद्रस्य महापार्श्वस्य देहं समुपेत्य वक्षो बिभेद अत एव अद्रिराजः धात्वम्भः गैरिकया युक्तं जलमिव क्षतजं रुधिरं सुस्राव ॥ ६२ ॥

रा० टी०–अभीति । महात्मनो ऋषभस्य गदां प्रति अभिदुद्राव । महापार्श्व इति शेषः । अर्द्धं पृथक् ॥ ६३ ॥

रा० टी०–तामिति । तां पूर्वगृहीतामेव गदां गृहीत्वा दृढं परिगृह्य पुनः पुनराविध्य मत्तानीकं महापार्श्वं स ऋषभो जघान ॥ ६४ ॥

रा० टी०–स इति । स्वगदया भग्नः मत्तो महापार्श्वः वज्राहतोऽचल इव निपपात ॥ ६५ ॥

रा० टी०–विशीर्णेति । विशीर्णे नयने यस्य अत एव गतसत्वे महापार्श्वे भूमौ पतिते सति रक्षसां बलं विद्रुतम् ६६

गो० टी०–स इति । गदामभिदुद्राव गदां महीतुं दुद्रावेत्यर्थः ॥ ५८–६१ ॥

६६ ] ति० टी०–भिन्नार्णवसंनिकाशमिति क्रियाविशेषणम् ॥ ६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह—तस्मिन्निति । रावणस्य भ्रातरि तस्मिन् महापार्श्वे हते सति अर्णवाभं नैर्ऋतानां बलं त्यक्तायुधं सत् केवलजीवितार्थं भिन्नार्णवसन्निकाशं यथा भवति तथा दुद्राव ॥ ६७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

# एकसप्ततितमः सर्गः ।

ततोऽतिकायः क्रुद्धो धातृवितीर्णवरः कपीन्यदात्रासयत्तदा ते भयार्ता राघवं शरणं जग्मुः । तद्रूपशौर्यादिविलोकनचकितेन रामेण पृष्टो विभीषणस्तस्येतिहासं कथयित्वा तूर्णं तं जहि इति रामं प्रार्थयत । ततो राममेवाभिगच्छन्तं तमसहमानः सौमित्रिः सुघोरं युद्धापि नाशक्नोत्तदा वायुना ब्रह्मास्त्रेणैव हन्तव्य इत्युपदिष्टश्च स ब्रह्मास्त्रेणैव तं जघान ।

स्वबलं व्यथितं दृष्ट्वा तुमुलं लोमहर्षणम् । भ्रातृंश्च निहतान्दृष्ट्वा शक्रतुल्यपराक्रमान् ॥ १ ॥
पितृव्यौ चापि संदृश्य समरे संनिपातितौ । युद्धोन्मत्तं च मत्तं च भ्रातरौ राक्षसोत्तमौ ॥ २ ॥
चुकोप च महातेजा ब्रह्मदत्तवरो युधि । अतिकायोऽद्रिसंकाशो देवदानवदर्पहा ॥ ३ ॥
स भास्करसहस्रस्य संघातमिव भास्वरम् । रथमारुह्य शक्रारिरभिदुद्राव वानरान् ॥ ४ ॥
स विस्फार्य तदा चापं किरीटी मृष्टकुण्डलः । नाम संश्रावयामास ननाद च महास्वनम् ॥ ५ ॥
तेन सिंहप्रणादेन नामविश्रावणेन च । ज्याशब्देन च भीमेन त्रासयामास वानरान् ॥ ६ ॥
ते दृष्ट्वा देहमाहात्म्यं कुम्भकर्णोऽयमुत्थितः । भयार्ता वानराः सर्वे संश्रयन्ते परस्परम् ॥ ७ ॥
ते तस्य रूपमालोक्य यथा विष्णोस्त्रिविक्रमे । भयाद्वानरयोधास्ते विद्रवन्ति ततस्ततः ॥ ८ ॥
तेऽतिकायं समासाद्य वानरा मूढचेतसः । शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे ॥ ९ ॥
ततोऽतिकायं काकुत्स्थो रथस्थं पर्वतोपमम् । ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत् ॥ १० ॥
स तं दृष्ट्वा महाकायं राघवस्तु सुविस्मितः । वानरान्सान्त्वयित्वा च विभीषणमुवाच ह ॥ ११ ॥

गो० टी०—तस्मिन्निति । केवलजीवितार्थं यशोरहितजीवनार्थम् । भिन्नार्णवसन्निकाशमिति क्रियाविशेषणम् ॥ ६२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

१ ] ति० टी०—स्वबलमिति ॥ १ ॥

२-३ ] ति० टी०—पितृव्यौ कावित्यत्राह—युद्धोन्मत्तं चेत्यादि । भ्रातरावन्योन्यं भ्रातरौ एतदुक्तिः परस्परसौहार्दातिशयप्रतिपादनाय ॥ २ ॥ ३ ॥

रा० टी०—महापार्श्ववधानन्तरकालिकं वृत्तान्तमाह—स्वबलमित्यादिभिः । तुमुलं तुमुलशब्दहेतुभूतम् अत एव लोमहर्षणं स्वबलं निहतं श्रुत्वा भ्रातॄंश्च निहतान्दृष्ट्वा युद्धोन्मत्तं महोदरं मत्तं महापार्श्वं भ्रातरौ परस्परमतिस्नेहयुक्तौ पितृव्यौ समरे सन्निपातितौ संदृश्य ब्रह्मदत्तवरोऽतिकायः चुकोप । श्लोकत्रयमेकान्वयि ॥ १-३ ॥

गो० टी०—स्वबलमित्यादि । भ्रातरौ अन्योन्यं भ्रातरौ ॥ १-४ ॥

४-६ ] ति० टी०—सूर्यसहस्रसमुदायवद्भास्वरम् ॥ ४-६ ॥

रा० टी०—स इति । सोऽतिकायः भास्करसहस्रस्य संघातं समूहमिव भास्वरं प्रकाशमानं रथमारुह्य वानरान् अभिदुद्राव ॥ ४ ॥

रा० टी०—स इति । सोऽतिकायः चापं विस्फार्य नाम स्वाभिधां संश्रावयामास महास्वनं ननाद च ॥ ५ ॥

रा० टी०—तेनेति । सिंहप्रणादेन सिंहवद्गर्जनेन नामविश्रावणेन च भीमेन ज्याशब्देन च वानरान् त्रासयामास॥६॥

गो० टी०—स इति । मृष्टकुण्डलः शुद्धकुण्डलः ॥५॥ ६ ॥

७ ] ति० टी०—कुम्भकर्णोऽयमुत्थित इति मन्यमानाः परस्परं संश्रयन्ते रक्षणार्थमिति शेषः ॥ ७ ॥

रा० टी०—ते इति । ते वानराः देहमाहात्म्यम् अतिकायशरीरस्य महत्त्वं दृष्ट्वा अयं कुम्भकर्ण एवोत्थित इति मत्वेति शेषः भयार्त्ताः वानराः परस्परं संश्रयन्ते ॥ ७ ॥

गो० टी०—त इति । माहात्म्यं महत्त्वम् । उत्थित इत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ७—११ ॥

८-१० ] ति० टी०—ते रूपमालोक्य ते इव वानरा इव विद्रवन्तीति तच्छब्दद्वयनिर्वाहः । इवेति शेषः ॥ ८—१० ॥

रा० टी०—ते इति । ते वानराः त्रयाणां लोकानां विक्रमे इयत्ताकरणसमये विष्णोरिव तस्यातिकायस्य रूपमालोक्य ते प्रसिद्धाः ते पूर्वोक्ताः वानरयूथाः वानरयूथवन्तः भयात्ततस्ततो विद्रवन्ति ॥ ८ ॥

रा० टी०—ते इति । अतिकायं समासाद्य अतिकायसमीपे प्राप्य मूढचेतसो वानराः लक्ष्मणाग्रजं शरणं जग्मुः॥९॥

रा० टी०—तत इति । काकुत्स्थः दूरात् गर्जन्तमतिकायं ददर्श ॥ १० ॥

११ ] ति० टी०—सान्त्वयित्वा मा भैष्टेत्युक्त्वा ॥ ११ ॥

रा० टी०—स इति । महात्मानं बृहच्छरीरमतिकायं दृष्ट्वा सुविस्मितो राघवः वानरान् सांत्वयित्वा विभीषणमुवाच॥११॥

१ निपुणिताविति गो. रा. पाठः । २ रूपमाविति गो. पाठः । ३ महदिति गो. पाठः । ४ वीति गो. पाठः । ५ यूथा इति गो. पाठः ६ विस्मितमिव इति ... पाठः । ७ अवेति गो. पाठः ।

कोऽसौ पर्वतसंकाशो धनुष्मान्हरिलोचनः । युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः ॥ १२ ॥
य एष निशितैः शूलैः सुतीक्ष्णैः प्रासतोमरैः । अर्चिष्मद्भिर्वृतो भाति भूतैरिव महेश्वरः ॥ १३ ॥
कालजिह्वाप्रकाशाभिर्य एषोऽभिविराजते । आवृतो रथशक्तीभिर्विद्युद्भिरिव तोयदः ॥ १४ ॥
धनूंषि चास्य सज्जानि हेमपृष्ठानि सर्वशः । शोभयन्ति रथश्रेष्ठं शक्रचापमिवाम्बरम् ॥ १५ ॥
य एष रक्षःशार्दूलो रणभूमिं विराजयन् । अभ्येति रथिनां श्रेष्ठो रथेनादित्यवर्चसा ॥ १६ ॥
ध्वजशृङ्गप्रतिष्ठेन राहुणाभिविराजते । सूर्यरश्मिप्रभैर्बाणैर्दिशो दश विराजयन् ॥ १७ ॥
त्रिनतं मेघनिर्ह्रादं हेमपृष्ठमलंकृतम् । शतक्रतुधनुःप्रख्यं धनुश्चास्य विराजते ॥ १८ ॥
सध्वजः सपताकश्च सानुकर्षो महारथः । चतुःसादिसमायुक्तो मेघस्तनितनिःस्वनः ॥ १९ ॥
विंशतिर्दश चाष्टौ च तूणोस्य रथमास्थिताः । कार्मुकाणि च भीमानि ज्याश्च काञ्चनपिङ्गलाः॥२०॥
द्वौ च खड्गौ च पार्श्वस्थौ प्रदीप्तौ पार्श्वशोभितौ । चतुर्हस्तत्सरुचितौ व्यक्तहस्तदशायतौ ॥ २१ ॥
रक्तकण्ठगुणो धीरो महापर्वतसंनिभः । कालः कालमहावक्त्रो मेघस्थ इव भास्करः ॥ २२ ॥
काञ्चनाङ्गदनद्धाभ्यां भुजाभ्यामेष शोभ॑ । शृङ्गाभ्यामिव तुङ्गाभ्यां हिमवान्पर्वतोत्तमः॥ २३ ॥

१२-१३ ] ति० टी०—हरिलोचनः सिंहदृष्टिः ॥१२॥१३॥

रा० टी०—तदाकारमाह—क इति । भूतैर्वृतो महेश्वर इव शूलादिभिर्वृतो हरिसहस्रेण युक्ते स्यन्दने स्थितः हरिलोचनः सिंहवद्भयंकरदृष्टिर्य एष भाति सोऽसौ कः । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—कोसावित्यादि । हरिलोचनः सिंहदृष्टिः । रथशक्तीभिः रथस्थिताभिः शक्तिभिः ॥ १२—१६ ॥

१४-१६ ] ति० टी०—रथशक्तीभिरिति दीर्घ आर्षः । रथस्थाभिः शक्तिभिरित्यर्थः ॥ १४-१६ ॥

रा० टी०—कालेति । कालजिह्वावत् प्रकाशो यासां ताभिः रथशक्तीभिः रथस्य शक्तिभिरावृतः अत एव विद्युद्भिस्तोयद इव य एषोऽतिविराजते ॥ १४ ॥

रा० टी०—यस्य चास्य सज्यानि धनूंषि शक्रचापमंबरमिव रथश्रेष्ठं शोभयन्ति ॥ १५ ॥

रा० टी०—य एषः रणभूमिं विराजयन् सन् आदित्यवर्चसा रथेन अभ्येति ॥ १६ ॥

१७ ] ति० टी०—ध्वजशृङ्गेत्यादिना राहुध्वजत्वमुक्तम्१७

रा० टी०-य एषः सूर्यरश्मिप्रभैर्बाणैर्दश दिशो विराजयन् सन् ध्वजशृंगप्रतिष्ठेन ध्वजोपरि लिखितेन राहुणा अभिविराजते१७

गो० टी०—ध्वजशृङ्गप्रतिष्ठेनेति । अनेन राहुध्वजो[illegible]मित्युक्तम् ॥ १७ ॥

१८ ] ति० टी०—हेमपृष्ठं हेमसदृशपृष्ठभागम् । त्रिनतमिति प्राग्व्याख्यातम् ॥ १८ ॥

रा० टी०—त्रिषु स्थानेषु नतं शक्रधनुःप्रख्यं यस्यास्य धनुर्विराजते ॥ १८ ॥

गो० टी०—त्रिणतमिति । त्रिण[illegible] त्रिषु आद्यन्तयोर्मध्ये च नतम् । मेघनिर्ह्रादं मेघतुल्यज्यास्वनम् । हेमपृष्ठं हेमलिप्तपा[illegible]मित्यर्थः । धनुः रथस्थेभ्यः अन्यत् करधृतमिदम् ॥ १८ ॥

१९ ] ति० टी०—सादिनः सारथयः ॥ १९ ॥

रा० टी०—सध्वजो ध्वजविशिष्टः चतुर्भिः सादिभिः अश्ववारैः समायुक्तः ॥ १९ ॥

गो० टी०—सध्वज इति । ध्वजः असाधारणकेतनम् । पताका साधारणा । अनुकर्षः रथाधःस्थदारु । चतुःसादिसमायुक्तः चतुःसारथियुक्तः ॥ १९ ॥

२० ] ति० टी०—तूणा अस्येति छेदः ॥ २० ॥

रा० टी०—विंशतिप्रभृतयस्तूण्यो ज्याश्च यस्यास्य रथमास्थिताः ॥ २० ॥

गो० टी०—विंशतिरिति । कार्मुकाणि धनुर्भेदा इति न पौनरुक्त्यम् ॥ २० ॥

२१ ] ति० टी०—पार्श्वशोभितौ स्वपार्श्वशोभितौ । चतुर्हस्तप्रमाणाभ्यां त्सरुभ्यां खड्गमुष्टिभ्यां चितौ । व्यक्तं दशहस्तपरिमाणेनायतौ ॥ २१ ॥

रा० टी०—व्यक्तौ अतिकान्तिविशिष्टावेव हस्तदशभिरायतौ चतुर्हस्तैः चतुस्संख्याकहस्तपरिमितैः त्सरुभिः मुष्टिभिश्चितौ संयुक्तौ पार्श्वस्थौ अत एव पार्श्वयोः शोभितं शोभा याभ्यां तौ प्रदीप्तौ यस्य द्वौ खड्गौ ॥ २१ ॥

गो० टी०—द्वौ चेति । पार्श्वशोभितौ पार्श्वाभ्यां शोभितौ । चतुर्हस्तत्सरुयुतौ चतुर्हस्तप्रमाणत्सरुयुक्तौ । त्सरुः खड्गादिमुष्टौ स्यादित्यमरः । व्यक्तहस्तदशायतौ व्यक्तौ च तौ हस्तदशायतौ चेति तथा ॥ २१ ॥

२२-२३ ] ति० टी०—रक्तकण्ठगुणो रक्तकण्ठमाल्यः । कालः कृष्णवर्णः । कालस्य मृत्योरिव महद्वक्त्रं यस्य सः२२॥२३

१ सज्यानीति गो. रा. पाठः । २ ते[illegible]ञ्सेति गो. पाठः । ३ संनादमिति रा पाठः । ४ तूण्य इति गो. रा. पाठः । ५ रथगतौ पार्श्वस्थाविति गो. पाठः । ६ युताविति गो. पाठः ।

कुण्डलाभ्यामुभाभ्यां च भाति वक्त्रं सुभीषणम् । पुनर्वस्वन्तरगतः परिपूर्णो निशाकरः ॥ २४ ॥
आचक्ष्व मे महाबाहो त्वमेनं राक्षसोत्तमम् । यं दृष्ट्वा वानराः सर्वे भयार्ता विद्रुता दिशः ॥ २५ ॥
स पृष्टो राजपुत्रेण रामेणामिततेजसा । आचचक्षे महातेजा राघवाय विभीषणः ॥ २६ ॥
दशग्रीवो महातेजा राजा वैश्रवणानुजः । भीमकर्मा महात्मा हि रावणो राक्षसेश्वरः ॥ २७ ॥
तस्यासीद्वीर्यवान्पुत्रो रावणप्रतिमो बले । वृद्धसेवी श्रुतिधरः सर्वास्त्रविदुषां वरः ॥ २८ ॥
अश्वपृष्ठे नागपृष्ठे खड्गे धनुषि कर्षणे । भेदे सान्त्वे च दाने च नये मन्त्रे च संमतः ॥ २९ ॥
यस्य बाहुं समाश्रित्य लङ्का भवति निर्भया । तनयं धान्यमालिन्या अतिकायमिमं विदुः ॥ ३० ॥
एतेनाराधितो ब्रह्मा तपसा भावितात्मना । अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः ॥ ३१ ॥
सुरासुरैरवध्यत्वं दत्तमस्मै स्वयंभुवा । एतच्च कवचं दिव्यं रथश्च रविभास्वरः ॥ ३२ ॥
एतेन शतशो देवा दानवाश्च पराजिताः । रक्षितानि च रक्षांसि यक्षाश्चापि निषूदिताः ॥ ३३ ॥
वज्रं विष्टम्भितं येन बाणैरिन्द्रस्य धीमता । पाशः सलिलराजस्य युद्धे प्रतिहतस्तथा ॥ ३४ ॥
एषोऽतिकायो बलवान्राक्षसानामथर्षभः । स रावणसुतो धीमान्देवदानवदर्पहा ॥ ३५ ॥
तदस्मिन्क्रियतां यत्नः क्षिप्रं पुरुषपुंगव । पुरा वानरसैन्यानि क्षयं नयति सायकैः ॥ ३६ ॥
ततोऽतिकायो बलवान्प्रविश्य हरिवाहिनीम् । विस्फारयामास धनुर्ननाद च पुनः पुनः ॥ ३७ ॥
तं भीमवपुषं दृष्ट्वा रथस्थं रथिनां वरम् । अभिपेतुर्महात्मानः प्रधाना ये वनौकसः ॥ ३८ ॥

---

रा० टी०—यश्च रक्तकण्ठगुणः रक्ता कण्ठगुणा कण्ठमाला यस्य कालः कृष्णवर्णः कालस्य मृत्योरिव महद्वक्त्रं यस्य सः॥२२

रा० टी०—यस्य एषः तुङ्गाभ्यामुन्नताभ्यां शृङ्गाभ्यां हिमवानिव काञ्चनेनाङ्गदेन नद्धाभ्यां भुजाभ्यां शोभते ॥ २३ ॥

गो० टी०—रक्तेति । रक्तकण्ठगुणः रक्तकण्ठमाल्यः । कालमहावक्त्रः कालस्येव महावक्त्रं यस्य स तथोक्तः । काल इव महावक्त्र इति वा ॥ २२—२७ ॥

२४-२८] ति० टी०—पुनर्वस्वोरन्तरं मध्यं तत्र गतः॥२४-२८

२९—३१ ] ति० टी०—'धनुषि कर्षणः' इति पाठे कृष्यतेऽनेनेति कर्षणः पाशादिरित्यर्थ इति तीर्थः ॥ २९—३१ ॥

रा० टी०—यस्य कुण्डलाभ्यां वक्त्रं भाति । तत्र दृष्टान्तः पुनर्वस्वोरन्तर्गन्तो निशाकर इव ॥ २४ ॥

रा० टी०—यं च दृष्ट्वा वानराः दिशो विद्रुताः तमेनमाचक्ष्व विशिष्य कथय । द्वादशानामेकत्रान्वयः ॥ २५ ॥

रा० टी०—स इति । रामेण पृष्टो विभीषणः आचचक्षे॥२६

रा० टी०—तदाकारमाह—दशेत्यादिभिः । महातेजा यो रावणः तस्य रावणप्रतिमः अश्वपृष्ठादौ तदारोहणादौ कर्मणि संमतः पुत्र आसीत् । श्लोकत्रयमेकान्वयि ॥ २७-२९ ॥

रा० टी०—यस्येति । यस्य रावणपुत्रस्य बाहुं समाश्रित्य लंका निर्भया भवति तमिमं धान्यमालिन्याः तदभिधरावणभार्यान्तरस्य तनयमतिकायं विदुः ॥ ३० ॥

रा० टी०—एतेनेति । भावितः परिशीलितः आत्मा यत्नो येन तेनैतेन ब्रह्मा आराधितः अत एव अस्त्राणि अवाप्तानि अत एव रिपवः पराजिताः ॥ ३१ ॥

गो० टी०—तस्येत्यादि श्लोकद्वयम् । नये युक्तौ । मन्त्रे विचारे ॥ २८—३३ ॥

३२—३५ ] ति० टी०—रविभास्वरो रथो दत्त इत्यनुकर्षः ॥ ३२—३५ ॥

रा० टी०—सुरेति । अस्मै अतिकायाय स्वयम्भुवा सुरासुरैरवध्यत्वं दत्तमेतत् कवचं च दत्तं रविभास्वरो रथश्च दत्तः॥३२

रा० टी०—एतेनेति । एतेनातिकायेन शतशो देवादयः पराजिताः ॥ ३३ ॥

रा० टी०—वज्रमिति । येन इन्द्रस्य वज्रं विष्टम्भितं सलिलराजस्य पाशः प्रतिहतः स एषः रावणसुतोऽतिकायः श्लोकद्वयमेकान्वयि ॥ ३४—३५ ॥

गो० टी०—वज्रमित्यादिश्लोकद्वयम् । विष्टम्भितं निश्चलीकृतम् । राक्षसानामथर्षभ इत्यत्राथशब्दः कार्त्स्न्ये॥३४॥३५॥

३६—३८ ] ति० टी०—अस्मिन्नतिकाये । क्षिप्रमित्यत्र हेतुः—पुरेति । पुरा नयति । नेष्यतीत्यर्थः ॥ ३६—३८ ॥

रा० टी०—तदिति । वानरसैन्यानि क्षयं, नयति नेष्यति अतः पुरा पूर्वमेव अस्मिन् यत्नः वधोपायः क्रियताम् ॥३६॥

रा० टी०—तत इति । अतिकायो हरिवाहिनीं प्रविश्य धनुर्विस्फारयामास ननाद च ॥ ३७ ॥

---

१ तु यस्यैतद्भाति वक्त्रं शुभेक्षणमिति गो. रा. पाठः । २ गतं पूर्णं बिम्बमिवैन्दवमिति गो.पाठः । ३ महोत्साह इति गो. पाठः । ४ अधिप इति गो. पाठः । ५ रण इति गो. पाठः । ६ रथे नागे इति गो. पाठः । ७ बाहू इति गो. पाठः । ८ एषोऽर्कभास्वर इति गो. पाठः । ९ धीमत इति गो. पाठः । १० रणे इति गो. पाठः । ११ ये प्रधाना इति गो. पाठः ।

कुमुदो द्विविदो मैन्दो नीलः शरभ एव च । पादपैर्गिरिशृङ्गैश्च युगपत्समभिद्रवन् ॥ ३९ ॥
तेषां वृक्षांश्च शैलांश्च शरैः कनकभूषणैः । अतिकायो महातेजाश्चिच्छेदास्त्रविदां वरः ॥ ४० ॥
तांश्चैव सर्वान्स हरीञ्शरैः सर्वायसैर्बली । विव्याधाभिमुखान्संख्ये भीमकायो विशारदः ॥ ४१ ॥
तेऽर्दिता बाणवर्षेण भिन्नगात्राः पराजिताः । न शेकुरतिकायस्य प्रतिकर्तुं महाहवे ॥ ४२ ॥
तत्सैन्यं हरिवीराणां त्रासयामास राक्षसः । मृगयूथमिव क्रुद्धो हरिर्यौवनदर्पितः ॥ ४३ ॥

स राक्षसेन्द्रो हरियूथमध्ये नायुध्यमानं निजघान कंचित् ।
उत्पत्य रामं स धनुःकलापी सगर्वितं वाक्यमिदं बभाषे ॥ ॥ ४४ ॥
रथे स्थितोऽहं शरचापपाणिर्न प्राकृतं कंचन योधयामि ।
यस्यास्ति शक्तिर्व्यवसाययुक्तो ददातु मे शीघ्रमिहाद्य युद्धम् ॥ ॥ ४५ ॥
तत्तस्य वाक्यं ब्रुवतो निशम्य चुकोप सौमित्रिरमित्रहन्ता ।
अमृष्यमाणश्च समुत्पपात जग्राह चापं च ततः स्मयित्वा ॥ ॥ ४६ ॥

क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् । पुरस्तादतिकायस्य विचकर्ष महद्धनुः ॥ ४७ ॥
पूरयन्स महीं सर्वामाकाशं सागरं दिशः । ज्याशब्दो लक्ष्मणस्योग्रस्त्रासयन्रजनीचरान् ॥ ४८ ॥

---

रा० टी०—तमिति । रथस्थं भीमवपुषं दृष्ट्वा ये महात्मानो वनौकसः ते अभिपेतुः ॥ ३८ ॥

गो० टी०—तदस्मिन्निति । पुरा नयति नेष्यतीत्यर्थः ॥ ३६–३८ ॥

३९-४२ ] ति० टी०—समभिद्रवन्समभ्यद्रवन् ॥३९-४२॥

रा० टी०—कुमुद इति । कुमुदादयः युगपत् समभिद्रवन् समभ्यद्रवन् ॥ ३९ ॥

गो० टी०—कुमुद इति । समभिद्रवन् । आगमशास्त्रस्यानित्यत्वादडभावः ॥ ३९ ॥ ४० ॥

रा० टी०—तेषामिति । तेषां कुमुदादीनां वृक्षादीन् अतिकायः चिच्छेद ॥ ४० ॥

रा० टी०—तानिति । भीमकायोऽतिकायः सर्वान् हरीन् शरैर्विव्याध ॥ ४१ ॥

रा० टी०—ते इति । बाणवर्षेणार्दिताः अत एव पराजिताः ते वानराः प्रतिकर्तुं न शेकुः ॥ ४२ ॥

गो० टी०—तांश्चेति । अभिमुखः स्थित इति शेषः ४१-४२॥

४३ ] ति० टी०—यौवनदर्पितो हरिरिव तरुणसिंह इव ४३

रा० टी०—तदिति । राक्षसः हरिवीराणां सैन्यं हरिर्मृगयूथमिव त्रासयामास ॥ ४३ ॥

गो० टी०—तदिति । हरिः सिंहः ॥ ४३ ॥

४४ ] ति० टी०—वीरत्वादयुध्यमानं कंचिदपि न निजघान । कलापी तूणीरवान् । सगर्वितं सगर्वम् ॥ ४४ ॥

रा० टी०—स इति । धनुःकलापी चापसमूहवान् स राक्षसेन्द्रो हरियूथमध्ये आयुध्यमानं कंचित् न निजघान ननु किं चकारेत्यत आह उत्पत्य सगर्वितमिदं वाक्यं रामं बभाषे ॥४४॥

गो० टी०—स इति । कलापी तूणीरवान् । कलापो भूषणे बर्हे तूणीरे संहतावपीत्यमरः । सगर्वितं सगर्वम् ॥ ४४ ॥

४५ ] ति० टी०—यस्य शक्तिरस्ति व्यवसाययुक्तश्च यः स युद्धं ददातु ॥ ४५ ॥

रा० टी०—तदाकारमाह—रथ इति । शरचापपाणिरहं प्राकृतमल्पबलं वानरमित्यर्थः न योधयामि अतो यस्य शक्तिरस्ति सः व्यवसायेन युद्धोत्साहेन युक्तः सन् युद्धं ददातु ॥४५॥

गो० टी०—रथ इति । व्यवसायः उत्साहः ॥ ४५ ॥

४६ ] ति० टी०—तत्तस्य वाक्यं रामं प्रत्युक्तम् स्मयित्वानादृत्य । 'ष्मिङ् अनादरे' इत्यर्थः ॥ ४६ ॥

रा० टी०—तदिति । तस्यातिकायस्य तद्वाक्यं निशम्य सौमित्रिः अमृष्यमाणः सन् तस्मै चुकोप अत एव समुत्पपात स्मयित्वा चापं च जग्राह ॥ ४६ ॥

गो० टी०—तत्तस्येति । स्मयित्वा अनादृत्य । "ष्मिङ् अनादरे" इति धातुः ॥ ४६ ॥ ४७ ॥

४७ ] ति० टी०—आक्षिप्यादाय ॥ ४७ ॥

रा० टी०—क्रुद्ध इति । क्रुद्धः सौमित्रिः तूणात् सायकमाक्षिप्य तूर्णं गृहीत्वेत्यर्थः अतिकायस्य पुरस्तात् अग्रे महद्धनुर्विचकर्ष ॥ ४७ ॥

४८ ] ति० टी०—मह्यादीन्पूरयन्राक्षसांस्त्रासयञ्ज्याशब्द उदभूदिति शेषः ॥ ४८ ॥

रा० टी०—पूरयन्निति । स प्रसिद्धो लक्ष्मणस्य ज्याशब्दः महीप्रभृतीन् पूरयन् सन् रजनीचरान् त्रासयन् त्रासयितुम् उग्रो बभूवेति शेषः ॥ ४८ ॥

गो० टी०—पूरयन्निति । त्रासयन् अभूदिति शेषः ॥४८॥

---

१ काञ्चनेति गो. पाठ । २ निशाचर इति गो. पाठः । ३ अग्रेति गो. पाठः । ४ प्लवंगमा इति गो. पा. । ५ रणे इति गो. पाठः । ६ यस्यास्ति कश्चिदिति गो. पाठः ।

सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा । विसिष्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९ ॥
तदातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् । आदाय निशितं बाणमिदं वचनमब्रवीत् ॥ ५० ॥
बालस्त्वमसि सौमित्रे विक्रमेष्वविचक्षणः । गच्छ किं कालसंकाशं मां योधयितुमिच्छसि॥ ५१ ॥
नहि मद्बाहुसृष्टानां बाणानां हिमवानपि । सोढुमुत्सहते वेगमन्तरिक्षमथो मही ॥ ५२ ॥
सुखप्रसुप्तं कालाग्निं [3]विबोधयितुमिच्छसि । न्यस्य चापं निवर्तस्व प्राणान्[4] जहि मद्गतः ॥ ५३ ॥
अथवा त्वं प्रतिस्तब्धो न निवर्तितुमिच्छसि । तिष्ठ प्राणान्परित्यज्य गमिष्यसि यमक्षयम् ॥ ५४ ॥
पश्य मे निशितान्बाणानरिपुदर्पनिषूदनान् । ईश्वरायुधसंकाशांस्तप्तकाञ्चनभूषणान् ॥ ५५ ॥
एष ते सर्पसंकाशो बाणः पास्यति शोणितम् । मृगराज इव क्रुद्धो नागराजस्य शोणितम् ॥
इत्येवमुक्त्वा संक्रुद्धः शरं धनुषि संदधे ॥ ५६ ॥

श्रुत्वातिकायस्य वचः सरोषं सगर्वितं संयति राजपुत्रः ।
स संचुकोपातिबलो मनस्वी उवाच वाक्यं च ततो बृहच्छ्रीः ॥ ॥ ५७ ॥
न वाक्यमात्रेण भवान्प्रधानो न कत्थनात्सत्पुरुषा भवन्ति ।
मयि स्थिते धन्विनि बाणपाणौ निदर्शयस्वात्मबलं दुरात्मन् ॥ ॥ ५८ ॥

कर्मणा सूचयात्मानं न विकत्थितुमर्हसि । पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः ॥ ५९ ॥
सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः । शरैर्वा यदि वाप्यस्त्रैर्दर्शयस्व पराक्रमम् ॥ ६० ॥
ततः शिरस्ते निशितैः पातयिष्याम्यहं शरैः । मारुतः कालसंयुक्तं वृन्तात्तालफलं यथा ॥ ६१ ॥

---

४९-५२ ] ति० टी०-प्रतिभयं भयंकरम् ॥४९-५२॥

रा० टी०-सौमित्रेरिति । प्रतिभयं रिपुभयंकरं सौमित्रेश्चापनिर्घोषं श्रुत्वा राक्षसेन्द्रात्मजो विसिष्मिये ॥ ४९ ॥

रा० टी०-तदेति । लक्ष्मणमुत्थितं दृष्ट्वा कुपितोऽतिकायो बाणमादाय इदं वचनमब्रवीत् ॥ ५० ॥

रा० टी०-तदाकारमाह—बाल इति । हे सौमित्रे त्वं बालोऽसि अत एव विक्रमेषु अविचक्षणः अनिपुणोऽसि अतः कालसंकाशं मां योधयितुं किं किमर्थमिच्छसि नेच्छेत्यर्थः अतो गच्छ ॥ ५१ ॥

रा० टी०-नहीति । मद्बाहुना सृष्टानां त्यक्तानां बाणानां वेगं सोढुं हिमवत्प्रभृतिर्नोत्सहते ॥ ५२ ॥

गो० टी०-सौमित्रेरिति । प्रतिभयम् । भयंकरं प्रतिभयमित्यमरः ॥ ४९-५२ ॥

५३ ] ति० टी०-मद्गतो मां प्राप्तः ॥ ५३ ॥

रा० टी०-सुखेति । कालाग्निं विबोधयितुमिच्छसि किमर्थमिति शेषः । नोचितमित्यर्थः अतः चापं न्यस्य प्रक्षिप्य निवर्तस्व मद्गतो मां प्राप्तः सन् प्राणान् न जहि ॥ ५३ ॥

गो० टी०-सुखप्रसुप्तमिति । निबोधयितुं ज्वलयितुम् । मा जहि मा हिंसीः । "हन्तेर्ज" इति जादेशः । मद्गतः मां प्राप्तः ॥ ५३ ॥

५४ ] ति० टी०-प्रतिस्तब्धोऽहंकारवान्निवर्तितुं नेच्छसि तदा तिष्ठ । स त्वं प्राणान्परित्यज्य यमक्षयं गमिष्यसि ॥ ५४ ॥

रा० टी०-अथवेति । अथवा मद्वाक्यानङ्गीकारे प्रतिस्तब्धोऽहंकारवान् त्वं यदि निवर्तितुं नेच्छसि तर्हि तिष्ठ प्राणान् परित्यज्य यमक्षयं गमिष्यसि ॥ ५४ ॥

गो० टी०-अथ वेति । प्रतिष्टब्धः प्रतिमुखं स्थितः ॥ ५४ ॥

५५-५७ ] ति० टी०-ईश्वरायुधं त्रिशूलम् ॥ ५५-५७ ॥

रा० टी०-पश्येति । ईश्वरायुधसंकाशान् अत एव रिपुनिषूदनान् मे बाणान् त्वं पश्य ॥ ५५ ॥

रा० टी०-एष इति । एष बाणस्ते शोणितं पास्यति ॥ ५६ ॥

रा० टी०-इतीति । इत्येवमुक्त्वा संक्रुद्धोऽतिकायः धनुषि शरं संदधे अर्द्धं पृथक्—श्रुत्वेति । राजपुत्रो लक्ष्मणः अतिकायस्य वचः श्रुत्वा संचुकोप ततोऽनन्तरं महार्थं वाक्यमुवाच ॥ ५७ ॥

गो० टी०-पश्येति । ईश्वरायुधं त्रिशूलम् ॥ ५५-५७ ॥

५८-६१ ] ति० टी०-प्रधानः श्रेष्ठः । कत्थनादात्मनः श्लाघामात्रात् । सत्पुरुषाः श्लाघ्यगुणयुक्ता न भवन्ति । आत्मनो बलं सामर्थ्यम् ॥ ५८—६१ ॥

रा० टी०-तदाकारमाह—नेत्यादिभिः । यतः कत्थनात् स्वश्लाघातः सत्यरूपा न भवन्ति अतो वाक्यमात्रेण स्वश्लाघाबोधकस्ववचनेनैव प्रधानः सत्पुरुषो भवान्न अतः मयि स्थिते सति आत्मबलं निदर्शयस्व ॥ ५८ ॥

रा० टी०-कर्मणेति । कर्मणा युद्धक्रियया आत्मानं

---

१ अथेति गो. पाठः । २ अस्त्राणामिति गो. पाठ. । ३ नीति गो. पाठः । ४ मा प्राणाञ्जहीति गो. पाठः । ५ प्रतिष्टब्ध इति गो. पाठः । ६ बृहच्छ्रीरिति गो. रा. पाठः । ७ महार्थमिति गो. रा. पाठः । ८ पक्वमिति गो. पाठः ।

अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः । पास्यन्ति रुधिरं गात्राद्बाणशल्यान्तरोत्थितम् ॥६२॥
बालोऽयमिति विज्ञाय न चावज्ञातुमर्हसि[1] । बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुगे॥ ६३ ॥
बालेन विष्णुना लोकास्त्रयः क्रान्तास्त्रिविक्रमैः । लक्ष्मणस्य वचः श्रुत्वा हेतुमत्परमार्थवत् ॥
अतिकायः प्रचुक्रोध बाणं चोत्तममाददे ॥ ६४ ॥
ततो विद्याधरा भूता देवैर्दैत्या[2] महर्षयः । गुह्यकाश्च महात्मानस्तद्युद्धं ददृशुस्तदा[3] ॥ ६५ ॥
ततोऽतिकायः कुपितश्चापमारोप्य सायकम् । लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ॥ ६६ ॥
तमापतन्तं निशितं शरमाशीविषोपमम् । अर्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥ ६७ ॥
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम् । अतिकायो भृशं क्रुद्धः पञ्च बाणान्समादधे ॥ ६८ ॥
ताञ्शरान्संप्रचिक्षेप लक्ष्मणाय निशाचरः । तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद[4] भरतानुजः ॥ ६९ ॥
स ताञ्छित्त्वा शितैर्बाणैर्[5]लक्ष्मणः परवीरहा । आददे निशितं बाणं ज्वलन्तमिव तेजसा ॥ ७० ॥
तमादाय धनुःश्रेष्ठे योजयामास लक्ष्मणः । विचकर्ष च वेगेन विससर्ज च सायकम्[6] ॥ ७१ ॥

सूचय । तत्र हेतुः यः पौरुषेण पुरुषधर्मेण युद्धेनेत्यर्थः युक्तः स एव शूर इति स्मृतः अतो विकत्थितुं स्वश्लाघामात्रं कर्तुं नार्हसि ॥ ५९ ॥

रा० टी०—सर्वेति । सर्वायुधसमायुक्तस्त्वं शरैरस्त्रैर्वा स्वपराक्रमं दर्शय ॥ ६० ॥

गो० टी०—न वाक्यमात्रेणेति । कत्थनात् आत्मश्लाघनात् । सत्पुरुषाः शूरपुरुषाः ॥ ५८–६० ॥

रा० टी०—तत इति । ते शिरः अहं शरैः पातयिष्यामि । तत्र दृष्टान्तः वृन्तात्प्रसवबन्धनात् कालसंपक्वं तालफलं मारुत इव ॥ ६१ ॥

गो० टी०—तत इति । वृन्तात् प्रसवबन्धनात् । वृन्तं प्रसवबन्धनमित्यमरः ॥ ६१ ॥

६२ ] ति० टी०—बाणशल्यान्तरोत्थितं बाणशल्यकृतच्छिद्रादुत्थितम् ॥ ६२ ॥

रा० टी०—अद्येति । बाणशल्यान्तरोत्थितं बाणशल्यकृतछिद्रान्निस्सृतं रुधिरं मामका बाणा गात्राद्गात्रं प्राप्य पास्यन्ति ॥ ६२ ॥

गो० टी०—अद्य त इति । बाणशल्यान्तरोत्थितमिति । बाणशल्यान्तराणि बाणशल्यकृतान्यन्तराणि ॥ ६२ ॥

६३ ] ति० टी०—मृत्युं जानीहि । पुरःस्थितस्य शत्रोरिति शेषः ॥ ६३ ॥

रा० टी०—बाल इति । बालो वृद्धो वा योऽहं तं मां मृत्युं जानीहि अतो बालोऽयमिति विज्ञाय अवज्ञातुं मां नार्हसि॥६३॥

गो० टी०—बाल इति । मृत्युं जानीहि । मामिति शेषः ॥ ६३- ६६ ॥

६४-६५ ] ति० टी०—बाल्यं न प्रतिबन्धकम् पराक्रमे इत्यत्र दृष्टान्तमाह—बालेनेति । वामनेनेत्यर्थः ॥६४॥६५॥

रा० टी०—ननु बाले कथमेवं शक्तिरित्यत आह—बालेनेति । बालेन विष्णुना त्रिविक्रमैस्त्रिभिः पादैः त्रयो लोकाः क्रान्ताः । अर्द्धं पृथक् ॥ ६४ ॥

रा० टी०—लक्ष्मणस्येति । हेतुमत् कारणसहितं परमार्थवत् परमार्थविशिष्टं लक्ष्मणस्य वचः श्रुत्वा अतिकायः प्रचुक्रोध ॥ ६५ ॥

६६–७१ ] ति० टी०—सायकं चापमारोप्य बाणं धनुषि संधाय संक्षिपन्निव चाम्बरं बाणवेगेनान्तरालस्थितमाकाशं ग्रसन्निव ॥ ६६—७१ ॥

रा० टी०—तत इति । विद्याधरादयः तद्युद्धं ददृशुः॥६६॥

रा० टी०—तत इति । कुपितोऽतिकायः चापमारोप्याकृष्य अम्बरमाकाशं संक्षिपन् निवर्तयन्निव लक्ष्मणाय सायकं प्रचिक्षेप ॥ ६७ ॥

रा० टी०—तमिति । आपतन्तं तं शरमर्द्धचन्द्रेण शरविशेषेण लक्ष्मणः चिच्छेद ॥ ६८ ॥

रा० टी०—तदिति । कृत्तभोगमुरगमिव निकृत्तं तं शरं दृष्ट्वा भृशं क्रुद्धोऽतिकायः पञ्च बाणान् समादधे ॥ ६९ ॥

रा० टी०—तानिति । निशाचरः तान् समाहितान् शरान् लक्ष्मणाय संप्रचिक्षेप भरतानुजः अप्राप्तान् तान् शरान् बाणैश्चिच्छेद ॥ ७० ॥

रा० टी०—स इति । लक्ष्मणः तान् निशाचरचालितान् शरान् छित्त्वा बाणं शरान्तरमाददे ॥ ७१ ॥

रा० टी०—तमिति । लक्ष्मणः तं सायकमादाय धनुःश्रेष्ठे योजयामास वेगेन विचकर्ष विससर्ज च ॥ ७२ ॥

गो० टी०—तत इति । सायकं चापमारोप्य बाणं धनुषि संधायेत्यर्थः । संक्षिपन्निव बाणवेगेनान्तरावस्थितमाकाशं ग्रसन्निवेत्यर्थः ॥ ६७–७२ ॥

१ मा इति गो. पाठः । २ देवा इति गो. पाठः । ३ द्रष्टुमागमन्निति गो. पाठः । ४ शरैस्तीक्ष्णैरिति गो. पाठः । ५ शरैस्तीक्ष्णैरिति गो. पाठः । ६ वीर्यवानिति गो. पाठः ।

पूर्णायतविसृष्टेन शरेण नतपर्वणा । ललाटे राक्षसश्रेष्ठमाजघान स वीर्यवान् ॥ ७२ ॥
स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः । ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाचले ॥ ७३ ॥
राक्षसः प्रचकम्पेऽथ लक्ष्मणेषुप्रपीडितः । रुद्रबाणहतं घोरं यथा त्रिपुरगोपुरम् ॥
चिन्तयामास चाश्वस्य विमृश्य च महाबलः ॥ ७४ ॥
साधु बाणनिपातेन श्लाघनीयोऽसि मे रिपुः । विधायैवं विदार्यास्यं विनम्य च महाभुजौ ॥
स रथोपस्थमास्थाय रथेन प्रचचार ह ॥ ७५ ॥
एकं त्रीन्पञ्च सप्तेति सायकान्राक्षसर्षभः । आददे संदधे चापि विचकर्षोत्ससर्ज च ॥ ७६ ॥
ते बाणाः कालसंकाशा राक्षसेन्द्रधनुश्च्युताः । हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरम् ॥ ७७ ॥
ततस्तान्राक्षसोत्सृष्टाञ्शरौघान्राघवानुजः । असंभ्रान्तः प्रचिच्छेद निशितैर्बहुभिः शरैः ॥ ७८ ॥
ताञ्शरान्युधि संप्रेक्ष्य निकृत्तान्रावणात्मजः । चुकोप त्रिदशेन्द्रारिर्जग्राह निशितं शरम् ॥ ७९ ॥
स संधाय महातेजास्तं बाणं सहसोत्सृजत् । तेन सौमित्रिमायान्तमाजघान स्तनान्तरे ॥ ८० ॥
अतिकायेन सौमित्रिस्ताडितो युधि वक्षसि । सुस्राव रुधिरं तीव्रं मदं मत्त इव द्विपः ॥ ८१ ॥
स चकार तदात्मानं विशल्यं सहसा विभुः । जग्राह च शरं तीक्ष्णमस्त्रेणापि समाददे ॥ ८२ ॥

७२-७३ ] ति० टी०—पूर्णायतविसृष्टेन पूर्णाकर्षणपूर्वकं विसृष्टेन त्यक्तेन । ललाट आजघानेत्यन्वयः ॥ ७२ ॥ ७३ ॥

रा० टी०—पूर्णेति । पूर्णायतविसृष्टेन यथोचिताकर्षणपूर्वकत्यक्तेन शरेण राक्षसश्रेष्ठमतिकायं ललाटे आजघान ॥ ७२ ॥

गो० टी०—पूर्णायतेति । पूर्णायतेन पूर्णाकृष्टेन विसृष्टेन क्षिप्तेन नतपर्वणा निलीनपर्वणा । ऋजुनेति यावत् ॥ ७२ ॥

रा० टी०—स इति । रक्षसोऽतिकायस्य ललाटे मग्नः अत एव शोणितेनाक्तः स लक्ष्मणेन प्रयुक्तः शरः अचले पन्नगेन्द्र इव ददृशे ॥ ७४ ॥

गो० टी०—स इति । अक्तः स्निग्धः ॥ ७४ ॥

७४ ] ति० टी०—त्रिपुरगोपुरं त्रिपुरासुरपुरस्य गोपुरम्। आश्वस्य संज्ञां प्राप्य. विमृश्य विचार्य कर्तव्यमर्थं चिन्तयामास ॥ ७४ ॥

७५-८१ ] ति० टी०—तमेवार्थमाह—साध्विति । अमोघबाणप्रयोगेण त्वं मे श्लाघ्यो रिपुरसीत्येवमास्यं विदार्य प्रकटं यथा भवति तथा विधायाभिधाय भुजौ विनम्य वशे स्थापयित्वा रथोपस्थमास्थाय रथेन प्रचचार हेत्यन्वयः ७५-८१ ॥

रा० टी०—राक्षस इति । लक्ष्मणेषुणा प्रपीडितो राक्षसः प्रचकम्पे । तत्र दृष्टान्तः रुद्रबाणेन हतं त्रिपुरगोपुरं यथा ॥ ७५ ॥

गो० टी०—राक्षस इति । त्रिपुरगोपुरं त्रिपुरद्वारम् ॥ ७५ ॥

रा० टी०—चिन्तयामासेति । आश्वस्य महाबलोऽतिकायश्चिन्तयामास स्वकर्तव्यं विचारयामास। विमृश्य संचिन्त्य बाणनिपातेन रिपुस्त्वं मे श्लाघनीयोऽस्येवं विधाय उक्त्वा आस्यं विदार्य रथोपस्थमास्थाय रथेन प्रचचार । श्लोकद्वयमेकान्वयि ॥ ७६ ॥ ७७ ॥

गो० टी०—चिन्तयामासेत्यादिश्लोकद्वयमेकान्वयम् । विमृश्य करणीयं निर्धार्य । बाणनिपातेन मे साधु श्लाघनीयो रिपुरसीति । एवं लक्ष्मणम् विधाय अभिधाय । आस्यं विनम्य भुजौ नियम्य वशे स्थापयित्वा । रथोपस्थमास्थाय रथेन प्रचचार हेति संबन्धः ॥ ७६ ॥ ७७ ॥

रा० टी०—एकमिति । एकादिसायकानाददे ॥ ७८ ॥

रा० टी०—ते इति । राक्षसेन्द्रधनुश्च्युतास्ते बाणाः अम्बरं दीप्तमिव चक्रुः ॥ ७९ ॥

रा० टी०—तत इति । राघवानुजः राक्षसोत्सृष्टान् शरौघान् शरैः प्रचिच्छेद ॥ ८० ॥

रा० टी०—तानिति । रावणात्मजः शरान् निकृत्तान् संप्रेक्ष्य चुकोप शरं जग्राह च ॥ ८१ ॥

रा० टी०—स इति । रावणात्मजः तं बाणं सन्धाय उत्सृजत् उदसृजत् तेन बाणेन । सौमित्रिं स्तनान्तरं आजघान च ॥ ८२ ॥

रा० टी०—अतिकायेनेति । अतिकायेन वक्षसि ताडितः सौमित्रिः रुधिरमरुणवर्णं मदं युद्धोत्साहविशिष्टं यथा भवति तथा मत्तो द्विप इव सुस्राव इतस्ततोऽगच्छत् ॥ ८३ ॥

गो० टी०—एकमिति । इति उक्तप्रकारेण ॥ ७८–८३ ॥

८२ ] ति० टी०—आत्मानं विशल्यं चकारेत्यत्र हेतुः—विभुरिति । विष्णवंशत्वानुसंधानवानित्यर्थः ॥ ८२ ॥

रा० टी०—स इति । विभुर्लक्ष्मणः आत्मानं विशल्यं विनष्टः शल्यो यस्मात् तं चकार । शरीरसम्बन्धमात्रेण शरो ध्वस्त इत्यर्थः । अत एव शरं बाणान्तरं जग्राह अत एव अस्त्रेण तन्मंत्रेण समादधे अभिमंत्रयामास ॥ ८४ ॥

१ चेति गो. पाठः । २ आश्वास्येति गो. पाठः । ३ विनम्येति गो. पाठः । ४ भुजावुभाविति गो. पाठः । ५ चेति गो. पाठः । ६ तत इति गो. पाठः । ७ च संदधे इति गो. समादधे इति च रा. पाठः ।

आग्नेयेन तदास्त्रेण योजयामास सायकम् । स जज्वाल तदा बाणो धनुश्चास्य तदात्मनः॥ ८३ ॥
अतिकायो[3]ऽतितेजस्वी रौद्रमस्त्रं समादद‍े । तेन बाणं भुजंगाभं हेमपुङ्खमयोजयत् ॥ ८४ ॥
तदस्त्रं ज्वलितं घोरं लक्ष्मणः शरमाहितम् । अतिकायाय चिक्षेप कालदण्डमिवान्तकः ॥ ८५ ॥
आग्नेयास्त्राभिसंयुक्तं दृष्ट्वा बाणं निशाचरः । उत्ससर्ज तदा बाणं रौद्रं सूर्यास्त्रयोजितम् ॥ ८६ ॥
तावुभावम्बरे बाणावन्योन्यमभिजघ्नतुः । तेजसा संप्रदीप्ताग्रौ क्रुद्धाविव भुजंगमौ ॥
तावन्योन्यं विनिर्दह्य पेततुः पृथिवीतले ॥ ८७ ॥
निरर्चिषौ भस्मकृतौ न भ्राजेते शरोत्तमौ । तावुभौ दीप्यमानौ स्म न भ्राजेते महीतले ॥ ८८ ॥
ततोऽतिकायः संक्रुद्धस्त्वाष्ट्रमैषीकमुत्सृजत् । ततश्चिच्छेद सौमित्रिरस्त्रमैन्द्रेण वीर्यवान् ॥ ८९ ॥
ऐषीकं निहतं दृष्ट्वा कुमारो रावणात्मजः । याम्येनास्त्रेण संक्रुद्धो योजयामास सायकम् ॥ ९० ॥
ततस्तदस्त्रं चिक्षेप लक्ष्मणाय निशाचरः । वायव्येन तदस्त्रेण निजघान स लक्ष्मणः ॥ ९१ ॥
अथैनं शरधाराभिर्धाराभिरिव तोयदः । अभ्यवर्षत[12] संक्रुद्धो लक्ष्मणो रावणात्मजम् ॥ ९२ ॥
तेऽतिकायं समासाद्य कवचे वज्रभूषिते । भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ॥ ९३ ॥
तान्मोघानभिसंप्रेक्ष्य लक्ष्मणः परवीरहा । अभ्यवर्षत[13] बाणानां सहस्रेण महायशाः ॥ ९४ ॥

गो० टी०–स चकारेति । अनेन अस्त्रमन्त्रेण । संदधे योजयामास ॥ ८४ ॥

८३-८४ ] ति० टी०–अस्त्रेणास्त्रमन्त्रेण । तदेवाह—आग्नेयेनेति ॥ ८३ ॥ ८४ ॥

रा० टी०–आग्नेयेनेति । आग्नेयेन अग्निदेवताकेन अस्त्रेण तन्मन्त्रेण सायकं योजयामास सः योजितो बाणः जज्वाल ॥ ८५ ॥

गो० टी०–आग्नेयेनेत्यादि । पूर्वोक्तस्यैव विवरणम् ॥ ८५ ॥

रा० टी०–अतीति । अतिकायः रौद्रमस्त्रं समाददे तेनास्त्रेण भुजङ्गाभं बाणमयोजयत् ॥ ८६ ॥

गो० टी०–अतिकायोऽपीति । समादधे अनुसंदधे ॥ ८६ ॥

८५-८७ ] ति० टी०–आहितमाहितदिव्यास्त्रशक्तिम्. अस्त्ररूपं शरम ॥ ८५—८७ ॥

रा० टी०–तदिति । अस्त्रं तन्मन्त्रप्रयोजितमाहितं सन्धितं शरं लक्ष्मणोऽतिकायाय चिक्षेप ॥ ८७ ॥

रा० टी०–आग्नेयेति । निशाचरः आग्नेयास्त्रेणाभिसंयुक्तं बाणं दृष्ट्वा सूर्यास्त्रयोजितं बाणमुत्ससर्ज ॥ ८८ ॥

रा० टी०–ताविति । तेजसा सम्प्रदीप्तं अग्रं ययोस्तौ उभौ बाणौ अम्बरे आकाशे अन्योन्यमभिजघ्नतुः ॥ ८९ ॥

गो० टी०–तदिति । आहितं संहितम् ॥ ८७-८९ ॥

८८ ] ति० टी०–दीप्यमानौ तादृशावपि परस्पराभिघातान्न भ्राजेते ॥ ८८ ॥

रा० टी०–ताविति । तौ बाणौ अन्योन्यं विनिर्दह्य पृथिवीतले पेततुः । भस्मकृतौ अत एव निरर्चिषौ शरोत्तमौ न भ्राजेते ॥ ९० ॥

गो० टी०–ताविति । भस्मकृतौ भस्मतया कृतौ ॥ ९०-९१ ॥

८९-९२ ] ति० टी०–त्वाष्ट्रं त्वष्टृदेवताकमैषीकाख्यम् ॥ ८९ ॥ ९२ ॥

रा० टी०–ताविति । दीप्यमानौ तौ लक्ष्मणराक्षसावपि महीतले न भ्राजेते । एतेन बाणध्वंसहेतुकपश्चात्तापस्तयोर्जात इति ध्वनितम् अर्थः पृथक् । तत इति । ततोऽतिक्रुद्धो अतिकायः त्वाष्ट्रं तद्देवताकमैषीकं शरविशेषमुत्सृजत् उदसृजत् ततोऽनन्तरं सौमित्रिः ऐन्द्रेण इन्द्रदेवताकेन शरविशेषेणास्त्रं चिच्छेद ॥ ९२ ॥

रा० टी०–ऐषीकमिति । रावणात्मजः ऐषीकं निहतं दृष्ट्वा याम्येन यमदेवताकेनास्त्रेण सायकं योजयामास ॥ ९२ ॥

रा० टी०–तत इति । निशाचरः तदस्त्रं लक्ष्मणाय चिक्षेप लक्ष्मणो वायव्येनास्त्रेण निजघान तदस्त्रमिति शेषः ॥ ९३ ॥

रा० टी०–अथेति । वर्षाभिस्तोयद इव लक्ष्मणः शरधाराभिः रावणात्मजमभ्यवर्षत ॥ ९४ ॥

९३ ] ति० टी०–भग्नमग्रवर्ति शल्यं येषां ते ॥ ९३ ॥

९४ ] ति० टी०–मोघानव्यर्थान् ॥ ९४ ॥

१ धनुषीति गो. पाठः । २ महेति गो. पाठः । ३ अपीति गो. पाठः । ४ सौरमिति गो. पाठः । ५ आदधे इति गो. पाठः । ६ आग्नेयेनेति गो. पाठः । ७ दीप्तमिति गो. पाठः । ८ स्वस्त्रमिति गो. पाठः । ९ तदप्यच्छिनदेवेति गो. पाठः । १० अस्त्रेणेति गो. पाठः । ११ न्यपतन्निति गो. पाठः । १२ रक्षःसंक्रुद्ध इति गो. पाठः । १३ न्महेषूणामिति गो. पाठः ।

स वृष्यमाणो बाणौघैरतिकायो महाबलः । अवध्यकवचः संख्ये राक्षसो नैव विव्यथे ॥ ९५ ॥
[ शरं चाशीविषाकारं लक्ष्मणाय व्यपासृजत् । स तेन विद्धः सौमित्रिर्मर्मदेशे शरेण ह ॥
मुहूर्तमात्रं निःसंज्ञो ह्यभवच्छत्रुतापनः । ततः संज्ञामुपालभ्य चतुर्भिः सायकोत्तमैः ॥
निजघान हयान् संख्ये सारथिं च महाबलः । ध्वजस्योन्मथनं कृत्वा शरवर्षैररिंदमः ॥
असंभ्रान्तः स सौमित्रिस्तान् शरानभिलक्षितान् । मुमोच लक्ष्मणो बाणान्वधार्थं तस्य रक्षसः ॥ ]
न शशाक रुजं कर्तुं युधि तस्य नरोत्तमः । अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ॥ ९६ ॥
ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः । ब्राह्मेणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा ॥
अवध्य एष ह्यन्येषामस्त्राणां कवची बली ॥ ९७ ॥

ततस्तु वायोर्वचनं निशम्य सौमित्रिरिन्द्रप्रतिमानवीर्यः ।
समाददे[1] बाणमथोग्रवेगं तद्ब्राह्ममस्त्रं सहसा नियुज्य ॥ ९८ ॥
तस्मिन्वरास्त्रे तु नियुज्यमाने सौमित्रिणा बाणवरे शिताग्रे ।
दिशश्च चन्द्रार्कमहाग्रहाश्च नभश्च तत्रास ररास चोर्वी ॥ ९९ ॥
तं ब्रह्मणोऽस्त्रेण नियुज्य चापे शरं सपुङ्खं यमदूतकल्पम् ।
सौमित्रिरिन्द्रारिसुतस्य तस्य ससर्ज बाणं युधि वज्रकल्पम् ॥ १०० ॥
तं लक्ष्मणोत्सृष्टविवृद्धवेगं समापतन्तं श्वसनोग्रवेगम् ।
सुपर्णवज्रोत्तमचित्रपुङ्खं तदातिकायः समरे ददर्श ॥ १०१ ॥
तं प्रेक्षमाणः सहसातिकायो जघान बाणैर्निशितैरनेकैः ।
स सायकस्तस्य सुपर्णवेगस्तथातिवेगेन जगाम पार्श्वम् । ॥ १०२ ॥
तमागतं प्रेक्ष्य तदातिकायो बाणं प्रदीप्तान्तककालकल्पम् ॥
जघान शक्त्यृष्टिगदाकुठारैः शूलैः शरैश्चाप्यविपन्नचेष्टः ॥ १०३ ॥
तान्यायुधान्यद्भुतविग्रहाणि मोघानि कृत्वा स शरोऽग्निदीपः ॥
प्रगृह्य तस्यैव किरीटजुष्टं तदातिकायस्य शिरो जहार ॥ १०४ ॥
तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रमर्दितम् । पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ १०५ ॥
[11]तं भूमौ पतितं दृष्ट्वा विक्षिप्ताम्बरभूषणम् । बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ॥ १०६ ॥
ते विषण्णमुखा दीनाः प्रहारजनितश्रमाः । विनेदुरुच्चैर्बहवः सहसा विस्वरैः स्वरैः ॥ १०७ ॥
ततस्ते[12]त्वरितो याता निरपेक्षा निशाचराः । पुरीमभिमुखा भीता द्रवन्तो नायके हते ॥ १०८ ॥

९५-१०८]ति० टी०—वृष्यमाणः क्रियमाणवर्षः ९५-१०८

रा० टी०—ते इति । ते लक्ष्मणप्रयुक्ताः बाणाः वज्रभूषिते कवचे अतिकायं समासाद्य प्राप्य भग्नोऽग्रशल्यो शल्याग्रभागो येषां ते सन्तो महीतले पेतुः ॥ ९० ॥

रा० टी०—तानिति । तान् बाणान् मोघान् निष्फलानभिसंप्रेक्ष्य लक्ष्मणो बाणानां सहस्रेणाभ्यवर्षत ॥ ९६ ॥

रा० टी०—स इति । बाणौघैर्वृष्यमाणोऽवध्यकवचोऽतिकायः नैव विव्यथे ॥ ९७ ॥

रा० टी०—नेति । नरोत्तमो लक्ष्मणः तस्यातिकायस्य रुजमङ्गभेदं कर्तुं न शशाक अथानः एनं लक्ष्मणमभ्युपागम्य वायुर्वाक्यमुवाच ॥ ९८ ॥

रा० टी०—तदाकारमाह ब्रह्मेति । एष राक्षसः ब्रह्मदत्तवरः अत एव अवध्येन कवचेनावृतः अत एव ब्राह्मणास्त्रेण एनं राक्षसं भिन्द्धि अत एव एष वध्यः अन्यथा न ॥ ९९ ॥

रा० टी०-अवध्य इति । कवची कवचवान् बली एष राक्षसः शस्त्राणामवध्यः अर्द्धं पृथक् ॥ १०० ॥

१ शरोत्तम इति गो. पाठः । २ माददे इति गो. पाठः । ३ अमोघेति गो. पाठः । ४ नियोज्येति गो. पाठः । ५ तस्मृष्टममोघेति गो. पाठः । ६ ज्वलनप्रकाशमिति गो. पाठः । ७ ह्यतिकायस्येति गो. पाठः । ८ शूलैश्चाप्यविपन्नचेता इति गो. पाठः । ९ तत इति गो. पाठः । १० पीडितमिति गो. पाठः । ११ तं तु भूमौ निपतितं दृष्ट्वा विक्षिप्तभूषणमिति गो. पाठः । १२ ते त्वरितमिति गो. पाठः ।

प्रहर्षयुक्ता बहवस्तु वानराः प्रफुल्लपद्मप्रतिमाननास्तदा ।
अपूजयँल्लक्ष्मणमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ १०९ ॥
[ अतिबलमतिकायमभ्रकल्पं युधि विनिपात्य स लक्ष्मणः प्रहृष्टः ।
त्वरितमथ तदा स रामपार्श्वं कपिनिवहैश्च सुपूजितो जगाम ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

## द्विसप्ततितमः सर्गः ।

अतिकाये निधनं गते रावण उद्वेगमुपगम्य विस्मितश्चासद्दशरामबलामोघास्त्राभ्यां राक्षसानादिशत् भवद्भिरवहितैः संततं पुर्यशोकवनिका च रक्षणीये इति ते च स्वनियोगमन्वतिष्ठन् रावणः पुनर्दुःखेन रुषा विनिःश्वसन्नालयं प्रविष्टः ।

अतिकायं हतं श्रुत्वा लक्ष्मणेन महात्मना । उद्वेगमगमद्राजा वचनं चेदमब्रवीत् ॥ १ ॥
धूम्राक्षः परमामर्षी सर्वशस्त्रभृतां वरः । अकम्पनः प्रहस्तश्च कुम्भकर्णस्तथैव च ॥ २ ॥
एते महाबला वीरा राक्षसा युद्धकाङ्क्षिणः । जेतारः परसैन्यानां परैर्नित्यापराजिताः ॥ ३ ॥
ससैन्यास्ते हता वीरा रामेणाक्लिष्टकर्मणा । राक्षसाः सुमहाकाया नानाशस्त्रविशारदाः ॥ ४ ॥
अन्ये च बहवः शूरा महात्मानो निपातिताः । प्रख्यातबलवीर्येण पुत्रेणेन्द्रजिता मम ॥ ५ ॥

रा० टी०–तत इति । इन्द्रप्रतिमानवीर्यः सौमित्रिः वायोर्वचनं निशम्य ब्राह्ममस्त्रं नियुज्य बाणं समादधे ॥ १०१ ॥

गो० टी०–ततस्त्विति । ब्राह्ममस्त्रं ब्रह्मास्त्रमन्त्रम् नियोज्य जपित्वेति यावत् ॥ १०० ॥

रा० टी०–तस्मिन्निति । सौमित्रिणा बाणवरे तस्मिन् ब्राह्मे अस्त्रे नियुज्यमाने सति नभ आस दिदीपे उर्वी ररास चकम्पे दिक्प्रभृतयो ररासुः । ररासेत्यस्य वचनविपरिणामेनान्यत्राप्यन्वयः दिक्स्पंदन तद्देवतानां ग्रहणान्नासंभवः॥१०२॥

गो० टी०–तस्मिन्निति । दिशश्चेत्यादौ तत्रसुरिति विपरिणम्यानुषज्यते ॥ १०१ ॥

रा० टी०–तमिति । ब्रह्मणोऽस्त्रेण युक्तमत एव वज्रकल्पमत एव यमदूतकल्पं शरं रिपुहिंसकं बाणं चापे नियुज्य इन्द्रारिसुतस्योपरि ससर्ज ॥ १०३ ॥

रा० टी०–तमिति । लक्ष्मणोत्सृष्टेन विवृद्धो वेगो यस्य तं सुपर्णवज्रोत्तमवत् चित्रं पुंखं यस्य तं बाणमतिकायो ददर्श १०४॥

गो० टी०–तमिति । नियोज्य जपित्वा । तस्य यमदूतकल्पमित्यन्वयः ॥ १०२–१०४ ॥

रा० टी०–तमिति । तं लक्ष्मणशरं प्रेक्षमाणोऽतिकायोऽनेकैर्बाणैर्जघान सायकैः लक्ष्मणबाणस्तु अतिवेगेन तस्यातिकायस्य पार्श्वं जगाम ॥ १०५ ॥

रा० टी०–तमिति । अविपन्नचेष्टोऽतिकायः आगतं बाणं प्रेक्ष्य शक्त्यादिभिर्जघान ॥ १०६ ॥

गो० टी०–तमागतमिति । हुलैः द्विफलपत्राग्रायुधविशेषैः । हुलं द्विफलपत्राग्रमिति वैजयन्ती ॥ १०५–१०८ ॥

रा० टी०–तानीति । अग्निवद्दीप्तः स शरः तानि अतिकायप्रक्षिप्तानि आयुधानि मोघानि निष्फलानि कृत्वा किरीटजुष्टमतिकायस्य शिरः प्रगृह्य जहार ॥ १०७ ॥

रा० टी०–तदिति । लक्ष्मणेषुणा प्रमर्दितं तच्छिरः हिमवतः शृङ्गमिव भूमौ पपात ॥ १०८ ॥

रा० टी०–तमिति । विक्षिप्तानि अम्बरभूषणानि यस्य तमतिकायं भूमौ पतितं दृष्ट्वा निशाचरा व्यथिता बभूवुः ॥१०९॥

रा० टी०–ते इति । प्रहारेण वक्षःप्रभृत्याघातेन जनितः श्रमः खेदो येषु अत एव विषण्णमुखा उदासीनाननाः ते राक्षसा विस्वरैः विकृतस्वनैः स्वरैर्विनेदुः ॥ ११० ॥

गो० टी०–त इति । विस्वरैः विस्वररूपैः ॥ १०९ ॥

रा० टी०–तत इति । नायके हते सति निरपेक्षा युद्धेच्छारहिता निशाचराः पुरीमभिमुखास्सन्तः परितो याताः ॥१११॥

गो० टी०–तत इति । निरपेक्षाः युद्धानपेक्षाः ॥ ११० ॥

१०९ ] ति० टी०–इष्टभागिनमिष्टस्य भागः प्राप्तिस्तद्वन्तम् । इष्टमतिकायवधं प्राप्तवन्तमित्यर्थः ॥ १०९ ॥

त्रिशिरोऽतिकायदेवान्तकनरान्तकमहोदरमहापार्श्वानां षड्भिर्दिनैर्भाद्राश्विनकृष्णषष्ठ्यन्तेन वध इत्यग्रे स्पष्टम् ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

रा० टी०–प्रहर्षेति । रिपावतिकाये हते सति प्रहर्षयुक्ता वानरा इष्टभागिनमिष्टप्राप्तिमन्तं लक्ष्मणमपूजयन् ॥ ११२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

गो० टी०–प्रहर्षेति । प्रबुद्धेत्यत्र प्रसन्नत्वे तात्पर्यम् । इष्टस्य जयस्य भागः प्राप्तिः सोऽस्यास्तीतीष्टभागी तम् ॥१११॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

१–५ ] ति० टी०–अतिकायमिति ॥ १—५ ॥

१ इदं पद्यमधिकं गो. पुस्तके । २ महौजसेति गो. पाठः । ३ मन्वीति गो. पाठः । ४ निहतास्ते महावीर्या इति गो. पाठः ।

तौ भ्रातरौ तदा बद्धौ घोरैर्दत्तवरैः शरैः। यन्न शक्यं सुरैः सर्वैरसुरैर्वा महाबलैः॥ ६ ॥
मोक्तुं तद्बन्धनं घोरं यक्षगन्धर्वपन्नगैः। तन्न जाने प्रभावैर्वा मायया मोहनेन वा॥ ७ ॥
शरबन्धाद्विमुक्तौ तौ भ्रातरौ रामलक्ष्मणौ। ये योधा निर्गताः शूरा राक्षसा मम शासनात्॥ ८ ॥
ते सर्वे निहता युद्धे वानरैः सुमहाबलैः। तं न पश्याम्यहं युद्धे योऽद्य रामं सलक्ष्मणम्॥
नाशयेत्सबलं वीरं ससुग्रीवं विभीषणम् ॥ ९ ॥
अहो सुबलवान्रामो महदस्त्रबलं च वै। यस्य विक्रममासाद्य राक्षसा निधनं गताः॥ १० ॥
अप्रमत्तैश्च सर्वत्र गुल्मैं रक्ष्या पुरी त्वियम्। अशोकवनिका चैव यत्र सीताभिरक्ष्यते॥ ११ ॥
निष्क्रमो वा प्रवेशो वा ज्ञातव्यः सर्वदैवं नः। यत्र यत्र भवेद्गुल्मस्तत्र तत्र पुनः पुनः॥ १२ ॥
सर्वतश्चापि तिष्ठध्वं सैन्यैः परिवृता बलैः। द्रष्टव्यं च पदं तेषां वानराणां निशाचराः॥ १३ ॥
प्रदोषे वार्धरात्रे वा प्रत्यूषे वापि सर्वशः। नावज्ञा तत्र कर्तव्या वानरेषु कदाचन॥ १४ ॥

---

रा० टी०-श्रीरामाय अतिकायवधानन्तरकालिकं वृत्तान्तमाह—अतिकायमिति। लक्ष्मणेनातिकायं हतं श्रुत्वा राजा रावण उद्वेगमगमत् इदं वचनमब्रवीच॥ १॥

रा० टी०-तदाकारमाह—धूम्राक्ष इत्यादिभिः। परसैन्यानां जेतारः परैर्नित्यमपराजितमपराजयो येषां ते धूम्राक्षादयो राक्षसाः रामेण हताः। अन्ये च शूराः निपातिताः। सार्धश्लोकत्रयमेकान्वयि॥ २—५॥

गो० टी०-अथ रावणचिन्ता—अतिकायमित्यादि १—५

रा० टी०-रामपराक्रमस्याश्चर्यत्वमाह—प्रख्यातेति। प्रख्यातबलवीर्येण मम पुत्रेणेन्द्रजिता दत्तवरैश्शरैर्द्वौ भ्रातरौ बद्धौ॥ ६॥

गो० टी०-प्रख्यातेत्यादिश्लोकत्रयमेकं वाक्यम्। वीरौ यौ भ्रातरौ खरदूषणादिवधेन प्रसिद्धौ तावपि बद्धौ। तदेव बन्धनं वर्णयति—यदिति। यद्बन्धनं सुरादिभिः मोक्तुं मोचयितुम् अशक्यं तद्बन्धनं घोरम्। भ्रातरौ तौ शरबन्धाद्विमुक्ताविति यत् तत्प्रभावादिषु केन वा जातं न जान इत्यन्वयः। प्रभावः सामर्थ्यम्। माया व्यामोहकारिणी विद्या। मोहनम् औषधादिकम्॥ ६—९॥

६—१० ] ति० टी०-दत्तवरैर्वरदत्तैः शरैर्यौ खरादिहन्तारौ भ्रातरौ तौ बद्धौ। यच्छरबन्धनं सुरादिभिरपि मोक्तुं न शक्यं तस्मादपि शरबन्धनाद्विमुक्तौ तत्प्रभावैः सहजस्वबलादिवैभवैरथवा मायया प्रतिमायाबलेन वा मोहनेन वा बन्धकरनागानां मोहनेन वेति न जान इत्युत्तरेण संबन्धः॥ ६-१०॥

रा० टी०-यद् येन बन्धनेन बद्धौ तद्बन्धनं मोक्तुं सुरादिभिर्न शक्यमतः प्रभावैः रामतेजोभिर्मायया छलविशेषेण वा मोहनेन अस्मास्वन्यथाभासकचित्तभ्रान्त्युत्पादनेन वा किं च मंत्रादिभिः स्वभावान्यथाकरणेन वा विनष्टमिति शेषः तन्निश्चयं न जाने अत एव भ्रातरौ विमुक्तौ। अर्धषट्कमेकान्वयि॥६-७॥

रा० टी०-ये इति। मम शासनान्निर्गता ये योधास्ते सर्वे वानरैर्निहताः॥ ८॥

रा० टी०-तमिति। विशेषणविशिष्टं रामं यो नाशयेत्तमहं न पश्यामि॥ ९॥

रा० टी०-अहो इति। यस्य विक्रममासाद्य प्राप्य राक्षसा निधनं विनाशनं गताः स रामः अहो आश्चर्यं बलवान् तदस्त्रबलं च महत्॥ १०॥

गो० टी०-अहो न्वित्यादिश्लोकद्वयमेकान्वयम्। पिहितद्वारतोरणा द्वारम् अन्तर्द्वारम् तोरणं बहिर्द्वारम्॥१०-११॥

११ ] ति० टी०-अप्रमत्तैरेति। रक्ष्याः। युष्माभिरवशिष्टराक्षसैरिति शेषः। अशोकवनिका चेति। विशिष्य रक्ष्येति शेषः॥ ११॥

रा० टी०-अप्रमत्तैरिति। सर्वत्र सर्वस्मिन् काले अप्रमत्तैर्भवद्भिर्गुल्मैस्सहिता इयं पुरी यत्र सीताभिरक्ष्यते सा अशोकवनिका च रक्ष्या॥ ११॥

गो० टी०-एवं रामप्रभावं सप्रपञ्चमुक्त्वा सैन्यं प्रति पुरीरक्षणं नियमयति—अप्रमत्तैरित्यादिना। गुप्तैः स्वयं कृतरक्षणैः। गुल्मैरिति वा पाठः॥ १२॥

गो० टी०-अशोकेति। यत्र सीता अभिरक्ष्यते तत्र अशोकवनिकायाम्। निष्क्रामः निर्गमः प्रवेशो वा। नः अस्माभिः ज्ञातव्यः। मदनुज्ञां विना न कोपि जनो निर्गमयितव्यो नापि प्रवेष्टव्य इत्यर्थः॥ १३॥

१२ ] ति० टी०-निष्क्रामो वेति। पुरेऽशोकवनिकायां चेति शेषः। नो युष्माकम्। युष्माभिरिरिति यावत्। यत्र यत्र गुल्म इति। पृथक्स्थापित इति शेषः॥ १२॥

रा० टी०-निष्काम इति। यत्र यत्र गुल्मो भवेत् तत्र तत्र निष्क्रामो वा प्रवेशो वा नोऽस्माकं पुनः पुनर्ज्ञातव्यः॥ १२॥

गो० टी०-यत्र यत्रेति। गुल्मः सेनासन्निवेशः॥ १४॥

१३-१४ ] ति० टी०-पदं गतागतम्॥ १३॥ १४॥

---

१ वौ हितौ भ्रातरौ वीरौ बद्धाविति गो. पाठः। २ किमर्थैरिति गो. पाठः। ३ ससुग्रीवविभीषणमिति गो.पाठः। ४ न्विति गो.पाठः। ५ गुप्तैरिति गो. पाठः। ६ वनिकायां चेति गो. पाठः। ७ सर्वथेवेति गो. पाठः। ८ स्वैः स्वैरिति गो. पाठः।

द्विषतां बलमुद्युक्तमापतत्किं स्थितं यथा । ततस्ते राक्षसाः सर्वे श्रुत्वा लङ्काधिपस्य तत् ॥
वचनं सर्वमातिष्ठन्यथावत्तु महाबलाः ॥ १५ ॥
तांन्सर्वान्हि समादिश्य रावणो राक्षसाधिपः । मन्युशल्यं वहन्दीनः प्रविवेश स्वमालयम् ॥ १६ ॥
ततः स संदीपितकोपवह्निर्निशाचराणामधिपो महाबलः ।
तदेव पुत्रव्यसनं विचिन्तयन्मुहुर्मुहुश्चैव तदा विनिःश्वसन् ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

## त्रिसप्ततितमः सर्गः ।

ततो भ्रातृपुत्रादिसंक्षयं निशम्य शोकार्तं पितरमिन्द्रजिद्बभाषे भो मयि जीवति किं दैन्यमद्य विलोकयतु तातचरणो मद्विक्रममिति अथ निशाचैरनुगतः प्रथमाग्निं हुत्वा तस्माद्गृहीतब्रह्मास्त्रादिरिन्द्रजिद्बाणैः कपीनविध्यत् स्वयमन्तरिक्षे मायया छन्नः सर्वान्स्वशरपथगान्कपीन् विद्रावयामासापि च प्रच्छन्नः शत्रुः कथं हन्तव्य इत्यादि चिन्तयन्तं सलक्ष्मणं राममपि जित्वा मुदा पुरं विवेश ।

ततो हतान्राक्षसपुंगवांस्तान्देवान्तकादित्रिशिरोऽतिकायान् ।
रक्षोगणास्तत्र हतावशेषास्ते रावणाय त्वरिताः शशंसुः ॥ १ ॥
ततो हतांस्तान्सहसा निशम्य राजा महाबाष्पपरिप्लुताक्षः ।
पुत्रक्षयं भ्रातृवधं च घोरं विचिन्त्य राजा विपुलं प्रदध्यौ ॥ २ ॥

रा० टी०–सर्वत इति । सैन्यैर्बलैः पराक्रमैश्च परिष्टता यूयं सर्वतः तिष्ठध्वं तिष्ठत । तत्प्रयोजनमाह वानराणां पदं गतागतं द्रष्टव्यम् ॥ १३ ॥

गो० टी०–द्रष्टव्यमित्यादिश्लोकद्वयमेकान्वयम् । पदं व्यवसितम् । दर्शनप्रकारमाह—द्विषतामिति । द्विषतां बलं स्थितं किम् । उद्युक्तम् उद्यतं किम् । आपतन्तम् । लिङ्गादिव्यत्यय आर्षः । आपतत् किमिति सदा द्रष्टव्यमित्यर्थः । आपतन् किमिति पाठः सुशोभनः ॥ १५–१९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

रा० टी०–प्रदोष इति । प्रदोषादौ वानरेषु अवज्ञा न कर्तव्या अस्मिन्काले नागमिष्यन्तीति न निश्चेतव्यमित्यर्थः । तेन सर्वदैव सावधानतया स्थातव्यमिति ध्वनितम् ॥ १४ ॥

१५ ] ति० टी०–द्रष्टव्यं च पदमित्युक्तम् तत्र, दर्शनप्रकारमाह—द्विषतामिति । उद्युक्तमुद्यमवत्किमापतदागमनशीलं किम् । लङ्कायामिति शेषः । यथा यथा पूर्वं स्थितं स्थितिमत्किमित्येवंप्रकारेण सदा द्रष्टव्यमित्यर्थः ॥ १५ ॥

रा० टी०–तत्र हेतुमाह–द्विषतामिति । आपतन्तं मत्प्रभृतिमुद्दिश्य द्विषतां वानराणां बलं यथा यथावदुद्युक्तं सत् स्थितम् । अर्धं पृथक् ॥ १५ ॥

रा० टी०–तत इति । लंकाधिपस्य वचनं श्रुत्वा सर्वे राक्षसाः यथावदातिष्ठन् ॥ १६ ॥

१६–१७ ] ति० टी०–मन्युशल्यं मन्युरूपं शल्यम् १६।१७

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

रा० टी०–तानिति । राक्षसाधिपः तान् राक्षसान्समादिश्य मन्युशल्यं कोपशरं वहन् प्राभुवन्सन् दीप्तं प्रकाशितं निवेशनं स्वालयं प्रविवेश ॥ १७ ॥

रा० टी०–तत इति । संदीपितः कोपवह्निर्यस्य स निशाचराणामधिपः पुत्रव्यसनं पुत्रमरणदुःखं विचिन्तयन्सन् घर्मसुष्णं निःश्वसिति स्म ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

१–२ ] ति० टी०–तत इति । देवान्तकादयश्च त्रिशिरोऽतिकायौ च तान् ॥ १ ॥ २ ॥

रा० टी०–राक्षसानां वृत्तान्तमाह–तत इत्यादिभिः । हतावशिष्टाः रक्षोगणाः देवान्तकादीन् हतान् शशंसुः ॥ १ ॥

गो० टी०–अथ ब्रह्मास्त्रबन्धस्त्रिसप्ततितमे—ततो हतानित्यादि ॥ १ ॥

रा० टी०–तत इति । राक्षसान् हतान् निशम्य बाष्पपरिप्लुताक्षो राजा ऐश्वर्यदीप्त्या संयुतो राजा रावणः पुत्रक्षयं भ्रातृवधं च विचिन्त्य विपुलमत्यन्तं प्रदध्यौ विचारयामास ॥ २ ॥

गो० टी०–पूर्वं कुम्भकर्णादिवधः सामान्येन श्रुतः सम्प्र-

१ सदेति गो. पाठः । २ स तान्सर्वानिति गो. तान्सर्वान्स इति रा. पाठः । ३ निःश्वसितिस्म घर्ममिति रा. पाठः । ४ व्यनिःश्वसदिति गो. पाठः । ५ त्वरितमिति गो. पाठः । ६ सुमोहमित्यपि गो. रा. पाठः ।

ततस्तु राजानमुदीक्ष्य दीनं शोकार्णवे संपरिपुप्लुवानम् ।
रथर्षभो राक्षसराजसूनुस्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥ ३ ॥
न तात मोहं परिगन्तुमर्हसे यत्रेन्द्रजिज्जीवति नैर्ऋतेश ।
नेन्द्रारिबाणाभिहतो हि कश्चित्प्राणान्समर्थः समरेऽभिपातुम् ॥ ४ ॥
पश्याद्य रामं सह लक्ष्मणेन मद्बाणनिर्भिन्नविकीर्णदेहम् ।
गतायुषं भूमितले शयानं शितैः शरैराचितसर्वगात्रम् ॥ ५ ॥
इमां प्रतिज्ञां शृणु शक्रशत्रोः सुनिश्चितां पौरुषदैवयुक्ताम् ।
अद्यैव रामं सह लक्ष्मणेन संतर्पयिष्यामि शरैरमोघैः ॥ ६ ॥
अद्येन्द्रवैवस्वतविष्णुरुद्रसाध्याश्च वैश्वानरचन्द्रसूर्याः ।
द्रक्ष्यन्तु मे विक्रममप्रमेयं विष्णोरिवोग्रं बलियज्ञवाटे ॥ ७ ॥
स एवमुक्त्वा त्रिदशेन्द्रशत्रुरापृच्छ्य राजानमदीनसत्त्वः ।
समारुरोहानिलतुल्यवेगं रथं खरश्रेष्ठसमाधियुक्तम् ॥ ८ ॥
समास्थाय महातेजा रथं हरिरथोपमम् । जगाम सहसा तत्र यत्र युद्धमरिंदमः ॥ ९ ॥

त्याग्रैः सविशेषं श्रुत इत्याह—तत इति । पूर्वोक्तसर्वानुवादो वा ॥ २ ॥

३ ] ति० टी०–संपरिपुप्लुवानम् । लिटः कानच् । शोकार्णवमग्नमित्यर्थः । रथर्षभो रथस्थानां श्रेष्ठः । महारथ इत्यर्थः । तं रावणम् ॥ ३ ॥

रा० टी०–तत इति । राक्षसराजसूनुरिन्द्रजित् शोकार्णवे सम्परिपुप्लुवानमत एव दीनं राजानमुदीक्ष्य इदं वाक्यं बभाषे ॥ ३ ॥

गो० टी०–तत इति । संपरिपुप्लुवानम् । उटः शानजादेशः ॥ ३ ॥

४ ] ति० टी०–हे तात, तस्मान्मोहं गन्तुं नार्हसि । यत्र यस्मादिन्द्रजिज्जीवति । इन्द्रारिरिन्द्रजित् समरे इन्द्रजिद्बाणाभिहतः प्राणानभिपातुं कश्चिदपि समर्थो नास्ति ॥ ४ ॥

रा० टी०–तदाकारमाह-नेति । हे तात यत्र यदा इन्द्रजित् जीवति तदा त्वं मोहं गन्तुं नार्हसि । तत्र हेतुः इन्द्रारेर्मम बाणाभिहत. कश्चिदपि जनः प्राणान् अभिपातुं रक्षितुं न समर्थः ॥ ४ ॥

गो० टी०–न तातेति । यत्र यदा । इन्द्रारिः इन्द्रजित् ४-५

५ ] ति० टी०–मद्बाणनिर्भिन्नः, अत एव विकीर्णो देहो यस्य तम् ॥ ५ ॥

रा० टी०–पश्येति । शरैराचितानि व्याप्तानि सर्वगात्राणि यस्य अत एव मद्बाणनिर्भिन्नं मद्बाणकरणकविदारणेन विकीर्णो देहो यस्य अत एव भूमितले शयानं रामं पश्य ॥ ५ ॥

६-७ ] ति० टी०–पौरुषदैवयुक्तां पौरुषेण सहजशौर्यबलेन दैवबलेन भगवद्भक्तबलेन च युक्तां क्रियमाणाम् । आदिकर्मणि क्तः ॥ ६ ॥ ७ ॥

रा० टी०–इमामिति । पौरुषेण सहजशौर्यबलेन दैवेन ब्रह्मादयनुग्रहेण च युक्तामत एव सुनिश्चितां सत्याम् शक्रशत्रोर्ममेमां प्रतिज्ञां शृणु । तदाकारमाह अमोघैः शरैः राममद्यैव सन्तर्पयिष्यामि ॥ ६ ॥

रा० टी०–अद्येति । बलेर्यज्ञवाटे यागशालायां विष्णोरुग्रमप्रमेयं विक्रममिव मे विक्रममिन्द्रादयो द्रक्ष्यन्ति ॥ ७ ॥

गो० टी०–इमामिति । पौरुषदैवयुक्तां पुरुषबलदैवबलयुक्ताम् । सन्तर्पयिष्यामि पूरयिष्यामि ॥ ६ ॥ ७ ॥

८ ] ति० टी०–खरश्रेष्ठैः, समाधीयते युद्धमेभिरिति समाधयो धनुःखड्गादयस्तैश्च युक्तम् ॥ ८ ॥

रा० टी०–स इति । त्रिदशेन्द्रशत्रुस्स इन्द्रजित् एवमुक्त्वा राजानं रावणमापृच्छ्य तदाज्ञां गृहीत्वा खरश्रेष्ठैः श्रेष्ठखरैः समाधीयते सङ्ग्राम एभिरिति समाधयो युद्धोपस्करधनुःखड्गादयस्तैश्च युक्तं रथं समारुरोह ॥ ८ ॥

गो० टी०–स इति । खरश्रेष्ठसमाधियुक्तं खरश्रेष्ठसंबन्धयुक्तम् । खरश्रेष्ठैः समाधिना समाधानेन च युक्तमिति वा॥८॥

९ ] ति० टी०–हरिरथ इन्द्ररथः ॥ ९ ॥

रा० टी०–समिति । महातेजा इन्द्रजित् हरिरथोपमं रथं समास्थाय यत्र युद्धं तत्र सहसा जगाम ॥ ९ ॥

गो० टी०–तमिति । हरिरथः सूर्यरथः । यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु, इत्यमरः । युद्धमिति । कर्तव्यमिति शेषः ॥ ९ ॥

१ राक्षसेन्द्रेति गो. रा. पाठः । २ मित्रेति गो. पाठः । ३ अशीति गो. पाठः ।

तं प्रस्थितं महात्मानमनुजग्मुर्महाबलाः । संहर्षमाणा बहवो धनुःप्रवरपाणयः ॥ १० ॥
गजस्कन्धगताः केचित्केचित्परमवाजिभिः । व्याघ्रवृश्चिकमार्जारखरोष्ट्रैश्च भुजंगमैः ॥ ११ ॥
वराहैः श्वापदैः सिंहैर्जम्बुकैः पर्वतोपमैः । काकहंसमयूरैश्च राक्षसा भीमविक्रमाः ॥
प्रासमुद्गरनिस्त्रिंशपरश्वधगदाधराः । भृशुंडिमुद्गरायष्टिशतघ्नीपरिघायुधाः ॥ १२ ॥
स शङ्खनिनदैः पूर्णैर्भेरीणां चापि निःस्वनैः । जगाम त्रिदशेन्द्रारिराजिं वेगेन वीर्यवान् ॥ १३ ॥
स शङ्खशशिवर्णेन छत्रेण रिपुसूदनः । रराज प्रतिपूर्णेन नभश्चन्द्रमसा यथा ॥ १४ ॥
वीज्यमानस्ततो वीरो हैमैर्हेमविभूषणैः । चारुचामरमुख्यैश्च मुख्यः सर्वधनुष्मताम् ॥ १५ ॥
[ सतु दृष्ट्वा विनिर्यान्तं बलेन महता वृतम् । राक्षसाधिपतिः श्रीमान्रावणः पुत्रमब्रवीत् ॥
त्वमप्रतिरथः पुत्र त्वया वै वासवो जितः । किं पुनर्मानुषं धृष्यं निहनिष्यसि राघवम् ॥
तथोक्तो राक्षसेन्द्रेण प्रत्यगृह्णान्महाशिषः । ]
ततस्त्विन्द्रजिता लङ्का सूर्यप्रतिमतेजसा । रराजाप्रतिवीर्येण द्यौरिवार्केण भास्वता ॥ १६ ॥
स संप्राप्य महातेजा युद्धभूमिमरिंदमः । स्थापयामास रक्षांसि रथं प्रति समन्ततः ॥ १७ ॥
ततस्तु हुतभोक्तारं हुतभुक्सदृशप्रभः । जुहुवे राक्षसश्रेष्ठो विधिवन्मन्त्रसत्तमैः ॥ १८ ॥
स हविर्लाजसत्कारैर्माल्यगन्धपुरस्कृतैः । जुहुवे पावकं तत्र राक्षसेन्द्रः प्रतापवान् ॥ १९ ॥

१०-१२ ] ति० टी०-संहर्षमाणा इत्यार्षम् । हृष्यमाणा इत्यर्थः ॥ १०—१२ ॥

१३ ] ति० टी०-आजिं युद्धम् ॥ १३ ॥

रा० टी०-तमिति । प्रस्थितं तमिन्द्रजितं संहर्षमाणाः संहृष्यमाणाः बहवो महाबला अनुजग्मुः ॥ १० ॥

रा० टी०-तद्गमनप्रकारमाह—गजेति । केचिद्गजस्कन्धगताः केचित्परमवाज्यादिभिरुपलक्षिताः प्रासादिधराः भृशुण्ड्याद्यायुधाश्च सन्तः अनुजग्मुरित्यनुकृष्यते । श्लोकत्रयमेकान्वयि ॥ ११-१३ ॥

रा० टी०-स इति । शंखनिनदैः भेरीणां निस्वनैश्चोपलक्षितः स इन्द्रजित् आजिं सङ्ग्रामं वेगेन जगाम ॥ १४ ॥

गो० टी०-तं प्रस्थितमित्यादिश्लोकद्वयमेकान्वयम् ॥ १०-१३ ॥

१४] ति०टी०-शङ्खस्य शशिनश्च वर्ण इव वर्णो यस्य तत् १४

रा० टी०-स इति । शङ्खस्य शशिनश्च वर्ण इव वर्णो यस्य तेन छत्रेण स इन्द्रजित् प्रतिपूर्णेन चन्द्रमसा नभ इव रराज ॥ १५ ॥

१५-१६ ] ति० टी०-हैमैर्हिरण्मयदण्डैः ॥ १५ ॥ १६॥

रा० टी०-वीज्यमान इति । सर्वधनुष्मतां मुख्य इन्द्रजित् हैमैः हेममयदण्डयुक्तैश्चारुचामरमुख्यैर्वीज्यमानोऽभवदिति शेषः ॥ १६ ॥

रा० टी०-तत इति । लङ्का अप्रतिवीर्येणेन्द्रजिता अर्केण द्यौरिव रराज ॥ १७ ॥

गो० टी०-अवीज्यतेति । हैमैः हेमदण्डैः । हेमविभूषितैः हेमशलाकायुक्तैः ॥ १४ ॥ १५ ॥

१७ ] ति० टी०-युद्धभूमिं युद्धजयसंपादकहोमसाधनभूमिम् । निकुम्भिलास्थानमित्यर्थः ॥ १७ ॥

रा० टी०-स इति । स इन्द्रजित् युद्धस्य युद्धजयसंपादकहवनस्य भूमिं निकुम्भिलास्थानमित्यर्थः संप्राप्य रथं प्रति रथस्य समीपे समंततश्चतुर्दिक्षु रक्षांसि स्थापयामास ॥ १८ ॥

गो० टी०-सम्प्राप्येति । रथं प्रति रथसिद्धिमुद्दिश्य १६

१८ ] ति० टी०-हुतभोक्तारमग्निम् । विधिस्तत्कल्पोक्तप्रकारः ॥ १८ ॥

रा० टी०-तत इति । हुतभुजा वह्निना सदृशी प्रभा यस्य स इन्द्रजित् हुतभोक्तारं वह्निं मन्त्रसत्तमैर्विधिवज्जुहुवे ॥ १९ ॥

गो० टी०-ततस्त्विति । विधिवत् क्रमवत् ॥ १७ ॥

१९ ] ति० टी०-गन्धमाल्यपुरस्कृतैर्लाजसत्कारैर्लाजैः पावकं सत्कृत्य तत्र पावके वक्ष्यमाणसंस्कारसंस्कृतैर्हविर्वक्ष्यमाणच्छागरूपं जुहाव ॥ १९ ॥

रा० टी०-हवनप्रकारं बोधयन्नाह—स इति । माल्यगन्धौ पुरस्कृतौ पूर्वं समर्पितौ येभ्यस्तैः लाजसत्कारैः सत्कृतिकारकलाजैः पावकं सत्कृत्येति शेषः राक्षसेन्द्रः हविर्वक्ष्यमाणच्छागरूपं जुहुवे । यदि तु लाजसत्कारैस्सह हविर्जुहुवे इत्यन्वयस्तदा न शेषकल्पनेति दिक् ॥ २० ॥

गो० टी०-स इति । हविर्लाजसंस्कारैः संस्कृतहविर्लाजैः ॥ १८ ॥

१ प्रवरेति गो. पाठः । २ मार्जारैरिति गो. पाठः । ३ वराहश्वापदैरिति गो. पाठः । ४ शशेति गो. पाठः । ५ पट्टिशेति रा. पाठः । ६ इदमर्धमधिकं रा. पाठे । ७ स्तूयमानो निशाचरैरिति गो. पाठः । ८ निशीति रा. पाठः । ९ अवीज्यतेति गो. पाठः । १० विभूषितैरिति गो. रा. पाठः ११ इदं सार्धपद्यद्वयमधिकं गो. पाठे । १२ जुहोवेति गो. पाठः । १३ मन्त्रवद्विधिवत्तदेति गो. पाठः । १४ संस्कारैरिति गो. पाठः

शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः । लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ २० ॥
स तत्राग्निं समास्तीर्य शरपत्रैः सतोमरैः । छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ २१ ॥
सकृदेव समिद्धस्य विधूमस्य महार्चिषः । बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ॥ २२ ॥
प्रदक्षिणावर्तशिखस्तप्तकाञ्चनसंनिभः । हविस्तत्प्रतिजग्राह पावकः स्वयमुत्थितः ॥ २३ ॥
सोऽस्त्रमाहारयामास ब्राह्ममस्त्रविशारदः । धनुश्चात्मरथं चैव सर्वं तत्राभ्यमन्त्रयत् ॥ २४ ॥
तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके । सार्कग्रहेन्दुनक्षत्रं वितत्रास नभःस्थलम् ॥ २५ ॥
स पावकं पावकदीप्ततेजा हुत्वा महेन्द्रप्रतिमप्रभावः ।
सचापबाणासिरथाश्वशूलः खेऽन्तर्दधेऽत्मानमचिन्त्यवीर्यः ॥ २६ ॥

२० ] ति० टी०—शस्त्राण्येव शरपत्राणि, काशविशेषाः परिस्तरणभूताः, विभीतका विभीतकवृक्षसंबन्धिन्यः समिधः रक्तवस्त्राणि। अभिचारकर्मणि तेषामेव विनियोगात् । आसन्निति शेषः । स्रुवमित्यत्रासीदिति ॥ २० ॥

रा० टी०—शस्त्राणीति। शस्त्राण्येव शरपत्राणि परिस्तीर्यमाणकाशविशेषस्थानीयान्यभवन्निति शेषः । अभिचारकर्मणि शस्त्राणामेव तथात्वेन विनियोगोऽस्तीति तात्पर्यम् अत एव विभीतकाः विभीतकतरुसंबन्धिन्योऽभवन् वासांसि लोहितानि रक्तान्यभवन् स्रुवं कार्ष्णायसं कृष्णलोहमयमभवत् ॥ २१ ॥

गो० टी०—शस्त्राणीति । शस्त्राणि आयुधानि शरपत्राणि काशपत्रस्थानीयानि। तानि परिस्तरणान्यासन्नित्यर्थः। शरमयं बर्हिस्तृणातीत्यभिचारे काशश्चोदितः। अत्र त्वभिचारविशेषे तत्स्थाने शस्त्राणि कृतानीति बोध्यम् । विभीतकाः कलिद्रुमविकाराः। वैभीतक इध्म इति श्रुतेः। वासांसि स्वधार्याणि । यद्वा शस्त्राणि तोमरादीनि शरपत्राणि च। बर्हीष्यासन्निति शेषः। शरपत्रैः सतोमरैरित्यनुवादात् । कार्ष्णायसं स्रुवम् । कृतमिति शेषः ॥ १९ ॥

२१ ] ति० टी०—शरपत्रैः प्रागुक्तरूपैः । जीवतो गलं जग्राह । सजीवस्य होमार्थमिति शेषः ॥ २१ ॥

रा० टी०—स इति । स इन्द्रजित् सतोमरैः तोमरसहितैः शरपत्रैस्तत्प्रतिनिधिशस्त्रैरग्निं समास्तीर्य जीवतश्छागस्य गलं जग्राह । होमार्थमिति शेषः ॥ २२ ॥

गो० टी०—स तत्रेति । तत्र युद्धभूमौ । आस्तीर्य परिस्तीर्य ॥ २० ॥

२२ ] ति० टी०—सकृदेवेति । सजीवस्य समग्रावयवस्य छागस्य सकृदेव महाहुत्या समिद्धस्य महार्चिषोऽग्नेः सकाशात्तानि लिङ्गानि बभूवुः । यानि पुरा स्वस्य विजयमदर्शयन्२२

रा० टी०—सकृदिति । सकृदेकवारमेव समिद्धस्य प्रदीप्तस्य विधूमस्य धूमरहितस्य महार्चिषो वह्नेर्यानि लिङ्गानि विजयं देवादियुद्धे इन्द्रजित्कर्तृकरिपुपराभवमित्यर्थः अदर्शयन् तानि लिङ्गानि बभूवुः ॥ २३ ॥

गो० टी०—सकृदेवेति। सकृत् समिद्धस्य एकदा समिद्धिर्ज्वलितस्य लिङ्गानि उक्तसकृत्समिद्धविधूमत्वमहार्चिष्ट्वानि विजयं यान्यदर्शयन् । पूर्वमिति शेषः ॥ २१ ॥

२३ ] ति० टी०—तान्येवाह—प्रदक्षिणेति ॥ २३ ॥

रा० टी०—लिङ्गान्येव बोधयन्नाह—प्रदक्षिणेति । प्रदक्षिणावर्ता प्रदक्षिणातो गमनवती शिखा यस्य स पावकः स्वयमुत्थितस्सन् तद्दीयमानं हविः प्रतिजग्राह ॥ २४ ॥

गो० टी०—प्रदक्षिणेति । प्रदक्षिण आवर्तो भ्रमिर्यासां ताः शिखा यस्येति विग्रहः । स्वयमास्थितः स्वयमास्थावान् । स्वयमुत्थित इति पाठे पुरुषरूपेणोत्थितः इत्यर्थः ॥ २२ ॥

२४ ] ति० टी०—अस्त्रविशारदः स ब्राह्ममस्त्रमाहारयामास ब्रह्मणा पुनर्ब्रह्मास्त्रोपदेशमकारयत् । अथ धनुरादिकं सिद्धब्रह्मास्त्रमन्त्रेणाभ्यमन्त्रयत् ॥ २४ ॥

रा० टी०—स इति । अस्त्रविशारदस्स इन्द्रजित् ब्राह्ममस्त्रमाहारयामास यथाविधि स्वसमीपं प्रापयामास धनुरादिकमभ्यमन्त्रयच्च मंत्रेणेति शेषः ॥ २५ ॥

गो० टी०—स इति । आहारयामास आजुहाव अभ्यमन्त्रयत् अभिमन्त्रितवान् ॥ २३ ॥

२५ ] ति० टी०—तस्मिन्नस्त्र आहूयमाने तदस्त्रमन्त्रदैवते निमूर्तिरहस्यलक्षणे क्रियमाणावाहने । तदुद्देशेन तन्मन्त्रेण पावके हूयमाने च सति सार्कादिकं नभःस्थलं तत्रासेति । नायमर्थवादः ॥ २५ ॥

रा० टी०—तस्मिन्निति । अस्त्रे आहूयमाने सति पावके हूयमाने च सति अर्कादिसहितं नभःस्थलं वितत्रास ॥ २६ ॥

गो० टी०—तस्मिन्निति । वितत्रास चचाल ॥ २४ ॥

२६ ] ति० टी०—अन्तर्दधेऽत्मानमित्यत्राकारलोपश्छान्दसः ॥ २६ ॥

रा० टी०—स इति । महेन्द्रप्रतिमप्रभावः चापादिसहितस्स इन्द्रजित् आत्मानं चापादिसहितस्वशरीरं खे अन्तर्दधे अन्तर्धापयामास आत्मशब्दाकारलोप आर्षः ॥ २७ ॥

गो० टी०—स इति । आत्मानम् अन्तर्दधे अन्तर्धापयामास। अन्तर्भावितण्यर्थोयम् । खेन्तर्दधेत्मानमित्यत्र आर्षे पूर्वरूपत्वम् । अचिन्त्यरूपः अचिन्त्यमन्त्रशक्तिः ॥२६-२७॥

१ भूषण इति गो. पाठः। २ आस्थित इति गो. पाठः। ३ मिन्द्ररिपुस्तदेति गो. पाठः। ४ कवचं चेति रा. पाठः। ५ नक्षत्रैरिति गो. पाठः। ६ सुत इति गो. पाठः। ७ रूप इति गो. पाठः।

ततो हयरथाकीर्णं पताकाध्वजशोभितम् । निर्ययौ राक्षसबलं नर्दमानं युयुत्सया ॥ २७ ॥
ते शरैर्बहुभिश्चित्रैस्तीक्ष्णवेगैरलंकृतैः । तोमरैरङ्कुशैश्चापि वानराञ्जघ्नुराहवे ॥ २८ ॥
रावणिस्तु सुसंक्रुद्धस्तान्निरीक्ष्य निशाचरान् । हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया॥ २९ ॥
ततस्ते राक्षसाः सर्वे गर्जन्तो जयकाङ्क्षिणः । अभ्यवर्षंस्ततो घोरान्वानराञ्शरवृष्टिभिः ॥ ३० ॥
स तु नालीकनाराचैर्गदाभिर्मुसलैरपि । रक्षोभिः संवृतः संख्ये वानरान्विचकर्त ह ॥ ३१ ॥
ते वध्यमानाः समरे वानराः पादपायुधाः । अभ्यवर्षन्त सहसा रावणिं शैलपादपैः ॥ ३२ ॥
इन्द्रजित्तु तदा क्रुद्धो महातेजा महाबलः । वानराणां शरीराणि व्यधमद्रावणात्मजः ॥ ३३ ॥
शरेणैकेन च हरीन्नव पञ्च च सप्त च । बिभेद समरे क्रुद्धो राक्षसान्संप्रहर्षयन् ॥ ३४ ॥
स शरैः सूर्यसंकाशैः शातकुम्भविभूषणैः । वानरान्समरे वीरः प्रममाथ सुदुर्जयः ॥ ३५ ॥
ते भिन्नगात्राः समरे वानराः शरपीडिताः । पेतुर्मथितसंकल्पाः सुरैरिव महासुराः ॥ ३६ ॥
ते तपन्तमिवादित्यं घोरैर्बाणगभस्तिभिः । अभ्यधावन्त संक्रुद्धाः संयुगे वानरर्षभाः ॥ ३७ ॥
ततस्तु वानराः सर्वे भिन्नदेहा विचेतसः । व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥ ३८ ॥
रामस्यार्थे पराक्रम्य वानरास्त्यक्तजीविताः । नर्दन्तस्तेऽनिवृत्तास्तु समरे सशिलायुधाः ॥ ३९ ॥
ते द्रुमैः पर्वताग्रैश्च शिलाभिश्च प्लवंगमाः । अभ्यवर्षन्त समरे रावणिं समवस्थिताः ॥ ४० ॥

---

२७-२८ ] ति० टी०-तत इति । यागसमाप्त्यनन्तरम् । तद्यागभूमेरित्यर्थः ॥ २७ ॥ २८ ॥

रा० टी०-तत इति। राक्षसबलं युयुत्सया निर्ययौ॥२८॥

रा० टी०-ते इति। ते राक्षसाश्शरादिभिर्वानरान् जघ्नुः२९

२९-३० ] ति० टी०-निशाचरान्समीक्ष्य । आहेति शेषः । किमाह तदाह—हृष्टा इति ॥ २९ ॥ ३० ॥

रा०टी०-रावणिरिति। सुसंक्रुद्धो रावणिस्तान् युध्यमानान् निशाचरान्निरीक्ष्य हृष्टास्सन्तो भवन्तो युध्यन्त्वित्याहेतिशेषः३०

गो० टी०-रावणिस्त्विति । उवाचेति शेषः ॥ २८ ॥

रा० टी०-तत इति । ते इन्द्रजिता प्रोत्साहिता राक्षसाः वानरान् शरवृष्टिभिः अभ्यवर्षन् आच्छादयन् ॥ ३१ ॥

गो० टी०-तत इति । ततः तस्मात् रावणिवचनात् । द्वितीयस्ततः शब्दः पश्चाच्छब्दार्थः ॥ २९ ॥

३१ ] ति० टी०-रक्षोभिः संवृतो राक्षससैन्योपरि प्रत्यासन्नाकाशदेशे स्थितः ॥ ३१ ॥

रा० टी०-स इति । रक्षोभिस्संवृतः स इन्द्रजित् नालीकादिभिर्वानरान् विचकर्त ॥ ३२ ॥

गो० टी०-स त्विति । नालीकः विशालाग्रशरः। रक्षोभिः संवृतः रक्षोगणमध्यत उपरिस्थित इत्यर्थः । अन्यथा खेऽन्तर्दध इति पूर्वोक्तं विरुध्येत । विचकर्त हिंसितवान् ॥ ३० ॥

३२-३५ ] ति० टी०-अभ्यवर्षन्त । तत्सैन्यस्थित्यनुमितस्थितिकदिगुद्देशेनेति शेषः । अन्यथान्तर्धानगतत्वेनैतदसंभवात् ॥ ३२-३५ ॥

रा० टी०-ते इति । वध्यमाना राक्षसैर्निहन्यमानास्ते वानराः शैलपादपैः रावणिमभ्यवर्षन्त ॥ ३३ ॥

रा० टी०-इन्द्रजिदिति। इन्द्रजित् वानराणां शरीराणि व्यधमत् ॥ ३४ ॥

रा० टी०-शरेणेति । एकेन शरेण नवप्रभृतीन् हरीन् बिभेद ॥ ३५ ॥

रा०टी०-स इति। स इन्द्रजित् शरैर्वानरान् प्रममाथ३६

गो० टी०-त इति । रावणिं रावणिमुक्तायुधागमनप्रदेशम् ॥ ३१--३४ ॥

३६ ] ति० टी०-मथितसंकल्पाः संहृतयुद्धसंकल्पाः ॥३६॥

रा० टी०-ते इति । सुरैर्महासुरा इव शरेण पीडिता अपविद्धा अत एव भिन्नगात्राः अत एव मथितसंकल्पाः निवृत्तयुद्धेच्छाः वानराः पेतुः ॥ ३७ ॥

गो० टी०-त इति। मथितसंकल्पाः नाशितमनोरथाः३५-३७

३७-३८ ] ति० टी०-अभ्यधावन्त । तद्दिगभिमुखेनेति शेषः ॥ ३७ ॥ ३८ ॥

रा० टी०-प्रतपन्तमिति । बाणगभस्तिभिः बाणरूपकिरणैः प्रतपन्तमादित्यमिवेन्द्रजितं वानरर्षभाः अभ्यधावन्त ३८॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह—तत इति । भिन्ना विदीर्णा देहा येषामत एव रुधिरेण समुक्षिताः अत एव व्यथिताः अत एव विचेतसो वानराः विद्रवन्ति इतस्ततश्चलन्ति स्म ॥ ३९ ॥

३९-४० ] ति० टी०-त्यक्तजीवितास्त्यक्तजीवितेच्छाः । सशिलायुधाः शिलारूपायुधैः सहिताः ॥ ३९ ॥ ४० ॥

रा० टी०-रामस्येति । रामस्यार्थे रामप्रयोजनसिद्ध्यर्थं पराक्रम्य पराक्रमं कृत्वा त्यक्तजीविताः जीवनाशारहिताः अत एव निवृत्ताः इह लोकसुखेच्छारहिताः नर्दन्तो वानराः सशिलायुधाः शिलायुधविशिष्टाः बभूवुरिति शेषः ॥ ४० ॥

---

१ नर्दन्त इति गो. पाठः । २ चकर्त हेति गो. रा. पाठः । ३ अभ्यद्रवन्त सहसा रावणिं रणकर्कशमिति गो. पाठः । ४ चिच्छेदेति गो. पाठः । ५ भूषितैरिति गो. पाठः । ६ अभीति गो. पाठः ।

तं द्रुमाणां शिलानां च वर्षं प्राणहरं महत् । व्यापोहत महातेजा रावणिः समितिंजय ॥ ४१ ॥
ततः पावकसंकाशैः शरैराशीविषोपमैः । वानराणामनीकानि बिभेद समरे प्रभुः ॥ ४२ ॥
अष्टादशशरैस्तीक्ष्णैः स विद्ध्वा गन्धमादनम् । विव्याध नवभिश्चैव नलं दूरादवस्थितम् ॥ ४३ ॥
सप्तभिस्तु महावीर्यो मैन्दं मर्मविदारणैः । पञ्चभिर्विशिखैश्चैव गजं विव्याध संयुगे ॥ ४४ ॥
जाम्बवन्तं तु दशभिर्नीलं त्रिंशद्भिरेव च । सुग्रीवमृषभं चैव सोऽङ्गदं द्विविदं तथा ॥ ४५ ॥
घोरैर्दत्तवरैस्तीक्ष्णैर्निष्प्राणानकरोत्तदा । अन्यानपि तदा मुख्यान्वानरान्बहुभिः शरैः ॥ ४६ ॥
अर्दयामास संक्रुद्धः कालाग्निरिव मूर्च्छितः । स शरैः सूर्यसंकाशैः सुमुक्तैः शीघ्रगामिभिः ॥ ४७ ॥
वानराणामनीकानि निर्ममन्थ महारणे । आकुलां वानरीं सेनां शरजालेन पीडिताम् ॥ ४८ ॥
हृष्टः स परया प्रीत्या ददर्श क्षतजोक्षिताम् । पुनरेव महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९ ॥
संसृज्य बाणवर्षं च शस्त्रवर्षं च दारुणम् । ममर्द वानरानीकं पर्यितस्त्विन्द्रजिद्बली ॥ ५० ॥

स्वसैन्यमुत्सृज्य समेत्य तूर्णं महाहवे वानरवाहिनीषु ।
अदृश्यमानः शरजालमुग्रं ववर्ष नीलाम्बुधरो यथाम्बु ॥ ५१ ॥
ते शक्रजिद्बाणविशीर्णदेहा मायाहता विस्वरमुन्नदन्तः ।
रणे निपेतुर्हरयोऽद्रिकल्पा यथेन्द्रवज्राभिहता नगेन्द्राः ॥ ५२ ॥
ते केवलं संददृशुः शिताग्रान्बाणान्रणे वानरवाहिनीषु ।
मायाविगूढं च सुरेन्द्रशत्रुं न चात्र तं राक्षसमप्यपश्यन् ॥ ५३ ॥
ततः स रक्षोधिपतिर्महात्मा सर्वा दिशो बाणगणैः शिताग्रैः ।
प्रच्छादयामास रविप्रकाशैर्विदारयामास च वानरेन्द्रान् ॥ ५४ ॥
स शूलनिस्त्रिंशपरश्वधानि व्याविद्धदीप्तानलसंप्रभाणि ।
सविस्फुलिङ्गोज्ज्वलपावकानि ववर्ष तीव्रं प्लवगेन्द्रसैन्ये ॥ ५५ ॥

रा० टी०—ते इति । समवस्थिताः प्लवङ्गमाः द्रुमादिभिः रावणिमभ्यवर्षन्त ॥ ४१ ॥

गो० टी०—राभस्येति । त्यक्तजीविताः त्यक्तजीवितेच्छाः । अभिवृत्ताः अभिमुखं प्रवृत्ताः । तुरवधारणे ॥ ३८ ॥ ३९ ॥

४१-४५ ] ति० टी०—व्यपोहतापसारयति स्म ॥ ४१-४५ ॥

रा० टी०—तदिति । प्राणहरं द्रुमाणां शिलानां च महत्-वर्षम् रावणिर्व्यपोहत न्यवर्त्तयत ॥ ४२ ॥

रा० टी०—तत्प्रकारमाह—तत इत्यादिभिः । प्रभुः समर्थो रावणिः पावकसंकाशैः शरैः वानराणामनीकानि बिभेद ॥ ४३ ॥

गो० टी०—तदिति । व्यपोहत वारयामास ॥ ४० ॥ ४१ ॥

रा० टी०—भेदनप्रकारमाह—अष्टेत्यादिभिः । स रावणिः दूरात् अष्टादशशरैः गन्धमादनं विद्ध्वा नवभिः शरैः नलं विव्याध ४४

रा० टी०—सप्तभिरिति । महावीर्यो रावणिः मर्मविदारणैस्सप्तभिः विशिखैः मैन्दं पञ्चभिर्गजं च दशभिर्जाम्बवन्तं च त्रिंशद्भिर्नीलं च विव्याध । सार्द्धश्लोक एकान्वयी ॥ ४५ ॥

रा० टी०—सुग्रीवमिति । दत्तवरैः शरैः सुग्रीवप्रभृतीन् निष्प्राणान् प्राणरहितानिवाकरोत् ॥ ४६ ॥

गो० टी०—अष्टादशेत्यादिसार्धश्लोकत्रयमेकान्वयम् । दत्तवरैः वरदत्तैः ॥ ४२-४४ ॥

४६-५० ] ति० टी०—दत्तवरैर्वरलब्धैः ॥ ४६—५० ॥

रा० टी०—अन्यानिति । मूर्छितः प्रवृद्धः कालाग्निरिव संक्रुद्धो रावणिः अन्यानपि वानरान् बहुभिः शरैरर्दयामास ॥ ४७

रा० टी०—स इति । स रावणिः सुमुक्तैः शरैः वानराणामनीकानि निर्ममन्थ ॥ ४८ ॥

गो० टी०—अन्यानिति । मूर्छितः प्रवृद्धः ॥ ४५ ॥ ४६ ॥

रा० टी०—आकुलामिति । हृष्टः निर्मथनेन प्राप्तसंतोषः स रावणिः शरजालेन पीडितामत एव आकुलां वानरीं सेनां परया प्रीत्या ददर्श ॥ ४९ ॥

गो० टी०—आकुलामिति । परया प्रीत्या हृष्टः उद्धतः ४७

रा० टी०—पुनरिति । महातेजा इन्द्रजित् बाणवर्षं शस्त्रवर्षं च संसृज्य कृत्वा वानरानीकं पुनर्ममर्द । सार्धश्लोक एकान्वयी ॥ ५० ॥ ५१ ॥

गो० टी०—पुनरेवेत्यादिसार्धश्लोकमेकं वाक्यम् । खड्गादीनि शस्त्राणि । अत्र द्वितीयबलिशब्दो वरदानबलवत्तावाचकः । प्रथमो वीर्यवत्तावाचकः ॥ ४८ ॥

५१-५५ ] ति० टी०—स्वसैन्यं स्वसैन्योपरिभागमुत्सृज्य ॥ ५१—५५ ॥

१ मोहितामिति गो. पाठः । २ इन्द्रजित्त्वरित इति गो.पाठः । ३ त्विति गो.पाठः । ४ विषादयामासेति गो.पाठः । ५ संनिभानीति गो.रा.पाठः ।

ततो ज्वलनसंकाशैर्बाणैर्वानरयूथपाः । ताडिताः शक्रजिद्बाणैः प्रफुल्ला इव किंशुकाः॥५६ ॥
ते[2] न्योऽन्यमभिसर्पन्तो निनदन्तश्च विस्वरम् । राक्षसेन्द्रास्त्रनिर्भिन्ना निपेतुर्वानरर्षभाः
उद्वीक्षमाणा गगनं केचिन्नेत्रेषु ताडिताः । शरैर्विविशुरन्योन्यं पेतुश्च जगतीतले ॥ ५७ ॥
हनूमन्तं च सुग्रीवमङ्गदं गन्धमादनम् । जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ ५८ ॥
मैन्दं च द्विविदं नीलं गवाक्षं गैवयं तथा । केसरिं हरिलोमानं विद्युद्दंष्ट्रं च वानरम् ॥ ५९ ॥
सूर्याननं ज्योतिमुखं तथा दधिमुखं हरिम् । पावकाक्षं नलं चैव कुमुदं चैव वानरम् ॥ ६० ॥
प्रासैः शूलैः शितैर्बाणैरिन्द्रजिन्मन्त्रसंहितैः । विव्याध हरिशार्दूलान्सर्वांस्तान्राक्षसोत्तमः॥ ६१ ॥
स वै गदाभिर्हरियूथमुख्यान्निर्भिद्य बाणैस्तपनीयवर्णैः ।
ववर्ष रामं शरवृष्टिजालैः सलक्ष्मणं भास्कररश्मिकल्पैः ॥ ६२ ॥
स बाणवर्षैरभिवृष्यमाणो धारानिपातानिव तानचिन्त्य ।
समीक्षमाणः परमाद्भुतश्री रामस्ततो लक्ष्मणमित्युवाच ॥ ६३ ॥

---

रा० टी०–स्वसैन्यमिति । स्वसैन्यमुत्सृज्य त्यक्त्वा वानरवाहिनीषु समेत्य प्राप्य अदृश्यमानो रावणिः नीलाम्बुधरोऽम्बु जलमिव शरजालं ववर्ष ॥ ५२ ॥

रा० टी०–ते इति । मायया इन्द्रजित्कृतच्छलेन हता मोहिता अत एव शक्रजिद्बाणेन विशीर्णा देहा येषामत एव विस्वरमुच्चदन्तो हरयः इन्द्रवज्राभिहताः नगेन्द्रा इव निपेतुः५३॥

गो० टी०–स्वसैन्यमिति । स्वसैन्यं स्वसैन्योपरिभागम् ॥ ४९ ॥ ५० ॥

रा० टी०–ते इति । ते हरयः वानरवाहिनीषु बाणान् एव संददृशुः मायया विगूढं गुप्तं सुरेन्द्रशत्रुं तु नैवापश्यन् एकश्चस्त्वर्थे ॥ ५४ ॥

रा० टी०–तत इति । रक्षोधिपतिः रावणिः बाणगणैः सर्वा दिशः प्रच्छादयामास वानरेन्द्रान् विदारयामास च ५५॥

रा० टी०–स इति । व्याविद्धः प्रवृद्धः यो दीप्तानलः तस्य सन्निभानि सदृशानि तत्र हेतुः सविस्फुलिङ्गा विस्फुलिङ्गसहिताः उज्ज्वलपत्रका येषु तानि शूलादीनि प्लवगेन्द्रसैन्ये तीव्रं यथा भवति तथा ववर्ष ॥ ५६ ॥

गो० टी०–स इति । मायानिगूढम् अत एव आवृतम् अप्रकाशम् ॥ ५१-५३ ॥

५६ ] ति० टी०–प्रफुल्लाः किंशुका इव । आसन्निति शेषः ॥ ५६ ॥

रा० टी०–तत इति । ज्वलनसंकाशैः शक्रजिद्बाणैः ताडिताः वानरयूथपाः प्रफुल्लाः किंशुका इव बभूवुरिति शेषः५७॥

रा० टी०–ते इति । वानरर्षभा निपेतुः ॥ ५८ ॥

गो० टी०–ततो ज्वलनेत्यादि श्लोकद्वयमेकान्वयम् । शरैः तीक्ष्णैरित्यर्थः ॥ ५४ ॥ ५५ ॥

५७-६३ ] ति० टी०–शरैर्नेत्रेषु ताडिता इत्यन्वयः । अन्योन्यं विविशुरन्योन्यगात्रं समाश्लिष्य तस्थुः ॥ ५७-६३ ॥

रा० टी०–उद्वीक्षमाणा इति । गगनमुद्वीक्षमाणाः केचिद्वानरा नेत्रेषु ताडिताः बभूवुरिति शेषः अत एव अन्योन्यं विविशुः जगतीतले पेतुश्च ॥ ५९ ॥

गो० टी०–उद्वीक्षमाणा इति । विविशुरन्योन्यम् अन्योन्योपर्यालम्बनार्थं पेतुरित्यर्थः ॥ ५६ ॥

रा० टी०–हनुमन्तमिति । इन्द्रजित् मंत्रसहितैः अभिमंत्रितैः प्रासादिभिः हनुमदादीन् हरिशार्दूलान् विव्याध । श्लोकचतुष्टयमेकान्वयि ॥ ६०-६२ ॥

गो० टी०–हनुमन्तमित्यादि चतुःश्लोक्येकान्वया । केसरिमित्यार्षम् ॥ ५७-६० ॥

रा० टी०–स इति । स रावणिः गदाभिर्बाणैश्च हरियूथमुख्यान्निर्भिद्य शरवृष्टिजालैः रामं ववर्ष ॥ ६३ ॥

गो० टी०–स वा इति । गदाभिरित्येतत् पूर्वोक्तप्रासादीनामुपलक्षणम् ॥ ६१ ॥

रा० टी०–स इति । बाणवर्षैः अभिवृष्यमाणो रामः धारानिपातानिव तान् बाणनिपातान् अचिन्त्य तुच्छत्वेनापरिगणय्य समीक्षमाणः सन् लक्ष्मणमित्युवाच ॥ ६४ ॥

गो० टी०–स बाणेति । बाणवर्षैः बाणनिरन्तरपातैः अभिवर्ष्यमाणः अभितः पात्यमानः स रामः तान् बाणवर्षान् धारानिपातानिव लघूनचिन्त्य । बाणवर्षं तूष्णीकृत्येत्यर्थः । अत्र हेतुमाह—परमेति । अत्यन्ताश्चर्यकरवैर्यसमृद्धिः सन् लक्ष्मणं समीक्षमाणः स्वस्वभावावलम्बनेन अशक्यप्रतिक्रियां कर्तुमयुक्तमिङ्गितैरभिवीक्षमाणः सन्नित्युवाच ६२

---

१ शरैरिति गो. पाठः । २ इदं पद्यमधिकं गो. रा. पुस्तके । ३ शरैरिति गो. पाठः । ४ गजगोमुखाविति गो. पाठः । ५ पुङ्खैरिति गो. रा. पाठः । ६ संहतेति गो. पाठः । ७ वर्ष्यमाण इति गो. पाठः ।

असौ पुनर्लक्ष्मण राक्षसेन्द्रो महास्त्रमाश्रित्य सुरेन्द्रशत्रुः ।
निपातयित्वा हरिसैन्यमस्माञ्शितैः शरैरर्दयति प्रसक्तम् ॥ ६४ ॥
स्वयंभुवा दत्तवरो महात्मा समाहितोऽन्तर्हितभीमकायः ।
कथं नु शक्यो युधि नष्टदेहो निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ॥ ६५ ॥
मन्ये स्वयंभूर्भगवानचिन्त्यस्तस्यैतदस्त्रं प्रभवश्च योऽस्य ।
बाणावपातं त्वमिहाद्य धीमन्मया सहाव्यग्रमनाः सहस्व ॥ ६६ ॥
प्रच्छादयत्येष हि राक्षसेन्द्रः सर्वादिशः सायकवृष्टिजालैः ।
एतच्च सर्वं पतिताग्र्यशूरं न भ्राजते वानरराजसैन्यम् ॥ ६७ ॥
आवां तु दृष्ट्वा पतितौ विसंज्ञौ निवृत्तयुद्धौ हतहर्षरोषौ ।
ध्रुवं प्रवेक्ष्यत्यमरारिवासमसौ समासाद्य रणाग्र्यलक्ष्मीम् ॥ ६८ ॥

६४ ] ति० टी०–प्रसक्तं प्रकृतं प्राप्तं ब्रह्मास्त्रमाश्रित्यास्मानावामेवार्दयति ॥ ६४ ॥

रा० टी०–तदाकारमाह—असावित्यादिभिः । असौ रावणिः प्रसक्तं प्राप्तं महास्त्रं ब्रह्मास्त्रमाश्रित्य संयोज्य हरिसैन्यं निपातयित्वा निपात्य अस्मान् अर्दयति ॥ ६५ ॥

गो० टी०–असाविति । असौ ब्रह्मास्त्रं ब्रह्मास्त्रमन्त्रम् आश्रित्य । प्रहरन्निति शेषः ॥ ६३ ॥

६५ ] ति० टी०–नष्टदेहोऽदृष्टदेहः ॥ ६५ ॥

रा० टी०–ननु निहन्यतामित्यत आह—स्वयमिति । स्वयम्भुवा दत्तो वरो यस्मै अत एव महात्मा अतिप्रयत्नवान् अत एव नष्टोऽदृश्यो देहो यस्य स इन्द्रजित् युधि निहन्तुं कथं शक्यः एतेन कपटयोद्धॄणां हननं पलायनपरहननवत् दोषावहमिति रामाभिप्रायः सूचितः तेन वक्ष्यमाणविशसनसादृश्यप्राप्तिः स्वधर्मज्ञत्वपालनायैवेति ध्वनितम् ॥ ६६ ॥

गो० टी०–स्वयम्भुवेति । नष्टदेहः अदृष्टदेहः । तत्र हेतुः—अन्तर्हितभीमकाय इति ॥ ६४ ॥

६६ ] ति० टी०–नन्वदृष्टदेहस्यापि संहारसाधनैः शब्दवेध्यादिदिव्यास्त्रैर्हननं कार्यमिति चेन्न, भगवतो ब्रह्मण आज्ञाया मारुतिनेवास्माभिरपि पालनौचित्येनैतत्सहनस्यैवौचित्यादित्याशयेनाह—मन्ये इति । अचिन्त्योऽचिन्त्यवैभवः । योऽस्य सकलसंसारस्य प्रभवः स्रष्टा । चकारात्संहर्ता च । स्वयंभूर्हिरण्यगर्भोऽस्ति तस्य भगवत एतदस्त्रमेतदस्त्रवैभवमित्येव मन्ये जानामि, अतस्तत्प्रवृत्तमिमं बाणावपातं मया सहाव्यग्रमना भगवद्ध्यानैकचित्तो भूत्वा भगवद्ध्यानबलेन सहस्व । धीमन्निति हेतुगर्भविशेषणम् । यतस्त्वमपि ब्रह्मध्यानसंपन्नस्तस्मात्सहस्व । एवं हि भगवदनुग्रहादस्माकमपि जयो भविष्यति, नान्यथेत्यर्थः ॥ ६६ ॥

रा० टी०–मन्य इति । योऽस्य मनुवंशस्य प्रभवः उत्पत्तिकारणं स स्वयंभूः अचिंत्यः पराभवितुं चिंतयितुमशक्यः तस्य स्वयंभुव एव एतदस्त्रमतः बाणावपातं मया सह त्वं सहस्व इत्यहं मन्ये ॥ ६७ ॥

गो० टी०–तर्हि तत्र प्रतिक्रिया कर्तव्येत्यत्राह–मन्य इति । स्वयम्भूः अचिन्त्यः अचिन्त्यप्रभाव इति मन्ये । तत्र हेतुमाह–यस्येति । एतदस्त्रं यस्य यद्देवताकं यः अस्यास्त्रस्य प्रभवः उत्पत्तिकारणम् । सोऽचिन्त्यः । तदावाभ्याम् किं कर्तव्यमित्यत्राह—बाणेति । धीमन् आपत्सु न चलितव्यमिति ज्ञानिन् ॥ ६५ ॥ ६६ ॥

६७ ] ति० टी०–पतिताग्र्यशूरं पतिता भुवि पतिता अग्र्यशूराः प्रशस्तवीरा यस्मिंस्तत् ॥ ६७ ॥

श्रीरामचंद्रायनमः

रा० टी०–प्रच्छादयतीति । एष रावणिः प्रच्छादयति अत एव पतिता अग्र्यशूराः यस्मिन् तदेतत् वानरराजसैन्यं न भ्राजते ॥ ६८ ॥

६८ ] ति० टी०–एतत्सहनस्यैवैतदुपरमोपायत्वमपीत्याह—आवामिति । हतहर्षरोषावप्रकाशितहर्षरोषविकारौ, अतएव विसंज्ञाविवावां पतितौ दृष्ट्वा रणाग्र्यलक्ष्मीं समासाद्य ध्रुवमसावमरारिवासं लङ्कां प्रवेक्ष्यति । पश्चाद्यदस्माभिरनुष्ठेयं तत्करिष्याव इति शेषः । रणाग्र्येत्यादिना समूलनाशाशक्तिः सूचिता ॥ ६८ ॥

रा० टी०–सहने फलमाह—आवामिति । असौ रावणिः आवां विसंज्ञौ दृष्ट्वा ज्ञात्वा रणाग्र्यलक्ष्मीं विजयसंपत्तिमासाद्य मनसा प्राप्य अमरारिवासं लंकां प्रवेक्ष्यति ॥ ६९ ॥

गो० टी०–आवामिति । गतरोषहर्षौ मूर्छिताविति यावत् । अमरारिवासं लङ्काम् । रणाग्र्यलक्ष्मीं विजयलक्ष्मीम् । अग्रपदेन रणमूललक्ष्मीर्न ग्रहीतुं शक्येत्युच्यते । एतेन मूलघातः कर्तुं न शक्यत इत्युच्यते ॥ ६७ ॥

१ महास्त्रमिति गो. रा. पाठः । २ उग्रमिति गो. रा. पाठः । ३ अस्मानिति गो. रा. पाठः । ४ प्रसक्त इति गो. पाठः । ५ यस्येति गो. पाठः । ६ पातानिति गो. पाठः । ७ छादयतीति गो. रा. पाठः । ८ गतरोषहर्षाविति गो. पाठः ।

ततस्तु ताविन्द्रजितोऽस्त्रजालैर्बभूवतुस्तत्र तदा विशस्तौ ।
स चापि तौ तत्र विषादयित्वा ननाद हर्षाद्युधि राक्षसेन्द्रः ॥ ६९ ॥
ततस्तदा वानरसैन्यमेवं रामं च संख्ये सह लक्ष्मणेन ।
विषादयित्वा सहसा विवेश पुरीं दशग्रीवभुजाभिगुप्ताम् ॥
संस्तूयमानः स तु यातुधानैः पित्रे च सर्वं हृषितोऽभ्युवाच ॥ ७० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## चतुःसप्ततितमः सर्गः ।

इन्द्रजित्प्रयुक्तब्रह्मास्त्रबलेन मूर्छितं कपिबलं द्रष्टुकामौ मारुतिविभीषणावागतौ प्रेक्ष्य जाम्बवान् हिमाचलस्थौषधिगिरेर्मृतसंजीवनीविशल्यकरण्याद्यौषधीरानेतुं मारुतिं प्रार्थयत ततोऽपारं वारिधिं लङ्घयित्वौषधिपर्वतमेवानीय सर्वान्विशल्याञ्जीवप्राहांश्च विधायाञ्जनेयः पूर्वस्थाने पुनर्गिरिं निधाय रामपार्श्वमागतस्तेन यावद्रामबलमतीव हृष्टम् ।

तयोस्तदासादितयो रणाग्रे मुमोह सैन्यं हरियूथपानाम् ।
सुग्रीवनीलाङ्गदजाम्बवन्तो न चापि किंचित्प्रतिपेदिरे ते ॥ १ ॥
ततो विषण्णं समवेक्ष्य सर्वं विभीषणो बुद्धिमतां वरिष्ठः ।
उवाच शाखामृगराजवीरानाश्वासयन्नप्रतिमैर्वचोभिः ॥ २ ॥
मा भैष्ट नास्त्यत्र विषादकालो यदार्यपुत्रौ ह्यवशौ विषण्णौ ।
स्वयंभुवो वाक्यमथोद्वहन्तौ यत्सादिताविन्द्रजितास्त्रजालैः ॥ ३ ॥

६९-७० ] ति० टी०-विशस्तौ पीडितौ ॥ ६९-७० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

रा० टी०-तत इति । ततः रामोक्त्यनन्तरं तौ रामलक्ष्मणौ इन्द्रजितोऽस्त्रजालैः अविशस्तौ हिंसितसदृशौ बभूवतुः रावणिस्तु तौ रामलक्ष्मणौ विषादयित्वा विपात्य हर्षात् ननाद ॥ ७० ॥

रा० टी०-तत इति । स रावणिः वानरसैन्यं रामं च निषादयित्वा निपात्य पुरीं लंकां सहसा विवेश अत एव यातुधानैः संस्तूयमानः अत एव हृषितश्च सन् पित्रे रावणाय सर्वमभ्युवाच ॥ ७१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

गो० टी०-ततस्त्विति । विशस्तौ पीडितौ तौ पतितौ विदर्शयित्वा दृष्ट्वा ननाद ॥ ६८ ॥ ६९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

१ ] ति० टी०-तयो राघवयोः रणाग्रे रणमुखे सादितयोर्निश्चेष्टीकृतयोः ॥ १ ॥

रा० टी०-इन्द्रजिद्गमनानंतरकालिकं वानरसैन्यवृत्तान्तमाह-तयोरित्यादिभिः । रणाग्रे तयो रामलक्ष्मणयोरासादितयोः दुःखितयोरिव सतोर्हरियूथपानां सैन्यं मुमोह अत एव सुग्रीवादयः किञ्चिन्न प्रतिपेदिरे कर्तुं समर्थाः बभूवुः आसादितशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ १ ॥

गो० टी०-अथ ब्रह्मास्त्रबन्धविमुक्तिश्चतुःसप्ततौ—तयोरित्यादि । सादितयोः अवसादितयोः । किंचिन्न प्रतिपेदिरे मूढा बभूवुरित्यर्थः ॥ १ ॥ २ ॥

२ ] ति० टी०-अप्रतिमैरत्यन्तं कालोचितैः ॥ २ ॥

रा० टी०-तत इति । बुद्धिमतां वरिष्ठो विभीषणः सैन्यं विषण्णं समवेक्ष्य अप्रतिमैः उपमारहितैः वचोभिः शाखामृगराजवीरान् आश्वासयन्सन् उवाच ॥ २ ॥

३ ] ति० टी०-तदेवाह—मा भैष्टेति । अत्रास्यामवस्थायां विषादकालो विषादावसरो नास्ति । कुतस्तत्राह—यदिति । यद्यस्मात्स्वयंभुवो वाक्यमुद्वहन्तौ तदाज्ञां परिपालयन्तौ, अत एव विवशावस्त्रप्रयोगप्रवृत्तिरहितौ । अथानन्तरं तस्मादेवेन्द्रजिता सादिताविति यत्तस्माद्विषण्णावेव, न तु प्राणपीडावन्तौ, अतो माभैष्ट । यद्वा एताववशौ विषण्णाविति यत्तत्र विषये माभैष्ट । एतयोर्विषण्णयोरस्मान्को वा रक्षिष्यतीति शत्रुभ्यो भयं मा भूत् । अत्रैतद्विषये विषादकालो ना-

१ इन्द्राजिदस्त्रेति गो. रा. पाठः । २ विदर्शयित्वेति गो. पाठः । ३ विषादयित्वेति गो. पाठः । ४ इदमर्धं गो. पुस्तके नास्ति । ५ पुङ्गवा नामिति गो. पाठः । ६ इन्द्रजिदस्त्रेति गो. रा. पाठः ।

तस्मै तु दत्तं परमास्त्रमेतत्स्वयंभुवा ब्राह्मममोघवीर्यम् ।
तन्मानयन्तौ युधि राजपुत्रौ निपातितौ कोऽत्र विषादकालः ॥ ४ ॥
ब्राह्ममस्त्रं ततो धीमान्मानयित्वा तु मारुतिः । विभीषणवचः श्रुत्वा हनूमानिदमब्रवीत् ॥ ५ ॥
अस्मिन्नस्त्रहते सैन्ये वानराणां तरस्विनाम् । यो यो धारयते प्राणांस्तं तमाश्वासयावहे ॥ ६ ॥
तावुभौ युगपद्वीरौ हनूमद्राक्षसोत्तमौ । उल्काहस्तौ तदा रात्रौ रणशीर्षे विचेरतुः ॥ ७ ॥
भिन्नलाङ्गूलहस्तोरुपादाङ्गुलिशिरोधरैः । स्रवद्भिः क्षतजं गात्रैः प्रस्रवद्भिः समन्ततः ॥ ८ ॥
पतितैः पर्वताकारैर्वानरैरभिसंवृताम् । शस्त्रैश्च पतितैर्दीप्तैर्ददृशाते वसुंधराम् ॥ ९ ॥
सुग्रीवमङ्गदं नीलं शरभं गन्धमादनम् । जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ १० ॥
मैन्दं नलं ज्योतिर्मुखं द्विविदं चापि वानरम् । विभीषणो हनूमांश्च ददृशाते हतान्रणे ॥ ११ ॥

स्ति । यत्तस्मात्स्वयंभुवो वाक्यं मन्त्ररूपमुद्वहन्तौ मानयन्ताविन्द्रजिदस्त्रजालैः सादितौ सादिताविव, यतः ब्रह्मसंमाननार्थं स्वयमेव पतिताविति माभैष्टेत्यर्थः ॥ ३ ॥

रा० टी०—तदाकारमाह—मेत्यादिभिः । यत् यस्माद्धेतोः स्वयंभुवो वाक्यमुद्वहन्तौ प्रतिपालयन्तौ यदार्यपुत्रौ प्रयत्नाभावविशिष्टदशरथसुतौ रामलक्ष्मणौ इन्द्रजिता अस्त्रजालैः सादितौ आच्छादितौ अत एव विषण्णौ उदासीनत्वेन प्रतीयमानौ अत एव अवशौ अवशसदृशौ स्त इति शेषः अतः विषादकालः खेदसमयो न एतेन युष्मदौदासीन्यज्ञाप्यरामलक्ष्मणौदासीन्यज्ञाने रिपूणां हर्षातिशयो भविष्यतीति सूचितम् तेन रिपवन्तराण्यप्यागमिष्यन्तीति ध्वनितम् ॥ ३ ॥

गो० टी०—मा भैष्टेति । आर्यपुत्रौ अवशौ विषण्णाविति यत् अत्र विषादकालो नास्ति विषादहेतुकालो नास्ति । कुतः । स्वयम्भुवो वाक्यम् उद्वहन्तौ मानयन्तौ इन्द्रजिदस्त्रजालैः सादितौ सादिताविव वर्तमानाविति यद् तत् ततः मा भैष्टेत्यर्थः ॥ ३ ॥

४ ] ति० टी०—राघवाभ्यां क्षन्तुं योग्यमस्त्रं रावणेरस्तीत्याह—तस्मै इति । कोऽत्र विषादकालः, न कोऽपि । क्षणानन्तरमुत्थास्यत इति शेषः ॥ ४ ॥

रा० टी०—तदेव भंग्यन्तरेणाह—तस्मादिति । यत् यस्माद्धेतोः तस्मै इन्द्रजिते स्वयंभुवा ब्राह्मं परमास्त्रं दत्तं तत्तस्मादस्त्रं मानयन्तौ स्वकीयत्वेन सत्कुर्वन्तौ राजपुत्रौ यदि निपातितौ निपातितसदृशौ व्यापाररहिताविन्यर्थः तर्हि अत्रास्मिन्समये विषादकालः कः नास्तीत्यर्थः मानयन्तावित्यनेन रामस्य स्वकीयपरिपालकत्वं स्वाभाविको गुणः व्यक्तः यद्यपि रावणादिष्वपि स्वकीयत्वं तुल्यं तथापि तन्निहननादि तेषां दोषनिर्णय एवेति न विरोधः ॥ ४ ॥

गो० टी०—उक्तमेवार्थं विशदयति—तस्मा इति ॥ ४ ॥

५ ] ति० टी०—मारुतिस्तदा विभीषणवचः श्रुत्वा तद्ब्राह्ममस्त्रं मानयित्वा सर्वेणाप्यनुसरणीयमेवेति पूजयित्वा विभीषणं प्रतीदमब्रवीत् ॥ ५ ॥

रा० टी०—ब्राह्ममिति । मारुतिः ब्राह्ममस्त्रं मानयित्वा मुहूर्तमात्रं तदधीनतया स्थित्वा विभीषणवचः श्रुत्वा च इदमब्रवीत् ॥ ५ ॥

गो० टी०—ब्राह्ममिति । मानयित्वा मुहूर्तमात्रं ब्रह्मास्त्रपरवशः स्थित्वा ॥ ५–७ ॥

६ ] ति० टी०—अस्त्रहते ब्रह्मास्त्रहते । आश्वासयावहे ; विचार्येति शेषः ॥ ६ ॥

रा० टी०—तदाकारमाह—एतस्मिन्निति । निहते एतस्मिन्सैन्ये वानराणां मध्ये यो यो वानरः प्राणान्धारयते तंतमाश्वासयावहे ॥ ६ ॥

७ ] ति० टी०—तदा रात्रावित्यनेन सप्तम्यां रात्रावस्त्रप्रयोग इति सूचितम् ॥ ७ ॥

रा० टी०—ताविति । तौ हनुमद्राक्षसोत्तमौ युगपदेककालावच्छेदेन उल्काहस्तौ सन्तौ रणशीर्षे विचेरतुः ॥ ७ ॥

८–१० ] ति० टी०—प्रस्रवद्भिः । मूत्रमिति शेषः ॥ ८–१० ॥

११ ] ति० टी०—ददृशाते हतान्रणे । हतप्रायानित्यर्थः ॥ ११ ॥

रा० टी०—भिन्नेति । भिन्नाः लाङ्गूलादयो येषां तैः अत एव प्रस्रवद्भिश्चलैर्गिरिभिरिव क्षतजं रुधिरं स्रवद्भिः अत एव पतितैः पर्वताकारैः वानरैः पतितैः शस्त्रैश्च अभिसंवृतां वसुंधरां ददृशाते हनुमद्विभीषणाविति शेषः श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०—भिन्नलाङ्गूलेत्यादिश्लोकद्वयमेकान्वयम् । स्रवद्भिः मूत्रयद्भिः ॥ ८ ॥ ९ ॥

रा० टी०—सुग्रीवमिति । वि[भीष]णो हनूमांश्च सुग्रीवादीन् हतान् ददृशाते श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—सुग्रीवमित्यादिश्लोकद्वयमेकान्वयम् । आहुक इति कश्चिन्नृपः । गवाक्षं च सुषेणं च वेगदर्शिनमाहुकमिति पाठः । हतान् हतप्रायान् । प्रहतानिति वा ॥ १० ॥ ११ ॥

१ वेगमिति गो. पाठः । २ तमथेति गो. पाठः । ३ वहे इति गो. पाठः । ४ ततस्ततः गो. इनाचलैरिति रा. पाठः । ५ संकुलामिति गो. पाठः । ६ [..]ेति गो. पाठः । ७ आहुकमिति गो. पाठः । ८ पनसं तथेति गो. रा. पाठः । ९ एतांश्चान्यांस्ततो वीरानिति गो. पाठः ।

सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् । अह्नः पञ्चमशेषेण वल्लभेन स्वयम्भुवः ॥ १२ ॥
सागरौघनिभं भीमं दृष्ट्वा बाणार्दितं बलम् । मार्गते जाम्बवन्तं च हनूमान्सविभीषणः ॥ १३ ॥
स्वभावजरया युक्तं वृद्धं शरशतैश्चितम् । प्रजापतिसुतं वीरं शाम्यन्तमिव पावकम् ॥ १४ ॥
दृष्ट्वा समभिसंक्रम्य पौलस्त्यो वाक्यमब्रवीत् । कश्चिदार्यशरैस्तीक्ष्णैर्न प्राणा ध्वंसितास्तव ॥ १५ ॥
विभीषणवचः श्रुत्वा जाम्बवानृक्षपुंगवः । कृच्छ्रादभ्युद्गिरन्वाक्यमिदं वचनमब्रवीत् ॥ १६ ॥
नैर्ऋतेन्द्र महावीर्य स्वरेण त्वाभिलक्षये । विद्धगात्रः शितैर्बाणैर्न त्वां पश्यामि चक्षुषा ॥ १७ ॥
अञ्जना सुप्रजा येन मातरिश्वा च सुव्रत । हनूमान्वानरश्रेष्ठः प्राणान्धारयते क्वचित् ॥ १८ ॥
श्रुत्वा जाम्बवतो वाक्यमुवाचेदं विभीषणः । आर्यपुत्रावतिक्रम्य कस्मात्पृच्छसि मारुतिम् ॥ १९ ॥
नैव राजनि सुग्रीवे नाङ्गदे नापि राघवे । आर्य संदर्शितः स्नेहो यथा वायुसुते परः ॥ २० ॥
विभीषणवचः श्रुत्वा जाम्बवान्वाक्यमब्रवीत् । शृणु नैर्ऋतशार्दूल यस्मात्पृच्छामि मारुतिम् ॥ २१ ॥
अस्मिञ्जीवति वीरे तु हतमप्यहतं बलम् । हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयम् ॥ २२ ॥

---

१२ ] ति० टी०—पञ्चमश्चासौ शेषो भागश्च तेन प्रातःसंगवमध्याह्नापराह्णसायाह्नेषु षट्घटिकात्मकेषु पञ्चमेन सायाह्नेनेत्यर्थः । चतुर्भिर्भागैश्च ब्रह्मास्त्रसाधनमिति बोध्यम् । सप्तषष्टिकोटिवानरहनने सामर्थ्यमाह—वल्लभेन स्वयंभुव इति । स्वयंभूवल्लभेन ब्रह्मास्त्रेणापरिमितप्राणिहननसमर्थेन हतमिति भगवद्वैभवमेवैतदिति भावः ॥ १२ ॥

रा० टी०—सप्तेति । अह्नः पञ्चमशेषेण अवशिष्टपंचमांशेन घटिकाषट्कात्मकान्तिमदिनभागेनेत्यर्थः स्वयंभुवो वल्लभेन अस्त्रेण वानराणां सप्तषष्टिः कोट्यः हताः भिन्नवचनत्वमार्षं किं च सप्तकोट्यः षष्टिश्च हताः इति वैयधिकरण्येनान्वयः ॥ १२ ॥

गो० टी०—सप्तषष्टिरिति । वानराणां यूथपवानराणामित्यर्थः । सुग्रीवाङ्गदादिभिः सह पाठात् । अह्नः पञ्चमशेषेण पञ्चमभागेन प्रातःसङ्गवमध्याह्नापराह्णसायाह्नसंज्ञाः षण्नाडिकात्मकाः अह्नः पञ्च भागाः सन्ति । तत्र पञ्चमेन सायाह्नसंज्ञेन नाडीषट्केनेत्यर्थः । स्वयम्भुवो वल्लभेन इन्द्रजिता ब्रह्मास्त्रेण वा ॥ १२—१३ ॥

१३ ] ति० टी०—मार्गते । विचिनोतीत्यर्थः । तस्य बहुज्ञत्वादुपायप्रश्नार्थमिति भावः ॥ १३ ॥

रा० टी०—सागरेति । सविभीषणो हनुमान् बलं बाणार्दितं दृष्ट्वा जाम्बवन्तं मार्गते एतेन जाम्बवतः सर्वगुणसंपन्नत्वं सूचितं तेन तद्दर्शनेन कल्याणं भविष्यत्येवेति तयोर्निश्चयस्सूचितः ॥ १३ ॥

१४-१५ ] ति० टी०—स्वभावजरया युक्तं वयःस्वभावजरया वलीपलितादिना युक्तम् ॥ १४ ॥ १५ ॥

रा० टी०—स्वभावेति । स्वभावजरया स्वभावेन स्वाभाविकवैयोगिना जरया च युक्तं वृद्धं ज्ञानेनाधिकं शरैः चितं व्याप्तमत एव शाम्यन्तं पावकमिव प्रजापतिसुतं जाम्बवन्तं दृष्ट्वा समभिक्रम्य तत्समीपं प्राप्य पौलस्त्यो विभीषणः हे आर्य ते प्राणाः ध्वंसितास्तु न इति वाक्यमब्रवीत् श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

१६-१७ ] ति० टी०—कृच्छ्राद्वाक्यं प्रत्युक्तः वाक्यमभ्युद्गिरन्नुच्चारयन् ॥ १६ ॥ १७ ॥

रा० टी०—विभीषणेति । जाम्बवान् विभीषणवचः श्रुत्वा कृच्छ्रात् वाक्यं वक्तव्यमभ्युद्गिरन् विचारयन्सन् इदमब्रवीत् ॥ १६ ॥

रा० टी०—तदाकारमाह—नैर्ऋतेत्यादिभिः । हे नैर्ऋतेन्द्र बाणैर्विद्धगात्रोऽहं स्वरेणैव त्वामभिलक्ष्यं जानामि चक्षुषा तु त्वां न पश्यामि ॥ १७ ॥

गो० टी०—विभीषणेति । वाक्यं वक्तव्यं प्रश्नोपयोगिवचनम् ॥ १६ ॥ १७ ॥

१८ ] ति० टी०—येनाञ्जना देवी सुप्रजाः सुपुत्रवती ॥ १८ ॥

रा० टी०—अञ्जनेति । येन अञ्जना सुप्रजाः शोभनपुत्रवती मातरिश्वा वायुरपि सुप्रजाः स हनुमान् प्राणान् धारयते क्वचिदिति प्रश्नार्थकम् ॥ १८ ॥

गो० टी०—अञ्जनेति । धारयत इत्यत्र काकुः । किं धारयत इत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—आर्यपुत्रौ राघवौ ॥ १९ ॥

रा० टी०—श्रुत्वेति । विभीषण इदमुवाच तदाकारमाह आर्यस्य दशरथस्य पुत्रौ अतिक्रम्य अपृष्ट्वा मारुतिमेव कस्मात्पृच्छसि ॥ १९ ॥

गो० टी०—श्रुत्वेत्यादिश्लोकद्वयमेकं वाक्यम् ॥ १९—२३ ॥

२०-२२ ] ति० टी०—आर्य जाम्बवन् ॥ २०—२२ ॥

रा० टी०—तदेव भङ्ग्यंतरेणाह—आर्येति । हे आर्य यथा परः स्नेहः वायुसुते संदर्शितः तथा राजादौ नैव संदर्शितः ॥ २० ॥

---

१ स इति गो. स्मेति रा. पाठः । २ ह्युपसंगम्येति गो. पाठः । ३ प्राणा नेति गो. पाठः । ४ पार्थिव इति रा. पाठः । ५ पीड्यमान इति गो. पाठः । ६ नैर्ऋतेति गो. रा. पाठः । ७ तस्मिन्निति गो. पाठः । ८ वयं हता इति गो. पाठः ।

धरते मारुतिस्तात मारुतप्रतिमो यदि । वैश्वानरसमो वीर्ये जीविताशा ततो भवेत् ॥ २३ ॥
ततो वृद्धमुपागम्य नियमेनाभ्यवादयत् । गृह्य जाम्बवतः पादौ हनूमान्मारुतात्मजः ॥ २४ ॥
श्रुत्वा हनूमतो वाक्यं तदा विव्यथितेन्द्रियः । पुनर्जातमिवात्मानं मन्यते प्लवगोत्तमः ॥ २५ ॥
ततोऽब्रवीन्महातेजा हनूमन्तं स जाम्बवान् । आगच्छ हरिशार्दूल वानरांस्त्रातुमर्हसि ॥ २६ ॥
नान्यो विक्रमपर्याप्तस्त्वमेषां परमः सखा । त्वत्पराक्रमकालोऽयं नान्यं पश्यामि कंचन ॥ २७ ॥
ऋक्षवानरवीराणामनीकानि प्रहर्षय । विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ॥२८ ॥
गत्वा परममध्वानमुपर्युपरि सागरम् । हिमवन्तं नगश्रेष्ठं हनूमन्गन्तुमर्हसि ॥ २९ ॥
ततः काञ्चनमत्युग्रमृषभं पर्वतोत्तमम् । कैलासशिखरं चात्र द्रक्ष्यस्यरिनिषूदन ॥ ३० ॥
तयोः शिखरयोर्मध्ये प्रदीप्तमतुलप्रभम् । सर्वौषधियुतं वीर द्रक्ष्यस्योषधिपर्वतम् ॥ ३१ ॥
तस्य वानरशार्दूल चतस्रो मूर्ध्नि संभवाः । द्रक्ष्यस्योषधयो दीप्ता दीपयन्तीर्दिशो दश ॥ ३२ ॥
मृतसंजीवनीं चैव विशल्यकरणीमपि । सुवर्णकरणीं चैव संधानीं च महौषधीम् ॥ ३३ ॥

---

रा० टी०—विभीषणेति । जाम्बवानब्रवीत् तदाकारमाह यस्मान्मारुतिं पृच्छामि तत्कारणं शृणु ॥ २१ ॥

रा० टी०—कारणमेवाह—अस्मिन्निति । अस्मिन् हनुमति जीवति सति हतमपि बलमहतं मन्य इति शेषः हनुमति ह्युज्झितप्राणे सति जीवन्तोपि वयं मृताः ॥ २२ ॥

२३-२४ ] ति० टी०—जीविताशा ततो भवेत् । जीवनहेतोस्तत एव लाभसंभवादिति भावः ॥ २३ ॥ २४ ॥

रा० टी०—धरत इति । मारुतिर्यदि धरते प्राणानिति शेषः ततस्तदा जीविताशा भवेत् ॥ २३ ॥

रा० टी०—तत इति । ततः जाम्बवद्वचनश्रवणानन्तरं हनुमान् वृद्धं जाम्बवन्तमुपागम्य जाम्बवतः पादौ गृह्य गृहीत्वा अभ्यवादयत् ॥ २४ ॥

गो० टी०—तत इति । मारुतात्मजः हनुमान् । वृद्धं जाम्बवन्तम् उपागम्य । नियमेन श्रोत्रहस्तसंस्पर्शव्यत्यस्तहस्तत्वादिरूपेण सह । जाम्बवतः पादौ गृह्य गृहीत्वा अभ्यवादयत् । स्वनामोच्चारणपूर्वकं युगपत् पादावगृह्णादित्यर्थः ॥ २४ ॥

२५-२६ ] ति० टी०—विव्यथितेन्द्रियो विशेषेण व्यथितानीन्द्रियाणि यस्य सः ॥ २५ ॥ २६ ॥

रा० टी०—श्रुत्वेति । हनुमतः वाक्यं श्रुत्वा विव्यथितेन्द्रियो जाम्बवान् आत्मानं पुनर्जातमिव मन्यते अमन्यत ॥ २५ ॥

गो० टी०—श्रुत्वेति । वाक्यं हनुमानहमस्मीत्यभिवादनवाक्यम् । तथा व्यथितेन्द्रियोऽपि हनुमतो वाक्यं श्रुत्वा ऋक्षपुङ्गवः जाम्बवान् आत्मानं पुनर्जातं मन्यते स्मेति संबन्धः ॥ २५ ॥ २६ ॥

रा० टी०—तत इति । जाम्बवानब्रवीत् तदाकारमाह वानरांस्त्रातुमर्हसि ॥ २६ ॥

गो० टी०—आगच्छेति । विक्रमपर्याप्तः पर्याप्तविक्रमः । विक्रमपूर्ण इति यावत् ॥ २७ ॥

२७ ] ति० टी०—विक्रमपर्याप्तः पर्याप्तविक्रमः ॥ २७ ॥

रा० टी०—नेति । विक्रमेण पर्याप्तः त्वादृशपरिपूर्णः अन्यो न एषां परमः सखा च त्वमसीति शेषः अतः अयं त्वत्पराक्रमकालः ॥ २७ ॥

गो० टी०—त्वदिति । अन्यं पराक्रमितारम् ॥ २८ ॥

२८ ] ति० टी०—सादितौ पीडितौ ॥ २८ ॥

रा० टी०—ऋक्षेति । सादितौ बाणैराच्छादितौ रामलक्ष्मणौ विशल्यौ कुरु अत एव अनीकानि प्रहर्षय ॥ २८ ॥

२९ ] ति० टी०—सागरमित्युपरियोगे षष्ठ्यर्थे द्वितीया २९

रा० टी०—विशल्यकरणोपायमाह—गत्वेति । सागरमुपर्युपरि विद्यमानं परमं पामरैरगम्यत्वेन श्रेष्ठमध्वानं गत्वा हिमवन्तं गन्तुमर्हसि गच्छेत्यर्थः ॥ २९ ॥

गो० टी०—गत्वेति । परमं दीर्घम् । उपर्युपरि सागरं सागरस्य समीपोपरिप्रदेशे । "उपर्यध्यधसः सामीप्ये" इति सामीप्ये द्विर्वचनम् । "धिगुपर्यादिषु त्रिषु द्वितीया" इति द्वितीयेति द्वितीया ॥ २९ ॥

३० ] ति० टी०—काञ्चनं स्वर्णमयम् । अत्युग्रसिंहादिभिर्दुष्प्रवेशम् । ऋषभं तदाख्यम् ॥ ३० ॥

रा० टी०—तत इति । ततो हिमवद्गमनानन्तरं काञ्चनं स्वर्णमयमृषभं तदभिधं पर्वतोत्तमं पर्वतस्य हिमवतः ऋषभसञ्ज्ञकपर्वतान्तरस्य वा उत्तमं शिखरमित्यर्थः द्रक्ष्यसि अत्र ऋषभशिखरे स्थितस्त्वं कैलासशिखरं द्रक्ष्यसि ॥ ३० ॥

गो० टी०—तत इति । ऋषभम् ऋषभाख्यम् । पर्वतोत्तमं शिखरमित्यर्थः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०—तयोः शिखरयोः । ऋषभकैलासशिखरयोरित्यर्थः ॥ ३१ ॥

रा० टी०—तयोरिति । तयोः प्रसिद्धयोः शिखरयोः ऋषभकैलासशृङ्गयोः मध्ये औषधिपर्वतं द्रक्ष्यसि ॥ ३१ ॥

३२] ति० टी०—ओषधयो दीप्ताः । दीप्ता ओषधीरित्यर्थः ३२

३३ ] ति० टी०—सुवर्णकरणीं स्वर्णसमानवर्णस्य देहाद

---

१ युध्यीति रा. पाठः । २ तथापीति गो. पाठः । ३ स्मर्क्षपुङ्गव इति गो. रा. पाठः । ४ उच्चामिति गो. रा. पाठः । ५ दीपयन्त्य इति गो. पाठः । ६ सावर्ण्यकरणीं चैव सन्धानकरणीं तथेति गो. पाठः ।

ताः सर्वा हनुमन्गृह्य क्षिप्रमागन्तुमर्हसि । आश्वासय हरीन्प्राणैर्योज्य गन्धवहात्मज ॥ ३४ ॥
श्रुत्वा जाम्बवतो वाक्यं हनूमान्मारुतात्मजः । आपूर्यत बलोद्धर्षैर्वायुवेगैरिवार्णवः ॥ ३५ ॥
स पर्वततटाग्रस्थः पीडयन्पर्वतोत्तमम् । हनूमान्दृश्यते वीरो द्वितीय इव पर्वतः ॥ ३६ ॥
हरिपादविनिर्भग्नो निषसाद स पर्वतः । न शशाक तदात्मानं वोढुं भृशनिपीडितः ॥ ३७ ॥
तस्य पेतुर्नगा भूमौ हरिवेगाच्च जज्वलुः । शृङ्गाणि च व्यकीर्यन्त पीडितस्य हनूमता ॥ ३८ ॥
तस्मिन्संपीड्यमाने तु भग्नद्रुमशिलातले । न शेकुर्वानराः स्थातुं घूर्णमाने नगोत्तमे ॥ ३९ ॥
सा घूर्णितमहाद्वारा प्रभग्नगृहगोपुरा । लङ्का त्रासाकुला रात्रौ प्रनृत्येवाभवत्तदा ॥ ४० ॥
पृथिवीधरसंकाशो निपीड्य पृथिवीधरम् । पृथिवीं क्षोभयामास सार्णवां मारुतात्मजः ॥ ४१ ॥

---

करणीम् । 'सवर्ण—' इति पाठे पूर्ववर्णसमानवर्णकरणीमित्यर्थः । संधानीं छिन्नशिरःकबन्धयोरपि यथापूर्वं नाडीसंधानकरणीम् ॥ ३३ ॥

रा० टी०–तस्येति । तस्यौषधिपर्वतस्य मूर्ध्नि सम्भवाः दश दिशो दीपयन्तीः मृतसञ्जीवनीप्रभृतीः चतस्रः औषधयः ओषधीः द्रक्ष्यसि । औषधिनामार्थस्तु मृतानां संजीवनीं स्पर्शमात्रेण संजीवनकर्त्रीं विशल्यकरणीं स्पर्शमात्रेण बाणराहित्यसंपादिकाम् सुवर्णकरणीं शोभनवर्णसंपादिकां संधानकरणीं छिन्नशिरःप्रभृतीनां यथापूर्वं संयोजिकामिति श्लोकद्वयमेकान्वयि ॥ ३२ ॥ ३३ ॥

गो० टी०–तस्येत्यादिश्लोकत्रयमेकान्वयम् । ओषधयः ओषधीः दीपयन्त्यः दीपयन्तीः व्यत्ययेन द्वितीयार्थे प्रथमा । मृतं सञ्जीवयतीति मृतसञ्जीवनी। जीवनानन्तरं संचारक्षमतार्थं विशल्यं करोतीति विशल्यकरणी । विशल्ये कृते त्वचः सन्धानं करोतीति सन्धानकरणी । ततो व्रणकृतवैवर्ण्यं विहाय प्रदेशान्तरसावर्ण्यं करोतीति सावर्ण्यकरणी ॥ ३२–३४ ॥

३४ ] ति० टी०–प्राणैर्योजयित्वाश्वासयेत्यन्वयः ॥ ३४ ॥

रा० टी०–ता इति । ता ओषधीः गृह्य गृहीत्वा प्रतिगन्तुमागन्तुमर्हसि तत्प्रयोजनमाह हरीन् प्राणैर्योज्य योजयित्वा आश्वासय ॥ ३४ ॥

३५ ] ति० टी०–बलोद्धर्षैर्बलोद्रेकैः ॥ ३५ ॥

रा० टी०–श्रुत्वेति । हनूमान् जाम्बवतो वाक्यं श्रुत्वा बलोद्धर्षैः अतिबलैः आपूर्यत ॥ ३५ ॥

गो० टी०–श्रुत्वेति । बलोद्धर्षैः बलोत्कर्षैः । आपूर्यत पूर्णोऽभूत् ॥ ३५ ॥

३६ ] ति० टी०–पर्वततटाग्रस्थस्त्रिकूटशिखरस्थः ॥ ३६ ॥

रा० टी०–स इति । पर्वततटाग्रस्थः त्रिकूटशिखरे स्थितः हनूमान् पर्वतोत्तमं त्रिकूटं पीडयन् सन् द्वितीयः पर्वत इव दृश्यते ॥ ३६ ॥

गो० टी०–स इति । पर्वततटाग्रस्थः त्रिकूटशिखरस्थः पर्वतोत्तमं त्रिकूटम् ॥ ३६ ॥

३७ ] ति० टी०–हरिपादविनिर्भग्नस्तत्पादभाराक्रान्तः । निषसाद निविष्टोऽभूत् ॥ ३७ ॥

रा० टी०–हरीति । हरेर्हनूमतः पादाभ्यां विनिर्भग्नः प्रमर्दितः अत एव भृशपीडितः पर्वतः आत्मानं स्वशरीरं वोढुं संधारयितुं न शशाक ॥ ३७ ॥

गो० टी०–हरीति । हरिः हनुमान् ॥ ३७ ॥

३८ ] ति० टी०–हरिवेगाद्धनूमत उत्पतनवेगात् । नगा वृक्षाः पेतुः परस्परसंघर्षजाग्निवशतो जज्वलुश्च ॥ ३८ ॥

रा० टी०–तस्येति । हनूमता पीडितस्य तस्य पर्वतस्य नगाः वृक्षाः हरिवेगात् हनुमद्वेगजनितप्रकम्पनाद्धेतोः भूमौ पेतुः शृङ्गाणि च व्यकीर्यन्त अत एव जज्वलुः परस्परसंघर्षजनितवह्निना दिदीपिरे ॥ ३८ ॥

गो० टी०–तस्येति । तस्य त्रिकूटस्य । नगाः वृक्षाः । हरिवेगात् हनुमतो हिमवदुत्तरप्रदेशस्थौषधिपर्वतपर्यन्तगमनोचितशक्त्यास्थानवेगात् । जज्वलुश्च । वेगोद्धर्षजवह्निनेत्यर्थः । पीडितस्य पर्वतस्येति शेषः ॥ ३८ ॥

३९ ] ति० टी०–तस्मिंस्त्रिकूटपर्वते घूर्णमाने नगोत्तमे वानराः स्थातुं न शेकुः । त्रिकूटस्यैव युद्धभूमित्वात्तच्छिखरस्यैव च लङ्कात्वात् ॥ ३९ ॥

रा० टी०–तस्मिन्निति । भग्नानि द्रुमाः शिलातलानि यस्य तस्मिन् अत एव संपीड्यमाने अत एव घूर्णमाने नगोत्तमे सति वानराः स्थातुं न शेकुः ॥ ३९ ॥

गो० टी०–तस्मिन्निति । न शेकुरिति । त्रिकूटतटस्य युद्धरङ्गत्वात् घूर्णमाने कम्पमाने ॥ ३९ ॥

४०–४१ ] ति० टी०–अत एव सा घूर्णितेत्यनेन लङ्काक्षोभ उच्यते । प्रनृत्येव प्रकर्षनृत्येव ॥ ४० ॥ ४१ ॥

रा० टी०–सेति । आघूर्णितानि महाद्वाराणि यस्याः अत एव प्रभग्नगृहगोपुरा अत एव त्रासैः त्रस्तैः राक्षसैराकुला व्याप्ता लंका प्रनृत्या प्रकर्षनृत्यविशिष्टा इवाभवत् ॥ ४० ॥

रा० टी०–पृथिवीति । पृथिवीधरसंकाशः पर्वतसदृशो मारुतात्मजः पृथिवीं क्षोभयामास ॥ ४१ ॥

गो० टी०–सेति । प्रनृत्तेवाभवत् त्रिकूटाग्रनिर्मितत्वात्तस्याः ॥ ४० ॥ ४१ ॥

---

१ हरिपुङ्गव इति गो. रा. पाठः । २ व्यशीर्यन्तेति गो. पाठः । ३ नृत्ता इति गो. पाठः ।

[ आरुरोह तदा तस्माद्धरिर्मलयपर्वतम् । मेरुमन्दरसंकाशं नानाप्रस्रवणाकुलम् ॥
नानाद्रुमलताकीर्णं विकासिकमलोत्पलम् । सेवितं देवगन्धर्वैः षष्टियोजनमुच्छ्रितम् ॥
विद्याधरैर्मुनिगणैरप्सरोभिर्निषेवितम् । नानामृगगणाकीर्णं बहुकन्दरशोभितम् ॥
सर्वानाकुलयंस्तत्र यक्षगन्धर्वकिन्नरान् । हनूमान् मेघसंकाशो ववृधे मारुतात्मजः ॥ ]
पद्भ्यां तु शैलमाविध्य वडवामुखवन्मुखम् । विवृत्योग्रं ननादोच्चैस्त्रासयन्रजनीचरान् ॥ ४२ ॥
तस्य नानद्यमानस्य श्रुत्वा निनदमुत्तमम् । लङ्कास्था राक्षसव्याघ्रा न शेकुः स्पन्दितुं क्वचित् ॥ ४३ ॥
नमस्कृत्वा समुद्राय मारुतिर्भीमविक्रमः । राघवार्थे परं कर्म समीहत परंतपः ॥ ४४ ॥

स पुच्छमुद्यम्य भुजंगकल्पं विनम्य पृष्ठं श्रवणे निकुच्य ।
विवृत्य वक्त्रं वडवामुखाभमापुप्लुवे व्योम्नि स चण्डवेगः ॥ ४५ ॥
स वृक्षखण्डांस्तरसा जहार शैलाञ्शिलाः प्राकृतवानरांश्च ।
बाहूरुवेगोद्धतसंप्रणुन्नास्ते क्षीणवेगाः सलिले निपेतुः ॥ ४६ ॥
स तौ प्रसार्योरगभोगकल्पौ भुजौ भुजंगारिनिकाशवीर्यः ।
जगाम शैलं नगराजमग्र्यं दिशः प्रकर्षन्निव वायुसूनुः ॥ ४७ ॥
स सागरं घूर्णितवीचिमालं तदम्भसा भ्रामितसर्वसत्त्वम् ।
समीक्षमाणः सहसा जगाम चक्रं यथा विष्णुकराग्रमुक्तम् ॥ ४८ ॥

---

गो० टी०—आरुरोहेत्यादिश्लोकत्रयमेकान्वयम् । मलयपर्वतमित्यत्र लङ्का मलय उच्यते ॥ ४२–४९ ॥

४२–४३ ] ति० टी०—वडवामुखवज्ज्वलयमानं मुखं विवृत्य व्यादाय राक्षसांस्त्रासयन्नुच्चैर्ननाद । यावदोषध्यानयनं तावद्रक्षोनिर्गमो मा भूदिति तेषां त्रासार्थं ननादेति भावः ॥ ४२ ॥ ४३ ॥

रा० टी०—पद्भ्यामिति । पद्भ्यां शैलमापीड्य मुखं वडवामुखवत् विवृत्य व्यादाय उच्चैर्ननाद ॥ ४२ ॥

रा० टी०—तस्येति । राक्षसव्याघ्राः राक्षसश्रेष्ठाः स्पन्दितुं किंचिच्चलितुमपि न शेकुः ॥ ४३ ॥

गो० टी०—पद्भ्यामिति । त्रासयन् त्रासनार्थं ननाद । "लक्षणहेत्वोः०" इति शतृप्रत्ययः । स्वागमनपर्यन्तं राक्षसनिर्गमनं मा भूदिति तेषां त्रासनार्थं ननादेति भावः । इवशब्दो वाक्यालंकारे ॥ ४६ ॥ ४७ ॥

४४ ] ति० टी०—समीहत चिन्तितवान् ॥ ४४ ॥

रा० टी०—नम इति । मारुतिः परं कर्म समीहत समैहत अकरोत् ॥ ४४ ॥

गो० टी०—नमस्कृत्वाथ रामायेति । अयं प्रारीप्सितकर्मसमाप्तये सम्यगिष्टदेवतानमस्कारः ॥ ४८ ॥

४५ ] ति० टी०—स पुच्छमित्येवेन जातिवर्णनम् ॥ ४९ ॥

रा० टी०—स्वेति । स हनूमान् स्वपुच्छमुद्यम्य उत्थाप्य पृष्ठं विनम्य श्रवणे निकुच्य मुखमाकुच्य विवृत्य व्यादाय आपुप्लुवे ॥ ४९ ॥

गो० टी०—स पुच्छमिति । पुच्छोद्यमनेनोत्साहातिरेक उक्तः । पृष्ठविनमनेनाकाशगमनानुकूलप्राणवायुनिरोध उक्तः । श्रवणनिकुञ्चनेन बलोद्दीपनम् । मुखव्यादानेनाभिनिवेशः ॥ ४९ ॥

४६ ] ति० टी०—प्राकृतवानरांस्त्रिकूटवने नित्यत्रासान्प्राकृतवानरान् । ते क्षीणवेगा अनुगतवृक्षखण्डादयः ॥ ४६ ॥

रा० टी०—स इति । स हनूमान् तरसा वेगेन वृक्षखण्डादीन् जहार तत्र प्राकृतवानराः तत्र नित्यनिवासिनः बाहूरुवेगोद्धतेन बाहूरूद्धतवेगेन संप्रणुन्नाः दूरं प्रक्षिप्ता अत एव क्षीणवेगाः ते वृक्षखण्डप्रभृतयः सलिले निपेतुः ॥ ४६ ॥

गो० टी०—स इति । प्राकृतवानरान् त्रिकूटवननित्यवासिनः । आजहार उज्जहार । अस्यैवानुवादो बाह्विति । बाहूरुवेगोद्धतसंप्रणुन्नाः बाहूर्वोर्वेगेन उद्धताः उन्मूलिताः संप्रणुन्नाः दूरं प्रेरिताः । क्षीणवेगाः क्रमेण क्षीणवेगाः सन्तः ॥ ५० ॥

४७–४८ ] ति० टी०—भुजंगारिर्गरुडः ॥ ४७ ॥ ४८ ॥

रा० टी०—स इति । भुजङ्गारिनिकाशं गरुडवीर्यसदृशं वीर्यं यस्य स वायुसुतः भुजौ प्रसार्य नगराजमत एव अग्र्यं मुख्यं मेरुं तत्सदृशं हिमवन्तमित्यर्थः दिशः प्रकर्षन् प्रक्षिपन्निव जगाम ॥ ४७ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह स इति । स हनूमान् तदम्भसा सह घूर्णिता वीचिमाला यस्मिन् अत एव भ्रामितानि सर्वसत्वानि जलजन्तवो यस्मिन् तं सागरं समीक्षमाणः सन् विष्णुकराग्रात् मुक्तं चक्रमिव जगाम ॥ ४८ ॥ ४९ ॥

गो० टी०—स ताविति । मेरुं कैलासपार्श्ववर्तिनम् ।

---

१ इयं चतुःश्लोक्यधिका गो. पुस्तके। २ व्योमनीति गो.पा.। ३ षण्डानिति गो.रा.पा.। ४ मेरुमिति गो.रा.पा.। ५ तथाम्भसेति रा.तदा मृशमिति गो.पा.।

स पर्वतान्पक्षिगणान्सरांसि नदीस्तटाकानि पुरोत्तमानि ।
स्फीताञ्जनांस्तानपि संप्रवीक्ष्य जगाम वेगात्पितृतुल्यवेगः ॥ ४९ ॥
आदित्यपथमाश्रित्य जगाम स गतश्रमः । हनूमांस्त्वरितो वीरः पितुस्तुल्यपराक्रमः ॥ ५० ॥
जवेन महता युक्तो मारुतिर्वातरंहसा । जगाम हरिशार्दूलो दिशः शब्देन नादयन् ॥ ५१ ॥
स्मरञ्जाम्बवतो वाक्यं मारुतिर्भीमविक्रमः । ददर्श सहसा चापि हिमवन्तं महाकपिः ॥ ५२ ॥
नानाप्रस्रवणोपेतं बहुकंदरनिर्झरम् । श्वेताभ्रचयसंकाशैः शिखरैश्चारुदर्शनैः ॥
शोभितं विविधैर्वृक्षैरगमत्पर्वतोत्तमम् ॥ ५३ ॥
स तं समासाद्य महानगेन्द्रमतिप्रवृद्धोत्तमहेमशृङ्गम् ।
ददर्श पुण्यानि महाश्रमाणि सुरर्षिसङ्घोत्तमसेवितानि ॥ ५४ ॥
स ब्रह्मकोशं रजतालयं च शक्रालयं रुद्रशरप्रमोक्षम् ।
हयाननं ब्रह्मशिरश्च दीप्तं ददर्श वैवस्वतकिंकरांश्च ॥ ५५ ॥
वह्न्यालयं वैश्रवणालयं च सूर्यप्रभं सूर्यनिबन्धनं च ।
ब्रह्मालयं शंकरकार्मुकं च ददर्श नाभिं च वसुंधरायाः ॥ ५६ ॥

---

अस्ति ह्यन्यो हिमवदन्तर्वर्ती मेरुः । यद्वा मेरुं मेरूपलक्षितदिशि स्थितं नगराजं हिमवन्तम् । यद्वा मेरुमुद्दिश्य जगाम । उत्तरां दिशमुद्दिश्य जगामेत्यर्थः । यद्वा मेरुं मेरुसदृशम् । प्रकर्षन् कम्पयन् ॥ ५१ ॥ ५२ ॥

४९-५१ ] ति० टी०-जनाञ्जनपदान् ॥ ४९—५१ ॥

गो० टी०-स पर्वतानिति । जनान्तान् जनपदान् ५३

रा० टी०-स हनुमान् पर्वतादीनपि संप्रवीक्ष्य जगाम

कुटिः-आदित्येति । पितुस्तुल्यपराक्रमो हनुमान् आदित्यपथमाश्रित्य जगाम ॥ ५० ॥

रा० टी०-जवेनेति । मारुतिः शब्देन दिशो नादयन्सन् जगाम ॥ ५१ ॥

गो० टी०-आदित्यपथमिति । पूर्वसमुपर्युपरिसागरमित्युक्त्या आदित्यपथमाकाशम् ॥ ५४ ॥ ५२ ॥

५२-५३ ] ति० टी०-स्मरञ्जाम्बवतो वाक्यम् । तद्वाक्यस्मरणं वेगवशादोषध्यादिपर्वतमतीत्य गमननिवृत्त्यर्थम् ५२।५३

रा० टी०-स्मरन्निति । महाकपिः हिमवन्तं ददर्श॥५२॥

रा० टी०-नानेति । शिखरादिभिः शोभितमत एव चारुदर्शनं यस्य तं पर्वतोत्तमम् अगमत् सार्धश्लोक एकान्वयी॥५३॥

गो० टी०-स्मरन् जाम्बवत इति । जाम्बवद्वाक्यस्मरणम् औषधिपर्वतमतीत्य वेगातिशयेनान्यत्र गमननिवृत्त्यर्थम् । वातरंहसा । उपलक्षित इति शेषः ॥ ५६—५८ ॥

५४ ] ति० टी०-सुरर्षिसङ्घोत्तमेति । उत्तमसुरर्षिसङ्घैरित्यर्थः ॥ ५४ ॥

रा० टी०-स इति । अतिप्रवृद्धानि उत्तमहेमशृङ्गाणि यस्य तं हिमवन्तं समासाद्य महाश्रमाणि ददर्श ॥ ५४ ॥

५५ ] ति० टी०-तद्गृहदेवतादिस्थानानां नामान्याह—स ब्रह्मेति । ब्रह्मकोशं भगवतो हिरण्यगर्भस्य स्थानम् 'ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्ये' इत्यादि श्रुतिसिद्धम् । रजतालयं हिरण्यगर्भापरमूर्तेः रजतनाभेः स्थानम् । रुद्रशरप्रमोक्षं यत्र स्थाने स्थित्वा रुद्रस्त्रिपुरसंहाराय शरं मुमोच तत्स्थानम् । हयाननं भगवतो हयग्रीवस्य स्थानम् । ब्रह्मशिरो ब्रह्मास्त्रदेवता तत्स्थानम् । तत्र तत्र नित्यसंनिहितान्वैवस्वतकिंकरांश्च ददर्श ॥ ५५ ॥

रा० टी०-स इति । स हनुमान् ब्रह्मणो हिरण्यगर्भस्य कोशं ब्रह्मकोशं प्रपद्ये इत्यादिश्रुतिप्रसिद्धं स्थानविशेषं रजतस्य हिरण्यगर्भापरमूर्तेः रजतनाभेः आलयं स्थानं च रुद्रशरस्य प्रमोक्षः त्रिपुरवधाय प्रमोचनं यस्मिन् तत् हयाननं हयग्रीवस्थानं च ब्रह्मशिरः ब्रह्मास्त्रदेवालयं च ददर्श ॥ ५५ ॥

गो० टी०-दृष्टानामाश्रमाणां नामान्यनुक्रामति—स ब्रह्मकोशमित्यादिना । ब्रह्मणश्चतुर्मुखस्य कोशो गृहम् । कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः । गृहे देहे पुस्तकौघ पेट्यामसिपिधानके, इति रत्नमाला । रजतालयं कैलासं । शक्रस्य इन्द्रस्य । स्थानम् आश्रमस्थानम् । रुद्रशराः प्रमोक्ष्यन्ते लीलार्थं यस्मिन् तद्रुद्रशरप्रमोक्षं स्थानम् । हयाननं हयग्रीवाराधनस्थानम् । ब्रह्मशिरः रुद्रनिकृत्तब्रह्मशिरःप्रक्षेपस्थानम् । वैवस्वतकिङ्करान् विवस्वत्संबन्धिकिङ्करान् । ग्रामण्यादीन् मासान्तपरिचारकान् विश्रमार्थमत्र स्थितान् ॥ ५५ ॥

५६ ] ति० टी०-वह्न्यालयमिति । सूर्यनिबन्धनं सूर्याणां यत्र स्थाने निबन्धनं समावेशस्तत्स्थानम्, अत एव तत्सूर्यप्रभम् । ब्रह्मालयं चतुर्मुखब्रह्मस्थानम्, शंकरकार्मुकं पिनाकाख्यराजस्थानम्, वसुंधराया नाभिं भूनाभिसंज्ञं प्राजापत्यं स्थानम् ॥ ५६ ॥

---

१ क्रम इति गो. पाठः । २ पितृतुल्येति गो. पाठः । ३ मारुतो यथेति गो. रा. पाठः । ४ वातरंहसेति गो. पाठः । ५ नन्देति रा. पाठः । ६ वीरेति गो. पाठः । ७ वज्रालयमिति गो. पाठः । ८ ब्रह्मासनमिति गो. रा. पाठः ।

कैलासमुग्रं हिमवच्छिलां च तं [1]वै वृषं काञ्चनशैलमग्र्यम् ।
प्रदीप्तसर्वौषधिसंप्रदीप्तं ददर्श सर्वौषधिपर्वतेन्द्रम् ॥ ५७ ॥
स तं समीक्ष्यानलराशिदीप्तं विसिष्मिये वासवदूतसूनुः ।
आप्लुत्य तं चौषधिपर्वतेन्द्रं तत्रौषधीनां विचयं चकार ॥ ५८ ॥
स योजनसहस्राणि समतीत्य महाकपिः । दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मजः ॥ ५९ ॥
महौषध्यस्ततः सर्वास्तस्मिन्पर्वतसत्तमे । विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम् ॥ ६० ॥
स ता महात्मा हनुमानपश्यंश्चुकोप रोषाच्च भृशं ननाद ।
अमृष्यमाणोऽग्निसमानचक्षुर्महीधरेन्द्रं तमुवाच वाक्यम् ॥ ६१ ॥
किमेतदेवं सुविनिश्चितं ते यद्राघवेनासि कृतानुकम्पः ।
पश्याद्य मद्बाहुबलाभिभूतो विकीर्णमात्मानमथो नगेन्द्र ॥ ६२ ॥

रा० टी०—वन्हीति । वन्ह्यालयप्रभृतीन् ददर्श तत्र सूर्यनिबंधनं सकलसूर्यसमावेशस्थानम् ॥ ६६ ॥

गो० टी०—वज्रालयमिति । इन्द्राय ब्रह्मणा वज्रप्रदानस्थानम् । सूर्यप्रभमिति वैश्रवणालयविशेषणम् । सूर्यनिबन्धनं छायादेवीप्रीतये विश्वकर्मणा शाणारोपणाय सूर्यनिबन्धनस्थानम् । ब्रह्मासनं देवगणसंदर्शनाय कृतं ब्रह्मणः सिंहासनम् । ब्रह्मणामृषीणामासनं स्थानं वा । शङ्करकार्मुकं तत्स्थानमित्यर्थः । नाभिं पातालप्रवेशरन्ध्रम् ॥ ६० ॥

५७ ] ति० टी०—हिमवच्छिलां भगवतो रुद्रस्य तपःसमाधिपीठम् । तं वै वृषं जाम्बवदुपदिष्टम् ॥ ६७ ॥

रा० टी०—कैलासेति । अग्र्यं श्रेष्ठं काञ्चनः शैलः शिलासमूहो यस्मिन् तं कैलासम् उग्रम् शिवं च हिमवच्छिलाम् शम्भोस्तपस्समाधिपीठं च वृषं शम्भोर्यानं च प्रदीप्तसर्वौषधिभिः संप्रदीप्तं प्रकाशितं सर्वौषधिपर्वतेन्द्रं च ददर्श ॥ ५७ ॥

गो० टी०—ब्रह्मादिस्थानेषु रजतालयमिति परिगणितमपि जाम्बवदुपदिष्टप्रकारेण दर्शनाय पुनराह—कैलासमिति । हिमवच्छिला नाम कैलासपार्श्वे कश्चिच्छिलाविशेषः । ऋषभम् ऋषभाख्यमौषधिपर्वतम् । काञ्चनशैलं पूर्वं मेरुमित्युक्तम् । संदीप्तसर्वौषधिसंप्रदीप्तम् संदीप्ताभिः रात्रौ ज्वलन्तीभिः सर्वाभिः औषधीभिः तृणज्योतिर्भिः संप्रदीप्तं सम्यक्प्रकाशमानम् । सर्वौषधिपर्वतेन्द्रं मृतसञ्जीवन्यादिसर्वौषधियुक्तपर्वतेन्द्रं ददर्श ॥ ६१ ॥

५८ ] ति० टी०—वासवस्य मेघस्वरूपिणो देवराजस्य दूतः प्रेरकः । वायुरित्यर्थः । विचयं मार्गणम् ॥ ५८ ॥

रा० टी०—स इति । वासव इन्द्रोऽपि दूतः हनुमदुद्देश्यकवज्रनिपातानन्तरकाले परितापितो येन किंच वासवस्य दुःखं परितापं तनोति स वायुरित्यर्थः तस्य सूनुर्हनुमान् अनलराशिवत् दीप्तम् तं जाम्बवदुपदिष्टमौषधिपर्वतेन्द्रं समीक्ष्य तमाप्लुत्य च तत्र पर्वते ओषधीनां मृतसञ्जीविन्यादीनां विचयमन्वेषणं चकार ॥ ५८ ॥

गो० टी०—स इति । वासवदूतः वायुः वासवादेशेन मेघप्रेरकत्वात् । अत एवाभिषेकसमये इन्द्रेण प्रेरितो हारं रामायोपाहरत् । विचयम् अन्वेषणम् ॥ ६२ ॥

५९-६१ ] ति० टी०—योजनसहस्राणि । सहस्रशब्दोऽनेकोपलक्षणम् ॥ ५९—६१ ॥

रा० टी०—स इति । महाकपिः स हनुमान् योजनसहस्राणि अनेकसहस्रयोजनानि समतीत्य गत्वा शैलं व्यचरत् ५९

गो० टी०—स इति । अतीत्य अतीत्यापीत्यर्थः । अनेन श्रमरहितत्वमुक्तम् ॥ ६३ ॥

रा० टी०—महौषध्य इति । आयान्तं ततस्तं हनुमन्तं विज्ञाय ताः पूर्वोक्ता महौषध्यः पर्वतसत्तमे अदर्शनं जग्मुः ६० ॥

गो० टी०—महौषध्य इति । ततः तस्य हनुमतः अदर्शनम् ॥ ६४ ॥

रा० टी०—स इति । ता ओषधीरपश्यन् अत एव अमृष्यमाणः तदपराधमसहमानो महात्मा हनुमान् चुकोप रोषात् कोपात् एव ननाद च महीधरेन्द्रमुवाच च ॥ ६१ ॥

गो० टी०—स ता इति । ताः औषधीः ॥ ६५ ॥

६२ ] ति० टी०—किमेतदिति । यद्राघवे कृतानुकम्पो नासि । एवं प्रकारमेतदौदासीन्यं किंबलादित्यर्थः । स्वबलादिति चेत्तत्राह—पश्येति ॥ ६२ ॥

रा० टी०—तदाकारमाह—किमिति । यत् यस्माद्धेतोः त्वं राघवे कृतानुकम्पो नासि तस्माद्धेतोः ते सुविनिश्चितं किम् कुत्सितम् अथो अत एव मद्बाहुबलाभिभूतस्त्वमात्मानं विकीर्णं विहिंसितं पश्य ॥ ६२ ॥

गो० टी०—किमिति । राघवे कृतानुकम्पो नासीति यत् एतत् एवं सुविनिश्चितं यदि तर्हि आत्मानमथो विकीर्णं पश्येति संबन्धः ॥ ६२ ॥

१ तवर्षभमिति गो. पाठः । २ समिति गो. पाठः । ३ रश्मीति गो. पाठः । ४ कोपादिति गो. पाठः । ५ निकाशेति गो. पाठः

स तस्य शृङ्गं सनगं सनागं सकाञ्चनं धातुसहस्रजुष्टम् ।
विकीर्णकूटं ज्वलिताग्रसानुं प्रगृह्य वेगात्सहसोन्ममाथ ॥ ६३ ॥
स तं समुत्पाट्य खमुत्पपात वित्रास्य लोकान्ससुरान्सुरेन्द्रान् ।
संस्तूयमानः खचरैरनेकैर्जगाम वेगाद्गरुडोग्रवेगः ॥ ६४ ॥
स भास्कराध्वानमनुप्रपन्नस्तं भास्कराभं शिखरं प्रगृह्य ।
बभौ तदा भास्करसंनिकाशो रवेः समीपे प्रतिभास्कराभः ॥ ६५ ॥
स तेन शैलेन भृशं रराज शैलोपमो गन्धवहात्मजस्तु ।
सहस्रधारेण सपावकेन चक्रेण खे विष्णुरिवार्पितेन ॥ ६६ ॥
तं वानराः प्रेक्ष्य तदा विनेदुः स तानपि प्रेक्ष्य मुदा ननाद ।
तेषां समुत्कृष्टरवं निशम्य लङ्कालया भीमतरं विनेदुः ॥ ६७ ॥
ततो महात्मा निपपात तस्मिञ्शैलोत्तमे वानरसैन्यमध्ये ।
हर्युत्तमेभ्यः शिरसाभिवाद्य विभीषणं तत्र च सस्वजे सः ॥ ६८ ॥
तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् ।
बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥ ६९ ॥
सर्वे विशल्या विरुजाः क्षणेन हरिप्रवीराश्च हताश्च ये स्युः ।
गन्धेन तासां प्रवरौषधानां सुप्ता निशान्तेष्विव संप्रबुद्धाः ॥ ७० ॥

६३ ] ति० टी०—सनागं सगजम् । उन्ममाथोत्पाटयामास ॥ ६३ ॥

रा० टी०—स इति । स हनूमान् सनगं गिरिसहितं सनागम् गजैः सहितं सकाञ्चनं काञ्चनखनिसहितं धातुसहस्रैर्जुष्टं ज्वलितः प्रकाशविशिष्टः अग्रसानुः सानोरग्रभागो यस्य तत् तस्य नगेन्द्रस्य शृङ्गं विकीर्णकूटं यथा भवति तथा वेगादुन्ममाथ उत्पाटयामास ॥ ६३ ॥

गो० टी०—एतच्छ्लोकानन्तरमित्युक्त्वेत्यध्याहार्यम् । स इति । सनागं सगजम् । उन्ममाथ उत्पाटयामास ॥६७॥६८॥

६४ ] ति० टी०—अतः—स तमिति ॥ ६४ ॥

रा० टी०—स इति । स हनूमान् शैलं समुत्पाट्य सुरासुरेन्द्रसहितान् लोकान् वित्रास्य खमुत्पपात अनेकैः खचरैर्देवादिभिः संस्तूयमानः सन् जगाम च ॥ ६४ ॥

६५ ] ति० टी०—तम् । तदित्यर्थः । प्रतिभास्कराभः प्रतिसूर्यसदृशः । रवेः समीपे इत्यनेन सूर्योदयोत्तरमेतदानयनमिति लभ्यते ॥ ६६ ॥

रा० टी०—स इति । भास्कराभं शिखरं प्रगृह्य भास्कराध्वानमनुप्रपन्नः प्राप्तः भास्करसंनिकाशः सूर्यसदृशो हनुमान् प्रतिभास्करा सर्वप्रकाशिका आभा यस्य सः सूर्य इव रवेः समीपे बभौ ॥ ६६ ॥

गो० टी०—स इति । भास्कराध्वानम् अन्तरिक्षम् । भास्कराभशिखरग्रहणात् स्वयं भास्करसंनिकाशत्वाच्च सूर्यसमीपस्थः प्रतिसूर्य इव बभावित्यर्थः ॥ ६९ ॥

६६–७० ] ति० टी०—सपावकेन साग्निज्वालेन । अर्पितेन स्वकरार्पितेन ॥ ६६—७० ॥

रा० टी०—स इति । तेन पूर्वोक्तेन शैलेनोपलक्षितो गन्धवहात्मजो हनुमान् अर्पितेन गृहीतेन सहस्रधारेण चक्रेण विष्णुरिव रराज ॥ ६६ ॥

गो० टी०—स तेनेति । सहस्रधारेण । अर्पितेन हस्तेऽर्पितेन । सपावकेन अग्निज्वालावता चक्रेण विष्णुरिव रराज ॥ ७० ॥

रा० टी०—तमिति । तं गृहीतौषधिशैलं हनूमन्तं वानराः प्रेक्ष्य विनेदुः स हनूमानपि तान् कृतविनादान् वानरान् प्रेक्ष्य ननाद तेषां हनुमदादीनां समुत्कृष्टरवम् उच्चारितशब्दं निशम्य श्रुत्वा लंकालया राक्षसा भीमतरं विनेदुः ॥ ६७ ॥

गो० टी०—तं वानरा इत्यनेन दूरादेव गन्धाघ्राणेन सर्वे जीविता इति गम्यते ॥ ७१ ॥

रा० टी०—तत इति । ततः स्वनकरणानन्तरं स हनूमान् शैलोत्तमे विद्यमाने वानरसैन्यमध्ये निपपात तत्र तस्मिन्समये हर्युत्तमेभ्यः श्रेष्ठवानरेभ्यः शिरसा अभिवाद्य विभीषणं सस्वजे ॥ ६८ ॥

रा० टी०—ताविति । मानुषराजपुत्रौ तौ रामलक्ष्मणौ महौषधीनां गन्धमाघ्राय विशल्यौ बाणसमूहस्पर्शरहितौ बभूवतुः तदा तस्मिन्कालेऽन्ये मूर्छादिप्राप्ताः हरिप्रवीरा उत्तस्थुः ॥६९॥

१ कूटज्वलितेति गो. पाठः । २ विनेदुरुच्चैरिति गो. पाठः । ३ समुदुष्टेति गो. पाठः । ४ स इति गो. पाठः । ५ चेति गो. पाठः । ६ विरुज इति गो. रा. पाठः । ७ निहता इति गो. रा. पाठः ।

यदा प्रभृति लङ्कायां युध्यन्ते हरिराक्षसाः। तदाप्रभृति मानार्थमाज्ञया रावणस्य च ॥ ७१ ॥
ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः। हता हतास्तु क्षिप्यन्ते सर्व एव तु सागरे ॥ ७२ ॥
ततो हरिर्गन्धवहात्मजस्तु तमोषधीशैलमुदग्रवेगः।
निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥ ७३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः।

सुग्रीवः कपिभिर्लङ्कामदाहयत्तेन क्रुद्धो रावणः कुम्भनिकुम्भयूपाक्षादीन्योद्धुं प्रेषयत्ततो हरिराक्षसानां घोरः संग्रामः प्रवृत्तः।

ततोऽब्रवीन्महातेजाः सुग्रीवो वानरेश्वरः। अर्थ्यं विज्ञापयंश्चापि हनूमन्तमिदं वचः ॥ १ ॥
यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः। नेदानीमुपनिर्हारं रावणो दातुमर्हति ॥ २ ॥

---

गो० टी०—तत इति। शैलोत्तमे त्रिकूटशिखरे ॥७२॥७३॥

रा० टी०—सर्व इति। हताः चकारेण मूर्छादिप्राप्ताश्च ये स्युः ते सर्वे हरिप्रवीराः प्रवरौषधीनां गन्धेन विशल्या विरुजाश्च बभूवुरिति शेषः तत्र दृष्टान्तः सुप्ताः जनाः निशान्तेषु संप्रबुद्धा इव ॥ ७० ॥

गो० टी०—सर्वे इति। विशल्यकरण्या विशल्याः सन्धानकरण्या विरुजः ये पूर्वं निहतास्तेऽपि सुप्ता निशान्तेष्विव संप्रबुद्धाः। अनेन सावर्ण्यसिद्धिरप्युक्ता ॥ ७४ ॥

७१ ] ति० टी०—यदि महौषधीनां गन्धमाघ्राय राघवौ हरिप्रवीराश्च यथापूर्वमत्यन्तं स्वस्थास्तदौषधिगन्धस्य रक्षःसाधारणत्वात्तेषामनुत्थाने हेतुमाह—यदेति। मानार्थम्। अर्थशब्दो निवृत्तिवाची। शत्रूणां हतराक्षसेयत्ताज्ञानाभावार्थमित्यर्थः। तत्परिज्ञाने त्ववशिष्टबलस्याल्पीयस्त्वं ज्ञात्वा वानरा लङ्कां प्रविशेयुः, तं मा प्रवेक्ष्यन्नित्येतदर्थोऽयं रावणस्येश्वरेच्छया विचारः ॥ ७१ ॥

७२ ] ति० टी०—हता हता इति वीप्सा। सर्व एव हता इत्यर्थः ॥ ७२ ॥

रा० टी०—ननु औषधिगन्धाघ्राणेन वानरा इव राक्षसा अपि जीवनं प्राप्ताः स्युरित्यत आह—यदेति। यदा प्रभृति यत्कालादारभ्य कपिराक्षसाः युध्यन्ते हताः हताः तदाप्रभृति मानार्थं राक्षसा न मृता इति प्रशंसार्थं रावणस्याज्ञया ये राक्षसाः कपिकुंजरैः हन्यन्ते ते सर्वे सागरे क्षिप्यन्त एव श्लोकद्वयमेकान्वयि ॥ ७१ ॥ ७२ ॥

गो० टी०—तर्हि निहता राक्षसाः किं न प्रबुद्धा इत्यत्राह—यदाप्रभृतीति। मानार्थं हतानां राक्षसानां इयत्ताया अपरिज्ञानार्थम् मृतशरीरसंख्याप्रतिपत्त्यर्थं वा पूर्वयोजनायामर्थशब्दो निवृत्तिपरः। अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः। परैः परिच्छिद्य ज्ञानं मा भूदित्येवमर्थमिति भावः। हताहताः सुमूर्षावस्थाः किं पुनर्मृता इति भावः। "क्तेन नञ्विशिष्टेनानञ्" इति कर्मधारयः। यद्वा यदा यदा ये ये हताः तदा तदा ते ते क्षिप्ता इत्यर्थः ॥ ७५—७७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

७३ ] ति० टी०—ओषधीशैलमिति दीर्घ आर्षः। आश्विनकृष्णाष्टम्यामिदम् ॥ ७३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

रा० टी०—तत इति। उदग्रवेगः अत्युग्रवेगवान् गन्धवहात्मजो हनुमान् औषधीशैलं हिमवन्तमेव निनाय यथापूर्वं संस्थापयामासेत्यर्थः पुनश्च रामेण समाजगाम रामसमीपं प्राप ॥ ७३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

१ ] ति० टी०—तत इति। अर्थ्यमर्थादनपेतमग्रे कर्तव्यं विज्ञापयन् ॥ १ ॥

रा० टी०—सर्ववानरसावधानानंतरकालिकं वृत्तान्तमाह—तत इत्यादिभिः। सुग्रीवः अर्थ्यमर्थादनपेतमौत्तरकालिककर्तव्यमित्यर्थः विज्ञापयन् बोधयन् सन् हनुमन्तमब्रवीत् ॥ १ ॥

गो० टी०—एवं हनुमदानीतौषधिपर्वतगन्धमात्रेण समागतप्राणेषु सर्वेषु विशल्येषु समुत्थितेषु सुग्रीवः स्वातिसन्धानजनितकोपातिरेकेण सद्यो निःशेषं लङ्कानिर्दहनं हनुमते नियमयति—तत इत्यादि। अर्थ्यम् अर्थादनपेतम् प्रयोजननियतं वाक्यं विज्ञापयन् रामायेति शेषः। ततो हनुमन्तमब्रवीदिति योजना यद्वा अर्थ्यं विज्ञापयन् विशेषेण ज्ञापयन् ॥ १ ॥

२ ] ति० टी०—निषूदिताः। राघवाभ्यामिति शेषः।

---

१ कपिराक्षसा इति गो. रा. पाठः। २ वीर्यं इति गो. रा. पाठः। ३ अधिप इति गो. रा. पाठः।

ये ये महाबलाः सन्ति लघवश्च प्लवंगमाः । लङ्कामभिपतन्त्वाशु गृह्योल्काः प्लवगर्षभाः ॥ ३ ॥
[ हैरयो हरिसंकाशाः प्रदग्धुं रावणालयम् ]
ततोऽस्तं गत आदित्ये रौद्रे तस्मिन्निशामुखे । लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवगर्षभाः ॥ ४ ॥
उल्काहस्तैर्हरिगणैः सर्वतः समभिद्रुताः । आरक्षस्था विरूपाक्षाः सहसा विप्रदुद्रुवुः ॥ ५ ॥
गोपुराट्टप्रतोलीषु चर्यासु विविधासु च । प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम् ॥ ६ ॥
तेषां गृहसहस्राणि ददाह हुतभुक्तदा । प्रासादाः पर्वताकाराः पतन्ति धरणीतले ॥ ७ ॥
अगुरुर्दह्यते तत्र परं चैवं सुचन्दनम् । मौक्तिका मणयः स्निग्धा वज्रं चापि प्रवालकम् ॥ ८ ॥

तस्मादिदानीमुपनिर्हारं पुररक्षां दातुं संपादयितुं नार्हतीति कतकः । उपनिर्हारं निष्क्रम्य युद्धप्रदानमिति तीर्थः । उपनिर्हारं युद्धावहारमस्माकं दातुं नार्हतीत्यर्थः । अनेनान्यदा युद्धावहारो जात इति ज्ञायत इत्यन्ये ॥ २ ॥

रा० टी०–तदाकारमाह—यत इति द्वाभ्याम् यतः कुंभकर्णो हतः कुमारा: रावणसुताश्च निषूदिताः अतो रावणः उपनिर्हारं स्वपुररक्षां दातुं सम्पादयितुं नार्हति किंच उपनिर्हारं मृतपुत्रासुहृदयकजलं दातुं नार्हति अवकाशो न दातव्य इति तात्पर्यम् । उपनिर्हारं निष्क्रम्य युद्धप्रदानमिति तीर्थः ॥ २ ॥

गो० टी०–इदानीं लङ्कादाहोपदेशे निमित्तमाह–यत इति । उपनिर्हारं उपनिष्क्रमणम् युद्धाय निर्गमनमिति यावत् । हतपुत्रादित्वेनानुत्साहाद्रावणो न निर्गमिष्यतीति भावः । अत्र आग्रहेण प्रेतनिर्यापनरूढनिर्हारपदप्रयोगः दातुं कर्तुमिति यावत् । धातूनामनेकार्थत्वात् । उपनिर्हारशब्दः उपनिष्क्रम्य युद्धपरो वा२

३ ] ति० टी०–अतो ये ये महाबलाः सन्ति लघवः क्षिप्रकारिणस्ते सर्वे उल्का गृहीत्वा लङ्कामभ्युत्पतन्तु । दाहायेति भावः ॥ ३ ॥

रा० टी०–नतु तर्हि किं कर्तव्यमित्यत आह—ये इति । हे प्लवगर्षभाः ये ये महाबलाः लघवो लघुबलाश्च प्लवङ्गमाः सन्ति ते ते उल्काः गृह्य गृहीत्वा लङ्कामभिपतन्तु ॥ ३ ॥

गो० टी०–य इति । लघवः वेगवन्तः उत्पतन्तु प्राकारमुत्प्लुत्य गच्छन्तु ॥ ३ ॥

४ ] ति० टी०–ततोऽस्तमिति । पूर्वदिवसापररात्रिशेष उल्काहस्ताभ्यां हनुमद्विभीषणाभ्यां जाम्बवदन्वेषणम्, ततस्तन्नियोगत उषसि पर्वताहरणाय गमनम्, अथाहरणं पुनश्च तत्प्रापणं पुनरागमनमिति त्रिंशद्घटिकामध्ये सर्वम्, ततः पुनः प्रदोषे हनुमदादीनां लङ्कादाहगमनमिति कतकादयः ॥ ४ ॥

रा० टी०–तत इति । ततः सुग्रीवाज्ञाश्रवणानन्तरमादित्ये अस्तं गते अत एव रौद्रे भयंकरे निशामुखे सोल्काः उल्कासहिताः प्लवगर्षभाः लङ्कामभिमुखाः सन्तो जग्मुः ॥ ४ ॥

गो० टी०–तत इति । ननु पूर्वमुल्काहस्तौ तदा रात्रावित्युक्तम्, अत्र आदित्यास्तमयसमय इति गम्यते, अतो विरुद्धमिति चेन्न विरोधः । आदित्येऽस्तं गत इति प्रकाशाभावोक्तिः । निशामुख इति रात्रेः प्रथमयाम उच्यते । रौद्र इति विशेषणात् यामान्तत्वेन गाढान्धकारत्वमुच्यते । हनुमांश्च महाद्भुतवेगशालितया मुहूर्तमात्रेण प्रस्थायौषधिपर्वतमानीय तं पुनस्तत्र निक्षिप्यागतवानिति तस्य वेगातिशयश्च प्रतिपादितो भवति ॥ ४ ॥

५ ] ति० टी०–आरक्षाद्वाराणि तत्स्था द्वाररक्षिणो विरूपाक्षा राक्षसाः । आरक्षो गुल्ममित्यन्ये ॥ ५ ॥

रा० टी०–उल्केति । हरिगणैः समभिद्रुताः संप्राप्ता आरक्षस्थाः आरक्षेषु द्वारेषु तिष्ठन्ति द्वारपाला इत्यर्थः विप्रदुद्रुवुः ॥ ५ ॥

गो० टी०–उल्काहस्तैरिति । आरक्षस्थाः गुल्मस्थाः नगररक्षिणो वा आरक्षो दुर्गरक्षिणां स्थानम् तत्रस्था वा त्रिष्वारक्षस्तु रक्षण इति रत्नमाला । विरूपाक्षाः राक्षसाः ॥५॥

६ ] ति० टी०–अट्टो गृहोपरितनं गृहम् । 'स्यादट्टः क्षौममस्त्रियाम्' इति वा । प्रतोली रथ्या । चर्याल्परथ्या ॥ ६ ॥

रा० टी०–गोपुरेति । ते वानराः गोपुरादिषु हुताशनं ससृजुः प्रचिक्षिपुः गोपुरं पुरद्वारमट्टो गृहोपरितनगृहम् प्रतोली रथ्या चर्या अल्परथ्या प्रासादः उच्चगृहमिति ॥ ६ ॥

गो० टी०–गोपुरेत्यादि । गोपुरं पुरद्वारम् । अट्टन्ति हिंसन्ति योधा एषु स्थित्वेत्यट्टाः प्राकाराग्रस्थितगृहाणि स्यादट्टः क्षौममस्त्रियामित्यमरः । प्रतोल्यः वीथ्यः चर्या अवान्तरवीथ्यः ते वानराः ससृजुः क्षिप्तवन्तः । तेषां वानराणां संबन्धी हुतभुगित्यन्वयः ॥ ६ ॥

७ ] ति० टी०–तेषां वानराणां संबन्धी हुतभुग्ददाह । पतन्त्यपतन् ॥ ७ ॥

रा० टी०–तेषामिति । तदा तस्मिन् काले तु हुतभुग्वन्हिः तेषां राक्षसानां गृहसहस्राणि ददाह अत एव प्रासादाः पतन्ति ॥ ७ ॥

गो० टी०–दहनकार्यं प्रपञ्चयति–प्रासादा इत्यादि । तत्र प्रासादेषु दह्यते अदह्यत । व्यत्ययेन भूतार्थे लट् । वरं सुगन्धम् ॥ ७ ॥

८ ] ति० टी०–दह्यते दग्धः ॥ ८ ॥

रा० टी०–तत्प्रकारमाह—अगर्वित्यादिभिः । तत्र तस्मिन्समये अगरुप्रभृतिर्दह्यते ॥ ८ ॥

१ इदमर्धमधिकं गो. पाठे । २ हरिचन्दनमिति गो. पाठः ।

क्षौमं च दह्यते तत्र कौशेयं चापि शोभनम् । आविकं विविधं चौर्णं काञ्चनं भाण्डमायुधम्॥ ९ ॥
नानाविकृतसंस्थानं वाजिभाण्डपरिच्छेदम् । गजग्रैवेयकक्ष्याश्च रथभाण्डांश्च संस्कृतान् ॥ १० ॥
तनुत्राणि च योधानां हस्त्यश्वानां च चर्म च । खड्गा धनूंषि ज्यावाणास्तोमराङ्कुशशक्तयः ॥ ११ ॥
रोमजं वालजं चर्म व्याघ्रजं चाण्डजं बहु । मुक्तामणिविचित्रांश्च प्रासादांश्च समन्ततः ॥ १२ ॥
विविधानस्त्रसंघातानग्निर्दहति तत्र वै । नानाविधान्गृहांश्चित्रान्ददाह हुतभुक्तदा ॥ १३ ॥
आवासान्राक्षसानां च सर्वेषां गृहगृध्नुनाम् । हेमचित्रतनुत्राणां स्रग्भाण्डाम्बरधारिणाम् ॥ १४ ॥
सीधुपानचलाक्षाणां मदविह्वलगामिनाम् । कान्तालम्बितवस्त्राणां शत्रुसंजातमन्युनाम् ॥ १५ ॥
गदाशूलासिहस्तानां खादतां पिबतामपि । शयनेषु महार्हेषु प्रसुप्तानां प्रियैः सह ॥ १६ ॥
त्रस्तानां गच्छतां तूर्णं पुत्रानादाय सर्वतः । तेषां शतसहस्राणि तदा लङ्कानिवासिनाम् ॥ १७ ॥

गो० टी०—मौक्तिका इत्यादिचतुःश्लोक्येकान्वया । सर्वत्र अदह्यतेत्यस्य यथायथं विपरिणामेनान्वयः । मणयः उपात्तमौक्तिकादिव्यतिरिक्ताः । क्षौमकौशेययोरुपादानभेदात् भेदः । वाल्कं क्षौमादि कौशेयं कृमिकोशोत्थमित्युभयत्राप्यमरः शोभनं शोभमानम् । आविकम् अविरोमनिर्मितं कम्बलम् । और्णं मेषादिरोमनिर्मितं कम्बलम् । ऊर्णा मेषादिलोम्नि स्यादित्यमरः भाण्डम् उपकरणम् । आभरणादि वा । भाण्डं तु भूषायां नादे पात्राश्वभूषयोः । मार्जने कल्यादौ च वणिङ्मूलधनेपि च इति रत्नमाला । नानाविकृतसंस्थानं नानाविधविकारवद्विचित्रसंनिवेशमिति भूषणादिसर्वविशेषणम् । वाजिभाण्डपरिच्छदौ अश्वालंकारपल्ययनादिपरिबर्हौ । भाण्डशब्देनैवाश्वाभरणसिद्धावपि कर्णावतंसादिवत् साहित्यबोधनार्थं वाजिपदम् । गजानां ग्रैवेयकानि कण्ठभूषणानि । कक्ष्याः इभबन्धिन्यः । ग्रैवेयकं कण्ठभूषा । कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने इत्युभयत्राप्यमरः । संस्कृताः उत्तेजिताः । योधानां तनुत्राणि वर्माणि । हस्त्यश्वानां वर्म अयःकांस्यादिनिर्मितम् । रोमजम् अविमेषादिरोमभिन्नरोमनिर्मितं कम्बलादि । वालजं चामरादि । चर्मसंस्तरणं खेटकं वा । व्याघ्रजं वैयाघ्रं नखवालादि । अण्डजं कस्तूरिकादि द्रव्यम् ॥ ८-११ ॥

९ ] ति० टी०—और्णमूर्णासूत्रनिर्मितम्, आविकमविरोमनिर्मितम् । ऊर्णा त्वितरेषामपीति न पौनरुक्त्यम् । काञ्चनं भाण्डं सौवर्णमुपकरणम् ॥ ९ ॥

रा० टी०—क्षौममिति । क्षौमप्रभृति दह्यते तत्र क्षौमकौशेययोरुपादानभेदान्न पौनरुक्त्यम् । आविकमविरोमनिर्मितमौर्णं तज्जात्यन्तररोमनिर्मितम् ॥ ९ ॥

१०-११ ] ति० टी०—वाजिभाण्डपरिच्छदं वाजिनां भाण्डमलंकारः । परिच्छदः पल्ययनादिश्च । तत्र नानानेकं विकृतसंस्थानं विचित्रविन्यासम् । रथभाण्डान्रथालंकारान् । संस्कृतान्सम्यग्रचितान् । भाण्डशब्दोऽलंकारमात्रवाची । रथभाण्डेत्युक्तेः । अत एव वाजिभाण्डेत्यत्र वाजिग्रहणं चरितार्थम् । अश्वालंकारवाचित्वे तु तद्वैयर्थ्यं स्पष्टमेव । तत्त्वेऽपि कर्णावतंसादिवत्साहित्यबोधनार्थं तत्र सः । रथभाण्डेत्यत्र तु लाक्षणिक इत्यन्ये ॥ १० ॥ ११ ॥

रा० टी०—नानेति । नानाविकृतानामश्वादिपाकानां संस्थानं स्थलं वाजिनो भाण्डानि च परिच्छदानि अलंकारादीनि गजान् ग्रीवालङ्कारान् कक्ष्याः इभबन्धनानि संस्कृतान् रथभाण्डान् रथालङ्कारान् तनुत्राणि हस्त्यश्वानां वर्म लोहादिनिर्मिततनुत्राणं च खड्गादीनि शक्तयः शक्तीश्च रोमजं कम्बलादि वालजं चामरादि व्याघ्रजं तत्सम्बन्धि चर्म आसनाद्युपयोगि आण्डजं कस्तूर्यादि मुक्तामणिभिर्विचित्रान् प्रासादांश्च अग्निर्दहति सार्द्धश्लोकत्रयमेकान्वयि ॥ १०—१२ ॥

१२ ] ति० टी०—रोमजं कम्बलादि । वालजं चामरादि । व्याघ्रजं चर्मासनोपयोगि । अण्डजं मृगमदादि ॥ १२ ॥

गो० टी०—मुक्तेति । प्रासादाः पर्वताकारा इत्यत्र केवलप्रासादाः अत्र मुक्तादिखचिताः । अस्त्रसंयोगान् संयुज्यन्त इति संयोगाः सङ्घाताः तान् । तत्र लङ्कायाम् ॥ १२ ॥

१३ ] ति० टी०—अस्त्रं शस्त्रम् । चित्रान्गृहान्स्वस्तिकादिगृहान् ॥ १३ ॥

रा० टी०—नानेति । चित्रान् अनेकविधचित्रलिखितान् नानाविधान् गृध्नुनाम् गृध्नूनाम् गृहादिविषयकविशेषेच्छावतां राक्षसानां गृहान् आवासान् चित्रगृहभिन्नान्यपि वेश्मानि च हुतभुग्ददाह ॥ १३ ॥

गो० टी०—नानाविधानिति । गृहच्छन्दान् स्वस्तिकादिगृहविन्यासान् गृहगर्धिनां गृहस्थानाम् ॥ १३ ॥

१४ ति० टी०—गृहगृध्नुनां गृहस्थानाम् । दीर्घाभाव आर्षः । हेमचित्रं तनुत्रं येषां तेषाम् । भाण्डानि भूषणानि ॥१४॥

१५ ] ति० टी०—सीधुपानेन चञ्चलान्यक्षीणि येषाम् । शत्रुषु संजातो मन्युर्येषाम् । अदीर्घत्वमार्षम् ॥ १५ ॥

१६ ] ति० टी०—प्रियैः । प्रियवस्तुभिः कान्ताभिरित्यर्थः ॥ १६ ॥

१७ ] ति० टी०—त्रस्तानां गच्छताम् । अग्निभयादिति शेषः । एवंभूतानां लङ्कानिवासिनां शतसहस्राणि गृहाण्यदहत् ॥ १७ ॥

१ परिच्छदाविति गो. पाठः । २ गृहच्छन्दानिति गो. पाठः । ३ गर्धिनामिति गो. पाठः । ४ दामेति गो. पाठः ।

अदहत्पावकस्तत्र जज्वाल च पुनः पुनः । सारवन्ति महार्हाणि गम्भीरगुणवन्ति च ॥ १८ ॥
हेमचन्द्रार्धचन्द्राणि चन्द्रशालोत्तमानि च । तत्र चित्रगवाक्षाणि साधिष्ठानानि सर्वशः ॥ १९ ॥
मणिविद्रुमचित्राणि स्पृशन्तीव दिवाकरम् । क्रौञ्चबर्हिणवीणानां भूषणानां च निःस्वनैः ॥ २० ॥
नादितान्यचलाभानि वेश्मान्यग्निर्ददाह सः । ज्वलनेन परीतानि तोरणानि चकाशिरे ॥ २१ ॥
विद्युद्भिरिव नद्धानि मेघजालानि घर्मगे । ज्वलनेन परीतानि गृहाणि प्रचकाशिरे ॥ २२ ॥
दावाग्निदीप्तानि यथा शिखराणि महागिरेः । विमानेषु प्रसुप्ताश्च दह्यमाना वराङ्गनाः ॥ २३ ॥

रा० टी०—हेमेति । हेम्ना चित्राणि तनुत्राणि येषां स्रगादिधारणशीलानां भाण्डानि भूषणानि शीधूनां मद्यानां पानेन चलानि अक्षीणि येषामत एव मदविह्वलगामिनां मदहेतुकस्खलद्गमनशीलानां कान्ताभिः आलम्बितानि गृहीतानि वस्त्राणि येषां शत्रुषु सञ्जातो मन्युः क्रोधो येषां संज्ञापूर्वकविधेरनित्यत्वाद्दीर्घाभावः गदादिविशिष्टहस्तानां खादतां तेषां रक्षसां मिषतामवलोकयतामपि रक्षसां प्रसुप्तानां च रक्षसां पुत्रानादाय गच्छतामपि रक्षसां शतसहस्राणि पावकोऽदहत् पुनः पुनर्जज्वाल च अर्द्धचतुष्टयमेकान्वयि ॥ १४—१७ ॥

गो० टी०—हठोपनतत्वेन खेदातिशयं व्यञ्जयितुं तेषां व्यासङ्गं दर्शयति—हेमेत्यादिना । हेमचित्रतनुत्राणां हेममयाद्भुतवर्मणाम् आलेख्याश्चर्ययोश्चित्रमित्यमरः । वर्मग्रहणव्यासक्तानामित्यर्थः । स्रग्दामानि पुष्पमालाः दामशब्दो हारपरः । स्रग्दामशब्देनानेकसरनिर्मितपुष्पमालोच्यत इत्याचार्याः अत्र सर्वत्रापि व्यासङ्ग एव तात्पर्यम् । सीधुपानचलाक्षाणां मद्यपानलोलदृष्टीनाम् अत एव मदविह्वलगामिनां मदेन मन्दगामिनाम् कान्तालम्बितवस्त्राणाम् आलम्बितवस्त्रकान्तानाम् । रतिपराणामिति यावत् । शत्रुषु सञ्जातमन्युनां सञ्जातक्रोधानाम् दीर्घाभाव आर्षः । खादतां मांसादिकं भक्षयताम् पिबतां मद्यपानं कुर्वताम् सीधुपानेत्यत्र मद्यपानकार्यमुक्तम् क्षीरादिकं पिबतामिति वा । महार्हेष्विति विशेषणेन सुख्यातिशयहेतुरुक्तः । प्रियैः दारैरिति विशेष्यम् । तेषाम् एवं व्यासक्तानां शतसहस्राणीति संख्यासंख्येययोरभेदेन निर्देशः । अनेकशतसहस्रराक्षसानित्यर्थः । पुनः पुनरित्यनेन तद्रुधिरवसास्नेहेनाधिकज्वालोच्यते ॥ १४—१७ ॥

१८ ] ति० टी०—दह्यमानगृहवर्णनम्—सारवन्तीत्यादि । सारवत्त्वं स्थिरसंस्थानवत्त्वम् । गम्भीरगुणवन्त्यनेककक्ष्याप्राकारान्तर्गेहद्वारोपद्वारतो दुर्गमत्वलक्षणगाम्भीर्यवन्ति ॥ १८ ॥

१९ ] ति० टी०—हेमेत्यादि । हेमनिर्मितानि पूर्णचन्द्रार्धचन्द्राकारवन्ति । चन्द्रशालोत्तमानि प्रशस्तशिरोगृहाणि । साधिष्ठानानि मञ्चादिसहितानि ॥ १९ ॥

२०-२१ ] ति० टी०—दिवाकरं स्पृशन्तीव स्थितानि २०-२१

रा० टी०—सारवन्तीति । सारो बलं तद्वन्ति पुष्टानीत्यर्थः । गम्भीरगुणवन्ति अनेककक्ष्याप्राकारादिमत्वेन दुर्ज्ञेयानीत्यर्थः । हेमचन्द्रार्द्धचन्द्राणि हेमनिर्मितपूर्णचन्द्रार्द्धचन्द्रान्यतराकाराणि चन्द्रशालाभिः शिरोगृहैरुन्नतानि रत्नैश्चित्राः गवाक्षा येषु साधिष्ठानानि सुधामयहर्म्यपञ्चकादिविशिष्टानि मणिभिर्विद्रुमैश्च चित्राणि दिवाकरं स्पृशन्तीव संस्थितानि क्रौञ्चादीनां भूषणानांच निःस्वनैर्नादितानि अचलाभानि गिरिसदृशानि वेश्मानि अग्निर्ददाह अर्द्धषट्कमेकान्वयि ॥ १८—२० ॥

गो० टी०—रावणस्य पुनर्धननाशं व्यञ्जयितुमुत्तमगृहदहनं दर्शयति—सारवन्तीत्यादिना । सारवन्ति श्रेष्ठधनवन्ति । सारो बले स्थिरांशेर्थे पुमान् न्याये वरे त्रिष्विति रत्नमाला । गम्भीराणि महातल्पवन्ति गुणवन्ति सौन्दर्यवन्ति हेमचन्द्रार्धचन्द्राणि हेमकृतानि चन्द्राकाराण्यर्धचन्द्राकाराणि चेत्यर्थः । चन्द्रशालाभिः शिरोगृहैः उन्नतानि । चन्द्रशाला शिरोगृहमित्यमरः । साधिष्ठानानि शय्यासनादिसहितानि । स्पृशन्तीव दिवाकरम् सूर्यपथपर्यन्तोन्नतानीत्यर्थः । क्रौञ्चादयो लीलार्थं गृहेषु संवर्धिताः ॥ १८—२० ॥

रा० टी०—ज्वलनेति । ज्वलनेन परीतानि आवृतानि तोरणानि बहिर्द्वाराणि घर्मगे ग्रीष्मगे सवितरि सतीति शेषः । विद्युद्भिर्नद्धानि प्रावृतानि मेघजालानीव चकाशिरे ॥ २१ ॥

गो० टी०—ज्वलनेनेति । घर्मोऽस्माद्गच्छतीति घर्मगः वर्षाकाल इत्यर्थः । घर्मगे निदाघे गच्छतीति शेष इत्यप्याहुः । घर्मशब्देन घर्मान्तो लक्ष्यते । तं गच्छति प्राप्नोतीति घर्मगः वर्षादिरित्यपरे । वस्तुतो घर्मगे ग्रीष्म इत्येवार्थः । लङ्कायां दह्यमानायां सन्तापे च समन्ततः प्रसरति दह्यमानतोरणादीनि निदाघप्ररूढसविद्युन्मेघतुल्यानीत्यर्थः ॥ २१ ॥

२२ ] ति० टी०—घर्मगे ग्रीष्मगे दिवाकरे गते प्रवृत्तानि, विद्युद्भिर्नद्धानि मेघजालानीव स्थितानि गृहाणि ॥ २२ ॥

रा० टी०—ज्वलनेनेति । ज्वलनेन परीतानि गृहाणि महागिरेः शिखराणीव प्रचकाशिरे ॥ २२ ॥

गो० टी०—ज्वलनेन परीतानि निपेतुरित्यस्य वज्रिवज्रहतानीवेत्युत्तरार्धम् ॥ २२ ॥

२३ ] ति० टी०—विमानं सप्तभूमिप्रासादः ॥ २३ ॥

रा० टी०—विमानेष्विति । विमानेषु सप्तभूमिप्रासादेषु प्रसुप्ताः अत एव दह्यमानाः अत एव त्यक्ताः आभरणसंयोगाः याभिः ताः वराङ्गनाः हाहेत्युच्चैर्विचुक्रुशुः ॥ २३ ॥

गो० टी०—विमानेष्विति । त्यक्ताभरणसर्वाङ्गाः सर्वाङ्गाभरणान्यपि त्यक्त्वेत्यर्थः ॥ २३ ॥

१ उन्नतानीति गो. पाठः । २ वीणानामिति गो. रा. पाठः । ३ निपेतुर्भवनान्यथेति गो. पाठः । ४ ददेति रा. वज्रिवज्रहतानीवेति. गो. पाठः ।

त्यक्ताभरणसंयोगा हाहेत्युच्चैर्विचुक्रुशुः । तत्र चाग्निपरीतानि निपेतुर्भवनान्यपि ॥ २४ ॥
वज्रिवज्रहतानीव शिखराणि महागिरेः । तानि निर्दह्यमानानि दूरतः प्रचकाशिरे ॥ २५ ॥
हिमवच्छिखराणीव दह्यमानानि सर्वशः । हर्म्याग्रैर्दह्यमानैश्च ज्वालाप्रज्वलितैरपि ॥ २६ ॥
रात्रौ सा दृश्यते लङ्का पुष्पितैरिव किंशुकैः । हस्त्यध्यक्षैर्गजैर्मुक्तैर्मुक्तैश्च तुरगैरपि ॥
बभूव लङ्का लोकान्ते भ्रान्तग्राह इवार्णवः ॥ २७ ॥
अश्वं मुक्तं गजो दृष्ट्वा कचिद्भीतोऽपसर्पति । भीतो भीतं गजं दृष्ट्वा कचिदश्वो निवर्तते ॥ २८ ॥
लङ्कायां दह्यमानायां शुशुभे च महोदधिः । छायासंसक्तसलिलो लोहितोद इवार्णवे ॥ २९ ॥
सा बभूव मुहूर्तेन हरिभिर्दीपिता पुरी । लोकस्यास्य क्षये घोरे प्रदीप्तेव वसुंधरा ॥ ३० ॥
नारीजनस्य धूमेन व्याप्तस्योच्चैर्विनेदुषः । स्वनो ज्वलनतप्तस्य शुश्रुवे शतयोजनम् ॥ ३१ ॥
प्रदग्धकायानपरान्राक्षसान्निर्गतान्बहिः । सहसा ह्युत्पतन्ति स्म हरयोऽथ युयुत्सवः ॥ ३२ ॥
उद्घुष्टं वानराणां च राक्षसानां च निःस्वनम् । दिशो दश समुद्रं च पृथिवीं च व्यनादयत् ॥ ३३ ॥
विशल्यौ च महात्मानौ तावुभौ रामलक्ष्मणौ । असंभ्रान्तौ जगृहतुस्ते[10] उभे धनुषी वरे ॥ ३४ ॥
ततो विस्फारयामास रामश्च धनुरुत्तमम् । बभूव तुमुलः शब्दो राक्षसानां भयावहः ॥ ३५ ॥

---

२४-२६ ] ति० टी०-तत्र चेति । समभूमिप्रासादे वर्तमानानि गृहाणीत्यर्थः ॥ २४-२६ ॥

रा० टी०-तत्रेति । वज्रिण इन्द्रस्य वज्रहतानि महागिरेः शिखराणीव अग्निपरीतानि भवनानि निपेतुः ॥ २४ ॥

रा० टी०-तानीति । दह्यमानानि हिमवच्छिखराणीव निर्दह्यमानानि सर्वशः तानि भवनानि दूरतः प्रचकाशिरे॥२५॥

गो० टी०-तानीति । तानि पूर्वश्लोके प्रस्वापाधिकरणतयोपात्तानि विमानानि । दीप्तौषधिवनानि प्रकाशिततृणज्योतिर्वनानि ॥ २४ ॥

रा० टी०-हर्म्येति । ज्वालाभिः प्रज्वलितैः अत एव दह्यमानैर्हर्म्याग्रैरुपलक्षिता लङ्का पुष्पितैः किंशुकैरिव दृश्यते२६

गो० टी०-हर्म्याग्रैरिति । ज्वालाप्रज्वलितैः ज्वालाविशिष्टैरित्यर्थः ॥ २६ ॥

२७-२८ ] ति० टी०-हस्त्यध्यक्षा गजस्वामिनस्तैर्दाहपरित्राणाय मुक्तैर्गजैः । लोकान्ते प्रलये । भ्रान्ता घूर्णमाना ग्राहा यस्य सः ॥ २७ ॥ २८ ॥

रा० टी०-हस्तीति । हस्त्यध्यक्षैः हस्तिपकैर्मुक्तैर्गजैः मुक्तैस्तुरगैरप्युपलक्षिता लंका लोकान्ते लोकनाशसमये भ्रान्ताः ग्राहाः यस्मिन् सोऽर्णव इव बभूव ॥ २७ ॥

रा० टी०-अश्वमिति । अश्वं मुक्तं दृष्ट्वा भीतो गजोऽपसर्पति पलायते भीतमपि गजं दृष्ट्वा कचित् कदाचिदश्वो निवर्तते पलायते ॥ २८ ॥

गो० टी०-हस्त्यध्यक्षैरिति । हस्त्यध्यक्षैः हस्तिपकैः । मुक्तैः निगलान्मोचितैः । मुक्तैश्च तुरगैरपीत्यत्राप्यध्यक्षैरित्यध्याहार्यम् । लोकान्ते प्रलये ॥ २६ ॥ २७ ॥

२९-३०]ति० टी०-छाया वह्निज्वालाप्रतिबिम्बम्२९-३०

रा० टी०-लंकायामिति । लंकायां दह्यमानायां सत्यां छायया ज्वालाप्रतिबिम्बेन संसक्तानि सलिलानि यस्य स महोदधिः लोहितोदीर्ण इव शुशुभे ॥ २९ ॥

रा० टी०-सेति । दीपिता सा लंका लोकस्य क्षये प्रदीप्ता वसुन्धरेव बभूव ॥ ३० ॥

गो०टी०-लङ्कायामिति । छायासंसक्तसलिलः प्रतिबिम्बसंक्रान्तजलः लोहितोदः लोहितोदकः । उदादेश आर्षः॥२८॥२९॥

३१-३५ ] ति० टी०-धूमैर्व्याप्तस्य, अतएवोच्चैर्विनेदुषः । क्रस्वन्तम् । नारीजनस्य स्वन इत्यन्वयः ॥ ३१—३६ ॥

रा० टी०-नारीति । धूमेन व्याप्तस्य ज्वलनेन तप्तस्य अत एव उच्चैर्विनेदुषः विक्रोशतः नारीजनस्य स्वनः शतयोजनं शुश्रुवे ॥ ३१ ॥

रा० टी०-प्रदग्धेति । बहिर्निर्गतान् अपरान् राक्षसान् युयुत्सवो हरयः उत्पतन्ति स्म ॥ ३२ ॥

गो० टी०-नारीति । नारीजनस्यातिसाहसिकत्वाच्छतयोजनस्वनश्रवणम् ॥ ३० ॥ ३१ ॥

रा० टी०-उद्घुष्टमिति । वानराणामुद्घुष्टमुद्घोषः राक्षसानां निःस्वनं दीनशब्दश्च दिगादि व्यनादयत् ॥ ३३ ॥

गो० टी०-उद्घुष्टमिति । उद्घुष्टम् उद्घोषः । भावे क्तः ॥ ३२ ॥

---

१ सर्वाङ्गा इति गो. पाठः । २ दीप्तौषधिवनानि चेति गो. पाठः । ३ महार्णव इति गो. पाठः । ४ अर्णवः इति गो. रा. पाठः । ५ दशेति गो. पाठः । ६ अभीति गो. रा. पाठः । ७ स्वन इति गो. पाठः । ८ अन्विति गो. पाठः । ९ त्विति गो. पाठः । १० तदोभे इति गो. तदोभाविति रा.पाठः। ११ बाणस्य रामस्येति गो. रा. पाठः ।

अशोभत तदा रामो धनुर्विस्फारयन्महत् । भगवानिव संक्रुद्धो भवो वेदमयं धनुः ॥ ३६ ॥
उद्घुष्टं वानराणां च राक्षसानां च निःस्वनम् । ज्याशब्दस्तावुभौ शब्दावतिरामस्य शुश्रुवे॥ ३७ ॥
वानरोद्घुष्टघोषश्च राक्षसानां च निःस्वनः । ज्याशब्दश्चापि रामस्य त्रयं व्याप दिशो दश॥३८ ॥
तस्य कार्मुकनिर्मुक्तैः शरैस्तत्पुरगोपुरम् । कैलासशृङ्गप्रतिमं विकीर्णमभवद्भुवि ॥ ३९ ॥
ततो रामशरान्दृष्ट्वा विमानेषु गृहेषु च । संनाहो राक्षसेन्द्राणां तुमुलः समपद्यत ॥ ४० ॥
तेषां संनह्यमानानां सिंहनादं च कुर्वताम् । शर्वरी राक्षसेन्द्राणां रौद्रीव समपद्यत ॥ ४१ ॥
आदिष्टा वानरेन्द्रास्ते सुग्रीवेण महात्मना । आसन्नं द्वारमासाद्य युध्यध्वं च प्लवंगमाः ॥ ४२ ॥
यश्च वो वितथं कुर्यात्तत्र तत्राप्युपस्थितः । स हन्तव्योऽभिसंप्लुत्य राजशासनदूषकः ॥ ४३ ॥
तेषु वानरमुख्येषु दीप्तोल्कोज्ज्वलपाणिषु । स्थितेषु द्वारमाश्रित्य रावणं क्रोध आविशत् ॥ ४४ ॥

---

रा० टी०–विशल्याविति । असम्भ्रान्तौ नित्यं सम्भ्रान्तिरहितौ रामलक्ष्मणौ धनुषी जगृहतुः ॥ ३४ ॥

गो० टी०–विशल्याविति । विशल्यौ निर्गलितशरीरनिमग्नशरफलकौ । तदोभे धनुषी वरे इति पाठः ॥ ३३ ॥

रा० टी०–तत इति । रामस्य धनुर्विस्फारयाणस्य स ततः तुमुलः शब्दो बभूव ॥ ३५ ॥

गो० टी०–तत इति । विस्फारयाणस्य ध्वनयतः । विस्फारो धनुषः स्वान इत्यमरः । " स्फुरतिस्फुलत्योर्निर्निविभ्यः " इति णत्वम् । मुगभाव आर्षः ॥ ३४ ॥

३६ ] ति० टी०–संहारकाले संक्रुद्धो भगवान्भवः शब्दब्रह्मात्मकं वेदमयं धनुर्विस्फारयन्निव ॥ ३६ ॥

रा० टी०–अशोभतेति । धनुर्विस्फारयन् रामः संक्रुद्धः संहारकालकक्रोधविशिष्टः अत एव वेदमयं शब्दब्रह्मात्मकं धनुर्विस्फारयन् भव इवाशोभत किञ्च वेदिति रामविशेषणं निखिलज्ञातेति तदर्थः—अभयमिति । तद्रूपो विशेषणम् नित्यं रामसमीपवर्तीति तदर्थः ॥ ३६ ॥

गो० टी०–अशोभतेति । वेदमयं धनुः वेदोक्तलक्षणं धनुः । कृत्तिवासाः पिनाकीति श्रुत्या प्रतिपादितमहिमेति वार्थः॥३९॥

३७ ] ति० टी०–रामस्य ज्याशब्दस्तावुभौ वानरराक्षसशब्दावतिक्रम्याधरीकृत्य शुश्रुवे ॥ ३७ ॥

रा० टी०–उद्घुष्टमिति । रामस्य ज्याशब्दः उद्घुष्टं निःस्वनं चोभौ शब्दौ अतिशुश्रुवे अतिक्रम्य अधरीकृत्येत्यर्थः श्रवणविषयो बभूव ॥ ३७ ॥

गो० टी०–उद्घुष्टमिति । रामस्य ज्याशब्दः वानराणामुद्घुष्टं राक्षसानां निःस्वनं च तावुभावतीत्य शुश्रुवे ॥ ३६ ॥

३८–३९ ] ति० टी०–एतत्त्रयं व्याप व्याप्तमभूत् ३८।३९

रा० टी०–वानरेति । वानरोद्घुष्टघोषादित्रयं दश दिशो व्याप ॥ ३८ ॥

रा० टी०–तस्येति । तस्य रामस्य शरैर्विकीर्णं तत् तस्य रावणस्य पुरगोपुरमपतत् ॥ ३९ ॥

गो० टी०–वानरेति । वानरोद्घुष्टघोषः वानरोत्पादितघोषः ॥ ३७ ॥ ३८ ॥

४० ] ति० टी०–संनाह उद्योगः ॥ ४० ॥

रा० टी०–तत इति । तुमुलः परस्परमज्ञायमानः राक्षसेन्द्राणां सन्नाह उद्योगः समपद्यत अभवत् ॥ ४० ॥

गो० टी०–तत इति । तुमुलः अधिकः ॥ ३९ ॥

४१ ] ति० टी०–रौद्रीव कालरात्रिरिव ॥ ४१ ॥

रा० टी०–तेषामिति । संनह्यमानानां राक्षसेन्द्राणां शर्वरी रात्रिः रौद्री कालरात्रिरिव समपद्यत प्राप्नोत् ॥ ४१ ॥

गो० टी०–तेषामिति । सन्नह्यमानानां कक्ष्याबन्धनादियुद्धसन्नाहं कुर्वताम् । रौद्री प्रलयरात्रिः ॥ ४० ॥

४२ ] ति० टी०–यद्यस्यासन्नं द्वारं तत्तदासाद्य युध्यध्वमित्यादिष्टाः ॥ ४२ ॥

४३ ] ति० टी०–अपि च वो युष्माकं मध्ये तत्र गुल्मे स्थितो वितथं पलायनं कुर्यात्स राजशासनदूषको मदाज्ञातिवर्तीति स भवद्भिः प्रवलैर्हन्तव्य इत्यादिष्टाः ॥ ४३ ॥

रा० टी०–आदिष्टा इति । आसन्नं स्वस्वसमीपवर्ति द्वारमासाद्य यूयं युद्ध्यध्वमिति वो युष्माकं मध्ये तत्र तत्र गुल्मे उपस्थितः यो वितथं तदाज्ञाविघातं पलायनादीत्यर्थः कुर्यात् स राजशासनदूषकः अभिसंप्लुत्य प्राप्य हंतव्यः इति च सुग्रीवेण वानरेन्द्रा आदिष्टा बभूवुरिति शेषः अर्द्धचतुष्टयमेकान्वयि ॥ ४२ ॥ ४३ ॥

गो० टी०–आदिष्टा इत्यादिश्लोकद्वयमेकान्वयम् । अन्ते इतिकरणं बोध्यम् । व इति निर्धारणे षष्ठी । वितथं कुर्यात्मच्छासनमिति शेषः । आसन्नद्वारं रावणान्तःपुरासन्नमध्यकक्ष्याद्वारम् । तत्र तत्र युद्धभूमौ उपस्थितः ॥ ४१–४३ ॥

४४ ] ति० टी०–स्थितेषु । सत्स्विति शेषः ॥ ४४ ॥

रा० टी०–तेष्विति । दीप्तोल्काभिः उज्ज्वलाः प्रकाशिताः पाणयो येषां तेषु वानरमुख्येषु द्वारमाश्रित्य स्थितेषु सत्सु रावणं क्रोधमाविशत् ॥ ४४ ॥

---

१ आसन्नद्वारामिति गो. रा. पाठः । २ हीति गो. पाठः । ३ मन्युरिति गो. रा. पाठः ।

तस्य जृम्भितविक्षेपाद्व्यामिश्रा वै दिशो दश । रूपवानिव रुद्रस्य मन्युर्गात्रेष्वदृश्यत ॥ ४५ ॥
स कुम्भं च निकुम्भं च कुम्भकर्णात्मजावुभौ । प्रेषयामास संक्रुद्धो राक्षसैर्बहुभिः सह ॥ ४६ ॥
यूपाक्षः शोणिताक्षश्च प्रजङ्घः कम्पनस्तथा । निर्ययुः कौम्भकर्णाभ्यां सह रावणशासनात् ॥ ४७ ॥
शशास चैव तान्सर्वान्राक्षसान्सैन्महाबलान् । राक्षसा गच्छताद्यैव सिंहनादं च नादयन् ॥ ४८ ॥
ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः । लङ्काया निर्ययुर्वीराः प्रणदन्तः पुनः पुनः ॥ ४९ ॥
रक्षसां भूषणस्थाभिर्भाभिः स्वाभिश्च सर्वशः । चक्रुस्ते सप्रभं व्योम हरयश्चाग्निभिः सह ॥ ५० ॥
तत्र ताराधिपस्याभा ताराणां भा तथैव च । तयोराभरणाभा च ज्वलिता द्यामभासयत् ॥ ५१ ॥
चन्द्राभा भूषणाभा च ग्रहाणां ज्वलिता च भा । हरिराक्षससैन्यानि भ्राजयामास सर्वतः ॥ ५२ ॥
तत्र चार्धप्रदीप्तानां गृहाणां सागरः पुनः । भाभिः संसक्तसलिलश्चलोर्मिः शुशुभे ध्रुवम् ॥ ५३ ॥
पताकाध्वजसंयुक्तमुत्तमासिपरश्वधम् । भीमाश्वरथमातंगं नानापत्तिसमाकुलम् ॥ ५४ ॥
दीप्तशूलगदाखड्गप्रासतोमरकार्मुकम् । तद्राक्षसबलं [11]भीमं घोरविक्रमपौरुषम् ॥ ५५ ॥

---

४५-४७ ] ति० टी०—तस्य रावणस्य भयक्रोधजं यज्जृम्भितं विजृम्भणं तदुत्थविक्षेपात्तच्छब्दमहावायुप्रवृत्त्या दश दिशो व्यामिश्रा व्याप्ताः । रूपवान्रुद्रस्य गात्रेषु भ्रुकुटिचक्षुर्मुखादिष्वदृश्यत ॥ ४५-४७ ॥

रा० टी०—तस्येति । तस्य रावणस्य जृम्भितेन विक्षेपात् वायुसञ्चारात् दश दिशो व्यामिश्राः अत एव तस्य गात्रेषु रूपवान् रुद्रस्य मन्युरिव मन्युरदृश्यत ॥ ४५ ॥

रा० टी०—स इति । स रावणः कुम्भकर्णात्मजौ कुम्भं निकुम्भं च प्रेषयामास ॥ ४६ ॥

रा० टी०—यूपाक्ष इति । यूपाक्षादयः कौम्भकर्णिभ्यां सह निर्ययुः ॥ ४७ ॥

गो० टी०—तस्येति । जृम्भितविक्षेपात् गात्रविनामविस्तारात् । व्यामिश्राः व्याकुलाः । अभवन्निति शेषः । दिशः दिक्स्थिताः । रुद्रस्य कालाग्निरुद्रस्य गात्रे यो रूपवान् मन्युः स इव रावणोऽदृश्यत ॥ ४४—४६ ॥

४८-४९ ] ति० टी०—अथास्यां रात्र्यामेव गच्छतेति वानरानीकमयाय स्वयं सिंहनादं नादयन्कुर्वञ्शशास॥४८॥४९॥

रा० टी०—शासनप्रकारमाह—शशासेति । हे राक्षसाः यूयमद्यैव गच्छत इति सिंहनादं नादयन् सन् स रावणः शशास४८

गो० टी०—शशासेति । अत्रैव अस्मिन् गृह एवारभ्य । सिंहनादं नादयन् नादयन्तः कुर्वन्तः गच्छत । नादयन्नित्यत्र "व्यत्ययो बहुलम्" इति बहुवचनविषये एकवचनम् ॥ ४७ ॥

रा० टी०—तत इति । ज्वलितायुधाः राक्षसाः लंकाया निर्ययुः ॥ ४९ ॥

गो० टी०—ततस्त्विति । ज्वलितेति। आयुधानां ज्वलितत्वं युद्धयात्रायां शिखाविशेषप्रदर्शनात् लङ्काया इति पञ्चमी ॥४८॥

५० ] ति० टी०—सप्रभं निस्तिमिरम् ॥ ५० ॥

रा० टी०—रक्षसामिति । रक्षसां भूषणस्थाभिः स्वाभिः भाभिः प्रकाशैः ते राक्षसाः अग्निभिर्हरयश्च व्योमाकाशं सप्रभं चक्रुः ॥ ५० ॥

गो० टी०—रक्षसामिति । स्वाभिः स्वासाधारणाभिः । रक्षसां भूषणस्थाभिः भाभिश्च । व्योम सेनामध्याकाशम्॥४९॥

५१] ति० टी०—ताराधिपस्य चन्द्रस्य । ताराणां नक्षत्राणाम् तयोर्वानरराक्षसबलयोराभरणाभा आभरणकान्तिश्च ज्वलिता प्रकाशमाना द्यां सेनाद्वयमध्यगताकाशप्रदेशमभासयत् ॥ ५१ ॥

रा० टी०—तत्रेति तत्र तस्मिन् समये ताराधिपस्य चन्द्रस्य आभा ताराणां च भा तयोः बलयोः रामरावणसैन्ययोराभरणाभा च द्यां दिवमभासयत् ॥ ५१ ॥

गो० टी०—तदानीं चन्द्रोदयात् पुनः प्रकाशातिशयमाह—तत्रेति । तत्र तदानीम् । ताराधिपस्याभा ताराणां चाभा तयोर्बलयोराभरणस्था भा च द्याम् आकाशम् अभासयन्॥५०॥

५२ ] ति० टी०—उक्तश्लोकस्यैव व्याख्यानम्—चन्द्राभेत्यादि । ग्रहाणां नक्षत्राणाम् ॥ ५२ ॥

रा० टी०—चन्द्रेति । चन्द्रादित्रयाभा हरिराक्षससैन्यानि भ्राजयामास ॥ ५२ ॥

गो० टी०—दह्यमानलङ्कागृहप्रकाशैः पुनरपि स प्रकाशोऽवर्धतेत्याह—चन्द्रेति ॥ ५१ ॥

५३ ] ति० टी०—संसक्तं संबद्धं सलिलं यस्य सः ॥ ५३॥

रा० टी०—तत्रेति । अर्धप्रदीप्तानां गृहाणां भाभिः प्रभाभिः संसक्तानि सलिलानि यस्य स चलोर्मिः सागरः पुनरधिकं शुशुभे ॥ ५३ ॥

गो० टी०—तत्र चेति । संसक्तपातालः पातालपर्यन्तं संसक्तः ॥ ५२ ॥

५४-५५ ] ति० टी०—उत्तमासिपरश्वधम् । परश्वधो

---

१ निकुम्भं च कुम्भं चेति गो. पाठः । २ कर्णिभ्यामिति गो. रा. पाठः । ३ स्विति गो. पाठः । ४ नादयन् गच्छतात्रैव जयध्वं शीघ्रमेव चेति गो. पाठः । ५ चेति गो. रा. पाठः । ६ आभरणस्थेति गो. पाठः । ७ बलयोरिति गो. रा. पाठः । ८ ज्वलतामिति गो. पाठः । ९ ऊर्ध्वमिति गो. पाठः । १० चलितमिति गो. रा. पाठः । ११ घोरं भीमेति गो. पाठः ।

देहीत्यन्यो ददात्यन्यो ददामीत्यपरः पुनः । किं क्लेशयसि तिष्ठेति तत्रान्योन्यं बभाषिरे ॥ ६६ ॥
विप्रलम्भितशस्त्रं च विमुक्तकवचायुधम् । समुद्यतमहाप्रासं मुष्टिशूलासिकुन्तलम् ॥ ६७ ॥
प्रावर्तत महारौद्रं युद्धं वानररक्षसाम् । वानरान्दश सप्तेति राक्षसा जघ्नुराहवे ॥ ६८ ॥
[ राक्षसान्दश सप्तेति वानराश्चाभ्यपातयन् ]
विप्रलम्भितकेशं च विमुक्तकवचध्वजम् । बलं राक्षसमालम्ब्य वानराः पर्यवारयन् ॥ ६९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

## षट्सप्ततितमः सर्गः ।

कम्पनयूपाक्षशोणिताक्षप्रजङ्घानां मैन्दद्विविदांगदानां च परस्परेषां रोमहर्षणो रणः प्राजनि तत्र वालिपुत्रः प्रजङ्घस्य शिरोमुष्टिना पातयामास यूपाक्षशोणिताक्षावपि क्रमेण मैन्दद्विविदाभ्यां हतौ एवं हतप्रवीरां चमूं कुम्भः पालयामास अथ कुम्भेन प्रायः सर्वे हरयो व्यथिताः तत्समीक्ष्य सुग्रीवश्चिरं दारुणं युद्धान्तेऽनल्पेन विक्रमेण कुम्भं क्षितौ पातयामास ।

प्रवृत्ते संकुले तस्मिन्वीरे[5] घोरजनक्षये । अङ्गदः कम्पनं वीरमाससाद रणोत्सुकः ॥ १ ॥
आहूय सोऽङ्गदं कोपात्ताडयामास वेगितः । गदया कम्पनः पूर्वं स चचाल भृशाहतः ॥ २ ॥
स संज्ञां प्राप्य तेजस्वी चिक्षेप शिखरं गिरेः । अर्दितश्च प्रहारेण कम्पनः पतितो भुवि ॥ ३ ॥

रा० टी०—तदेति । निशाचराः कपीनां प्रवरान् शरैर्भितो जघ्नुः ॥ ६९ ॥

गो० टी०—तथैवेति । कपीनाम् अभिलक्षिताः प्रसिद्धाः। कपिप्रवराः इत्यर्थः ॥ ६४ ॥

रा० टी०—घ्नन्तमिति । घ्नन्तमन्यो जघान गर्हमाणं निन्दयन्तमन्यो जगर्ह ॥ ६६ ॥

गो० टी०—तथैवेति । कपीनां मध्ये हरिवीरान् वीरहरीन् निजघ्नुः ॥ ६९ ॥ ६६ ॥

६६–६९ ] ति० टी०—देहीति । युद्धमिति शेषः ६६-६९॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

रा० टी०—देहीति अन्यो देहि युद्धमिति शेषः इत्युक्ते सति ददामीत्युक्तेति शेषः ददामीति किं क्लेशयसीति तिष्ठेति अन्योन्यं बभाषिरे च ॥ ६७ ॥

गो० टी०—देहीति । अन्यो वीरः प्रहरणमत्र देहीति बभाषे । अन्यो ददातीति बभाषे । अपरः पुनः ददामीति बभाषे । आत्मानम् आयासेन किं क्लेशयसि तिष्ठेत्यन्यो बभाषे । तत्रैवमन्योन्यं बभाषिरे ॥ ६७ ॥

रा० टी०—विप्रलम्भितेति । विप्रलम्भितानि शस्त्राणि यस्मिन् विमुक्तानि कवचंषु आयुधानि यस्मिन् समुद्यताः महाप्रासादयो यस्मिन् तत् वानररक्षसां युद्धं प्रावर्तत सार्धश्लोक एकान्वयी ॥ ६८ ॥

गो० टी०—विप्रलम्भितशस्त्रमित्यादि । सर्वं क्रियाविशेषणम् ॥ ६८ ॥

रा० टी०—वानरानिति । राक्षसाः दश सप्त वानरान् जघ्नुः वानरास्तु राक्षसानभ्यपातयन् ॥ ६९ ॥

गो० टी०—वानरान् दश सप्तेति । राक्षसाः दश सप्तेत्यनेन प्रकारेण वानरान् जघ्नुः । वानराश्च दशसप्तेत्यनेन प्रकारेण राक्षसानभ्यपातयन्निति संबन्धः ॥ ६९ ॥

रा० टी०—विप्रलम्भितेति । विमुक्ताः कवचध्वजाः यस्मिन् तद्राक्षसबलं वानराः पर्यवारयन् ॥ ७० ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पंचसप्ततितमः सर्गः ॥ ७५ ॥

गो० टी०—विस्रस्तेति । आलम्ब्य वेगेन धावमानं प्रतिष्टभ्य ततः परितो वारयन् ॥ ७० ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

१ ] ति० टी०—अथ कम्पनादीनामङ्गदादिभिर्युद्धम्—प्रवृत्ते इति ॥ १ ॥

रा० टी०—युद्धवृत्तान्तमाह—प्रवृत्तइत्यादिभिः । वीरजनानां क्षयः पर्यटनं यस्मिन् संकुले निविडे तस्मिन् संग्रामे प्रवृत्ते सति अंगदः कम्पनं वीरमाससाद ॥ १ ॥

गो० टी०—अथ कुम्भवधः षट्सप्ततितमे—प्रवृत्त इत्यादि । संकुले निरन्तरे ॥ १ ॥

२–३ ] ति० टी०—आहूयेति पूर्वान्वयि । सोऽङ्गदम् । अङ्गदेन युद्धायाहूतः कम्पन इत्यर्थः । स चचाल । अङ्गद इत्यर्थः ॥ २ ॥ ३ ॥

१ यष्टिशूलासिसंकुलमिति गो.पा. । २ इदमर्धमधिकं गो.रा.पा. । ३ विस्रस्तकेशवसनमिति गो.पा. । ४ शस्त्रमिति रा.पा. । ५ घोरे वीरेति गो.रा.पा. ।

ततस्तु कम्पनं दृष्ट्वा शोणिताक्षो हतं रणे । रथेनाभ्यपतत्क्षिप्रं तत्राङ्गदमभीतवत् ॥ ४ ॥
सोऽङ्गदं निशितैर्बाणैस्तदा विव्याध वेगितः । शरीरदारणैस्तीक्ष्णैः कालाग्निसमविग्रहैः॥ ५ ॥
क्षुरक्षुरप्रैर्नाराचैर्वत्सदन्तैः शिलीमुखैः । कर्णिशल्यविपाठैश्च बहुभिर्निशितैः शरैः॥ ६ ॥
अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रः प्रतापवान् । धनुरुग्रं रथं बाणान्ममर्द तरसा बली ॥ ७ ॥
शोणिताक्षस्ततः क्षिप्रमसिचर्म समाददे । उत्पपात तदा क्रुद्धो वेगवानविचारयन् ॥ ८ ॥
तं क्षिप्रतरमाप्लुत्य परामृश्याङ्गदो बली । करेण तस्य तं खड्गं समाच्छिद्य ननाद च॥ ९ ॥
तस्यां स फलके खड्गं निजघान ततोऽङ्गदः । यज्ञोपवीतवच्चैनं चिच्छेद कपिकुञ्जरः ॥ १० ॥
तं प्रगृह्य महाखड्गं विनद्य च पुनः पुनः । वालिपुत्रोऽभिदुद्राव रणशीर्षे परानरीन्॥ ११ ॥
प्रजङ्घसंहितो वीरो यूपाक्षस्तु ततो बली । रथेनाभिययौ क्रुद्धो वालिपुत्रं महाबलम्॥ १२ ॥
आयसीं तु गदां गृह्य स वीरः कनकाङ्गदः । शोणिताक्षः समाश्वस्य तमेवाजुपपात ह॥ १३ ॥
प्रजङ्घस्तु महावीरो यूपाक्षसहितो बली । गदयाभिययौ क्रुद्धो वालिपुत्रं महाबलम्॥ १४ ॥
तयोर्मध्ये कपिश्रेष्ठः शोणिताक्षप्रजङ्घयोः । विशाखयोर्मध्यगतः पूर्णचन्द्र इवाबभौ ॥ १५ ॥

रा० टी०—आहूयेति । सः कम्पनः अंगदमाहूय पूर्वं गदया ताडयामास भृशाहतः अत्यन्तं ताडितः सोऽङ्गदश्चचाल ॥ २ ॥
गो० टी०—आहूयेति । आहूय स्पर्धयित्वा । "ह्वेञ् स्पर्धायां शब्दे च" इति धातोर्ल्यप् । वेगितः सञ्जातवेगः । तारकादित्वादितच् । स अङ्गदः ॥ २ ॥
रा० टी०—स इति । सोऽङ्गदस्सञ्ज्ञां प्राप्य गिरेश्शिखरं चिक्षेप प्रहारेण शिखरताडनेन अर्दितः हतः कम्पनः भुवि पतितः ३
गो० टी०—स इति । चिक्षेप कम्पनोरसीति शेषः॥ ३ ॥
४–५ ] ति० टी०—अभीतवदभीताईम् ॥ ४ ॥ ५ ॥
रा० टी०—तत इति । शोणिताक्षोऽङ्गदमभ्यपतत् ॥ ४ ॥
गो० टी०—ततस्त्विति । कम्पनं हतमित्यन्वयः । तत्र कम्पनयुद्धस्थाने । अभीतवत् अभीतमिति क्रियाविशेषणम्॥४॥
रा० टी०—स इति । स शोणिताक्षः अदारणैः अतिविदारकैरत एव शरैर्विहिंसकैर्विव्याध ॥ ५ ॥
गो० टी०—स इत्यादि । कालाग्निसमविग्रहैः कालाग्नितुल्याकारैरित्यर्थः ॥ ५ ॥
६–८] ति० टी०—क्षुरः क्षुराग्रः शरः । क्षुरप्रोऽर्धचन्द्राकृतिः नाराचः सर्वायसः वत्सदन्तस्तदाकारः शिलीमुखः कङ्कपत्रसदृशः। कर्णी पार्श्वद्वयस्थितकर्णाकारावयवः । शल्यभूयस्त्वादीर्घफलको बाणः शल्यः । विपाठः करवीराग्रसदृश इति तीर्थादयः॥६–८॥
रा० टी०—क्षुरेति । क्षुरादिभिश्शरैर्बाणभेदैः प्रतिविद्धाङ्गोप्यङ्गदः कम्पनस्य धनुरादीनि ममर्द तत्र क्षुरः क्षुरसदृशाग्रभागकः क्षुरप्रोऽर्द्धचन्द्राकारः नाराचो निखिलायसः वत्सदन्तः तदाकृतिः शिलीमुखः कङ्कपत्रतुल्यः कर्णिः पार्श्वद्वयस्थितकर्णाकारावयवः शल्यः दीर्घफलकः विपाटः करवीपत्रसदृशाग्रभागः श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०—क्षुरेत्यादि । क्षुरः नापितशस्त्राकारमुखः क्षुरप्रः अर्धचन्द्राकृतिः । नाराचः शल्यकः । वत्सदन्तैः वत्सदन्ताकारमुखैः । शिलीमुखैः कङ्कपत्राकारमुखैः । उभयपार्श्वकृतकर्णः कर्णी । अर्धनाराचः शल्यः । विपाठः करवीरपत्राग्रसदृशः ॥ ६ ॥ ७ ॥
रा० टी०—शोणितेति । ततः धनुरादिविनाशानन्तरं शोणिताक्षः असिचर्म समाददे उत्पपात च ॥ ८ ॥
गो० टी०—शोणिताक्ष इति । असिश्चर्म चेत्यसिचर्म । एकवद्भावः । उत्पपात । रथादिति शेषः ॥ ८ ॥
९ ] ति० टी०—परामृश्य धृत्वा ॥ ९ ॥
रा० टी०—तमिति । अङ्गदः क्षिप्रतरमाप्लुत्य तं शोणिताक्षं करेण परामृश्य गृहीत्वा तस्य खड्गं समाछिद्य बलादादाय ननाद ॥ ९ ॥
गो० टी०—तमिति । परामृश्य प्रगृह्य ॥ ९ ॥
१०] ति० टी०—अंसरूपे फलके यज्ञोपवीतवदेनं शोणिताक्षं चिच्छेद । तावतापि न परावृत्तो नापि मृतः ॥ १० ॥
रा० टी०—तस्येति । तस्य शोणिताक्षस्य अंसरूपे फलके खड्गमङ्गदो निचखान एनं शोणिताक्षं यज्ञोपवीतवत् यथा भवति तथा चिच्छेद च ॥ १० ॥
गो० टी०—तस्येति । चिच्छेद । छिन्नस्तु न मृतः ॥१०॥
११–१२] ति० टी०—तं महाखड्गं शोणिताक्षीयम्॥११॥१२
रा० टी०—तमिति । तं शोणिताक्षाद्गृहीतं महाखड्गं वालिपुत्रः प्रगृह्य अपरान् अरीन् अभिदुद्राव ॥ ११ ॥
गो० टी०—तमिति । अपरान् प्रजङ्घादीन् ॥ ११ ॥
१३–१५ ] ति० टी०—कनकाङ्गद इति शोणिताक्षविशेषणम् ॥ १३–१५ ॥

१ शरैरदारणैरिति रा० पाठः । २ क्षुरप्रैरिति गो. पाठः । ३ अभ्यगमिति गो. पाठः । ४ दिविमिति गो. रा. पाठः । ५ अनयोः पूर्वोत्तरपद्ययोर्व्यत्यासेनपाठः गो. रा. पुस्तकयोः । ६ खेनेति गो. पाठः । ७ अमवदिति गो पाठः ।

अङ्गदं परिरक्षन्तौ मैन्दो द्विविद एव च । तस्य तस्थतुरभ्याशे परस्परदिदृक्षया ॥ १६ ॥
अभिपेतुर्महाकायाः प्रतियत्ता महाबलाः । राक्षसा वानरान्रोषादसिबाणगदाधराः ॥ १७ ॥
त्रयाणां वानरेन्द्राणां त्रिभी राक्षसपुंगवैः । संसक्तानां महद्युद्धमभवद्रोमहर्षणम् ॥ १८ ॥
ते तु वृक्षान्समादाय संप्रचिक्षिपुराहवे । खड्गेन प्रतिचिक्षेप तान्प्रजङ्घो महाबलः ॥ १९ ॥
रथान्सर्वान्द्रुमाञ्छैलान्प्रतिचिक्षिपुराहवे । शरौघैः प्रतिचिच्छेद तान्यूपाक्षो महाबलः ॥ २० ॥
सृष्टान्द्विविदमैन्दाभ्यां द्रुमानुत्पाट्य वीर्यवान् । बभञ्ज गदया मध्ये शोणिताक्षः प्रतापवान् ॥ २१ ॥
उद्यम्य विपुलं खड्गं परमर्मविदारणम् । प्रजङ्घो वालिपुत्राय अभिदुद्राव वेगितः ॥ २२ ॥
तमभ्याशगतं दृष्ट्वा वानरेन्द्रो महाबलः । आजघानाश्वकर्णेन द्रुमेणातिबलस्तदा ॥ २३ ॥
बाहुं चास्य सनिस्त्रिंशमाजघान स मुष्टिना । वालिपुत्रस्य घातेन स पपात क्षितावसिः ॥ २४ ॥
तं दृष्ट्वा पतितं भूमौ खड्गं मुसलसंनिभम् । मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ २५ ॥
स ललाटे महावीर्यमङ्गदं वानरर्षभम् । आजघान महातेजाः स मुहूर्तं चचाल ह ॥ २६ ॥
स संज्ञां प्राप्य तेजस्वी वालिपुत्रः प्रतापवान् । प्रजङ्घस्य शिरः कायात्पातयामास मुष्टिना ॥ २७ ॥
स यूपाक्षोऽश्रुपूर्णाक्षः पितृव्ये निहते रणे । अवरुह्य रथात्क्षिप्रं क्षीणेषुः खड्गमाददे ॥ २८ ॥

---

रा० टी०—आयसीमिति । कनकमयोऽङ्गदो यस्य स शोणिताक्षः समाश्वस्य गदां गृह्य गृहीत्वा तमङ्गदमेवानुपपात ॥ १२ ॥

गो० टी०—आयसीमिति । तमेव अङ्गदमेव ॥ १२ ॥

रा० टी०—प्रजङ्घ इति । यूपाक्षसहितः प्रजङ्घोपि वालिपुत्रमभिययौ ॥ १३ ॥

गो० टी०—प्रजङ्घेति । स्पष्टः ॥ १३ ॥

रा० टी०—तयोरिति । शोणिताक्षप्रजंघयोर्मध्ये गतः कपिश्रेष्ठः विशाखयोः तारयोर्मध्यगतः चन्द्र इवाबभौ ॥ १४ ॥

गो० टी०—तयोरिति । यूपाक्षस्य दूरस्थत्वादनुक्तिः॥१४॥

१६ ] ति० टी०—परस्परदिदृक्षया युद्धावसरदिदृक्षया, स्वानुरूपप्रतिभटराक्षसजिज्ञासया वा ॥ १६ ॥

रा० टी०—अङ्गदमिति । अङ्गदं परिरक्षन्तौ मैन्दो द्विविदश्च परस्परदिदृक्षया स्वस्वयुद्धचातुरीबोधनेच्छया तस्याङ्गदस्य अभ्याशे समीपे तस्थतुः ॥ १६ ॥

गो० टी०—अङ्गदमिति । परिरक्षन्तौ । मातुलत्वादिति भावः । परस्परदिदृक्षया । स्वानुरूपप्रतिभटराक्षसजिज्ञासयेत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—प्रतियत्ताः सावधानाः ॥ १७ ॥

रा० टी०—अभीति । प्रतियत्ताः सावधानाः राक्षसाः रोषात् वानरान् अभिपेतुः ॥ १६ ॥

गो० टी०—अभिपेतुरिति । प्रतियत्ताः प्रतियत्नवन्तः । गुणाधानं प्रतियत्नः । आरोपितवीर्या इत्यर्थः ॥ १६–१८ ॥

१८–२० ] ति० टी०—त्रयाणामङ्गदमैन्दद्विविदानाम् । त्रिभिः शोणिताक्षप्रजङ्घयूपाक्षैः ॥ १८–२० ॥

रा० टी०—त्रयाणामिति । संसक्तानां युद्धोत्साहयुक्तानां त्रयाणामङ्गदमैन्दद्विविदानां वानरेन्द्राणां त्रिभिः शोणिताक्षप्रजङ्घयूपाक्षैः सह महद्युद्धमभवत् ॥ १७ ॥

रा० टी०—ते इति । तेऽङ्गदादयः वृक्षान् समादाय संप्रचिक्षिपुः प्रजङ्घस्तु तान् वृक्षान् खड्गेन प्रचिच्छेद ॥ १८ ॥

रा० टी०—रथानिति । तेऽङ्गदादयः द्रुमैश्शैलैश्च रथादीन् प्रचिक्षिपुः आच्छादयामासुः यूपाक्षस्तु तान् द्रुमादीन् शरौघैः प्रतिचिच्छेद ॥ १९ ॥

गो० टी०—रथानिति । रथान्रथान् । प्रतीति शेषः॥१९

२१ ] ति० टी०—सृष्टान्प्रक्षिप्तान् ॥ २१ ॥

रा० टी०—तदेव विशिष्याह—सृष्टानिति । द्विविदमैन्दाभ्यामुत्पाट्य सृष्टान् द्रुमान् शोणिताक्षो बभञ्ज ॥ २० ॥

गो० टी०—सृष्टानिति । उत्पाट्य सृष्टानित्यन्वयः॥२०॥

२२–२८ ] ति० टी०—वालिपुत्रायोद्यम्य वालिपुत्रं हन्तुमुद्यम्य ॥ २२—२८ ॥

रा० टी०—उद्यम्येति । प्रजंघः विपुलं महान्तं खड्गमुद्यम्य वालिपुत्राय अभिदुद्राव ॥ २१ ॥

गो० टी०—उद्यम्येति । वालिपुत्राय वालिपुत्रं हन्तुम् । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ॥२१॥

रा० टी०—तमिति । वानरेन्द्रोऽङ्गदः अभ्याशगतं समीपं प्राप्तं तं प्रजङ्घं दृष्ट्वा अश्वकर्णेन तदभिधेन द्रुमेण आजघान२२

गो० टी०—तमिति । वानरेन्द्रः अङ्गदः ॥ २२ ॥

रा० टी०—बाहुमिति । सोऽङ्गदः सनिस्त्रिंशं खड्गसहितमस्य प्रजंघस्य बाहुं मुष्टिना जघान सोसिः वालिपुत्रस्य घातेन क्षितौ पपात ॥ २३ ॥

---

१ चर्मेति गो.पाठः । २ निशाचर इति गो.पाठः । ३ निकृन्तनामिति गो.पाठः । ४ खड्गेनापातयत्क्षिताविति गो. पाठः । ५ वीर्यवानिति रा.पाठः ।

तमापतन्तं संप्रेक्ष्य यूपाक्षं द्विविदस्त्वरन् । आजघानोरसि क्रुद्धो जग्राह च बलाद्बली ॥ २९ ॥
गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षो महाबलम्[1] । आजघान महातेजा वक्षसि द्विविदं ततः ॥ ३० ॥
स ततोऽभिहतस्तेन चचाल च महाबलः । उद्यतां च पुनस्तस्य जहार द्विविदो गदाम्[2] ॥ ३१ ॥
एतस्मिन्नन्तरे मैन्दो[3] द्विविदाभ्याशमागमत् । [ यूपाक्षं ताडयामास तलेनोरसि वीर्यवान् ]
तौ शोणिताक्षयूपाक्षौ प्लवंगाभ्यां तरस्विनौ । चक्रतुः समरे तीव्रमाकर्षोत्पाटनं भृशम् ॥ ३२ ॥
द्विविदः शोणिताक्षं तु विददार नखैर्मुखे । निष्पिपेष स वीर्येण क्षिताववाविध्य वीर्यवान् ॥ ३३ ॥
यूपाक्षमभिसंक्रुद्धो मैन्दो वानरपुंगवः[4] । पीडयामास बाहुभ्यां पपात स हतः क्षितौ ॥ ३४ ॥
हतप्रवीरा व्यथिता राक्षसेन्द्रचमूस्तथा । जगामाभिमुखी सा तु कुम्भकर्णात्मजो यतः[5] ॥ ३५ ॥
आपतन्तीं च वेगेन[6] कुम्भस्तां सान्त्वयच्चमूम् । अथोत्कृष्टं महावीर्यैर्लब्धलक्षैः प्लवंगमैः ॥ ३६ ॥
निपातितमहावीरां दृष्ट्वा रक्षश्चमूं तदा[7] । कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ॥ ३७ ॥
स धनुष्मन्विनां[8] श्रेष्ठः प्रगृह्य सुसमाहितः । मुमोचाशीविषप्रख्याञ्छरान्देहविदारणान् ॥ ३८ ॥
तस्य तच्छुशुभे भूयः सशरं धनुरुत्तमम् । विद्युदैरावतार्चिष्मद्[9] द्वितीयेन्द्रधनुर्यथा ॥ ३९ ॥
आकर्णकृष्टमुक्तेन जघान द्विविदं तदा[10] । तेन हाटकपुङ्खेन पत्रिणा पत्रवाससा ॥ ४० ॥

---

गो० टी०—बाहुमिति । सनिर्त्रिंशं सखड्गम् ॥ २३ ॥

रा० टी०—तमिति । महाबलः प्रजङ्घः भूमौ पतितं खड्गं दृष्ट्वा मुष्टिं संवर्त्तयामास भ्रामयामास ॥ २४ ॥

रा० टी०—स इति । स प्रजङ्घः अङ्गदं ललाटे आजघान अत एव महातेजा अङ्गदः मुहूर्तं चचाल बभ्राम ॥ २५ ॥

रा० टी०—स इति । वालिपुत्रः सञ्ज्ञां प्राप्य प्रजङ्घस्य शिरः मुष्टिना कायात् पातयामास ॥ २७ ॥

रा० टी०—स इति । पितृव्ये निहते सति अश्रुपूर्णाक्षो यूपाक्षः रथादवरुह्य खड्गमाददे ॥ २७ ॥

गो० टी०—तमिति । उत्पलसन्निभम् । नीलोत्पलसमानकान्तिमित्यर्थः । महाबलः प्रजङ्घः ॥ २४—३१ ॥

२९—३१ ] ति० टी०—जग्राह दधार ॥ २९—३१ ॥

रा० टी०—तमिति । द्विविदः यूपाक्षं संप्रेक्ष्य उरसि आजघान बलात् हठात् जग्राह च ॥ २८ ॥

रा० टी०—गृहीतमिति । शोणिताक्षः भ्रातरं गृहीतं दृष्ट्वा द्विविदं वक्षसि आजघान ॥ २९ ॥

रा० टी०—स इति । तेन शोणिताक्षेण अभिहतः स द्विविदः चचाल पुनरनन्तरं तस्य शोणिताक्षस्य गदां जहार च ॥ ३० ॥

३२—३४ ] ति० टी०—एतस्मिन्नन्तरे शोणिताक्षताडिते द्विविदे । शोणिताक्षगदां गृह्णाने सतीत्यर्थः । भ्रातृसहायार्थं तत्समीपमागमत् । प्लवंगाभ्यां मैन्दद्विविदाभ्याम् । आकर्षआकर्षणम् । उत्पाटनमुत्थानम् ॥ ३२—३४ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे समये मैन्दः द्विविदाभ्याशमागमत् अर्द्धं पृथक्—ताविति । शोणिताक्षयूपाक्षौ प्लवगाभ्यां मैन्दद्विविदाभ्यामाकर्षमाकर्षणमुत्पाटनमुत्थायाधः पातनं च चक्रतुः ॥ ३१ ॥

रा० टी०—द्विविद इति । स द्विविदः शोणिताक्षं मुखे विददार क्षिताववाविध्य निष्पिपेष च ॥ ३२ ॥

रा० टी०—यूपाक्षमिति । मैन्दः यूपाक्षं बाहुभ्यां पीडयामास अत एव हतस्सयूपाक्षः क्षितौ पपात ॥ ३३ ॥

गो० टी०—ताविति । प्लवङ्गाभ्यां मैन्दद्विविदाभ्याम् । आकर्षोत्पाटनम् आकर्षणताडने । अन्योन्यमिति शेषः ३२—३५

३५] ति० टी०—कुम्भकर्णात्मजो यतः । यत्र तत्रेत्यर्थः ३५

रा० टी०—हतेति । हताः प्रवीराः यस्याः अत एव व्यथिता राक्षसेन्द्रचमूः यतः यत्र कुम्भकर्णात्मजः तदभिमुखी सती जगाम ॥ ३४ ॥

३६—३८ ] ति० टी०—सान्त्वयदसान्त्वयत् । उत्कृष्टं रक्षः कुम्भो लब्धलक्षैर्महावीर्यैस्तेजस्विभिर्वानरैर्निपातितमहावीरां चमूं दृष्ट्वा रणे सुदुष्करं कर्म चक्रे इति संबन्धः ॥ ३६—३८ ॥

रा० टी०—आपतन्तीमिति । कुम्भः आपतन्तीं स्वसमीपमागच्छन्तीम् चमूं सान्त्वयत् असान्त्वयत् अर्द्धं पृथक् ॥ ३५ ॥

गो० टी०—आपतन्तीमित्यर्धम् । सान्त्वयत् असान्त्वयत् ॥ ३६ ॥

रा० टी०—अथेति । उत्कृष्टं महत् रक्षः कुम्भः लब्धलक्षैः प्राप्तावसरैः प्लवङ्गमैः निपातितमहावीरां चमूं दृष्ट्वा सुदुष्करमन्यैः कर्तुमशक्यं कर्म चक्रे सार्द्धश्लोक एकान्वयी ॥ ३६ ॥

रा० टी०—तत्कर्माह—स इति । सुसमाहितः स कुम्भः धनुः प्रगृह्य शरान् मुमोच ॥ ३७ ॥

गो० टी०—अथेत्यादिसार्धश्लोक एकान्वयः । लब्धलक्षैः अप्रतिद्वन्द्विभिः ॥ ॥ ३७—३८ ॥

३९—४० ] ति० टी०—तस्य कुम्भस्य तत्सशरं धनुर्वि-

---

१ महाबल इति गो.रा.पाठः। २ गदाग्रेणेति गो.पाठः। ३ तदेति रा. गदेति गो.पाठः। ४ वीरो मैन्दो वानरयूथप इति गो.पाठः। ५ इत्यर्धमधिकं गो. पुस्तके। ६ च वेगेनेति गो. पाठः। ७ भूमाविति रा. पाठः। ८ यूथप इति गो. पाठः। ९ द्युत इति गो. पाठः। १० तत इति गो. पाठः।

सहसाभिहतस्तेन विप्रमुक्तपदः स्फुरन् । निपपात त्रिकूटाभो विह्वलन्प्लवगोत्तमः ॥ ४१ ॥
मैन्दस्तु भ्रातरं तत्र भग्नं दृष्ट्वा महाहवे । अभिदुद्राव वेगेन प्रगृह्य विपुलां शिलाम् ॥ ४२ ॥
तां शिलां तु प्रचिक्षेप राक्षसाय महाबलः । बिभेद तां शिलां कुम्भः प्रसन्नैः पञ्चभिः शरैः ॥ ४३ ॥
संधाय चान्यं सुमुखं शरमाशीविषोपमम् । आजघान महातेजा वक्षसि द्विविदाग्रजम् ॥ ४४ ॥
स तु तेन प्रहारेण मैन्दो वानरयूथपः । मर्मण्यभिहतस्तेन पपात भुवि मूर्च्छितः ॥ ४५ ॥
अङ्गदो मातुलौ दृष्ट्वा मथितौ तु महाबलौ । अभिदुद्राव वेगेन कुम्भमुद्यतकार्मुकम् ॥ ४६ ॥
तमापतन्तं विव्याध कुम्भः पञ्चभिरायसैः । त्रिभिश्चान्यैस्त्रिभिर्बाणैर्मातंगमिव तोमरैः ॥
सोऽङ्गदं बहुभिर्बाणैः कुम्भो विव्याध वीर्यवान् ॥ ४७ ॥
अकुण्ठधारैर्निशितैस्तीक्ष्णैः कनकभूषणैः । अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रो न कम्पते ॥ ४८ ॥
शिलापादपवर्षाणि तस्य मूर्ध्नि ववर्ष ह । स प्रचिच्छेद तान्सर्वान् बिभेद च पुनः शिलाः ॥ ४९ ॥
कुम्भकर्णात्मजः श्रीमान्वालिपुत्रसमीरितान् । आपतन्तं च संप्रेक्ष्य कुम्भो वानरयूथपम् ॥ ५० ॥
भ्रुवौ विव्याध बाणाभ्यामुल्काभ्यामिव कुञ्जरम् । तस्य सुस्राव रुधिरं पिहिते चास्य लोचने ॥ ५१ ॥
अङ्गदः पाणिना नेत्रे पिधाय रुधिरोक्षिते । सालमासन्नमेकेन परिजग्राह पाणिना ॥ ५२ ॥

---

युदैरावतसंबन्धतोऽर्चिष्मद्भासमानं द्वितीयेन्द्रधनुर्यथापरमिन्द्रधनुरिव भूयः शुशुभे । विद्युच्छरस्थानीया । ऐरावतोऽभ्रमातङ्गस्तस्येन्द्रधनुषा संबन्धात् । 'इन्द्रायुधं त्विन्द्रधनुस्तदेव ऋजु रोहितम्'। ऐरावतं ऋजुदीर्घेन्द्रधनुस्तद्युक्तं च। स्वाभाविकमिन्द्रधनुरित्यर्थः। एतच्चोत्पातकाले भवतीत्यर्थ इति तीर्थः ॥३९॥

रा० टी०—तस्येति । सशरं तस्य कुम्भस्य धनुः भूयोऽधिकं शुशुभे तत्र दृष्टान्तः विद्युदैरावतयोरर्चिष्मत् प्रभाविशिष्टं द्वितीयेन्द्रधनुर्यथा विद्युत्स्थानीयश्शरः ऐरावतस्थानीयः राक्षसदेहः उपमानसम्बन्धः उत्पाते प्रसिद्धः अभूतोपमा वा ३८

गो० टी०—तस्येति । विद्युदैरावताभ्याम् अर्चिष्मत् । ज्यास्थानीया विद्युत् बाणस्थानीयमैरावतम् ऐरावतं नाम दीर्घेन्द्रधनुः इन्द्रायुधं शक्रधनुस्तद्दीर्घमृजुरोहितम् । ऐरावतं चेति वैजयन्ती । एवंभूतं द्वितीयमिन्द्रधनुरिव स्थितम्। ऐरावतादिसंयोग उत्पातकाले भवति अभूतोपमा वा ॥ ३९ ॥

रा० टी०—आकर्णेति । आकर्णं कृष्टेन पश्चान्मुखेन पत्रपुङ्खाविव वासो यस्य तेन हाटकपुंखेन पत्रिणा शरेण द्विविदं जघान कुम्भ इति शेषः ॥ ३९ ॥

गो० टी०—आकर्णेति । हाटकं स्वर्णम् । पत्रिणा बाणेन । पत्रवाससा वासःस्थानीयकङ्कपत्रेण ॥ ४० ॥

४१-४२ ] ति० टी०—विप्रमुक्तपदं विप्रमुक्तं प्रसारितं पदं येन सः ॥ ४१ ॥ ४२ ॥

रा० टी०—सहसेति । तेन शरेण अभिहतः अत एव विप्रमुक्ते प्रस्खलिते पदे पादौ यस्य स प्लवगोत्तमो द्विविदः स्फुरन् प्रकाशमानः विह्वलन् च सन् निपपात ॥ ४० ॥

रा० टी०—मैन्द इति । मैन्दः भ्रातरं भग्नं दृष्ट्वा अभिदुद्राव ॥ ४१ ॥

गो० टी०—सहसेति । विप्रमुक्तपदः शिथिलपदविन्यासः । स्फुरन् चलन् । विह्वलः विवशः सन् ॥ ४१–४६ ॥

४३-५२ ] ति० टी०—प्रसन्नैरुत्तेजितैः ॥ ४३–५२ ॥

रा० टी०—तामिति । महाबलो मैन्दः तां गृहीतां शिलां राक्षसाय कुम्भाय प्रचिक्षेप कुम्भः प्रसन्नैः भासमानैः शरैः तां शिलां बिभेद ॥ ४२ ॥

रा० टी०—संधायेति । महातेजाः कुम्भः अन्यं शरं संधाय द्विविदाग्रजं मैंदं वक्षसि आजघान ॥ ४३ ॥

रा० टी०—स इति । तेन कुंभेन कर्त्रा तेन कुम्भकृतेन प्रहारेण मर्मण्यभिहतो मैन्दो भुवि पपात ॥ ४४ ॥

रा० टी०—अङ्गद इति । अङ्गदः मातुलौ मैंदद्विविदौ मथितौ हिंसितप्रायौ दृष्ट्वा कुंभमभिदुद्राव ॥ ४५ ॥

रा० टी०—तमिति । कुम्भः आपतन्तं तमङ्गदं त्रिभिरन्यैर्बाणैः तोमरैर्मातङ्गमिव विव्याध ॥ ४६ ॥

गो० टी०—तमिति । तोमरैः अङ्कुशैः ॥ ४७ ॥

रा० टी०—स इति । स कुम्भः अकुण्ठधारैर्बहुभिर्विशिखैः शिलारहितैर्बाणैरङ्गदं विव्याध ॥ ४७ ॥

गो० टी०—स इति । अकुण्ठधारैः अभग्नाग्रैः । निशितैः तनूकृतैः । तीक्ष्णैः अयोमयैः । तीक्ष्णं गरे मृधे लोह इति रत्नमाला ॥ ४८ ॥

रा० टी०—अङ्गद इति । प्रतिविद्धांगोप्यङ्गदो न कम्पते अकम्पत तस्य कुम्भस्य मूर्ध्नि शिलापादपवर्षाणि ववर्ष च ॥४८॥

---

१ अद्रिकूटेति गो. पाठः । २ विह्वल इति गो. पाठः । ३ दृष्ट्वा भग्नं तत्रेति गो. रा. पाठः । ४ महतीमिति गो. पाठः । ५ पतिताविति गो. पाठः । ६ शितैरिति गो. रा. पाठः । ७ विविधैरिति गो. पाठः । ८ विद्धेति गो. रा. पाठः । ९ भ्रुवोरिति गो. रा. पाठः ।

संपीड्योरसि सस्कन्धं करेणाभिनिवेश्य च । किंचिदभ्यवनम्यैनमुन्ममाथ महारणे ॥ ५३ ॥
तमिन्द्रकेतुप्रतिमं वृक्षं मन्दरसंनिभम् । समुत्सृजत वेगेन मिषतां सर्वरक्षसाम् ॥ ५४ ॥
स चिच्छेद शितैर्बाणैः सप्तभिः कायभेदनैः । अङ्गदो विव्यथेऽभीक्ष्णं स पपात मुमोह च ॥ ५५ ॥
अङ्गदं पतितं दृष्ट्वा सीदन्तमिव सागरम् । दुरासदं हरिश्रेष्ठा राघवाय न्यवेदयन् ॥ ५६ ॥
रामस्तु व्यथितं श्रुत्वा वालिपुत्रं महाहवे । व्यादिदेश हरिश्रेष्ठाञ्जाम्बवत्प्रमुखांस्ततः ॥ ५७ ॥
ते तु वानरशार्दूलाः श्रुत्वा रामस्य शासनम् । अभिपेतुः सुसंक्रुद्धाः कुम्भमुद्यतकार्मुकम् ॥ ५८ ॥
ततो द्रुमशिलाहस्ताः कोपसंरक्तलोचनाः । रिरक्षिषन्तोऽभ्यपतन्नङ्गदं वानरर्षभाः ॥ ५९ ॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः । कुम्भकर्णात्मजं वीरं क्रुद्धाः समभिदुद्रुवुः ॥ ६० ॥
समीक्ष्यापततस्तांस्तु वानरेन्द्रान्महाबलान् । आववार शरौघेण नगेनेव जलाशयम् ॥ ६१ ॥
तस्य बाणपथं प्राप्य न शेकुरपि वीक्षितुम् । वानरेन्द्रा महात्मानो वेलामिव महोदधिः ॥ ६२ ॥
तांस्तु दृष्ट्वा हरिगणाञ्शरवृष्टिभिरर्दितान् । अङ्गदं पृष्ठतः कृत्वा भ्रातृजं प्लवगेश्वरः ॥ ६३ ॥

---

गो० टी०—अङ्गद इति । न कम्पते नाकम्पत ॥ ४९ ॥

रा० टी०—स इति । कुम्भकर्णात्मजः स कुम्भः वालिपुत्रसमीरितान् प्रक्षिप्तान् सर्वान् तान् तरून् प्रचिच्छेद शिलाश्च बिभेद ॥ ४९ ॥

रा० टी०—आपतन्तमिति । कुम्भः आपतन्तं वानरर्षभमङ्गदं संप्रेक्ष्य बाणाभ्यां भ्रुवोर्विव्याध ॥ ५० ॥

रा० टी०—तस्येति । तस्यांगदस्य रुधिरं सुस्राव अत एव अस्याङ्गदस्य लोचने पिहिते रुधिरेणाच्छादिते अभवतामिति शेषः अर्द्ध पृथक् ॥ ५१ ॥

रा० टी०—अङ्गद इति । अङ्गदः रुधिरेण उक्षिते सिक्ते नेत्रे पिधाय आसन्नं समीपवर्तिनं शालमेकेन पाणिना जग्राह॥५२॥

गो० टी०—स इति । तान् वृक्षान् प्रचिच्छेद शिलाः बिभेदेत्यन्वयः ॥ ५० ॥ ५२ ॥

५३] ति० टी०—सस्कन्धमेतं सालमुरसि निवेश्यैकेन करेण संपीड्य सूक्ष्मशाखां किंचिदवनम्योन्ममाथ निष्पत्रं कृतवान्॥५३

रा० टी०—ग्रहणप्रकारमाह—सम्पीड्येति । सस्कन्धं शाखासहितं तरुं करेण एकपाणिना उरसि अभिनिवेश्य किंचित् अभ्यवनम्य सम्पीड्य पत्रादिरहितं कृत्वा गज इव उन्ममाथ सूक्ष्मशाखारहितं चकार ॥ ५३ ॥

गो० टी०—संपीड्येति । एकहस्तस्य नेत्रपिधानव्यापृतत्वादेकहस्तेनोत्पाटनासम्भवादुरसि संपीड्येत्युक्तम् । अभिनिवेश्य । अभिगृह्येत्यर्थः ॥ ५३–५८ ॥

५४ ] ति० टी०—समुत्सृजत समुदसृजत् ॥ ५४ ॥

रा० टी०—तमिति । इन्द्रकेतुप्रतिमं तं वृक्षं सर्वरक्षसां पश्यतां सतां समुत्सृजत समुदसृजत ॥ ५४ ॥

५५–६० ] ति० टी०—अभीक्ष्णं विव्यथे । पुनः पुनः क्रियमाणेन युद्धेनेति भावः ॥ ५५—६० ॥

रा० टी०—स इति । स कुंभः सप्तभिर्बाणैः चिच्छेद वृक्षमिति शेषः अत एव सः छेदितवृक्षरूपायुधोऽङ्गदः विव्यथे अत एव पपात मुमोह च ॥ ५५ ॥

रा० टी०—अङ्गदमिति । सागरे इव सीदन्तं पतितमङ्गदं दृष्ट्वा हरिश्रेष्ठाः राघवाय रामाय न्यवेदयन् ॥ ५६ ॥

रा० टी०—राम इति । रामः वालिपुत्रं व्यथितं श्रुत्वा हरिश्रेष्ठान् व्यादिदेश ॥ ५७ ॥

रा० टी०—ते इति । वानरशार्दूलाः रामस्य शासनं श्रुत्वा कुम्भमभिपेतुः ॥ ५८ ॥

रा० टी०—तदेवभंग्यन्तरेणाह—तत इति द्वाभ्याम् अङ्गदं रिरक्षिषन्तो वानरर्षभाः अभ्यपतन् ॥ ५९ ॥

रा० टी०—जाम्बवानिति । जाम्बवत्प्रभृतयः कुम्भकर्णात्मजं समभिदुद्रुवुः ॥ ६० ॥

गो०टी०—तत इति । रिरक्षिषन्तः रक्षितुमिच्छन्तः॥५९-६१

६१–६२ ] ति० टी०—आववारावृणोत् । नगेन पर्वतेन जलाशयं जलप्रवाहमिव ॥ ६१ ॥ ६२ ॥

रा० टी०—समीक्ष्येति । आपततो वानरेन्द्रान् समीक्ष्य नगेन वृक्षेण जलाशयमिव शरौघेणाववार ॥ ६१ ॥

गो० टी०—समीक्ष्येति । जलाशयं जलप्रवाहम् । नगेनेव वृक्षेणेव । वृक्षौघपरोयं शब्दः ॥ ६२ ॥

रा० टी०—तस्येति । तस्य कुम्भस्य बाणपथं प्राप्य महात्मानोपि वानरेन्द्राः महोदधिर्वेलामिव अतिवर्तितुं न शेकुः ॥ ६२ ॥

गो० टी०—तस्येति । अतिवर्तितुम् अतिक्रम्याभिमुख्येन गन्तुम् ॥ ६३ ॥

६३ ] ति० टी०—भ्रातृजं भ्रातृपुत्रम् । प्लवगेश्वरः सुग्रीवः । एतदन्तमष्टमीरात्रौ युद्धम् । अतः परं नवमीदिनयुद्धम् ६३

---

१ चोरसि स्कन्धमिति गो. पाठः । २ यथागज इति गो. रा. पाठः । ३ पश्यतामिति गो. रा. पाठः । ४ विभेदेति गो.पाठः । ५ ससादचेति गो. पाठः । ६ व्यथितमिति गो. पाठः । ७ सागरे इति गो. रा. पाठः । ८ श्रेष्ठं रामायान्ये इति गो. पाठः । ९ अतिवर्तितुमिति गो. रा. पाठः ।

अभिदुद्राव सुग्रीवः कुम्भकर्णात्मजं रणे । शैलसानुचरं नागं वेगवानिव केसरी ॥ ६४ ॥
उत्पाट्य च महावृक्षानश्वकर्णादिकान्बहून् । अन्यांश्च विविधान्वृक्षांश्चिक्षेप स महाकपिः ॥ ६५ ॥
तां छादयन्तीमाकाशं वृक्षवृष्टिं दुरासदाम् । कुम्भकर्णात्मजः श्रीमांश्चिच्छेद स्वशरैः शितैः ६६॥
[ अभिलक्षेण तीव्रेण कुम्भेन निशितैः शरैः । ]
आर्दितास्ते द्रुमा रेजुर्यथा घोराः शतघ्नयः । द्रुमवर्षं तु तद्भिन्नं दृष्ट्वा कुम्भेन वीर्यवान् ॥ ६७ ॥
वानराधिपतिः श्रीमान्महासत्त्वो न विव्यथे । स विध्यमानः सहसा सहमानस्तु ताञ्छरान् ६८ ॥
कुम्भस्य धनुराक्षिप्य बभञ्जेन्द्रधनुष्प्रभम् । अवप्लुत्य धनुः शीघ्रं कृत्वा कर्म सुदुष्करम् ॥ ६९ ॥
अब्रवीत्कुपितः कुम्भं भग्नशृङ्गमिव द्विपम् । निकुम्भाग्रज वीर्यं ते बाणवेगं तदद्भुतम् ॥ ७० ॥
संनतिश्च प्रभावश्च तव वा रावणस्य वा । प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपम ॥ ७१ ॥
एकस्त्वमनुजातोऽसि पितरं बलवत्तरम् । त्वामेवैकं महाबाहुं शूलहस्तमरिंदमम् ॥ ७२ ॥
त्रिदशा नातिवर्तन्ते जितेन्द्रियमिवाधयः । विक्रमस्व महाबुद्धे कर्माणि मम पश्य च ॥ ७३ ॥

---

रा० टी०—तानिति । सुग्रीवः शरवृष्टिभिरर्दितान् हरिगणान् दृष्ट्वा अङ्गदं पृष्ठतः कृत्वा कुम्भकर्णात्मजमभिदुद्राव तत्र दृष्टान्तः शैलसानुषु चरति तं नागं गजं केसरीव श्लोकद्वयमेकान्वयि ॥ ६३ ॥ ६४ ॥

गो० टी०—तांस्त्वित्यादिश्लोकद्वयमेकान्वयम् । अङ्गदं पृष्ठतः कृत्वा । अन्यथा हन्यादिति भावः । शैलसानुचरं शैलसानुचरत्वेनातिबलम् । गिरिचर इव नागः प्राणसारं बिभर्तीति कालिदासोक्तेः ॥ ६४ ॥ ६७ ॥

६४-६९ ] ति० टी०—शैलसानुषु चरति तं नागं गजम् ॥ ६४-६९ ॥

रा० टी०—उत्पाट्येति । महाकपिस्सुग्रीवः अश्वकर्णादिकान् वृक्षान् चिक्षेप ॥ ६५ ॥

रा० टी०—तामिति । आकाशं छादयन्तीं नगवृष्टिं कुम्भकर्णात्मजः चिच्छेद ॥ ६६ ॥

रा० टी०—आर्दिता इति । अर्दिताः शतघ्न्य इव अर्दिताः द्रुमाः रेजुः अर्द्धं पृथक् द्रुमेति । वानराधिपतिस्सुग्रीवः कुम्भेन भिन्नं द्रुमवर्षं दृष्ट्वापि न विव्यथे ॥ ६७ ॥

रा० टी०—स इति । भिद्यमानः स सुग्रीवः शरान् सहमानस्सन् कुम्भस्य धनुराक्षिप्य बभञ्ज ॥ ६८ ॥

रा० टी०—अवप्लुत्येति । कुपितस्सुग्रीवः दुष्करं कर्म धनुर्भङ्गक्रियां कृत्वा अवप्लुत्य भग्नशृङ्गं विध्वस्तदन्तं द्विपमिव कुम्भमब्रवीत् ॥ ६९ ॥

गो० टी०—अभिलक्षेणेति । अभिलक्षेण अभिगतलक्ष्येण । आर्दिताः सर्वतो नीरन्ध्रतया व्याप्ताः । शतघ्नयः शतघ्न्यः । शङ्कुचिता आयुधविशेषाः ॥ ६८ ॥ ७१ ॥

७० ] ति० टी०—अथ कुम्भस्य शौर्यं स्तौति—निकुम्भाग्रजेति । वेगशब्दोऽर्शआदिः ॥ ७० ॥

रा० टी०—तदाकारमाह—निकुम्भेत्यादिभिः । हे निकुम्भाग्रज बाणस्य वेगो येन तत्ते वीर्यमद्भुतमिति शेषः अत एव संनतिः स्वजनप्रवणता प्रभावः तेजः च तव रावणस्य च एव एवं नान्यराक्षसेषु दृष्टावित्यर्थः एको वा शब्दश्चार्थे ॥ ७० ॥

गो० टी०—निकुम्भाग्रजेति । वीर्यस्य बाणवेगवत्त्वं तद्धेतुत्वात् । संनतिः राक्षसेषु विनयः राक्षसप्रावण्यं वा । कम्पनप्रजङ्घयूपाक्षशोणिताक्षमारकाणामङ्गदमैन्दद्विविदानां निराकरणाद्राक्षसप्रावण्योक्तिः । तव वा रावणस्य वा । रावणतुल्या तव संनतिरित्यर्थः ॥ ७२ ॥

७१ ] ति० टी०—संनतिः स्वजनप्रावण्यम् । प्रभावः प्रतापः । तव वा रावणस्य वा । नान्यस्य । युष्मास्वित्यर्थः । प्रह्लादबल्योर्वृत्रघ्नादीनां चोपमा यस्य तम् ॥ ७१ ॥

रा० टी०—प्रल्हादेति । प्रल्हादाद्युपम एक एव त्वं पितरमनुजातः पित्रा सदृशोसि ॥ ७१ ॥

गो० टी०—प्रह्लादेति । पितरमनुजातोसि पित्रा सदृशोसीत्यर्थः । बलवत्तरः बलव्यापारेण ॥ ७३ ॥

७२-७३ ] ति० टी०—पितरमनुजातोऽसि पित्रा सदृशोऽसि ॥ ७२ ॥ ७३ ॥

रा० टी०—त्वामिति । त्वामेवैकं त्रिदशा देवाः जितेन्द्रियमाधय इव नातिवर्तन्ते अतो विक्रमस्व मम कर्माणि पश्य च सार्द्धश्लोक एकान्वयी ॥ ७२ ॥ ७३ ॥

गो० टी०—त्वामिति । नातिवर्तन्ते न धर्षयन्तीत्यर्थः ७४

गो० टी०—विक्रमस्वेत्यर्धम् । कर्माणि युद्धकर्माणि प्रति । विक्रमस्व पराक्रमं कुरु । युद्धकर्मसिद्ध्यर्थं पराक्रमं कुर्वित्यर्थः ॥ ७५ ॥

---

१ वेगेनेति रा. वेगेन सुग्रीवः कुम्भमाश्वेद्इति गो. पाठः । २ शैलानिति गो. अश्वकर्णान् । बहूनिति गो. रा. पाठः । ३ च महावृक्षइति गो. पाठः । ४ शीघ्रमिति गो. रा. पाठः । ५ निशितैः । ६ शरैरिति गो. रा. पाठः । ७ इदमर्धमाधिकं गो. पुस्तके । ८ आचिता इति गो.पाठः । ९ सम्भिद्यमान इति रा. निर्भिद्यमान इति गो. पाठः । १० वेति गो.पाठः । ११ तत इति गो.पाठः । १२ वेगवदिति गो.पाठः । १३ वृत्तत इति गो.पाठः । १४ चापेति गो. पाठः । १५ पश्यत इति गो. पाठः ।

वरदानात्पितृव्यस्ते सहते देवदानवान् । कुम्भकर्णस्तु वीर्येण सहते च सुरासुरान् ॥ ७४ ॥
धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च । त्वमद्य रक्षसां लोके श्रेष्ठोऽसि बलवीर्यतः ॥ ७५ ॥
महाविमर्दं समरे मया सह तवाद्भुतम् । अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ॥ ७६ ॥
कृतमप्रतिमं कर्म दर्शितं चास्त्रकौशलम् । पतिता हरिवीराश्च त्वयैते भीमविक्रमाः ॥ ७७ ॥
उपालम्भभयाच्चैवं नासि वीर मया हतः । कृतकर्मपरिश्रान्तो विश्रान्तः पश्य मे बलम् ॥ ७८ ॥
तेन सुग्रीववाक्येन सावमानेन मानितः । अग्नेराज्यहुतस्येव तेजस्तस्याभ्यवर्धत ॥ ७९ ॥
ततः कुम्भस्तु सुग्रीवं बाहुभ्यां जगृहे तदा । गजाविवावीतमदौ निःश्वसन्तौ मुहुर्मुहुः ॥ ८० ॥
अन्योन्यगात्रग्रथितौ घर्षन्तावितरेतरम् । सधूमां मुखतो ज्वालां विसृजन्तौ परिश्रमात् ॥ ८१ ॥
तयोः पादाभिघाताच्च निमग्ना चाभवन्मही । व्याघूर्णिततरङ्गश्च चुक्षुभे वरुणालयः ॥ ८२ ॥
ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि । पातयामास वेगेन दर्शयन्नुदधेः स्थलम् ॥ ८३ ॥

---

७४-७५ ] ति० टी०-पितृव्यो रावणः । कुम्भकर्णस्तु वीर्येण शरीरबलेन सुरासुरान्सहते त्वं तूभाभ्यामित्यर्थः ॥७४॥

रा० टी०-वरदानादिति । ते पितृव्यो रावणः वरदानात् देवदानवान् सहते अतिक्रमते कुम्भकर्णस्तु वीर्येणैव सुरासुरान् सहते ॥ ७४ ॥

रा० टी०-धनुषीति । त्वं धनुषि धनुर्विद्यायां इन्द्रजितः प्रतापे रावणस्य च तुल्योऽसि अतः बलवीर्यतः रक्षसां श्रेष्ठोऽसि ॥ ७५ ॥

गो० टी०-वरदानादिति । पितृव्यः रावणः वरदानात् देवदानवान् सहते । कुम्भकर्णस्तु वीर्येण शारीरबलेन सुरासुरान् सहते । सोढुं शक्नोतीत्यर्थः । त्वं तु ताभ्यामुभाभ्यां तान् सहस इति भावः ॥ ७६ ॥ ७७ ॥

७६-७७ ] ति० टी०-ते तव मया सह महाविमर्दं महायुद्धम् ॥ ७६ ॥ ७७ ॥

रा० टी०-महेति । अद्भुतं मया सह तव विमर्दं युद्धं समरे संग्रामभूमौ भूतानि पश्यन्तु ॥ ७६ ॥

रा० टी०-कृतमिति । त्वया भीमविक्रमाः हरिवीराः पातिताः अतः अप्रतिममन्यस्यासदृशं कर्म त्वया कृतम् ॥७७॥

गो० टी०-महाविमर्दमिति । महाविमर्दं महाप्रहारम् ॥ ७८ ॥ ७९ ॥

७८ ] ति० टी०-उपालम्भभयाद्बहुभिः सह युद्धेन श्रान्तः कुम्भः सुग्रीवेण हत इति निन्दाभीत्येत्यर्थः ॥ ७८ ॥

रा० टी०-उपालम्भेति । उपालम्भभयात् युद्धे श्रान्तः कुम्भः बहुभिस्सह सुग्रीवेण हतः इति निन्दाभीतेः परिश्रांतस्त्वं मया न हतोऽसि अतो विश्रान्तस्त्वं मे बलं पश्य ॥७८॥

गो० टी०-उपालम्भेति । उपालम्भभयात् बहुभिः सह युद्धेन श्रान्तो हत इत्यपवादभयात् ॥ ८० ॥

७९ ] ति० टी०-सावमानेन कृतकर्मेत्यादिना ॥ ७९ ॥

रा० टी०-तेनेति । सावमानेन उपालम्भाभ्नहतोऽसीत्यावमानसहितेन सुग्रीववाक्येन कृतमप्रतिममित्यादिना मानितः सत्कृतः कुंभोभवदिति शेषः अत एव आज्यहुतस्य अग्नेः तेज इव तस्य कुम्भस्य तेजोऽभ्यवर्द्धत ॥ ७९ ॥

गो० टी०-तेनेत्यादि । सावमानेन मानितः । बहुमानेन व्याजेनावमानित इत्यर्थः । तस्य तथावमानितस्य कुम्भस्य॥८१॥

८०-८२ ] ति० टी०-अवीतमदावनपगतमदौ । आवीतमदाविति छेदे व्याप्तमदावित्यर्थः ॥ ८०-८२ ॥

रा० टी०-तत इति । ततोऽनन्तरं कुम्भस्सुग्रीवं जगृहे अर्द्धं पृथक् गजाविति । नावीतोऽपगतो मदो ययोः तौ गजाविव निःश्वसन्तौ अन्योन्यगात्राभ्यां ग्रथितौ इतरेतरं कर्षन्तौ परिश्रमात् मुखतो ज्वालां विसृजन्तौ बभूवतुरिति शेषः सार्द्धश्लोक एकान्वयी ॥ ८० ॥ ८१ ॥

रा० टी०-तयोरिति । तयोः कुम्भसुग्रीवयोः पादाभिघातात् मही निमग्नाऽभवत् वरुणालयस्सागरः चुक्षुभे च॥८२॥

गो० टी०-गजावित्यादिसार्धश्लोक एकान्वयः । आहितमदौ आहितमदचेष्टौ । अन्योन्यगात्रग्रथितौ अन्योन्यसंश्लिष्टगात्रौ । परिश्रमात् युद्धजनितश्रमात् मुखतः सधूमां ज्वालां विसृजन्तौ । बभूवतुरिति शेषः ॥ ८२ ॥ ८३ ॥

८३ ] ति० टी०-दर्शयन्नुदधेः स्थलम् । स्वबलं दर्शयन्नुदधेः स्थलमतिक्रम्य लवणाम्भसि कुम्भं पातयामास । 'उदधेस्तलम्' इति पाठे तद्दर्शयल्लवणाम्भसि पातयामासेत्यर्थः ८३

रा० टी०-तत इति । सुग्रीवः कुम्भं समुत्क्षिप्य उदधेः तलं दर्शयन्सन् लवणाम्भसि पातयामास ॥ ८३ ॥

गो० टी०-तत इति । दर्शयन्नुदधेस्तलम् । निकुम्भो यथा उदधितलं पश्येत्तथा वेगेन पातयामासेत्यर्थः । तत इति - शतयोजनविस्तीर्णत्रिकूटशिखरमध्ये युध्यन् सुग्रीवः कुम्भं लङ्काद्वीपतले लवणाम्भसि पातयामासेत्यभिधानात् सुग्रीवस्यापरिमेयबलवत्ता द्योत्यते ॥ ८४ ॥

---

१ त्वया वै इति गो. पाठः । २ अपीति गो. रा. पाठः । ३ आहितेति गो. पाठः । ४ कर्षन्ताविति गो. रा. पा. । ५ तलमिति गो. पाठः ।

ततः कुम्भनिपातेन जलराशिः समुत्थितः । विन्ध्यमन्दरसंकाशो विससर्प समन्ततः ॥ ८४ ॥
ततः कुम्भः समुत्पत्य सुग्रीवमभिपात्य च । आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥ ८५ ॥
तस्य वर्म च पुस्फोट संजज्ञे चापि शोणितम् । तस्य मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डले ॥ ८६ ॥
तस्य वेगेन तत्रासीत्तेजः प्रज्वलितं महत् । वज्रनिष्पेषसंजाता ज्वाला मेरोर्यथा गिरेः ॥ ८७ ॥
स तत्राभिहतस्तेन सुग्रीवो वानरर्षभः । मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ ८८ ॥
अर्चिःसहस्रविकचरविमण्डलवर्चसम् । स मुष्टिं पातयामास कुम्भस्योरसि वीर्यवान् ॥ ८९ ॥
स तु तेन प्रहारेण विह्वलो भृशपीडितः । निपपात तदा कुम्भो गतार्चिरिव पावकः ॥ ९० ॥
मुष्टिनाभिहतस्तेन निपपाताशु राक्षसः । लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ९१ ॥
कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना । बभौ रुद्राभिपन्नस्य यथा रूपं गवां पतेः ॥ ९२ ॥

तस्मिन्हते भीमपराक्रमेण प्लवंगमानामृषभेण युद्धे ।
महीं सशैला सवना चचाल भयं च रक्षांस्यधिकं विवेश ॥ ९३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

८४-८५ ] ति० टी०—विन्ध्यमन्दरसंकाशः कुम्भस्ततो जलात्समुत्पत्येत्यन्वयः ॥ ८४ ॥ ८५ ॥

रा० टी०—तत इति । कुम्भनिपातेन समुत्थितो जलराशिः समंततो विससर्प ॥ ८४ ॥

गो० टी०—तत इति । विससर्प अभ्यवर्धत ॥ ८५ ॥

रा० टी०—तत इति । कुम्भस्सुग्रीवमभिपत्य समीपं प्राप्य उरसि आजघान ॥ ८५ ॥

गो० टी०—ततः कुम्भ इति । स्पष्टः ॥ ८६ ॥

८६-८७ ] ति० टी०—पुस्फोट भिन्नम् । स तस्य मुष्टिः सुग्रीवास्थिमण्डले प्रतिजघ्ने प्रतिहतः ॥ ८६ ॥ ८७ ॥

रा० टी०—तस्येति । तस्य सुग्रीवस्य वर्म कवचं पुस्फोट शोणितं च संजज्ञे तस्य कुम्भस्य मुष्टिस्तु अस्थिमण्डले सुग्रीवास्थिसमूहे प्रतिजघ्ने वेगवत्तां प्राप ॥ ८६ ॥

गो० टी०—तस्येति । पुस्फोट विभिन्नम् । स चेति । सः मुष्टिः सुग्रीवस्यास्थिमण्डले प्रतिजघ्ने प्रतिहतः । मोघो बभूवेत्यर्थः । स च मुष्टिर्महावेग इति पाठः ॥ ८७ ॥

रा० टी०—तस्येति । तस्य मुष्टेर्वेगेन तत्रास्थिमण्डले प्रज्वलितं तेज आसीत् तत्र दृष्टान्तः मेरोर्ज्वालेव ॥ ८७ ॥

गो० टी०—तदेति । वेगेन कुम्भवेगेन । तत्र सुग्रीववक्षसि तेजः संघट्टजम प्रज्वलितमासीत् । वज्रनिष्पेषसंजाता इन्द्रेण पक्षच्छेदकाले वज्रसंघट्टजन्येत्यर्थः ॥ ८८ ॥

८८ ] ति० टी०—तत्रेति ॥ ८८ ॥

रा० टी०—स इति । तेन कुम्भेन अभिहतस्ताडितस्सुग्रीवो मुष्टिं संवर्तयामास भ्रामयामास ॥ ८८ ॥

गो० टी०—स तत्रेति । संवर्तयामास चकारेत्यर्थः ॥ ८९ ॥

८९-९० ] ति० टी०—अर्चिःसहस्रेण विकचं यद्रविमण्डलं तत्समानवर्चस्कम् ॥ ८९ ॥ ९० ॥

रा० टी०—अर्चिरिति । स सुग्रीवः अर्चिःसहस्रेण विकचं प्रकाशितं यत् रविमण्डलं तद्वद्वर्चस्तेजो यस्य तं मुष्टिं कुंभस्योरसि पातयामास ॥ ८९ ॥

रा० टी०—स इति । तेन प्रहारेण भृशं पीडितः अत एव विह्वलः अपगतस्मृतिः कुम्भो निपपात ॥ ९० ॥

गो० टी०—अर्चिरिति । अर्चिःसहस्रविकचम् अर्चिःसहस्राढ्यमित्यर्थः । अत एव रविमण्डलसप्रभम् ॥ ९०—९२ ॥

९१ ] ति० टी०—यदृच्छया दैवाधीनतः । कदाचिद्भूम्यां पतितो लोहिताङ्गो भौम इव पपात ॥ ९१ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—मुष्टिनेति । मुष्टिनाभिहतो राक्षसः आकाशात् लोहिताङ्गो भौम इव निपपात ॥ ९१ ॥

९२-९३ ] ति० टी०—मुष्टिनोरसि भग्नस्य पततः कुम्भस्य रूपं रुद्रेणाभिपन्नस्याभिभूतस्य गवां पतेः सूर्यस्येव ९२॥९३

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

रा० टी०—कुम्भस्येति । उरसि भग्नस्य अत एव पततः कुम्भस्य रूपं रुद्रेणाभिपन्नस्याभिहतस्य गवां पतेः सूर्यस्य रूपमिव बभौ ॥ ९२ ॥

गो० टी०—कुम्भस्येति । गवां पतेः सूर्यस्य ॥ ९३ ॥

रा० टी०—तस्मिन्निति । प्लवंगमानामृषभेण तस्मिन् कुम्भे हते सति मही चचाल रक्षांसि भयं विवेश च ॥ ९३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

१ वेगेनेति गो. पाठः । २ बद्ध मुष्टावेति गो. पाठः । ३ स चेति गो. रा. पाठः । ४ तदेति गो. पाठः । ५ मुहुरिति गो.पाठः । ६ मेरौ गिराविवेति रा. मेरौ यथा गिराविति गो. पाठः । ७ विकचमिति गो. पाठः । ८ सप्रभमिति गो. पाठः । ९ ताडित इति गो. रा. पाठः ।

## सप्तसप्ततितमः सर्गः ।

पातितकुम्भं सुग्रीवं तद्भ्राता निकुम्भोऽस्त्रैः शरैः परिघादिभिरायुधैश्च भृशमपीडयत् तद्दृष्ट्वा हनुमांस्तेन युयुधे तयोस्तु घनघोरे रणेऽन्ते हनुमता निकुम्भः पातितो गतासुः ।

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् । प्रदहन्निव कोपेन वानरेन्द्रमुदैक्षत ॥ १ ॥
ततः स्रग्दामसंनद्धं दत्तपञ्चाङ्गुलं शुभम् । आददे परिघं धीरो महेन्द्रशिखरोपमम् ॥ २ ॥
हेमपट्टपरिक्षिप्तं वज्रविद्रुमभूषितम् । यमदण्डोपमं भीमं रक्षसां भयनाशनम् ॥ ३ ॥
तमाविध्य महातेजाः शक्रध्वजसमौजसम् । निननाद विवृत्तास्यो निकुम्भो भीमविक्रमः ॥ ४ ॥
उरोगतेन निष्केण भुजस्थैरङ्गदैरपि । कुण्डलाभ्यां च चित्राभ्यां मालया च स चित्रया ॥ ५ ॥
निकुम्भो भूषणैर्भाति तेन स्म परिघेण च । यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुमान् ॥ ६ ॥
परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मनः । प्रजज्वाल सघोषश्च विधूम इव पावकः ॥ ७ ॥
नगर्या विटपावत्या गन्धर्वभवनोत्तमैः । सतारागणनक्षत्रं सचन्द्रसमहाग्रहम् ॥
निकुम्भपरिघाघूर्णं भ्रमतीव नभस्थलम् ॥ ८ ॥

गो० टी०–तस्मिन्निति । स्पष्टः ॥ १४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

१ ] ति० टी०–निकुम्भ इति ॥ १ ॥

रा० टी०–कुम्भविघातानन्तरकालिकं वृत्तान्तमाह—निकुम्भ इत्यादिभिः । भ्रातरं निपातितं दृष्ट्वा कोपेन प्रदहन्निव निकुम्भः वानरेन्द्रमुदैक्षत ॥ १ ॥

गो० टी०–अथ निकुम्भवधः सप्तसप्ततितमे—निकुम्भ इत्यादि ॥ १ ॥

२ ] ति० टी०–स्रग्दामभिः संनद्धमलंकृतम् । दत्तपञ्चाङ्गुलं पञ्चाङ्गुलप्रमाणा दत्ताः कालायसपट्टबन्धा यस्मिंस्तम् ॥ २ ॥

रा० टी०–तत इति । धीरो निकुम्भः स्रजां दामभिः सन्नद्धमलंकृतं दत्ताः पञ्चाङ्गुलाः पञ्चाङ्गुलप्रमाणककालायसपट्टबन्धाः यस्मिन् तं परिघमाददे ॥ २ ॥

गो० टी०–तत इत्यादिश्लोकद्वयमेकान्वयम् । स्रग्दामसन्नद्धं स्रक्समूहनिबद्धम् । दत्तपञ्चाङ्गुलं चन्दनकुङ्कुमादिनार्पितपञ्चाङ्गुलमुद्रामुद्रितम् । अथवा क्रियाविशेषणमेतत् । दत्तपञ्चाङ्गुलं यथा तथा आददे । परिक्षिप्तं परिणद्धम् ॥ २–४ ॥

३ ] ति० टी०–हेमपट्टादयोऽलंकारार्थाः ॥ ३ ॥

४ ] ति० टी०–शक्रध्वजसमौजसम् । अलंकारादिकृतसौन्दर्यात् ॥ ४ ॥

रा० टी०–हेमेति । हेमपट्टेन परिक्षिप्तं सन्नद्धं वज्रविद्रुमाभ्यां भूषितं तं परिघमाविध्य दृढं गृहीत्वा निकुम्भो निननाद श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

५–६ ] ति० टी०–निष्कमुरोभूषणम् ॥ ५ ॥ ६ ॥

रा० टी०–उर इति । उरो गतेन निष्केण भूषणविशेषेण अङ्गदादिभिश्च भूषणैः आभरणांतरैश्च परिघेण च निकुम्भो भाति स्म तत्र दृष्टान्तः मेघो यथा श्लोकद्वयमेकान्वयि ५॥६॥

गो० टी०–उरोगतेनेत्यादिश्लोकद्वयमेकान्वयम् । निष्कः पदकम् । भूषणैः हारादिभिः भाति स्म । "लट् स्मे" इति भूते लट् । स्तनयित्नुमान् गर्जितवान् । स्तनयित्नुस्तु गर्जितं मेघ इति रत्नमाला । इन्द्रधनुःस्थाने परिघः । विद्युत्स्थाने भूषणानि । विननादेति पूर्वश्लोकोक्तो विनादः स्तनयित्नुस्थाने इति नोपमेयन्यूनता ॥ ५ ॥ ६ ॥

७ ] ति० टी०–महात्मनो महादेहस्य । परिघाग्रेण वातग्रन्थिरावहादिसप्तमहावायूनां संधिः पुस्फोट । एतेन परिघस्य दैर्घ्यमुक्तम् । प्रजज्वाल । निकुम्भ इति शेषः । परिघाग्रभाग इति वा ॥ ७ ॥

रा० टी०–परिघाग्रेणेति । महात्मनो बृहद्देहस्य निकुम्भस्य परिघाग्रेण वातग्रन्थिः आवहप्रवहप्रभृतिसप्तवायुसन्धिः पुस्फोट एतेन परिघस्यातिदैर्घ्यं सूचितं पावक इव प्रजज्वाल निकुम्भ इति परिघाग्रभाग इति वा शेषः ॥ ७ ॥

गो० टी०–परिघाग्रेणेति । वातग्रन्थिः आवहादिसप्तवातस्कन्धः । सघोषः ससिंहनाद इति निकुम्भविशेषणम् । परिघविशेषणं वा ॥ ७ ॥

८ ] ति० टी०–विटपावती गन्धर्वनगरी । अलकेति तीर्थः ॥ ८ ॥

रा० टी०–नगर्येति । विटपावत्या अलकया गन्धर्वभवनोत्तमादिभिश्च सहितं नभस्तलं निकुम्भपरिघाघूर्णमिव भ्रमति संचचाल श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–नगर्येत्यादिश्लोकद्वयमेकान्वयम् । विटपाव-

१ अवैक्षतेति गो. पाठः । नगेन्द्रेति गो. रा. पाठः । ३ समं तदेति गो. पाठः । ४ वीति गो. रा. पाठः । ५ सताराग्रहनक्षत्रं सचन्द्रं समहाग्रहमिति गो. सचन्द्रं समहाग्रहमिति रा. पाठः ।

दुरासदश्च संजज्ञे परिघाभरणप्रभः । क्रोधेन्धनो निकुम्भाग्निर्युगान्ताग्निरिवोत्थितः ॥ ९ ॥
राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् । हनुमांस्तु विवृत्योरस्तस्थौ प्रमुखतो बली ॥ १० ॥
परिघोपमबाहुस्तु परिघं भास्करप्रभम् । बली बलवतस्तस्य पातयामास वक्षसि ॥ ११ ॥
स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः । विकीर्यमाणः सहसा उल्काशतमिवाम्बरे ॥ १२ ॥
स तु तेन प्रहारेण न चचाल महाकपिः । परिघेण समाधूतो यथा भूमिचलेऽचलः ॥ १३ ॥
स तथाभिहतस्तेन हनूमान्प्लवगोत्तमः । मुष्टिं संवर्तयामास बलेनातिमहाबलः ॥ १४ ॥
तमुद्यम्य महातेजा निकुम्भोरसि वीर्यवान् । अभिचिक्षेप वेगेन वेगवान्वायुविक्रमः ॥ १५ ॥
तत्र पुस्फोट वर्मास्य प्रसुस्राव च शोणितम् । मुष्टिना तेन संजज्ञे मेघे विद्युदिवोत्थिता ॥ १६ ॥
स तु तेन प्रहारेण निकुम्भो विचचाल च । स्वस्थश्चापि निजग्राह हनूमन्तं महाबलम् ॥ १७ ॥
चुक्रुशुश्च तदा संख्ये भीमं लङ्कानिवासिनः । निकुम्भेनोद्यतं दृष्ट्वा हनूमन्तं महाबलम् ॥ १८ ॥
स तथा ह्रियमाणोऽपि हनूमांस्तेन रक्षसा । आजघानानिलसुतो वज्रकल्पेन मुष्टिना ॥ १९ ॥

---

त्या अलकया । अत्रापि सहेति शेषः । भवनैः अमरभवनैः । ताराः अश्विन्यादयः ग्रहाः बुधादयः नक्षत्राणि अश्विन्यादिभिन्नानि महाग्रहाः शुक्रादयः अत्र रात्रित्वात् सूर्यो नोक्तः । निकुम्भपरिघाघूर्णम् । अत्र परिघशब्देन तद्वात उपलक्ष्यते । इवशब्दो वाक्यालंकारे ॥ ८ ॥ ९ ॥

९ ] ति० टी०—परिघाभरणाभ्यां प्रभा कान्तिर्यस्य सः ९॥

रा० टी०—दुरासद इति । परिघाभरणाभ्यां प्रभा कान्तिर्यस्य क्रोध एव इन्धनं यस्य स निकुम्भाग्निः उत्थितो युगान्ताग्निरिव दुरासदः संजज्ञे ॥ १० ॥

गो० टी०—दुरासदश्चेति । परिघेणाभरणैश्च प्रभातीति परिघाभरणप्रभः । यद्वा परिघाभरणान्येव प्रभा यस्य स तथा । कपीनां दुरासदो जज्ञ इति संबन्धः ॥ १० ॥

१० ] ति० टी०—स्पन्दितुमपि न शेकुः । उरो विवृत्योरः प्रकाश्य ॥ १० ॥

रा० टी०—राक्षसा इति । भयात् परस्परभीतेः राक्षसाः वानराश्च स्पन्दितुमग्रे किञ्चिच्चलितुं न शेकुः हनुमांस्तु उरो विवृत्य संप्रकाश्य प्रमुखतस्सम्मुखे तस्थौ ॥ ११ ॥

गो० टी०—राक्षसा इति । प्रबलेषु प्रजङ्घादिषु हतेषु दुर्बलैर्भवद्भिः किमर्थं युद्धाय प्रयत्नः कृत इति निकुम्भः कुप्येदिति राक्षसानां भयं वेदितव्यम् । विवृत्य विस्तार्य । प्रमुखतः अग्रे ॥ ११ ॥

११ ] ति० टी०—तस्य हनुमतः ॥ ११ ॥

रा० टी०—परिघेति । परिघोपमबाहुर्निकुम्भः तस्य हनुमतो वक्षसि परिघं पातयामास ॥ १२ ॥

गो० टी०—परिघेति । परिघोपमबाहुः निकुम्भः ॥ १२॥

१२ ] ति० टी०—परिघः शतधा कृतः । महाशिलाहतजीर्णकाष्ठवद्विकीर्यमाणश्च स आकाशे उल्काशतमिवासीदिति शेषः ॥ १२ ॥

रा० टी०—स्थिर इति । स्थिरे दृढे तस्योरसि शतधा कृतः परिघः अम्बरे उल्काशतमिव विकीर्यमाणोऽभवदिति शेषः ॥ १३ ॥

गो० टी०—स्थिर इति । व्यूढे विशाले । उल्काशतमिव बभाविति ॥ १३ ॥

१३–१७ ] ति० टी०—भूमिचले भूकम्पे ॥ १३–१७ ॥

रा० टी०—स इति । परिघेण समाधूतोऽपि हनुमान् भूमिचलेऽचलश्शैल इव प्रहारेण न चचाल ॥ १४ ॥

गो० टी०—स त्विति । भूमिचले भूकम्पे ॥ १४ ॥

रा० टी०—स इति । तेनाभिहतो हनुमान् मुष्टिं संवर्तयामास भ्रामयामास ॥ १५ ॥

रा० टी०—तमिति । महातेजा हनुमान् तं मुष्टिमुद्यम्य निकुम्भोरसि अभिचिक्षेप ॥ १६ ॥

रा० टी०—तत्रेति । तत्र मुष्टिप्रक्षेपसमये मुष्टिना मुष्टिप्रहारेण अस्य निकुम्भस्य वर्म पुस्फोट शोणितं प्रसुस्राव च अत एव मेघे उत्थिता विद्युदिव शोणितं संजज्ञे बभूव ॥१७॥

रा० टी०—स इति । निकुम्भः प्रहारेण विचचाल स्वस्थो भूत्वा हनुमन्तं निजग्राह च ॥ १८ ॥

गो० टी०—स इति । संवर्तयामास । चकारेत्यर्थः १५-१८

१८ ] ति० टी०—भीमं विचुक्रुशुः । कपीनां भयंकरं यथा भवति तथेत्यर्थः । उद्यतं गृहीतम् ॥ १८ ॥

रा० टी०—विचुक्रुशुरिति । लङ्कानिवासिनो निकुम्भेनोद्यतं ह्रियमाणं हनुमन्तं दृष्ट्वा भीमं विचुक्रुशुः स्वविजयशब्दं चक्रुः ॥ १९ ॥

गो० टी०—विचुक्रुशुरिति । भीमं विचुक्रुशुः । हनुमद्ग्रहणहर्षादिति भावः । उद्यतं गृहीतम् ॥ १९ ॥ २० ॥

१९ ] ति० टी०—तथा ह्रियमाणोऽपि कुम्भकर्णेन सुग्रीववद्ध्रियमाणोऽपि ॥ १९ ॥

---

१ कपीनांस इति गो. पाठः । २ तस्याग्रत इति गो. पाठः । ३ विशीर्यमाण इति गो. पाठः । ४ वीति गो. पाठः । ५ ज्वालेति गो. पाठः । ६ हेति गो. रा. पाठः । ७ विचुक्रुशुरिति गो. रा. पाठः । ८ तदेति गो. पाठः । ९ कुम्भकर्णात्मजेन हेति गो. रा. पाठः ।

आत्मानं मोक्षयित्वाथ क्षितावभ्यवपद्यत । हनूमानुन्ममाथाशु निकुम्भं मारुतात्मजः ॥ २० ॥
निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष च[१] । उत्पत्य चास्य वेगेन पपातोरसि वेगवान्[२] ॥ २१ ॥
परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम् । उत्पाटयामास शिरो भैरवं नदतो महत् ॥ २२ ॥
अथ निनदति सादिते निकुम्भे पवनसुतेन रणे बभूव युद्धम् ।
दशरथसुतराक्षसेन्द्रसून्वोर्भृशतरमागतरोषयोः सुभीमम् ॥ २३ ॥
व्यपेते तु जीवे निकुम्भस्य हृष्टा विनेदुः प्लवंगा दिशः सस्वनुश्च ।
चचालेव[३] चोर्वी पपातेव[४] सा द्यौर्बलं राक्षसानां भयं चाविवेश ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

## अष्टसप्ततितमः सर्गः ।

ततो रावणो मकराक्षं खरपुत्रं प्राहिणोद्राघवनिषूदनाय तस्मिंस्तु निष्क्रान्ते उच्चावचान्यशुभानि निमित्तानि प्रादुर्भूतानि दृष्ट्वाऽपि तानि स धैर्याद्रावणमभिवाद्य प्रदक्षिणीकृत्य च निश्चक्राम ।

निकुम्भं निहतं दृष्ट्वा कुम्भं च विनिपातितम् । रावणः परमामर्षी प्रजज्वालानलो यथा ॥ १ ॥

---

रा० टी०–स इति । ह्रियमाणोपि स हनुमान् मुष्टिना आजघान ॥ २० ॥

२० ] ति० टी०–क्षितावभ्यवपद्यत भूमावाप्लुतो बभूव २०॥

रा० टी०–आत्मानमिति । हनुमान् आत्मानं मोक्षयित्वा क्षितावभ्यवपद्यत प्राप्नोत् निकुम्भमुन्ममाथ च ॥ २१ ॥

गो० टी०–आत्मानमिति । क्षितावभ्यवपद्यत स्थितः २१॥

२१ ] ति० टी०–निक्षिप्य । भूमाविति शेषः । अस्योरसि भूमिपतितस्योरसि ॥ २१ ॥

रा० टी०–निक्षिप्येति । परमायत्तो हनुमान् निकुम्भं निक्षिप्य पातयित्वा निष्पिपेष उत्पत्य उड्डीय तस्य निकुम्भस्योरसि पपात च ॥ २२ ॥

गो० टी०–निक्षिप्येति । निक्षिप्य भूमौ पातयित्वा । परमायत्तः अतिप्रयाससुक्तः । उत्पत्य ऊर्ध्वमुद्गत्य । उरसि वेगेन पपात ॥ २२ ॥

२२ ] ति० टी०–शिरोधरां परिवृत्य पशोरिवाघूर्ण्य॥२२॥

रा० टी०–परीति । बाहुभ्यां परिगृह्य शिरोधरां ग्रीवां परिवृत्य आघूर्ण्य नदतो निकुम्भस्य शिरः उत्पाटयामास॥२३॥

गो० टी०–परिगृह्येति । बाहुभ्यां शिरोधरां परिगृह्य परिवर्त्य शिर उत्पाटयामास ॥ २३ ॥

२३ ] ति० टी०–निनदति निकुम्भे सादिते सति राक्षसेन्द्रसुतः खरसुतो मकराक्षः । अनेन वक्ष्यमाणोपक्षेपः ॥ २३॥

रा० टी०–अथेति । निनदति निकुम्भे पवनसुतेन सादिते विनाशिते सति आगतरोषयोः दशरथसुतराक्षसेन्द्रसून्वोः सुभीमं युद्धं बभूव युद्धप्रकारस्तु वक्ष्यते अत्र राक्षसेन्द्रः खरः तत्सूनुर्मकराक्षः ॥ २४ ॥

गो० टी०–उत्तरसर्गद्वयार्थं संग्रहेण दर्शयति—अथेति । विनदति निकुम्भे पवनसुतेन सादिते सति । दशरथसुतराक्षसेन्द्रसून्वोः राममकराक्षयोः युद्धं बभूव । पुष्पिताग्रा वृत्तम् । उत्तरत्र भुजङ्गप्रयातम् ॥ २४ ॥

२४ ] ति० टी०–उक्तार्थस्यैव विवरणम् । व्यपेते व्यपगते । एतदन्तं नवमीदिनयुद्धम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

रा० टी०–व्यपेत इति । निकुम्भस्य जीवे व्यपेते गते सति हृष्टाः प्लवङ्गाः विनेदुः अत एव दिशः सस्वनुः अत एव राक्षसानां बलं भयमाविवेश ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

गो० टी०–व्यपेते त्विति । दिशः सस्वनुः प्रतिध्वनिं चक्रुः । पफालेव पुस्फोटेव । बलं कर्म । भयं कर्तृ ॥ २५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

१ ] ति० टी०–निकुम्भमिति ॥ १ ॥

रा० टी०–निकुम्भविघातानन्तरकालिकं वृत्तान्तमाह—निकुम्भमित्यादिभिः । रावणोऽनल इव प्रजज्वाल ॥ १ ॥

गो०टी०–अथ मकराक्षनिर्गमोऽष्टसप्ततितमे, प्रथमपक्षे अयं दशम्यां प्रातः, द्वितीयपक्षे तु दशम्यां प्रातरारभ्य कम्पनवधप्रहस्तवधरावणमुकुटभङ्गकुम्भकर्णप्रबोधतद्वधाः, अथापराह्णे ब्रह्मास्त्रबन्धः, रात्रौ तन्मोक्षलङ्कादहनकुम्भनिकुम्भयूपाक्षशोणिताक्षप्रजङ्घकम्पनमकराक्षवधाः—निकुम्भं चेत्यादि ॥ १ ॥

---

१ हेति गो. पाठः । २ वीर्यवानिति गो. रा. पाठः । ३ पफालेवेति गो. पाठः । ४ पफालेव चेति गो. पाठः ।

नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्च्छितः । खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ॥ २ ॥
गच्छ पुत्र मयाज्ञप्तो बलेनाभिसमन्वितः । राघवं लक्ष्मणं चैव जहि तौ सवनौकसौ ॥ ३ ॥
रावणस्य वचः श्रुत्वा शूरमानी खरात्मजः । बाढमित्यब्रवीद्धृष्टो मकराक्षो निशाचरम् ॥ ४ ॥
सोऽभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् । निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥ ५ ॥
समीपस्थं बलाध्यक्षं खरपुत्रोऽब्रवीद्वचः । रथमानीयतां तूर्णं सैन्यं त्वानीयतां त्वरात् ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः । स्यन्दनं च बलं चैव समीपं प्रत्यपादयत् ॥ ७ ॥
प्रदक्षिणं रथं कृत्वा समाहूय निशाचरः । सूतं संचोदयामास शीघ्रं वै रथमावह ॥ ८ ॥
अथ तान्राक्षसान्सर्वान्मकराक्षोऽब्रवीदिदम् । यूयं सर्वे प्रयुध्यध्वं पुरस्तान्मम राक्षसाः ॥ ९ ॥
अहं राक्षसराजेन रावणेन महात्मना । आज्ञप्तः समरे हन्तुं तावुभौ रामलक्ष्मणौ ॥ १० ॥
अद्य रामं वधिष्यामि लक्ष्मणं च निशाचराः । शाखामृगं च सुग्रीवं वानरांश्च शरोत्तमैः ॥ ११ ॥
अद्य शूलनिपातैश्च वानराणां महाचमूम् । प्रदहिष्यामि संप्राप्तां शुष्केन्धनमिवानलः ॥ १२ ॥
मकराक्षस्य तच्छ्रुत्वा वचनं ते निशाचराः । सर्वे नानायुधोपेता बलवन्तः समाहिताः ॥ १३ ॥
ते कामरूपिणः क्रूरा दंष्ट्रिणः पिङ्गलेक्षणाः । मातंगा इव नर्दन्तो ध्वस्तकेशा भयावहाः ॥ १४ ॥
परिवार्य महाकाया महाकायं खरात्मजम् । अभिजग्मुस्ततो हृष्टाश्चालयन्तो नभस्तलम् ॥ १५ ॥
शङ्खभेरीसहस्राणामाहतानां समन्ततः । क्ष्वेलितास्फोटितानां च तत्र शब्दो महानभूत् १६ ॥

२–५ ] ति० टी०–नैर्ऋतो रावणः । परिमूर्च्छितो व्याप्तः ॥ २—५ ॥

रा० टी०–नैर्ऋत इति । क्रोधशोकाभ्यां परिमूर्छितो नैर्ऋतो रावणः मकराक्षं तदभिधं खरपुत्रमचोदयत् ॥ २ ॥

रा० टी०–तत्प्रकारमाह—गच्छेति । बलेनाभिसमन्वितस्त्वं गच्छ ॥ ३ ॥

रा० टी०–रावणस्येति । हृष्टो मकराक्षः बाढमित्यब्रवीत् धृष्ट इति छेदो वा ॥ ४ ॥

रा० टी०–स इति । स मकराक्षः दशग्रीवमभिवाद्य गृहान्निर्जगाम ॥ ५ ॥

गो० टी०–नैर्ऋत इति । परिमूर्छितः व्याप्तः ॥ २ ॥ ५ ॥

६–७ ] ति० टी०–बलाध्यक्षं रावणबलाध्यक्षम् । त्वरात्त्वरया ॥ ६ ॥ ७ ॥

रा० टी०–समीपस्थमिति । खरपुत्रः रथमानीयतामिदं वचो बलाध्यक्षमब्रवीत् ॥ ६ ॥

गो० टी०–समीपस्थमिति । त्वरात् त्वरया ॥ ६ ॥

रा० टी०–तस्येति । बलाध्यक्षः स्यन्दनं बलं च समीपं प्रत्यपादयत् प्रापयत् ॥ ७ ॥

गो० टी०–तस्येति । प्रत्यपादयत् प्रापयत् ॥ ७ ॥

८ ] ति० टी०–रथमावह । युद्धभूमिं प्रापयेत्यर्थः ॥ ८ ॥

रा० टी०–प्रदक्षिणमिति । निशाचरः शीघ्रं रथमावहेति सूतम् संचोदयामास ॥ ८ ॥

गो० टी०–प्रदक्षिणमिति । आवह चोदय । अत्रेतिकरणं द्रष्टव्यम् ॥ ८ ॥

९–१३ ] ति० टी०–मम पुरस्तान्ममाग्रतो यूयं सर्वे प्रयुध्यध्वम् । वानरैः सहेति शेषः ॥ ९—१३ ॥

रा० टी०–अथेति । मकाराक्ष इदमब्रवीत् तदाकारमाह हे राक्षसाः मम पुरस्तात् सर्वे यूयं प्रयुध्यध्वम् ॥ ९ ॥

रा० टी०–अहमिति । रावणेनाहं हन्तुमाज्ञप्तः ॥ १० ॥

रा० टी०–अद्येति । रामादीन् वधिष्यामि ॥ ११ ॥

रा० टी०–अद्येति । शुष्केन्धनमनल इव सम्प्राप्तोऽहं महाचमूं प्रदहिष्यामि प्रधक्ष्यामि ॥ १२ ॥

गो० टी०–अथ तानित्यादिचतुःश्लोक्येकान्वया॥९-१२॥

रा० टी०–मकराक्षस्येति । मकराक्षस्य वचनं श्रुत्वा ध्वस्तकेशाः प्रकीर्णवालाः निशाचराः खरात्मजं परिवार्य वसुंधरां चालयन्तस्सन्तः अभिजग्मुः श्लोकत्रयमेकान्वयि॥१३-१५॥

गो० टी०–मकराक्षस्येति । समागताः समाजग्मुः॥१३॥

१४-१६ ] ति० टी०–ध्वस्तकेशा विप्रकीर्णकेशाः, अतएव भयावहाः ॥ १४–१६ ॥

गो० टी०–ते कामरूपिण इत्यादिश्लोकद्वयमेकान्वयम् । स्पष्टः ॥ १४—१६ ॥

रा० टी०–शंखेति । आहतानां वादितानां शंखभेरीसहस्राणां क्ष्वेलितास्फोटितानां च महान् शब्दोऽभूत् ॥ १६ ॥

१ वांश्च वनौकस इति गो.पाठः । २ चर इति गो.रा.पाठः । ३ इदमिति गो.रा.पाठः ।४ आहूयतामिति गो. पाठः । ५ आरुरोहेति गो. समारुह्येति रा.पाठः। ६ संप्राप्त इति गो.रा.पाठः। ७ आगता इति गो.पाठः। ८ सर्वे इति गो.शूरा इति रा.पाठः। ९ वसुंधरामिति गो.रा.पाठः। १० नत इति गो.पाठः।

प्रभ्रष्टोऽथ करात्तस्य प्रतोदः सारथेस्तदा । पपात सहसा दैवाद्ध्वजस्तस्य तु रक्षसः ॥ १७ ॥
तस्य ते रथसंयुक्ता हया विक्रमवर्जिताः । चरणैराकुलैर्गत्वा दीनाः सास्रमुखा ययुः ॥ १८ ॥
प्रवाति पवनस्तस्मिन्सपांसुः खरदारुणः । निर्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः ॥ १९ ॥
तानि दृष्ट्वा निमित्तानि राक्षसा वीर्यवत्तमाः । अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ ॥ २० ॥
घनगजमहिषाङ्गतुल्यवर्णाः समरमुखेष्वसकृद्गदासिभिन्नाः ।
अहमहमिति युद्धकौशलास्ते रजनिचराः परिबभ्रमुर्मुहुस्ते ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

## नवसप्ततितमः सर्गः ।

मकराक्षेण तदनुचरैश्च कीशानां च महति रणे तदर्दिता वानरा दुद्रुवुरथ रामेण युद्धा रुद्रदत्तं घोरं शूलं चिक्षेप मकराक्षः रामस्तु बाणैश्चतुर्भिः शूलं चूर्णयित्वा मुष्टिमुद्यम्य नियुद्धायागतं तं चापि पावकास्त्रेण संछिन्नहृदयं भूमावपातयत्तदा राक्षसाः खिन्ना हरयो देवाश्च हृष्टाः।

निर्गतं मकराक्षं ते दृष्ट्वा वानरपुंगवाः । आप्लुत्य सहसा सर्वे योद्धुकामा व्यवस्थिताः ॥ १ ॥
ततः प्रवृत्तं सुमहत्तद्युद्धं लोमहर्षणम् । निशाचरैः प्लवंगानां देवानां दानवैरिव ॥ २ ॥
वृक्षशूलनिपातैश्च गदापरिघपातनैः । अन्योन्यं मर्दयन्ति स्म तदा कपिनिशाचराः ॥ ३ ॥
शक्तिखड्गगदाकुन्तैस्तोमरैश्च निशाचराः । पट्टिशैर्भिन्दिपालैश्च बाणपातैः समन्ततः ॥ ४ ॥
पाशमुद्गरदण्डैश्च निर्घातैश्चापरैस्तथा । कदनं कपिसिंहानां चक्रुस्ते रजनीचराः ॥ ५ ॥
बाणौघैरर्दिताश्चापि खरपुत्रेण वानराः । संभ्रान्तमनसः सर्वे दुद्रुवुर्भयपीडिताः ॥ ६ ॥

१७] ति० टी०—तस्य ध्वजः पपात । स बद्धोऽपीति शेषः १७

रा० टी०—कुशकुनानाह—प्रभ्रष्टेति । तस्य खरात्मजस्य सारथेः करात् प्रतोदः प्रभ्रष्टः भूमौ पतितः ध्वजः पपात च ॥ १७ ॥

गो० टी०—प्रभ्रष्ट इति । करात्तस्य आर्तकरस्य वशीकृतकरस्य । लघुहस्तस्येति यावत् ॥ १७ ॥

१८ ] ति० टी०—विक्रमरहिता यथापूर्वं विचित्रपादन्यासरहिताः । प्रथममाकुलैश्चरणैर्गत्वा पश्चात्सास्रमुखा ययुः ॥ १८ ॥

रा० टी०—तस्येति । तस्य खरात्मजस्य रथसंयुक्ता हयाः विक्रमवर्जिताः बभूवुरिति शेषः अत एव आकुलैः पीडितैः चरणैर्गत्वा सास्रमुखास्सन्तो ययुः रणभूमिं प्रापुः ॥ १८ ॥

गो० टी०—तस्येति । विक्रमवर्जिताः विविधपदन्यासविरहिताः । प्रथममाकुलैश्चरणैर्गत्वा पश्चाद्ययुरित्यर्थः ॥ १८ ॥

१९-२० ] ति० टी०—प्रवाति सपांसुः, अत एव खरः । अभिमुख इति शेषः ॥ १९ ॥ २० ॥

रा० टी०—प्रवातीति । मकराक्षस्य निर्याणे सति सपांसुः अत एव खरदारुणः पवनः प्रवाति सम्मुखे ववौ ॥ १९ ॥

गो० टी०—प्रवातीति । सपांसुः अत एव खरदारुणः खरः परुषः दारुणो भयंकरश्च ॥ १९ ॥

रा० टी०—तानीति । राक्षसाः निमित्तानि कुशकुनान् दृष्ट्वापि तानि अचिन्त्य अविगणय्य यत्र रामलक्ष्मणौ तत्र निर्गताः प्राप्ताः ॥ २० ॥

गो० टी०—तानीत्यादिश्लोकद्वयमेकान्वयम् । असकृद्गदासिभिन्ना इत्यनेन शौर्यातिशयः सूचितः । युद्धकौशलाः युद्धकुशलाः । स्वार्थेऽण् । अहमहमिति वदन्तः । अचिन्त्य निर्गता इति पूर्वेण संबन्धः ॥ २० ॥ २१

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टसप्ततितमः सर्गः ॥ ७८ ॥

२१ ] ति० टी०—असकृच्छत्रूणां गदासिभिर्भिन्नं भेदो येषां ते । अहमहमिति वदन्तः ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

रा० टी०—घनेति । घनाभ्राङ्गतुल्यवर्णास्समरमुखेषु गदासिभिर्भिन्नाः छिन्नावयवाः रजनिचराः अहमहमितिवदन्तस्सन्तः परिबभ्रमुः ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे ऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

१-४ ] ति० टी०—निर्गतमिति ॥ १-४ ॥

५-६ ] ति० टी०—निर्घातास्तद्वन्महाध्वनयो यन्त्रायुधविशेषाः ॥ ५ ॥ ६ ॥

१ चैवेति गो. भूमाविति रा.पाठः । २ चेति गो.पाठः । ३ युक्ता चेति गो. पाठः । ४ परितः समुन्नदन्त इति गो.पाठः । ५ नदन्त इति रा.पाठः । ६ यूथपा इति गो. पाठः । ७ रोमेति गो. रा. पाठः । ८ शिलेति गो. रा. पाठः । ९ निर्घातैश्चेति गो. पाठः । १० निखातैश्चापरे तदेति गो. पाठः । ११ वरायुधैरिति रा. पाठः ।

तान्दृष्ट्वा राक्षसाः सर्वे द्रवमाणान्वनौकसः । नेदुस्ते सिंहवद्दृप्ता राक्षसा जितकाशिनः ॥ ७ ॥
विद्रवत्सु तदा तेषु वानरेषु समन्ततः । रामस्तान्वारयामास शरवर्षेण राक्षसान् ॥ ८ ॥
वारितान्राक्षसान्दृष्ट्वा मकराक्षो निशाचरः । कोपानलसमाविष्टो वचनं चेदमब्रवीत् ॥ ९ ॥
तिष्ठ राम मया सार्धं द्वन्द्वयुद्धं भविष्यति । त्याजयिष्यामि ते प्राणान्धनुर्मुक्तैः शितैः शरैः १० ॥
यत्तदा दण्डकारण्ये पितरं हतवान्मम । तदग्रतः स्वकर्मस्थं स्मृत्वा रोषोऽभिवर्धते ॥ ११ ॥
दह्यन्ते भृशमङ्गानि दुरात्मन्मम राघव । यन्मयासि न दृष्टस्त्वं तस्मिन्काले महावने ॥ १२ ॥
दिष्ट्यासि दर्शनं राम मम त्वं प्राप्तवानिह । काङ्क्षितोऽसि क्षुधार्तस्य सिंहस्येवेतरो मृगः॥ १३ ॥
अद्य मद्बाणवेगेन प्रेतराड्विषयं गतः । ये त्वया निहताः शूराः सह तैश्च वसिष्यसि॥ १४ ॥
बहुनात्र किमुक्तेन शृणु राम वचो मम । पश्यन्तु सकला लोकास्त्वां मां चैव रणाजिरे॥ १५ ॥

रा० टी०—मकराक्षागमनानन्तरकालिकं वृत्तान्तमाह—निर्गतमित्यादिभिः । वानरपुङ्गवाः निर्गतं मकराक्षं दृष्ट्वा योद्धुकामास्सन्तः आप्लुत्य व्यवस्थिता मकराक्षसन्निधौ संस्थिता बभूवुरिति शेषः ॥ १ ॥

रा० टी०—तत इति । निशाचरैस्सह प्लवङ्गानां सुमहद्युद्धं प्रवृत्तम् ॥ २ ॥

रा० टी०—वृक्षेति । कपिनिशाचराः वृक्षशूलनिपातैः अन्योन्यं मर्दयन्तिस्म ॥ ३ ॥

गो० टी०—अथ मकराक्षवध एकोनाशीतौ—निर्गतमिति ॥ १–३ ॥

रा० टी०—शक्तीति । निशाचराः निशायामेव भोजनशीलाः रजनीचराः राक्षसाः शक्तिप्रभृतिभिः कपिसिंहानां कदनं चक्रुः तत्र निर्घाताः तादृशध्वनिमन्तो यन्त्रायुधविशेषाः श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

रा० टी०—बाणेति । खरपुत्रेणार्दिताः वानराः दुद्रुवुः ॥६॥

गो० टी०—शक्तीत्यादिश्लोकद्वयमेकान्वयम् । निखातैः आयुधविशेषैः । निर्घातैरिति पाठे अशनिभिरित्यर्थः । केचिन्निशाचराः शक्तिखड्गादिभिः अपरे रजनीचराः पाशमुद्गरादिभिश्च कदनं चक्रुरिति योजना ॥ ४–६ ॥

७ ] ति० टी०—द्रवमाणान्द्रवतः । जितेन जयेन काशन्ते ते जितकाशिनोऽभूवन्निति शेष इति तीर्थः ॥ ७ ॥

रा० टी०—तानिति । जितकाशिनः पराभावितरिपुप्रकाशाः राक्षसाः बहुराक्षसवन्तो राक्षसाः वनौकसो द्रवमाणान् दृष्ट्वा सिंहवन्नेदुः ॥ ७ ॥

गो० टी०—तान् दृष्ट्वेति । राक्षसा जितकाशिन इति भिन्नं वाक्यम् । जितं जयः तेन काशन्त इति तथोक्ता जितकाशिनः । बभूवुरिति शेषः । अन्यथा द्वितीयराक्षसपदवैयर्थ्यं स्यात् ॥ ७–१० ॥

८–१० ] ति० टी०—तान्वानरविद्रावकान्राक्षसान्रामः शरवर्षेण वारयामास ॥ ८–१० ॥

रा० टी०—विद्रवदिति । वानरेषु विद्रवत्सु सत्सु रामशरवर्षेण राक्षसान् वारयामास आच्छादयामास ॥ ८ ॥

रा० टी०—वारितानिति । मकराक्षः निशाचरान् वारितान् दृष्ट्वा इदमब्रवीत् ॥ ९ ॥

रा०टी०—तदाकारमाह—तिष्ठेत्यादिभिः । हे राम मया सार्द्धं द्वन्द्वयुद्धं भविष्यति ॥ १० ॥

११ ] ति०टी०—यद्यस्मात्पितरं हतवानसि तस्मात्तदग्रतस्तद्दिनादितः स्वकर्मस्थं पितृवधरूपकर्मकर्तारं त्वां स्मृत्वा रोषोऽभिवर्धते । 'मदग्रतः स्वकर्मस्थं दृष्ट्वा' इति पाठे मदग्रतस्तिष्ठन्तमिति शेषः । तीर्थस्तु—स्वकर्मस्थं छतरामकृत्यनिरतमित्यर्थ इत्याह ॥ ११ ॥

रा० टी०—यदिति । यद्यस्मात् दण्डकारण्ये मम पितरं त्वं हतवान् तत्तस्माद्धेतोः अग्रतः पूर्वं स्वकर्मस्थं स्वकर्मनिरतं राक्षसवधपरायणमित्यर्थः त्वां स्मृत्वा रोषो मम कोपोभिवर्द्धते ॥ ११ ॥

गो० टी०—यत्तदेति । स्वकर्मस्थं . वधकर्मस्थम् । यथा पिता हतस्तथा वध्यमित्यर्थः । यद्वा क्षात्रधर्मकर्मानुतिष्ठन्तमित्यर्थः । स्वकर्मस्थमिति छतरामकृत्यनिरतमिति वार्थः॥११॥

१२ ] ति० टी०—यद्यस्मात्तस्मिन्काले पितृवधकाले तस्मिन्महावने मया न दृष्टोऽसि तस्मान्ममाङ्गानि दह्यन्ते । तदैव दर्शने तु प्रतीकारेण तापः शाम्येदित्यर्थः ॥ १२ ॥

रा० टी०—दह्यन्त इति । तस्मिन्काले युद्धसमये महावने दण्डकारण्ये यद्यस्मात् त्वं मया न दृष्टोऽसि तस्मान्ममाङ्गानि दह्यन्ते ॥ १२ ॥

गो० टी०—दह्यन्त इति । तस्मिन् काले महावने यस्मान्न दृष्टोसि तस्मान्ममाङ्गानि दह्यन्ते । तदानीमेव दृष्टश्चेत्प्रतिकारेण तापः शाम्येदित्यर्थः ॥ १२–१५ ॥

१३–१५ ] ति० टी०—इतरो मृगः सिंहेतरमृगमात्रम् ॥ १३–१५ ॥

रा० टी०—दिष्ट्येति । क्षुधार्तस्य सिंहस्य इतरः सिंहभि-

१ वनौकसानिति गो. पाठः । २ क्रोधेति गो. पाठः । ३ ददामि ते इति गो. पाठः । ४ मदिति गो. रा.पाठः । ५ दृष्ट्वेति गो.पाठः । ६ वीरा इति गो. पाठः । ७ समेष्यसीति गो. पाठः ।

अस्त्रैर्वा गदया वापि बाहुभ्यां वा रणाजिरे । अभ्यस्तं येन वा राम वर्ततां तेन वा मृधम् ॥ १६ ॥
मकराक्षवचः श्रुत्वा रामो दशरथात्मजः । अब्रवीत्प्रहसन्वाक्यमुत्तरोत्तरवादिनम् ॥ १७ ॥
कत्थसे किं वृथा रक्षो बहून्यसदृशानि ते । न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ॥ १८ ॥
चतुर्दश सहस्राणि रक्षसां त्वत्पिता च यः । त्रिशिरा दूषणश्चापि दण्डके निहतो मया ॥ १९ ॥
स्वाशिताश्चापि मांसेन गृध्रगोमायुवायसाः । भविष्यन्त्यद्य वै पाप तीक्ष्णतुण्डनखाङ्कुशाः ॥ २० ॥
राघवेणैवमुक्तस्तु मकराक्षो महाबलः । बाणौघानमुचत्तस्मै राघवाय रणाजिरे ॥ २१ ॥
ताञ्छराञ्छरवर्षेण रामश्चिच्छेद नैकधा । निपेतुर्भुवि विच्छिन्ना रुक्मपुङ्खाः सुवाससः ॥ २२ ॥
तद्युद्धमभवत्तत्र समेत्यान्योन्यमोजसा । खरराक्षसपुत्रस्य सूनोर्दशरथस्य च ॥ २३ ॥
जीमूतयोरिवाकाशे शब्दो ज्यातलयोरिव । धनुर्मुक्तः स्वनोऽन्योन्यं श्रूयते च रणाजिरे ॥ २४ ॥
देवदानवगन्धर्वाः किंनराश्च महोरगाः । अन्तरिक्षगता: सर्वे द्रष्टुकामास्तदद्भुतम् ॥ २५ ॥

---

त्वो मृग इव मया त्वं काङ्क्षितोऽसि अतः दिष्ट्या भाग्यवशेन मम दर्शनं दृष्टिपथं त्वं प्राप्तवानसि ॥ १३ ॥

रा० टी०—अद्येति । मद्बाणवेगेन प्रेतराजो यमस्य विषयं दृष्टिपथं प्राप्तस्त्वं ये शूराः त्वया निहताः तैस्सह वसिष्यसि वत्स्यसि ॥ १४ ॥

रा० टी०—बहुनेति । रणाजिरे रणभूमौ त्वां मां च लोकाः पश्यन्तु ॥ १५ ॥

१६ ] ति० टी०—येन वधसाधनेनास्त्रादिष्वन्यतमेन तेऽभ्यस्तं तवाभ्यासोऽस्ति तेन वा तेनैव मृधं युद्धं वर्ततां संपाद्यताम् ॥ १६ ॥

रा० टी०—अस्त्रैरिति । हे राम अस्त्राद्यन्यतमैः वा अथवा येन शस्त्रविशेषेण त्वया अभ्यस्तं यस्मिन् शस्त्रे अभ्यासः कृत इत्यर्थः तेन शस्त्रेण मृधे संग्रामे वर्तताम् ॥ १६ ॥

गो० टी०—अस्त्रैरिति । महाहवे निमित्ते । येन वा अन्येनायुधेनाभ्यस्तं तेनैव युधि वर्तताम् । भवानिति शेषः ॥ १६ ॥

१७ ] ति० टी०—उत्तरोत्तरवादिनं बहुप्रलापितम् ॥ १७ ॥

रा० टी०—मकराक्षेति । रामः उत्तरोत्तरवादिनं अधिकजल्पकमित्यर्थः खरात्मजमब्रवीत् ॥ १७ ॥

गो० टी०—मकराक्षेति । उत्तरोत्तरवादिनम् । बहुप्रलापिनमित्यर्थः ॥ १७ ॥

१८-१९ ] ति० टी०—ते त्वया जेतुमित्यन्वयः ॥ १८ ॥ १९ ॥

रा० टी०—तदाकारमाह—कत्थस इत्यादिभिः । असदृशानि शूराणामयोग्यानि बहूनि स्वश्लाघावचनानि किं किमर्थं वृथा कत्थसे वृथात्वमेवाह युद्धेन विना वाग्बलात् जेतुं न शक्यते ॥ १८ ॥

रा० टी०—इदानीं युद्धनिवृत्तिपूर्वकतत्प्राणग्रहणार्थं स्वाचरितमाह—चतुर्दशेति । रक्षसां चतुर्दश सहस्राणि त्वत्पित्रादयश्च मया निहताः ॥ १९ ॥

गो० टी०—कत्थस इति । युद्धेन विना प्रहारेण विना ॥ १८ ॥ १९ ॥

२०-२३ ] ति० टी०—स्वाशिताः सुष्ठुभुक्तवन्तोऽद्य भविष्यन्ति । त्वद्वधेनेति शेषः ॥ २०-२३ ॥

रा० टी०—स्वाशिता इति । हे पाप तीक्ष्णतुण्डादिविशिष्टा गृध्रादयः मांसेन त्वद्देहामिषेण स्वाशिताः सुभोजिताः भविष्यन्ति ॥ २० ॥

रा० टी०—राघवेणेति । मकराक्षः राघवाय बाणौघान् अमुचत् ॥ २१ ॥

रा० टी०—तानिति । तान् मकराक्षप्रयुक्तान् शरान् रामो नैकधा अनेकप्रकारं चिच्छेद अत एव विच्छिन्नाः शराः भुवि निपेतुः ॥ २२ ॥

रा० टी०—तदिति । अन्योन्यमोजसा समेत्य तद्युद्धमभवत् ॥ २३ ॥

गो० टी०—स्वाशिता इति । स्वाशिताः सुष्ठु आशितवन्तः ॥ २०-२३ ॥

२४-२५ ] ति० टी०—आकाशे जीमूतयोः शब्द इव ज्यातलयोर्ज्याकरतलयोः संघर्षहेतोर्धनुर्मुक्तोऽन्योन्यधनुर्मुक्तः स्वनोऽन्योन्यमिश्रो रणाजिरे श्रूयते स्म ॥ २४ २५ ॥

रा० टी०—जीमूतयोरिति । आकाशे जीमूतयोर्मेघयोः शब्द इव ज्यातलयोः संघर्षादिति शेषः धनुर्मुक्तः स्वनः अन्योन्यं श्रूयते ॥ २४ ॥

रा० टी०—देवेति । अद्भुतं युद्धं द्रष्टुकामाः देवादयः अन्तरिक्षगताः बभूवुरिति शेषः ॥ २५ ॥

गो० टी०जीमूतयोरिति । ज्यातलयोः शब्दः ज्यातलयोः संघर्षजः । शब्दः । स्वनोत्कृष्टः स्वनेषूत्कृष्टः ॥ २४ ॥ २५ ॥

---

१ तेनैव युधि वर्तताम् इति गो. पाठः । २ मृधे इति रा. पाठः । ३ स्विति गो. पाठः । ४ निहता इति गो. रा. पाठः । ५ अंकुरा इति गो. पाठः । ६ खरपुत्रो निशाचर इति गो. पाठः । ७ ते इति गो. पाठः । ८ सहस्रश इति गो. रा. पाठः । ९ रक्षसः खरपुत्रस्येति गो. पाठः । १० तथेति गो. पाठः । ११ उत्कृष्ट इति गो. पाठः ।

विद्धमन्योन्यगात्रेषु द्विगुणं वर्धते बलम् । कृतप्रतिकृतान्योन्यं कुरुतां तौ रणाजिरे ॥ २६ ॥
राममुक्तांस्तु बाणौघान्राक्षसस्त्वाच्छिनद्रणे । रक्षोमुक्तांस्तु रामो वै नैकधा प्राच्छिनच्छरैः॥ २७ ॥
बाणौघवितताः सर्वा[1] दिशश्च प्रदिशस्तथा । संछन्ना वसुधा चैवं[2] समन्तान्न प्रकाशते ॥ २८ ॥
ततः क्रुद्धो महाबाहुर्धनुश्चिच्छेद संयुगे[3] । अष्टाभिरथ नाराचैः सूतं विव्याध राघवः॥ २९ ॥
भित्त्वा रथं शरै रामो हत्वा[4] अश्वानपातयत् । विरथो वसुधास्थः स मकराक्षो निशाचरः॥ ३० ॥
तत्तिष्ठद्वसुधां रक्षः शूलं जग्राह पाणिना । त्रासनं सर्वभूतानां युगान्ताग्निसमप्रभम् ॥ ३१ ॥
दुरवापं महच्छूलं रुद्रदत्तं भयंकरम् । जाज्वल्यमानमाकाशे संहारास्त्रमिवापरम् ॥ ३२ ॥
यं दृष्ट्वा देवताः सर्वा भयार्ता विद्रुता दिशः । विभ्राम्य च[6] महच्छूलं प्रज्वलन्तं निशाचरः॥ ३३ ॥
स क्रोधात्प्राहिणोत्तस्मै राघवाय महात्मने[7] । तमापतन्तं ज्वलितं खरपुत्रकराच्च्युतम् ॥ ३४ ॥
बाणैश्चतुर्भिराकाशे[8] शूलं चिच्छेद राघवः । स भिन्नो[9] नैकधा शूलो दिव्यहाटकमण्डितः ॥
व्यशीर्यत महोल्केव रामबाणार्दितो भुवि ॥ ३५ ॥
तच्छूलं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा । साधु साध्विति भूतानि व्याहरन्ति नभोगताः ३६॥
तं दृष्ट्वा निहतं शूलं मकराक्षो निशाचरः । मुष्टिमुद्यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाब्रवीत्॥३७ ॥
स तं दृष्ट्वा पतन्तं तु[11] प्रहस्य रघुनन्दनः । पावकास्त्रं ततो रामः संदधे तु शरासने ॥ ३८ ॥
तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे । सञ्छिन्नहृदयं[10] तत्र पपात च ममार च ॥ ३९ ॥

२६-२९ ] ति० टी०-अन्योन्यं गात्रेषु विद्धम् । वेधनमभूदिति शेषः । अथापि द्विगुणं बलं वर्धते स्म । कृतप्रतिकृता कृतप्रतिकृतानि आर्षोऽडादेशो विभक्तेः । कुरुतामकुताम् अड्भाव आर्षः ॥ २६—२९ ॥

रा० टी०-विद्धमिति । तौ राममकराक्षौ अन्योन्यगात्रेषु विद्धं ताडनं यथा भवति तथा कृतप्रतिकृता कृतप्रतिकृते हननप्रतिहनने अन्योन्यं कुरुतामकुरुतां सुपां सुलुगिति विभक्तेर्डादेशः ॥ २६ ॥

रा० टी०-रामेति । नैकधा अनेकप्रकारम् प्राच्छिनत्॥ २७॥

रा० टी०-बाणेति । दिशः प्रदिशश्च बाणौघैर्विततताः व्याप्ताः अत एव संछन्ना वसुधा न प्रकाशते ॥ २८ ॥

रा० टी०-तत इति । राघवः अष्टाभिर्नाराचैर्बाणविशेषैः रक्षसो धनुश्चिच्छेद सूतं विव्याध च ॥ २९ ॥

गो० टी०-विद्धमिति । विद्धं वेधनम् । वर्धते अवर्धत । कृतप्रतिकृतान्योन्यं कृतस्य प्रतिकृतं ययोस्तौ तादृशावन्योन्यं यस्मिन् युद्धकर्मणि तत्तथोक्तम् । कुरुताम् अकुरुताम् । युद्धमिति शेषः ॥ २६ ॥ २९ ॥

३० ] ति० टी०-भित्वा रथम् भङ्क्त्वेत्यर्थः । हत्वा अश्वानित्यसंधिपाठः । 'रथादश्वान्' इति पाठान्तरम् । वसुधास्थोऽभूदिति शेषः ॥ ३० ॥

रा० टी०-भित्त्वेति । रामः रथं भित्वा रथात् अश्वान् अपातयत् अचालयत् अत एव मकराक्षो वसुधास्थो बभूवेति शेषः ॥ ३० ॥

गो० टी०-भित्वेति । वसुधां तिष्ठत् वसुधायामतिष्ठत् ३०

३१-३२ ] ति० टी०-' तत्तिष्ठद्वसुधाम् ' इति पाठः वसुधां वसुधायां तिष्ठत्तद्रक्षः शूलं जग्राहेति संबन्धः ॥३१॥३२

३३-३९ ] ति० टी०-श्लोकोऽर्थर्चादिः ॥ ३३—३९ ॥

रा० टी०-तदिति । वसुधां वसुधायां तिष्ठत्तद्रक्षः युगान्ताग्निसमप्रभं शूलं जग्राह ॥ ३१ ॥

रा० टी०-दुरवापमिति । यत् महच्छूलं दृष्ट्वा भयार्ता देवता दिशो विद्रुताः तत् अपरं संहारास्त्रमिव जाज्वल्यमानं दुरवापमन्यैरलभ्यं प्रज्वलत् परान्प्रज्वालयत् तन्महच्छूलं स मकराक्षः विभ्राम्य राघवाय प्राहिणोत् प्राक्षिपत् सार्धश्लोकद्वयमेकान्वयि ॥ ३२ ॥ ३३ ॥

रा० टी०-तमिति । राघवः आपतन्तं शूलं चतुर्भिर्बाणैश्चिच्छेद ॥ ३४ ॥

गो० टी०-तदिति । वसुधां वसुधायाम् ॥ ३१-३४ ॥

रा० टी०-स इति । रामबाणार्दितः अत एव नैकधा अनेकप्रकारं भिन्नः छिन्नः शूलः महोल्केव भुवि व्यशीर्यत ॥ ३५ ॥

रा० टी०-तदिति । रामेण निहतं शूलं दृष्ट्वा भूतानि पृथिव्यादिदेवाः नभोगता देवादयश्च साधु साध्विति व्याहरन्ति ॥ ३६ ॥

१ बाणौघैर्विततता इति गो. पाठः । २ चौश्चेति रा. पाठः । ३ रक्षस इति गो. रा.पाठः । ४ रथादश्वानिति रा. रथाश्चान्समपातयदिति गो. पाठः । ५ वसुधां तिष्ठदिति गो. पाठः । ६ सार्धमिदं पद्यं गो. पुस्तके नास्ति । ७ त्विति गो. पाठः । ८ आहवे इति गो. पाठः । ९ तु त्रिभिरिति गो. पाठः । १० छिन्न इति गो. रा. पाठः । ११ वै इति गो. पाठः ।

दृष्ट्वा ते राक्षसाः सर्वे मकराक्षस्य पातनम् । लङ्कामेव प्रधावन्त[1] रामबाणभयार्दिताः[2] ॥ ४० ॥
दशरथनृपसूनु[3]बाणवेगै रजनिचरं निहतं खरात्मजं तम् ।
[4]ददृशुरथ देवताः[5] प्रहृष्टा गिरिमिव वज्रहतं यथा विकीर्णम्[6] ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवसप्ततितमः सर्गः ॥ ७९ ॥

## अशीतितमः सर्गः ।

मकराक्षेऽपि हते भृशं रुष्टो दशग्रीवः पुत्रमिन्द्रजितं पुनरपि प्रहितवान् सोऽपि यथापूर्वमग्निं हुत्वाभिमन्त्र्य चान्तर्हितं रथमारुह्याच्छन्नो युयुधे तेन वानरबलं प्रव्यथितमवलोक्य सौमित्रिर्ब्रह्मास्त्रं प्रयोक्तुं प्रवृत्तोऽपि रामेण निवारितः यत्निरागसोऽपि मरिष्यन्तीत्यतोऽहमेव हनिष्यामीति च पश्चात्तेनैव तद्वधाय समनह्यत ।

मकराक्षं हतं श्रुत्वा रावणः समितिंजयः । रोषेण महताविष्टो दन्तान्कटकटाय्य च ॥ १ ॥
कुपितश्च तदा तत्र किं कार्यमिति चिन्तयन् । आदिदेशाथ संक्रुद्धो रणायेन्द्रजितं सुतम् ॥ २ ॥
जहि वीर महावीर्यौ भ्रातरौ रामलक्ष्मणौ । अदृश्यो दृश्यमानो वा सर्वथा त्वं बलाधिकः ॥ ३ ॥
त्वमप्रतिमकर्माणमिन्द्रं जयसि संयुगे । किं पुनर्मानुषौ दृष्ट्वा न वधिष्यसि संयुगे ॥ ४ ॥
तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः । यज्ञभूमौ स विधिवत्पावकं जुहवेन्द्रजित् ॥ ५ ॥

---

रा० टी०–तदिति । मकराक्षः मुष्टिमुद्यम्य काकुत्स्थं रामं तिष्ठ तिष्ठेत्यब्रवीत् ॥ ३७ ॥

रा० टी०–स इति । पतन्तं तं मकराक्षं रामो दृष्ट्वा शरासने धनुषि पावकास्त्रं संदधे ॥ ३८ ॥

रा० टी०–तेनेति । तेन रामप्रयुक्तेन अस्त्रेण करणेन काकुत्स्थेन कर्त्रा संछिन्नहृदयमत एव हतं रक्षो मकराक्षः पपात ममार च ॥ ३९ ॥

गो० टी०–तच्छूलमिति । नभोगता नभोगतानि । "सुपांसुलुक्०" इत्यादिना आकारादेशः ॥ ३९-४० ॥

४०-४१ ] ति० टी०–प्रधावन्त प्राधावन्त ॥४०॥४१॥

नवम्यां पूर्वरात्रेऽस्य वधः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवसप्ततितमः सर्गः ॥ ७९ ॥

रा० टी०–दृष्ट्वेति । राक्षसाः मकराक्षस्य पातनं दृष्ट्वा लङ्कामेव प्रधावन्त प्राधावन्त ॥ ४० ॥

रा० टी०–दशरथेति । दशरथनृपसूनुबाणवेगैः निहतं तं मकराक्षं प्रहृष्टाः सत्यो देवताः यथावत् ददृशुः तत्र दृष्टान्तः वज्रहतमत एव विकीर्णं गिरिमिव ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

गो० टी०–दशरथेति । गिरिमिव वज्रहतं यथेति । द्वे अप्यव्ययपदे संभूयैकार्थमेवाचक्षाते । पक्षद्वयेऽपि मकराक्षवधेन दशममहः समाप्तम् ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनाशीतितमः सर्गः ॥७९॥

१-४ ] ति० टी०–कटकटाय्येत्यार्षो ल्यप् ॥ १-४ ॥

रा० टी०–मकराक्षहननानन्तरकालिकं वृत्तान्तमाह—मकराक्षमित्यादिभिः । रावणः मकराक्षं हतं श्रुत्वा दन्तान् कटकटाय्य युगार्षः कुपितः अतिकोपं प्राप्तः अत एव सम्यक्कोपो यस्मात् राक्षसान्तराणामपि कोपहेतुर्भूत्वेत्यर्थः किं कार्यमिति चिन्तयन्सन् रणायेन्द्रजितं सुतमादिदेश श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

रा० टी०–आदेशप्रकारमाह—जहीति द्वाभ्याम् । यतः सर्वथा बलाधिकोऽसि अतः अदृश्यो दृश्यमानो वा त्वं रामलक्ष्मणौ जहि ॥ ३ ॥

गो० टी०–अथेन्द्रजिन्निर्गमोशीतितमे—मकराक्षमित्यादि । आविष्टः अभूदिति शेषः ॥ १–३ ॥

रा० टी०–त्वमिति । त्वमिन्द्रं जयसि तर्हि मानुषौ दृष्ट्वा किंन वधिष्यसि वधिष्यस्येवेत्यर्थः ॥ ४ ॥

गो० टी०–त्वमिति । जयसि अजैषीः । पुनःशब्दस्त्वर्थे । मानुषौ पुनः मानुषौ तु । संयुगे दृष्ट्वापि न वधिष्यसि किं दर्शनमात्रेण वधिष्यस्येवेत्यर्थः ॥ ४ ॥

५ ] ति० टी०–जुहव जुहाव । वृद्ध्यभाव आर्षः ॥ ५ ॥

रा० टी०–तथेति । राक्षसेन्द्रेण तथोक्त इन्द्रजित् पितु-

---

१ अभ्यधावन्तेति गो. पाठः । २ अर्दितास्तदेति गो रा. पाठः । ३ पुत्रेति गो. पाठः । ४ ददृशुराखिलेति रा. पाठः । ५ सुरा भृशमिति गो. पाठः । ६ पयात्रिति गो. पाठ ।

जुह्वतश्चापि तत्राग्निं रक्तोष्णीषधराः स्त्रियः । आजग्मुस्तत्र संभ्रान्ता राक्षस्यो यत्र रावणिः ॥ ६ ॥
शस्त्राणि शरपत्राणि समिधोऽथ बिभीतकाः । लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ ७ ॥
सर्वतोऽग्निं समास्तीर्य शरपत्रैः सतोमरैः । छागस्य सर्वकृष्णस्य गलं जग्राह जीवतः ॥ ८ ॥
शरहोमसमिद्धस्य विधूमस्य महार्चिषः । बभूवुस्तानि लिङ्गानि विजयं दर्शयन्ति च ॥ ९ ॥
प्रदक्षिणावर्तशिखस्तप्तहाटकसंनिभः । हविस्तत्प्रतिजग्राह पावकः स्वयमुत्थितः ॥ १० ॥
हुत्वाग्निं तर्पयित्वाथ देवदानवराक्षसान् । आरुरोह रथश्रेष्ठमन्तर्धानगतं शुभम् ॥ ११ ॥
स वाजिभिश्चतुर्भिस्तु बाणैस्तु निशितैर्युतः । आरोपितमहाचापः शुशुभे स्यन्दनोत्तमे ॥ १२ ॥
जाज्वल्यमानो वपुषा तपनीयपरिच्छदः । मृगैश्चन्द्रार्धचन्द्रैश्च स रथः समलंकृतः ॥ १३ ॥
जाम्बूनदमहाकम्बुर्दीप्तपावकसंनिभः । बभूवेन्द्राजितः केतुर्वैदूर्यसमलंकृतः ॥ १४ ॥
तेन चादित्यकल्पेन ब्रह्मास्त्रेण च पालितः । स बभूव दुराधर्षो रावणिः सुमहाबलः ॥ १५ ॥

---

र्वचः प्रतिगृह्य यज्ञभूमौ पावकं विधिवज्जुहव सञ्ज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः ॥ ५ ॥

गो० टी०–तथोक्त इति । जुहव जुहाव । वृद्ध्यभाव आर्षः ॥ ५ ॥

६ ] ति० टी०–स्त्रिय आजग्मुः । होमपरिचारिका इति शेषः ॥ ६ ॥

रा० टी०–जुह्वत इति । अग्निं जुह्वतः सतः रक्तोष्णीषधराः ऋत्विजां धारणार्थं गृहीतारुणोष्णीषाः राक्षस्यः स्त्रियः यत्र रावणिः तत्राजग्मुः ॥ ६ ॥

गो० टी०–जुह्वत इति । भावलक्षणे षष्ठी । रक्तोष्णीषधराः । ऋत्विग्धारणार्थं रक्तोष्णीषाण्यानयन्त्य इत्यर्थः । लोहितोष्णीषा ऋत्विजः प्रचरन्ति इति श्रुतेः । संभ्रान्ताः त्वरावत्यः । समयातिक्रमो मा भूदिति त्वरया उष्णीषाण्यानिन्युरित्यर्थः ॥ ६ ॥

७-८ ] ति० टी०–शस्त्राणीत्यादि व्याख्यातम् ॥७॥८॥

रा० टी०–शस्त्राणीति । सर्वतोऽग्निं शस्त्रादीनि समास्तीर्य सतोमरैश्शरपत्रैर्जीवतः छागस्य गलं जग्राह श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०–शस्त्राणीति । शस्त्राणि । अभवन्निति शेषः । शरपत्राणि गुन्द्रपत्राणि गुन्द्रश्च काशजातीयः गुन्द्रस्तेजनकः शर इत्यमरः । शस्त्राणि तोमराणि सतोमरैरित्यनुवादात् । शस्त्राणि शरपत्राणि च परिस्तरणान्यभवन् । बिभीतकाः समिधः इध्मानि अभवन् । वासांसि ऋत्विगुष्णीषवासांसि लोहितान्यभवन् । कार्ष्णायसं स्रुवमासीत् ॥७॥८॥

९-१० ] ति० टी०–विजयं दर्शयन्ति चेत्यत्र जीवतः पुनर्लङ्काप्रवेश एवात्र जयः ॥ ९ ॥ १० ॥

रा० टी०–शरेति । शरहोमेन समिद्धस्य महार्चिषो वह्नेः यानि विजयं दर्शयन्ति तानि लिङ्गानि चिह्नानि बभूवुः ॥९ ॥

रा० टी०–लिङ्गान्येवाह प्रदक्षिणेति । प्रदक्षिणावर्ता शिखा यस्य स स्वयमुत्थितः पावकः तद्धविः प्रतिजग्राह ॥१०

गो० टी०–सकृद्देवेति । विजयं दर्शयन्ति विजयसूचकानि ॥ ९ ॥ १० ॥

११-१२ ] ति० टी०–राक्षसांस्तर्पयित्वा । अभिचारयागीयानिति शेषः ॥ ११ ॥ १२ ॥

रा० टी०–हुत्वेति । अन्तर्द्धानगतम् अन्तर्द्धानगतिविषयकशक्तिमन्तं रथश्रेष्ठमारुरोह इन्द्रजिदिति शेषः ॥ ११ ॥

रा० टी०–स इति । वाजिप्रभृतिभिर्युतः स्यन्दनोत्तमः शुशुभे ॥ १२ ॥

गो० टी०–हुत्वेति । अन्तर्धानगतम् अन्तर्धानशक्तियुक्तम् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०–वपुषा स्वरूपेण जाज्वल्यमानो रथ इति शेषः । मृगैश्चित्रमयैः ॥ १३ ॥

रा० टी०–जाज्वल्यमान इति । वपुषा स्वस्वरूपकान्त्या जाज्वल्यमानः प्रकाशमानः चित्रीभूतमृगादिभिः समलंकृतः स रथः शुशुभे इत्यनुकृष्यते ॥ १३ ॥

गो० टी०–जाज्वल्यमान इति । मृगैः मृगाकारप्रतिमाभिः चन्द्रैः चन्द्राकारैः अर्धचन्द्रैः रचनाविशेषैः ॥ १३ ॥

१४-१५ ] ति० टी०–जाम्बूनदमया महान्तः कम्बवो वलया यस्य । 'कम्बुर्ना वलये शङ्खे' इत्यमरः ॥ १४ ॥ १५ ॥

रा० टी०–जाम्बूनदेति । जाम्बूनदः सुवर्णमयः महान् कम्बुर्वलयो यस्य स इन्द्रजितः केतुः वैदूर्यसमलंकृतो बभूव कम्बुर्नावलये शंखे इत्यमरः ॥ १४ ॥

रा० टी०–तेनेति । आदित्यकल्पेन ब्रह्मास्त्रेण पालितो रावणिः दुराधर्षो बभूव ॥ १५ ॥

गो० टी०–जाम्बूनदेति । जाम्बूनदमहाकम्बुः सौवर्णमहावलययुक्तः । कम्बुर्ना वलये शङ्ख इत्यमरः ॥ १४ ॥ १५ ॥

---

१ कृष्णवर्णस्येति गो. पाठः । २ सकृद्देवेति गो. पाठः । ३ चेति गो. पाठः । ४ विविधैरिति रम्भा । उत्तमः इति गो. रा. पाठः ।

ऽभिनिर्याय नगरादिन्द्रजित्समितिंजयः । हुत्वाग्निं राक्षसैर्मन्त्रैरन्तर्धानगतोऽब्रवीत् ॥ १६ ॥
अद्य हत्वा रणे यौ तौ मिथ्या प्रव्रजितौ वने । जयं पित्रे प्रदास्यामि रावणाय रणेऽधिकम् ॥ १७ ॥
अद्य निर्वानरामुर्वीं हत्वा रामं च लक्ष्मणम् । करिष्ये परमां प्रीतिमित्युक्त्वान्तरधीयत ॥ १८ ॥
आपपाताथ संक्रुद्धो दशग्रीवेण चोदितः । तीक्ष्णकार्मुकनाराचैस्तीक्ष्णस्त्विन्द्ररिपू रणे ॥ १९ ॥
स ददर्श महावीर्यौ नागौ त्रिशिरसाविव । सृजन्ताविषुजालानि वीरौ वानरमध्यगौ ॥ २० ॥
इमौ ताविति संचिन्त्य सज्यं कृत्वा च कार्मुकम् । संततानिषुधाराभिः पर्जन्य इव वृष्टिमान् ॥ २१ ॥
स तु वैहायसरथो युधि तौ रामलक्ष्मणौ । अचक्षुर्विषये तिष्ठन्विव्याध निशितैः शरैः ॥ २२ ॥
तौ तस्य शरवेगेन परीतौ रामलक्ष्मणौ । धनुषी सशरे कृत्वा दिव्यमस्त्रं प्रचक्रतुः ॥ २३ ॥
प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ । तमस्त्रैः सूर्यसंकाशैर्नैव पस्पर्शतुः शरैः ॥ २४ ॥
स हि धूमान्धकारं च चक्रे प्रच्छादयन्नभः । दिशश्चान्तर्दधे श्रीमान्नीहारतमसा वृतः ॥ २५ ॥
नैव ज्यातलनिर्घोषो न च नेमिखुरस्वनः । शुश्रुवे चरतस्तस्य न च रूपं प्रकाशते ॥ २६ ॥
घनान्धकारे तिमिरे शिलावर्षमिवाद्भुतम् । स ववर्ष महाबाहुर्नाराचशरवृष्टिभिः ॥ २७ ॥

१६-१७ ] ति० टी०-राक्षसैर्मन्त्रैर्निर्ऋतिदैवत्यमन्त्रैः । अन्तर्धानगतोऽन्तर्धानशक्तिं प्राप्तः ॥ १६ ॥ १७ ॥

रा० टी०-स इति । इन्द्रजित् नगरात् निर्याय निर्गत्य राक्षसैः राक्षसकुलमात्रप्रसिद्धैः मंत्रैः अग्निं हुत्वा अन्तर्द्धानगतस्सन् अब्रवीत् ॥ १६ ॥

गो० टी०-स इति । राक्षसैः निर्ऋतिदेवताकैः । अन्तर्धानगतः अन्तर्धानशक्तिं प्राप्तः । अतः इत्युक्त्वान्तरधीयतेत्यनेन न विरोधः ॥ १६ ॥

रा० टी०-अद्येति । मिथ्या निरर्थं यौ वने प्रव्रजितौ आगतौ तौ रामलक्ष्मणौ हत्वा अधिकं जयं पित्रे प्रदास्यामि १७

गो० टी०-अद्य हत्वेत्यादिश्लोकद्वयमेकान्वयम् । अद्य निर्वानरामिति । पितुरित्यध्याहारः । पितुः परमप्रीतिं परमप्रीतिं प्रति । पितुः प्रीतिमुद्दिश्येत्यर्थः । अद्य सलक्ष्मणं रामं हत्वा उर्वीं निर्वानरां करिष्य इति संबन्धः ॥ १७-१९ ॥

१८-१९ ] ति० टी०-रामं हत्वा निर्वानरामुर्वीं कृत्वा पितुः प्रीतिं करिष्ये इत्यर्थः । यस्त्वेवमादिवचसां रामस्तुतिपरतया क्लेशेन व्याख्यानं तदुचैव । कवेः कविनिबद्धवक्तुश्च तथा तात्पर्याभावादिति । एतत्सजातीयवालिवाक्यावसरे निरूपितम् ॥ १८ ॥ १९ ॥

रा० टी०-अद्येति । उर्वीं निर्वानरां कृत्वेति शेषः इत्युक्त्वा अन्तरधीयत वचनादुपररामेत्यर्थः ॥ १८ ॥

रा० टी०-आपपातेति । तीक्ष्णकार्मुकनाराचैः तीक्ष्णैरहंकारादिभिश्चोपलक्षित इन्द्ररिपुः रणे आपपात ॥ १९ ॥

२० ] ति० टी०-तूणीधनुःसंबन्धात्त्रिशिरोनागत्वोत्प्रेक्षा । सृजन्तौ सक्ष्यन्तौ ॥ २० ॥

रा० टी०-स इति । स इन्द्ररिपुः इषुजालानि सृजन्तौ त्रिशिरसौ नागाविव महावीर्यौ रामलक्ष्मणौ ददर्श तूणीधनुषोस्संसर्गात् त्रिशिरोनागत्वेनोत्प्रेक्षा ॥ २० ॥

गो० टी०-स ददर्शेति । नागौ त्रिशिरसाविवेति दृष्टान्तेन रामलक्ष्मणयोर्महापुरुषलक्षणपृथुलोन्नतभुजशिरस्कत्वं द्योत्यते । सृजन्तौ सक्ष्यन्तौ । सकलराक्षसक्षयकारिणाविव्यर्थः ॥ २० ॥

२१ ] ति० टी०-इमौ ताविति संचिन्त्य सकलराक्षसहन्ताराविति स्थूलेषुधाराभिरिषुवर्षैः संततान्पूरयामास । सर्वा दिश इति शेषः ॥ २१ ॥

रा० टी०-इमाविति । इमावेव रामलक्ष्मणाविति संचिन्त्य निश्चित्य कार्मुकं सज्यं ज्यासहितं कृत्वा वृष्टिमान् पर्जन्य इव इषुजालानि सन्ततान ॥ २१ ॥

गो० टी०-इमौ ताविति । सन्ततान ववर्ष ॥ २१ ॥

२२ ] ति० टी-वैहायसरथ आकाशगामी रथो यस्य सः । अचक्षुर्विषये तिष्ठन् । इदं युद्धं तद्रात्रावेव मध्यरात्रे ॥ २२ ॥

रा० टी०-स इति । स इन्द्ररिपुः अचक्षुर्विषये तिष्ठन् सन् शरैर्विव्याध ॥ २२ ॥

गो० टी०-वैहायसं विहायसा गमनम् ॥ २२-२४ ॥

२३ ] ति० टी०-परीतौ व्याप्तौ । प्रचक्रतुः प्रादुश्चक्रतुः २३

रा० टी०-ताविति । शरवेगेन परीतौ रामलक्ष्मणौ धनुषी सशरे कृत्वा दिव्यमस्त्रं तन्मंत्राभिमंत्रणं प्रचक्रतुः ॥ २३ ॥

२४ ] ति० टी०-अस्त्रैरस्त्रमन्त्राभिमन्त्रितैः शरैस्तमिन्द्रजितं नैव पस्पर्शतुः पस्पृशतुः अन्तर्हितत्वादिति भावः ॥ २४ ॥

रा० टी०-प्रच्छादयन्ताविति । महाबलौ अस्त्रैः तन्मंत्राभिमन्त्रितैश्शरैः तमिन्द्रजितं नैव पस्पर्शतुः पस्पृशतुः अन्तर्हितत्वादित्यर्थः ॥ २४ ॥

२५-२७ ] ति० टी०-धूमान्धकारं चक्रे । माययेति

१ आजिताविति गो. पाठः । २ रणार्जितमिति गो. रा. पाठः । ३ सलक्ष्मणमिति गो. रा. पाठः । ४ परमप्रीतिमिति गो. पाठः । ५ संततानेष्विति गो. पाठः । ६ ज्वालाभिरिति रा. पाठः । ७ वैहायसं प्राप्य सरथो रामलक्ष्मणाति गो. पाठः । ८ वृता इति गो. रा. पाठः । ९ शरेति गो. पाठः ।

स रामं सूर्यसंकाशैः शरैर्दत्तवरैर्भृशम् । विव्याध समरे क्रुद्धः सर्वगात्रेषु रावणिः ॥ २८ ॥
तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ । हेमपुङ्खान्नरव्याघ्रौ तिग्मान्मुमुचतुः शरान् ॥ २९ ॥
अन्तरिक्षे समासाद्य रावणिं कङ्कपत्रिणः । निकृत्य पतगा भूमौ पेतुस्ते शोणिताप्लुताः ॥ ३० ॥
अतिमात्रं शरौघेण दीप्यमानौ नरोत्तमौ । तानिषून्पततो भल्लैरनेकैर्विचकर्ततुः ॥ ३१ ॥
यतो हि ददृशाते तौ शरान्निपतितांश्छितान् । ततस्तु तौ दाशरथी ससृजातेऽस्त्रमुत्तमम् ॥ ३२ ॥
रावणिस्तु दिशः सर्वा रथेनातिरथोऽपतत् । विव्याध तौ दाशरथी लघ्वस्त्रौ निशितैः शरैः ॥ ३३ ॥
तेनातिविद्धौ तौ वीरौ रुक्मपुङ्खैः सुसंहतैः । बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ॥ ३४ ॥
नास्य वेगगतिं कश्चिन्न च रूपं धनुः शरान् । न नास्य विदितं किंचित्सूर्यस्येवाभ्रसंप्लवे ॥ ३५ ॥
तेन विद्धाश्च हरयो निहताश्च गतासवः । बभूवुः शतशस्तत्र पतिता धरणीतले ॥ ३६ ॥
लक्ष्मणस्तु ततः क्रुद्धो भ्रातरं वाक्यमब्रवीत् । ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ॥ ३७ ॥
तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् । नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ॥ ३८ ॥

---

शेषः । दिशश्चान्तर्दधेऽन्तर्धापयामास । नीहारवशात्तदविवेकं मायया संपादयामासेत्यर्थः ॥ २६—२७ ॥

२८-२९ ] ति० टी०—दत्तवरैर्वरदत्तैः ॥ २८ ॥ २९ ॥

रा० टी०—स इति । स इन्द्रजित् नभः प्रच्छादयन् प्रच्छादयितुं धूमान्धकारं चक्रे स्वमाययेति शेषः अत एव दिशः अन्तर्दधे अन्तर्द्धापयामास ॥ २६ ॥

रा०टी०—नेति । चरतो गच्छतोऽपि तस्येन्द्रजितो ज्यातलनिर्घोषः नेमिखुरस्वनश्च न शुश्रुवे ॥ २६ ॥

गो० टी०—स हीति । नभः प्रच्छादयन् । हेतौ शतृप्रत्ययः । अन्तर्धापयामासेत्यर्थः । धूमान्धकारमिति नीहारतमसावृता इति च पूर्वमेवोत्पातकलुषत्वमुच्यते ॥ २९ ॥ २६ ॥

रा० टी०—घनेति । महाबाहुः रामः घने निबिडे अन्धकारे दृष्ट्युपघातके तिमिरे तमसि नाराचशरवृष्टिभिः शिलावर्षमिव ववर्ष ॥ २७ ॥

रा० टी०—स इति । रावणिः दत्तवरैश्शरैः रामं सर्वगात्रेषु विव्याध *तताड ॥ २८ ॥

रा० टी०—ताविति । धाराभिः हन्यमानौ पर्वताविव नाराचैर्हन्यमानौ तौ रामलक्ष्मणौ तिग्मान् शरान् मुमुचतुः ॥२९॥

गो० टी०—घनान्धकार इति । घनान्धकारे घनकालिभवति ॥ २७-२९ ॥

३० ] ति० टी०—कङ्कपत्रिणस्ते पतगा बाणा अन्तरिक्षे रावणिं समासाद्य तं निकृत्य विद्ध्वा भूमौ शोणितोक्षिताः पेतुः ॥ ३० ॥

रा० टी०—अन्तरिक्ष इति । पतगाः रामबाणाः अन्तरिक्षे रावणिं समासाद्य प्राप्य निकृत्य विध्वा शोणिताप्लुतास्सन्तः भूमौ पेतुः ॥ ३० ॥

गो० टी०—अन्तरिक्ष इति । पतगाः पक्षिणो भूत्वा । तथा वेगवन्त इत्यर्थः ॥ ३०-३३ ॥

३१ ] ति० टी०—तानिषूनिन्द्रजित्त्यक्तबाणान्विचकर्ततुरित्यार्षो गुणः ॥ ३१ ॥

रा० टी०—अतिमात्रमिति । शरौघेण अतिमात्रमत्यन्तं दीप्यमानौ नरोत्तमौ तान् इन्द्रजित्प्रयुक्तान् पततः इषून् भल्लैर्बाणविशेषैः विचकर्ततुः विचकृततुः ॥ ३१ ॥

३२-३४ ] ति० टी०—यतो यस्यां दिशि ततस्तस्यां दिशि ॥ ३२-३४ ॥

रा० टी०—यत इति । तौ दाशरथी यतो यस्याः दिशः निपतितान् निर्गतान् शरान् ददृशाते ततः तस्यां दिशि उत्तममस्त्रं ससृजाते चिक्षिपतुः ॥ ३२ ॥

रा० टी०—रावणिरिति । रावणिस्तु सर्वाः दिशः पतन् दिशः पतन् सन् शरैर्लघूनि अल्पकालेन बहुदूरं प्रचलनशीलानि अस्त्राणि ययोस्तौ दाशरथी विव्याध ॥ ३३ ॥

रा० टी०—तेनेति । रुक्मपुंखैः शरैरतिविद्धौ अतिताडितौ रामलक्ष्मणौ पुष्पितौ सपुष्पौ किंशुकाविव बभूवतुः सुवर्णमयत्वेन निहतबहुजन्तुरुधिराक्तत्वेन च शराणां किंशुकपुष्पोपमा ॥ ३४ ॥

गो० टी०—तेनेति । सुसंहितैः सुष्ठुनिर्मितैः ॥ ३४ ॥

३५-३८ ] ति० टी०—अभ्रसंप्लवे सूर्यस्य गत्यादिकमिव नास्य वेगयुक्तगत्यादिकं किंचिद्विदितम् ॥ ३५-३८ ॥

रा०टी०—नेति । अभ्राणां संप्लवे अतिप्रवाहे सूर्यस्येव अस्येन्द्रजितः गत्यादि कश्चिन्न वेद अत एव अस्य विदितं स्थितिं च न वेद विदितशब्दःणिजन्तप्रकृतिकनिष्ठान्तः संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः ॥ ३६ ॥

रा० टी०—तेनेति । तेनेंद्रजिता अतिविद्धाः अत एव निहताः पीडिताः अत एव गतासवः शतशो हरयः धरणीतले पतिता बभूवुः ॥ ३६ ॥

रा० टी०—लक्ष्मण इति । सर्वरक्षसां वधार्थं ब्राह्ममस्त्रं प्रयोक्ष्यामीति वाक्यं लक्ष्मणो भ्रातरमब्रवीत् ॥ ३७ ॥

---

१ उक्षिता इति गो. पाठः । २ निचकृन्ततुरिति गो. पाठः । ३ निपातत इति गो. पाठः । ४ रथः पतन्निति गो. रा. पाठः । ५ कध्वस्त्र इति गो. पाठः । ६ संहितैरिति गो. रा. पाठः । ७ मन्यदिति गो. पाठः । ८ सुसमिति गो. पाठः । *ताडयांचकारेति

अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् । पलायमानं मत्तं वा न हन्तुं त्वमिहार्हसि ॥ ३९ ॥
तस्यैव तु वधे यत्नं करिष्यामि महाभुज । आदेक्ष्यावो महावेगानस्त्रानाशीविषोपमान्॥ ४० ॥
तमेनं मायिनं क्षुद्रमन्तर्हितरथं बलात् । राक्षसं निहनिष्यन्ति दृष्ट्वा वानरयूथपाः ॥ ४१ ॥
यद्येष भूमिं विशते दिवं वा रसातलं वापि नभस्तलं वा ।
एवं विगूढोऽपि ममास्त्रदग्धः पतिष्यते भूमितले गतासुः ॥ ४२ ॥
इत्येवमुक्त्वा वचनं महार्थं रघुप्रवीरः प्लवगर्षभैर्वृतः ।
वधाय रौद्रस्य नृशंसकर्मणस्तदा महात्मा त्वरितं निरीक्षते ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽशीतितमः सर्गः ॥ ८० ॥

## एकाशीतितमः सर्गः ।

इन्द्रजित्सर्वेषां मोहनार्थं मायामयीं सीतां रचयित्वा स्वरथे स्थापयित्वा वानराभिमुखो यदाधतस्तदा सर्वेषामग्रगामी मारुतिस्तादृशीं दीनां सीतां दृष्ट्वा वानरबलेन परिवृतोऽभ्यधावत् रावणिस्तु रामरामेति क्रोशन्तीं वानराणां पश्यतामेव खड्गेनाताडयत् तद्दृष्ट्वा हनुमांस्तं भर्त्सितवान् वानरा अपि तन्निशाम्य विषण्णा दुद्रुवुः

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः । स निवृत्याहवात्तस्मात्प्रविवेश पुरं ततः ॥ १ ॥

रा० टी०—तमिति । रामो लक्ष्मणमुवाच तदाकारमाह एकस्यन्द्रजितो हेतोः रक्षांसि निखिलराक्षसान् हन्तुं त्वं नार्हसि ३८

गो० टी०—नास्येति । अभ्रसंप्लवे मेघावरणे ॥३६–३८॥

३९] ति० टी०—अयुध्यमानं त्यक्तयुद्धं प्रच्छन्नं युद्धभीत्या गृहेऽस्मदद्दश्यतया स्थितम् अयुध्यमानत्वादिषट्प्रकाराणामपि सर्वरक्षउद्देशेन ब्रह्मास्त्रसंधाने वधो भवति, न तु तद्युज्यत इत्यर्थः । अन्ततो विभीषणस्यापि नाशप्रसङ्ग इत्याशयः ॥ ३९ ॥

रा० टी०—नन्विन्द्रजिन्मात्रवधायैव ब्रह्मास्त्रं प्रयोक्ष्यामीत्यत आह—अयुध्यमानमिति । अयुध्यमानप्रभृतीन् हन्तुं त्वं नार्हसि एतेन पूर्वं शरप्रक्षेपो रावणिभयार्थमेवेति ध्वनितम्॥३९॥

गो० टी०—नैकस्येत्यादि । प्रच्छन्नं युद्धभीत्या प्रच्छन्नम् । पलायन्तं पलायमानम् ॥ ३९ ॥

४०–४१ ] ति० टी०—माययान्तर्हितमेनमेव हन्तुं घोरानाशीविषोपमानस्त्राण्यादेक्ष्यावः । अदृष्टवधोऽस्मदेकसाध्यः । दृष्टस्य तु वध ईषत्करो वानराणामपीत्याह—राक्षसमिति । यदि दर्शनं स्यात्तदा दृष्ट्वा दर्शनमात्रेण हनुमदादय एनं राक्षसं निहनिष्यन्ति । 'दृष्ट्वा वानरयूथपाः' इत्यत्र तद्दर्शनोपायो भारते उक्तः—'इदमम्भो गृहीत्वा तु राजराजस्य शासनात् । गुह्यकोऽभ्यागतः कश्चित्त्वत्सकाशमरिंदम ॥ इदमम्भः कुबेरस्ते महाराज प्रयच्छति । अन्तर्हितानां भूतानां दर्शनार्थं परंतप ॥ अनेन मृष्टनयनो भूतान्यन्तर्हितान्युत । भवान्द्रक्ष्यति यस्मै च प्रदास्यति नरः स च ॥' इति विभीषणवाक्येन ॥४० ॥ ४१॥

रा० टी०—तस्येति । तस्येन्द्रजितः वधे यत्नं करिष्यास्येव अत एव अस्त्रान् अस्त्राणि आदेक्ष्यावः ॥ ४० ॥

रा० टी०—ननु शस्त्राणामादेशेपि अन्तर्हितस्य वधः कथं भविष्यतीत्यत आह—तमिति । अन्तर्हितमेनं दृष्ट्वा वानरयूथपाः निहनिष्यन्ति एतेन स्वस्याघटितघटनापटीयस्त्वं सूचितम्॥४१॥

गो० टी०—अस्यैव त्विति । आदेक्ष्यावः प्रयोक्ष्यावः । अस्त्रान् अस्त्राणि । लिङ्गव्यत्यय आर्षः ॥ ४० ॥ ४१ ॥

४२] ति० टी०—भूमिं भूमिविवरम् । दिवं स्वर्गम् एतदुपरितनलोकोपलक्षणम् । रसातलमित्येतदधस्तललोकोपलक्षणम्॥४२

रा० टी०—ननु दर्शनानन्तरं शस्त्रविमोकोत्तमेपि यद्यन्तर्हितो भविष्यति तर्हि कथं वधो भविष्यतीत्यत आह—यदीति एवं विमूढ इन्द्रजित् यदि भूम्याद्यन्यतमं विशते तदापि ममास्त्रदग्धस्सन् भूमितले पतिष्यति एतेन स्वस्य सर्वदर्शित्वं बाणानां चेतनत्वमव्याहतगतित्वं च सूचितम् ॥ ४२ ॥

गो०टी०—यद्येष इति । भूमिं भूविवरम् विशते । आत्मनेपदमार्षम् । दिवं स्वर्गम् ॥ ४२ ॥

४३ ] ति० टी०—त्वरितं त्वरोपेतं निरीक्षते स्म ॥ ४३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽशीतितमः सर्गः ॥ ८० ॥

रा० टी०—इतीति । रघुप्रवीरः इति वचनमेवमुक्त्वा रौद्रस्य रक्षसः त्वरितं यथा भवति तथा निरीक्षते विचारयामास॥४३॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अशीतितमः सर्गः ॥ ८० ॥

गो० टी०—इत्येवमिति । प्लवगर्षभैः वृतः निरीक्षते । उपायं चिन्तयति स्मेत्यर्थः ॥ ४३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अशीतितमः सर्गः ॥ ८० ॥

१ ] ति० टी०—मनो विज्ञाय दिव्यास्त्रबलेन सर्वथा मां जिघांसतीति ज्ञात्वा ॥ १ ॥

१ पलायन्तं प्रमत्तं वेति गो. रा. पाठः । २ त्वं हन्तुमिहेति गो. पाठः । ३ अस्येति गो. पाठः । ४ करिष्यावो महाबलेति गो. पाठः । ५ नीति गो. पाठः । ६ समिति गो. पाठः ।

सोऽनुस्मृत्य वधं तेषां राक्षसानां तरस्विनाम् । क्रोधताम्रेक्षणः शूरो निर्जगामाथ रावणिः ॥ २ ॥
स पश्चिमेन द्वारेण निर्ययौ राक्षसैर्वृतः । इन्द्रजित्सुमहावीर्यः पौलस्त्यो देवकण्टकः॥ ३ ॥
इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । रणायाभ्युद्यतौ वीरौ मायां प्रादुष्करोत्तदा॥ ४ ॥
इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं तदा । बलेन महतावृत्य तस्या वधमरोचयत् ॥ ५ ॥
मोहनार्थं तु सर्वेषां बुद्धिं कृत्वा सुदुर्मतिः । हन्तुं सीतां व्यवसितो वानराभिमुखो ययौ॥ ६ ॥
तं दृष्ट्वा त्वभिनिर्यान्तं सर्वे ते काननौकसः । उत्पेतुरभिसंक्रुद्धाः शिलाहस्ता युयुत्सवः ॥ ७ ॥
हनूमान्पुरतस्तेषां जगाम कपिकुञ्जरः । प्रगृह्य सुमहच्छृङ्गं पर्वतस्य दुरासदम् ॥ ८ ॥
स ददर्श हतानन्दां सीतामिन्द्रजितो रथे । एकवेणिधरां दीनामुपवासकृशाननाम् ॥ ९ ॥
परिक्लिष्टैकवसनाममृजां राघवप्रियाम् । रजोमलाभ्यामालिप्तैः सर्वगात्रैर्वरस्त्रियम् ॥ १० ॥
तां निरीक्ष्य मुहूर्तं तु मैथिलीमध्यवस्य च । बभूवाचिरदृष्टा हि तेन सा जनकात्मजा ॥ ११ ॥

---

रा० टी०—इन्द्रजिद्वधविषयकरामविचारानन्तरकालिकं वृत्तान्तमाह—विज्ञायेत्यादिभिः । स इन्द्रजित् राघवस्य मनः स्ववधविषयकेच्छां विज्ञाय आहवान्निवृत्य पुरं लंकां प्रविवेश एतेन इन्द्रजितो भीतत्वं सूचितम् तेन रामस्य 'भीषास्माद्वातः पवते' इत्यादिश्रुतिगम्यत्वं सूचितम् ॥ १ ॥

गो० टी०—अथ मायासीतावधः एकाशीतितमे—विज्ञायेत्यादि । अत्र तृतीयाक्षरभूतो यकारो गायत्र्या एकोनविंशतितमाक्षरम् । अष्टादशसहस्रश्लोकाः गताः ॥ १ ॥

२-३ ] ति० टी०—तेषां कुम्भकर्णादीनाम् ॥ २ ॥ ३ ॥

रा० टी०—स इति । स पुरमागतो रावणिः रक्षसां वधं स्वगमनमन्तरा हिंसनमनुस्मृत्य निर्जगाम ॥ २ ॥

गो० टी०—सोऽनुस्मृत्येति । तेषां कुम्भकर्णादीनाम् ॥ २ ॥

रा० टी०—तत्प्रकारमाह—सेति । इन्द्रजित् पश्चिमेन द्वारेण निर्ययौ ॥ ३ ॥

गो० टी०—निकुम्भिलायां दुर्जयास्त्रबललाभाय होतुकामस्तावत्पर्यन्तं रामलक्ष्मणयोर्युद्धोद्योगं मन्दीकर्तुं मायामारिप्सरमाणो रामलक्ष्मणयोः कुपितत्वेन दुरासदत्वात् सीतास्वरूपाभिज्ञस्यान्यस्याभावाद्धनुमते मायां दर्शयितुं पश्चिमद्वारेण निर्गत इत्याह—स पश्चिमेनेत्यादिना ॥ ३ ॥

४ ] ति० टी०—मायां परव्यामोहकरीं शक्तिं प्रादुष्करोत्प्रादुर्भावयामास । निकुम्भिलां गन्तुकामः पश्चिमेन द्वारेण निर्गच्छन्स्वगमनविघातकं रामलक्ष्मणयोर्युद्धोद्योगं दृष्ट्वा तन्निवारणार्थं मायां प्रकटितवानित्याशयः ॥ ४ ॥

रा० टी०—इन्द्रजिदिति । इन्द्रजित् रामलक्ष्मणौ रणाय अभ्युद्यतौ दृष्ट्वा मायां प्रादुष्करोत् स्वप्राणरक्षणाय विविधकापट्यं प्रकटयामास आगमशास्त्रस्यानित्यत्वादद्दविरहः ॥ ४ ॥

गो० टी०—इन्द्रजित्त्विति । दृष्ट्वा विचिन्त्य । पश्चिमद्वारनिष्क्रान्तस्य रामलक्ष्मणदर्शनासंभवात् । मायां परव्यामोहकरीं शक्तिम् प्रादुष्करोत् प्रादुर्भावयामास ॥ ४ ॥

५-९ ] ति० टी०—तां मायामाह—इन्द्रजित्त्विति । तस्या वधं मायासीतावधम् । बुद्धिं कृत्वा मन्त्रं कृत्वा सीतां हन्तुं व्यवसितः सन् ययौ । इदं रात्रिशेषे परदिने दशम्यां वा इति बोध्यम् ॥ ५—९ ॥

१० ] ति० टी०—परिक्लिष्टं मलिनम् । अमृजामुद्वर्तनादिसंस्काररहिताम् । सर्वगात्रैरुपलक्षिताम् ॥ १० ॥

रा० टी०—मायामेवाह—इन्द्रजिदिति । इन्द्रजित् मायामयीं सीतां रथे स्थाप्य स्थापयित्वा बलेन सैन्येनावृत्य तस्याः मायासीतायाः वधमरोचयत् ऐच्छत् ॥ ५ ॥

रा० टी०—मोहनार्थमिति । सर्वेषां हनुमदादीनां मोहनार्थं बुद्धिं निश्चयं कृत्वा सीतां हंतुं व्यवसितो निश्चयवान् इन्द्रजित् वानराभिमुखस्सन् ययौ ॥ ६ ॥

रा० टी०—तमिति । अभिनिर्यांतं तमिन्द्रजितं दृष्ट्वा अभिसंक्रुद्धाः काननौकस उत्पेतुः ॥ ७ ॥

रा० टी०—हनूमानिति । हनुमान् सुमहत्पर्वतस्य शृङ्गं प्रगृह्य तेषां वानराणां पुरतो जगाम ॥ ८ ॥

गो० टी०—इन्द्रजित्त्विति । आवृत्य स्थितेन बलेन । युक्त इति शेषः । युक्ते रथे सीतां स्थाप्य ततस्तस्या वधमरोचयदिति संबन्धः ॥ ५-८ ॥

रा० टी०—स इति । हतः आनन्दो यस्याः उपवासेन कृशमाननं यस्याः परिक्लिष्टं मलिनमेकवसनं यस्याः अमृजाद्युद्वर्तनप्रभृतिसंस्काररहितां रजोमलाभ्यामालिप्तैः सर्वगात्रैरुपलक्षितां वरस्त्रियं सीतां स हनुमान् ददर्श श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०—स ददर्शेत्यादिश्लोकद्वयमेकान्वयम् । अमृजाम् अनुद्वर्तनाम् । अनलंकारामिति वा । "मृजू, शौचालंकारयोः" इति धातोर्भिदादित्वादङ् । सर्वगात्रैः उपलक्षिताम् ॥ ९ ॥ १० ॥

११ ] ति० टी०—अध्यवस्य निश्चित्य । विषण्णो बभूवेति शेषः । निश्चयहेतुमाह—अचिरेत्यादि ॥ ११ ॥

---

१ महाद्युतिरिति गो. पाठः । २ स्थितिं गो. पाठः । ३ अभीति गो. रा. पाठः । ४तत इति गो. पाठः । ५ नगर्यां इति गो. पाठः । ६ मैथिलीमिति गो. पाठः । ७ स्थिति गो. रा. पाठः ।

अब्रवीत्तां तु शोकार्तां निरानन्दां तपस्विनीम् । दृष्ट्वा[1] रथस्थितां दीनां राक्षसेन्द्रसुताश्रिताम् ॥ १२ ॥
किं समर्थितमस्येति चिन्तयन्स महाकपिः । सह तैर्वानरश्रेष्ठैरभ्यधावत रावणिम् ॥ १३ ॥
तद्वानरबलं दृष्ट्वा रावणिः क्रोधमूर्च्छितः । कृत्वा विकोशं निस्त्रिंशं मूर्ध्नि सीता[3]मकर्षयत् ॥ १४ ॥
तां स्त्रियं पश्यतां तेषां ताडयामास राक्षसः[4] । क्रोशन्तीं रामरामेति मायया योजितां रथे ॥ १५ ॥
गृहीतमूर्धजां दृष्ट्वा हनूमान्दैन्यमागतः । दुःखजं[5] वारि नेत्राभ्यामुत्सृजन्मारुतात्मजः ॥ १६ ॥
तां दृष्ट्वा चारुसर्वाङ्गीं रामस्य महिषीं प्रियाम् । अब्रवीत्परुषं वाक्यं क्रोधाद्रक्षोधिपात्मजम् ॥ १७ ॥
दुरात्मन्नात्मनाशाय केशपक्षे परामृशः । ब्रह्मर्षीणां कुले जातो राक्षसीं योनिमाश्रितः ॥ १८ ॥
धिक्त्वां पापसमाचारं यस्य ते मतिरीदृशी । नृशंसानार्य दुर्वृत्त क्षुद्र पापपराक्रम ॥
अनार्यस्येदृशं कर्म घृणा ते नास्ति निर्घृण ॥ १९ ॥
च्युता गृहाच्च राज्याच्च रामहस्ताच्च मैथिली । किं तवैषापराद्धा हि यदेनां हंसि[6] निर्दय ॥ २० ॥

रा० टी०–तामिति । तां मायामयीं मैथिलीं मुहूर्तं निरीक्ष्य अध्यवस्यत निरचिनोत् मानेन तेन हनुमता अचिरदृष्टा बहुकालमवलोकिता सा सीता बभूव ॥ ११ ॥

गो० टी०–तामिति । अध्यवस्य निश्चित्य । विषण्ण इति शेषः । निश्चये हेतुमाह—बभूवेति ॥ ११ ॥

गो० टी०–तामिति । दृश्य दृष्ट्वा ॥ १२ ॥

१२] ति० टी०–शोकार्तत्वादिगुणविशिष्टां राक्षसेन्द्रसुतमिन्द्रजितं श्रितां सीतां दृष्ट्वा किमस्य समर्थितमभिप्रेतमिति स्वयं चिन्तयन् सन् वानरान्प्रत्यपि किं समर्थितमस्येत्यब्रवीत् ॥१२॥

रा० टी०–अब्रवीदिति । राक्षसेन्द्रसुतश्रितामत एव शोकार्तां तां सीतां दृष्ट्वा चिंतयन् चिन्तां प्राप्तस्सन् अस्येन्द्रजितः किं समर्थितमभिप्रेतमित्यब्रवीत् वानरान् प्रतीति शेषः वानरश्रेष्ठैस्सह रावणिमभ्यधावत च श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०–अब्रवीदित्याद्यर्धत्रयमेकान्वयम् । सीतां रथे स्थापितवतोऽस्य किं समर्थितं को वाभिप्राय इति चिन्तयन्नब्रवीत् । इतिर्वचनचिन्तनयोः साधारणः ॥ १३ ॥

१३ ] ति० टी०–अस्तु यत्किंचिदस्य समर्थितम्, अपि तु दुष्टमेनं हन्म इत्युद्योगं कृतवानित्याह–सह तैरिति ॥ १३॥

गो० टी०–सहतैरित्यर्धम् । हनुमानिति शेषः ॥ १४ ॥

१४ ] ति० टी०–विकोशं विगतपिधानं निस्त्रिंशं खड्गं मूर्ध्नि तत्स्थे केशपाशे । स्पृष्ट्वेति शेषः ॥ १४ ॥

रा० टी०–तदिति । तत् धावत् वानरबलं दृष्ट्वा क्रोधमूर्छितो रावणिः निस्त्रिंशं खड्गं विकोशं पिधानरहितं कृत्वा मूर्ध्नि सीताकेशपाशे स्पर्शयित्वेति शेषः सीतामकर्षयत् ॥१४॥

गो० टी०–तदिति । मूर्छितः व्याप्तः ॥ १५ ॥

१५–१७ ] ति० टी०–पश्यतां तेषाम् । पश्यतस्ताननादृत्येत्यर्थः ॥ १५—१७ ॥

रा० टी०–तामिति । मायया रथे योजितां सीतां तेषवानराणां पश्यतां सतां राक्षसः सीतां ताडयामास ॥ १५ ॥

रा० टी०–गृहीतेति । गृहीताः मूर्द्धजाः यस्याः तां सीतां दृष्ट्वा दुःखजं वारि नेत्राभ्यामुत्सृजन् हनूमान् दैन्यमागतोऽभवदिति शेषः ॥ १६ ॥

रा० टी०–तामिति । तां गृहीतमूर्द्धजां रामस्य महिषीं दृष्ट्वा हनूमान् रक्षोधिपात्मजं परुषं वाक्यमब्रवीत् ॥ १७ ॥

गो० टी०–तामिति । पश्यतां तेषाम् । अनादरे षष्ठी । मायया परमोहनशक्त्या ॥ १६–१८ ॥

१८ ] ति० टी०–हे दुरात्मन्, यदेनां केशपक्षे केशकलापे परामृशस्तदात्मनाशाय । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे'। यतो ब्रह्मर्षिकुले जातोऽपि राक्षसीं योनिमाश्रितोऽसि, अतस्त्वां धिगित्युत्तरेणान्वयः ॥ १८ ॥

रा० टी०–तदाकारमाह—दुरात्मन्नित्यादिभिः । हे दुरात्मन् राक्षसीं योनिमाश्रितस्त्वं आत्मविनाशाय केशपक्षे केशपरिग्रहणे परामृशः व्यचारयः अतः यस्य ते मतिरीदृशी तं त्वां धिक् श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०–दुरात्मन्निति । केशपक्षे केशसमूहे । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्पर इत्यमरः । परामृशः अस्पृशः ॥ १९ ॥

१९–२० ] ति० टी०–पापपराक्रम कूटयोधिन् । हे निर्घृण ! ते स्त्रीविषयेऽपि घृणा नास्ति । अतोऽनार्यस्येदृशं कर्म धिगित्यनुकर्षः ॥ १९ ॥ २० ॥

रा० टी०–अनार्यस्येति । यतोऽनार्यस्य नीचस्य ईदृशमेव कर्म भवति अतस्ते घृणा दया नास्ति अर्द्धं पृथक् । सीताया दयाविषयत्वमुपपादयन्नाह—च्युतेति । गृहादिभ्यश्च्युता एषा मैथिली तव किमपराद्धा अपराधं कृतवती कर्तरि निष्ठा यदेनापराधेन एनां हंसि ॥ २० ॥

गो० टी०–धिगित्यादिसार्धश्लोक एकान्वयः । ईदृशी ।

१ सीतामिति गो. पाठः । २ दृष्ट्वेति गो. पाठः । ३ परामृशदिति गो. पाठः । ४ रावणिरिति गो. पाठः । ५ शोकजमिति गो. पाठः । ६ हन्तुमिच्छसीति गो. पाठः ।

सीतां हत्वा तु न चिरं जीविष्यसि कथंचन । वधार्हकर्मणा तेन मम हस्तगतो ह्यसि ॥ २१ ॥
ये च स्त्रीघातिनां लोका लोकवध्यैश्च कुत्सिताः । इह जीवितमुत्सृज्य प्रेत्य तान्प्रति लप्स्यसे॥ २२ ॥
इति ब्रुवाणो हनुमान्सायुधैर्हरिभिर्वृतः । अभ्यधावत्सुसंक्रुद्धो राक्षसेन्द्रसुतं प्रति ॥ २३ ॥
आपतन्तं महावीर्यं तदनीकं वनौकसाम् । रक्षसां भीमकोपानामनीकेन न्यवारयत् ॥ २४ ॥
स तां बाणसहस्रेण विक्षोभ्य हरिवाहिनीम् । हनूमन्तं हरिश्रेष्ठमिन्द्रजित्प्रत्युवाच ह ॥ २५ ॥
सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः । तां वधिष्यामि वैदेहीमद्यैव तव पश्यतः ॥ २६ ॥
इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर । सुग्रीवं च वधिष्यामि तं चानार्यं विभीषणम्॥ २७ ॥
न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम । पीडाकरममित्राणां यच्च कर्तव्यमेव तत् ॥ २८ ॥
तमेवमुक्त्वा रुदतीं सीतां मायामयीं च ताम् । शितधारेण खड्गेन निजघानेन्द्रजित्स्वयम् ॥ २९ ॥
यज्ञोपवीतमार्गेण छिन्ना तेन तपस्विनी । सा पृथिव्यां पृथुश्रोणी पपात प्रियदर्शना ॥ ३० ॥

---

जुगुप्सितेत्यर्थः । नृशंस निर्दय अनार्य असज्जन दुर्वृत्त दुराचार क्षुद्र अल्पबुद्धे पापः अधर्म्यः पराक्रमो यस्य स पापपराक्रमः । उक्तमनार्यत्वं कार्यतो दर्शयति—अनार्यस्येति । ईदृशं जुगुप्सितं कर्म अनार्यस्यैव भवति । हे निर्घृण निर्दय, ते घृणा जुगुप्सा नास्ति । जुगुप्सा करुणा घृणा इत्यमरः ॥ २० ॥ २१ ॥

गो० टी०—अपराधिषु घृणा न कर्तव्या अत एव एनां हन्मीत्याशङ्क्यापराधलेशोऽप्यस्यां नास्तीत्याह—च्युतेति । गृहात् स्वसदनात् चकारात् परिचारकेभ्यश्च अनेन बन्धुसुखादपराधकरणं नास्तीत्युक्तम् । राज्यात् राज्योपकरणाच्च अनेन सेनासुखेन नापराध इत्युक्तम् । रामहस्तात् रक्षकहस्ताच्च । तन्मुखादप्यपराधप्रसक्तिर्नास्तीत्युक्तम् । मैथिली आचारप्रधानकुले जाता । अनेनापराधस्वरूपमेव न जानातीत्युक्तम् । यत् येनापराधकार्येण एनां हन्तुमिच्छसि तादृशं किं प्रयोजनमुद्दिश्य अपराद्धा अपराधं कृतवती । कर्तरि क्तः ॥ २२ ॥ २३ ॥

२१ ] ति० टी०—हे वधार्ह ! तेन कर्मणा न चिरं जीविष्यसि । हि यतो मम हस्तगतोऽसि ॥ २१ ॥

रा० टी०—हननस्य नाशहेतुकत्वमुपपादयन्नाह—सीतामिति । हे वधार्ह सीतां हत्वा तेन कर्मणा हेतुभूतेन त्वं चिरं कथंचिन्न जीविष्यसि हि यतः मम हस्तगतः दृष्टिपथं प्राप्तोसि २१

२२–२३ ] ति० टी०—ये लोकवध्यैश्चोरादिभिरपि कुत्सिता अतिदुःखिनया परिहृताः स्त्रीघातिनां लोकास्तानिहेदानीं जीवितमुत्सृज्य प्रेत्य प्रतिलप्स्यसे ॥ २२ ॥ २३ ॥

रा० टी०—ये इति । लोकानां सर्वजनानां वध्यैः महापापिभिरपीत्यर्थः ये कुत्सिताः तैरपि ये गन्तुं नेप्यन्ते इत्यर्थः तान् स्त्रीघातिनां लोकान् इह जीवितमुत्सृज्य प्रेत्य गत्वा प्रतिलप्स्यसे नियतवासाश्रयत्वेन प्राप्स्यसि ॥ २२ ॥

गो० टी०—ये चेति । हे लोकवध्य ! एषु चतुर्दशलोकेषु स्त्रीघातिनां ये कुत्सिताः लोकाः तान् इह जीवितमुत्सृज्य प्रेत्य यातनाशरीरं प्राप्य प्रतिपत्स्यसे प्राप्स्यसीत्यर्थः ॥२४॥

रा० टी०—इतीति । हनुमान् राक्षसेन्द्रसुतं प्रति अभ्यधावत् ॥ २३ ॥

गो० टी०—इतीति । सायुधैः सहननसाधनैः॥ २५ ॥

२४–२७ ] ति० टी०—आपतन्तमिति लिङ्गव्यत्यय आर्षः ॥ २४—२७ ॥

रा० टी०—आपतन्तमिति । आपतन्तमापतत् वनौकसामनीकं रक्षसामनीकेन सैन्येन न्यवारयत् इन्द्रजिदिति शेषः ॥ २४ ॥

रा० टी०—स इति । स इन्द्रजित् हरिवाहिनीम् विक्षोभ्य निवार्य हनूमन्तं प्रत्युवाच ॥ २५ ॥

रा० टी०—तदाकारमाह—सुग्रीव इति । यन्निमित्तं सुग्रीवादय इहागताः तां वैदेहीं तव पश्यतो वधिष्यामि॥२६॥

रा० टी०—इमामिति । रामप्रभृतीन् वधिष्यामि ॥२७॥

गो० टी०—आपतन्तमिति । अनीकम् अनीकं च २६-२९

२८–३० ] ति० टी०—अमित्राणां शत्रूणां यत्पीडाकरं तत्पापमपि कर्तव्यमेव ॥ २८ —३० ॥

रा० टी०—नेति । स्त्रियो न हन्तव्याः इति यत्त्वं ब्रवीषि तत्रेदमुत्तरमिति शेषः उत्तरमेवाह अमित्राणां यत्पीडाकरं तत्कर्तव्यमेवेति एतेन स्त्रीवधदोषस्य नायं विषय इति सूचितम् ॥ २८ ॥

रा० टी०—तमिति । इन्द्रजित् मायामयीं सीतां खड्गेन निजघान ॥ २९ ॥

गो० टी०—न हन्तव्या इति । यत् ब्रवीषि तत्रोत्तरं शृण्विति वाक्यशेषः ॥ ३० ॥ ३१ ॥

रा० टी०—यज्ञेति । यज्ञोपवीतमार्गेण तदुपलक्षितशरीरार्द्धदेशेन छिन्ना सा मायामयी सीता पृथिव्यां पपात ॥३०॥

गो० टी०—यज्ञोपवीतेति । यज्ञोपवीतमार्गेण भिन्ना।

---

१ च हत्वेति गो. पाठः । २ अनेनेति गो. पाठः । ३ पत्स्यसे इति गो. पाठः । ४ वेगानामिति गो.पाठः । ५ अनीकं त्विति गो.पाठः । ६ हरिश्रेष्ठं हनूमन्तमिति गो. पाठः । ७ यस्यादिति गो. पाठः ।

तामिन्द्रजित्स्त्रियं हत्वा हनूमन्तमुवाच ह । मया रामस्य पश्येमां प्रियां शस्त्रनिषूदिताम् ॥
एषा विशस्ता वैदेही निष्फलो वः परिश्रमः ॥ ३१ ॥
ततः खड्गेन महता हत्वा तामिन्द्रजित्स्वयम् । हृष्टः स रथमास्थाय ननाद च महास्वनम् ॥ ३२ ॥
वानराः शुश्रुवुः शब्दमदूरे प्रत्यवस्थिताः । व्यादितास्यस्य नदतस्तद्दुर्गं संश्रितस्य तु ॥ ३३ ॥
तथा तु सीतां विनिहत्य दुर्मतिः प्रहृष्टचेताः स बभूव रावणिः ।
तं हृष्टरूपं समुदीक्ष्य वानरा विषण्णरूपाः समभिप्रदुद्रुवुः ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकाशीतितमः सर्गः ॥ ८१ ॥

## द्व्यशीतितमः सर्गः ।

मारुतिर्विषण्णान्विद्रुतान्कपीन्धैर्यवचनैः संनिवर्त्य तैः सहेन्द्रजिता चिरं कलहं कृत्वा जानकी तु नष्टा यदर्थं प्रहराम इति गलितधैर्यः कपिभिः सह रणान्निवृत्य रामं विविदिषुरेव तदभिमुखो ययौ । इन्द्रजित्तु निवृत्तं मारुतिं प्रेक्ष्य पुनश्चाग्निं तर्पयितुं निकुम्भिलामगात् ।

श्रुत्वा तं भीमनिर्हादं शक्राशनिसमस्वनम् । वीक्षमाणा दिशः सर्वा दुद्रुवुर्वानरा भृशम् ॥ १ ॥
तानुवाच ततः सर्वान्हनूमान्मारुतात्मजः । विषण्णवदनान्दीनांस्त्रस्तान्विद्रवतः पृथक् ॥ २ ॥
कस्माद्विषण्णवदना विद्रवध्वं प्लवंगमाः । त्यक्तयुद्धसमुत्साहाः शूरत्वं क नु वो गतम् ॥ ३ ॥
पृष्ठतो न व्रजध्वं मामग्रतो यान्तमाहवे । शूरैरभिजनोपेतैरयुक्तं हि निवर्तितुम् ॥ ४ ॥
एवमुक्ताः सुसंक्रुद्धा वायुपुत्रेण धीमता । शैलशृङ्गान्द्रुमांश्चैव जगृहुर्हृष्टमानसाः ॥ ५ ॥
अभिपेतुश्च गर्जन्तो राक्षसान्वानरर्षभाः । परिवार्य हनूमन्तमन्वयुश्च महाहवे ॥ ६ ॥
स तैर्वानरमुख्यैस्तु हनूमान्सर्वतो वृतः । हुताशन इवार्चिष्मानदहच्छत्रुवाहिनीम् ॥ ७ ॥
स राक्षसानां कदनं चकार सुमहाकपिः । वृतो वानरसैन्येन कालान्तकयमोपमः ॥ ८ ॥
स तु शोकेन चाविष्टः कोपेन महता कपिः । हनूमान्रावणिरथे महतीं पातयच्छिलाम् ॥ ९ ॥

---

मार्गशब्दः प्रकारवचनः। यज्ञोपवीतधारणप्रकारेण भिन्नेत्यर्थः। यज्ञोपवीतमादाय भिन्नेति पाठान्तरम्। पूर्वं मूर्धजेषु गृहीतामादाय। यज्ञोपवीतभिन्ना यज्ञोपवीतं यथा भवति तथा भिन्ना यज्ञोपवीतप्रकारेण भिन्नेत्यर्थः ॥ ३२ ॥

३१-३२ ] ति० टी०-एषा वैदेही विशस्ता, अतो वः परिश्रमो निष्फलः ॥ ३१ ॥ ३२ ॥

रा० टी०-तामिति । इन्द्रजित् स्त्रियं हत्वा हनुमन्तमुवाच अहं पृथक् ॥ ३१ ॥

रा० टी०-तदाकारमाह—मयेति । मया शस्त्रनिषूदितां पश्यत तत्फलमाह यदि एषा वैदेही विशस्ता हिंसिता तर्हि वः परिश्रमो निष्फलः एतेन युद्धान्निवर्तध्वमिति सूचितम् ॥३२॥

रा० टी०-तत इति । इन्द्रजित् तां हत्वा रथमास्थाय महास्वनं यथा भवति तथा ननाद ॥ ३३ ॥

गो० टी०-मयेति ॥ ३३ ॥ ३४ ॥

३३ ] ति० टी०-व्यादितास्यस्य विवृतास्यस्य । तद्दुर्गं खेचररथरूपं दुर्गम् ॥ ३३ ॥

रा०टी०-वानरा इति । अदूरे निकटे प्रत्यवस्थिताः वानरा व्यादितास्यस्य प्रस्फारितमुखस्य नदत इन्द्रजितः शब्दं शुश्रुवुः ३४

गो० टी०-वानरा इति । व्यादितास्यस्य व्यात्तास्यस्य । तद्दुर्गं व्यूहीकृतराक्षसपरिवेष्टनरूपम् ॥ ३५ ॥

३४] ति०टी०-हृष्टरूपमतिशयेन हृष्टम्। प्रशंसायां रूपप् ३४

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

रा० टी०-तथेति । रावणिः तथा मायामयीं सीतां विनिहत्य प्रहृष्टचेताः बभूव हृष्टरूपमतिशयेन हृष्टं तं रावणिं समुदीक्ष्य विषण्णरूपाः अतिविषण्णाः वानराः समभिप्रदुद्रुवुः ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

गो० टी०-तथा त्विति । हृष्टरूपम् अत्यन्तहृष्टम् । विषण्णरूपाः अत्यन्तं विषण्णाः ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकीरीटाख्याने युद्धकाण्डव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

१-८ ] ति० टी०-श्रुत्वेति । भीमो यो निर्हादः शब्द-

---

१ स्वयमिति गो. रा. पाठः । २ कोपेन चेति गो. पाठः । ३ वीति गो. पाठः । ४ चेति गो. रा. पाठः । ५ सहसेति गो. पाठः । ६ स्विति गो. पाठः । ७ वानरर्षभा इति गो. पाठः । ८ ध्वे इति गो. पाठः । ९ इदमर्धमधिकं गो. पाठे । १० हृष्टा इति गो. पाठः । ११ शृङ्गाण्यगानिति गो पाठः । १२ चेति गो. पाठः । १३ कोपेनेति गो. पाठः । १४ शोकेनेति गो. पाठः । १५ च महाकपिरिति गो. पाठः । १६ पातयन्महतीमिति. गो. पाठः ।

तामापतन्तीं दृष्ट्वैव रथं सारथिना तदा । विधेयाश्वसमायुक्तो विदूरमपवाहितः ॥ १० ॥
तमिन्द्रजितमप्राप्यरथस्थं सहसारथिम् । विवेश धरणीं भित्वा सा शिला व्यर्थमुद्यता ॥ ११ ॥
पतितायां शिलायां तु व्यथिता रक्षसां चमूः । निपतन्त्या च शिलया राक्षसा मथिता भृशम् ॥ १२ ॥
तमभ्यधावञ्शतशो नदन्तः काननौकसः । ते द्रुमांश्च महाकाया गिरिशृङ्गाणि चोद्यताः ॥ १३ ॥
क्षिपन्तीन्द्रजितं संख्ये वानरा भीमविक्रमाः । वृक्षशैलमहावर्षं विसृजन्तः प्लवङ्गमाः ॥ १४ ॥
शत्रूणां कदनं चक्रुर्नेदुश्च विविधैः स्वनैः । वानरैस्तैर्महाभीमैर्घोररूपा निशाचराः ॥ १५ ॥
वीर्यादभिहता वृक्षैर्व्यचेष्टन्त रणक्षितौ । स सैन्यमभिवीक्ष्याथ वानरार्दितमिन्द्रजित् ॥ १६ ॥
प्रगृहीतायुधः क्रुद्धः परानभिमुखो ययौ । स शरौघानवसृजन्स्वसैन्येनाभिसंवृतः ॥ १७ ॥
जघान कपिशार्दूलान्सुबहून्दृढविक्रमः । शूलैरशनिभिः खड्गैः पट्टिशैः शूलमुद्गरैः
ते चाप्यनुचरांस्तस्य वानरा जघ्नुराहवे ॥ १८ ॥
सुस्कन्धविटपैः शैलैः[१२] शिलाभिश्च महाबलः । हनूमान्कदनं चक्रे रक्षसां भीमकर्मणाम् ॥ १९ ॥

न्तं श्रुत्वा । इन्द्रजित इति शेषः । शक्राशनिसमस्वनं तमिन्द्रजितं वीक्षमाणा दिशो दुद्रुवुः ॥ १—८ ॥

रा० टी०—वानराणां वृत्तान्तमाह—श्रुत्वेत्यादिभिः । वानराः भीमनिर्ह्रादं श्रुत्वा वीक्षमाणास्सन्तः दिशो दुद्रुवुः ॥१॥

रा० टी०—तानिति । हनूमान् त्रस्तान् अत एव पृथक् विद्रवतः तान् वानरान् उवाच ॥ २ ॥

गो० टी०—अथेन्द्रजितो निकुम्भिलायां होमारम्भः—श्रुत्वेत्यादि । शक्राशनिसमस्वनम् शक्राशनिस्वनसममित्यर्थः ॥ १ ॥ २ ॥

रा० टी०—तदाकारमाह—कस्मादिति । हे प्लवङ्गमाः यूयं कस्मात् विद्रवध्वं ननु भयात् विद्रवामः इत्यत आह वो युष्माकं शूरत्वं क्व गतम् ॥ ३ ॥

गो० टी०—कस्मादिति । विद्रवध्वे विद्रवथ । आत्मनेपदमार्षम् ॥ ३ ॥

रा० टी०—पृष्ठत इति । आहवे अग्रतो यान्तं मां यूयं पृष्ठतोऽनुव्रजध्वमेवं वायुपुत्रेणोक्ताः वानराः सुसंहृष्टाः बभूवुरिति शेषः ॥ ४ ॥

रा० टी०—शैलेति । हृष्टमानसाः वानरर्षभाः शैलशृङ्गान् द्रुमांश्च जगृहुः राक्षसानभिपेतुश्च ॥ ५ ॥

रा० टी०—परिवार्येति । ये हनूमन्तं परिवार्यान्वयुः तैर्वानरमुख्यैर्वृतस्स हनूमान् अर्चिष्मान् हुताशन इव शत्रूणां वाहिनीं सेनां सर्वतोऽदहत् सार्द्धश्लोक एकान्वयी ॥ ६ ॥

रा० टी०—स इति । स हनूमान् राक्षसानां कदनं हिंसनं चकार ॥ ७ ॥

रा० टी०—स इति । शोकेन सीताविघातजनितेन कोपेन चाविष्टो हनूमान् रावणिरथे महतीं शिलां पातयत् अपातयत् ८

गो० टी०—पृष्ठत इति । अनुव्रजध्वम् अनुव्रजत । पदव्यत्यय आर्षः ॥ ४–१० ॥

९ ] ति० टी०—विधेयाश्वैः सारथ्यधीनाश्वैः समायुक्तः॥९॥

रा० टी०—तामिति । आपतन्तीं तां शिलां दृष्ट्वैव विधेयैस्सारथ्यधीनीभूतैरश्वैस्समायुक्तो रथस्सारथिना विदूरमपवाहितः ॥ ९ ॥

१०–११ ] ति० टी०—सा शिला व्यर्थमुद्यता । अभवदिति शेषः ॥ १० ॥ ११ ॥

रा० टी०—तमिति । सहसारथिं सारथिसहितं रथस्थमिन्द्रजितमप्राप्य सा शिला धरणीं भित्वा विवेश अत एव व्यर्थमुद्यताभवदिति शेषः ॥ १० ॥

रा० टी०—पतितायामिति । रक्षसां चमूर्व्यथिता राक्षसा मथिताश्च ॥ ११ ॥

गो० टी०—तमिति । व्यर्थमुद्यता व्यर्थं प्रयुक्ता॥११-१३॥

१२ ] ति० टी०—गिरिशृङ्गाणि चोद्यताः । गृहीत्वेति शेषः । गृहीत्वा युद्धार्थमुद्यता बभूवुरित्यर्थः ॥ १२ ॥

रा० टी०—तमिति । काननौकसः तमिन्द्रजितमभ्यधावन् अर्द्धं पृथक् ते इति उद्यताः वानराः द्रुमान् गिरिशृङ्गाणि च इन्द्रजितस्सैन्ये क्षिपन्ति ॥ १२ ॥

गो० टी०—ते द्रुमानिति । इन्द्रजितः इन्द्रजितं प्रति१४-१८

१३–१८ ] ति० टी०—ततस्तद्वर्षं विसृजन्तस्ते वानरा इन्द्रजितं क्षिपन्त्याक्षिपन्ति स्म । तिरस्कृतं चक्रुरिति यावत्॥ १३ ॥ १८ ॥

रा० टी०—वृक्षेति । वृक्षशैलमहावर्षं विसृजन्तः प्लवङ्गमाः शत्रूणां कदनं चक्रुर्नेदुश्च ॥ १३ ॥

१ रथ इति गो. रा. पाठः । २ स्विति गो. पाठः । ३ रक्षसां व्यथितेति गो.पाठः । ४ वीर्यां इति गो.पाठः । ५ स्वरैरिति गो. पाठः । ६ वीर्यैरिति गो. पाठः । ७ स्वेति गो. रा. पाठः । ८ दृष्टेति गो. पाठः । ९ कूटेति गो. रा. पाठः । १० अनुचरा इति गो. पाठः । ११ वानरान् जघ्नुरोजसेति गो. जघ्नुरोजसेति रा. पाठः । १२ सालैरिति गो. शालैरिति रा. पाठः ।

संनिवार्य परानीकमब्रवीत्तान्वनौकसः । हनूमान्संनिवर्तध्वं न नः साध्यमिदं बलम् ॥ २० ॥
त्यक्त्वा प्राणान्विचेष्टन्तो रामप्रियचिकीर्षवः । यन्निमित्तं हि युध्यामो हता सा जनकात्मजा॥२१॥
इममर्थं हि विज्ञाप्य रामं सुग्रीवमेव च । तौ यत्प्रतिविधास्येते तत्करिष्यामहे वयम् ॥२२ ॥
इत्युक्त्वा वानरश्रेष्ठो वारयन्सर्ववानरान् । शनैः शनैरसंत्रस्तः सबलः संन्यवर्तत ॥ २३ ॥
ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवः । स होतुकामो दुष्टात्मा गतश्चैत्यं निकुम्भिलाम्॥२४॥
निकुम्भिलामधिष्ठाय पावकं जुहवेन्द्रजित् । यज्ञभूम्यां ततो गत्वा पावकस्तेन रक्षसा॥ २५ ॥
हूयमानः प्रजज्वाल होमशोणितभुक्तदा । सार्चिः पिनद्धो ददृशे होमशोणिततर्पितः॥
संध्यागत इवादित्यः सुतीव्रोऽग्निः समुत्थितः ॥ २६ ॥

अथेन्द्रजिद्राक्षसभूतये तु जुहाव हव्यं विधिना विधानवित् ।
दृष्ट्वा व्यतिष्ठन्त च राक्षसास्ते महासमूहेषु नयानयज्ञाः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

रा० टी०–वानरैरिति । वानरैः वृक्षैः करणैः अभिहता निशाचराः रणक्षितौ व्यचेष्टन्त ॥ १४ ॥

रा० टी०–स्वेति । इन्द्रजित् स्वसैन्यं वानरार्दितमभिवीक्ष्य प्रगृहीतायुधस्सन् परान् रिपूनभिमुखो ययौ ॥ १५ ॥

रा० टी०–स इति । स्वसैन्येनाभिसंवृतः इन्द्रजित् शरौघान् अवसृजन् प्रक्षिपन् सन् सुबहून् कपिशार्दूलान् शूलादिभिर्जघान सार्धश्लोक एकान्वयी ॥ १६ ॥

रा० टी०–ते इति । वानरा अपि तस्येन्द्रजितः अनुचरान् जघ्नुः अर्द्धं पृथक् ॥ १७ ॥

रा० टी०–स इति । सस्कन्धविटपैः स्कन्धविटपसहितैः शालैश्शिलाभिश्च रक्षसां कदनं हनुमान् चक्रे ॥ १८ ॥

गो० टी०–शूलैरशनिभिरिति । अशनेरायुधत्वं शक्तिविशेषात् ॥ १९ ॥ २० ॥

१९ ] ति० टी०–संनिवार्य परानीकं राक्षससेनाम् ॥१९॥

रा० टी०–स इति । हनुमान् परानीकं रिपुसेनां निवार्याब्रवीत् तदाकारमाह हे वनौकसः इदं राक्षसीयं बलं नस्साध्यं विहिंसनीयमित्यर्थः न अतः सन्निवर्तध्वम् ॥ १९ ॥

गो० टी०–स निवार्येत्यादि । न साध्यं साधयितुमयोग्यम् प्रयोजनाभावादिति भावः । तदेवाह–त्यक्त्वेति॥२१-२४॥

२० ] ति० टी०–प्राणांस्त्यक्त्वा प्राणस्नेहमपि त्यक्त्वा विचेष्टन्तः सन्तो रामप्रियचिकीर्षया यन्निमित्तं युध्यामः सा हतेति व्यर्थोऽयं श्रम इति भावः ॥ २० ॥

रा० टी०–तत्र कारणमाह—त्यक्त्वेति । यन्निमित्तं यस्याः हेतोः प्राणान् त्यक्त्वा त्यक्तप्रायान् कृत्वा विचेष्टामः विविधचेष्टां कुर्मः अत एव युध्यामः सा जनकात्मजा हता ॥ २० ॥

२१-२२ ] ति० टी०–प्रतिविधास्येते प्रतिक्रियानुष्ठाने नियोक्ष्येते तत्करिष्यामहे ॥ २१ ॥ २२ ॥

रा० टी०–इदमिति । इदमर्थं सीतावृत्तान्तं रामं विज्ञाप्य संश्राव्य तौ रामसुग्रीवौ यत्प्रतिविधास्येते कर्तुमाज्ञापयिष्येते तद्वयं करिष्यामहे ॥ २१ ॥

रा० टी०–इतीति । असंत्रस्तस्स हनुमान् इत्युक्त्वा न्यवर्तत ॥ २२ ॥

२३ ] ति० टी०–दशम्यां पूर्वाह्णे निकुम्भिलागमनम् । निकुम्भिलां चैत्यं तदाख्यदेवालयं वटवृक्षं वा ॥ २३ ॥

रा० टी०–तत इति । दुष्टात्मा रावणिः हनुमन्तं व्रजन्तं प्रेक्ष्य होतुकामस्सन् निकुम्भिलां तदाख्यं चैत्यं देवालयं गतः२३

गो० टी०–तत इति । चैत्यनिकुम्भिलां चैत्ये विद्यमानं निकुम्भिलाख्यदेवतायतनमित्यर्थः ॥ २९ ॥

२४ ] ति० टी०–जुहव जुहाव ॥ २४ ॥

रा० टी०–निकुंभिलामिति । इन्द्रजित् निकुम्भिलामधिष्ठाय पावकं जुहव जुहाव अर्द्धं पृथक् यज्ञेति । रक्षसा विधिवत् हूयमानः होमशोणितभुक् पावकः प्रजज्वाल ॥ २४ ॥

गो० टी०–निकुम्भिलामित्यर्धम् । जुहव जुहाव२६॥२७

२५ ] ति० टी०–होमशोणितभुग्घोमार्थमाहुतित्वेन प्रक्षिप्तशोणितभुक् । अर्चिर्भिः पिनद्धः समृद्धः सुतीव्रोऽग्नी रक्षोविपत्सूचकः ॥ २५ ॥

रा० टी०–स इति । होमशोणिततर्पितः अत एव अर्चिर्भिः पिनद्धः संप्रवृद्धः अर्चिर्मयइत्यर्थः समुत्थितोऽग्निस्सन्ध्यागतः आदित्य इव सुतीव्रो ददृशे ॥ २५ ॥

गो० टी०–स इति । होमशोणितं शोणितहोमः ॥ २८ ॥

२६ ] ति० टी०–महासमूहेषु युद्धेषु । नयानयज्ञाः कृत्याकृत्यतत्त्वज्ञाः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

१ स इति गो. पाठः । २ वेष्टन्त इति गो. चेष्टाम इति रा. पाठः । ३ चिकीर्षयेति रा. पाठः । ४ चैत्यनिकुम्भिलामिति गो. पाठः । ५ तु विधिवदिति गो. रा. पाठः । ६ मांसेति गो. पाठः । ७ स इति गो. रा. पाठः ।

## त्र्यशीतितमः सर्गः ।

हनुमांस्तु राघवमुपगम्य समरेऽनुभूतमिन्द्रजित्कृतसीतावधमकथयत् रामोऽपि तत्परमार्थतया गृह्णञ्शोकमूर्छितो भूमौ न्यपतत् तं चानुजो लक्ष्मणो बाहुभ्यां संपरिष्वज्य दुःखेन प्राकृत इव धर्ममाक्षिप्यार्थमेव हेत्वनुवादपुरःसरं प्रशस्य भो शीघ्रमुत्तिष्ठाहं रुष्टो सरथगजहयां सराक्षसेन्द्रां भृशमिषुभिर्विनिपातयामि लङ्कामित्यब्रवीत् ।

राघवश्चापि विपुलं तं राक्षसवनौकसाम् । श्रुत्वा सङ्ग्रामनिर्घोषं जाम्बवन्तमुवाच ह॥ १ ॥
सौम्य नूनं हनुमता कृतं कर्म सुदुष्करम् । श्रूयते च यथा भीमः सुमहानायुधस्वनः॥ २ ॥
तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंवृतः । क्षिप्रमृक्षपते तस्य कपिश्रेष्ठस्य युध्यतः ॥ ३ ॥
ऋक्षराजस्तथेत्युक्त्वा स्वेनानीकेन संवृतः । आगच्छत्पश्चिमं द्वारं हनूमान्यत्र वानरः ॥ ४ ॥
अथायान्तं हनूमन्तं ददर्शर्क्षपतिस्तदा । वानरैः कृतसङ्ग्रामैः श्वसद्भिरभिसंवृतम् ॥ ५ ॥
दृष्ट्वा पथि हनूमांश्च तदृक्षबलमुद्यतम् । नीलमेघनिभं भीमं संनिवार्य न्यवर्तत ॥ ६ ॥
स तेन सह सैन्येन संनिकर्षं महायशाः । शीघ्रमागम्य रामाय दुःखितो वाक्यमब्रवीत्॥ ७ ॥
समरे युध्यमानानामस्माकं प्रेक्षतां च सः । जघान रुदतीं सीतामिन्द्रजिद्रावणात्मजः॥ ८ ॥
उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिंदम । तदहं भवतो वृत्तं विज्ञापयितुमागतः ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा राघवः शोकमूर्च्छितः । निपपात तदा भूमौ छिन्नमूल इव द्रुमः ॥ १० ॥
तं भूमौ देवसंकाशं पतितं दृश्य राघवम् । अभिपेतुः समुत्पत्य सर्वतः कपिसत्तमाः॥ ११ ॥

---

रा० टी०—अथेति । विधानवित् इन्द्रजित् राक्षसानां भूतये प्रवृद्धयै हव्यं जुहाव दृष्ट्वा तद्वनमवलोक्य महासमूहेषु युद्धेषु नयानयज्ञाः कर्तव्याकर्तव्ययोर्वेत्तारः राक्षसाः व्यतिष्ठन्त संस्थिता अभवन् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

गो० टी०—अथेति । नयानयज्ञाः शास्त्रीयाशास्त्रीयविदः॥२६

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥

१-४ ] ति० टी०—राघवश्चापीति ॥ १-४ ॥

रा० टी०—युद्धविरामानन्तरकालिकमिन्द्रजिद्वृत्तान्तमुक्त्वा हनुमद्वृत्तान्तं वर्णयितुमाह—राघव इत्यादिभिः । राघवा राक्षसवनौकसां संग्रामनिर्घोषं श्रुत्वा जाम्बवन्तमुवाच ॥ १ ॥

गो० टी०—अथ मायासीतावधमूर्छितरामसान्त्वनं त्र्यशीतितमे—राघवश्चापीत्यादि । जाम्बवन्तं यदृच्छया सन्निहितम्१

रा० टी०—तदाकारमाह—सौम्येति । सौम्य हे जाम्बवन् हनुमता सुदुष्करं कर्म युद्धक्रिया कृतं तत्र ज्ञापकमाह सुमहान् आयुधस्वनः यथा यथावत् श्रूयते ॥ २ ॥

रा० टी०—तदिति । युध्यतः कपिश्रेष्ठस्य साहाय्यं त्वं कुरु तत्तस्माद्धेतोः गच्छ ॥ ३ ॥

रा० टी०—ऋक्षेति । ऋक्षराजो जाम्बवान् तथेत्युक्त्वा पश्चिमद्वारमगच्छत् ॥ ४ ॥

गो० टी०—सौम्येति । यथा यतः ॥ २-६ ॥

५ ] ति० टी०—श्वसद्भिः । सीताविपत्तिस्मृतिजदुःखान्निःश्वसद्भिरित्यर्थः ॥ ५ ॥

रा० टी०—अथेति । ऋक्षपतिः श्वसद्भिः सीतावृत्तान्तश्रवणजनितशोकहेतुकनिश्वासवद्भिर्वानरैरभिसंवृतमायान्तं हनूमन्तं ददर्श ॥ ५ ॥

६ ] ति० टी०—नीलमेघनिभं भीममृक्षबलमुद्यतं युद्धायोद्यतं संनिवार्य । युद्धप्रवृत्तेरिति शेषः ॥ ६ ॥

रा० टी०—दृष्ट्वेति । हनुमान् उद्यतं युद्धाय सन्नद्धमृक्षबलं दृष्ट्वा सन्निवार्य गमनात्सन्निवर्त्य न्यवर्तत ॥ ६ ॥

७-१० ] ति० टी०—तेन सैन्येन सह राक्षससैन्येनापि सह रामस्य संनिकर्षमागम्य प्राप्य रामायाब्रवीदित्यर्थः ७-१०

रा० टी०—स इति । हनुमान् सैन्येन सह सन्निकर्षं रामसमीपं शीघ्रमागम्य रामायाब्रवीत् ॥ ७ ॥

रा० टी०—तदाकारमाह—समर इति द्वाभ्याम् अस्माकं प्रेक्षतां सतामिन्द्रजित् सीतां जघान ॥ ८ ॥

रा० टी०—उद्भ्रान्तेति । तां विहिंसितां सीतां दृष्ट्वा उद्भ्रान्तचित्तोभवमिति शेषः तद्वृत्तं विज्ञापयितुं भवतस्समीपमहमागतः॥९

रा० टी०—तस्येति । राघवः तस्य हनुमतो वचनं श्रुत्वा शोकमूर्छितस्सन् छिन्नमूलद्रुम इव भूमौ निपपात ॥ १० ॥

गो० टी०—स तेनेति । हरिसैन्येन सह । सन्निकर्षम् । रामस्येति शेषः ॥ ७-११ ॥

११ ] ति० टी०—अभिपेतुस्तत्समीपमाजग्मुः ॥ ११ ॥

---

१ क्रियते कर्म दुष्करमिति गो. पाठः । २ उक्तस्त्विति गो. पाठ । ३ पथीति गो. पाठः । ४ पुर इति गो. रा. पाठः ।

आसिञ्चन्सलिलैश्चैनं पद्मोत्पलसुगन्धिभिः । प्रदहन्तमसंहार्यं सहसाग्निमिवोत्थितम् ॥ १२ ॥
तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः । उवाच राममस्वस्थं वाक्यं हेत्वर्थसंयुतम् ॥ १३ ॥
शुभे वर्त्मनि तिष्ठन्तं त्वामार्य विजितेन्द्रियम् । अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥ १४ ॥
भूतानां स्थावराणां च जङ्गमानां च दर्शनम् । यथास्ति न तथा धर्मस्तेन नास्तीति मे मतिः॥ १५ ॥
यथैव स्थावरं व्यक्तं जङ्गमं च तथाविधम् । नायमर्थस्तथा युक्तस्त्वद्विधो न विपद्यते ॥ १६ ॥

रा० टी०—तमिति । देवसंकाशं देवानामपि प्रकाशकं राघवं भूमौ पतितं दृश्य दृष्ट्वा कपिसत्तमाः समुत्पत्य अभिपेतुः रामसमीपं प्रापुः ॥ ११ ॥

१२ ] ति० टी०—प्रदहन्तं सीतानाशश्रवणशोकेन सहायेन दहन्तम्, अतएवासंहार्यमनिवार्यवेगमुत्थितमग्निमिव दृष्ट्वा सलिलादिभिस्तमसिञ्चन् ॥ १२ ॥

रा० टी०—असिञ्चन्निति । असंहार्यमशमनीयमग्निमिव प्रदहन्तं स्वदशादर्शनेन अन्यान् प्रतपन्तमेनं रामं पद्मादिसुगन्धिविशिष्टैः सलिलैः असिञ्चन् ॥ १२ ॥

गो० टी०—असिञ्चन्निति । उच्छिखम् उद्गतज्वालम् । अर्चिर्हेतिः शिखा स्त्रियामित्यमरः ॥ १२ ॥

१३ ] ति० टी०—तं लक्ष्मणो बाहुभ्यां परिष्वज्य दुःखितो भूत्वा स्वस्थमस्वस्थचित्तं रामं हेत्वर्थसंयुतमुपपत्त्या विशिष्टं प्रयोजनेन च सहितं वाक्यमुवाच ॥ १३ ॥[1]

रा० टी०—तमिति । सुदुःखितः सुदुःखितरामदर्शनजनितसुदुःखं प्राप्तो लक्ष्मणः अस्वस्थं रामं बाहुभ्यां परिष्वज्य हेत्वर्थाभ्यामुपपत्तिप्रयोजनाभ्यां संयुतं वाक्यमुवाच ॥ १३ ॥

गो० टी०—तमिति । हेत्वर्थसंयुतं हेतुरुपपत्तिः अर्थः प्रयोजनम् । हेतुरूपोऽर्थोऽभिधेयो हेत्वर्थ इति वा ॥ १३ ॥

१४ ] ति० टी०—तदेवाह—शुभे इति । 'तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् । कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥' इति युद्धाय पौरुषावलम्बनेन प्रोत्साहयिष्यन्केवलधर्मावलम्बनमप्रयोजकमिति प्रतिपादयत्यनेनवाक्यसमूहेन—हे आर्य, शुभे वर्त्मनि धर्ममार्गे राज्यत्यागपूर्वकं पितृवचनपालनरूपे तिष्ठन्तं विजितेन्द्रियं हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरुपरि कालुष्याभावेन विजितेन्द्रियं त्वां त्वदाश्रितो धर्मोऽनर्थेभ्यस्त्रातुं न शक्नोति यतस्तस्मादसौ निरर्थकः । प्राधान्येन पुरुषार्थो न भवति ॥ १४ ॥

रा० टी०—तदाकारमाह—शुभ इति । हे आर्य शुभे शुभहेतुभूते वर्त्मनि धर्ममार्गे तिष्ठन्तं नित्यं प्रवर्तमानम् अत एव विजितेन्द्रियं त्वां धर्मः अनर्थेभ्यः दुःखहेतुभ्यस्त्रातुं यदि न शक्नोति तर्हि धर्मो निरर्थकः निष्फलः प्रतिभातीति शेषः एतेन कार्याभावात् तल्लिङ्गकानुमानासिद्ध्या तद्रूप्यधर्मस्याभावः सूचितः ॥ १४ ॥

गो० टी०—एवं सीताहननश्रवणजनितमनवधिकमधैर्यमाश्रयन्तं राममाश्वासयितुं लक्ष्मणोन्वारुह्यवादेन धर्माधर्मयोः स्वरूपं खण्डयन्नीतिशास्त्रानुसारेण बलमेव प्रधानतयालम्ब्यतामित्याह—शुभ इत्यादिना सर्गशेषेण । पितृवाक्यपरिपालनादिरूपे शुभे वर्त्मनि तिष्ठन्तम् । स्थिरतया तदनुतिष्ठन्तमित्यर्थः । विजितेन्द्रियं हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरुपर्यपि मनःकालुष्याभावेन विजितेन्द्रियं त्वाम् । निरर्थकः अवस्तुभूतः । अप्रामाणिक इति यावत् । शशविषाणवत् केवलव्यवहारमात्रावलम्बनो धर्मः अनर्थेभ्यः व्यसनेभ्यः त्रातुं व्यसनानि निवारयितुम् न शक्नोति । सति धर्मिणि धर्माश्चिन्त्यन्त इति न्यायादिति भावः । निरर्थकमेव त्वया पितृवचनपरिपालनमारब्धम् । आदावेव मयोक्तमिति भावः । धर्म इत्युपलक्षणम् । अधर्मोऽपि निरर्थकः सन् रावणमर्थेभ्यो न निवारयितुं शक्नोतीत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—एवं धर्मपदार्थमङ्गीकृत्य तस्यार्थत्वं नास्तीत्यनुभवात्प्रदर्श्येदानीं धर्मपदार्थ एव नास्ति, फलानुमेयता हि तस्योक्ता, फलं च सुखम् । प्रकृते च सुखान्वयव्यतिरेकयोर्धर्मेऽभावेन न तेन तदनुमानमित्याह—भूतानामिति । स्थावराणां जङ्गमानां च पश्वादिरूपाणां भूतानां दर्शनं सुखापरोक्षदर्शनं यथास्ति तथा धर्मो नास्ति । असामर्थ्यादनधिकाराच्च । तस्माद्धर्मः सुखसाधनत्वव्याप्तो नेति मे मतिः । जन्मान्तरादिकं नास्त्येवेति बौद्धमतेनेयमुक्तिः । नहि तं विना जायमानस्यापि तत्करणकत्वमिति भावः । यत्तु—यथा स्थावरादीनां दर्शनात्तत्सत्ता तथा धर्मस्य दर्शनाभावाद्धर्मो नास्तीति व्याचक्षते तन्न, योग्यानुपलम्भस्यैवाभावसाधकत्वात्, धर्मस्य च पिशाचादिवदयोग्यत्वात् ॥ १५ ॥

रा० टी०—धर्मसाधकानुमाननिरसनपूर्वकधर्मसत्तां निरस्य तत्साधकप्रत्यक्षप्रमाणनिरसनपूर्वकतदभावं साधयति-भूतानामिति । भूतादीनां यथादर्शनं तथा दर्शनं नास्ति धर्मस्येति शेषः अतो धर्मो नास्तीति मे मतिर्निश्चयः ॥ १५ ॥

गो० टी०—ननु कथमनयोरप्रामाणिकत्वमित्यपेक्षायां तत्र किं प्रत्यक्षं प्रमाणम् उतानुमानम् अथ शब्दो वा, नाद्य इत्याह—भूतानामिति । स्थावराणां जङ्गमानां च भूतानां पदार्थानाम् यथा दर्शनं प्रत्यक्षत उपलम्भनम् अस्ति । तथा धर्माधर्मयोः दर्शनं न अस्तीत्यनुषङ्गः । तेन अदर्शनेन धर्मोऽधर्मश्च नास्तीति मे मतिः निर्णयः ॥ १५ ॥

१६ ] ति० टी०—उक्तमेवार्थं विशदयति—यथैवेति । यथा यस्मात्स्थावरं व्यक्तं धर्मप्रसक्तिरहितमपि सुखीति व्य-

१ अनासाद्यमिति गो. पाठः ।

यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत् । भवांश्च धर्मसंयुक्तो नैव व्यसनमाप्नुयात् ॥ १७ ॥
तस्य च व्यसनाभावाद्व्यसनं चागते त्वयि । धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥ १८ ॥
धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः । यद्यधर्मेण युज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥ १९ ॥
न धर्मेण वियुज्येरन्नाधर्मरुचयो जनाः । धर्मेणाचरतां तेषां तथा धर्मफलं भवेत् ॥ २० ॥

क्तम्, तथाविधं स्थावरवद्धर्मानधिकृतं जङ्गमं पश्वाद्यपि सुखीति व्यक्तम् । एतेन व्यतिरेकः खण्डितः । अन्वयमपि खण्डयति—न तथा युक्तः । अयमर्थः सुखरूपो न । सर्वात्मना धर्मयुक्तस्त्वद्विधो धर्मस्य सुखान्वये न विपद्यते न विपन्नः स्यात् । दृश्यते च विपत्तिरित्यन्वयोऽपि नास्ति । अनेन तदंशे जन्मान्तरीणधर्मकल्पनापि परास्ता । साधनत्वसिद्धावेव तत्कल्पनावसरात्, अतोऽयमर्थो धर्मरूपो न नास्त्येव ॥ १६ ॥

रा० टी०—नन्वन्वयव्यतिरेकाभ्यां धर्माधर्मवतामेव सुखादिमत्तया लोके स्थितिरित्यत आह—यथेति । यथा स्थावरं तरुप्रभृति व्यक्तं धर्माधर्मकरणविषयकाधिकाराभावेन तत्संसर्गाभावेऽपि सुखादिमत्तया स्थितं तथाविधं धर्मादिसंसर्गरहितं जङ्गमं मनुष्यादिरप्यस्त्विति शेषः तथा तस्मात् अयं शंकितः अर्थः धर्मादिमतामेव सुखादिमत्तया लोके स्थितिरित्येतद्रूपो न युक्तः एतेन व्यतिरेकाभावनिश्चयात् अन्वयाभावोऽपि निश्चेतव्य इति सूचितम् । ननु स्थावराणां जन्मान्तरीयधर्माधर्मवशात् सुखादिमत्वमस्तीति न व्यतिरेक इत्यन्वयाभावो वक्तुमशक्य इत्याशङ्क्य तयोस्सत्वे विरोधमाह त्वद्विधः अधर्मसंसर्गरहितधर्मवान् न विपद्यते विपत्तिं प्राप्नुयात् ॥१६॥

गो० टी०—उक्तमेवार्थं प्रत्यक्षानुग्राहकेण तर्केण द्रढयति—यथेति । यथैव स्थावरं व्यक्तं प्रत्यक्षत उपलब्धम् । जङ्गमं च तथाविधं व्यक्तं भवति । अयं धर्माधर्मरूपोऽर्थः तथा युक्तो न भवति, तथा प्रत्यक्षो न भवतीत्यर्थः । यदि कश्चिद्धर्मोऽधर्मो वार्थः प्रत्यक्षसिद्धः स्यात् तर्हि स जङ्गमतया वा स्थावरतया दृश्येत न च दृश्यते तस्मान्नासौ प्रत्यक्ष इति भावः । किं च त्वद्विधो न विपद्यते धर्मस्य प्रत्यक्षसिद्धतया सद्भावे त्वद्विधः धार्मिकः विपत्तिं नाप्नुयात् रावणश्चार्थं न प्राप्नुयादित्यपि द्रष्टव्यम् ॥ १६ ॥

१७ ] ति० टी०—उक्तमर्थं प्रकृते योजयति—यदीति । अधर्मो भूतो दुःखसाधनत्वेन यदि सिद्धो भवेत्तदा रावणो नरकं दुःखं व्रजेत् । धर्मयुक्तो भवांश्च नैव व्यसनं दुःखं प्राप्नुयात् ॥ १७ ॥

रा० टी०—तदेव भंग्यन्तरेणाह—यदीति । अधर्मो यदि भूतः स्वफलप्रापको भवेत् तर्हि रावणः नरकं नरकप्रापकदुःखं व्रजेत् धर्मसंयुक्तो भवांस्तु व्यसनं नैवाप्नुयात् ॥ १७ ॥

गो० टी०—नाप्यनुमानं धर्माधर्मयोः प्रमाणमित्याह—यदीति । यद्यधर्मो भूतो भवेत् तदा अधर्मयुक्तो रावणः नरकं व्रजेत् व्यसनं गच्छेत् । यदि धर्मो भूतो भवेत् तदा धर्मयुक्तो भवांश्च एवं व्यसनं नाप्नुयात् । व्यसनाव्यसनरूपकार्याभ्यां हि धर्माधर्मावनुमेयौ न तथा संभवति धार्मिकतयाभिमते त्वयि व्यसनदर्शनात् अधार्मिकतयाभिमते रावणे व्यसनादर्शनाच्च । साध्यवति पक्षे हेत्वभावात् स्वरूपासिद्धो हेतुरित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—अस्य तर्कस्य विपर्यये पर्यवसानमाह—तस्य चेति । तस्य रावणस्य सत्यधर्मे व्यसनाभावात्सुखसत्वाच्च पितृवाक्यपरिपालके त्वयि व्यसनं दुःखमागते प्राप्ते सति सिद्धो धर्माधर्माभ्यां सुखदुःखयोरन्वयव्यतिरेकाभावः । किं चोक्तानुभवादेव विपरीतफलता च तयोरित्याह—धर्म इति । धर्मो यथाश्रुतफलविरुद्धदुःखफलो भवति, एवमधर्मश्च श्रुतफलविरुद्धसुखफलो भवति । तस्मादेतौ परस्परविरोधिनावन्योन्यं यथाश्रुतफलविरुद्धफलकौ ॥ १८ ॥

रा० टी०—एतावता धर्माधर्मयोरभावं संसाध्यापि तयोस्सत्वमभ्युपेत्याह—तस्येति । तस्य रावणस्य व्यसनाभावात् त्वयि च व्यसनं गते सति स्यातामिति शेषः ॥ १८ ॥

गो० टी०—विरुद्धत्वाच्च सुखदुःखयोः कार्ययोर्न धर्माधर्मानुमापकत्वमित्याह—तस्य चेति । तस्य चाधर्मिष्ठस्य रावणस्य व्यसनाभावात् । व्यसनाभावशब्देन सुखं लक्ष्यते । सुखसद्भावादित्यर्थः । त्वयि च परमधार्मिके व्यसनं दुःखम् गते सति धर्मः अधर्मो भवति अधर्मफलप्रदो भवति । चकारादधर्मोपि धर्मफलाभ्युदयप्रदो भवतीति लभ्यते । अत एव परस्परविरोधिनौ स्वाभावव्याप्तहेतुकावित्यर्थः ॥ १८ ॥

१९–२० ] ति० टी०—कुत एवं निश्चयस्तत्रानुभवादेवेत्याह—धर्मेणेति । धर्मेण धर्मं धर्मसाध्यं सुखं यद्युपलभेत्, तथा धर्मतोऽधर्मेणाधर्मं तत्फलं दुःखं यद्युपलभेन्नियमेन । उत्तरार्धस्थं यदीति पूर्वार्धान्वयि । यद्येवं नियमः स्यात्तदा येषु रावणादिष्वधर्मः प्रतिष्ठितस्तेऽधर्मेण तत्फलेन दुःखेनैव वियुज्येयुः । तथा ये जना नाधर्मरुचय अधर्मरुचिरहितास्ते धर्मेण तत्फलेन सुखेन न वियुज्येरन्न वियुक्ताः स्युः । तमेवार्थं प्रकारान्तरेणाह—धर्मेणेति । धर्मेण धर्ममार्गेणाचरतामनुतिष्ठतां तेषां तथा धर्मफलं सुखं भवेत् । तदैतयोर्विरुद्धफलराहित्यं स्यादित्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—धर्मेणेति । यदि धर्मेण शुभकर्मणा धर्मं तत्फलभूतं सुखमधर्मतो अधर्मेणाधर्मं तत्फ-

१ युक्तो वै नैवमिति गो. पाठः । २ च गते इति गो. रा. पाठः । ३ यदि धर्मेणेति गो. न विधर्मेणेति रा. पाठः । ४ चरतामिति गो. रा. पाठः । ५ धर्म इति गो. चैषामिति रा. पाठः । ६ चैषामिति गो. पाठः ।

**यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः । क्लिश्यन्ते धर्मशीलाश्च तस्मादेतौ निरर्थकौ॥ २१ ॥**
**वध्यन्ते पापकर्माणो यद्यधर्मेण राघव । वधकर्महतोऽधर्मः स हतः कं वधिष्यति॥ २२ ॥**
**अथवा विहितेनायं हन्यते हन्ति चापरम् । विधिः स लिप्यते तेन न स पापेन कर्मणा॥ २३ ॥**

लभूतदुःखमुपलभेत नियमेन प्राप्नुयात् तदा येषु रावणादिषु अधर्मः प्रतिष्ठितः नित्यं संस्थितः ते अधर्मेण नित्यदुःखेन युज्येयुः तथा दर्शनाद् विपरीतकल्पनेति तात्पर्यम् ॥ १९ ॥

रा० टी०–तुल्यन्यायादन्यत्रापि तथैव युक्तमित्याह—**नेति** । ये जनाः अधर्मरुचयो न ते जनाः विधर्मेण पापफलभृतदुःखेन न युज्येरन् तथा धर्मेण चरतां वर्तमानानामेषां जनानां धर्मफलं सुखमेव भवेत् ॥ २० ॥

गो० टी०–व्यभिचाराद्व्याप्यत्वासिद्धत्वाद्वा न ताभ्यां तदनुमानमित्याह–**धर्मेणेत्यादिना** **निरर्थकावित्यन्तेन** । उपलभेदित्यत्र काकुः । धर्मेण धर्मानुष्ठानेन धर्मं धर्मफलं सुखम् उपलभेत् । अधर्मतः अधर्मानुष्ठानेन अधर्मफलं दुःखम् उपलभेत् उपलभेतेति मन्यसे किमित्यर्थः । एवमनूद्य तत्र दूषणमाह—**यदीति** । येष्वधर्मः प्रतिष्ठितः । ये अधार्मिका इति यावत् । ते अधर्मेण अधर्मफलेन यदि युज्येयुः युज्येरन् । नाधर्मरुचयो जनाः धर्मरुचय इति यावत् द्वौ नयौ प्रकृतमर्थं गमयत इति न्यायात् । ते धर्मेण धर्मफलेन यदि युज्येरन्, तदा धर्मेण चरतामेषां जनानाम् धर्मः धर्मफलं सुखम् भवेत् चकारात् अधर्मेण चरतां दुःखं भवेदिति सिद्धम् । न चैवमित्याह–**यस्मादिति** । अनेन च हिताहितप्राप्तिलक्षणकार्ययोरनियतत्वेन व्याप्त्यभावान्न ताभ्यां धर्माधर्मावनुमातुं शक्याविति व्याप्यत्वासिद्धिर्व्यभिचारो वा दर्शितः॥१९--२१॥

२१ ] ति० टी०–न चैवमस्तीत्याह—**यस्मादिति** । येष्वधर्मः प्रतिष्ठितस्तेष्वर्था विवर्धन्ते, धर्मशीलाश्च क्लिश्यन्ते तस्मादेतौ निरर्थकौ । श्रुतस्वस्वफलरहितौ विपरीतफलौ चेत्यर्थः । एवं च सुखदुःखयोर्धर्माधर्माभ्यां व्याप्त्यभावान्न ताभ्यां तदनुमानमिति भावः ॥ २१ ॥

रा० टी०–**यस्मादिति** । यस्मात् येष्वधर्मः प्रतिष्ठितः ते विवर्द्धन्ते धर्मशीलास्तु क्लिश्यन्ते तस्मात् एतौ धर्माधर्मौ निरर्थकौ फलरहितौ विपरीतफलकौ वा ॥ २१ ॥

२२ ] ति० टी०–इदानीं धर्मादिस्वरूपमेव दुर्निरूपमिति वक्तुं किं व्यापाररूपौ वा तजन्यातिशयरूपौ वेति विकल्पं नाय इत्याह—**वध्यन्त इति** । पापकर्माणः पुरुषा यद्यधर्मेण क्रियाशरीरेण वध्यन्ते तदा क्रियायास्त्रिक्षणावस्थायित्वाच्चतुर्थक्षणे स्वत एव वधकर्मणा नाशक्रियया हतो नष्टोऽधर्मः स्वयं हतोऽसन्भूत्वा कं हन्तव्यं वधिष्यति । यद्वा वधकर्मरूपो धर्मश्चतुर्थक्षणे हतो नष्टः स्वयमसन्सन्कं वधिष्यति । वधकर्मेत्युपलक्षणम् ॥ २२ ॥

रा० टी०–इदानीं धर्माधर्मयोः स्वरूपमेव दुर्वचमिति वक्तुं किं तौ क्रियारूपौ तजन्यातिशयरूपविशिष्टौ वेति विकल्पाद्यं दूषयन्नाह—**वध्यन्त इति** । हे राघव अधर्मेण पापकर्माणो यदि वध्यन्ते इति पक्षस्तर्हि वधकर्म वधादिक्रियारूपोऽधर्मः हतः क्रियायास्त्रिक्षणावस्थायित्वनियमात् विनष्टः अतः हतः सोधर्मः कं वधिष्यति पापफलं दास्यति दातुरभावात् फलाभावः स्यादित्यर्थः किञ्च अधर्मः यदि वधकर्मविनाशहेतुभूतक्रिया तर्हि हतः अतः हतः स वधकर्मरूपोऽधर्मः कं वधिष्यति अतः पापकर्माणो धर्मेण वध्यन्ते काकुः कथमित्यस्याध्याहारो वा तेशब्दाग्रे निषेधार्थाकारच्छेदो वा ॥ २२ ॥

गो० टी०–शब्दोऽपि न धर्माधर्मयोः प्रमाणमित्याह–**वध्यन्त इति** । हे राघव ! पापकर्माणः पापिनः अधर्मेण कर्मरूपेण वध्यन्ते यदि बाध्यन्ते चेत् वधकर्म वधकर्मरूपोऽधर्मः धर्मस्याप्युपलक्षणम् हतः त्रिक्षणावस्थायित्वेन ध्वस्तो भवति शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वात् । हतः सः कं वधिष्यति । कं श्रेयपि नियोक्ष्यतीत्यपि द्रष्टव्यम् । धर्माधर्मयोः क्रियारूपयोः क्षणिकत्वेन कालान्तरभाविफलजनकत्वासंभवात् बाधितविषयो वेदो ग्रावप्लवनादिवाक्यवदुपचरितार्थक इति भावः ॥ २२ ॥

२३ ] ति० टी०–द्वितीयं दूषयति—**अथवेति** । विहितेन विहितश्येनाद्यनुष्ठानजातिशयेनान्यदीयेनायं पुरुषो हन्यते स्वीयेन वान्यं हन्ति, एवं सति विधिर्विहितानुष्ठानजातिशय एव, तेन पापेन कर्मणा हत्यारूपेण लिप्यते न स कर्मानुष्ठाता पुरुषः हत्यायास्तदकर्तृकत्वात् । नहि स्वोत्पादितपुत्रकृतहत्या पितरं स्पृशति । एवं तस्य कर्मजातिशयस्वातन्त्र्यमभ्युपेत्यात्मालेप उक्तः । एतेन कर्मकरणसंतुष्टस्येश्वरस्य फलदत्वमित्यपास्तम् । तस्यैव लेपप्रसङ्गात् । अत्र पक्षे विहितेनेत्यस्य विहितकर्मसंतुष्टेनेश्वरेणेत्यर्थः ॥ २३ ॥

रा० टी०–द्वितीयं दूषयन्नाह—**अथवेति** । विहितेन क्रियानिर्मितेन केनचिदतिशयरूपादिविशिष्टेन अधर्मेणायं जनो हन्यते अपरं हन्ति च तदा विधिः विहितकर्मजनितस्वरूपविशेषविशिष्ट एव पापेन कर्मणा लिप्यते आलिप्येत स पुरुषस्तु न लिप्यते ॥ २३ ॥

गो० टी०–कर्मणः क्षणध्वंसित्वेपि तदाराधिता देवतैव फलप्रदेत्यत्राह–**अथवेति** । विहितेन विधिना देवतयेत्यर्थः। अयं जनः हन्यते बाध्यते । परम् अन्यम् हन्ति वा बाधते वा । एवं यदि तेन पापेन कर्मणा पापफलभूतदुःखेन विधिरेव आलिप्यते संबध्यते सः प्रयोज्यकर्ता नालिप्यते । अस्य न्यायस्य पुण्यकर्मण्यपि तुल्यत्वात् सुखेनापि प्रयोज्यो न

१ वेति गो. पाठः । २ आ इति गो. रा. पाठः ।

अदृष्टप्रतिकारेण ¹अव्यक्तेनासता ²सता । कथं शक्यं परं प्राप्तुं धर्मेणारिविकर्षण ॥ २४ ॥
यदि सत्स्यात्सतां मुख्य नासत्स्यात्तव किंचन । त्वया यदीदृशं प्राप्तं तस्मात्तन्नोपपद्यते ॥ २५ ॥
अथवा दुर्बलः क्लीबो बलं धर्मोऽनुवर्तते । दुर्बलो हृतमर्यादो न सेव्य इति मे मतिः ॥ २६ ॥

संबध्यते । यदि हि सत्कर्माराधितः असत्कर्माप्रीतो वा ईश्वरः धर्माधर्मशब्दवाच्यः स्यात्, तर्हि स एव सुखदुःखभागी कारयिता स्यात् न तु प्रयोज्य इति भावः ॥ २३ ॥

२४ ] ति० टी०—एवमतिशयस्य घातकत्वमङ्गीकृत्यास्मालेप उक्तः । इदानीं घातकत्वमेव नास्तीत्याह—अदृष्टेति । अदृष्टप्रतिकारेणाचेतनतयाज्ञातस्वकर्तव्यशत्रुप्रतीकारेण । अथ स्वाश्रयचेतनद्वारा तज्ज्ञानमिति चेत्तत्राह—अव्यक्तेन स्वाश्रयभूतात्मनोऽप्रत्यक्षतयाप्रत्यक्षरूपाव्यक्तेन, अतएवासतासत्कल्पेन सता वर्तमानेनापि धर्मेण कर्मजन्यातिशयेन कथं परं वध्यस्वरूपं प्राप्तुं शक्यम्, अप्राप्य परं हन्तीति चेदसंबन्धाविशेषात्सर्वहननप्रसङ्गः अयं हन्तृकृतकर्मजातिशयो वध्यनिष्ठ एवेति चेदन्यधर्मेणान्यस्य धार्मिकत्वप्रसङ्गः, कर्तृनिष्ठत्वे तूक्तदोष इति भावः ॥ २४ ॥

रा० टी०—ननु तथैवास्त्वित्याह—अदृष्टेति । न दृष्टः अचेतनत्वात् ज्ञातः प्रतिकारः विघातनं येन अत एवाव्यक्तेन अप्रकाशमानेन अत एव असता असत्सदृशेन सता विद्यमानेनापि धर्मेण कर्मजन्यातिशयरूपविशिष्टेन परं वद्ध्यादिस्वरूपं प्राप्तुं ज्ञातुमित्यर्थः कथं शक्यं न शक्यमित्यर्थः ॥ २४ ॥

गो० टी०—ननु यथा स्वतन्त्रो राजा लीलार्थं कामपि मर्यादां प्रवर्त्य तदनुवर्तिनमनुगृह्णाति तदतिलंघिनं निगृह्णाति च तथेश्वरोऽपि स्वाज्ञारूपकर्मानुष्ठायिनमनुगृह्णाति तदननुष्ठायिनं विपरीतानुष्ठायिनं च निगृह्णातीति चेन्न । स हि किं स्वार्थमनुगृह्णाति उत परार्थम्। नाद्यः अवाप्तसमस्तकामस्यावाप्तव्याभावात् । न द्वितीयः । कंचन विरिंचनं कंचनाकिंचनं च वितन्वतस्तस्य पक्षपातनैर्घृण्यापत्तेः । तत्तत्कर्मानुगुणतया सृष्टेर्न पक्षपातादिप्रसक्तिरिति चेन्न । समीचीने कर्मण्यप्रवर्तितस्तस्य सर्वज्ञस्य निर्दयत्वापत्तेः । अनादिकर्मप्रवाहकृतपूर्वपूर्वकर्मानुगुण्येन पुनः पुनः सदसतोः कर्मणोः पुरुषं प्रवर्तयतीति चेत्, तर्हि कस्यचिन्नियमेन दुःखं कस्यचिन्नियमेन सुखं च स्यात् न च तथा दृश्यते, अनियमदर्शनात् । तर्हि कर्मजन्योपूर्वरूपोऽतिशयः फलप्रदो धर्म इत्याशङ्क्याह—अदृष्टेति । हे अरिविकर्षण । प्रतिक्रियते परप्रतिपत्तिर्जन्यत इति प्रतिकारो लिङ्गम् । अदृष्टप्रतिकारेण अदृष्टलिङ्गेन अनुमानागम्येनेत्यर्थः अव्यक्तेन अप्रत्यक्षेण असता सता असद्भूतेन अग्नीन्द्रादिवदर्थवादवाक्येनागम्येन धर्मेण अपूर्वाख्येन परं श्रेयः कथं प्राप्तुं शक्यम् । न शक्यमित्यर्थः ॥ २४ ॥

२५ ] ति० टी०—तुल्यन्यायाच्छुभकर्मजातिशयोऽप्यसत्त्वेति ध्वनितमर्थं तर्केण दृढीकरोति—यदीति । हे सतां मुख्य सत्पुरुषश्रेष्ठ, यदि सत्कर्मजन्यमदृष्टं सत्स्यात्तदा तव किंचन किंचिदप्यसदशुभं दुःखं न स्यात् । उक्तस्य तर्कस्य विपर्ययपर्यवसानमाह—त्वया चेदृशं दुःखं प्राप्तं तस्मात्तत्सदिति नोपपद्यते ॥ २५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह-यदीति । हे सतां मुख्य सत्पुरुषश्रेष्ठ यदि सत्सत्कर्म स्यात् फलदायकत्वेन विद्येत तदा असत् सत्कर्मविरोधिदुःखं तव किञ्चन न स्यात् ॥ यद्यस्माद्धेतोः त्वया ईदृशं दुःखं प्राप्तं तस्माद्धेतोः तत्कर्म नोपपद्यते फलदायकत्वेन न प्रतीयत इत्यर्थः ॥ २५ ॥

गो० टी०—उक्तमेवार्थं पुनस्तर्केण दृढीकरोति—यदीति । हे सतां मुख्य यदि सत् स्यात् धर्माख्यं वस्त्विति शेषः । धार्मिकस्य तव असत् अनिष्टम् किंचन न स्यात् । तर्कस्य विपर्यये पर्यवसानमाह–त्वयेति । यत् यस्मात्कारणात्, त्वया ईदृशं दुःसहं व्यसनं प्राप्तम् तस्मात्सन्नोपपद्यते असदेव भवतीत्यर्थः । कार्यानुपलम्भादपूर्वाख्यधर्मो न कल्प्यइत्यर्थः ॥ २५ ॥

२६ ] ति० टी०—ननूक्तदोषसमूहः कर्मणः प्राधान्येनार्थसाधनपक्षे युक्तः, न तु पौरुषोपकृतस्यार्थसाधकत्वे तर्हि मुख्यमर्थसाधनं पौरुषमेवावलम्ब्यतामित्याह—अथवेति । दुर्बलः स्वतोऽर्थसाधनासमर्थः, अत एव क्लीबोऽर्थसाधनेऽकिंचित्करो बलं पौरुषमनुवर्तते सहकारितयापेक्षते तदा दुर्बलो हृतमर्यादस्त्यक्तछलसाधनत्वमर्यादोऽधर्मो न सेव्य इति मे मतिः । उक्तन्यायेनेति भावः ॥ २६ ॥

रा० टी०—ननु कर्मणः पौरुषाधीनत्वेन स्वातन्त्र्याभावात् नोक्तदोषावसर इत्यत आह—अथवेति । दुर्बलः अत एव क्लीबः धर्मो वा यदि बलं पौरुषमनुवर्तेत तर्हि दुर्बलः अत एव हृता मर्यादा स्वफलदानशक्तिर्यस्य स धर्मो न सेव्यः इति मे मतिर्निश्चयः॥ २६ ॥

गो० टी०—ननु न कार्यानुपलम्भमात्रादर्थस्याभावो निश्चेतुं शक्यः अतीन्द्रियोच्छेदापत्तेः । किं तु सहकारिसम्पत्तौ सत्यां कार्यानुपलम्भः कारणत्वाभावं साधयति सहकारि च पौरुषम् अतस्तदभावात्फलानुदय इत्यत आह—अथवेति। दुर्बलः बलरहितः निरपेक्षतया कार्याक्षमः अत एव क्लीबः कातरः स्वतः कार्यकरणासमर्थः धर्मः बलमनुवर्तते कार्योत्पादने पौरुषमपेक्षत इत्यर्थः । एवं चेदुर्बलो हृतमर्यादः स्वातन्त्र्येण फलप्रदत्वमर्यादाहीनो धर्मः प्राधान्येन न सेव्य इति मे मतिः ॥ २६ ॥

१ सव्यक्तेनेति गो. पाठः । सदिति गो. रा. पाठः ।

बलस्य यदि चेद्धर्मो गुणभूतः पैराक्रमैः । धर्ममुत्सृज्य वर्तस्व यथा धर्मे तथा बले ॥ २७ ॥
अथ चेत्सत्यवचनं धर्मः किल परंतप । अनृतं त्वय्यकरुणे किं न बद्धस्त्वया विनौ ॥ २८ ॥
यदि धर्मो भवेद्भूत अधर्मो वा परंतप । न स्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः॥ २९ ॥

२७ ] ति० टी०–ननु पौरुषं सहकारीकृत्य धर्मः साधयतीति नोच्यते, किं तु पौरुषमेव प्रधानं कर्म तु तस्योपकारकमिति तर्हि तथैवानुष्ठानं कुर्वित्याह—बलस्येति । बलस्य पौरुषस्य धर्मो गुणभूत इत्यङ्गीक्रियते तदा पराक्रमैः प्रयत्नैर्धर्ममुत्सृज्य धर्मप्राधान्यं त्यक्त्वा यथेदानीं धर्मे वर्तसे प्राधान्येन तथा बले पौरुष एव वर्तस्व ॥ २७ ॥

रा० टी०–ननु धर्मत्यागे लोकसांकार्यप्रसङ्ग इत्यत आह—बलस्येति । पराक्रमैरुपलक्षितस्य बलस्य यदिचेद्धर्मो गुणभूतः तदा धर्मं तत्प्राधान्यमुत्सृज्य त्यक्त्वा यथा धर्मे वर्तसे इति शेषः तथा बले पौरुषे वर्तस्व एतेन गुणत्वेनापि सेव्यमानो धर्मः साङ्कर्यं निवारयिष्यतीति सूचितम् ॥२७॥

गो० टी०–प्रधानभूतं बलमेवाश्रयणीयमित्याह—बलस्येति । पराक्रमे कार्यसाधने विषये, बलस्य धर्मः गुणभूतो यदि चेत् उपसर्जनभूतो यदि स्यात्, तदा यथेदानीं धर्मे वर्तसे तथा धर्ममुत्सृज्य धर्मप्राधान्यमुत्सृज्य, धर्म इव बलेऽपि वर्तस्व ॥ २७ ॥

२८ ] ति० टी०–किं च सत्यस्यापि धर्मत्वाद्धर्मपक्षपातिना भवता सत्यधर्म एवादौ किमिति सम्यङ्नानुष्ठितो येनैवमनर्थो न वृत्तः स्यादित्याह—अथ चेदिति । अथ पक्षान्तरे । हे परंतप, त्वया सत्यवचनं पितृवचनाङ्गीकाररूपसत्यपरिपालनं धर्मोऽनुष्ठीयत इति चेत्तदा त्वयि ज्येष्ठे उक्तस्याभिषेकवचनस्याकरणे यदनृतं राज्ञः प्राप्तं तेनानृतेन राजा त्वया विना भूतः । मृत इति शेषः । अतस्तेन राज्ञोऽभिषेककरणरूपसत्येन त्वं बद्धः किं न । भवेदिति शेषः । प्रथमोक्तं राज्ञोऽभिषेकवचनरूपं सत्यं न परिपालितम् । तत्परिपालने त्वया विनाभूतत्वासंभवेन पितृमरणं न स्यात् । एवमायनर्थश्च न वृत्तः स्यादिति भावः । 'अनृतं त्वय्यकरणे किं न बद्धस्त्वया विना' इति सर्वत्र पाङ्क्तः पाठ इति कतकः । तीर्थस्तु—'अनृतं त्वय्यकरुणः किं न बद्धस्त्वया पिता' इति पठित्वा सत्यस्य धर्मत्वे त्वय्यभिषेकविषयमनृतं वदन्राज्यान्निष्कासनादकरुणः पिता त्वया किं न बद्ध इति व्याचष्टे, तदयुक्तम् । पितृबन्धनस्य सत्यवचनपरिपालनरूपत्वाभावात् ॥ २८ ॥

रा० टी०–इदानीमनुमानेन सत्यरूपधर्मस्यैव दुःखप्रदत्वदर्शनात् तत्त्यागाकरणात् स्वपश्चात्तापमाह—अथेति । अकरणे प्राकृतेन्द्रियसहिते त्वयि सत्यवचनं धर्मः चेद्यदि अनृतं सुखसम्बन्धनिवर्तकं तदा अविना सर्वरक्षकेन त्वया किं किमर्थं न बद्धः त्यक्त इत्यर्थः अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पितेतितीर्थसम्मतपाठे अपिता परिपालितत्वेन पितृसदृशः अकरुणः न करुणाफलदानहेतुभूतदया यस्मिन् अत एव अनृत इति त्रयमपि धर्मविशेषणम् ॥ २८ ॥

गो० टी०–एवं सामान्येन धर्मे दूषितेऽपि सत्यवचनरूपधर्मविशेषस्य रामेण प्राधान्येनानुरोधात्तत्पृथक् दूषयति—अथेति । हे परंतप । सत्यवचनं धर्मः किल अथ चेदेवं चेत्, अनृतः त्वामभिषेक्ष्यामीत्युक्त्वा तदकरणेन सत्यत्वरहितः । अनृतमिति पाठे वदन्निति शेषः । त्वयि सकलकल्याणगुणाश्रये ज्येष्ठपुत्रे अकरुणः राज्याद्वनं प्रति निष्कासनान्निर्दयः अतो बन्धयोग्यः पिता त्वया पितृवचनं करिष्यामीति कृतप्रतिज्ञेन त्वया किन्न बद्धः किं न नियमितः । सर्वप्रजासन्निधौ राममभिषेक्ष्यामीत्युक्तं प्राथमिकं पितृवचनं परित्यज्य पाश्चात्यं वनगमनविषयं पितृवचनं करिष्यामीति कृतप्रतिज्ञेन त्वया पालयता सत्यवचनमपि सम्यक् पालितमिति भावः ॥ २८ ॥

२९ ] ति० टी०–अथेषद्गतक्रोधावेशः सन्पौरुषधर्मयोरनुष्ठाने सिद्धान्तं शिष्टाचारप्रदर्शनपूर्वकमाह—यदीति । हे परंतप, धर्म एव यदि भूतः स्यात्प्राधान्येनानुष्ठेयः स्यात् । भूत अधर्म इत्यसंधिरार्षः । अधर्मो धर्मादन्यः पौरुषं तद्वा । यदि प्राग्वद्भूतं स्यात्तदा वज्री मुनिं विश्वरूपं पौरुषेण हत्वा पश्चादिज्यां धर्मं न कुर्यात्, किं त्वेकस्यैव प्राधान्ये एकमेव कुर्यादिति भावः ॥ २९ ॥

रा० टी०–इदानीं कदाचिद्धर्मं कदाचित्पौरुषं च सेवस्वेति बोधयन्नाह—यदीति । यदि धर्म एव भूतः प्रबलत्वेनानुष्ठेयः अधर्मः धर्मभिन्नः पौरुषो वा भूतो भवेत् तदा शतक्रतुरिन्द्रः मुनिं विश्वरूपं हत्वा पौरुषेण निहत्य इज्यां तद्रूपधर्मं न कुर्यात्॥२९॥

गो० टी०–धर्माधर्मयोः सद्भावेपि राज्ञा धर्मोऽधर्मो वा नियमेन नानुष्ठातव्यः । किन्तु तत्तत्कालप्रयोजनानुगुण्येनोभावपि कर्तव्यावित्यत्र शिष्टाचारं प्रमाणयति—यदीति । भूतो अधर्मो वेत्यत्र वृत्तानुरोधाय सन्ध्यभावः । यदि धर्मो भवेद्भूतः । यदि केवलं कर्म एवानुष्ठेयत्वेन प्राप्तो भवेत्, तदा वज्री शतक्रतुः मुनिं विश्वरूपं हत्वा इज्यां न कुर्यात्, किन्त्विज्यामेव कुर्यात् । अधर्मो वा । केवलमधर्मो वा यद्यनुष्ठेयः स्यात्, तदा शतक्रतुः वज्री मुनिं हत्वा इज्यां न कुर्यात्, किंतु हननमेव कुर्यात् । क्षत्रधर्मनिष्ठेनेन्द्रेण धर्माधर्मयोरनुष्ठितत्वाद्राज्ञा यथाकालमुभयमपि कर्तव्यमिति भावः । यान्येतानि देवक्षत्राणीन्द्रो वरुणः पर्जन्यो यम ईशान इतीन्द्रस्य क्षत्रियत्वं श्रूयते ॥ २९ ॥

१ पराक्रमे इति गो. पाठः । २ अनृतस्त्वय्यकरुण इति रा. गो. पाठः । ३ पितेति गो. पाठः ।

अधर्मसंश्रितो धर्मो विनाशयति राघव। सर्वमेतद्यथाकामं काकुत्स्थ कुरुते नरः॥ ३० ॥
मम चेदं मतं तात धर्मोऽयमिति राघव। धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा॥ ३१ ॥
अर्थेभ्योऽथ प्रवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः। क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः॥ ३२ ॥
अर्थेन हि विमुक्तस्य पुरुषस्याल्पचेतसः। विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा॥ ३३ ॥
सोऽयमर्थं परित्यज्य सुखकामः सुखैधितः। पापमाचरते कर्तुं तदा दोषः प्रवर्तते॥ ३४ ॥

३० ] ति० टी०–तस्मादधर्मसंश्रितः पौरुषयुक्तो धर्मो रिपुं विनाशयति, तस्मात्सर्वमेतत्पौरुषधर्मोभयं यथाकामं स्वकार्याविरोधेन नरः कुरुते वज्रिप्रभृतिर्नरः॥ ३० ॥

रा० टी०–अधर्मेति। अधर्मेण पौरुषेण संश्रितस्सहितो धर्मः विनाशयति रिपून् विध्वंसयति किञ्च संश्रितो नित्यं सहैवाश्रितोधर्मः विनाशयति आश्रयणकर्तारं विध्वंसते तस्मात् एतत् पौरुषधर्मोभयं यथाकामं यथेच्छं नरः कुरुते कालभेदेन आश्रयत इत्यर्थः॥ ३० ॥

गो० टी०–इदानीमभ्युपगमवादेनैकान्ततो धर्माधर्मयोरेकस्याश्रयणमनर्थपर्यवसायीत्याह—अधर्मेति। अधर्मसंश्रितो धर्मः अधर्मसहितो धर्मः धर्मश्चाधर्मश्चेत्यर्थः। विनाशयति कर्तारमिति शेषः। नियमेन पृथक् पृथगनुष्ठीयमानौ धर्माधर्मौ कर्तारं विनाशयतः। अत एवैतत्सर्वं धर्माधर्मात्मकं सर्वं कर्मजातम् यथाकामं तत्तत्कालोचितम् अनियमेन नरः कुरुते। कुर्यादित्यर्थः॥ ३० ॥

३१ ] ति० टी०–यदिदमुक्तं यथोचितकालदेशमुभयमनुष्ठेयमिति मम मतम्। नन्वेवं धर्मस्य तवापि संमतत्वे किमिति मे दुःखमत आह–धर्ममूलमिति। अर्थमूलं राज्यमुत्सृजता त्वया धर्मस्य मूलमर्थरूपं छिन्नम्, अतस्त्वं क्लेशवानिति भावः। यत्तु तीर्थेन 'अधर्मः संश्रितो धर्मः कर्तारं विनाशयति। तस्माद्यथाकामं तत्कालौचित्येनोभयमप्यनुष्ठेयमिदमेव यथा काम्येनोभयाचरणमेव धर्म इति मम मतम्' इति व्याख्यातम्, तत्पूहसनीयमेव व्युत्पत्त्यैरित्यलम्॥ ३१ ॥

रा० टी०–ममेति। इदं कालविशेषे पौरुषधर्मान्यतरस्वीकरणमयमुक्तो धर्मः इति मम मतं अहं पृथक् इदानीं बुद्धिपूर्वकभवत्कर्तृकधर्मत्यागाभावेऽपि धर्मत्यागोऽर्थात्संपन्न इति बोधयन्नाह धर्मेति। राज्यमुत्सृजता त्वया धर्ममूलमर्थ इत्यर्थः छिन्नं विनाशितमहं पृथक्॥ ३१ ॥

गो० टी०–अस्मिन्नर्थे न मे संदेह इत्याह—ममेति। हे तात अनुकम्प्य। तातोऽनुकम्प्ये पितरि इति रत्नमाला। इदं याथाकाम्येनाचरणं यदस्ति अयं धर्म इति मम मतं सिद्धान्त इत्यर्थः। एवं प्रथमं धर्म एवाप्रामाणिक इत्युक्तम्। पश्चात्कथंचित् प्रामाणिकत्वसंभवेऽपि न तस्य प्राधान्यमित्युक्तम्। इदानीमप्राधान्येनापि धर्मस्तव न संभवति, मूलाभावादित्याह–धर्ममूलमित्यादिना। धर्मस्य मूलं कारणम् अर्थरूपम्, तदा प्राप्तकाले, राज्यमुत्सृजता त्वया छिन्नम् मूलच्छेदात्तव कथं धर्म इत्यर्थः॥ ३१ ॥

३२ ] ति० टी०–अथार्थस्य धर्ममूलत्वमेव प्रतिपादयति—अर्थेभ्य इति। ततस्ततः संवृत्तेभ्यो नानादेशादाहृतेभ्यः अत एव प्रवृत्तेभ्योऽर्थेभ्यः सर्वाः क्रिया योगप्रधाना भोगप्रधानाश्च प्रवर्तन्ते। निष्कामतया कृता योगप्रधाना भवन्ति। सकामतया कृता भोगप्रधाना इत्यर्थः॥ ३२ ॥

रा० टी०–अर्थस्य धर्ममूलत्वमुपपादयितुमाह—अर्थेभ्य इति। संवृतेभ्यः अनेकदेशादाहृतेभ्यः अत एव प्रवृद्धेभ्योऽर्थेभ्यः पर्वतेभ्य आपगा नद्य इव क्रिया प्रवर्तन्ते॥ ३२ ॥

गो० टी०–तदेव धर्ममूलत्वमर्थस्य प्रतिपादयति—अर्थेभ्य इति। ततस्ततः प्रजापालनाय प्रदेयषड्भागकरप्रदानादिकारणात् संवृत्तेभ्यः प्राप्तेभ्यः क्रमाद्विवृद्धेभ्यो अर्थेभ्यः सर्वाः क्रियाः यज्ञदानादिक्रियाः प्रवर्तन्ते। पर्वतेभ्य इत्युपमानेन मूलधनव्ययमकृत्वैवार्थमूलतया दानादिक्रियाः कार्या इत्युक्तम्॥ ३२ ॥

३३ ] ति० टी०–अर्थाभावे क्रियाव्यतिरेकमप्याह—अर्थेन हीति॥ ३३ ॥

रा० टी०–अर्थेनेति। अर्थेन विमुक्तस्य अत एव अल्पचेतसो जनस्य सर्वाः क्रियाः ग्रीष्मे कुसरितोऽल्पनद्य इव विच्छिद्यन्ते॥ ३३ ॥

गो० टी०–व्यतिरेकमुखेनापि तदेव प्रतिपादयति—अर्थेनेत्यादिना। कुसरितः अल्पसरितः॥ ३३ ॥

३४ ] ति० टी०–न केवलमर्थपरित्यागे धर्मासंभवः, किं तु दोषप्राप्तिरपीत्याह—सोऽयमिति। यः पुमान्प्राप्तमर्थं परित्यज्य सुखकामो भवति सोऽयं भ्रष्टार्थः सुखैधितोऽभिवृद्धसुखाभिलाषो भूत्वा पापमन्यायेनार्थार्जनं कर्तुमाचरत आरभते, ततो दोषस्ताडनबन्धनादिरूपः प्रवर्तते॥ ३४ ॥

रा० टी०–स इति। सुखैधितः पूर्वं सुखेन प्रवृद्धः सोर्थविशिष्टः पुरुषः अर्थं परित्यज्य केनचित् हेतुना धनं त्यक्त्वा विद्यमानस्सन् पापमन्यायेन धनार्जनं कर्तुमाचरते अत एव दोषो राजदण्डादिः प्रवर्तते॥ ३४ ॥

गो० टी०–न केवलमर्थपरित्यागेन धर्मासंभवः किं तु दोषप्राप्तिरपीत्याह—सोयमिति। सुखैधितः पूर्वं सुखेन संवर्धितः, सोयम् अर्थपरित्यागी अर्थं प्राप्तं परित्यज्य सुखकामः सन्, पापम् अन्यायेनार्थार्जनम् सुखसाधनभूतधन

१ द्विवीति गो. पाठः। २ तेजस इति गो. पाठः। ३ रमत इति गो. पाठः।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ३५।
यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् । यस्यार्थाः स महाबाहुर्यस्यार्थाः स गुणाधिकः ३६॥
अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया । राज्यमुत्सृजता धीर येन बुद्धिस्त्वया कृता॥३७॥
यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् । अधनेनार्थकामेन नार्थः शक्यं विचिन्वता॥ ३८ ॥
हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः । अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ ३९ ॥
येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् । तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः४० ॥
त्वयि प्रव्रजिते वीर गुरोश्च वचने स्थिते । रक्षसापहृता भार्या प्राणैः प्रियतरा तव ॥ ४१ ॥

संपादनार्थं स्तेयादिपापम् आरभते । ततः तेन कर्मणा दोषः प्रवर्तत इत्यर्थः ॥ ३४ ॥

३५-३६ ] ति० टी०-अथार्थः सर्वमूलमिति स्तौति—यस्येति ॥ ३५ ॥ ३६ ॥

रा० टी०-यस्येति । यस्यार्थाः तस्यैव मित्रादयो भवन्ति ॥ ३५ ॥

रा० टी०-यस्येति । यस्यार्थाः स एव विक्रान्तो बलवान् ॥ ३६ ॥

गो० टी०-यस्यार्थास्तस्य मित्राणीत्यादिश्लोकद्वयं क्वचित्पठ्यते । पुमान् पुंस्त्ववान् । अन्यः स्त्रीप्राय इत्यर्थः । महाभागः महाभाग्यः । महागुणः शीलादिगुणवान् ॥ ३५ ॥ ३६ ॥

३७ ] ति० टी०-एते दोषा मित्राद्यभावरूपाः । प्रव्याहृताः स्पष्टमुक्ताः । तत्र राज्यमुत्सृजता त्वया येन गुणेन बुद्धिरर्थपरित्यागविषया कृता । तं न जाने इति शेषः ॥ ३७ ॥

रा० टी०-अर्थस्येति । अर्थस्य परित्यागे एते दोषाः मया प्रव्याहृताः एतेन अर्थत्यागो न कर्तव्य इति सूचितम् अर्थं पृथक् राज्यमिति राज्यमुत्सृजता त्वया येन हेतुना बुद्धिः त्यागविषया मतिः कृता तन्न विद्म इति शेषः अर्थं पृथक् ॥३७॥

गो० टी०-अर्थस्येति । अर्थस्य परित्यागे एते पूर्वोक्तगुणप्रतियोगिनो निर्मित्रत्वादयो दोषाः, प्रव्याहृताः स्पष्टमुक्ताः। राज्यमुत्सृजता त्वया येन गुणेन बुद्धिः अर्थपरित्यागविषया कृता तं गुणं जान इत्यर्थः । यद्वा राज्यमुत्सृजता त्वया । येन कारणेनार्थपरित्यागे बुद्धिः कृता तेन कारणेन एते दोषा मया प्रव्याहृता इत्यर्थः ॥ ३७ ॥

३८ ] ति० टी०-पुनरर्थमेव स्तौति—यस्येति । यस्यार्थाः सन्ति तस्य धर्मकामरूपा अर्थाः प्रयोजनानि भवन्ति तस्य सर्वं प्रदक्षिणमनुकूलम् । अधनेन पुरुषेणार्थं विचिन्वताप्यर्थकामेन विना पौरुषमर्थो न शक्यम् प्राप्तुमिति शेषः॥३८॥

रा० टी०-यस्येति । यस्यार्थाः सन्ति तस्य धर्मप्रभृतयस्त्रयः सन्ति अत एव सर्वं प्रदक्षिणं तदधीनं भवति अधनेन अर्थकामेन अत एव विचिन्वता पौरुषं कुर्वता जनेन अर्थः प्राप्तुं न शक्यं सामान्ये नपुंसकम् ॥ ३८ ॥

गो० टी०-यस्येति । धर्मकामार्थाः धर्मकामप्रयोजनानि । प्रदक्षिणम् अनुकूलम् । प्रतिष्ठितमिति वा पाठः व्यतिरेकमुखेनाप्याह-अधनेति । अधनेन धनं विना अर्थकामेनापि । विचिन्वता अर्थार्जनव्यापारं कुर्वता पुरुषेण अर्थः श्रेयो न शक्यं न साधयितुं शक्यम् । अव्ययमेतत् । शक्यमरविन्दसुरभीति प्रयोगात् ॥ ३८ ॥

३९ ] ति० टी०-अर्थवशादेव राज्ञि सर्वे गुणा इत्याह-हर्ष इत्यादि । यानि हर्षादीनि सन्ति, एतानि नराधिपेऽर्थादर्थसंपत्तेरेव प्रवर्तन्ते । अमोघानि भवन्तीति भावः । यस्य हर्षो राज्ञः स कृतार्थो भवति । यस्मिन्क्रोधः स नश्यतीत्यादि ॥ ३९ ॥

रा० टी०-हर्ष इति । एतानि हर्षादीनि अर्थादेव प्रवर्तन्ते ॥ ३९ ॥

गो० टी०-न केवलमर्थकामावेव धनमूलौ, अन्येऽपि तथेत्याह—हर्ष इति । प्रवर्तन्ते प्रकृष्टा निवर्तन्ते । शोभन्त इत्यर्थः । असतो निर्धनस्य शमदमौ हि धनलाभे निवर्तेते॥३९॥

४० ] ति० टी०-सर्वमूलोऽर्थस्तव न संवृत्त इत्याह—येषामिति । येषां धर्मचारिणां तापसानां धर्मं चरतामप्यर्थाभावादयं लोक ऐहिकपुरुषार्थो नश्यतीति स्पष्टम् । त इह लोके सुखसाधनभूता अर्थास्त्वयि न दृश्यन्ते । दुर्दिनेषु नवग्रहा इवेत्यर्थः ॥ ४० ॥

रा० टी०-येषामिति । धर्मचारिणामत एव चरतां तपः कुर्वतां जनानां येषामर्थानां परित्यागादिति शेषः अयं लोकः ऐहिकसुखं नश्यति ते अर्थाः दुर्दिनेषु घनच्छन्नदिनेषु ग्रहाः इव त्वयि न दृश्यन्ते ॥ ४० ॥

गो० टी०-न केवलमामुष्मिकश्रेयःसाधनभूतोऽर्थः, किं तु ऐहिकश्रेयःसाधनं चेति व्यतिरेकमुखेन प्रतिपादयन् तादृशोऽर्थस्त्वयि नास्तीत्याह—येषामिति । येषां चरतामित्यनादरे षष्ठी । येषां चरतां यान् चरतो विद्यमानानर्थाननादृत्य धर्मचारिणां केवलं धर्ममाचरताम् अयं लोको नश्यति । ऐहिकसुखं नास्तीत्यर्थः । ते तादृशाः सुखसाधनभूताः अर्थाः दुर्दिनेषु मेघच्छन्नदिनेषु । मेघच्छन्नेऽह्नि दुर्दिनमित्यमरः । सूर्यादयो ग्रहाः यथा न दृश्यन्ते, । तथा त्वयि न दृश्यन्ते । सकलश्रेयःसाधनभूता अर्थास्त्वया नादृता इत्यर्थः ॥ ४० ॥

४१ ] ति० टी०-सर्वमिदं दुःखं त्वादृशितपूर्वाचातुरीमू-

१ भाग इति गो. पाठः । २ महा गुण इति गो. पाठः । ३ शक्य इति गो. पाठः । ४ व्रजिते इति गो. पाठः ।

तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् । कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥ ४२ ॥
उत्तिष्ठ नरशार्दूल दीर्घबाहो धृतव्रत । किमात्मानं महात्मानमात्मानं नावबुध्यसे ॥ ४३ ॥
अयमनघ तवोदितः प्रियार्थं जनकसुतानिधनं निरीक्ष्य रुष्टः ।
सरथगजहयां सराक्षसेन्द्रां भृशमिषुभिर्विनिपातयामि लङ्काम् ॥ ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः ।

ततो विभीषणेन तत्रागत्य तादृगवस्थं सीताजानिं दृष्ट्वान्तर्विषाददूनेन किमेतदिति पृष्टो लक्ष्मणो यथावृत्तमकथयत् विभीषणस्तु हे राम नेदं यथार्थं अनिरान्तरायशङ्कीन्द्रजिन्मायाजालमेव नान्यदतो न भेतव्यम् स तु राक्षसो हवनेन प्राप्तसिद्धिरन्यदुर्जयो भवेदतोऽस्य कर्मपूर्तेः प्राक् तद्विघातोऽनुष्ठेयः तल्लक्ष्मणं प्रेषय विलम्बेनालमित्याद्यब्रवीत् ।

राममाश्वासमाने[1] तु लक्ष्मणे भ्रातृवत्सले । निक्षिप्य गुल्मान्स्वस्थाने तत्रागच्छद्विभीषणः ॥ १ ॥
नानाप्रहरणैर्वीरैश्चतुर्भिरभिसंवृतः[2] । नीलाञ्जनचयाकारैर्मातंगैरिव यूथपैः[3] ॥ २ ॥

त्वमित्युपसंहरति—त्वयीति । गुरोर्वचने स्थिते त्वयि प्रव्रजिते सति धर्मश्रद्धाजाड्येन मोहाद्वनं प्राप्ते रक्षसा भार्यापहृता प्रहृता च । प्राणैः प्राणेभ्यः ॥ ४१ ॥

रा० टी०—त्वयीति । त्वयि प्रव्रजिते सति प्रियतरा भार्या रक्षसापहृता एतेन इदमपि अर्थाभावेनैव जनितमिति सूचितम् ॥ ४१ ॥

गो० टी०—अर्थहेतुभूतराज्यपरित्यागेन पितृवचनपरिपालनरूपकेवलधर्मावलम्बनेन च प्राप्तं दोषमाह—त्वयीति । प्राणैः प्राणेभ्यः । प्राणैस्तुल्यं प्रियतरेति वार्थः ॥ ४१ ॥

४२ ] ति० टी०—अतः परमेतावदेव कर्तव्यम्, किमतीतार्थानुशोचनेनेत्याह—तदद्येति । कर्मणा पौरुषेणाहमेव व्यपनेष्यामि तस्मान्मत्प्रोत्साहनार्थमुत्तिष्ठ ॥ ४२ ॥

रा० टी०—नन्विदानीं किं कर्तव्यमित्यत आह—तदिति । इन्द्रजिता कृतं दुःखं कर्मणा स्वपौरुषेण व्यपनेष्यामि तस्मादुत्तिष्ठ ॥ ४२ ॥

गो० टी०—एवं गते किं करणीयमित्यत्राह—तदद्येति । भवत्कर्मणा प्राप्तं दुःखं मत्कर्मणा व्यपनेष्यामीत्यर्थः । कृतप्रतिक्रियया तद्दुःखं निवारयिष्यामीति भावः ॥ ४२ ॥

४३ ] ति० टी०—न तु प्राकृतवद्दैन्यं युक्तं महात्मनस्ते इत्याह—उत्तिष्ठेत्यादि । महात्मानं परमात्मानम् ॥ ४३ ॥

रा० टी०—उत्तिष्ठेति । हे महात्मन् महात्मानं सर्वप्रवर्तकमात्मानं स्वस्वरूपं कुतो नावबुध्यसे एतेन तवैवेच्छया सर्वं जातमिति सूचितम् ॥ ४३ ॥

गो० टी०—एवं भक्तिवादादुक्त्वा क्षमापणं विदधाति—उत्तिष्ठेति । आत्मानं स्वम् महात्मानम् महाबुद्धिम् आत्मानं परमात्मानम् किं नावबुध्यसे । तस्मात् भवतः शोककारणं नास्तीति हृदयम् ॥ ४३ ॥

४४ ] ति० टी०—तव प्रियार्थमुदित उद्युक्तः । निरीक्ष्य श्रुत्वा ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

रा० टी०—ननु मय्यर्थस्य विनष्टत्वात् कथं मत्कर्तृकरिपुविजयो भविष्यतीत्यत आह—अयमिति । प्रियार्थं विविधवृत्तान्तश्रवणजनितशोकापनोदपूर्वकं तव प्रीत्युत्पत्त्यर्थमयमर्थाभावादिः उदितो मया कथितः एतेन भवत्स्वर्थाभावादेर्न सम्भव इति ध्वनितम् अतः जनकसुतानिधनं निरीक्ष्य हनुमत्कथनेन ज्ञात्वा रुष्टोऽहं रथादिसहितं लंकामिषुभिर्विनिपातयामि ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

गो० टी०—अयमिति । अयम् अहं तव विधेयत्वेन सन्निहितः, तव प्रियार्थम् उदितः उद्युक्तः उत्पन्नो वा । अनेन दुःखं व्यपनेष्यामीत्येतद्विवृतम् ॥ ४४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

१–२ ] ति० टी०—आश्वासमान आश्वासयमाने । गुल्मान्स्वस्थाने पूर्वादितत्तद्वारे निक्षिप्यावस्थाप्य ॥ १ ॥ २ ॥

रा० टी०—लक्ष्मणकर्तृकरामाश्वासनानन्तरकालिकं वृत्तान्तमाह—राममित्यादिभिः । विभीषणः गुल्मान् स्वस्थाने पूर्वादितत्तद्वारे निक्षिप्य तत्र रामसमीपे अगच्छत् ॥ १ ॥

रा० टी०—नानेति । नाना प्रहरणानि येषु तैः मातङ्गैरिव चतुर्भिर्यूथपैरभिसंवृतः सः विभीषणः राघवमभिसंगम्य ददर्श श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

१ आश्वासयाने इति गो. पाठः । २ सचिवैर्वृतै इति गो. पाठः । ३ यूथप इति गो. पाठः ।

सोऽभिगम्य महात्मानं राघवं शोकलालसम् । वानरांश्चापि[1] ददृशे बाष्पपर्याकुलेक्षणान् ॥ ३ ॥
राघवं च महात्मानमिक्ष्वाकुकुलनन्दनम् । ददर्श मोहमापन्नं लक्ष्मणस्याङ्कमाश्रितम्[2] ॥ ४ ॥
व्रीडितं शोकसंतप्तं दृष्ट्वा रामं विभीषणः । अन्तर्दुःखेन दीनात्मा किमेतदिति सोऽब्रवीत् ॥५॥
विभीषणमुखं दृष्ट्वा सुग्रीवं तांश्च वानरान् । लक्ष्मणोवाच मन्दार्थमिदं बाष्पपरिप्लुतः ॥ ६ ॥
हतां[3] इन्द्रजिता सीतां[4] इति श्रुत्वैव राघवः । हनूमद्वचनात्सौम्य ततो मोहमुपाश्रितः[5] ॥ ७ ॥
कथयन्तं तु सौमित्रिं संनिवार्य बिभीषणः । पुष्कलार्थमिदं[6] वाक्यं विसंज्ञं राममब्रवीत् ॥ ८ ॥
मनुजेन्द्रार्तरूपेण यदुक्तस्त्वं[7] हनूमता । तदयुक्तमहं मन्ये सागरस्येव शोषणम् ॥ ९ ॥
अभिप्रायं तु जानामि रावणस्य दुरात्मनः । सीतां प्रति महाबाहो न च घातं करिष्यति ॥ १० ॥
याच्यमानः सुबहुशो मया हितचिकीर्षुणा । वैदेहीमुत्सृजस्वेति न च तत्कृतवान्वचः ॥ ११ ॥
नैव साम्ना न दानेन न भेदेन कुतो युधा । सा द्रष्टुमपि शक्येत नैव चान्येन केनचित् ॥१२ ॥

---

गो० टी०—अथेन्द्रजिद्वधोपायदर्शनम्—**राममाश्वासयान इत्यादि** । आश्वासयाने आश्वासयमाने आगमशासनस्यानित्यत्वान्मुगभावः । अनेन पूर्वोक्तवादा भ्रातृवात्सल्यात्तदाश्वासनार्था न तु परमार्था इत्युक्तम् । पूर्वोक्तयुक्तिपरिहारस्तु, हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेदिति मनूक्तरीत्या प्रेक्षणीयः । गुल्मान् सेनासन्निवेशान् स्वस्थाने स्वकार्यकरणार्थम् ॥ १ ॥ २ ॥

३–५ ] ति० टी०—ददृशे ददर्श ॥ ३–५ ॥

गो० टी०—**सोभिगम्येति** । अत्र राघवपदं लक्ष्मणपरम् उत्तरश्लोके रामदर्शनस्य वक्ष्यमाणत्वात् ददृशे ददर्श ॥३॥४॥

रा० टी०—**राघवमिति** । मोहमापन्नं राघवं ददर्श ॥ ४ ॥

रा० टी०—**पीडितमिति** । शोकसंतप्तं रामं दृष्ट्वा दीनात्मा विभीषणः किमेतदित्यब्रवीत् ॥ ५ ॥

गो० टी०—**व्रीडितमिति** । सः विभीषणः रामं दृष्ट्वा दीनात्मा दीनमनस्कः सन्, अन्तर्दुःखेन अबहिःप्रकटितदुःखविकारेण उपलक्षितः सन् अब्रवीत् ॥ ५ ॥

६–७ ] ति टी०—विभीषणमुखं दृष्ट्वा । रामादिदैन्यदर्शनेन दीनमित्यर्थः । लक्ष्मणोवाचेति संधिरार्षः ॥ ६ ॥ ७ ॥

रा० टी०—**विभीषणेति** । लक्ष्मणः विभीषणमुखादि दृष्ट्वा मन्दंन शनैरर्थो अर्थबोधो यस्मात् तत् उवाच सन्धिरार्षः॥६॥

रा० टी०—तदाकारमाह—**तामिति** । इन्द्रजिता हतां सीतां हनुमद्वचनाच्छ्रुत्वैव राघवो मोहमुपाश्रितः प्राप्तः ॥ ७ ॥

गो० टी०—**बिभीषणमुखमिति** । लक्ष्मणोवाचेत्यत्र छान्दसः सुलोपः । मन्दार्थम् अल्पार्थम् । संगृहीतार्थमित्यर्थः ॥ ६ ॥ ७ ॥

८ ] ति० टी०—संनिवार्य नैवं दुःखं कार्यमित्युक्त्वा॥८॥

रा० टी०—**कथयन्तमिति** । विभीषणः कथयन्तं सौमित्रिं संनिवार्य पुष्कलो दृढोऽर्थो यस्मिन् तद्वाक्यमब्रवीत् ॥ ८ ॥

गो० टी०—**कथयन्तमित्यर्धम्** । मध्ये निवारणोक्तिः सर्वस्य वृत्तान्तस्य स्वेनावगतत्वात् । विभीषणः उवाचेति शेषः ॥ ८ ॥ ९ ॥

९ ] ति० टी०—आर्तरूपेण दीनवेषेण ॥ ९ ॥

रा० टी०—तदाकारमाह—**मनुजेति** । हे मनुजेन्द्र आर्तरूपेण हनुमता यत् सीतावृत्तं त्वमुक्तः तत् सागरस्य शोषणमिव अयुक्तमहं मन्ये एतेन तत्काले अगस्त्यकर्तृकसागरशोषणं न प्रसिद्धमिति ध्वनितम् ॥ ९ ॥

१० ] ति० टी०—कथमयुक्तं तत्राह—**अभिप्रायं त्विति** । सीतां प्रति सीतामुद्दिश्य वर्तमानं तदभिप्रायं सर्वनाशेऽपि सीता न त्याज्येत्येवंरूपं जानामि च, अतो घातं न करिष्यति । सीताया इति शेषः ॥ १० ॥

रा० टी०—**अभीति** । सीतां प्रति दुरात्मनो रावणस्याभिप्रायमहं जानामि अन्यदर्शनानर्हत्वेन अतिपूजनीयात्वेन नित्यं तद्दर्शनाकाङ्क्षया च सीता संस्थापितेत्यर्थः अतः घातं सीताविहननं न करिष्यति ॥ १० ॥

गो० टी०—**अभिप्रायं त्विति** । करिष्यति । रावण इति शेषः ॥ १० ॥

११ ] ति० टी०—तमेवाह—**याच्यमान इति** ॥ ११ ॥

रा० टी०—तदेव द्रढयन्नाह—**याच्यमान इति** । वैदेहीमुत्सृजस्वेति मया बहुशो याच्यमानो रावणः मम वचो न कृतवान् ॥ ११ ॥

गो० टी०—तत्र हेतुमाह—**याच्यमान इत्यादिना** ॥११॥

१२ ] ति० टी०—किं च सीतान्येन केनापि केनाप्युपायेन द्रष्टुमेवाशक्या, कुतस्तस्याहरणपूर्वं वध इत्याह—**नैव साम्नेति** । कुतो युधा निमित्तभूतयान्यस्य दर्शनादिप्रसङ्गः, कुतोऽपि ॥ १२ ॥

रा० टी०—**नेति** । अन्येन केनचिज्जनेन सामाद्यन्यतमेन उपायेन सा सीता द्रष्टुमपि नैव शक्येत तर्हि युधा युद्धेन कुतः शक्येतेत्यर्थः ॥ १२ ॥

---

१ प्लवेति गो. पाठः । २ आश्रित इति गो. पाठः । ३ हतामिति गो. रा. पाठः । ४ सीतामिति गो. रा. पाठः । ५ उपागत इति गो. पाठः । ६ इदमर्धं गो. पु. नास्ति । ७ उक्तं चेति ... पाठः ।

वानरान्मोहयित्वा तु प्रतियातः स राक्षसः । मायामयीं महाबाहो तां विद्धि जनकात्मजाम्॥ १३ ॥
चैत्यं निकुम्भिलामद्य प्राप्य होमं करिष्यति । हुतवानुपयातो हि देवैरपि सवासवैः ॥ १४ ॥
दुराधर्षो भवत्येष सङ्ग्रामे रावणात्मजः । तेन मोहयता नूनमेषा माया प्रयोजिता ॥
विघ्नमन्विच्छता तत्र वानराणां पराक्रमे ॥ १५ ॥
ससैन्यास्तत्र गच्छामो यावत्तन्न समाप्यते । त्यजैनं नरशार्दूल मिथ्या संतापमागतम् ॥ १६ ॥
सीदते हि बलं सर्वं दृष्ट्वा त्वां शोककर्शितम् । इह त्वं स्वस्थहृदयस्तिष्ठ सत्वसमुच्छ्रितः ॥
लक्ष्मणं प्रेषयास्माभिः सह सैन्यानुकर्षिभिः ॥ १७ ॥
एष तं नरशार्दूलो रावणिं निशितैः शरैः । त्याजयिष्यति तत्कर्म ततो वध्यो भविष्यति॥ १८ ॥
तस्यैते निशितास्तीक्ष्णाः पत्रिपत्राङ्गवाजिनः । पतत्रिण इवासौम्याः शराः पास्यन्ति शोणितम्॥१९॥

गो० टी०—नैवेति । सा साम्ना द्रष्टुमपि नैव शक्येत दानेनापि द्रष्टुं न शक्येत भेदेनापि द्रष्टुं न शक्येत युधा दण्डेन कुतो द्रष्टुमपि शक्येत । अन्येन मायोपायेन केनचिद्द्रष्टुमपि नैव शक्येत ॥ १२ ॥

१३ ] ति० टी०—का तर्हि वधविषयर्याउभवस्य गतिस्तत्राह—वानरानिति । मोहयित्वा । मायामयसीताच्छेदनेनेति शेषः ॥ १३ ॥

रा० टी०—ननु हनुमता दृष्टस्य सीतावधस्य अपलापः कथं क्रियत इत्यत आह—वानरानिति । स इन्द्रजित् वानरान्मोहयित्वा प्रतियातः अत एव तां हननकर्मत्वेन प्रतीयमानां जनकात्मजां मायामयीं विद्धि ॥ १३ ॥

गो० टी०—कथं तर्हीन्द्रजिता हतेत्याशङ्क्य मायेयमित्याह—वानरानित्यादिना । मोहयित्वा । लङ्कायां स्वव्यतिरिक्तस्य योद्धुरभावात् स्वस्मिन् कर्मव्याकुले वानराः प्रहरेयुः यज्ञश्च विच्छिद्येत विच्छिन्ने च तस्मिन् ब्रह्मवराउसारेण स्वस्य विनाशो भविष्यतीति मत्वा वञ्चनमिति भावः ॥ १३ ॥ १४॥

१४] ति० टी०—मोहने प्रयोजनमाह—चैत्यमिति॥१४॥

रा० टी०—चैत्यमिति । निकुम्भिलां तदभिधं चैत्यं देवालयं प्राप्य होमं करिष्यति, ननु किं तेनेत्यत आह हुतवान् कृतहवनः उपयात इन्द्रजित् देवैरपि दुराधर्षो भवति सार्धश्लोक एकान्वयी ॥ १४ ॥

१५ ] ति० टी०—ननु करोतु होमम्, किं मोहनप्रयासेनेत्यत्राह—विघ्नमिति । वानराणां पराक्रमे सति यागस्य विघ्नमन्विच्छताउसरतः उभावयता नूनं निश्चयेन तत्तद्विघ्ननिवृत्तये प्रयोजिता ॥ १५ ॥

रा० टी०—मायासीताहनने प्रयोजनमाह—तेनेति । वानराणां पराक्रमे विघ्नमन्विच्छता अत एव मोहयता वानरमोहं संपादयता तेनेन्द्रजिता एषा माया प्रयोजिता ॥ १५ ॥

गो० टी०—तेनेति । अन्विच्छता चिन्तयता ॥ १५ ॥

१६ ] ति० टी०—तेनाद्य तद्यागस्य विघ्न एव कर्तव्य इति रहस्यमित्याह—ससैन्या इति । तद्धोमकर्म ॥ १६ ॥

रा० टी०—नन्विदानीं किंकर्तव्यमित्यत आह—सेति । तद्हवनं यावत् न समाप्यते तावत् ससैन्या वयं गच्छामः अतः मिथ्यागतं सन्तापं त्यज ॥ १६ ॥

गो० टी०—ससैन्या इत्यादि । तत् होमरूपं कर्म ॥१६॥

१७ ] ति० टी०—हि यतस्त्वां शोककर्शितं दृष्ट्वा सर्वं वानरबलं सीदते सीदति, तस्मात्त्वं स्वस्थहृदयो भूत्वा इहैव तिष्ठ । सैन्याउकर्षिभिः सर्वसेनां गृहीत्वा गच्छद्भिरस्माभिः प्रधानैः सह लक्ष्मणं प्रेषय ॥ १७ ॥

रा० टी०—सीदत इति । त्वां शोककर्षितं दृष्ट्वा सर्वं बलं सीदते अतः सत्वेन धैर्यबलेन समुच्छ्रितः प्रवृद्धस्त्वं स्वस्थहृदयस्सन् इह तिष्ठ सैन्यानुकर्षिभिः सेनां चालयद्भिस्सह लक्ष्मणं प्रेषय सार्द्धश्लोक एकान्वयी ॥ १७ ॥ १८ ॥

गो० टी०—इहेति । सैन्यानुकर्षिभिः सैन्यपालैः ॥ १७ ॥

१८ ] ति० टी०—एष रावणिं निशितैः शरैर्व्याकुलीकृत्य तत्कर्म त्याजयिष्यति । ततो हेतोर्मायासिद्ध्यभावाद्वध्यो भविष्यति ॥ १८ ॥

रा० टी०—एष इति । एष लक्ष्मणः रावणिं तत् मायाजनकहवनरूपं कर्म त्याजयिष्यति ततः तस्माद्धेतोः वध्यो भविष्यति इन्द्रजिदिति शेषः रावणेः कर्मत्वं तु कृतपूर्वीकटमित्यत्रेव पूर्वकर्मरूपकर्माविवक्षयाकर्मकत्वेन अविवक्षितकर्माणोऽपि यथाकर्मकत्वेन गृह्यन्ते तथाकर्मकत्वेन शब्देन्दुशेखरादौ निरूपितम् ॥ १९ ॥

गो० टी०—एष इति । तत् कर्म होमकर्म । णिजन्तत्वाद्विकर्मकत्वम् ॥ १८ ॥

१९ ] ति० टी०—पत्रिणां पत्ररूपैरङ्गैर्वाजिनो वेगवन्तस्तस्य लक्ष्मणस्य शरा असौम्याः पत्रिणः कङ्कादय एव शोणितं पास्यन्ति । इन्द्रजित इति शेषः ॥ १९ ॥

रा० टी०—तस्येति । पत्रिणः शराः एव पत्राणि वाहनानि अङ्गानि सेनाङ्गभूतगदादयः वाजिनो अश्वाश्च यस्य शरग्रहणे वाहनाद्यपेक्षारहितस्येत्यर्थः तस्य लक्ष्मणस्य शराः असौम्याः

१ इदमर्धं गो. पु. नास्ति । २ नाम मन्त्रेति गो. रा.पाठः । ३ सर्वैरिति रा. पाठः ।

तत्संदिश महाबाहो लक्ष्मणं शुभलक्षणम् । राक्षसस्य विनाशाय वज्रं वज्रधरो यथा ॥ २० ॥
मनुजवर न कालविप्रकर्षो रिपुनिधनं प्रति यत्क्षमोऽद्य कर्तुम् ।
त्वमतिसृज रिपोर्वधाय वज्रं दिविजरिपुमथने यथा महेन्द्रः ॥ २१ ॥
समाप्तकर्मा हि स राक्षसर्षभो भवत्यदृश्यः समरे सुरासुरैः ।
युयुत्सता तेन समाप्तकर्मणा भवेत्सुराणामपि संशयो महान् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

## पञ्चाशीतितमः सर्गः ।

शोकाकुलतया बिभीषणाशयं सुव्यक्तमजानानेन रामेण पुनः पर्यनुयुक्तो बिभीषणः भो राघव तुष्टेन धात्रेन्द्रजिद्वितीर्णवरो यत्कर्मपूर्तौ सर्वेषां त्वमजय्यः ततः प्राक् यो हन्तुं यतेत तदा तव वध इत्यतस्तत्कर्माधुनैव विहन्तव्यं कर्मणि विहते रावणिर्हतस्तस्मिंश्च मृते ससुहृद्गणं रावणं हतं विद्धीत्याद्यवोचत् । अथ रामेण रिपुहननमात्मरक्षणं च विधिवदुपदिश्य हरिबलसमेतोऽविलम्बेन प्रेषितो लक्ष्मणः परबलं विवेश ।

तस्य तद्वचनं श्रुत्वा राघवः शोककर्शितः । नोपधारयते व्यक्तं यदुक्तं तेन रक्षसा ॥ १ ॥
ततो धैर्यमवष्टभ्य रामः परपुरंजयः । बिभीषणमुपासीनमुवाच कपिसंनिधौ ॥ २ ॥
नैर्ऋताधिपते वाक्यं यदुक्तं ते बिभीषण । भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यत्ते विवक्षितम् ॥ ३ ॥

क्रूराः पतत्रिणः कंकादय इव शोणितं रिपुशरीररुधिरं पास्यन्ति ॥ २० ॥

गो० टी०—तस्येति । एते लक्षणीयाः । पत्रिपत्राणि पक्षिपक्षाः, तेषामङ्गानि बर्हाणि, तैः वाजिनः वेगवन्तः १९॥२०

२० ] ति० टी०—तत्तस्माल्लक्ष्मणं संदिश प्रेषय ॥ २० ॥

रा० टी०—तदिति । वज्रधरो वज्रमिव राक्षसस्य विनाशाय लक्ष्मणं सन्दिश प्रेषय ॥ २१ ॥

२१ ] ति० टी०—रिपुनिधनं प्रति कालविप्रकर्षः कालक्षेपोऽद्य कर्तुं यद्यतो न क्षमो न योग्यः, तस्मात्त्वं रिपोर्वधाय लक्ष्मणमतिसृज प्रेषय । यथा दिविजरिपुमथने देवरिपुमथनेऽमरेन्द्रो वज्रमतिसृजति तथेत्यर्थः ॥ २१ ॥

रा० टी०—मनुजेति । हे मनुजवर यद्यस्माद्धेतोः रिपोर्निधनं नाशं प्रति कालविप्रकर्षः कालात्ययः कर्तुं न क्षमः तस्मात् रिपोर्वधाय त्वमतिसृज लक्ष्मणमिति शेषः तत्र दृष्टान्तः दिविजरिपूणां दैत्यानां मथने महेन्द्रो वज्रमिव ॥ २२ ॥

गो० टी०—मनुजेति । यद्यस्मात्कारणात् रिपुनिधनं प्रति कालविप्रकर्षः कालविलम्बः अद्य कर्तुं न क्षमः । तत्तस्मात् त्वं रिपुवधाय वाणीमतिसृज । आज्ञापयेत्यर्थः । यथा महेन्द्र इत्यापन्मात्रे दृष्टान्तः ॥ २१ ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥

२२ ] ति० टी०—कालक्षेपो न कार्य इत्यत्र हेतुमाह—समाप्तेति । समाप्तयागकर्मेत्यर्थः । सुराणामपि संशयः प्राणसंशय इत्यर्थः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

रा० टी०—विलम्बे दोषमाह—समाप्तेति । राक्षसर्षभः हि यदि समाप्तकर्मा भवति तदा सुरासुरैरपि अदृश्यो भवति भविष्यति अत एव समाप्तकर्मणा युयुत्सुना तेनेन्द्रजिता सुराणामपि संशयो भवेत् भविष्यति ॥ २३ ॥

इति श्रीमद्वाल्मीकीय रामायणव्याख्याने रामायण शिरोमणौ युद्धकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

१ ] ति० टी०—नोपधारयते व्यक्तम् । शोकवशान्न जानाति स्मेत्यर्थः ॥ १ ॥

रा० टी०—विभीषणवचनश्रवणानन्तरकालिकं वृत्तान्तमाह—तस्येत्यादिभिः । शोककर्शितो राघवः रक्षसा विभीषणेन यदुक्तं तन्नोपधारयते उपाधारयत् आदरतोऽशृणोत् ॥१॥

गो० टी०—अथेन्द्रजिद्वधाय लक्ष्मणनिर्गमनम्—तस्य तद्वचनमित्यादि । व्यक्तं नोपधारयते हृदि सम्यङ्निधातुं नाशकदित्यर्थः ॥ १ ॥ २ ॥

२ ] ति० टी०—उपासीनं समीपस्थितम् ॥ २ ॥

रा० टी०—तत इति । रामः कपेर्हनुमतस्सन्निधौ उपासीनं बिभीषणमुवाच ॥ २ ॥

३ ] ति० टी०—ते त्वया यत्प्रागुक्तं तद्भूयः श्रोतुमिच्छामि ॥ ३ ॥

१ तमिति गो. पाठः । २ वाणीममररिपोरिति गो. पाठः । ३ रिपोरिति रा. पाठः । ४ अपि इति गो. पाठः ।

राघवस्य वचः श्रुत्वा वाक्यं वाक्यविशारदः । यत्तत्पुनरिदं वाक्यं बभाषेऽथ विभीषणः ॥ ४ ॥
यथाज्ञप्तं महाबाहो त्वया गुल्मनिवेशनम् । तत्तथानुष्ठितं वीर त्वद्वाक्यसमनन्तरम् ॥ ५ ॥
तान्यनीकानि सर्वाणि विभक्तानि समन्ततः । विन्यस्ता यूथपाश्चैव यथान्यायं विभागशः ॥ ६ ॥
भूयस्तु मम विज्ञाप्यं तच्छृणुष्व महाप्रभो । त्वय्यकारणसंतप्ते संतप्तहृदया वयम् ॥ ७ ॥
त्यज राजन्निमं शोकं मिथ्या संतापमागतम् । यैदियं त्यज्यतां चिन्ता शत्रुहर्षविवर्धिनी ॥ ८ ॥
उद्यमः क्रियतां वीर हर्षः समुपसेव्यताम् । प्राप्तव्या यदि ते सीता हन्तव्याश्च निशाचराः ॥ ९ ॥
रघुनन्दन वक्ष्यामि श्रूयतां मे हितं वचः । साध्वयं यातु सौमित्रिर्बलेन महता वृतः ॥ १० ॥
निकुम्भिलायां संप्राप्तं हन्तुं रावणिमाहवे । धनुर्मण्डलनिर्मुक्तैराशीविषविषोपमैः ॥ ११ ॥
शरैर्हन्तुं महेष्वासो रावणिं समितिंजयः ।
तेन वीरेण तपसा वरदानात्स्वयंभुवः । अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरंगमाः ॥ १२ ॥
स एष किल सैन्येन प्राप्तः किल निकुम्भिलाम् । यद्युत्तिष्ठेत्कृतं कर्म हतान्सर्वांश्च विद्धि नः ॥ १३ ॥
निकुम्भिलामसंप्राप्तमकृताग्निं च यो रिपुः । त्वामाततायिनं हन्यादिन्द्रशत्रो स ते वधः ॥ १४ ॥

रा० टी०–तदाकारमाह—नैर्ऋतेति । हे विभीषण यत्ते त्वया उक्तं तद्भूयः श्रोतुमिच्छामि अतो यत्ते विवक्षितं वक्तुमिष्टं तत् त्वं ब्रूहि ॥ ३ ॥

गो० टी०–नैर्ऋतेति । ते त्वया ॥ ३ ॥

४-७ ] ति० टी०–यदुक्तं तदेवेदं वाक्यं पुनर्बभाषे ४-७

रा० टी०–राघवस्येति । राघवस्य वाक्यं वक्तुं योग्यं वचो वचनं श्रुत्वा यदुक्तं तदिदं वाक्यं पुनर्बभाषे ॥ ४ ॥

गो० टी०–राघवस्येति । यत्तत् पुनरिति । यद्वाक्यं पूर्वमुक्तवान् तदिदं पुनर्बभाष इत्यन्वयः ॥ ४ ॥

रा० टी०–तदाकारमाह—यथेत्यादिभिः । हे महाबाहो यथा येन प्रकारेण गुल्मनिवेशनं सेनासंस्थापनं त्वयाज्ञप्तं तत्त्वद्वाक्यसमनन्तरं त्वदुक्त्यनन्तरकाले तथैवानुष्ठि संपादितम् ॥ ५ ॥

रा० टी०–अनुष्ठितमेवाह—तानीति । यथान्यायमनीकानि विभक्तानि यूथपाश्च विभागशो विन्यस्ताः ॥ ६ ॥

रा० टी०–भूय इति । भूयः पुनर्यन्मम विज्ञाप्यं तच्छृणुष्व तदाकारमाह त्वयि अकारणमन्तप्ते सति वयं सन्तप्तहृदयाः भवाम इति शेषः ॥ ७ ॥

गो० टी०–यथाज्ञप्तमित्याद्युक्तिः रामस्य व्याकुलत्वनिवारणाय ॥ ५–७ ॥

८-११ ] ति० टी०–मिथ्यासंतापं तन्मूलं शोकम्८-११

रा० टी०–त्यजेति । मिथ्यागतं शोकं संतापं च त्यज इयं चिन्ता च त्यज्यताम् ॥ ८ ॥

गो० टी०–त्वयीति । सन्तापं सन्तापं च । मिथ्येति शोकसन्तापयोर्विशेषणम् । सन्तापः शोककार्यमिति तयोर्भिदा ॥ ८ ॥

रा० टी०–उद्यम इति । सीता प्राप्तव्या अतः उद्यमः रिपुविनाशोद्योगः क्रियतां यदि यतो निशाचराः हन्तव्याः ॥९॥

रा० टी०–रघुनन्दनेति । हे रघुनन्दन मे वचः श्रूयतां ननु किं त्वद्वच इत्यत आह बलेनावृतः सौमित्रिः निकुम्भिलायां प्राप्तं रावणिं हन्तुं यातु श्लोकद्वयमेकान्वयि ॥१०॥११॥

गो० टी०–तदिति । उद्यमः उत्साहः ॥ ९–१२ ॥

१२ ] ति० टी०–तेन वीरेणेन्द्रजिता तपसा प्रीतस्य स्वयंभुवो वरदानान्निकुम्भिलायां देवीहोमे समाप्ते कामतुरङ्गयुक्तो रथो ब्रह्मशिरोऽस्त्रं चाग्नेः सकाशाल्लप्स्यते तेन च तत्रावध्यत्वं सकृत्प्रयोगपर्यन्तमिति वरदानाद्ब्रह्मशिरोस्त्रं प्राप्तम् ॥ १२ ॥

रा० टी०–निकुम्भिलायां हनने प्रयोजनमाह—तेनेति । तेनेन्द्रजिता स्वयंभुवो वरदानात् ब्रह्मशिरोऽस्त्रं प्राप्तं तुरङ्गमाश्च प्राप्ताः ॥ १२ ॥

गो० टी०–तेनेति । ब्रह्मशिरः ब्रह्मशिरःसंज्ञकमस्त्रम् तुरङ्गमशब्दो रथस्याप्युपलक्षणम् प्राप्तम् । होमद्वारेति शेषः ॥ १३ ॥

१३ ] ति० टी०–स एष एवं प्रकारेण लब्धवर इन्द्रजित्सैन्येन सह होमं कर्तुं निकुम्भिलायां प्राप्तः । यदि कृतं कर्म होमकर्म कृत्वोत्तिष्ठेचेत्सर्वानेव नोऽस्मान्हतान्विद्धि ॥ १३ ॥

रा० टी०–स इति । निकुम्भिलां प्राप्त एष रावणिः कृतमारब्धं कर्म समाप्येति शेषः यत् यदोत्तिष्ठेत्तदा सर्वान् नोऽस्मान् हतान् विद्धि ॥ १३ ॥

गो० टी०–स एष इति । यदीति । यदि च निकुम्भिलाया उत्तिष्ठेत्, यदि कर्म कृतं स्यात्, तदा हतान् विद्धीत्यन्वयः ॥ १४ ॥

१४ ] ति० टी०–किं च भगवता तद्वधोऽप्येवंप्रकारेणोक्त

१ स इति गो. रा. पाठः । २ यश इति गो. पाठः । ३ तदिति गो. रा. पाठः । ४ संप्राप्येति गो. पाठः । ५ इदमर्धमधिकं गो. पाठे । ६ वीर्येणेति गो. पाठः । ७ सहेति गो. पाठः । ८ अहुतेति गो. रा. पाठः । ९ शत्रोरिति गो. पाठः ।

वरो दत्तो महाबाहो सर्वलोकेश्वरेण वै । इत्येवं विहितो राजन्वधस्तस्यैष धीमतः॥ १५ ॥
वधायेन्द्रजितो राम संदिशस्व महाबलम् । हते तस्मिन्हतं विद्धि रावणं ससुहृद्गणम् ॥ १६ ॥
बिभीषणवचः श्रुत्वा रामो वाक्यमथाब्रवीत् । जानामि तस्य रौद्रस्य मायां सत्यपराक्रम॥ १७ ॥
स हि ब्रह्मास्त्रवित्प्राज्ञो महामायो महाबलः । करोत्यसंज्ञान्सङ्ग्रामे देवान्सवरुणानपि ॥ १८ ॥
तस्यान्तरिक्षे चरतः सरथस्य महायशः । न गतिर्ज्ञायते वीर सूर्यस्येवाभ्रसंप्लवे ॥ १९ ॥
राघवस्तु रिपोर्ज्ञात्वा मायावीर्यं दुरात्मनः । लक्ष्मणं कीर्तिसंपन्नमिदं वचनमब्रवीत् ॥ २० ॥
यद्वानरेन्द्रस्य बलं तेन सर्वेण संवृतः । हनूमत्प्रमुखैश्चैव यूथपैः सह लक्ष्मण ॥ २१ ॥
जाम्बवेनर्क्षपतिना सह सैन्येन संवृतः । जहि तं राक्षससुतं मायाबलसमन्वितम् ॥ २२ ॥
अयं त्वां सचिवैः सार्धं महात्मा रजनीचरः । अभिज्ञातस्य मायानां पृष्ठतोऽनुगमिष्यति॥ २३ ॥
राघवस्य वचः श्रुत्वा लक्ष्मणः सविभीषणः । जग्राह कार्मुकश्रेष्ठमन्यद्भीमपराक्रमः ॥ २४ ॥

---

इत्याह—निकुम्भिलामिति । निकुम्भिलां तद्यागभूमिं महाकालीक्षेत्रं तदाख्यन्यग्रोधमूलरूपमप्राप्तम् । अकृताग्निमहुताभिचारहोमम् । अहुताग्निम् ' इति पाठान्तरम् । आततायिनं गृहीतशस्त्रं यो रिपुर्हन्यायुध्येत हे इन्द्रशत्रो, स रिपुस्ते वधो वधकर्ता भविष्यति ॥ १४ ॥

रा० टी०—नतु तत्र गमनेन कथं तस्य वध इत्यत आह—निकुम्भिलामिति । निकुम्भिलामसंप्राप्तं तद्गमनरहितमकृताग्निं तत्र गतेऽपि कृताग्निरहितं वा आततायिनं त्वां यो रिपुर्हन्यात् तेनैव सः प्राणवियोगरूपः ते वधः भविष्यतीति शेषः इति वरः सर्वलोकेश्वरेण ब्रह्मणा दत्तः अत एव निकुम्भिलागमनादिराहित्येनैव एषः प्राणवियोगरूपः तस्य वधो विहितः अन्यथा तस्य वधो नास्तीत्यर्थः श्लोकद्वयमेकान्वयि॥१४॥१५॥

गो० टी०—तर्हि कथं स वध्य इत्यत्राह—निकुम्भिलामित्यादिसार्धश्लोक एकान्वयः । यो रिपुः । अहुताग्निम् असमाप्तहोमम्, निकुम्भिलामसंप्राप्तं निकुम्भिलाख्यन्यग्रोधमूलस्थानमसंप्राप्तं च । तमप्रविष्टन्यग्रोधमित्युत्तरसर्गे वक्ष्यति । आततायिनं शस्त्रपाणिम् रिपुवधोद्यतं च त्वाम् यो हन्यात् हिंस्यात्, सः इन्द्रशत्रोस्ते वधो मारक इति सर्वलोकेश्वरेण ब्रह्मणा वरो दत्त इति योजना । " वध, हतौ " इति धातोः पचाद्यचि वध इति रूपम् । यद्यप्येतच्छापवचनमिव प्रतिभाति तथापि निकुम्भिलाप्राप्तिहोमयोर्विघ्नाभावे अवध्य इति पर्यवसानाद्वररूपत्वं द्रष्टव्यम् ॥ १९ ॥

१५–१८ ] ति० टी०—सर्वलोकेश्वरेण ब्रह्मणा एष वरो दत्तो वै प्रसिद्धः । राजन्, धीमतस्तस्यैवमेष वधो विहितो ब्रह्मणा ॥ १५–१८ ॥

गो० टी०—इत्येवमित्यादिसार्धश्लोक एकान्वयः । इत्येवंप्रकारेण एषः होमविघ्नकारी तस्य इन्द्रजितः वधः मारकः विहितः ब्रह्मणा कृतः । तस्मात् तस्य इन्द्रजितो वधाय सन्दिशस्व । अस्माखु कंचिदिति शेषः ॥ १६–१८ ॥

रा० टी०—वधायेति । हे राम इन्द्रजितो वधाय महाबलं संदिशस्व तस्मिन् इन्द्रजिति हते सति रावणं हतं विद्धि ॥१६॥

रा० टी०—विभीषणेति । रामोऽब्रवीत् तदाकारमाह तस्येन्द्रजितो मायामहं जानामि ॥ १७ ॥

रा० टी०—ज्ञानमेवाह—स इति । ब्रह्मास्त्रवित्स इन्द्रजित् संग्रामे देवानप्यसञ्ज्ञान् करोति ॥ १८ ॥

१९–२२ ] ति० टी०—हे महायशः, अन्तरिक्षे चरतः सरथस्य तस्य गतिर्न ज्ञायते । अभ्रसंप्लवे मेघसमूहे॥१९–२२॥

रा० टी०—तस्येति । हे महायशः अभ्रसंप्लवे महाभ्रसंचारे चरतस्सूर्यस्येव अन्तरिक्षे चरतः तस्येन्द्रजितो गतिर्नज्ञायते॥१९॥

रा० टी०—राघव इति । राघवः रिपोर्मायावीर्यं ज्ञात्वा विभीषणमुखात् श्रुत्वा लक्ष्मणमब्रवीत् ॥ २० ॥

गो० टी०—तस्येति । तस्य प्रसिद्धस्येति । सर्वविशेषणम् द्वितीयं तस्येति पदम् । अभ्रसंप्लवे मेघावरणे ॥ १९ ॥ २० ॥

रा० टी०—तदाकारमाह—यदिति । वानरेन्द्रस्य सुग्रीवस्य यद्बलं तेन संवृतः हनुमत्प्रमुखैः सह सहितश्च जाम्बवेन जाम्बवता संवृतश्च त्वं राक्षससुतं जहि श्लोकद्वयमेकान्वयि॥२१॥२२॥

गो० टी०—यद्वानरेन्द्रस्येत्यादिश्लोकत्रयमेकान्वयम् । जाम्बवेन जाम्बवता सहसैन्येन सैन्यसहितेन " वोपसर्जनस्य" इति विकल्पेन सभावः । संवृतः । त्वमिति शेषः २१–२७

२३ ] ति० टी०—मायानामभिज्ञातस्य तद्विषयज्ञानवतः । अभिज्ञस्य ' इति पाठेऽप्ययमेवार्थः ॥ २३ ॥

रा० टी०—अयमिति । रजनीचरः तस्येन्द्रजितो मायानामभिज्ञः अयं विभीषणः ते पृष्ठतोऽनुगमिष्यति अभिज्ञेति पाठे तृतीयान्तत्वात्सहित इत्यध्याहार्यम् ॥ २३ ॥

२४ ] ति० टी०—अन्यत्कार्मुकश्रेष्ठम् । देवालयप्राप्तं परमित्यर्थः ॥ २४ ॥

रा० टी०—राघवस्येति । भीमपराक्रमो लक्ष्मणः अन्यत् पूर्वगृहीतापेक्षया भिन्नं कार्मुकश्रेष्ठं जग्राह ॥ २४ ॥

---

१ धृतेति गो.पाठः । २ रथस्थस्येति गो.पाठः । ३ विशारदमिति गो.पाठः । ४ अभिज्ञस्तस्य देशस्येति गो. रा. पाठः । ५ अत्यद्भुतेति गो.पाठः।

संनद्धः कवची खड्गी सशरी वामचापभृत् । रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ॥ २५ ॥
अद्य मत्कार्मुकोन्मुक्ताः शरा निर्भिद्य रावणिम् । लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव ॥ २६ ॥
अद्यैव तस्य रौद्रस्य शरीरं मामकाः शराः । विधमिष्यन्ति भित्त्वा तं महाचापगुणच्युताः ॥ २७ ॥
एवमुक्त्वा तु वचनं द्युतिमान्भ्रातुरग्रतः । स रावणिवधाकाङ्क्षी लक्ष्मणस्त्वरितं ययौ ॥ २८ ॥
सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् । निकुम्भिलामभिययौ चैत्यं रावणिपालितम् ॥ २९ ॥
विभीषणेन सहितो राजपुत्रः प्रतापवान् । कृतस्वस्त्ययनो भ्रात्रा लक्ष्मणस्त्वरितो ययौ ॥ ३० ॥
वानराणां सहस्रैस्तु हनूमान्बहुभिर्वृतः । विभीषणश्च सामात्यो लक्ष्मणं त्वरितं ययौ ॥ ३१ ॥
महता हरिसैन्येन सवेगमभिसंवृतः । ऋक्षराजबलं चैव ददर्श पथि विष्ठितम् ॥ ३२ ॥
स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः । राक्षसेन्द्रबलं दूरादपश्यद्व्यूहमाश्रितम् ॥ ३३ ॥
स संप्राप्य धनुष्पाणिर्मायायोगमरिंदमः । तस्थौ ब्रह्मविधानेन विजेतुं रघुनन्दनः ॥ ३४ ॥
विभीषणेन सहितो राजपुत्रः प्रतापवान् । अङ्गदेन च वीरेण तथानिलसुतेन च ॥ ३५ ॥
विविधममलशस्त्रभास्वरं तद्ध्वजगहनं गहनं महारथैश्च ।
प्रतिभयतममप्रमेयवेगं तिमिरमिव द्विषतां बलं विवेश ॥ ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

२५ ] ति० टी०-सशरी प्रशस्तशरवान् वामचापभृद्वामहस्तेन चापभृत् ॥ २५ ॥

रा० टी०-संनद्ध इति । संनद्धः गृहीतयुद्धसामग्रीकः अत एव कवचादिविशिष्टः सौमित्रिः रामपादावुपस्पृश्य अब्रवीत् ॥ २५ ॥

२६-२७ ] ति० टी०-रावणिं निर्भिद्यासक्ताः सन्तो लङ्कामभिपतिष्यन्ति ॥ २६ ॥ २७ ॥

रा० टी०-तदाकारमाह—अद्येति । द्वाभ्याम् पुष्करिणीं सरसीं हंसा इव मत्कार्मुकान्मुक्ताः शराः रावणिं निर्भिद्य लंकामभिपतिष्यन्ति ॥ २६ ॥

रा० टी०-तदेव भंग्यन्तरेणाह—अद्येति । महाचापगुणच्युताः मामकाः शराः तस्येन्द्रजितश्शरीरं भित्वा तं विधमिष्यन्ति प्राणवियुक्तं करिष्यन्ति ॥ २७ ॥

२८-३० ] ति० टी०-एवमुक्त्वा त्विति । 'स एवमुक्त्वा' इति पाठे स लक्ष्मणः स एव लक्ष्मणस्त्वरितं ययाविति तच्छब्दद्वयनिर्वाह इति तीर्थः ॥ २८-३० ॥

रा० टी०-एवमिति । लक्ष्मण एवमुक्त्वा त्वरितं ययौ २८

रा० टी०-गमनप्रकारमाह—स इति । स लक्ष्मणः गुरोः रामस्य पादौ अभिवाद्य प्रदक्षिणं कृत्वा च निकुंभिलां चैत्यमभिययौ ॥ २९ ॥

रा० टी०-विभीषणेनेति । भ्रात्रा रामेण कृतस्वस्त्ययनः अत एव त्वरितो लक्ष्मणो ययौ ॥ ३० ॥

गो० टी०-स एवमिति । असत्यपि कर्तृभेदे क्रियाभेदमाश्रित्य स इति द्विरुक्तिः । स एवमुक्त्वा स ययाविति निर्वाहः । वस्तुतस्तु स लक्ष्मणः । सः तादृशवीरवेषविशिष्ट एवेत्यर्थः । यद्वा सरावणिवधाकाङ्क्षीत्येकं पदम् । रावणिना सह वर्तन्त इति सरावणयः निकुम्भिलास्था राक्षसाः, तेषां वधाकाङ्क्षीत्यर्थः ॥ २८-३३ ॥

३१ ] ति० टी०-त्वरितं ययौ । लक्ष्मणमनुययावित्यर्थः ३१

रा० टी०-वानराणामिति । हनुमान् विभीषणश्च त्वरितं ययौ ॥ ३१ ॥

३२-३३ ] ति० टी०-पथि विष्ठितं हनुमता सीतावधवृत्तान्तनिवेदनार्थमागमनसमये द्वाररक्षार्थं पथि स्थापितमित्यर्थः ॥ ३२ ॥ ३३ ॥

रा० टी०-महतेति । हरिसैन्येन सवेगमभिसंवृतो लक्ष्मणः पथि विष्ठितं संस्थितं ऋक्षराजस्य जाम्बवतो बलं ददर्श ॥ ३२ ॥

रा० टी०-स इति । सौमित्रिः व्यूहमाश्रितं राक्षसेन्द्रबलं दूरादपश्यत् ॥ ३३ ॥

३४ ] ति० टी०-मायायोगं माययैव योगो युद्धजयोपायो यस्य तमिन्द्रजितं प्राप्य ब्रह्मविधानेन निकुम्भिलामसंप्राप्त इत्याद्युक्तब्रह्मवरदानप्रकारेण तं विजेतुं तस्थौ । रघुनन्दनो लक्ष्मणः । 'ब्रह्मविमानेन' इति पाठे ब्रह्मणो भगवतस्तेजोंशोऽहमस्मीति विशिष्य जायमानेन ध्यानेन शत्रुं जेतुं तस्थौ । संकटकाले तादृशध्यानस्य तस्य निसर्गसिद्धत्वादिति कतकः ॥ ३४ ॥

३५-३६ ] ति० टी०-स लक्ष्मणो विभीषणादिभिः सहोच्यमानगुणं द्विषतां बलं विवेश । प्रतिभयतममतिशयेन भयंकरम् ॥ ३५ ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

१ सशरो हेमेति गो. पाठः । २ स एवमुक्त्वा द्युतिमान्वचनमिति गो. पाठः । ३ त्वरित इति गो. पाठः । ४ तदा लक्ष्मणमन्वगादिति गो. पाठः । ५ त मिति गो. पाठः । ६ विपुलमिति गो. पाठः ।

## षडशीतितमः सर्गः ।

सौमित्रे मेघश्यामं रजनीचरबलमविदूर एव दृश्यते तच्छिलायायुधैः कपिभिर्भेदनीयं येन तत्कर्मकर्तेन्द्रजिदपि सुव्यक्तो भवेत्तेन युद्ध्यस्व येन कर्मावसानात्पूर्वं रुष्टो बहिरागच्छेत्स इत्युक्तो विभीषणेन लक्ष्मणः शरवर्षेण तं विव्याध ऋक्षशाखामृगा अपि तद्बलेन युयुधिरे स्वबलमर्दितं विलोक्यासमाप्य च कर्म युध्यमानं मारुतिं जिघांसुमिन्द्रजितं विभीषणदर्शितं लक्ष्मणः प्रैक्षत ।

अथ तस्यामवस्थायां लक्ष्मणं रावणानुजः । परेषामहितं वाक्यमर्थसाधकमब्रवीत् ॥ १ ॥
यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते । एतदायोध्यतां शीघ्रं कपिभिश्च[1] शिलायुधैः ॥ २ ॥
तस्यानीकस्य[2] महतो भेदने यत लक्ष्मण । राक्षसेन्द्रसुतोऽप्यत्र भिन्ने दृश्यो भविष्यति ॥ ३ ॥
स त्वमिन्द्राशनिप्रख्यैः शरैरवकिरन्परान् । अभिद्रवाशु यावद्वै नैतत्कर्म समाप्यते ॥ ४ ॥
जहि वीर दुरात्मानं मायापरमधार्मिकम् । रावणिं क्रूरकर्माणं सर्वलोकभयावहम् ॥ ५ ॥
विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः । ववर्ष शरवर्षेण[3] राक्षसेन्द्रसुतं प्रति ॥ ६ ॥
ऋक्षाः शाखामृगाश्चैव[4] द्रुमप्रवरयोधिनः[5] । अभ्यधावन्त सहितास्तदनीकमवस्थितम् ॥ ७ ॥
राक्षसाश्च शितैर्बाणैरसिभिः शक्तितोमरैः । अभ्यवर्तन्त[6] समरे कपिसैन्यं[7] जिघांसवः ॥ ८ ॥
स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् । शब्देन महता लङ्कां नादयन्वै समन्ततः ॥ ९ ॥
शस्त्रैश्च विविधाकारैः शितैर्बाणैश्च पादपैः । उद्यतैर्गिरिशृङ्गैश्च घोरैराकाशमावृतम्[8] ॥ १० ॥

---

रा० टी०–स इति । विभीषणादिना सहितो रघुनन्दनः स लक्ष्मणः मायैव योगः युद्धोपायो यस्य तमिन्द्रजितं संप्राप्य ब्रह्मविधानेन ब्रह्मोक्तवधप्रकारेण विजेतु तस्थौ श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०–स तं प्राप्येत्यादिश्लोकद्वयमेकान्वयम् । ब्रह्मविधानेन निकुम्भिलामसंप्राप्तमित्यादिनोक्तब्रह्मवरदानप्रकारेण, मायायोगं मायारूपोपायम्, तम् इन्द्रजितम्, विजेतुं प्राप्य तस्थौ । मायायागमिति पाठे मायायागं जेतुं नाशयितुम् तं देशम् प्राप्य तस्थावित्यन्वयः ॥ ३४ ॥ ३५ ॥

रा० टी०–विविधमिति । अमलशस्त्रैर्भास्वरं ध्वजैर्गहनं निबिडं महारथैश्च गहनं प्रतिभयतममतिभयंकरमप्रमेयवेगं विविधं तिमिरमिव द्विषतां बलं विवेश ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

गो० टी०–विविधमिति । प्रतिभयतमम् अतिशयेन भयंकरम् ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

१ ] ति० टी०–अथ तस्यामवस्थायां रक्षार्थं सेनां निवेश्येन्द्रजितो यागकाले परेषां शत्रूणामहितं नाशकरम् स्वेषामर्थसाधकम् ॥ १ ॥

रा० टी०–लक्ष्मणकर्तृकेन्द्रजित्सैन्यप्रवेशानन्तरकालिकं वृत्तान्तमाह—अथेत्यादिभिः । रावणानुजो विभीषणः अर्थसाधकं रामार्थनिष्पादकं परेषां रिपूणामहितं वाक्यमब्रवीत् ॥ १ ॥

गो० टी०–अथेन्द्रजिद्युद्धारम्भः—अथ तस्यामित्यादि तस्यामवस्थायाम् निकुम्भिलासमीपगमनावसरे । अर्थसाधकम् । स्वानामिति शेषः ॥ १ ॥

२ ] ति० टी०–एतत्कपिभिरायोध्यताम् ॥ २ ॥

रा० टी०–तदाकारमाह—यदित्यादिभिः । यत् एतत् राक्षसानीकमवलोक्यते तदेतत् कपिभिः शीघ्रमायोध्यताम् ॥ २ ॥

गो० टी०–यदेतदिति । आयोध्यतां हन्यताम् । शीघ्रमिति । विलम्बे यागः समाप्येतेति भावः ॥ २ ॥

३ ] ति० टी०–हे लक्ष्मण, तस्य तत्परस्थितस्य महतोऽनीकस्य भेदने त्वं यत यत्नं कुरु ॥ ३ ॥

रा० टी०–नन्विन्द्रजितोऽदृश्यमानत्वात्किं तत्सैन्ययोधनेनेत्यत आह—तस्येति । अनीकस्य भेदने विनाशने यत ननु शङ्का तदवस्थैवेत्यत आह अत्र अस्मिन् अनीके भिन्ने विनष्टे सति राक्षसेन्द्रसुतोऽपि दृश्यो भविष्यति ॥ ३ ॥

गो० टी०–अस्येति । यत यतस्व । अत्र राक्षसानीके ३-२

४ ] ति० टी०–एतत्कर्म होमकर्म यावन्न समाप्यते तावदाश्वभिद्रव रावणिमित्यन्वयः ॥ ४ ॥

रा० टी०–स इति । एतत् मायाप्राकट्यादिहेतुभूतं कर्म हवनादि यावन्न समाप्यते तावदेव शरैः रिपून् अवकिरन् सन् अभिद्रव ॥ ४ ॥

५ ] ति० टी०–मायापरम् अधार्मिकमिति छेदः ॥ ५ ॥

रा० टी०–जहीति । मायापरं रावणिं जहि ॥ ५ ॥

६–१० ] ति० टी०–राक्षसेन्द्रसुतं प्रति । तत्प्राप्तिमुद्दिश्य तत्सेनायां ववर्षेत्यर्थः ॥ ६–१० ॥

---

१ पादपायुधैरिति गो. पाठः । २ अस्येति गो. पाठः । ३ वर्षाणीति गो. रा. पाठः । ४ चापीति गो. पाठः । ५ भद्रिनखेति गो. पाठः । ६ उद्यतैः समवर्तन्तेति गो. पाठः । ७ सैन्यमिति रा. पाठः । ८ बहुधेति गो. पाठः ।

राक्षसा वानरेन्द्रेषु विकृताननबाहवः । निवेशयन्तः शस्त्राणि चक्रुस्ते सुमहद्भयम् ॥ ११ ॥
तथैव सकलैर्वृक्षैर्गिरिशृङ्गैश्च वानराः । अभिजघ्नुर्निजघ्नुश्च समरे सर्वराक्षसान् ॥ १२ ॥
ऋक्षवानरमुख्यैश्च महाकायैर्महाबलैः । रक्षसां युध्यमानानां महद्भयमजायत ॥ १३ ॥
स्वमनीकं विषण्णं तु श्रुत्वा शत्रुभिरर्दितम् । उदतिष्ठत दुर्धर्षः स कर्मण्यननुष्ठिते ॥ १४ ॥
वृक्षान्धकारान्निर्गम्य जातक्रोधः स रावणिः । आरुरोह रथं सज्जं पूर्वयुक्तं सुसंयतम् ॥ १५ ॥
स भीमकार्मुकशरः कृष्णाञ्जनचयोपमः । रक्तास्यनयनो भीमो बभौ मृत्युरिवान्तकः ॥ १६ ॥
दृष्ट्वैव तु रथस्थं तं पर्यवर्तत तद्बलम् । रक्षसां भीमवेगानां लक्ष्मणेन युयुत्सताम् ॥ १७ ॥
तस्मिंस्तु काले हनुमानरुजत्स दुरासदम् । धरणीधरसंकाशो महावृक्षमरिंदमः ॥ १८ ॥
स राक्षसानां तत्सैन्यं कालाग्निरिव निर्दहन् । चकार बहुभिर्वृक्षैर्निःसंज्ञं युधि वानरः ॥ १९ ॥
विध्वंसयन्तं तरसा दृष्ट्वैव पवनात्मजम् । राक्षसानां सहस्राणि हनूमन्तमवाकिरन् ॥ २० ॥

---

रा० टी०-विभीषणेति । लक्ष्मणः शरवर्षेण राक्षसेन्द्रसुतं प्रतिववर्ष ॥ ६ ॥

रा० टी०-ऋक्षा इति । द्रुमप्रवरैः *योधितुं शीलं येषां ते ऋक्षादयः अवस्थितं तदनीकमभ्यधावन्त ॥ ७ ॥

गो० टी०-विभीषणेति । शुभलक्षणः सुहृद्वचनसारग्राहित्वलक्षणयुक्तः ॥ ६ ॥ ७ ॥

रा० टी०-राक्षसा इति । कपिसैन्यं जिघांसवो राक्षसाः बाणादिभिरभ्यवर्तन्त ॥ ८ ॥

गो० टी०-राक्षसा इति । कपिसैन्यजिघांसवः कपिसैन्यं हन्तुमिच्छवः ॥ ८ ॥

रा० टी०-स इति । शब्देन लंकां नादयन् सन् कपिरक्षसां तुमुलस्संप्रहारस्संजज्ञे ॥ ९ ॥

रा० टी०-शस्त्रैरिति । शस्त्रादिभिराकाशमावृतम्॥१०॥

गो० टी०-स इति । संप्रहारः युद्धम् ॥ ९ ॥ १० ॥

११-१३ ] ति० टी०-ते शस्त्राणि निवेशयन्तो विकृताननबाहवः सन्तः सुमहद्भयं चक्रुः । ' राक्षसा वानरेन्द्रेषु ' इति पाठः ॥ ११-१३ ॥

रा० टी०-राक्षसा इति । विकृताननबाहवो राक्षसाः वानरेन्द्रेषु शस्त्राणि निवेशयन्तस्सन्तः सुमहद्भयं चक्रुः ॥ ११ ॥

रा० टी०-तथेति । वानराः वृक्षादिभिः अभिजग्मुः संमुखं प्रापुः जघ्नुश्च ॥ १२ ॥

रा० टी०-ऋक्षेति । ऋक्षवानरमुख्यैस्सह युध्यमानानां रक्षसां महद्भयमजायत ॥ १३ ॥

गो० टी०-ते राक्षसा इति । शस्त्रनिवेशनविकृताननबाहुत्वरूपक्रियाभेदात् तच्छब्दद्वयनिर्वाहः ॥ ११-१३ ॥

१४ ] ति० टी०-विषण्णं श्रुत्वा । यागभूमिस्थ इति शेषः । अननुष्ठिते यागस्थानाप्राप्त्यासमाप्ते । ' स स्वकर्मणि ' इति पाठेऽक्षराधिक्यमार्षम् ॥ १४ ॥

रा० टी०-स्वमिति । शत्रुभिरर्दितं स्वमनीकं श्रुत्वा कर्मणि अननुष्ठिते अनुष्ठानरहिते सत्येव उदतिष्ठत ॥ १४ ॥

गो० टी०-स्वमनीकमिति । तत्कर्मणि तस्मिन् होमकर्मणि ॥ १४ ॥

१५-१६ ] ति० टी०-वृक्षान्धकारान्निकुम्भिलाक्षेत्रीयात् । इदं निःसरणं दशम्यां मायाह्नि ॥ १५ ॥ १६ ॥

रा० टी०-वृक्षेति । वृक्षस्यान्धकारात् निर्गम्य रावणिः सज्जं सामग्रीसहितम् पूर्वयुक्तं सुसंयतं दृढं रथमारुरोह ॥१५॥

गो० टी०-वृक्षान्धकारादिति । वृक्षान्धकारात् नीरन्ध्रवृक्षषण्डादित्यर्थः । सज्जम् आयुधादिभिः, पूर्वयुक्तम् पूर्वमेव युक्ताश्वम् । सराक्षसः राक्षससहितः ॥ १५ ॥

रा० टी०-स इति । भीमौ कार्मुकशरौ यस्य स रावणिः अन्तको विनाशकारको मृत्युरिव बभौ ॥ १६ ॥

गो० टी०- स इति । अन्तकः अन्तकरः ॥ १६ ॥

१७-१८ ] ति० टी०-पर्यवर्तत तद्बलम् । राक्षसबलमित्यर्थः ॥ १७ ॥ १८ ॥

१९-२० ] ति० टी०-राक्षसानां तत्सैन्यं हनुमान्निःसंज्ञं चकार ॥ १९ ॥ २० ॥

रा० टी०-दृष्ट्वेति । रथस्थं तं रावणिं दृष्ट्वैव रक्षसां बलं पर्यवर्तत युद्धोन्मुखमभवत् ॥ १७ ॥

गो० टी०-दृष्ट्वैवेति । पर्यवर्तत परितोऽतिष्ठत् ॥ १७ ॥

रा० टी०-तस्मिन्निति । हनुमान् तस्मिन् काले महावृक्षमुद्यम्य राक्षसानां सैन्यं कालाग्निरिव निर्दहन् सन् बहुभिर्वृक्षैः निस्संज्ञं चकार श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

रा० टी०-विध्वंसयन्तमिति । विध्वंसयन्तं राक्षससैन्यं विनाशयन्तं हनूमन्तं राक्षसानां सहस्राणि अवाकिरन् शस्त्राणि प्राक्षिपन् ॥ २० ॥

गो० टी०-तस्मिन्नित्यादि । आदावेकं वृक्षमुद्यम्य निर्-

---

१ ते राक्षसा वानरेष्विति गो. पाठः । २ चेति रा. पाठः । ३ राक्षसर्षभानिति गो. पाठः । ४ स राक्षस इति गो.पाठः । ५ धर इति गो.पाठः । ६ क्रुद्ध इति गो. क्रूर इति च रा. पाठः । ७ काले तु हनुमानुद्यम्य सुदुरासदमिति गो. रा. पाठः । * योद्धुमिति युक्तं भाति ।

शितशूलधराः शूलैरसिभिश्चासिपाणयः । [1]शक्तिहस्ताश्च शक्तीभिः पट्टिशैः पट्टिशायुधाः ॥ २१ ॥
परिघैश्च गदाभिश्च [2]कुन्तैश्च शुभदर्शनैः । शतशश्च शतघ्नीभिरायसैरपि मुद्गरैः ॥ २२ ॥
घोरैः [3]परशुभिश्चैव भिन्दिपालैश्च राक्षसाः । मुष्टिभिर्वज्रकल्पैश्च तलैरशनिसंनिभैः ॥ २३ ॥
अभिजघ्नुः समासाद्य समन्तात्पर्वतोपमम् । तेषामपि च संक्रुद्धश्चकार कदनं महत् ॥ २४ ॥
स ददर्श कपिश्रेष्ठमचलोपममिन्द्रजित् । [4]सूदमानम[5]संत्रस्तममित्रान्पवनात्मजम् ॥ २५ ॥
स सारथिमुवाचेदं याहि यत्रैष वानरः । [6]क्षयमेवं हि नः कुर्याद्राक्षसानामुपेक्षितः ॥ २६ ॥
इत्युक्तः सारथिस्तेन ययौ यत्र स मारुतिः । वहन्परमदुर्धर्षं स्थितमिन्द्रजितं रथे ॥ २७ ॥
सोऽभ्युपेत्य शरान्खड्गान्पट्टिशासिपरश्वधान् । अभ्यवर्षत दुर्धर्षः कपि[8]मूर्धनि राक्षसः ॥ २८ ॥
तानि शस्त्राणि घोराणि प्रतिगृह्य स मारुतिः । रोषेण महताविष्टो वाक्यं चेदमुवाच ह ॥ २९ ॥
युध्यस्व यदि शूरोऽसि रावणात्मज दुर्मते । वायुपुत्रं समासाद्य न [9]जीवन्प्रतियास्यसि ॥ ३० ॥
बाहुभ्यां संप्रयुध्यस्व यदि मे द्वन्द्वमाहवे । वेगं सहस्व दुर्बुद्धे ततस्त्वं रक्षसां वरः ॥ ३१ ॥
हनूमन्तं जिघांसन्तं समुद्यतशरासनम् । रावणात्मजमाचष्टे लक्ष्मणाय विभीषणः ॥ ३२ ॥

दहन् सन् पश्चात् बहुभिर्वृक्षैस्तद्रक्षोबलं निःसंज्ञं चकारेत्यन्वयः ॥ १८–२० ॥

२१-२५ ] ति० टी०–असिपाणयोऽसिभिः शक्तिहस्ताः शक्तिभिरित्यादिप्रकारेणोह्यम्। शक्तीभिरित्यत्र दीर्घ आर्षः॥२१-२५॥

रा० टी०–तत्प्रकारमाह—शितेति । शितशूलधरादयश्शूलादिभिः निजघ्नुरिति शेषः ॥ २१ ॥

रा० टी०–परिघैरिति। राक्षसाः परिघादिभिः पर्वतोपमं हनूमन्तं समासाद्य अभिजघ्नुः अत एव संक्रुद्धो हनूमानपि तेषां राक्षसानां महत् कदनं चकार श्लोकत्रयमेकान्वयि ॥२२--२४॥

रा० टी०–स इति । इन्द्रजित् अमित्रान् राक्षसान् सूदयानमत एव अमित्रघ्नं पवनात्मजं ददर्श ॥ २५ ॥

गो० टी०–अवाकिरन्नित्युक्तं प्रपञ्चयति—शितेत्यादि । शितशूलधरा इत्यादिविशेषणेन येषां येष्वस्त्रेष्वत्यन्तपाटवमस्ति तैस्ते अवाकिरन्निति गम्यते । परिघैरित्यादौ परिघपाणय इत्याद्यूह्यम् । शुभदर्शनैरित्यनेन तैक्ष्ण्यमुपलक्ष्यते । पर्वतोपमं हनुमन्तमिति शेषः ॥ २१–२३ ॥

गो० टी०–तेषामित्यर्धम् । संक्रुद्धः । हनुमानिति शेषः ॥ २४ ॥ २५ ॥

२६ ] ति० टी०–नो राक्षसानां मत्संबन्धिनां राक्षसानाम् ॥ २६ ॥

रा० टी०–स इति । उपेक्षितोऽयं वानरः राक्षसानां क्षयं कुर्यादेव अतः यत्रैष वानरः तत्र याहि मदर्थं प्रापयेत्यर्थः इदं स इन्द्रजित् सारथिमुवाच ॥ २६ ॥

गो० टी०--स सारथिमिति । हि यस्मात् कारणात् उपेक्षितः एषः नः अस्माकम् संबन्धिनां राक्षसानाम् क्षयं कुर्यात् । अतः एष वानरो यत्र । वतत इति शेषः । तत्र याहीतीदं वचः सारथिमुवाचेत्यन्वयः ॥ २६ ॥

२७--३० ] ति० टी०–इन्द्रजितं वहन्प्रापयन् । यत्र मारुतिस्तेन तत्प्राप्तिमार्गेण ययौ ॥ २७–३० ॥

रा० टी०–इतीति । इत्युक्तस्सारथिः स्थितमिन्द्रजितं वहन् सन् यत्र मारुतिः तत्र ययौ प्रापयामास ॥ २७ ॥

गो० टी०–इत्युक्त इति । वहन् प्रापयन् ॥ २७ ॥

रा० टी०–स इति। स इन्द्रजित् अभ्युपेत्य प्राप्य कपिमूर्द्धनि शरादीन् अभ्यवर्षत ॥ २८ ॥

रा० टी०–तानीति । तानि इन्द्रजित्प्रयुक्तानि शस्त्राणि मारुतिः प्रतिगृह्य उरसि गृहीत्वा इदमुवाच ॥ २९ ॥

रा० टी०–तदाकारमाह—युध्यस्वेति । वायुपुत्रं मां समासाद्य जीवन् सन् न प्रतियास्यसि ॥ ३० ॥

गो० टी०–सोभ्युपेत्येति । अत्रापि क्रियाभेदात् तच्छब्दस्य द्विः प्रयोगः ॥ २८—३० ॥

३१ ] ति टी०–यदि द्वन्द्वम् । ददासीति शेषः तर्हि बाहुभ्यां युध्यस्व ॥ ३१ ॥

रा० टी०–बाहुभ्यामिति । यदि मे द्वन्द्वं युद्धं ददासीति शेषः ततस्तदा त्वं बाहुभ्यां संप्रयुध्यस्व अत एव वेगं सहस्व ॥ ३१ ॥

गो० टी०–बाहुभ्यामिति । द्वन्द्वं द्वन्द्वयुद्धम् । ददासीति शेषः । यदि ददासि, तर्हि शस्त्राणि त्यक्त्वा बाहुभ्यां प्रतियुध्यस्वेत्यन्वयः । ततः तदानीं द्वन्द्वयुद्धकाले ॥३१॥३२॥

३२ ] ति० टी०–हनूमन्तं जिघांसन्तं तद्वधे सर्वात्मना संनद्धम् ॥ ३२ ॥

रा० टी०–हनूमंतमिति । हनूमन्तं जिघांसन्तं हन्तुमिच्छन्तं रावणात्मजं विभीषणो लक्ष्मणाय आचष्टे बोधयामास ॥ ३२ ॥

१ शक्तिभिः शक्तिहस्ताश्चेति गो. पाठः । २ चक्रैश्चेति गो. पाठः । ३ परश्वधैरिति गो. पाठः । ४ सूदयन्तमिति गो. सूदयानमिति च रा. पाठः । ५ आमित्रघ्नमिति गो. रा. पाठः । ६ एष इति गो. पाठः । ७ पट्टिशांश्चेति गो. पाठः । ८ मूर्ध्नि स इति गो. पाठः । ९ जीवन्नेति गो.पाठः ।

यः स वासवनिर्जेता रावणस्यात्मसंभवः । स एष रथमास्थाय हनूमन्तं जिघांसति ॥ ३३ ॥
तमप्रतिमसंस्थानैः शरैः शत्रुनिवारणैः । जीवितान्तकरैर्घोरैः सौमित्रे रावणिं जहि ॥ ३४ ॥
इत्येवमुक्तस्तु तदा महात्मा विभीषणेनारिविभीषणेन ।
ददर्श तं पर्वतसंनिकाशं रथस्थितं भीमबलं दुरासदम् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

## सप्ताशीतितमः सर्गः ।

विभीषणो धनुष्पाणिं लक्ष्मणं त्वरमाणस्तत्कर्मस्थानं दर्शयित्वा राघवात्र न्यग्रोधमूले कर्म समाप्य भूतोपहारं निर्वर्त्येन्द्रजिद्विजेष्यतेऽतः साश्वसारथिरथमचिराद्विध्वंसयैनमित्युक्तो लक्ष्मण इन्द्रजितं रणायाह्वयत स तु विभीषणं वीक्ष्यास्यैवैतद्दुराचरणमिति मन्यमानस्तं वचनैररुंतुदैः प्रत्याचष्ट विभीषणोऽपि भो दुरात्मन् वीरंमन्याद्य सौमित्रिशरमग्नः कथं समरशरधिं तरिष्यसीत्यादि यथार्हं प्रत्युवाच ।

एवमुक्त्वा तु सौमित्रिं जातहर्षो विभीषणः । धनुष्पाणिं तमादाय त्वरमाणो जगाम सः ॥ १ ॥
अविदूरं ततो गत्वा प्रविश्य तु महद्वनम् । अदर्शयत तत्कर्म लक्ष्मणाय विभीषणः ॥ २ ॥
नीलजीमूतसंकाशं न्यग्रोधं भीमदर्शनम् । तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ ३ ॥
इहोपहारं भूतानां बलवान्रावणात्मजः । उपहृत्य ततः पश्चात्सङ्ग्राममभिवर्तते ॥ ४ ॥
अदृश्यः सर्वभूतानां ततो भवति राक्षसः । निहन्ति समरे शत्रून्बध्नाति च शरोत्तमैः ॥ ५ ॥

---

३३ ] ति० टी०—यो वासवजेता यस्य दर्शनं तवापेक्षितं स एष रथमास्थाय हनुमन्तं जिघांसति ॥ ३३ ॥

रा० टी०—तत्प्रकारमाह—य इति । यो वासवनिर्जेता स एष रावणस्यात्मसंभवः हनुमन्तं जिघांसति ॥ ३३ ॥

गो० टी०—यः स इति । यः सः । प्रसिद्धो य इत्यर्थः ॥ ३३ ॥

३४–३५ ] ति० टी०—तमिमं रावणिं हत्प्रतिमसंस्थानैरनुपमस्वरूपैः शरैर्जहि ॥ ३४ ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

रा० टी०—तमिति । अप्रतिमसंस्थानैः उपमारहितावयवविशिष्टैश्शत्रूणां निवारणैः निवारकैः शरैः रावणिं जहि ॥ ३४ ॥

गो० टी०—तमिति । अप्रतिमसंस्थानैः अनुपमसन्निवेशैः करवीरपत्राद्याकारैरित्यर्थः ॥ ३४ ॥

रा० टी०—इतीति । अरीणां विभीषणेन भयङ्करेण विभीषणेन इत्येवमुक्तो महात्मा लक्ष्मणः रथस्थितमिन्द्रजितं ददर्श ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

गो० टी०—इत्येवमिति । अरिविभीषणेन शत्रुभयंकरेण ॥ ३५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

१ ] ति० टी०—एवमिति । जातहर्षो यागासमाप्त्या ब्रह्मवचनादवश्यं मरिष्यतीति संतुष्टो धनुष्पाणिं तं लक्ष्मणमादाय जगाम । इन्द्रजित्संमुखे इति शेषः ॥ १ ॥

रा० टी०—विभीषणकर्तृकेन्द्रजिद्बोधनानन्तरकालिकं वृत्तान्तमाह—एवमित्यादिभिः । जातहर्षः लक्ष्मणविजयसमयप्राप्त्या प्राप्तानन्दो विभीषणः धनुष्पाणिं सौमित्रिमेवमुक्त्वा त्वरमाणस्सन् जगाम ॥ १ ॥

गो० टी०—अथेन्द्रजिद्विभीषणसंवाद—एवमुक्त्वेत्यादि । धनुष्पाणिनमिति नकारान्तत्वमार्षम् ॥ १ ॥

२–३ ] ति० टी०—अविदूरमल्पमार्गं गत्वा महद्वनं निकुम्भिलावनं प्रविश्य तत्रत्यं तत्कर्म होमकर्मस्थानम् ॥ २ ॥ ३ ॥

रा० टी०—अविदूरमिति । विभीषणः ततस्तस्मात् स्थानात् अविदूरं किंचिद्दूरमार्गं गत्वा तत् निकुंभिलासंबन्धिवनं प्रविश्य तत् राक्षसप्रसिद्धं कर्महवनस्थानं लक्ष्मणायादर्शयत ॥ २ ॥

रा० टी०—नीलेति । नीलजीमूतसंकाशं नीलमेघसदृशं भीमदर्शनं न्यग्रोधं निकुंभिलावटं रावणभ्राता विभीषणः लक्ष्मणाय न्यवेदयत् अबोधयत् ॥ ३ ॥

गो० टी०—अविदूरमिति । तत्कर्म होमकर्मस्थानम् ॥ २ ॥ ३ ॥

४–५ ] ति० टी०—भूतानां रजस्तमःप्रधानभूतगणानामुपहारमुपहृत्य दत्त्वा ॥ ४ ॥ ५ ॥

रा० टी०—तत्प्रकारमाह—इहेति । रावणात्मजः इहास्मिन् वटे भूतानामुपहारं बलिमुपहृत्य दत्त्वा पश्चात् संग्राममभिवर्तते गच्छति ॥ ४ ॥

---

१ निवारणैरिति गो. पाठः । २ नवन्तमिति गो. पाठः । ३ पाणिनमिति गो. पाठः । ४ चैनि गो. पाठः ।

तमप्रविष्टं न्यग्रोधं बलिनं रावणात्मजम् । विध्वंसय शरैर्दीप्तैः सरथं साश्वसारथिम् ॥ ६ ॥
तथेत्युक्त्वा महातेजाः सौमित्रिर्मित्रनन्दनः । बभूवावस्थितस्तत्र चित्रं विस्फारयन्धनुः ॥ ७ ॥
स रथेनाग्निवर्णेन बलवान्रावणात्मजः । इन्द्रजित्कवची खड्गी सध्वजः प्रत्यदृश्यत ॥ ८ ॥
तमुवाच महातेजाः पौलस्त्यमपराजितम् । समाह्वये त्वां समरे सम्यग्युद्धं प्रयच्छ मे ॥ ९ ॥
एवमुक्तो महातेजा मनस्वी रावणात्मजः । अब्रवीत्परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ॥ १० ॥
इह त्वं जातसंवृद्धः साक्षाद्भ्राता पितुर्मम । कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ॥ ११ ॥
न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते । प्रमाणं न च सोदर्यं न धर्मो धर्मदूषण ॥ १२ ॥
शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः । यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ १३ ॥
नैतच्छिथिलया बुद्ध्या त्वं वेत्सि महदन्तरम् । क्व च स्वजनसंवासः क्व च नीचपराश्रयः ॥ १४ ॥

---

रा० टी०—अदृश्य इति । ततोऽनन्तरं सर्वभूतानामदृश्यो भवति अत एव शत्रून् निहन्त्येव बध्नाति च ॥ ५ ॥

गो० टी०—इहेति । उपहारं बलिम् । उपहृत्य कृत्वा । ओदनपाकं पचतीतिवत् । ततः तस्माद्देशात् ॥ ४ ॥ ५ ॥

६ ] ति० टी०—न्यग्रोधमप्रविष्टं बहिर्युद्धाय निर्गतं पुनस्तत्राप्रविष्टमेव जहि । तथैव तस्य वरदानादिति भावः ॥ ६ ॥

रा० टी०—तमिति । न्यग्रोधमप्रविष्टं रावणात्मजं त्वं विध्वंसय ॥ ६ ॥

गो० टी०—तमिति । अप्रविष्टन्यग्रोधं रावणात्मजं विध्वंसय । पुनः प्रवेशात्पूर्वमेव विध्वंसयेत्यर्थः ॥ ६—८ ॥

७ ] ति० टी०—तत्र न्यग्रोधद्वारे ॥ ७ ॥

रा० टी०—अथेति । सौमित्रिः तथेत्युक्त्वा धनुर्विस्फारयन् सन् तत्रावस्थितो बभूव ॥ ७ ॥

८ ] ति० टी०—प्रत्यदृश्यत । लक्ष्मणधनुःशब्दं श्रुत्वा तत्र प्रतिनिवृत्त इति भावः ॥ ८ ॥

रा० टी०—स इति । अग्निवर्णेन रथेनोपलक्षितस्स इन्द्रजित् प्रत्यदृश्यत ॥ ८ ॥

९-१० ] ति० टी०—महातेजा लक्ष्मणः ॥ ९ ॥ १० ॥

रा० टी०—तमिति । महातेजा लक्ष्मणः समरे समरार्थं त्वां समाह्वये अतो मे युद्धं सम्यक् प्रयच्छ इति पौलस्त्यमिन्द्रजितमुवाच ॥ ९ ॥

गो० टी०—तमिति । महातेजा इति लक्ष्मणो विशेष्यः । सम्यग्युद्धम् अमायायुद्धम् ॥ ९ ॥

रा० टी०—एवमिति । एवमुक्तो रावणात्मजः तत्र लक्ष्मणसमीपे विभीषणं दृष्ट्वा परुषं वाक्यमब्रवीत् ॥ १० ॥

गो० टी०—एवमिति । मनस्वी दृढमनस्कः ॥ १० ॥

११ ] ति० टी०—इह राक्षसीयास्मत्कुले जातः संवृद्धश्चेति जातानुलिप्तवत्समासः पुत्रस्य पुत्राय ॥ ११ ॥

रा० टी०—तदाकारमाह—इहेत्यादिभिः । इहास्मदीयराक्षसकुले जातस्संवृद्धश्च पितुस्साक्षात् भ्राता अत एव पितृव्यस्त्वं मह्यं कथं द्रुह्यसि ॥ ११ ॥

गो० टी०—इहेति । इह लङ्कायां जातसंवृद्धः । "पूर्वकाल०" इत्यादिना पूर्वकालार्थवाचिनो जातशब्दस्य उत्तरकालार्थवाचिना संवृद्धशब्देन सह समासः । पुत्रस्य पुत्राय "क्रुधद्रुह०" इत्यादिना चतुर्थीनियमात् । राक्षसेत्यनेन साजात्यमपि न दृष्टवानसीति व्यज्यते ॥ ११ ॥

१२-१३ ] ति० टी०—न जातिर्न जात्यभिमानः । प्रमाणं कर्तव्याकर्तव्यमर्यादाकारणम् । सोदर्यं सोदरत्वम् ॥१२॥१३॥

रा० टी०—नेति । हे धर्मदूषण ते ज्ञातित्वं ज्ञातिधर्मो न अत एव सौहार्दं स्वच्छान्तःकरणत्वं तव नास्ति अत एव जातिरपि न जातिश्च्युतेत्यर्थः अत एव धर्मो न भ्रष्टधर्मासीत्यर्थः अत एव सोदर्यं समानोदरभवभ्रातृधर्मश्च न अत एव प्रमाणं न ॥ १२ ॥

गो० टी०—न ज्ञातित्वमिति । प्रमाणं मर्यादानियामकम् ॥ १२ ॥

रा० टी०—शोच्य इति । यस्त्वं परभृत्यत्वमागतः स त्वं निन्दनीयश्शोच्यश्च ॥ १३ ॥

गो० टी०—शोच्य इति । शोच्यत्वादौ हेतुमाह—यस्त्वमिति ॥ १३ ॥

१४ ] ति० टी०—शिथिलया कार्याकार्यविवेकासमर्थया बुद्ध्या । एतन्महदन्तरं स्वजनत्यागपरजनाश्रयणजनितदोषतारतम्यं न वेत्सि । तदेव दार्ढ्याय पुनराह—क्व चेति । स्वजनसंवासः । तत्साध्यश्रेयःप्राप्तिरित्यर्थः । जन्मकर्मादिना यः परस्तदाश्रयं प्राप्य नीचो नीचपराश्रयः मयूरव्यंसकादित्वात्समासः ॥ १४ ॥

रा० टी०—नेति । हे नीच क्व स्वजनसंवासः तज्जन्यसुखं क्व पराश्रयः तज्जन्यदुःखमेतत् महदन्तरं शिथिलया मन्दया बुद्ध्योपलक्षितस्त्वं न वेत्सि ॥ १४ ॥

गो० टी०—नैतदिति । शिथिलया कोमलया, तुच्छया वा । अन्तरं तारतम्यम् ॥ १४ ॥

---

१ अप्रविष्टन्यग्रोधमिति गो. पाठः ।

गुणवान्वा परजनः स्वजनो निर्गुणोऽपि वा । निर्गुणः स्वजनः श्रेयान्यः परः पर एव सः ॥ १५ ॥
यः स्वपक्षं परित्यज्य परपक्षं निषेवते । स स्वपक्षे क्षयं याते पश्चात्तैरेव हन्यते ॥ १६ ॥
निरनुक्रोशता चेयं यादृशी ते निशाचर । स्वजनेन त्वया शक्यं पौरुषं रावणानुज ॥ १७ ॥
इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः । अजानन्निव मच्छीलं किं राक्षस विकत्थसे ॥ १८ ॥
राक्षसेन्द्रसुतासाधो पारुष्यं त्यज गौरवात् । कुले यद्यप्यहं जातो रक्षसां क्रूरकर्मणाम् ॥
गुणो यः प्रथमो नृणां तन्मे शीलमराक्षसम् । ॥ १९ ॥
न रमे दारुणेनाहं न चाधर्मेण वै रमे । भ्रात्रा विषमशीलोऽपि कथं भ्राता निरस्यते ॥ २० ॥

---

१५ ] ति० टी०—सत्यमेवं यदि परो नीचः स्यात्तत्राह—गुणवान्वेति । यः परः पर एव स इति । स्वकुलप्रयुक्तव्यवहारे प्राप्ते परोऽनन्तर्भूत एव भवतीत्यर्थः ॥ १५ ॥

रा० टी०—ननु परस्य गुणवत्त्वे तदाश्रयणं युक्तमेवेत्यत आह—गुणवानिति । वा यदि परजनो गुणवान् स्वजनश्च निर्गुणः तदा निर्गुणोऽपि स्वजनः श्रेयान् भवति परो यः सगुणोपि स पर एव स्वकुलेन सह विरोधे भिन्न एव भवतीत्यर्थः॥१५

गो० टी०—ननु परस्य नीचत्वाभावान्न भवदुक्तदोष इत्यत्राह—गुणवानिति ॥ १५ ॥

१६ ] ति० टी०—किं च परपक्षाश्रितस्यान्ते नाश एवेत्याह—य इति ॥ १६ ॥

रा० टी०—य इति । यः परपक्षं निषेवते सः स्वपक्षे क्षयं याते सति तैः परपक्षैरेव हन्यते ॥ १६ ॥

गो० टी०—तदेव वैपम्यं स्वरूपतो दर्शयति—य इति॥१६॥

१७ ] ति० टी०—इयं निरनुक्रोशता होमविघातपूर्वं लक्ष्मणस्य न्यग्रोधप्रवेशकरणेन मद्वधविषया निर्दयता यादृश्यनियोग ते तत्रास्ति तद्विषयं पौरुषं पुरुषयत्नः स्वजनेनैकेन त्वयैव कर्तुं शक्यम्, नान्येन केनापि ॥ १७ ॥

रा० टी०—निरिति । हे रावणानुज यादृशी इयं मद्विघातकारणीभूतलक्ष्मणप्रापिकरणपूर्वकहोमविघातकारणत्वेन प्रतीता निरनुक्रोशता निर्दयता यादृशश्च पौरुषं स्वकीयविघातकोद्यमश्च तादृशं स्वजनेन त्वयैवैकेन शक्यं कर्तुमिति शेषः नान्येनेत्यर्थः ॥ १७ ॥

गो० टी०—निरनुक्रोशतेति । इयं होमविघातपूर्वकं लक्ष्मणस्य न्यग्रोधप्रवेशकरणरूपा निरनुक्रोशता निर्दयता, यादृशी यथा योगा, तादृशं परुषं निर्दयत्वं स्वजनेन बन्धुभूतेन त्वयैव कर्तुं शक्यं, नान्येनेत्यर्थः । यद्वा स्वजने विषये त्वया न शक्यं न कर्तव्यम् । अनुचितं कृतमिति भावः॥१७।१८॥

१८ ] ति० टी०—मच्छीलं मत्स्वभावं जानन्नप्यजानन्निव किं विकत्थसे ॥ १८ ॥

गो० टी०—इतीति । इत्युक्तो विभीषणः प्रत्युवाच तदाकारमाह हे राक्षस मच्छीलमजानन्निव त्वं किं किमर्थं विकत्थसे विरुद्धं भाषसे ॥ १८ ॥

१९ ] ति० टी०—अतोऽसाधो, गौरवात्पितृव्यत्वगौरवमाश्रित्य मद्विषयं पारुष्यं त्यज । यद्वा शूरोऽहमिति गौरवाद्धेतोर्यत्पारुष्यं तत्त्यज । अथ त्वं जातसंत्रद इत्यस्योत्तरमाह—कुल इति । प्रथमो गुणः सत्त्वम् । अराक्षसं रजस्तमःप्रकृतिरक्षःकुलदुर्लभम् ॥ १९ ॥

रा० टी०—राक्षसेति । हे असाधो गौरवात् महदाश्रयणेन मन्महत्वाद्धेतोः पारुष्य रूक्षभाषणं त्यज अर्धं पृथक् ननु मया यथार्थमेवोच्यते न परुषमित्यत आह—कुल इति । यद्यपि रक्षसां कुले अहं जातः तथापि नृणां यः प्रथमो गुणः सत्वमित्यर्थः तत् तन्मयमराक्षसं राक्षसैरलभ्यं मे शीलमस्ति अत एव अधर्मेण धर्मविरुद्धेन न रमे दारुणेन परपीडाकरेण च अहं न रमे सार्धश्लोकएकान्वयी ॥ १९ ॥ २० ॥

गो० टी०—अजानन्निति । गौरवात् गुरोर्भावो गौरवम् । पितृव्यत्वादित्यर्थः ॥ १९ ॥

गो० टी०—कुल इति । रक्षसां कुले यद्यप्यहं जातः, तत् तथापि मे शीलम् अराक्षसम् अक्रूरम् । अयं मे शीलाख्यो गुणः नृणां सत्पुरुषाणाम् प्रथमः मुख्यः ॥ २० ॥

२० ] ति० टी०—किं च स्वजनत्यागदोषस्तव पितुरेवेत्याह—भ्रात्रेति । विषमशीलोऽपि भ्राता कथं निरस्यते, एवमस्ति वा लोके वदेति शेषः । 'भ्रात्रा विषमशीलेन' इति पाठे दारुणकर्मा धर्मारतिरहम् । अन्यथा विषमशीलेन रावणाद्विलक्षणशीलेन भ्रात्रा कथं भ्राता रावणो निरस्यत इत्यर्थं च तार्थ आह ॥ २० ॥

रा० टी०—बन्धुत्यागदोषः तव पितुरेवेति बोधयन्नाह—भ्रातेति । विषमशीलोपि भ्राता कथं निरस्यते त्यज्यते न निरस्यते इत्यर्थः एतेन त्यागादेवाहमिहागत इति सूचितम् तेन तदुक्तदोषाः त्वत्पितर्येवेति ध्वनितम् अर्धं पृथक् ननु ज्येष्ठत्वात्स त्वया न त्यक्तव्य इत्यत आह—धर्मादिति । धर्मात्प्रच्युतं निवृत्तं शीलं यस्य अत एव पापनिश्चयं पुरुषं हस्तादाशीविषमिव त्यक्त्वा सुखमवाप्नोति एतेन स्वविनाशभिया राममर्मापि समागतोहमिति सूचितम् ॥ २१ ॥

गो० टी०—तन्मे शीलमराक्षसमित्युक्तमेव दर्शयति—न रम इति । दारुणेन कर्मणा न रमे । अधर्मेण परपीडाक-

---

१ श्रामे इति गो. पाठः । २ अर्थांमात गो. पाठः । ३ शीलेनेति गो. पाठः ।

धर्मात्प्रच्युतशीलं हि पुरुषं पापनिश्चयम् । त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ॥ २१ ॥
परस्वहरणे युक्तं परदाराभिमर्शकम् । त्याज्यमाहुर्दुरात्मानं वेश्म प्रज्वलितं यथा ॥ २२ ॥
परस्वानां च हरणं परदाराभिमर्शनम् । सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ॥ २३ ॥
महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः । अभिमानश्च रोषश्च वैरित्वं प्रतिकूलता ॥ २४ ॥
एते दोषा मम भ्रातुर्जीवितैश्वर्यनाशनाः । गुणान्प्रच्छादयामासुः पर्वतानिव तोयदाः ॥ २५ ॥
दोषैरेतैः परित्यक्तो मया भ्राता पिता तव । नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता ॥ २६ ॥
अतिमानश्च बालश्च दुर्विनीतश्च राक्षस । बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि ॥ २७ ॥
अद्येदं व्यसनं प्राप्तं यन्मां परुषमुक्तवान् । प्रवेष्टुं न त्वया शक्यं न्यग्रोधं राक्षसाधम ॥ २८ ॥

---

रेण च कर्मणा न रमे । न केवलं मय्येव दोषः रावणेपी-त्याह—भ्रात्रेति । निरस्यते । त्वां तु धिक्कुलपांसनमिति वचनेनेत्यर्थः ॥ २१ ॥

२१] ति०टी०—ननु दुःशीलस्यत्यजन एवेति चेद्भवतु सुशीलस्य मम त्यागोऽनुचित एवेत्याशयेनाह-धर्मादिति ॥ २१ ॥

गो० टी०—इन्द्रजिदुक्तस्वदोषपरिहाराय परित्यागहेतून् रावणदोषानाह—धर्मादित्यादिना ॥ २२ ॥

२२ ] ति० टी०—मया तु तस्य त्यागो न्याय्य एवेत्याह परस्वेति ॥ २२ ॥

रा० टी०—यथाशास्त्रमेव मयाचरितमिति बोधयन्नाह—परेत्यादिभिः । प्रज्वलितं वेश्मेव दुरात्मानं त्याज्यमाहुः शास्त्राणीति शेषः ॥ २२ ॥

गो० टी०—हिंसेति । हिंसा च परस्वहरणं च ते हिंसा-परस्वहरणे । हिंसादिरूपं दुराचाररूपं कर्म त्याज्यमाहुः । तद्युक्तस्त्याज्य इत्यर्थः ॥ २३ ॥

२३ ] ति० टी०—स्वकुलनाशनं कृतं त्वयेत्यस्योत्तरमाह—परस्वानामिति । सुहृदामतिशङ्कानिष्टत्वशङ्का । एवं च भवदीयाधर्म एव भवन्नाशकः, न त्वहमिति भावः ॥ २३ ॥

रा० टी०—तव पिता स्वकर्मणैवावश्यं विनङ्क्ष्यतीति बोधयन्नाह—परेति । हरणादयः त्रयो दोषाः क्षयावहाः विनाशकारकाः तेन तत्र स्थितौ तत्पापाकर्तॄणामपि विध्वंसो भवतीति सूचितम् तेन पापिनां संसर्गो न कार्य इति ध्वनितम् ॥ २३ ॥

गो० टी०—परस्वानामिति । सुहृदामतिशङ्का सुहृत्स्वविश्वासः ॥ २४ ॥

२४ ] ति० टी०—पुनः स्पष्टमेव रावणीयादोषाद्भवतां सर्वेषां नाश इत्याह—महर्षीणामिति । अभिमानो गर्वः वैरित्वं दीर्घवैरम् प्रतिकूलता हितवक्तृषु प्रतिकूलबुद्धिता ॥ २४ ॥

२५ ] ति० टी०—गुणानभिजनविद्याबलवत्त्वादिगुणान् ॥ २५ ॥

रा० टी०—ननु वेदाध्ययनादिगुणा अपि रावणे सन्तीति कथं सर्वथा विनाश इत्यत आह—महर्षीणामिति । जीवितैश्वर्यनाशना एते वधादयो मम भ्रातुर्दोषाः पर्वतान् तोयदा इव गुणान्प्रच्छादयामासुः अत एव लङ्काप्रभृतिर्नास्ति आसन्नविनाशोऽस्तीत्यर्थः एतैर्दोषैरेव हेतुभिर्मया भ्राता परित्यक्तः तत्र विग्रहः कलहः वैरत्वमाजन्मानिष्टमनस्कत्वं प्रतिकूलता विरुद्धाचरणं श्लोकत्रयमेकान्वयि ॥ २४-२६ ॥

गो० टी०—दोषवत्तया यदि त्याज्यस्त्वं, तर्ह्यभिजनविद्यादिगुणवत्तया किमिति न ग्राह्यत्वमित्यत आह- महर्षीणामिति सार्धश्लोकद्वयमेकान्वयम् । अभिमानः गर्वः वैरित्वं बद्धवैरत्वम् प्रतिकूलता परश्रेयोद्वेषित्वम् तथा चाभिजनविद्यादिगुणवत्त्वेपि परस्त्रीहरणादिदोषदूषिततया विषसंपृक्तमधुवत् ग्राह्योयमिति भावः ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—नेयमस्तीति । इदं मया पूर्वोक्तमिति शेषः ॥ २६ ॥

गो० टी०—नेयमस्तीत्यादि । उत्तरक्षणे अवश्यं न शिष्यतीत्यर्थः ॥ २७-२९ ॥

२७ ] ति० टी०—यद्यत् । परुषमित्यर्थः ॥ २७ ॥

रा० टी०—अतीति । अतिमानत्वादिविशिष्टः अत एव कालपाशेन बद्धस्त्वं यद्यत् परुषमिच्छसि तत्तद्ब्रूहि ॥ २७ ॥

२८ ] ति० टी०—यन्मां परुषमुक्तवांस्त्वं पुरा तस्मात्तेऽद्य व्यसनं प्राप्तम् । संप्रत्युच्यमानपारुष्यफलं तु कालान्तरे भविष्यतीति शेषः । व्यसनं प्राप्तमित्येतदेव द्रढयति—प्रवेष्टुमिति । पुनरभिचारायेति शेषः ॥ २८ ॥

रा० टी०—स्वत्यागस्य तद्विनाशहेतुत्वमाह—अद्येति । यत् परुषमुक्तवान् मत्यागसमये कथितवान् तस्मादेव अद्य व्यसनं त्वया प्राप्तमनेन इदानीन्तनपरुषभाषणफलमग्रे भविष्यतीति सूचितम् अर्द्धं पृथक् ॥ २८ ॥

रा० टी०—व्यसनस्वरूपमाह—प्रवेष्टुमिति । न्यग्रोधः प्रवेष्टुं त्वया न शक्यः ननु मामन्तु गोप्स्याम्येवेत्यत आह का-कुत्स्थं लक्ष्मणं धर्षयित्वा त्वया जीवितुं न शक्यम् ॥ २९ ॥

---

१ हिंसापरस्वहरणे इति गो.पाठः। २ वैरित्वमिति गो.पाठः। ३ मानीति गो.रा.पाठः। ४ अवेते इति गो.पाठः। ५ शक्यो न्यग्रोध इति गो.रा.पाठः।

धर्षयित्वा च काकुत्स्थं न शक्यं जीवितुं त्वया । युध्यस्व नरदेवेन लक्ष्मणेन रणे सह ॥
हतस्त्वं देवताकार्यं करिष्यसि यमक्षयम् ॥ २९ ॥
निदर्शयित्वात्मबलं समुद्यतं कुरुष्व सर्वायुधसायकव्ययम् ।
न लक्ष्मणस्यैत्य हि बाणगोचरं त्वमद्य जीवन्सबलो गमिष्यसि ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

## अष्टाशीतितमः सर्गः ।

लक्ष्मणेन्द्रजितोः परस्परजयैषिणोर्महान्तमप्यगणयतो रणक्रममदृष्टचरो रणोऽत्र वर्ण्यते ।

विभीषणवचः श्रुत्वा रावणिः क्रोधमूर्च्छितः । अब्रवीत्परुषं वाक्यं क्रोधेनाभ्युत्पपात च ॥ १ ॥
उद्यतायुधनिस्त्रिंशो रथे सुसमलंकृते । कालाश्वयुक्ते महति स्थितः कालान्तकोपमः ॥ २ ॥
महाप्रमाणमुद्यम्य विपुलं वेगवद्दृढम् । धनुर्भीमबलो भीमं शरांश्चामित्रनाशनान् ॥ ३ ॥
तं ददर्श महेष्वासो रथस्थः समलंकृतः । अलंकृतममित्रघ्नो रावणस्यात्मजो बली ॥ ४ ॥
हनूमत्पृष्ठमारूढमुदयस्थरविप्रभम् । उवाचैनं सुसंरब्धः सौमित्रिं सविभीषणम् ॥ ५ ॥
तांश्च वानरशार्दूलान्पश्यध्वं मे पराक्रमम् । अद्य मत्कार्मुकोत्सृष्टं शरवर्षं दुरासदम् ॥ ६ ॥

---

२९-३० ] ति० टी०-अत्र हतो यमक्षयं यमगृहं गतः सन्देवताकार्यं सर्वदेवानां संतोषरूपं करिष्यसि ॥ २९ ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

रा० टी०-युध्यस्वेति । लक्ष्मणेन युध्यस्व अत एव हतस्त्वं यमक्षये देवतानां कार्यं सन्तोषं करिष्यसि ॥ ३० ॥

रा० टी०-निदर्शयित्वेति । समुद्यतं प्रवृद्धमात्मबलं निदर्शयित्वा निदर्श्य सर्वायुधसायकव्ययं कुरुष्व त्वन्तु लक्ष्मणस्य बाणगोचरं शरविषयत्वमेत्य प्राप्य जीवन्न गमिष्यसि ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

गो० टी०-धर्षयित्वेत्यादि । देवताकार्यं यमदूतरूपदेवताकार्यम् नरकयातनानुभवं वा ॥ ३० ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

१ ] ति० टी०-अब्रवीत्परुषमिति । विभीषणमिति शेषः । तच्च वक्ष्यमाणम् ॥ १ ॥

रा० टी०-इन्द्रजितं प्रति विभीषणवचनानन्तरकालिकं वृत्तान्तमाह—विभीषणेति । रावणिः परुषमब्रवीत् अभ्युत्पपात च ॥ १ ॥

गो० टी०-अथेन्द्रजिल्लक्ष्मणयुद्धम्—विभीषणवच इत्यादि । अभ्युत्पपात अभिमुखमुज्जगाम ॥ १ ॥

२-३ ] ति०टी०-उद्यतायुधनिस्त्रिंशः । उद्यतायुधो निस्त्रिंशो निर्घृणश्चेत्यर्थ इति कतकः । उद्यतान्यायुधानि निस्त्रिंशश्च येन सः । गोबलीवर्दवत्प्रयोग इत्यन्ये ॥ २ ॥ ३ ॥

रा० टी०-उद्यतेति । उद्यतान्यायुधानि निस्त्रिंशः खड्गश्च यस्य गोबलीवर्दन्यायेन विशिष्योपादानं स इन्द्रजित् महत्प्रमाणं यस्य तद्धनुः शरांश्च उद्यम्य कालाश्वैर्युक्ते रथे स्थितोऽभवदिति शेषः श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०-कीदृग्भूतोभ्युज्जगामेत्यत्राह—उद्यतेत्यादिश्लोकद्वयेन । सुसमलंकृते सुष्ठु समन्तात् अलंकृते । महाप्रमाणं महादीर्घम्, धनुरुद्यम्य शरान् परामृश्य गृहीत्वा अभ्युज्जगाम अब्रवीच्चेत्यन्वयः । अमित्रान् शत्रून् शातयन्ति खण्डयन्तीत्यमित्रशातनान् ॥ २ ॥ ३ ॥

४ ] ति० टी०-तं सविभीषणं लक्ष्मणम् । अलंकृतं स्वतेजोभूषितम् ॥ ४ ॥

रा० टी०-तमिति । समलंकृतो रावणस्यात्मजः अलङ्कृतं स्वाभाविकालंङ्कारविशिष्टं तमागतं लक्ष्मणं ददर्श ॥ ४ ॥

गो० टी०-तमित्यादि । रथे स्थित इति शेषः । अलंकृतं स्वतेजसा भूषितम् । हनुमत्पृष्ठमासीनमित्यनुवादेन हनुमान् पूर्वं राक्षसैर्युद्ध्वा इन्द्रजित्यागते लक्ष्मणं स्वपृष्ठभागमारोप्य स्थितवानिति गम्यते । उदयस्थरविप्रभमित्यनेन हनुमतः काञ्चनाकृतित्वं लक्ष्मणस्य रविवर्णत्वं चोक्तम् ॥ ४ ॥

५ ] ति० टी०-उवाचेत्यादिनाब्रवीत्परुषं वाक्यमिति प्रागुक्तस्यैव विवरणम् ॥ ५ ॥

६ ] ति० टी०-तांश्च वानरशार्दूलानुवाचेत्यनुकर्षः ॥ ६ ॥

---

१ काकुत्स्थाविति गो. पाठः । २ क्षय इति गो. रा. पाठः । ३ वेगेनेति गो. पाठः । ४ भीमं परामृश्येति गो. पाठः । ५ शातनानिति गो. रा. पाठः । ६ रथेस्थितेति गो. पाठः । ७ अमित्रघ्न रावणस्यानुजमिति गो. पाठः । ८ समारब्ध इति गो. सुसंरब्धमिति रा. पाठः ।

मुक्तवर्षमिवाकाशे धारयिष्यथ संयुगे । अद्य वो मामका बाणा महाकार्मुकनिःसृताः ॥
विधमिष्यन्ति गात्राणि तूलराशिमिवानलः ॥ ७ ॥
तीक्ष्णसायकनिर्भिन्नाञ्शूलशक्त्यृष्टितोमरैः । अद्य वो गमयिष्यामि सर्वानेव यमक्षयम् ॥ ८ ॥
सृजतः शरवर्षाणि क्षिप्रहस्तस्य संयुगे । जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः ॥ ९ ॥
रात्रियुद्धे तदा पूर्वं वज्राशनिसमैः शरैः । शायितौ तौ मया भूयो विसंज्ञौ सपुरःसरौ ॥ १० ॥
स्मृतिर्न तेऽस्ति वा मन्ये व्यक्तं यातो यमक्षयम् । आशीविषसमं क्रुद्धं यन्मां योद्धुमुपस्थितः ॥ ११ ॥
तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं राघवस्तदा । अभीतवदनः क्रुद्धो रावणिं वाक्यमब्रवीत् ॥ १२ ॥
उक्तश्च दुर्गमः पारः कार्याणां राक्षस त्वया । कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् ॥ १३ ॥

---

रा० टी०—हनुमदिति । सुसंरब्धः कृतयुद्धोद्योगो रावणिः एवं लक्ष्मणं वानरशार्दूलांश्च उवाच तदाकारमाह पराक्रमं रिपुविघातकं मुक्तवर्षं मेघच्युतवृष्टिमिव मे शरवर्षं पश्यध्वं धारयिष्यथ च सार्द्धश्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—उवाचैनमिति । त्रिपादश्लोक एकान्वयः । एतन्नवीत् परुषमिति पूर्वोक्तस्य विवरणं न भवति । तद्विभीषणमात्रं प्रति । इदं तु सर्वान् प्रति । तच परुषम् । इदं तु पराक्रमविषयम् । समारब्धः संरब्धः । पश्यध्वमिति । मुक्तं मेघमुक्तम् । धारयिष्यथेत्येतत् सापहासोक्तिः ॥ ५ ॥ ६ ॥

७–९ ] ति० टी०—मुक्तवर्षं मेघोत्सृष्टवर्षम् ॥ ७–९ ॥

रा० टी०—अद्येति । मामका बाणाः वो गात्राणि विधमिष्यन्ति ॥ ७ ॥

गो० टी०—अद्येति । वः युष्माकम् । विधमिष्यन्ति धक्ष्यन्ति ॥ ७ ॥

रा० टी०—तीक्ष्णेति । शूलादिभिरुपलक्षितांस्तीक्ष्णसायकनिर्भिन्नान् वो युष्मान् यमक्षयं गमयिष्यामि ॥ ८ ॥

गो० टी०—तीक्ष्णेति । तीक्ष्णसायकेति लुप्तविभक्तिकं पदम् । तीक्ष्णसायकैरित्यर्थः । शूलशक्त्यष्टितोमरैः इत्यत्र शक्तियष्टितोमरैरित्यर्थः । सन्धिरार्षः । तीक्ष्णसायकैः शूलशक्त्यष्टितोमरैश्च निर्भिन्नान् वः युष्मान्, यमक्षयं यमनिलयम्, गमयिष्यामीत्यन्वयः ॥ ८ ॥

रा० टी०—सृजत इति । क्षिप्रहस्तस्य शरवर्षाणि सृजतो ममाग्रतः कः स्थास्यति न कोपीत्यर्थः ॥ ९ ॥

गो० टी०—क्षिपत इति । जीमूतस्येति नादमात्रे दृष्टान्तः ॥ ९ ॥

१० ] ति० टी०—सपुरःसरौ सुग्रीवादिप्रधानसहितौ । युवां भ्रातराविति शेषः ॥ १० ॥

रा० टी०—स्वोक्तेऽर्थे विश्वासं संपादयितुमाह—रात्रीति द्वाभ्यां पूर्वरात्रियुद्धे सपुरस्सरौ युवां मया शरैः शायितौ अत एव विसञ्ज्ञौ स्थः ॥ १० ॥

गो० टी०—रात्रीति । आग्रहातिशयेन मयेति द्विरुक्तिः १० ॥

११ ] ति० टी०—एवमपि यन्मां योद्धुमुपस्थितोऽसि तत्प्रायः पूर्वस्य ते स्मृतिर्नास्ति । वाथवा व्यक्तं यातो यमक्षयम् । आदिकर्मणि क्तः । यमक्षयं यमगृहं प्रयातुमुपक्रान्तोऽसि ॥ ११ ॥

रा० टी०—स्मृतिरिति । यद्यस्माद्धेतोः मां योद्धुमुपस्थितः पुनः प्राप्तः अतः ते स्मृतिः पूर्वशायनस्मरणं नास्ति यत् यस्मात् यमक्षयं यातो भविष्यसीति शेषः अत एव मां योद्धुमुपस्थितोसि इत्यहं मन्ये ॥ ११ ॥

गो० टी०—स्मृतिरिति । यन्मां योद्धुं व्यवस्थितः, अतः स्मृतिर्नास्तीति वा मन्ये । अथ वा यमसादनं यमप्रापणम् । व्यक्तं प्रत्यक्षं प्रत्यासन्नमिति यावत् । यद्वा सादनम् सदनम् । स्वार्थेण्प्रत्ययः ॥ ११ ॥

१२ ] ति० टी०—अभीतवदनो निर्भयप्रवृत्ताभिवदनव्यवहारः ॥ १२ ॥

रा० टी०—तदिति । राघवो रावणिमब्रवीत् ॥ १२ ॥

गो० टी०—तच्छ्रुत्वेति । अभीतवदनः भयविकृतिशून्यवदनः ॥ १२ ॥

१३ ] ति० टी०—च यस्मात्त्वया कार्याणां शत्रुवधादिकार्याणां पारोऽन्तः समाप्तिरुक्तो वाचा जल्पितः, स पारस्त्वया कर्मणा दुर्गम एव दुष्प्राप एव। कुतस्तत्राह—कार्याणामिति । यः कार्याणां पारं कर्मणा गच्छति स बुद्धिमान् ॥ १३ ॥

रा० टी०—तदाकारमाह—उक्त इत्यादिभिः । कार्याणां त्वदुक्तास्मत्कर्मकविजयादीनां पारः पूर्तिः त्वया दुर्गमः कर्त्तुमशक्यः ननु किं तेनेत्यत आह कार्याणां कर्त्तव्यानां यः पारं गच्छति स एव बुद्धिमानुक्तः एतेन त्वं निर्बुद्धिरसीति सूचितम् १३

गो० टी०—उक्तश्चेति । दुर्गमः दुर्लभः । कार्याणां यमप्रापणादीनाम् । पारः निर्वाहः । उक्तश्च उक्त एव, न कृतः । अतो दुर्बुद्धिरसीत्यर्थः । कस्तर्हि बुद्धिमानित्यत आह—कार्याणामिति । कार्याणां कर्मणाम्, आचरणेनेत्यर्थः ॥ १३ ॥

---

१ मुक्तं वर्षमिति गो. पाठः । २ तोमरैरिति गो. पट्टिशैरिति रा. पाठः । ३ क्षिपत इति गो.पाठः । ४ मे युधीति गो.पाठः । ५ मयेति गो.पाठः ।
६ स्थो मया भूमाविति गो. रा. पाठः । ७ वा यमसादनमिति गो. पाठः । ८ इवेति गो. समाक्रुद्धमिति रा. पाठः । ९ व्यवस्थित इति गो. पाठः ।
१० लक्ष्मण इति गो. पाठः । ११ कर्मणामिति रा. पाठः ।

स त्वमर्थस्य हीनार्थो दुरवापस्य केनचित् । वाचा व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते ॥ १४ ॥
अन्तर्धानगतेनाजौ यत्त्वया चरितस्तदा । तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ १५ ॥
यथा बाणपथं प्राप्य स्थितोऽस्मि तव राक्षस । दर्शयस्वाद्य तत्तेजो वाचा त्वं किं विकत्थसे ॥ १६ ॥
एवमुक्तो धनुर्भीमं परामृश्य महाबलः । ससर्ज निशितान्बाणानिन्द्रजित्समितिंजयः ॥ १७ ॥
तेन सृष्टा महावेगाः शराः सर्पविषोपमाः । संप्राप्य लक्ष्मणं पेतुः श्वसन्त इव पन्नगाः ॥ १८ ॥
शरैरतिमहावेगैर्वेगवान्रावणात्मजः । सौमित्रिमिन्द्रजिद्युद्धे विव्याध शुभलक्षणम् ॥ १९ ॥
स शरैरतिविद्धाङ्गो रुधिरेण समुक्षितः । शुशुभे लक्ष्मणः श्रीमान्विधूम इव पावकः ॥ २० ॥
इन्द्रजित्त्वात्मनः कर्म प्रसमीक्ष्याभिगम्य च । विनद्य सुमहानादमिदं वचनमब्रवीत् ॥ २१ ॥
पत्रिणः शितधारास्ते शरा मत्कार्मुकच्युताः । आदास्यन्तेऽद्य सौमित्रे जीवितं जीवितान्तकाः ॥ २२ ॥
अद्य गोमायुसङ्घाश्च श्येनसङ्घाश्च लक्ष्मण । गृध्राश्च निपतन्तु त्वां गतासुं निहतं मया ॥ २३ ॥
क्षत्रबन्धुं सदानार्यं रामः परमदुर्मतिः । भक्तं भ्रातरमद्यैव त्वां द्रक्ष्यति हतं मया ॥ २४ ॥
विस्रस्तकवचं भूमौ व्यपविद्धशरासनम् । हृतोत्तमाङ्गं सौमित्रे त्वामद्य निहतं मया ॥ २५ ॥
इति ब्रुवाणं संक्रुद्धः परुषं रावणात्मजम् । हेतुमद्वाक्यमर्थज्ञो लक्ष्मणः प्रत्युवाच ह ॥ २६ ॥

---

१४ ] ति० टी०—स त्वं हीनार्थः क्रियाकार्यनिष्पादनासमर्थः केनचिदपि दुरवापस्य मद्विजयरूपस्यार्थस्य सिद्धिं वाचा व्याहृत्य दुर्मते कृतार्थोऽस्मीति जानीषे ॥ १४ ॥

रा० टी०—स इति । हीनार्थः निषिद्धवक्ता स निर्बुद्धिस्त्वं केनचित् दुरवापस्यार्थस्य मत्कर्मकविजयस्य वाचा व्याहृत्य कृतार्थोस्मीति जानीषे कर्मणः शेषत्वेन विवक्षया षष्ठी ॥ १४ ॥

गो० टी०—स त्वमिति । अर्थस्येति तादर्थ्यसंबन्धे षष्ठी । अर्थस्य वचः प्रयोजनार्थम् वचः ॥ १४ ॥

१५-१७ ] ति० टी०—अथ शायिताविति यत्त्वयोक्तं सा तेऽपकीर्तिरेवेत्याह—अन्तरिति । आजौ रणेऽन्तर्धानगतेन त्वया यत्र आचरित एष तस्करादिचरितो मार्गो न वीरनिषेवितः ॥ १६-१७ ॥

रा० टी०—ननु पूर्ववदिदानीमपि त्वां जेष्यास्म्येवेत्यत आह—अन्तर्धानेति । अन्तर्धानगतेन त्वया पुरा पूर्वं य आचरितः कृतः स मार्गः तस्कराचरितः अत एव न वीरनिषेवितः एतेन चुरया कर्मकर्तृत्वादेव मया पूर्वं त्वं न हत इति सूचितम् ॥ १५ ॥

गो० टी०—दृष्टेप्यस्मत्पराक्रमे कथमित्थं कथ्यत इत्याशङ्क्य मायामयत्वान्न स वीरसंमत इत्याह—अन्तर्धानेति । आजौ युद्धे ॥ १५ ॥

रा० टी०—यथेति । तव बाणपथं प्राप्य यथा यथावत् स्थितोस्मि अतः तत् पूर्वकृतं तेजः पराक्रमं दर्शयस्व ॥ १६ ॥

रा० टी०—एवमिति । एवमुक्त इन्द्रजित् धनुः परामृश्य दृढं गृहीत्वा बाणान् ससर्ज ॥ १७ ॥

गो० टी०—प्रत्यक्षेणापि योद्धुं शक्तोस्मीत्यत आह—यथेति । यथा स्थितोस्मि तथैव, तत्तेजः पूर्वकृतं तेजः दर्शयस्वेत्यन्वयः ॥ १६ ॥ १७ ॥

१८-२४ ] ति० टी०—लक्ष्मणं संप्राप्य पेतुः । कवचेनाहता इति शेषः ॥ १८-२४ ॥

रा० टी०—तेनेति । तेनेन्द्रजिता सृष्टाश्शराः लक्ष्मणं संप्राप्य पेतुः ॥ १८ ॥

गो० टी०—त इति । सर्पविषोपमाः सर्पविषवद् घोराः पेतुः । भूमाविति शेषः ॥ १८ ॥

रा० टी०—शरैरिति । इन्द्रजित् सौमित्रिं शरैर्विव्याध ताडयामास ॥ १९ ॥

रा० टी०—स इति । शरैरतिविद्धाङ्गस्सन्ताडितशरीरः अत एव रुधिरेण क्रोधहेतुकारुण्यवर्णेन समुत्थितो व्याप्तः लक्ष्मणः पावक इव शुशुभे ॥ २० ॥

गो० टी०—शरैरिति । अतिविव्याधेत्यन्वयः । "व्यवहिताश्च" इति व्यवहितप्रयोगः ॥ १९ ॥ २० ॥

रा० टी०—इन्द्रजिदिति । इन्द्रजित् आत्मनः कर्म ताडनं प्रसमीक्ष्य अभिगम्य सम्मुखे च इदमब्रवीत् ॥ २१ ॥

रा० टी०—तदाकारमाह—पत्रिण इत्यादिभिः । मत्कार्मुकच्युताः शराः ते जीवितमादास्यन्ते ॥ २२ ॥

रा० टी०—अद्येति । मया निहतमत एव गतासुं त्वां गोमायुसङ्घादयो निपतन्तु ॥ २३ ॥

रा० टी०—क्षत्रेति । रामः भ्रातरं त्वां मया हतं द्रक्ष्यति २४

गो० टी०—इन्द्रजित्त्विति । अधिगम्य फलवत्त्वेन दृष्ट्वा ॥ २१-२४ ॥

२५-२६ ] ति० टी०—त्वामद्येति । द्रक्ष्यतीत्यनुकर्षः २५-२६

---

१ स इति गो. रा. पाठः । २ निसृष्टा इति गो. पाठः । ३ अधीति गो. पाठः । ४ अन्तगा इति गो. पाठः । ५ मया हतमिति गो. पाठः । ६ संरब्धमिति गो. सौमित्रिरिति रा. पाठः । ७ अत्यर्थमिति गो. पाठः ।

वाग्बलं त्यज दुर्बुद्धे क्रूरकर्मन्हि राक्षस । अथ कस्माद्वदस्येतत्संपादय सुकर्मणा ॥ २७ ॥
अकृत्वा कत्थसे कर्म किमर्थमिह राक्षस । कुरु तत्कर्म येनाहं श्रद्धेयं तव कत्थनम् ॥ २८ ॥
अनुक्त्वा परुषं वाक्यं किंचिदप्यनवक्षिपन् । अविकत्थन्वधिष्यामि त्वां पश्य पुरुषादन ॥ २९ ॥
इत्युक्त्वा पञ्च नाराचानाकर्णापूरिताञ्शरान् । विजघान महावेगाल्लक्ष्मणो राक्षसोरसि ॥ ३० ॥
सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः । नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा ॥ ३१ ॥
स शरैराहतस्तेन सरोषो रावणात्मजः । सुप्रयुक्तैस्त्रिभिर्बाणैः प्रतिविव्याध लक्ष्मणम् ॥ ३२ ॥
स बभूव महाभीमो नरराक्षससिंहयोः । विमर्दस्तुमुलो युद्धे परस्परजयैषिणोः ॥ ३३ ॥
विक्रान्तौ बलसंपन्नावुभौ विक्रमशालिनौ । उभौ परमदुर्जयावतुल्यबलतेजसौ ॥ ३४ ॥
युयुधाते तदा वीरौ ग्रहाविव नभोगतौ । बलवृत्राविव हि तौ युधि वै दुष्प्रधर्षणौ ॥ ३५ ॥
युयुधाते महात्मानौ तदा केसरिणाविव । बहूनवसृजन्तौ हि मार्गणौघानवस्थितौ ॥
नरराक्षसमुख्यौ तौ प्रहृष्टावभ्ययुध्यताम् ॥ ३६ ॥

रा० टी०-विध्वस्तेति । विध्वस्तकवचं हतमुत्तमाङ्गं शिरो यस्य अत एव मया निहतं त्वां रामो द्रक्ष्यतीत्यवकृष्यते यदि तु हतमित्यस्य ताडनमर्थः निहतमित्यस्य प्राणैर्वियुक्तमर्थस्तदा द्वयोरेकत्रान्वयः ॥ २५ ॥

रा० टी०-इतीति । अर्थज्ञः सौमित्रिः इति परुषं ब्रुवाणमिन्द्रजितं हेतुमद्वाक्यं प्रत्युवाच ॥ २६ ॥

गो० टी०-विशस्तेति । विशस्तं भिन्नं कवचं यस्य तं त्वाम् रामो द्रक्ष्यतीत्यनुषङ्गेण योजना ॥ २६ ॥ २६ ॥

२७-२८ ] ति० टी०-क्रूरकर्मन्क्रूरयुद्धव्यापारकर्तः, एतद्वृथावचनं कस्माद्वदसि सर्वं सुकर्मणैव संपादय ॥२७॥२८॥

रा० टी०-तदाकारमाह—वागिति । वाग्बलं त्यज निरर्थकमेतदित्यर्थः अथातः एतत् कस्माद्वदसि सुकर्मणा संपादयस्वोक्तसिद्धिं कुरु ॥ २७ ॥

रा०टी०-अकृत्वेति । तव कत्थनं येन श्रद्धेयं तत्कर्म कुरु २८

गो० टी०-वाग्बलमिति । अथ इदानीम् ॥ २७-३० ॥

२९-३० ] ति० टी०-अनवक्षिपन्नीषदपि निन्दामकुर्वन् । अविकत्थन्स्वश्लाघामकुर्वन् ॥ २९ ॥ ३० ॥

रा० टी०-अनुक्तेति । अविकत्थन् स्वश्लाघामकुर्वन्नहं त्वां वधिष्यामि ॥ २९ ॥

रा० टी०-इतीति । लक्ष्मणः राक्षसोरसि पञ्च नाराचान् निजघान ॥ ३० ॥

३१-३२ ] ति० टी०-सुपत्रवाजिताः सुपत्रैः कङ्कादिपत्रैः संजातवेगाः ॥ ३१ ॥ ३२ ॥

रा० टी०-सुपत्रेति । शोभनानि पत्राणि वाजिता वेगाश्च येषां ते बाणाः नैर्ऋतोरसि अभासन्त ॥ ३१ ॥

रा० टी०-स इति । शरैराहतो रावणात्मजः त्रिभिर्बाणैः लक्ष्मणं प्रति विव्याध ॥ ३२ ॥

गो० टी०-सुपत्रेति । सुपत्रवाजिताः सुपत्रैः संजातवेगाः ॥ ३१ ॥ ३२ ॥

३३ ] ति० टी०-विमर्दः संघर्षः ॥ ३३ ॥

रा० टी०-स इति । नरराक्षससिंहयोः तुमुलो विमर्दः परस्परताडनं बभूव ॥ ३३ ॥

गो० टी०-स इति । विमर्दः संघर्षः ॥ ३३ ॥

३४ ] ति० टी०-विक्रान्तौ कृतपराक्रमौ ॥ ३४ ॥

३५ ] ति० टी०-बलवृत्रौ । बल इन्द्रः ॥ ३५ ॥

रा० टी०-विक्रान्ताविति । विक्रान्तौ कृतविक्रमावुभौ इन्द्रजिल्लक्ष्मणौ ग्रहाविव बलवृत्राविव च युयुधाते तत्र बल इन्द्रः श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०-उभौ हीत्यादिसार्धश्लोक एकान्वयः । सुविक्रान्तौ सुष्ठुपराक्रमौ ॥ ३४ ॥ ३५ ॥

३६ ] ति० टी०-'नरराक्षसमुख्यौ तौ प्रहृष्टावभ्ययुध्यताम्' इत्युत्तरं श्लोकद्वयं भिन्नवृत्तं प्रक्षिप्तम् । तदुत्तरं सर्गावच्छेदश्चासंप्रदायः । तयोर्युद्धस्यैवाग्रे सत्त्वेन प्रकरणान्तराभावादिति कतकः ॥ ३६ ॥

रा० टी०-युयुधात इति । मार्गणौघान् शरसमूहान् अवसृजन्तौ केसरिणाविव युयुधाते ॥ ३६ ॥

रा० टी०-नरेति । नरराक्षसमुख्यौ प्रहृष्टौ सन्तौ अभ्ययुद्धयतामद्य पृथक् ॥ ३७ ॥

गो० टी०-युयुधाते इत्याद्यर्धम् ॥ ३६ ॥

गो० टी०-बलेति । बलशब्दो बलशत्रिन्द्रपरः । नामैकदेशे नामग्रहणात् ॥ ३७ ॥ ३८ ॥

रा० टी०-सुसंप्रहृष्टाविति । तौ नरराक्षसमुख्यौ बलाहकौ मेघाविव शरवर्षेण प्रववर्षतुः प्रववृषतुः ॥ ३८ ॥

रा० टी०-अथेति । युद्धकोविदौ अत एव प्रयुद्धौ शरैर-

१ क्रूरकर्मासीति गो. पाठः । २ श्रद्धध्यामिति गो. पाठः । ३ अथमेत गो. आदकेति रा. पाठः । ४ शितानिति गो. रा. पाठः । ५ स्विति गो. रा. पाठः । ६ तदेति गो.पाठः । ७ उभौ हि बलसंपन्नाविति गो.पाठः । ८ अभीताविति गो.पाठः। ९ ताविति गो. रा.पाठः । १० सिंहाविति गो.पाठः।

[ सुसंप्रहृष्टौ नरराक्षसोत्तमौ जयैषिणौ मार्गणचापधारिणौ ।
परस्परं तौ प्रववर्षतुर्भृशं शरौघवर्षेण बलाहकाविव ॥
अभिप्रवृद्धौ युधि युद्धकोविदौ शरासिचण्डौ शितशस्त्रधारिणौ ।
अभीक्ष्णमाविव्यधतुर्महाबलौ महाहवे शम्बरवासवाविव ॥

ततः शैरान्दाशरथिः संधायामित्रकर्षणः । ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ॥ ३७ ॥
तस्य ज्यातलनिर्घोषं स श्रुत्वा राक्षसौधिपः । विवर्णवदनो भूत्वा लक्ष्मणं समुदैक्षत ॥ ३८ ॥
विषण्णवदनं दृष्ट्वा राक्षसं रावणात्मजम् । सौमित्रिं युद्धसंयुक्तं प्रत्युवाच विभीषणः ॥ ३९ ॥
निमित्तान्युपपश्यामि यान्यस्मिन्रावणात्मजे । त्वर तेन महाबाहो भग्न एष न संशयः ॥ ४० ॥
ततः संधाय सौमित्रिः शैरानाशीविषोपमान् । मुमोच विशिखांस्तस्मिन्सर्पानिव विषोल्बणान् ॥ ४१ ॥
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः । मुहूर्तमभवन्मूढः सर्वसंक्षुभितेन्द्रियः ॥ ४२ ॥
[ उपलभ्य मुहूर्तेन संज्ञां प्रत्यागतेन्द्रियः । ]
ददर्शावस्थितं वीरमाजौ दशरथात्मजम् । सोऽभिचक्राम सौमित्रिं रोषात्संरक्तलोचनः ॥ ४३ ॥
अब्रवीच्चैनमासाद्य पुनः स परुषं वचः । किं न स्मरसि तद्युद्धे प्रथमे मत्पराक्रमम् ॥
निबद्धस्त्वं सह भ्रात्रा यदा युधि विचेष्टसे ॥ ४४ ॥

तिचण्डौ शम्बरवासवोपमौ नरराक्षसमुख्यौ अभीक्ष्णमाविव्यधतुः ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

गो० टी०—सुसंप्रहृष्टाविति । शरौघः, मेघपक्षे जलौघः। शरशब्दो हि जलवाची । शरधिरिति समुद्रपर्यायात् ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाशीतितमः सर्गः ॥ ८८ ॥

३७–३८ ] ति० टी०—ततः शरानिति ॥ ३७ ॥ ३८ ॥

रा० टी०—युद्धमेव वर्णयन्नाह—तत इत्यादिभिः । दाशरथिः राक्षसेन्द्राय शरान् ससर्ज ॥ १ ॥

रा० टी०—तस्येति । राक्षसाधिपः तस्य लक्ष्मणस्य ज्यातलनिर्घोषं श्रुत्वा अत एव विवर्णवदनो भूत्वा लक्ष्मणं समुदैक्षत ॥ २ ॥

गो० टी०—अथ लक्ष्मणेन्द्रजितोः सुमहान् संप्रहारः—ततः शरमित्यादि ॥ १ ॥ २ ॥

३९ ] ति० टी०—युद्धसंयुक्तं युद्धजनकहर्षयुक्तम् ॥ ३९ ॥

रा० टी०—विषण्णेति । रावणात्मजं विषण्णवदनं दृष्ट्वा सौमित्रिं प्रत्युवाच ॥ ३ ॥

गो० टी०—तमिति । सौमित्रिं प्रति उद्दिश्य ॥ ३ ॥

४०–४१ ] ति० टी०—निमित्तानि मुखवैवर्ण्यादिदुर्निमित्तानि । यान्यनुभूतपराजयसूचकत्वानि तेनैतद्वधे त्वर शीघ्रमुद्यमं कुरु ॥ ४० ॥ ४१ ॥

रा० टी०—तदाकारमाह—निमित्तानीति । रावणात्मजे यानि पराजयहेतुत्वेनानुभूतानि निमित्तानि मुखवैवर्ण्यादीनि तानि अनुपश्यामि तेन हेतुना त्वं त्वर एष भग्न एव ॥ ४ ॥

रा० टी०—तत इति । सौमित्रिः विशिखान् शरान् सन्धाय तस्मिन् रावणात्मजे मुमोच ॥ ५ ॥

गो० टी०—निमित्तानीति । अस्मिन् यानि मुखवैवर्ण्यस्तब्धत्वादीनि निमित्तानि अनुपश्यामि, तैरयं भग्न इति जाने । तेन कारणेन त्वर त्वरस्व ॥ ४ ॥ ५ ॥

४२-४३ ] ति० टी०—सर्वसंक्षुभितेन्द्रियः संक्षुभितसर्वेन्द्रियः ॥ ४२ ॥ ४३ ॥

रा० टी०—शक्रेति । लक्ष्मणेन शरैराहतः अत एव सर्वाणि संक्षुभितानि इन्द्रियाणि यस्य स रावणिर्मुहूर्तं मूढोऽभवत् ॥ ६ ॥

रा० टी०—उपलभ्येति । मुहूर्तेन सञ्ज्ञामुपलभ्य अत एव प्रत्यागतेन्द्रिय इन्द्रजित् आजौ अवस्थितं दशरथात्मजं ददर्श ॥ ७ ॥

रा० टी०—स इति । स रावणिः सौमित्रिमभिचक्राम एनं लक्ष्मणमासाद्य परुषं वचः पुनरब्रवीच्च ॥ ८ ॥

गो० टी०—शक्राशनीति । सर्वसंक्षुभितेन्द्रियः संक्षुभितसर्वेन्द्रियः ॥ ६–८ ॥

४४ ] ति० टी०—प्रथमे तद्युद्धे नागपाशबन्धनके तस्मिन्युद्धे । यत्र भ्रात्रा सह निबद्धस्त्वं तत्किं न स्मरसि । यदा युध्यायोधने विचेष्टसे शरपातादि करोषि ॥ ४४ ॥

१ श्लोकद्वयमिदमधिकं गो.पाठे। २ शरमिति गो.पा.। ३ रावणात्मज इति गो. पा.। ४ नं विवर्णमुखमिति गो. पा.। ५ बाणानग्निशिखोपमानिति गो. पा.। ६ निशितानिति गो. रा. पाठः। ७ महाविषानिति गो.पा.। ८ इदमर्धमधिकं गो. रा. पुस्तके। ९ त्वैरइति गो. पा.। १० युधि विवेष्टसे इति गो. पाठः।

युवां खलु महायुद्धे वज्राशनिसमैः शरैः। शायितौ प्रथमं भूमौ विसंज्ञौ सपुरःसरौ ॥ ४५ ॥
स्मृतिर्वा नास्ति ते मन्ये व्यक्तं वा यमसादनम्। गन्तुमिच्छसि यस्मात्त्वं मामाधर्षयितुमिच्छसि ॥ ४६ ॥
यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः। अद्य त्वां दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ ४७ ॥
इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम्। दशभिस्तु हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ॥ ४८ ॥
ततः शरशतेनैव सुप्रयुक्तेन वीर्यवान्। क्रोधाद्द्विगुणसंरब्धो निर्बिभेद विभीषणम् ॥ ४९ ॥
तद्दृष्ट्वेन्द्रजिता कर्म कृतं रामानुजस्तदा। अचिन्तयित्वा प्रहसन्नैतत्किंचिदिति ब्रुवन् ॥ ५० ॥
मुमोच च शरान्घोरान्संगृह्य नरपुंगवः। अभीतवदनः क्रुद्धो रावणिं लक्ष्मणो युधि ॥ ५१ ॥
नैवं रणगताः शूराः प्रहरन्ति निशाचर। लघवश्चाल्पवीर्याश्च सुखा हीमे शरास्तव ॥ ५२ ॥
नैवं शूरास्तु युध्यन्ते समरे युद्धकाङ्क्षिणः। इत्येवं तं ब्रुवन्धन्वी शरैरभिववर्ष ह ॥ ५३ ॥
तस्य बाणैः सुविध्वस्तं कवचं काञ्चनं महत्। व्यशीर्यत रथोपस्थे ताराजालमिवाम्बरात् ॥ ५४ ॥
विधूतवर्मा नाराचैर्बभूव स कृतव्रणः। इन्द्रजित्समरे वीरः प्रत्यूषे भानुमानिव ॥ ५५ ॥
ततः शरसहस्रेण संक्रुद्धो रावणात्मजः। बिभेद समरे वीरो लक्ष्मणं भीमविक्रमः ॥ ५६ ॥

रा० टी०—तदाकारमाह—किमिति। प्रथमे युद्धे यदा सह भ्रात्रा त्वं निबद्धो विचेष्टसे तत् तात्कालिकं मत्पराक्रमं किं न स्मरसि—युवामिति। यद्यस्माद्धेतोः मामाधर्षयितुमिच्छसि तस्मात् महायुद्धे युवां शरैश्शायितौ अत एव विसञ्ज्ञौ अभवतमिति शेषः तस्य स्मृतिः ते नास्ति एतेन स्मृतिसत्त्वे मत्सम्मुखमागमनाय ते मनो न स्यादिति सूचितम् वा अथवा यमसादनं गन्तुमिच्छसि अर्द्धचतुष्टयमेकान्वयि ॥९॥१०

गो० टी०—किमिति। त्वं भ्रात्रा सह निबद्ध इति यत् प्रथमे, तद्युद्धे तस्मिन् युद्धे मत्पराक्रमं त्वन्निबन्धनरूपम् न स्मरसि किम्। यदा यत्र युद्धकाले, विचेष्टसे विवेष्टितवानसि ॥ ९ ॥

४५ ] ति० टी०—तदेव पुनराह—युवामिति ॥ ४५ ॥

गो० टी०—तमेव पराक्रमं विशिनष्टि—युवामिति ॥१०॥

४६–४९ ] ति० टी०—यमसादनं यमगृहम् ॥४६॥४९॥

गो० टी०—स्मृतिरिति। व्यक्तं नूनमित्यर्थः ॥११–१३॥

रा० टी०—यदीति। प्रथमे युद्धे यदि मत्पराक्रमो न दृष्टः तर्हि अद्य दर्शयिष्यामि अतः व्यवस्थितो दृढमतिस्सन् त्वं तिष्ठ ॥ ११ ॥

रा० टी०—इतीति। सप्तभिर्बाणैः लक्ष्मणं दशभिस्तु हनूमन्तमभिविव्याध ॥ १२ ॥

रा० टी०—तत इति। शरशतेनैव विभीषणं निर्बिभेद १३

गो० टी०—तत इति। क्रोधाद्द्विगुणसंरब्ध इति। लक्ष्मणादिविषयरोषापेक्षया विभीषणविषये द्विगुणं कुपित इत्यर्थः१४

५०–५१ ] ति० टी०—नैतत्किंचिदिति ब्रुवन्। एतन्न किंचित्। अकिंचित्करमिति ब्रुवन्नित्यर्थः ॥ ५० ॥ ५१ ॥

रा० टी०—तदिति। इन्द्रजिता कृतं कर्म दृष्ट्वा अचिन्तयित्वा च एतत् प्रहरणं न किञ्चित् अकिञ्चित्करमित्यर्थः इति ब्रुवँल्लक्ष्मणः शरान् संगृह्य रावणिं मुमोच अर्द्धचतुष्टयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—तद्दृष्ट्वेत्यादिसार्धश्लोक एकान्वयः। नैतत्किंचिदिति ब्रुवन् एतदकिंचित्करमिति ब्रुवन्नित्यर्थः ॥ १५ ॥

गो० टी०—अभीतवदन इत्यादिसार्धश्लोकद्वयमेकान्वयम्। अकिंचित्करत्वमेवाह—नैवमिति ॥ १६–१९ ॥

५२–५४ ] ति० टी०—आकिंचित्करत्वमेव विवृणोति—नैवमिति। एवंशब्दार्थः—लघव इति। पुष्पमालावल्लघव इमे तव शरा मे सुखाः, न तु क्लेशदा इत्यर्थः ॥ ५२–५४ ॥

रा० टी०—नेति। शूराः एवं न प्रहरन्ति एवं प्रहरणे दोषमाह इमे शराः लघवः अल्पवीर्याश्च अत एव सुखाः रिपूणां सुखप्रदाः एतेनैवं प्रहारो व्यर्थ इति सूचितम् अत एव युद्धकांक्षिणः शूराः एवं न युध्यन्ते इत्येवं ब्रुवन् लक्ष्मणश्शरैरभिववर्ष अर्द्धचतुष्टयमेकान्वयि ॥ १६ ॥ १७ ॥

रा० टी०—तस्येति। तस्य लक्ष्मणस्य बाणैः सुविध्वस्तं कवचं रावणिवर्म ताराजालमिव रथोपस्थे व्यशीर्यत ॥ १८ ॥

५५–५६ ] ति० टी०—प्रत्यूषे भानुमानिव। क्षतजरक्तवर्णत्वादिति भावः ॥ ५५ ॥ ५६ ॥

रा० टी०—विधूतेति। कृतव्रण इन्द्रजित् प्रत्यूषे भानुमान् इव [illegible] रुधिराक्तत्वेऽरुणत्वे उपमा ॥ १९ ॥

रा० टी०—तत इति। रावणात्मजः शरसहस्रेण लक्ष्मणं बिभेद ॥ २० ॥

गो० टी०—विधूतेति। प्ररूढः प्ररूढव्रणः ॥ २० ॥ २१ ॥

१ शक्रेति गो. पाठः। २ यस्मादिति गो. पाठः। ३ ते इति गो.पाठः। ४ स इति गो.पाठः। ५ प्रहरन्ते इति गो.पाठः। ६ सुखा हीमे शरा इति गो. पाठः। ७ जयेति गो. पाठः। ८ ब्रुवाणस्तु शरवर्षैरवाकिरदिति गो. पाठः। ९ हेमभूषितमिति गो. पाठः। १० प्ररूढ इव सानुमानिति गो. पाठः।

व्यशीर्यत महद्दिव्यं कवचं लक्ष्मणस्य तु । कृतप्रतिकृतान्योन्यं बभूवतुरभिद्रुतौ[2] ॥ ५७ ॥
अभीक्ष्णं निःश्वसन्तौ वै[3] युध्येतां तुमुलौ[4] युधि। शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥
सुदीर्घकालं तौ वीरावन्योन्यं निशितैः शरैः ॥ ५८ ॥
ततक्षतुर्महात्मानौ रणकर्मविशारदौ । बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ ॥ ५९ ॥
तौ शरौघैस्तथाकीर्णौ निकृत्तकवचध्वजौ । सृजन्तौ रुधिरं चोष्णं जलं प्रस्रवणाविव ॥ ६० ॥
शरवर्षं ततो घोरं मुञ्चतोर्भीमनिःस्वनम् । सासारयोरिवाकाशे नीलयोः कालमेघयोः ॥ ६१ ॥
तयोरथ महान्कालो व्यतीयाद्[6]युध्यमानयोः । न च तौ युद्धवैमुख्यं क्रमं[7] चाप्युपजग्मतुः ॥ ६२ ॥
अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ पुनः पुनः । शरानुच्चावचाकारानन्तरिक्षे बबन्धतुः ॥ ६३ ॥
व्यपेतदोषमस्यन्तौ लघु चित्रं च सुष्ठु च । उभौ तु तुमुलं घोरं चक्रतुर्नरराक्षसौ ॥ ६४ ॥
तयोः पृथक्पृथग्भीमः शुश्रुवे तुमुलः स्वनः । स[9] कम्पं जनयमास निर्घात इव दारुणः ॥ ६५ ॥
तयोः[10] स भ्राजते शब्दस्तथा समरयत्तयोः[11] । सुघोरयोर्निःस्वनतोर्[12]गगने मेघयोरिव[13] ॥ ६६ ॥
सुवर्णपुङ्खैर्नाराचैर्बलवन्तौ कृतव्रणौ । प्रसुस्रुवाते रुधिरं कीर्तिमन्तौ जये धृतौ ॥ ६७ ॥
ते गात्रयोर्निपतिता रुक्मपुङ्खाः शरा युधि । असृग्दिग्धा[14] विनिष्पेतुर्[15]विविशुर्धरणीतलम्[16] ॥ ६८ ॥
अन्ये सुनिशितैः शस्त्रैराकाशे संजघट्टिरे । बभञ्जुश्चिच्छिदुश्चैव[17] तयोर्बाणाः सहस्रशः ॥ ६९ ॥

५७-६० ] ति० टी०—अन्योन्यं कृतप्रतिकृता आर्षो ङा । कृतप्रतिकृते यत्तौ बभूवतुरित्यर्थः ॥ ५७–६० ॥

रा० टी०—व्यशीर्यतेति । दिव्यं देवैर्दत्तमित्यर्थः लक्ष्मणस्य कवचं व्यशीर्यत अह्न पृथक् ॥ २१ ॥

रा० टी०—कृतेति । अरिन्दमौ लक्ष्मणेन्द्रजितौ कृतप्रतिकृता कृतप्रतिकृतौ बभूवतुः औङोडादेशः अत एव निःश्वसन्तौ सन्तौ तुमुलं यथा भवति तथा युध्येताम् ॥ २२ ॥

गो० टी०—व्यशीर्यतेति । कृते प्रतिकृतम् अन्योन्यं यस्मिन् कर्मणि तत्तथोक्तम् ॥ २२ ॥

रा० टी०—शरेति । शरेण संकृत्तानि संकृत्तसदृशानि संकृत्तानि छिन्नानि च सर्वाङ्गानि ययोः सर्वतः सर्वदेशे रुधिराभ्यामरुणवर्णरक्ताभ्यामुक्षितौ व्याप्तौ सुदीर्घकालमन्योन्यं ततक्षतुः जघ्नतुः अत एव आत्मजये यत्तौ कृतोद्योगौ बभूवतुश्च एकशेषघटकलक्ष्मणाङ्गविशेषणीभूतसंकृत्तशब्दः आचारक्विबन्तप्रकृतिककर्त्रंजन्तः श्लोकद्वयमेकान्वयि ॥ २३ ॥ २४ ॥

रा० टी०—ताविति । शरौघैः आकीर्णौ अत एव निकृत्तकवचध्वजौ तौ द्वौ रुधिरमरुणमुष्णं जलमरुणत्वेन प्रतीयमानं प्रस्वेदमित्यर्थः प्रस्रवणौ निर्झराविव सृजन्तौ बभूवतुरिति शेषः २५

गो० टी०—अभीक्ष्णमिति । युद्धयेताम् अयुद्धयेताम् २३

गो० टी०—सुदीर्घकालमिति । ततक्षतुः अन्योन्यं बभञ्जतुः ॥ २४ ॥

गो० टी०—बभूवतुरित्यादि । यत्तौ यत्नवन्तौ ॥ २५ ॥

६१ ] ति० टी०—सासारयोर्धारासंपात आसारस्तत्सहितयोः ॥ ६१ ॥

६२–६६ ] ति० टी०—महान्कालोऽनेकदिनरूपः॥६२–६६

रा० टी०—शरवर्षमिति। सासारयोः धारासंपातसहितयोः अत एव नीलयोः कालमेघयोः लोकविघातकयोः वर्षाकालिकयोर्वा घनयोरिव भीमनिःस्वनं यथा भवति तथा शरवर्षं मुञ्चतोः युध्यमानयोस्तयोर्महान् बहुकालो व्यतीयात् आगमशास्त्रस्यानित्यत्वादड्विरहः इकारप्रश्लेषाद्दीर्घः तौ युद्धवैमुख्यं युद्धराहित्यं क्रमं च नोपजग्मतुः श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

रा० टी०—अस्त्राणीति। पुनः पुनरस्त्राणि दर्शयन्तौ अस्त्रविदां श्रेष्ठौ उच्चावचकारान् शरान् अन्तरिक्षे बबन्धतुः ॥२८॥

गो० टी०—शरवर्षमित्यादिश्लोकद्वयमेकान्वयम् । सासारयोः सधारापातयोः। धारासंपात आसार इत्यमरः २६-२८

रा० टी०—व्यपेतेति । व्यपेतदोषादि यथा भवति तथा अस्यन्तौ नरराक्षसौ घोरं युद्धं चक्रतुः ॥ २९ ॥

रा० टी०—तयोरिति । तयोर्युध्यमानयोः स्वनः पृथक् पृथक् शुश्रुवे कम्पं जनयामास च ॥ ३० ॥

रा० टी०—तयोरिति । समरमत्तयोः तयोश्शब्दः स्वनतोर्मेघयोश्शब्द इव सम्भ्राजते ॥ ३१ ॥

गो० टी०—व्यपेतेति । व्यपेतदोषं व्यपगतमोहत्वदोषम्। अस्यन्तौ बाणान् क्षिपन्तौ ॥ २९–३१ ॥

६७–६९ ] ति० टी०—जये धृतौ दृढोत्साहौ ॥६७–६९॥

१ महादिव्यमिति गो. पाठः । २ अरिंदमाविति रा. पाठः । ३ ताविति गो. पाठः । ४ तुमुलमिति गो. रा. पाठः । ५ तदेति गो. पाठः । ६ व्यत्ययादिति गो. पाठः । ७ श्रममिति गो. पाठः । ८ तलनिःस्वन इति गो. पाठः । ९ प्रकम्पयन्नूवनं घोर इति गो. पाठः । १० स तयोरिति गो. तयोः स मिति रा. पाठः । ११ सक्तयोरिति गो. मत्तयोरिति च रा. पाठः । १२ स्वनतोरिति गो. पाठः । १३ यथेति गो. पाठः । १४ मग्ना इति

स बभूव रणे[1] घोरस्तयोर्बाणमयश्चयः । अग्निभ्यामिव दीप्ताभ्यां सत्रे कुशमयश्च यः ॥ ७० ॥
तयोः कृतव्रणौ देहौ शुशुभाते महात्मनोः । सुपुष्पाविव निष्पत्रौ वने किंशुकशाल्मली[2] ॥ ७१ ॥
चक्रतुस्तुमुलं घोरं संनिपातं मुहुर्मुहुः । इन्द्रजिल्लक्ष्मणश्चैव परस्परजयैषिणौ[3] ॥ ७२ ॥
लक्ष्मणो रावणिं युद्धे रावणिश्चापि लक्ष्मणम् । अन्योन्यं तावविभिघ्नन्तौ न श्रमं प्रतिपद्यताम् ॥ ७३ ॥
बाणजालैः शरीरस्थैरवगाढैस्तरस्विनौ । शुशुभाते महावीर्यौ[4] प्ररूढाविव पर्वतौ ॥ ७४ ॥
ततो रुधिरसिक्तानि संवृतानि शरैर्भृशम् । बभ्राजुः सर्वगात्राणि ज्वलन्त इव पावकाः ॥ ७५ ॥
तयोरथ महान्कालो व्यतीयाद्युध्यमानयोः । न च तौ युद्धवैमुख्यं श्रमं चाप्यभिजग्मतुः ॥ ७६ ॥
अथ समरपरिश्रमं निहन्तुं समरमुखेष्वजितस्य लक्ष्मणस्य ।
प्रियहितमुपपादयन्महात्मा समरमुपेत्य विभीषणोऽवतस्थे ॥ ७७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाशीतितमः सर्गः ॥ ८८ ॥

---

रा० टी०—सुवर्णेति । नाराचैः कृतौ व्रणौ ययोः तौ जये धृतौ गतिमन्तौ नरराक्षसौ रुधिरमरुणप्रस्वेदं प्रसुस्रुवाते कृतव्रणशब्दकुक्षिप्रविष्टलक्ष्मणविशेषणीभूतव्रणशब्दः आचारक्विबन्तप्रकृतिककर्त्रजन्तः ॥ ३२ ॥

रा० टी०—ते इति । गात्रयोर्निपतिताः असृजा अन्ययुद्धीयशरीरजेन इन्द्रजित्शरीरजेन च रुधिरेण दिग्धा व्याप्ताः शराः विनिष्पेतुः धरणीतले विविशुश्च ॥ ३३ ॥

गो० टी०—सुवर्णेति । धृतौ अवहितौ ॥ ३२ ॥ ३३ ॥

रा० टी०—अन्य इति । अन्ये सहस्रशस्तयोः प्रक्षिप्ताः शरैस्सह बाणाः आकाशे संजघट्टिरे अत एव बभंजुः निर्वेगान् चक्रुः चिच्छिदुश्च परस्परमिति शेषः ॥ ३४ ॥

गो० टी०—अन्य इति । तयोः अन्ये केचन बाणाः आकाशे सुनिशितैः शरैः संजघट्टिरे संघट्टिताः । अन्ये बाणाः बाणान् सहस्रशः बभञ्जुः चिच्छिदुश्चेति संबन्धः ॥ ३४ ॥

७०-७१ ] ति० टी०—चयः समूहः ॥ ७० ॥ ७१ ॥

रा० टी०—स इति । दीप्ताभ्यामग्निभ्यामिव तयोः नरराक्षसयोः बाणमयो यो रणः सः सत्रे कुशमयो यो देशस्स इव बभूव ३५

रा० टी०—तयोरिति । सुपुष्पौ किंशुकशाल्मलीव* तयोर्देहौ शुशुभाते ॥ ३६ ॥

गो० टी०—स बभूवेति । सः रणः घोरो बभूव । यस्मिन् तयोर्बाणमयश्चयः सत्रे दीप्ताभ्यामग्निभ्यां सहितः कुशमयश्चय इवासीत् । अग्नी गार्हपत्याहवनीयौ ॥ ३५ ॥ ३६ ॥

७२-७३ ] ति० टी०—संनिपातं युद्धम् ॥ ७२ ॥ ७३ ॥

रा० टी०—चक्रतुरिति । परस्परजयैषिणौ इन्द्रजिल्लक्ष्मणश्च मुहुर्मुहुः सन्निपातं चक्रतुः ॥ ३७ ॥

गो० टी०—चक्रतुरिति । सन्निपातं युद्धम् ॥ ३७ ॥

रा० टी०—लक्ष्मण इति । अन्योन्यमभिघ्नन्तौ तौ श्रमं न प्रत्यपद्यताम् ॥ ३८ ॥

गो० टी०—लक्ष्मण इति । प्रत्यपद्यतां प्रत्यपद्येताम् ॥ ३८ ॥ ३९ ॥

७४-७६ ] ति० टी०—अवगाढैर्गाढमग्नैः । प्ररूढौ प्ररूढवृक्षौ ॥ ७४ ॥ ७६ ॥

रा० टी०—बाणेति । शरीरस्थैरवगाढैर्दृढैर्बाणजालैरुपलक्षितौ महावीर्यौ प्ररूढौ वृक्षादिमन्तौ पर्वताविव शुशुभाते ३९

रा० टी०—तत इति । शरैः संवृतानि रुधिराभ्यामारुण्यरक्ताभ्यां सिक्तानि व्याप्तानि सर्वगात्राणि ज्वलन्तः पावका इव बभ्राजुः ॥ ४० ॥

रा० टी०—तयोरिति । युध्यमानयोस्तयोः महान् कालो व्यतीयात् तौ तु युद्धवैमुख्यं श्रमं च नाभिजग्मतुः अयं श्लोकः पूर्वमपि पठितः ॥ ४१ ॥

गो० टी०—तयोरिति । बभ्राजुः । आर्षं परस्मैपदम् ॥ ४०-४२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोननवतितमः सर्गः ॥ ८९ ॥

७७ ] ति० टी०—समरपरिश्रमं युद्धजश्रमम् ॥ ७७ ॥

इतिश्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाशीतितमः सर्गः ॥ ८८ ॥

रा० टी०—अथेति । समरमुखे अजितस्य लक्ष्मणस्य परिश्रमं निहन्तुं प्रियहितमुपपादयन् विभीषणः समरमुपेत्यावतस्थे ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

---

१ रण इति गो.पाठः । २ शाल्मलिकिंशुकाविति गो.पाठः । ३ वधैषिणाविति गो.पाठः । ४ महौजा इति गो.पाठः । * इवेति विभज्य पाठो युक्तः ।

# एकोननवतितमः सर्गः ।

तयोरभूतपूर्वं संङ्ग्रामं प्रेक्षितुमिच्छुर्विभीषणस्त्वात्तवरचापः शरैरक्षांसि सामात्यो दारयामास हरिप्रवीराः नायमुपेक्षासमयो यन्महाशूराः सर्वे प्रायः कृतान्तसात्कृता अवशिष्टमल्पकमिदं बलम् इति बभाषे च एवं चोदिता हरयश्च महान्तं विक्रममदर्शयन्। लक्ष्मणो रावणेः सारथिं प्रमाथ्याद्यश्चत्वारः कपयोऽपि तुरगानमथ्नंस्तदा स पदातिरेव युयुधे च ।

युध्यमानौ ततो दृष्ट्वा प्रसक्तौ नरराक्षसौ । प्रभिन्नाविव मातंगौ परस्परजयैषिणौ ॥ १ ॥
तयोर्युद्धं द्रष्टुकामो वरचापधरो बली । शूरः स रावणभ्राता तस्थौ सङ्ग्राममूर्धनि ॥ २ ॥
ततो विस्फारयामास महद्धनुरवस्थितः । उत्ससर्ज च तीक्ष्णाग्रान्राक्षसेषु महाशरान् ॥ ३ ॥
ते शराः शिखिसंस्पर्शा निपतन्तः समाहिताः । राक्षसान्दारयामासुर्वज्रा इव महागिरीन् ॥ ४ ॥
विभीषणस्यानुचरास्तेऽपि शूलासिपट्टिशैः । चिच्छिदुः समरे वीरान्राक्षसान्राक्षसोत्तमाः ॥ ५ ॥
राक्षसैस्तैः परिवृतः स तदा तु विभीषणः । बभौ मध्ये प्रधृष्टानां कलभानामिव द्विपः ॥ ६ ॥
ततः संचोदमानो वै हरीन्रक्षोवधप्रियान् । उवाच वचनं काले कालज्ञो रक्षसां वरः ॥ ७ ॥
एकोऽयं राक्षसेन्द्रस्य परायणमवस्थितः । एतच्छेषं बलं तस्य किं तिष्ठत हरीश्वराः ॥ ८ ॥
तस्मिंश्च निहते पापे राक्षसे रणमूर्धनि । रावणं वर्जयित्वा तु शेषमस्य बलं हतम् ॥ ९ ॥

---

१ ] ति० टी०–युध्यमानाविति । प्रभिन्नौ मत्तौ मातंगाविव युद्धाय प्रसक्तावत एव युध्यमानौ दृष्ट्वा ॥ १ ॥

२ ] ति० टी०–ततः परं युद्धार्थं गतयोरन्यतरवधान्तं युद्धं द्रष्टुकामः सन्शूरो रावणभ्राता युयुत्सया सङ्ग्राममूर्धनि तस्थौ ॥ २ ॥

रा० टी०–युद्धवृत्तान्तमेवाह–युध्यमानावित्यादिभिः । प्रभिन्नौ मत्तौ अत एव युध्यमानौ मातङ्गाविव प्रसक्तौ युद्धे संसक्तौ नरराक्षसौ दृष्ट्वा दूरतोऽवलोक्य तयोर्युद्धं द्रष्टुकामः अत्यन्तमवलोकयितुमनाः रावणभ्राता संग्राममूर्धनि तस्थौ श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–अथेन्द्रजितो रथभङ्गः—युध्यमानौ त्वित्यादिश्लोकद्वयमेकान्वयम् । प्रभिन्नौ मत्तमातङ्गाविव परस्परगतौ परस्परं युद्धार्थं सङ्गतौ तौ लक्ष्मणेन्द्रजितौ प्रथमं द्रष्टुकामः स विभीषणस्तौ दृष्ट्वा संग्राममूर्धनि योद्धुं तस्थावित्यन्वयः । स्वयं प्रथमं युद्धं कर्तुमुद्युक्तोपि तयोर्बलाधिक्यं द्रष्टुं तूर्ष्णी स्थितः । तयोर्बलतौल्ये दृष्टे स्वस्य रामविषयकिञ्चित्कारार्थमिदानीं युद्धाय तस्थावित्यर्थः ॥ १ ॥ २ ॥

३ ] ति० टी०–अत एव ततो विस्फारयामासेति । अवस्थितः । भूमाविति शेषः ॥ ३ ॥

रा० टी०–तत इति । अवस्थितो विभीषणः धनुर्विस्फारयामास राक्षसेषु महाशरान् उत्ससर्ज च ॥ ३ ॥

गो० टी०–तत इति । धनुः तादात्विकं किंचित् । विभीषणस्य केवलगदापाणित्वात् ॥ ३ ॥

४–५ ] ति० टी०–वज्रा वज्रपाताः ॥ ४ ॥ ५ ॥

रा० टी०–ते इति । शिखिवत् वह्निवत् संस्पर्शो येषां ते शराः वज्रा महागिरीनिव राक्षसान् दारयामासुः ॥ ४ ॥

रा० टी०–विभीषणस्येति । विभीषणस्यानुचरा अपि राक्षसान् चिच्छिदुः ॥ ५ ॥

गो० टी०–ते शरा इति । वज्राणि अशनयः ॥ ४–७ ॥

६ ] ति० टी०–राक्षसैस्तैः सचिवरूपैः ॥ ६ ॥

रा० टी०–राक्षसैरिति । राक्षसैः परिवृतो विभीषणः कलभानां करिशावकानां मध्ये द्विप इव बभौ ॥ ६ ॥

७ ] ति० टी०–संचोदमानः संचोदयमानः ॥ ७ ॥

रा० टी०–तत इति । रक्षसां वरो विभीषणः रक्षोवधप्रियान् हरीनुवाच ॥ ७ ॥

८–९ ] ति० टी०–परायणं परा गतिः । उत्तमः । योद्धेति यावत् तस्य रावणस्य बलं सेना । एतच्छेषं दृश्यमानबलमात्रावशेषम् । तत्किं तिष्ठत । तद्धननानुद्यमेनेति शेषः ॥ ८ ॥ ९ ॥

रा० टी०–तदाकारमाह—एक इत्यादिभिः । एकोयमिन्द्रजित् राक्षसेंद्रस्य रावणस्य परायणमुत्तमाश्रयः तत्र हेतुः तस्य रावणस्य बलमेतच्छेषम् एष एव शेषः अवशिष्टो यस्मिन् तत् अत एव अस्मिन् इन्द्रजिति हते सति रावणं वर्जयित्वा शेषमस्य बलं हतं भविष्यतीति शेषः अतः किं किमर्थं तिष्ठत इममपि निहतेत्यर्थः श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–एकोयमिति । परायणं गतिः ॥ ८ ॥ ९ ॥

---

१ तौ द्रष्टुकामः संग्रामे परस्परगतौ बली इति गो. रा. पाठः । २ संकाशा इति गो. पाठः । ३ वज्राणीति गो. पाठः । ४ रणेति गो. पाठः । ५ द्रवेति गो. पाठः । ६ अस्मिन्विनिहते इति गो. पाठः । ७ हतं बलमिति गो. पाठः ।

प्रहस्तो निहतो वीरो निकुम्भश्च महाबलः । कुम्भकर्णश्च कुम्भश्च धूम्राक्षश्च निशाचरः ॥ १० ॥
जम्बुमाली महामाली तीक्ष्णवेगोऽशनिप्रभः । सुप्तघ्नो यज्ञकोपश्च वज्रदंष्ट्रश्च राक्षसः ॥ ११ ॥
संह्रादी विकटोऽरिघ्नस्तपनो मन्द एव च । प्रघासः प्रघसश्चैव प्रजङ्घो जङ्घ एव च ॥ १२ ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान् । विद्युज्जिह्वो द्विजिह्वश्च सूर्यशत्रुश्च राक्षसः ॥ १३ ॥
अकम्पनः सुपार्श्वश्च चक्रमाली च राक्षसः । कम्पनः सत्त्ववन्तश्च देवान्तकनरान्तकौ ॥ १४ ॥
एतान्निहत्यातिबलान्बहून्राक्षससत्तमान् । बाहुभ्यां सागरं तीर्त्वा लङ्घ्यतां गोष्पदं लघु ॥ १५ ॥
एतावदेव शेषं वो जेतव्यमिति[3] वानराः । हताः सर्वे समागम्य राक्षसा बलदर्पिताः ॥ १६ ॥
अयुक्तं निधनं कर्तुं पुत्रस्य जनितुर्मम । घृणामपास्य रामार्थे निहन्यां भ्रातुरात्मजम् ॥ १७ ॥
हन्तुकामस्य मे बाष्पं चक्षुश्चैव निरुध्यति । तमेवैष महाबाहुर्लक्ष्मणः शमयिष्यति ॥ १८ ॥
वानरा घ्नत संभूय भृत्यानस्य समीपगान् । इति तेनातियशसा राक्षसेनाभिचोदिताः ॥ १९ ॥
वानरेन्द्रा जहृषिरे लांगूलानि च विव्यधुः । ततस्तु कपिशार्दूलाः क्ष्वेडन्तश्च पुनः पुनः ॥
मुमुचुर्विविधान्नादान्मेघान्दृष्ट्वेव बर्हिणः ॥ २० ॥
जाम्बवानपि तैः सर्वैः स्वयूथ्यैरभिसंवृतः । तेऽश्मभिस्ताडयामासुर्नखैर्दन्तैश्च राक्षसान् ॥ २१ ॥
निघ्नन्तमृक्षाधिपतिं राक्षसास्ते महाबलाः । परिवव्रुर्भयं त्यक्त्वा तमनेकविधायुधाः ॥ २२ ॥
शरैः परशुभिस्तीक्ष्णैः पट्टिशैर्यष्टितोमरैः । जाम्बवन्तं मृधे जघ्नुर्निघ्नन्तं राक्षसीं चमूम् ॥ २३ ॥
स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् । देवासुराणां क्रुद्धानां यथा भीमो महास्वनः ॥ २४ ॥

---

१०-१४ ] ति० टी०–एतन्मात्रशेषत्वमेवाह—प्रहस्त इति ॥ १०–१४ ॥

रा० टी०–हतान् निर्दिशन्नाह—प्रहस्तइत्यादिभिः । प्रहस्तादिर्निहतः श्लोकपञ्चकमेकान्वयि ॥ १०–१४ ॥

गो० टी०–उक्तानन्नुक्तांश्च राक्षसान् युद्धे हतान् कांश्चित्परिगणयत्युत्साहनाय—प्रहस्त इत्यादिना श्लोकपञ्चकेन । अकम्पनः कम्पनश्च राक्षसौ सर्वत्र निहत इत्यनेनान्वयः । देवान्तकनरान्तकावित्यत्र निहताविति विपरिणामः कार्यः १०-१४

१५ ] ति० टी०–बाहुभ्यां सागरं तीर्त्वावस्थितैर्युष्माभिरिदं लघ्ववशिष्टबलरूपं गोष्पदं लङ्घ्यताम् ॥ १५ ॥

रा० टी०–एतानिति । बाहुभ्यां सागरं तीर्त्वेव एतान् प्रहस्तादीन् निहत्य गोष्पदमिव लघु अल्पमेतावत् शेषं जेतव्यं बलं लङ्घ्यताम् एव इतिश्चेवार्थे सार्द्धश्लोक एकान्वयी ॥१५॥

गो० टी०–एतानिति । एतान् राक्षससत्तमान् निहत्य स्थितानां भवताम् इन्द्रजितो बाहुभ्यां सागरं तीर्त्वा स्थितस्य पुंसो गोष्पदतरणमिव सुकरमिति निदर्शना । बाहुभ्यां सागरं तीर्त्वेव एतानतिबलान् बहून् राक्षससत्तमान् निहत्य स्थितैः भवद्भिः गोष्पदमिव लघु इन्द्रजिद्धननरूपं स्वल्पं कार्यं लङ्घ्यतामित्यन्वयः ॥ १५ ॥

१६ ] ति० टी०–समागम्य युद्धं प्राप्य ॥ १६ ॥

रा० टी०–हता इति । यद्यपि सर्वे राक्षसाः हताः अतो मम जनितुः समानगर्भे जातस्य भ्रातुरित्यर्थः पुत्रस्य निधनं नाशनमयुक्तं तथापि रामार्थे घृणां दयामपास्य त्यक्त्वा भ्रातुरात्मजं निहन्याम् घातयेयम् ॥ १६ ॥

गो० टी०–एतावदिति । एतावदेव इन्द्रजिन्मात्रमेव१६

१७ ] ति० टी०–जनितुर्जनयितृभ्रातुः पुत्रस्य निधनं नाशः कर्तुमयुक्तम्, तथापि घृणां दयामपास्य रामार्थे भ्रातुरात्मजं निहन्याम् । हननोपायप्रवर्तनेनेति भावः ॥ १७ ॥

गो० टी०–अयुक्तमिति । जनितुः जनयितुः । पितृव्यस्येत्यर्थः ॥ १७ ॥

१८ ] ति० टी०–हन्तुकामस्य साक्षात्प्रहर्तुकामस्य बाष्पं कर्तृ निरुध्यति निरुणद्धि । तं लक्ष्मण एवेत्यन्वयः १८

रा० टी०–ननु तर्हि त्वयैव निहन्यतां किं लक्ष्मणयुद्धेनेत्यत आह—हन्त्विति । हन्तुकामस्य मे चक्षुः बाष्पमश्रु निरुध्यते अतः तं रावणिं लक्ष्मण एव शमयिष्यति अतः हे वानराः अस्येन्द्रजितः समीपगान् भृत्यान् घ्नत एव सार्धश्लोक एकान्वयी ॥ १७ ॥

गो० टी०–हन्तुकामस्येति । बाष्पं कर्तृ, चक्षुः निरुध्यति निरुणद्धि ॥ १८–२३ ॥

१९-२४ ] ति० टी०–घ्नतेत्यार्षम् ॥ १९–२४ ॥

रा० टी०–इतीति । तेन विभीषणेन इत्यभिचोदिताः वानरेन्द्रा जहृषिरे अत एव लांगूलानि विव्यधुः ॥ १८ ॥ १९ ॥

---

१ निघ्न इति गो. पाठः । २ वन्तौ तौ इति गो. वन्तौ चेति रा. पाठः । ३ इहेति गो. पाठः । ४ क्ष्वेळन्त इति गो. पाठः । ५ स्वयूथैरिति रा. स्वयूथैरपीति गो. पाठः । ६ अश्मभिस्ताडयामासेति गो. पाठः । ७ वव्रुरिति गो. रा. पाठः ।

हनूमानपि संक्रुद्धः सानुमुत्पाट्य पर्वतात् । स लक्ष्मणं स्वयं पृष्ठादवरोप्य महामनाः ॥ २५ ॥
रक्षसां कदनं चक्रे दुरासादः सहस्रशः । स दत्त्वा तुमुलं युद्धं पितृव्यस्येन्द्रजिद्बली ॥ २६ ॥
लक्ष्मणं परवीरघ्नः पुनरेवाभ्यधावत । तौ प्रयुद्धौ तदा वीरौ मृधे लक्ष्मणराक्षसौ ॥ २७ ॥
शरौघानभिवर्षन्तौ जघ्नतुस्तौ परस्परम् । अभीक्ष्णमन्तर्दधतुः शरजालैर्महाबलौ ॥ २८ ॥
चन्द्रादित्याविवोष्णान्ते यथा मेघैस्तरस्विनौ । नह्यादानं न संधानं धनुषो वा परिग्रहः ॥ २९ ॥
न विप्रमोक्षो बाणानां न विकर्षो न विग्रहः । न मुष्टिप्रतिसंधानं न लक्ष्यप्रतिपादनम् ॥ ३० ॥
अदृश्यत तयोस्तत्र युध्यतोः पाणिलाघवात् । चापवेगप्रयुक्तैश्च बाणजालैः समन्ततः ॥ ३१ ॥
अन्तरिक्षेऽभिसंपन्ने न रूपाणि चकाशिरे । लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणम् ॥ ३२ ॥

---

रा० टी०—तत इति । क्ष्वेडन्तः कपिशार्दूलाः मेघान् दृष्ट्वा बर्हिण इव विविधान् नादान् मुमुचुः ॥ २० ॥

रा० टी०—जाम्बवानिति । स्वयूथैरभिसंवृतो जाम्बवान् ते वानराश्च राक्षसान् ताडयामासुः ॥ २१ ॥

रा० टी०—निघ्नन्तमिति । महाबलाः राक्षसाः निघ्नन्तम् ऋक्षाधिपतिं परिवव्रुः आच्छादयामासुः॥ २२ ॥

रा० टी०—शरैरिति । चमूं निघ्नन्तं जाम्बवंतं शरादिभिर्जघ्नुः ॥ २३ ॥

रा० टी०—स इति । कपिरक्षसां महास्वनः अतिस्वनविशिष्टः संप्रहारः देवासुराणां संप्रहार इव संजज्ञे ॥ २४ ॥

गो० टी०—स इति । यथा भीम इति । महास्वनो देवानां संप्रहारो यथा तथेत्यर्थः ॥ २४ ॥

२५ ] ति० टी०—हनूमानपीति । पर्वतात्सानुं शिखरमुत्पाट्य लक्ष्मणं पृष्ठादवरोप्य विश्रामार्थं स्वारूढं लक्ष्मणं भूमाववस्थाप्य विभीषणसहायार्थं हनुमान्कदनं चक्रे ॥ २६ ॥

रा० टी०—हनूमानिति । दुरासादः हन्तुमशक्यः क्रुद्धो हनुमानपि लक्ष्मणं पृष्ठादवरोप्य पर्वतात् सानुमुत्पाट्य सहस्रशो रक्षसां कदनं चक्रे सार्धश्लोक एकान्वयी ॥ २६ ॥

गो० टी०—हनुमानिति । अत्र हनुमतो युद्धकथनात् किंचिद्विश्रमार्थं तस्य पृष्ठादवरूढो लक्ष्मण इत्यवगम्यते । सहस्रशः कदनमित्यन्वयः ॥ २५–२८ ॥

२६ ] ति० टी०—दुरासादः । परैर्दुरासद इत्यर्थः ॥२६॥

रा० टी०—स इति । स इन्द्रजित् पितृव्यस्य समीपे लक्ष्मणं तुमुलं युद्धं दत्त्वा पुनरभ्यधावत ॥ २६ ॥

२७ ] ति० टी०—प्रयुद्धौ योद्धुमुपक्रान्तौ ॥ २७ ॥

रा० टी०—ताविति । तौ प्रसिद्धौ तौ अमृतचोररूपौ प्रयुद्धौ लक्ष्मणराक्षसौ परस्परं जघ्नतुः ॥ २७ ॥

२८ ] ति० टी०—शरजालैः परस्परप्रयुक्तैः परस्परमन्तर्दधतुः ॥ २८ ॥

रा० टी०—अभीक्ष्णमिति । शरजालैः अभीक्ष्णमंतर्दधतुः तत्र दृष्टान्तः उष्मान्ते ग्रीष्मापाये मेघैः चंद्रादित्याविव मेघाविति पाठे अर्शआद्यजन्तः मेघवन्तावित्यर्थः ॥ २८ ॥

२९ ] ति० टी०—उष्णान्ते वर्षारम्भे । संधानं संयोजनम् । धनुषो वा परिग्रहः सव्यापसव्येन कार्मुकग्रहणम्॥२९॥

३०–३१ ] ति० टी०—विग्रहो बाणानां विभागः । 'विग्रहः समरे काये विरोधप्रविभागयोः' इति कोशः । प्रतिसंधानं दृढतया मुष्टिसंयोजनम् । लक्ष्यप्रतिपादनं लक्ष्यभेदनम्॥३०॥३१॥

रा० टी०—नहीति । युध्यतोस्तयोः पाणिलाघवाद्धेतोः आदानादिनादृश्यत तत्रादानं तूणीरात् शरग्रहणं संधानं उद्धृतशरस्य चापेवस्थापनं धनुषः परिग्रहः सव्यापसव्येन ग्रहणं बाणानां विप्रमोक्षः प्रक्षेपः विकर्षो दृढं ग्रहणं विग्रहः शराणां विभागः मुष्टिप्रतिसंधानं दृढतो मुष्ट्या ग्रहणं लक्ष्यस्य प्रतिपादनं भेदनमर्द्धचतुष्टयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०—न ह्यादानमित्यादिश्लोकद्वयमेकान्वयम् । आदानं बाणस्य तूणादुद्धरणम् । संधानम् उद्धृतस्य बाणस्य धनुष्यवस्थापनम् । धनुषो वा परिग्रहः सव्यापसव्यत्वेन कार्मुकग्रहणम् । बाणानां विप्रमोक्षः विसर्जनम् । विकर्षः आकर्णग्रहणम् । विग्रहः आलीढाद्यवस्थानविशेषः, सावष्टम्भावस्थानं वा, धनुर्ज्यादीनां प्रविभागो वा । विग्रहः समरे काये विरोधप्रविभागयोरिति विश्वः । मुष्टिप्रतिसंधानं ज्याकार्मुकयोर्मुष्टिबन्धनम् । लक्ष्यप्रतिपादनं लक्ष्यप्रापणम् । लक्ष्यवेध इति यावत् ॥ २९ ॥ ३० ॥

रा० टी०—चापेति । चापवेगप्रयुक्तैः बाणजालैः अन्तरिक्षे अभिसम्पन्ने परिपूर्णे सति रूपाणि न चकाशिरे ॥ ३१ ॥

गो० टी०—चापवेगेति । रूप्यन्त इति रूपाणि वस्तूनि। बाणव्यतिरेकेण न किंचित्तदानीं दृश्यत इति भावः ॥ ३१ ॥

३२ ] ति० टी०—अभिसंपन्ने व्याप्ते । रूपाणि रूपवद्वस्तूनि न चकाशिरे । न दृग्गोचराणीति भावः । रावणिश्चापि लक्ष्मणं प्राप्यायुध्यतामिति शेषः ॥ ३२ ॥

रा० टी०—लक्ष्मण इति रावणिश्च लक्ष्मणं प्राप्य युयुधाते इति शेषः अत एव ताभ्यामन्योन्यविग्रहे परस्परसंप्रहारे उग्रा अव्यवस्था सर्वमनसामस्वास्थ्यं भवति ॥ ३२ ॥

गो० टी०—लक्ष्मण इति । लोकव्यवहारानुसारेणात्र क्रियाकारकसंबन्धः । लक्ष्मणो रावणिं रावणिश्चापि लक्ष्मणं प्राप्य ताभ्यामन्योन्यविग्रहे अन्योन्याभिभवे उग्रा अव्यवस्था भवति । अन्योन्यप्राबल्यमेनं निगृह्णाति अयं वा एनमिति

---

१ नौसैवानिति गो.पाठः । २ इदमर्धं गो.पु. नास्ति । ३ समासाद्येति गो.पा. । ४ युधीति गो.पाठः । ५ विनिर्मुक्तेति गो.पाठः । ६ ह्यीति गो.पा. ।

अव्यवस्था भवत्युग्रा ताभ्यामन्योन्यविग्रहे । ताभ्यामुभाभ्यां तरसा प्रसृष्टैर्विशिखैः शितैः ॥ ३३ ॥
निरन्तरमिवाकाशं बभूव तमसा वृतम्[1] । तैः पतद्भिश्च बहुभिस्तयोः शरशतैः शितैः ॥ ३४ ॥
दिशश्च प्रदिशश्चैव बभूवुः शरसंकुलाः । तमसा पिहितं[2] सर्वमासीत्प्रतिभयं[3] महत् ॥ ३५ ॥
अस्तं गते सहस्रांशौ संवृते[4] तमसा च[5] वै । रुधिरौघा[6] महानद्यः प्रावर्तन्त सहस्रशः ॥ ३६ ॥
क्रव्यादा दारुणा वाग्भिश्चिक्षिपुर्भीमनिःस्वनान्[7] । न तदानीं ववौ वायुर्न च जज्वाल पावकः ॥ ३७ ॥
स्वस्त्यस्तु लोकेभ्य इति जजल्पुस्ते महर्षयः । संपेतुश्चात्र संतप्ता[8] गन्धर्वाः सह चारणैः ॥ ३८ ॥
अथ राक्षससिंहस्य कृष्णान्कनकभूषणान् । शरैश्चतुर्भिः सौमित्रिर्विव्याध चतुरो हयान् ॥ ३९ ॥
ततोऽपरेण भल्लेन पीतेन[9] निशितेन च । संपूर्णायतमुक्तेन सुपत्रेण सुवर्चसा ॥ ४० ॥
महेन्द्राशनिकल्पेन सूतस्य विचरिष्यतः । स तेन बाणाशनिना तलशब्दानुनादिना ॥ ४१ ॥
लाघवाद्राघवः श्रीमाञ्शिरः कायादपाहरत् । स यन्तरि महातेजा हते मन्दोदरीसुतः ॥ ४२ ॥
स्वयं सारथ्यमकरोत्पुनश्च धनुरस्पृशत् । तदद्भुतमभूत्तत्र सारथ्यं[10] पश्यतां युधि ॥ ४३ ॥
हयेषु व्यग्रहस्तं तं विव्याध निशितैः शरैः । धनुष्यथ पुनर्व्यग्रं[11] हयेषु मुमुचे शरान् ॥ ४४ ॥
छिन्नेषु[12] तेषु बाणौघैर्[13]विचरन्तमभीतवत्[14] । अर्दयामास समरे सौमित्रिः शीघ्रकृत्तमः ॥ ४५ ॥

---

निश्चयो नाभवदित्यर्थः । यद्वा रावणिं लक्ष्मणो रावणिश्चापि लक्ष्मणं प्राप्य अयुध्येतामिति शेषः । ताभ्यां तथा युद्धं कुर्वद्भ्याम्, अन्योन्यविग्रहे परस्परप्रहारे क्रियमाणे उग्रा अव्यवस्था भवति । क्षणे क्षणे जयपराजयनियमो नाभूदित्यर्थः ३२–३३

३३–३४ ] ति० टी०–उग्राव्यवस्था तत्तद्बाणैरयुध्यद्वानरराक्षसवधरूपा भवति । अभवदित्यर्थः । यत्तु अयमेनं निगृह्णाति स एनं वेत्यनिश्चयरूपाव्यवस्थेति व्याख्यानं तच्चिन्त्यम् । तस्या अव्यवस्थाया उग्रत्वस्य निरूपयितुमशक्यत्वात् । उग्रेति विशेषणवैयर्थ्याच्च ॥ ३३ ॥ ३४ ॥

रा० टी०–ताभ्यामिति । ताभ्यां विसृष्टैः विशिखैराकाशं निरन्तरमिव अत एव तमसा वृत्तं बभूव ॥ ३३ ॥

रा० टी०–तैरिति । तयोः शरशतैः दिशः प्रदिशश्च शरसंकुला बभूवुः अत एव तमसा पिहितमत एव भीततरं सर्वमासीत् सार्द्धश्लोक एकान्वयि ॥ ३४ ॥

गो० टी०–तैः पतद्भिरित्यादिश्लोकद्वयमेकान्वयम् । शरशतैः निमित्तभूतैः महत् अत्यन्तम् ॥ ३४ ॥ ३५ ॥

३५–३६ ] ति० टी०–प्रतिभयं भयंकरम् ॥ ३५ ॥ ३६ ॥

रा० टी०–अस्तमिति । सहस्रांशौ अस्तं गते अत एव तमसैव संवृते सति रुधिरौघाः सहस्रशो महानद्यः प्रावर्तन्त ३५

गो० टी०–रुधिरौघेति । चिक्षिपुः चक्रुः ॥ ३६ ॥

३७–३९ ] ति० टी०–वाग्भिर्वागिन्द्रियैः । क्रव्यादा गृध्रादयः ॥ ३७–३९ ॥

रा० टी०–क्रव्यादा इति । दारुणाः क्रव्यादाः गृध्रादयः भीमनिस्वनान् चिक्षिपुः वायुर्न ववौ ॥ ३६ ॥

रा० टी०–स्वस्तीति । महर्षयः लोकेभ्यस्स्वस्त्यस्तु इति जजल्पुः गन्धर्वास्संपेतुः ॥ ३७ ॥

रा० टी०–अथेति । सौमित्रिः राक्षससिंहस्य चतुरो हयान् चतुर्भिः शरैर्विव्याध ॥ ३८ ॥

गो० टी०–न तदानीमित्यादि । अत्र युद्धस्थले पूर्वं संप्राप्ताः गन्धर्वाः चारणैः सह संपेतुः । अन्यत्र गता इत्यर्थः । अतिघोरयुद्धदर्शनभयादिति भावः ॥ ३७–३९ ॥

४० ] ति० टी०–पीतेन स्वर्णरूषितेन । संपूर्णायतमुक्तेन संपूर्णमाकर्णपर्यन्तमायतेनाकृष्टेन ततो मुक्तेन ॥ ४० ॥

४१–४३ ] ति० टी०–विचरिष्यतो रथसंचारं करिष्यतः । तलशब्दानुनादिना तलं ज्याघातवारणं तस्य ज्याघट्टनजो यः शब्दस्तस्यानुनादो यस्यास्ति तेन ॥ ४१–४३ ॥

रा० टी०–तत इति । पीतेन सुवर्णभूषितत्वेन तदीयवर्णेन संपूर्णायतात् आकर्णमाकर्षणात् मुक्तेन महेन्द्राशनिकल्पेन इन्द्रवज्रतुल्येन भल्लेन भल्लाकृतिना तलशब्देन तलं ज्याघातवारणं तस्य शब्देन ज्यासंघट्टजनितस्वनेन योऽनुनादः तद्वता अपरेण बाणाशनिना बाणरूपवज्रेण विचरिष्यतः सूतस्य शिरः राघवः कायादपाहरत् सार्द्धश्लोकद्वयमेकान्वयि ॥ ३९–४१ ॥

रा० टी०–स इति । मन्दोदरीसुतस्स इन्द्रजित् यन्तरि हते सति सारथ्यं स्वयमकरोत् धनुरस्पृशच्च ॥ ४२ ॥

रा० टी०–तदिति । सारथ्यं पश्यतां जनानां तत्सारथ्यकरणमद्भुतमभूत् अर्थं पृथक् ॥ ४३ ॥

गो० टी०–ततोऽपरेणेत्यादिसार्धश्लोकद्वयमेकान्वयम् संपूर्णायतमुक्तेन संपूर्णाकृष्टमुक्तेन ॥ ४०–४५ ॥

४४–४५ ] ति० टी०–हयेषु हयप्रेरणविषये व्यग्रहस्तं दृष्ट्वा । तत्समय इति शेषः ॥ ४४ ॥ ४५ ॥

---

१ वीति गो. पाठः । २ संवृतमिति गो. पा. । ३ भीमतरमिति गो. रा. पाठः । ४ संवृतमिति गो. पाठः । ५ एव हीति गो. रा. पाठः । ६ रुधिरौधमहानद्य इति गो. पाठः । ७ निःस्वनमिति गो. पाठः । ८ प्राप्ता इति गो. पाठः । ९ शितेनेति गो. पाठः । १० सामर्थ्यमिति गो. पाठः । ११ व्यग्रे इति गो. पाठः । १२ छिद्रेष्विति गो. रा. पाठः । १३ बाणेष्विति गो. पाठः । १४ सौमित्रिः शीघ्रविक्रमः, अर्दयामास समरे विचरन्तमभीतवदिति गो. रा. पा. परं विक्रम इत्यस्य स्थाने कृत्तम इति भेदो रा. पुस्तके । समरे इत्यस्य स्थाने बाणौघैरिति गो. पु. ।

निहतं सारथिं दृष्ट्वा समरे रावणात्मजः । प्रजहौ समरोद्धर्षं विषण्णः स बभूव ह ॥ ४६ ॥
विषण्णवदनं दृष्ट्वा राक्षसं हरियूथपाः । ततः परमसंहृष्टा लक्ष्मणं चाभ्यपूजयन् ॥ ४७ ॥
ततः प्रमाथी रभसः शरभो गन्धमादनः । अमृष्यमाणाश्चत्वारश्चक्रुर्वेगं हरीश्वराः ॥ ४८ ॥
ते चास्य हयमुख्येषु तूर्णमुत्पत्य वानराः । चतुर्षु सुमहावीर्या निपेतुर्भीमविक्रमाः ॥ ४९ ॥
तेषामधिष्ठितानां तैर्वानरैः पर्वतोपमैः । मुखेभ्यो रुधिरं व्यक्तं हयानां समवर्तत ॥ ५० ॥
ते हया मथिता भग्ना व्यसवो धरणीं गताः । ते निहत्य हयांस्तस्य प्रमथ्य च महारथम् ॥
पुनरुत्पत्य वेगेन तस्थुर्लक्ष्मणपार्श्वतः ॥ ५१ ॥
स हताश्वादवप्लुत्य रथान्मथितसारथिः । शरवर्षेण सौमित्रिमभ्यधावत रावणिः ॥ ५२ ॥
ततो महेन्द्रप्रतिमः सलक्ष्मणः पदातिनं तं निहतैर्हयोत्तमैः ।
सृजन्तमाजौ निशिताञ्छरोत्तमान्भृशं तदा बाणगतैर्व्यदारयत् ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

## नवतितमः सर्गः ।

हताश्वसारथिरिन्द्रजित्कंचित्कालं पदातिरेव युद्ध्वा नगरान्नवरथमारुह्योपस्थितः पुनरपूर्वं परमदारुणं युद्ध्वा परबलं प्रमथ्य चान्ते परमरोषणेन लक्ष्मणेनैन्द्रास्त्रेण वैवस्वतपुरातिथीकृतः देवानामृषीणां चामोदस्तदितरेषां महानुद्वेगश्च समभवत्पुष्पवृष्टिरपि वियतोऽपतत्सर्वत्र लक्ष्मणमुद्दिश्य जयोद्घोषश्च संवृत्तः ।

स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः । इन्द्रजित्परमक्रुद्धः संप्रजज्वाल तेजसा ॥ १ ॥
तौ धन्विनौ जिघांसन्तावन्योन्यमिषुभिर्भृशम् । विजयेनाभिनिष्क्रान्तौ वने गजवृषाविव ॥ २ ॥

रा० टी०–हयेष्विति । हयेषु तन्नियमनेषु व्यग्रहस्तं तमिन्द्रजितं शरैर्विव्याध धनुषि धनुर्ग्रहणे व्यग्रं ज्ञात्वेति शेषः हयेषु शरान् मुमुचे ॥ ४४ ॥

रा० टी०–छिद्रेष्विति । सौमित्रिः छिद्रेषु उत्कावसरेषु मत्सु अभीतवद्विचरन्तमिन्द्रजितमर्दयामास ॥ ४५ ॥

गो० टी०–छिद्रेष्विति । छिद्रेषु रन्ध्रेषु, बाणेषु बाणप्रयोगेषु, शीघ्रविक्रम इत्यन्वयः ॥ ४६ ॥

४६–५० ] ति० टी०–समरोद्धर्षं समरोत्साहं प्रजहौ त्यक्तवान् ॥ ४६–५० ॥

रा० टी०–निहतमिति । रावणात्मजः सारथिं निहतं दृष्ट्वा समरोद्धर्षं युद्धोत्साहं प्रजहौ अत एव विषण्णो बभूव ४६

रा० टी०–विषण्णेति । राक्षसं विषण्णवदनं दृष्ट्वा परमसंहृष्टाः हरियूथपाः लक्ष्मणमभ्यपूजयन् ॥ ४७ ॥

रा० टी०–तत इति । प्रमाथिप्रभृतयः चत्वारः अमृष्यमाणाः इन्द्राजजीवनमसहमानास्सन्तः वेगं चक्रुः ॥ ४८ ॥

गो० टी०–निहतमिति । समरोद्धर्षं युद्धगर्वम् ॥ ४७–४९

रा० टी०–ते इति । ते प्रमाथिप्रभृतयः अस्येन्द्रजितो हयेषु निपेतुः ॥ ४९ ॥

गो० टी०–ते चास्येति । समहावीर्याः महावीर्यसहिताः ५०

रा० टी०–तेषामिति । वानरैरधिष्ठितानां हयानां मुखेभ्यः रुधिरं समवर्तत ॥ ५० ॥

गो० टी०–तेषामिति । रक्तं शोणितम् ॥ ५१–५३ ॥

५१–५३ ] ति० टी०–ते निहत्येति । ऋषभादय इत्यर्थः ॥ ५१–५३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

रा० टी०–ते इति । भग्नाः अङ्गभङ्गं प्रापिताः अत एव मथिताः अत एव व्यसवो हयाः धरणीं गताः बभूवुरिति शेषः अर्धं पृथक् ते इति ते वानराः हयान्निहत्य महारथं प्रमथ्य च पुनरुत्पत्य च लक्ष्मणपार्श्वतस्तस्थुः–स इति । रावणिः रथादवप्लुत्य सौमित्रिमभ्यधावत ॥ ५१ ॥ ५२ ॥

रा० टी०–तत इति । लक्ष्मणः हयोत्तमैर्निहतैः हेतुभिः पदातिनं शरोत्तमान् सृजन्तं तं रावणिं बाणगणैर्व्यदारयत् ९३

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे नवतितमः सर्गः ॥ ९० ॥

गो० टी०–तत इति । पदातिनं पदाभ्यामापतन्तं गच्छन्तम् । "अत, सातत्यगमने" इत्यस्माण्णिनिः ॥ ९४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवतितमः सर्गः ॥ ९० ॥

१-२] ति० टी०–विजयेन विजयप्राप्तिरूपेण हेतुना अभिमुखतया युद्धार्थं प्रवृत्तावभूतामिति शेषः गजवृषौ गजश्रेष्ठौ १-२

१ उत्प्लुत्येति गो.पा. । २ रक्तमिति गो.पा. । ३ सारथेरिति गो.रा.पा. । ४ निशितैः शरोत्तमैरिति गो.पा. । ५ सृजन्तमिति गो.रा.पा. । ६ व्यबाधदिति गो.पा. ।

निबर्हयन्तश्चान्योन्यं ते राक्षसवनौकसः । भर्तारं न जहुर्युद्धे संपतन्तस्ततस्ततः ॥ ३ ॥
ततस्तान्राक्षसान्सर्वान्हर्षयन्रावणात्मजः । स्तुन्वानो हर्षमाणश्च इदं वचनमब्रवीत् ॥ ४ ॥
तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः । नेह विज्ञायते स्वो वा परो वा राक्षसोत्तमाः ॥ ५ ॥
धृष्टं भवन्तो युध्यन्तु हरीणां मोहनाय वै । अहं तु रथमास्थाय आगमिष्यामि संयुगे ॥ ६ ॥
तथा भवन्तः कुर्वन्तु यथेमे हि वनौकसः । न युध्येयुर्महात्मानः प्रविष्टे नगरं मयि ॥ ७ ॥
इत्युक्त्वा रावणसुतो वञ्चयित्वा वनौकसः । प्रविवेश पुरीं लङ्कां रथहेतोरमित्रहा ॥ ८ ॥
स रथं भूषयित्वाथ रुचिरं हेमभूषितम् । प्रासासिशरसंयुक्तं युक्तं परमवाजिभिः ॥ ९ ॥
अधिष्ठितं हयज्ञेन सूतेनाप्तोपदेशिना । आरुरोह महातेजा रावणिः समितिंजयः ॥ १० ॥
स राक्षसगणैर्मुख्यैर्वृतो मन्दोदरीसुतः । निर्ययौ नगराद्वीरः कृतान्तबलचोदितः ॥ ११ ॥
सोऽभिनिष्क्रम्य नगरादिन्द्रजित्परमौजसा । अभ्ययाज्जवनैरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२ ॥
ततो रथस्थमालोक्य सौमित्री रावणात्मजम् । वानराश्च महावीर्या राक्षसश्च विभीषणः ॥ १३ ॥
विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः । रावणिश्चापि संक्रुद्धो रणे वानरयूथपान् ॥ १४ ॥
पातयामास बाणौघैः शतशोऽथ सहस्रशः । स मण्डलीकृतधनू रावणिः समितिंजयः ॥ १५ ॥
हरीनभ्यहनत्क्रुद्धः परं लाघवमास्थितः । ते वध्यमाना हरयो नाराचैर्भीमविक्रमैः ॥ १६ ॥

रा० टी०--इन्द्रजितो युद्धमेवाह—स इत्यादिभिः। भूमौ तिष्ठन् अत एव परमक्रुद्ध इन्द्रजित् तेजसा संप्रजज्वाल॥ १ ॥

गो० टी०—अथेन्द्रजिद्वधः—स हताश्व इत्यादि॥ १ ॥

रा० टी०—ताविति । विजयेन स्वस्वविजयप्राप्तीच्छया अभिनिष्क्रान्तौ अत एव गजवृषाविव अन्योन्यं जिघांसन्तौ बभूवतुरिति शेषः ॥ २ ॥

गो० टी०—ताविति । विजयेनेति प्रयोजने तृतीया । विजयायेत्यर्थः। अभिनिष्क्रान्तौ बभूवतुरिति शेषः । गजवृषाविव गजश्रेष्ठाविव । यद्वा किंचिद्धीनबलत्वादिन्द्रजितो वृषभतुल्यत्वम् ॥ २ ॥

३ ] ति० टी०—निबर्हयन्तो मारयन्तः । भर्तारं स्वस्वभर्तारम् संपतन्तः संगच्छमानाः ॥ ३ ॥

रा० टी०—निबर्हयन्त इति । अन्योन्यं निबर्हयन्तो हिंसन्तो राक्षसवनौकसः भर्त्तारं संपतन्तोऽनुगच्छन्तस्सन्तः न जहुः ॥ ३ ॥

गो० टी०—निबर्हयन्त इति । संपतन्तः परितः संचरन्त इत्यर्थः ॥ ३ ॥

४ ] ति० टी०—स्तुन्वान इत्यार्षम् । स्तुवन्नित्यर्थः ॥ ४॥

रा० टी०—तत इति । रावणात्मजः राक्षसान् हर्षयन् हर्षयितुं स्तुन्वानः स्तुवन् हर्षमाणश्च सन् इदमब्रवीत् ॥ ४ ॥

गो० टी०—तत इति । स्तुवानः स्तुवन् । आर्षः शानच् ( ? ) ॥ ४ ॥ ५ ॥

५ ] ति० टी०—बहुलेन तमसा इमा दिशः संसक्ताः संवृताः । एवं चास्माकं बलकरी रात्रिरागता ॥ ५ ॥

रा० टी०—तदाकारमाह—तमसेति । हे राक्षसोत्तमाः दिशः बहुलेन तमसा संसक्ताः व्याप्ताः अत एव स्वः परो वा॰ न विज्ञायते वानरैरिति शेषः ॥ ५ ॥

६ ] ति० टी०—अतो भवन्तो धृष्टं निर्भयं युध्यन्तु । मोहनाय मद्गमनापरिज्ञानाय । त्वया किमर्थं गम्यते तत्राह—अहं त्विति ॥ ६ ॥

रा० टी०—धृष्टमिति । हरीणां मोहनाय धृष्टं यथा भवति तथा भवन्तो युध्यन्तु अहं तु रथमास्थाय पुरस्थरथान्तरे स्थित्वा संयुगे आगमिष्यामि ॥ ६ ॥

गो० टी०—धृष्टमिति । मोहनाय मन्निर्गमनापरिज्ञानाय ॥ ६—८ ॥

७-९ ] ति० टी०—प्रविष्टे प्रवेष्टुमुपक्रान्ते न युध्येयुः । मम नगरप्रवेशविघ्नार्थं यथा वानरा मया सह न युध्येरंस्तथा भवन्तः कुर्वन्त्वित्यर्थः ॥ ७-९ ॥

१०--१६ ] ति० टी०—हयज्ञेनाश्वहृदयज्ञेन । आप्तं हितमुपदेष्टुं शीलमस्त्यस्य तेन ॥ १०-१६ ॥

रा० टी०—तथेति । मयि नगरं प्रविष्टे सति यथा इमे वानराः न युध्येयुः तथा भवन्तः कुर्वन्तु ॥ ७ ॥

रा० टी०—इतीति । रावणसुतः वनौकसो वञ्चयित्वा तज्ज्ञानविषयत्वमप्राप्येत्यर्थः रथहेतोः लंकां प्रविवेश ॥ ८ ॥

रा० टी०—स इति । स इन्द्रजित् प्रासासिसंयुक्तं हयज्ञेन सूतेन अधिष्ठितं रथं भूषयित्वा आरुरोह ॥ श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

१ स्तुवान इति गो. पाठः । २ सयुगमिति गो. पाठः । ३ काननौकस इति गो. रा. पा. । ४ दुरात्मान इति गो. रा.पाठः । ५ स्विति गो.पाठः ६ शतसंपूर्णमिति गो. शरसंपूर्णमिति रा. पाठः । ७ तूर्णमिति गो. रा. पा. । ८ परवीरहेति गो. रा. पाठः । ९ विक्रमा इति गो. रा. पाठः ।

सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः । ततः समरकोपेन ज्वलितो रघुनन्दनः ॥
चिच्छेद कार्मुकं तस्य दर्शयन्पाणिलाघवम् ॥ १७ ॥
सोऽन्यत्कार्मुकमादाय सज्जं चक्रे त्वरन्निव । तदप्यस्य त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत ॥ १८ ॥
अथैनं छिन्नधन्वानमाशीविषविषोपमैः । विव्याधोरसि सौमित्री रावणिं पञ्चभिः शरैः ॥ १९ ॥
ते तस्य कायं निर्भिद्य महाकार्मुकनिःसृताः । निपेतुर्धरणीं बाणा रक्ता इव महोरगाः ॥ २० ॥
स छिन्नधन्वा रुधिरं वमन्वक्त्रेण रावणिः । जग्राह कार्मुकश्रेष्ठं दृढज्यं बलवत्तरम् ॥ २१ ॥
स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः । ववर्ष शरवर्षाणि वर्षाणीव पुरंदरः ॥ २२ ॥
मुक्तमिन्द्रजिता तत्तु शरवर्षमरिंदमः । आवारयदसंभ्रान्तो लक्ष्मणः सुदुरासदम् ॥ २३ ॥
संदर्शयामास तदा रावणिं रघुनन्दनः । असंभ्रान्तो महातेजास्तदद्भुतमिवाभवत् ॥ २४ ॥
ततस्तान्राक्षसान्सर्वांस्त्रिभिरेकैकमाहवे । अविध्यत्परमक्रुद्धः शीघ्रास्त्रं संप्रदर्शयन् ॥
राक्षसेन्द्रस्तु तं चापि बाणौघैः समताडयत् ॥ २५ ॥
सोऽतिविद्धो बलवता शत्रुणा शत्रुघातिना । असक्तं प्रेषयामास लक्ष्मणाय बहूञ्शरान् ॥ २६ ॥

रा० टी०–स इति । कृतान्तबलेन कालतेजसा चोदितः न्दोदरीसुतः नगरान्निर्ययौ ॥ ११ ॥

रा० टी०–स इति । इन्द्रजित् नगरान्निष्क्रम्य जवनैर-वेगवद्भिरश्वैः लक्ष्मणमभ्ययात् ॥ १२ ॥

गो० टी०–स रथमित्यादिश्लोकद्वयमेकान्वयम् । भूष-त्वा स्वतेजसा भूषयित्वा । आप्तोपदेशिना हितोपदे-ना ॥ ९—१२ ॥

रा० टी०–तत इति । रावणात्मजं रथस्थमालोक्य तस्य ाघवात् लाघवं संस्मृत्य सौमित्रिप्रभृतयः विस्मयं जग्मुः ला-वादित्यत्र ल्यब्लोप इति पञ्चमी सार्धश्लोक एकान्वयी ॥१३॥

रा० टी०–रावणिरिति । रावणिः शतशः सहस्रशो वा-रयूथपान् पातयामास ॥ १४ ॥

रा० टी०– स इति । मण्डलीकृतानि धनूंषि येन स वणिः हरीन् अभ्यहनत् अभ्यहन् ॥ १५ ॥

रा० टी०–ते इति । वध्यमाना हरयः शरणं रक्षकं सौ-त्रिं प्राप्ताः ॥ १६ ॥

गो० टी०–तत इत्यादि सार्धश्लोक एकान्वयः । ततः स्मायुद्धप्रदेशात् ॥ १३–१७ ॥

१७ ] ति० टी०–समरकोपेन रावणिसमरजन्यकोपेन १७

रा० टी०–तत इति । सौमित्रिः तस्येन्द्रजितः कार्मुकं चच्छेद ॥ १७ ॥

१८–१९ ] ति० टी०–त्वरन्निव शीघ्रमेव । तदपि द्वितीयं नुरपि ॥ १८ ॥ १९ ॥

रा० टी०–स इति । स इन्द्रजित् अन्यत् कार्मुकमादाय ज्यं ज्यासहितं चक्रे तदपि कार्मुकं लक्ष्मणो निरकृन्तत १८

रा० टी०–अथेति । एनं रावणिं सौमित्रिः पञ्चभिश्शरैः रसि विव्याध ॥ १९ ॥

गो० टी०–स इति । त्वरन्निवेति । इवशब्दो वाक्यालंकारे निरकृन्तत अच्छिनत् ॥ १८—२० ॥

२०-२३ ] ति० टी०–रक्ताः । बाणानामपि रुधिरसंब-न्धाद्रक्तत्वम् ॥ २०-२३ ॥

रा० टी०–ते इति । ते लक्ष्मणप्रयुक्ताः बाणाः तस्येन्द्र-जितः कायं निर्भिद्य रक्ता महोरगा इव निपेतुः ॥ २० ॥

रा० टी०–स इति । रुधिरं वमन्नपि रावणिः कार्मुकं श्रेष्ठं जग्राह ॥ २१ ॥

रा० टी०–स इति । परं लाघवमास्थितस्स रावणिः लक्ष्मणं समुद्दिश्य शरवर्षाणि ववर्ष ॥ २२ ॥

रा० टी०–मुक्तमिति । इन्द्रजिता मुक्तं दुरासदमन्यैर्नि-वारयितुमशक्यं शरवर्षं लक्ष्मणोऽवारयत् ॥ २३ ॥

गो० टी०–स भिन्नवर्मेति । अनेन पुनश्च कवचान्तर-मपि स्वीकृतवानित्यवगम्यते ॥ २१—२३ ॥

२४ ] ति० टी०–संदर्शयामास । स्वपौरुषमिति शेषः॥२४

रा० टी०–समिति । रघुनन्दनः यत् वारणरूपं स्वपौ-रुषं संदर्शयामास तत् अद्भुतमन्येषामाश्चर्यमेवाभवत् ॥ २४ ॥

गो० टी०–दर्शयामासेति । दर्शयामास पराक्रममिति शेषः ॥ २४ ॥

२५ ] ति० टी०–ननु कथं सर्वराक्षसा इन्द्रजिति युध्यति त्रिभिस्त्रिभिर्बाणैर्वेद्धुं शक्यास्तत्राह—शीघ्रास्त्रमिति । प्रयो-गमात्रेण सर्ववेधकमस्त्रं शीघ्रास्त्रम् । यद्वा भावप्रधानो निर्देशः । अल्पविषयकशीघ्रप्रयोगसामर्थ्यरूपं शीघ्रास्त्रत्वं संप्रदर्शय-न्नित्यर्थः ॥ २५ ॥

२६ ] ति० टी०–असक्तमविरतम् ॥ २६ ॥

रा० टी०–तत इति । परमक्रुद्धो लक्ष्मणः सर्वान् राक्षसान्

१ सज्यमिति गो. रा. पाठः । २ भिन्नवर्मेति गो. रा. पाठः । ३ दर्शयामास चेति गो. पाठः । ४ मुक्तमिति गो. रा. पाठः ।

तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद परवीरहा । सारथेरस्य च रणे रथिनो रथसत्तमः ॥ २७ ॥
शिरो जहार धर्मात्मा भल्लेनानतपर्वणा । असूतास्ते हयास्तत्र रथमूहुरविक्लवाः ॥ २८ ॥
मण्डलान्यभिधावन्ति तदद्भुतमिवाभवत् । अमर्षवशमापन्नः सौमित्रिर्दृढविक्रमः ॥ २९ ॥
प्रत्यविध्यद्धयांस्तस्य शरैर्वित्रासयन्रणे । अमर्षमाणस्तत्कर्म रावणस्य सुतो रणे ॥ ३० ॥
विव्याध दशभिर्बाणैः सौमित्रिं रोमहर्षणम् । ते तस्य वज्रप्रतिमाः शराः सर्वविषोपमाः ॥
विलयं जग्मुरागत्य कवचं काञ्चनप्रभम् ॥ ३१ ॥
अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः । ललाटे लक्ष्मणं बाणैः सुपुङ्खैस्त्रिभिरिन्द्रजित् ॥ ३२ ॥
अविध्यत्परमक्रुद्धः शीघ्रमस्त्रं प्रदर्शयन् । तैः पृषत्कैर्ललाटस्थैः शुशुभे रघुनन्दनः ॥ ३३ ॥
रणाग्रे समरश्लाघी त्रिशृङ्ग इव पर्वतः । स तथाप्यर्दितो बाणै राक्षसेन तदा मृधे ॥ ३४ ॥
तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिः शरैः । विकृष्येन्द्रजितो युद्धे वदने शुभकुण्डले ॥ ३५ ॥
लक्ष्मणेन्द्रजितौ वीरौ महाबलशरासनौ । अन्योन्यं जघ्नतुर्वीरौ विशिखैर्भीमविक्रमौ ॥ ३६ ॥
ततः शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ । रणे तौ रेजतुर्वीरौ पुष्पिताविव किंशुकौ ॥ ३७ ॥

---

त्रिभिश्शरैरेकैकमविध्यत् राक्षसेन्द्रसुतं तु बाणौघैस्समताडयत् सार्द्धश्लोक एकान्वयी ॥ २५–२७ ॥

गो० टी०—ततस्तानित्यादिसार्धश्लोक एकान्वयः शीघ्रास्त्रं शीघ्रमस्त्रम् ॥ २५ ॥ २६ ॥

रा० टी०—स इति । शत्रुणा अतिविद्धः स इन्द्रजित् असक्तमास्थारहितं यथा भवति तथा लक्ष्मणाय बहून् शरान् प्रेषयामास ॥ २८ ॥

गो० टी०—स इति । असक्तम् अव्यासङ्गम्, अविलम्बितं वा ॥ २७ ॥

२७ ] ति० टी०—रथसत्तमो लक्ष्मणः ॥ २७ ॥

रा० टी०—तानिति । तान् इन्द्रजित्प्रेषितान् अप्राप्तान् शरान् परवीरहा लक्ष्मणश्चिच्छेद अर्द्धं पृथक् ॥ २८ ॥

रा० टी०—सारथेरिति । रघुसत्तमो लक्ष्मणः रथिनः अस्य इन्द्रजितः सारथेः चरणे शिरश्च भल्लेन जहार रणे इति छेदे तु शिर एव हरतेः कर्म बोध्यम् ॥ २९ ॥

गो० टी०—तानप्राप्तानित्यादिसार्धश्लोक एकान्वयः । रथिनोऽस्य रावणेः सारथेरित्यन्वयः ॥ २८ ॥

२८–३० ] ति० टी०—असूता असारथयः अविक्लवाः अनाकुलाः ॥ २८–३० ॥

रा० टी०—असूता इति । असूताः सूतरहिता हया रथमूहुः मण्डलानि अभिधावन्ति अभ्यधावन्त च तदद्भुतमिवाभवत् ३०

रा० टी०—अमर्षेति । सौमित्रिस्तस्य हयान् शरैः प्रत्यविध्यत् ॥ ३१ ॥

रा० टी०—अमर्षमाण इति । तत् लक्ष्मणकर्तृकाश्वनिहननरूपं कर्म अमर्षमाणो रावणस्य सुतः दशभिर्बाणैस्सौमित्रिं विव्याध ॥ ३२ ॥

गो० टी०—असूता इति । अविक्लवाः अनाकुलाः । शिक्षापाटवातिशयादिति मन्तव्यम् ॥ २९–३१ ॥

३१ ] ति० टी०—कवचमागत्य प्राप्य विलयं जग्मुः पूर्वकवचस्य विशरणेऽपि कवचान्तरं धृतमित्यवगम्यते ॥३१।

रा० टी०—ते इति । वज्रप्रतिमाः तस्येन्द्रजितश्शराः कवचं लक्ष्मणस्य वर्म आगत्य प्राप्य विलयं जग्मुः ॥ ३३ ॥

गो० टी०—ते तस्येति । विलयं नाशम् ॥ ३२ ॥

३२–३४ ] ति० टी०—एवं दर्शनात्तमभेद्यकवचं मत्वा कवचरहिते स्थाने ललाटेऽविध्यत् ॥ ३२-३४ ॥

३५ ] ति० टी०—शरासनं विकृष्येन्द्रजितो वदने शरैर्विव्याधेति संबन्धः ॥ ३५ ॥

रा० टी०—अभेद्येति । लक्ष्मणमभेद्यकवचं मत्वा त्रिभिर्बाणैर्ललाटे अविध्यत् सार्द्धश्लोक एकान्वयी ॥ ३४ ॥ ३५ ।

गो० टी०—अभेद्येत्यादिसार्धश्लोकः । अभेद्यकवचमित्यनेन पूर्वकवचस्य भग्नत्वात् कवचान्तरं धृतमिति गम्यते । शीघ्रास्त्रं च प्रदर्शयन् । आत्मनः शीघ्रास्त्रत्वं प्रदर्शयन्नित्यर्थः ॥ ३३ ॥

रा० टी०—तैरिति। ललाटस्थैः सर्पाणामेव बाणत्वेन ललाटे स्थितैः पृषत्कैर्बाणैः त्रिशृंगः पर्वत इव रघुनन्दनः शुशुभे ॥३६।

गो० टी०—तैरिति । समरं श्लाघत इति समरश्लाघी समरप्रिय इत्यर्थः । पृषत्कैः बाणैः ॥ ३४ ॥

रा० टी०—स इति । राक्षसेन बाणैः तथार्दितोपि लक्ष्मण विकृष्य शरान् निष्कृष्य शुभकुण्डले इन्द्रजितो वदने तमिन्द्रजितं पञ्चभिश्शरैः प्रतिविव्याध सार्द्धश्लोक एकान्वयी ॥ ३७ ॥

गो० टी०—स तथेत्यादिसार्धश्लोक एकान्वयः । विकृष्य धनुराकृष्य ॥ ३५ ॥

३६–३७ ] ति० टी०—विशिखैर्विशिष्टशिखैः । शितैर्बाणैरिति यावत् ॥ ३६ ॥ ३७ ॥

---

१ रघुनन्दन इति गो. पाठः । २ धावन्त इति गो. पाठः । ३ मृष्यमाण इति गो. पाठः । ४ तममर्षणमिति गो. रा.पाठः । ५ शीघ्रास्त्रं चेति गो पाठः । ६ ह्यर्दित इति गो. पाठः । ७ बाणैरिति गो. रा. पाठः ।

तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ । घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये ॥ ३८ ॥
ततः समरकोपेन संयुतो रावणात्मजः । विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे ॥ ३९ ॥
अयोमुखैस्त्रिभिर्विद्ध्वा राक्षसेन्द्रं विभीषणम् । एकैकेनाभिविव्याध तान्सर्वान्हरियूथपान् ॥ ४० ॥
तस्मै दृढतरं क्रुद्धो जघान गदया हयान् । विभीषणो महातेजा रावणेः स दुरात्मनः ॥ ४१ ॥
स हताश्वादवप्लुत्य रथान्मथितसारथिः । अथ शक्तिं महातेजाः पितृव्याय मुमोच ह ॥ ४२ ॥
तामापतन्तीं संप्रेक्ष्य सुमित्रानन्दवर्धनः । चिच्छेद निशितैर्बाणैर्दशधापातयद्भुवि ॥ ४३ ॥
तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः । वज्रस्पर्शसमान्पञ्च ससर्जोरसि मार्गणान् ॥ ४४ ॥
ते तस्य कायं भित्त्वा तु रुक्मपुङ्खा निमित्तगाः । बभूवुर्लोहिता दिग्धा रक्ता इव महोरगाः ॥ ४५ ॥
स पितृव्यस्य संक्रुद्ध इन्द्रजिच्छरमाददे । उत्तमं रक्षसां मध्ये यमदत्तं महाबलम् ॥ ४६ ॥
तं समीक्ष्य महातेजा महेषुं तेन संधितम् । लक्ष्मणोऽप्याददे बाणमन्यद्भीमपराक्रमः ॥ ४७ ॥
कुबेरेण स्वयं स्वप्ने यद्दत्तममितात्मना । दुर्जयं दुर्विषह्यं च सेन्द्रैरपि सुरासुरैः ॥ ४८ ॥
तयोस्तु धनुषी श्रेष्ठे बाहुभिः परिघोपमैः । विकृष्यमाणे बलवत्क्रौञ्चाविव चुकूजतुः ॥ ४९ ॥

रा० टी०—लक्ष्मणेति । महती बले शरासने च ययोः तौ लक्ष्मणेंद्रजितौ अन्योन्यं जघ्नतुः ॥ ३८ ॥

रा० टी०—तत इति । शोणिताभ्यामारुण्यरुधिराभ्यां दिग्धान्यङ्गानि ययोः तौ लक्ष्मणेन्द्रजितौ पुष्पितौ किंशुकाविव रेजतुः ॥ ३९ ॥

गो० टी०—लक्ष्मणेन्द्राजिताविति । विशिखैः विविधशिखैः । करवीरपत्राद्याकाराग्रैरित्यर्थः ॥ ३६ ॥ ३७ ॥

३८-४२ ] ति० टी०—जये कृतभावौ कृताभिप्रायौ ॥ ३८--४२ ॥

रा० टी०—ताविति । जये कृतः संस्थापितः भावोऽभिप्रायो याभ्यां तौ धन्विनौ परस्परमभ्येत्य सर्वगात्रेषु विव्यधतुः॥४०॥

रा० टी०—तत इति । रावणात्मजः त्रिभिर्बाणैः विभीषणं वदने विव्याध ॥ ४१ ॥

रा० टी०—अयोमुखैरिति । विभीषणं त्रिभिरयोमुखैर्बाणैर्विद्ध्वा एकैकेन बाणेन हरियूथपान् अभिविव्याध ॥ ४२ ॥

रा० टी०—तस्मा इति । तस्मै इन्द्रजिते दृढतरं क्रुद्धो विभीषणः रावणेर्हयान् गदया जघान ॥ ४३ ॥

गो० टी०—ताविति । जये कृतभावावित्यन्वयः ॥३८-४१

रा० टी०— स इति । मथितस्सारथिर्यस्य स इन्द्रजित् रथादवप्लुत्य पितृव्याय शक्तिं मुमोच ॥ ४४ ॥

गो० टी०—स इति । रथशक्तिं रथेवस्थितां शक्तिम्४२॥४३

४३-४४ ] ति० टी०—दशधा चिच्छेद भुव्यपातयच्च ॥ ४३ ॥ ४४ ॥

रा० टी०—तामिति । सुमित्रानन्दवर्द्धनः आपतन्तीं तां शक्तिं संप्रेक्ष्य बाणैर्दशधा चिच्छेद अत एव सा भुवि अपतत् ॥ ४५ ॥

रा० टी०—तस्मा इति । तस्मै इन्द्रजिते क्रुद्धो विभीषणः पंच मार्गणान् बाणान् उरसि ससर्ज ॥ ४६ ॥

गो० टी०—तस्मा इति । दृढधनुः दृढधन्वा । समासान्तविधेरनित्यत्वात्साधुः ॥ ४४ ॥

४५–४६] ति० टी०—निमित्तगा लक्ष्यगाः । 'वेध्यं लक्ष्यं शरव्यं च निमित्तं चेति कथ्यते'। लोहितं रुधिरम् ॥४५॥४६॥

रा० टी०—ते इति। निमित्तगाः लक्ष्यं प्राप्ताः तस्य विभीषणस्य ते बाणाः रक्ता महोरगा इव लोहिता बभूवुः ॥ ४७ ॥

गो० टी०—ते तस्येति । निमित्तगाः लक्ष्यगाः । वेध्यं लक्ष्यं शरव्यं च निमित्तं च समं विदुरिति निघण्टुः ॥ ४५ ॥

रा० टी०—स इति । रक्षसां मध्ये विद्यमानः पितृव्यस्य पितृव्याय संक्रुद्ध इन्द्रजित् यमदत्तमुत्तमं शरमाददे ॥ ४८ ॥

गो० टी०—स पितृव्यायेति । रक्षसां मध्ये आदद इत्यन्वयः ॥ ४६ ॥

४७ ] ति० टी०—बाणशब्दोऽर्धर्चादिः ॥ ४७ ॥

४८-४९ ] ति० टी०—अमितात्मनापरिच्छिन्नमाहात्म्येन ॥ ४८ ॥ ४९ ॥

रा० टी०—तमिति । तेनेन्द्रजिता संहितं तं महेषुं समीक्ष्य लक्ष्मणोपि स्वप्ने कुबेरेण स्वयं यद्दत्तमत एव सुरासुरैरपि दुर्जयमत एव दुर्विषह्यं तदन्यद्बाणमाददे श्लोकद्वयमेकान्वयि ॥ ४९ ॥ ५० ॥

रा० टी०—तयोरिति । परिघोपमैः तयोर्बाहुभिः बलवद्यथा भवति तथा विकृष्यमाणे धनुषी क्रौञ्चाविव चुकूजतुः ५१

गो० टी०—तं समीक्ष्येत्यादिश्लोकद्वयमेकान्वयम् । महात्मना अप्रमेयबुद्धिना । भाविवृत्तान्तज्ञेनेति यावत् ॥४७-५०

१ निहतसारथिरिति गो. पाठः । २ रथेति गो. पाठः । ३ सापतदिति गो. रा. पाठः । ४ भित्वेति रा. निर्भिद्येति गो. पाठः । ५ पितृव्यायेति गो. पाठः । ६ बक इति गो. पाठः । ७ संहितमिति गो. रा. पाठः । ८ अन्यमिति गो. पा. । ९ स्वस्मै दत्तं महात्मनेति गो. पाठः ।

ताभ्यां तु धनुषि श्रेष्ठे संहितौ सायकोत्तमौ । विकृष्यमाणौ वीराभ्यां भृशं जज्वलतुः श्रिया ॥ ५० ॥
तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ । मुखेन मुखमाहत्य संनिपेततुरोजसा ॥ ५१ ॥
संनिपातस्तयोश्चासीच्छरयोर्घोररूपयोः । सधूमविस्फुलिङ्गश्च तज्जोऽग्निर्दारुणोऽभवत् ॥ ५२ ॥
तौ महाग्रहसंकाशावन्योन्यं संनिपत्य च । सङ्ग्रामे शतधा यातौ मेदिन्यां चैव पेततुः ॥ ५३ ॥
शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि । व्रीडितौ जातरोषौ च लक्ष्मणेन्द्रजितौ तदा ॥ ५४ ॥
स संरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे । रौद्रं महेन्द्रजिद्युद्धेऽप्यसृजद्युद्धविष्ठितः ॥ ५५ ॥
तेन तद्विहतं शस्त्रं वारुणं परमाद्भुतम् । ततः क्रुद्धो महातेजा इन्द्रजित्समितिंजयः ॥
आग्नेयं संदधे दीप्तं सलोकं संक्षिपन्निव ॥ ५६ ॥
सौर्येणास्त्रेण तं वीरो लक्ष्मणः पर्यवारयत् । अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्च्छितः ॥ ५७ ॥
आददे निशितं बाणमासुरं शत्रुदारणम् । तस्माच्चापाद्विनिष्पेतुर्भास्वराः कूटमुद्गराः ॥ ५८ ॥
शूलानि च भुशुण्ड्यश्च गदाः खड्गाः परश्वधाः । तदृष्ट्वा लक्ष्मणः संख्ये घोरमस्त्रं सुदारुणम् ॥ ५९ ॥
अवार्यं सर्वभूतानां सर्वशस्त्रविदारणम् । माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत् ॥ ६० ॥
तयोः समभवद्युद्धमद्भुतं रोमहर्षणम् । गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥ ६१ ॥

---

५० ] ति० टी०—संहितौ योजितौ ॥ ५० ॥

रा० टी०—ताभ्यामिति । ताभ्यां नरराक्षसाभ्यां श्रेष्ठे धनुषि संहितौ अत एव विकृष्यमाणौ सायकोत्तमौ श्रिया जज्वलतुः ॥ ५२ ॥

५१ ] ति० टी०—संनिपेततुः संघर्षं प्रापतुः ॥ ५१ ॥

रा० टी०—ताविति । धनुर्भ्यां च्युतौ आकाशं भासयन्तौ विशिखौ मुखमाहत्य सन्निपेततुः ॥ ५३ ॥

गो० टी०—ताविति । सन्निपेततुः संघर्षं प्राप्तौ ॥ ५१ ॥

५२ ] ति० टी०—बाणसंनिपाताज्जातस्तज्जः ॥ ५२ ॥

रा० टी०—सन्निपात इति । तयोश्शरयोः यः सन्निपात आसीत् तज्जो दारुणोऽग्निरभवत् ॥ ५४ ॥

गो० टी०—सन्निपात इति । तज्जः सन्निपातजः ५२-५६

५३ ] ति० टी०—महाग्रहोऽङ्गारकशन्यादिः ॥ ५३ ॥

रा० टी०—ताविति । अन्योन्यं सन्निपत्य शतधा यातौ शरौ मेदिन्यां पेततुः ॥ ५५ ॥

५४–५५ ] ति० टी०—व्रीडितौ स्वस्वप्रयुक्तशरस्य मोघत्वदर्शनेन संजातलज्जौ । यद्यपि रावणेरेव व्रीडा युक्ता, लक्ष्मणस्य तु तद्बाणनिवारणाय प्रयोक्तुः सार्थक्यसत्त्वेन व्रीडाभावः, तथापि तन्निराकरणपूर्वकं रिपुवधपर्यन्तव्यापारेणोपादानात्तदभावेन तस्यापि लज्जेति बोध्यम् । छत्रिन्यायेन द्विवचनप्रयोग इति कतकः । जातरोषौ रामाविशेषे विभीषणे बाणः प्रयुक्त इति लक्ष्मणस्य रोषः । लक्ष्मणस्तं परिहृतवानिति ...णे रोषः ॥ ५४ ॥ ५५ ॥

रा० टी०—शराविति । उभौ लक्ष्मणेन्द्रजितौ शरौ प्रतिहतौ दृष्ट्वा व्रीडितौ जातरोषौ च बभूवतुरिति शेषः ॥ ५६ ॥

रा० टी०—सुसंरब्ध इति । सौमित्रिः वारुणमस्त्रमाददे व्यसृजच्च इन्द्रजिदपि रौद्रमस्त्रमाददे व्यसृजच्च तेनेति तदस्त्रं तेनेंद्रजिता विहतं स्वास्त्रेण विनाशितं सार्द्धश्लोक एकान्वयी ॥ ५७ ॥

५६ ] ति० टी०—लोकं संक्षिपन्निव संहरन्निव ॥ ५६ ॥

रा० टी०—तत इति । ततः लक्ष्मणकर्तृकपूर्वशस्त्रचालनात् लोकं संक्षिपन्निव क्रुद्ध इन्द्रजित् आग्नेयमस्त्रं संदधे ॥ ५८ ॥

गो० टी०—तत इति । संक्षिपन् संहरन् ॥ ५७ ॥

५७–६१ ] ति० टी०—'शस्त्रं निवारितम्' इति पाठे शस्त्रशब्दोऽस्त्रपर्यायः ॥ ५७–६१ ॥

रा० टी०—सौर्येणेति । लक्ष्मणः सौर्येणास्त्रेण तमाग्नेयं पर्यवारयत् पृथक् अस्त्रमिति रावणिः आसुरं बाणं बाणसंयोजितचापमाददे ॥ ५९ ॥

गो० टी०—सौरेणेति । सौरेण सूर्यदेवताकेन । "सूर्यतिष्याग्यस्त्य०" इत्यादिना यलोपः ॥ ५८ ॥ ५९ ॥

रा० टी०—तस्मादिति । तस्मात् चापात् कूटमुद्गरादयो विनिष्पेतुः ॥ ६० ॥

गो० टी०—तस्मादिति । असुरास्त्रप्रयोगाद्धेतोः, चापात् इन्द्रजिद्धनुषोपादानात्, कूटमुद्गरादयो विनिष्पेतुरित्यन्वयः । भुशुण्ड्यः मुसलविशेषाः ॥ ६० ॥

रा० टी०—तदिति । लक्ष्मणः सर्वभूतानामवार्यं घोरं

---

१ ताविति गो. रा. पाठः । २ यान्ताविति गो. पाठः । ३ विनीति गो. पाठः । ४ स्विति गो. रा. पाठः । ५ युधीति गो.रा.पाठः । ६ शस्त्रमिति गो. चास्त्रमिति रा. पाठः । ७ सौरेणेति गो. पाठः । ८ तदिति गो.रा.पाठः । ९ असुरं शत्रुनाशाय घोरमस्त्रं समाददे इति गो. पाठः । १० दारुणमिति रा. पाठः । ११ अथासुरमिति गो. पाठः । १२ नाशनमिति गो. पाठः । १३ तुमुलं युद्धं संबभूवाद्भुतोपममिति गो. पाठः ।

भैरवाभिरुते भीमे युद्धे वानररक्षसाम् । भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ ॥ ६२ ॥
ऋषयः पितरो देवा गन्धर्वगरुडोरगाः । शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ ६३ ॥
अथान्यं मार्गणश्रेष्ठं संदधे राघवानुजः । हुताशनसमस्पर्शं रावणात्मजदारणम् ॥ ६४ ॥
सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् । सुवर्णविकृतं वीरः शरीरान्तकरं शरम् ॥ ६५ ॥
दुरावारं दुर्विषमं राक्षसानां भयावहम् । आशीविषविषप्रख्यं देवसङ्घैः समर्चितम् ॥ ६६ ॥
येन शक्रो महातेजा दानवानजयत्प्रभुः । पुरा देवासुरे युद्धे वीर्यवान्हरिवाहनः ॥ ६७ ॥
अथैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् । शरश्रेष्ठं धनुःश्रेष्ठे विकर्षन्निदमब्रवीत् ॥ ६८ ॥
[ संधायामित्रदलनं विचकर्ष शरासनम् । सज्यमायम्य दुर्धर्षः कालो लोकक्षये यथा ॥
संधाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् । ]
लक्ष्मीवांल्लक्ष्मणो वाक्यमर्थसाधकमात्मनः । धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यदि ॥
पौरुषे चाप्रतिद्वन्द्वस्तदैनं जहि रावणिम् ॥ ६९ ॥
इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् । लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥
ऐन्द्रास्त्रेण समायुज्य लक्ष्मणः परवीरहा ॥ ७० ॥
तच्छिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् । प्रमथ्येन्द्रजितः कायात्पातयामास भूतले ॥ ७१ ॥

---

तदस्त्रं दृष्ट्वा माहेश्वरेणास्त्रेण तदस्त्रं प्रत्यवारयत् सार्द्धश्लोक एकान्वयी ॥ ६१ ॥ ६२ ॥

गो० टी०–तद्दृष्ट्वेत्यादिसार्धश्लोक एकान्वयः । क्रियाद्वयार्थं तदस्त्रमिति द्विरुक्तिः ॥ ६१ ॥

रा० टी०–तयोरिति । तयोः अस्त्रयोर्युद्धं समभवत् अत एव गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् स्वस्वरक्षार्थं तत्र तस्थुः ॥ ६३ ॥

गो० टी०–तयोरिति । स्पष्टः ॥ ६२ ॥

६२–६३ ] ति० टी०–भैरवमभिरुतं यस्मिंस्तादृशे । भूतैः प्राणिभिः ॥ ६२ ॥ ६३ ॥

रा० टी०–भैरवेति । भैरवं भयंकरमभिरुतं शब्दो यस्मिन् तस्मिन् वानररक्षसां युद्धे विस्मितैर्बहुभिर्भूतैरावृतमाकाशं बभौ ॥ ६४ ॥

गो० टी०–भैरवेति । भैरवाभिरुते भयंकरशब्दे ॥ ६३ ॥

रा० टी०–ऋषय इति । ऋषिप्रभृतयः शतक्रतुं पुरस्कृत्य लक्ष्मणं ररक्षुः ॥ ६६ ॥

गो० टी०–ऋषय इति । ररक्षुः जय जयेत्याद्युक्तिभिरित्यर्थः ॥ ६४ ॥ ६६ ॥

६४ ] ति० टी०–संनिहितैतदस्त्रेणैवायं वध्य इति निश्चित्यैन्द्रास्त्रं संदध इत्याह—अथेति । अत्र प्रत्यक्षं रावणेर्ब्रह्मशापवशात् बुद्ध्यारूढम् वस्तुतोऽस्य प्रत्यक्षं नास्त्येवेति कतकः ६४

रा० टी०–अथेति । राघवानुजः अन्यं मार्गणश्रेष्ठमाददे अस्य पृथक् श्रेष्ठत्वमुपपादयन्नाह–हुताशनेति । हुताशनसमः स्पर्शो यस्य शोभने पत्रे पुंखौ यस्य अनुवृत्तानि यथोक्तवृत्तत्वगुणविशिष्टानि अङ्गानि यस्य शोभनं संस्थितमवयवविन्यासो यस्य सुवर्णेन विकृतं भूषितं शरीराणां रिपुदेहानामन्तकरमत एव रावणात्मजदारणम् दुर्विषहं दुस्सहं देवसङ्घैस्सुपूजितम् येन हरिवाहनोऽश्वारूढः शक्रः देवासुरे युद्धे दानवान् अजयत् तत् ऐन्द्रमिन्द्रदेवताकं शरश्रेष्ठं शरमस्त्रं धनुःश्रेष्ठे नरश्रेष्ठो लक्ष्मणोभिसंदधे सार्धश्लोकचतुष्टयमेकान्वयि ॥ ६६–६९ ॥

६५ ] ति० टी०–अनुवृत्ताङ्गमानुपूर्व्यात्तनुत्ववद्वृत्तत्वगुणयुक्तमङ्गं यस्य । सुसंस्थितं शोभनसंस्थानम् । सुवर्णविकृतं स्वर्णभूषितम् ॥ ६५ ॥

६६–६८] ति० टी०–दुरावारमस्त्रान्तरैर्वारयितुमशक्यम् । आशीविषत्वगुणकं यद्विषं महासर्पस्तत्प्रख्यं तत्सदृशम् । देवसङ्घैः समर्चितं पूजितं देवराजीयत्वादेव ॥ ६६–६८ ॥

गो० टी०–सुपत्रमित्यादि चतुःश्लोक्येकान्वया । अनुवृत्ताङ्गं वर्तुलस्वरूपम् सुसंस्थितं सुसंस्थानम् सुवर्णविकृतं सुवर्णविचित्रितम् । हरिवाहनः हरितवर्णाश्वः । ऐन्द्रमस्त्रम् । ऐन्द्रास्त्रमन्त्रयोजितम् ॥ ६६–६९ ॥

रा० टी०–सन्धायेति । दुर्धर्षो लक्ष्मणः शरासनं धनुरायम्यानम्य संधाय शरेण संयोज्य च विचकर्ष ॥ ७० ॥

रा० टी०–संधायेति । विकर्षन् लक्ष्मणः अर्थसाधकमिदं वाक्यमब्रवीत् ॥ ७१ ॥

गो० टी०–संधायेति । अमित्रदलनं शत्रुनाशनम् । कालः यमः ॥ ७०–७२ ॥

६९–७१ ] ति० टी०–अर्थसाधनमात्मनः कार्यसिद्धिहेतुभूतमिदं वक्ष्यमाणवचनमस्त्राधिष्ठात्रीं देवतां प्रत्यब्रवीत् ६९-७१

---

१ गन्धर्वा इति गो. पाठः । २ दुर्वारमिति रा. पाठः । ३ विषह्यमिति गो. विषह्यमिति रा. पाठः । ४ देवेति गो. पाठः । ५ तदेति गो. रा. पाठः । ६ नरश्रेष्ठोऽभिसंदधे इति गो. रा. पाठः । ७ इदं सार्धपद्यमाधिकं गो. रा. तथापि दलनमित्यस्य स्थाने मथनमिति रा. पाठे । ८ शरेति गो. रा. पाठः । ९ च महाबल इति रा. पाठः । १० स शिर इति गो. पाठः ।

तद्राक्षसतनूजस्य भिन्नस्कन्धं शिरो महत् । तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् ॥ ७२ ॥
हतः सः निपपाताथ धरण्यां रावणात्मजः । कवची सशिरस्त्राणो विप्रविद्धशरासनः ॥ ७३ ॥
चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः । हृष्यन्ते निहते तस्मिन्देवा वृत्रवधे यथा ॥ ७४ ॥
अथान्तरिक्षे भूतानामृषीणां च महात्मनाम् । जज्ञेऽथ जयसंनादो गन्धर्वाप्सरसामपि ॥ ७५ ॥
पतितं समभिज्ञाय राक्षसी सा महाचमूः । वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ॥ ७६ ॥
वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः । लङ्कामभिमुखाः सस्रुर्भ्रष्टसंज्ञाः प्रधाविताः ॥ ७७ ॥
दुद्रुवुर्बहुधा भीता राक्षसाः शतशो दिशः । त्यक्त्वा प्रहरणान्सर्वे पट्टिशासिपरश्वधान् ॥ ७८ ॥
केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः । समुद्रे पतिताः केचित्केचित्पर्वतमाश्रिताः ॥ ७९ ॥
हतमिन्द्रजितं दृष्ट्वा शयानं च रणक्षितौ । राक्षसानां सहस्रेषु न कश्चित्प्रत्यदृश्यत ॥ ८० ॥
यथास्तं गत आदित्ये नावतिष्ठन्ति रश्मयः । तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः ॥ ८१ ॥
शान्तरश्मिरिवादित्यो निर्वाण इव पावकः । बभूव स महाबाहुर्व्यपास्तगतजीवितः ॥ ८२ ॥
प्रशान्तपीडाबहुलो विनष्टारिः प्रहर्षवान् । बभूव लोकः पतिते राक्षसेन्द्रसुते तदा ॥ ८३ ॥
हर्षं च शक्रो भगवान्सह सर्वैर्महर्षिभिः । जगाम निहते तस्मिन्राक्षसे पापकर्मणि ॥ ८४ ॥
आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः । नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः ॥ ८५ ॥

रा० टी०–तदाकारं वदन्नाह–धर्मात्मेति । दाशरथी रामः यदि धर्मात्मा धर्म एवात्मा मनो यस्य अधर्मसंसर्गशून्य इत्यर्थः अत एव सत्या संध्या प्रतिज्ञा यस्य पौरुषे अप्रतिद्वन्द्वः समाधिकरहित इत्यर्थः तदा एनं रावणिं जहि इति लक्ष्मण उक्त्वा आकर्णं बाणं विकृष्य इन्द्रजितं प्रति ससर्ज श्लोकद्वयमेकान्वयि७२–७३

रा० टी०–ऐन्द्रेति । लक्ष्मणः ऐन्द्रास्त्रेण समायोज्य सशिरस्त्राणं शिरस्त्राणसहितं तस्येन्द्रजितश्शिरः कायात्प्रमथ्य छित्वा भूतले पातयामास सार्द्धश्लोक एकान्वयी ॥ ७४ ॥

गो० टी०–इत्युक्त्वेत्यादिसार्धश्लोक एकान्वयः ॥ बाणमैन्द्रास्त्रमन्त्रेण समायोज्य ससर्जेत्यन्वयः ः एको लक्ष्मणशब्दो लक्ष्मीयुक्तवचनः लक्ष्मीवान् लक्ष्मणः श्रीलः श्रीमानित्यमरः ७३

गो०टी०-स शिरः सशिरस्त्राणमिति। स बाणः७४-७६

७२–८१ ] ति० टी०–तपनीयनिभत्वे उपपत्तिः—रुधिरोक्षितमिति ॥ ७२–८१ ॥

रा० टी०–तदिति । राक्षसतनूजस्य तत् छिन्नं शिरो भूमौ ददृशे ॥ ७५ ॥

रा० टी०–हत इति । विप्रविद्धं शरासनं धनुर्यस्य स हतो रावणात्मजो धरण्यां निपपात ॥ ७६ ॥

रा० टी०–चुक्रुशुरिति । तस्मिन् इन्द्रजिति निहते सति वानराः हृष्यन्ते चुक्रुशुश्च ॥ ७७ ॥

रा० टी०–अथेति । अन्तरिक्षे भूतादीनां सन्नादः लक्ष्मणविजयोभूदिति शब्दः अभिजज्ञे ॥ ७८ ॥

रा० टी०–पतितमिति । पतितमिन्द्रजितं समभिज्ञाय हरिभिर्वध्यमाना राक्षसी महाचमूः दिशो भेजे ॥ ७९ ॥

रा० टी०–वानरैरिति । वानरैर्वध्यमानाः अत एव भ्रष्टसंज्ञाः गतविवेकाः अत एव प्रधाविताः राक्षसाः लंकामभिमुखास्सन्तः सस्रुः जग्मुः ॥ ८० ॥

रा० टी०–दुद्रुवुरिति । भीताः राक्षसाः पट्टिशादीन् प्रहरणान् त्यक्त्वा दुद्रुवुः ॥ ८१ ॥

रा० टी०–केचिदिति ॥ ८२ ॥

रा०टी०–हतमिति । हतमत एव रणक्षितौ शयानमिन्द्रजितं दृष्ट्वा राक्षसानां सहस्रेषु कश्चिद्राक्षसो न प्रत्यदृश्यत ॥ ८३ ॥

रा०टी०–यथेति । आदित्येऽस्तं गते सति रश्मयः किरणाः यथा नावतिष्ठन्ति दृश्यन्त इत्यर्थः तथा तस्मिन् इन्द्रजिति निपतिते सति राक्षसाः दिशो गताः न दृश्यन्ते इत्यर्थः ॥ ८४ ॥

गो० टी०–हतस्त्विति । कवचीति । कवचादिभिः सह विध्वस्तः हतः धरण्यां निपपातेत्यन्वयः ॥ ७६–८४ ॥

८२ ] ति० टी०–व्यपास्तो विशेषधर्मैः, अत एव गतजीवितः ॥ ८२ ॥

रा० टी०–शान्तेति । महाबाहुरिन्द्रजित् व्यपास्तेन धर्मत्यागेन गतं जीवितं यस्य सः किञ्च व्यपास्तः पतितस्स एव गतजीवितो बभूव ॥ ८५ ॥

गो० टी०–शान्तरश्मिरिति । व्यपास्तगतजीवितः व्यपास्तो विक्षिप्ताङ्गो गतजीवितश्च, सः शान्तरश्मिरादित्य इव, निर्वाणः शान्तः, पावक इव च बभूव । निस्तेजस्कोभूदित्यर्थः ॥ ८५ ॥

८३–८५ ] ति० टी०–प्रशान्तपीडाबहुलः प्रशान्तबहुलपीडः ॥ ८३–८५ ॥

१ लितिं गो. रा. पाठः । २ विध्वस्तः सेति गो. पाठः । ३ हृष्यन्त इति गो. पाठः । ४ देवानामिति गो. रा. पाठः । ५ भावितात्मनामिति रा. पाठः । ६ अभिजज्ञे चेति गो. रा. पाठः । ७ तमिति गो. पाठः । ८ नष्टेति गो. पाठः । ९ समरेति गो. पाठः । १० तेजा इति गो. पाठः । ११ नष्टारिः प्रतापवानिति गो. पाठः । १२ सुरर्षिभिरिति रा. सुरर्षभैरिति गो. पाठः । १३ क्रूरेति रा. पाठः ।

ववर्षुः पुष्पवर्षाणि तदद्भुतमिवाभवत् । प्रशशाम हते तस्मिन्राक्षसे क्रूरकर्मणि ॥ ८६ ॥
शुद्धा आपो नभश्चैव जहृषुर्देवदानवाः । आजग्मुः पतिते तस्मिन्सर्वलोकभयावहे ॥ ८७ ॥
ऊचुश्च सहितास्तुष्टा देवगन्धर्वदानवाः । विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति ॥ ८८ ॥
ततोऽभ्यनन्दन्संहृष्टाः समरे हरियूथपाः । तमप्रतिबलं दृष्ट्वा हतं नैर्ऋतपुंगवम् ॥ ८९ ॥
विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः । विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम् ॥ ९० ॥
क्ष्वेडन्तश्च प्लवन्तश्च गर्जन्तश्च प्लवंगमाः । लब्धलक्षा रघुसुतं परिवार्योपतस्थिरे ॥ ९१ ॥
लांगूलानि प्रविध्यन्तः स्फोटयन्तश्च वानराः । लक्ष्मणो जयतीत्येवं वाक्यं विश्रावयंस्तदा ॥ ९२ ॥
अन्योन्यं च समाश्लिष्य हरयो हृष्टमानसाः । चक्रुरुच्चावचगुणा राघवाश्रयसंत्कथाः ॥ ९३ ॥

तदसुकरमथाभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म ।
परममुपलभन्मनःप्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः ॥ ९४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवतितमः सर्गः ॥ ९० ॥

---

रा० टी०—प्रशान्तेति । रक्षोधिपात्मजे पतिते सति विनष्टारिः अत एव प्रशान्तपीडाबहुलो लोकः प्रहर्षवान् बभूव ८६

रा० टी०—हर्षमिति । राक्षसे तस्मिन् निहते सति शक्रो हर्षं जगाम ॥ ८७ ॥

गो० टी०—प्रशान्तेति । इदमारभ्य लोकविशेषणम् । प्रशान्तपीडाबहुलः प्रशान्तबहुपीडः । प्रतापवान् सूर्यप्रकाशवान् । पूर्वं भयेन मन्दसूर्यत्वात् ॥ ८६ ॥ ८७ ॥

रा० टी०—आकाश इति । आकाशे अप्सरःप्रभृतिभिः देवानां दुन्दुभिस्वनः शुश्रुवे ॥ ८८ ॥

गो० टी०—आकाश इत्यर्धम् ॥ ८८ ॥

गो० टी०—नृत्यद्भिरिति । अप्सरोभिर्गन्धर्वैश्च कृतनर्तमगानजन्यस्वनः शुश्रुव इत्यर्थः । नृत्यद्भिरित्यत्र क्लीबभाव आर्षः ॥ ८९ ॥

८६ ] ति० टी०—प्रशशाम । रज इति शेषः ॥ ८६ ॥

रा० टी०—ववर्षुरिति । तत् इन्द्रजिद्धननमद्भुतमिव अभवत् अत एव पुष्पवर्षाणि ववर्षुः ववृषुः देवादय इति शेषः प्रशशाम महीरज इति शेषः ॥ ८९ ॥

गो० टी०—ववृषुरिति । अत्रापि देवाः कर्तारः । ववृषुः प्रशशंसुश्च ॥ ९० ॥ ९१ ॥

८७–९० ] ति० टी०—आपः शुद्धाः, प्रसन्ना देवदानवाः दानवानामपि तच्छत्रुत्वात्तेषामपि हर्षः । आजग्मुरिति देवदानवा इत्यनुकर्षः ॥ ८७–९० ॥

गो० टी०—आजग्मुरित्यादिसार्धश्लोक एकान्वयः । देवगन्धर्वदानवाः आजग्मुः विचरन्त्वित्यूचुश्चेति संबन्धः ९२॥९६

रा० टी०—शुद्धा इति । आपो नभश्च शुद्धाः निर्मला अभवन्निति शेषः देवदानवा जहृषुः आजग्मुः तत्समीपं प्रापुश्च ॥ ९० ॥

रा० टी०—ऊचुरिति । सहिता हरियूथपा नैर्ऋतपुङ्गवं हतं दृष्ट्वा अभ्यनन्दन् देवादयो विज्वरास्सन्तो विचरन्त्वित्यूचुश्च श्लोकद्वयमेकान्वयि ॥ ९१ ॥ ९२ ॥

रा० टी०—विभीषण इति । विजयेनाभिनन्दन्तो विभीषणादयः लक्ष्मणं तुष्टुवुः ॥ ९३ ॥

९१ ] ति० टी०—लब्धलक्षाः प्राप्तहर्षावसराः । रलयोरभेदात्प्राप्तरक्षणा इत्यपि । रघुसुतं रघुवंशजम् ॥ ९१ ॥

रा० टी०—क्ष्वेडन्त इति । लब्धलक्षाः प्राप्तावसराः रलयोरैक्यात्प्राप्तरक्षणा वा अत एव क्ष्वेडादि कुर्वन्तः प्लवङ्गमाः रघुसुतं रघुवंशे जातं लक्ष्मणं परिवार्योपतस्थिरे ॥ ९४ ॥

९२–९३ ] ति० टी०—विश्रावयन्व्यश्रावयन् ॥९२॥९३॥

रा० टी०—लाङ्गूलानीति । वानराः लक्ष्मणो जयतीति वाक्यं विश्रावयन् व्यश्रावयन् ॥ ९५ ॥

रा० टी०—अन्योन्यमिति । उच्चावचगुणाः हरयः अन्योन्यं समाश्लिष्य राघवाश्रयसत्कथाश्चक्रुः ॥ ९६ ॥

गो० टी०—लाङ्गूलानीति । विश्रावयन् व्यश्रावयन् ॥ ९६ ॥ ९७ ॥

९४ ] ति० टी०—उपलभन्नुपालभन् ॥ ९४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवतितमः सर्गः ॥ ९० ॥

रा० टी०—उपसंहरन्नाह—ततेति । लक्ष्मणस्य प्रियसुहृदः असुकरमन्यैः कर्तुमशक्यं लक्ष्मणस्य कर्म अभिवीक्ष्य हृष्टाः बभूवुरिति शेषः देवाः अपि इन्द्ररिपुं निहतं निशम्य परमं मनःप्रहर्षमुपलभन् उपालभन् ॥ ९९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

गो० टी०—तदसुकरमिति । असुकरं दुष्करम्, सर्वेषां

---

१ ववृषुरिति गो. पाठः । २ अभूत्तदेति गो. पाठः । ३ शशंसुरिति गो. पाठः । ४ दैत्येति गो. पाठः । ५ सर्वे इति गो. पाठः । ६ ऋक्षेति रा. पाठः । ७ ववल्गश्चेति गो. पाठः । ८ एवमिति गो. रा. पाठः । ९ कपय इति गो. पाठः । १० जा इति गो. पाठः ।

# एकनवतितमः सर्गः ।

इन्द्रजितं हत्वा सौमित्रिः राममुपजगाम ततो विभीषणमुखाच्छ्रुतरावणिवधो रामः सौमित्रिं मुर्ध्न्युपाघ्रायाहं कृती यदचिरादेव पुत्रहतिसंतप्तदशाननं विजेष्ये इति सादरवचनैः संपूज्य सुषेणमन्यांश्च कपियोधान्विशल्यान्कुर्वित्यादिदेश च सुषेणेन तथानुष्ठिते-ऽपरजः कपयश्च विशल्या जहृषुः ।

रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः । बभूव हृष्टस्तं हत्वा शत्रु[1]जेतारमाहवे ॥ १ ॥
ततः स जाम्बवन्तं च हनूमन्तं च वीर्यवान् । संनिपत्य[2] महातेजास्तांश्च सर्वान्वनौकसः ॥ २ ॥
आजगाम ततः शीघ्रं[3] यत्र सुग्रीवराघवौ । विभीषणमवष्टभ्य हनूमन्तं च लक्ष्मणः ॥ ३ ॥
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च । तस्थौ भ्रातृसमीपस्थः शक्रस्ये[4]न्द्रानुजो यथा ॥ ४ ॥
निष्टनन्निव चागत्य[5] राघवाय महात्मने । आचचक्षे तदा वीरो घोरमिन्द्रजितो वधम् ॥ ५ ॥
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना । न्यवेदयत रामाय तदा हृष्टो विभीषणः ॥ ६ ॥
श्रुत्वैव तु महावीर्यो लक्ष्मणेनेन्द्रजिद्वधम् । प्रहर्षमतुलं लेभे वाक्यं[6] चेदमुवाच ह ॥ ७ ॥

---

प्राणप्रतिष्ठापकमिति वा । प्रियसुहृदः सर्वप्रियसुहृदः । उपलभन्नित्यत्र अडात्मनेपदाभावावार्षौ । देवाः इन्द्ररिपुं विनिहतं निशम्य परमं मनःप्रहर्षम् उपलभन् उपालभन्त । अथ अस्तकरं तत् इन्द्रजिद्धननं प्रियसुहृदः लक्ष्मणस्य, कर्म कृतिविषयभूतम्, अभिवीक्ष्य हृष्टाः विस्मिताः । आसन्निति शेषः । "विस्मितप्रतिघातयोश्चेति वक्तव्यम्" इति हृषेः पाक्षिक इडभावः । देवाश्चारणादिमुखेन प्रथममिन्द्रजिद्धननं श्रुत्वा संतुष्टाः सन्तः पश्चात्तस्यात्यन्ताशक्यत्वादतथ्यं मन्वाना युद्धभूमिमागत्य तत्प्रत्यक्षीकृत्य विस्मिता आसन्निति भावः॥९८॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

---

१ ] ति० टी०—रुधिरेति ॥ १ ॥

रा० टी०—इन्द्रजिद्वधानन्तरकालिकं लक्ष्मणवृत्तान्तमाह-रुधिरेत्यादिभिः । तमिन्द्रजितं हत्वा रुधिरेण निहतेन्द्रजिच्छरीरोत्थितरक्तेन क्लिन्नं गात्रं यस्य स लक्ष्मणः हृष्टो बभूव ॥ १ ॥

गो० टी०—अथ लक्ष्मणश्लाघनं-रुधिरक्लिन्नगात्रेत्यादि १

२ ] ति० टी०—संनिपत्य संगृह्य ॥ २ ॥

३ ] ति० टी०—युद्धव्रणजपीडावशाद्विभीषणं हनूमन्तं चावष्टभ्य । अवलम्ब्येत्यर्थः ॥ ३ ॥

रा० टी०—तत इति । लक्ष्मणः जाम्बवत्प्रभृतीन् सन्निपत्य गृहीत्वेत्यर्थः विभीषणं हनूमन्तं चावष्टभ्य यत्र राघवौ तत्र शीघ्रमाजगाम श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—तत इत्यादिश्लोकद्वयमेकान्वयम् ॥ सन्निहत्य संघीभूय । अवष्टभ्य युद्धपारवश्यादवलम्ब्य ॥ २ ॥ ३ ॥

४ ] ति० टी०—अभिक्रम्य प्रदक्षिणीकृत्य । शक्रस्येन्द्रानुजो यथा यथोपेन्द्र इन्द्रसमीपे तिष्ठति तद्वत् । 'इन्द्रस्येव बृहस्पतिः' इति पाठे गुणप्रधानभावेनावस्थानमात्रे दृष्टान्त इत्यर्थः ॥ ४ ॥

रा० टी०—तत इति । सौमित्रिः राममभिक्रम्य भ्रातृसमीपस्थस्सन् शक्रस्य समीपस्थः इन्द्रानुज उपेन्द्र इव तस्थौ ॥४॥

गो० टी०—तत इति । इन्द्रस्येव बृहस्पतिरिति पारतन्त्र्यमात्रे साम्यम् ॥ ४ ॥

५ ] ति० टी०—निष्टनन्निति । विभीषण इत्याकर्षः । हृष्टो विभीषणः संतुष्टागमनेनैवेन्द्रजिद्वधं निष्टनन्बोधयन्निव निकटमागत्य राघवाय सामान्यत इन्द्रजिद्वधमाचचक्षे ॥ ५ ॥

रा० टी०—निष्टनन्निति । वीरो लक्ष्मणः निष्टनन् प्रसादविशिष्टमुखदर्शनेनेन्द्रजिद्वधं कथयन्निवागत्य इन्द्रजितो वधमाचचक्षे ॥ ५ ॥

गो० टी०—निष्टनन्निति । निष्टनन् अव्यक्ताक्षरं वदन्नित्यर्थः । इवशब्दो वाक्यालंकारे । आयासस्याभिनयनमात्रेणालीकत्वद्योतनाय वा ॥ ५ ॥

६-७ ] ति० टी०—ततः किंकर्तृको वध इत्याकाङ्क्षायामाह—रावणेरिति । छिन्नमिति न्यवेदयत् ॥ ६ ॥ ७ ॥

रा० टी०—रावणेरिति । हृष्टो विभीषणः लक्ष्मणेन छिन्नं रावणेश्शिरः रामाय न्यवेदयत ॥ ६ ॥

गो० टी०—रामसन्निधौ संकोचवता लक्ष्मणेनाविशेषेणेन्द्रजिद्वधकथनाद्विभीषणः स्पष्टतयाह—रावणेरिति । यद्वा लक्ष्मणेन सूचनयोक्तावपि हर्षप्रकर्षेण विभीषणः पुनराह—रावणेरिति ॥ ६ ॥

रा० टी०—श्रुत्वेति । महावीर्यो रामः लक्ष्मणेन कृतमिन्द्रजिद्वधं श्रुत्वैव अतुलं प्रहर्षं लेभे इदं वाक्यमुवाच ॥ ७ ॥

---

१ शक्रेति गो. रा. पाठः । २ निहत्येति गो. पाठः । ३ तीव्रमिति गो. पाठः । ४ इन्द्रस्येव बृहस्पतिरिति गो. पाठः । ५ आगम्येति गो. पाठः । ६ रामो वाक्यमिति गो. रा. पाठः ।

साधु लक्ष्मण तुष्टोऽस्मि कर्म चासुकरं कृतम् । रावणेर्हि विनाशेन जितमित्युपधारय ॥ ८ ॥
स तं शिरस्युपाघ्राय लक्ष्मणं कीर्तिवर्धनम् । लज्जमानं बलात्स्नेहादङ्कमारोप्य वीर्यवान् ॥ ९ ॥
उपवेश्य तमुत्सङ्गे परिष्वज्यावपीडितम् । भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत ॥ १० ॥
शल्यसंपीडितं शस्तं निःश्वसन्तं तु लक्ष्मणम् । रामस्तु दुःखसंतप्तं तं तु निःश्वासपीडितम् ॥ ११ ॥
मूर्ध्नि चैनमुपाघ्राय भूयः संस्पृश्य च त्वरन् । उवाच लक्ष्मणं वाक्यमाश्वास्य पुरुषर्षभः ॥ १२ ॥
कृतं परमकल्याणं कर्म दुष्करकर्मणा । अद्य मन्ये हते पुत्रे रावणं निहतं युधि ॥ १३ ॥
अद्याहं विजयी शत्रौ हते तस्मिन्दुरात्मनि । रावणस्य नृशंसस्य दिष्ट्या वीर त्वया रणे ॥ १४ ॥
छिन्नो हि दक्षिणो बाहुः स हि तस्य व्यपाश्रयः । विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे ॥ १५ ॥
अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः । निरमित्रः कृतोऽस्म्यद्य निर्यास्यति हि रावणः ॥ १६ ॥
बलव्यूहेन महता निर्यास्यति हि रावणः । बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम् ॥ १७ ॥

गो० टी०–श्रुत्वेति । महावीर्यो राम इत्यन्वयः ॥ ७ ॥

८ ] ति० टी०–जितमित्युपधारय । इदानीमेवास्माभिरिति शेषः ॥ ८ ॥

रा० टी०–वाक्याकारमाह—साध्विति । हि यतः रावणेर्विनाशेन जितं राक्षसजातमिति शेषः इत्युपधारय निश्चिनु अतः हे लक्ष्मण असुकरमन्यैर्दुष्करं कर्म त्वया कृतमतस्तुष्टोस्मि॥८॥

गो० टी०–साध्विति । सुकृतं कृतं सुकर्तव्यं कृतम् । कर्मणा युद्धकर्मणा ॥ ८ ॥

९ ] ति० टी०–लज्जमानं भ्रातुः संनिधावेवं कृतमिति वक्तुं लज्जया युतम् । क्रियाबाहुल्याच्चैतेषु श्लोकेषु पुनःपुनः कर्मपदप्रयोगः । अङ्कमारोप्याङ्कं उपवेशनायाकृष्य ॥ ९ ॥

१० ] ति० टी०–अवपीडितम् । शस्त्रव्रणैरिति शेषः । यद्वावपीडितं गाढमालिङ्ग्य ॥ १० ॥

रा० टी०–स इति । लज्जमानमतिसत्कारप्राप्त्या प्राप्तकिंचिल्लज्जं लक्ष्मणं सकलसल्लक्षणसम्पन्नम् अङ्कमिन्द्रजिद्वधेन निश्शङ्कीकृतेन्द्रपदं प्राप्तं वा भ्रातरमत एवतममृतसदृशं तं प्रसिद्धं लक्ष्मणमारोप्य गृहीत्वेत्यर्थः उत्संगं उपवेश्य च अवपीडितं यथा भवति तथा परिष्वज्य च पुनः पुनरुदैक्षत श्लोकद्वयमेकान्वयि यदि तु पूर्वश्लोके अतिष्ठदित्यध्याह्रियेत तदा पृथगन्वयः क्लिष्टकल्पना च न ॥ ९ ॥ १० ॥

गो० टी०–स तमित्यादिश्लोकद्वयमेकान्वयम् । आरोप्य आरोपणायाकृष्य । अवपीडितं शल्यपीडितं, गाढं यथा भवति तथेति वा । क्रियाभेदात्तमिति द्विरुक्तिः ॥ ९ ॥ १० ॥

११–१२ ] ति० टी०–शस्तं कृत्तगात्रम् ॥ ११ ॥ १२ ॥

रा० टी०–शल्येति निश्वसन्तमत एव निश्वासेन पीडितं शल्येन मर्मपीडा राक्षसपीडादातृत्वं जाता यस्य तमत एव दुःखेन संतप्तास्संतापिता येन तमत एव शस्तं राक्षसहिंसाकर्त्तारम् एवं लक्ष्मणं मूर्ध्नि उपाघ्राय संस्पृश्य च उवाच श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०–शल्यसंपीडितमित्यादिश्लोकद्वयमेकान्वयम् ॥ शस्तं प्रहृतम्, निश्वसितः स्वयं कृतनिश्वासः, त्वरन् संस्पृश्य । त्वरा च प्रहारव्यथापनयनायेति भावः ॥११॥१२॥

१३–१४ ] ति० टी०–दुष्करकर्मणेतरदुष्करपौरुषेण त्वयेति शेषः । पुत्रे हते रावणमद्य हतमेव मन्ये । तद्वधस्येषत्करत्वादिति भावः ॥ १३ ॥ १४ ॥

रा०टी०-तदाकारमाह-कृतमिति । पुत्रे हते सति रावणं निहत मन्ये अतो दुष्करकर्मणा त्वया परमकल्याणं कर्म कृतम् १३

गो० टी०–कृतमित्यादिसार्धश्लोकः । दुष्करकर्मणा त्वयेति शेषः ॥ १३ ॥

रा० टी०–अद्येति । शत्रौ इन्द्रजिति दिष्ट्या भाग्यवशेन त्वया हते सति अहं रावणस्य विजयी इति मन्ये इति शेषः१४

गो० टी०–रावणस्येति । व्यपाश्रयः आलम्बनम्॥१४॥

१५ ] ति० टी०–व्यपाश्रयोऽवलम्बनभूतः । एवं लक्ष्मणमाश्वास्य विभीषणादीनप्याश्वासयति–विभीषणेनेति ॥१५॥

रा० टी०–छिन्न इति । तस्य रावणस्य व्यपाश्रयः अवलम्बनभूमिर्दक्षिणो बाहुः तत्सदृश इन्द्रजित् त्रिभिरहोरात्रैः विभीषणहनूमद्भ्यां सहितेन त्वया छिन्नो विपातितः अत एव कथंचित् निरमित्रः रिपुरहितः कृतोस्मि अतो महत्कर्म कृतं ननु रावणसत्वे कथं रिपुरहितत्वमित्यत आह बलव्यूहेन सहितं पुत्रं विपातितं श्रुत्वा रावणो हि यदि निर्यास्यति तर्हि पुत्रवधसंतप्तं सरावणं महता बलेनावृत्याहं निहनिष्यामि सार्द्धश्लोकत्रयमेकान्वयि ॥ १५–१७ ॥

गो० टी०–विभीषणेति । अहोरात्रैस्त्रिभिरिति । एकादशीद्वादशीत्रयोदशीभिरित्यर्थः ॥ १५ ॥

१६–१७ ] ति० टी०–अहोरात्रैस्त्रिभिरिति । दशम्यां चतुर्थप्रहरे आरम्भात्त्रयोदश्यां चतुर्थप्रहरे वधादिति भावः । अद्य निरमित्रः कृतोऽस्मि । कथं रावणे जीवति निरमित्रत्वं तत्राह—निर्यास्यतीति । अवश्यं निर्यास्यति ॥ १६॥१७॥

१ कर्मणा सुकृतामान्त गो.पाठः । २ लक्ष्म इति गो. पाठः । ३ तमस्तदा निःश्वसितो भृशम् इति गो. पाठः । ४ इदमर्धं गो.रा. पुस्तकयोर्नास्ति ।

तं पुत्रवधसंतप्तं निर्यान्तं राक्षसाधिपम् । बलेनावृत्य महता निहनिष्यामि दुर्जयम् ॥ १८ ॥
त्वया लक्ष्मण नाथेन सीता च पृथिवी च मे । न दुष्प्रापा हते तस्मिञ्शक्रजेतरि चाहवे ॥ १९ ॥
स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः । रामः सुषेणं मुदितः समाभाष्येदमब्रवीत् ॥ २० ॥
विशल्योऽयं महाप्राज्ञः सौमित्रिर्मित्रवत्सलः । यथा भवति सुस्वस्थस्तथा त्वं समुदाचर ॥ २१ ॥
विशल्यः क्रियतां क्षिप्रं सौमित्रिर्मित्रवत्सलः । ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम् ॥ २२ ॥
ये चाप्यन्येऽत्र युध्यन्ति सशल्या व्रणिनस्तथा । तेऽपि सर्वे प्रयत्नेन क्रियतां सुखिनस्तथा ॥ २३ ॥
एवमुक्तः स रामेण महात्मा हरियूथपः । लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधम् ॥ २४ ॥
स तस्य गन्धमाघ्राय विशल्यः समपद्यत । तदा निर्वेदनश्चैव संरूढव्रण एव च ॥ २५ ॥
विभीषणमुखानां च सुहृदां राघवाज्ञया । सर्ववानरमुख्यानां चिकित्सामकरोत्तदा ॥ २६ ॥
ततः प्रकृतिमापन्नो हृतशल्यो गतक्लमः । सौमित्रिर्मुमुदे तत्र क्षणेन विगतज्वरः ॥ २७ ॥
तदैव रामः प्लवगाधिपस्तथा विभीषणश्चर्क्षपतिश्च वीर्यवान् ।
अवेक्ष्य सौमित्रिमरोगमुत्थितं मुदा ससैन्याः सुचिरं जहर्षिरे ॥ २८ ॥
अपूजयत्कर्म स लक्ष्मणस्य सुदुष्करं दाशरथिर्महात्मा ।
बभूव हृष्टो युधि वानरेन्द्रो निशम्य तं शक्रजितं निपातितम् ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

---

१८ ] ति० टी०—निर्यान्तं च तं महता बलेन सहजेनावृत्याक्रम्य निहनिष्यामि ॥ १८ ॥

गो० टी०—निरमित्र इति श्लोकद्वयमेकान्वयम् १६॥१७

१९ ] ति० टी०—हे लक्ष्मण, नाथेन । उपलालनार्थं नाथशब्दप्रयोगः ॥ १९ ॥

रा० टी०—त्वयेति । हे लक्ष्मण तस्मिन् इन्द्रजिति हते सति नाथेन प्राप्तकामेन त्वया सीता पृथिवी च न दुष्प्रापा १८

गो० टी०—त्वयेति । नाथेन याचमानेन । "नाथृ, याच्ञायाम्" इत्यस्मात्पचाद्यच् ॥ १८ ॥

२० ] ति० टी०—समाभाष्य सुषेणेत्येवं संबोध्य ॥ २० ॥

रा० टी०—स इति । रामः भ्रातरमाश्वास्य सुषेणं समाभाष्य संबोध्य इदमब्रवीत् ॥ १९ ॥

गो० टी०—स तमिति । समाभाष्य आमन्त्र्य ॥ १९ ॥

२१–२२ ] ति० टी०—विशल्य इति । ओषधिपर्वतानयनोत्तरमोषध्यः सुषेणेन संगृह्य स्थापिता इत्यनेन ज्ञायते २२

रा० टी०—तदाकारताह—विशल्य इति । सौमित्रिः विशल्यः शल्यसंसर्गजनितश्रमरहितः अत एव सुस्वस्थः अत्यन्तं स्वस्थचित्तः यथा भवति तथा त्वं समुदाचर ॥ २० ॥

गो० टी०—सशल्योयमिति । समुपाचर चिकित्सां कुरु ॥ २० ॥

रा० टी०—विशल्य इति । सविभीषणस्सौमित्रिः विशल्यः शल्यसंसर्गजपीडारहितः क्रियतामत्र हनुमदुक्त्या तस्मिन् श्रमाभावः सूचितः उपलक्षणत्वे तु नेयं व्यञ्जना अर्द्धं पृथक् ॥ २१ ॥

गो० टी०—विशल्य इति । श्लोकद्वयमेकान्वयम् ॥ ऋक्षवानरसैन्यानामिति निर्धारणे षष्ठी ॥ २१ ॥ २२ ॥

२३ ] ति० टी०—ये वानराः सशल्या व्रणिनश्च तेऽपि विशल्याः प्ररूढव्रणाश्च कार्याः ॥ २३ ॥

रा० टी०—ऋक्षेति । ऋक्षवानरसैन्यानां मध्ये ये अन्यत्र रिपुसैन्ये युध्यन्ति अयुध्यन्त अत एव सशल्या व्रणिनश्च ते सर्वे प्रयत्नेन सुखिनः क्रियन्तां सार्द्धश्लोक एकान्वयी ॥ २२ ॥

२४–२९ ] ति० टी०—नस्तः नासिकायाम् ॥२४॥२९॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

रा० टी०—एवमिति । एवमुक्तः सुषेणः नस्तो नासामार्गेण परमौषधं लक्ष्मणाय ददौ स लक्ष्मणः तस्य गन्धमाघ्राय विशल्यस्समपद्यत एतेन औषधपर्वतानयनसमये तेनौषधानि संगृहीतानीति सूचितम् सार्द्धश्लोक एकान्वयी ॥ २३ ॥ २४ ॥

रा० टी०—तत इति । ततोनन्तरम् विभीषणमुखानां सर्ववानरमुख्यानां च चिकित्सामकरोत् तदा चिकित्सोत्तरकाले निर्वेदनः पीडाराहित्यं संरूढव्रणत्वं च अभवदिति शेषः भावप्रधाने उभे सुषेणविशेषणत्वे तु नेयं कल्पना सार्द्धश्लोक एकान्वयी ॥ २६ ॥

---

१ सशल्य इति गो. पाठः । २ उपाचरेति गो. पाठः । ३ सविभीषण इति गो. रा. पाठः । ४ क्रियन्तामिति गो. पाठः । ५ त्विति गो. पाठः । ६ औषधिर्मिति गो.पाठः। ७ तस्या इति गो.पाठः। ८ संरूढव्रण इति गो.रा.पाठः। ९ स तदाकरोद्विति गो. तु तदाकरोदिति रा.पाठः । १० व्यथ इति गो. पाठः। ११ मुदित इति गो.पाठः। १२ तथेति गो.पाठः। १३ जाम्बवानिति गो.पाठः। १४ हृष्टा बभूवुर्युधि यूथपेन्द्रा निपातितं शक्रजितं निशम्येति गो.पाठः।

# द्विनवतितमः सर्गः ।

सचिवमुखाद्विदितशक्रजिद्वधो मुग्धश्चिराल्लब्धसंज्ञोऽनल्पं विलप्य यन्निमित्तोऽयं विषादः सैव सीतेदानीं हन्यते मयेति तां हन्तुमुद्यतः कृपाणपाणी रावणः सुपार्श्वनाम्नामात्येन मेधाविना स्त्रीहतिर्निन्द्येत्याद्युपदेशपुरःसरनीतिवचनैः कथंचिन्निवारितो गृहं गत्वा सभां प्रविवेश ।

**ततः पौलस्त्यसचिवाः श्रुत्वा चेन्द्रजितो वधम् । आचचक्षुरवेज्ञाय दशग्रीवाय सत्वराः ॥ १ ॥**
**युद्धे हतो महाराज लक्ष्मणेन तवात्मजः । विभीषणसहायेन मिषतां नो महाद्युतिः ॥ २ ॥**
**शूरः शूरेण संगम्य संयुगेष्वपराजितः । लक्ष्मणेन हतः शूरः पुत्रस्ते विबुधेन्द्रजित् ॥ ३ ॥**
**गतः स परमाँल्लोकाञ्शरैः संतर्प्य लक्ष्मणम् । स तं प्रतिभयं श्रुत्वा वधं पुत्रस्य दारुणम् ॥ ४ ॥**
**घोरमिन्द्रजितः संख्ये कश्मलं प्राविशन्महत् । उपलभ्य चिरात्संज्ञां राजा राक्षसपुंगवः ॥ ५ ॥**
**पुत्रशोकाकुलो दीनो विललापाकुलेन्द्रियः । हा राक्षसचमूमुख्य मम वत्स महाबल ॥ ६ ॥**

---

**रा० टी०–तत इति ।** हतः शल्यः शल्यसंसर्गजनितपीडा यस्य अत एव गतः क्लमो ग्लानिर्यस्य अत एव प्रकृतिमापन्नः विगतज्वरः नित्यं ज्वररहितः किं च निवर्तितदेवसन्तापस्सौमित्रिः क्षणेन मुमुदे ॥ २६ ॥

**गो० टी०–एवमिति ।** नस्तः नासिकायाम ॥ २३ ॥

**गो० टी०–स इति ।** निर्वेदनः वेदनारहितः ॥ २४–२६॥

**रा० टी०–तदेति ।** रामादयः सौमित्रिमरोगमुत्थितमवेक्ष्य जहर्षिरे जहर्षिरे ॥ २७ ॥

**रा० टी०–अपूजयदिति ।** स रामः लक्ष्मणस्य दुष्करं कर्म अपूजयत् वानरेन्द्रस्सुग्रीवः शक्रजितं निपातितं निशम्य हृष्टो बभूव ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

**गो० टी०–तथैवेति ।** मुदा युक्तमिति शेषः । मुदा युक्तं सौमित्रिमवेक्ष्य जहर्षिरे इति संबन्धः । जहर्षिरे इत्यत्र गुण आर्षः ॥ २७ ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्विनवतितमः सर्गः ॥ ९२ ॥

१ ] **ति० टी०–अथ रावणवृत्तान्तमाह—तत इत्यादि ।** सचिवा अवशिष्टसुपार्श्वादिमन्त्रिणः । अवज्ञाय अवक्षिप्ता ज्ञानं यस्य तस्मै । पुत्रवधवृत्तान्तज्ञानरहितायेत्यर्थः । तीर्थस्तु–अवज्ञायाभिज्ञाय दृष्ट्वा । पूर्वं श्रुत्वा पश्चाद्युद्धभूमिं गत्वा प्रत्यक्षीकृत्याचचक्षुरित्यर्थमाह ॥ १ ॥

**रा० टी०–इन्द्रजिद्वधश्रवणानन्तरकालिकं राक्षसवृत्तान्तमाह—तत इत्यादिभिः ।** पौलस्त्यसचिवाः इन्द्रजितो वधं श्रुत्वा अवज्ञाय सर्वसत्पुरुषानादरकर्त्रे दशग्रीवायाचचक्षुः॥ १ ॥

**गो० टी०–अथ सीतावधोद्योगपर्यन्तो रावणस्य पुत्रशोकातिशय उच्यते—ततः पौलस्त्यसचिवा इत्यादि ।** पौलस्त्यसचिवाः रावणागारवर्तिनः सहायभूताः, इन्द्रजितं हतं श्रुत्वा स्वयमभिज्ञाय साभिज्ञानं दृष्ट्वा, सत्वराः सन्तो रावणाय आचचक्षुः आचचक्षिरे । अथवा अभिज्ञायेति चतुर्थी । पूर्वमेव यज्ञविघ्नेन निश्चिततद्वधायेत्यर्थः । अवज्ञायेति पाठेपि चतुर्थीपक्षे अयमेवार्थः । पक्षान्तरे साक्षात्कारपर्यन्तदर्शनं प्राप्येत्यर्थः ॥ १ ॥

२ ] **ति० टी०–मिषतां न इति ।** योदॄराक्षसैर्दर्शनाच्छत्रिन्यायेन बोध्यम् । मिषतोऽनादृत्येत्यर्थः ॥ २ ॥

**रा० टी०–तत्प्रकारमाह–युद्ध इति ।** विभीषणस्सहायो यस्य तेन लक्ष्मणेन शूरेण संगम्य संयुगेषु अपराजितोपि शूरस्तवात्मजो हतः सार्द्धश्लोक एकान्वयी ॥ २ ॥

**गो० टी०–युद्ध इति ।** मिषतां नः अस्मासु पश्यत्सु सत्स्वित्यर्थः । अनन्तरयोजनायामस्मासु जीवत्स्वित्यर्थः अनादरे षष्ठी ॥ ॥

३ ] **ति० टी०–विबुधान्देवानिन्द्रं च जयतीति विबुधेन्द्रजित् ॥ ३ ॥**

**रा० टी०–लक्ष्मणेनेति ।** विबुधेन्द्रजित् ते पुत्रः शरैः लक्ष्मणं संतर्प्य लक्ष्मणेन हतस्सन् परमान् लोकान् गतः ॥३॥

**गो० टी०–शूर इत्यादिसार्धश्लोक एकान्वयः ॥** क्रियाभेदाच्छूरपदद्वयम् । विबुधेन्द्रजित् देवेन्द्रजित् ॥ ३ ॥

४ ] **ति० टी०–परमाँल्लोकान् ।** वीरप्राप्यानिति भावः । दारुणं शोकजनकत्वात् । प्रतिभयमतिभयंकरम् ॥ ४ ॥

**रा० टी०–स इति ।** स रावणः प्रतिभयं भयंकरं दारुणं दारकमत एव घोरमसहनीयमिन्द्रजितो वधं श्रुत्वा महत् कश्मलं मूर्छां प्राविशत् प्राप ॥ ४ ॥

**गो० टी०–स इति ।** दारुणं करुणम् घोरं तीक्ष्णम् । कश्मलं मूर्छाम् । मूर्छा तु कश्मलं मोह इत्यमरः ॥ ४–६ ॥

५–६ ] **ति० टी०–घोरं तीक्ष्णम् ।** कश्मलं मूर्च्छाम् ५॥६

---

१ जितं हतमिति गो. पाठः । २ अभीति गो. पाठः । ३ व्यथा इति गो. रा. पाठः । ४ स्त्विति गो. पाठः । ५ संताप्येति गो. पाठः । ६ चेति गो. पाठः । ७ सर्द्दैत इति गो. पाठः । ८ रथेति गो. रा. पाठः ।

जित्वेन्द्रं कथमद्य त्वं लक्ष्मणस्य वशं गतः । ननु त्वामिषुभिः क्रुद्धो भिन्द्याः कालान्तकावपि॥ ७ ॥
मन्दरस्यापि शृङ्गाणि किं पुनर्लक्ष्मणं युधि । अद्य वैवस्वतो राजा भूयो बहुमतो मम ॥ ८ ॥
येनाद्य त्वं महाबाहो संयुक्तः कालधर्मणा । एष पन्थाः सुयोधानां सर्वामरगणेष्वपि ॥
यः कृते हन्यते भर्तुः स पुमान्स्वर्गमृच्छति ॥ ९ ॥
अद्य देवगणाः सर्वे लोकपाला महर्षयः । हतमिन्द्रजितं दृष्ट्वा सुखं स्वप्स्यन्ति निर्भयाः ॥ १० ॥
अद्य लोकास्त्रयः कृत्स्ना पृथिवी च सकानना । एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ॥ ११ ॥
अद्य नैर्ऋतकन्यानां श्रोष्याम्यन्तःपुरे रवम् । करेणुसङ्घस्य यथा निनादं गिरिगह्वरे ॥ १२ ॥
यौवराज्यं च लङ्कां च रक्षांसि च परंतप । मातरं मां च भार्यांश्च क्व गतोऽसि विहाय नः ॥ १३ ॥
मम नाम त्वया वीर गतस्य यमसादनम् । प्रेतकार्याणि कार्याणि विपरीते हि वर्तसे ॥ १४ ॥
स त्वं जीवति सुग्रीवे लक्ष्मणे न च राघवे । मम शल्यमनुद्धृत्य क्व गतोऽसि विहाय नः ॥ १५ ॥
एवमादिविलापार्तं रावणं राक्षसाधिपम् । आविवेश महान्कोपः पुत्रव्यसनसंभवः ॥ १६ ॥

---

रा० टी०—उपलभ्येति । राक्षसपुङ्गवः चिरात् संज्ञामुपलभ्य विललाप ॥ ६ ॥

रा० टी०—विलापाकारमाह—हेत्यादिभिः । इन्द्रं जित्वा विद्यमानस्त्वं लक्ष्मणस्य वशं कथं गतः ॥ ६ ॥

७] ति० टी०—कालान्तकौ । कालः सर्वसंहारकः, अन्तकस्तदधिकृतः ॥ ७ ॥

रा० टी०—नन्विति । क्रुद्धो यस्त्वं मन्दरस्य शृङ्गाणि कालान्तकौ मृत्युयमावपि भिन्द्याः स त्वं लक्ष्मणं भिन्द्याः इति किम् ७

गो० टी०—ननु त्वामिति । नन्वित्यामन्त्रणे । कालान्तकौ यमस्य मूर्तिभेदौ ॥ ७ ॥

८ ] ति० टी०—भूयो बहुमतो मयात्यन्तं श्लाघनीयः ॥८॥

रा० टी०—अद्येति । येन हेतुना त्वं कालधर्मणा मृत्युना संयुक्तः तेन हेतुना अद्य वैवस्वतो मृत्युरूपो राजा बहु भूयो अत्यधिको मम मतो ज्ञातः ॥ ८ ॥

गो० टी०—अद्येति । भूयः अतिशयेन । कालधर्मणा मरणेन । आर्षानिच् समासान्तः । संयुक्तः संयोजितः ॥ ८ ॥

९ ] ति० टी०—येन वैवस्वतेन त्वं कालधर्मणा कालधर्मेण संयुक्तः संयोजितः । यो भर्तुः कृते हन्यते स पुमान्स्वर्गं गच्छति । एष पन्थाः सुयोधानां नररक्षोसुरवानरयोधानां न केवलमेतेष्वेव, किं तु देवादिगणेष्वपीत्याह—सर्वामरेति । एवं युद्धमरणस्य सकलशूरजनाकाङ्क्षिततया युद्धहतं त्वां न शोचामीति भावः ॥ ९ ॥ १० ॥

रा० टी०—एष इति । भर्तुः कृते स्वाम्यर्थे यो हन्यते स पुमान् स्वर्गमृच्छति अतः सर्वामरगणेषु अपिना मनुष्यादिषु विद्यमानानां सुयोधानां एष स्वाम्यर्थे शरीरत्याग एव पन्थाः स्वर्गमार्गः एतेन तव तु कल्याणमेवजातमिति सूचितम् ॥ ९ ॥

रा० टी०—अद्येति । देवगणादयः निर्भयास्सन्तः सुखं स्वप्स्यन्ति एतेन इदमेव मम महद्दुःखमिति सूचितम् ॥ १० ॥

गो० टी०—युद्धमरणस्य सर्वाकाङ्क्षितत्वाद्युद्धहतं त्वां न शोचामीत्याह—एष इति । एषः युद्धमरणरूपः पन्थाः ॥९॥

गो० टी०—एवं यशस्यत्वादशोच्यत्वमुक्त्वा स्वर्ग्यत्वादशोच्यत्वमाह—य इति ॥ १० ॥ ११ ॥

११ ] ति० टी०—त्रयो लोकाः पातालान्तरिक्षस्वर्गाः पृथिव्याः पृथगुक्तेः सकानना निर्भयेत्यनुकर्षः । किं च ममैकेनेन्द्रजिता शून्या सर्वा पृथिवी शून्येव भाति ॥ ११ ॥

रा० टी०—अद्येति । शून्येव मे प्रतिभाति ॥ ११ ॥

१२-१३ ] ति० टी०—रवं रोदनजम् ॥ १२ ॥ १३ ॥

रा० टी०—अद्येति । अन्तःपुरे नैर्ऋतकन्यानां रवं रोदनं श्रोष्यामि ॥ १२ ॥

गो० टी०—अद्येति । लोकास्त्रय इत्युक्तावपि पृथिव्याः पृथगुपादानं प्राधान्यात् । यथा ब्राह्मणा आगता वसिष्ठोप्यागत इत्यादौ ॥ १२ ॥

रा० टी०—यौवराज्यमिति । यौवराज्यादि विहाय त्वं क्व गतोसि ॥ १३ ॥

गो० टी०—यौवराज्यमिति । नः सर्वानिति योजनीयम् ॥ १३-१६ ॥

१४-१५ ] ति० टी०—नामेति प्रसिद्धौ । मम त्वया प्रेतकार्याणि कर्तुं योग्यानि । त्वं तु विपरीते वर्तसे, यतस्त्वदीयानि मया कर्तव्यानि भविष्यन्ति ॥ १४ ॥ १५ ॥

रा० टी०—ममेति । यमसादनं गतस्य मे प्रेतकार्याणि त्वया कार्याणि कर्तव्यानि अतः विपरीते पथि मार्गे त्वं हि कथं वर्तसे मां प्रवर्तयसि ॥ १४ ॥

रा० टी०—स इति । सुग्रीवादौ जीवति सति मम शल्यं दुःखमनुद्धृत्य नो विहाय क्व गतोऽसि ॥ १५ ॥

१६ ] ति० टी०—'रावणं च समाधिगम्' इति पाठे सम्यगाधिः समाधिर्मनोव्यथा तां गच्छतीत्यर्थ इति तीर्थः १६

---

१ तथर्षय इति गो. पाठः । २ श्रुत्वेति गो. पाठः ।

प्रकृत्या कोपनं ह्येनं पुत्रस्य पुनराधयः। दीप्तं संदीपयामासुर्घर्मेऽर्कमिव रश्मयः ॥ १७ ॥
ललाटे भ्रुकुटीभिश्च संगताभिर्व्यरोचत। युगान्ते सह नक्रैस्तु महोर्मिभिरिवोदधिः ॥
कोपाद्विजृम्भमाणस्य वक्राद्व्यक्तमिवं ज्वलन्। उत्पपात सधूमाग्निर्वृत्रस्य वदनादिव ॥ १८ ॥
स पुत्रवधसंतप्तः शूरः क्रोधवशं गतः। समीक्ष्य रावणो बुद्ध्या वैदेह्या रोचयद्वधम् ॥ १९ ॥
तस्य प्रकृत्या रक्ते च रक्ते क्रोधाग्निनापि च। रावणस्य महाघोरे दीप्ते नेत्रे बभूवतुः ॥ २० ॥
घोरं प्रकृत्या रूपं तत्तस्य क्रोधाग्निमूर्च्छितम्। बभूव रूपं क्रुद्धस्य रुद्रस्येव व्यवस्थितम् ॥ २१ ॥
तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः। दीपाभ्यामिव दीप्ताभ्यां सार्चिषः स्नेहबिन्दवः॥ २२ ॥
दन्तान्विदशतस्तस्य श्रूयते दशनस्वनः। यन्त्रस्याकृष्यमाणस्य मथ्नतो दानवैरिव ॥ २३ ॥
कालाग्निरिव संक्रुद्धो यां यां दिशमवैक्षत। तस्यां तस्यां भयत्रस्ता राक्षसाः संविलिल्यिरे ॥
तमन्तकमिव क्रुद्धं चराचरचिखादिषुम्। वीक्षमाणं दिशः सर्वा राक्षसा नोपचक्रमुः ॥ २४ ॥
ततः परमसंक्रुद्धो रावणो राक्षसाधिपः। अब्रवीद्रक्षसां मध्ये संस्तम्भयिषुराहवे ॥ २५ ॥
मया वर्षसहस्राणि चरित्वा परमं तपः। तेषु तेष्ववकाशेषु स्वयंभूः परितोषितः ॥ २६ ॥

---

रा० टी०—एवमिति। एवमादिविलापेन आर्तं रावणं पुत्रव्यसनसम्भवः महान् कोप आविवेश ॥ १६ ॥

१७-१८ ] ति० टी०—पुत्रस्याधयः पुत्रनाशजा आधयः। प्रकृत्या कोपनम्, अत एव दीप्तं नित्यं कोपदीप्तं पुनश्चाधयो दीपयामासुः ॥ १७ ॥ १८ ॥

रा० टी०—प्रकृत्येति। प्रकृत्या कोपनमेनं रावणं पुत्रस्याधयः पुत्रमरणजनितव्यथाः घर्मे निदाघे दीप्तमर्कं रश्मय इव संदीपयामासुः ॥ १७ ॥

रा० टी०—कोपादिति। कोपात् विजृम्भमाणस्य रावणस्य वक्रात् अभिज्वलन् स धूमाग्निः वृत्रस्य वदनादिव उत्पपात १८

गो० टी०—प्रकृत्येति। प्रकृत्या कोपनमित्यस्य विवरणम् दीप्तमिति। पुत्रस्य पुत्रसंबन्धिन्यः। पुत्रविषया इत्यर्थः। आधयः शोकाः पुनः भूयः संदीपयामासुः कोपयामासुः अकर्मपक्षे कृरयामासुरित्यर्थः ॥ १४ ॥

गो० टी०—ललाट इति। भ्रुकुटीभिरिति बहुवचनं दशशिरस्कत्वात् ॥ १८-२३ ॥

१९-२२ ] ति० टी०—बुद्धया समीक्ष्य। वैदेही किल मे पुत्रवधमूलमित्यालोच्येत्यर्थः ॥ १९-२२ ॥

रा० टी०—स इति। रावणः बुद्धया अन्तःकरणेन समीक्ष्य सीतैव मत्पुत्रवधे निमित्तमिति निश्चित्य वैदेह्याः वधं रोचयत् अरोचयत् आगमशास्त्रस्यानित्यत्वाददभावः ॥ १९ ॥

रा० टी०—तस्येति। रावणस्य नेत्रे महाघोरे बभूवतुः२०

रा० टी०—घोरमिति। क्रोधाग्निमूर्छितं तस्य रूपं क्रुद्धस्य रुद्रस्य रूपमिव व्यवस्थितं बभूव ॥ २१ ॥

रा० टी०—तस्येति। दीप्ताभ्यां दीपाभ्यां स्नेहबिन्दव इव तस्य रावणस्य नेत्राभ्यामश्रुबिन्दवः प्रापतन् ॥ २२ ॥

२३ ] ति० टी०—यन्त्रस्य मन्दररूपमथनयन्त्रस्य वासुकिना करणेन दानवैः कृष्यमाणस्य मथ्नतः क्षीराब्धिमथनं कुर्वतो मन्दरस्येव ॥ २३ ॥

रा० टी०—दन्तानिति। दानवैः आकृष्यमाणस्य अत एव मथ्नतः अमृतमन्थनं कुर्वतः यन्त्रस्य मन्दररूपमन्थनस्य स्वन इव दन्तान् विदशतः तस्य रावणस्य दशनस्वनः श्रूयते ॥२३॥

गो० टी०—दन्तानिति। आवेष्ट्यमानस्य भ्राम्यमाणस्य, यन्त्रस्य तिलपीडनयन्त्रस्य। दानवैर्बलवद्भिरित्यर्थः ॥ २४ ॥

गो० टी०—कालाग्निरिवेति। संविलिल्यिरे स्तम्भादिव्यवहिता बभूवुरित्यर्थः ॥ २५ ॥

२४ ] ति० टी०—नोपचक्रमुः समीपं न प्रापुः ॥ २४ ॥

रा० टी०—तमिति। क्रुद्धमन्तकमिव चराचरचिखादिषुं चराचरं खादितुमिच्छुमत एव सर्वाः दिशो वीक्षमाणं तं रावणं राक्षसा नोपचक्रमुः समीपं प्रापुः ॥ २४ ॥

गो० टी०—तमिति। चिखादिषुं संहर्तुमिच्छुमित्यर्थः। नोपचक्रमुः नोपसेदुः ॥ २६ ॥

२५ ] ति० टी०—आहवे युद्धे। संस्तम्भयिषुः प्रतिष्ठापयितुमिच्छुः। राक्षसानिति शेषः। द्वित्वाभाव आर्षः ॥ २५ ॥

रा० टी०—तत इति। परमसंक्रुद्धो रावणः आहवे संस्तंभयिषुः राक्षसान् प्रतिष्ठापयितुमिच्छुस्सन् रक्षसां मध्येऽब्रवीत् २५

गो० टी०—तत इति। संस्तम्भयिषुराहवे युद्धभीतान् राक्षसान् युद्धे स्थापयितुकामः। सनि द्विर्वचनाभाव आर्षः२७

२६ ] ति० टी०—अवकाशेषु तत्तत्तपःसमाप्तिसमयेषु स्वायंभुवस्थानविषयेषु वा ॥ २६ ॥

रा० टी०—तदाकारमाह—मयेति। वर्षसहस्राणि परमं-

---

१ इदं पद्यमधिकं गो. पाठे। २ अभीति गो. रा. पाठः। ३ दुरासदामिति गो. पाठः। ४ अस्रेति गो. पाठः। ५ दीप्ताभ्यामिव दीपाभ्यामिति गो. पाठ। ६ आवेष्ट्यमानस्येति गो. पाठः ७ महत इति गो. रा. पाठः। ८ इदं पद्यमधिकं गो. पाठे।

तस्यैव तपसा व्युष्ट्या प्रसादाच्च स्वयंभुवः । नासुरेभ्यो न देवेभ्यो भयं मम कदाचन ॥ २७ ॥
कवचं ब्रह्मदत्तं मे यदादित्यसमप्रभम् । देवासुरविमर्देषु न छिन्नं वज्रमुष्टिभिः ॥ २८ ॥
तेन मामद्य संयुक्तं रथस्थमिह संयुगे । प्रतीयात्कोऽद्य मामाजौ साक्षादपि पुरन्दरः ॥ २९ ॥
यत्तदाभिप्रसन्नेन सशरं कार्मुकं महत् । देवासुरविमर्देषु मम दत्तं स्वयंभुवा ॥ ३० ॥
अद्य तूर्यशतैर्भीमं धनुरुत्थाप्यतां मम । रामलक्ष्मणयोरेव वधाय परमाहवे ॥ ३१ ॥
स पुत्रवधसंतप्तः क्रूरः क्रोधवशं गतः । समीक्ष्य रावणो बुद्ध्या सीतां हन्तुं व्यवस्यत ॥ ३२ ॥
प्रत्यवेक्ष्य तु ताम्राक्षः सुघोरो घोरदर्शनः । दीनो दीनस्वरान्सर्वांस्तानुवाच निशाचरान् ॥ ३३ ॥
मायया मम वत्सेन वञ्चनार्थं वनौकसाम् । किंचिदेव हतं तत्र सीतेयमिति दर्शितम् ॥ ३४ ॥
तदिदं तथ्यमेवाहं करिष्ये प्रियमात्मनः । वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रताम् ॥
इत्येवमुक्त्वा सचिवान्खड्गमाशु परामृशत् ॥ ३५ ॥

---

तपश्चरित्वा तेषु तेषु अवकाशेषु तत्तत्तपस्समाप्तिसमयेषु स्वयम्भूः परितोषितः ॥ २६ ॥

गो० टी०-मयेति । अवकाशेषु तपःसमाप्तिषु ॥ २८ ॥

२७ ] ति० टी०-व्युष्ट्या फलोदयेन ॥ २७ ॥

रा० टी०-तस्येति । स्वयंभुवः प्रसादात्तस्य तपसो व्युष्ट्या फलोदयेन असुरादिभ्यो मम भयं न ॥ २७ ॥

गो० टी०-तस्यैवेत्यादि । व्युष्ट्या समृद्ध्या । व्युष्टिः फले समृद्धौ चेत्यमरः । भयाभावे हेतुमाह—कवचमिति । यत् यस्मात् कवचमस्ति, तस्मादिति, पूर्वेणान्वयः ॥२९-३०॥

२८ ] ति० टी०-भयाभावे हेतुमाह-कवचमिति॥२८॥

रा० टी०-भयाभावे प्रमाणमाह—कवचमिति । ब्रह्मदत्तं यन्मे कवचं तत् देवासुरविमर्देषु मया सह देवासुरयोर्युद्धेषु न छिन्नम् ॥ २८ ॥

२९ ] ति० टी०-क्रुद्धोक्तित्वादद्येत्यस्य पुनरुक्तिर्न दोषाय । प्रतीयादभिमुखो भवेत् ॥ २९ ॥

रा० टी०-तेनेति । तेन अभयप्राप्तिहेतुना आजौ रथस्थं मां निखिलेयत्ताकर्तारं संयुगे संग्रामार्थं पुरन्दरः पुरदारणसमर्थोऽपि कः प्रतीयात् सम्मुखमागच्छेत् न कोपीत्यर्थः॥ २९ ॥

गो० टी०-तेनेति । तेन कवचेन संयुक्तं रथस्थं माम् इह संयुगे कः प्रतीयात् आभिमुख्येनागच्छेत् । अद्य मामाजौ साक्षात्पुरन्दरोऽपि न प्रतीयादिति च योज्यम् । अर्थसिद्धो नञ् क्रियापदमस्त्येव । अनेवंव्याख्याने अद्य मामाजाविति पुनरुक्तं स्यात् ॥ ३१ ॥

३० ] ति० टी०-तदेत्यस्य व्याख्यानम्—देवासुरविमर्देष्विति । तद्विषयेऽभिप्रसन्नेन प्रीतेन यद्धनुर्दत्तम् ॥ ३० ॥

३१ ] ति० टी०-तदद्य तूर्यशतैरनेकमङ्गलवाद्यध्वनिभिः सह परं धनुर्ब्रह्मदत्तं धनुरुत्थाप्यतामुद्ध्रियताम् । आहवे रामलक्ष्मणयोर्वधाय ॥ ३१ ॥

रा० टी०-यदिति । देवासुरविमर्देषु अभिप्रसन्नेन स्वयंभुवा यत् कार्मुकं दत्तं तद्भीमं मम धनुः तूर्यशतैः माङ्गलिकानेकवाद्यैः उपलक्षितैः भवद्भिः उत्थाप्यानीयताम् अर्द्धचतुष्टयमेकान्वयि ॥ ३० ॥ ३१ ॥

गो० टी०-यत्तदेत्यादिश्लोकद्वयमेकान्वयम् ॥ देवासुरविमर्देषु विमर्दकाल इत्यर्थः । अद्य तूर्यशतैरित्यनेन इतः पूर्वमिदं धनुर्न नीतमिति गम्यते ॥ ३२-३४ ॥

३२ ] ति० टी०-व्यवस्यत व्यवास्यत । निश्चितवानित्यर्थः ॥ ३२ ॥

रा० टी०-स इति । रावणः सीतां हन्तुं व्यवस्यन निश्चयमकरोत् ॥ ३२ ॥

३३ ] ति० टी०-सुघोरो घोरचित्तः ॥ ३३ ॥

रा० टी०-प्रतीति । ताम्राक्षो रावणः दीनस्वरान् राक्षसान् प्रत्यवेक्षत उवाच च ॥ ३३ ॥

गो० टी०-प्रत्यवेक्ष्येति । सुघोरः सुघोरप्रकृतिः ॥ ३५॥

३४ ] ति० टी०-किंचिदेव हतं तदेव हत्वा तत्र तस्मिन्काले इयं वास्तवसीता हतेति मृषैव दर्शितं तदिदं शत्रूणामप्रियकरं रूपं वस्त्वात्मनः प्रियं तथ्यमेव करिष्ये ॥ ३४ ॥

रा० टी०-तदाकारमाह—माययेति । मम वत्सेन पुत्रेण वनौकसां वञ्चनार्थं मायया किञ्चिदेव हतं तत्र हननाश्रयं वस्तुनि इयं सीता इति दर्शितम् ॥ ३४ ॥

गो० टी०-माययेत्यादिश्लोकद्वयमेकान्वयम् ॥ सीतेयमिति दर्शितं किंचित् अलीकमेवेत्यर्थः ॥ ३६ ॥ ३७ ॥

गो० टी०-इत्येवमित्यर्धम् । परामृशत् आददे ॥ ३८ ॥

३५ ] ति० टी०-यदेवमतः—वैदेहीमिति । क्षत्रबन्धुं वस्तुतोऽक्षत्रियम् ॥ ३५ ॥

रा० टी०-तदिति । तत् पुत्रोक्तमिदं सीताहननं तथ्यं सत्यमेव करिष्यामि अत एव क्षत्रबन्धुं राममनुव्रतां सीतां नाशयिष्यामि इत्येवं सचिवान् उक्त्वा खड्गं परामृशत् अगृह्णात् सार्द्धश्लोक एकान्वयी ॥ ३५ ॥ ३६ ॥

---

१ भिन्नमिति गो. पाठः ।

उत्प्लुत्य गुणसंपन्नं विमलाम्बरवर्चसम् । निष्पपात स वेगेन सभार्यः सचिवैर्वृतः ॥ ३६ ॥
रावणः पुत्रशोकेन भृशमाकुलचेतनः । संक्रुद्धः खड्गमादाय सहसा यत्र मैथिली ॥ ३७ ॥
व्रजन्तं राक्षसं प्रेक्ष्य सिंहनादं [1]विचुक्रुशुः । ऊचुश्चान्योन्यमालिङ्ग्य संक्रुद्धं प्रेक्ष्य राक्षसम् ॥ ३८ ॥
अद्यैनं तावुभौ दृष्ट्वा भ्रातरौ प्रव्यथिष्यतः । लोकपाला हि चत्वारः क्रुद्धेनानेन निर्जिताः ॥
बहवः शत्रवश्चान्ये संयुगेष्वभिपातिताः ॥ ३९ ॥
त्रिषु लोकेषु रत्नानि भुङ्क्ते आहृत्य रावणः । विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि ॥ ४० ॥
तेषां संजल्पमानानामशोकवनिकां गताम् । अभिदुद्राव वैदेहीं रावणः क्रोधमूर्च्छितः ॥ ४१ ॥
वार्यमाणः सुसंक्रुद्धः सुहृद्भिर्हितबुद्धिभिः । अभ्यधावत संक्रुद्धः खे ग्रहो रोहिणीमिव ॥ ४२ ॥
मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता । ददर्श राक्षसं क्रुद्धं निस्त्रिंशवरधारिणम् ॥ ४३ ॥
तं निशम्य सनिस्त्रिंशं व्यथिता जनकात्मजा । निवार्यमाणं बहुशः सुहृद्भिरनिवर्तिनम् ॥ ४४ ॥
सीता दुःखसमाविष्टा विलपन्तीदमब्रवीत् । यथायं मामभिक्रुद्धः समभिद्रवति स्वयम् ॥
वधिष्यति सनाथां मामनाथामिव दुर्मतिः ॥ ४५ ॥
बहुशश्चोदयामास भर्तारं मामनुव्रताम् । भार्या मम भवस्वेति प्रत्याख्यातो ध्रुवं मया ॥ ४६ ॥

---

३६ ] ति० टी०—विमलाम्बरवर्चसं निर्मलाकाशकान्तिम् ३६
३७ ] ति० टी०—यत्र मैथिली तत्र निष्पपात ॥ ३७ ॥
रा० टी०—उद्धृत्येति । विमलाम्बरं कोशो वर्चश्च यस्य तं गुणसंपन्नं खड्गमुद्धृत्य कोशरहितं कृत्वा आदाय च यत्र मैथिली तत्र निष्पपात श्लोकद्वयमेकान्वयि ॥ ३७ ॥ ३८ ॥
गो० टी०—उद्धृत्येत्यादिश्लोकद्वयमेकं वाक्यम् ॥ गुणसंपन्नं माल्यालंकृतम्, विमलाम्बरवर्चसं विमलाकाशसदृशम्, खड्गमादाय कोशादुद्धृत्य, यत्र मैथिली तं देशं प्रति निष्पपातेत्यन्वयः ॥ ३९ ॥ ४० ॥
३८ ] ति० टी०—सिंहनादं विचुक्रुशुस्तद्रूपं क्रोशनं कृतवन्तः । सचिवा इति शेषः ॥ ३८ ॥
रा० टी०—व्रजन्तमिति । सिंहनादं राक्षसं बहुराक्षसविशिष्टं राक्षसं रावणं व्रजन्तं संप्रेक्ष्य संक्रुद्धं च प्रेक्ष्य अन्योन्यमालिङ्ग्य च विचुक्रुशुरूचुश्च ॥ ३९ ॥
गो० टी०—व्रजन्तमित्यादिसार्धश्लोकत्रयमेकान्वयम् ॥ रत्नानि श्रेष्ठवस्तूनि । रत्नं स्वजातिश्रेष्ठेपीत्यमरः ॥४१–४५॥
३९ ] ति० टी०—तेषां सिंहनादप्रवृत्तौ कारणमाह—अद्यैनमिति ॥ ३९ ॥
४० ] ति० टी०—आहृत्य रत्नानि भुङ्क्ते ॥ ४० ॥
रा० टी०—तदाकारमाह—अद्येति । उभौ रामलक्ष्मणौ एनं रावणं दृष्ट्वा प्रव्यथिष्यतः तत्र हेतुः अनेन रावणेन लोकपालाः निर्जिताः ॥ ४० ॥
रा० टी०—बहव इति । अन्येऽपि बहवो निपातिताः रत्नानि आहृत्य भुङ्क्ते अत एव अस्य सदृशो न सार्धश्लोक एकान्वयी ॥ ४१ ॥

४१ ] ति० टी०—अशोकवनिकां गतां वैदेहीमभिदुद्राव ॥ ४१ ॥
रा० टी०—तेषामिति । तेषां संजल्पमानानां सतां रावणो वैदेहीमभिदुद्राव ॥ ४२ ॥
४२–४३ ] ति० टी०—ग्रहः कुजादिः ॥ ४२ ॥ ४३ ॥
रा० टी०—वार्यमाण इति । सुहृद्भिर्वार्यमाणोऽपि सुसंक्रुद्धो रावणः संक्रुद्धो ग्रहो रोहिणीमिव अभ्यधावत ॥ ४३ ॥
रा० टी०—मैथिलीति । क्रुद्धं राक्षसं रावणं ददर्श ॥ ४४ ॥
गो० टी०—वार्यमाण इति । ग्रहः अङ्गारकः ॥ ४६ ॥ ४७ ॥
४४ ] ति० टी०—निवार्यमाणमप्यनिवर्तिनम् । ‘ अनुवर्तिनम् ’ इति पाठेऽभिमुखमागच्छन्तम् ॥ ४४ ॥
रा० टी०—तमिति । दुःखेन वियोगजनितव्यथया समाविष्टा अत एव विलपन्ती व्यथिता चंचलचित्ता जनकात्मजा सुहृद्भिर्वार्यमाणमपि अनिवर्तितं रावणं निशम्य इदमब्रवीत् सार्धश्लोक एकान्वयी ॥ ४५ ॥
४५ ] ति० टी०—यथा येन प्रकारेणानुभूयमानोऽयं मामभिद्रवति ॥ ४६ ॥
रा० टी०—तदाकारमाह—यथेति । यथा यथावत् अभिक्रुद्धोऽयं रावणः स्वयं मां समभिद्रवति अतः सनाथामपि मामनाथामिव वधिष्यति ॥ ४६ ॥ ४७ ॥
गो० टी०—यथेति ॥ यथा यस्मादित्यर्थः ॥ ४९ ॥ ५० ॥
४६ ] ति० टी०—वधिष्यतीत्यत्र कारणमाह-बहुश इति ४६
रा० टी०—वधे हेतुमाह—बहुश इति । भर्तारमनुव्रतां मां मम भार्याः मन्दोदरीप्रभृतीः भवस्व प्राप्नुहि तत्पूज्यात्वेन तिष्ठेत्यर्थः इति बहुशश्चोदयामास प्रार्थयामास मया तु प्रत्याख्यातः तदुक्तमनाङ्गीकृतमित्यर्थः ॥ ४८ ॥

---

१ प्रेति गो. पाठः । २ आश्लिष्येति गो. पाठः । ३ अपीति गो. पाठः । ४ नीति गो. पाठः । ५ चाहृत्येति गो. पाठः । ६ निशाम्येति गो. पाठः । ७ अनुवर्तिनमिति गो. पाठः । ८ रमस्वेति गो. पाठ. ।

सोऽयं मामनुपस्थाने व्यक्तं नैराश्यमागतः । क्रोधमोहसमाविष्टो व्यक्तं मां हन्तुमुद्यतः ॥ ४७ ॥
अथवा तौ नरव्याघ्रौ भ्रातरौ रामलक्ष्मणौ । मन्निमित्तमनार्येण समरेऽद्य निपातितौ ॥ ४८ ॥
भैरवो हि महान्नादो राक्षसानां श्रुतो मया । बहूनामिह हृष्टानां तथा विक्रोशतां प्रियम् ॥ ४९ ॥
अहो धिङ्मन्निमित्तोऽयं विनाशो राजपुत्रयोः । अथवा पुत्रशोकेन अहत्वा रामलक्ष्मणौ ॥ ५० ॥
विधमिष्यति मां रौद्रो राक्षसः पापनिश्चयः । हनूमतस्तु तद्वाक्यं न कृतं क्षुद्रया मया ॥ ५१ ॥
यद्यहं तस्य पृष्ठेन तदायासमनिर्जिता । नाद्यैवमनुशोचेयं भर्तुरङ्कगता सती ॥ ५२ ॥
मन्ये तु हृदयं तस्याः कौसल्यायाः फलिष्यति । एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि ॥ ५३ ॥
सा हि जन्म च बाल्यं च यौवनं च महात्मनः । धर्मकार्याणि रूपं च रुदती संस्मरिष्यति ॥ ५४ ॥
निराशा निहते पुत्रे दत्त्वा श्राद्धमचेतना । अग्निमावेक्ष्यते नूनमपो वापि प्रवेक्ष्यति ॥ ५५ ॥
धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम् । यन्निमित्तमिमं शोकं कौसल्या प्रतिपत्स्यते ॥ ५६ ॥
इत्येवं मैथिलीं दृष्ट्वा विलपन्तीं तपस्विनीम् । रोहिणीमिव चन्द्रेण विना ग्रहवशं गताम् ॥ ५७ ॥
एतस्मिन्नन्तरे तस्य अमात्यः शीलवाञ्छुचिः । सुपार्श्वो नाम मेधावी रावणं रक्षसां वरम् ॥
निवार्यमाणः सचिवैरिदं वचनमब्रवीत् ॥ ५८ ॥

---

४७-४९ ] ति० टी०—अनुपस्थाने स्वत्पनङ्गीकारे सति ॥ ४७-४९ ॥

रा० टी०—स इति । ममानुपस्थाने अनङ्गीकारे सति नैराश्यमागतः अत एव क्रोधमोहसमाविष्टः सोऽयं रावणः मां हन्तुमुद्यतः व्यक्तं स्फुटमेतत् ॥ ४९ ॥

गो० टी०—सोयमिति । अनुपस्थाने अनुपस्थानात् ॥ ११ ॥

रा० टी०—संभावनान्तरमाह—अथवेति ॥ ५० ॥

रा० टी०—संभावनायां बीजमाह—भैरव इति । हृष्टानामत एव प्रियं स्वस्वेष्टं विक्रोशतां राक्षसानां महान्नादो मया श्रुतः ॥ ५१ ॥

गो० टी०—तौ निहत्य तेन निस्त्रिंशेन सह प्रवंशनमपि संभवतीत्यभिप्रायेणाह—अथ वेत्यादि ॥ ५२ ॥

५० ] ति० टी०—रामलक्ष्मणावहत्वा तौ हन्तुमशक्नुवानेन ॥ ५० ॥

रा० टी०—अहो इति । मन्निमित्तो यदि विनाशः तर्हि धिङ् मामिति शेषः अर्धं पृथक् सम्भावनान्तरमाह—अथवेति । पुत्रशोकहेतुना रामलक्ष्मणावहत्वा यथा मया हनूमतो वाक्यं न कृतं मां विधमिष्यति सार्धश्लोक एकान्वयी ॥ ५२ ॥ ५३ ॥

गो० टी०—अत्र निमित्तान्तरमाशङ्कते—अथवा पुत्रशोकेनेति । अहत्वा हन्तुमशक्तो भूत्वा ॥ ५३ ॥

५१-५२ ] ति० टी०—हनूमतस्तु तद्वाक्यं मत्पृष्ठमारोहेदानीमेव त्वां रामसमीपं नेष्यामीत्युक्तरूपम् । रामेणानिर्जितापि यदि तदायासमयासिषं तदाद्यैवं नानुशोचेयम् ॥ ५१ ॥ ५२ ॥

गो० टी०—हनूमत इत्यर्धम् । क्षुद्रया विचारमूढया ॥ ५४ ॥

रा० टी०—यदीति । अनिर्जिता रावणेनानिहतेत्यर्थः अहं तस्य हनूमतः पृष्ठेन यदायासमयासिषं तदा भर्तुरङ्कगता सती नानुशोचेयम् ॥ ५४ ॥

गो० टी०—यदीति । यायामनुशोचेयमिति "हेतुहेतुमतो लिङ्" इति लिङ् ॥ ५५ ॥

५३-५६ ] ति० टी०—यदा श्रोष्यते तदा फलिष्यति स्फुटिष्यति । यदि रामोऽपि हन्यत इति शेषः । तदेवाह—एकपुत्रेति ॥ ५३-५६ ॥

रा० टी०—मन्ये इति । एकपुत्रा कौशल्या यदा पुत्रं सदितं विनष्टं श्रोष्यते तदा तस्याः कौशल्यायाः हृदयं फलिष्यति विदरिष्यति इत्यहं मन्ये ॥ ५५ ॥

गो० टी०—प्रथमपक्षानुसारेण शोचति—मन्य इति ॥ ५६ ॥

रा० टी०—सेति । रुदन्ती रुदती सा कौशल्या महात्मनो रामस्य जन्मादि संस्मरिष्यति ॥ ५६ ॥

गो० टी०—सा हीति । धर्मकार्यानुरूपं धर्मकार्यानुरूपत्वम् ॥ ५७ ॥

रा० टी०—निराशेति । निराशा अत एव अचेतना कौशल्या श्राद्धं श्रद्धया युतं यथा भवति तथा दत्त्वा अग्निमारोक्ष्यते अपः प्रवेक्ष्यति वा ॥ ५७ ॥

रा० टी०—धिगिति । यन्निमित्तं शोकं कौशल्या प्रतिपत्स्यते तां मन्थरां धिग् ॥ ५८ ॥

गो० टी०—निराशेति । अचेतना मूर्छिता ॥ ५८ ॥ ५९ ॥

५७ ] ति० टी०—एवं विलपन्तीं चन्द्रेण विना कृतां ग्रहवशं गतां रोहिणीमिव मैथिलीं दृष्ट्वा ॥ ५७ ॥

५८ ] ति० टी०—सुपार्श्वो नामामात्यः शुचिः शुद्धवत-

---

१ निहन्तुं मां समुद्यतः इति गो. पाठः । २ अपि यदिति गो. रा. पाठः । ३ यायामिति गो. पाठः । ४ अनुरूपमिति गो. पाठः । ५ रुदन्ती इति गो. रा. पाठः । ६ इदं दुःखमिति गो. पाठः । ७ बुद्धिमानिति गो. पाठः । ८ राक्षसो राक्षसेश्वरमिति गो. पाठः । ९ माणमिति गो. पाठः ।

कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज । हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य च ॥ ५९ ॥
वेदविद्याव्रतस्नातः स्वकर्मनिरतस्तथा । स्त्रियः कस्माद्वधं वीर मन्यसे राक्षसेश्वर ॥ ६० ॥
मैथिलीं रूपसंपन्नां प्रत्यवेक्षस्व पार्थिव । तस्मिन्नेव सहास्माभिराहवे क्रोधमुत्सृज ॥ ६१ ॥
अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशी । कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ॥ ६२ ॥
शूरो धीमान्रथी खड्गी रथप्रवरमास्थितः । हत्वा दाशरथिं भीमं भवान्प्राप्स्यति मैथिलीम् ॥ ६३ ॥
स तद्दुरात्मा सुहृदा निवेदितं वचः सुधर्म्यं प्रतिगृह्य रावणः ।
गृहं जगामाथ ततश्च वीर्यवान्पुनः सभां च प्रययौ सुहृद्वृतः ॥ ६४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

---

स्तदितरसचिवैरेवं वक्तुमयोग्यमिति निवार्यमाणोऽपि रावणं प्रतीदमब्रवीत् । अस्यैवाविन्ध्य इति नामान्तरम्, अत एव भारते–'अशोकवनिकास्थां तां रामदर्शनलालसाम् । खड्गमादाय दुष्टात्मा जवेनाभिपपात ह ॥ तद्बुद्ध्वा तस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम् । शमयामास संक्रुद्धं श्रूयतां येन हेतुना ॥' इत्युक्तम् ॥ ५८ ॥

रा० टी०–इतीति । ग्रहवशं गतां चन्द्रेण विना रोहिणीमिव इत्येवं विलपन्तीं मैथिलीं दृष्ट्वा सुपार्श्वो नाम तस्य रावणस्यामात्यः सचिवैर्निवार्यमाणोऽपि इदमब्रवीत् सार्धश्लोकद्वयमेकान्वयि ॥ ५९ ॥ ६० ॥

गो० टी०–इत्येवमित्यादि । मैथिलीं दृष्ट्वा रावणमब्रवीदित्यन्वयः ॥ ६०–६४ ॥

५९ ] ति० टी०–वैश्रवणानुजेत्यनेन महाकुलप्रसूतत्वमुक्तम् ॥ ५९ ॥

रा० टी०–तदाकारमाह—कथमिति । हे दशग्रीव धर्ममपास्य त्यक्त्वा वैदेहीं हन्तुं कथमिच्छसि ॥ ६१ ॥

६० ] ति० टी०–धर्मापालनं च तवायुक्तं धार्मिकत्वादेवेत्याह–वेदेति । वेदविद्यामहापेक्षितब्रह्मचर्यव्रतपूर्वं विद्यां गृहीत्वा स्नातो गुरुकुलात्समावृत्तः । तदनन्तरं दारग्रहणपूर्वं नित्याग्निहोत्रादिस्वकर्मनिरतः ॥ ६० ॥

रा० टी०–वेदेति । वेदविद्याव्रतस्नातस्त्वं स्त्रियो वधं कस्मान्मन्यसे इच्छसि ॥ ६२ ॥

६१ ] ति० टी०–रूपसंपन्नां मैथिलीं प्रत्यवेक्षस्व । रामवधपर्यन्तमिति शेषः । त्वं तस्मिन्नेव राघव एव क्रोधमुत्सृज ॥ ६१ ॥

रा० टी०–ननु किं कर्तव्यमित्यत आह–मैथिलीमिति । मैथिलीं प्रत्यवेक्षस्व नित्यं पश्य तस्मिन् रामे एव अस्माभिस्सह त्वं क्रोधमुत्सृज ॥ ६३ ॥

६२–६४ ] ति० टी०–अथ कृष्णपक्षचतुर्दशी तस्यामभ्युत्थानं समरोद्योगं कृत्वामावास्यायां विजयाय निर्याहि प्रस्थानं कुरु ॥ ६२–६४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

रा० टी०–अभ्युत्थानमिति । अथ कृष्णपक्षचतुर्दशी अतः अभ्युत्थानं समरोद्योगं कृत्वा बलैर्वृतस्त्वममावास्याममावास्यायां निर्याहि ॥ ६४ ॥

रा० टी०–शूर इति । शूरत्वादिविशिष्टो भवान् मैथिलीं प्राप्स्यति भवद्भार्यापूज्यात्वेन मैथिली स्थास्यतीत्यर्थः ॥ ६५ ॥

रा० टी०–स इति । स रावणः सुहृदां निवेदितं वचः प्रतिगृह्य गृहं जगाम अथानन्तरं सभां प्रययौ ॥ ६६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रिनवतितम सर्गः ॥ ९३ ॥

गो० टी०–अभ्युत्थानमिति । अभ्युत्थानं युद्धनिर्याणप्रारम्भम् । चतुर्दशी चतुर्दश्याम् । अमावास्याम् अमावास्यायाम् । अनेन त्रयोदशयुद्धदिनान्यतीतानीत्यवगम्यते । तथा हि ततोऽस्तमगमत्सूर्यः संध्यया प्रतिरञ्जितः। पूर्णचन्द्रप्रदीपा च क्षपा समभिवर्तत इति वचनात् ॥ पौर्णमास्यां सुवेलाप्रवेशः । ततः कृष्णपक्षप्रथमायां युद्धस्यारम्भः । तस्यामेव रात्रौ नागपाशबन्धतद्विमोक्षौ । द्वितीयायां धूम्राक्षस्य वधः । तृतीयायां वज्रदंष्ट्रस्य । चतुर्थ्यामकम्पनस्य । प्रहस्तस्य पञ्चम्याम् । षष्ठ्यां रावणमुकुटभङ्गः । सप्तम्यां कुम्भकर्णस्य वधः । अष्टम्यामतिकायादीनाम् । नवम्यां पुनरिन्द्रजिद्युद्धं, तस्यामेव रात्रौ कुम्भनिकुम्भादीनां वधः दशम्यां मकराक्षस्य । एकादश्यां द्वादश्यां त्रयोदश्यां चेन्द्रजिद्वधः । वस्तुतस्तु नवम्यां युद्धारम्भात्तदारभ्य दिनद्वयेन रावणेन्द्रजिन्मूलबलव्यतिरिक्तराक्षसनिबर्हणात् एकादशीद्वादशीत्रयोदशीभिरिन्द्रजिद्वध इति चतुर्दश्यामभ्युत्थानवचनं युज्यत एव ॥ ६५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिनवतितमः सर्गः ॥ ९३ ॥

---

१ ह्रींति गो. पाठः । २ स्वेदेति गो. रा. पाठः । ३ स्त्रिया इति गो. पाठः । ४ त्वमेव लिति गो. पाठः । ५ राघव इति गो. पाठः । ६ चतुर्दशीम इति गो. पाठः । ७ राममिति गो. रा. पाठः ।

# त्रिनवतितमः सर्गः ।

पुत्रव्यसनकृशपौलस्त्यप्रेरितबलाध्यक्षाणां सबलानां युध्यमानानां च कपीनां रोमहर्षणे संख्ये रात्रिंचरचमूः सेना दाशरथिं रक्षकं गता ततश्च रामोऽपूर्वशरसंधानमोचनकौशलेन दिवसस्याष्टमभागमात्रे रथानां दश सहस्राणि कुञ्जराणामष्टादश सहस्राणि चतुर्दश सहस्राणि सारोहाणां वाजिनां लक्षद्वयं राक्षसानां हत्वा देवैः साधुसाध्विति पूजितः ।

स प्रविश्य सभां राजा दीनः परमदुःखितः । निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १ ॥
अब्रवीच्च स तान्सर्वान्बलमुख्यान्महाबलः । रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्शितः ॥ २ ॥
सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः । निर्यान्तु रथसङ्घैश्च हस्त्यश्वैश्चोपशोभिताः ॥ ३ ॥
एकं रामं परिक्षिप्य समरे हन्तुमर्हथ । प्रहृष्टाः शरवर्षाणि प्रावृट्काल इवाम्बुदाः ॥ ४ ॥
अथवाहं शरैस्तीक्ष्णैर्भिन्नगात्रं महाहवे । भवद्भिः श्वो निहन्तास्मि रामं लोकस्य पश्यतः ॥ ५ ॥
इत्येतद्वाक्यमादाय राक्षसेन्द्रस्य राक्षसाः । निर्ययुस्ते रथैः शीघ्रैर्नानानीकैश्च संयुताः ॥ ६ ॥
परिघान्पट्टिशांश्चैव शरखड्गपरश्वधान् । शरीरान्तकरान्सर्वे चिक्षिपुर्वानरान्प्रति ॥
वानराश्च द्रुमाञ्छैलान्राक्षसान्प्रति चिक्षिपुः ॥ ७ ॥
स सङ्ग्रामो महाभीमः सूर्यस्योदयनं प्रति । रक्षसां वानराणां च तुमुलः समपद्यत ॥ ८ ॥
ते गदाभिश्च चित्राभिः प्रासैः खड्गैः परश्वधैः । अन्योन्यं समरे जघ्नुस्तदा वानरराक्षसाः ॥ ९ ॥
एवं प्रवृत्ते सङ्ग्रामे ह्युद्धूतं सुमहद्रजः । रक्षसां वानराणां च शान्तं शोणितविस्रवैः ॥ १० ॥

---

१ ] ति० टी०—स इति ॥ १ ॥

रा० टी०—रावणकर्तृकसभाप्रवेशानन्तरकालिकं वृत्तान्तमाह—स इत्यादिभिः । राजा रावणः क्रुद्धसिंह इव श्वसन् सन् मुख्ये आसने निषसाद ॥ १ ॥

गो० टी०—अथ मूलबलयुद्धम् स प्रविश्येत्यादि ॥ १ ॥

२ ] ति० टी०—रावणः प्राञ्जलिरिति । परमापदः प्राप्त्यावशिष्टानां युद्धौन्मुख्यार्थं नमस्कारं करोतीत्याशयः ॥ २ ॥

रा० टी०—अब्रवीदिति । पुत्रव्यसनकर्षितः अत एव प्राञ्जलिः रावणो बलमुख्यानब्रवीत् ॥ २ ॥

गो० टी०—अब्रवीदिति । रावणः प्राञ्जलिरिति । अनुनयार्थमञ्जलिकरणम् ॥ २ ॥ ३ ॥

३ ] ति० टी०—सर्वेण । एकमपि हस्त्यश्वरथपादातमत्यक्त्वेत्यर्थः ॥ ३ ॥

रा० टी०—तदाकारमाह—सर्वे इति । भवन्तस्सर्वे निर्यात युद्धाय निर्गच्छत ॥ ३ ॥

४ ] ति० टी०—एकं रामं परिक्षिप्येति । तस्यैव मूलत्वात्तमेकमेव परिक्षिप्य परितो निरुध्य हन्तुमर्हथ । शरवर्षाणि । वर्षयतेति शेषः ॥ ४ ॥

रा० टी०—एकमिति । एकं मुख्यं रामं शरवर्षेण परिक्षिप्य निरुध्य हन्तुमर्हथ ॥ ४ ॥

गो० टी०—एक मिति । परिक्षिप्य आवार्य, शरवर्षेण वृष्ट्वा हन्तुमर्हथेत्यन्वयः ॥ ४ ॥

५ ] ति० टी०—अथवेति । अथ रामहननासंभवे भवद्भिरथ भिन्नगात्रं श्वो निहन्तास्मि ॥ ५ ॥

रा० टी०—अथवेति । अथवा भवत्कर्तृकतद्विघाताभावे श्वः आगामिप्रातःकाले भवद्भिश्शरैर्भिन्नगात्रं रामं लोकस्य पश्यतोऽहं निहन्तास्मि ॥ ५ ॥

गो० टी०—स रामो यदि हन्तुं न शक्येत, तथापि भवतां शरैः भिन्नगात्रः स्यात्, तेन तस्य वधः सुकरो मे भवेदित्यभिप्रायेणाह—अथ वेति । इदानीं यूयं तं हन्तुं न शक्ताश्चेदिदानीं तीक्ष्णैः शरैर्भवद्भिर्भिन्नगात्रं श्वो निहन्तास्मि ॥ ५–८ ॥

६–७ ] ति० टी०—इत्येतद्वाक्यं प्रथमपक्षोक्तम् ॥ ६–७ ॥

रा० टी०—इतीति । राक्षसेन्द्रस्य इत्येतद्वाक्यमादाय रथादिभिस्संयुक्ताः राक्षसाः निर्ययुः ॥ ६ ॥

रा० टी०—परिघानिति । सर्वे राक्षसा वानरान् प्रति परिघादीन् चिक्षिपुः ॥ ७ ॥

रा० टी०—वानरा इति । वानराः द्रुमादीन् राक्षसान् प्रतिचिक्षिपुः अर्द्धं पृथक् स इति सूर्यस्योदयनं प्रति चतुर्दशीसूर्योदयमारभ्य रक्षसां वानराणां च तुमुलस्संग्रामस्समपद्यत ॥ ८ ॥

८ ] ति० टी०—सूर्यस्योदयनं प्रति । चतुर्दशीसूर्योदयमारभ्येत्यर्थः । त्रयोदशीरात्रिशेषे रावणस्य सीतासमीपगमनमिति बोध्यम् ॥ ८ ॥

गो० टी०—स संग्राम इति । सूर्यस्योदयनं प्रति सूर्योदयमारभ्य ॥ ९ ॥

९–१० ] ति० टी०—गदाभिरन्योन्यं जघ्नुः । यद्यपि

---

१ यान्त्विति गो. पाठः । २ पादातैरिति गो. पाठः । ३ वर्षन्त इति गो. पाठः । ४ वर्षेणेति गो. रा. पाठः । ५ रण इति गो. रा. पाठः । राक्षसेन्द्रस्य वाक्यमादाय राक्षसा इति गो. पाठः । ७ सुसंवृता इति गो. पाठः । ८ वीति गो. रा.पाठः ।

मातंगरथकूलाश्च शरमत्स्या ध्वजद्रुमाः । शरीरसंघाटवहाः प्रसस्रुः शोणितापगाः ॥ ११ ॥
ततस्ते वानराः सर्वे शोणितौघपरिप्लुताः । ध्वजवर्मरथानश्वान्नानाप्रहरणानि च ॥
आप्लुत्याप्लुत्य समरे वानरेन्द्रा बभञ्जिरे ॥ १२ ॥
केशान्कर्णललाटं च नासिकाश्च प्लवंगमाः । रक्षसां दशनैस्तीक्ष्णैर्नखैश्चापि व्यकर्तयन् ॥ १३ ॥
एकैकं राक्षसं संख्ये शतं वानरपुंगवाः । अभ्यधावन्त पतितं वृक्षं शकुनयो यथा ॥ १४ ॥
तदा गदाभिर्गुर्वीभिः प्रासैः खड्गैः परश्वधैः । निर्जघ्नुर्वानरान्घोरान्राक्षसाः पर्वतोपमाः ॥ १५ ॥
राक्षसैर्वध्यमानानां वानराणां महाचमूः । शरण्यं शरणं याता रामं दशरथात्मजम् ॥ १६ ॥
ततो रामो महातेजा धनुरादाय वीर्यवान् । प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष च ॥ १७ ॥
प्रविष्टं तु तदा रामं मेघाः सूर्यमिवाम्बरे । नाभिजग्मुर्महाघोरा निर्दहन्तं शराग्निना ॥ १८ ॥
कृतान्येव सुघोराणि रामेण रजनीचराः । रणे रामस्य ददृशुः कर्माण्यसुकराणि ते[12] ॥ १९ ॥
चालयन्तं महासैन्यं[13] विधमन्तं महारथान् । ददृशुस्तेन वै रामं वातं वनगतं यथा ॥ २० ॥
छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शस्त्रपीडितम् । बलं रामेण ददृशुर्न रामं शीघ्रकारिणम् ॥ २१ ॥

---

वानराणां गदाद्यायुधाभावस्तथापि राक्षसहस्तेभ्य आच्छिद्य गृहीतैस्तैस्तेषां युद्धसंभव इति बोध्यम् ॥ ९-१० ॥

रा० टी०—ते इति । वानरराक्षसाः गदादिभिः अन्योन्यं जघ्नुः ॥ ९ ॥

रा० टी०—एवमिति । एवं संग्रामे प्रवृत्ते सति सुमहद्रजः शोणितविस्रवैश्शान्तम् ॥ १० ॥

गो० टी०—ते गदाभिरिति । अन्योन्यं जघ्नुरित्यत्र शिलावृक्षाणामप्युपलक्षणम् । राक्षसेभ्योपहृतानि गदाखड्गादीनि राक्षसानामिव वानराणामपि संभवन्तीति वा तथोक्तमिति ज्ञेयम् ॥ १० ॥ ११ ॥

११-१८ ] ति० टी०—मातंगरथरूपे कूले यासां ताः । शरीराण्येव संघाटाः काष्ठसमूहास्तान्वहन्ति ताः ॥ ११-१८ ॥

रा० टी०—मातङ्गेति । मातङ्गरथौ कूलौ यासां शराः मत्स्याः यासां शरीराण्येव संघाटाः दारुनिचयाः तान् वहन्ति ताः शोणितापगाः रुधिरनद्यः प्रसस्रुः ॥ ११ ॥

गो० टी०—मातङ्गेति । शरीराण्येव संघाटाः प्लवाः तान् वहन्तीति शरीरसंघाटवहाः ॥ १२ ॥

रा० टी०—तत इति । शोणितौघपरिप्लुताः वानरेन्द्रा वानराः ध्वजादीनि आप्लुत्याप्लुत्य बभंजिरे सार्धश्लोक एकान्वयी ॥ १२ ॥ १३ ॥

गो० टी०—ततस्ते वानराः सर्वे शोणितौघपरिप्लुता इत्यारभ्य, राक्षसानां बभञ्जिर इत्यन्तं सार्धश्लोक एकान्वयः ॥ १३ ॥

रा० टी०—केशानिति । प्लवङ्गमाः दशनादिभिः रक्षसां केशादीन् व्यदारयन् ॥ १४ ॥

रा० टी०—एकैकमिति । एकैकं राक्षसशतं वानरपुङ्गवाः शकुनयो वृक्षमिव अभ्यधावन्त ॥ १५ ॥

रा० टी०—तदेति । राक्षसाः गदादिभिः वानरान् निजघ्नुः ॥ १६ ॥

गो० टी०—केशानिति । रक्षसां केशानिति क्रमेणान्वयः न्यकर्तयन् चिच्छिदुः ॥ १४-१६ ॥

रा० टी०—राक्षसैरिति । राक्षसैर्वध्यमानानां वानराणां महाचमूः रामं शरणं याता ॥ १७ ॥

रा० टी०—तत इति । रामो धनुरादाय राक्षसं सैन्यं प्रविश्य शरवर्षं ववर्ष ॥ १८ ॥

रा० टी०—प्रविष्टमिति । शराग्निना निर्दहन्तं रामं सूर्यं मेघा इव महाघोरा राक्षसाः नाधिजग्मुः ॥ १९ ॥

गो० टी०—राक्षसैरिति । वानरसेनाशरणागतिरियम् । राक्षसैर्वध्यमानानामित्याकिंचन्यानन्यगतिकत्वोक्तिः । शरण्यमिति दयायुक्तिः । राममिति परत्वोक्तिः । दशरथात्मज इति सौलभ्योक्तिः ॥ १७-१९ ॥

१९ ] ति० टी०—रजनीचरा रामस्य रणेऽसुकराणि कर्माणि रामेण कृतान्येव ददृशुः, न तु क्रियमाणानि ॥ १९ ॥

रा० टी०—कृतानीति । असुकराणि अन्यैः कर्तुमशक्यानि रामस्य कर्माणि रजनीचराः रामेण कृतान्येव ददृशुः न तु क्रियमाणानीत्यर्थः ॥ २० ॥

गो० टी०—कृतान्येवेति । कृतान्येव ददृशुः, न तु क्रियमाणानीत्यर्थः ॥ २० ॥

२०-२१ ] ति० टी०—तथा तत्कर्तारमपि न ददृशुरित्याह—चालयन्तमिति । कर्तुरदृष्टत्वेऽपि क्रियामात्रदर्शने दृष्टान्तः—वातं वनगतं यथा । स्पर्शविधमनादिकार्यैर्यथा वायुरनुमित एव भवति तथा रामोऽप्यनुमित एव न प्रत्यक्ष इति भावः ॥ २० ॥ २१ ॥

---

१ वाजीति गो. पाठः । २ राक्षसानामिति गो. पाठः । ३ ललाटानिति गो. रा. पाठः । ४ नीति गो. व्यदारयन्निति रा. पाठः । ५ फाल्गिनमिति गो. रा. पाठः । ६ तथेति गो. पाठः । ७ नीति गो. रा. पाठः । ८ युध्यमानानामिति गो. पाठः । ९ हेति गो. रा. पाठः । १० अभीति गो. पाठः । ११ घोरमिति गो. पाठः । १२ चेति गो. पाठः । १३ मनीकमिति गो. रा. पाठ ।

प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम् । इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥ २२ ॥
एष हन्ति गजानीकमेष हन्ति महारथान् । एष हन्ति शरैस्तीक्ष्णैः पदातीन्वाजिभिः सह ॥ २३ ॥
इति ते राक्षसाः सर्वे रामस्य सदृशान्रणे । अन्योन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य तु ॥ २४ ॥
न ते ददृशिरे रामं दहन्तमपि वाहिनीम् । मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २५ ॥
ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः । पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥ २६ ॥
भ्रमन्ता काञ्चनीं कोटिं कार्मुकस्य महात्मनः । अलातचक्रप्रतिमां ददृशुस्ते न राघवम् ॥ २७ ॥

रा० टी०—चालयन्तमिति । महासैन्यं चालयन्तं महारथान् विधमन्तं रामं ते राक्षसाः न ददृशुः क्रियामात्रमेव ददृशुरित्यर्थः क्रियामात्रदर्शने क्रियावतो दर्शनाभावे दृष्टान्तः वनगतं वातं वायुमिव ॥ २१ ॥

गो० टी०—न केवलं हस्तलाघवातिशयेन कर्मणामदर्शनं रणसंचारलाघवातिशयेन कर्तारमपि न ददृशुरित्याह—चालयन्तमिति । यथाचालनविधमनादिकार्यलिङ्गात् वायुरनुमितो भवति, तद्वद्रामो प्यनुमितः । न तु प्रत्यक्षित इत्यर्थः ॥ २१ ॥

रा० टी०—छिन्नमिति । रामेण छेदादिविशिष्टं बलमेव ददृशुः न रामम् ॥ २२

गो० टी०—उक्तमर्थं विशदयति—छिन्नमिति । छिन्नं खण्डितम् । भिन्नं विदारितम् । प्रभग्नं शकलीकृतम् । शरपीडितं हृदयार्पितशल्यम् ॥ २२ ॥

२२ ] ति० टी०—इन्द्रियार्थाः शब्दादिविषयास्तेषु तिष्ठन्तमनुभवितृत्वेनावस्थितं भूतात्मानं जीवं प्रजा यथा न पश्यन्ति प्रत्यक्षतस्तद्वदित्यर्थः ॥ २२ ॥

रा० टी०—तदेव सदृष्टान्तमाह—प्रहरन्तमिति । इन्द्रियार्थेषु शब्दादिविषयेषु तिष्ठन्तं भूतात्मानमन्तर्यामिणमिव शरीरेषु प्रहरन्तं राघवं ते राक्षसाः न पश्यन्ति ॥ २३ ॥

गो० टी०—प्रहरन्तमिति । इन्द्रियार्थेषु तिष्ठन्तम् इन्द्रियार्थाननुतिष्ठन्तम् अनुभवन्तं, तेनानुभवेनानुमीयमानमपि भूतात्मानं भूतस्य पञ्चभूतात्मकशरीरस्य आत्मानं जीवात्मानं प्रजाः यथा न पश्यन्ति, तथैव शरीरेषु प्रहरन्तं तेन प्रहारेणानुमीयमानमपि राघवं पुरतश्चक्षुषा नाद्राक्षुरित्यर्थः । यद्वा इन्द्रियार्थेषु प्रत्यक्षतोनुभूयमानेषु गन्धादिगुणेषु, निराश्रयगुणावस्थानासंभवात् सौक्ष्म्येणानुवृत्तं भूतात्मानमिव पुष्पाद्यवयवगतपृथिव्यादिस्वरूपमिवेत्यर्थः ॥ २३ ॥

२३ ] ति० टी०—एष गजानीकवर्ती गजानीकमेव हन्ति नान्यमिति गजानीकस्था मन्यन्ते । एवमन्येऽपि मन्यन्ते मेत्यर्थः ॥ २३ ॥

२४ ] ति० टी०—इति एष हन्तीत्यादिप्रकारेण कुपिताः सर्वे ते राक्षसा रामस्य सदृशान्सदृशत्वेन प्रतीयमानान्राक्षसान्रामसादृश्यादन्योन्यं जघ्नुः । 'सदृशा रावणस्यैते रणे राक्षससत्तमाः' इति पूर्वार्धपाठे रावणेन देवासुरयुद्धादौ सात्मसाम्यार्थं मूलबलतया तेषां दृष्टप्रत्ययानामत्यूर्जितबलानामेव संगृहीतत्वात्तेषां रावणसादृश्यम् ॥ २४ ॥

रा० टी०—एष इति । एष रामः गजानीकादीन् हन्ति इति बुध्या कुपिताः राक्षसाः राघवस्य सादृश्यात्किञ्चित् धर्मेण सादृश्यं विज्ञाय रामस्य सदृशान् सदृशत्वेन प्रतीयमानान् राक्षसान् अन्योन्यं जघ्नुः श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०—एष हन्तीत्यादिश्लोकद्वयमेकान्वयम् । सदृशान् सादृश्येन प्रतीयमानान् । अन्योन्यं सादृश्यादेव हेतोर्जघ्नुश्चेत्यन्वयः ॥ २४ ॥ २५ ॥

२५ ] ति० टी०—राक्षसानां परस्परं रामसादृश्यप्रतीतौ कारणमाह—मोहिता इति ॥ २५ ॥

रा० टी०—नेति । महात्मना रामेण कर्त्रा परमास्त्रेण करणेन मोहिताः वैचित्यं प्राप्ताः ते राक्षसाः वाहिनीं सेनां दहन्तमपि रामं न ददृशिरे ॥ २६ ॥

गो० टी०—राक्षसानां रामादर्शनकारणमाह—न त इति । इदमुपलक्षणम् । सादृश्यदर्शनमपि मोहनास्त्रेणेति द्रष्टव्यम् । महात्मना महास्वभावेन ॥ २६ ॥

२६ ] ति० टी०—अतएव ते रामसहस्राणि पश्यन्ति । पुनश्च एकमेव पश्यन्ति ॥ २६ ॥

रा० टी०—मोहकार्यमेवाह—ते इति । राक्षसाः रामसहस्राणि पश्यन्ति पुनः कदाचित् एकमेव पश्यन्ति ॥ २७ ॥

गो० टी०—अदर्शनवत्सदृशदर्शनवद्यानेकत्वदर्शनं नास्त्रकृतं किं तु भीतिकृतमित्याह—ते त्विति । तु शब्दः पूर्वस्माद्विशेषपरः । मारीचेनाप्युक्तम्—अपि रामसहस्राणि भीतः पश्यामि रावणेति ॥ २७ ॥

२७ ] ति० टी०—भ्रमन्तीमाकर्णवेगतोऽनवस्थितां काञ्चनीं स्वर्णमयीं कार्मुकस्य कोटिं धनुष्कोटिं वेगवशादलातचक्रप्रतिमां ददृशुः, राघवं तु नेति संबन्धः ॥ २७ ॥

रा० टी०—भ्रमन्तीमिति । काञ्चनीं स्वर्णमयीं भ्रमन्तीं अलातचक्रप्रतिमां कार्मुकस्य कोटिमग्रभागमेव ददृशुः राघवं न ददृशुः ॥ २८ ॥

गो० टी०—भ्रमन्तीमिति । भ्रमन्तीं रामस्य मण्डलाकारगतिविशेषेष्विति केचित् । निरन्तरज्याकर्षणादिति वयम् । अलातचक्रप्रतिमां निर्ज्वालं काष्ठं निरन्तरभ्रमणेनान्तरालाग्रहणाच्चक्रत्वेन प्रतीयमानामिवेत्यर्थः ॥ २८ ॥

१ ते इति गो. पाठः । २ भरीति गो. पाठः ।

शरीरनाभिसत्त्वार्चिः शरीरं नेमिकार्मुकम्। ज्याघोषतलनिर्घोषं तेजोबुद्धिगुणप्रभम्॥ २८॥
दिव्यास्त्रगुणपर्यन्तं निघ्नन्तं युधि राक्षसान्। ददृशू रामचक्रं तत्कालचक्रमिव प्रजाः॥ २९॥
अनीकं दशसाहस्रं रथानां वातरंहसाम्। अष्टादश सहस्राणि कुञ्जराणां तरस्विनाम्॥ ३०॥
चतुर्दश सहस्राणि सारोहाणां च वाजिनाम्। पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम्॥ ३१॥
दिवसस्याष्टभागेन शरैरग्निशिखोपमैः। हतान्येकेन रामेण रक्षसां कामरूपिणाम्॥ ३२॥

२८] ति०टी०—लाघवातिशयान्मण्डलीकृतकार्मुकं राक्षसान्निघ्नन्तं रामं कालचक्रेणोपमिनोति—शरीरेति। शरीरं मध्यदेह एव नाभिश्चक्रस्येव मध्यं यस्य तत् सत्त्वं बलमेवार्चिर्ज्वाला यस्य तत् शरा एवारा मध्यकाष्ठानि यस्य तत् नेमिर्वलयाकारोऽवयवविशेषस्तद्रूपं कार्मुकं यस्य तत् तलं ज्याघातवारणं तेन तज्जो घोषो लक्ष्यते। ज्याघोषतलघोषावेव निर्घोषो ध्वनिर्यस्य तत्। तेजः प्रतापो बुद्धिर्ज्ञानं तद्रूपौ गुणावेव प्रभा यस्य तत्॥ २८॥

२९] ति० टी०—दिव्यास्त्रगुणो दिव्यास्त्रवैभवं तदेव पर्यन्तो धारणा यस्य तत्॥ २९॥

रा० टी०—मण्डलीकृतकार्मुकादिसहितरामं कालचक्रत्वेनोपमिन्वन्नाह—शरीरेति। शरीरं रामदेह एव नाभिर्यस्य स त्वं बलमेव अर्चिर्ज्वाला यस्य शरा एव अराणि मध्यकाष्ठानि यस्य कार्मुकमेव नेमिः प्रान्तभागो यस्य स ज्याघोषतलघोषावेव निर्घोषः स्वनो यस्य तत्र तलेन तत्स्वनो लक्ष्यते किं च ज्याघोषतलनिर्घोषौ स्तोऽस्मिन्निति अर्शआद्यजन्तम् तेजोबुद्धिरूपौ गुणावेव प्रभा यस्य दिव्यास्त्राणां गुणः ऐश्वर्यं पर्यन्तो धारा यस्य तत् राक्षसान् निघ्नन्तं निघ्नत् रामचक्रं कालचक्रमिव प्रजाः ददृशुः श्लोकद्वयमेकान्वयि॥ २९॥ ३०॥

गो० टी०—अथ तत्र समरसमये मण्डलीकृतकार्मुकं रामं सकलरिपुनिघातिसुदर्शनत्वेन रूपयति—शरीरेत्यादिना। ज्वालानेम्यरनाभ्यक्षपुरुषाङ्गं सुदर्शनमित्युक्तरीत्या चक्रं षडङ्गं भवति। तत्र कोदण्डचक्रमध्यस्थत्वाद्दृढत्वाच्च शरीरं नाभित्वेन दर्शयति—शरीरेति। नाभिः चक्रमध्योन्नतप्रदेशः, शरीरमेव नाभिर्यस्य तत्तथोक्तम् सत्त्वं बलमेवार्चिः ज्वाला यस्य तत् सत्त्वार्चिः। 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रिया' मित्यमरः। सत्त्वस्य परसन्तापहेतुत्वादर्चिष्ट्वेन निरूपणम्। शरा एवाराणि चक्रमध्यशलाकाः यस्य तच्छरारम्। सुदर्शनस्य सहस्रारत्वाच्छराणामरत्वरूपणेन युगपत्सहस्रशरसंधानं व्यज्यते। नेमिः आधारश्चक्रप्रान्तः, नेमिभूतं मण्डलीकृतकार्मुकं यस्य तत्कार्मुकनेमीत्यर्थः। एतेन मण्डलीकृतदशायामपि नाभिभूतरामशरीरपरिवेषेण धनुषो महोन्नतत्वमुच्यते। सुदर्शनस्य ज्वालामालया निरन्तरघोषवत्त्वाज्ज्यातलघोषं तद्घोषत्वेन रूपयति—ज्याघोषतलनिर्घोषमिति। तलं ज्याघातवारणं तेन तद्घोषो लक्ष्यते। ज्याघोषतलघोषावेव निर्घोषो यस्य तत्तथोक्तम्। तेजः पराक्रम एव बुद्धिः अक्षं यस्य तत्तेजोबुद्धि। यथा लुब्धकसैन्यमुलूकजिता जितमित्यत्र उलूकशब्दो लक्षणया कौशिकशब्दं लक्षयित्वा इन्द्रजितमाह, तथा बुद्धिशब्दो बुद्धिजनकाक्षलक्षणया अक्षप्रदेशमाह। गुणः शरीरकान्तिः, स एव प्रभा यस्य तत्तथोक्तम्। दिव्यास्त्राणां गुणः शक्तिः माहात्म्यं तदेव पर्यन्तो धारा यस्य तद्दिव्यास्त्रगुणपर्यन्तम्। निघ्नन्तं निघ्नत्। लिङ्गव्यत्यय आर्षः। किंच कालचक्रं ज्योतिश्चक्रमिव स्थितम्। विष्णुपुराणे, यत्र कालचक्रं प्रतिष्ठितमिति प्रयोगात्। रामचक्रम् उक्तरीत्या चक्रमिव स्थितं रामं ददृशुः। ननु यदि रामो मोहनास्त्रेण राक्षसान् संहरेत्तदेन्द्रजितोऽस्य को विशेषः। उच्यते। नात्र गान्धर्वास्त्रेण मोहनं कृतम्। अपि तु गान्धर्वप्रयोगे सति वेगातिशयेनाज्ञातस्वपरविभेदतया मोहिताः परस्परं जघ्नुः। यत्र रामो दृष्टः तत्क्षणे तत्र तस्यादर्शनाद्राममुद्दिश्य क्षिप्ताः शराः स्वकीयानेव घ्नन्ति। वेगातिशयादेव नानादिक्षु चक्षुःप्रसरे नानात्वेन दर्शनम्। अत एव, न रामं शीघ्रकारिणमित्युक्तिः। कार्मुककोटेरलातचक्रप्रतिमत्वं रामस्य चक्रत्वरूपणं च प्रयोगशैघ्र्यादेव संगच्छते। अत एव सुग्रीवादयो मायाबलत शङ्करन्निति परिहरिष्यति—एतदस्त्रबलमिति। न ते ददृशिर इत्यस्य श्लोकस्यैवं योजना। गान्धर्वास्त्रेण दहन्तं रामं मोहिताः सन्तो न ददृशिरे। मोहोऽत्र वेगादग्रहणम्। गान्धर्वास्त्रं दाहमात्रे हेतुरिति बोध्यम्॥ २९॥ ३०

३०–३२] ति० टी०—अनीकमिति। 'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी दशानीकिन्यक्षौहिणि—' इत्यमरोक्तप्रकारेण दशसंख्या पत्तिः, तत्त्रिगुणं सेनामुखम्, तत्त्रिगुणो गुल्मः, तत्त्रिगुणो गणः, गणत्रिगुणा वाहिनी, तत्त्रिगुणा पृतना, तत्त्रिगुणा चमूः, चमूत्रिगुणानीकिनी। एवं च दशोनत्रिशताधिकसप्तसहस्रसंख्या चमूरनीकम्। सहस्राण्येव साहस्रं दशसाहस्राण्यनीकान्यस्मिन्सन्तीति तत्। रथानां दशसाहस्राण्यनीकिनीत्यर्थः। एकोनत्रिंशल्लक्षाधिकसप्तकोटिसंख्यासंख्याता रथा इत्युक्तम्। 'अष्टादश सहस्राणि' इत्यत्राप्यनीकमिति विभक्तिविपरिणामेन योज्यम्। तेन विंशतिसहस्राधिकद्वादशलक्षोत्तरत्रयोदशकोटिसंख्या गजा इत्युक्तम्। चतुर्दशसहस्राण्यनीकानि षष्टिसहस्राधिकविंशतिलक्षोत्तरदशशतकोटिसंख्या वा जिन इत्यर्थः। शतसहस्रे द्वेऽनीकेऽष्टाशीतिलक्षोत्तरपञ्चचत्वारिंशत्कोट्यधिकशतकोटिसंख्याः पदातय इत्यर्थः॥ दिवसस्याष्टभागेन चतुर्दशीसन्ध्यन्त्यमुहूर्तद्वयेन॥ ३०॥ ३२॥

१ अष्टमे भाग इति गो. पाठः।

ते हताश्वा हतरथाः शान्ता विमथितध्वजाः । अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ॥ ३३ ॥
हतैर्गजपदात्यश्वैस्तद्बभूव रणाजिरम् । आक्रीडभूमिः क्रुद्धस्य रुद्रस्येव महात्मनः ॥ ३४ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । साधुसाध्विति रामस्य तत्कर्म समपूजयन् ॥ ३५ ॥
अब्रवीच्च तदा रामः सुग्रीवं प्रत्यनन्तरम् । विभीषणं च धर्मात्मा हनूमन्तं च वानरम् ॥ ३६ ॥
जाम्बवन्तं हरिश्रेष्ठं मैन्दं द्विविदमेव च । एतदस्त्रबलं भी[1]मं मम वा त्र्यम्बकस्य वा ॥ ३७ ॥
निहत्य तां राक्षसरा[2]जवाहि[3]नीं रामस्तदा शक्रसमो महात्मा ।
अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टैः ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये युद्धकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

---

रा० टी०—अनीकमिति । रथानां दशसाहस्रमनीकं कुञ्जराणामष्टादश सहस्राणि वाजिनां चतुर्दश सहस्राणि राक्षसानां द्वे शतसहस्रे एकेन रामेण दिवसस्याष्टभागेन हतानि श्लोकत्रयमेकान्वयि ॥ ३१–३३ ॥

गो० टी०—अनीकमित्यादि । एकैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः इत्युक्तरीत्या दशसंख्यासंख्याता पत्तिः । पत्तितस्त्रिगुणम् सेनामुखम् । सेनामुखतस्त्रिगुणो गुल्मः । गुल्मतस्त्रिगुणो गणः । गणतस्त्रिगुणा वाहिनी । तत्त्रिगुणा पृतना । पृतनातस्त्रिगुणा चमूः । एवं च दशोनत्रिशताधिकसप्तसहस्रसंख्यालक्षणा चमूरनीकशब्देनोच्यते सहस्राण्येव साहस्राणि दशसाहस्राण्यस्मिन्सन्तीति दशसाहस्रम् । रथानां दशसहस्राण्यनीकानीत्यर्थः । एकोनत्रिंशल्लक्षाधिकसप्तकोटिसंख्यासंख्याता रथा इत्युक्तं भवति । रथाङ्कं ७ कोटि २९ लक्षम् । अष्टादश सहस्राणीत्यनेन अनीकमित्येतद्विभक्तिविपरिणामेनानुषज्यते । अष्टादश सहस्राण्यनीकानीत्यर्थः । विंशतिसहस्राधिकद्वादशलक्षोत्तरत्रयोदशकोटिसंख्यासंख्यातास्तरस्विनः कुञ्जरा इत्यर्थः । गजाङ्कं १३ कोटि १२ लक्षं तु २०००० । चतुर्दश सहस्राणीत्यत्रापि अनीकमित्येतद्विपरिणाम्यानुषञ्जनीयम् । चतुर्दशसहस्राण्यनीकानीत्यर्थः । षष्टिसहस्राधिकविंशतिलक्षोत्तरदशकोटिसंख्यासंख्याताः सारोहा वाजिन इत्यर्थः । तुरङ्ग १० कोटि २० लक्षंतु ६०००० पूर्णे शतसहस्रे द्वे अनीकानीत्यर्थः । अशीतिलक्षोत्तरपञ्चचत्वारिंशत्कोटयधिकशतकोटिसंख्यासंख्याताः पदातयो राक्षसा इत्यर्थः । पदाति १४५ कोटि ८० लक्षम् । वातरंहसामित्यादिविशेषणमहिम्ना तद्भिन्ना रथगजतुरगपदातयोसंख्येया इति भावः । अत एवैवमनुसंदधते—नागानामयुतं तुरङ्गनियुतं सार्धं रथानां शतं पादातं शतकोटिकर्तनविधावेकः कबन्धो रणे । एवं कोटिकबन्धनर्तनविधौ किंचिद्ध्वनिः किंकिणीर्यामार्धं परमात्मनो रघुपतेः कोदण्डघण्टारव इति । कामरूपिणां रक्षसां संबन्धीनि । रथादिचतुरङ्गबलानि एकेन रामेण दिवसस्याष्टमे भागे पादोनघटिकाचतुष्टये निहतानीत्यन्वयः ॥ ३१–३४ ॥

३३ ] ति० टी०—हतशेषाः कतिपया लङ्कामभिपेतुः ३३॥

रा० टी०—ते इति । हताश्वत्वादिविशिष्टाः निशाचराः लंकामभिपेतुः ॥ ३४ ॥

३४–३५ ] ति० टी०—आक्रीडं क्रीडा तस्या भूमिः ३४। ३५

रा० टी०—हतैरिति । हतैर्गजादिभिरुपलक्षितं रणाजिरं क्रुद्धस्य रुद्रस्य आक्रीडभूमिः, क्रीडास्थानं बभूव ॥ ३५ ॥

गो० टी०—हतैरिति । हतगजाद्युपलक्षितं तन्महात्मनो रामस्य तद्रणाजिरं रुद्रस्य आक्रीडं क्रीडास्थानं श्मशानमिव बभूव । आर्षं नपुंसकत्वम् अचिरेण पुरी लङ्का श्मशानसदृशी भवेदिति पूर्वोक्तेः ॥ ३५ ॥ ३६ ॥

रा० टी०—तत इति । रामस्य कर्म देवादयः साधु साध्विति समपूजयन् ॥ ३६ ॥

३६ ] ति० टी०—प्रत्यनन्तरमासन्नम् ॥ ३६ ॥

३७ ] ति० टी०—मम वा त्र्यम्बकस्य वा । अनेन स्वस्य विष्णुत्वं सूचितम् ॥ ३७ ॥

रा० टी०—अब्रवीदिति । ममदिव्यमेव एतदस्त्र त्र्यम्बकस्य वा इव इति वचः सुग्रीवादीन् रामोऽब्रवीत् तत्र प्रत्यनन्तरं समीपस्थं श्लोकद्वयमेकान्वयि ॥ ३७ ॥ ३८ ॥

गो० टी०—अब्रवीच्चेत्यादिश्लोकद्वयमेकान्वयम् । प्रत्यनन्तरं समीपस्थम् । क्षणेनानेन रक्षःप्रतिक्षेपजनितां मायाविस्मयशङ्कां वारयति—एतदस्त्रबलमिति । अत्रान्ते इतिकरणं द्रष्टव्यम् । अस्त्रबलं अस्त्रप्रयोगशक्तिः । न त्वस्त्रमपि, गान्धर्वेण च गान्धर्वमिति रावणादेरपि तत्संभवकथनात् । त्र्यम्बकस्य वा संहारकाले अस्तीति शेषः ॥ ३७ ॥ ३८ ॥

३८ ] ति० टी०—संस्तूयते स्म ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

रा० टी०—निहत्येति । अस्त्रादिषु जितक्लमः अत एव राक्षसराजवाहिनीं निहत्य विद्यमानो रामः देवगणैस्संस्तूयते ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

१ मिवेति गो. पाठः । २ दिव्यामिति गो. रा. पाठः । ३ वाहिनीं स्विति गो. पाठः ।

# चतुर्नवतितमः सर्गः ।

राघवनिहतपतिपुत्रभ्रातृकाणां राक्षसीनां गृहे गृहे मृतानुद्दिश्य विलापः तद्धेतुभूतशूर्पणखाधिक्षेपः शूरतमखरदूषणकुम्भकर्णादीन्द्रजिदन्तनिशाचरवधनिदर्शननिर्णीतराघवरावणजयापजयतया भयस्यान्तमपश्यन्तीनां तासां विभीषणाद्युपदेशाननुष्ठानेन रावणनिन्दा च।

तानि नागसहस्राणि सारोहाणि च वाजिनाम् । रथानां त्वग्निवर्णानां सध्वजानां सहस्रशः ॥ १ ॥
राक्षसानां सहस्राणि गदापरिघयोधिनाम् । काञ्चनध्वजचित्राणां शूराणां कामरूपिणाम् ॥ २ ॥
निहतानि शरैर्दीप्तैस्तप्तकाञ्चनभूषणैः । रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३ ॥
दृष्ट्वा श्रुत्वा च संभ्रान्ता हतशेषा निशाचराः । राक्षस्यश्च समागम्य दीनाश्चिन्तापरिप्लुताः ॥ ४ ॥
विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः । राक्षस्यः सह संगम्य दुःखार्ताः पर्यदेवयन् ॥ ५ ॥
कथं शूर्पणखा वृद्धा कराला निर्गतोदरी । आससाद वने रामं कंदर्पसमरूपिणम् ॥ ६ ॥
सुकुमारं महासत्त्वं सर्वभूतहिते रतम् । तं दृष्ट्वा लोकवध्यैा सा हीनरूपा प्रकामिता ॥ ७ ॥
कथं सर्वगुणैर्हीना गुणवन्तं महौजसम् । सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥ ८ ॥
जनस्यास्याल्पभाग्यत्वाद्वलिनी श्वेतमूर्धजा । अकार्यमपहास्यं च सर्वलोकविगर्हितम् ॥ ९ ॥
राक्षसानां विनाशाय दूषणस्य खरस्य च । चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥ १० ॥

गो० टी०—निहत्येति । संस्तूयत इति वर्तमाननिर्देशेन स्तुतेरव्याप्यविच्छिन्नत्वमुच्यते ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्नवतितमः सर्गः ॥ ९४ ॥

१–३ ] ति० टी०—तानीति । सहस्रशः । सहस्राणीत्यर्थः ॥ १–३ ॥

४–५ ] ति० टी०—रावणेन प्रयुक्तानि युद्धार्थं प्रेषितानि रामेण हतानि दृष्ट्वा वृद्धास्तु श्रुत्वा हतशेषा बालवृद्धा निशाचरा राक्षस्यश्च समागम्य सङ्घशः संभूय दीनाश्चिन्तापरिप्लुताश्च । अभवन्निति शेषः ॥ ४ ॥ ५ ॥

रा० टी०—रावणः सकलसेनाविघातानन्तरकालिकंवृत्तान्तमाह—तानीत्यादिभिः । रावणेन प्रयुक्तानि नागसहस्रादीनि रामेण निहतानि दृष्ट्वा श्रुत्वा च सम्भ्रान्ताः हतशेषा निशाचराः समागम्य वियमाना राक्षस्यश्च चिन्तापरिप्लुता बभूवुरिति शेषः श्लोकचतुष्टयमेकान्वयि ॥ १–४ ॥

गो० टी०—अथ राक्षसीनां प्रलापः—तानि तानीत्यादि चतुःश्लोकी । वाजिनामित्येतद्गजानामप्युपलक्षणम् । सहस्रशः सहस्राणि । राक्षसीः राक्षसस्त्रियः, समागम्य चिन्तापरिप्लुताः । आसन्निति शेषः ॥ १–४ ॥

रा० टी०—विधवा इति । विधवादयो राक्षस्यः क्रोशन्त्यस्तत्यस्तह एककालावच्छेदेन संगम्य स्वकीयान् स्वकीयानालिङ्ग्य पर्यदेवयन् व्यलपन् ॥ ५ ॥

गो० टी०—विधवा इति । संगम्य संधीभूय । परस्परमालिङ्गिता इत्यर्थः ॥ ५ ॥

६ ] ति० टी०—परिदेवनप्रकारः—कथमिति । निर्णतोदरी निम्नोदरी ॥ ६ ॥

रा० टी०—तत्प्रकारमाह—कथमित्यादिभिः । निर्णतोदरी निम्नोदरविशिष्टा शूर्पणखा कंदर्पसमरूपिणं रामं कथमाससाद प्राप ॥ ६ ॥

गो० टी०—कथमित्यादिसार्धश्लोकमेकं वाक्यम् । कराला विकटा ॥ ६ ॥

७–८ ] ति० टी०—लोकवध्या लोकैर्वधार्हा । हीनरूपा रामसांनिध्यानर्हा कुत्सितरूपा । अथापि रामे प्रकामिता संजातप्रकामा ॥ ७ ॥ ८ ॥

रा० टी०—सुकुमारमिति । सुकुमारत्वादिविशिष्टं रामं दृष्ट्वा लोकवध्या सर्वजनैर्हननीया दुर्मुखी शूर्पणखा प्रकामिता रामे संजातकामा सती रामं कथं कामयामास इयेष श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०—तं दृष्ट्वेत्यादि सार्धश्लोकमेकं वाक्यम् । प्रकामिता सा कथं कामयामास ॥ ७ ॥ ८ ॥

९ ] ति० टी०—अस्य जनस्य राक्षसजनस्य । वलिनी जरावशाज्जातवलिः । श्रीत्वादित्वादिनिः ॥ ९ ॥

१० ] ति० टी०—अप्रतिरूपा विकृतरूपा । 'अप्रतिरूपस्य' इति पाठे तदसदृशाकारस्येत्यर्थः ॥ १० ॥

रा० टी०—जनस्येति । वलिनी अतिवृद्धात्वात्सञ्जातवलिः अत एव श्वेता मूर्धजाः केशाः यस्याः सा शूर्पणखा अस्य लंकानिवासिनो जनस्य अल्पभाग्यत्वाद्धेतोः अकार्यं कार्यविध्वंसकमपहास्यमयोग्यत्वेन लोकानां हसनीयमत एव स-

१ तानीति गो. पाठः । २ राक्षसीरिति गो. पाठः । ३ निम्नेति गो. पाठः ।

तन्निमित्तमिदं वैरं रावणेन कृतं महत् । वधाय सीता सा नीता दशग्रीवेण रक्षसा ॥ ११ ॥
न च सीतां दशग्रीवः प्राप्नोति जनकात्मजाम् । बद्धं बलवता वैरमक्षयं राघवेण च ॥ १२ ॥
वैदेहीं प्रार्थयानं तं विराधं प्रेक्ष्य राक्षसम् । हतमेकेन रामेण पर्याप्तं तन्निदर्शनम् ॥ १३ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ १४ ॥
खरश्च निहतः संख्ये दूषणः त्रिशिरास्तथा । शरैरादित्यसंकाशैः पर्याप्तं तन्निदर्शनम् ॥ १५ ॥
हतो योजनबाहुश्च कबन्धो रुधिराशनः । क्रोधान्नादं नदन्सोऽथ पर्याप्तं तन्निदर्शनम् ॥ १६ ॥
जघान बलिनं रामः सहस्रनयनात्मजम् । वालिनं मेघसंकाशं पर्याप्तं तन्निदर्शनम् ॥ १७ ॥
ऋष्यमूके वसंश्चैव दीनो भग्नमनोरथः । सुग्रीवः प्रापितो[3] राज्यं पर्याप्तं तन्निदर्शनम् ॥ १८ ॥
धर्मार्थसहितं वाक्यं सर्वेषां रक्षसां हितम् । युक्तं विभीषणेनोक्तं मोहात्तस्य न रोचते ॥ १९ ॥
विभीषणवचः कुर्याद्यदि स्म धनदानुजः । श्मशानभूता दुःखार्ता नेयं लङ्का भविष्यति ॥ २० ॥
कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम् । अतिकायं च दुर्मर्षं लक्ष्मणेन हतं तदा[4] ॥
प्रियं चेन्द्रजितं पुत्रं रावणो नावबुद्ध्यते ॥ २१ ॥

---

त्रैलोकविगर्हितं रामस्य धर्षणं राक्षसानां विनाशाय चकार श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०–जनस्येत्यादिसार्धश्लोकद्वयमेकं वाक्यम् । वलयोऽस्याः सन्तीति वलिनी पामादित्वान्नः आर्षो ङीप् । अप्रतिरूपा अननुरूपा । तन्निमित्तं प्रधर्षणनिमित्तात् । शूर्पणखयान्यथोक्तावपि तत्कामनादिकमङ्गकम्पनादिमुखात् सर्वैर्ज्ञातमिति ज्ञेयम् ॥ ९–१२ ॥

११ ] ति० टी०–तन्निमित्तं धर्षणनिमित्तम् । सा आनीतेति छेदः । वधाय । रक्षसामिति शेषः ॥ ११ ॥

रा० टी०–तदिति । सा शूर्पणखा निमित्तं यस्मिन् तन्महद्वैरं रावणेन कृतम् अत एव वधाय राक्षसानां हननाय दशग्रीवेण सीता आनीता च अन्यथा दशग्रीवस्सीतां न प्राप्नोति प्राप्नुयात् हरेदित्यर्थः सार्द्धश्लोक एकान्वयी ॥ ११ ॥

१२ ] ति० टी०–न प्राप्नोति न प्राप्स्यति च ॥ १२ ॥

रा० टी०–बद्धमिति । अक्षयं वैरं बलवता राघवेण बद्धं रावणेनेति शेषः एतेन रावणस्यापि विघातोऽवश्यं भविष्यतीति सूचितम् अर्द्धं पृथक् ॥ १२ ॥

१३–२० ] ति० टी०–प्रार्थयानं प्रार्थयमानम् । एकेनासहायेन रामेण ब्रह्मदत्तवरमपि हतं विराधं संप्रेक्ष्य स्थितस्य रावणस्य तदेकमेव पर्याप्तं निदर्शनम् । रामस्य सदेवासुरसकललोकातिशायित्वावगमाय पर्याप्तं निदर्शनमित्यर्थः॥१३–२०॥

रा० टी०–रामस्य बलवत्वमुपपादयन्त्य आहुः—वैदेहीमित्यादिभिः । वैदेहीं प्रार्थयानं विराधं प्रेक्ष्य एकेन बाणेन रामेण हतं प्रत्यासत्या विराध एव सामान्ये नपुंसकम् तत् निदर्शनं दृष्टान्तः पर्याप्तम् ॥ १३ ॥

गो० टी०–वैदेहीमिति । विराधं प्रेक्ष्य ज्ञात्वा, स्थितानामस्माकं तत् विराधहननं विरोधिनिरसनेऽथ पर्याप्तं पूर्णं निदर्शनम् ॥ १३ ॥

रा० टी०–चतुर्दशेति । रक्षसां चतुर्दश सहस्राणि निहतानि ॥ १४ ॥

रा० टी०–खर इति । खरप्रभृतिर्निहतः ॥ १५ ॥

गो० टी०–चतुर्दशेति । श्लोके पर्याप्तं तन्निदर्शनमित्यनुषज्यते । उत्तरश्लोकेनैकवाक्यत्वे शरपदद्वयवैयर्थ्यम् ॥१४–१५॥

रा० टी०–हत इति । क्रोधात् नादं नदन् योजनबाहुः कबन्धो हतः ॥ १६ ॥

रा० टी०–जघानेति । रामो वालिनं जघान ॥ १७ ॥

रा० टी०–ऋष्येति । दीनस्सुग्रीवः राज्यं प्रापितः तदपि निदर्शनं गमकं पर्याप्तम् ॥ १८ ॥

रा० टी०–धर्मार्थेति । विभीषणेनोक्तं वाक्यं मोहाद्धेतोः तस्य रावणस्य न रोचते अरोचत ॥ १९ ॥

रा० टी०–विभीषणेति । धनदानुजो रावणः यदि विभीषणवचः कुर्यात् तदा लंका श्मशानभूता न भवेत् ॥ २० ॥

गो० टी०–हत इति । अथ खरवधानन्तरम् । नादं शब्दम्, नदन् कुर्वन्, सः प्रसिद्धः कबन्धः ॥ १६–२० ॥

२१ ] ति० टी०–इन्द्रजितमपि हतं श्रुत्वा नावबुध्यते । पराक्रममिति शेषः ॥ २१ ॥

रा० टी०–कुंभकर्णमिति । राघवेण निहतं कुम्भकर्णप्रभृतिं श्रुत्वापि रावणो नैव बुध्यते रामं बलवत्वेन न जानीते सार्द्धश्लोक एकान्वयी ॥ २१ ॥

गो० टी०–कुम्भकर्णमित्यादि । नावबुध्यते रामप्रभावमिति शेषः ॥ २१ ॥

---

१ मेर्विति गो. पाठः । २ शैल इति गो. पाठः । ३ स्थापितो राज्य इति गो. पाठः । ३ पुनरिति गो. पाठः ।

मम पुत्रो मम भ्राता मम भर्ता रणे हतः । इत्येषँ श्रूयते शब्दो राक्षसीनां कुले कुले ॥ २२ ॥
रथाँश्वनागाश्च हतास्तत्र तत्र सहस्रशः । रणे रामेण शूरेण हताँश्चापि पदातयः ॥ २३ ॥
रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः । हन्ति नो रामरूपेण यदि वा स्वयमन्तकः ॥ २४ ॥
हतप्रवीरा रामेण निराशा जीविते वयम् । अपश्यन्त्यो भयस्यान्तमनाथा विलपामहे ॥ २५ ॥
रामहस्ताद्दशग्रीवः शूरो दत्तमहावरः । इदं भयं महाघोरं सँमुत्पन्नं न बुद्ध्यते ॥ २६ ॥
तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः । उपसृष्टं परित्रातुं शक्ता रामेण संयुगे ॥ २७ ॥
उत्पाताश्चापि दृश्यन्ते रावणस्य रणे रणे । कथयन्ति हि रामेण रावणस्य निबर्हणम् ॥ २८ ॥
पितामहेन प्रीतेन देवदानवराक्षसैः । रावणस्याभयं दत्तं मनुष्येभ्यो न याचितम् ॥ २९ ॥
तदिदं मानुषं मन्ये प्राप्तं निःसंशयं भयम् । जीवितान्तकरं घोरं रक्षसां रावणस्य च ॥ ३० ॥
पीड्यमानास्तु बलिना वरदानेन रक्षसा । दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् ॥ ३१ ॥
देवतानां हितार्थाय महात्मा वै पितामहः । उवाच देवतास्तुष्ट इदं सर्वा महद्वचः ॥ ३२ ॥

---

२२-२४ ] ति० टी०—कुले कुले गृहे गृहे ॥ २२-२४ ॥

रा० टी०—**ममेति** । मम पुत्रादिर्हतः इत्येष शब्दः राक्षसीनां कुले कुले प्रतिसमूहे श्रूयते ॥ २२ ॥

रा० टी०—**रथेति** । रामेण रथादयो हताः ॥ २३ ॥

रा० टी०—**रुद्र इति** । रुद्राद्यन्यतमः रामरूपेण नोऽस्मान् हन्ति ॥ २४ ॥

गो० टी०—**ममेति** । कुले कुले गृहे गृहे । इदमपि राक्षसीवाक्यमेव ॥ २२-२४ ॥

२५ ] ति० टी०—अपश्यन्तोऽपश्यन्त्यः ॥ २५ ॥

रा० टी०—**हतेति** । रामेण हताः प्रवीराः पत्यादयो यासाम् अत एव अनाथाः अत एव जीविते जीवने निराशा वयं स्त्रीजनाः भयस्यान्तमपश्यन्तस्सन्तः विलपामहे ॥ २५ ॥

गो० टी०—**हतप्रवीरेति** । वयमित्येतदपेक्षया अपश्यन्त इति पुल्लिङ्गम् । विलपामहे इत्यात्मनेपदमार्षम् ॥ २५॥२६ ॥

२६ ] ति० टी०—रामहस्तात्प्राप्तमिदं स्वस्य भयं शूरो ब्रह्मदत्तमहावर इति कृत्वा तद्गर्वान्न बुध्यते ॥ २६ ॥

रा० टी०—**रामेति** । दत्तो महावरः देवादिभ्यो मृत्युराहित्यरूपमीप्सितं यस्मै स दशग्रीवः रामहस्तात् समुत्पन्नं भयं न बुध्यते ॥ २६ ॥

२७ ] ति० टी०—उपसृष्टं हन्तुमारब्धम् ॥ २७ ॥

रा० टी०—ननु स्वाभयस्य प्राप्तत्वात् न तस्य भीतिरित्यत आह—**तमिति** । रामेण उपसृष्टं युद्धाय प्रवृत्तं तं रावणं त्रातुं देवादयो न शक्ताः ॥ २७ ॥

गो० टी०—**न देवा इति** । उपसृष्टम् उपद्रुतम् ॥२७॥

२८ ] ति० टी०—**कथयन्तीति** । तदुत्पातफलं माल्यवदादयो वृद्धा इति शेषः ॥ २८ ॥

रा० टी०—तत्र गमकमाह—**उत्पाता इति** । रावणस्य रणे रणे ये उत्पाता दृश्यन्ते ते रामेण रावणस्य निबर्हणं विनाशं कथयन्ति ॥ २८ ॥

गो० टी०—**उत्पाताश्चापीति** । कथयिष्यन्ति, इतः परमपि कानिचिन्निमित्तानि प्रादुर्भूय कथयिष्यन्तीत्यर्थः । वर्तमाने तात्पर्यमित्यप्याहुः ॥ २८ ॥

२९-३० ] ति० टी०—रामेणास्य वधे उपपत्तिं चाहुः—**पितामहेनेति** । देवदानवराक्षसैस्तेभ्यः ॥ २९ ॥ ३० ॥

रा० टी०—ननु पितामहदत्तवरस्य मिथ्यात्वं कथं भविष्यतीत्यत आह—**पितामहेनेति** । पितामहेन देवादिभिः देवादिभ्य एव अभयं दत्तं ननु रामात् कुतो न दत्तमित्यत आह मानुषेभ्योऽभयं न याचितम् ॥ २९ ॥

गो० टी०—**पितामहेनेति** । देवदानवराक्षसैः देवदानवराक्षसेभ्यः ॥ २९ ॥

रा० टी०—**तदिति** । तत् मनुष्यादभयप्राप्त्यभावाद्धेतोः रक्षसां रावणस्य च निस्संशयं जीवितान्तकरं मानुषमिदं भयं मन्ये ॥ ३० ॥

गो० टी०—**तदिदमिति** । मानुषं मानुषादागतम् । मन्ये मन्यामहे ॥ ३० ॥

३१-३२ ] ति० टी०—रावणेन पीड्यमानदेवैः प्रसारितस्य ब्रह्मणोऽनुग्रहादपि क्षयो राक्षसानामित्याहुः—**पीड्यमानास्त्विति** ॥ ३१ ॥ ३२ ॥

रा० टी०—रावणविनाशे हेत्वन्तरमाह—**पीड्यमाना** इत्यादिभिः । वरदानेन हेतुना बलिना रक्षसा पीड्यमानाः विबुधाः देवाः दीप्तैस्तपोभिरुपलक्षितं पितामहमपूजयन् ॥३१॥

रा० टी०—**देवतानामिति** । तुष्टः पितामहः देवतानां हितार्थाय सर्वा देवताः इदं वच उवाच ॥ ३२ ॥

गो० टी०—**पीड्यमानास्तु बलिनेति** । रक्षसा रावणेन । वरदानेन करणेन ॥ ३१ ॥ ३२ ॥

---

१ एवमिति गो. पाठः । २ रथाश्चाश्वाश्च नागाश्च हताः शतसहस्रश इति गो. रा. पाठः । ३ राक्षसाश्चेति गो. रा. पाठः । ४ उत्पन्नं नावबुध्यते इति गो. पाठः । ५ सर्वा इदं तुष्टो महद्वच इति गो. रा.पाठः ।

अद्यप्रभृति लोकांस्त्रीन्सर्वे दानवराक्षसाः । भयेन प्रभृता नित्यं विचरिष्यन्ति शाश्वतम् ॥ ३३ ॥
दैवतैस्तु समागम्य सर्वैश्चेन्द्रपुरोगमैः । वृषध्वजस्त्रिपुरहा महादेवः प्रतोषितैः ॥ ३४ ॥
प्रसन्नस्तु महादेवो देवानेतद्वचोऽब्रवीत् । उत्पत्स्यति हितार्थं वो नारी रक्षःक्षयावहा ॥ ३५ ॥
एषा देवैः प्रयुक्ता तु क्षुद्यथा दानवान्पुरा । भक्षयिष्यति नः सैर्वान्राक्षसघ्नी सरावणान् ॥ ३६ ॥
रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः । अयं निष्ठानको घोरः शोकेन समभिप्लुतः ॥ ३७ ॥
तं न पश्यामहे लोके यो नः शरणदो भवेत् । राघवेणोपसृष्टानां कालेनेव युगक्षये ॥ ३८ ॥
नास्ति नः शरणं किंचिद्भये महति तिष्ठताम् । दावाग्निवेष्टितानां हि करेणूनां यथा वने ॥ ३९ ॥
प्राप्तकालं कृतं तेन पौलस्त्येन महात्मना । यत एव भयं दृष्टं तमेव शरणं गतः ॥ ४० ॥

इतीव सर्वा रजनीचरस्त्रियः परस्परं संपरिरभ्य बाहुभिः ।
विषेदुरार्तातिभयाभिपीडिता विनेदुरुच्चैश्च तदा सुदारुणम् ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

३३ ] ति० टी०—दानवा राक्षसाश्च भयेन प्रभृता देवेभ्यो भयं बिभ्राणा एव विचरिष्यन्ति । देवाः स्वतः परतो वास्मान्पीडयिष्यन्तीति भययुक्ता एव भविष्यन्तीत्यर्थः ॥ ३३ ॥

रा० टी०—तदाकारमाह—अद्येति । अद्यप्रभृति अस्मात् कालादारभ्य दानवराक्षसाः भयेन प्रभृताः पोषिताः युक्ता इत्यर्थस्सन्तो विचरिष्यन्ति ॥ ३३ ॥

गो० टी०—अद्यप्रभृतीति । दानवराक्षसा इत्युक्तेर्मन्दोदरीसंबन्धेन दानवाश्च केचिद्राक्षसैः सह तिष्ठन्तीति ज्ञेयम् ॥ ३३–३५ ॥

३४–३५ ] ति० टी०—एवं ब्रह्मणः प्रसादात्सभयत्वमात्रं प्राप्तम्, संहाराधिकृतरुद्रप्रसादेन तु नाश एवास्माकमित्याहुः—दैवतैरिति ॥ ३४ ॥ ३५ ॥

रा० टी०—दैवतैरिति । तु अनन्तरं दैवतैस्समागम्य महादेवः प्रसादितः ॥ ३४ ॥

रा० टी०—प्रसन्न इति । वो हितार्थं रक्षःक्षयावहा नारी उत्पत्स्यति एतद्वचः प्रसन्नो महादेवः देवानब्रवीत् ॥ ३५ ॥

३६ ] ति० टी०—सैषा सीतैवेत्याहुः-एषेति । पुरा पूर्वकल्पे । देवैर्दानवनाशार्थं प्रयुक्ता क्षुद्यथा दानवान्हरति स्म, एवं देवैः प्रयुक्तैषा सीतापि सरावणान्रावणसहितानस्मान्भक्षयिष्यति ॥ ३६ ॥

रा० टी०—एषेति । पुरा पूर्वकल्पे देवैः प्रयुक्ता एषा क्षुत् दानवानभक्षयत तथा राक्षसघ्नी एषा सीता नो अस्मान् भक्षयिष्यति ॥ ३६ ॥

गो० टी०—एषेति । क्षुद्यथा दानवान् पुरेति । देवेभ्योऽमृतप्रदानादनन्तरमिति बोध्यम् । अस्मच्छब्दापेक्षया सरावणानित्युक्तिः ॥ ३६ ॥

३७–३९ ] ति० टी०—अपनीतेनानयेन । निष्ठानको नाशः शोकसहितः प्राप्तः ॥ ३७–३९ ॥

रा० टी०—रावणस्येति । दुर्विनीतस्य रावणस्य अपनीतेन दुर्नयेन शोकेन समभिप्लुतो युक्तः अयं निष्ठानको नाशः आप्नोदिति शेषः ॥ ३७ ॥

गो० टी०—रावणस्येति । निष्ठानकः नाश इत्याहुः ॥ ३७ ॥

रा० टी०—तमिति । कालेनेव राघवेण उपसृष्टानां प्राप्तभयानां नोऽस्माकं यश्शरणदो रक्षाप्रदो भवेत् तं न पश्यामहे ॥ ३८ ॥

रा० टी०—नास्तीति । दवाग्निवेष्टितानां करेणूनामिव महति भये तिष्ठतां नोऽस्माकं शरणं किंचिन्नास्ति ॥ ३९ ॥

गो० टी०—तमिति । पश्यामह इत्यात्मनेपदमार्षम् ॥ ३८ ॥ ३९

४०–४१ ] ति० टी०—प्राप्तकालं कालोचितम् । पौलस्त्येन विभीषणेन । यत एव यस्माद्रामादेव भयं दृष्टम् । स्वमन्त्रशक्तिवैभवेनेति शेषः ॥ ४० ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

रा० टी०—प्राप्तेति । यतो यस्मात् रामात् भयं दृष्टं तं राममेव शरणं गतः विभीषण इति शेषः अतः पौलस्त्येनविभीषणेन प्राप्तकालं यथोचितं कृतम् ॥ ४० ॥

रा० टी०—इतीवेति । अतिभयेनाभिपीडिताः चञ्चलचित्ताः अत एवार्ता दुःखिताः रजनीचरस्त्रियः परस्परं संपरिरभ्य इतीव अत्यन्तं सुदारुणं विलेपुः अत एव विनेदुरुच्चैश्शब्दं चक्रुः आर्तातीत्यत्र सन्धिरत एव ज्ञापकात् आर्तं प्राप्तं यदतिभयं तेन अभिपीडिता इत्यर्थो वा ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पंचनवतितमः सर्गः ॥ ९५ ॥

गो० टी०—प्राप्तकालमिति । प्राप्तकालम् उचितम् । पौलस्त्येन विभीषणेन । इतः परं तस्यैव पौलस्त्यकुलप्रतिष्ठापकत्वात्तच्छब्दप्रयोगः । अत्र पितामहादिवरप्रदानवृत्तान्तो

---

१ प्रावृता इति गो. पाठः । २ प्रसादित इति गो. रा. पाठः । ३ सीतेति गो. रा. पाठः । ४ कश्चिदिति गो. रा. पाठः ।

## पञ्चनवतितमः सर्गः ।

रावणो राक्षसीनां प्रतिसद्मार्तरवमाकर्ण्य रुषा दशनैरोष्ठं संदश्य महोदरमहापार्श्वविरूपाक्षाख्यशूरनिशाचरान्स्वबलैः सह द्रुतं निर्यातेत्यदिश्य स्वविक्रमकत्थनपुरस्सरमद्य पतिपुत्रादिवियुक्तानां राघवपातनेनाश्रु प्रमार्जिष्यामीति वदन्यदा निष्क्रान्तस्तदालुपदमशकुनप्रादुर्भावमल्पेतरमपश्यत् ।

आर्तानां राक्षसीनां तु लङ्कायां वै कुले कुले । रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ १ ॥
स तु दीर्घं विनिःश्वस्य मुहूर्तं ध्यानमास्थितः । बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ २ ॥
संदश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः । राक्षसैरपि दुर्दर्शः कालाग्निरिव मूर्तिमान् ॥ ३ ॥
उवाच च समीपस्थान्राक्षसान्राक्षसेश्वरः । क्रोधाव्यक्तकथस्तत्र निर्दहन्निव चक्षुषा ॥ ४ ॥
महोदरं महापार्श्वं विरूपाक्षं च राक्षसम् । शीघ्रं वदत सैन्यानि निर्यातेति ममाज्ञया ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः । चोदयामासुरव्यग्रान्राक्षसांस्तान्नृपाज्ञया ॥ ६ ॥
ते तु सर्वे तथेत्युक्त्वा राक्षसा भीमदर्शनाः । कृतस्वस्त्ययनाः सर्वे ते रणाभिमुखा ययुः ॥ ७ ॥
प्रतिपूज्य यथान्यायं रावणं ते महारथाः । तस्थुः प्राञ्जलयः सर्वे भर्तुर्विजयकाङ्क्षिणः ॥ ८ ॥
ततोवाच प्रहस्यैतान्रावणः क्रोधमूर्च्छितः । महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् ॥ ९ ॥
अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसंनिभैः । राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ॥ १० ॥
खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा । करिष्यामि प्रतीकारमद्य शत्रुवधादहम् ॥ ११ ॥

---

राक्षसीभिर्मन्दोदरीसकाशाच्छ्रुत इति ज्ञेयम् । सा च ज्ञानवृद्धेति वक्ष्यते ॥ ४० ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

१-३ ] ति० टी०—आर्तानामिति । कुलेकुले गृहे गृहे ॥ १-३ ॥

४-५ ] ति० टी०—क्रोधेनाव्यक्ता कथा कथनं यस्य सः ॥ ४ ॥ ५ ॥

रा० टी०—राक्षसीविलापानन्तरकालिकं रावणवृत्तान्तमाह—आर्तानामिति । रावणः राक्षसीनां परिदेवतमुच्चारितं करुणं शब्दं कुले कुले शुश्राव ॥ १ ॥

रा० टी०—स इति । रावणः दीर्घं विनिःश्वस्य मुहूर्तं ध्यानं विचारमास्थितो बभूव ॥ २ ॥

गो० टी०—अथ रावणनिर्याणम्—आर्तानामित्यादि । परिदेवितं परिदेवितरूपं शब्दम् ॥ १ ॥ २ ॥

रा० टी०—संदश्येति । क्रोधेन संरक्तानि लोचनानि यस्य सः क्रोधेन अव्यक्ता कथा कथनं यस्य स रावणः दशनैरोष्ठं संदश्य चक्षुषा निर्दहन्निव समीपस्थान् राक्षसानुवाच श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

रा० टी०—तदाकारमाह—महोदरमिति । ममाज्ञया सैन्यानि ध्रुवं निर्यापयत निस्सारयत इति महोदरादीन् शीघ्रं वदत यदि तु सैन्यशब्देन रिपुसेना गृह्येत तदा नान्तर्भावितणिचूकल्पना ॥ ५ ॥

गो० टी०—संदश्येत्यादिश्लोकत्रयमेकान्वयम् । मूर्छितः अभिवृद्धः, कालाग्निरिव स्थितः । भयाव्यक्तकथः भयादव्यक्तवचनः । ममाज्ञया वदतेत्युवाचेत्यन्वयः । इमौ महोदरमहापार्श्वौ सचिवौ । पूर्वहतौ तु मत्तप्रमत्तापरपर्यायौ रावणभ्रातरौ ॥ ३-८ ॥

६-८ ] ति० टी०—अव्यग्रान्रावणप्रोत्साहनेन त्यक्तभयान् ॥ ६-८ ॥

रा० टी०—तस्येति । तस्य रावणस्य वचनं श्रुत्वा भयार्दिताः राक्षसाः राक्षसान् महोदरादीन् चोदयामासुः ॥ ६ ॥

रा० टी०—ते इति । ते श्रुतराजाज्ञाः अत एव कृतस्वस्त्ययनाः सर्वे रणाय सर्वेषां रिपूणामीरणाय प्रकम्पनाय अभिमुखाः प्रकाशितवदनाः सर्वे राक्षसाः ययुः रावणसमीपं प्रापुः ॥ ७ ॥

रा० टी०—प्रतीति । महारथाः महोदरप्रभृतयः रावणं यथान्यायं प्रतिपूज्य प्राञ्जलयः सन्तः तस्थुः ॥ ८ ॥

९-११ ] ति० टी०—ततोवाच तत उवाच । प्रहस्य । क्रोधजोऽत्र प्रहासः ॥ ९-११ ॥

रा० टी०—तत इति । रावणः महोदरमहापार्श्वौ विरूपाक्षं चैतान् प्रहस्योवाच ततो वाचेत्यत्र गुण आर्षः ॥ ९ ॥

रा० टी०—तदाकारणमाह—अद्येत्यादिभिः । बाणैर्यमसादनं नेष्यामि ॥ १० ॥

---

१ मूर्छित इति गो. रा. पाठः । २ भयेति गो. पाठः । ३ महोदरमहापार्श्वाविति गो. पाठः । ४ घोरेति गो. रा. पाठः । ५ रणायाभिमुखा इति गो. पाठः । ६ निशाचरा इति गो. पाठः । ७ भयेति गो. पाठः ।

नैवान्तरिक्षं न दिशो न चैव द्यौर्नापि सागराः । प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः ॥ १२ ॥
अद्य वानरमुख्यानां तानि यूथानि भागशः । धनुषा शरजालेन वधिष्यामि पतत्रिणा ॥ १३ ॥
अद्य वानरसैन्यानि रथेन पवनौजसा । धनुःसमुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १४ ॥
व्याकोशपद्मवक्त्राणि पद्मकेसरवर्चसाम् । अद्य यूथतटाकानि गजवत्प्रमथाम्यहम् ॥ १५ ॥
सशरैरद्य वदनैः संख्ये वानरयूथपाः । मण्डयिष्यन्ति वसुधां सनालैरिव पङ्कजैः ॥ १६ ॥
अद्य यूथप्रचण्डानां हरीणां द्रुमयोधिनाम् । मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतं शतम् ॥ १७ ॥
हतो भ्राता च येषां वै येषां च तनयो हतः । वधेनाद्य रिपोस्तेषां करोम्यश्रुप्रमार्जनम् ॥ १८ ॥
अद्य मद्बाणनिर्भिन्नैः प्रस्तीर्णैर्गतचेतनैः । करोमि वानरैर्युद्धे यत्नावेक्ष्यतलां महीम् ॥ १९ ॥
अद्य काकाश्च गृध्राश्च ये च मांसाशिनोऽपरे । सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शरार्पितैः ॥ २० ॥
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः । अनुप्रयान्तु मां युद्धे येऽत्र शिष्टा निशाचराः ॥ २१ ॥
तस्य तद्वचनं श्रुत्वा महापार्श्वोऽब्रवीद्वचः । बलाध्यक्षान्स्थितांस्तत्र बलं संत्वर्यतामिति ॥ २२ ॥
बलाध्यक्षास्तु संयुक्ता राक्षसांस्तान्गृहे गृहे । चोदयन्तः परिययुर्लङ्कां लघुपराक्रमाः ॥ २३ ॥

गो० टी०—अथेति । प्रहस्येति । शत्रुषु तूष्णीकारात् ॥ ९ ॥ १० ॥

रा० टी०—खरस्येति । शत्रुवधात् खरादेः प्रत्युपकारं करिष्यामि ॥ ११ ॥

गो० टी०—खरस्येत्यादिषु । वधस्येति शेषः ॥ ११–१४ ॥

१२ ] ति० टी०—प्रकाशत्वं प्रकटत्वम् ॥ १२ ॥

रा० टी०—नेति । मद्बाणजलदैरावृताः अन्तरिक्षादयः काशत्वं न गमिष्यन्ति ॥ १२ ॥

१३ ] ति० टी०—पतत्रिणा प्रशस्तपक्षवता ॥ १३ ॥

रा० टी०—अद्येति । वानरमुख्यानां यूथानि शरजालेन वधिष्यामि ॥ १३ ॥

१४ ] ति० टी०—धनूरूपात्समुद्रात् ॥ १४ ॥

रा० टी०—अद्येति । धनुस्समुद्रात् उद्भूतैः शरोर्मिभिः रथेनोपलक्षितोऽहं वानरसैन्यानि मथिष्यामि ॥ १४ ॥

१५ ] ति० टी०—व्याकोशपद्मवक्त्राणि वक्त्ररूपविकसितपद्मानि । पद्मकेसरवर्चसाम् । वानराणामिति शेषः । यूथरूपाणि तटाकानि प्रमथामि प्रमथिष्यामि ॥ १५ ॥

रा० टी०—व्याकोशेति । व्याकोशपद्मानि विकसितकमलानीव वक्त्राणि येषु तानि पद्मकेसरवद्वर्चो येषां तेषां वानराणां यूथतटाकानि अहं गजवत्प्रमथामि ॥ १५ ॥

गो० टी०—आकोशेति । आकोशपद्मवक्त्राणि ईषद्विकसितपद्मभूतवक्त्राणि । पद्मकेसरवर्चसाम् वानराणामिति शेषः । प्रमथामि प्रमथ्नामि आभाव आर्षः ॥ १५–१८ ॥

१६–१८ ] ति० टी०—सशरैः शरसहितैर्वदनैः स्वीयैः । सशरत्वात्सनालैः पङ्कजैरिव ॥ १६–१८ ॥

रा० टी०—सेति । सनालैः पङ्कजैरिव सशरैः शरसहितैर्वदनैर्वानरयूथपाः वसुधां मण्डयिष्यन्ति ॥ १६ ॥

रा० टी०—अद्येति । मुक्तेन एकेषुणा वानराणां शतं शतं भेत्स्यामि ॥ १७ ॥

रा० टी०—हत इति । येषां भ्राता हतः येषां च तनया हताः तेषामश्रुप्रमार्जनं तेषां रिपोर्वधेन करोमि ॥ १८ ॥

१९–२३ ] ति० टी०—यत्नेनावेक्ष्यमवेक्षितुं योग्यं तलं यस्यास्तथाभूताम् ॥ १९–२३ ॥

रा० टी०—अद्येति । मद्बाणेन निर्भिन्नैः अत एव गतचेतनैः अत एव प्रकीर्णैरितस्ततः प्रक्षिप्तैर्वानरैर्महीं यत्नेन अतिप्रयत्नेन अवेक्ष्यं द्रष्टुं योग्यं तलं यस्याः तां करोमि ॥ १९ ॥

रा० टी०—अद्येति । शरैरर्पितैश्शत्रुमांसैः काकादयो ये मांसाशिनः तान् सर्वान् तर्पयिष्यामि ॥ २० ॥

गो० टी०—अद्येति । गतचेतनैः गतप्राणैः । यत्नावेक्ष्यतलामिति । नैरन्ध्येण भूमौ वानरान् पातयिष्यामीत्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—कल्प्यतामिति । मे रथः कल्प्यताम् अश्वादिभिर्योज्यताम् धनुरानीयतां च शिष्टा निशाचराः मामनुप्रयान्तु च ॥ २१ ॥

रा० टी०—तस्येति । तस्य रावणस्य वचनं श्रुत्वा महापार्श्वः बलं सैन्यं संत्वर्यतामिति वचः स्थितान् बलाध्यक्षान् अब्रवीत् ॥ २२ ॥

गो० टी०—कल्प्यतामिति । कल्प्यताम् आकल्प्यताम् । अलंक्रियतामित्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०—बलेति । संयुक्ता नियोजिताः बलाध्यक्षाः गृहे गृहे राक्षसान् चोदयन्तः सन्तः लङ्कां परिययुः तत्र विचरुः ॥ २३ ॥

गो० टी०—बलाध्यक्षास्त्विति । संरब्धा इति । पुनः पुनराह्वानेप्यनागमनात् कुपिता इत्यर्थः । परिययुः प्रतिरथ्यं ययुरित्यर्थः ॥ २३ ॥

१ नद्य इति गो. पाठः । २ विधमिष्यामि पत्रिणेति गो. पाठः । ३ आकोशेति गो. पाठः । ४ हतो भर्ता हतो भ्राता यासां च तनया हता इति गो. पाठः । ५ तासामिति गो. पाठः । ६ अद्येति गो. पाठः । ७ प्रकीर्णैरिति गो. रा. पाठः । ८ गोमायवो गृध्रा इति गो. रा. पाठः । ९ अर्पितैरिति गो. रा. पाठः । १० सर्वे इति गो. रा. पाठः । ११ अद्येति गो. चेति रा. पाठः । १२ संरब्धा इति गो. पाठः । १३ लङ्कायां तु महाबला इति गो. पाठः ।

ततो मुहूर्तान्निष्पेतू राक्षसा भीमदर्शनाः । नदन्तो भीमवदना नानाप्रहरणैर्भुजैः ॥ २४ ॥
असिभिः पट्टिशैः शूलैर्गदाभिर्मुसलैर्हलैः[1] । शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥ २५ ॥
यष्टिभिर्विविधैश्चक्रैर्निशितैश्च परश्वधैः । भिन्दिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः ॥ २६ ॥
अथानयन्[2]बलाध्यक्षाश्चत्वारो रावणाज्ञया । [3]रथानां नियुतं साग्रं नागानां नियुतत्रयम् ॥ २७ ॥
अश्वानां षष्टिकोट्यस्तु खरोष्ट्राणां तथैव च । पदातयस्त्वसंख्याता जग्मुस्ते राजशासनात् ॥ २८ ॥
बलाध्यक्षाश्च संस्थाप्य राज्ञः सेनां पुरस्थिताम् । एतस्मिन्नन्तरे सूतः स्थापयामास तं रथम् ॥ २९ ॥
दिव्यास्त्रवरसंपन्नं नानालंकारभूषितम् । नानायुधसमाकीर्णं किङ्किणीजालसंयुतम् ॥ ३० ॥
नानारत्नपरिक्षिप्तं रत्नस्तम्भैर्विराजितम् । जाम्बूनदमयैश्चैव सहस्रकलशैर्वृतम् ॥ ३१ ॥
तं दृष्ट्वा राक्षसाः सर्वे विस्मयं परमं गताः । तं दृष्ट्वा सहसोत्थाय रावणो राक्षसेश्वरः ॥ ३२ ॥
कोटिसूर्यप्रतीकाशं ज्वलन्तमिव पावकम् । द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथम् ॥
आरुरोह तदा [4]भीमं दीप्यमानं स्वतेजसा । ॥ ३३ ॥
ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः । रावणः सत्त्वगाम्भीर्याद्दारयन्निव मेदिनीम् ॥ ३४ ॥
ततश्चासीन्महानादस्तूर्याणां च ततस्ततः । मृदङ्गैः पटहैः शङ्खैः कलहैः सह रक्षसाम् ॥ ३५ ॥
आगतो रक्षसां राजा छत्रचामरसंयुतः । सीतापहारी दुर्वृत्तो ब्रह्मघ्नो देवकण्टकः ॥
योद्धुं रघुवरेणेति शुश्रुवे कलहध्वनिः । ॥ ३६ ॥
तेन नादेन महता पृथिवी समकम्पत । तं शब्दं सहसा श्रुत्वा वानरा दुद्रुवुर्भयात् ॥ ३७ ॥
रावणस्तु महाबाहुः सचिवैः परिवारितः । आजगाम महातेजा जयाय विजयं प्रति ॥ ३८ ॥
रावणेनाभ्यनुज्ञातौ महापार्श्वमहोदरौ । विरूपाक्षश्च दुर्धर्षो रथानारुरुहुस्तदा ॥ ३९ ॥
ते तु हृष्टाभि[6]र्नर्दन्तो भिन्दन्त इव मेदिनीम् । नादं घोरं विमुञ्चन्तो निर्ययुर्जयकाङ्क्षिणः ॥ ४० ॥
ततो युद्धाय तेजस्वी रक्षोगणबलैर्वृतः । निर्ययावुद्यतधनुः कालान्तकयमोपमः ॥ ४१ ॥
ततः [7]प्रजविताश्वेन रथेन स महारथः । द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ ४२ ॥

२४ ] ति० टी०—भुजैरुपलक्षिताः ॥ २४ ॥

२५–३२ ] ति० टी०—हलैरायुधविशेषैः ॥ २५–३२ ॥

रा० टी०—तत इति । अस्यादिभिः नानाप्रहरणैरुपलक्षिताः नदन्तो राक्षसाः मुहूर्तात् निष्पेतुः श्लोकत्रयमेकान्वयि ॥ २४–२६ ॥

गो० टी०—तत इत्यादिश्लोकत्रयमेकान्वयम् । हुलैः द्विफलपत्राग्रायुधविशेषैः । हुलं द्विफलपत्राग्रमिति वैजयन्ती । भुजैरित्याद्युपलक्षणे तृतीया ॥ २४–२६ ॥

रा० टी०—अथेति । बलाध्यक्षाः रावणाज्ञया सूतेन समायुक्तं युक्ता अष्टौ तुरगा यस्मिन् तं रथमानयन् अत एव भीमो भयङ्करः स्वतेजसा दीप्यमानो रावणः आरुरोह सार्द्धश्लोक एकान्वयी ॥ २७ ॥

गो० टी०—अथेति । अथानयद्बलाध्यक्षः सर्वतो रावणाज्ञया । द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथमिति पाठः ॥ २७ ॥

३३ ] ति० टी०—अमायां सूर्योदय इवं रथारोहणम् ॥ ३३ ॥

गो० टी०—आरुरोहेत्यर्धमेकं वाक्यम् । भीमः रावणः ॥ २८ ॥

३४-४१] ति० टी०—सत्त्वगाम्भीर्याद्बलातिशयात् ३४-४१

रा० टी०—तत इति । बहुभिः राक्षसैर्वृतो रावणः सत्वगाम्भीर्यात् बलाधिक्याद्धेतोः मेदिनीं दारयन्निव ततो लङ्कायाः प्रयातोऽभवदिति शेषः ॥ २८ ॥

रा० टी०—रावणेनेति । महापार्श्वादयः रथानारुरुहुः २९

रा० टी०—ते इति । घोरं नादं विमुञ्चन्तः मेदिनीं भिन्दन्त इव हृष्टास्ते महापार्श्वादयो निर्ययुः ॥ ३० ॥

रा० टी०—तत इति । रक्षोगणबलैर्वृतो रावणः युद्धाय निर्ययौ ॥ ३१ ॥

गो० टी०—ततः प्रयात इति । सत्त्वगाम्भीर्यात् बलातिशयात् ॥ २९–३२ ॥

४२ ] ति० टी०—प्रजविताश्वेन प्रकर्षेण संजातवेगा अश्वा यस्य तेन ॥ ४२ ॥

१ हुलैरिति गो. पाठः । २ आनयद्बलाध्यक्षः सत्वर इति गो. पाठः । ३ इत आरभ्य पद्यषट्कं गो. रा. पुस्तकयोर्नास्ति । ४ भीम इति गो. रा. पाठः । ५ इतः सार्धश्लोकचतुष्टयं गो. रा. पुस्तकयोर्नास्ति । ६ वीति गो. रा. पाठः । ७ जवनेति गो. पाठः ।

ततो नष्टप्रभः सूर्यो दिशश्च तिमिरावृताः । द्विजाश्च नेदुर्घोराश्च संचचाल च मेदिनी ॥ ४३ ॥
ववर्ष रुधिरं देवश्चस्खलुश्च तुरंगमाः । ध्वजाग्रे न्यपतद्गृध्रो विनेदुश्चाशिवाः शिवाः॥ ४४ ॥
नयनं चास्फुरद्वामं वामो बाहुरकम्पत । विवर्णवदनश्चासीत्किंचिदभ्रश्यत स्वनः ॥ ४५ ॥
ततो निष्पततो युद्धे दशग्रीवस्य रक्षसः । रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे ॥ ४६ ॥
अन्तरिक्षात्पपातोल्का निर्घातसमनिःस्वना । विनेदुरशिवा गृध्रा वायसैरभिमिश्रिताः ॥ ४७ ॥
एतानचिन्तयन्घोरानुत्पातान्समवस्थितान् । निर्ययौ रावणो मोहाद्वधार्थं कालचोदितः ॥ ४८ ॥
तेषां तु रथघोषेण राक्षसानां महात्मनाम् । वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ॥
[ तेषां तु तुमुलं युद्धं बभूव कपिरक्षसाम् ]
अन्योन्यमाह्वयानानां क्रुद्धानां जयमिच्छताम् । ॥ ४९ ॥
ततः क्रुद्धो दशग्रीवः शरैः काञ्चनभूषणैः । वानराणामनीकेषु चकार कदनं महत् ॥ ५० ॥
निकृत्तशिरसः केचिद्रावणेन वलीमुखाः । केचिद्विच्छिन्नहृदयाः केचिच्छ्रोत्रविवर्जिताः ॥५१॥
निरुच्छ्वासा हताः केचित्केचित्पार्श्वेषु दारिताः । केचिद्विभिन्नशिरसः केचिच्चक्षुर्विनाकृताः ॥ ५२ ॥
दशाननः क्रोधविवृत्तनेत्रो यतो यतोऽभ्येति रथेन संख्ये ।
ततस्ततस्तस्य शरप्रवेगं सोढुं न शेकुर्हरियूथपास्ते ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

रा० टी०—तत इति । प्रजविताः अतिवेगवन्तोऽश्वा यस्मिन् तेन रथोपलक्षितस्स रावणो यत्र रामलक्ष्मणौ तेन द्वारेण निर्ययौ ॥ ३२ ॥

गो० टी०—तत इति । द्वारेणेति । उत्तरद्वारेणेत्यर्थः ३३

४३-४५ ] ति० टी०—अथ रावणस्य दुर्निमित्तान्याह—नष्टप्रभ इत्यादि ॥ ४३-४५ ॥

रा० टी०—तद्गमने अशुभसूचकानि निमित्तान्याह—तत इत्यादिभिः । सूर्यो नष्टप्रभोऽभवत् अत एव दिशः तिमिरावृता अभवन् घोराः द्विजाः पक्षिणो विनेदुः ॥ ३३ ॥

रा० टी०—ववर्षेति । देवः मेघाभिमानिदेवता रुधिरं ववर्ष तुरङ्गमाः चस्खलुश्च ध्वजाग्रे गृध्रो न्यपतत् शिवा विनेदुश्च ॥ ३४ ॥

रा० टी०—नयनमिति । वामं नयनमस्फुरत् वामो बाहुरकम्पत वदनं विवर्णमासीच्च स्वनः किञ्चित् अभ्रश्यत च ३५

गो० टी०—ततो नष्टप्रभ इत्यादिश्लोकचतुष्टयमेकान्वयम् । रूपाणि दुर्निमित्तरूपाणि । ततः अनन्तरं, ततः उत्तरद्वारात् । निष्पततः निष्क्रमतः । सूर्यनष्टप्रभत्वादीनि रूपाणि जज्ञिर इति संबन्धः ॥ ३४-४१ ॥

४६-४८ ] ति० टी०—एतानि रूपाणि । निधनसूचकानीत्यर्थः ॥ ४६-४८ ॥

रा० टी०—तत इति । दशग्रीवस्य रणे निष्पततस्ततः निधनशंसीनि रावणविनाशसूचकानि एतानि वक्ष्यमाणानि रूपाणि निमित्तानि जज्ञिरे ॥ ३६ ॥

रा० टी०—निमित्तान्येवाह—अन्तरिक्षादिति । निर्घातसमो निःस्वनो यस्याः सा उल्का अन्तरिक्षात् पपात वायसैरभिमिश्रिताः अशिवाः गृध्राः विनेदुः ॥ ३७ ॥

रा० टी०—एतानिति । रावणः मोहात् एतान् उत्पातान् अचिन्तयन् सन् निर्ययौ ॥ ३८ ॥

४९-५३ ] ति० टी०—आह्वयानानां स्पर्धयाह्वयमानानाम् ॥ ४९-५३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

रा० टी०—तेषामिति । राक्षसानां रथघोषेण रथघोषश्रवणेन सह वानराणामपि चमूः युद्धाय एव अभ्यवर्तत ॥ ३९॥

रा० टी०—तेषामिति । अन्योन्यमाह्वयानानामाह्वयमानानाम् किंच अन्योन्यमाह्वेन आह्वानेन यानं गमनं येषां तेषां कपिरक्षसां तुमुलं युद्धं बभूव ॥ ४० ॥

गो० टी०—तेषां त्विति । आह्वयानानाम् आह्वयमानानाम्, स्पर्धया आह्वयताम् । आगमशासनस्यानित्यत्वान्मुगागमाभावः ॥ ४२ ॥ ४३ ॥

रा० टी०—तत इति । दशग्रीवः वानराणामनीकेषु महत्कदनं चकार ॥ ४१ ॥

रा० टी०—कदनान्येवाह—निकृत्तेति । वलीमुखानि

---

१ द्विवेति गो. पाठः । २ तुरगाः पथीति गो.पाठः । ३ अशिवमिति गो.रा. पाठः । ४ सव्य इति गो.पाठः । ५ विवर्णं वदनं चासीदिति गो. रा. पाठः । ६ अनुनादिता इति गो. पाठः । ७ उपेति गो. पाठः । ८ अर्थाति गो. रा. पाठः । ९ इदमर्धमधिकं गो.रा.पाठे । १० विवर्जिता इति गो. पाठः ।

# षण्णवतितमः सर्गः ।

दशग्रीवः शरसंपातं सोढुमक्षमान्कपिवीरान्विद्राव्य राघवाभिमुखो यातः ततः सूर्यपुत्रं पलायितांस्तान्निशाम्य वानरानीकं समाश्वास्य रक्षःसङ्घं चूर्णयन्तं विरूपाक्षो रुरुधे तयोश्च भयानके मृधे सुग्रीवेण प्रसह्य विरूपाक्षः पञ्चत्वं गमितः ।

तथा तैः कृत्तगात्रैस्तु दशग्रीवेण मार्गणैः । बभूव वसुधा तत्र प्रकीर्णा हरिभिस्तदा ॥ १ ॥
रावणस्याप्रसह्यं तं शरसंपातमेकतः । न शेकुः सहितुं दीप्तं पतङ्गा ज्वलनं यथा ॥ २ ॥
तेऽर्दिता निशितैर्बाणैः क्रोशन्तो विप्रदुद्रुवुः । पावकार्चिःसमाविष्टा दह्यमाना यथा गजाः ॥ ३ ॥
प्लवंगानामनीकानि महाभ्राणीव मारुतः । संययौ समरे तस्मिन्विधमन्रावणः शरैः ॥ ४ ॥
कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसाम् । आससाद ततो युद्धे त्वरितं राघवं रणे ॥ ५ ॥
सुग्रीवस्तान्कपीन्दृष्ट्वा भग्नान्विद्रावितान्रणे । गुल्मे सुषेणं निक्षिप्य चक्रे युद्धे द्रुतं मनः ॥ ६ ॥
आत्मनः सदृशं वीरं स तं निक्षिप्य वानरम् । सुग्रीवोऽभिमुखं शत्रुं प्रतस्थे पादपायुधः ॥ ७ ॥
पार्श्वतः पृष्ठतश्चास्य सर्वे वानरयूथपाः । अनुजग्मुर्महाशैलान्विविधांश्च वनस्पतीन् ॥ ८ ॥
ननर्द युधि सुग्रीवः स्वरेण महता महान् । पोथयन्विविधांश्चान्यान्ममन्थोत्तमराक्षसान् ॥ ९ ॥

---

मुखानि येषां ते केचित् रावणेन निकृत्तशिरसोऽभवन्निति शेषः ॥ ४२ ॥

रा० टी०–निरुच्छ्वासा इति । केचिद् हताः अत एव निरुच्छ्वासा अभवन्निति शेषः ॥ ४३ ॥

रा० टी०–दशानन इति । दशाननः यतो यतो यत्र यत्र रथेनाभ्येति ततस्ततस्तत्र तत्र तस्य रावणस्य शरप्रवेगं सोढुं हरियूथपाः न शेकुः ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

गो० टी०–निकृत्तशिरस इत्यादिश्लोकद्वयम् स्पष्टम् ॥ ४४–४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षण्णवतितमः सर्गः ॥ ९६ ॥

१ ] ति० टी०–तथेति ॥ १ ॥

रा० टी०–रावणयुद्धमेव वर्णयति—तथेत्यादिभिः । दशग्रीवेण कर्त्रा मार्गणैश्शरैः कृत्तानि गात्राणि येषां तैः हरिभिः प्रकीर्णा वसुधाभवत् ॥ १ ॥

गो० टी०–अथ विरूपाक्षवधः–तथा तैरित्यादि ॥ १ ॥

२–५ ] ति० टी०–एकत एकैकस्मिन्प्रदेशे ॥ २–५ ॥

रा० टी०–रावणस्येति । अप्रसह्यं प्रसहितुमशक्यं रावणस्य शरसंपातमेकतः एकस्मिन्नपि क्षणे न शेकुः तत्र दृष्टान्तः पतंगाः ज्वलनं वन्हिं यथा ॥ २ ॥

रा० टी०–ते इति । पावकार्चिस्समाविष्टाः अत एव दह्यमाना गजा इव बाणैरर्दिताः ते वानराः क्रोशन्तस्सन्तः विप्रदुद्रुवुः ॥ ३ ॥

रा० टी०–प्लवङ्गानामिति । महाभ्राणि मारुत इव प्लवङ्गानामनीकानि विधमन् रावणस्संययौ ॥ ४ ॥

रा० टी०–कदनमिति । राक्षसेन्द्रः वनौकसां कदनं कृत्वा राघवमाससाद जगाम ॥ ५ ॥

गो० टी०–रावणस्येति । एकत एकस्य अद्वितीयस्य २–६

६ ] ति० टी०–गुल्मे सेनासंनिवेशे ॥ ६ ॥

रा० टी०–सुग्रीव इति । भग्नान् अत एव विद्रावितान् कपीन् सुग्रीवो दृष्ट्वा गुल्मे सुषेणं निक्षिप्य संस्थाप्य युद्धे मनश्चक्रे ॥ ६ ॥

गो० टी०–सुग्रीव इति । अद्भुतमिति क्रियाविशेषणम् ६ ॥ ७

७ ] ति० टी०–आत्मनः सदृशमात्मतुल्यं सुषेणं निक्षिप्य ॥ ७ ॥

रा० टी०–आत्मन इति । आत्मनः सदृशं तं सुषेणं निक्षिप्य सुग्रीवश्शत्रुमभिमुखं प्रतस्थे ॥ ७ ॥

८ ] ति० टी०–सर्वे वानरयूथपाः । सुषेणं विनेति शेषः । महाशैलानित्यादेर्गृहीत्वेति शेषः ॥ ८ ॥

रा० टी०–पार्श्वत इति । वानरयूथपाः शैलान् वनस्पतींश्च गृहीत्वेति शेषः पार्श्वतः पृष्ठतश्चानुजग्मुः ॥ ८ ॥

गो० टी०–पार्श्वत इति । महाद्रुमान् उत्पाट्येति शेषः । उत्पाट्य अस्य पार्श्वतः पृष्ठतश्चानुजह्रुरिति संबन्धः । यथा महाराजे युद्धाय गच्छति तदायुधानि भृत्या आहरन्ति तथा वानरराजे युद्धाय निष्क्रामति तदायुधभूतान् शैलवृक्षादीन् समये दृक्षान् दातुं वानरा आजह्रुरिति भावः ॥ ८ ॥ ९ ॥

९ ] ति० टी०–अन्यानवशिष्टानुत्तमराक्षसान् बलाध्यक्षराक्षसान् ॥ ९ ॥

रा० टी०–ननर्देति । सुग्रीवः महता स्वरेण विविधान्

---

१ राघवं त्वरितस्तदेति गो. पाठः । २ द्रवत इति गो. पाठः । ३ यूथाधिपाः स्वयमिति गो. पाठः । ४ महाद्रुमानिति गो. महीरुहानिति रा. पाठः । ५ स ननर्देति गो. पाठः । ६ पातयन्निति गो. पाठः । ७ जगामेति गो. पाठः ।

ममर्द च महाकायो राक्षसान्वानरेश्वरः । युगान्तसमये वायुः प्रवृद्धानगमानिव ॥ १० ॥
राक्षसानामनीकेषु शैलवर्षं ववर्ष ह । अश्मवर्षं यथा मेघः पक्षिसङ्घेषु कानने ॥ ११ ॥
कपिराजविमुक्तैस्तैः शैलवर्षैस्तु राक्षसाः । विकर्णशिरसः पेतुर्विकीर्णा इव पर्वताः ॥ १२ ॥
अथ संक्षीयमाणेषु राक्षसेषु समन्ततः । सुग्रीवेण प्रभग्नेषु नदत्सु च पतत्सु च ॥ १३ ॥
विरूपाक्षः स्वकं नाम धन्वी विश्राव्य राक्षसः । रथादाप्लुत्य दुर्धर्षो गजस्कन्धमुपारुहत् ॥ १४ ॥
स तं द्विपमथारुह्य विरूपाक्षो महाबलः । ननर्द भीमनिर्ह्रादं वानरानभ्यधावत ॥ १५ ॥
सुग्रीवे स शरान्घोरान्विससर्ज चमूमुखे । स्थापयामास चोद्विग्नान्राक्षसान्संप्रहर्षयन् ॥ १६ ॥
सोऽतिविद्धः शितैर्बाणैः कपीन्द्रस्तेन रक्षसा । चुक्रोश च महाक्रोधो वधे चास्य मनो दधे ॥ १७ ॥
ततः पादपमुद्धृत्य शूरः संप्रधनो हरिः । अभिपत्य जघानास्य प्रमुखे तं महागजम् ॥ १८ ॥
स तु प्रहाराभिहतः सुग्रीवेण महागजः । अपासर्पद्धनुर्मात्रं निषसाद ननाद च ॥ १९ ॥
गजात्तु मथितात्तूर्णमपक्रम्य स वीर्यवान् । राक्षसोऽभिमुखः शत्रुं प्रत्युद्गम्य ततः कपिम् २० ॥
आर्षभं चर्म खड्गं च प्रगृह्य लघुविक्रमः । भर्त्सयन्निव सुग्रीवमाससाद व्यवस्थितम् ॥ २१ ॥
स हि तस्यापि[६] संगृह्य प्रगृह्य विपुलां शिलाम् । विरूपाक्षस्य चिक्षेप सुग्रीवो जलदोपमाम् ॥ २२ ॥

---

राक्षसान् पोथयन् सन् उत्तमराक्षसान् ममन्थ युद्धेनेति शेषः ॥ ९ ॥

१०-१२ ] ति० टी०-अगमान्वृक्षान् ॥ १०-१२ ॥

रा० टी०-ममर्देति । प्रवृद्धान् चिरकालकान् अगमान् वृक्षान् वायुरिव वानरेश्वरस्सुग्रीवः राक्षसान् ममर्द ॥ १० ॥

रा० टी०-राक्षसानामिति । मेघः पक्षिसंघेषु अश्मवर्षमिव राक्षसानामनीकेषु शैलवर्षं ववर्ष ॥ ११ ॥

रा० टी०-कपीति । कपिराजेन विमुक्तैश्शैलवर्षैः विकीर्णशिरसो राक्षसाः विकीर्णाः पर्वता इव पेतुः ॥ १२ ॥

गो० टी०-ममन्थ चेति । अगमान् वृक्षान् । पलाशी द्रुद्रुमागमा इत्यमरः ॥ १०-१२ ॥

१३-१५ ] ति० टी०-संक्षीयमाणेषु हिंस्यमानेषु १३-१५

रा० टी०-अथेति । राक्षसेषु सुग्रीवेण भग्नेषु अत एव संक्षीयमाणेषु आसन्नमरणेषु अत एव नदत्सु पतत्सु च सत्सु विरूपाक्षो राक्षसः स्वकं नाम विश्राव्य रथादाप्लुत्य गजस्कन्धमुपारुहत् श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

रा० टी०-स इति । विरूपाक्षः भीमनिर्ह्रादं यथा भवति तथा ननर्द वानरानभ्यधावत च ॥ १५ ॥

गो० टी०-अथेत्यादि । संक्षीयमाणेषु हिंस्यमानेषु । "क्षि, हिंसायाम्" इति धातुः ॥ १३-१७ ॥

१६-१७ ] ति० टी०-उद्विग्नान्पलायनकृतोत्साहान्स्थापयामास पलायनान्निवर्तयामास ॥ १६ ॥ १७ ॥

रा० टी०-सुग्रीव इति । स विरूपाक्षः सुग्रीवे शरान् विससर्ज अत एव राक्षसान् संप्रहर्षयन् सन् स्थापयामास १६

रा० टी०-स इति । बाणैरतिविद्धस्स सुग्रीवः अस्य विरूपाक्षस्य वधे मनो दधे अत एव चुक्रोश भयंकरं नादं चकार ॥ १७ ॥

१८-२० ] ति० टी०-संप्रधनः सम्यक्प्रधनं युद्धं यस्य सः । प्रमुखे प्रकृष्टे मुखप्रदेशे इत्यर्थः ॥ १८-२० ॥

२१ ] ति० टी०-आर्षभमृषभकृत्तिपरिवीतं चर्म फलकम् ॥ २१ ॥

रा० टी०-तत इति । हरिस्सुग्रीवः पादपमुद्धृत्य अभिपत्य उत्प्लुत्य अस्य विरूपाक्षस्य महागजं प्रमुखे जघान ॥ १८ ॥

गो० टी०-तत इति । संप्रधनः बहुलग्रहणात् कर्तरि ल्युट् । प्रहर्तेत्यर्थः । प्रमुखे मुखे ॥ १८ ॥

रा० टी०-स इति । सुग्रीवेण प्रहाराभिहतो महागजः धनुर्मात्रमपासर्पत् निषसाद भूमौ पपात ननाद च ॥ १९ ॥

गो० टी०-स त्विति । धनुर्मात्रं धनुःप्रमाणम् । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इत्यादिना मात्रच्प्रत्ययः ॥ १९ ॥

रा० टी०-गजादिति । मथितात् गजात् अपक्रम्य शत्रुं सुग्रीवं भर्त्सयन्निव अभिमुखः सन् प्रत्युद्गम्य आर्षभमृषभवन्यसम्बन्धि चर्म खड्गं च प्रगृह्य लघुविक्रमो विरूपाक्षः आससाद श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०-गजात्त्विति श्लोकद्वयमेकं वाक्यम् । व्यवस्थितं निश्चलतया स्थितम् ॥ २०-२२ ॥

२२ ] ति० टी०-तस्यापि तेनापि दत्तं प्रहारं संगृह्य गृहीत्वा ॥ २२ ॥

रा० टी०-स इति । स सुग्रीवः जलदोपमां शिलां प्रगृह्य विरूपाक्षस्य देह इति शेषः चिक्षेप ॥ २२ ॥

---

१ ममन्थेति गो.पा. । २ निकृत्ता इति गो.पा. । ३ पतत्सु निनदत्सु चेति गो.पा. । ४ विनदन्निति गो. पा. । ५ स्थिति गो.पा. । ६ अभिसंक्रुद्ध इति गो. पा. ।

स तां शिलामापतन्तीं दृष्ट्वा राक्षसपुंगवः। अपक्रम्य सुविक्रान्तः खड्गेन प्राहरत्तदा ॥ २३ ॥
तेन खड्गप्रहारेण रक्षसा बलिना हतः। मुहूर्तमभवद्भूमौ विसंज्ञ इव वानरः ॥ २४ ॥
सहसा स तदोत्पत्य राक्षसस्य महाहवे। मुष्टिं संवर्त्य वेगेन पातयामास वक्षसि ॥ २५ ॥
मुष्टिप्रहाराभिहतो विरूपाक्षो निशाचरः। तेन खड्गेन संक्रुद्धः सुग्रीवस्य चमूमुखे ॥ २६ ॥
कवचं पातयामास पद्भ्यामभिहतोऽपतत्। स समुत्थाय पतितः कपिस्तस्य व्यसर्जयत् ॥२७॥
तलप्रहारमशनेः समानं भीमनिःस्वनम्। तलप्रहारं तद्रक्षः सुग्रीवेण समुद्यतम् ॥ २८ ॥
नैपुण्यान्मोचयित्वैनं मुष्टिनोरसि ताडयत्। ततस्तु संक्रुद्धतरः सुग्रीवो वानरेश्वरः ॥ २९ ॥
मोक्षितं चात्मनो दृष्ट्वा प्रहारं तेन रक्षसा। स ददर्शान्तरं तस्य विरूपाक्षस्य वानरः ॥ ३० ॥
ततोऽन्यं पातयत्क्रोधाच्छङ्खदेशे महातलम्। महेन्द्राशनिकल्पेन तलेनाभिहतः क्षितौ ॥ ३१ ॥
पपात रुधिरक्लिन्नः शोणितं हि समुद्गिरन्। स्रोतोभ्यस्तु विरूपाक्षो जलं प्रस्रवणादिव ॥ ३२ ॥
विवृत्तनयनं क्रोधात्सफेनं रुधिराप्लुतम्। ददृशुस्ते विरूपाक्षं विरूपाक्षतरं कृतम् ॥ ३३ ॥
स्फुरन्तं परिवर्तन्तं पार्श्वेन रुधिरोक्षितम्। करुणं च विनर्दन्तं ददृशुः कपयो रिपुम् ॥ ३४ ॥

---

२३-२६ ] ति० टी०—स तामिति। अपक्रम्य शिलाप्रहारमोघीकरणार्थं पार्श्वतोऽपसृत्य सुग्रीवं प्राहरदित्यर्थः ॥२३-२६॥

२७-२८ ] ति० टी०—अभिहतः सुग्रीवः पद्भ्यामपतत्। आकुञ्चितजानुरभवदित्यर्थः ॥ २७ ॥ २८ ॥

रा० टी०—स इति। सः विरूपाक्षः आपतन्तीं शिलां दृष्ट्वा अपक्रम्य वञ्चयित्वा खड्गेन प्राहरत् ॥ २३ ॥

रा० टी०—तेनेति। रक्षसा कर्त्रा खड्गप्रहारेण हतो वानरः विसंज्ञ इव मुहूर्तं दीनोऽभवत् ॥ २४ ॥

रा० टी०—सहसेति। स सुग्रीवः उत्पत्य वेगेन मुष्टिं संवर्त्य राक्षसस्य वक्षसि पातयामास ॥ २५ ॥

गो० टी०—स तामिति। अपक्रम्य शिलापातपरिहारार्थमन्यतोपसृत्य, प्राहरत्। सुग्रीवमिति शेषः ॥ २३-२५ ॥

रा० टी०—मुष्टीति। मुष्टिप्रहाराभिहतः संक्रुद्धो विरूपाक्षः सुग्रीवस्य कवचं खड्गेन पातयामास स सुग्रीवस्तु पद्भ्यां राक्षसचरणाभ्यां हतस्सन्नपतत्, पतितः कपिः सुग्रीवः समुत्थाय अशनेस्समानं तलप्रहारं तस्य रक्षसः देहे व्यसर्जयत् सार्धश्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—मुष्टिप्रहारेत्यादिसार्धश्लोक एकान्वयः। कवचमिति। अनेन सुग्रीवस्यापि कवचधारणमस्तीति गम्यते। पद्भ्यामिति। अभिहतः सन् पद्भ्यामपतदित्यन्वयः ॥२६॥२७

रा० टी०—तलेति। तद्रक्षस्सुग्रीवेण समुद्यतं तलप्रहारं मोचयित्वा एनं विरूपाक्षं मुष्टिना उरसि अताडयत् ॥ २८ ॥

गो० टी०—तलप्रहारमिति। नैपुण्यात् शिक्षापाटवात् ॥२८

गो० टी०—ततस्त्विति सार्धश्लोकमेकं वाक्यम्। अन्तरम् अवकाशम् ॥ २९ ॥

२९ ] ति० टी०—नैपुण्याद्वञ्चनासामर्थ्यान्मोचयित्वा मोघीकृत्य ॥ २९ ॥

३० ] ति० टी०—अन्तरं प्रहारावसरम् ॥ ३० ॥

रा० टी०—तत इति। सुग्रीवः आत्मनः प्रहारं रक्षसा मोक्षितं वञ्चितं दृष्ट्वा विरूपाक्षस्यान्तरं हननावकाशं ददर्श ततोऽनन्तरं शङ्खदेशे ललाटास्थिप्रदेशे महत्तलं न्यपातयत् श्लोकद्वयमेकान्वयि ॥ २९-३१ ॥

गो० टी०—तत इत्यर्धम्। शङ्खदेशे ललाटास्थिप्रदेशे। शङ्खो निधौ ललाटास्थ्नीत्यमरः ॥ ३० ॥

३१ ] ति० टी०—शङ्खदेशे ललाटास्थिप्रदेशे। तलं प्रसृतकरतलप्रहारम् ॥ ३१ ॥

३२ ] ति० टी०—प्रस्रवणो निर्झरमूलस्थानम्। प्रस्रवत्यस्मादिति व्युत्पत्तेः ॥ ३२ ॥

रा० टी०—महेन्द्रेति। तलेनाभिहतः अत एव रुधिरक्लिन्नो विरूपाक्षः स्रोतोभ्यः नासिकादिभ्यः प्रस्रवणाज्जलमिव शोणितं समुद्गिरन्सन् क्षितौ पपात सार्धश्लोक एकान्वयी ॥३२॥

गो० टी०—महेन्द्राशनीत्यादिसार्धश्लोक एकं वाक्यम्। स्रोतोभ्यः नासादिनवद्वारेभ्यः ॥ ३१ ॥ ३२ ॥

३३ ] ति० टी०—विरूपाक्षतरमतिविरूपाक्षम् ॥ ३३ ॥

रा० टी०—विवृत्तेति। विवृत्ते नयने यस्य स फेनरुधिरेण आप्लुतं विरूपाक्षतरमतिविरूपेन्द्रियं विरूपाक्षं ददृशुः ॥ ३३ ॥

गो० टी०—विवृत्तनयनमिति। विरूपाक्षतरं नेत्रोद्गमनेनात्यन्तविकटाक्षम् ॥ ३३ ॥

३४ ] ति० टी०—पार्श्वेन परिवर्तन्तमित्यन्वयः ॥ ३४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स्फुरन्तमिति। स्फुरत्त्वादिविशिष्टं विरूपाक्षं कपयो ददृशुः ॥ ३४ ॥

गो० टी०—स्फुरन्तमिति। स्फुरन्तमूर्ध्वमुत्पतन्तम्। परिवर्तन्तं परिवर्तमानम् ॥ ३४ ॥

---

१ स तदा सहसेति गो.पा.। २ अताडयदिति गो.रा.पाठः। ३ न्यपातयदिति गो.रा.पा.। ४ महत्तलमिति गो.रा.पा.। ५ च समुद्रमन्निति गो.पा.।

तथा तु तौ संयति संप्रयुक्तौ तरस्विनौ वानरराक्षसानाम् ।
बलार्णवौ सस्वनतुश्च भीमौ महार्णवौ द्वाविव भिन्नसेतू ॥ ३५ ॥
विनाशितं प्रेक्ष्य विरूपनेत्रं महाबलं तं हरिपार्थिवेन ।
बलं समेतं कपिराक्षसानामुद्वृत्तगङ्गाप्रतिमं बभूव ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

## सप्तनवतितमः सर्गः ।

विरूपाक्षे परासौ द्विगुणितरोषोऽपगतभाग्यबलः पङ्क्तिमुखः समीपस्थं महोदरं प्राहिणोत् स तु सुग्रीवेणानल्पविक्रमोऽपि गाढं प्रहृत्य सशिरश्छेदं पातितः ।

हन्यमाने बले तूर्णमन्योन्यं ते महामृधे । सरसीव महाघर्मे सूपक्षीणे बभूवतुः ॥ १ ॥
स्वबलस्य तु घातेन विरूपाक्षवधेन च । बभूव द्विगुणं क्रुद्धो रावणो राक्षसाधिपः ॥ २ ॥
प्रक्षीणं स्वबलं दृष्ट्वा बध्यमानं वलीमुखैः । बभूवास्य व्यथा युद्धे दृष्ट्वा दैवविपर्ययम् ॥ ३ ॥
उवाच च समीपस्थं महोदरमनन्तरम् । अस्मिन्काले महाबाहो जयाशा त्वयि मे स्थिता ॥४॥
जहि शत्रुचमूं वीर दर्शयाद्य पराक्रमम् । भर्तृपिण्डस्य कालोऽयं निर्वेष्टुं साधु युध्यताम् ॥५ ॥
एवमुक्तस्तथेत्युक्त्वा राक्षसेन्द्रो महोदरः । प्रविवेशारिसेनां स पतङ्ग इव पावकम् ॥ ६ ॥

---

३५ ] ति० टी०—संप्रयुक्तौ युद्धाय संमुखतया स्थितौ ३५

रा० टी०—तथेति । वानरराक्षसानां वानरराक्षसैः संयति संग्रामे संप्रयुक्तौ नियोजितौ बलार्णवौ पराक्रमसमुद्रौ द्वौ सुग्रीवविरूपाक्षौ भीमौ महार्णवाविव सस्वनतुः ॥ ३५ ॥

गो० टी०—तथात्विति । भिन्नवेलौ विदीर्णवेलौ ॥ ३५ ॥

३६ ] ति० टी०—उद्वृत्तगङ्गा । उद्वेलगङ्गेत्यर्थः । वानरबलमानन्देन, राक्षसबलं शोकेनेति शेषः ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

रा० टी०—विनाशितमिति । हरिपार्थिवेन विनाशितं विरूपनेत्रं प्रेक्ष्य समस्तं कपिराक्षसानां बलमुन्मत्तगंगाप्रतिमं बभूव ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

गो० टी०—विनाशितमिति । उन्मत्तगङ्गा उद्वेलगङ्गा ३६

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तनवतितमः सर्गः ॥ ९७ ॥

---

१-४ ] ति० टी०—अन्योन्यं हन्यमाने ते बले सूपक्षीणे उत्तराम्रुपक्षयवती बभूवतुः । सरसी इव । संधिरार्षः ॥ १-४ ॥

५-६ ] ति० टी०—भर्तृपिण्डस्य स्वामिकृतान्नादिप्रदानोपकारस्य । निर्वेष्टुं प्रत्युपकारं कर्तुम् ॥ ५ ॥ ६ ॥

रा० टी०—विरूपाक्षवधानन्तरकालिकं वृत्तान्तमाह—हन्यमान इत्यादिभिः । अन्योन्यं हन्यमाने महाबले ते सैन्ये महाघर्मे ग्रीष्मे सूपक्षीणे उपक्षयं प्राप्ते सरसीव बभूवतुः व शब्द इवार्थे एतेन सरसीवेत्यत्र सन्धिरार्ष इति भट्टाद्युक्तिश्चिन्त्या ॥१॥

रा० टी०—स्वबलस्येति । रावणो द्विगुणं क्रुद्धो बभूव २

रा० टी०—प्रक्षीणमिति । बलीमुखैर्वानरैर्बध्यमानमत एव प्रक्षीणं स्वबलं दृष्ट्वा अत एव दैवविपर्ययं भाग्यवैपरीत्यं दुर्भाग्यमित्यर्थः दृष्ट्वा ज्ञात्वा विद्यमानस्यास्य रावणस्य व्यथा मनःपीडा बभूव ॥ ३ ॥

गो० टी०—अथ महोदरवधः—हन्यमान इत्यादि । सरसी इवेति वक्तव्ये सरसीवेति संधिरार्षः ॥ १-३ ॥

रा० टी०—उवाचेति । अनन्तरं समीपस्थं महोदरमुवाच तदाकारमाह अस्मिन्काले मम जयाशा त्वयि स्थिता अतः शत्रुचमूं जहि भर्तृपिण्डस्य स्वाम्यन्नादिदानरूपोपकारस्य निर्वेष्टुं प्रत्युपकारं कर्तुमयं कालः अतस्साधु युध्यताम् अर्द्धचतुष्टयमेकान्वयि ॥ ४-५ ॥

रा० टी०—एवमिति । महोदरः अरिसेनां प्रविवेश ॥६॥

गो० टी०—अस्मिन् काल इत्यादिसार्धश्लोक एकान्वयः । भर्तृपिण्डस्येति संबन्धमात्रे षष्ठी । भर्तृपिण्डस्य निर्वेष्टुं स्वामिदत्तवेतनमपाकर्तुमित्यर्थः ॥ ४-६ ॥

---

१ सुभीममिति गो. पाठः । २ वेलाविति गो. रा. पाठः । ३ समस्तमिति गो. रा. पाठः । ४ उन्मत्तेति गो. रा. पाठः । ५ सोपक्षीणे इति गो. पाठः । ६ वीति गो. पाठः । ७ स्थिति गो. पाठः । ८ प्रेक्ष्येति गो. पाठः । ९ अरिंदमामि पाठ । १० तामिति गो. रा. पाठः ।

ततः स कदनं चक्रे वानराणां महाबलः । भर्तृवाक्येन तेजस्वी स्वेन वीर्येण चोदितः ॥ ७ ॥
वानराश्च महासत्त्वाः प्रगृह्य विपुलाः शिलाः । प्रविश्यारिबलं भीमं जघ्नुस्ते [1]सर्वराक्षसान् ॥ ८ ॥
महोदरः [2]सुसंक्रुद्धः शरैः काञ्चनभूषणैः । चिच्छेद पाणिपादो[3]रु वानराणां महाहवे ॥ ९ ॥
ततस्ते वानराः सर्वे [4]राक्षसानां महामृधे । दिशो दश द्रुताः केचित्केचित्सुग्रीवमाश्रिताः ॥ १० ॥
[5]प्रभग्नं समरे दृष्ट्वा वानराणां महा[6]बलम् । अभिदुद्राव सुग्रीवो महोदरमनन्तरम् ॥ ११ ॥
प्रगृह्य विपुलां घोरां महीधरसमां शिलाम् । चिक्षेप च महातेजास्तद्वधाय हरीश्वरः ॥ १२ ॥
तामापतन्तीं सहसा शिलां दृष्ट्वा महोदरः । असंभ्रान्तस्ततो बाणैर्नि[7]र्बिभेद ततः शिलाम् ॥ १३ ॥
रक्षसा तेन बाणौघैर्निकृत्ता सा सहस्रधा । निपपात तदा भूमौ गृध्रचक्रमिवाकुलम् ॥ १४ ॥
तां तु भिन्नां शिलां दृष्ट्वा सुग्रीवः क्रोधमूर्च्छितः । सालमुत्पाट्य चिक्षेप [9]तं स चिच्छेद नैकधा ॥ १५ ॥
शरैश्च विददारैनं शूरः [10]परबलार्दनः । स ददर्श ततः क्रुद्धः परिघं पतितं भुवि ॥ १६ ॥
आविध्य तु स तं दीप्तं परिघं तस्य दर्शयन् । [11]परिघेणोग्रवेगेन जघानास्य हयोत्तमान् ॥ १७ ॥
तस्माद्धतहयाद्वीरः सोऽवप्लुत्य महारथात् । गदां जग्राह संक्रुद्धो राक्षसोऽथ महोदरः ॥ १८ ॥
गदापरिघहस्तौ तौ युधि वीरौ समीयतुः । नर्दन्तौ गोवृषप्रख्यौ घनाविव सविद्युतौ ॥ १९ ॥

७-१० ] ति० टी०-भर्तृवाक्येन चोदितः सः स्वेन वीर्येण कदनं चक्रे ॥ ७-१० ॥

रा०टी०-तत इति । भर्तृवाक्येन चोदितस्स महोदरः स्वेन वीर्येण वानराणां कदनं चक्रे ॥ ७ ॥

रा० टी०-वानरा इति । वानराः अरिबलं प्रविश्य सर्वराक्षसान् जघ्नुः ॥ ८ ॥

गो० टी०-तत इति । भर्तृवाक्येन चोदितः सन् स्वेन वीर्येण कदनं चक्र इत्यन्वयः ॥ ७ ॥ ८ ॥

रा० टी०-महोदर इति । महोदरः वानराणां पाणिपादोरु चिच्छेद ॥ ९ ॥

रा० टी०-तत इति । राक्षसानां महामृधे विद्यमानास्ते केचित् वानराः दश दिशो द्रुताः केचित्सुग्रीवमाश्रिताः ॥१०॥

गो० टी०-महोदर इति । पाणिपादोरूनिति । एकवद्भावाभाव आर्षः ॥ ९ ॥ १० ॥

११-१३ ] ति० टी०-अनन्तरं संनिहितमित्यर्थ इति तीर्थः ॥ ११-१३ ॥

रा० टी०-प्रभग्नामिति । सुग्रीवः वानराणां चमूं प्रभग्नां दृष्ट्वा अनन्तरं समीपस्थं महोदरमभिदुद्राव ॥ ११ ॥

रा० टी०-प्रगृह्येति । हरीश्वरः शिलां प्रगृह्य तस्य महोदरस्य वधाय चिक्षेप ॥ १२ ॥

रा० टी०-तामिति । महोदरः आपतन्तीं शिलां दृष्ट्वा बाणैर्बिभेद ॥ १३ ॥

गो० टी०-प्रभग्नामिति । अनन्तरं समीपस्थम् ११-१३

१४-१५ ] ति० टी०-आकुलं गृध्रचक्रमिव निपपात । शिलाया अनेकधा भग्नत्वात्तत्सादृश्यम् ॥ १४ ॥ १५ ॥

रा० टी०-रक्षसेति । बाणौघैः निकृत्ता शिला सहस्रधा निपपात तत्र दृष्टान्तः आकुलं गृध्रचक्रमिव निपातितशिलायाः बहुत्वात् गृध्रचक्रोपमा ॥ १४ ॥

रा० टी०-तामिति । सुग्रीवः शिलां भिन्नां दृष्ट्वा शालमुत्पाट्य चिक्षेप स महोदरस्तु तं शालं नैकधा चिच्छेद एनं सुग्रीवं शरैर्विददार च सार्द्धश्लोक एकान्वयी ॥ १५ ॥

गो० टी०-रक्षसेति । गृध्रचक्रं गृध्रसमूहः ॥ १४ ॥१५॥

१६ ] ति० टी०-स सुग्रीवः ॥ १६ ॥

रा० टी०-स इति । स सुग्रीवः भुवि पतितं परिघं ददर्श अर्द्धं पृथक् ॥ १६ ॥

गो० टी०-शरैरित्यर्धम् । शूरः महोदरः एनं च सालं च शरैः विददारेत्यन्वयः ॥ १६ ॥

गो० टी०-स इति । सः सुग्रीवः ॥ १७ ॥

१७-१८ ] ति टी०-दीप्तं परिघमाविध्य भ्रामयित्वा हस्तलाघवं तस्मै दर्शयंस्तद्धयाञ्जघान ॥ १७ ॥ १८ ॥

रा० टी०-आविध्येति । स सुग्रीवः तं परिघमाविध्य गृहीत्वा तस्य तं महोदरं दर्शयन् सन् अस्य महोदरस्य हयोत्तमान् जघान ॥ १७ ॥

रा० टी०-तस्मादिति । महोदरः हतहयात् रथादवप्लुत्य गदां जग्राह ॥ १८ ॥

गो० टी०-आविध्येति । आदायेति शेषः । तस्य महोदरस्य, दर्शयन् । पाणिलाघवमिति शेषः ॥ १८-२० ॥

१९ ] ति० टी०-समीयतुः संगतौ बभूवतुः ॥ १९ ॥

रा० टी०-गदेति । गदापरिघहस्तौ तौ सुग्रीवमहोदरौ सविद्युतौ घनाविव समीयतुः ॥ १९ ॥

१ रजनीचरानिति गो. पाठः । २ त्विति गो. रा. पाठः । ३ पादोरूनिति गो. पाठः । ४ राक्षसेनार्दिताक्षरामिति रा. राक्षसैरर्दितामृशमिति गो. पाठः । ५ प्रभग्नामिति गो. रा. पाठः । ६ चमूमिति गो. रा. पाठः । ७ बिभेद स इति रा. पाठः । ८ दुरासदामिति गो. रा. पाठः। ९ राक्षसे रणमूर्धनीति गो. पाठः । १० परपुरंजय इति गो. परबलार्दनमिति रा. पाठः । ११ परिसाग्रेण वेगेनेति गो. पाठः ।

ततः क्रुद्धो गदां तस्य चिक्षेप रजनीचरः । ज्वलन्तीं भास्कराभासां सुग्रीवाय महोदरः ॥ २० ॥
गदां तां सुमहाघोरामापतन्तीं महाबलः । सुग्रीवो रोषताम्राक्षः समुद्यम्य महाहवे ॥ २१ ॥
आजघान गदां तस्य परिघेण हरीश्वरः । पपात तरसा भिन्नः परिघस्तस्य भूतले ॥ २२ ॥
ततो जग्राह तेजस्वी सुग्रीवो वसुधातलात् । आयसं मुसलं घोरं सर्वतो हेमभूषितम् ॥ २३ ॥
स तमुद्यम्य चिक्षेप सोऽप्यस्य प्राक्षिपद्गदाम् । भिन्नावन्योन्यमासाद्य पेततुस्तौ महीतले ॥ २४ ॥
ततो भिन्नप्रहरणौ मुष्टिभ्यां तौ समीयतुः । तेजोबलसमाविष्टौ दीप्ताविव हुताशनौ ॥ २५ ॥
जघ्नतुस्तौ तदान्योन्यं नदन्तौ च पुनः पुनः । तलैश्चान्योन्यमासाद्य पेततुश्च महीतले ॥ २६ ॥
उत्पेततुस्तदा तूर्णं जघ्नतुश्च परस्परम् । भुजैश्चिक्षिपतुर्वीरावन्योन्यमपराजितौ ॥ २७ ॥
जग्मतुस्तौ श्रमं वीरौ बाहुयुद्धे परंतपौ । जहार च तदा खड्गमदूरपरिवर्तिनम् ॥ २८ ॥
[ राक्षसश्चर्मणा सार्धं महावेगो महोदरः । तथैव च महाखड्गं चर्मणा पतितं सह ॥
जग्राह वानरश्रेष्ठः सुग्रीवो वेगवत्तरः ] । ॥
ततो रोषपरीताङ्गौ नर्दन्तावभ्यधावताम् । उद्यतासी रणे हृष्टौ युद्धे शस्त्रविशारदौ ॥ २९ ॥
दक्षिणं मण्डलं चोभौ सुतूर्णं संपरीयतुः । अन्योन्यमभिसंक्रुद्धौ जये प्रणिहितावुभौ ॥ ३० ॥
स तु शूरो महावेगो वीर्यश्लाघी महोदरः । महाचर्मणि तं खड्गं पातयामास दुर्मतिः ॥ ३१ ॥

२० ] ति० टी०–भास्करवदाभासते सा भास्कराभासा ताम् ॥ २० ॥

रा० टी०–तत इति । महोदरः सुग्रीवाय गदां चिक्षेप२०

गो० टी०–तत इति । भास्कराभासां भास्करवद्भासमानाम् ॥ २१ ॥

२१ ] ति० टी०–आपतन्तीं गदाम् । दृष्ट्वेति शेषः । समुद्यम्य ! परिघमिति शेषः ॥ २१ ॥

रा० टी०–गदामिति । सुग्रीवः आपतन्तीं गदामवलोक्येति शेषः उद्यम्य परिघमुत्थाप्य परिघेण तस्य महोदरस्य गदामाजघान गदोद्भिन्नः सुग्रीवगदया विदीर्णः स परिघस्तु भूतले पपात श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०–गदां तामित्यादि । गदां दृष्ट्वेति शेषः । समुद्यम्य परिघमिति सिद्धम् ॥ २२ ॥

२२–२३ ] ति० टी०–गदा पपात । स परिघश्च भिन्न इत्यर्थः ॥ २२ ॥ २३ ॥

गो० टी०–पपात स गदोद्भिन्न इत्यर्थम् । उभावपि परस्पराभिहतौ विशीर्णौ पेततुरिति भावः ॥ २३–३१ ॥

रा० टी०–तत इति । सुग्रीवः सर्वतो हेमभूषितम् मुसलं वसुधातलाज्जग्राह ॥ २३ ॥

२४–२७ ] ति० टी०–स सुग्रीवः । तं मुसलम् । सोऽपि महोदरोऽपि ॥ २४–२७ ॥

रा० टी०–स इति । स सुग्रीवः तं मुसलमुद्यम्य चिक्षेप स महोदरोपि अन्यां गदां व्याक्षिपत् अन्योन्यमासाद्य भिन्नौ गदामुसलौ महीतले पेततुः ॥ २४ ॥

रा० टी०–तत इति । भिन्नप्रहरणौ विदीर्णायुधौ सुग्रीव महोदरौ दीप्तौ हुताशनाविव मुष्टिभ्यां समीयतुः ॥ २५ ॥

रा० टी०–जघ्नतुरिति । अन्योन्यं जघ्नतुः पेततुश्च ॥ २६ ॥

रा० टी०–उत्पेततुरिति । परस्परमुत्पेततुः भुजैश्चिक्षेपतुः चिक्षिपतुः ॥ २७ ॥

२८–२९ ] ति० टी०–जहार जहतुः ॥ २८ ॥ २९ ॥

रा० टी०–जग्मतुरिति । वीरौ बाहुयुद्धे यदा श्रमं जग्मतुः तदा राक्षसाः चर्मणा सार्द्धं खड्गं जहार तथा सुग्रीवोऽपि चर्मणा सह पतितं महाखड्गं जग्राह सार्द्धश्लोकद्वयमेकान्वयि ॥ २८ ॥ २९ ॥

रा० टी०–ताविति । रोषपरीताङ्गौ अत एव उद्यतासी तौ सुग्रीवमहोदरौ अभ्यधावताम् ॥ ३० ॥

३० ] ति० टी०–दक्षिणमण्डलं च । चकाराद्वामं च । सुतूर्णं संपरीयतुरकुरुताम् ॥ ३० ॥

रा० टी०–दक्षिणमिति । ओः रुद्रस्येव भा ययोः तौ उभौ सुग्रीवमहोदरौ दक्षिणं मण्डलं संपरीयतुः चक्रतुः ॥ ३१ ॥

गो० टी०–दक्षिणमिति । दक्षिणं प्रदक्षिणं, चकारात् सव्यं च । सुतूर्णं संपरीयतुः अकुर्वाताम् ॥ ३२ ॥

३१ ] ति० टी०–वीर्येण श्लाघत इति वीर्यश्लाघी ॥ ३१ ॥

रा० टी०–स इति । महोदरः महावर्मणि सुग्रीवकवचे खड्गं पातयामास ॥ ३२ ॥

१ तस्मै इति गो. रा. पाठः । २ स गदोद्भिन्न इतिगो. रा. पाठः । ३ अन्यामिति गो. रा. पाठः । ४ चेति रा. धरणीतल इति गो. पाठः । ५ नेदतुश्चेति गो. पाठः । ६ आहर्येति गो. पाठः । ७ धरणीतल इति गो. पाठः । ८ आजहार तत इति गो. पाठः । ९ इदं सार्धपद्यमधिकं गो. रा.पाठे । १० नर्दन्ताविति गो. रा. पाठः । ११ युद्धेति गो. चर्मखड्गेति रा. पाठः । १२ चर्मणीति गो. पाठः ।

लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः। जहार स शिरस्त्राणं कुण्डलोपगतं शिरः ॥ ३२ ॥
निकृत्तशिरसस्तस्य पतितस्य महीतले। तद्बलं राक्षसेन्द्रस्य दृष्ट्वा तत्र न दृश्यते ॥ ३३ ॥
हत्वा तं वानरैः सार्धं ननाद मुदितो हरिः। चुक्रोध च दशग्रीवो बभौ हृष्टश्च राघवः ॥ ३४ ॥
विषण्णवदनाः सर्वे राक्षसा दीनचेतसः। विद्रवन्ति ततः सर्वे भयवित्रस्तचेतसः ॥ ३५ ॥
महोदरं तं विनिपात्य भूमौ महागिरेः कीर्णमिवैकदेशम्।
सूर्यात्मजस्तत्र रराज लक्ष्म्या सूर्यः स्वतेजोभिरिवाप्रधृष्यः ॥ ३६ ॥
अथ विजयमवाप्य वानरेन्द्रः समरमुखे सुरसिद्धयक्षसङ्घैः।
अवनितलगतैश्च भूतसङ्घैर्हरुषसमाकुलितैर्निरीक्षमाणः ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

## अष्टनवतितमः सर्गः।

महोदरे निपातिते महापार्श्वोऽङ्गदचमूं क्षोभयामास ततोऽङ्गदपरिघप्रहारविसंज्ञस्य तस्य हयान् जाम्बवान्पातयामास रथं च बभञ्जान्ते महान्तं कालं युध्वाङ्गदो वक्षसि मुष्टिना दृढं प्रहृत्य तं कृतान्तसाचकार।

महोदरे तु निहते महापार्श्वो महाबलः। सुग्रीवेण समीक्ष्याथ क्रोधात्संरक्तलोचनः ॥ १ ॥

गो० टी०—स त्विति। वीर्येण श्लाघत इति वीर्यश्लाघी ॥ ३३ ॥

३२ ] ति० टी०—सुग्रीवफलके लग्नं खड्गमुत्कर्षतो महोदरस्य शिरः खड्गेन जहार ॥ ३२ ॥

रा० टी०—लग्नमिति। लग्नं कवचे आसक्तं खड्गमुत्कर्षतः महोदरस्य शिरः खड्गेन कपिकुञ्जरो जहार ॥ ३३ ॥

गो० टी०—लग्नमिति। लग्नं चर्मलग्नम्। उत्कर्षतः महोदरस्येति शेषः ॥ ३४ ॥

३३–३४ ] ति० टी०—निकृत्तशिरसो राक्षसेन्द्रस्य बलं तद्राक्षसेन्द्रशिरो दृष्ट्वा तत्र स्थाने न दृश्यते। पलायितमिति यावत् ॥ ३३ ॥ ३४ ॥

रा० टी०—निकृत्तेति। निकृत्तशिरसो राक्षसेन्द्रस्य बलं सेना तत्पतितशिरो दृष्ट्वाऽवलोक्य न दृश्यते *अपलायतेत्यर्थः किं च तद्बलं राक्षससेना राक्षसेन्द्रस्य दृष्ट्वा तत्र न दृश्यते संबन्धसामान्ये षष्ठी ॥ ३४ ॥

रा० टी०—हत्वेति। तं महोदरं हत्वा मुदितो हरिस्सुग्रीवो ननाद हृष्टो राघवो बभौ च ॥ ३५ ॥

गो० टी०—निकृत्तेति। तत् शिरः। न तिष्ठते नातिष्ठत ॥ ३५ ॥ ३६ ॥

३५ ] ति० टी०—सर्वे विषण्णवदना दीनचेतसश्च। बभूवुरिति शेषः। भयवित्रस्तचेतसो भयकम्पितचित्ताः। सर्वे विद्रवन्ति व्यद्रवन् ॥ ३५ ॥

रा० टी०—विषण्णेति। भयवित्रस्तचेतसः अत एव दीनचेतसः अत एव विषण्णवदनाः सर्वे राक्षसाः विद्रवन्ति ॥ ३६ ॥

गो० टी०—विषण्णेति। विषण्णवदनाः अभवन्निति शेषः। अतः सर्वशब्दापौनरुक्त्यम् ॥ ३७ ॥

३६ ] ति० टी०—कीर्णं शीर्णम् ॥ ३६ ॥

रा० टी०—महोदरमिति। कीर्णं महागिरेरेकदेशमिव महोदरं भूमौ निपात्य लक्ष्म्या विजयसंपत्त्योपलक्षितस्सूर्यात्मजस्सुग्रीवः स्वतेजोभिरुपलक्षितस्सूर्य इव रराज ॥ ३७ ॥

गो० टी०—महोदरमिति। लक्ष्म्या जयलक्ष्म्या ॥ ३८ ॥ ३९ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥

३७ ] ति० टी०—हर्षपदस्थाने हरुषेति पाठश्छन्दोनुरोधात्। बभूवेति शेषः ॥ ३७ ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

रा० टी०—अथेति। वानरेन्द्रः समरमुखे विजयमवाप्य हर्षसमाकुलितैः सुरादिभिः निरीक्ष्यमाणो बभूवेति शेषः ॥ ३८ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

१ ] ति० टी०—महोदरे इति। सुग्रीवेण महोदरे निहते सति तद्वधकर्तारं सुग्रीवं महापार्श्वः समीक्ष्य ॥ १ ॥

रा० टी०—महोदरविघातानन्तरकालिकं वृत्तान्तमाह—महोदर इत्यादिभिः। सुग्रीवेण महोदरे निहते सति महापार्श्वः अङ्गदस्य भीमां चमूं समीक्ष्य मार्गणैश्शरैः क्षोभयामास सार्द्धश्लोक एकान्वयी ॥ १ ॥

१ हितमिति गो. पाठः। २ तिष्ठत इति गो. पाठः। ३ यक्षसिद्धेति गो. पाठः। ४ हर्षेति गो. रा. पाठः। * पलायतेति युक्तम्।

अङ्गदस्य चमूं भीमां क्षोभयामास मार्गणैः[1] । स वानराणां मुख्यानामुत्तमाङ्गानि राक्षसः[2] ॥ २ ॥
पातयामास कायेभ्यः फलं वृन्तादिवानिलः । केषांचिदिषुभिर्बाहूंश्चिच्छेदाथ[3] स राक्षसः ॥ ३ ॥
वानराणां सुसंरब्धः[4] पार्श्वं केषांचिदाक्षिपत्[5] । तेऽर्दिता बाणवर्षेण महापार्श्वेन वानराः ॥ ४ ॥
विषादविमुखाः सर्वे बभूवुर्गतचेतसः । निशम्य बलमुद्विग्नमङ्गदो राक्षसार्दितम् ॥ ५ ॥
वेगं चक्रे महावेगः समुद्र इव पर्वसु[6] । आयसं परिघं गृह्य सूर्यरश्मिसमप्रभम् ॥ ६ ॥
समरे वानरश्रेष्ठो महापार्श्वे न्यपातयत् । स तु तेन प्रहारेण महापार्श्वो विचेतनः ॥
ससूतः[7] स्यन्दनात्तस्माद्विसंज्ञश्चापतद्भुवि ॥ ७ ॥
तस्यर्क्षराजस्तेजस्वी[8] नीलाञ्जनचयोपमः । निष्पत्य सुमहावीर्यः स्वयूथान्[9] मेघसंनिभात् ॥ ८ ॥
प्रगृह्य गिरिशृङ्गाभां क्रुद्धः स विपुलां शिलाम् । अश्वाञ्जघान तरसा बभञ्ज[10] स्यन्दनं च तम्[11] ॥ ९ ॥
मुहूर्ताल्लब्धसंज्ञस्तु महापार्श्वो महाबलः । अङ्गदं बहुभिर्बाणैर्भूयस्तं प्रत्यविध्यत ॥ १० ॥
जाम्बवन्तं त्रिभिर्बाणैराजघान स्तनान्तरे । ऋक्षराजं गवाक्षं च जघान बहुभिः शरैः ॥ ११ ॥
गवाक्षं[12] जाम्बवन्तं च स दृष्ट्वा शरपीडितौ । जग्राह परिघं घोरमङ्गदः क्रोधमूर्च्छितः ॥ १२ ॥
तस्याङ्गदः सरोषाक्षो[13] राक्षसस्य तमायसम् । दूरस्थितस्य परिघं रविरश्मिसमप्रभम् ॥ १३ ॥
द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवत्[14] । महापार्श्वाय[15] चिक्षेप वधार्थं वालिनः सुतः ॥ १४ ॥

गो० टी०—अथ महापार्श्ववधः—महोदरे त्वित्यादि । महोदरे सुग्रीवेण निहत इत्यन्वयः ॥ १–७ ॥

२ ] ति० टी०—अङ्गदचमूं क्षोभयामास ॥ २ ॥

रा० टी०—स इति । स महापार्श्वः वानराणामुत्तमाङ्गानि शिरांसि कायेभ्यः पातयामास तत्र दृष्टान्तः अनिलः वृन्तात् प्रसवबन्धनात् फलमिव ॥ २ ॥

३–४ ] ति० टी०—वृन्तं प्रसवबन्धनम् ॥ ३ ॥ ४ ॥

रा० टी०—केषामिति । केषां चिद्वानराणां बाहून् चिच्छेद केषां चित् पार्श्वमाक्षिपत् ॥ ३ ॥

रा० टी०—ते इति । महापार्श्वेनार्दिताः अत एव विषादेन दुःखेन विमुखाः म्लानवदनाः सर्वे राक्षसाः गतचेतसो बभूवुः ४

५–६ ] ति० टी०—विषादेन विमुखाः ॥ ५ ॥ ६ ॥

रा० टी०—निशम्येति । अङ्गदः राक्षसार्दितं बलं निशम्य पर्वसु समुद्र इव वेगं चक्रे ॥ ५ ॥

रा० टी०—आयसमिति । वानरश्रेष्ठः परिघं गृह्य गृहीत्वा महापार्श्वे न्यपातयत् ॥ ६ ॥

७ ] ति० टी०—ससूतस्यन्दनात् । हतसूतसहितरथादित्यर्थः ॥ ७ ॥

रा० टी०—स इति । तेन प्रहारेण विचेतनश्चैतन्यरहितः अत एव विसंज्ञः विवेकरहितो महापार्श्वः ससूतस्यन्दनात् सूतसहितरथात् भुवि अपतत् ॥ ७ ॥

८ ] ति० टी०—ऋक्षराजो जाम्बवान् ॥ ८ ॥

९–१२ ] ति० टी०—गिरिशृङ्गाभां शिलां गृहीत्वाश्वाञ्जघान, अनन्तरं स्यन्दनं तं बभञ्ज ॥ ९—१२ ॥

रा० टी०—स इति । ऋक्षराजस्स जाम्बवान् स्वयूथात् निष्पत्य शिलां प्रगृह्य अश्वान् जघान स्यन्दनं बभञ्ज च अर्द्धचतुष्टयमेकान्वयि ॥ ८ ॥ ९ ॥

रा० टी०—मुहूर्त्तादिति । लब्धसंज्ञो महापार्श्वः अङ्गदं भूयः प्रत्यविध्यत ॥ १० ॥

गो० टी०—सर्क्षराजस्त्वित्यादि श्लोकद्वयमेकान्वयम् । ऋक्षराजः जाम्बवान् तेन सहितः सर्क्षराजः गवाक्षः । जाम्बवन्तं गवाक्षं चेत्युत्तरत्र वक्ष्यमाणत्वात् ॥ ८–१० ॥

रा० टी०—जाम्बवन्तमिति । जाम्बवन्तं त्रिभिर्बाणैः स्तनांतरे आजघान बहुभिश्शरैः गवाक्षं जघान च ॥ ११ ॥

रा० टी०—गवाक्षमिति । गवाक्षं जाम्बवन्तं च शरपीडितौ दृष्ट्वा अङ्गदः परिघं जग्राह ॥ १२ ॥

गो० टी०—जाम्बवन्तमिति । ऋक्षराजं जाम्बवन्तं त्रिभिर्बाणैराजघान । गवाक्षं च बहुभिः शरैर्जघानेत्यन्वयः ॥ ११ ॥ १२ ॥

१३–१४ ] ति० टी०—दूरस्थितस्य राक्षसस्य वधार्थं परिघं द्वाभ्यां भुजाभ्यां संगृह्य गृहीत्वा भ्रामयित्वा च महापार्श्वाय चिक्षेपेत्यन्वयः ॥ १३ ॥ १४ ॥

रा० टी०—तस्येति । वालिनस्सुतोऽङ्गदः तस्य महापार्श्वस्य परिघं द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वधार्थं महापार्श्वाय चिक्षेप अर्द्धचतुष्टयमेकान्वयि ॥ १३ ॥ १४ ॥

१ सायकैरिति गो. पाठः । २ सवंश इति गो. पाठः । ३ स्कंधांश्चिच्छेदेति गो. रा. पाठः । ४ क्रुद्ध इति गो.पाठः । ५ व्यदारयदिति गो.पाठः । ६ पर्वणीति.गो. पाठः ।७ ससूत इति गो.पाठः।८ सर्क्षराजस्त्विति गो.सऋक्षराज इति रा.पाठः।९ स्वानिति गो.पाठः।१० स्यन्दनं च बभंजेति गो.पाठः। ११ यदिति रा. पाठः । १२ जाम्बवन्तं गवाक्षं चेति गो. पाठः । १३ प्रकुपित इति गो.रा.पाठः ।१४ वेगवानिति गो.रा. पाठः। १५ पार्श्वस्येति गो.पाठः।

स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः । धनुश्च सशरं हस्ताच्छिरस्त्राणं च पातयत् ॥ १५ ॥
तं समासाद्य वेगेन वालिपुत्रः प्रतापवान् । तलेनाभ्यहनत्क्रुद्धः कर्णमूले सकुण्डले ॥ १६ ॥
स तु क्रुद्धो महावेगो महापार्श्वो महाद्युतिः । करेणैकेन जग्राह सुमहान्तं परश्वधम् ॥ १७ ॥
तं तैलधौतं विमलं शैलसारमयं दृढम् । राक्षसः परमक्रुद्धो वालिपुत्रे न्यपातयत् ॥ १८ ॥
तेन वामांसफलके भृशं प्रत्यवपातितम् । अङ्गदो मोक्षयामास सरोषः सपरश्वधम् ॥ १९ ॥
स वीरो वज्रसंकाशमङ्गदो मुष्टिमात्मनः । संवर्तयत्सुसंक्रुद्धः पितुस्तुल्यपराक्रमः ॥ २० ॥
राक्षसस्य स्तनाभ्याशे मर्मज्ञो हृदयं प्रति । इन्द्राशनिसमस्पर्शं स मुष्टिं विन्यपातयत् ॥ २१ ॥
तेन तस्य निपातेन राक्षसस्य महामृधे । पफाल हृदयं चास्य स पपात हतो भुवि ॥ २२ ॥
तस्मिन्विनिहते भूमौ तत्सैन्यं संप्रचुक्षुभे । अभवच्च महान्क्रोधः समरे रावणस्य तु ॥ २३ ॥
वानराणां प्रहृष्टानां सिंहनादः सुपुष्कलः । स्फोटयन्निव शब्देन लङ्कां साट्टालगोपुराम् ॥
महेन्द्रेणेव देवानां नादः समभवन्महान् ॥ २४ ॥

अथेन्द्रशत्रुस्त्रिदशालयानां वनौकसां चैव महाप्रणादम् ।
श्रुत्वा सरोषं युधि राक्षसेन्द्रः पुनश्च युद्धाभिमुखोऽवतस्थे ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

---

गो० टी०—तस्याङ्गद इत्यादिश्लोकद्वयमेकान्वयम् । दूरस्थितस्य तस्य वधार्थमित्यन्वयः १३–१७ ॥

१५–१७ ] ति० टी०—तस्य रक्षसो हस्तात्सशरं धनुः । चादेकं हस्तं शिरस्त्राणं चापातयत् । अत एवाग्रे वक्ष्यति—एकेन करेणेति ॥ १५–१७ ॥

रा० टी०—स इति । बलवताङ्गदेन क्षिप्तः परिघः सशरं धनुः हस्तात् अपातयत् शिरस्त्राणं च अपातयत् ॥ १५ ॥

रा० टी०—तमिति । वालिपुत्रः तं महापार्श्वमासाद्य तलेन सकुण्डले कर्णमूले अभ्यहनत् अभ्यहन् ॥ १६ ॥

रा० टी०—स इति । महापार्श्वः परश्वधं जग्राह ॥ १७ ॥

१८ ] ति० टी०—तैलधौतं तेनातितीक्ष्णम् । शैलसारोऽयस्तन्मयम् ॥ १८ ॥

रा० टी०—तमिति । तैलेन धौतं तैक्ष्ण्यार्थं संस्कृतं शैलसारो लोहस्तन्मयं तं परश्वधं राक्षसो महापार्श्वः वालिपुत्रे न्यपातयत् ॥ १८ ॥

गो० टी०—तमिति । तैलधौतं प्रतिदिनं तैलसेचनानिष्कल्मषम्, शैलसारमयं तद्वत्कठिनमित्यर्थः । दृढम् अशिथिलम् ॥ १८ ॥ १९ ॥

१९ ] ति० टी०—मोक्षयामास मोघीचकार ॥ १९ ॥

रा० टी०—तेनेति । तेन महापार्श्वेन वामांसफलके प्रत्यवपातितं परश्वधमङ्गदो मोक्षयामास निष्फलं चकार ॥ १९ ॥

२०–२१ ] ति० टी०—संवर्तयत्समवर्तयत् । बबन्धेत्यर्थः ॥ २० ॥ २१ ॥

रा० टी०—स इति । अङ्गदः वज्रसंकाशमात्मनो मुष्टिं संवर्तयत् समवर्तयत् ॥ २० ॥

रा० टी०—राक्षसस्येति । सोऽङ्गदः राक्षसस्य स्तनयोरभ्यासे समीपे हृदयं प्रतिमुष्टिं विन्यपातयत् ॥ २१ ॥

गो० टी०—स वीर इति । आत्मन इत्यस्य पितुस्तुल्यपराक्रम इत्यनेन संबन्धः । संवर्तयत् समवर्तयत् भ्रामयामासेत्यर्थः ॥ २०–२३ ॥

२२–२३ ] ति० टी०—पफाल विशीर्णम् ॥ २२ ॥ २३ ॥

रा० टी०—तेनेति । निपातेन निपातितेन तेन मुष्टिना राक्षसस्य हृदयं पफाल अत एव महापार्श्वो भुवि पपात ॥ २२ ॥

रा० टी०—तस्मिन्निति । तस्मिन् महापार्श्वे भूमौ विनिहते सति तत्सैन्यं संप्रचुक्षुभे रावणस्य तु महान् क्रोधोऽभवत् ॥ २३ ॥

२४–२५ ] ति० टी०—वानराणां सिंहनादो लङ्कां स्फोटयन्निव विदारयन्निव । उदभूदिति शेषः । इन्द्रेण सह देवानामिवाङ्गदेन सह वानराणां सिंहनादः समभवत् ॥ २४ ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

रा० टी०—वानराणामिति । इन्द्रेण सह देवानां नाद इव अङ्गदेन सह वानराणां सिंहनादः लङ्कां स्फोटयन्निव पुष्कलो महानभवत् ॥ २४ ॥

रा० टी०—अथेति । राक्षसेन्द्रः त्रिदशालयानां वनौकसां च महाप्रणादं श्रुत्वा युद्धाभिमुखस्सन् अवतस्थे ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

---

१ शिरस्त्रं चाप्यपातयदिति गो. शिरस्त्राणमपातयदिति रा. पाठः । २ पादितमिति गो.पाठः । ३ चैत गो. पाठः । ४ महेन्द्रेणेति गो. रा. पाठः ।

## नवनवतितमः सर्गः ।

महोदरादीनां निधनं वीक्ष्याविषह्यमन्युमत एव विरिंचिनिर्मितदारुणतामसास्त्रयोगपरायत्तीकृतवानरबलं दशमुखं दाशरथिर्निरुध्य तेन चिरमदृष्टपूर्वं युद्धा तत्प्रेरितमासुरास्त्रं पावकास्त्रेण निरस्य स्वबलमानन्दितवान् ।

महोदरमहापार्श्वौ हतौ दृष्ट्वा स रावणः । तस्मिंश्च निहते वीरे विरूपाक्षे महाबले ॥ १ ॥
आविवेश महान्क्रोधो रावणं तु महामृधे । सूतं संचोदयामास वाक्यं चेदमुवाच ह ॥ २ ॥
निहतानाममात्यानां रुद्धस्य नगरस्य च । दुःखमेवापनेष्यामि हत्वा तौ रामलक्ष्मणौ ॥ ३ ॥
रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् । प्रशाखा यस्य सुग्रीवो जाम्बवान्कुमुदो नलः॥ ४ ॥
द्विविदश्चैव मैन्दश्च अङ्गदो गन्धमादनः । हनूमांश्च सुषेणश्च सर्वे च हरियूथपाः ॥ ५ ॥
स दिशो दश घोषेण रथस्यातिरथो महान् । नादयन्प्रययौ तूर्णं राघवं चाभ्यधावत ॥ ६ ॥
पूरिता तेन शब्देन सनदीगिरिकानना । संचचाल मही सर्वा त्रस्तसिंहमृगद्विजा ॥ ७ ॥
तामसं सुमहाघोरं चकारास्त्रं सुदारुणम् । निर्ददाह कपीन्सर्वांस्ते प्रपेतुः समन्ततः ॥ ८ ॥
उत्पपात रजो भूमौ तैर्भग्नैः संप्रधावितैः । नहि तत्सहितुं शेकुर्ब्रह्मणा निर्मितं स्वयम् ॥ ९ ॥
तान्यनीकान्यनेकानि रावणस्य शरोत्तमैः । दृष्ट्वा भग्नानि शतशो राघवः पर्यवस्थितः ॥ १० ॥
ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम् । स ददर्श ततो रामं तिष्ठन्तमपराजितम् ॥ ११ ॥
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा । आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः ॥ १२ ॥
पद्मपत्रविशालाक्षं दीर्घबाहुमरिंदमम् । ततो रामो महातेजाः सौमित्रिसहितो बली ॥ १३ ॥
वानरांश्च रणे भग्नानापतन्तं च रावणम् । समीक्ष्य राघवो हृष्टो मध्ये जग्राह कार्मुकम् ॥ १४ ॥
विस्फारयितुमारेभे ततः स धनुरुत्तमम् । महावेगं महानादं निर्भिन्दन्निव मेदिनीम् ॥ १५ ॥

---

गो० टी०–वानराणामित्यादि । स्फोटयन् दलयन् । वानराणां च सिंहनादः समभवत् । महेन्द्रेण सह देवानां नाद इव वानराणां च देवानां च नादः समभवदित्यर्थः । एतच्चानन्तरश्लोके स्फुटीभविष्यति ॥ २४–२६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

१–२ ] ति० टी०–महोदरेति । हतौ दृष्ट्वा स रावणः । क्रुद्धो जात इति शेषः ॥ १ ॥ २ ॥

रा० टी०–रावणस्यैव युद्धमाह–महोदरेत्यादिभिः । विरूपाक्षे हते सति महोदरमहापार्श्वौ हतौ दृष्ट्वा विद्यमानो यो रावणः तं रावणं महान् क्रोध आविवेश अत एव रथं संचोदयामास उवाच च श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–अथ रामरावणयुद्धारम्भः शततमे–महोदरेत्यादि । तस्मिन् विरूपाक्षे निहते सति पश्चान्महोदरमहापार्श्वौ हता दृष्ट्वा स्थितमिति शेषः ॥ १–८ ॥

३ ] ति० टी०–रुद्धस्य नगरस्य । वानरबलैरिति शेषः । दुःखमपनेष्याम्येव ॥ ३ ॥

रा० टी०–तद्वाक्याकारमाह–निहतानामित्यादिभिः । अमात्यानां नगरस्य च दुःखमपनेष्याम्येव ॥ ३ ॥

४–५ ] ति० टी०–मूलोच्छेदं करिष्यामीत्याशयेन रामं सर्वाश्रयमहावृक्षत्वेन निरूपयति–रामवृक्षमिति । सीता पुष्पं यस्य सः, स चासौ तेनैव पुष्पेण सर्वेषां वानराणां तत्तत्कर्मजफलप्रदस्तम्, सुग्रीवादयः प्रशाखा यस्य तम् । प्रशाखासहितं हन्मीति शेषः ॥ ४ ॥ ५ ॥

रा० टी०–तत्प्रकारमाह–रामेति । सीतारूपपुष्पेण फलं प्रददाति सुग्रीवादयो यस्य शाखाः तं रामवृक्षं रणे हन्मि श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

६–७ ] ति० टी०–इत्युक्त्वा रथस्य घोषेण दश दिशो नादयन् ॥ ६ ॥ ७ ॥

रा० टी०–स इति । स रावणः रथस्य घोषेण दश दिशो नादयन् सन् प्रययौ राघवमभ्यधावत च ॥ ६ ॥

रा० टी०–पूरितेति । तेन रथजनितेन शब्देन पूरिता सर्वा मही संचचाल ॥ ७ ॥

८ ] ति० टी०–तामसमस्त्रं तमोग्रहदेवताकमस्त्रम् ॥ ८ ॥

रा० टी०–तामसमिति । तामसं राहुदेवताकमस्त्रं चकार अत एव कपीन् निर्ददाह अत एव ते कपयः प्रपेतुः ॥ ८ ॥

९–१३ ] ति० टी०–ब्रह्मणा स्वयं निर्मितं तामसमस्त्रं सहितुं सोढुं न शेकुः ॥ ९–१३ ॥

१४–१५ ] ति० टी०–राघवो हृष्टः । एकः शिष्टः शत्रुः दृग्गोचरं प्राप्त इति हर्षः ॥ १४ ॥ १५ ॥

---

१ तु राक्षसाविति गो. पाठः । २ तस्मिंत गो. पाठः । ३ एष इति गो. एक इति रा. पाठ. । ४ मैन्दश्च द्विविदश्चैवेति गो. रा. पाठः । ५ ह्यङ्गद इति गो. पाठः । ६ अवर्तततेति गो. पाठः । ७ सवराहमृगद्विपेति गो. रा. पाठः । ८ घोरमिति गो. रा. पाठः ।

रावणस्य च बाणौघै रामविस्फारितेन च । शब्देन राक्षसास्तेन पेतुश्च शतशस्तदा ॥ १६ ॥
तयोः शरपथं प्राप्य रावणो राजपुत्रयोः । स बभौ च यथा राहुः समीपे शशिसूर्ययोः ॥ १७ ॥
तमिच्छन्प्रथमं योद्धुं लक्ष्मणो निशितैः शरैः । मुमोच धनुरायम्य शरानग्निशिखोपमान् ॥ १८ ॥
तान्मुक्तमात्रानाकाशे लक्ष्मणेन धनुष्मता । बाणान्बाणैर्महातेजा रावणः प्रत्यवारयत् ॥ १९ ॥
एकमेकेन बाणेन त्रिभिस्त्रीन्दशभिर्दश । लक्ष्मणस्य प्रचिच्छेद दर्शयन्पाणिलाघवम् ॥ २० ॥
अभ्यतिक्रम्य सौमित्रिं रावणः समितिंजयः । आससाद रणे रामं स्थितं शैलमिवापरम् ॥ २१ ॥
स राघवं समासाद्य क्रोधसंरक्तलोचनः । व्यसृजच्छरवर्षाणि रावणो राक्षसेश्वरः ॥ २२ ॥
शरधारास्ततो रामो रावणस्य धनुश्च्युताः । दृष्ट्वैवापतिताः शीघ्रं भल्लाञ्जग्राह सत्वरम् ॥ २३ ॥
ताञ्छरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः । दीप्यमानान्महाघोराञ्छरानाशीविषोपमान् ॥ २४ ॥
राघवो रावणं तूर्णं रावणो राघवं तथा । अन्योन्यं विविधैस्तीक्ष्णैः शरवर्षैर्ववर्षतुः ॥ २५ ॥

रा० टी०–उत्पपातेति । भग्नैः अङ्गभङ्गं प्राप्तैस्संप्रधावितैस्तैर्वानरैः महत् रजः उत्पपात हि यतः ब्रह्मणा स्वयं निर्मितं तदस्त्रं सहितुं न शेकुः ॥ ९ ॥

रा० टी०–तानीति । रावणस्य शतशः भग्नान्यनेकान्यनीकानि दृष्ट्वा राघवः पर्यवस्थितः युद्धायोद्युक्तोऽभवदिति शेषः ॥ १० ॥

गो० टी०–उत्पपातेति । सहितुं सोढुम् । *आर्ष इडागमः ॥ ९ ॥ १० ॥

रा० टी०–तत इति । स रावणो विष्णुनोपेन्द्रेण वासवमिव लक्ष्मणेन सह तिष्ठन्तं महद्धनुरवष्टभ्य आकाशमालिखन्तमिव दीर्घबाहुं रामं ददर्श सार्द्धश्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०–तत इत्यादिसार्धश्लोकद्वयेन रामस्यापराजितत्वं, निरवधिकसौन्दर्यनिधित्वेन वैरं विहाय निरन्तरानुभाव्यत्वं, रावणस्य दुर्बुद्धित्वम्, अमृतप्रवाहमावर्तेनेव महता धनुर्वरेणावर्तितं श्रीरामदेहलावण्यामृतपूरमनवगाहमानस्य तस्य दौर्भाग्यं चोच्यते ॥ ११ ॥ १२ ॥

रा० टी०–तत इति । भग्नान् वानरान् आपतन्तं रावणं च समीक्ष्य हृष्टो महायुद्धं द्रक्ष्यामीति बुद्धया प्राप्तहर्ष इत्यर्थः रामः कार्मुकं मध्ये जग्राह सार्द्धश्लोक एकान्वयी ॥ १३॥१४॥

रा० टी०–विस्फारयितुमिति । स रामः मेदिनीं निर्भिन्दन्निव महानादं धनुर्विस्फारयितुमारेभे ॥ १५ ॥

गो०टी०–ततो राम इत्यादिसार्धश्लोक एकान्वयः । हृष्टः चिराद्वैरी समागत इति संतुष्टः कार्मुकं जग्राह । विस्फारयितुमारेभे इत्यादि विलम्बोक्त्या किमिदानीमपि वा नतो भविष्यति रावण इति रामस्य दयालुतोच्यते ॥ १३–१५ ॥

१६ ] ति० टी०–राघवबाणौघै रामविस्फारितेन च यः शब्दस्तेन पेतुः ॥ १६ ॥

रा० टी०–रावणस्येति । रावणस्य बाणौघैः रामविस्फारितेन जातेन शब्देन शतशस्ते राक्षसाः पेतुः ॥ १६ ॥

गो० टी०–रावणस्येति । रावणस्य बाणौघैः रामविस्फारितेन च जातेन शब्देनेत्यर्थः ॥ १६ ॥

१७–२० ] ति० टी०–स रावणो राजपुत्रयोः समीपं प्राप्य चन्द्रसूर्ययोः समीपे राहुर्यथा बभौ ॥ १७—२० ॥

रा० टी०–तयोरिति । तयोः रामलक्ष्मणयोश्शरपथं प्राप्य शशिसूर्ययोस्समीपं राहुरिव स रावणो बभौ ॥ १७ ॥

रा० टी०–तमिति । शरैरुपलक्षितः प्रथमं योद्धुमिच्छन् लक्ष्मणः धनुरायम्य शरान् मुमोच ॥ १८ ॥

रा० टी०–तानिति । लक्ष्मणेन मुक्तमात्रान् बाणान् रावणो बाणैः प्रत्यवारयत् ॥ १९ ॥

रा० टी०–एकमिति । लक्ष्मणस्य एकं बाणमेकेन बाणेन त्रीन् त्रिभिः दश दशभिः प्रचिच्छेद रावण इति शेषः ॥ २० ॥

गो० टी०–तयोरिति । शशिसूर्ययोरिति । अमायामिति शेषः ॥ १७–२० ॥

२१–२४ ] ति० टी०–अभ्यतिक्रम्य बाणैर्व्याकुलीकृत्य शैलमिव स्थिरमचलं राममाससाद ॥ २१—२४ ॥

रा० टी०–पुनरिति । लक्ष्मणः पुनश्शरवर्षेण तस्य शर, प्रक्षेपमिति शेषः वारयत् अवारयत् अर्थम्–अभीति । रावणः सौमित्रिमभ्यतिक्रम्य त्यक्त्वा राममाससाद ॥ २१ ॥

रा० टी०–स इति । रावणः राघवं रामं समासाद्य शरवर्षाणि व्यसृजत् ॥ २२ ॥

रा० टी०–शरेति । रामो धनुश्च्युताः अत एव आपतिताः शरधारा दृष्ट्वा भल्लं जग्राह ॥ २३ ॥

रा० टी०–तानिति । राघवः दीप्यमानान् शरौघान् चिच्छेद ॥ २४ ॥

गो० टी०–अभ्यातिक्रम्येति । अभ्यतिक्रम्य एकस्यापि बाणस्य स्वस्मिन्नपतनादनादरेणातिक्रम्य ॥ २१–२६ ॥

२५ ] ति० टी०–राघवो रावणं रावणो राघवमित्यन्योन्यं शरवर्षैर्ववर्षतुर्वेष्टपतुः ॥ २५ ॥

१ ते चेति गो. पा. । २ प्राप्त इति गो.पा. । ३ तत इति गो.रा.पाठः । ४ अचलमिति गो. पा. । ५ संख्ये राममिति गो. पा. । ६ राघवोपरीति गो. रा.पा. । ७ आपतत इति गो.पा. । ८ क्रुद्धानाशीविषानिवेति गो.पाठः । ९ शरैरभीति गो.पाठः । * इदं चिन्त्यं तीषसहेति विकल्पेनेडागमविधानात् ।

चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् । बाणवेगात्समुत्क्षिप्तावन्योन्यमपराजितौ ॥ २६ ॥
तयोर्भूतानि वित्रेसुर्युगपत्संप्रयुध्यतोः । रौद्रयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ २७ ॥
सततं विविधैर्बाणैर्बभूव गगनं तदा । घनैरिवातपापाये विद्युन्मालासमाकुलैः ॥ २८ ॥
गवाक्षितमिवाकाशं बभूव शरवृष्टिभिः । महावेगैः सुतीक्ष्णाग्रैर्गृध्रपत्रैः सुवाजितैः ॥ २९ ॥
शरान्धकारमाकाशं चक्रतुः प्रथमं तदा । गतेऽस्तं तपने चापि महामेघाविवोत्थितौ ॥ ३० ॥
तयोरभून्महायुद्धमन्योन्यवधकाङ्क्षिणोः । अनासाद्यमचिन्त्यं च वृत्रवासवयोरिव ॥ ३१ ॥
उभौ हि परमेष्वासावुभौ युद्धविशारदौ । उभावस्त्रविदां मुख्यावुभौ युद्धे विचेरतुः ॥ ३२ ॥
उभौ हि येन व्रजतस्तेन तेन शरोर्मयः । ऊर्मयो वायुना विद्धा जग्मुः सागरयोरिव ॥ ३३ ॥
ततः संसक्तहस्तस्तु रावणो लोकरावणः । नाराचमालां रामस्य ललाटे प्रत्यमुञ्चत ॥ ३४ ॥
रौद्रचापप्रयुक्तां तां नीलोत्पलदलप्रभाम् । शिरसाधारयद्रामो न व्यथामभ्यपद्यत ॥ ३५ ॥
अथ मन्त्रानपि जपन्रौद्रमस्त्रमुदीरयन् । शरान्भूयः समादाय रामः क्रोधसमन्वितः ॥ ३६ ॥

---

रा० टी०—राघव इति । शरवर्षैरन्योन्यं ववर्षतुः वद्धषतुः ॥ २५ ॥

२६ ] ति० टी०—अन्योन्यं बाणवेगात्समुत्क्षिप्तावन्योन्यं क्षिप्तवन्तौ । अपराजितावप्रतिहतौ ॥ २६ ॥

रा० टी०—चेरतुरिति । बाणवेगौ परिक्षिप्तौ दूरीकृतौ याभ्यामत एव अन्योन्यमपराजितौ रामरावणौ सव्यदक्षिणं मण्डलं चेरतुः ॥ २६ ॥

२७ ] ति० टी०—सायकं मुञ्चत इति सायकमुचौ तयोः २७

रा० टी०—तयोरिति । यमांतकनिकाशयोः तयोः रामरावणयोः संप्रयुध्यतोः सतोः भूतानि युगपत् वित्रेसुः ॥ २७ ॥

गो० टी०—तयोरिति । यमान्तकनिकाशयोः यमतदन्तकौ यमरुद्रौ तत्तुल्ययोः ॥ २७ ॥

२८ ] ति० टी०—सततं व्याप्तम् ॥ २८ ॥

रा० टी०—सन्ततमिति । आतपापाये विद्युन्मालासमाकुलैः घनैरिव विविधैर्बाणैस्सन्ततं व्याप्तं गगनं बभूव ॥ २८ ॥

गो० टी०—संततमिति । गगनं संततं निबिडं बभूवेत्यन्वयः ॥ २८ ॥

२९ ] ति० टी०—गवाक्षितमिव संजातगवाक्षमिव । गृध्रपत्रैस्तद्बन्धनैः । सुवाजितैः सम्यक्संपादितवेगैः । आर्षं पुंस्त्वम् । शरवृष्टिविशेषणत्वात् ॥ २९ ॥

रा० टी०—गवाक्षितमिति । गृध्रपत्रैः तद्बन्धनविशिष्टैः महावेगैः अत एव सुवाजितैः अतिगमनवद्भिः शरवृष्टिभिराकाशं गवाक्षितं सञ्जातगवाक्षमिव बभूव महावेगैरित्यादौ पुंस्त्वमार्षम् ॥ २९ ॥

गो० टी०—गवाक्षितमित्यर्धम् । गवाक्षितं संजातगवाक्षम् ॥ २९ ॥

गो० टी०—महावेगैरित्यादिसार्धश्लोक एकान्वयः । गृध्रपत्रैः हेतुभिः, सुवाजितैः संजातशोभनपक्षैः । बाणैरिति शेषः ॥ ३० ॥

३०–३२ ] ति० टी०—तपने सूर्येऽस्तं गते च । अपिशब्दादस्ताचलं त्यक्त्वोदयाद्रिं गतेऽपीत्यर्थः । दिवापीति यावत् । यत्तु यथाश्रुतरीत्या रात्रावपीति व्याचक्षते तत्र न कश्चिच्चमत्कारः ॥ ३०—३२ ॥

रा० टी०—शरेति । तपने सूर्ये अस्तं गते सति महामेघाविवोत्थितौ रामरावणौ आकाशं शरान्धकारं चक्रतुः ॥ ३० ॥

रा० टी०—तयोरिति । तयोः रामरावणयोर्युद्धमनासाद्यमन्यैः कर्तुमशक्यं वृत्रवासवयोर्युद्धमिव अचिन्त्यं बभूव ॥ ३१ ॥

रा० टी०—उभाविति । युद्धे विचेरतुः ॥ ३२ ॥

गो० टी०—बभूवेति । अनासाद्यम् इतः पूर्वं केनापि दुर्लभम् । अचिन्त्यं रावणस्यैवं भविष्यतीति चिन्तानर्हम् ३१॥३२

३३ ] ति० टी०—येन व्रजतः । येन येन मण्डलचारेणेत्यर्थः ॥ ३३ ॥

रा० टी०—उभाविति । येन येन पथा उभौ व्रजतः तेन तेन पथा वायुना विद्धाः सागरयोरूर्मय इव शरोर्मयो जग्मुः ३३

गो० टी०—उभाविति । येन येन मण्डलचारेण ॥ ३३ ॥

३४–३५ ] ति० टी०—संसक्तहस्तो बाणप्रयोग आसक्तहस्तः ॥ ३४ ॥ ३५ ॥

रा० टी०—तत इति । संसक्तहस्तः बाणप्रयोगे आसक्तकरो रावणः रामस्य ललाटे नाराचमालां प्रत्यमुञ्चत ॥ ३४ ॥

रा० टी०—रौद्रेति । रौद्रचापप्रयुक्ताम् तां नाराचमालां शिरसा धारयन् रामः व्यथां न प्रत्यपद्यत ॥ ३५ ॥

गो० टी०—तत इति । संसक्तहस्तः बाणप्रयोगासक्तहस्तः ॥ ३४ ॥ ३५ ॥

३६ ] ति० टी०—उदीरयन्प्रवर्तयन् ॥ ३६ ॥

रा० टी०—अथेति । मंत्रान् जपन् रौद्रमस्त्रमुदीरयंश्च रामश्शरान् समादाय चापमायम्य मुमोच सार्धश्लोक एकान्वयी ॥ ३६ ॥

---

१ कारं तौ भीमामिति गो. कारं तौ वीराविति रा. पा. । २ समरामिति गो. परममिति रा. पाठः । ३ बभूव तुमुलमिति गो. पाठः । ४ शक्तेति गो. पाठः । ५ अभीति गो. पाठः ।

मुमोच च महातेजाश्चापमायम्य वीर्यवान् । तान्शरान्राक्षसेन्द्राय चिक्षेपाच्छिन्नसायकः॥ ३७ ॥
ते महामेघसंकाशे कवचे पतिताः शराः । अवध्ये राक्षसेन्द्रस्य न व्यथां जनयंस्तदा ॥ ३८ ॥
पुनरेवाथ तं रामो रथस्थं राक्षसाधिपम् । ललाटे परमास्त्रेण सर्वास्त्रकुशलोऽभिनत् ॥ ३९ ॥
ते भित्त्वा बाणरूपाणि पञ्चशीर्षा इवोरगाः । श्वसन्तो विविशुर्भूमिं रावणप्रतिकूलिताः ॥ ४० ॥
निहत्य राघवस्यास्त्रं रावणः क्रोधमूर्च्छितः । आसुरं सुमहाघोरमन्यदस्त्रं चकार सः ॥ ४१ ॥
सिंहव्याघ्रमुखांश्चापि कङ्ककोकमुखानपि । गृध्रश्येनमुखांश्चापि शृगालवदनांस्तथा ॥ ४२ ॥
ईहामृगमुखांश्चापि व्यादितास्यान्भयावहान् । पञ्चास्याल्लेलिहानांश्च ससर्ज निशिताञ्शरान् ४३ ॥
शरान्खरमुखांश्चान्यान्वराहमुखसंश्रितान् । श्वानकुक्कुटवक्त्रांश्च मकराशीविषाननान् ॥ ४४ ॥
एतांश्चान्यांश्च मायाभिः ससर्ज निशिताञ्छरान् । रामं प्रति महातेजाः क्रुद्धः सर्प इव श्वसन् ॥ ४५ ॥
आसुरेण समाविष्टः सोऽस्त्रेण रघुपुंगवः । ससर्जास्त्रं महोत्साहं पावकं पावकोपमः ॥ ४६ ॥
अग्निदीप्तमुखान्बाणांस्तत्र सूर्यमुखानपि । चन्द्रार्धचन्द्रवक्त्रांश्च धूमकेतुमुखानपि ॥
ग्रहनक्षत्रवर्णांश्च महोल्कामुखसंस्थितान् । ॥ ४७ ॥

गो० टी०–अथेत्यादि । शरान् रौद्रास्त्रप्रपञ्चरूपान् बाणान्, मुमोचेत्यन्वयः । मुमोच च महातेजाश्चापमायम्य वीर्यवानिति पाठः । तदनन्तरं, ते महामेघसंकाश इति श्लोकः । तदनन्तरं, पुनरेवेति श्लोकः । तदनन्तरं, ते भित्त्वेति श्लोकात्पूर्वं ग्रन्थपतनमस्ति तदन्वेष्टव्यम् ॥ ३६ ॥

३७ ] ति० टी०–अच्छिन्नसायकोऽव्यवच्छिन्नसायकः । निरन्तरप्रवर्तितबाणवर्ष इति यावत् ॥ ३७ ॥

३८ ] ति० टी०–अवध्येऽभेद्ये । जनयन्नजनयन् ॥ ३८ ॥

रा० टी०–ते इति । राक्षसेन्द्रस्य कवचे पतितास्शराः व्यथां न जनयन् अजनयन् ॥ ३७ ॥

गो० टी०–त इति । अवध्ये अभेद्ये । व्यथां न जनयन् नाजनयन् ॥ ३७ ॥

३९ ] ति० टी०–परमास्त्रेणेष्टास्त्रेण योजितैर्बाणैरभिनत् ३९

रा० टी०–पुनरिति । रामः परमास्त्रेण रावणं ललाटे ऽभिनत् ॥ ३८ ॥

गो० टी०–पुनरेवेति । ललाटे विषये ललाटमुद्दिश्ये-त्यर्थः । यद्वा परमास्त्राणि विव्याधेति शेषः ॥ ३८ ॥

४० ] ति० टी०–बाणरूपाणि । प्रशंसायां रूपप् । प्रशस्ता बाणाः आर्षो लिङ्गव्यत्ययः रावणप्रतिकूलिता रावणेन निवारिता अपि श्वसन्तः पञ्चशीर्षा उरगा एव भूमिं विविशुः ॥ ४० ॥

रा० टी०–ते इति । ते बाणरूपाणि प्रशस्तबाणाः प्रशंसायां रूपप् लिंगव्यत्यय आर्षः रावणप्रतिकूलिताः रावणेन निवारिताः अत एव पञ्चशीर्षा उरगा इव श्वसन्तस्सन्तः भूमिं विविशुः ॥ ३९ ॥

गो० टी०–त इति । ते अस्त्रविकृतिरूपाः शराः, बाणरूपाणि रावणास्त्राणि भित्त्वा, रावणप्रतिकूलिताः रावणेन निवारिताः सन्तः, भूमिं विविशुः ॥ ३९ ॥ ४० ॥

४१-४२ ] ति० टी०–चकार प्रादुश्चकार ॥ ४१ ॥ ४२ ॥

रा० टी०–निहत्येति । रावणः अन्यत् महाघोरमस्त्रं चकार चिक्षेप ॥ ४० ॥

४३-४४ ] ति० टी०–ईहामृगो वृकः । पञ्चास्यान्सिंहमुखान् ॥ ४३ ॥ ४४ ॥

४५ ] ति० टी०–यदासुरमस्त्रं प्रादुश्चकार तदा ससर्जेत्यन्वयः ॥ ४५ ॥

रा० टी०–अस्त्राकारं बोधयन्नाह—सिंहेति । सिंहव्याघ्रमुखादीन् शरान् ससर्ज अर्द्धचतुष्टयमेकान्वयि ॥ ४१ ॥ ४२ ॥

रा० टी०–शरानिति । एतान् खरमुखादीन् अन्यांश्च शरान् मायाभिः रामं प्रति ससर्ज अर्द्धचतुष्टयमेकान्वयि ४३ ॥ ४४

गो० टी०–आसुरास्त्रं प्रपञ्चयति—सिंहेत्यादिश्लोकचतुष्टयेन । लेलिहानान् सर्पान् । तदाकारानिति यावत् । श्वानशब्दोप्यस्ति । मकराशीविषाननानित्यत्र आशीविषशब्दः पञ्चास्यसर्पेतरसर्पपरः ॥ ४१-४५ ॥

४६ ] ति० टी०–तमोऽस्य प्रत्यस्त्रं पावकमिति तत्ससर्जेत्याह—पावकमिति ॥ ४६ ॥

रा० टी०–आसुरेणेति । आसुरेण अस्त्रेण समाविष्टः संयोजितः स रामः पावकमस्त्रं ससर्ज ॥ ४६ ॥

गो० टी०–आसुरेणेति । पावकं पावकसंबन्धि ॥ ४६ ॥

४७ ] ति० टी०–ततोऽखिलज्योतिर्गणमुखबाणोत्पत्तिरित्याह—अग्निदीप्तमुखानिति ॥ ४७ ॥

१ इदमर्धं गो. रा. पुस्तकयोर्नास्ति । २ पतिता इति गो. पा. । ३ रणे इति गो. पा. । ४ अस्त्रं प्रादुश्चकार इति गो. रा. पा. । ५ काकेति गो. काकेति रा. पाठः । ६ अन्यानिति गो. पाठः । ७ भयानकानिति गो. महाभयानिति रा. पा. । ८ स्थितानिति गो. सुतानिति रा. पाठः । ९ अन्यान्तेनि गो. रा. पाठः । १० मायाभिने गो. विविधानिति रा. पा. । ११ नन्दन इति गो. पाठः । १२ उत्साह इति गो. पाठः । १३ तथेति गो. पाठः । १४ इदमर्धमधिकं गो. रा. पुस्तकयोः । १५ वक्त्रानिति गो. पाठः ।

विद्युज्जिह्वोपमांश्चापि ससर्ज विविधाञ्छरान् । ते रावणशरा घोरा राघवास्त्रसमाहताः ॥ ४८ ॥
विलयं जग्मुराकाशे जघ्नुश्चैव सहस्रशः । तदस्त्रं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ४९ ॥
हृष्टा नेदुस्ततः सर्वे कपयः कामरूपिणः । सुग्रीवाभिमुखा वीराः संपरिक्षिप्य राघवम् ॥ ५० ॥
ततस्तदस्त्रं विनिहत्य राघवः प्रसह्य तद्रावणबाहुनिःसृतम् ।
मुदान्वितो दाशरथिर्महात्मा विनेदुरुच्चैर्मुदिताः कपीश्वराः ॥ ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

## शततमः सर्गः ।

स्वास्त्रे मोघे मयविहितं रौद्रमस्त्रं रावणेन प्रयुक्तं रामो गंधर्वास्त्रेण निरास्थत् एवमस्त्रप्रत्यस्त्रेण युध्यमानयोस्तयोः सौमित्रिः सारथिं जघान ध्वजं धनुश्च चिच्छेद रावणस्य विभीषणस्तु हयान्हतवान् रावणस्तु विभीषणे रुष्टोऽपि तत्साहाय्यकारिणि लक्ष्मणे दारुणां शक्तिं मुमोच तया हतो लक्ष्मणो विसंज्ञो भुवि पपात तेन रामो दशास्येन रुष्टो युयुधे च ।

तस्मिन्प्रतिहतेऽस्त्रे तु रावणो राक्षसाधिपः । क्रोधं च द्विगुणं चक्रे क्रोधाच्चास्त्रमनन्तरम् ॥ १ ॥
मयेन विहितं रौद्रमन्यदस्त्रं महाद्युतिः । उत्स्रष्टुं रावणो भीमं राघवाय प्रचक्रमे ॥ २ ॥
ततः शूलानि निश्चेरुर्गदाश्च मुसलानि च । कार्मुकाद्दीप्यमानानि वज्रसाराणि सर्वशः ॥ ३ ॥
मुद्गराः कूटपाशाश्च दीप्ताश्चाशनयस्तथा । निष्पेतुर्विविधास्तीक्ष्णा वाता इव युगक्षये ॥ ४ ॥
तदस्त्रं राघवः श्रीमानुत्तमास्त्रविदां वरः । जघान परमास्त्रेण गान्धर्वेण महाद्युतिः ॥ ५ ॥
तस्मिन्प्रतिहतेऽस्त्रे तु राघवेण महात्मना । रावणः क्रोधताम्राक्षः सौरमस्त्रमुदीरयत् ॥ ६ ॥
ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च । कार्मुकाद्भीमवेगस्य दशग्रीवस्य धीमतः ॥ ७ ॥
तैरासीद्गगनं दीप्तं संपतद्भिः समन्ततः । पतद्भिश्च दिशो दीप्तैश्चन्द्रसूर्यग्रहैरिव ॥ ८ ॥

---

रा० टी०—अग्नीति । अग्निदीप्तमुखादीन् शरान् ससर्ज रावण इति शेषः अर्द्धचतुष्टयमेकान्वयि ॥ ४६ ॥ ४७ ॥

गो० टी०—पावकास्त्रं प्रपञ्चयति—अग्नीत्यादिश्लोकद्वयेन । महोल्कामुखसंस्थितान् महोल्कामुखेन वर्तमानान् । विद्युज्जिह्वोपमान् विद्युदर्चिःसदृशान् । कणा जिह्वास्तथार्चिष इति हलायुधः ॥ ४६–५० ॥

४८ ] ति० टी०—विद्युज्जिह्वोपमान्विद्युदर्चिःसदृशान् । 'कणा जिह्वास्तथार्चिषः' इति हलायुधः ॥ ४८ ॥

रा० टी०—ते इति । ये सहस्रशो वानरान् जघ्नुः ते राघवास्त्रेण समाहताः रावणशराः आकाशे विलयं जग्मुः ॥ ४८

४९ ] ति० टी०—विलयं जग्मुस्तथापि सहस्रशो वानराञ्जघ्नुः ॥ ४९ ॥

रा० टी०—तदिति । रामेण निहतमस्त्रं दृष्ट्वा हृष्टाः कपयो राघवं संपरिक्षिप्य परिवृत्य नेदुः सार्द्धश्लोक एकान्वयी ४९ । ५०

५०–५१ ] ति० टी०—संपरिक्षिप्य परिवार्य ॥ ५० ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

रा० टी०—तत इति । राघवः तद्रावणबाहुनिस्सृतं तदस्त्रं विनिहत्य मुदान्वितो बभूवेति शेषः अत एव मुदिताः कपीश्वराः विनेदुः ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे शततमः सर्गः ॥ १०० ॥

गो० टी०—तत इति । तत् प्रसिद्धम् । मुदान्वितः बभूवेति शेषः ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने शततमः सर्गः ॥ १०० ॥

१ ] ति० टी-तस्मिन्प्रतिहते इति । क्रोधाच्चास्त्रमनन्तरम् चक्रे इति शेषः ॥ १ ॥

रा० टी०—रामरावणयोर्युद्धमेव वर्णयति—तस्मिन्नित्यादिभिः । तस्मिन्पूर्वोक्ते अस्त्रे प्रतिहते सति रावणः द्विगुणं क्रोधं चक्रे क्रोधादनंतरमस्त्रं द्विगुणं चक्रे ॥ १ ॥

गो० टी०—अथ लक्ष्मणस्य शक्त्या पतनम्—तस्मिन्नित्यादि । क्रोधाच्चास्त्रमनन्तरमित्यत्रापि चक्र इत्यनुषज्यते ॥ १ ॥

२–८ ] ति० टी०—तत्किमस्त्रं तत्राह—मयेनेति ॥ २–८ ॥

रा० टी०—मयेनेति । रावणः मयेन विहितमन्यदस्त्रं राघवाय उत्स्रष्टुं प्रचक्रमे ॥ २ ॥

---

१ अन्यानिति गो. पाठः । २ जग्मुरिति गो. पाठः ३ प्रेति गो. पाठः । ४ आहवे इति गो. पाठः । ५ घोरमिति गो. पाठः । ६ उदैरयदिति गो. पाठः । ७ इतस्तत इति गो. पाठः । ८ दीप्ता इति गो. पाठः ।

तानि चिच्छेद बाणौघैश्चक्राणि तु स राघवः। आयुधानि च चित्राणि रावणस्य चमूमुखे ॥ ९ ॥
तदस्त्रं तु हतं दृष्ट्वा रावणो राक्षसाधिपः। विव्याध दशभिर्बाणै रामं सर्वेषु मर्मसु ॥ १० ॥
स विद्धो दशभिर्बाणैर्महाकार्मुकनिःसृतैः। रावणेन महातेजा न प्राकम्पत राघवः ॥ ११ ॥
ततो विव्याध गात्रेषु सर्वेषु समितिंजयः। राघवस्तु सुसंक्रुद्धो रावणं बहुभिः शरैः ॥ १२ ॥
एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली। लक्ष्मणः सायकान्सप्त जग्राह परवीरहा ॥ १३ ॥
तैः सायकैर्महावेगै रावणस्य महाद्युतिः। ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद नैकधा ॥ १४ ॥
सारथेश्चापि बाणेन शिरो ज्वलितकुण्डलम्। जहार लक्ष्मणः श्रीमान्नैर्ऋतस्य महाबलः ॥ १५ ॥
तस्य बाणैश्च चिच्छेद धनुर्गजकरोपमम्। लक्ष्मणो राक्षसेन्द्रस्य पञ्चभिर्निशितैस्तदा ॥ १६ ॥
नीलमेघनिभांश्चास्य सदश्वान्पर्वतोपमान्। जघानाप्लुत्य गदया रावणस्य विभीषणः ॥ १७ ॥
हताश्वात्तु तदा वेगादवप्लुत्य महारथात्। कोपमाहारयत्तीव्रं भ्रातरं प्रति रावणः ॥ १८ ॥

गो० टी०—किं तदस्त्रमित्यपेक्षायामाह—मयेनेति। रौद्रं रुद्रदेवताकम् ॥ २ ॥

रा० टी०—तत इति। कार्मुकात् रावणचापात् शूलादीनि निश्चेरुः ॥ ३ ॥

रा० टी०—मुद्गरा इति। युगक्षये वाता इव मुद्गरादयो निष्पेतुः ॥ ४ ॥

रा० टी०—तदिति। उत्तमास्त्रविदां वरो राघवः गान्धर्वेण परमास्त्रेण तदस्त्रं जघान ॥ ५ ॥

रा० टी०—तस्मिन्निति। गान्धर्वेण तस्मिन्नस्त्रे प्रतिहते सति रावणोऽन्यदस्त्रमुदीरयत् प्रैरयत् ॥ ६ ॥

रा० टी०—तत इति। ततोऽनन्तरं दशग्रीवस्य कार्मुकात् महान्ति चक्राणि निष्पेतुः ॥ ७ ॥

गो० टी०—ततः शूलानीत्यादिश्लोकद्वयमेकान्वयम्। कूटपाशाः कपटपाशाः ॥ ३—७ ॥

रा० टी०—तैरिति। दिशः पतद्भिः चन्द्रसूर्यग्रहैरिव संपतद्भिस्तैश्चक्रैर्गगनं दीप्तमासीत् ॥ ८ ॥

गो० टी०—तैरिति। चन्द्रसूर्यग्रहैरिवेति। तत्समानाकारैरित्यर्थः ॥ ८—१० ॥

९-१३ ] ति० टी०—तानि मौरास्त्रनिःसृतचक्राणि। बाणबलादेव केवलं चिच्छेद न प्रत्यस्त्रमपेक्षते स्म ॥ ९—१३ ॥

रा० टी०—तानीति। चमूमुखे आगतानि रावणस्य यानि चक्राण्यायुधानि च तानि राघवश्चिच्छेद ॥ ९ ॥

रा० टी०—तदिति। रावणः तदस्त्रं निहतं दृष्ट्वा दशभिर्बाणैः सर्वेषु मर्मसु रामं विव्याध ॥ १० ॥

रा० टी०—स इति। रावणेन दशभिर्बाणैर्विद्धस्ताडितोऽपि स राघवः न प्राकम्पत ॥ ११ ॥

रा० टी०—तत इति। राघवः रावणं सर्वेषु गात्रेषु बहुभिश्शरैर्विव्याध ॥ १२ ॥

रा० टी०—एतस्मिन्निति। एतस्मिन्नन्तरे अवकाशे लक्ष्मणः सप्त सायकान् जग्राह ॥ १३ ॥

गो० टी०—एतस्मिन्नन्तर इति। एवं रावणं प्रहृत्य क्षणं रामे विश्राम्यति सतीत्यर्थः। लक्ष्मणः पूर्वं युद्धे प्रवृत्तो मध्ये रामेण युद्धकरणादवसरप्रतीक्ष इत्यर्थः। एवमव्याख्याने कथमन्येन युध्यमानमन्यो युध्यतेति महान् दोषः स्यात् ॥ १३ ॥

१४-१५ ] ति० टी०—मनुष्यः शीर्षे यस्य तम्। मनुष्यशीर्षयुक्तमित्यर्थ इत्यन्ये ॥ १४ ॥ १५ ॥

रा० टी०—तैरिति। महाद्युतिर्लक्ष्मणो मनुष्यशीर्षं मनुष्यशिरोविशिष्टं रावणस्य ध्वजं नैकधा चिच्छेद ॥ १४ ॥

रा० टी०—सारथेरिति। लक्ष्मणः नैर्ऋतस्य रावणस्य सारथेः ज्वलितकुण्डलं शिरो जहार ॥ १५ ॥

गो० टी०—गृहीतानां सप्तबाणानां विनियोगप्रकारमाह—तैः सायकैरित्यादिश्लोकत्रयेण। तैः सायकैरिति पञ्चम्यर्थे तृतीया। तेषां सायकानां मध्ये एकेन बाणेन ध्वजम्, एकेन बाणेन सारथिशिरः, पञ्चभिर्धनुश्च चिच्छेदेत्यर्थः निशितैः शरैरित्यत्र शरशब्दः काशदण्डविशेषमयत्वपरो बाणविशेषणम् ॥ १४—१६ ॥

१६-१८ ] ति० टी०—गजकरोपमं धनुश्चिच्छेद १६-१८

रा० टी०—तस्येति। लक्ष्मणः गजकरोपमं शुण्डादण्डसदृशं तस्य रावणस्य धनुः पञ्चभिश्शरैश्चिच्छेद ॥ १६ ॥

रा० टी०—नीलेति। विभीषणः आप्लुत्य अस्य रावणस्य सदश्वान् गदया जघान ॥ १७ ॥

रा० टी०—हतेति। रावणः हताः अश्वाः यस्य स तस्मात् महारथात् अवप्लुत्य भ्रातरं प्रति कोपमाहारयत् अकरोत् १८

१ स विद्धेति गो. पाठः। २ शरैरिति गो. रा. पा.। ३ वेगवानिति गो. पाठः।

ततः शक्तिं महाशक्तिः प्रदीप्तामशनीमिव । विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥ १९ ॥
अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद लक्ष्मणः । अथोदतिष्ठत्संनादो वानराणां महारणे ॥ २० ॥
संपपात त्रिधा छिन्ना शक्तिः काञ्चनमालिनी । सविस्फुलिङ्गा ज्वलिता महोल्केव दिवश्च्युता ॥२१॥
ततः संभाविततरां कालेनापि दुरासदाम् । जग्राह विपुलां शक्तिं दीप्यमानां स्वतेजसा॥ २२ ॥
सा वेगिता बलवता रावणेन दुरात्मना । जज्वाल सुमहातेजा दीप्ताशनिसमप्रभा ॥ २३ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणम् । प्राणसंशयमापन्नं तूर्णमभ्यवपद्यत ॥ २४ ॥
तं विमोक्षयितुं वीरश्चापमायम्य लक्ष्मणः । रावणं शक्तिहस्तं वै शरवर्षैरवाकिरत् ॥ २५ ॥
कीर्यमाणः शरौघेण विसृष्टेन महात्मना । स प्रहर्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥ २६ ॥
मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः । लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥ २७ ॥
मोक्षितस्ते बलश्लाघिन्यस्मादेवं विभीषणः । विमुच्य राक्षसं शक्तिस्त्वयीयं विनिपात्यते ॥ २८ ॥
एषा ते हृदयं भित्त्वा शक्तिर्लोहितलक्षणा । मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति ॥ २९ ॥
इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् । मयेन मायाविहिताममोघां शत्रुघातिनीम् ॥ ३० ॥
लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेजसा । रावणः परमक्रुद्धश्चिक्षेपे च ननाद च ॥ ३१ ॥
सा क्षिप्ता भीमवेगेन वज्राशनिसमस्वना । शक्तिरभ्यपतद्वेगाल्लक्ष्मणं रणमूर्धनि ॥ ३२ ॥

---

गो० टी०—एवं धनुषि छिन्ने क्षणं तूष्णीं तिष्ठति रावणे विभीषणेन किंचित्कारमाह—नीलेति ॥ १७–२१ ॥

१९–२१ ] ति० टी०—महाशक्तिर्महाबलः ॥ १९–२१ ॥

रा० टी०—तत इति । राक्षसेंद्रः प्रदीप्तामशनीमिव शक्तिं विभीषणाय चिक्षेप ॥ १९ ॥

रा० टी०—आप्राप्तामिति । लक्ष्मणः अप्राप्तामेव तां शक्तिं त्रिभिर्बाणैश्चिच्छेद अथानन्तरं वानराणां सन्नादः हर्षसूचकस्वनः उदतिष्ठत् ॥ २० ॥

रा० टी—समिति । सविस्फुलिङ्गा ज्वलिता दिवश्च्युता महोल्केव काञ्चनमालिनी शक्तिस्संपपात ॥ २१ ॥

२२ ] ति० टी०—संभाविततराममोघेति सर्वविख्याताम् । दुरासदां दुःसहाम् ॥ २२ ॥

रा० टी—तत इति । संभाविततराममोघत्वेन प्रसिद्धामत एव कालेनापि दुरासदाम् शक्तिं जग्राह रावण इति शेषः ॥ २२ ॥

गो० टी०—तत इति । संभाविततरां चन्दनादिभिरर्चिताम् ॥ २२ ॥ २३ ॥

२३ ] ति० टी०—वेगिता कृतवेगा ॥ २३ ॥

रा० टी०—सेति । रावणेन वेगिता वेगेन प्रक्षिप्ता सुमहातेजाः सा शक्तिर्जज्वाल ॥ २३ ॥

२४–२५ ] ति० टी०—तूर्णमभ्यवपद्यत । शक्तिसंमुखं स्वयमागत्य विभीषणं रक्षितवानित्यर्थः ॥ २४ ॥ २५ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे समये प्राणसंशयमापन्नं विभीषणं लक्ष्मणस्तूर्णमभ्यवपद्यत अरक्षदित्यर्थः॥२४

रा० टी०—रक्षणप्रकारमाह—तमिति । द्वाभ्याम् लक्ष्मणः तं विमोक्षयितुं चापमायम्य शक्तिहस्तं रावणं शरवर्षैरवाकिरत् ॥ २५ ॥

गो० टी०—एतस्मिन्निति । अभ्यवपद्यत तमाच्छाद्य स्वयमतिष्ठदित्यर्थः ॥ २४ ॥ २५ ॥

२६–२८ ] ति० टी०—महात्मना लक्ष्मणेन विसृष्टेन शरौघेण कीर्यमाणः, अत एव विमुखीकृतविक्रमः कुण्ठितभ्रातृवधविषयोत्साहः, अत एव भ्रातरं प्रहर्तुं मनश्चक्रे ॥ २६–२८ ॥

रा० टी०—कीर्यमाण इति । महात्मना लक्ष्मणेन कर्त्रा शरौघेण कीर्यमाणः अत एव विमुखीकृतविक्रमो रावणः प्रहर्तुं मनो न चक्रे ॥ २६ ॥

रा० टी०—मोक्षितमिति । रावणः लक्ष्मणेन मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणाभिमुखस्तिष्ठन्सन्निदमब्रवीत् ॥ २७ ॥

गो० टी०—कीर्यमाण इति । विमुखीकृतविक्रमः विमुखीकृतविभीषणविषयपराक्रमः ॥ २६ ॥ २७ ॥

रा० टी०—तदाकारमाह—मोक्षितमिति । हे बलश्लाघिन् यस्मात् विभीषणस्त्वया मोक्षितस्तस्मात् राक्षसं विभीषणं विमुच्य इयं शक्तिः त्वयि विनिपात्यते ॥ २८ ॥

गो० टी० मोक्षित इति । तं त्वया ॥ २८ ॥

२९–३२ ] ति० टी०—लोहितलक्षणा शत्रुरुधिरग्रहणस्वभावा ॥ २९–३२ ॥

रा० टी०—एषेति । लोहितेन रिपुशरीररुधिराक्तत्वहेतुकारुण्येन लक्ष्यते दृश्यते सा इयं शक्तिः मद्बाहुपरिघात्सृष्टा सती ते हृदयं भित्वा प्राणान् आदाय यास्यति ॥ २९ ॥

---

१ दीप्तां दीप्ताशनीमिवेति गो. पाठः । २ तदेति गो. ततेति रा. पाठः । ३ सा पपातेति गो. पाठः । ४ शक्तेति गो. रा. पाठः । ५ तेनेन गो. रा. पाठः ।

तामनुव्याहरच्छक्तिमापतन्तीं स राघवः । स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा ॥३३॥
रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा । मुक्ता शूरस्य भीतस्य लक्ष्मणस्य ममज्ज सा॥ ३४ ॥
न्यपतत्सा महावेगा लक्ष्मणस्य महोरसि । जिह्वेवोरगराजस्य दीप्यमाना महाद्युतिः ॥ ३५ ॥
ततो रावणवेगेन सुदूरमवगाढया । शक्त्या [1]विभिन्नहृदयः पपात भुवि लक्ष्मणः॥ ३६ ॥
तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः । भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ॥ ३७ ॥
स मुहूर्तमिव [2]ध्यात्वा बाष्पपर्या[3]कुलेक्षणः । बभूव संरब्धतरो युगान्त इव पावकः ॥ ३८ ॥
न विषादस्य कालोऽयमिति संचिन्त्य राघवः । चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः ॥
सर्वयत्नेन महता लक्ष्मणं [4]परिवीक्ष्य च । ॥ ३९ ॥
स ददर्श ततो रामः शक्त्या भिन्नं महाहवे । लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम् ॥ ४० ॥

रा० टी०—इतीति । रावणः इत्येवमुक्त्वा अष्टौ घण्टा यस्यामत एव महास्वनां मयेन मायाविहितां शक्तिं लक्ष्मणाय समुद्दिश्य चिक्षेप ननाद च श्लोकद्वयमेकान्वयि ॥ ३०॥३१॥

रा० टी०—सेति । क्षिप्ता शक्तिः लक्ष्मणमभ्यपतत् ॥३२॥

गो० टी०—एषेति । लोहितलक्षणा रुधिरच्छिन्ना । अनेन पूर्वमपि बहुधा रिपवो मया हता इति व्यज्यते । लोहितलक्षणा सती यास्यतीति वा ॥ २९–३२ ॥

३३ ] ति० टी०—आपतन्तीं तां शक्तिं शक्त्यधिष्ठातृदेवतामुद्दिश्यानुव्याहरत् । तदेवाह—लक्ष्मणाय स्वस्त्यस्तु । त्वं हतोद्यमा हतप्राणनाशोद्योगा, अत एव मोघा प्राणापहारांशे मोघा भव । तच्छक्तिस्तु पीडामात्रेण चरितार्थास्त्विति भावः । स्पर्शमात्रेण प्राणापहरणसामर्थ्ययुक्तायाः शक्तेरनेन स्ववाक्येन मोघीकरणात्स्वस्य सत्यसंकल्पत्वं सूचितम् ॥ ३३ ॥

रा० टी०—तामिति । मोघा लक्ष्यास्पर्शित्वेन निष्फला अत एव हतोद्यमा विध्वंसितरावणोद्योगा त्वं भव अत एव लक्ष्मणाय स्वस्त्यस्तु लोकांतरगमनं न भवेदित्यर्थः इति वचः आपतंतीं शक्तिं तदभिमानिदेवतां राघवो व्याहरत् अकथयत् ॥ ३३ ॥

गो० टी—तामिति । राघवः लक्ष्मणाय स्वस्त्यस्तु त्वं हतोद्यमा नष्टहननोद्योगा मोघा भवेति तामनुव्याहरदित्यन्वयः ३३

३४ ] ति० टी०—सा मुक्ता शक्तिरभीतस्य भगवत्तत्त्वानुसंधानेन निर्भयस्य लक्ष्मणस्योरस्याशु ममज्ज ॥ ३४ ॥

रा० टी०—रावणेनेति । रावणेन मुक्ता शक्तिः भीतस्य भीर्भयमिता नित्यं निवृत्ता यस्मात् तस्य लक्ष्मणस्य सन्निधौ ममज्ज पपातेत्यर्थः उरसि ममज्जेत्यर्थस्तु न युक्तः शक्तिकर्मकरामकर्तृकोक्तिविरुद्धत्वापत्तेः अत एव शः कालकालः कर्तृत्वं करणत्वं चेत्यादिश्रुतिस्मृतयस्सानुकूलाः मूर्छावाप्तिस्तु तदस्पर्शेऽपि सौकुमार्यातिशयात् ॥ ३४ ॥

गो० टी०—क्षणात् भस्मीकरणक्षमा शक्तिः रामेण मोघीकृता सती केवलमपतदित्याह—रावणेनेति । मुक्तेति । आशु उरसि अभीतस्येति पदानि । लक्ष्मणस्योरसि ममज्जेति संबन्धः ॥ ३४–३७ ॥

३५–३७ ] ति० टी०—मुक्ता आशु उरसीति छेदस्य गूढत्वात्स्पष्टमेवाह कविः—न्यपतदिति ॥ ३५–३७ ॥

रा० टी०—न्यपतदिति । उरगराजस्य जिह्वेव सा शक्तिः लक्ष्मणस्य महोरसि इव न्यपतत् अतिसांनिध्यात्तत्स्थेवालक्ष्यतेत्यर्थः इव उभयान्वयी ॥ ३५ ॥

रा० टी०—तत इति । रावणवेगेन सुदूरमवगाढया समागतयेत्यर्थः शक्त्या अविभिन्नहृदयो लक्ष्मणः भुवि पपात ॥ ३६ ॥

रा० टी०—तदिति । राघवः तदवस्थं लक्ष्मणं प्रेक्ष्य भ्रातुः स्नेहाद्धेतोः विषण्णहृदयोऽभवत् ॥ ३७ ॥

३८ ] ति० टी०—मुहूर्तमिव ध्यात्वा । किमिदानीं कर्तव्यमिति पर्यालोच्येत्यर्थः। संरब्धतरो युद्धेऽधिकोत्साहवान् ३८

रा० टी०—स इति । स रामः मुहूर्तं ध्यात्वा युगान्तः पावक इव संरब्धतरः अतिक्रुद्ध इव बभूव ॥ ३८ ॥

गो० टी०—स मुहुर्तमिति । अनुध्याय तत्कालकर्तव्यं चिन्तयित्वा ॥ ३८ ॥

३९ ] ति० टी०—अथ विषादस्यायं न काल इति संचिन्त्य लक्ष्मणं च संनिरीक्ष्य महतोत्कृष्टेन सर्वयत्नेन सहजबलाबलेन रावणस्य वधे धृतो निश्चितो भूत्वा सुतुमुलं युद्धं चक्रे । अयं च वक्ष्यमाणार्थसंक्षेपः ॥ ३९ ॥

रा० टी०—नेति । विषादस्यायं न कालः इति संचिन्त्य रावणस्य वधे धृतः कृतनिश्चयो राघवः सुतुमुलं युद्धं चक्रे ३९

गो० टी०—न विषादस्येति । सार्धश्लोकमेकं वाक्यम् । लक्ष्मणं सन्निरीक्ष्य महता सर्वयत्नेन रावणस्य वधे धृतः अवहितः सुतुमुलं युद्धं चक्रे इत्यन्वयः । केवलं सीताहरणात् किंतु लक्ष्मणदर्शनादपीति च शब्दार्थः ॥ ३९ ॥

४० ] ति० टी०—तमेव प्रपञ्चयति—स ददर्शेति॥४०॥

रा० टी०—सर्वेति । महता सर्वयत्नेनोपलक्षितो रामः

१ निर्भिन्न गो. पाठः । २ अनुध्यायेव गो. पाठः । ३ व्याकुललोचन इति गो. रा. पाठः । ४ संनिरीक्ष्य इ गो. परवीरहा इति रा. पा. ।

तामपि प्रहितां शक्तिं रावणेन बलीयसा । यत्नतस्ते हरिश्रेष्ठा न शेकुरवमर्दितुम् ॥ ४१ ॥
अर्दिताश्चैव बाणौघैस्ते[1] प्रवेकेण रक्षसाम् । सौमित्रे[2]ः सा विनिर्भिद्य प्रविष्टा धरणीतलम् ४२ ॥
तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् । बभञ्ज समरे क्रुद्धो बलवान्विचकर्ष च ॥ ४३ ॥
तस्य निष्कर्षतः शक्तिं रावणेन बलीयसा । शराः सर्वेषु गात्रेषु पातिता मर्मभेदिनः ॥ ४४ ॥
अचिन्तयित्वा तान्बाणान्समाश्लिष्य च लक्ष्मणम् । अब्रवीच्च हनूमन्तं सुग्रीवं[3] च महाकपिम् ॥ ४५ ॥
लक्ष्मणं परिवार्यैवं[4] तिष्ठध्वं वानरोत्तमाः । पराक्रमस्य कालोऽयं संप्राप्तो मे चिरेप्सितः॥ ४६ ॥
पापात्मायं दशग्रीवो वध्यतां पापनिश्चयः । काङ्क्षितं चातकस्येव[5] घर्मान्ते मेघदर्शनम् ॥ ४७ ॥
अस्मिन्मुहूर्ते न चिरात्सत्यं प्रतिशृणोमि वः । अरावणमरामं वा जगद्रक्ष्यथ वानराः ॥ ४८ ॥
राज्यनाशं वने वासं दण्डके परिधावनम् । वैदेह्याश्च परामर्शो[6] रक्षोभिश्च समागमम् ॥ ४९ ॥

---

शक्त्या अभिन्नं शक्तिकरणकदारणरहितं लक्ष्मणं रुधिरेण आदिग्धं व्याप्तं संपन्नगमचलमिव लक्ष्मणं ददर्श लक्ष्मणस्यातिगौरत्वेन च धनुर्बाणविशिष्टत्वेन चेयमुपमा सार्द्धश्लोक एकान्वयी ॥ ४० ॥

गो० टी०—कथं लक्ष्मणदर्शनं रावणवधकारणं भवतीत्यत्राह—स ददर्शेति । तदानीं लक्ष्मणस्य तादृशं शोच्यदर्शनं रावणवधनिश्चयकारणं भवतीत्याशयः ॥ ४० ॥

४१ ] ति० टी०—तां शक्तिं लक्ष्मणगात्रादवमर्दितुमुद्धर्तुं यत्नतो न शेकुः । तत्र हेतुर्बलीयसा प्रहितत्वम् ॥ ४१ ॥

रा० टी०—शक्तिवृत्तान्तमेवाह—तामित्यादिभिः । रावणेन यत्नतः प्रहितां शक्तिमवमर्दितुं रक्षसार्दिताः हरिश्रेष्ठा न शेकुः सार्द्धश्लोक एकान्वयी ॥ ४१ ॥ ४२ ॥

गो० टी०—तामपीति । अपिशब्दस्य यत्नतोपीत्युत्तरत्रान्वयः । बाणार्दितत्वेन सुतरां न शेकुरित्याह—अर्दिताश्चेति ॥ ४१ ॥ ४२ ॥

४२ ] ति० टी०—हेत्वन्तरमप्याह—अर्दिता इति । रक्षसां प्रवेकेण श्रेष्ठेन । किं च सा शक्तिः सौमित्रेर्देहं निर्भिद्य धरणीतलं भुवं प्रविष्टा स्पृष्टवती ॥ ४२ ॥

४३ ] ति० टी०—तां शक्तिं कराभ्यां परामृश्य धृत्वा बलवान्बलवत्तरो रामो लक्ष्मणदेहाद्विचकर्ष विकृष्य बभञ्ज च । इयं शक्तिः सर्वदा शत्रुं निर्भिद्य रावणसमीपमेव प्राप्नोति, इदानीं रामेण मोघा भवेत्युक्त्या सत्यसंकल्पेन नाशितानिष्कमणशक्तिस्तत्रैव लग्ना सा च भगवता विकृष्य भग्ना ॥ ४३ ॥

रा० टी०—सौमित्रेरिति । सा शक्तिः सौमित्रेरनिर्भिद्य तदस्पर्शित्वेन भेदः नाभासमप्यकृत्वा सौमित्रेस्समीपवर्ति धरणीतलं प्रविष्टा अद्धं पृथक् तामिति रामः तां धरणीतले निविष्टां शक्तिं कराभ्यां परामृश्य धरणीतलादाकृष्य बभञ्ज विचकर्ष च ॥ ४३ ॥

गो० टी०—कारणान्तरमाह—सौमित्रिमिति ४३–४७

४४ ] ति० टी०—एतदन्तरे रन्ध्रविदाक्षमः प्रजहारेत्याह—तस्येति । शक्तिं निष्कर्षतस्तस्य रामस्य गात्रेष्वित्यन्वयः॥ ॥ ४४ ॥

रा० टी०—तस्येति । शक्तिं निष्कर्षतः तस्य रामस्य सर्वगात्रेषु मर्मभेदिनः शराः पातिताः ॥ ४४ ॥

४५–४६ ] ति० टी०—समाश्लिष्येति । समाश्लेषोऽयं सकलपीडानिवृत्तिफलकः स्वतादात्म्यावभासनरूपः ॥४५॥४६

रा० टी०—अचिन्तयित्वेति । तान् बाणान् अचिन्तयित्वा लक्ष्मणं समाश्लिष्य च हनूमन्तं सुग्रीवं च महाकपिं जाम्बवन्तं चाब्रवीत् राम इति शेषः ॥ ४५ ॥

रा० टी०—तदाकारमाह—लक्ष्मणमिति । लक्ष्मणं परिवार्य प्रावृत्य यूयं तिष्ठध्वं मे मम तु चिरेप्सितः पराक्रमस्यायं कालः संप्राप्तः ॥ ४६ ॥

गो० टी०—पराक्रमस्येत्यादिसार्धश्लोक एकान्वयः । वध्यतामिति प्राप्तकाले लोट् । स्तोककस्य चातकस्य । स्तोककश्चातकः समा इत्यमरः ॥ ४८ ॥

४७ ] ति० टी०—पापात्मायं वध्यतां मत्तोऽद्य वधं प्राप्नोतु । यतो घर्मान्ते चातकस्य मेघदर्शनमिव वधार्थमस्य दर्शनं मम चिरं काङ्क्षितम् । 'स्तोककस्य' इति पाठेऽपि चातकस्येत्येवार्थः । 'स्तोककश्चातकः समौ' इत्यमरात् ॥ ४७ ॥

रा० टी०—पापात्मेति । पापात्मा अत एव पापनिश्चयः अयं दशग्रीवः वध्यताम् अस्माभिरिति शेषः तत्र हेतुः घर्मान्ते चातकस्य मेघदर्शनमिव कांक्षितं मयास्य हननमिति शेषः॥४७

४८–४९ ] ति० टी०—प्रतिशृणोमि प्रतिजाने । न चिरादित्यस्य शीघ्रमित्यर्थकस्य रावणमित्यादिनान्वयः॥४८॥४९

रा० टी०—अस्मिन्निति । हे वानराः अस्मिन् मुहूर्ते वो युष्माकमग्रे सत्यं प्रतिशृणोमि प्रतिज्ञां करोमि तदाकारमाह अरावणं रावणरहितमरामं वा जगत् न चिरात् शीघ्रं द्रक्ष्यथ ॥ ४८ ॥

गो० टी०—अस्मिन्निति । अस्मिन्मुहूर्ते तत्रापि न चिराद्रक्ष्यथेत्यन्वयः ॥ ४९ ॥

---

१ क्षिप्रहस्तेन रक्षसेति गो. रा. पाठः । २ सौमित्रिमिति गो. पाठः । ३ तामिति रा. चैव राघव इति गो. पाठः । ४ प्लवेति रा. इहेति गो. पाठः । ५ काङ्क्षतस्तोककस्येति गो. पाठः । ६ परामर्शमिति गो. रा. पाठः ।

प्राप्तं दुःखं महद्घोरं क्लेशश्च निरयोपमः । अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे ॥ ५० ॥
यदर्थं वानरं सैन्यं समानीतमिदं मया । सुग्रीवश्च कृतो राज्ये निहत्वा वालिनं रणे ॥
यदर्थं सागरः क्रान्तः सेतुर्बद्धश्च सागरे । ॥ ५१ ॥
सोऽयमद्य रणे पापश्चक्षुर्विषयमागतः । चक्षुर्विषयमागत्य नायं जीवितुमर्हति ॥ ५२ ॥
दृष्टिं दृष्टिविषस्येव सर्पस्य मम रावणः । [1]यथा वा वैनतेयस्य दृष्टिं प्राप्तो भुजंगमः ॥ ५३ ॥
सुखं पश्यथ दुर्धर्षा युद्धं वानरपुंगवाः । आसीनाः पर्वताग्रेषु ममेदं रावणस्य च ॥ ५४ ॥
अद्य पश्यन्तु रामस्य रामत्वं मम संयुगे । त्रयो लोकाः सगन्धर्वाः सिद्धगन्धर्वचारणाः ॥ ५५ ॥
अद्य कर्म करिष्यामि यल्लोकाः सचराचराः । सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥ ५६ ॥
समागम्य सदा लोके यथायुद्धं प्रवर्तितम् । ॥
एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः । आजघान रणे रामो दशग्रीवं समाहितः ॥ ५७ ॥
तथा प्रविद्धैर्नाराचैर्मुसलैश्चापि रावणः । अभ्यवर्षत्तदा रामं धाराभिरिव तोयदः ॥ ५८ ॥

रा० टी०—राज्येति । अहं राज्यनाशादीन् समागमं प्राप्य ॥ ४९ ॥

गो० टी०—राज्यनाशमित्यादिश्लोकद्वयमेकान्वयम् । प्राप्तं पम्पोपवनादौ । क्लेशं लक्ष्मणप्रहरणजन्यम् ॥ ५०॥५१ ॥

५०–५२ ] ति० टी०—राज्यनाशादिकृतं घोरं दुःखं मा मलं प्राप्तम् ! निरयोपमो यातनोपमः क्लेशः कायक्लेशश्च प्राप्तः ॥ ५० ॥ ५२ ॥

रा० टी०—प्राप्तमिति । यतः क्लेशः निरयोपमो भवति अतः रावणं निहत्वा निहत्य प्राप्तं देवादिभिरनुभूतं सर्वं दुःखमहं त्यक्ष्ये त्याजयिष्यामि किञ्च क्लेशो महत्पीडनं निरयोपमः तत्प्रापकत्वेन तत्समः अतः दुःखं रावणक्लेशं त्यक्ष्ये त्याजयिष्यामि ॥ ५० ॥

रा० टी०—यदर्थमिति । यदर्थं यद्वधार्थम् वानरसैन्यानयनादि कृतं स रावणः अद्य चक्षुर्विषयमागतः अर्द्धचतुष्टयमेकान्वयि ॥ ५१ ॥ ५२ ॥

रा० टी०—ननु चक्षुर्विषयागमनेन किमित्यत आह—

रा० टी०—चक्षुरिति । दृष्टेर्दर्शनमेव विषं महाविषपानं यस्य तस्य सर्पस्य दृष्टिं प्राप्य विद्यमानो जन इव वैनतेयस्य दृष्टिं प्राप्तो भुजंगम इव च मम चक्षुर्विषयमागम्य अयं रावणो जीवितुं नार्हति सार्द्धश्लोक एकान्वयी ॥ ५३ ॥ ५४ ॥

गो० टी०—यदर्थमित्यादिश्लोकत्रयमेकान्वयम् । दृष्टिं दृष्टिविषयम् । दृष्टौ विषं यस्यासौ दृष्टिविषः तस्य । केचिद्धि सर्पाः दर्शनमात्रेण मनुष्यान् मारयन्तीति प्रसिद्धिः॥५२॥५५॥

५३–५४ ] ति० टी०—दृष्टिविषस्य दर्शनमात्रेण संहारकरमहाविषवतः सर्पस्य दृष्टिं प्राप्तो मनुष्य इव न रावणो जीवितुमर्हति ॥ ५३ ॥ ५४ ॥

रा० टी०—सुखमिति । इदं युद्धं युद्धं पश्यत ॥ ५५ ॥

५५ ] ति० टी०—रामस्य रामत्वं त्रींल्लोकान्सर्वदेवान्धर्मेण सत्येन शौर्येण च रमयतीत्यन्वर्थं रामत्वम् । तदुचितं कर्माद्य करिष्यामीति भावः ॥ ५५ ॥

रा० टी०—अद्येति । रामस्य मम रामत्वमभिरामदातृत्वादि संयुगे त्रयो लोकाः गन्धर्वसहितास्सिद्धादयश्च पश्यन्तु पृथगुपादानं गोबलीवर्दन्यायेन ॥ ५६ ॥

गो० टी०—अद्येति । रामत्वं जगदेकवीरत्वम् । आचार्यास्तु रामावतारप्रयोजनमित्याहुः ॥ ५६ ॥

५६–५८ ] ति० टी०—यावद्भूमिर्धरिष्यति प्राणिनस्तावद्यन्मे कर्म सचराचराः सदेवा लोका जनाः कथयिष्यन्ति तादृशं कर्म करिष्यामि ॥ ५६–५८ ॥

रा० टी०—अद्येति । भूमिः यावद्धरिष्यति चराचरानिति शेषः तावत् यत्कर्म सचराचराः सदेवाः लोकाः जनाः कथयिष्यन्ति तत्कर्म करिष्यामि ॥ ५७ ॥

रा० टी०—एवमिति । राम एवमुक्त्वा बाणैर्दशग्रीवमाजघान ॥ ५८ ॥

रा० टी०—तथेति । तदा तस्मिन् काले प्रविद्धैर्नाराचैर्मुशलैश्च रावणो राममभ्यवर्षत ॥ ५९ ॥

गो० टी०—अद्येत्यादिसार्धश्लोक एकान्वयः । सदेवाः सचराचराः लोकाः जनाः समागम्य संघीभूय, यथेदानीं युद्धं प्रवर्तितं तथा यावत् भूमिर्धरिष्यति, तावत्कालं सदा नित्यश लोके यत्कर्म कथयिष्यन्ति, तत् कर्माद्य करिष्यामीत्यन्वयः ॥ ५७ ॥ ६३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नाकराख्याने युद्धकाण्डव्याख्याने एकोनरशततमः सर्गः ॥१०१॥

१ इदमर्धं गो. पुस्तके नास्ति । २ दृष्टिं वा वैनतेयस्य यथेति रा. पा. । ३ स्वस्था इति गो. पा. ४ पश्यतेति गो. पा. । ५ रामस्य रामत्वं पश्य त्विति गो. पा. । ६ सदेवाः सर्वेति गो. । सिद्धगंधर्वजंगमा इति रा. पा. ।७ इदमर्धमधिकं गो पुस्तके ।८ अथ प्रदीप्तै रिति गो. तथा प्रसिद्धैरिति रा. पा.

रामरावणमुक्तानामन्योन्यमभिनिघ्नताम् । वराणां च शराणां च बभूव तुमुलः स्वनः ॥ ५९ ॥
विच्छिन्नाश्च विकीर्णाश्च रामरावणयोः शराः । अन्तरिक्षात्प्रदीप्ताग्रा निपेतुर्धरणीतले ॥ ६० ॥
तयोर्ज्यातलनिर्घोषो रामरावणयोर्महान् । त्रासनः सर्वभूतानां बभूवाद्भुतदर्शनः ॥ ६१ ॥
विकीर्यमाणः शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मतार्दितः ।
भयात्प्रदुद्राव समेत्य रावणो यथानिलेनाभिहतो बलाहकः ॥ ६२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे शततमः सर्गः ॥ १०० ॥

## एकाधिकशततमः सर्गः ।

शक्त्या निपतितं लक्ष्मणं वीक्ष्य तदुपकृतिभर संस्मृत्य साश्रुमुखं बहुकृत्वो विलपन्तं रामं सुषेणः समाश्वास्य हनुमदाहृतशिखरस्थौषधीरसेन लक्ष्मणं निरुजं विशल्यं च कारयित्वा रामादिकपीन् भृशमानन्दयत लक्ष्मणस्तु स्वदुःखविषण्णं भ्रातरं धीरवचनैरञ्जयामास ।

शक्त्या निपातितं दृष्ट्वा रावणेन बलीयसा । लक्ष्मणं समरे शूरं शोणितौघपरिप्लुतम् ॥ १ ॥
स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः । विसृजन्नेव बाणौघान्सुषेणमिदमब्रवीत् ॥ २ ॥
एष रावणवीर्येण लक्ष्मणः पतितो भुवि । सर्पवच्चेष्टते वीरो मम शोकमुदीरयन् ॥ ३ ॥
शोणितार्द्रमिमं वीरं प्राणैः प्रियतरं मम । पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ॥ ४ ॥
अयं स समरश्लाघी भ्राता मे शुभलक्षणः । यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन वा ॥ ५ ॥

५९-६१ ] ति० टी०-वराणां शराणां श्रेष्ठानां शराणाम् । चान्मुसलानाम् ॥ ५९-६१ ॥

रा० टी०-रामेति । रामरावणमुक्तानां वराणां श्रेष्ठानां शराणां चकारेण मुशलानां च स प्रसिद्धस्स्वनः तुमुलो बभूव ६०

रा० टी०-विच्छिन्ना इति । विच्छिन्नाः अत एव विकीर्णाः रामरावणयोश्शराः धरणीतले निपेतुः ॥ ६१ ॥

रा० टी०-तयोरिति । रामरावणयोः महान् ज्यातलनिर्घोषः सर्वभूतानां त्रासनो बभूव ॥ ६२ ॥

६२ ] ति० टी०-भयाद्भ्रातृपीडाजनितकोपेन । सर्वथा मां हनिष्यत्येवेति भयादित्यर्थः। इदं पलायनममासायंकाले ६२

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे शततमः सर्गः ॥ १०० ॥

रा० टी०-विकीर्यमाण इति । महात्मना रामेण शरजालवृष्टिभिर्विकीर्यमाणः अत एव अर्दितो रावणः अनिलेनाभिहतो बलाहक इव प्रदुद्राव ॥ ६३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकाधिकशततमः सर्गः ॥ १०१ ॥

१ ] ति० टी०-शक्त्येति ॥ १ ॥

२ ] ति० टी०-बाणौघान्विसृजन्रावणस्य तुमुलं युद्धं दत्त्वा तस्मिन्पलायिते लक्ष्मणपीडानिवृत्त्यर्थं सुषेणमिदमब्रवीत् ॥ २ ॥

रा० टी०-रावणपलायनानन्तरकालिकं रामवृत्तान्तमाह—शक्त्येत्यादिभिः । स रामः बाणौघान् विसृजन रावणस्य तुमुलं युद्धं दत्वा शक्त्या शक्त्यतिसान्निध्यमात्रेण निपातितं शोणितौघपरिप्लुतं क्रोधहेतुकारुण्येन रुधिरसमूहव्याप्तमिव किंच शोणितस्य कोपहेतुकारुण्यस्यौघः आधिक्यमित्यर्थः तेन परिप्लुतं क्रोधव्याप्तं लक्ष्मणं दृष्ट्वा सुषेणमब्रवीत् श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०-अथ लक्ष्मणसंजीवनं द्व्यधिकशततमे—शक्त्या विनिहतमित्यादिश्लोकद्वयमेकं वाक्यम् । विसृजन्नेवेत्यादिवर्तमाननिर्देशेन रावणपलायनानन्तरं लक्ष्मणयोगक्षेमानुसंधाने अविलम्बः सूचितः ॥ १ ॥ २ ॥

३ ] ति० टी०-शोकमुदीरयञ्जनयन् ॥ ३ ॥

रा० टी०-तदाकारमाह—एष इत्यादिभिः । रावणवीर्येण क्षितौ भुवि पतितो लक्ष्मणः मम शोकमुदीरयन् उत्पादयन् सन् सर्पवत् चेष्टते ॥ ३ ॥

गो० टी०-एष इति । उदीरयन् जनयन् ॥ ३ ॥

४-५ ] ति० टी०-प्राणैः प्राणेभ्यः ॥ ४ ॥ ५ ॥

रा० टी०-प्राणैः प्रियतमं शोणितार्द्रमिवेमं पश्यतः अत एव पर्याकुलात्मनो मम योद्धुं का शक्तिः ॥ ४ ॥

रा० टी०-अयमिति । अयं मे भ्राता यदि पञ्चत्वमापन्नः तत्सदृशो निश्रेष्ठ इत्यर्थः तदा प्राणैस्सुखेन वा मे किम् ॥ ५ ॥

१ शराणामिति गो. पा. । २ ते भिन्ना इति गो. पाठः । ३ सर्वभूताद्भुतोपम इति गो. पाठः । ४ स इति गो. पाठः । ५ विनिहतमिति गो. पाठः । ६ रुधिरौघेति गो. पाठः । ७ वाक्यमिति गो. पाठः । ८ क्षिताविति गो. रा. पा. । ९ वेष्टत इति गो. पाठः । १० भूमाविति रा. पा. । ११ इष्टतरमिति रा. इष्टतममिति गो. पाठः । १२ चेति गो. पाठः ।

लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः । सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ॥ ६ ॥
अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव । चिन्ता मे वर्तते तीव्रा मुमूर्षापि च जायते ॥ ७ ॥
भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना । विष्टनन्तं तु दुःखार्तं मर्मण्यभिहतं भृशम् ॥ ८ ॥
राघवो भ्रातरं दृष्ट्वा प्रियं प्राणं बहिश्चरम् । दुःखेन महताविष्टो ध्यानशोकपरायणः ॥
परं विषादमापन्नो विललापाकुलेन्द्रियः । भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांसुषु ॥ ९ ॥
विजयोऽपि हि मे शूर न प्रियायोपकल्पते । अचक्षुर्विषयश्चन्द्रः कां प्रीतिं जनयिष्यति ॥ १० ॥
किं मे युद्धेन किं प्राणैर्युद्धकार्यं न विद्यते । यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः ॥ ११ ॥
यथैव मां वनं यान्तमनुयाति महाद्युतिः । अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १२ ॥
इष्टबन्धुजनो नित्यं मां स नित्यमनुव्रतः । इमामवस्थां गमितो राक्षसैः कूटयोधिभिः ॥ १३ ॥
देशे देशे कलत्राणि देशे देशे च बान्धवाः । तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥ १४ ॥
इत्येवं विलपन्तं तं शोकविह्वलितेन्द्रियम् । विवेष्टमानं करुणमुच्छ्वसन्तं पुनः पुनः ॥
किं नु राज्येन दुर्धर्ष लक्ष्मणेन विना मम । कथं वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम्॥ १५ ॥
उपालम्भं न शक्ष्यामि सोढुं दत्तं सुमित्रया । किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम्॥१६॥
भरतं किं नु वक्ष्यामि शत्रुघ्नं च महाबलम् । सह तेन वनं यातो विना तेनागतः कथम् ॥ १७ ॥
इहैव मरणं श्रेयो न तु बन्धुविगर्हणम् । किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि ॥ १८ ॥
येन मे धार्मिको भ्राता निहतश्चाग्रतः स्थितः । हा भ्रातर्मनुजश्रेष्ठ शूराणां प्रवर प्रभो ॥ १९ ॥
एकाकी किं नु मां त्यक्त्वा परलोकाय गच्छसि । विलपन्तं च मां भ्रातः किमर्थं नावभाषसे ॥ २० ॥
उत्तिष्ठ पश्य किं शेषे दीनं मां पश्य चक्षुषा । शोकार्तस्य प्रमत्तस्य पर्वतेषु वनेषु च ॥ २१ ॥
विषण्णस्य महाबाहो समाश्वासयिता मम । राममेवं ब्रुवाणं तु शोकव्याकुलितेन्द्रियम् ॥ २२ ॥
आश्वासयन्नुवाचेदं सुषेणः परमं वचः । [११]त्यजेमां नरशार्दूल बुद्धिं वैक्लव्यकारिणीम् ॥ २३ ॥

---

गो० टी०–शोणितार्द्रमिति । प्राणैः प्राणेभ्यः ॥४ ॥ ५ ॥

६ ] ति० टी०–लज्जतीवेति परस्मैपदमार्षम् ॥ ६ ॥

रा० टी०–लज्जतीति । मे वीर्यं लज्जतीव अत एव धनुर्भ्रश्यतीव अत एव सायका व्यवसीदन्ति अत एव मे दृष्टिः बाष्पवशम् अश्रधीनत्वं गता ॥ ६ ॥

गो० टी०–लज्जतीवेत्यादिसार्धश्लोकद्वयमेकान्वयम् । लज्जतीव आर्षं परस्मैपदम् । स्वप्नयाने स्वप्नगमने । स्वप्ने हि गच्छतां पुरुषाणां पादाः पश्चादाकृष्टा भवन्ति । भ्रातरं निहतं दृष्ट्वेति पूर्वशेषः ॥ ६–८ ॥

७ ] ति० टी०–स्वप्नयाने । स्वप्ने इत्यर्थे आर्षमस्य साधुत्वम् ॥ ७ ॥

रा० टी०–अवसीदन्तीति । स्वप्नस्य दुःस्वप्नकदर्शनस्य याने प्राप्तौ सत्यां नृणां गात्राणीव मे गात्राणि अवसीदन्ति अत एव चिन्ता वर्धते अत एव मुमूर्षा एतल्लोकत्यागेच्छा जायते ॥ ७ ॥

८ ] ति० टी०–भ्रातरं निहतमित्यादि सार्धश्लोकः कविवाक्यम् । विष्टनन्तं विकृतशब्दं कुर्वन्तम् ॥ ८ ॥

रा० टी०–भ्रातरमिति । रावणेन मर्मणि अभिहतं ताडितमत एव दुःखार्तमत एव निष्टनन्तं दुःखसूचकस्वनवन्तमत एव निहतमिव भ्रातरं दृष्ट्वा परमविषादमापन्नोऽहं विललाप बहु जगाद सार्द्धश्लोक एकान्वयी ॥ ८ ॥

गो० टी०–विनिष्टनन्तमित्यादिसार्धश्लोकमेकं वाक्यम् । विष्टनन्तं निःश्वसन्तम् । ध्यानशोकपरायणः अभूदिति शेषः ॥ ९ ॥

९–१० ] ति० टी०–रणपांसुषु । लुठन्तमिति शेषः । तादृशं भ्रातरं दृष्ट्वा विजयोऽपि मे न प्रियायेत्यर्थः ॥९॥१०॥

गो० टी०–परं विषादमित्यर्धम् । राघव इत्यनुषञ्जनीयम् ॥ १० ॥

रा० टी०–विजय इति । हे शूर मे विजयः प्रियाय नोपकल्पते तत्र दृष्टान्तः अचक्षुर्विषयः अन्धजनसमीपस्थ चन्द्रः कां प्रीतिं जनयिष्यति न जनयिष्यतीत्यर्थः ॥ ९ ॥

गो० टी०–न हि युद्धेनेति । दृष्ट्वा स्थितस्येति शेषः ॥ ११

११–२३ ] ति० टी०–यत्रायमिति । यतः कारणादित्यर्थः ॥ ११–२३ ॥

---

१ चोपेतेति गो. पाठः । २ इदं पद्यमधिकं गो. पाठे । ३ इदमर्धं रा. पुस्तके नास्ति । ४ इदं पद्यं गो. पुस्तके न दृश्यते । ५ राज्येनेति गो. पाठः । ६ युद्धे इति गो. पाठः । ७ इदं पद्यद्वयं गो. पुस्तके नास्ति । ८ इदं पद्यमधिकं गो. पुस्तके । ९ इतआरभ्यश्लोकाष्टकं गो. पुस्तके न दृश्यते । १० राममाश्वासयन्वीरः सुषेणो वाक्यमब्रवीत् इति गो. पाठः । ११ इदं पद्यं गो. पुस्तके न दृश्यते ।

शोकसंजननीं चिन्तां तुल्यां बाणैश्चमूमुखे । नैवं पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ॥ २४ ॥
नह्यस्य विकृतं वक्त्रं नैव च श्यामत्वमागतम् । सुप्रभं च प्रसन्नं च मुखमस्य निरीक्ष्यताम् ॥ २५ ॥
पद्मपत्रतलौ हस्तौ सुप्रसन्ने च लोचने । नेदृशं दृश्यते रूपं गतासूनां विशां पते ॥ २६ ॥
विषादं मा कृथा वीर सप्राणोऽयमरिंदम । आख्याति तु प्रसुप्तस्य स्रस्तगात्रस्य भूतले ॥ २७ ॥
सोच्छ्वासं हृदयं वीर कम्पमानं मुहुर्मुहुः । एवमुक्त्वा महाप्राज्ञः सुषेणो राघवं वचः ॥ २८ ॥
समीपस्थमुवाचेदं हनूमन्तं महाकपिम् । सौम्य शीघ्रमितो गत्वा पर्वतं हि महोदयम् ॥ २९ ॥

रा० टी०—किमिति । यत्र यदा अयं लक्ष्मणो निहत इव शेते तदा युद्धेन प्राणैश्च मे किं न किमपीत्यर्थः अत एव युद्धस्य कार्यं कर्त्तव्यता न विद्यते ॥ १० ॥

रा० टी०—यथेति । यथा यत्प्रकारकप्रीत्या अयं मामनुयाति अनुसरति तथाहमपि यमक्षयं नियमानामाश्रयमेनमनुयास्यामि अनुसरामि ॥ ११ ॥

रा० टी०—इष्टेति । इष्टबन्धुजनः स लक्ष्मणः राक्षसैरिमामवस्थां गमितः ॥ १२ ॥

रा० टी०—देश इति । यत्र सहोदरो भ्राता तं देशं न पश्यामि निखिलं संत्यज्य गमनवतः पुरुषस्य कलत्रादिप्राप्तिस्सम्भवति सहोदरप्राप्तिस्तु न सम्भवतीत्यर्थः एतेन सहोदरोवश्यं परिरक्षणीय इति सूचितम् रामलक्ष्मणयोस्सहोदरत्वं तु पितृहृदयवर्त्तित्वेन किञ्च सहः स्वभ्रातुर्दुरुक्तिजातस्यापि सोढा अदरो निखिलभयरहितो भ्राता यत्र तं न पश्यामीत्यर्थः ॥१३॥

रा० टी०—किमिति । लक्ष्मणेन विना मम राज्येन किं-महं सुमित्रामम्बां कथं वक्ष्यामि ॥ १४ ॥

रा० टी०—उपालम्भमिति । सुमित्रया दत्तं कृतमुपालम्भं निंदां सोढुं न शक्ष्यामि ॥ १५ ॥

रा० टी०—भरतमिति । तेन लक्ष्मणेन सह वनं यातस्त्वं तेन विना कथमागत इति पृच्छन्तमिति शेषः भरतं किं वक्ष्यामि ॥ १६ ॥

रा० टी०—इहेति । बन्धुविगर्हणं न श्रेयः अहं पृथक्१७

रा० टी०—ननु राक्षसविरोधजनकं कर्म त्वया वृथा कृतमित्यत आह—किमिति । येन राक्षसेन मे भ्राता निहतः तस्य राक्षसस्य अन्यत्र प्राकृतविलक्षणे जन्मनि प्रादुर्भावे आस्थितेन मया किं दुष्कृतमपराधः कर्म कृतम् प्रथममिति शेषः न किमपीत्यर्थः ॥ १८ ॥

रा० टी०—हेति । परलोकाय किं गच्छसि गत्यर्थेति चतुर्थी ॥ १९ ॥

रा० टी०—विलपन्तमिति । पश्य प्रबुध्यस्व अत एव मां पश्य अवलोकस्व ॥ २० ॥

रा० टी०—शोकार्तस्येति । शोकार्तस्य मे समाश्वासयिता त्वमेव ॥ २१ ॥

रा० टी०—इत्येवमिति । एवं ब्रुवाणं राममाश्वासयन् सुषेण इति वाक्यमुवाच ॥ २२ ॥

रा० टी०—तदाकारमाह—त्यजेत्यादिभिः । हे नृपशार्दूल शोकसंजननीं बाणैस्तुल्यां चिन्तां त्यज ॥ २३ ॥

गो० टी०—किं मे राज्येनेति । यत्र यतः ॥१२–१४॥

२४ ] ति० टी०—बाणैः शत्रुप्रेषितैस्तुल्यां न पञ्चत्त्वमृतिमापन्नः । श्वासाद्यनुभवात् ॥ २४ ॥

रा० टी०—तत्र हेतुमाह—नेति । लक्ष्मणः पञ्चत्वं नापन्नः अहं पृथक् ॥ २४ ॥

गो०टी०—न मृतोऽयमिति । श्यावं कपिशम् । विवर्णमिति यावत् । श्यावः स्यात्कपिश इत्यमरः ॥ १५–१८ ॥

२५ ] ति० टी०—नापि मरिष्यति लक्षणाभावादित्याह—नह्यस्येति ॥ २५ ॥

रा० टी०—पञ्चत्वाभावे गमकमाह अस्य वक्त्रं विकृतं न श्यामत्वं च नागतमत एव सुप्रभमस्य मुखं लक्ष्यते ॥ २५ ॥

२६ ] ति० टी०—पद्मपत्रतलौ पद्मपत्रवद्रक्तवर्णकरतलवन्तौ ॥ २६ ॥

रा० टी०—पद्मेति । गतासूनां रूपमीदृशं न दृश्यते ॥२६॥

२७–२९ ] ति० टी०—भूतले प्रसुप्तस्य स्रस्तगात्रस्यैव मुहुर्मुहुः कम्पमानस्य हृदयमङ्गं सोच्छ्वासमाख्याति ॥२७–२९॥

रा० टी०—विषादमिति । प्रसुप्तस्य अत एव स्रस्तगात्रस्य लक्ष्मणस्य कम्पमानं हृदयं सोच्छ्वासं प्राणसहितमाख्याति बोधयति अतो विषादं मा कृथाः सार्द्धश्लोक एकान्वयी ॥ २७ ॥

रा० टी०—एवमिति । सुषेणो राघवमेवमुक्त्वा हनूमन्तमुवाच ॥ २८ ॥

गो० टी०—आख्यास्यत इति । मुहुर्मुहुः कम्पमानं हृदयमेनं सोच्छ्वासं सप्राणम् आख्यास्यते आचष्टे । लडर्थे लृट् ॥ १९ ॥ २० ॥

रा० टी०—तदाकारमाह—सौम्येत्यादिभिः । जाम्बवता योऽसौ पूर्वं कथितस्तं महोदयं पर्वतमितो गत्वा तस्य दक्षिणे शिखरे जातां महौषधिमिहानय सार्द्धश्लोक एकान्वयी ॥२९॥

गो० टी०—सौम्य शीघ्रमित्यादि सार्द्धश्लोकत्रयमेका-

१ न मृतोऽयं महाबाहो इति गो. पाठः । २ नापि श्यावं न निष्प्रभमिति गो. श्यावमितिस्थाने श्यामनिति रा. पाठः । ३ हि लक्ष्यते इति रा. अभिलक्ष्यत इति गो. पाठः । ४ एवं न दृश्यते इति गो. पाठः । ५ आख्यास्यत इति गो. पाठः । ६ तु वाक्यज्ञ इति गो. पाठः । ७ हनुमन्तमुवाचेदं हनुमन्त मभिस्वरन्निति गो. पाठः । ८ शैलमौषधिपर्वतमिति गो. पा. ।

पूर्वं तु कथितो योऽसौ वीर जाम्बवता तव । दक्षिणे शिखरे जातां महौषधिमिहानय ॥ ३० ॥
विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा । संजीवकरणीं वीर संधानीं च महौषधीम् ॥ ३१ ॥
संजीवनार्थं वीरस्य लक्ष्मणस्य त्वमानय । इत्येवमुक्तो हनुमान्गत्वा चौषधिपर्वतम् ॥
चिन्तामभ्यगमच्छ्रीमानजानंस्ता महौषधीः । ॥ ३२ ॥
तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः । इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥ ३३ ॥
अस्मिंस्तु शिखरे जातामोषधीं तां सुखावहाम् । प्रतर्केणावगच्छामि सुषेणो ह्येवमब्रवीत् ॥ ३४ ॥
अगृह्य यदि गच्छामि विशल्यकरणीमहम् । कालात्ययेन दोषः स्याद्वैक्लव्यं च महद्भवेत् ॥ ३५ ॥
इति संचिन्त्य हनुमान्गत्वा क्षिप्रं महाबलः । आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेस्तटम् ॥ ३६ ॥
फुल्लनानातरुगणं समुत्पाट्य महाबलः । गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ॥ ३७ ॥
स नीलमिव जीमूतं तोयपूर्णं नभस्तलात् । उत्पपात गृहीत्वा तु हनूमाञ्शिखरं गिरेः ॥ ३८ ॥

---

न्वयम् । ओषधिपर्वतम् ओषधपर्वताख्यम् । द्वितीयो विशल्यकरणीशब्दो गुणवचनः । विशल्याः क्रियन्तेऽनयेति विशल्यकरणी ताम् ॥ २९ ॥ २४ ॥

३० ] ति० टी०—योऽसौ जाम्बवता ते कथितस्तमोषधिपर्वतं गत्वा तस्य दक्षिणशिखरे जातामोषधीमानय ॥ ३० ॥

रा० टी०—औषधीनां नाम निर्दिशन्नाह—विशल्येति । लक्ष्मणस्य संजीवनार्थं सम्यक्चेष्टाप्रतिपत्त्यर्थं विशल्यकरणीप्रभृति महौषधिमानय सार्द्धश्लोक एकान्वयी ॥ ३० ॥

३१ ] ति० टी०—सावर्ण्यकरणीं पूर्ववर्णस्य समानवर्णकरणीम् ॥ ३१ ॥

३२-३३ ] ति० टी०—अजानंस्ता महौषधीरिति । पूर्वदृष्टानामप्यपरिचये पुराणान्तरोक्तकालनेमियुद्धकृतचित्तचाञ्चल्यं हेतुरिति बोध्यम् ॥ ३२ ॥ ३३ ॥

रा० टी०—इतीति । ताः महौषधीः अजानन् हनुमान् चिन्तामभ्यगमत् ॥ ३१ ॥

रा० टी०—तस्येति । तस्य हनुमतो बुद्धिस्समुत्पन्ना तदाकारमाह गिरेश्शिखरं गृहीत्वा गमिष्यामि ॥ ३२ ॥

गो० टी०—तस्य बुद्धिरित्यादिश्लोकत्रयमेकान्वयम् । प्रतर्केण अन्तःकरणप्रसादादिना लिङ्गेन । सुषेणोप्येवमब्रवीदिति । दक्षिणे शिखरे तस्य जाताम् ओषधिमानयेति सुषेण वचनम् अगृह्य यदि गच्छामि । पुनः सुषेणं प्रष्टुमिति भावः । दोषः लक्ष्मणहानिरूपः । वैक्लव्यं निष्पौरुषत्वम् । अन्ते इतिकरणेन पूर्वमन्वयः कार्यः ॥ २५-२७ ॥

३४ ] ति० टी०—अस्मिंस्तु शिखरे इति । अस्मिन्नेव शिखरे जातां तामोषधीं प्रतर्केणावगच्छामि, हि यतः सुषेण एवमेवंलक्षणशिखरे तामब्रवीत् ॥ ३४ ॥

रा० टी०—अस्मिन्निति । अस्मिन् शिखरे जातामौषधीं प्रतर्केण स्वतर्कबलेन अवगच्छामि जानामि प्रतर्के कारणमाह सुषेणः एवं एतदाकारमब्रवीत् औषधिपर्वतमिति शेषः ॥ ३३ ॥

३५ ] ति० टी०—अगृह्येति । अत्र शिखरेऽस्तीत्येतावन्मात्रमेव जानामि, इयं विशल्यकरणीति विशिष्य न जानामि अनुभवाभावात् अतस्तां विशल्यकरणीं लक्ष्मणस्य सप्राणत्वादवश्यमपेक्षितां यदगृहीत्वान्यां वा तदाभासां गृहीत्वा गच्छामि तदा महद्वैक्लव्यमचतुराजत्वादिदोषः स्यात् । विचारकरणे तु कालात्ययेन लक्ष्मणस्य प्राणनाशो दोषः स्यात् ॥ ३५ ॥

रा० टी०—अगृह्येति । विशल्यकरणीमगृह्य अगृहीत्वा विशेषज्ञानाभावेन विशिष्य ग्रहीतुमशक्यत्वात् ग्रहणमकृत्वेत्यर्थः विरुद्धं गृहीत्वेत्यर्थो वा औषधान्तरं गृहीत्वेत्यर्थः तदा कालात्ययेन हेतुना दोषः कार्यविघातरूपो दुर्यशस्स्यात् अत एव महत् वैक्लव्यं भवेत् ॥ ३४ ॥

३६-३७ ] ति० टी०—इत्येवमादिकं संचिन्त्य त्रिः प्रकम्प्य । स्वेन पुरा स्थापितस्यापि पुनरुत्पाटनार्थं त्रिः कम्पनम् । पूर्वं संगृहीतौषधीनां मूर्च्छितगणपेषु व्ययात्पुनरस्य प्रेषणमिति बोध्यम् ॥ ३६ ॥ ३७ ॥

रा० टी०—इतीति । हनुमान् गिरेस्तटमासाद्य प्राप्य फुल्लनानातरुगणं पर्वतश्रेष्ठं समुत्पाट्य गृहीत्वा च हस्ताभ्यां समतोलयत् तद्गुरुत्वमजानादित्यर्थः ॥ ३५ ॥ ३६ ॥

गो० टी०—इति संचिन्त्येत्यादिश्लोकद्वयमेकान्वयम् । समतोलयत् उदक्षिपत् ॥ २८-३० ॥

३८ ] ति० टी०—गिरेः शिखरं गृहीत्वा स्थलान्नभ उत्पपात ॥ ३८ ॥

रा० टी०—स इति । तोयपूर्णमत एव नीलं जीमूतमिव गिरेश्शिखरं गृहीत्वा उत्पपात ॥ ३७ ॥

---

१ शुभ इति गो. पाठः । २ तस्येति गो. पाठः । ३ जातामिति गो. पाठः । ४ नमिति गो. पा. । ५ विशल्यकरणीं शुभामिति गो. पा. । ६ संधानकरणीं चापि गत्वा शीघ्रमिहानयेति गो. पा. । ७ महात्मन इति गो.पा. । ८ तां महौषधिमिति गो. पा. । ९ ह्रीति गो. पा. । १० मप्येवमिति गो. पा. । ११ शिर इति गो. पा. । १२ मा इति गो. पा. ।

समागम्य महावेगः संन्यस्य शिखरं गिरेः । विश्रम्य किंचिद्धनुमान्सुषेणमिदमब्रवीत् ॥ ३९ ॥
औषधीर्नावगच्छामि ता अहं हरिपुंगव । तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ॥ ४० ॥
एवं कथयमानं तु प्रशस्य पवनात्मजम् । सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधीः ॥ ४१ ॥
विस्मितास्तु बभूवुस्ते सर्वे वानरपुंगवाः । दृष्ट्वा तु हनुमत्कर्म सुरैरपि सुदुष्करम् ॥ ४२ ॥
ततः संक्षोदयित्वा तामोषधीं वानरोत्तमः । लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतिः ॥ ४३ ॥
सशल्यः स समाघ्राय लक्ष्मणः परवीरहा । विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥ ४४ ॥
तमुत्थितं तु हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् । साधुसाध्विति सुप्रीता लक्ष्मणं प्रत्यपूजयन् ॥ ४५ ॥
एह्येहीत्यब्रवीद्रामो लक्ष्मणं परवीरहा । सस्वजे गाढमालिङ्ग्य बाष्पपर्याकुलेक्षणः ॥ ४६ ॥
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा । दिष्ट्या त्वां वीर पश्यामि मरणात्पुनरागतम् ॥ ४७ ॥
न हि मे जीवितेनार्थः सीतया चैव जयेन वा । को हि मे जीवितेनार्थस्त्वयि पञ्चत्वमागते ॥ ४८ ॥
इत्येवं ब्रुवतस्तस्य राघवस्य महात्मनः । खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ ४९ ॥
तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम । लघुः कश्चिदिवासत्त्वो नैवं त्वं वक्तुमर्हसि ॥ ५० ॥
नहि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः । लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम् ॥ ५१ ॥

३९-४२ ] ति० टी०—संन्यस्य । सुषेणसमीप इति शेषः ॥ ३९-४२ ॥

रा० टी०—समागम्येति । महावेगो हनुमान् गिरेश्शिखरं संन्यस्य किंचिद्विश्रम्य च सुषेणमिदमब्रवीत् ॥ ३८ ॥

रा० टी०—तदाकारमाह—औषधीरिति । ताः भवदुपदिष्टाः औषधीरहं नावगच्छामि विशेषतो नाजानाम् तत्तस्माद्धेतोः तस्य औषधविशिष्टस्य गिरेरिदं शिखरं मयाहृतम् ॥ ३९ ॥

रा० टी०—एवमिति । सुषेणः पवनात्मजं प्रशस्य औषधीरुत्पाट्य जग्राह ॥ ४० ॥

रा० टी०—विस्मिता इति । वानरयूथपाः हनुमत्कर्म दृष्ट्वा विस्मिता बभूवुः ॥ ४१ ॥

गो० टी०—समागम्येति । संन्यस्य सेनामध्ये निक्षिप्य ॥ ३१-३३ ॥

४३-४५ ] ति० टी०—संक्षोदयित्वा । समर्थयेत्यर्थः ४३-४५

रा० टी०—तत इति । सुषेणः औषधिं संक्षोदयित्वा संक्षोद्य संचूर्णीकृत्य लक्ष्मणस्य लक्ष्मणाय नस्तो नासामार्गेण ददौ ॥ ४२ ॥

रा० टी०—सेति । विगता नितरां निवृत्ता रुजा यस्य स सशल्यः समीपपतितशल्यजनिततापसहितः लक्ष्मणः समाघ्राय चूर्णमिति शेषः विशल्यः शल्यसंसर्गजव्यथारहितः सन् उदतिष्ठत् ॥ ४३ ॥

रा० टी०—तमिति । लक्ष्मणमुत्थितं प्रेक्ष्य सुप्रीताः हरयः साधु साध्विति लक्ष्मणं प्रत्यपूजयन् ॥ ४४ ॥

४६-४८ ] ति० टी०—एह्येहीति । उत्थितं लक्ष्मणं राम एह्येहीत्यब्रवीत् ॥ ४६-४८ ॥

रा० टी०—एहीति । बाष्पपर्याकुलेक्षणो रामः एह्येहीति लक्ष्मणमब्रवीत् ॥ गाढमालिङ्ग्य सस्वजे च ॥ ४५ ॥

रा० टी०—अब्रवीदिति । राघवः सौमित्रिमब्रवीत् तदाकारमाह मरणात्पुनरागतमिव त्वां दिष्ट्या पश्यामि ॥ ४६ ॥

रा० टी०—नेति । त्वयि पंचत्वमागते सति मे जीवितेन अर्थः पदार्थमात्रं कः कुत्सितः प्रतीयते अत एव जीवितादिना नार्थःप्रयोजनम् ॥ ४७ ॥

गो० टी०—अब्रवीदित्यादिश्लोकद्वयमेकान्वयम् ३९-४१

४९ ] ति० टी०—शिथिलया वाचा खिन्नः । को हि मे जीवितेनार्थ इत्येवंरूपया रावणवधविभीषणराज्यदानप्रतिज्ञाशैथिल्यकरया वाचा खिन्न इत्यर्थः ॥ ४९ ॥

रा० टी०—इतीति । राघवस्य एवं ब्रुवतस्ततः खिन्नो लक्ष्मणः इदं वाक्यमब्रवीत् ॥ ४८ ॥

५०-५१ ] ति० टी०—तदेवाह—तामिति । तां मदुक्तरूपाम् ॥ ५० ॥ ५१ ॥

रा० टी०—तदाकारमाह—तामित्यादिभिः । तां राक्षसनाशविषयिणीं प्रतिज्ञां प्रतिज्ञाय कृत्वा असत्त्वो निर्बलः कश्चिल्लघुरिव वक्तुं त्वं नार्हसि ॥ ४९ ॥

रा० टी०—नहीति । हि यतः प्रतिज्ञापरिपालनं महत्त्वस्य लक्षणमतः सत्यवादिनः पुरुषाः प्रतिज्ञां वितथां न कुर्वन्ति ५०

गो० टी०—तामिति । तां प्रतिज्ञाम् रावणं हत्वा विभीषणमभिषेक्ष्यामीत्येवंरूपाम् ॥ ४२ ॥ ४३ ॥

१ औषधिं नावगमितामिति गो. पा. । २ तामिति गो. पा. । ३ औषधीमिति गो. पा. । ४ रणे वानरराक्षसाइति गो. पा. ५ । यूथपा इति रा. पा. ६ । हनूमतः कर्मेति गो. पा. । ७ स इति रा. पाठः । ८ तामिति गो. पा. । ९ ते इति गो. पा. । १० स्नेह गाढं चेति गो. पा. ।११ अपि लक्ष्मणेति गो. पा. । १२ विजयेनेति गो. पाठः । १३ वदत इति गो, पाठः । १४ वक्तुमिहार्हसीति गो. पाठः । १५ साधवोऽनघेति गो. पा. ।

नैराश्यमुपगन्तुं च नालं ते मत्कृतेऽनघ । वधेन रावणस्याद्य प्रतिज्ञामनुपालय ॥ ५२ ॥
न जीवन्यास्यते शत्रुस्तव बाणवशं गतः । नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥ ५३ ॥
अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः । यावदस्तं न यात्येष कृतकर्मा दिवाकरः ॥ ५४ ॥
यदि वधमिच्छसि रावणस्य संख्ये यदि च कृतां हि तवेच्छसि प्रतिज्ञाम् ।
यदि तव राजसुताभिलाष आर्य कुरु च वचो मम शीघ्रमद्य वीर ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकाधिकशततमः सर्गः ॥ १०१ ॥

## द्व्यधिकशततमः सर्गः ।

लक्ष्मणेन धैर्यमवष्टभ्योक्तो दाशरथिः शौर्येण रथस्थेऽपि रावणे भूमिस्थः शरधारा वर्षन् शक्रप्रहितमातलिनाभिवाद्य भो काकुत्स्थेन्द्रदत्तोयं रथस्त्वेनमारुह्येन्द्रचापबाणकवचशक्तीरिमा गृहीत्वा जह्येनमिति सादरमुक्तः स तथाकरोत् तस्मिन्महति रणे रावणः शूलं चिक्षेप रामस्तु दुर्निवारशूलं वासवदत्तशक्त्या चूर्णयित्वान्यशरै रावण माविध्य हीनशक्तिं रुष्टं चाकरोत् ।

लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा स राघवः । संदधे परवीरघ्नो धनुरादाय वीर्यवान् ॥ १ ॥
रावणाय शरान्घोरान्विससर्ज चमूमुखे । अथान्यं रथमारुह्य रावणो राक्षसाधिपः ॥ २ ॥
अभ्यधावत काकुत्स्थं स्वर्भानुरिव भास्करम् । दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः ॥
आजघान महाशैलं धाराभिरिव तोयदः । ॥ ३ ॥
दीप्तपावकसंकाशैः शरैः काञ्चनभूषणैः । अभ्यवर्षद्रणे रामो दशग्रीवं समाहितः ॥ ४ ॥
भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः । न समं युद्धमित्याहुर्देवगन्धर्वकिंनराः ॥ ५ ॥
ततो देववरः श्रीमाञ्श्रुत्वा तेषां वचोऽमृतम् । आहूय मातलिं शक्रो वचनं चेदमब्रवीत् ॥ ६ ॥

५२-५३ ] ति० टी०-मत्कृतं नैराश्यमुपगन्तुं नालं न युक्तम् । दैवाद्विपत्तावपीति शेषः । प्रतिज्ञामनुपालय दैवगत्या ममापि स्वस्थतया स्वस्थचित्तः सन्प्रतिज्ञां पालय ॥ ५२॥५३॥

रा० टी०-नैराश्यमिति । हे अनघ मत्कृतं मदर्थमपि नैराश्यं प्रतिज्ञात्यागमुपगन्तुं ते नालमतः रावणस्य वधेन प्रतिज्ञामनुपालय ॥ ५१ ॥

गो० टी०-नैराश्यमिति । नैराश्यं सीतायां विजये चोपेक्षाम् ॥ ४४ ॥

रा० टी०-ननु प्रबलस्य रावणस्य कथं वध इत्यत आह-नेति । तव बाणवशं गतश्शत्रुः जीवन् न यास्यते तत्र दृष्टान्तः सिंहस्य वशं गतो महागज इव ५२ ॥

गो० टी०-न जीवन्निति । यास्यतं यास्यति ॥ ४५ ॥

५४-५५ ] ति० टी०-कृतकर्मायतनकर्तव्यांशे कृतलोकानुग्रहः । यावदस्तं न यातीत्यनेनाभिनशुक्रप्रतिपद्येषा वार्तेति गम्यते ॥ ५४ ॥ ५५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकाधिकशततमः सर्गः ॥ १०१ ॥

रा० टी०-अहमिति । दिवाकरः यावत् अस्तं न याति तावदेव अस्य रावणस्य वधमिच्छामि ॥ ५३ ॥

गो० टी०-अहं त्विति । कृतकर्मा कृतसंचारः ॥४६॥

रा० टी०-यदीति । यदि रावणस्य वधमिच्छसि यदि च कृतान्तो धर्मराज इव प्रतिज्ञां प्रतिज्ञापरिपालनमिच्छसि यदि च राजसुतायाः अभिलाषमिच्छाविषयमिच्छसि तदा मम वचश्शीघ्रं कुरु ॥ ५४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्व्यधिकशततमः सर्गः ॥१०२॥

गो० टी०-यदीति । कृतां निर्व्यूढाम् ॥ ४७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्व्युत्तरशततमः सर्गः ॥१०२॥

१ ] ति० टी०-लक्ष्मणेनेति ॥ १ ॥

रा० टी०-लक्ष्मणवाक्यश्रवणानन्तरकालिकं रामवृत्तान्तमाह—लक्ष्मणेनेत्यादिभिः । राघवो धनुरादाय संदधे शरान् रावणाय विससर्ज च सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०-अथेन्द्ररथमारुह्य संग्रामस्त्रिशततमे-लक्ष्मणेनेत्यादि ॥ १-५ ॥

२-६ ] ति० टी०-रावणाय शरान्विससर्ज । अथान्यं रथमित्यनेन चात्र स्थाने रावणेन शुक्राज्ञया जयनिमित्तं निकुम्भिलायामारब्धहोमकर्मणो वानरद्वारा हिंसनं पुराणान्तरो-

१ तद्वाक्यमिति गो. पा. । २ पथमिति गो. पा. । ३ त्वमिहेति गो. इवेति रा. पा. । ४ वरारमजाभिलाष इति । ५ अभिलाषमिति रा. पा. । ६ आरुह्येति गो. रा. । ७ अद्रवतेति गो. पा. । ८ ग्रो रैरिति गो. पा. । ९ निर्बिभेदेति गो. पा. । १० समाहितमिति गो. पा. । ११ दानवा इति गो. पा. । १२ इत आरभ्य श्लोकचतुष्टयं गो. पुस्तके नास्ति ।

रथेन मम भूमिष्ठं शीघ्रं याहि रघूत्तमम् । आहूय भूतलं यातः कुरु देवहितं महत् ॥ ७ ॥
इत्युक्तो देवराजेन मातलिर्देवसारथिः । प्रणम्य शिरसा देवं ततो वचनमब्रवीत् ॥ ८ ॥
शीघ्रं यास्यामि देवेन्द्र सारथ्यं च करोम्यहम् । ततो हयैश्च संयोज्य हरितैः स्यन्दनोत्तमम् ॥
ततः काञ्चनचित्राङ्गः किङ्किणीशतभूषितः । ॥ ९ ॥
तरुणादित्यसंकाशो वैडूर्यमयकूबरः । सदश्वैः काञ्चनापीडैर्युक्तः श्वेतप्रकीर्णकैः ॥ १० ॥
हरिभिः सूर्यसंकाशैर्हेमजालविभूषितैः । रुक्मवेणुध्वजः श्रीमान्देवराजरथो वरः ॥ ११ ॥
देवराजेन संदिष्टो रथमारुह्य मातलिः । अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ॥ १२ ॥
अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः । प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ॥ १३ ॥
सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते । दत्तस्तव महासत्त्व श्रीमञ्शत्रुनिबर्हण ॥ १४ ॥
इदमैन्द्रं महच्चापं कवचं चाग्निसंनिभम् । शराश्चादित्यसंकाशाः शक्तिश्च विमला शिवा ॥ १५ ॥
आरुह्येमं रथं वीर राक्षसं जहि रावणम् । मया सारथिना देव महेन्द्र इव दानवान् ॥ १६ ॥

---

क्रमत्वसंधेयमिति सूचितम् । पूर्वं रणात्पलायनोक्त्या रावणोद्देश्यकशरविसर्गस्य रणभूमावसंभवादाश्विनप्रतिपन्मध्याह्ने एतद्युद्धप्रवृत्तिः ॥ २-६ ॥

रा० टी०-अथेति । रावणः अन्यं रथमास्थाय काकुत्स्थमभ्यधावत ॥ २ ॥

रा० टी०-दशग्रीव इति । रथस्थो दशग्रीवः रामं शरैराजघान ॥ ३ ॥

रा० टी०-दीप्तेति । रामः दशग्रीवं शरैरभ्यवर्षत् ॥४॥

रा० टी०-भूमाविति । भूमौ स्थितस्य रथस्थस्य च युद्धं समं तुल्यं न इति देवादय आहुः ॥ ५ ॥

रा० टी०-तत इति । शक्रः तेषां देवादीनां वचोऽमृतं श्रुत्वा मातलिं स्वसारथिमाहूय इदमब्रवीत् ॥ ६ ॥

गो० टी०-ततइत्यादिसार्धश्लोकत्रयमेकान्वयम् । कूबरः युगाधारदारु कूबरस्तु युगंधर इत्यमरः । काञ्चनापीडैः काञ्चनालंकारैः श्वेतप्रकीर्णकैः श्वेतचामरैः चामरं तु प्रकीर्णकमित्यमरः । हरिभिः हरितवर्णैः । रुक्मवेणुध्वजः कनकदण्डध्वजः । देवराजरथ इति । य इति शेषः । योऽस्ति तमारुह्येत्युत्तरत्रान्वयः । संदिष्टः चोदितः । त्रिविष्टपात् स्वर्गात्६-९

७-९ ] ति० टी०-मम रथेन शीघ्रं रघूत्तमं याहि । भूतलं यातः प्राप्तश्चाहूय रघूत्तमं संबोधनपूर्वकं देवराजरथोऽयमिति बोधयित्वा महद्देवहितं कुर्वित्यर्थः ॥ ७-९ ॥

रा० टी०-तदाकारमाह रथेनेति । मम रथेन भूमिष्ठं रघूत्तमं याहि प्राप्नुहि भूतलं यातः प्राप्तस्त्वं रघूत्तममाहूय रथे स्थापयेति शेषः अत एव महत् देवहितं त्वं कुरु ॥ ७ ॥

रा० टी०-इतीति । अहं हयैः स्यन्दनोत्तमं संयोज्य यास्यामि सारथ्यं करोमि करिष्यामि च इति मातलिरब्रवीत् अर्धचतुष्टयमेकान्वयि ॥ ८ ॥ ९ ॥

१० ] ति० टी०-काञ्चनापीडैः स्वर्णाभरणैः श्वेतप्रकीर्णकैः सितचामराद्यलंकारवद्भिः । 'चामरं तु प्रकीर्णकम्' इत्यमरः ॥ १० ॥

११ ] ति० टी०-देवराजरथः । योऽस्तीति शेषः । तमारुह्येत्युत्तरेण संबन्धः ॥ ११ ॥

१२-१४ ] ति० टी०-देवराजेन संदिष्टः शीघ्रं गच्छेत्याज्ञप्तो मातलिरित्यन्वयः । पूर्वाज्ञया वस्तुसज्जीकरणं पुनराज्ञया मनुष्यलोकं प्रति चलनमिति बोध्यम् ॥ १२-१४ ॥

१५-१६ ] ति० टी०-इदं दत्तमित्यनुषज्जते ॥१५॥१६॥

रा० टी०-तत इति । काञ्चनेन तन्मयरचनया चित्रमङ्गं यस्य वैडूर्यमयः कूबरो यस्य काञ्चनापीडैःस्वर्णमयाभरणविशिष्टैः श्वेतप्रकीर्णकैः श्वेतचामरादिविशिष्टैः हरिभिर्हरितवर्णैः सूर्यसंकाशैः हेमजालेन विभूषितैः सदश्वैर्युक्तः रुक्ममयौ वेणुध्वजौ यस्य स यो राजरथः तं रथं देवराजेन सन्दिष्टो मातलिरारुह्य त्रिविष्टपात् स्वर्गात् काकुत्स्थमभ्यवर्तत सार्धश्लोकत्रयमेकान्वयि ॥ १०-१३ ॥

रा० टी०-अब्रवीदिति । तदा रामसमीपागमनसमये सप्रतोदः तोत्रसहितः सहस्राक्षस्य सारथिः प्राञ्जलिस्सन् राममब्रवीत् ॥ १४ ॥

गो० टी०-अब्रवीच्चेति । प्रतोदः अश्वप्रेरणकाष्ठम्॥१०॥

रा० टी०-तदाकारमाह—सहस्राक्षेणेति । तव समीपवर्त्ती मया सारथिनोपलक्षितः अयं रथः ते विजयाय सहस्राक्षेण दत्तः इदं चापादि च दत्तमतः इमं रथमारुह्य महेन्द्रो दानवानिव रावणं जहि श्लोकत्रयमेकान्वयि ॥ १५-१७ ॥

गो० टी०-सहस्राक्षेणेत्यादिश्लोकद्वयमेकान्वयम् । इदमिति । अत्र चापादिषु यथायोग्यं दत्त इत्येतल्लिङ्गवचनविपरिणामेन योजनीयम् ॥ ११-११ ॥

---

१ राजन्निति गो. रामेति रा. पाठः ।

इत्युक्तः संपरिक्रम्य रथं तमभिवाद्य च । आरुरोह तदा रामो लोकाँल्लक्ष्म्या विराजयन् ॥ १७ ॥
तद्बभौ[1] चाद्भुतं युद्धं द्वैरथं[2] रोमहर्षणम् । रामस्य च महाबाहो रावणस्य च रक्षसः ॥ १८ ॥
स गान्धर्वेण गान्धर्वं दैवं दैवेन राघवः । अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ॥ १९ ॥
अस्त्रं तु परमं घोरं राक्षसं राक्षसाधिपः । ससर्ज परमक्रुद्धः पुनरेव निशाचरः ॥ २० ॥
ते रावणधनुर्मुक्ताः शराः काञ्चनभूषणाः । अभ्यवर्तन्त काकुत्स्थं सर्पा भूत्वा महाविषाः ॥ २१ ॥
ते दीप्तवदना दीप्तं वमन्तो ज्वलनं मुखैः । राममेवाभ्यवर्तन्त व्यादितास्या भयानकाः ॥ २२ ॥
तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः । दिशश्च संतताः सर्वा विदिशश्च समावृताः ॥ २३ ॥
तान्दृष्ट्वा पन्नगान्रामः समापतत आहवे । अस्त्रं गारुत्मतं घोरं प्रादुश्चक्रे भयावहम् ॥ २४ ॥
ते राघवधनुर्मुक्ता[3] रुक्मपुङ्खाः शिखिप्रभाः । सुपर्णाः काञ्चना भूत्वा विचेरुः सर्पशत्रवः ॥ २५ ॥
ते तान्सर्वाञ्शराञ्जघ्नुः सर्परूपान्महाजवान् । सुपर्णरूपा रामस्य विशिखाः कामरूपिणः ॥ २६ ॥
अस्त्रे प्रतिहते क्रुद्धो रावणो राक्षसाधिपः । अभ्यवर्षत्तदा रामं घोराभिः शरवृष्टिभिः ॥ २७ ॥
ततः शरसहस्रेण राममक्लिष्टकारिणम् । अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत ॥ २८ ॥
चिच्छेद केतुमुद्दिश्य शरेणैकेन रावणः । पातयित्वा रथोपस्थे रथात्केतुं च काञ्चनम् ॥ २९ ॥
ऐन्द्रानपि जघानाश्वाञ्शरजालेन रावणः । विषेदुर्देवगन्धर्वा[4]श्चारणा[5] दानवैः सह ॥ ३० ॥
राममार्तं तदा दृष्ट्वा सिद्धाश्च परमर्षयः । व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः ॥ ३१ ॥

---

१७ ] ति० टी०—संपरिक्रम्य प्रदक्षिणीकृत्य ॥ १७ ॥

रा० टी०—इतीति । इत्युक्तः सारथिना प्रार्थितो रामः लोकान् लक्ष्म्या विजयसम्पत्त्या विराजयन् प्रकाशयन्सन् रथमारुरोह ॥ १८ ॥

गो० टी०—इत्युक्त इति । संपरिक्रम्य प्रदक्षिणीकृत्य । लोकान् लक्ष्म्या विराजयन् चन्द्रप्रभयेव स्वकान्त्या सर्वलोकान् प्रकाशयन्नित्यर्थः ॥ १४–१८ ॥

१८–२१ ] ति० टी०—द्वैरथम् । द्वौ रथौ ययोस्तौ द्विरथौ तयोरिदं द्वैरथम् ॥ १८–२१ ॥

रा० टी०—तदिति । द्वौ रथौ यस्मिन् तदेव द्वैरथं स्वार्थिकोऽण् रामस्य रक्षसश्च अद्भुतं युद्धं बभौ ॥ १९ ॥

रा० टी०—स इति । स रामः राक्षसराजस्य गान्धर्वमस्त्रं गान्धर्वेण दैवं दैवेन च जघान ॥ २० ॥

रा० टी०—अस्त्रमिति । राक्षसाधिपः परमं घोरमस्त्रं ससर्ज ॥ २१ ॥

रा० टी०—अस्त्राणां घोरत्वमुपपादयन्नाह ते इति । रावणधनुर्मुक्ताः शराः सर्पाः भूत्वा काकुत्स्थमभ्यवर्तन्त ॥ २२ ॥

२२–२३ ] ति० टी०—व्यादितास्या व्यात्तवदनाः २२ ॥ २३

रा० टी०—ते इति । व्यादितास्याः अत एव भयानकाः दीप्तवदनास्ते बाणरूपाः मुखैर्दीप्तं ज्वलनं वमन्तस्सन्त एव राममभ्यवर्तन्त ॥ २३ ॥

गो० टी०—ते दीप्तवदना इति । व्यादितास्याः व्यात्ताननाः भयानकाः भयंकराः ॥ १९ ॥

रा० टी०—तैरिति । वासुकिसमः स्पर्शो येषां तैर्बाणसर्पैर्दिशस्सन्तताः व्याप्ताः विदिशश्च समावृताः अभवन्निति शेषः २४

गो० टी०—तैरिति । दीप्तभोगैः दीप्तफणैः । भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । प्रदिशः दिक्कोणाः २०

२४ ] ति० टी०—प्रादुश्चक्रे प्रयुयुजे ॥ २४ ॥

रा० टी०—तानिति । रामः समापततः पन्नगान् दृष्ट्वा गारुत्मतमस्त्रं प्रादुश्चक्रे ॥ २५ ॥

गो० टी०—तान् दृष्ट्वेति । प्रादुश्चक्रे प्रयुयुजे ॥ २१ ॥

२५–२८ ] ति० टी०—शिखिप्रभा अग्निप्रभाः २५–२८

रा० टी०—ते इति । राघवधनुषो मुक्ताः शिखिप्रभाः रुक्मपुंखाः काञ्चनाश्शराः सुपर्णा गरुडा भूत्वा विचेरुः ॥ २६ ॥

रा० टी०—ते इति । सुपर्णरूपा रामस्य विशिखाः सर्परूपान् शरान् जघ्नुः ॥ २७ ॥

रा० टी०—अस्त्र इति । अस्त्रे प्रतिहते सति क्रुद्धो रावणः शरवृष्टिभिः राममभ्यवर्षत् ॥ २८ ॥

रा० टी०—तत इति । शरसहस्रेण राममर्दयित्वा अर्दनानुकूलव्यापारं कृत्वा शरौघेण मातलिमिन्द्रसारथिं प्रत्यविध्यत ॥ २९ ॥

गो० टी०—त इति । शिखिप्रभाः अग्निप्रभाः । सुपर्णाः गरुडाः ॥ २२–२५ ॥

२९ ] ति० टी०—केतुमुद्दिश्य प्रक्षिप्तेनैकेन शरेण केतुं चिच्छेद । छिन्नं च तं रथाद्रथोर्ध्वदेशाद्रथोपस्थे पातयित्वा २९

३०–३१ ] ति० टी०—अश्वानपि जघान ॥ ३० ॥ ३१ ॥

---

१ बभूवेति गो. पाठः । २ तुमुलमिति गो. पाठः । ३ शरा इति गो. पाठः । ४ गन्धर्वा इति गो. रा. पा. । ५ दानवाश्चारणैरिति गो. पाठः ।

रामचन्द्रमसं दृष्ट्वा ग्रस्तं रावणराहुणा । प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् ॥ ३२ ॥
समाक्रम्य बुधस्तस्थौ प्रजानामहितावहः । सधूमपरिवृत्तोर्मिः प्रज्वलन्निव सागरः ॥ ३३ ॥
उत्पपात तदा क्रुद्धः स्पृशन्निव दिवाकरम् । शस्त्रवर्णः सुपरुषो मन्दरश्मिर्दिवाकरः ॥ ३४ ॥
अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना । कोसलानां च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम् ॥ ३५ ॥
आहत्याङ्गारकस्तस्थौ विशाखमपि चाम्बरे । दशास्यो विंशतिभुजः प्रगृहीतशरासनः ॥ ३६ ॥
अदृश्यत दशग्रीवो मैनाक इव पर्वतः । निरस्यमानो रामस्तु दशग्रीवेण रक्षसा ॥ ३७ ॥
नाशक्नोदभिसंधातुं सायकान्रणमूर्धनि । स कृत्वा भ्रुकुटिं क्रुद्धः किंचित्संरक्तलोचनः ॥ ३८ ॥
जगाम सुमहाक्रोधं निर्दहन्निव राक्षसान् । तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धीमतः ॥
सर्वभूतानि वित्रेसुः प्राकम्पत च मेदिनी । ॥ ३९ ॥

रा० टी०–चिच्छेदेति । रावणः लोकानां रावयिता रावणः केतुमुद्दिश्य प्रक्षिप्तेनैकेन शरेण केतुं चिच्छेद रथात् रथोर्ध्वदेशात् रथोपस्थे पातयित्वा छिन्नं केतुं निपात्य ऐन्द्रानश्वानपि शरजालेनाभिजघान अत एव दानवैस्सह देवादयो विषेदुः श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

रा० टी०–राममिति । आर्त्तं तत्वेन प्रतीयमानं रामं दृष्ट्वा सिद्धादयो व्यथिता बभूवुः ॥ ३२ ॥

गो० टी०–चिच्छेदेत्यादिसार्द्धश्लोकमेकं वाक्यम् । केतुं ध्वजपटम् । उद्दिश्य लक्षीकृत्य । रथात् रथावयवदण्डात् ॥ २६–२८ ॥

३२–३३ ] ति० टी०–अथ रामभयावहानुत्पातानाह—प्राजापत्यमिति । प्रजापतिदैवत्यनक्षत्रभूतां रोहिणीमित्यर्थः ॥ ३२ ॥ ३३ ॥

रा० टी०–लोकपीडाप्रदान् दिव्यान् भौमांश्चोत्पातानाह रामेत्यादिभिः । रावणराहुणा ग्रस्तं रामचन्द्रमसं दृष्ट्वा शशिनः प्रियं प्राजापत्यं प्रजापतिदेवताकं रोहिणीं नक्षत्रं समाक्रम्य प्रजानामहितावहस्सन् बुधः तस्थौ सार्धश्लोक एकान्वयी ॥ ३३ ॥

रा० टी०–सेति । सधूमाः परिवृत्ताः ऊर्मयो यस्य स सागरः प्रज्वलन् सन्निव दिवाकरं स्पृशन्निव च उत्पपात ॥३४॥

गो० टी०–रामस्य तादृशदशादर्शनेन संजातानि दिव्यानि भौमानि च वैकृतान्याह—रामचन्द्रमसमित्यादिना । प्राजापत्यं नक्षत्रं प्रजापतिदेवताकनक्षत्रभूतां रोहिणीम् । बुधे रोहिणीं प्राप्ते जगत्पीडा भवतीति भावः ॥ २९–३१ ॥

३४ ] ति० टी०–दिवाकरं स्पृशन्निवोत्पपात । अत्युन्मोर्मिर्जात इत्यर्थः । शस्त्रवर्णः कृष्णान्तर्मण्डलः ॥ ३४ ॥

रा० टी०–शस्त्रेति । शस्त्रवद्वर्णं यस्य कृष्णवर्ण इत्यर्थः सपरुषोतिरुक्षः कबन्धः अङ्के यस्य धूमकेतुना संसक्तः दिवाकरोऽदृश्यत ॥ ३५ ॥

गो० टी०–शस्त्रवर्ण इति । शस्त्रवर्णः असितश्यामः ॥ ३२ ॥

३५ ] ति० टी०–कबन्धाङ्कः कबन्धोऽङ्के यस्य सः ३५॥

रा० टी०–कोशलानामिति । कोशलानामिक्ष्वाकूणां नक्षत्रं इन्द्राग्निदैवतं विशाखं तदभिधनक्षत्रमाहत्य तस्थौ ॥३६॥

गो० टी०–कोसलानामिति । कोसलानाम् इक्ष्वाकूणाम् । विशाखायास्तन्नक्षत्रत्वमेतत्काण्डचतुर्थसर्गे दर्शितम् ॥ ३३ ॥ ३४ ॥

३६–३८ ] ति० टी०–विशाखं विशाखाख्यनक्षत्रम् । एते उत्पाता रामस्य तथा मनुष्यधर्मनटनसूचका इति बोध्यम् ॥ ३६–३८ ॥

रा० टी०–दशास्य इति । प्रगृहीतशरासनो दशास्यः मैनाक इव अदृश्यत ॥ ३७ ॥

रा० टी०–निरस्यमान इति । दशग्रीवेण निरस्यमानो रामस्सायकान् अभिसंधातुं नाशक्नोत् सामर्थ्यानुकूलकृतिं नोत्पादयत् वैयाकरणमतेऽपि कृतेर्व्यापारकुक्षिप्रविष्टत्वात् नाशब्दार्थत्वमेतेन रावणात्राणां देवानुग्रहविषयत्वं सूचितं तेन रामस्य मर्यादापालकत्वगुणो व्यक्तः ॥ ३८ ॥

गो० टी०–निरस्यमान इति । अभिसंधातुं धनुष्यारोपयितुम् ॥ ३५ ॥

रा० टी०–स इति । क्रुद्धः स रामः भ्रुकुटिं भ्रुवोः कुटिं कौटिल्यं कृत्वा राक्षसान्निर्दहन्निव महाक्रोधं रावणं जगाम ३९

गो० टी०–अथैतद्दर्शनेन रामकोपं दर्शयति—स कृत्वेति ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

३९ ] ति० टी०–क्रुद्धः स रामः सुमहाक्रोधं जगाम । तादृशक्रोधप्राप्तौ स्वजनार्तिर्भूतवैपरीत्यं रावणपराक्रमश्च निमित्तम् ॥ ३९ ॥

रा० टी०–तस्येति । रामस्य वदनं दृष्ट्वा सर्वभूतानि वित्रेसुः मेदिनी मही प्राकम्पत च ॥ ४० ॥

गो० टी०–अथ रावणस्य शलोद्धरणम् चतुःशततमे–तस्येत्यादि ॥ १ ॥ २ ॥

१ अशुभावह इति गो. रा. पा. । २ आक्रम्येति गो. पाठः । ३ विशाखामिति गो. पाठः । ४ चक्षुषेति गो. पाठः ।

सिंहशार्दूलवाञ्छैलः संचचाल चलद्रुमः । बभूव चापि क्षुभितः समुद्रः सरितां पतिः ॥ ४० ॥
खराश्च खरनिर्घोषा गगने परुषा घनाः । औत्पातिकाश्च नर्दन्तः समन्तात्परिचक्रमुः ॥ ४१ ॥
रामं दृष्ट्वा सुसंक्रुद्धमुत्पाताश्चैव दारुणान् । वित्रेसुः सर्वभूतानि रावणस्याभवद्भयम् ॥ ४२ ॥
विमानस्थास्तदा देवा गन्धर्वाश्च महोरगाः । ऋषिदानवदैत्याश्च गरुत्मन्तश्च खेचराः ॥ ४३ ॥
ददृशुस्ते तदा युद्धं लोकसंवर्तसंस्थितम् । नानाप्रहरणैर्भीमैः शूरयोः संप्रयुध्यतोः ॥ ४४ ॥
ऊचुः सुरासुराः सर्वे तदा विग्रहमागताः । प्रेक्षमाणा महायुद्धं वाक्यं भक्त्या प्रहृष्टवत् ॥ ४५ ॥
दशग्रीवं जयेत्याहुरसुराः समवस्थिताः । देवा राममथोचुस्ते त्वं जयेति पुनः पुनः ॥ ४६ ॥
एतस्मिन्नन्तरे क्रोधाद्राघवस्य च रावणः । प्रहर्तुकामो दुष्टात्मा स्पृशन्प्रहरणं महत् ॥ ४७ ॥
वज्रसारं महानादं सर्वशत्रुनिबर्हणम् । शैलशृङ्गनिभैः कूटैश्चित्तदृष्टिभयावहम् ॥ ४८ ॥
सधूममिव तीक्ष्णाग्रं युगान्ताग्निचयोपमम् । अतिरौद्रमनासाद्यं कालेनापि दुरासदम् ॥ ४९ ॥
त्रासनं सर्वभूतानां दारणं भेदनं तथा । प्रदीप्त इव रोषेण शूलं जग्राह रावणः ॥ ५० ॥

४० ] ति० टी०—चलद्रुम इति बहुव्रीहिः । 'महद्रुमः' इति पाठान्तरम् ॥ ४० ॥

रा० टी०—सिंहेति । शैलः चंचलाः द्रुमा यस्मिन् तादृशस्सन् चचाल समुद्रः क्षुभितश्च बभूव ॥ ४१ ॥

४१–४३ ] ति० टी०—औत्पातिका उत्पातप्रवृत्ताः ॥ ४१ ॥ ४३ ॥

४४ ] ति० टी०—लोकानां संवर्तः प्रलयस्तद्वत्संस्थितं संस्थानं यस्य तत् ॥ ४४ ॥

रा० टी०—खरा इति । औत्पातिकाः उत्पातसूचकाः खरनिर्घोषाः खराः गर्दभाकृतयः परुषाः रूक्षाः घनाश्च समन्तात्परिचक्रमुः ॥ ४२ ॥

रा० टी०—राममिति । सुसंक्रुद्धं रामं सुदारुणान् उत्पातांश्च दृष्ट्वा सर्वभूतानि वित्रेसुः रावणस्य भयमभवच्च ४३

गो० टी०—खराश्चेति । औत्पातिकानि उत्पातसूचकानि । नर्दन्तः गर्जन्तः ॥ ३ ॥ ४ ॥

रा० टी०—विमानस्था इति । लोकानां संवर्तवत् प्रलयवत् संस्थितं शूरयोः रामरावणयोः युद्धं देवादयो ददृशुः श्लोकद्वयमेकान्वयि ॥ ४४ ॥ ४५ ॥

गो० टी०—विमानस्था इत्यादिश्लोकद्वयमेकान्वयम् । लोकसंवर्तस्य प्रलयस्येव संस्थितं संस्थानं यस्य तत्तथोक्तम् ५–६

४५–४७ ] ति० टी०—विग्रहमागता रामरावणपक्षपाताद्विरोधपूर्वकमभिनिवेशं प्राप्ताः । प्रहृष्टवत्प्रहृष्टाः सन्तः ४५॥४७

४८ ] ति० टी०—कूटैः शूलस्य दलत्रयशिखरैः ॥ ४८ ॥

४९–५० ] ति० टी०—अग्निचयोऽग्निसमूहः ॥ ४९॥५०॥

रा० टी०—ऊचुरिति । विग्रहं परस्परविरोधमागताः महायुद्धं प्रेक्षमाणाः सुरासुराः प्रहृष्टवद्वाक्यमूचुः ॥ ४६ ॥

गो० टी०—ऊचुरिति । विग्रहमागताः विग्रहं युद्धम् उद्दिश्य आगताः । युद्धं द्रष्टुमागताः इत्यर्थः । यद्वा विग्रहमागताः रामरावणपक्षपातात् परस्परं कलहायमाना इत्यर्थः । भक्त्या प्रेक्षमाणाः सन्तः प्रहृष्टवद्वाक्यमूचुरिति संबन्धः ॥ ७ ॥

रा० टी०—तदाकारमाह—दशग्रीवमिति । असुराः जयेति वचः दशग्रीवमाहुः देवास्तु राममूचुः ॥ ४७ ॥

गो० टी०—तद्वाक्यं विविच्य दर्शयति—दशग्रीवमिति । यद्यप्यसुराणामपि रावणो बाधकः, तथापि देवानामतिशयो मा भूदित्यसूयया रावणं वर्धयन्तीति बोध्यम् ॥ ८ ॥

रा० टी०—एतस्मिन्निति । राघवस्य प्रहर्तुकामो रावणो लोकानां रावयिता रावणो वज्रसारं वज्रबलसदृशबलविशिष्टमत एव सर्वशत्रुनिबर्हणं शैलशृङ्गनिभैः कूटैः शूलाग्रभागैः चित्तदृष्ट्योर्भयावहं सधूममिव तीक्ष्णमग्रं यस्य युगान्ताग्निचयः उपमा यस्य कालेनापि दुरासदमत एव अतिरौद्रमत एव अनासाद्यं पराभवितुमशक्यमत एव सर्वभूतानां त्रासनं भेदनं च महत्प्रहरणं शूलं जग्राह अर्धाष्टकमेकान्वयि ४८॥५१

गो० टी०—एतस्मिन्नन्तर इत्यादिश्लोकचतुष्टयमेकान्वयम् । राघवस्य क्रोधात् राघवविषयक्रोधात्, प्रहरणम् आयुधम्, स्पृशन् परामृशन् । किं वेदानीं ग्रहीतुमुचितमिति क्षणं चिन्तयन्नित्यर्थः । कूटैः शिखराकारैरयःशङ्कुभिः, चितं युक्तमित्यर्थः । अतिरौद्रं रौद्रं शूलमतिवर्तमानम् अनासाद्यं शत्रुभिरप्रधृष्यम् । कालेन यमेन, दारणं क्रकचवत्कृन्तनम् । भेदनम् द्विधाकरणम् । दुष्टात्मा रावणः राघवस्य क्रोधात् प्रहर्तुकामः महत्प्रहरणं स्पृशन् सन् वज्रसारत्वादिविशिष्टं शूलं रोषेण प्रदीप्त इव स्थितो रावणो जग्राहेति संबन्धः ॥ ९–१३ ॥

१ मदीप्त गो. रा. पाठः । २ औत्पातिकानीति गो. पाठः । ३ महायुद्धमिति गो. पाठः । ४ महदिति गो. पाठः । ५ स इति गो. पाठः । ६ चितमिति गो. पाठः । ७ प्रदीप्तमिति गो. पाठः ।

तच्छूलं परमक्रुद्धो जग्राह युधि वीर्यवान् । अनीकैः समरे शूरै राक्षसैः परिवारितः ॥ ५१ ॥
समुद्यम्य महाकायो ननाद युधि भैरवम् । संरक्तनयनो रोषात्स्वसैन्यमभिहर्षयन् ॥ ५२ ॥
पृथिवीं चान्तरिक्षं च दिशश्च प्रदिशस्तथा । प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥ ५३ ॥
अतिकायस्य नादेन तेन तस्य दुरात्मनः । सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ॥ ५४ ॥
स गृहीत्वा महावीर्यः शूलं तद्रावणो महत् । विनद्य सुमहानादं रामं परुषमब्रवीत् ॥ ५५ ॥
शूलोऽयं वज्रसारस्ते राम रोषान्मयोद्यतः । तव भ्रातृसहायस्य सम्यक्प्राणान्हरिष्यति ॥ ५६ ॥
रक्षसामद्य शूराणां निहतानां चमूमुखे । त्वां निहत्य रणश्लाघी करोमि तरसा समम् ॥ ५७ ॥
तिष्ठेदानीं निहन्मि त्वामेष शूलेन राघव । एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ ५८ ॥
तद्रावणकरान्मुक्तं विद्युन्मालासमावृतम् । अष्टघण्टं महानादं वियद्गतमशोभत ॥ ५९ ॥
तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम् । ससर्ज विशिखान्रामश्चापमायम्य वीर्यवान् ॥ ६० ॥
आपतन्तं शरौघेण वारयामास राघवः । उत्पतन्तं युगान्ताग्निं जलौघैरिव वासवः ॥ ६१ ॥
निर्ददाह स तान्बाणान्रामकार्मुकनिःसृतान् । रावणस्य महाञ्शूलः पतङ्गानिव पावकः ॥ ६२ ॥
तान्दृष्ट्वा भस्मसाद्भूताञ्शूलसंस्पर्शचूर्णितान् । सायकानन्तरिक्षस्थान्राघवः क्रोधमूर्च्छितः ॥ ६३ ॥
स तां मातलिना नीतां शक्तिं वासवसंमताम् । जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥ ६४ ॥
सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना । नभः प्रज्वालयामास युगान्तोल्केव सप्रभा ॥ ६५ ॥
सा क्षिप्ता राक्षसेन्द्रस्य तस्मिञ्छूले पपात ह । भिन्नः शक्त्या महाञ्शूलो निपपात गतद्युतिः ॥ ६६ ॥

५१-५६ ] ति० टी०—अनीकैरनेकानीकसंख्यैः ५१-५६
रा० टी०—तदिति । राक्षसैः राक्षसीयैः अनीकैः परिवारितो रावणः यत् शूलं जग्राह तत् शूलं समुद्यम्य स्वसैन्यमभिहर्षयन्सन् भैरवं ननाद अर्द्धचतुष्टयमेकान्वयि ॥५२॥५३॥
रा० टी०—पृथिवीमिति । राक्षसेन्द्रस्य शब्दः पृथिव्यादि प्राकम्पयत् ॥ ५४ ॥
रा० टी०—अतीति । दुरात्मनो रावणस्य नादेन सर्वभूतानि वित्रेसुः ॥ ५५ ॥
रा० टी०—स इति । रावणः शूलं गृहीत्वा महानादं विनद्य परुषमब्रवीत् ॥ ५६ ॥
रा० टी०—तदाकारमाह शूल इत्यादिभिः । रोषान्मयोद्यतः वज्रसारोऽयं शूलः भ्रातृसहायस्य तव प्राणान् सम्यक् हरिष्यति ॥ ५७ ॥
गो० टी०—स इति । विनद्येति । पूर्वं शूलोद्यमनजनितोत्साहकृतो नाद उक्तः । इह प्रक्षेपजनितोत्साहकृतो नाद इति विवेकः ॥ १७ ॥ १८ ॥
५७-६० ति० टी०—त्वां निहत्य रक्षसां समं करोमि । रक्षोभिः समं करिष्यामीत्यर्थः ॥ ५७-६० ॥
रा० टी०—रक्षसामिति । त्वां निहत्य निहतानां रक्षसां समं सदृशं करोमि करिष्यामि ॥ ५८ ॥
रा० टी०—तिष्ठेति । एषोऽहं शूलेन त्वां निहन्मि एवमुक्त्वा स रावणः तच्छूलं चिक्षेप ॥ ५९ ॥

गो० टी०—रक्षसामित्यादिसार्धश्लोकमेकान्वयम् । त्वां विनिहत्य रक्षोभिः समं करिष्यामीत्यर्थः । "तुल्यार्थैः०" इत्यादिना षष्ठी ॥ १९ ॥ २० ॥
रा० टी०—तदिति । रावणकरान्मुक्तं विद्युन्मालाभिस्समाकुलं वियद्गतं तच्छूलमशोभत ॥ ६० ॥
रा० टी०—तदिति । राघवः ज्वलन्तं तच्छूलं दृष्ट्वा चापमानम्य विशिखान् ससर्ज ॥ ६१ ॥
गो० टी०—तदिति । विद्युज्ज्वाला विद्युत्सदृशज्वाला ॥ २१-२८ ॥
६१-६६ ] ति० टी०—वारयामास । प्रथमं वेगभङ्गं कृतवानित्यर्थः ॥ ६१-६६ ॥
रा० टी०—आपतन्तमिति । उत्पतन्तं युगांताग्निं जलौघैर्वासव इव आपतन्तं शूलं राघवो वारयामास ॥ ६२ ॥
रा० टी०—निर्ददाहेति । महान् रावणस्य शूलः रामकार्मुकनिस्सृतान् बाणान् निर्ददाह ॥ ६३ ॥
रा० टी०—तानिति । शूलसंस्पर्शचूर्णितान् भस्मसाद्भूतान् अन्तरिक्षस्थितान् सायकान् राघवो दृष्ट्वा क्रोधमाहरत् ॥ ६४ ॥
रा० टी०—स इति । वासवस्य सम्मतामपि तामित्यर्थः मातलिना नीतां शक्तिं रघुनन्दनो जग्राह ॥ ६५ ॥
रा० टी०—सेति । बलवता रामेण तोलिता उत्थापितेत्यर्थः सप्रभा शक्तिः युगान्तोल्केव नभः प्रज्वालयामास॥६६॥

१ मध्ये जग्राहेति गो. पाठः । २ नादस्येति गो. पाठः । ३ सद्य इति गो. रा. पाठः । ४ समाकुलमिति गो. रा. पाठः । ५ महाशूल इति गो. पाठः । ६ क्रोधमाहरदिति गो. रा. पाठः । ७ निर्मितामिति गो. पा. । ८ हतेति गो. पाठः ।

निर्बिभेद ततो बाणैर्[1]हयानस्य महाजवान् । रामः [2]क्षिप्तैर्महावेगैर्बाणैर्वद्भिरजिह्मगैः ॥ ६७ ॥
निर्बिभेदोरसि तदा[3] रावणं निशितैः शरैः । राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥ ६८ ॥
स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः । राक्षसेन्द्रसमूहस्थः फुल्लाशोक इवाबभौ ॥ ६९ ॥
स रामबाणैरतिविद्धगात्रो निशाचरेन्द्रः क्षतजार्द्रगात्रः ।
जगाम खेदं च समाजमध्ये क्रोधं च चक्रे सुभृशं तदानीम् ॥ ७० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्व्यधिकशततमः सर्गः ॥ १०२ ॥

---

## त्र्यधिकशततमः सर्गः ।

परमक्रुद्धेन रावणेन बाणजालैराविद्धोऽपि काकुत्स्थोऽरे मन्द मया विरहितां जानकीमपवाह्यात्मानं शूरं मन्यसे नहीदं वीरकृत्य-मद्य सहस्वामोघबाणवेगं चेद्वीर इति निर्भर्त्स्य शरजालभिन्नगात्रमकरोत्तम् सूतस्तथाविधं प्रतिकर्तुमशक्तं तं वीक्ष्य रथमन्यत्रानयत् ।

स तु[4] तेन तदा क्रोधात्काकुत्स्थेनार्दितो भृशम् । रावणः समरश्लाघी महाक्रोधमुपागमत् ॥ १ ॥
स दीप्तनयनोऽमर्षाच्चापमुद्[6]यम्य वीर्यवान् । अभ्यर्दयत्सुसंक्रुद्धो राघवं परमाहवे ॥ २ ॥
बाणधारासहस्रैस्[7]तु सतोयद इवाम्बरात् । राघवं रावणो बाणैस्तटाकमिव पूरयन् ॥ ३ ॥
पूरितः शरजालेन धनुर्[8]मुक्तेन संयुगे । महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ॥ ४ ॥
स शरैः शरजालानि वारयन्समरे स्थितः । गभस्तीनिव सूर्यस्य प्रतिजग्राह वीर्यवान् ॥ ५ ॥
ततः शरसहस्राणि क्षिप्रहस्तो निशाचरः । निजघानोरसि क्रुद्धो राघवस्य महात्मनः ॥ ६ ॥
स शोणितसमादिग्धः समरे लक्ष्मणाग्रजः । दृष्टः फुल्ल इवारण्ये सुमहान्किंशुकद्रुमः ॥ ७ ॥
शराभिघातसंरब्धः सोऽभिजग्राह सायकान् । काकुत्स्थः सुमहातेजा युगान्तादित्य[9]वर्चसः ॥ ८ ॥

---

रा० टी०–सेति । क्षिप्ता सा शक्तिः राक्षसेन्द्रस्य शूले पपात अत एव शक्त्या भिन्नः अत एव गतद्युतिः शूलो निपपात ॥६७॥

६७–६८] ति० टी०–बाणवद्भिः शब्दायमानैः ॥६७॥६८॥

रा० टी०–निर्बिभेदेति । ततोऽनन्तरमस्य रावणस्य हयान् रामः तीक्ष्णैर्बाणैर्निर्बिभेद ॥ ६८ ॥

गो० टी०–निर्बिभेदेति । बाणैः शब्दायमानैः । "अण, बाणशब्दे" इत्यस्मात् पचाद्यच् ( ? ) । बाणशब्दः शरभेदसंज्ञेत्यप्याहुः ॥ २९ ॥

रा० टी०–निर्बिभेदेति । ततो परमायत्तो राघवः रावणं त्रिभिः पत्रिभिः शरैरुरसि ललाटे च निर्बिभेद ॥ ६९ ॥

गो० टी०–निर्बिभेदोरसि तत इति । पत्रिभिस्त्रिभिरिति प्रयोगभेदान्न पुनरुक्तिः । पत्रिभिः । पत्रवद्भिरित्येके ॥३०॥

६९–७०]ति०टी०–गात्रेभ्यः प्रस्रुतं शोणितं यस्य सः । समूहस्थः समूहतया स्थितः । बहुशिरःपाणित्वात्तथात्वम् ६९॥७०

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्व्यधिकशततमः सर्गः ॥ १०२॥

रा० टी०–स इति । शरैर्भिन्नसर्वाङ्गः समूहस्थः राक्षससमुदाये स्थितः स रावणः फुल्लाशोक इवाबभौ ॥ ७० ॥

गो० टी०–स इति । समूहस्थः ॥ ३१ ॥

रा० टी०–स इति । रामबाणैरतिविद्धानि गात्राणि यस्य अत एव क्षतजेन रुधिरेण आर्द्राणि गात्राणि यस्य स दशास्यः आजेः संग्रामस्य मध्ये खेदं जगाम क्रोधं च चक्रे ॥७१॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्र्यधिकशततमः सर्गः ॥ १०३ ॥

गो० टी०–स रामबाणैरिति । समाजे युद्धे ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

---

१–२ ] ति० टी०–स तु तेनेति ॥ १ ॥ २ ॥

रा० टी०–रावणस्य रामबाणखेदानन्तरकालिकं वृत्तान्तमाह—स इत्यादिभिः । काकुत्स्थेनार्दितो रावणः महाक्रोधमुपागमत् ॥ १ ॥

रा० टी०–स इति । दीप्तनयनो रावणः चापमुद्यम्य राघवमभ्यधावत् ॥ २ ॥

गो० टी–अथ श्रान्तस्य रावणस्य सूतेन रथापवाहनं पञ्चशततमे–स तु तेनेत्यादि ॥ १ ॥ २ ॥

३–८ ] ति० टी०–अम्बरात्पतिताभिर्धाराभिस्तोयदस्तटाकमिव स रावणो राघवं बाणधारासहस्रैः पूरयन् । अभ्यर्दयदिति शेषः ॥ ३–८ ॥

---

१ तीक्ष्णैरिति गो. पाठः । २ वज्रकल्पैः शितैः शरैरिति गो. पाठः । ३ उरसि तत इति गो. उरसि तदेति रा. पा. । ४ तेन खिवि गो. पाठः । ५ रणे इति गो. पाठः । ६ आयम्येति गो. पाठः । ७ तैरिति गो. पाठः । ८ अपीति गो. पाठः । ९ तेजस इति गो. पा. ।

ततोऽन्योन्यं सुसंरब्धौ तावुभौ रामरावणौ । शरान्धकारे समरे नोपलक्षयतां तदा ॥ ९ ॥
ततः क्रोधसमाविष्टो रामो दशरथात्मजः । उवाच रावणं वीरः प्रहस्य परुषं वचः ॥ १० ॥
मम भार्या जनस्थानादज्ञानाद्राक्षसाधम । हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान् ॥ ११ ॥
मया विरहितां दीनां वर्तमानां महावने । वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे ॥ १२ ॥
स्त्रीषु शूर विनाथासु परदाराभिमर्शनम् । कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे ॥ १३ ॥
भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित । दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे ॥ १४ ॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च । श्लाघनीयं महत्कर्म यशस्यं च कृतं त्वया ॥ १५ ॥
उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च । कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत्फलम् ॥ १६ ॥
शूरोऽहमिति चात्मानमवगच्छसि दुर्मते । नैव लज्जास्ति ते सीतां चौरवद्व्यपकर्षतः ॥ १७ ॥

---

रा० टी०-बाणेति । बाणधारासहस्रैः बाणसदृशबहुधाराभिः तटाकं पूरयन् तोयद इव रावणो बाणैः राघवं पूरयन्नेवावर्ततेति शेषः एक इव एवार्थे ॥ ३ ॥

रा० टी०-पूरित इति । धनुर्मुक्तेन रावणचापच्युतेन शरजालेन पूरितोपि काकुत्स्थः अकम्प्यो महागिरिरिव न प्रकम्पते ॥ ४ ॥

रा० टी०-स इति । स रावणः शरैश्शरजालानि वारयन् वारयितुं सूर्यस्य गभस्तीन् किरणानिव प्रतिजग्राह शरानिति शेषः ॥ ५ ॥

रा० टी०-तत इति । निशाचरः राघवस्योरसि शरसहस्राणि निजघान ॥ ६ ॥

रा० टी०-स इति । शोणितेन क्रोधहेतुकारुण्येन समादिग्धो व्याप्तो लक्ष्मणाग्रजः फुल्लः किंशुकद्रुम इव दृष्टः ॥ ७ ॥

रा० टी०-शरेति । शराभिघातेन संरब्ध उपात्तकोपस्सरामः सायकान् अभिजग्राह ॥ ८ ॥

गो० टी०-बाणधारेति । बाणधारासहस्रैः हेतुभिः, तोयद इव रावणः तैः धाराभूतैः बाणैः, तटाकमिव रामं पूरयत अपूरयत् ॥ ३-८ ॥

९ ] ति० टी०-अन्योन्यं नोपलक्षयतामित्यन्वयः ॥ ९ ॥

रा० टी०-तत इति । सुसंरब्धौ रामरावणौ शर एव अन्धकारो यस्मिन् तस्मिन् समरे अन्योन्यं नोपलक्षयतामुपालक्षयेताम् ॥ ९ ॥

गो० टी०-तत इति । अन्योन्यं नोपालक्षयतामित्यन्वयः ॥ ९ ॥ १० ॥

१० ] ति० टी०-प्रहस्येति । कोपविकारजोऽयं प्रहासः १०

रा० टी०-तत इति । रामः रावणं परुषमुवाच ॥१०॥

११-१२ ] ति० टी०-अज्ञानादविवेकान्मत्स्वरूपाज्ञानाच्च तस्मात्त्वं वीर्यवान्नासि च । मत्क्रोधदीपकेन तेन पापेन शीघ्रं विनङ्क्ष्यसीत्यर्थः ॥ ११ ॥ १२ ॥

रा० टी०-तदाकारमाह-ममेत्यादिभिः । अज्ञानात् मम पराक्रमविषयकज्ञानराहित्याद्धेतोः विवशा अतिक्रान्तिमती मम भार्या यस्मात्ते त्वया हृता चोरिता तस्मात् त्वं वीर्यवान्नासि ॥ ११ ॥

रा० टी०-मयेति । वैदेहीं हृत्वा प्रसभं स्वहठात् शूरोऽहमिति मन्यसे ॥ १२ ॥

गो० टी०-ममेति । मम अज्ञानात् ममादर्शनात्, त्वदविवेकादिति वा । ते त्वया ॥ ११ ॥ १२ ॥

[१३-१४ ] ति० टी०-विनाथास्वसंनिहितनाथासु स्त्रीषु शूरेत्यन्वयः ॥ १३ ॥ १४ ॥

रा० टी०-स्त्रीष्विति । विनाथासु पतिसंनिधानरहितासु स्त्रीषु तत्कर्मकचतुरासु शूर परदाराणामभिमर्शनं केशस्पर्शादि-कापुरुषकर्म कृत्वा शूरोऽहमिति मन्यसे ॥ १३ ॥

रा० टी०-भिन्नेति । मृत्युं मृत्युहेतुभूतपरस्त्रियमुपादाय शूरोहमिति मन्यसे ॥ १४ ॥

गो०टी०-स्त्रीष्विति । कापुरुषं कापुरुषसंबन्धि१३-१४

१५ ] ति० टी०-' श्लाघनीयं यशस्यं च महत्कर्म कृतं त्वया ' इति व्यङ्ग्योक्तिः ॥ १५ ॥

रा० टी०-शूरेणेति । धनदभ्रात्रा त्वया शूरेण श्लाघनीयं महत् कर्म कृतम् विपरीतलक्षणया निन्दनीयं क्षुद्रं कृतमित्यादिरर्थः किंच त्वया यशस्यं कर्म कृतं छिन्नम् ॥ १५ ॥

गो० टी०-शूरेणेत्यादि । सोपहासोक्तिः ॥ १५ ॥

१६-१७ ] ति० टी०-तदेव स्पष्टमाह-उत्सेकेनेति । गर्वेणाभिपन्नस्यानुष्ठितस्य । अहितस्येहामुत्रानर्थरूपस्य१६-१७

रा० टी०-उत्सेकेनेति । उत्सेकेन गर्वेण अभिपन्नस्य कृतस्य गर्हितस्य कर्मणः सुमहत् फलं प्राप्नुहि ॥ १६ ॥

रा० टी०-शूर इति । चोरवत् सीतां व्यपकर्षतस्ते लज्जा नैवास्ति अत एव शूरोहमित्यवगच्छसि जानासि ॥१७॥

गो० टी०-उत्सेकेनेति । उत्सेकेन गर्वेण ॥ १६-१९ ॥

---

१ उभौ गर्वितौ गो० पाठः । २ अभिमर्शकेति गो० रा० पाठः । ३ यशस्यं च कृतं कर्म महत्त्वयेति गो० पाठः ।

यदिमत्संनिधौ सीता धर्षिता स्यात्त्वया बालत् । भ्रातरं तु खरं पश्येस्तदा मत्सायकैर्हतः ॥ १८ ॥
दिष्ट्यासि मम मन्दात्मंश्चक्षुर्विषयमागतः । अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९ ॥
अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम् । क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥ २० ॥
निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण । पिबन्तु रुधिरं तर्षाद्बाणशल्यान्तरोत्थितम् ॥ २१ ॥
अद्य मद्बाणभिन्नस्य गतासोः पतितस्य ते । कर्षन्त्वन्त्राणि पतगा गरुत्मन्त इवोरगान् ॥ २२ ॥
इत्येवं स वदन्वीरो रामः शत्रुनिबर्हणः । राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥ २३ ॥
बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे । रामस्यास्त्रबलं चैव शत्रोर्निधनकांक्षिणः ॥ २४ ॥
प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः । प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत् ॥ २५ ॥
शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः । भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥ २६ ॥
हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात् । हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥ २७ ॥
यदा च शस्त्रं नारेभे न चकर्ष शरासनम् । नास्य प्रत्यकरोद्वीर्यं विक्लवेनान्तरात्मना ॥ २८ ॥

---

१८-२० ] ति० टी०-तदा तदैव ॥ १८-२० ॥

रा० टी०-यदीति । त्वया मत्संनिधौ सीता धर्षिता यदि स्यात् तदा मत्सायकैर्हतस्त्वं भ्रातरं खरं पश्येः ॥ १८ ॥

रा० टी०-दिष्ट्येति । यमसादनं नेमिनां स्थानं नयामि ॥ १९ ॥

रा० टी०-अद्येति । मच्छरैः छिन्नमत एव रणपांसुषु विकीर्णं ते शिरः क्रव्यादा व्यपकर्षन्तु ॥ २० ॥

गो० टी०-अद्य त इति । शिरो ज्वलितकुण्डलमित्यननेन तदानीमन्तकाले रावण एकशिरस्कः स्थित इति गम्यते ॥२०॥

२१-२३ ] ति० टी०-तर्षात्पिपासया । बाणशल्यान्तरोत्थितं बाणानां यानि शल्यानि तत्कृतादन्तराच्छिद्रादुत्थितम् ॥ २१-२३ ॥

रा० टी०-निपत्येति । क्षितौ क्षिप्तस्य ते उरसि गृध्रा निपत्य बाणशल्येन अयोमयबाणाग्रभागेन कृतात् अन्तरात् छिद्रादुत्थितं रुधिरं पिबन्तु ॥ २१ ॥

रा० टी०-अद्येति । मद्बाणभिन्नस्य ते अन्त्राणि गरुत्मन्त उरगानिव पतगाः गृध्रादयः कर्षन्तु ॥ २२ ॥

रा० टी०-इतीति । रामः राक्षसेन्द्रं शरवर्षैरवाकिरत् २३

गो० टी०-निपत्येति । तर्षः पिपासा । शरशल्यान्तरोत्थितं शरशल्यक्षतविवरादुत्थितमित्यर्थः ॥ २१-२३ ॥

२४ ] ति० टी०-रामस्य वीर्यादि द्विगुणं बभूव । अपकारस्मरणादिति शेषः ॥ २४ ॥

गो० टी०-बभूवेति । शत्रोर्निधनकांक्षिणो रामस्य वीर्यादि द्विगुणमधिकत्वेन प्रतीयमानं बभूव ॥ २४ ॥

२५ ] ति० टी०-अस्त्राणि प्रादुर्बभूवुरस्त्रदेवताः संनिहिता अभूवन् । प्रहर्षाद्देवतासंनिधिजात् ॥ २५ ॥

रा० टी०-प्रादुरिति । विदितात्मनो रामस्य अस्त्राणि प्रादुर्बभूवुः रामस्तु हर्षात् युद्धोत्साहजनितानन्दात् शीघ्रहस्ततरोऽभवत् ॥ २५ ॥

२६ ] ति० टी०-भूयोऽप्यधिकम् ॥ २६ ॥

रा० टी०-शुभानीति । शुभानि शुभसूचकानि आत्मगतानि एतानि वीर्याधिक्यादीनि चिन्हानि रामो विज्ञाय रावणं भूयोप्यर्दयत् ॥ २६ ॥

२७ ] ति० टी०-राघवाद्राघवस्य राघवोन्मुक्तादिति वा। विघूर्णहृदयो विकलहृदयः ॥ २७ ॥

रा० टी०-हरीणामिति । हरीणामश्मनिकरैः राघवात् राघवस्य शरवर्षैश्च हन्यमानो दशग्रीवः विघूर्णहृदयोऽभवत्॥२७॥

गो० टी०-हरीणां चेति । राघवात् राघवस्य । विभक्तिव्यत्यय आर्षः । विघूर्णहृदयः भ्रान्तहृदयः ॥ २७ ॥

२८ ] ति० टी०-विक्लवेन विसंज्ञेनान्तरात्मना यदा वीर्यं तत्कार्यं नारेभे, शस्त्रं शस्त्रप्रयोगं च नारेभे, तदा रामोऽस्य न प्रत्यकरोत् । संहाराय नातिष्ठदिति भावः ॥ २८ ॥

रा० टी०-यदेति । यदा विक्लवेन अन्तरात्मना उपलक्षितो रावणः शस्त्रं तत्प्रयोगं नारेभे अत एव शरासनं न चकर्ष तदा अस्य रावणस्योपरि वीर्यं तद्धेतुकशरप्रक्षेपादि न प्रत्यकरोत् राम इति शेषः ॥ २८ ॥

गो० टी०-यदा चेत्यादिश्लोकत्रयमेकान्वयम् । यदा शस्त्रं नारेभे शस्त्रं न प्रयुक्तवान् । शरासनं च न व्यकर्षत् । यदा च विक्लवेन विवशेन, अन्तरात्मना मनसा हेतुना, अस्य रामस्य वीर्यं स्ववीर्यं च न प्रत्यकरोत् न प्रतिजघान । तेन रावणेन क्षिप्ताः शरा अपि विविधानि शस्त्राणि च न रणार्थाय वर्तन्ते । छेदनभेदनादिरणप्रयोजनं कर्तुं यदा नाशक्नुवन् । तदा मृत्युकाले अभिवर्ततः अभिवर्तमानस्य, अस्य रावणस्य, रथनेता सूतः असंभ्रान्तः सन् तदवस्थं पूर्वोक्तावस्थम् रावणं समीक्ष्य तस्य रथं युद्धात् युद्धस्थलात्, शनैः अपवाहयत् अपावाहयत् । अन्यत्रानयदिति योजना २८-३०

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चोत्तरशततमः सर्गः ॥१०५॥

---

१ दुष्टात्मन्निति गो. पाठः । २ व्यकर्षन्निति गो. रा. पाठः ।

क्षिप्ताश्चाशु शरास्तेन शस्त्राणि विविधानि च । मरणार्थाय वर्तन्ते मृत्युकालोऽभ्यवर्तत ॥ २९ ॥
सूतस्तु रथनेतास्य तदवस्थं निरीक्ष्य तम् । शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत् ॥ ३० ॥
रथं च तस्याथ जवेन सारथिर्निवार्य भीमं जलदस्वनं तदा ।
जगाम भीत्या समरान्महीपतिं निरस्तवीर्यं पतितं समीक्ष्य ॥ ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्र्यधिकशततमः सर्गः ॥ १०३ ॥

## चतुरधिकशततमः सर्गः ।

रावणो लब्धसंज्ञोऽन्यत्रात्मरथं वीक्षमाणः क्रोधेनापि मन्यसे मां कातरमन्यथा कुतोऽयमपवाहितो रथस्त्वयेत्यादिपरुषवचनैः सूतं तर्जयांचक्रे तथाभिहितेन सारथिना रथ्यान् श्रान्तानवेक्ष्य तत्खेदं परिजिहीर्षता मयेत्थमकारि न तु भीत्येत्येवमुक्तः स प्रशस्य हस्ताभरणमर्पितवान् ततो रावणादिष्टः सूतोऽचिरात्स्यन्दनं रामाभिमुखमकरोत् ।

स तु मोहात्सुसंक्रुद्धः कृतान्तबलचोदितः । क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥ १ ॥
हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम् । भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २ ॥
विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् । मामवज्ञाय दुर्बुद्धे स्वया बुध्या विचेष्टसे ॥ ३ ॥
किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च । त्वया शत्रुसमक्षं मे रथोऽयमपवाहितः ॥ ४ ॥

---

२९ ] ति० टी०—अपि तु मूर्च्छातः प्रागेव क्षिप्ताः शरा अस्य रावणस्य मरणार्थाय मरणरूपप्रयोजनाय प्रवर्तन्ते स्म एवमस्य मृत्युकालोऽभ्यवर्ततोपस्थितः ॥ २९ ॥

रा० टी०—क्षिप्ता इति । यानि मरणार्थाय वर्तन्ते तानि शराः शस्त्राणि च क्षिप्ताः रामेणेति शेषः अतः मृत्युकालोभ्यवर्तत रावणस्येति शेषः ॥ २९ ॥

३०-३१ ] ति० टी०—मृत्युकाल उपस्थितेऽस्य रथं सूतोऽपवाहयत् ॥ ३० ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीयआदिकाव्ये युद्धकाण्डे त्र्यधिकशततमः सर्गः ॥ १०३ ॥

रा० टी०—सूत इति । अस्य रावणस्य सूतः सा चेष्टारहिता अवस्था यस्य तं रावणं निरीक्ष्य युद्धात् तस्य रावणस्य रथमपवाहयत् अपावाहयत् ॥ ३० ॥

रा० टी०—रथमिति । सारथिः महीपतिं रावणं निरस्तवीर्यमत एव पतितं समीक्ष्य तस्य रावणस्य रथं निवार्य निवर्त्य जगाम रणात् बहिर्देशमिति शेषः ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥

१ ] ति० टी०—स तु मोहादिति । शनैर्मोहेन मुक्त इति शेषः ॥ १ ॥

रा० टी०—सूतकर्तृकरथापवाहनानन्तरकालिकं वृत्तान्तमाह—स इत्यादिभिः । कृतान्तस्य कालस्य बलेन चोदितः आसन्नमरणकाल इत्यर्थः अत एव मोहात् संक्रुद्धो रावणः सूतमब्रवीत् ॥ १ ॥

गो० टी०—अथ रावणरथप्रत्यानयनम् षड्शततमे—स तु मोहादित्यादि । मोहात् अविवेकात् ॥ १ ॥

२ ] ति० टी०—हीनवीर्यं हीनबलम् अशक्तमस्त्रादिप्रयोगसामर्थ्यहीनम् । लघुमल्पचित्तम् असत्यमधीरम् तेजः पराभिभवसामर्थ्यम् ॥ २ ॥

३ ] ति० टी०—अवज्ञायावमत्य । स्वबुद्ध्या स्वेच्छया ॥ ३ ॥

रा० टी०—तदाकारमाह—हीनेत्यादिभिः । हीनवीर्यं बलरहितमिव अशक्तं सामर्थ्यरहितमिव पौरुषेण पुरुषधर्मेण विवर्जितं स्त्रियमिवेत्यर्थः अत एव भीरुमिव अत एव लघुं क्षुद्रमिव अत एव तेजसा विहीनमिव अत एव असत्त्वं सत्तारहितमिव मायाभिर्विनिर्मुक्तमिव अस्त्रैः बहिष्कृतमिव मामवज्ञाय अनादृत्य बुध्या स्वमत्या विचेष्टसे श्लोकद्वयमेकान्वयि॥२॥३॥

गो० टी०—हीनवीर्यमिवेत्यादिश्लोकद्वयमेकान्वयम् । यत्र यत्र इव शब्दो नास्ति तत्र तत्रानुषञ्जनीयः । हीनवीर्यमिव हीनबलमिव अशक्तमिव निरुत्साहमिव असत्त्वमिव अधीरमिव । तेजसा परिभवासहनेन ॥ २ ॥ ३ ॥

४ ] ति० टी०—मच्छन्दं मदभिप्रायम् ॥ ४ ॥

रा० टी०—किमर्थमिति । मामवज्ञाय अत एव छन्दं मदभिप्रायमनवेक्ष्य शत्रुसमक्षं विद्यमानो मे रथः त्वया किमर्थमपवाहितः ॥ ४ ॥

गो० टी०—किमर्थमिति । मच्छन्दं मदभिप्रायम् वशाभिप्राययोश्छन्द इत्यमरः ॥ ४ ॥

---

१ अपीति गो. रा.पाठः । २ कालेऽभिवर्तते इति गो. पाठः । ३ समिति गो. पाठः । ४ इदं पद्यं गो. पुस्तके नास्ति । ५ शत्रोरिति गो. पाठः ।

त्वयाद्य हि ममानार्य चिरकालमुपार्जितम्[1] । यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥ ५ ॥
शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः । पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया ॥ ६ ॥
यस्त्वं[2] कथमिदं मोहान्न चेद्वहसि दुर्मते । सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः ॥ ७ ॥
नहि तद्विद्यते कर्म सुहृदो हितकाङ्क्षिणः । रिपूणां सदृशं त्वेतद्[3]यत्त्वयै[4]तदनुष्ठितम् ॥ ८ ॥
निवर्तय रथं शीघ्रं यावन्नोपैति[5] मे रिपुः । यदि वाध्युषितोऽसि[6] त्वं स्मर्यते[7] यदि मे[8] गुणाः[9] ॥ ९ ॥
एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना । अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥ १० ॥
न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः । न प्रमत्तो न निःस्नेहो विस्मृता न च सत्क्रिया ॥ ११ ॥
मया तु हितकामेन यशश्च परिरक्षता । स्नेहप्रसन्नमनसा[10] हितमित्यप्रियं[11] कृतम् ॥ १२ ॥
नास्मिन्नर्थे महाराज त्वं मां प्रियहिते रतम् । कश्चिल्लघुरिवानार्यो दोषतो गन्तुमर्हसि ॥ १३ ॥

---

५ ] ति० टी०—प्रत्ययो मद्विषयो लोकस्य शूरत्वविश्वासः ॥ ५ ॥

रा० टी०—त्वयेति । अद्य रथापवाहनसमये त्वया ममयशःप्रभृतिर्विनाशितः तत्र प्रत्ययः अयं महाशूर इति विश्वासः ॥ ५ ॥

गो० टी०—त्वयेति । प्रत्ययः रावणस्य युधि पलायनं नास्तीति सर्वेषां विश्वासः । विनाशित इत्यस्य यश आदिषु लिङ्गविपरिणामः ॥ ५ ॥

६ ] ति० टी०—शत्रोः पश्यतः सतस्त्वयाहं कापुरुषः कुत्सितपुरुषः कृतः ॥ ६ ॥

रा० टी०—शत्रोरिति । विक्रमैर्मया रञ्जनीयस्य शत्रोः पश्यतः युद्धलुब्धः अतियुद्धाभिलाषी अहं त्वया कापुरुषः कृतः ६

गो०टी०—शत्रोरिति । शत्रो: पश्यतः शत्रौ पश्यति ॥६॥

७ ] ति० टी०—यद्यतस्त्वमिमं रथं कथमपि चेन्नोद्वहसि मोहादप्यज्ञानादपि शत्रोरभिमुखं न प्रापयसि, स त्वं परेणोपस्कृत उत्कोचेन विकारं प्रापित इत्येवं मे प्रतितर्कः सत्यः । उपाद्वैकृतेऽर्थे करोतेः सुट् ॥ ७ ॥

रा० टी०—यदिति । च यदि मोहात् मोहं प्राप्य कथमपि इमं रथं यदस्मात् नोद्वहसि तदा तस्मात् परेण रिपुणा त्वमुपस्कृतः उत्कोचादिना वशं प्रापितः इति प्रतितर्कः सत्यः ॥७॥

गो० टी०—य इति । यः नोद्वहसि अभिमुखं न प्रापयसि, किं त्वपवाहयसि स त्वम् उपस्कृतः परेणोत्कोचादिना वशीकृत इत्ययं प्रतितर्कः सत्यः प्रतिभाति ॥ ७ ॥

८ ] ति० टी०—नहि तत्त्वदनुतिष्ठं कर्म सुहृदो विद्यते भवति । यत्त्वयाऽनुष्ठितं तथापवाहनकर्मेत्यर्थः ॥ ८ ॥

रा० टी०—नेति । यदेतत् कर्म त्वयानुष्ठितं तत् रिपूणां सदृशं हि अत एव सुहृदः एतत् कर्म न विद्यते ॥ ८ ॥

गो० टी०—न हीति । न त्वयैतत् स्वनुष्ठितमिति । त्वयानुष्ठितमेतत् न तु स्वनुष्ठितं तत् ॥ ८ ॥

९ ] ति० टी०—अध्युषितश्चिरकालं मत्समीपे स्थितः । मे गुणः । मत्कृतोपकार इत्यर्थः ॥ ९ ॥

रा० टी०—निवर्तयेति । यदि त्वमध्युषितः चिरं मत्समीपे स्थितोसि अत एव यदि मे गुणास्त्वया स्मर्यन्ते तदा यावत् मे रिपुर्नोपैति अपगच्छति तावदेव मे रथं निवर्तय ॥९॥

गो० टी०—निवर्तयेति । अध्युषितः सहवासी सुहृदिति यावत् उपधयोपसर्पितो वा । गुणाः सत्काराः ॥ ९ ॥

१० ] ति० टी०—हितबुद्धिः सूतः ॥ १० ॥

रा० टी०—एवमिति । अबुद्धिना एवं परुषमुक्तस्सूतः सानुनयं हितं वचोऽब्रवीत् ॥ १० ॥

गो० टी०—एवमिति ॥ १० ॥

११ ] ति० टी०—नोपजप्त उपजापं भेदं न प्रापितः । सत्क्रिया । त्वत्कृतेति शेषः ॥ ११ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । अहं भीतत्वादिविशिष्टो न तत्रोपजप्तः उत्कोचादिना रिपुवशं प्राप्तः॥११॥

गो० टी०—न भीतोस्मीति । नोपजप्तः उपजापं भेदं न गमितः भेदोपजापावित्यमरः ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—यशश्च परिरक्षता जीवनरक्षणेनात्मीयं त्वदीयं च यशो रक्षतेत्यर्थः । स्नेहप्रसन्नमनसा स्नेहार्द्रहृदयेन । रथापवाहनं शूरत्वात्तवाप्रियमपि हितमिति निश्चित्य कृतम् ॥ १२ ॥

रा० टी०—अपवाहने हेतुमाह—मयेति । यशः तव स्वस्यापि यशःकारणीभूतजीवनं परिरक्षता अत एव हितकामेन स्नेहेन प्रसन्नं युक्तं मनो यस्य तेन मया अप्रियम् भवत्प्रीत्यविषयीभूतमितीदं हितमेव कृतम् ॥ १२ ॥

१३ ] ति० टी०—अस्मिन्नर्थे युद्धादपोहनरूपे कार्येऽनार्यो लघुरिवाविमृश्यकारी क्षुद्र इव दोषतो गन्तुं दोषवत्त्वेन ज्ञातुं नार्हसि । मयि दुष्टबुद्धिं कर्तुं नार्हसीत्यर्थः ॥ १३ ॥

रा० टी०—नेति । प्रियहिते रतं मामस्मिन् अपवाह-

---

१ समार्जितमिति गो. रा. पाठः । २ यस्त्वं रथमिममिति गो. पाठः । ३ चैतदिति गो. रा. पाठः । ४ न त्वयैतत्स्वनुष्ठितमिति गो.पाठः । ५ उपैतीति गो. रा. पाठः । ६ वासीति गो. पाठः । ७ स्मर्यन्ते इति गो. रा. पाठः । ८ वेति गो. पाठः । ९ गुणा इति गो. रा. पाठः । १० प्रस्कन्नेति गो. पाठः । ११ प्रियमिति गो. पाठः ।

श्रूयतां प्रति दास्यामि यन्निमित्तं मया रथः । नदीवेग इवाम्भोभिः संयुगे विनिवर्तितः ॥ १४ ॥
श्रमं तवावगच्छामि महता रणकर्मणा । नहि ते वीर्यसौमुख्यं प्रकर्षं नोपधारये ॥ १५ ॥
रथोद्वहनखिन्नाश्च भग्ना मे रथवाजिनः । दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥ १६ ॥
निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति नः । तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥ १७ ॥
देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च । दैन्यं हर्षश्च खेदश्च रथिनश्च महाबलं ॥ १८ ॥
स्थलनिम्नानि भूमेश्च समानि विषमाणि च । युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम् ॥ १९ ॥
उपयानापयाने च स्थानं प्रत्यपसर्पणम् । सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥ २० ॥

नरूपेऽर्थे लघुः क्षुद्रः अत एव अनार्यः आर्यमार्गविरोधीव त्वं दोषतः दोषवत्तया अवगन्तुं नार्हसि ॥ १३ ॥

गो० टी०-नेति । अस्मिन्नर्थे रथापवाहनरूपेऽर्थे, कश्चित् कुत्रापि कुले जातः, लघुः अल्पबुद्धिः, अनार्यः दुष्टहृदय इव मां दोषतः गन्तुं ज्ञातुं नार्हसि । गत्यर्थां ज्ञानार्थाः ॥ १३ ॥

१४ ] ति० टी०-कुतस्तत्राह—श्रूयतामिति । यदुक्तं प्रतिदास्यामि तच्छ्रूयताम् । यन्निमित्तं रथो निवर्तितस्तच्च श्रूयताम् । रथो रथवेगः चन्द्रोदयेन प्रवृद्धसमुद्राम्भोभिर्नदीवेग इव संयुगे संयुगान्निवर्तितः ॥ १४ ॥

रा० टी०-श्रूयतामिति । यन्निमित्तमम्भोभिर्नदीवेग इव रथो विनिवर्तितः तन्निमित्तं प्रतिदास्यामि कथयिष्यामीत्यर्थः त्वया श्रूयताम् ॥ १४ ॥

गो० टी०-श्रूयतामिति । यन्निमित्तं यत्कारणात् "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति प्रथमा । नदीति । आभोगे उन्नतप्रदेशे आभोगान्नदीवेग इव रथः संयुगाद्विनिवर्तित इत्यर्थः । आभोगे संयुग इत्यत्र विभक्तिव्यत्ययः ॥ १४ ॥

१५-१६ ] ति० टी०-रणकर्मणा युद्धेन । वीर्यसौमुख्यं वीर्यकार्यं प्रति सौमुख्यं वीर्यसौमुख्यम् । प्रकटयं शत्रोरपेक्षयाधिक्यम् । 'प्रहारम्' इति पाठे शत्रुविषयकमित्यर्थः॥१५॥

रा० टी०-कथनाकारमाह—श्रममित्यादिभिः । महता रणकर्मणा तव श्रममवगच्छामि अजानामत एव वीर्यसौमुख्यं वीर्यस्य अधिकपराक्रमस्य सौमुख्यं प्राकट्यं यस्मिन् तं ते प्रकर्षं नोपधारये अपश्यम् ॥ १५ ॥

गो० टी०-श्रममिति । सौमुख्यं हृष्टमुखत्वम् तन्मूलं प्रकर्षम् ॥ १५ ॥

रा० टी०-रथेति । रथोद्वहनेन खिन्नाः मे रथवाजिनो वर्षहता गाव इव भग्ना बभूवुरिति शेषः ॥ १६ ॥

गो० टी०-रथेति । अत्र आसन्निति शेषः ॥ १६ ॥

१७ ] ति० टी०-निमित्तानि दुर्निमित्तानि । अभिपन्नेषु-जातेष्वप्रदक्षिणं प्रतिकूलं लक्षयामीति संबन्धः ॥ १७ ॥

रा० टी०-निमित्तानीति । यानि यानि निमित्तानि प्रादुर्भवन्ति अभिपन्नेषु अवलोकितेषु तेषु तेषु निमित्तेषु भूयिष्ठमधिकमप्रदक्षिणममङ्गलं लक्षयामि अलक्षयम् ॥ १७ ॥

गो० टी०-निमित्तानि चेति । अभिपन्नेषु आविर्भूतेषु सत्सु । अप्रदक्षिणं प्रतिकूलम् ॥ १७ ॥

१८ ] ति० टी०-ननु सन्त्विमानि किं तवैतद्विचारेणेत्याशङ्क्याह—देशेत्यादिना । लक्षणानि शुभाशुभनिमित्तानि । इङ्गितानि मुखप्रसादवैवर्ण्यादिचेष्टाश्च । दैन्यमनुत्साहः ॥ १८॥

रा० टी०-ननु दर्शनेन तव किमित्यत आह—देशेति । रथिनः देशकालौ विज्ञेयौ लक्षणादीनि च विज्ञेयानि सारथिना ज्ञातव्यानि एतेन सारथिना रथिनो हितमेव कर्तव्यमिति सूचितम् ॥ १८ ॥

गो० टी०-निमित्तानि किमर्थं त्वयः विचारणीयानीत्यत आह—देशेत्यादिना । श्लोकत्रयमेकान्वयम् । लक्षणानि शुभाशुभनिमित्तानि इङ्गितानि मुखप्रसादवैगुण्यादीनि दैन्यम् अनुत्साहः । स्थलानि उन्नतप्रदेशाः । निम्नानि अवनतप्रदेशाः समानि सर्वत्र समप्रदेशाः विषमाणि निम्नोन्नतप्रदेशाः । युद्धकाल इति पूर्वोक्तानुवादः । अन्तरदर्शनं, दृश्यत इति दर्शनं, द्रष्टव्यम् । द्रष्टव्यं रन्ध्रमित्यर्थः । अन्तरदर्शं रन्ध्रदर्शनम् कर्तव्यमित्यध्याहारो वा । उपयानं समीपगमनम् अपयानं पार्श्वतो गमनम् स्थानं स्थैर्येणावस्थानम् प्रत्यपसर्पणम् अभिमुखस्थित्या पृष्ठतोऽपसरणम् । रथकुटुम्बिना सारथिना ॥ १८-२० ॥

१९ ] ति० टी०-स्थलं समम् । निम्नं नीचम् । तस्यैव विवरणम्—समानीत्यादि । अन्तरदर्शनं प्रहाराय छिद्रदर्शनम् ॥ १९ ॥

रा० टी०-स्थलेति । भूमेः स्थलान्युन्नतानि निम्नानि अवनतानि विषमाणि उभयात्मकानि समानि च विज्ञेयानि परस्य रिपोः अन्तरदर्शनं प्रहारसमयश्च विज्ञेयम् ॥ १९ ॥

२० ] ति० टी०-उपयानापयाने रथस्य रिपुसमीपप्रापणनिवर्तने । तत्कालाविति यावत् । स्थानं स्थैर्येणावस्थानम् । प्रत्यपसर्पणमभिमुखस्थितस्यैव पृष्ठतोऽपसरणं रथकुटुम्बिना रथनिर्वाहकेण सारथिना ॥ २० ॥

१ खभिधास्यामीति गो. पाठः । २ आभोगे इति गो. पाठः । ३ वीरेति गो. पाठः । ४ नोपधारये इति गो. पाठः । ५ त इमे इति गो. पा. । ६ खेदश्च हर्षश्चेति गो. पाठः । ७ बलाबलमिति गो. रा. पा. ।

तव विश्रामहेतोस्तु तथैषां रथवाजिनाम् । रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया ॥ २१ ॥
स्वेच्छया न मया वीर रथोऽयमपवाहितः । भर्तुः स्नेहपरीतेन मयेदं यत्कृतं प्रभो ॥ २२ ॥
आज्ञापय यथातत्त्वं वक्ष्यस्यरिनिषूदन । तत्करिष्याम्यहं वीर गतानृण्येन चेतसा ॥ २३ ॥
संतुष्टस्तेन वाक्येन रावणस्तस्य सारथेः । प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम् ॥ २४ ॥
रथं शीघ्रमिमं सूत राघवाभिमुखं नय । नाहत्वा समरे शत्रून्निवर्तिष्यति रावणः ॥ २५ ॥
एवमुक्त्वा रथस्थस्य रावणो राक्षसेश्वरः । ददौ तस्य शुभं ह्येकं हस्ताभरणमुत्तमम् ॥
श्रुत्वा रावणवाक्यानि सारथिः संन्यवर्तत ॥ ॥ २६ ॥
ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान्स सारथिः ।
स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ॥ ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥

---

रा० टी०—उपेति । उपयानापयाने रिपुसमीपे रथप्रापणनिवर्तने स्थानं सम्मुखे चिरं स्थापनं प्रत्यपसर्पणं रिपुपृष्ठदेशे स्थापनं सर्वमेतत् रथकुटुम्बिना रथमात्रसेवानिरतेन रथस्थेन ज्ञेयम् ॥ २० ॥

२१ ] ति० टी०—रौद्रं क्रूरं खेदं वर्जयता परिहरता ॥ २१ ॥

रा० टी०—प्रकृतमाह—तवेति । खेदं वर्जयता मया विश्रामहेतोः क्षमं युक्तमिदमपवाहनं कृतम् ॥ २१ ॥

गो० टी०—तवेत्यादिसार्धश्लोक एकान्वयः । तथा वाजिनां विश्रामहेतोश्चेत्यन्वयः । रौद्रं दुःसहम् वर्जयता अपनयता हेतौ शतृप्रत्ययः । क्षमं युक्तम् । स्वेच्छया अपनयननिमित्तं विना ॥ २१–२२ ॥

२२ ] ति० टी०—स्वेच्छया निमित्तं विना मया यदिदं कृतं तद्भर्तृस्नेहपरीतेन तद्रक्षार्थमेव कृतम् ॥ २२ ॥

रा० टी०—स्वेच्छेति । स्वस्यैव इच्छा यस्मिन् तत् यानं गतिर्यस्य तत्संबोधनम् भर्तृस्नेहपरीतेन मया अयं रथोपवाहितः अतः कृतमिदमपवाहनं यत् अतिप्रयत्नविशिष्टम् विचारेणैव कृतमित्यर्थः ॥ २२ ॥

गो० टी०—भर्तृस्नेहेत्यर्धम् । मया यत्कृतं तदिदं भर्तृस्नेहपरीतेनैव कृतमित्यर्थः ॥ २३ ॥

२३–२६ ] ति० टी०—यथा त्वं तत्कार्यस्वरूपं वक्ष्यसि तत्करिष्यामि । गतानृण्येन दत्तऋणत्रयेण क्वापि मनो न बध्नातेत्यर्थः ॥ २३–२६ ॥

रा० टी०—आज्ञापयेति । त्वं यथा तत्त्वमाज्ञापय त्वं वक्ष्यसि कथयिष्यसि तत् गतं प्राप्तमानृण्यं तव रक्षणेन ऋणाभावो यस्मिन् तेन मनसा करिष्यामि ॥ २३ ॥

गो० टी०—आज्ञापयेति । यथातत्त्वं यत् कार्यस्वरूपं वक्ष्यसि तत्तथा, गतानृण्येन आनृण्यं गतेन, आनृण्यं कर्तव्यमिति कृतसंकल्पेन, चेतसा मनसा करिष्यामि ॥ २४ ॥ २५ ॥

रा० टी०—सन्तुष्ट इति । सारथेर्वाक्येन संतुष्टो रावणः एनं सारथिं बहुविधं प्रशस्य युद्धलुब्धस्सन् अब्रवीत् ॥ २४ ॥

रा० टी०—तदाकारमाह—रथमिति । रथं राघवाभिमुखं नय तत्र हेतुः शत्रून् अहत्वा रावणो न निवर्तिष्यति निवर्तिष्यते ॥ २५ ॥

रा० टी०—एवमिति । रावणः एवमुक्त्वा तस्य तस्मै एकं हस्ताभरणं ददौ ॥ २६ ॥

गो० टी०—रथमिति । निवर्तिष्यति निवर्तिष्यते २६–२८

२७ ] ति० टी०—महारथ इति कर्मधारयः । रणाग्रतो रणेऽग्रतः । संमुख इत्यर्थः । 'रणेऽग्रतः' इति पाठान्तरम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥

रा० टी०—श्रुत्वेति । सारथिस्सन्न्यवर्तत अर्द्धं पृथक् तत इति रावणवाक्यचोदितः सारथिः हयान् प्रचोदयामास ततोनन्तरम् राक्षसेन्द्रस्य महारथः रामस्य रणाग्रतोभवत् २७

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पंचाधिकशततमः सर्गः ॥ १०५ ॥

गो० टी०—तत इति । महांश्चासौ रथश्च महारथ इति विग्रहः ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

१ चेति गो. पाठः । २ न मया स्वेच्छयेति गो. पाठः । ३ भर्तृस्नेहेति गो. रा. पाठः । ४ विभो इति गो. पाठः । ५ ततस्तुष्ट इति गो. ततो हृष्ट इति रा. पाठः । ६ वाक्यं त्विति गो. पाठः ।

## पञ्चाधिकशततमः सर्गः ।

युद्धं दिदृक्षुरगस्त्यो देवैः समागम्य युद्धायाग्रतः समुपस्थितं रावणं विलोक्य चिन्ताकुलाय कौसल्येयाय सर्वशत्रुनिबर्हणं मङ्गलप्रदं चादित्यहृदयमुपदिदेश ।

ततो युद्धपरिश्रान्तं समरे चिन्तया [1]स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपगम्याब्रवीद्राममगस्त्यो भगवांस्तदा ॥ २ ॥
राम राम महाबाहो शृणु गुह्यं सनातनम् । येन सर्वानरीन्वत्स समरे [2]विजयिष्यसे ॥ ३ ॥
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं [3]जपं [4]नित्यमक्षयं परमं शिवम् ॥ ४ ॥

१ ] ति० टी०—अथ रावणवैभवं दृष्ट्वा त्रस्तमिव भगवन्तं रामं भगवद्ब्रह्मदत्तरावणवैभवनिवर्तनस्य भगवद्ब्रह्मानुग्रहैकसाध्यत्वात्तदनुग्रहसिद्धये विद्यामण्डलऋषिरगस्त्यो ब्रह्मरूपादित्यहृदयदेवताकत्वादादित्यहृदयाख्यं स्तोत्रमुपदिशति स्मेत्याह—ततो युद्धेत्यादि । अस्य स्तोत्रस्यागस्त्यऋषिरनुष्टुप्छन्दः, आदित्यहृदयभूतो भगवान्ब्रह्मा देवता, निरस्ताशेषविघ्नतया ब्रह्मविद्यासिद्धौ सर्वत्र जयसिद्धौ च विनियोगः । अस्य षडङ्गं प्रणवेन 'रश्मिमते नमः' इत्यनेन वा । गायत्र्या षडङ्गमित्यन्ये । ततो युद्धेत्यादि त्वरस्वेत्यन्तं स्तोत्रम् । एवं भयनाटनं तन्मूलकमगस्त्यादुपदेशग्रहणं लोकानुग्रहाय । लोकस्य जयसाधनवस्तुप्रकाशनार्थमिति तत्त्वम् । युद्धपरिश्रान्तमनेकाहोरात्रयुद्धपरिश्रान्तं तमिव स्थितम् । समरे समरविषये चिन्तया प्रबलोऽयमरिः कथं जेतव्य इति चिन्तया युक्तम् । सारथिनापवाहितं रावणं प्रातर्युद्धायाग्रतो रामसंमुखे समुपस्थितं दृष्ट्वा । स्थितं धनुरवष्टभ्य स्थितं रामम् ॥ १ ॥

२ ] ति० टी०—दैवतैः समागम्य मिलित्वा रणं द्रष्टुमभ्यागतो भगवानगस्त्योऽन्तर्यामिभगवत्प्रेरणया देवनियोगतश्चोक्तविशेषणं राममुपागम्योवाचेति भास्करेऽब्रवीत् ॥ २ ॥

रा० टी०—रावणकर्तृकरामसम्मुखागमनानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । ततो युद्धेत्यादि त्वरस्वेत्यन्तं स्तोत्रमिदम् अस्य स्तोत्रस्यागस्त्य ऋषिरनुष्टुप्छन्दः आदित्यहृदयभूतरामो देवता निरस्तविघ्नतया ब्रह्मविद्यासिद्धौ च सर्वत्र जयसिद्धौ च विनियोगः इति योज्यम् अस्य षडङ्गं प्रणवेन रश्मिमते नम इत्यनेन वा गायत्र्या वेति आप्तानां संप्रदायः श्लोकार्थस्तु युद्धाय युद्धं कर्तुं समुपस्थितं युद्धे पूर्वसंग्रामे परिश्रान्तमत एव चिन्तया समरे अग्रतो रामाग्रे स्थितं रावणं दृष्ट्वा रणं द्रष्टुं दैवतैर्देवैस्समागम्य संघीभूयाभ्यागतो भगवान् निखिलसामर्थ्यविशिष्टोऽगस्त्यः राममुपागम्याब्रवीत् श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—अथादित्यहृदयोपदेशः । ततो युद्धपरिश्रान्तमित्यादिश्लोकद्वयमेकान्वयम् । रणं द्रष्टुं दैवतैः समागम्य आगतः दैवतैः सहागतः अगस्त्यः, युद्धपरिश्रान्तम् उपस्थितं रावणं दृष्ट्वा कथमेनं परत्वप्रकटनं विना जेष्यामीति चिन्तया स्थितं चिन्तयन्तं च रामं दृष्ट्वा उपागम्याब्रवीत् ॥ १ ॥ २ ॥

३ ] ति० टी०—किमब्रवीत्तदाह—राम रामेत्यादि । येन स्तोत्रेण सर्वानरीन्विजेष्यसि तद्गुह्यं रहस्यम्, सनातनं प्रवाहानादिभूतम् । अनेन स्वकल्पितत्वनिरासः शृणु ॥ ३ ॥

रा० टी०—तदाकारमाह—रामेति । येन यत्स्तोत्रपाठजनितफलेन सर्वान् अरीन् समरे विजयिष्यसे विजेष्यसे तद्गुह्यमभक्तेष्वप्रकाश्यं सनातनं नित्यं स्तोत्रं शृणु सनातनमित्यनेनैतस्य आधुनिकत्वनिरासः ॥ ३ ॥

गो० टी०—राम रामेत्यादिश्लोकत्रयमेकान्वयम् । रामस्य चिन्ताविष्टत्वात् स्वादरातिशयात्कार्यत्वरया च द्विरुक्तिः । महाबाहो इत्यनेन पूर्वकृतपराक्रमप्रकटनम् । सनातनं वेदवन्नित्यम्, गुह्यं रहस्यम् शृणु । तदेव रहस्यमाह—आदित्यहृदयमित्यादि । आदित्यस्य हृदयम् आदित्यमनःप्रसादकमित्यर्थः पुण्यं पठतां पुण्यवर्धकम् । सर्वशत्रुविनाशेऽपि तुल्यायव्ययन्यायेन कस्यचित्र जयः स्यात्, न तथा भवत्विदमित्याह—जयावहमिति । अक्षय्यम् अक्षय्यफलकम् परमं शिवम् परमपावनम् सर्वमङ्गलमङ्गल्यम् सर्वमङ्गलानामपि मङ्गलम् मङ्गलानां च मङ्गलमितिवत् स्वार्थे यत्प्रत्ययः सर्वश्रेयःसाधनमित्यर्थः । सर्वपापप्रणाशनं सर्वपूर्वाघविनाशनम् चिन्ताशोकप्रशमनम् आधिव्याधिनिवर्तकम् आयुर्वर्धनम् विहितायुषोऽप्यधिकायुष्प्रदम् उत्तमं जप्येषु श्रेष्ठम् आदित्यहृदयाख्यम् स्तोत्रं जपेत् । आदित्यहृदयस्तोत्रजपे पुण्याभिवृद्धिर्भवति अतोऽवश्यं तत्कामस्तज्जपेदिति भावः ॥ ३—५ ॥

४ ] ति० टी०—आदित्यहृदयम् 'य एषोऽन्तरादित्ये हिरण्मयः' इत्याद्यशेषश्रुतिप्रसिद्धम् । ब्रह्म तद्देवताकत्वात्तदाख्यं स्तोत्रम्, पुण्यं पुण्यजनकम् । अनेन पारत्रिकं फलमुक्तम् सर्वशत्रुविनाशनं जयावहमित्यैहिकं फलम् । जपं जप्यत इति जपं स्तोत्रम् । परमफलमाह—अक्षयं परमम् शिवमपवर्गरूपम् । तत्प्रदमित्यर्थः । कदा तत्राह—नित्यम् । यदि नित्यवत्फलनिरपेक्षं तदा तत्फलमिति भावः । 'जपेन्नित्यम्' इति पाठान्तरम् ॥ ४ ॥

१ क्रांप रिति गो. पाठः । २ विजयिष्यसि इति गो. रा. पाठः । ३ जपेदिति गो. रा. पाठः । ४ अक्षय्यमिति गो. पाठः ।

सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् । चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥
रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् । पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥
सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः । एष देवासुरगणाँल्लोकान्पाति गभस्तिभिः ॥ ७ ॥

---

५ ] ति० टी०–ऐहिकानि फलान्तराणि । सर्वमङ्गलमाङ्गल्यं सर्वमङ्गलरूपाणामपि मङ्गलप्रदम् ॥ ५ ॥

रा० टी०–स्तोत्रस्य नाम निर्दिशन्नाह–आदित्येति । द्वाभ्यां सर्वेषां बाह्यान्तराणां शत्रूणां विनाशनमत एव जयावहं विजयप्रापकमक्षयं पाठकर्तॄणां ध्वंसाप्रतियोगित्वसंपादकम् अत एव परमं सर्वोत्कृष्टमत एव शिवमैहिकामुष्मिकमंगलप्रदमत एव सर्वमंगलानां मांगल्यं यस्मात् अत एव चिंताशोकयोः प्रशमनमायुषो वर्द्धनमुद्भूतं विनष्टं तमः पाठकर्तॄणामज्ञानं यस्मात् तत् आदित्यहृदयं य एषोन्तरादित्य इत्यादिश्रुतिप्रतिपाद्यसूर्यहृदयवर्तिरामप्रतिपादकं स्तोत्रं नित्यं जपेत् जपमिति पाठे जपनीयमित्यर्थः अस्तीति शेषः श्लोकद्वयमेकान्वयि ४-५

६ ] ति० टी०–रश्मिमन्तं पञ्चेन्द्रियद्वारानेकज्ञानरश्मिमते ज्योतीरूपरश्मिमन्तं च । रश्मिशब्दो भक्तवाची तद्वन्तं तन्मध्ये भासमानमित्यर्थं तीर्थ आह । रश्मिमते नमः । समुद्यन्तं लोकान्क्रियासु प्रवर्तयन्तम्, उदयगिरावुदयं प्राप्तं च । समुद्यते नमः । एवं नमोऽन्ता एतेऽस्य नमस्कारार्चनमन्त्रा इत्युच्यन्ते । देवैः सात्त्विकवृत्तिभिरसुरैराजसतामसवृत्तिभिश्च नमस्कृतम्, साक्षिचैतन्यत्वेन नित्यमुपजीवितम्, इन्द्रविरोचनादीनामविशेषादुपास्यं च । देवासुरनमस्कृताय नमः । विवस्वान्विशेषेण वसुमान् पृषोदरादित्वादुकारलोपः । वसुनिधिरित्यर्थः । सकलव्यवहाराधिष्ठानत्वाद्वसुमन्तम् स्वोदयेन सकलव्यवहारप्रवर्तकत्वाच्च वसुमत्त्वम् । विवस्वते नमः । भास्करं ज्ञानज्ञेयभासः करोतीति भास्करम् । ‘ तस्य भासा सर्वमिदं विभाति ’ इति श्रुतेः । भास्कराय नमः । भुवनानां मूलादिब्रह्मरन्ध्रान्तयोगाधारभूमीनामीश्वरमधिष्ठातारम्, भूरायशेषभुवनानां प्रकाशकतयेश्वरं च । भुवनेश्वराय नमः ॥ ६ ॥

रा० टी०–सूर्यतदन्तवर्तिरामयोस्तादात्म्यात् श्लेषेण द्वयोः पूजां निर्दिशन्नाह—रश्मिमन्तमिति । रश्मिमन्तमनेककिरणविशिष्टं भुवनेश्वरमत एव देवासुरैर्नमस्कृतं भास्करं प्रकाशकं समुद्यन्तं विवस्वन्तं पूजयस्व यद्वा रश्मिमन्तं तस्य भासा सर्वमिदं विभातीत्यादिश्रुत्या सर्वतेजोमूलतेजोविशिष्टं समुद्यन्तं ब्रह्मविष्णुमहेश्वरान् तत्तत्क्रियासु प्रवर्त्तयन्तमत एव भुवनेश्वरं ब्रह्मादिद्वारा निखिलभुवननियन्तारं विवसना विशेषमणिना अंत्यते सम्बध्यते तं नित्यं विशेषमणिधारिणमित्यर्थः भास्करं तदन्तर्वर्तिपरमात्मानं पूजयस्व आत्मत्वेन जानीहि *घने वसुतोये मणाविति कोशः ॥ ६ ॥

गो० टी०–स्तोतव्यदेवतास्वरूपमाह—रश्मिमन्तमिति । रश्मिमन्तं स्वर्णवर्णतया प्रशस्तकिरणम् समुद्यन्तम् अर्थोदयादिकं विना सम्यगुदयं प्राप्नुवन्तम् । इदं च ध्येयाभिप्रायेणोक्तम् न तु तदानीं सूर्योदयकालः अगस्त्यागमनकालस्यापराह्णत्वात् । अत एव लक्ष्मणवचनम्—अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः । यावदस्तं न यात्येष कृतकर्मा दिवाकर इति । विवस्ते आच्छादयति तेजोन्तरमिति विवस्वान् तम् । स्वभासा सर्वतेजसामाच्छादकमित्यर्थः । भास्करम् भाः करोतीति भास्करः । “ दिवाविभानिशाप्रभाभास्कारा० ” इत्यादिना टः सकारश्च । भुवनेश्वरं वर्षातपाभ्यां समस्तभुवननियन्तारम् । पूजयस्व आदित्यहृदयेन तोषयस्वेत्यर्थः । रश्मिमन्तं, रश्मिशब्दो नित्यसूरिपरः तद्वन्तं तन्मध्ये भासमानम् । “ रश्मिग् रश्मीनां मध्ये तपन्तम् ” इति सुवर्णसूक्तोक्तेः समुद्यन्तं नित्योदितदशावन्तम् । यद्वा यः पूर्व्याय वेधसे नवीयसे इत्याद्युक्तरीत्या नवं नवमुदितमिव स्थितम् ॥ ६ ॥

७ ] ति० टी०–रश्मिमदादिशब्दप्रतिपाद्यस्य ब्रह्मत्वं स्फुटयन्नाह—सर्वेति । हि यस्मात्सर्वदेवेत्रोपादानकारणत्वादेष सर्वदेवात्मकः । इदं सर्वात्मकत्वोपलक्षणम् । सर्वदेवात्मकाय नमः । तेजस्वी सर्वभासनसमर्थतेजोयुक्तः । तेजस्विने नमः । रश्मिभिर्ज्ञानरश्मिभिः सर्वं वस्तुजातं भावयति सत्तास्फूर्तिमत्संपादयति सः । रश्मिभिर्योगिनो भावयति ब्रह्मलोकं प्रापयतीत्यर्थं इत्यन्ये । रश्मिभावनाय नमः । एष एतन्मण्डलवर्ती देवासुरगणांस्तेषां लोकांश्च गभस्तिभिर्ज्ञानज्ञेयरश्मिभिः पाति । ‘याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति’ इति श्रुतेर्वृष्टिद्वारान्नहविरादिदानेन देवादिगणाँल्लोकान्मनुष्यादींश्च यः पाति । देवासुरगणलोकपालाय नमः । अत्रैष पातीत्युक्त्या सूर्यस्य पुरतः स्थितत्वनिर्देशेन सूर्योदयकाले एतत्स्तोत्रदानमिति लभ्यते ॥ ७ ॥

रा० टी०–तत्पूजने हेतुमाह—सर्वेति । रश्मयः किरणाः भाव्यन्ते अस्मिन्निति एष सूर्यः गभस्तिभिस्स्वकिरणैः देवादीन् पाति अतः एष तेजस्वी सूर्यः सर्वात्मकः सर्वनियन्ता यद्वा सर्वेषां देवाः ब्रह्मादित्रयः तेषामात्मको नियन्ता तेजस्वी निखिलतेजोमूलतेजोविशिष्ट एव रश्मिभानां सूर्यकिरणदीप्तीनाम् अवनो रक्षकः एष सूर्यान्तर्वर्त्ती रामः अत एव एष एव गभस्तिभिः स्वतेजोभिः देवादीन् पाति ॥ ७ ॥

गो० टी०–ननु सत्सु देवतान्तरेषु कथमस्यैव पूज्यत्वं तत्राह—सर्वदेवात्मक इति । सर्वदेवात्मकः सर्वदेवानामात्मा स्वार्थे कः । “ सूर्य आत्मा जगतस्तस्थुषश्च ” इति श्रुतेः । रश्मिभिर्लोकाननुभावयतीति रश्मिभावनः । रश्मिभिः रक्षति इत्यर्थः । एतदेवाह—एष इति । देवासुरगणान् लोकान्

---

१ मङ्गल्यमिति गो. पाठः । * वसुतस्तु वसुतोये धने मणाविति कोशः ।

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः । महेन्द्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥ ८ ॥
पितरो वसवः साध्या अश्विनौ मरुतो मनुः । वायुर्वह्निः प्रजाः प्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥
आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥ १० ॥

---

देवासुरगणरूपान् जनानित्यर्थः । पाति रक्षति । "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुतेः ॥७॥

८ ] ति० टी०–एषः 'एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुतेर्योगजनितसाक्षात्कारविषयः पुरो दृश्यमानश्च ब्रह्मा निस्तुलैश्वर्यविद्यास्रष्टृत्वशक्तिः । ब्रह्मणे नमः । विष्णुः स्वसृष्टपरिपालनप्रयोजकतया परिगृहीतविष्णुमूर्तिर्नारायणः । विष्णवे नमः । शिवोऽपरिमितकल्याणपुण्यस्वभावः, मृगपरश्वादिचिह्नो भगवान्महादेवश्च । शिवाय नमः । जीवज्योतिर्द्वारा सर्वाणीन्द्रियाणि स्कन्दतीति स्कन्दः, भगवान्मयूरवाहनश्च । स्कन्दाय नमः । प्रजानां जन्यवस्तूनां स्वामी । स्वशक्तिद्वारा सर्वोपादानत्वात् । दशयज्ञायुधचिह्नो भगवान्यज्ञेश्वरश्च । प्रजापतये नमः । महेन्द्रः । 'इदि परमैश्वर्ये' धून्सर्वधातुभ्यः । परमैश्वर्यकाष्ठां प्राप्तः, वज्रहस्तत्वादिचिह्नो देवराजश्च । महेन्द्राय नमः । धनं चैतन्यं सर्वानुग्रहाय सर्वस्यान्तर्ददाति स्थापयतीति धनदः । 'अन्नादो वसुदानः' इत्युक्तसकलफलदः कुबेरश्च । धनदाय नमः । कालो बुद्धिवृत्तिजातमपरोक्षतया कलयतीति कालः, मण्डलस्पन्दानुमेयः क्रियापरिच्छेदकश्च कालः । कालाय नमः । यमयतीति यमः सर्वान्तर्यामी । 'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ॥' अविवादोऽभेदाभाव इति मनुः । पितृपतिश्च । यमाय नमः । सोमः । उमा । उः केवलनिपातः । मा प्रभा । उ सर्वदा प्रभया सहितः सोमो भगवानर्धनारीश्वरश्च । 'सोमः पवते जनिता मतीनाम्' इति श्रुतेः सर्वकारणं सोमशब्दवाच्यम् । उमया शक्त्या प्रकृत्याख्यया सहित इत्यर्थमन्ये । सोमाय नमः । आपः सत्त्वं चित्तात्मकं तस्यान्तःकरणोपाधिवशतोऽनन्तस्य पतिः, वरुणश्च । अपांपतये नमः॥८॥

९ ] ति० टी०–पितरो बीजप्रदास्तद्रूपोऽयं सर्वेषां बीजप्रदः । 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता' इत्युक्तेः । बहुत्वं पूजार्थम् । कव्यवाहनादयः पितृदेवताश्च । पितृदेवतायै नमः । वसुरहमर्थः, अष्टौ वसवश्च । वसुमूर्तये नमः । साध्याः प्राधान्येन योगिनः । प्रसाधनीयत्वात्साध्याः, देवगणविशेषाश्च साध्याः । साध्यमूर्तये नमः । अश्विनौ । अश्विनौ । अश्नोतेर्वन्प्रत्ययान्तोऽश्वशब्दः । सर्वव्यापिनौ देवभिषजौ च । अश्विमूर्तये नमः । मरुत् । 'मृङ् प्राणत्यागे' अस्य धातोरुतिप्रत्ययान्तं रूपम् । अनर्थमारक एकोनपञ्चाशत्संख्यमरुद्गणश्च मरुन्मूर्तये नमः । मनुत इति मनुः सर्वज्ञ आदिराजश्च । मनवे नमः । वातीति वायुः । 'वा गतिगन्धनयोः' गतिर्ज्ञानं ज्ञापनं च, ज्ञाता ज्ञापकश्च, पञ्चवृत्तिः प्राणश्च । वायुमूर्तये नमः । वहेर्निः वह्निः । स्वे महिम्नि स्वयं प्रतिष्ठितो भूत्वा स्वस्मिन्सर्वं सारं वहतीति वह्निः अग्निश्च । वह्नये नमः । प्रजायन्ते जीवात्मनेति प्रजाः, प्रकृष्टजनिमन्तो विभूत्यध्यायोक्ता देवाश्च । प्रजारूपाय नमः । प्राणयतीति प्राणः । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेता उपाश्रिताः ॥' इति श्रुतेः । प्राणयात्राप्रवर्तकः प्राणः । प्राणाय नमः । ऋतूनां ज्ञानानां कर्ता उपादानम्, वसन्ताद्यृतुकर्ता संवत्सरात्मा कालश्च । ऋतुकर्त्रे नमः । 'ऋतुः सुदर्शनः कालः इति सहस्रनामसु पाठात् । 'ऋतु' इति पाठे भिन्नं पदमिति तीर्थः । कर्ता सकलजगत्कर्ता । प्रभाकरो भास्करवत् । शब्दस्याप्यर्थतादात्म्येन देवतास्वरूपत्वाद्भास्करप्रभाकरयोः शब्दयोः शब्दभेदेन मूर्त्यन्तरत्वं ज्ञेयम् । प्रभाकराय नमः ॥ ९ ॥

रा० टी०–पूजाप्रकारं बोधयितुं साक्षात् नियम्यानां ब्रह्मादित्रयाणां तद्द्वारा नियम्यानामन्येषां च रामतादात्म्येनाभेदं समादायाह–एष इति द्वाभ्याम् । ब्रह्मादिः एषः सूर्यान्तर्वर्तिराम एव तन्नियम्यत्वेन तच्छरीरभूत इत्यर्थः एतेन सर्वत्र रामबुद्धिः कर्तव्येति सूचितम् अत एव सरित्समुद्रांश्च हरेश्शरीरं यत्किं च भूतं प्रणमेदमन्यः इत्यादि सङ्गच्छते श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–सर्वदेवात्मकत्वमाह—एष ब्रह्मेत्यादिना । अयमेव ब्रह्मादिसमस्तदेवताशरीरे वर्तत इत्यर्थः । प्रजापतिरिति जात्येकवचनम् । नव प्रजापतय उच्यन्ते । कालशब्देन मृत्युरुच्यते यमस्तु ततोन्यः मरुतः आवहादिवायवः । वायुर्भूलोकसंचारी । प्राणः शरीरान्तःस्थो वायुः ऋतुकर्तेति प्रभाकरविशेषणम् । ऋतूनां वसन्तादीनां कर्ता एष प्रभाकरः ब्रह्मा चेत्यादिरीत्यान्वयः ॥ ८ ॥ ९ ॥

१० ] ति० टी०–'यस्मात्सर्वमादत्ते एतस्मादादित्यः' इत्यौपनिषदव्युत्पत्त्याशेषविषयभोक्ता आदित्यः, मण्डलादित्यो मण्डलाभिमानी, अदितिपुत्रश्च । आदित्याय नमः । सविता 'षूङ् प्राणिप्रसवे' अन्तःकरणोपाधिना परिमितचिदात्मवर्गस्रष्टा । रश्मिभिः पर्जन्यादिप्रवृत्त्या तत्तदन्नादिस्रष्टा । सवित्रे नमः । सर्तेः सूर्यः सर्वगः । 'सूर्य एकाकी चरति' इति श्रुतेः । कर्मप्रेरको वा । सूर्याय नमः । खं परमाकाशं हृदयाकाशं च गच्छतीति खगः । खगाय नमः । पुष्णातीति पूषा स्थितिकर्ता । पूष्णे नमः । गभस्तिमान्रश्मिवत्समानार्थः । शब्दभेदान्मूर्तिभेदः । यद्वा गभस्तिभिः सर्वव्यापिनी लक्ष्मीस्तद्वान् । 'यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम' इति पराशरस्मृतेः । गभस्तिमते नमः । सुवर्णसदृशः । 'आत्मलाभान्न परं विद्यते' इति श्रुतेः । सुवर्णसदृशनिधिलाभतुल्यकामः । 'आप्रणखात्सर्व एव सुवर्णः' इति श्रुतेः । सुवर्णसदृश-

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान्। तिमिरोन्मथनः शंभुस्त्वष्टा मार्तण्डकोंऽशुमान् ११ ॥
हिरण्यगर्भः शिशिरस्तपनोऽहस्करो रविः। अग्निगर्भो दितेः पुत्रः शङ्खः शिशिरनाशनः॥ १२ ॥
व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः। घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवंगमः ॥ १३ ॥
आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः। कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४ ॥
नक्षत्रग्रहताराणामधिपो विश्वभावनः। तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५ ॥

मूर्तिश्च। सुवर्णसदृशाय नमः। 'सुपर्णस्तपनः' इति पाठे 'द्वासुपर्णा–' इति श्रुतेः सुपर्णत्वं ब्रह्मणः। तपतीति तपन इति तीर्थः। भानुर्भासकः। भानवे नमः। हिरण्यं तेजः प्रज्ञारूपं तद्रेतो जगदुत्पत्तिबीजं यस्य सः। यद्वा हिरण्यं रेतोऽण्डोत्पादकं द्रव्यं यस्य सः। यद्वा हिरण्यं तत्साधनं पारद एव रेतो यस्येत्यर्थः। हिरण्यरेतसे नमः। अक्षरा-धिक्यमार्षम्। दिवेत्यव्ययं प्रकाशवाचकम्। प्रकाशं करोतीति दिवाकरः। दिवाकराय नमः॥ १०॥

११ ] ति० टी०–हरितो दिशोऽश्नोति व्याप्नोतीति हरिदश्वः, श्यामवर्णाश्वश्च। हरिदश्वाय नमः। सहस्राण्यनन्तान्यर्चींषि ज्ञानानि यस्य सः। यद्वा सहस्रसंख्याकान्यर्चींषि रश्मयो यस्य। सहस्रार्चिषे नमः। 'सप्तसप्तिः सप्तशीर्षण्याः प्राणा इन्द्रियाणि द्वे चक्षुषी द्वे श्रोत्रे द्वे नासिके वाक्चैकेति सप्त प्राणाः प्रभवन्ति तस्मात्' इति श्रुतेः। सप्तप्राणानां सप्तिः प्रवृत्तिर्यतः सः, सप्तसंख्याश्वश्च। 'हयसैन्धवसप्तयः' इति कोशः। सप्तसप्तये नमः। मरीचिमच्छब्दो गभस्तिमच्छब्देन व्याख्यातः। मरीचिमते नमः। अज्ञानलक्षणं तिमिरमुन्मथ्नातीति तिमिरोन्मथनः, अन्धकारनाशनश्च। तिमिरोन्मथनाय नमः। शमपवर्गादिरूपं सुखमस्माद्भवतीति शंभुः। शंभवे नमः। त्वक्षति तनूकरोति भक्तानामुत्पत्तिप्रलयरूपानर्थप्रवाहदुःखमिति त्वष्टा, देववर्धकिश्च। त्वष्ट्रे नमः। मृतमचेतनमण्डं ब्रह्माण्डं जीवयतीति मार्तण्डः स एव मार्तण्डकः। मार्तण्डकाय नमः। अंशुमान्मरीचिमत्पर्यायः। अंशुमान्सर्वव्यापकः। 'अशू व्याप्तौ' इति धातुः। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतेरिति तीर्थः। अंशुमते नमः॥ ११॥

१२ ] ति० टी०–हिरण्यगर्भः सकलजगदुत्पत्तिस्थितिलयकर्ता ब्रह्मविष्णुरुद्ररूपो हिरण्यगर्भः। भगवते हिरण्यगर्भाय नम इति द्वादशाक्षरी आदित्यहृदयरहस्यमिति कतकः। शिशिरः शीतः सुखस्वभावः। शिशिराय नमः। तपनः 'तप ऐश्वर्ये' । स्वभावत एव सर्वेश्वर इत्यर्थः। तपनाय नमः। अहस्करो दिवाकरपर्यायः। अहस्कराय नमः। रौत्युपदिशति हिरण्यगर्भादिभ्य इति रविः। 'यो वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः। रवये नमः। अग्निः कालाग्निरुद्रो गर्भे यस्य सोऽग्निगर्भः। 'नारायणाद्रुद्रोऽजायत' इति श्रुतेः। अग्निगर्भाय नमः। दितिर्नाशो न विद्यते यस्याः साऽदितिर्ब्रह्मविद्या तस्याः पुत्रस्तल्लभ्यत्वात्, आदित्यश्च। अदितेः पुत्राय नमः। शं च खं च शङ्खः। परमानन्दगगनात्मेत्यर्थः। शङ्खाय नमः शिशिरं जाड्यं मन्दबुद्धित्वं नाशयतीति शिशिरनाशनः, हिमनाशकश्च। शिशिरनाशनाय नमः॥ १२॥

१३ ] ति० टी०–व्योमनाथ आकाशकर्ता। 'आत्मन आकाशः संभूतः' इति श्रुतेः। व्योमनाथाय नमः। तमोभेदी तिमिरोन्मथनपर्यायः। तमोभेदिने नमः। ऋगादीनां पारस्तत्तदुपनिपत्तद्गतस्तदेकप्रतिपाद्यः। ऋग्यजुःसामपारगाय नमः। घनाधिका वृष्टिः सकलकर्मफलदानरूपा यस्मात्सः, घना संपूर्णा वृष्टिर्यस्मादिति च। घनवृष्टये नमः। अपां सात्त्विकानां मित्रश्चैतन्यदानेनोपकर्तापां मित्रः, जलानामुत्पादकश्च। अपां मित्राय नमः। विन्ध्यं गहनं दुर्गम्। एवंच दुर्गे सौषुम्ने ब्रह्मनाडीमार्गे प्लवंगमः शीघ्रगन्ता। किं च विन्ध्यवीथी सूर्यमार्गस्तेन शीघ्रगन्ता च। विन्ध्यवीथीप्लवंगमाय नमः॥ १३॥

१४ ] ति० टी०–आतपी आ समन्तात्तपो जगन्निर्माणसंकल्पः सोऽस्यास्तीत्यातपी। 'तप आलोचने'। आतपिने नमः। मण्डलं किरणसमूहस्तद्वान्। यद्वा मण्ड्यतेऽनेनेति मण्डलं कौस्तुभादि तद्वान्। मण्डलिने नमः। मृत्युः सर्वमृत्युसंपादकः। 'अन्नमाहुः परं मृत्युम्' इति श्रुतेः। मृत्यवे नमः। पिङ्गलः पिङ्गलनाडीप्रवर्तनेन कर्ममार्गप्रवर्तक इत्यर्थः। पीतवर्णश्च। पिङ्गलाय नमः। सर्वतापनः सर्वसंहर्ता। 'तप दाहे'। सर्वतापनाय नमः। कविः सर्वज्ञः, कवयिता च। कवये नमः। विश्वो विश्वरूपः। 'विश्वमेवेदं पुरुषः' इति श्रुतेः। विश्वस्मै नमः। महत्तेजः स्वरूपं यस्य सः। महातेजसे नमः। रक्तः पाठनेन सर्वरञ्जकः, रक्तवर्णश्च। रक्ताय नमः। सर्वभवोद्भवः सर्वकार्यवर्गोत्पत्तिहेतुः। सर्वभवोद्भवाय नमः॥ १४॥

१५ ] ति० टी०–नक्षत्रादिनामन्तर्यामितयाधिपः प्रवर्तकः। नक्षत्रग्रहताराधिपाय नमः। विश्वभावनः सर्वोद्भवपर्यायः। विश्वभावनाय नमः। तेजसामग्न्यादितेजसामपि सत्तास्फूर्तिसाधकचिन्मयतेजोरूपः। 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः। तेजसामपि तेजस्विने नमः। द्वादशात्मन्द्वादशमासस्वरूप। प्रागनुक्रान्तसर्वमूर्तिरूपाय तुभ्यं नम इत्यर्थः। द्वादशात्मने नमः॥ १५॥

रा० टी०–आदित्य इति। आदत्ते सर्वं स्वीयतया गृह्णाति आदित्यः सरति साक्षात्परम्परया च कर्मणि लोकं प्रवर्तयतीति सूर्यः खं हृदयाकाशं गच्छति अन्तर्यामिद्वारा

व्याप्नोतीति खगः पुष्णाति सर्वमिति पूषा गभस्तिः गभस्तिरतिप्रकाशः तद्वान् सुवर्णसदृशः तप्तचामीकराभः भानुः सर्वप्रकाशकः हिरण्यं रेतो यस्य दिवं नित्यक्रीडामाकरोतीति दिवाकरः हरितो दिशः अश्नुते इति हरिदश्वः किं च हरेस्सुग्रीवस्य देन राज्यप्रदानेन श्वयति वर्द्धते किञ्च हरितस्सर्वदिशः अश्वा यस्य सर्वत्र परिपूर्ण इत्यर्थः सहस्राणि अपरिमितानि अर्चींषि तेजांसि यस्य सः सप्तभिश्शीर्षण्यैः चक्षुरादिभिः सप्तिः संबन्धो यस्य ब्रह्मरन्ध्रनिवासीत्यर्थः किञ्च सप्त सप्तयोश्वा यस्य सप्ताश्वानां नियन्तुर्नियन्तेत्यर्थः हयसैंधवसप्तय इति कोशः मरीचयः उपलक्षणतया मरीचिप्रभृतयः मुनयः सन्ति सेवकत्वेनास्येति मरीचिमान् तिमिरं मूलाविद्यामुन्मथति स्वभक्तानां विनाशयति तिमिरोन्मथनः शं कल्याणं भवति अस्मादिति शम्भुः तक्षति महान्तमपि स्वकीयानामपराधं तनूकरोति न गणयतीत्यर्थः त्वष्टामृतमण्डं ब्रह्माण्डं कायति शब्दयति स्वशक्त्या चैतन्यमुत्पादयतीत्यर्थः अंशुमान् स्वप्रकाशद्वारा सर्वत्र परिपूर्णः हिरण्यो हिरण्यगर्भो गर्भो बालक इव यस्य शिशिरः सर्वतापरहितत्वात् नित्यं नित्यं विलक्षणशैत्यविशिष्टः तपनः नित्यं महैश्वर्यविशिष्टः अह्नो दिवसस्य तदुपलक्षितकालमात्रस्य करः प्रवर्तकः न रविः प्रकाशको यस्य स्वयंप्रकाश इत्यर्थः किञ्च रौति ब्रह्मादिभ्योप्युपदिशति स रविः अग्निः कालाग्निरूपो रुद्रः गर्भो यस्य अदितेः पुत्रः उपेन्द्रो स्तथस्योपेन्द्रस्यापि नियामक इत्यर्थः नित्यं कल्याणमयानि खानि इन्द्रियाणि यस्य शिशिरं जाड्यं नाशयतीति शिशिरनाशनः व्योमवत् व्यापको नाथः स्वामित्वं यस्य तमसः अज्ञानस्य भेदी स्मृतमात्रत्वेन विघातकः ऋग्यजुस्सामपारैस्तत्र निष्णातैरित्यर्थः तैर्गीयते सः घनवद्वृष्टिर्दानपरंपरा यस्य अपां विषया शक्तिरहितानां मित्रो मित्रं विन्ध्यवीथ्यां प्लवङ्गमाः वानराः यस्य आतपी सर्वविषयकज्ञानवान् मण्डली मण्डस्य सर्वभूषणस्यालं ग्रहणं तद्वान् मृत्युः मृत्योरपि विघातकः पिङ्गलः पिङ्गलादिनाडीप्रवर्तकः सर्वेषां रिपूणां तापनः कविः इच्छामात्रेण गद्यपद्यादिनिर्माता विश्वः सकलब्रह्माण्डनियन्ता अत एव महातेजाः रक्तः सर्वविषयकप्रीतिमान् सर्वभवो ब्रह्मा तस्याप्युद्भवो यस्मात् अत एव नक्षत्रादीनामधिपः अत एव विश्वेषु भावनापालनार्थं चिन्तनं यस्य अत एव तेजसामपि तेजस्वी यस्त्वं तस्मै ते तुभ्यं नमः द्वादशात्मन् द्वादशमासकाल इत्यर्थः आत्मा देहो यस्य तत्संम्बोधनं किञ्च द्वादशानामादित्यानामात्मा नियन्ता तत्संबोधनम् श्लोकषट्कमेकान्वयी ॥ १०–१५ ॥

गो० टी०—एवमादित्यस्वरूपमुपदिश्य तद्विषयमादित्यहृदयस्तोत्रमुपदिशति—**आदित्यः सवितेत्यादिना** लोकसाक्षिण इत्यन्तेन। तत्र आदित्यादिप्रथमान्तपदेषु त्वंपदमध्याहार्यम्। अदितेरपत्यत्वेनावतीर्ण आदित्यः। "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यप्रत्ययः। अदितेः अखण्डिताया भूमेरयं पतिरित्यादित्यः। सूते जगदिति सविता। सुवति प्रेरयति जनान् कर्मणीति सूर्यः। "षू, प्रेरणे" इति धातोः "राजसूयसूर्य०" इति निपातनात् क्यप्प्रत्ययो रुडागमश्च॥ खे गच्छतीति खगः। लोकोपकारार्थमाकाशे संचरन्नित्यर्थः। वर्षेण पुष्णाति जगदिति पूषा श्वन्नुक्षन्नित्यादौ निपातितः। गभस्तयः किरणाः अस्य सन्तीति गभस्तिमान्। सुवर्णसदृशः सुवर्णवर्णः। "हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्ण" इति श्रुतेः। भातीति भानुः। "दाभाभ्यां नुः" इति नुप्रत्ययः। हिरण्यं रेतो यस्य स हिरण्यरेताः हिरण्मयब्रह्माण्डकर्तेत्यर्थः। असुराधिक्यमार्षत्वात्। दिवा करोतीति दिवाकरः, दिवा अह्नि प्राणिनः चेष्टां करोतीति वा दिवाकरः। हरितः श्यामा अश्वा अस्य सन्तीति हरिदश्वः। सहस्रार्चिः सहस्रकिरणः। सप्तनामा सप्तिरश्वो यस्यासौ सप्तसप्तिः। "एको अश्वो वहति सप्तनामा" इति श्रुतेः। मरीचयोऽस्य सन्तीति मरीचिमान्। प्रकाशवानित्यर्थः। तिमिराण्युन्मथ्नातीति तिमिरोन्मथनः। शं सुखं भवत्यस्मादिति शंभुः। "डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्" इति डुः। सर्वाणि रूपाणि त्वक्षति तनूकरोतीति त्वष्टा सर्वसंहारक इत्यर्थः। मृतेऽण्डे जातो मार्तण्डः सर्वसंहारे तत्सृष्ट्ये पुनः प्रादुर्भूत इत्यर्थः। अंशवोऽस्य सन्तीत्यंशुमान्। प्रकाशमान इत्यर्थः। हिरण्यं हिरण्मयाण्डम्। "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्" इति स्मृतेः। तस्य गर्भो हिरण्यगर्भः। ब्रह्माण्डादूर्ध्ववर्तीत्यर्थः। यद्वा हिरण्यं हितरमणीयं गर्भमन्तःकरणं यस्यासौ हिरण्यगर्भः। तापत्रयतप्तानां विश्रमस्थानत्वाच्छिशिरः। तपतीति तपनः। भासः करोतीति भास्करः। रूयते स्तूयते सर्वैरिति रविः। "अच इः" इतीप्रत्ययः। दिवा अग्निर्गर्भे यस्यासावग्निगर्भः। "उद्यन्तं वावादित्यमग्निरनुसमारोहति" इसि श्रुतेः। अदितेः पुत्रः अदितेः पुत्रत्वेनावतीर्णः। शाम्यति स्वयमेव सायंकाल इति शङ्खः। "शमेः खः"। शिशिरं हिमं नाशयतीति शिशिरनाशनः। व्योम्नो नाथो व्योमनाथः। तमः राहुं भेत्तुं शीलमस्यास्तीति तमोभेदी। ऋग्यजुःसाम्नां पारं गच्छतीति ऋग्यजुःसामपारगः। "ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः" इति श्रुतेः। घना वृष्टिर्यस्मादसौ घनवृष्टिः। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः। अत एवापां मित्रः पुंलिङ्गत्वमार्षम्। दक्षिणायने विन्ध्यो वीथी संचारभूमिर्यस्यासौ विन्ध्यवीथिः। प्लवं यथा तथा गच्छतीति प्लवङ्गमः। विन्ध्यवीथीप्लवङ्गम इत्येकपदत्वेन पाठे विन्ध्यवीथी गगनमार्गः आतपोस्यास्तीत्यातपी। मण्डलं वृत्ताकारो बिम्बोस्यास्तीति मण्डली। मृत्युः विरोधिनिवर्तकः। उदयसमये पिङ्गलवर्णत्वात् पिङ्गलः। सर्वानपि मध्याह्ने तापयतीति सर्वतापनः। कविः पण्डितः व्याकरणादिसर्वशास्त्रप्रवर्तक इत्यर्थः। विश्वः विश्वनिर्वाहकः। महान्ति तेजांसि

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः । ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥
जयाय जयभद्राय हर्यश्वाय नमो नमः । नमो नमः सहस्रांशो आदित्याय नमो नमः॥ १७ ॥
नम उग्राय वीराय सारङ्गाय नमो नमः । नमः पद्मप्रबोधाय प्रचण्डाय नमोऽस्तु ते ॥ १८ ॥
ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥

यस्य स महातेजाः । रक्तः सर्वेष्वनुरक्तः । सर्वेषां भवः संसारः उद्भवत्यस्मादिति सर्वभवोद्भवः । नक्षत्राणां ग्रहाणां ताराणां चाधिपः । विश्वं भावयति स्थापयतीति विश्वभावनः । तेजःसामग्र्यादीनां तेजसामपि तेजस्वी प्रशस्ततेजाः । द्वादश आत्मानो मूर्तयो यस्य स द्वादशात्मा । ते च दर्शिताः स्मृतौ- " इन्द्रो धाता भगः पूषा मित्रोथ वरुणोर्यमा । अर्चिर्विवस्वान् त्वष्टा च सविता विष्णुरेव च इति । एवंभूतस्त्वमसि अतस्तुभ्यं नम इति योजना ॥ १०-१५ ॥

१६ ] ति० टी०-पूर्वाय गिरये । तदन्तर्यामिण इत्यर्थः । पूर्वाय गिरये नमः । एवं पश्चिमायाद्रये इति । पश्चिमायाद्रये नमः । ज्योतिर्गणानां पतये । नक्षत्रग्रहताराधिपपर्यायः । ज्योतिर्गणानां पतये नमः । दिनाधिपतय इति दिवाकरपर्यायः । दिनाधिपतये नमः ॥ १६ ॥

रा० टी०-सूर्यमण्डलवर्तिपरमात्मबुद्धिः पर्वतादिष्वपि कर्तव्येति बोधयन्नाह-नम इति ॥ १६ ॥

गो० टी०-नमः पूर्वायेत्यादिश्लोकषट्कमेकान्वयम् । पूर्वाय गिरये पूर्वभागस्थगिर्युपलक्षिताय । पश्चिमे गिरये पश्चिमभागस्थपर्वतोपलक्षिताय जयाय उपासकानां जयकराय । जयतीति जयः जयी तस्मा इति वा । जयभद्राय जयभद्रयोः प्रदात्रे । हर्यश्वाय श्यामाश्वाय । अत्र स्तुतित्वान्न पुनरुक्तिश्चिन्त्या आदरातिशयेन नमःशब्दस्य द्विरुक्तिः । उग्राय अनुपासकानामुग्राय । विविधमीरयति प्रेरयति प्राणिनश्चेष्टयतीति वीरः तस्मै सारं शीघ्रं गच्छतीति सारङ्गः तस्मै । एकेन निमिषार्धेन द्विसहस्रयोजनं गच्छतीति पुराणप्रसिद्धिः । ब्रह्मेशानाच्युतेशाय ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणामीशाय । परब्रह्मरूपत्वेन स्तूयते " असावादित्यो ब्रह्म " इति श्रुतिः अथवा ब्रह्मेशानयोः ब्रह्मरुद्रयोः अप्रच्युतेश अच्युतनियन्ता । सर्वापत्स्वपि पालक इत्यर्थः । वेदापहारगुरुपातकदैत्यपीडायापद्विमोचनमहिष्फलप्रदातेत्यर्थः । ब्रह्मेशाग्र्याच्युतेशायेत्यपि पाठः तस्मै । आदित्यरूपं वर्चो दीप्तिर्यस्य तस्मै आदित्यवर्चसे । भा अस्यास्तीति भास्वान् तस्मै । सर्वभक्षाय सर्वसंहर्त्रे अत एव तस्मिन्समये रौद्राय वपुषे । तमः अन्धकारं हन्तीति तमोघ्नः । आश्रितशत्रून् हन्तीति शत्रुघ्नः । अमितः अपरिच्छिन्नः आत्मा स्वरूपं यस्यासौ अमितात्मा । कृतघ्नं हन्तीति कृतघ्नघ्नः । देवाय दीप्यमनाय । तप्तचामीकराय हिरण्यवपुषे । वह्नये अग्निरूपेण हव्यवाहनाय । विश्वं जगत् कर्म कर्तव्यं यस्य तस्मै विश्वकर्मणे । सर्वजगत्कर्त्रे इत्यर्थः । लोकसाक्षिणे लोकानां जनानाम् अन्तर्यामितया सुकृतदुष्कृतकर्मसाक्षिणे ॥ १६-२१ ॥

१७ ] ति० टी०-जयाय ब्रह्मलोकान्तसकलजयप्रदाय, जयाख्यब्रह्मद्वारपालमूर्तये च । जयमूर्तये नमः । जयभद्राय ब्रह्मलोकादिजयप्राप्यं यद्भद्रं भूमानन्दस्तदात्मकाय, जयभद्राख्यद्वितीयद्वारपालमूर्तये च । जयभद्राय नमः । इमावेव शापवशतोऽवतीर्णौ रावणकुम्भकर्णौ । हर्यश्वो हरिदश्वपर्यायः । हर्यश्वाय नमः । सहस्रांशो इति सहस्रार्चिःपर्यायः । सहस्रमनन्ता जीवा अंशवोंऽशा यस्य सः । 'ममैवांशो जीवलोके जीवभूतः' इति स्मृतेः । सहस्रांशवे नमः । आदरातिशयाय नमःशब्दस्य द्विरुक्तिः । आदित्येति नाम्नः प्राधान्यबोधनाय तस्य द्विरुक्तिः । आदित्याय नमः ॥ १७ ॥

रा० टी०-जयेति । सहस्रांशो स्वशरीरभूतसूर्यमण्डलद्वारानेककिरणविशिष्टजयभद्राय विजयकल्याणमयाय अत एव जयाय सकलजयहेतवे हरिर्वानरोऽश्वो यस्य तस्मै आदित्याय अदित्यमण्डलवर्तिने नमः ॥ १७ ॥

१८ ] ति० टी०-उग्रायेन्द्रियनिग्राहकाय, रुद्ररूपाय च । उग्राय नमः । वीरायेन्द्रियप्रवर्तने स्वतन्त्राय, त्रिपुरसंहारक्षमपराक्रमयुताय च । वीराय नमः । सारं प्रणवस्तत्प्रतिपाद्याय । सारंगाय नमः । पद्मं हृदयकमलं बाह्यं च पद्मं तद्बोधकाय । पद्मप्रबोधाय नमः । प्रचण्डाय सर्वसमर्थायातिकोपनाय च । प्रचण्डाय नमः ॥ १८ ॥

रा० टी०-नम इति । उना शम्भुना ग्रियते स्वसेव्यत्वेन ज्ञायते इत्युग्रः तस्मै वीराय महाबलाय किञ्च वियं सकललोकध्यापनशक्तिं राति स्वभक्तेभ्यो ददाति तस्मै किञ्च विं पक्षिणं जटायुमित्यर्थः ईरते तत् कृत्यार्थं प्राप्नोति सारङ्गाय पालितविचित्रानेकशुकसारणव्याघ्रादिविशिष्टाय पद्मस्य बहिरन्तःकमलस्य प्रबोधाय प्रचंडाय चंडिकाया अपि नियामकाय ते नमः ॥ १८ ॥

१९ ] ति० टी०-ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणामीशाय स्वामिने । 'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः ॥' इति स्मृतेः । प्रातरादौ ब्रह्माच्युतेशानश्च । ब्रह्मेशानाच्युतेशाय नमः । सूरः सूर्यपर्यायः । सूराय नमः । आदित्यस्यान्तरं वर्चो ज्ञानं तद्रूपाय । आदित्यवर्चसे नमः । भास्वतं चिद्चित्प्रकाशवते । भास्वते नमः । सर्वभक्षाय सर्वं विषयजातं भक्षयतीति सर्वभक्षस्तस्मै । 'यस्य ब्रह्म च क्षत्रं चोभे भवत

१ पश्चिमे गिरये इति गो. पाठः । २ मार्तण्डायेति गो. पाठः । ३ नम इति गो. पाठः । ४ सूर्यायेति गो. पाठः ।

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने । कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥
तप्तचामीकराभाय हरये विश्वकर्मणे । नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥
नाशयत्येष वै भूतं तमेव सृजति प्रभुः । पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥
एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः । एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥
देवाश्च क्रतवश्चैव क्रतूनां फलमेव च । यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ॥ २४ ॥

ओदने ' इति श्रुतेः । सर्वभक्षाय नमः । रुद्दुःखं तन्मूलौ रागद्वेषौ तन्मूलाज्ञानं च विद्रावयतीति रुद्रस्तस्येदं रौद्रम् । अज्ञानसंहारसमर्थज्ञानाकारायेत्यर्थः । रौद्रवपुषे नमः ॥ १९ ॥

२० ] ति० टी०–तमोघ्नहिमघ्नौ तिमिरोन्मथनशिशिरनाशनपर्यायौ । तमोघ्नाय नमः । हिमघ्नाय नमः । शत्रुर्देहाहंभावः निजतत्त्वभगवदनुसंधानजसौख्येन तस्य शातनात्तस्य हन्ता, रिपुऋणगदादिहन्ता च । शत्रुघ्नाय नमः । अमितात्मने कालदेशपरिच्छेदरहितस्वरूपाय । अमितात्मने नमः । कृतघ्नघ्नाय कृतं चेतनत्वलक्षणं भगवत्कृतमुपकारं घ्नन्ति विस्मरन्ति ते कृतघ्ना भगवद्विमुखा अज्ञाः संसारिणस्तान्संसारानर्थप्रापणेन हंन्ति तादृशाय । कृतघ्नघ्नाय नमः । देवाय चिदानन्दज्योतिःस्वरूपाय । अजागतकृत्यस्य निजोदयेन प्रवर्तनशीलश्च । देवाय नमः । ज्योतिषां पतय इति ज्योतिर्गणानां पतये इत्येतत्पर्यायः । ज्योतिषां पतये नमः ॥ २० ॥

रा० टी०–ब्रह्मेति । ब्रह्मेशानाच्युतानामुत्पत्तिप्रलयपालनकर्तॄणामीशाय स्वामिने भास्वते सर्वप्रकाशकर्त्रे अत एव सर्वभक्षाय रुद्रादिद्वारा प्रलयकर्त्रे श्रुतिश्च यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः अत एव रौद्राय भयङ्करं वपुर्यस्य तस्मै॥१९॥

रा० टी०–तम इति । तमोघ्नाय सूर्यद्वारान्धकारविनाशनाय अत एव हिमघ्नाय अमितः परिच्छेत्तुमशक्यः आत्मा शरीरं यस्य कृतघ्नघ्नाय कृतघ्नानां विनाशकाय नमः ॥ २० ॥

२१ ] ति० टी०–तप्तचामीकराभाय सुवर्णसदृशायेत्येतत्पर्यायः । तप्तचामीकराभाय नमः । हरत्यशेषमज्ञानं तत्कार्यं चेति हरिस्तस्मै । हरये नमः । विश्वं सर्वं कर्म यस्य तस्मै । ' सर्वकर्मा सर्वकामः ' इति स्मृतेः । विश्वकर्मणे नमः । तमोभिनिघ्नस्तमोनिघ्नपर्यायः । तमोभिनिघ्नाय नमः । रुचये विलक्षणदीप्तिमते । रुचये नमः । लोक्यत इति लोको दृश्यप्रपञ्चस्तत्साक्षिणे साक्षात्तद्द्रष्ट्रे, लोकानां पापपुण्यकर्मसाक्षिणे च । लोकसाक्षिणे नमः ॥ २१ ॥

रा० टी०–तप्तेति । तप्तचामीकराभाय द्रुतसुवर्णवर्णाय हरये पुनर्वसुप्रादुर्भूताय विश्वं साक्षात् परम्परया च व्याप्तं कर्म क्रिया यस्य तमसः अज्ञानस्य अभिनिघ्नाय स्वगुणद्वारा निवर्तकाय रुचये सर्वप्रीतिविषयीभूताय लोकसाक्षिणे नमः ॥२१॥

२२ ] ति० टी०–एष इत्युक्तार्थः । भूतं प्रपञ्चं प्रतिसृष्टि नाशयति भूतं प्राणिजातं तत्तदायुरन्ते नाशयति स्वदिनान्ते च नाशयति तेन । भूतनाशाय नमः । तमेवोक्तमेवोक्तभूतं जागरादावहरादौ च सृजति । भूतस्रष्ट्रे नमः । प्रभुः प्रकर्षेण स्वशक्तिवैभवेन सकलप्रपञ्चात्मना भवतीति प्रभुः, सकलप्रपञ्चस्य साक्षादधिष्ठाता च । प्रभवे नमः । पायति शोषयति गभस्तिभिः । पायते नमः । तपति नाशयति । तपते नमः । वर्षति सृजति । वर्षते नमः ॥ २२ ॥

रा० टी०–क्रियया व्यापकत्वमेव दर्शयन्नाह–नाशयतीत्यादिभिः । एषः सूर्यमण्डलमध्यस्थः परमात्मा भूतं प्राणिजातं नाशयति रुद्रादिद्वारा विनाशयति तं भूतमेष एव सृजति एष एव पायति शोषयति ह्रासयतीत्यर्थः किञ्च पा पालनार्थं यति प्रेरकतया विष्णौ प्राप्नोतीत्यर्थः इणो रूपम् गणकार्यस्यानित्यत्वान्न शपो लुक् सञ्ज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः ॥ २२ ॥

गो० टी०–एवमादित्यहृदयमुपदिश्य पुनरपि तत्प्रतिपाद्यदेवतां स्तौति—नाशयतीत्यादिना श्लोकत्रयेण । भवतीति भूतं जगत् नाशयति महाप्रलये पुनस्तदेव सृजति । अत्ययकालनिवृत्तौ प्रभुः पालकः । पालकत्वमेव प्रपञ्चयति—पायतीति । पायति शोषयति । " पै, शोषणे " इति धातुः । एष इति । सुप्तेषु भूतेषु प्राणिषु परिनिष्ठितः अन्तर्यामित्वेन स्थितः जागर्ति । सकलयज्ञकर्तृत्वफलप्रदत्वान्याह—एष इति । वेदवेद्यत्वमाह—वेदा इति । सर्वकर्मसमाराध्यत्वमाह—क्रतव इति । क्रतुफलप्रदत्वमाह—क्रतूनामिति । लौकिककर्मफलप्रदत्वमाह—यानीति । तेषामिति शेषः । सर्वः सर्वात्मको रविरेव प्रभुर्नियन्ता ॥ २२–२४ ॥

२३ ] ति० टी०–एष करणेषु सुप्तेषूपरतेषु स्वयमनुपरतशक्तिनित्यचिद्रूपो जागर्ति । निजमण्डलादर्शनतः प्राणिषु सुप्तेषु तदगोचरदेशस्थे स्वमण्डले जागर्ति च । सुप्तेषु जाग्रते नमः । भूतेषु परिनिष्ठितोऽन्तर्यामितया स्थितः । भूतेषु परिनिष्ठिताय नमः । अग्नयः पञ्चेन्द्रियलक्षणाः पञ्चाग्नयस्तेषु होत्रं होमस्तत्तद्विषयानुभवरूपः । अग्निहोत्राय नमः । अग्निहोत्रिणां बाह्याभ्यन्तराग्निहोत्रानुष्ठातॄणां प्राप्यं यत्स्वर्गापवर्गरूपं फलं तत्प्रदश्च । अग्निहोत्रिणां फलदाय नमः ॥ २३ ॥

रा० टी०–एष इति । भूतेषु सुप्तेषु सत्सु परिनिष्ठितः नियामकतया सर्वत्र पूर्णः एष एव जागर्ति एष एवाग्निहोत्रादि ॥ २३ ॥

२४ ] ति० टी०–देवाः क्रतुदेवा अष्टौ वसव एकादश रुद्रा इत्यादि क्रमेणोपदिष्टास्त्रयस्त्रिंशद्देवाः । क्रतवः सोमाद्यश्वमेधान्ताः । क्रतुफलं श्रुत्युक्तं स्वर्गादि । किं च सर्वेषु लोकेषु प्राणिषु

१ वन्दय इति गो. पाठः । २ तदेवेति गो. पाठः । ३ वेदा इति गो. पाठः । ४ सर्व एष रविः प्रभुरिति गो. पाठः ।

एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च । कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् । एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यति[1] ॥ २६ ॥
अस्मिन्क्षणे महाबाहो रावणं त्वं जहिष्यसि[2] । एवमुक्त्वा ततोऽगस्त्यो जगाम स यथागतम् ॥२७॥
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा । धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥
आदित्यं प्रेक्ष्य जप्त्वेदं[3] परं हर्षमवाप्तवान् । त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥
रावणं प्रेक्ष्य हृष्टात्मा जयार्थं[4] समुपागमत् । सर्वयत्नेन महता वृतस्तस्य[5] वधेऽभवत् ॥ ३० ॥
अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

---

यानि कृत्यानि क्रियास्तत्साधनानि च ऋत्विग्यजमानसमिदाज्यपश्वादीनि तैर्निजभक्तद्विजानां संघटने परमप्रभुः परमसमर्थः । परमसमर्थाय भगवते ब्रह्मणे नमः । एवं पञ्चविंशत्युत्तरशतसंख्या भगवत्पूजारहस्यनाममन्त्रा इति कतकः । 'सर्वदेवात्मको ह्येषः' इत्यारभ्य 'लोकसाक्षिणे' इत्यन्ताष्टोत्तरशतसंख्या एवादित्यहृदयस्तोत्रनाममन्त्रा इति तीर्थः ॥ २४ ॥

रा० टी०–नन्वेकत्र स्थितस्य कथं सर्वात्मकत्वमित्यत आह देवा इति देवादयः लोकेषु यानि कृत्यानि तेषु सर्वेषु परमः प्रभुः परमनियन्ता एष एवेति शेषः तथा च श्रुतिः । कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥ एतेन तदायत्तत्वन्तत्तद्व्यवहारस्येति सूचितम् ॥२४॥

२५ ] ति० टी०–एवं कथितस्य स्तोत्रस्य फलमाह—एनमिति । आदित्यहृदयस्तवं कीर्तयन्नापदादिषु कश्चिदपि द्विजो नावसीदति न दुःखनिमग्नो भवति । यद्वैनमादित्यहृदयार्थभूतं सूर्यमापदादिनिमित्तेषूक्तैर्नाममन्त्रैर्विशिष्य कीर्तयन्स्तुवन्नावसीदति अत्रापदकालमृत्युः कृच्छ्रं ज्वरादिदुःखम्, भयं चोरादिनिमित्तम् ॥ २५ ॥

रा० टी०–एनमिति । एनं परमात्मानं कीर्तयन् सन् कश्चित्पुरुषो नावसीदति ॥ २५ ॥

गो० टी०–इदानीं स्तोत्रस्य फलमाह—एनमिति । कृच्छ्रेषु कष्टेषु । कान्तारेषु दुर्गममार्गेषु । भयेषु भयहेतुषु सत्सु कश्चिदित्यधिकारिनियमाभावो दर्शितः ॥ २६ ॥ २७ ॥

२६–२७ ] ति० टी०–यदेवमतः पूजयस्वैनमादित्यहृदयार्थम् । देवदेवं देवानां ब्रह्मविष्णुरुद्राणामपि देवमुपास्यम् । जगतां जनिमृतिधर्मिणां भूरादिलोकानां संसारमात्रस्य च पतिम् । एतदादित्यहृदयं स्तोत्रं त्रिगुणितं संजातत्रिगुणं यथा तथा जप्त्वा विजयिष्यति विजेष्यति रिपूञ्जन इति शेषः२६॥२७

रा० टी०–पूजयस्वेति । एतत्स्तोत्रं त्रिगुणितं त्रिगुणं त्रिवारं जप्त्वा एनं पूजयस्व अत एव युद्धेषु विजयिष्यसि विजेष्यसे ॥ २६ ॥

रा० टी०–विजये कारणमाह—अस्मिन्निति । रावणं त्वं जयिष्यसि हनिष्यसीत्यर्थः एवमुक्त्वा अगस्त्यो यथागतं जगाम ॥ २७ ॥

२८ ] ति० टी०–नष्टशोको नष्टो रावणविषयचिन्तारूपशोको यस्य सः ॥ २८ ॥

रा० टी०–एतदिति । नष्टः नितरां निवृत्तश्शोको यस्य स रामः एतच्छ्रुत्वा सुप्रीतोऽभवत् अत एव धारयामास ॥ २८ ॥

गो० टी०–एतच्छ्रुत्वेत्यादिश्लोकद्वयमेकान्वयम् । त्रिराचम्येत्यन्त्याचमनमाद्याचमनस्याप्युपलक्षणम् । धारयामास जप्त्वेत्यत्र आदित्यहृदयमिति शेषः ॥ २८ ॥ २९ ॥

२९–३० ] ति० टी०–इदं शीघ्रसिद्धिकरं स्तोत्रं जप्त्वा हृष्टात्मा प्रातर्युद्धायागतं रावणं प्रेक्ष्य जयार्थं मनसा भगवन्तमगमद्ध्यातवान् ॥ २९ ॥ ३० ॥

रा० टी०–आदित्यमिति । परं हर्षमवाप्तवान् रामः त्रिराचम्य आदित्यं प्रेक्ष्य त्रिर्जप्त्वा आदित्यहृदयमिति शेषः धनुरादाय रावणं प्रेक्ष्य युद्धाय समुपागमत् महता सर्वप्रयत्नेन उपलक्षितस्य तस्य रावणस्य वधे धृतः कृतनिश्चयोऽभवत् श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०–रावणमिति । युद्धाय युद्धं कर्तुम् । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । सर्वयत्नेन सर्वप्रकारेण यत्नेन॥३०॥

३१ ] ति० टी०–अथ रवी रामं निरीक्ष्य निशाचरपतिसंक्षयं तत्कालं विदित्वा स्वलीलामूर्त्या सुरगणमध्यगतः सन्साक्षात्त्वरेति वचोऽवदत् ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

रा० टी०–अथेति । सुरगणमध्यगतो रविः निशिचरपतिसंक्षयं तत्कालं विदित्वा ज्ञात्वा त्वरेति वचः रामं निरीक्ष्यावदत् ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षडधिकशततमः सर्गः ॥ १०६ ॥

---

१ विजयिष्यसीति गो. रा. पा. । २ जयिष्यसीति रा. वधिष्यसीति गो. पाठः । ३ त्रिरिति गो. त्रिरिति रा. पा. । ४ युद्धायेति गो. रा. पाठः । ५ वधे तस्य धृत इति गो. पाठः ।

# षडुत्तरशततमः सर्गः ।

ततो रामरावणयोः सङ्ग्रामं द्रष्टुकामा ससिद्धगंधर्वर्षयो देवा आगतास्तत्र रामजयशंसिनो रावणस्याशुभावहाश्च महोत्पाताः प्रादुर्बभूवुस्तदा रामः सोत्साहो युद्धेऽधिकं विक्रमं दर्शयामास ।

सारथिः स रथं हृष्टः परसैन्यप्रधर्षणम् । गन्धर्वनगराकारं समुच्छ्रितपताकिनम् ॥ १ ॥
युक्तं परमसंपन्नैर्वाजिभिर्हेममालिभिः । युद्धोपकरणैः पूर्णं पताकाध्वजमालिनम् ॥ २ ॥
ग्रसन्तमिव चाकाशं नादयन्तं वसुंधराम् । प्रणाशं परसैन्यानां स्वसैन्यस्य प्रहर्षणम् ॥ ३ ॥
रावणस्य रथं क्षिप्रं चोदयामास सारथिः । तमापतन्तं सहसा स्वनवन्तं महाध्वजम् ॥ ४ ॥
रथं राक्षसराजस्य नरराजो ददर्श ह । कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा ॥ ५ ॥
दीप्यमानमिवाकाशे विमानं सूर्यवर्चसम् । तडित्पताकागहनं दर्शितेन्द्रायुधप्रभम् ॥ ६ ॥
शरधारा विमुञ्चन्तं धाराधरमिवाम्बुदम् । सं दृष्ट्वा मेघसंकाशमापतन्तं रथं रिपोः ॥ ७ ॥

गो० टी०-अथेर्ये । प्रहृष्यमाणः प्रहृष्यन् । पुलकित इति यावत् । निशिचरपतिरिति । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । रविः आत्मानं स्तुवन्तं रामं निरीक्ष्य मुदितमनाः स्तोत्रेण संतुष्टमनाः प्रहृष्यमाणः सन्, निशिचरपतेः संक्षयं विदित्वा अनुगृह्य सुरगणमध्यगतः सन्, त्वर रावणवधं प्रति त्वरस्वेति वचोऽवदत् । अत्र सुरगणमध्यगत इत्यनेन युद्धदर्शनार्थं स्वमण्डलादवतीर्य रामसमीपे गगने स्थित्वा स्तोत्रफलमनुगृहीतवानित्युच्यते । ननूत्तरत्र ब्रह्मरुद्रादयः सर्वे एकवाक्यतया भवान्नारायणो देव इत्यादिना विष्णोरेव सर्वस्मात् परत्वं महता ग्रन्थेन प्रतिपादितवन्तः, अत्र सूर्यस्यैव सर्वोत्तरत्वमुच्यते, कथमिदं संगच्छते उच्यते यथा मधुविद्यायामादित्यस्य परतया प्रतिपादनेपि तदन्तर्यामिण्येव परमात्मनि मधुविद्यायास्तात्पर्यमिति बादरायणो ब्रह्ममीमांसायामुक्तवान् तथास्य मन्त्रस्यादित्यान्तर्यामिविषयतया सर्वमिदं संगच्छते । नारायणपरत्वं ह्युपक्रमप्रभृत्योपसंहारमविवादमिति पूर्वमेव बहुलं प्रतिपादितम् । ब्रह्मेशानाच्युतेशायेत्येतदपि मूर्तित्रयस्य परमात्मजन्यत्वादुपपद्यते । अयं च सर्गः केषु चित् कोशेषु न दृश्यते । उडारिणा न व्याख्यातश्च । आरम्भात्प्रभृतिप्रबन्धप्रतिपादितनारायणपरत्वविरुद्धं चात्र प्रतिभाति सूर्यपरत्वम् । अस्मिंश्च काण्डे त्रिंशदुत्तरशतसर्गा उडारिणा गणिताः एतदन्तर्भावे एकत्रिंशदुत्तरशतसर्गास्तेन गणिता भवेयुः ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

१ ] ति० टी०-स सारथी रावणस्य सारथिर्हृष्टः सन्नुच्यमानगुणं रथं चोदयामासेत्यन्वयः । गन्धर्वनगराकारं तद्वदाश्चर्यदर्शनम् ॥ १ ॥

रा० टी०-रामरावणयोर्युद्धमेवाह-सारथिरित्यदिभिः । परसैन्यप्रधर्षणं गन्धर्वनगरवदाकारो यस्य अत्याश्चर्यमित्यर्थः समुच्छ्रिता या पताका तद्वन्तं रथमवलोक्य सारथिर्हृष्टो बभूवेति शेषः ॥ १ ॥

गो० टी०-अथ रावणदुर्निमित्तानि-स रथमित्यादिसार्धश्लोकत्रयमेकान्वयम् । अत्र द्वितीयसारथिशब्दः अनेकविशेषणव्यवधानात् पूर्वोक्ताविस्मरणाय । गन्धर्वनगराकारं गन्धर्वनगरसदृशम् । तल्लक्षणमुक्तं मिहिरेण-चित्रवर्णं चित्ररूपप्राकारगृहगोपुरम् । अलंकृतमनेकाभैर्वितानध्वजतोरणैः । गन्धर्वनगरं दन्तिनृवाजिक्षययुद्धकृत् । दृश्यते चेन्महद्युद्धमन्योन्यं धरणीभुजामिति । युद्धोपकरणैः धनुष्कवचादिभिः । पताकायुक्ताः ध्वजाः तैर्मालन्त इति पाताकाध्वजमाली तम् । "मल, मल्ल, धारणे" इत्यस्माण्णिनिः । ग्रसन्तमिव । स्वविस्तारेणेति भावः । प्रणाशयतीति प्रणाशम् ॥ १-३ ॥

२ ] ति० टी०-परमसंपन्नैः परमै रथवहनोचिताश्वगुणैर्जवादिभिः संपन्नैः । पताकाध्वजानां मालास्मिन्नस्ति तम् । अनेन ध्वजबाहुल्यमुक्तम् । समुच्छ्रितपताकिनमित्यनेन च तदौन्नत्यमुक्तम् ॥ २ ॥

३ ] ति० टी०-प्रणाशं प्रणाशकरम् ॥ ३ ॥

रा० टी०-युक्तमिति । परमसम्पन्नैः अतिशीघ्रगामित्वादिगुणविशिष्टैर्वाजिभिर्युक्तं युद्धोपकरणैः शस्त्रादिभिः पूर्णं पताकाध्वजानां माला समूहः तद्वन्तमाकाशं ग्रसन्तमिव वसुंधरां नादयन्तमिव परसैन्यानां प्रणाशं विनाशकं रावणस्य रथं सारथिः क्षिप्रं चोदयामास सार्द्धश्लोकद्वयमेकान्वयि॥२॥३॥

४-५ ] ति० टी०-द्वितीयरथसारथिशब्दावनेकविशेषणव्यवधानात्पूर्वोक्ताविस्मरणार्थौ तदनुवादकावेव ॥ ४ ॥ ५ ॥

६-७ ] ति० टी०-तडित्पताकागहनं तडित्तुल्यपताकाभिर्गहनं संकीर्णम् । दर्शितेन्द्रायुधप्रभं दर्शितेन्द्रायुधस्य प्रभा येन तम् । 'दर्शितेन्द्रायुधायुधम्' इति पाठे दर्शितानीन्द्रायुधेन सदृशान्यायुधानि येन तमित्यर्थः ॥ ६ ॥ ७ ॥

१ सरथं सारथिरिति गो. पाठः । २ सैन्यानामिति गो. पाठः । ३ स्वनमिति गो. पाठः । ४ इदमर्धं गो. पु. न दृश्यते । ५ आसारमिति गो. रा. पाठः । ६ तमिति गो. पाठः ।

गिरेर्वज्राभिमृष्टस्य दीर्यतः सदृशस्वनम् । विस्फारयन्वै वेगेन बालचन्द्रानतं धनुः ॥ ८ ॥
उवाच मातलिं रामः सहस्राक्षस्य सारथिम् । मातले पश्य संरब्धमापतन्तं रथं रिपोः ॥ ९ ॥
यथापसव्यं पतता वेगेन महता पुनः । समरे हन्तुमात्मानं तथानेन कृता मतिः ॥ १० ॥
तदप्रमादमातिष्ठं प्रत्युद्गच्छ रथं रिपोः । विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम् ॥ ११ ॥
अविक्लवमसंभ्रान्तमव्यग्रहृदयेक्षणम् । रश्मिसंचारनियतं प्रचोदय रथं द्रुतम् ॥ १२ ॥
कामं न त्वं समाधेयः पुरंदररथोचितः । युयुत्सुरहमेकाग्रः स्मारये त्वां न शिक्षये ॥ १३ ॥
परितुष्टः स रामस्य तेन वाक्येन मातलिः । प्रचोदयामास रथं सुरसारथिरुत्तमः ॥ १४ ॥

८-९ ] ति० टी०-वज्राभिमृष्टस्य वज्राभिहतस्य दीर्यतो गिरेः स्वनस्य सदृशस्वनम् बालचन्द्रवन्नतम् ॥ ८ ॥ ९ ॥

रा० टी०-तमिति । स्वनवन्तं राक्षसराजस्य रथं नरराजो ददर्श ॥ ४ ॥

गो० टी०-तमिति । स्वनवन्तं शब्दवन्तम् महास्वनं प्रतिध्वनियुक्तमित्यर्थः ॥ ४ ॥

रा० टी०-कृष्णेति । कृष्णैर्वाजिभिस्समायुक्तं रौद्रेण भयंकरेण वर्चसा तेजसा युक्तमत एव दीप्यमानं विमानमिव तडित्सदृशपताकाभिर्गहनं निबिडम् दर्शितानि दृष्टानि इन्द्रायुधतुल्यानि आयुधानि यस्मिन् धारासारं महाधारां विमुञ्चन्तमम्बुदमिव शरधारां विमुञ्चन्तमत एव मेघसंकाशं दीर्यतो गिरेस्सदृशस्वनमापतन्तं रिपोः रथं स रामो दृष्ट्वा बालचन्द्रवदानतं धनुर्विस्फारयन्सन् सहस्राक्षस्य सारथिमुवाच अष्टश्लोकमेकान्वयि ॥ ९-८ ॥

गो० टी०-कृष्णवाजिसमायुक्तमित्यादिसार्धश्लोकत्रयमेकान्वयम् । रौद्रेण उग्रेण । तडित्पताकागहनं तडित्तुल्यपताकावनम् । दर्शितेन्द्रायुधायुधं दर्शितानीन्द्रायुधसदृशानि आयुधानि येन तम् । यद्वा दर्शितेन्द्रायुधानि स्वप्रभाविशेषविरचितेन्द्रचापान्यायुधानि यस्मिन् दृश्यन्ते तादृशम् । यद्वा आयुधं धनुः दर्शितेन्द्रधनुस्तुल्यधनुष्कम् । धारासारं धारासमूहमित्यर्थः । वज्राभिमृष्टस्य वज्राहतस्य । अत एव दीर्यतः भिद्यमानस्य । बालचन्द्रनतम् आरोपितमौर्वीकत्वेन बालचन्द्रवन्नतम् ॥५-८॥

रा० टी०-तदाकारमाह—मातल इत्यादिभिः । हे मातले संरब्धं वेगवन्तं रिपोः रथं तं पश्य अहं पृथक् ॥ ९ ॥

गो० टी०-मातले इत्यर्धमेकं वाक्यम् । संरब्धं वेगवन्तम् ॥ ९ ॥

१० ] ति० टी०-यथानुभूयमानप्रकारेणापसव्यं प्रदक्षिणं महता रथवेगेन पततानेन रावणेन समर आत्मानं मां हन्तुं मतिः कृता प्रथमप्रादक्षिण्येन रथसंचारलक्षणशुभनिमित्तसंपादनेनेति शेषः ॥ १० ॥

रा० टी०-यथेति । अपसव्यं अप्रदक्षिणं यथा भवति तथा महता वेगेन पतता अनेन रावणेन आत्मानं परमात्मानमपि समरे हन्तुं मतिः कृता किञ्च आत्मानं स्वमेव समरे हन्तुं मतिः कृता एतेनास्यैवावश्यं विघातो भविष्यतीति सूचितम् ॥१०॥

गो० टी०-यथा अपसव्यमिति । यथा आ अपसव्यमिति छेदः । अपसव्यम् अप्रदक्षिणम् यथा स्यात्तथा महता वेगेन पुनः आपतता आगच्छता तेन रावणेन समरे आत्मानं हन्तुं मतिः कृता । अपसव्यतया गमनं विनाशद्योतकमित्यर्थः ॥१०॥

११ ] ति० टी०-तत्तस्मादप्रमादं सावधानत्वमातिष्ठासनस्थैर्येण रिपो रावणस्य रथं प्रति प्रत्युद्गच्छ । प्रादक्षिण्येनैवेति शेषः ॥ ११ ॥

रा० टी०-तदिति । वायुः उत्थितं मेघमिव रिपोः रथं विध्वंसयितुमिच्छामि तत् तस्मात् अप्रमादं यथा भवति तथा तिष्ठ अत एव प्रत्युद्गच्छ ॥ ११ ॥

गो० टी०-तदिति । तत् अपसव्यगमनस्य विनाशहेतुत्वात्, अप्रमादमातिष्ठन् सावधानतामवलम्बमानः । अपसव्यतां परिहरन्नित्यर्थः । रिपोः रथं प्रत्युद्गच्छ ॥ ११ ॥

१२ ] ति० टी०-अविक्लवादिचतुर्गुणयुक्तं यथा तथा द्रुतं रथं प्रचोदय । अविक्लवत्वमभीरुत्वम् असंभ्रान्तत्वं रणक्षोभादक्षुभितचित्तत्वम् । अव्यग्रमभीयहृदयेक्षणं यत्र । रश्मिसंचारनियतम् रश्मिसंचारे नैपुण्यं तत्तत्कालानुगुण्येन संयमनमोचनव्यवस्थावत्त्वम् ॥ १२ ॥

रा० टी०-अविक्लवमिति । अविक्लवं भीरुताराहित्यमसम्भ्रान्तं भ्रान्तिराहित्यमव्यग्रहृदयेक्षणं व्यग्रतारहितहृदयेक्षणं रश्मीनां संचारे आकुञ्चनप्रसारणे नियतं यथा भवति तथा रथं प्रचोदय ॥ १२ ॥

गो० टी०-अविक्लवमिति । अविक्लवम् अदीनम् । असंभ्रान्तम् अप्रमादम् । अव्यग्रहृदयेक्षणम् अव्याकुलमनोनयनम् । रश्मिसंचारनियतम् नियतरश्मिसंचारम् । एतानि क्रियाविशेषणानि ॥ १२ ॥

१३-१४ ] ति० टी०-यस्मात्पुरंदररथोचितस्त्वं अथापि कामं न समाधेयो न शिक्षणीयः, अथापि युयुत्सुरेकाग्रोऽहं स्मारये सहजं सारथ्यकर्म स्मारये न शिक्षये ॥ १३ ॥ १४ ॥

रा० टी०-काममिति । यतस्त्वं पुरन्दररथोचितः अतस्त्वं न समाधेयः तथापि युयुत्सुरहं त्वां स्मारये न शिक्षये ॥ १३ ॥

रा० टी०-परितुष्ट इति । रामस्य वाक्येन परितुष्टः सुरसारथिसत्तमो मातलिः रथं प्रचोदयामास ॥ १४ ॥

१ तिष्ठन्निति गो. पाठः । २ सत्तम इति गो. रा. पाठः ।

अपसव्यं ततः कुर्वन्रावणस्य महारथम्। चक्रसंभूतरजसा रावणं व्यवधूनयत् ॥ १५ ॥
ततः क्रुद्धो दशग्रीवस्ताम्रविस्फारितेक्षणः। रथप्रतिमुखं रामं सायकैरवधूनयत् ॥ १६ ॥
धर्षणामर्षितो रामो धैर्यं रोषेण लम्भयन्। जग्राह सुमहावेगमैन्द्रं युधि शरासनम् ॥ १७ ॥
शरांश्च सुमहावेगान्सूर्यरश्मिसमप्रभान्। तदुपोढं महद्युद्धमन्योन्यवधकाङ्क्षिणोः ॥
परस्पराभिमुखयोर्दृप्तयोरिव सिंहयोः ॥ ॥ १८ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः। समीयुर्द्वैरथं द्रष्टुं रावणक्षयकाङ्क्षिणः ॥ १९ ॥
समुत्पेतुरथोत्पाता दारुणा रोमहर्षणाः। रावणस्य विनाशाय राघवस्योदयाय च ॥ २० ॥
ववर्ष रुधिरं देवो रावणस्य रथोपरि। वाता मण्डलिनस्तीव्रा ह्यपसव्यं प्रचक्रमुः ॥ २१ ॥
महद्गृध्रकुलं चास्य भ्रममाणं नभःस्थले। येन येन रथो याति तेन तेन प्रधावति ॥ २२ ॥

---

गो० टी०–काममिति। न समाधेयः नोपदेष्टव्यः। अत्र हेतुः—पुरन्दररथोचित इति। अभ्यस्तपुरन्दररथ इत्यर्थः ॥ १३ ॥ १४ ॥

१५ ] ति० टी०–अपसव्यं प्रदक्षिणप्रचारम्। व्यवधूनयदकम्पयत् ॥ १५ ॥

रा० टी०–अपसव्यमिति। रावणस्य महारथं अपसव्यं कुर्वन् मातलिः चक्रोत्क्षिप्तेन रजसा रावणं व्यवधूनयत् व्यवाधूनयत् अकम्पयत् ॥ १५ ॥

गो०टी०–अपसव्यमिति। रावणस्य महारथमपसव्यं कुर्वन् स्वरथस्यापसव्यतां परिहरन्नित्यर्थः। चक्रोत्क्षिप्तेन रथचक्रोत्थापितेन रजसा, रावणं व्यवधानयत् व्यवहितमकरोत् १५

१६ ] ति० टी०–रथेन प्रतिमुखं संमुखं रथप्रतिमुखम् ॥ १६ ॥

रा० टी०–तत इति। दशग्रीवः रथप्रतिमुखं रामं सायकैरवधूनयत् अवाधूनयत् ॥ १६ ॥

गो० टी०–तत इति। रथप्रतिमुखं सर्वथाभिमुखम्, अवधूनयत् प्राहरत् ॥ १६ ॥

१७ ] ति० टी०–धर्षणेनामर्षितो रोषेण सह धैर्यं युद्धारम्भटीं लम्भयन्प्राप्नुवन्निन्द्रस्येदमैन्द्रं शरासनं जग्राह। किं चैन्द्रं पारमेश्वरम्। 'इदि परमैश्वर्ये' इत्युक्तेः। निजायुधं जग्राहेत्यर्थः ॥ १७ ॥

रा० टी०–धर्षणेति। धर्षणेन अमर्षितो रामः धैर्यं रोषेण लम्भयन् योजयन्सन् ऐन्द्रं शरासनं शरांश्च जग्राह॥१७॥

गो० टी०–धर्षणेत्यादिसार्धश्लोकमेकं वाक्यम्। धैर्यं रोषेण लम्भयन् रोषेण निवृत्तधैर्य इत्यर्थः। ऐन्द्रं मातलिनानीतं शरासनं शरांश्च जग्राहेति योजना ॥ १७ ॥

१८ ] ति० टी०–तत्तदा महद्युद्धमुपोढमारब्धमभूत्॥१८॥

रा० टी०–तदिति। दृप्तयोर्सिंहयोरिव अन्योन्यवधकाङ्क्षिणोः रामरावणयोः महद्युद्धमुपोढमारब्धम् ॥ १८ ॥

गो० टी०–तदुपोढमिति। उपोढं प्रवृत्तम् ॥ १८ ॥

१९–२० ] ति० टी०–द्वाभ्यां रथाभ्यां प्रवर्तितं द्वयो रथयोरिदं वा द्वैरथं युद्धं द्रष्टुं समीयुर्मिलित्वा गताः॥१९॥२०॥

रा० टी०–तत इति। रावणक्षयकाङ्क्षिणः देवादयः द्वैरथं युद्धं द्रष्टुं समीयुः ॥ १९ ॥

गो० टी०–तत इति। द्वैरथं द्वाभ्यां रथाभ्यां प्रवर्तितं युद्धम् ॥ १९ ॥

रा० टी०–अथानन्तरं दारुणाः उत्पाताः समुत्पेतुः॥२०॥

गो० टी०–समुत्पेतुरिति। अत्रोत्पातानां राघवजयसूचकत्वं रावणवधद्वारा ॥ २० ॥

२१ ] ति० टी०–उत्पातानाह—ववर्षेति। मण्डलिनो वाताः। वात्यारूपा इत्यर्थः। तीव्रास्तीव्रवेगाः। व्यपसव्यं विगतमपसव्यं प्रदक्षिणं यथा तथा। वामावर्ता इत्यर्थः ॥२१॥

रा० टी०–उत्पाताकारमाह—ववर्षेति। देव उत्पातविशेषदेवता रावणस्य रथोपरि रुधिरं ववर्ष मण्डलिनः अनेकमण्डलविशिष्टाः वाताः अपसव्यं प्रचक्रमुः ॥ २१ ॥

गो० टी०–ववर्षेति। देवः पर्जन्यः। मण्डलिनो वाताः वात्याः। अपसव्यम् अप्रदक्षिणम्, प्रचक्रमुः चेरुः ॥ २१ ॥

२२ ] ति० टी०–येन येनेति। मार्गेणेत्यर्थः। गृध्रकुलस्य मृतमांसभोजिनो रावणेन सहागमनेन रावणस्यासन्नमरणं सूच्यते ॥ २२ ॥

रा० टी०–महदिति। नभःस्थले भ्रममाणं गृध्रकुलं येन येन यथा अस्य रावणस्य रथो याति तेन तेन पथा प्रधावति ॥ २२ ॥

गो० टी०–महदिति। अस्य रावणस्य रथो येन मार्गेण याति स्म तेन मार्गेण महत् गृध्रकुलम् नभःस्थले भ्रममाणं सत् प्रधावति स्म। अनेन रावणस्यासन्नमरणत्वं सूचितम्। तदुक्तं शकुनार्णवे—आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभाग इति ॥ २२ ॥

---

१ उत्क्षिप्तेनेति गो. रा. पाठः। २ धानयदिति गो. पाठः। ३ इदमर्धं रा. पु. न दृश्यते। ४ तेजा इति गो. पाठः। ५ नर्दान्त गो. पाठः। ६ समेयुरिति गो. पाठः। ७ जयायेति गो. रा. पाठः। ८ ह्यपेति गो. रा. पाठः।

संध्यया चावृता लङ्का जपापुष्पनिकाशया । दृश्यते संप्रदीप्तेव दिवसेऽपि वसुंधरा ॥ २३ ॥
सनिर्घाता महोल्काश्च संप्रपेतुर्महास्वनाः । विषादयंस्ते रक्षांसि रावणस्य तदा हिताः ॥ २४ ॥
रावणश्च यतस्तत्र प्रचचाल वसुंधरा । रक्षसां च प्रहरतां गृहीता इव बाहवः ॥ २५ ॥
ताम्राः पीताः सिताः श्वेताः पतिताः सूर्यरश्मयः । दृश्यन्ते रावणस्याग्रे पर्वतस्येव धातवः ॥ २६ ॥
गृध्रैरनुगताश्चास्य वमन्तो ज्वलनं मुखैः । प्रणेदुर्मुखमीक्षन्त्यः संरब्धमशिवं शिवाः ॥ २७ ॥
प्रतिकूलं ववौ वायू रणे पांसून्समुत्किरन् । तस्य राक्षसराजस्य कुर्वन्दृष्टिविलोपनम् ॥ २८ ॥
निपेतुरिन्द्राशनयः सैन्ये चास्य समन्ततः । दुर्विषह्यस्वरा घोरं विना जलधरोदयम् ॥ २९ ॥
दिशश्च प्रदिशः सर्वा बभूवुस्तिमिरावृताः । पांसुवर्षेण महता दुर्दर्शं च नभोऽभवत् ॥ ३० ॥

---

२३ ] ति० टी०—जपापुष्पनिकाशया संध्यया वृता लङ्का संप्रदीप्तेव दृश्यते । अकालेऽपीति शेषः तदेवाह—दिवसेऽपीति । वसुंधरेति लङ्काविशेषणम् ॥ २३ ॥

रा० टी०—सन्ध्ययेति । जपापुष्पनिकाशया सन्ध्यया-वृता लंका वसुन्धरा दिवसेऽपि संप्रदीप्ता इव दृश्यते ॥ २३ ॥

गो० टी०—संध्ययेति । जपापुष्पनिकाशया संध्यया लङ्का आवृता । अत एव वसुंधरा लङ्कापर्यन्तभूमिः रात्रावग्निना संप्रदीप्तेव दिवसेऽपि संप्रदीप्ता दृश्यत इत्यर्थः ॥ २३ ॥

२४ ] ति० टी०—संप्रपेतुः । रावणस्य पुरस्तादिति शेषः । तदा तस्मिन्काले । अहिता अनर्थसूचकाः ॥ २४ ॥

रा० टी०—सेति । निर्घातसहिताः महोल्काः संप्रपेतुः रावणाग्रे निपेतुः अत एव तदा तस्मिन् काले अहिताः अमङ्गलसूचकत्वेन रिपुभूताः ते निर्घातादयः रक्षांसि विवादयन् व्यवादयन् ॥ २४ ॥

गो० टी०—सनिर्घाता इति । सनिर्घाता महोल्काः संप्रपेतुः । ते उल्काः लिङ्गव्यत्ययः । रावणस्याहिताः प्रतिकूलाः सन्तः रक्षांसि विषादयन् व्यपादयन् ॥ २४ ॥

२५ ] ति० टी०—वसुंधरा लङ्कापर्यन्तभूः गृहीता इवेति । भयास्तम्भा इति शेषः ॥ २५ ॥

रा० टी०—रावण इति । यतो यत्र देशे रावणः तत्र वसुधा चचाल प्रहरतां रक्षसां बाहवस्तु गृहीता इव बभूवुरिति शेषः ॥ २५ ॥

गो० टी०—रावणश्चेति । यतः यत्र, रावणो गतः तत्र वसुंधरा संचचाल । रावणसमीप एव भूकम्पो जात इत्यर्थः । गृहीता इव बाहवः । केश्चिद्गृहीता बाहवो यथा प्रहर्तुं न क्षमन्ते तथाभूवन्नित्यर्थः ॥ २५ ॥

२६ ] ति० टी०—पर्वतस्य धातव इव ताम्रादिरूपाः सूर्यस्य रश्मयो रावणस्याग्रे पतिताः सन्तो दृश्यन्त इति संबन्धः ॥ २६ ॥

रा० टी०—ताम्रा इति । पर्वतस्य धातव इव ताम्रादयः इव सूर्यरश्मयः रावणस्याग्रे दृश्यन्ते ॥ २६ ॥

गो० टी०—ताम्रा इति । सिता अश्वेताश्च सिताश्वेताः । पर्वतस्येवेति । पर्वतस्याङ्गे धातव इवेति योजना ॥ २६ ॥

२७ ] ति० टी०—अस्य मुखमीक्षन्त्य इत्यन्वयः ॥ २७ ॥

रा० टी०—गृध्रैरिति । मुखैर्मुखेभ्यो ज्वलनं वमन्तः गृध्रैरनुगताः सहिताः अशिवाः अमङ्गलसूचकाः शिवा गोमायवः अस्य रावणस्य मुखमीक्षन्तस्सन्तः संरब्धमतिकोपं यथा भवति तथा प्रणेदुः ॥ २७ ॥

गो० टी०—गृध्रैरिति । गृध्रैरनुगताः गृध्रसहिता इत्यर्थः । शिवाः गोमायवः, मुखैर्ज्वलनं वमन्त्यः सत्यः अस्य रावणस्य मुखमीक्षन्त्यः । रावणाभिमुखा इत्यर्थः । संरब्धं कुपितम्, अशिवम् अमङ्गलम् च यथा भवति तथा प्रणेदुः । गृध्राणां साहि .मात्रं न तु ज्वलनवमनादिकम् ॥ २७ ॥

२८ ] ति० टी०—दृष्टिविलोपनमशक्योद्वीक्षणत्वम् ॥ २८ ॥

रा० टी०—प्रतिकूलमिति । राक्षसराजस्य दृष्टिविलोपनं कुर्वन् कर्तुं रणे पांसून् समुत्किरन् सन् वायुः प्रतिकूलं ववौ ॥ २८ ॥

गो० टी०—प्रतिकूलमिति । वायुः रणे पांसून् समाकिरन्, तेन तस्य रावणस्य दृष्टिविलोपनं दृष्टिप्रतिघातं कुर्वन्, प्रतिकूलम् अभिमुखं ववौ ॥ २८ ॥

२९-३० ] ति० टी०—इन्द्राशनय इत्यनेनायुधाशनिव्यावृत्तिः ॥ २९ ॥ ३० ॥

रा० टी०—निपेतुरिति । जलधरस्य मेघस्य उदयं विना-दुर्विषह्यस्वराः इन्द्राशनयः अस्य सैन्ये समन्ततो निपेतुः॥२९॥

रा० टी०—दिश इति । पांसुवर्षेण दिशः प्रदिशश्च तिमिरावृता बभूवुः अत एव नभो दुर्दर्शमभवत् ॥ ३० ॥

गो० टी०—निपेतुरिति । इन्द्राशनयः उल्काशनयः उल्काशन्योः स्वरूपमुक्तं मिहिरेण—उल्का शिरसि विशाला निपतन्ती वर्धते च तनुपुच्छा । अशनिः स्वनेन महता पुंसा नृगजाश्वतरुपशुस्खेषु । निपतति विदारयन्ती धरातलं चक्रसंस्थानेति ॥ २९ ॥ ३० ॥

---

१ वेपन्तीति गो. पाठः । २ समिति गो. पाठः । ३ अङ्गे इति गो. रा. पाठः । ४ वमन्त्य इति गो. पाठः । ५ समेति गो. पाठः । ६ स्वना इति गो. पाठः । ७ घोरा इति गो. पाठः । ८ स्वनमिति गो. पाठः ।

कुर्वन्त्यः कलहं घोरं सारिकास्तद्रथं प्रति । निपेतुः शतशस्तत्र दारुणा दारुणारुताः ॥ ३१ ॥
जघनेभ्यः स्फुलिङ्गांश्च नेत्रेभ्योऽश्रूणि संततम् । मुमुचुस्तस्य तुरगास्तुल्यमग्निं च वारि च ॥ ३२ ॥
एवंप्रकारा बहवः समुत्पाता भयावहाः । रावणस्य विनाशाय दारुणा संप्रजज्ञिरे ॥ ३३ ॥
रामस्यापि निमित्तानि सौम्यानि च शिवानि च । बभूवुर्जयशंसीनि प्रादुर्भूतानि सर्वशः ॥ ३४ ॥
निमित्तानीह सौम्यानि राघवस्य जयाय वै । दृष्ट्वा परमसंहृष्टो हतं मेने च रावणम् ॥ ३५ ॥
ततो निरीक्ष्यात्मगतानि राघवो रणे निमित्तानि निमित्तकोविदः ।
जगाम हर्षं च परां च निर्वृतिं चकार युद्धे ह्यधिकं च विक्रमम् ॥ ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षडुत्तरशततम सर्गः ॥ १०६ ॥

---

## सप्तोत्तरशततमः सर्गः ।

रामरावणयोर्भयानके समरे रावणेनामर्षिणा महच्छौर्यं दर्शितम् यद्दृष्ट्वा देवादयो विस्मिताः तथापि रामो बाणेनारेर्ध्वजं छित्त्वा भूमावपातयत्तद्दृष्ट्वा रामतुरगेषु रावणेन क्षिप्ता विशिखा निरर्थकाः एवमपि रावणपराभवमपश्यन्तो निर्जरमुनिगणास्त्रैसुर्गोब्राह्मणेभ्यः स्वस्तीत्युक्त्वा रामजयमाशंसिरे ततो रामेण रावणशिरोऽसकृच्छिन्नमपि यथापूर्वमेव स्थितं विलोक्य विस्मितेन चिन्तापरेण च तस्थे ।

ततः प्रवृत्तं सुक्रूरं रामरावणयोस्तदा । सुमहद्द्वैरथं युद्धं सर्वलोकभयावहम् ॥ १ ॥

---

३१ ] ति० टी०–तद्रथं रावणरथं प्रति ॥ ३१ ॥

रा० टी०–कुर्वन्त्य इति । दारुणमारुतं शब्दो यासामत एव दारुणाः शतशस्सारिकाः कलहं कुर्वन्त्यः सत्यः तद्रथं प्रति निपेतुः ॥ ३१ ॥

गो० टी०–कुर्वन्त्य इति । तद्रथं प्रति तद्रथोपरि॥३१॥

३२–३४ ] ति० टी०–तुल्यमग्निं च वारि च । जघनेभ्य इत्याद्युक्तप्रकारेणेति शेषः ॥ ३२–३४ ॥

रा० टी०–जघनेभ्य इति । तस्य तुरगाः जघनेभ्यः स्फुलिङ्गान् नेत्रेभ्योऽश्रूणि च सततं मुमुचुः अत एव तुल्यमेककालावच्छेदेन अग्निं वारि च मुमुचुः ॥ ३२ ॥

रा० टी०–एवमिति । एवं प्रकारा विनाशकाः बहवः समुत्पाताः संप्रजज्ञिरे ॥ ३३ ॥

गो० टी०–जघनेभ्य इति । तुरगाः जघनेभ्यः स्फुलिङ्गान् नेत्रेभ्यः अश्रूणि च मुमुचुः । एवमग्निं च वारि च तुल्यं यथा भवति तथा मुमुचुः ॥ ३२ ॥ ३३ ॥

रा० टी०–रामस्येति । रामस्य जयशंसीनि शिवानि मङ्गलरूपाणि अत एव सौम्यानि सर्वशो निमित्तानि प्रादुर्भूतानि बभूवुरिति शेषः ॥ ३४ ॥

गो० टी०–एवं रावणपराजयसूचकदुर्निमित्तान्युक्तानि इदानीं, रामजयसूचकनिमित्तान्याह—रामस्यापीति । सौम्यानि मनोज्ञानि शुभानि शुभोदर्काणि अत एव जयशंसीनि निमित्तानि प्रादुर्बभूवुः सत्तां लेभिरे । रामविषये किंचित्कारो हि सत्तालाभहेतुः ॥ ३४ ॥

३५–३६ ] ति० टी०–परमसंहृष्टो लक्ष्मणो मातलिर्वेति शेषः ॥ ३५ ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षडुत्तरशततमः सर्गः ॥१०६॥

रा० टी०–निमित्तानीति । राघवस्य जयाय सौम्यानि निमित्तानि दृष्ट्वा परमसंहृष्टः स देवादिसमूहः रावणं हतं मेने ॥ ३५ ॥

गो० टी०–निमित्तानीति । जयाय निमित्तानि जयसूचकनिमित्तानीत्यर्थः ॥ ३५ ॥

रा० टी०–तत इति । निमित्तकोविदो रामः आत्मानं गतानि प्राप्तानि निमित्तानि निरीक्ष्य हर्षं संतोषं परां निर्वृतिमानन्दं च जगाम अत एव युद्धे अधिकं विक्रमं चकार॥३६॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्ताधिकशततमः सर्गः ॥ १०७ ॥

गो० टी०–तत इति । रणे आत्मगतानि आत्मार्थं प्रादुर्भूतानि । हर्षं पुलकं निर्वृतिं सुखं च जगाम ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

१ ] ति० टी०–तत इति । द्वैरथं व्याख्यातम् । सुमहदनेकदिनव्यापि ॥ १ ॥

रा० टी०–रामरावणयोर्युद्धमाह–तत इत्यादिभिः । सर्वलोकभयावहं विजयस्यानिश्चयात्सर्वेषां भयकारकं रामरावणयोर्द्वैरथं युद्धं प्रवृत्तम् ॥ १ ॥

---

१ कुर्वन्त्य इति गो. रा. पाठः । २ दारुणमिति गो. पाठः । ३ स्फुलिङ्गानिति गो. पाठः । ४ शुभानीति गो. पाठः । ५ चेति गो पाठः । ६ राघवः स्येति गो. पाठः । ७ चेति गो. रा. पाठः ।

ततो राक्षससैन्यं च हरीणां च महद्बलम् । प्रगृहीतप्रहरणं निश्चेष्टं समवर्तत ॥ २ ॥
संप्रयुद्धौ तु तौ दृष्ट्वा बलवन्नरराक्षसौ । व्याक्षिप्तहृदयाः सर्वे परं विस्मयमागताः ॥ ३ ॥
नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धयः । तस्थुः प्रेक्ष्य च सर्वे ते नाभिजग्मुः परस्परम् ॥ ४ ॥
रक्षसां रावणं चापि वानराणां च राघवम् । पश्यतां विस्मिताक्षाणां सैन्यं चित्रमिवाबभौ ॥ ५ ॥
तौ तु तत्र निमित्तानि दृष्ट्वा राघवरावणौ । कृतबुद्धी स्थिरामर्षौ युयुधाते ह्यभीतवत् ॥ ६ ॥
जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः । धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा ॥ ७ ॥
ततः क्रोधाद्दशग्रीवः शरान्संधाय वीर्यवान् । मुमोच ध्वजमुद्दिश्य राघवस्य रथे स्थितम् ॥ ८ ॥
ते शरास्तमनासाद्य पुरंदररथध्वजम् । रथशक्तिं परामृश्य निपेतुर्धरणीतले ॥ ९ ॥
ततो रामोऽपि संक्रुद्धश्चापमाकृष्य वीर्यवान् । कृतप्रतिकृतं कर्तुं मनसा संप्रचक्रमे ॥ १० ॥
रावणध्वजमुद्दिश्य मुमोच निशितं शरम् । महासर्पमिवासह्यं ज्वलन्तं स्वेन तेजसा ॥ ११ ॥
रामश्चिक्षेप तेजस्वी केतुमुद्दिश्य सायकम् । जगाम स महीं भित्त्वा दशग्रीवध्वजं शरः ॥ १२ ॥
स निकृत्तोऽपतद्भूमौ रावणस्यन्दनध्वजः । ध्वजस्योन्मथनं दृष्ट्वा रावणः स महाबलः ॥ १३ ॥
संप्रदीप्तोऽभवत्क्रोधादमर्षात्प्रदहन्निव । स रोषवशमापन्नः शरवर्षं ववर्ष ह ॥ १४ ॥

---

गो० टी०—ततः प्रवृत्तमित्यादि । द्वैरथं द्वाभ्यां रथाभ्यां प्रवृत्तं युद्धं प्रवृत्तमिति योजना ॥ १ ॥

२ ] ति० टी०—प्रगृहीतप्रहरणमपि निश्चेष्टं समवर्तत निवृत्तायोगमेवातिष्ठत् । तद्युद्धदर्शनव्यग्रत्वादिति शेषः ॥ २ ॥

रा० टी०—तत इति । ततः विजयस्यानिश्चयाद्धेतोः प्रगृहीतप्रहरणमपि राक्षससैन्यं हरीणां बलं च निश्चेष्टं समतिष्ठत ॥ २ ॥

गो० टी०—तत इति । निश्चेष्टं समतिष्ठत । युद्धाद्भुतदर्शनकुतूहलादिति भावः ॥ २ ॥

३ ] ति० टी०—तदेवाह—संप्रयुद्धाविति । सम्यग्युद्धारम्भप्रवृत्तौ ॥ ३ ॥

रा०टी०—तदेव भङ्ग्यन्तरेणाह—संप्रयुद्धावित्यादिभिः। बलवन्नरराक्षसौ संप्रयुद्धौ दृष्ट्वा व्याक्षिप्तहृदयाः सर्वे वानरराक्षसाः परं विस्मयं भयमागताः ॥ ३ ॥

गो० टी०—एतदेव विवृणोति द्वाभ्याम्—संप्रयुद्धावित्यादि । संप्रयुद्धौ सम्यग्योद्धुमुपक्रान्तौ । कर्मणि क्तः बलवत् अत्यन्तम् , व्याक्षिप्तहृदयाः युद्धदर्शनसक्तचित्ताः ॥ ३ ॥

४ ] ति० टी०—भुजैरुपलक्षिता इति शेषः नाभिजग्मुः। प्रहर्तुं परस्परमिति शेषः ॥ ४ ॥

रा० टी०—नानेति । नानाप्रहरणानि येषु तैः व्यग्रैर्भुजैरुपलक्षिताः ते सर्वे तं युध्यमानं स्वस्वस्वामिनं प्रेक्ष्य परस्परं नाभिजग्मुः ॥ ४ ॥

गो० टी०—नानेति । भुजैरित्युपलक्षणे तृतीया ॥ ४ ॥

५ ] ति० टी०—विस्मिताक्षाणां विस्मयपरवशेन्द्रियाणाम् हरिरक्षसामिति शेषः । चित्रमिव चित्रलिखितमिव ॥ ५ ॥

रा० टी०—रक्षसामिति । रावणं पश्यतां रक्षसां रामं पश्यतां वानराणां च सैन्यं चित्रमिवाबभौ ॥ ५ ॥

गो० टी०—रक्षसामिति । रावणं पश्यतां विस्मिताक्षाणां विकसितनेत्राणां रक्षसां सैन्यम्, राघवं पश्यतां विस्मिताक्षाणां वानराणां सैन्यं च चित्रमिवाबभौ ॥ ५ ॥

६ ] ति० टी०—कृतबुद्धी युद्धविषये निश्चितबुद्धी । अभीतवदभीतार्हम् ॥ ६ ॥

रा० टी०—ताविति । तौ रामरावणौ निमित्तानि दृष्ट्वा कृतबुद्धी जातनिश्चयौ अत एव स्थिरामर्षौ अभीतवत् भीतिरहितं यथा भवति तथा युयुधाते ॥ ६ ॥

गो० टी०—ताविति । निमित्तानि दुर्निमित्तानि शुभनिमित्तानि चेत्यर्थः । कृतबुद्धी निश्चितबुद्धी ॥ ६ ॥

७-८ ] ति० टी०—निश्चयमाह—जेतव्यमिति मर्तव्यमिति । मृत्युरूपशत्रौ प्रहर्तव्यमित्यर्थ इति कतकः इति धृतौ एवं निश्चयवन्तौ अदर्शयतामिति श्लोकः ॥ ७ ॥ ८ ॥

रा० टी०—निश्चयस्वरूपमाह—जेतव्यमिति । धृतौ कृतनिश्चयौ युद्धे स्ववीर्यसर्वस्वमदर्शयताम् ॥ ७ ॥

रा० टी०—तत इति । दशग्रीवः शरान् संधाय राघवस्य रथे स्थितं ध्वजमुद्दिश्य मुमोच ॥ ८ ॥

गो० टी०—निश्चयमेवाह—जेतव्यमिति । जयोवश्यंभावीति । मर्तव्यमिति मरणमवश्यंभावीति । आवश्यकत्वार्थे तव्यः धृतौ धैर्यवन्तौ ॥ ७ ॥ ८ ॥

९-१४ ] ति० टी०—रथशक्तिं दिव्यरथवैभवं रथावयवविशेषं वा परामृश्य प्राप्य तन्महिम्ना केवलं धरणीतले पेतुः ॥ ९-१४ ॥

---

१ अतिष्ठतेति गो. रा. पाठः । २ तत इति गो. पाठः । ३ सर्पन्तं प्रेक्ष्य संङ्ग्राममिति गो. पाठः । ४ रावणराघवाविति गो. पाठः । ५ आयम्येति गो. पाठः । ६ छित्त्वेति गो. पाठः । ७ रावणस्य रथोत्ते गो. पाठः । ८ स्थिति गो. रा. । ९ महद्भमन्निति गो. पाठः ।

रामस्य तुरगान्दीप्तैः शरैर्विव्याध रावणः । ते दिव्या हरयस्तत्र नास्खलन्नापि बभ्रमुः ॥ १५ ॥
बभूवुः स्वस्थहृदयाः पद्मनालैरिवाहताः । तेषामसंभ्रमं दृष्ट्वा वाजिनां रावणस्तदा ॥ १६ ॥
भूय एव सुसंक्रुद्धः शरवर्षं मुमोच ह । गदाश्च परिघांश्चैव चक्राणि मुसलानि च ॥ १७ ॥
गिरिशृङ्गाणि वृक्षांश्च तथा शूलपरश्वधान् । मायाविहितमेतत्तु शस्त्रवर्षमपातयत् ॥
सहस्रशस्तदा बाणानश्रान्तहृदयोद्यमः ॥ ॥ १८ ॥
तुमुलं त्रासजननं भीमं भीमप्रतिस्वनम् । तद्वर्षमभवद्युद्धे नैकशस्त्रमयं महत् ॥ १९ ॥
विमुच्य राघवरथं समन्ताद्वानरे बले । सायकैरन्तरिक्षं च चकार सुनिरन्तरम् ॥ २० ॥

---

रा० टी०–ते इति । शराः रथशक्तिमद्भुतरथसामर्थ्यं परामृश्य अनुभूय पुरंदररथध्वजमनासाद्य अप्राप्य धरणीतले निपेतुः ॥ ९ ॥

गो० टी०–त इति । रथशक्तिं रथबलम्, परामृश्य प्राप्य । रथशक्तिप्रघातेन ध्वजमनासाद्य निपेतुरित्यर्थः ॥ ९ ॥

रा० टी०–तत इति । रामोऽपि कृतप्रतिकृतं ध्वजच्छेदनमित्यर्थः कर्तुं मनसा संप्रचक्रमे ॥ १० ॥

गो० टी०–ततो राम इति । संप्रचक्रमे उद्युक्तवान् । संकल्पितवानित्यर्थः ॥ १० ॥

रा० टी०–रावणेति । रावणध्वजमुद्दिश्य शरं मुमोच ११

गो० टी०–रावणध्वजमिति । असह्यं दुर्दर्शमित्यर्थः ११

रा० टी०–राम इति । रामः केतुमुद्दिश्य यं शरं विघातकं सायकं चिक्षेप सः दशग्रीवध्वजं भित्त्वा महीं जगाम ॥ १२ ॥

गो० टी०–जगामेति । सः शरः ध्वजं छित्त्वा जगाम न तु केवलं जगाम ॥ १२ ॥

रा० टी०–स इति । निकृत्तः छिन्नः रावणस्यन्दनस्य ध्वजो भूमावपतत् अर्द्धं पृथक् ॥ १३ ॥

रा० टी०–ध्वजस्येति । रावणः ध्वजस्योन्मथनं दृष्ट्वा क्रोधात् अमर्षाच्च संप्रदीप्तोऽभवत् अत एव प्रदहन्निव तस्थाविति शेषः ॥ १४ ॥

गो० टी०–ध्वजस्येति । क्रोधादमर्षाच्च प्रदहन्निव प्रदहन्नग्निरिव, संप्रदीप्तः ज्वलितः अभवत् ॥ १३ ॥

रा० टी०–स इति । स रावणः शरवर्षं ववर्ष अत एव रामस्य तुरगान् विव्याध ॥ १५ ॥

गो० टी०–स इति । शरवर्षं वमन् वमन्निवेत्यर्थः ॥१४॥

१५ ] ति० टी०–स्खलनाद्यभावे स्वस्थहृदयत्वे च हेतुः–दिव्य इति ॥ १५ ॥

रा० टी०–ते इति । ते हरयः नास्खलन् नापि बभ्रमुः पद्मनालैराहता इव स्वस्थहृदया एव बभूवुश्च ॥ १६ ॥

गो० टी०–त इति । हरयः हरितवर्णाः इन्द्राश्वत्वादिति भावः ॥ १५ ॥ १६ ॥

१६–१७ ] ति० टी०–पद्मनालैः पद्मदण्डैः ॥ १६ ॥ १७॥

रा० टी०–तेषामिति । रावणो भूयश्शरवर्षं गदादींश्च मुमोच श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०–गदाश्चेति । मुमोचेत्यनुषज्यते ॥ १७ ॥

१८ ] ति० टी०–गिरिशृङ्गादीनां पातनं कुतस्तत्राह–मायाविहितमिति । एतद्गिरिवृक्षादिवर्षम् । शस्त्रवर्षं तु कगदादिशस्त्रवर्षम् ॥ १८ ॥

रा० टी०–मायेति । न श्रान्तौ हृदयोद्यमौ यस्य स रावणः मायाविहितमेतत् प्रसिद्धम् शस्त्रवर्षमपातयत् बाणांश्चापातयत् ॥ १९ ॥

गो० टी०–धनुषा कथं गदादिमोचनमित्यत्राह–मायेति। शस्त्रवर्षं गदादिवर्षम् मायाविहितम् आश्चर्यकरशक्तिकृतम् तुमुलं नानाविधमित्यर्थः ॥ १८ ॥

१९ ] ति० टी०–भीमः प्रतिस्वनो यस्मिंस्तत् । नैकास्त्रमयं नानाशस्त्रप्रचुरम् । तद्वर्षं प्रागुक्तास्त्रवर्षम् ॥ १९ ॥

रा० टी०–तुमुलमिति । नैकशस्त्रमयं तद्वर्षं त्रासजननमभवत्॥ २० ॥

गो० टी०–तद्वर्षमिति । नैकशस्त्रमयम् अनेकशस्त्रप्रचुरम्, तद्वर्षं क्रोधातिशयेन प्रयुक्तं रामशरैर्निवारणाल्लक्ष्यभूतं राघवरथं विमुच्य वानरबले अभवत् । तत्रापतदित्यर्थः ॥१९॥

२० ] ति० टी०–राघवरथं विमुच्य क्रोधातिशयेन युक्तत्वाल्लक्ष्यभूतं रामरथमतिक्रम्य वानरे बलेऽपतत् ॥ २० ॥

रा० टी०–विमुच्येति । निस्संगेन एतल्लोकाशक्तिरहितेनात्मनोपलक्षितो दशग्रीवः राघवरथं विमुच्य वानरे बले समन्तात् मुमोच शरानिति शेषः अत एव सायकैः अन्तरिक्षं निरंतरमवकाशरहितं चकार सार्द्धश्लोक एकान्वयी ॥ २१ ॥

गो० टी०–सायकैरित्यादि सार्धश्लोक एकान्वयः॥ ततः दशग्रीवः अश्रान्तहृदयोद्यमः अविच्छिन्नोत्साहः सन् निःसङ्गेन अव्यासक्तेन, अन्तरात्मना मनसा उपलक्षितः सहस्रशो बाणान् मुमोच सायकैरन्तरिक्षं च निरन्तरं चकार ॥ २० ॥

---

१ विद्धा इति गो. पाठः । २ इदमर्धं विंशपद्यात्परं गो. पाठे । ३ अश्रान्तेति गो. रा. पाठः । ४ आश्विति गो. रा. पाठः ।

मुमोच च दशग्रीवो निःसङ्गेनान्तरात्मना । व्यायच्छमानं तं दृष्ट्वा तत्परं रावणं रणे ॥ २१ ॥
प्रहसन्निव काकुत्स्थः संदधे निशितांञ्छरान् । स मुमोच ततो बाणाञ्छतशोऽथ सहस्रशः ॥ २२ ॥
तान्दृष्ट्वा रावणश्चक्रे स्वशरैः खं निरन्तरम् । ताभ्यां नियुक्तेन तदा शरवर्षेण भास्वता ॥ २३ ॥
शरबद्धमिवाभाति द्वितीयं भास्वदम्बरम् । नानिमित्तोऽभवद्बाणो नातिभेत्ता न निष्फलः ॥ २४ ॥
अन्योन्यमभिसंहत्य निपेतुर्धरणीतले । तथा विसृजतोर्बाणान्रामरावणयोर्मृधे ॥ २५ ॥
प्रायुद्ध्येतामविच्छिन्नमस्यन्तौ सव्यदक्षिणम् । चक्रतुश्च शरैर्घोरैर्निरुच्छ्वासमिवाम्बरम् ॥ २६ ॥
रावणस्य हयान्रामो हयान्रामस्य रावणः । जघ्नतुस्तौ तदान्योन्यं कृतानुकृतकारिणौ ॥ २७ ॥
एवं तु तौ सुसंक्रुद्धौ चक्रतुर्युद्धमुत्तमम् । मुहूर्तमभवद्युद्धं तुमुलं रोमहर्षणम् ॥ २८ ॥

२१-२३] ति०टी०—निःसङ्गेन प्राणाशासङ्गरहितेन। तत्परं तदनन्तरम्। व्यायच्छमानं व्यायच्छन्तं प्रवर्तयन्तम् २१-२३

रा० टी०—व्यायच्छमानमिति। काकुत्स्थः परं तत् वर्षणं व्यायच्छमानं व्यायच्छन्तं विस्तारयन्तं रावणं दृष्ट्वा शरान् संदधे ॥ २२ ॥

रा० टी०—स इति। स रामः बाणान् मुमोच तान् बाणान् दृष्ट्वा रावणः खं निरंतरमन्तररहितं चक्रे ॥ २३ ॥

गो० टी०—व्यायच्छमानमिति। व्यायच्छमानं व्यायच्छन्तम् यत्नं कुर्वन्तं, रणे तत्परं सक्तम्। प्रहसन्निव संदधे अनायासेन संदधे ॥ २१ ॥ २२ ॥

रा० टी०—तत इति। ताभ्यां रामरावणाभ्यां प्रयुक्तेन शरवर्षेण शरबद्धं द्वितीयमम्बरमिवाभाति ॥ २४ ॥

गो० टी०—ततस्ताभ्यामिति। शरवर्षेण भास्वद् अम्बरं शरबद्धं द्वितीयमम्बरमिवाभातिस्म ॥ २३ ॥

२४] ति० टी०—शरबद्धम्। शररचितं द्वितीयमम्बरमित्यर्थः। भास्वद्भासमानम्। नानिमित्तो निमित्तं लक्ष्यमप्राप्य वर्तमानो नास्ति। न निष्फलो लक्ष्यवेधपरप्रयुक्तवारणान्यतरप्रयोजनहीनो नाभवत्। नातिभेत्ता भेत्ता न। 'नातियत्नः' इति पाठे परप्रयुक्तनिवारणाय यत्नातिक्रान्तो न। निवारणाय प्रयुक्तो निवारयत्येवेत्यर्थः ॥ २४ ॥

रा० टी०—नेति। बाणः अनिमित्तः युद्धोत्साहनिमित्तत्वेन निमित्तरहितो न अतिभेत्ता ताडनादधिकविदारको न निष्फलः लक्ष्यसम्बन्धरहितश्च नाभवत् अर्द्धं पृथक् ॥ २५ ॥

गो० टी०—नानिमित्त इत्यर्धम्। अनिमित्तः लक्ष्यविशेषोद्देशरहितः। अतिभेत्ता अपेक्षितप्रमाणादधिकभेत्ता। निष्फलः लक्ष्ये पतितोऽपि प्रयोजनाकारी ॥ २४ ॥

२५] ति० टी०—बाणान्विसृजतोस्तयोर्बाणा अन्योन्यमभिसंहत्य स्वस्वप्रयोगकार्यं कृत्वैव धरणीतले निपेतुः ॥२५॥

रा० टी०—अन्योन्यमिति। बाणान् विसृजतोः रामरावणयोर्बाणा अन्योन्यमभिसंहत्य धरणीतले निपेतुः ॥२६॥

गो० टी०—अन्योन्यमिति। तथा विसृजतोः उक्तप्रकारेण विसृजतोः। अत्र बाणा इत्यध्याहार्यम् ॥ २५ ॥

२६] ति० टी०—सव्यं च दक्षिणं च सव्यदक्षिणम् अत्यन्तसंयोगे द्वितीया। उभयपार्श्वयोरविच्छिन्नं शरानस्यन्तौ निरुच्छ्वासं नीरन्ध्रम् ॥ २६ ॥

रा० टी०—प्रायुध्येतामिति। सव्यदक्षिणमविच्छिन्नं निरन्तरमस्यन्तौ शरानिति शेषः अत एवाम्बरं शरैः निरुच्छ्वासमिव चक्रतुः ॥ २७ ॥

गो० टी०—प्रायुद्ध्येतामिति। अस्यन्तौ शरान् क्षिपन्तौ। इवशब्दो वाक्यालंकारे। निरुच्छ्वासं उच्छ्वासावकाशरहितम् ॥ २६ ॥

२७-२८] ति० टी०—कृतस्यानुकृतं प्रतिक्रिया तत्करणशीलौ ॥ २७ ॥ २८ ॥

रा० टी०—रावणस्येति। कृतानुकृतकारिणौ तौ रामरावणौ अन्योन्यं जघ्नतुः ॥ २८ ॥

रा० टी०—एवमिति। एवमुत्तमं युद्धं चक्रतुः अत एव मुहूर्तं लोमहर्षणमभवत् ॥ २९ ॥

गो० टी०—रावणस्येति। अत्र जघानेति वचनविपरिणामेनानुषज्यते। तौ अन्योन्यं कृतानुकृतकारिणौ कृतप्रतिक्रियाकारिणौ सन्तौ तथा जघ्नतुः हय इवान्यत्रापि सारथ्यादि जघ्नतुरित्यर्थः ॥ २७ ॥ २८ ॥

रा० टी०—प्रयुध्यमानाविति। प्रयुध्यमानौ यौ रामलक्ष्मणौ तयोर्मध्ये राक्षसाधिपः ध्वजावपातेन रघूत्तमे भृशं प्रचुक्रोध ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टाधिकशततमः सर्गः ॥ १०८ ॥

गो० टी०—प्रयुध्यमानाविति। यदा बभूवतुरित्युपस्कार्यम् ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने नवोत्तरशततमः सर्गः ॥ १०९ ॥

१ सायकान् शितानिति गो. पाठः। २ रणे शतेति गो. पाठः। ३ ततस्ताभ्यां प्रयुक्तेनेति गो. रा. पा.। ४ नातिभेत्तेति गो. रा. पाठ ५ प्रयुध्यतामिति गो. पाठः। ६ शरौघैस्ताविति गो. पा.। ७ तथेति गो. पाठः। ८ तौ त्विति गो. पाठः।

[ प्रयुध्यमानौ समरे महाबलौ शितैः शरैरावणलक्ष्मणाग्रजौ ।
ध्वजावपातेन स राक्षसाधिपो भृशं प्रचुक्रोध तदा रघूत्तमे । ]

तौ तथा युध्यमानौ तु समरे रामरावणौ । ददृशुः सर्वभूतानि विस्मितेनान्तरात्मना ॥ २९ ॥
अर्दयन्तौ तु समरे तयोस्तौ स्यन्दनोत्तमौ । परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ॥ ३० ॥
परस्परवधे युक्तौ घोररूपौ बभूवतुः । मण्डलानि च वीथीश्च गतप्रत्यागतानि च ॥ ३१ ॥
दर्शयन्तौ बहुविधां सूतौ सारथ्यजां गतिम् । अर्दयन्रावणं रामो राघवं चापि रावणः ॥ ३२ ॥
गतिवेगं समापन्नौ प्रतिवेगेनिवर्तने । क्षिपतोः शरजालानि तयोस्तौ स्यन्दनोत्तमौ ॥ ३३ ॥
चेरतुः संयुगमहीं सासारौ जलदाविव । दर्शयित्वा तदा तौ तु गतिं बहुविधां रणे ॥ ३४ ॥
परस्परस्याभिमुखौ पुनरेव च तस्थतुः । धुरं धुरेण रथयोर्वक्रं वक्रेण वाजिनाम् ॥ ३५ ॥
पताकाश्च पताकाभिः समीयुः स्थितयोस्तदा । रावणस्य ततो रामो धनुर्मुक्तैः शितैः शरैः ॥ ३६ ॥
चतुर्भिश्चतुरो दीप्तान्हयान्प्रत्यपसर्पयत् । स क्रोधवशमापन्नो हयानामपसर्पणे ॥ ३७ ॥
मुमोच निशितान्बाणान्राघवाय दशाननः । सोऽतिविद्धो बलवता दशग्रीवेण राघवः ॥ ३८ ॥

२९–३१ ति० टी०–तुमुलं रोमहर्षणम् । एतदनन्तरम् ' प्रयुध्यमानौ समरे महाबलौ शितैः शरै रावणलक्ष्मणाग्रजौ । ध्वजावपातेन स राक्षसाधिपो भृशं प्रचुक्रोध तदा रघूत्तमे ॥ इत्येकं श्लोकं प्रक्षिप्यात्र सर्गविच्छेदं कुर्वन्ति, तदयुक्तम् । पश्चादपि तुमुलयुद्धस्यैव सत्त्वादेकप्रकरणत्वाच्च अनवच्छेदस्यैव बहुषु पुस्तकेषु दर्शनाच्चेति कतकः ॥ २९–३१ ॥

रा० टी०–तयोर्युद्धमेवाह—तावित्यादिभिः । युध्यमानौ रामरावणौ सर्वभूतानि ददृशुः ॥ १ ॥

गो० टी०–अथ रावणशिरश्छेदः—तौ तदेत्यादि । समरे युद्धभूमौ । तदा उत्पातकाले । अन्तरात्मना अन्तःकरणेन उपलक्षितानि ॥ १ ॥

रा० टी०–अर्दयन्ताविति । परस्परमभिक्रुद्धौ अत एव परस्परमभिद्रुतौ अत एव तयोः स्यन्दनोत्तमौ परस्परमर्दयन्तौ परस्परवधे युक्तौ रामरावणौ मण्डलानि मण्डलाकारगतीः वीथीः प्रसिद्धमार्गद्वारा गतीश्च गतप्रत्यागतानि च सूतसारथ्यजां सूतस्य यत्सारथ्यमतिनैपुण्यं तज्जनितां गतिं च दर्शयन्तौ रूपौ बभूवतुः सार्द्धश्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०–अर्दयन्तावित्यादि सार्धश्लोकद्वयमेकान्वयम् ॥ अर्दयन्तौ परस्परं पीडयन्तौ । रथयोः क्रोधादिकं रथिकद्वारा । मण्डलानि मण्डलगतीः गतप्रत्यागतानि, शत्रुरथं प्रति गमनं गतं पुनः स्थानं प्रत्यागमनं प्रत्यागतं तयोराद्धस्या बहुवचनम् । एवंप्रकारेण बहुविधां सूतसारथ्यजां सूतस्य यत् सारथ्यं सारथिकर्म तज्जाम्, गतिं संचारं दर्शयन्तौ तयोः रथौ घोररूपौ बभूवतुः ॥ २ ॥ ३ ॥

३२–३३ ] ति० टी०–सारथ्यजां सूतकर्मनैपुण्यजाम् । अर्दयन् । अभूवेति शेषः ॥ ३२ ॥ ३३ ॥

रा० टी०–अर्दयन्निति । प्रवर्तननिवर्तने गतिवेगसमापन्नौ रामो रावणश्च बभूवतुरिति शेषः ॥ ४ ॥

गो० टी०–अर्दयन्निति । रावणमर्दयन् रामो राघवमर्दयन् रावणश्चोभौ प्रवर्तननिवर्तने तद्रूपं गतिवेगं समापन्नौ बभूवतुरिति शेषः ॥ ४ ॥

रा० टी०–क्षिपन्ताविति । सासारौ धारापातसहितौ जलदाविव शरजालानि क्षिपन्तौ तयोः स्यन्दनोत्तमौ संयुगमहीं चेरतुः ॥ ५ ॥

गो० टी०–क्षिपतोरिति । सासारौ सजलधारौ ॥ ५ ॥

३४–३६ ] ति० टी०–सासारौ धारासंपात आसारस्तत्सहितौ ॥ ३४–३६ ॥

रा० टी०–दर्शयित्वेति । बहुविधां गतिं दर्शयित्वा परस्परस्याभिमुखौ सन्तौ पुनस्तस्थतुः ॥ ६ ॥

गो० टी०–दर्शयित्वेति । तथा गतिं पूर्वोक्तगतिभेदम् ॥ ६ ॥

रा० टी०–धुरमिति । स्थितयोः रथयोर्धुरं युगन्धरम् धुरेण वाजिनां वक्रं वक्रेण पताकाश्च पताकाभिस्समीयुः ॥ ७ ॥

गो० टी०–धुरमिति । धुरं युगम् धुरेण अकारान्तत्वमार्षम् । स्थितयोः युद्धे गतिं विना स्थितयोः तयोरिति शेषः ७

रा० टी०–रावणस्येति । रामः रावणस्य हयान् चतुर्भिः शरैः प्रत्यपसर्पयत् ॥ ८ ॥

गो० टी०–रावणस्येति । प्रत्यपसर्पयत् न्यवर्तयत् ॥८॥

३७–३८ ] ति० टी०–प्रत्यपसर्पयत् । प्रत्यपसर्पणं नामात्यक्ताभिमुख्यानामेव पश्चार्धेनापसर्पणम् ॥ ३७ ॥ ३८ ॥

रा० टी०–स इति । हयानामपसर्पणेन क्रोधवशमापन्नो दशाननः राघवाय बाणान् मुमोच ॥ ९ ॥

१ इदं पद्यमाधिकं गो. रा. पाठः । २ तदेति गो. पाठः । ३ सूतसारथ्यजामिति गो. रा. पाठः । ४ प्रवर्तनेति गो. रा. पाठः । ५ क्षिपन्ताविति रा. पाठः । ६ यथेति गो. पाठः । ७ तथेति गो. पाठः । ८ भवेति गो. पा. । ९ समेयुरिति गो. पाठ. । १० निशाचर इति गो. पा. ।

जगाम न विकारं च न चापि व्यथितोऽभवत् । चिक्षेप च पुनर्बाणान्वज्रसारसमस्वनान् ॥ ३९ ॥
सारथिं वज्रहस्तस्य समादिश्य दशाननः । मातलेस्तु महावेगाः शरीरे पतिताः शराः ॥ ४० ॥
न सूक्ष्ममपि संमोहं व्यथां वा प्रददुर्युधि । तया धर्षणया क्रुद्धो मातलेर्न तथात्मनः ॥ ४१ ॥
चकार शरजालेन राघवो विमुखं रिपुम् । विंशतिं त्रिंशतिं षष्टिं शतशोऽथ सहस्रशः ॥ ४२ ॥
मुमोच राघवो वीरः सायकान्स्यन्दने रिपोः । रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः ॥ ४३ ॥
गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे । तत्प्रयुक्तं पुनर्युद्धं तुमुलं रोमहर्षणम् ॥ ४४ ॥
गदानां मुसलानां च परिघाणां च निःस्वनैः । शराणां पुङ्खवातैश्च क्षुभिताः सप्त सागराः ॥ ४५ ॥
क्षुब्धानां सागराणां च पातालतलवासिनः । व्यथिता दानवाः सर्वे पन्नगाश्च सहस्रशः ॥ ४६ ॥
चकम्पे मेदिनी कृत्स्ना सशैलवनकानना । भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुतः ॥ ४७ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । चिन्तामापेदिरे सर्वे सकिंनरमहोरगाः ॥ ४८ ॥
स्वस्ति गोब्राह्मणेभ्यस्तु लोकास्तिष्ठन्तु शाश्वताः। जयतां राघवः संख्ये रावणं राक्षसेश्वरम् ॥ ४९ ॥
एवं जपन्तोऽपश्यंस्ते देवाः सर्षिगणास्तदा । रामरावणयोर्युद्धं सुघोरं रोमहर्षणम् ॥ ५० ॥
गन्धर्वाप्सरसां सङ्घा दृष्ट्वा युद्धमनूपमम् । सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् ॥ ५१ ॥
रामरावणयोर्युद्धं रामरावणयोरिव । एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम् ॥ ५२ ॥

---

गो० टी०–स इति । अपसर्पणे विषये ॥ ९ ॥

रा० टी०–स इति । दशग्रीवेण अतिविद्धः अतिताडितो राघवः विकारं न जगाम व्यथितो नाभवच्च ॥ १० ॥

गो० टी०–सोऽतिविद्ध इति । विकारं वेदनासूचकमुख-विकारम् ॥ १० ॥

३९–४० ] ति० टी०–चिक्षेप रावणः क्षिप्तवान् ३९-४०

रा० टी०–चिक्षेपेति । दशाननः वज्रहस्तस्य सारथि-मुद्दिश्य बाणान् चिक्षेप ॥ ११ ॥

गो० टी०–चिक्षेपेति । वज्रपातोऽशनिपातः ॥ ११ ॥

रा० टी०–मातलेरिति । मातलेश्शरीरे पातिताः शराः मोहं व्यथां च न प्रददुः ॥ १२ ॥

गो० टी०–मातलेस्त्विति । सूक्ष्मम् अल्पम् ॥ १२ ॥

४१ ] ति० टी०–मातलेर्व्यथां न प्रददुः । देवत्वेन दिव्य-शक्तिमत्त्वात् । अपसर्पणकाले रावणेन प्रक्षिप्तानामतिवेधसा-मर्थ्यायोगाच्च । यथा मातलेर्धर्षणया क्रुद्धस्तथात्मनो धर्षणया न क्रुद्धः ॥ ४१ ॥

रा० टी०–तयेति । मातलेः तया धर्षणया आत्मनश्च धर्ष-णया न क्रुद्धोऽपि राघवः शरजालेन रिपुं विमुखं चकार ॥१३॥

गो० टी०–तयेति । यथा मातलेः तया धर्षणया क्रुद्धः तथा आत्मनो धर्षणया न क्रुद्धः । एवं क्रुद्धो रिपुं विमुखं चकार १३

४२–४५ ] ति० टी०–अत एव रिपुं विमुखं चकार ४५॥

रा० टी०–विंशतिमिति । राघवः रिपोः स्यन्दने विं-शत्यादीन् सायकान् मुमोच ॥ १४ ॥

गो० टी०–विंशतमिति । इकारलोपश्छान्दसः ॥१४॥

रा० टी०–रावण इति । रावणोऽपि प्रत्यर्दयत् ॥ १५ ॥

गो० टी०–रावणोपीति । रथस्थो रथे निश्चलतया स्थित इत्यर्थः ॥ १५ ॥

रा० टी०–तदिति । तुमुलं युद्धं पुनः प्रवृत्तमत एव गदादीनां निस्वनैश्शराणां पुङ्खवातैश्च सप्त सागराः क्षुभिताः अभवन्निति शेषः सार्द्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

गो० टी०–तत् प्रवृत्तमित्यर्थमेकं वाक्यम् ॥ १६ ॥

गो० टी०–गदानामिति । निस्वनैः वेगजैरिति शेषः १७

४६–४९ ति० टी०–क्षुब्धानां सागराणामधोदेशवर्तिपा-तालवासिनो व्यथिता जाता इति शेषः ॥ ४६–४९ ॥

रा० टी०–क्षुब्धानामिति । क्षुब्धानां सागराणां दा-नवाः पन्नगाश्च व्यथिता बभूवुरिति शेषः ॥ १८ ॥

गो० टी०–क्षुब्धानामिति । क्षुब्धेषु सागरेष्वित्यर्थः १८

रा० टी०–चकम्प इति । मेदिनी चकम्पे भास्करस्तु निष्प्रभ आसीत् मारुतस्तु न ववौ ॥ १९ ॥

रा० टी०–तत इति । देवादयः चिन्तामापेदिरे ॥ २० ॥

रा० टी०–स्वस्तीति । राघवो रावणं जयतामेवं जपन्तो देवादयः रामरावणयोर्युद्धमपश्यन् सार्द्धश्लोकएकान्वयी ॥२१॥

५० ] ति० टी०–जपन्तो वदन्तः ॥ ५० ॥

रा० टी०–रामेति । गंधर्वादिसंघाः युद्धमतिप्रहरणविशि-ष्टमनुपमं रामरावणयोर्युद्धं दृष्ट्वा गगनं गगनाकारमाकाशमाका-शसदृशमित्याद्येवं ब्रुवन्तः सन्तः रामरावणं युद्धं ददृशुः सार्द्ध-श्लोकद्वयमेकान्वयि गगनं गगनाकारमिति श्लोकार्द्धस्थाने सागरं चाम्बरप्रख्यमम्बरं सागरोपममित्यपि पाठो दृश्यते॥२२–२३॥

५१–५२ ] ति० टी०–वचनप्रकारमाह—गन्धर्वाप्स-रसामिति । अनूपममिति दीर्घ आर्षः । ' दृष्ट्वा युद्धमनूप-

---

१ समुद्दिश्येति रा. समुद्दिश्य निशाचर इति गो. पाठः । २ विंशतं त्रिंशतमिति गो. पाठः । ३ महदिति गो. पाठः । ४ पन्नगाः सर्वे दानवा इति गो. पाठः । ५ गगनं गगनाकारं सागरः सागरोपम इति गो. रा. पाठः ।

ततः क्रोधान्महाबाहू रघूणां कीर्तिवर्धनः । संधाय धनुषा रामः शरमाशीविषोपमम् ॥ ५३ ॥
रावणस्य शिरोऽच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् । तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥ ५४ ॥
तस्यैव सदृशं चान्यद्रावणस्योत्थितं शिरः । तत्क्षिप्रं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ॥ ५५ ॥
द्वितीयं रावणशिरश्छिन्नं संयति सायकैः । छिन्नमात्रं च तच्छीर्षं पुनरेव प्रदृश्यते ॥ ५६ ॥
तदप्यशनिसंकाशैश्छिन्नं रामस्य सायकैः । एवमेव शतं छिन्नं शिरसां तुल्यवर्चसाम् ॥ ५७ ॥
न चैव रावणस्यान्तो दृश्यते जीवितक्षये । ततः सर्वास्त्रविद्वीरः कौसल्यानन्दवर्धनः ॥ ५८ ॥
मार्गणैर्बहुभिर्युक्तश्चिन्तयामास राघवः । मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः ॥ ५९ ॥
क्रौञ्चावटे विराधस्तु कबन्धो दण्डकावने । यैः साला गिरयो भग्ना वाली च क्षुभितोऽम्बुधिः ॥ ६० ॥
त इमे सायकाः सर्वे युद्धे प्रात्ययिका मम । किं नु तत्कारणं येन रावणे मन्दतेजसः ॥ ६१ ॥
इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे । ववर्ष शरवर्षाणि राघवो रावणोरसि ॥ ६२ ॥
रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः । गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ॥ ६३ ॥

मम्' इत्युत्तरं 'सागरं चाम्बरप्रख्यमम्बरं सागरोपमम्' इति पाठे सागरं नैल्यवैपुल्यादिनाम्बरप्रख्यमाकाशतुल्यमिति वक्तुं शक्यम् । एवमम्बरमपि सागरोपममिति शक्यम् । रामरावणयोर्युद्धं तु तदतिरिक्तताहशयुद्धासंभवात्स्वतुल्यमित्येव वक्तुं शक्यम् । तेनानुपमत्वं फलतीत्यनन्वयोऽत्रालंकारः। पूर्वार्धे तूपमेयोपमेति कतकः । सागरशब्दे लिङ्गव्यत्यय आर्षः, अर्धर्चादिर्वा सः । 'गगनं गगनाकारं सागरः सागरोपमः' इति पाठेऽर्धद्वयेऽप्यनन्वय एवेति बोध्यम् । एवं ब्रुवन्तो गन्धर्वादिसङ्घास्तद्युद्धं ददृशुः । रामरावणम् । तत्कर्तृकमित्यर्थः ॥ ५१–५२ ॥

गो० टी०–गन्धर्वेति । गन्धर्वाप्सरसामित्यर्धानन्तरं गगनं गगनाकारमिति श्लोकः । तदनन्तरम् एवं ब्रुवन्त इत्यर्धम् । गन्धर्वाप्सरसां संघाः अनुपमम्, युद्धं दृष्ट्वा गगनं गगनाकारमित्येवं ब्रुवन्तः सन्तः पुनर्ददृशुरित्यन्वयः अनुपमत्वमेवाह—गगनमिति । यथा गगनसागरयोः सदृशवस्त्वन्तराभावः तथा रामरावणयुद्धस्य सदृशं युद्धं किंचिन्नास्तीत्यर्थः। सदृशान्तरनिवृत्तिफलकोऽनन्वयालंकारः । रामरावणं रामरावणसंबन्धि ॥ २३ ॥ २४ ॥

५३ ] ति० टी०–ततस्तद्वाक्यश्रवणानन्तरम् ॥ ५३ ॥

रा० टी०–तत इति । रघूणां कीर्तिवर्धनो रामः धनुषा शरं सन्धाय रावणस्य शिरः अच्छिन्दत् अच्छिनत् भूमौ पतितं तच्छिरः त्रिभिर्लोकैर्दृष्टं श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०–ततः क्रुद्ध इत्यादिसार्धश्लोकपञ्चकमेकं वाक्यम् क्षुरं क्षुराग्रबाणम् । शिरः अच्छिन्दत् अच्छिनत् । एकवचनात्तदानीं रावण एकशिरा एव युद्धमकरोदिति गम्यते। अत एव वक्ष्यति—विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितावित्यादिना । छिन्नमात्रं तु तच्छीर्षमिति । तच्छीर्षे छिन्ने तदानीमेवेत्यर्थः । एकशतं छिन्नम् एकोत्तरशतवारं छिन्नमित्यर्थः । पुनः पुनः शिरश्छेदनं चिरतृपितशरतृष्णानिवृत्त्यर्थम् । नचेति । जीवितक्षये विषये, अन्तः अवधिः निश्चयो वा, न दृश्यते नादृश्यत ॥ २५–३१ ॥

५४ ] ति० टी–शिरोऽच्छिन्दत् । एकैकश इति शेषः । सकृद्दशशिरसां छेदे तु न पुनः प्ररोह इति कतकः ॥ ५४ ॥

५५–५६ ] ति० टी०–तस्यैव सदृशम् । यद्भूमौ पतितं तस्यैव सदृशमित्यर्थः ॥ ५५ ॥ ५६ ॥

रा० टी०–तस्येति । तस्य पतितस्य शिरसः सदृशमन्यच्छिरः रावणस्योत्थितमद्धं पृथक्—तदिति । तदुत्थितं द्वितीयं रावणशिरः क्षिप्रकारिणा निखिलयुद्धक्रियाणामाशुकर्त्रा अत एव क्षिप्रहस्तेन रामेण सायकैः छिन्नं छिन्नमात्रं छिन्नशिरस्सदृशं तत् शीर्षं पुनः प्रदृश्यते सार्धश्लोक एकान्वयी ॥ २६ ॥ २७ ॥

५७ ] ति० टी०–'एवमेव शतं छिन्नम्' इति पाठः । तुल्यवर्चसां तुल्याकाराणां शिरसां शतं रामेण छिन्नम् । एवं च भगवतः सर्वतोभद्रचक्रपदशतं रामेण रावणीयशिरःशतकमलैः पूजितमिति कतकः ॥ ५७ ॥

रा० टी०–तदिति । तत् पुनः दृश्यमानं शिरः रामस्य सायकैः छिन्नमेवमनेन प्रकारेण शिरसां शतं शतसंख्याकशिरांसीत्यर्थः रामस्य सायकैः छिन्नं जीवितक्षये जीवननिवृत्त्यर्थं रावणस्य शिरसामन्तो न दृश्यते शिरसामित्युभयान्वयि सार्धश्लोक एकान्वयी ॥ २८ ॥

५८–५९ ] ति० टी०–रावणस्य जीवितक्षयेऽन्तो निश्चयो न दृश्यते ॥ ५८ ॥ ५९ ॥

६० ] ति० टी०–क्रौञ्चावटे क्रौञ्चवनसंबन्धिन्यवटे श्वभ्रे ६०

६१–६३ ] ति० टी०–प्रात्ययिका अमोघत्वेन निश्चिताः ॥ ६१–६३ ॥

रा० टी०–तत इति । बहुभिर्मार्गणैर्युक्तो राघवश्चिन्तयामास ॥ २९ ॥

१ क्रुद्ध इति गो. रा. पाठः । ४ श्रिति गो. रा. पाठः । ३ अन्यत्स्मेति गो. पाठः । ४ रामेणेति गो. पाठः । ५ पकेति गो. पाठः । ६ वने इति गो. अरण्ये इति रा. पाठः । ७ इदमर्धं गो. पुस्तके न दृश्यते । ८ प्रात्यायिका इति रा. पा. । ९ नु इति गो. पाठ. ।

तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् । अन्तरिक्षे च भूमौ च पुनश्च गिरिमूर्धनि ॥ ६४ ॥
देवदानवयक्षाणां पिशाचोरगरक्षसाम् । पश्यतां तन्महद्युद्धं सर्वरात्रमवर्तत ॥ ६५ ॥
नैव रात्रिं न दिवसं न मुहूर्तं न च क्षणम् । रामरावणयोर्युद्धं विराममुपगच्छति ॥ ६६ ॥
दशरथसुतराक्षसेन्द्रयोस्तयोर्जयमनवेक्ष्य रणे स राघवस्य ।
सुरवररथसारथिर्महात्मा रणरतराममुवाच वाक्यमाशु ॥ ॥ ६७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

## अष्टोत्तरशततमः सर्गः ।

चिन्तातुरं कर्तव्यमूढं दाशरथिं पश्यता मातलिना ब्रह्मणेन्द्राय वितीर्णं शक्रेण चागस्त्यद्वारा तुभ्यं वितीर्णममोघशरं सन्धाय जहि नान्ययेत्यादिष्टो राघवः प्रहृष्टस्तथाकरोत्तेन च दशास्यो भग्नहृदयो गतासुर्भूमौ पपात रामस्योपर्याकाशात्पुष्पवृष्टिरपतत् सुरासुरैर्हर्षः खेदश्च लब्धः ।

अथ संस्मारयामास मातली राघवं तदा । अजानन्निव किं वीर त्वमेनमनुवर्तसे ॥ १ ॥

रा० टी०—तदाकारमाह—मारीच इत्यादिभिः । यैर्मारीचप्रभृतिर्निहतः यैश्च अम्बुधिः क्षुभितः ते एव मम प्रात्यायिकाः अमोघत्वेन निश्रिता इमे सर्वे सायकाः येन कारणेन रावणे मन्दतेजसोऽभवन्निति शेषः तत्कारणं किम् इति चिन्तापरोपि रामः संयुगे अप्रमत्त आसीत् अत एव रावणोरसि शरवर्षाणि ववर्ष सार्द्धश्लोकत्रयमेकान्वयि ॥ ३०–३३ ॥

रा० टी०—रावण इति । रावणोऽपि रामं प्रत्यर्दयत् प्रत्यार्दयत् मर्दनाद्यनुकूलव्यापारमकरोत् ॥ ३४ ॥

गो० टी०—मारीच इत्यादिसार्धश्लोकद्वयमेकान्वयम् । क्रौञ्चावने कबन्धः दण्डकावने विराध इत्यन्वयः । प्रात्ययिकाः विश्वस्ताः त इमे रावणे विषये मन्दतेजसः अल्पशक्तिकाः अभवन् । तत्कारणं किं तु न जानामीति शेषः ॥ ३२–३५॥

६४ ] ति० टी०—अन्तरिक्षे चेत्यादि । रथयोःकामगत्वात्तत्र तत्र कियत्कालं स्थितेरिति भावः ॥ ६४ ॥

रा० टी०—तदिति । तुमुलं तद्युद्धमन्तरिक्षादौ प्रवृत्तम् ॥ ३५ ॥

गो० टी०—तदिति । त्रिकूटशिखरे युध्यतोस्तयोराग्रहकृतगतिवशेन अन्तरिक्षे भूमौ च पुनश्च गिरिमूर्धनि त्रिकूटशिखरे च तन्महद्युद्धं प्रवृत्तमित्यर्थः ॥ ३६ ॥

६५ ] ति० टी०—सर्वरात्रम् । जातावेकवचनम् । तेनानेकाहोरात्रानित्यर्थः । वस्तुतः शवर्गे सकारस्तृतीयस्तेन त्रय उच्यन्ते । यवर्गे च वकारश्चतुर्थस्तेन चत्वार उच्यन्ते । मिलित्वा सप्तरात्रमित्यर्थः सप्तरात्रमेव च तयोर्द्वैरथं युद्धमिति वक्ष्यमाणपाद्मकालिकापुराणयोः स्पष्टमिति दिक् ॥ ६५ ॥

रा० टी०—देवेति । देवादीनां पश्यतां सतां तद्युद्धं सप्तरात्रमवर्तत ॥ ३६ ॥

गो० टी०—देवदानवेति । "यस्य च भावेन०" इति भावलक्षणे षष्ठी । सर्वरात्रम् अहोरात्रमित्यर्थः । सप्तरात्रमित्यपपाठः । वक्ष्यमाणदिनसंख्याविरोधात् । यद्वा सर्वरात्रमित्यपपाठः सप्तरात्रमित्येव सम्यक्पाठः फाल्गुनचतुर्दश्यां हनुमता लङ्कादाहः । पौर्णमास्यां रामस्य समुद्रतीरप्राप्तिः । प्रथमाद्वितीयातृतीयासु दर्भशयनम् । अष्टम्यां सुवेलारोहणम् । नवम्यां युद्धारम्भ इति सप्तरात्रं रामरावणयुद्धमिति । इदं च इतस्तु नवमेऽहनीत्यत्र विस्तृतम् ॥ ३७ ॥

६६ ] ति० टी०—तदेवाह—नैव रात्रिमिति ॥ ६६ ॥

रा० टी०—नेति । रमरावणयोर्युद्धं रात्र्यादीन् विरामं निवृत्तिं नैवोपगच्छति कालाध्वनोरिति द्वितीया ॥ ३७ ॥

गो० टी०—नैवरात्रमिति । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ॥ ३८ ॥

६७ ] ति० टी०—तयोर्मध्ये राघवस्य जयमनवेक्ष्यादृष्ट्वा स सुरवरस्य सारथिरिति । रणे रतो रणरतः, रणरतश्चासौ रामश्च तम् ॥ ६७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

रा० टी०—दशरथेति । सुरवरसारथिर्मातलिर्द[illegible]राक्षसेंद्रयोः युध्यतोस्तयोरिति शेषः राघवस्य जयमनवेक्ष्य रणरतं राममुवाच ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे नवाधिकशततमः सर्गः ॥ १०९ ॥

गो० टी०—दशरथेति । निर्धारणे षष्ठी दशरथसुतराक्षसेन्द्रयोः रामरावणयोर्मध्ये राघवस्य जयमनवेक्ष्य महान् महाबुद्धिरित्यर्थः । सुरवररथसारथिः एनं रामम् उवाच॥३९॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने दशोत्तरशततमः सर्गः ॥ ११० ॥

१ ] ति० टी०—एनमनुवर्तसे एतत्प्रतिभयमनुसरसीत्यर्थः ॥ १ ॥

१ सप्तेति रा.पा. । २ रात्रमिति गो.पा. । ३ अयं श्लोको गो. पुस्तके नास्ति । ४ महान् रणे गतमेनमिति गो. पा. । ५ राघवं मातलिरिति गो.रा. पा. ।

विसृजास्मै[1] वधाय त्वमस्त्रं[2] पैतामहं प्रभो । विनाशकालः कथितो यः सुरैः सोऽद्य वर्तते ॥ २ ॥
ततः संस्मारितो रामस्तेन वाक्येन मातलेः । जग्राह स शरं दीप्तं निःश्वसन्तमिवोरगम् ॥ ३ ॥
यं तस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः । ब्रह्मदत्तं महद्बाणममोघं युधि वीर्यवान् ॥ ४ ॥
ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा । दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ ५ ॥
यस्य वाजेषु पवनः फले पावकभास्करौ । शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६ ॥
जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् । तेजसा सर्वभूतानां कृतं भास्करवर्चसम् ॥ ७ ॥
सधूममिव कालाग्निं दीप्तमाशीविषोपमम्[3] । नरनागाश्ववृन्दानां भेदनं क्षिप्रकारिणम् ॥ ८ ॥
द्वाराणां परिघाणां च गिरीणां चापि[4] भेदनम् । नानारुधिरदिग्धाङ्गं[5] मेदोदिग्धं सुदारुणम् ॥ ९ ॥
वज्रसारं महानादं नानासमितिदारणम् । सर्ववित्रासनं भीमं श्वसन्तमिव पन्नगम् ॥ १० ॥
कङ्कगृध्रबकानां[6] च गोमायुगणरक्षसाम् । नित्यभक्षप्रदं[7] युद्धे यमरूपं भयावहम् ॥ ११ ॥
नन्दनं वानरेन्द्राणां रक्षसामवसादनम् । वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥ १२ ॥
तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् । द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ॥ १३ ॥
अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः । वेदप्रोक्तेन विधिना संदधे कार्मुके बली ॥ १४ ॥
तस्मिन्संधीयमाने तु राघवेण शरोत्तमे । सर्वभूतानि संत्रेसुश्चचाल च वसुंधरा ॥ १५ ॥

रा० टी०–मातलिवचनाकारं बोधयितुमाह–अथेति । मातलिः राघवं स्मारयामास तदाकारमाह हे वीर अजानन् वधोपायमनुध्यन्निव एनं रावणं किं किमर्थमनुवर्तसे ॥ १ ॥

गो० टी०–अथ रावणवधः—अथ संस्मारयामासेत्यादिश्लोकद्वयमेकान्वयम् । अजानन्निव ब्रह्मास्त्रमजानन्निव, एनं रावणम्, अनुवर्तसे अस्त्रस्य प्रत्यस्त्रप्रयोगमात्रं करोषि । विनाशकालः मानुषेण वधः इत्युक्तः कालः ॥ १ ॥ २ ॥

२–३ ] ति० टी०–अस्मा एनं प्रति ॥ २ ॥ ३ ॥

रा० टी०–ननु त्वमेवोपायं वदेत्यत आह—विसृजेति । वधाय वधं कर्तुं पैतामहमस्त्रमस्मैविसृज तत्र हेतुः यो विनाशो विनाशकालः सुरैः कथितः मां प्रतिबोधितः स कालोऽद्य वर्तते २

रा० टी०–तत इति । मातलेर्वाक्येन संस्मारितो रामः उरगमिव निःश्वसन्तं दीप्तं शरं जग्राह ॥ ३ ॥

गो० टी०–ततः संस्मारित इत्याद्येकादश श्लोका एकान्वयाः । प्रथमं पूर्वं दण्डकारण्ये । ब्रह्मदत्तमित्येतद्विवृणोति—ब्रह्मणेत्यादिना । यस्य वाजेष्विति । पवनादीनामधिदेवतात्वेनावस्थानम् । फले शल्ये । तेजसा सारांशेन कृतम् । द्वाराणां रिपुगोपुराणाम् । नानारुधिरेति वध्यासुरभेदात् । मेदः मांसविशेषः । वज्रसारं वज्रतुल्यदार्ढ्यम् । नानासमितिदारणं कपटयुद्धस्यापि निवर्तकम् । सर्ववित्रासनत्वे हेतुः—भीममिति । दीप्तं श्वसन्तमिति भेदादुपमानभेदः । बलाः गृध्रविशेषाः । रक्षसां पिशाचसहचारिणाम् । यमरूपं यमतुल्यं यथा भवति तथा । भयावहमिति । वित्रासनात् भेदः । वाजितमिति । गरुत्मतः वाजैः पत्रैः वाजितं संजातपत्रम् । गरुडपत्रकृतपत्रमित्यर्थः । लोकानां मध्ये उत्तमेषुं प्रहर्षकरमात्मन इत्यन्तस्य जग्राहेत्यनेन संबन्धः ॥ ३–१३ ॥

४ ] ति० टी०–ब्रह्मदत्तं ब्रह्मणेन्द्राय दत्तम् । इन्द्रेणागस्त्यद्वारा रामाय दत्तम् ॥ ४ ॥

५ ] ति० टी०–ब्रह्मदत्तशब्दस्योक्त एवार्थः स्पष्टीक्रियते–ब्रह्मणेत्यादि ॥ ५ ॥

६ ] ति० टी०–अस्य बाणस्य ब्रह्मानुग्रहवैशिष्ट्यमाह—यस्येति । वाजेषु वेगसाधनपक्षेषु । तत्र तत्र पवनादीनामधिदेवतात्वेनावस्थानं बोध्यम् । शरीरं मध्यभाग आकाशमयम् आसमन्तात्काशते प्रकाशते इत्याकाशो ब्रह्मा भगवान्भूताकाशो वा । तेन व्याप्तिसामर्थ्यम्, पवनत्वेन गतिसामर्थ्यम्, पावकादिमत्त्वेन दुःसहत्वम्, तर्हि लघुः स्यात्तत्राह—गौरवे इति ६

७]ति०टी०-सर्वभूतानां पृथिव्यादीनाम् । तेजसा सारांशेन

८ ] ति० टी०–क्षिप्रकारिणं शीघ्रभेदकारिणम् ॥ ८ ॥

९ ] ति० टी०–द्वाराणां गोपुराणाम् ॥ ९ ॥

१०–११ ] ति० टी०–नानासमितिदारणमित्यन्वर्थं नाम भगवत्कृतं रामबाणस्य ॥ १० ॥ ११ ॥

१२ ] ति० टी०–गरुत्मतो वाजैः पक्षैः ॥ १२ ॥

१३ ] ति० टी०–इक्ष्वाकू रामस्तत्पक्षाणां भयनाशनं तमुत्तमेषुमभिमन्त्र्येत्यनेनान्वयः ॥ १३ ॥

१४–१५ ] ति० टी०–अभिमन्त्र्य ब्रह्मास्त्रविद्यया । वेदो धनुर्वेदस्तेन प्रोक्तो यो मुष्टिदृष्टिस्थितिसंधानादीनां विधिर्विधानं मार्गस्तेनेत्यर्थः ॥ १४ ॥ १५ ॥

रा० टी०–यमिति । इन्द्रार्थं ब्रह्मणा निर्मितं प्रकटितमत एव सुरपतेः सुरपतये ब्रह्मणा दत्तं ब्रह्मदत्तमिन्द्रद्वारा ब्रह्मणा

१ अस्मै इति गो. रा. पाठः । २ महाबाणमिति गो. रा. पाठः । ३ विषं यथेति गो. पाठः । ४ अपीति गो. पाठः । ५ सिक्तेति गो. पाठः । ६ बलानामिति गो. पाठः । ७ नित्यं भक्ष्येति गो. रा. पाठः ।

स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् । चिक्षेप परमायत्तः शरं मर्मविदारणम् ॥ १६ ॥
स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः । कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥ १७ ॥
स विसृष्टो महावेगः शरीरान्तकरः परः । बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥ १८ ॥
रुधिराक्तः स वेगेन शरीरान्तकरः शरः । रावणस्य हरन्प्राणान्विवेश धरणीतलम् ॥ १९ ॥
स शरो रावणं हत्वा रुधिरार्द्रकृतच्छविः । कृतकर्मा निभृतवत्स तूणीं पुनराविशत् ॥ २० ॥
तस्य हस्ताद्धतस्याशु कार्मुकं चापि सायकम् । निपपात सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥ २१ ॥
गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः । पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ २२ ॥
तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः । हतनाथा भयत्रस्ताः सर्वतः संप्रदुद्रुवुः ॥ २३ ॥
सर्वतश्चाभिपेतुस्तान्वानरान्द्रुमयोधिनः । दशग्रीववधं दृष्ट्वा वानरा जितकाशिनः ॥ २४ ॥
अर्दिता वानरैर्भ्रष्टा लङ्कामभ्यपतन्भयात् । हताश्रयत्वात्करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ २५ ॥

अगस्त्याय समर्पितं महाबाणमगस्त्यो भगवान् अस्मै रामाय प्रथमं प्रादात् यस्य महाबाणस्य वाजेषु पक्षेषु पवनः फले पावकभास्करौ सन्तीति शेषः यस्य शरीरमाकाशमयं यस्य गौरवे गुरुत्वे मेरुमन्दरौ उपमेयौ यद्वद्गुरु इत्यर्थः तं वपुषा जाज्वल्यमानं तेजसा सर्वभूतानां पृथिव्यादीनां कृतं निर्मातारं सधूमं कालाग्निमिव रथादिवृन्दानां भेदनं द्वारादीनां भेदनं नानारुधिरैः निदारितानेकशरीरसम्बन्धिशोणितैः दिग्धानि व्याप्तान्यङ्गानि यस्य अत एव मेदोभिर्दिग्धं नानासमितीनां संग्रामाणां दारणं दारकमत एव सर्ववित्रासनं कंकादीनां कंकादिभ्यः युद्धे नित्यं भक्ष्यप्रदं रक्षसामवसादनं विनाशकं गरुत्मतो गरुडस्य चारुचित्रैः विविधैर्वाजैः पक्षैः वाजितं संयुक्तं लोकानां लोकेभ्यः इक्ष्वाकुभयनाशनमात्मनः प्रहर्षकरं सत्त्वत्तमेषुं विनाशकोत्तमं स्वं स्वकीयं महेषुं वेदप्रोक्तेन विधिना कार्मुके धनुषि रामस्संदधे एकादशश्लोकानामेकत्रान्वयः ४-१४

रा० टी०-तस्मिन्निति । राघवेण शरोत्तमे सन्धीयमाने सति सर्वभूतानि वित्रेसुः एतेन तद्बाणस्यातीव भयंकररूपत्वं सूचितम् ॥ १९ ॥

गो० टी०-अभिमन्त्र्येति । ततः ग्रहणानन्तरम्, तम् इषुम् संदधे ॥ १४ ॥ १९ ॥

१६ ] ति० टी०-परमायत्तः परमयत्नवान् ॥ १६ ॥

रा० टी०-स इति । स रामः रावणाय शरं चिक्षेप॥१६॥

गो० टी०-स इति । रावणाय चिक्षेपेत्यन्वयः ॥ १६ ॥

१७-१९ ] ति० टी०-वज्रिबाह्विति । वज्रितुल्यबलरामबाहुविनिःसृत इत्यर्थः । वज्रकवचवद्रामेत्यादि वा वस्तुतो वज्रिबाहुविसर्जितो वज्र इव दुर्धर्ष इत्यर्थः ॥ १७-१९ ॥

रा० टी०-स इति । वज्रिबाहुना विसर्जितः त्याजितो वज्र इव दुर्धर्षः वारयितुमशक्यः कृतान्तः काल इव चावार्यः स महाबाण रावणोरसि न्यपतत् ॥ १७ ॥

रा०टी०-स इति । विसृष्टस्स शरः रावणस्य हृदयं बिभेद१८

रा० टी०-रुधिराक्त इति । रुधिरैः आक्तो व्याप्तः स शरः रावणस्य प्राणान् हरन् सन् धरणीतलं विवेश ॥ १९ ॥

गो० टी०-स वज्र इति । वज्रिबाहुविसर्जितो वज्र इवेत्यन्वयः ॥ १७-१९ ॥

२०-२३ ] ति० टी०-निभृतवद्विनीतवत् ॥ २०-२३ ॥

रा० टी०-स इति । रावणं हत्वा रुधिरार्द्रो अत एव कृता प्रकटिता छविः शोभाविशेषो येन अत एव कृतकर्मा साधितरामकृत्यः स शरः निभृतवत् विनीतवत् स्वतूणीं पुनराविशत्॥२०॥

गो० टी०-स शर इति । निभृतवत् विनीतवत् ॥२०॥

रा० टी०-तस्येति । हतस्य बाणेन विद्धस्य अत एव जीविताद् भ्रश्यमानस्य तस्य रावणस्य हस्तात् ससायकं कार्मुकं प्राणैस्सह निपपात ॥ २१ ॥

रा० टी०-गतासुरिति । गतासुः नैर्ऋतेन्द्रः वज्रहतो वृत्र इव स्यंदनात् पपात ॥ २२ ॥

रा० टी०-तमिति । तं रावणं पतितं दृष्ट्वा हतनाथाः निशाचरास्सर्वतः संप्रदुद्रुवुः वानरास्तु नर्दन्तस्सन्तः तान् राक्षसान् अभिपेतुः वधार्थं जग्मुः सार्द्धश्लोक एकान्वयी ॥२३॥

गो० टी०-तस्येति । प्राणैः सह जीविताद् प्राणधारणयत्नात्, भ्रश्यमानस्य तस्य हस्तात् ससायकं कार्मुकं पपात ॥ २१-२३ ॥

२४] ति० टी०-अभिपेतुस्तान् । प्रद्रुतराक्षसानित्यर्थः२४

२५ ] ति० टी०-हताश्रयत्वाद्धतं आश्रयो येषां तस्मात् । बाष्पप्रस्रवणैर्मुखैः करुणैः शोकवद्भिरुपलक्षिताः सन्तो लङ्कामभ्यपतन् ॥ २९ ॥

रा० टी०-दशग्रीवेति । वानरैः अर्दिताः बाष्पाणां प्रस्रवणानि येभ्यः तैः करुणैर्मुखैरुपलक्षिताः राक्षसाः हताश्रयत्वाद्धेतोः लंकामभ्यपतन् सार्धश्लोक एकान्वयी ॥२४॥२५॥

गो० टी०-नर्दन्तश्चेत्यर्धमेकं वाक्यम् ॥ २४ ॥

गो० टी०-दशग्रीवेत्यादिसार्धश्लोक एकान्वयः । मुखैः उपलक्षिताः । राक्षसा इति शेषः ॥ २९ ॥

१ तं शरं मर्मघातिनमिति गो. पा. । २ आर्द्रीकृतेति गो. रा. पाठः । ३ स्वेति गो. रा. पाठः । ४ आगमदिति गो. पाठः । ५ तस्ससायकमिति गो. रा. पा. ६ नर्दन्त इति गो. रा. पाठः । ७ वानरा इति गो. रा. पाठः । ८ हृष्टैरिति गो. रा. पाठः । ९ गतेति गो. पाठः ।

ततो विनेदुः संहृष्टा वानरा जितकाशिनः । वदन्तो राघवजयं रावणस्य च तद्वधम् ॥ २६ ॥
अथान्तरिक्षे व्यनदत्सौम्यस्त्रिदशदुन्दुभिः । दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥ २७ ॥
निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि । किरन्ती राघवरथं दुरावापा मनोहरा ॥ २८ ॥
राघवस्तवसंयुक्ता गगने च विशुश्रुवे । साधुसाध्विति वागग्र्या देवतानां महात्मनाम् ॥ २९ ॥
आविवेश महान्हर्षो देवानां चारणैः सह । रावणे निहते रौद्रे सर्वलोकभयंकरे ॥ ३० ॥
ततः सकामं सुग्रीवमङ्गदं च बिभीषणम् । चकार राघवः प्रीतो हत्वा राक्षसपुंगवम् ॥ ३१ ॥
ततः प्रजग्मुः प्रशमं मरुद्गणा दिशः प्रसेदुर्विमलं नभोऽभवत् ।
मही चकम्पे न च मारुतो ववौ स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ॥ ३२ ॥
ततस्तु सुग्रीवविभीषणाङ्गदाः सुहृद्विशिष्टाः सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं रणेऽभिरामं विधिनाभ्यपूजयन् ॥ ॥ ३३ ॥
स तु निहतरिपुः स्थिरप्रतिज्ञः स्वजनबलाभिवृतो रणे बभूव ।
रघुकुलनृपनन्दनो महौजास्त्रिदशगणैरभिसंवृतो महेन्द्रः ॥ ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

२६-२७ ] ति० टी०—तद्वधम् । तं वधमित्यर्थः २६-२७

रा० टी०—तत इति । संहृष्टाः अत एव राघवस्य जयं रावणस्य वधं च वदन्तो वानराः विनेदुः ॥ २६ ॥

रा० टी०—अथेति । अन्तरिक्षे दुन्दुभिर्व्यनदत् दिव्यगंधवहः अत एव सुसुखो मारुतो ववौ ॥ २७ ॥

गो० टी०—तत इति । तद्वधं तं वधम् ॥ २६-२८ ॥

२८ ] ति० टी०—दुरावापा आप्तुमशक्या ॥ २८ ॥

रा० टी०—निपपातेति । राघवरथं किरन्ती आच्छादयन्ती दुरवापा अन्यैर्दुर्लभा पुष्पवृष्टिः अन्तरिक्षात् भुवि निपपात २८

२९-३० ] ति० टी०—राघवस्तवसंयुक्ता साधु साध्विति वाग्गगनेऽपि शुश्रुवे ॥ २९ ॥ ३० ॥

रा० टी०—राघवेति । राघवस्तवेन संयुक्ता साधु साध्विति देवतानां वाक् गगने विशुश्रुवे ॥ २९ ॥

गो० टी०—राघवेति । राघवस्तवसंयुक्ता वागित्यन्वयः२९

रा० टी०—आविवेशेति । रावणे निहते सति चारणैस्सह विद्यमानानां देवानां हृदये महान् हर्ष आविवेश ॥ ३० ॥

गो० टी०—आविवेशेति । चारणैः सह चारणैः सहितान् देवानित्यर्थः ॥ ३० ॥

३१ ] ति० टी०—राक्षसपुंगवं हत्वा सुग्रीवादिकं सकामं संपूर्णकामं चकार । रावणवधेन रामकार्ये सिद्धे किल तेषां राज्यं शाश्वतं प्रतिष्ठितं भवति ॥ ३१ ॥

रा० टी०—तत इति । राक्षसपुंगवं हत्वा प्रीतो राघवः सुग्रीवमङ्गदं च सकामं पूर्णमनोरथं चकार ॥ ३१ ॥

गो० टी०—तत इति । सुग्रीववद्युवराजत्वेन प्रत्युपकारायाङ्गदेनापि रावणवधस्य काङ्क्षितत्वात् सकामत्वम् ॥३१ ॥

३२ ] ति० टी०—मही न चकम्पे । मारुतो न ववौ । क्रूर इति शेषः । 'मही चकम्पे नहि' इति पाठे मारुतो ववौ । सुख इति शेषः । स्थिरप्रभश्चेति । अनेनाश्विनशुक्लनवम्यां यामावशेषदिन इति बोधितम् ॥ ३२ ॥

रा० टी०—तत इति । मरुद्गणाः प्रशमं भयराहित्यमित्यर्थः प्रजग्मुः अत एव दिशः प्रसेदुः मही च न चकम्पे मारुतो ववौ सुसुखमिति शेषः दिवाकरः स्थिरप्रभोऽभवत् ॥३२॥

गो० टी०—तत इति । प्रशमं प्रसादम् । मरुद्गणाः देवगणाः । मही न चकम्पे महीकम्पाभावस्य शुभसूचकत्वात् इत्याहुः । रावणवधपर्यन्तं सकम्पा स्थिता मही तद्वधानन्तरं निष्कम्पाऽभवदिति चाहुः । ववौ सुखमिति शेषः ॥ ३२ ॥

३३ ] ति० टी०—रणेऽभिरामं रणविषये सर्वजगत्पूजनीयपराक्रमम् ॥ ३३ ॥

३४ ] ति० टी०—रामः स्वजनबलाभिवृतो बभूव । महेन्द्रश्च त्रिदशगणाभिसंवृतो बभूव ॥ ३४ ॥

रा० टी०—तत इति । विजयेन हृष्टाः सुग्रीवादयः राघवं समेत्य अभ्यपूजयन् ॥ ३३ ॥

रा० टी०—स इति । निहतो रिपुर्येन अत एव कृतप्रतिज्ञः स्वजनबलाभिवृतः रघुकुलनृपनन्दनः त्रिदशगणैरभिसंवृत इन्द्र इव रणे रराज ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

गो० टी०—ततस्त्विति । सुहृद्विशेषाः जाम्बवदादयः । हिशब्दः पादपूरणे । विजयेन हृष्टा इत्यन्वयः । विधिना क्रमेण ॥ ३३ ॥ ३४ ॥

गो० टी०—फाल्गुनामावास्यायां रावणवधः । यद्वा चैत्र-

---

१ रमेति गो. पाठः । २ अपि चेति गो. पाठः । ३ महाबलमिति गो. रा. पाठः । ४ हीति गो. रा. पाठः । ५ आदय इति गो. पाठः । ६ विशेषा इति गो. पाठः । ७ हीति गो. पाठः । ८ रराजेति गो. रा. पाठः । ९ यथेति गो. रा. पाठः ।

शुद्धप्रतिपदि शिष्टामावास्यायां प्रातःकाले रावणवधः । पूर्वं सर्वेरात्रमवर्ततेत्युक्तेः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकादशोत्तरशततमः सर्गः ॥ १११ ॥

३५ ] ति० टी०—अत्र युद्धदिवसगणनायां कतकतीर्थौ—पूर्वं सुवेलारोहणदिने 'ततोऽस्तमगमत्सूर्यः संध्यया प्रतिरञ्जितः। पूर्णचन्द्रप्रदीप्ता च क्षपा समतिवर्तते ॥' इत्युक्तेस्तद्दिनं चतुर्दशीपूर्णिमान्यतरदिति स्पष्टम्। ततः कृष्णप्रतिपदि युद्धारम्भः, तस्यामेव रात्रौ नागपाशबन्धतद्विमोक्षौ। द्वितीयायां धूम्राक्षवधः। तृतीयायां वज्रदंष्ट्रस्य। चतुर्थ्यामकम्पनस्य। पञ्चम्यां प्रहस्तस्य। षष्ठ्यां रावणभङ्गः। सप्तम्यां कुम्भकर्णवधः। अष्टम्यामतिकायादेः। नवम्यामिन्द्रजितो ब्रह्मास्त्रप्रयोगः। दशम्यां दिवा निकुम्भवधः, तद्रात्रौ मकराक्षवधः। एकादश्यादित्रयोदश्यन्तदिनत्रयेणेन्द्रजिद्वधः। चतुर्दश्यां मूलबलवधः। अमायां रावणयुद्धारम्भतद्वधाविति पञ्चदशदिनानि सर्वं युद्धमिति। अत्रेदं वक्तव्यम्—केयं कृष्णप्रतिपन्माघकृष्णस्य वा चैत्रकृष्णस्य वा। नाद्यः। चैत्रे पुष्यनक्षत्रेऽयोध्यातो वनं प्रति रामस्य प्रस्थानमिति स्पष्टमयोध्याकाण्डे। चैत्रे पुष्यश्च शुक्लपक्ष एव, तत्रापि नवम्यादिदिनत्रये एवेति स्पष्टमेव ज्यौतिषादौ। तत्र नवमी रिक्तात्वादभिषेकायोग्या, दशम्येव तु पूर्णात्वाद्योग्या। एवं च चैत्रशुक्लदशम्यां प्रस्थानम्। तत्र माघकृष्णामायां युद्धसमाप्तौ तदुत्तरपञ्चम्यां भरद्वाजाश्रमागमनम्। 'पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः। भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥' इति वक्ष्यमाणत्वात्। तत्र च न चतुर्दशवर्षसमाप्तिरिति भगवतः प्रतिज्ञाहानिः, 'पूर्णे चतुर्दशवर्षे' इत्युक्तेरसंगतिश्च। युद्धोत्तरं तावत्कालं लङ्कायामवस्थानस्यालाभाच्च। चैत्रशुक्लपञ्चम्यां तत्रागमनेऽपि पञ्चदिनन्यूनतैवेति तद्धानिस्तदवस्थैव । तदुत्तरद्वितीयदिन एवायोध्याप्रवेशस्य लाभात्। अमान्तमानेन चैत्रकृष्णोत्तरपञ्चम्यां तदाश्रमगतावपि चतुर्दशवर्षतो बहुदिनाधिक्येन चतुर्दशवर्षसमाप्तिदिनेऽयोध्यानागमे मया प्राणा देया इति भरतप्रतिज्ञाहानिः। सा च प्रतिज्ञा चित्रकूटे रामसंनिधावित्ययोध्याकाण्डान्ते स्पष्टम्। एतेन चैत्रकृष्णप्रतिपदि युद्धारम्भस्तच्छुक्लप्रतिपदि रावणसंस्कार इति तीर्थोक्तश्चैत्रकृष्णस्येत्यन्त्योऽपि परास्तः । पूर्णिमान्तमानेन तिथिवद्द्वादशमासैर्वर्षगणने पञ्चदिनानां न्यूनत्वात्। अमान्तमानेन चैत्रकृष्णग्रहणे बहुदिनाधिक्यम्। सावनमानेन षष्ट्युत्तरत्रिशतदिनैर्वर्षगणने तु तिथिवद्वर्षात्तत्र षड्दिनाधिक्येन चतुर्दशवर्षाणां चतुरशीत्यहोरात्रद्वया बहुदिनन्यूनतैव। किं च, महाभारते युधिष्ठिरवनवासे त्रयोदशवर्षमिते किंचित्कालादर्वागेव तेषां प्राकट्ये दुर्योधनेन तदसमाप्तावेषां प्राकट्येन पुनस्तावत्पर्यन्तं पुनरेतैर्वनवासः कर्तव्यो भविष्यतीति भीष्मं प्रत्युक्ते भीष्मवाक्यं विराटपर्वणि—'पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः। एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः ॥ त्रयोदशानां वर्षाणामिति मे धीयते मतिः। सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम् ॥ एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः ॥ एषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः ॥' इति। एवं चेदृशव्यवहारे तिथिवद्द्वादशमासैरेव वर्षगणनाधिकमासगणना चोचितैव। एवं चाधिकमासगणनायां धर्माहानौ न्याय्यत्वे च स्थिते कस्माद्रामस्तानुपेक्षेत, भरतो वा तान्न गणयेत्। एवं चामान्तमानेन चतुर्दशीयाश्विनकृष्णे पूर्णिमान्तमानेन कार्तिककृष्णे षष्ठ्यां तत्समाप्तिरित्यायाति, अन्यथा चैत्रशुक्लदशम्यामारब्धस्य वनवासस्य षष्ठ्यां चतुर्दशवर्षसमाप्तिर्न कथमप्युपपद्यते। तद्गणने त्वेकादशदिनन्यूनषण्मासानां चतुर्दशवर्षेषु वृद्धावुपपद्यत एव सा, तस्माद्द्वादशसमाह्युत्तरं त्रयोदशे किंचिद्व्यतीतेऽरण्यकाण्डोक्तास्मद्रीत्या फाल्गुनाष्टम्यां रावणकृतसीतापहारः। ततश्चतुर्दशे किंचिद्व्यतीते रामस्य लङ्कासमीपगमनम्। 'वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगम' इति सीतोक्तिः सावनमानेन स्वहरणदिनतः कालगणनया। तत्र 'पूर्णचन्द्रप्रदीप्ता च' इति रामोक्त्या पौषशुक्लचतुर्दश्यां पूर्णिमायां वा त्रिकूटशिखरप्राप्ती रामस्य। किं च हनूमतो लङ्काप्रवेशोत्तरं सीतादर्शनकाले 'हिमव्यपायेन च शीतरश्मिरभ्युत्थितो नैकसहस्ररश्मिः' इति वाक्येन 'द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः' इति रावणवाक्येन मार्गशुक्लदशम्युत्तरं हनूमतो लङ्काप्रवेशो दिनद्वयान्तरे लभ्यते इति निरूपितं सुन्दरकाण्डे। ततो मार्गकृष्णेऽष्टम्यां राघवप्रस्थानस्यान्यत्रोक्तत्वेन पौषपौर्णिमात्वमेवोचितं तत्प्राप्तिदिनस्य। ततो दशपञ्चदिनानि सेनानिवेशदूतप्रेषणादिना गतानि। ततो युद्धारम्भः। तत्र तदारभ्य भाद्रश्रावणोभयामान्तं लङ्कापुराद्बहिः सेनयोः संकुलं युद्धम्। ततो बहुराक्षसक्षयेण भीता राक्षसा लङ्कां प्रविष्टा इति तद्दिनेऽवहारस्तदुत्तरप्रतिपदि रात्राविन्द्रजित्कृतशरबन्ध इत्यादि। अत एव शरबन्धबद्धराघवदर्शनकाले सीतावाक्यम्—'तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ' इति। अनेन बहुदिनयुद्धेन बहुषु राक्षसेषु क्षयितेषु कतिपययूथपरूपेऽत्यल्पावशिष्टे सैन्ये तयोः शरबन्ध इति लभ्यते। तथा 'अयं ते सुमहान्कालः शयानस्य महाबल' इति कुम्भकर्णं प्रति रावणोक्त्या सांप्रततन्निद्रायाः षण्मासाधिकत्वप्रतीतेरप्येवमेवोचितम्। निरूपितं चैतत्प्राक्सेतुबन्धादिवृत्तान्तं त्वं न जानीषे इति कुम्भकर्णं प्रति रावणोक्त्या पूर्वमन्त्रकरणोत्तरं मध्ये जागरणाभावस्य प्रतीतेः। किं च शरबन्धनदिनं न कृष्णप्रतिपत्। तस्याः पूर्णिमोत्तरत्वेन संपूर्णरात्रौ चन्द्रसत्तया 'तस्मिंस्तमसि दारुणे' इत्याद्युक्तेरसंगत्यापत्तेः अतः सा शुक्लप्रतिपद्वाच्या। एवं चामान्तपक्षमात्रं युद्धमित्यस्यात्यन्तमसंगत्यापत्तिः । यत्तु—अमायामेव रावणवध इति, तत्तु न युक्तम्। इन्द्रजिद्वधोत्तरम् 'अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम्। कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ॥' इति रावणं प्रति सुपार्श्वस्योक्त्या चतुर्दश्यां रावणप्रेषितबलवधोत्तरममायां निर्गतरावणेन रामलक्ष्मणयोर्युद्धे रात्रौ लक्ष्मणस्य शक्तिघातोत्तरं रावणलङ्काप्रवेशस्योक्ततया, ततो लक्ष्मणचिकित्सोत्तरं पुना रामरावणयुद्धस्य वाल्मीकिनैव स्पष्ट-

युक्ततया तदसंभवात् । किं चादित्यहृदयस्य 'आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान्' इत्यनेन सूर्यदर्शनोत्तरं जपस्योक्ततया रावणमरणोत्तरम् 'स्थिरप्रभश्चाप्यभवद्दिवाकरः' इत्युक्त्या दिवा तद्वधप्रतीत्या च चिरकालयुद्धोत्तरं लक्ष्मणे शक्तिघातस्य तदर्थमोषधिपर्वतानयनस्य चोक्तत्वेनामारात्रौ शक्तिघातप्रतीत्या रणाद्रावणापगमस्य प्रतीत्या च तद्विरोधात् । तथा पाद्मे— 'ततो जज्ञे महायुद्धं संकुलं कपिरक्षसाम् । मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूत् ॥' प्रतिपदि । शुक्लप्रतिपदीत्यर्थः । उक्तयुक्तेः । 'ततो निशि समागम्य मायावी शक्रजिद्बली । बबन्ध नागपाशैस्तौ राघवौ च हरित्रजान् ॥' ततश्चिरकालसंकुलयुद्धोत्तरम्, अन्यथा तस्यां निशीत्येव वदेत् । अग्रे द्वितीयेऽह्नि षष्ठयामिति चोक्त्या दारुणे तमसीति रामायणोक्त्या च भाद्रश्रावणोभयामोत्तरप्रतिपद्येतदिति बोध्यम् । 'वैनतेयस्तदाभ्येत्य तानि चास्त्राण्यमोचयत् । द्वितीयेऽहनि धूम्राक्षं हनुमान्निजघान वै ॥ तृतीयेऽह्नि वज्रदंष्ट्रं खड्गाच्चिच्छेद चाङ्गदः । जघान हनुमान्भूयश्चतुर्थेऽह्न्यकम्पनम् ॥ प्रहस्तं पञ्चमीतिथ्यां नीलश्चिच्छेद मूर्धनि । रावणः परिभूतोऽभूत्षष्ठ्यां रामेण धन्विना ॥ अथ लङ्केश्वरः खिन्नः कुम्भकर्णं सहोदरम् । शैलमुद्गरघाताश्वधावनाद्यैरबोधयत् ॥ जघान तं कुम्भकर्णं रामः सप्तमवासरे ॥' इदं बोधनं दिनद्वयेन । तं बोधितं कुम्भकर्णम् । सप्तमवासरे बोधनोत्तरं सप्तमवासरे इत्यर्थः । यत्तु बोधनं षष्ठ्यां रात्रौ सप्तम्यां चैतद्वध इति, तन्न । तदुत्थापने उक्तस्यातिप्रयासस्य रात्रिमात्रेणासंभवात्; रावणमन्दिरगमनकाले सूर्यप्रभया रावणमन्दिरस्यातिभास्वरत्ववर्णनेन मन्त्रादिना सप्तम्यां युद्धासंभवात्, इन्द्रजितो दिनत्रयेण 'वधोऽस्य यामषट्केन' इत्यस्यासंगतत्वाच्च । एवं च भाद्रपूर्णिमायामेतद्वधः । 'जघान लक्ष्मणोऽन्येद्युरतिकायं दशास्यजम् । बबन्धान्येद्युरिन्द्रारिर्ब्रह्मास्त्रेण नृपौ कपीन् ॥ हनुमता समानीतो महौषधमहीधरः । तस्यानिलस्पर्शवशात्सर्वे एते समुत्थिताः ॥ अन्येद्युः कपिराट् कुम्भं निकुम्भं वायुजोऽवधीत् । तस्यां निशि रघुश्रेष्ठो जघान मकरेक्षणम् ॥ मायासीतावधं चक्रे शक्रजिद्रणमूर्धनि । तेन खिन्नोऽभवद्रामः आश्वस्तो लक्ष्मणेन सः ॥ त्रयोदशाहे सौमित्रिस्त्रिदिनं योधयन्बली । जघान शक्रजेतारं रामध्यानेन हेतुना ॥' अन्येद्युरन्येद्यु दिवसेषु । अत्रातिकायग्रहणं त्रिशिरोदेवान्तकनरान्तकमहोदरमहापार्श्वोपलक्षणम् । लक्ष्मणग्रहणमङ्गदहनूमतोरप्युपलक्षणम् । एवं षड्भिर्दिनैः षण्णां वधः पूर्वं क्रमेणैव तद्वधोक्तेः । अन्येद्युः सप्तम्याम्, पर्वतानयनमष्टम्याम्, अन्येद्युर्नवम्याम्, तस्यां निशि नवमीरात्रौ तदन्ते मायासीतावधः । ततो दशमीचतुर्थयाममारभ्य त्रयोदशीचतुर्थयामपर्यन्तमिन्द्रजिद्वधः । 'ततोऽवधीन्मूलबलं चतुर्दश्यां रघूद्वहः । दर्शेऽथ निर्ययौ राजा योद्धुं रामेण संयुगे ॥ चतुरङ्गबलैः सार्धं मन्त्रिभिर्दशकंधरः । छत्रचामरसंयुक्तः सर्वाभरणभूषितः ॥ महारथगतो द्वारादुत्तरान्निर्ययौ बहिः । आगतो रक्षसां राजा ब्रह्मघ्नो देवकण्टकः ॥ योद्धुं रघुवरेणेति शुश्रुवे कलहध्वनिः । तत्र युद्धं समभवद्वानराणां च रक्षसाम् ॥ रामरावणयोश्चैव तथा सौमित्रिणा सह । शक्तिं चिक्षेप संक्रुद्धः सोऽनुजं प्रति रावणः ॥ वक्षसा धारयामास सौमित्रिस्तां वियद्गताम् । तथा स बाध्यमानः सन्पपात धरणीतले ॥ हनुमता जीवितोऽभूदौषध्यानयनात्पुनः । ततः क्रुद्धो महातेजा राघवो राक्षसान्तकः । जघान राक्षसान्सर्वाञ्शरैः कालान्तकोपमैः । भयात्प्रदुद्राव रणे लङ्कां प्रति निशाचरः ॥ जगद्राममयं पश्यन्निर्विण्णस्त्वगृहं विशत् । निकुम्भिलां ततः प्राप्य होमं चक्रे जिगीषया ॥ ध्वंसितं वानरेन्द्रैस्तदभिचारात्मकं रिपोः । पुनरुत्थाय पौलस्त्यो रामेण सह योधितुम् ॥ दिव्यं स्यन्दनमारुह्य राक्षसैर्निर्ययौ बहिः ॥' इदं निर्गमनमाश्विनशुक्लप्रतिपदि । 'ततः शतमखो दिव्यं रथं हर्यश्वसंयुतम् । राघवाय स्वसूतेन प्रेषयामास भक्तिमान् ॥ तं तु मातलिनानीतमारुह्य रथसत्तमम् । स्तूयमानः सुरगणैर्युयुधे तेन रक्षसा ॥ ततो युद्धमभूद्घोरं रामरावणयोर्महत् । सप्ताह्निकमहोरात्रं शस्त्रास्त्रैरतिभीषणैः ॥' इति । ततो मातलिरथागमनदिनोत्तरम् । एवं च नवम्यां तद्वधः । तदुक्तं कालिकापुराणे—'रामस्यानुग्रहार्थं वै रावणस्य वधाय च । रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ॥ ततस्तु त्यक्तनिद्रा सा नन्दायामाश्विने सिते । जगाम नगरीं लङ्कां यत्रासीद्राघवः पुरा ॥' आगत इति शेषः । इदं चागमनं रात्र्यन्ते तदैव मातलिरथागमनम् । 'तत्र गत्वा महादेवी तदा तौ रामलक्ष्मणौ । युद्धेन योजयामास स्वयमन्तर्हिताम्बिका ॥ राक्षसानां वानराणां जग्ध्वा सा मांसशोणितम् । रामरावणयोर्युद्धं सप्ताहं सा न्ययोजयत् ॥ व्यतीते सप्तमे रात्रे नवम्यां रावणं ततः । रामेण घातयामास महामाया जगन्मयी ॥ यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत । तावत्तु अष्टरात्राणि सर्वैर्देवैः सुपूजिता ॥ निहते रावणे वीरे नवम्यां सकलैः सुरैः । विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः ॥' सकलैः सुरैरित्यस्य सहेति शेषः । 'रामरावणबाणैस्तु युद्धं चावेक्ष्य भीतिदम् । तृतीयायां तु लङ्कायाः पूर्वोत्तरदिशि स्थितम् ॥ स्वातिनक्षत्रयुक्तायां भीतं सुरबलं महत् । शान्त्यर्थं वारयामास देवेन्द्रो वचनादरेः ॥' शान्त्यर्थं भयशान्त्यर्थम् । 'ततस्तु श्रवणेनाथ दशम्यां चण्डिकां शुभाम् । विसृज्य चक्रे शान्त्यर्थं बलनीराजनं हरिः ॥' रिपुजनितभयशान्त्यर्थमित्यर्थः । 'नीराजितबलः शक्रस्तत्र रामं सलक्ष्मणम् । संभाप्य प्रययौ स्वर्गं सह दैवैः शचीपतिः ॥ इति वृत्तं पुराकल्पे मनोः स्वायंभुवेऽन्तरे । पुराकल्पे यथा वृत्तं प्रतिकल्पं तथैव तु ॥ प्रवर्तते स्वयं देवी दैत्यानां नाशनाय वै ॥' स्वायंभुवमन्वन्तररूपे पुराकल्पे इत्यर्थः । प्रतिकल्पम् प्रतिमन्वन्तरमित्यर्थः । जलप्लवसामान्येन तत्रापि कल्पव्यवहारात् । 'प्रतिकल्पं भवेद्रामो रावणश्चापि राक्षसः । तथैव जायते युद्धं तथैव त्रिदशागमः ॥ एवं रामसहस्राणि रावणानां तथैव च । भवितव्यानि भूतानि तेषु देवी प्रवर्तते ॥ तां पूजन्ति सुराः सर्वे बलं नीराजयन्ति च । तथैव च नराः सर्वे कुर्युः पूजां यथाविधि ॥ बलनीराजनं राजा कुर्याद्बलविवृद्धये ॥'

इति। इयं च ब्रह्मबोधिता महादेव्यग्नौ प्रविष्टा सीतैव भगवच्छक्तिरूपेति प्रतिभाति, अत एव ब्रह्मवैवर्ते प्रथमेऽशविभागे प्रतिकल्पं विष्णोश्चरितं कीदृशमिति नारदप्रश्ने ब्रह्मवाक्यम्—'स एव भगवान्नूनं प्रतिमन्वन्तरं मुने। वधाय दुष्टदैत्यानां भूमिभारकृतां भुवि॥ कलिद्वापरयोः संधौ भविष्यति न संशयः। प्रतिकल्पं त्वेवमेव भविष्यति न संशयः॥' इति। 'सहस्रकृत्वो रामोऽपि भविता ब्रह्मणो दिने' इति ब्रह्मवैवर्ते प्रथमविभागस्थे राधां प्रति कृष्णवाक्ये। दिने इति जातावेकवचनम्। दिनेष्वित्यर्थः। पूर्वं प्रतिमन्वन्तरमित्युक्तेः। प्रतिचतुर्युगं रामायवतार इति तु न युक्तम्, चतुर्विंशतितमचतुर्युग्यां रामावतारस्याष्टाविंशतितमचतुर्युग्यां कृष्णावतारस्य हरिवंशे पुराणान्तरे च प्रसिद्धत्वादिति दिक्। आग्निवेश्यरामायणमिति प्रसिद्धग्रन्थे तु—'रामः पञ्चदशे वर्षे षड्वर्षामपि मैथिलीम्। उपयेमे त्वयोध्यायां द्वादशाब्दानुवासतः॥ सप्तविंशतिमे वर्षे वनवासमकल्पयत्। अष्टादश तु वर्षाणि सीतायास्तु तदाभवन्॥ त्रिरात्रमुदकाहारश्चतुर्थेऽह्नि फलाशनः। पञ्चमे चित्रकूटे तु रामो वासमकारयत्॥ अथ त्रयोदशे वर्षे पञ्चवट्यां महामनाः। रामो विरूपयामास घोरां शूर्पणखां वने॥ ततो माघे सिताष्टम्यां मुहूर्ते वृन्दसंज्ञके। राघवाभ्यां विना सीतां जहार दशकंधरः॥' 'माघे शुक्लचतुर्दश्याम्' इति पाठान्तरम्। 'मार्गशुक्लदशम्यां तु वसन्तीं रावणालये। संपातिर्दशमे मासे आचख्यौ वानरेषु ताम्॥ एकादश्यां महेन्द्राग्रात्पुप्लुवे शतयोजनम्। तत्रात्रिशेषे सीताया दर्शनं हि हनूमतः॥ द्वादश्यां शिंशपावृक्षे हनूमान्पर्यवस्थितः। तस्यां निशायां सीताया विश्वासालापसत्कथाः॥ अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्तत। वधो ह्यक्षकुमारस्य वनविध्वंसनं तथा॥ ब्रह्मास्त्रेण चतुर्दश्यां बद्धः शक्रजिता कपिः। वह्निना पुच्छयुक्तेन लङ्काया दहनं तथा॥ पौर्णमास्यां महेन्द्राद्रौ पुनरागमनं कपेः। मार्गासितप्रतिपदः पञ्चभिः पथि वासरैः॥ पुनरागम्य षष्ठेऽह्नि ध्वस्तं मधुवनं च तैः। सप्तम्यां प्रत्यभिज्ञानदानं शुद्धिनिवेदनम्॥ अष्टम्युत्तरफल्गुन्यां मुहूर्ते विजयाभिधे। मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य तु॥ वासरे सप्तमेऽम्भोधौ स्कन्धावारनिवेशनम्। पौषशुक्लप्रतिपदस्तृतीया यावदम्बुधेः॥ उपस्थानं ससैन्यस्य राघवस्य बभूव ह। बिभीषणश्चतुर्थ्यां वै रामेन सह संगतः॥ समुद्रतरणार्थाय पञ्चम्यां मन्त्र उद्गमः। प्रायोपवेशनं चक्रे रामो दिनचतुष्टयम्॥ समुद्रवरलाभश्च सेतूपायप्रकीर्तनम्। सेतोर्दशम्यामारम्भस्त्रयोदश्यां समापनम्॥ चतुर्दश्यां सुवेलाग्रे रामः सैन्यं न्यवेशयत्। पौर्णमास्या द्वितीयान्तं त्रिदिनैः सैन्यतारणम्॥ तृतीयाया दशम्यन्तं मन्त्रो गुल्मनिवेशने। शुकसारणयोः सैन्यप्राप्तिरेकादशीदिने॥ माघे सितायां द्वादश्यां सैन्यसंख्या कृता तु वै। सारणेन कपीनां तु सारासारोपवर्णनम्॥ त्रयोदश्याद्यमां यावल्लङ्कायां दिवसैस्त्रिभिः। रावणः सैन्यसंख्यानं रणायोत्साहनं तथा॥ ययावथाङ्गदो दौत्यं माघशुक्लादिवासरे। माघशुक्लद्वितीयादिदिनैः सप्तभिरेव तु॥ रक्षसां वानराणां च युद्धमासीत्सुदारुणम्। माघशुक्लनवम्यां तु रात्राविन्द्रजिता रणे॥ रामलक्ष्मणयोर्नागपाशैर्बन्धो बभूव ह। नागपाशविमोक्षार्थं दशम्यां गरुडोऽभ्यगात्॥ अत्रावहारः कथितो दशम्यादिदिनद्वयम्। द्वादश्यामाञ्जनेयेन धूम्राक्षस्य वधः कृतः॥ त्रयोदश्यां तु तेनैव निहतोऽकम्पनो रणे। माघशुक्लचतुर्दश्या यावत्कृष्णादिवासरम्॥ त्रिदिनेन प्रहस्तस्य नीलेन विहितो वधः। माघासितद्वितीयायाश्चतुर्थ्यन्तं त्रिभिर्दिनैः॥ रामेण तुमुले युद्धे रावणो द्रावितो रणात्। पञ्चम्यास्त्वष्टमी यावद्रावणेन प्रबोधितः॥ कुम्भकर्णः समुत्तस्थावत्रायुद्धं चतुर्दिनम्। कुम्भकर्णो दिनैः षड्भिर्नवम्यास्तु चतुर्दशीम्॥ रामेण निहतो युद्धे बहुवानरभक्षकः। अमावास्यादिने शोकादवहारो बभूव ह॥ फाल्गुनादिप्रतिपदश्चतुर्थ्यन्तदिनैस्ततः। नरान्तकप्रभृतयो निहताः पञ्च राक्षसाः॥ पञ्चम्याः सप्तमी यावदतिकायवधस्त्र्यहात्। अष्टम्या द्वादशी यावन्निहतौ दिनपञ्चकात्॥ निकुम्भकुम्भावूर्ध्वं तु मकराक्षश्चतुर्दिनैः। फाल्गुनस्य द्वितीयायां कृष्णे शक्रजिता जितम्॥ तृतीयायास्तु सप्तम्यां हरयः पञ्चवासरात्। ओषध्यानयने व्यग्रास्तदासीदत्रहारकः॥ तत्र त्रयोदशीं यावद्दिनैः षड्भिस्तु शक्रजित्। लक्ष्मणेन हतो युद्धे विख्यितोऽभिचरन्क्रमात्॥ चतुर्दश्यां दशग्रीवो रणदीक्षाविधिक्रमात्। अमावास्यां ययौ वीरो युद्धाय दशकन्धरः॥ चैत्रशुक्लप्रतिपदः पञ्चमीदिनपञ्चकैः। रावणस्य प्रधानानां युध्यतामभवत्क्षयः॥ चैत्रषष्ठ्यष्टमी यावन्महापार्श्वादिमारणम्। चैत्रशुक्लनवम्यां तु सौमित्रेः शक्तिभेदनम्॥ द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः। दशम्यामवहारोऽभूद्रात्रौ युद्धं नृरक्षसोः॥ एकादश्यां तु रामाय रथो मातलिसारथिः। अष्टादशदिनै रामो द्वैरथे रावणं वधीत्॥ द्वादश्याः शुक्लपक्षस्य यावत्कृष्णचतुर्दशीम्। माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम्॥ अष्टाशीतिदिनं युद्धं मध्ये पञ्चदशाहकम्। युद्धावहारं सङ्ग्रामस्त्रिसप्ततिदिनान्यभूत्॥ संस्कारो रावणादीनाममावास्यादिनेऽभवत्। वैशाखादितिथौ रामः सुवेले पुनरागमत्॥ अभिषिक्तो द्वितीयायां लङ्काराज्ये बिभीषणः। सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम्॥ वैशाखस्य चतुर्थ्यां तु रामःपुष्पकमास्थितः। पूर्णे चतुर्दशे वर्षे पञ्चम्यां माधवस्य तु॥ भरद्वाजाश्रमं रामः ससीतः पुनरागमत्। नन्दिग्रामे तु षष्ठ्यां वै भरतेन समागतः॥ सप्तम्यामभिषिक्तोऽसावयोध्यायां रघूत्तमः। जानकी रामरहिता रावणस्य निवेशने॥ मनुमासान्स्थितापक्षदशवासरसंयुते॥' इति, तत्तु सर्वांशेऽनिश्चितप्रामाण्यम्। कालिकापुराणादिविरोधात्। इदं कल्पान्तरविषयमिति न युक्तम्। तद्विरोधादेव तस्मात्क्रियाविरोधे पुराणेषूपसंहार एव न्याय्यः शाखान्तरोक्ताङ्गोपसंहारवत्। यथा कुम्भकर्णवधोऽत्र रामेणोक्तो भारते लक्ष्मणेन तादृशे विषये, न तु कल्पभेदेन व्यवस्था। जन्मविषय एव तु हरिवंशोक्ता सेति बोध्यम्॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाधिकशततमः सर्गः॥ १०८॥

## नवाधिकशततमः सर्गः ।

भ्रातरं निहतमवलोकयतो बिभीषणस्यात्युत्कटो विलापः पश्चाद्रामेणौर्ध्वदेहिकसंस्कारकरणे स उपदिष्टः ।

भ्रातरं निहतं दृष्ट्वा शयानं निर्जितं रणे । शोकवेगपरीतात्मा विललाप बिभीषणः ॥ १ ॥
वीरविक्रान्त विख्यात प्रवीण नयकोविद । महार्हशयनोपेत किं शेषे [3]निहतो भुवि ॥ २ ॥
निक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ । मुकुटेनापवृत्तेन भास्कराकारवर्चसा ॥ ३ ॥
तदिदं वीर संप्राप्तं यन्मया पूर्वमीरितम् । काममोहपरीतस्य यत्तन्न रुचितं तव ॥ ४ ॥
यन्न दर्पात्प्रहस्तो वा नेन्द्रजिन्नापरे जनाः । न कुम्भकर्णोऽतिरथो नातिकायो नरान्तकः ॥
न स्वयं बहु मन्येथास्तस्योदर्कोऽयमागतः ॥ ५ ॥
गतः सेतुः सुनीतानां गतो धर्मस्य विग्रहः । गतः सत्त्वस्य संक्षेपः सुहस्तानां गतिर्गता ॥ ६ ॥
आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः । चित्रभानुः प्रशान्तार्चिर्व्यवसायो निरुद्यमः ॥
अस्मिन्निपतिते [9]वीरे भूमौ शस्त्रभृतां वरे ॥ ७ ॥

---

१] ति०टी०—अथ बिभीषणविलापः—भ्रातरमिति ॥१॥

रा० टी०—रावणविध्वंसहेतुकं विभीषणविलापमाह—भ्रातरमित्यादिभिः । विभीषणः रामेण निर्जितमत एव निहतं शयानं भ्रातरं रावणं दृष्ट्वा विललाप ॥ १ ॥

गो० टी०—अथ भ्रातृवधदर्शनेन हठात् प्रवृत्तं प्रकृतिसंबन्धकृतं शोकं सोढुमशक्नुवन् विभीषणो विलपति—भ्रातरमित्यादि । शयानं शयानमिव स्थितम् । शोकवेगपरीतात्मा शोकवेगेन परीतमनस्कः । वेगशब्देन हठकृतः शोक इति द्योत्यते ॥ १ ॥

२ ] ति० टी०—प्रवीण समर्थ ॥ २ ॥

३ ] ति० टी०—अपवृत्तेन रामबाणैस्त्याजितेन मुकुटेनोपलक्षितः ॥ ३ ॥

रा० टी०—विलापाकारमाह—वीरेत्यादिभिः । महार्हशयनाय उपेतो योग्यस्त्वं हतः अत एव अपवृत्तेन रामबाणैस्त्याजितेन भास्कराकारं वर्चो यस्य तेन मुकुटेन उपलक्षितस्सन् दीर्घनिश्चेष्टौ अत्यन्तं चेष्टारहितौ भुजौ निःक्षिप्य किं शेषे श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—वीरेत्यादि । विनीत विद्यासु शिक्षित विक्षिप्येत्यस्य श्लोकस्य पूर्वश्लोकेनान्वयः । भुजावित्यनेनान्त्ययुद्धे द्विभुजस्थितिर्गम्यते । मुकुटेन उपलक्षित इति शेषः । अपवृत्तेन पतनवेगादीषच्चलितेन ॥ २ ॥ ३ ॥

४ ] ति० टी०—यन्मया पूर्वमीरितं त्वन्निधनान्तसर्वरक्षोनाशरूपं तदिदं संप्राप्तम् । उक्तस्यैव विवरणम्—काममोहेति । काममोहपरीतस्य ते यन्मे वचो न रुचितम् ॥ ४ ॥

रा० टी०—तदिति । यद्यस्माद्धेतोः मया पूर्वमीरितं यद्वचः तत् काममोहपरीतस्य ते न रुचितं तत्तस्माद्धेतोः इदं मरणं संप्राप्तं त्वयेति शेषः ॥ ४ ॥

गो० टी०—तदिदमिति । मया पूर्वं समीरितं यद्वचः काममोहपरीतस्य ते न रुचितं नेष्टमासीत् । तदिदं वचः संप्राप्तं, त्वयानुभूतमित्यर्थः ॥ ४ ॥

५ ] ति० टी०—यत्र प्रहस्तादयो दर्पाद्वचो न बहुमन्यन्त स्वयं च वचो न बहु मन्येथास्तस्योदर्क उत्तरकालिकविपाकः आगतः प्राप्तः ॥ ५ ॥

रा० टी०—यदिति यद्यस्मात् दर्पात् बहु मदुक्तं प्रहस्तादयो नामन्यन्त त्वं च न मन्येथाः तस्य उदर्कः औत्तरकालिकफलमयमागतः प्राप्तः ॥ ५ ॥

गो० टी०—यदित्यादिसार्धश्लोक एकान्वयः । यत्पापकर्म प्रहस्तो दर्पात् नामन्यतेति विपरिणामेनानुषज्यते । एवं सर्वत्र योजनीयम् । अतिरथ इत्यतिकायविशेषणम् । अमन्येथाः अमन्यथाः एत्वमार्षम् । तूष्णीकृतवानसीत्यर्थः । तस्य सीताहरणरूपस्य, उदर्कः फलमागतम् ॥ ५ ॥

६ ] ति० टी०—सुनीतानां धार्मिकाणां सेतुर्गतः । विग्रहः स्वरूपम् । सत्त्वस्य बलस्य संक्षेपः संग्रहस्थानम् । सुहस्तानां वीराणाम् गतिर्गता प्राप्ता । त्वयेति शेषः ॥ ६ ॥

७ ] ति० टी०—अस्मिन्भूमौ पतिते सत्यादित्यभूमिपातादितुल्यं दृश्यते । व्यवसायः प्रवृत्तिलक्षणो धर्मः । निरुद्यमः । त्वत्तुल्याश्रयाभावान्निर्व्यापारोऽभूदित्यर्थः ॥ ७ ॥

रा० टी०—गत इति । अस्मिन् वेदवेदाङ्गपारगे शस्त्रभृतां वरे रावणे भूमौ निपतिते केन चित् निमित्तेन हते सतीत्यर्थः सुनीतानां सेतुर्मर्यादा गतः धर्मस्य विग्रहस्स्वरूप च गतः सत्वस्य बलस्य संक्षेपः प्रकाशो गतः प्रस्तवानां स्तुतीनां गतिविषयत्वं गता आदित्यो भूमौ पतितः चन्द्रमाः तमसि ग्रस्तः चित्रभानुरग्निः प्रशान्तार्चिः व्यवसायः उत्साहः निरुद्यमः निरर्थकः एतेनास्य महत्वं द्योतितम् श्लोकद्वयमेकान्वयि ॥६॥ ७ ॥

---

१ रामनिर्जितमिति गो. रा. पा. । २ विनीतेति गो. विनीतीति रा. पा. । ३ अचेति गो. रा. पा. । ४ वीति गो. पा. । ५ मया पूर्वं समिति गो. पा. । ६ ते न रुचितं वच इति गो. रा.पा. । ७ स्वममन्येथा इति । गो. पा. । ८ प्रस्तावानामिति गो.प्रस्तवानामिति च रा.पा. । ९ भूमौ वीरे इति गो. पा.।

किं शेषमिहलोकस्य गतसत्त्वस्य संप्रति। रणे राक्षसशार्दूले प्रसुप्त इव पांसुषु ॥ ८ ॥
धृतिप्रवालः प्रसभाग्र्यपुष्पस्तपोबलः शौर्यनिबद्धमूलः।
रणे महान्राक्षसराजवृक्षः संमर्दितो राघवमारुतेन ॥ ॥ ९ ॥
तेजोविषाणः कुलवंशवंशः कोपप्रसादापरगात्रहस्तः।
इक्ष्वाकुसिंहावगृहीतदेहः सुप्तः क्षितौ रावणगन्धहस्ती ॥ ॥ १० ॥
पराक्रमोत्साहविजृम्भितार्चिर्निःश्वासधूमः स्वबलप्रतापः।
प्रतापवान्संयति राक्षसाग्निर्निर्वापितो रामपयोधरेण ॥ ॥ ११ ॥

गो० टी०–गत इति। छनीतानां नयानां सेतुः मर्यादा। धर्मस्य विग्रहः विरोधः। यद्वा अधर्मस्येति छेदः। विग्रहः देहः। यद्वा धर्मस्य विग्रहः देहः। एषोग्निहोत्री च महातपाश्चेत्यादिना रावणस्य धार्मिकत्वकथनात्। सत्त्वस्य बलस्य, संक्षेपः संग्रहः। प्रस्तावानां प्रकृष्टस्तुतीनां गतिः विषयः ॥६॥

गो० टी०– आदित्य इत्यादिसार्धश्लोक एकान्वयः। अस्मिन्निति। अस्मिन्निपतिते आदित्यः पतित इत्यायभेदातिशयोक्तिः। चित्रभानुः वह्निः सर्यवह्नी चित्रभानू इत्यमरः। व्यवसायो निरुद्यमः। रावणसदृशाश्रयाभावाद्व्यवसायः उत्साहशक्तिः निर्व्यापारोभूदित्यर्थः ॥ ७ ॥ ८ ॥

८ ] ति० टी०–रणे त्वयि पांसुषु प्रसुप्त इव जाते। इह लङ्कायां वर्तमानस्य गतसत्त्वस्य गताधारबलस्य लोकस्य किं शेषम्, न किमपि। सर्वं नष्टमित्यर्थः ॥ ८ ॥

९ ] ति० टी०–धृतिर्धैर्यमेव प्रवाला यस्य सः। प्रसभो हठ एवाग्र्यं पुष्पं यस्य सः। तप एव बलं यस्य सः। शौर्यमेव निबद्धं दृढावस्थितिसाधनं मूलं यस्य सः ॥ ९ ॥

रा० टी०–किमिति। राक्षसशार्दूले त्वयि रणे पांसुषु प्रसुप्ते इव सति हतवीर्यस्य इह लङ्कायां विद्यमानस्य लोकस्य जनस्य किं शेषमवशिष्टं न किंचिदित्यर्थः ॥ ८ ॥

रा० टी०–धृतीति। धृतिर्धैर्यमेव प्रवालो नवपल्लवो यस्य प्रसहः प्रसहनमग्र्यं पुष्पं यस्य तप एव बलं स्थैर्यशक्तिर्यस्य शौर्यमेव निबद्धं दृढं मूलं यस्य सः महाराक्षसराजरूपो वृक्षः राघवमारुतेन रामरूपमहावातेन संमर्दितः ॥ ९ ॥

गो० टी०–किं शेषमिवेति। राक्षसशार्दूले रावणे पांसुषु प्रसुप्त इव स्थिते। मृत इति यावत्। सांप्रतं हतवीरस्य लोकस्य किमिव शेषम्। सर्वं शून्यनभूदित्यर्थः ॥ ९ ॥

गो० टी०–धृतीति। धृतिरेव प्रवालो यस्य स तथा। धैर्यं हि वृक्षस्य पल्लववत् प्रथमफलम्। प्रसहत इति प्रसहः पचाद्यच् भावप्रधानो निर्देशः स एव अग्र्यपुष्पं श्रेष्ठपुष्पं यस्य स तथा। प्रसहनं हि पुष्पवत्कार्यफलस्य अव्यवहितहेतुः। तप एव बलं स्थैर्यांशो यस्य स तथा। शौर्यमेव निबद्धमूलं निश्चलमूलं यस्य स तथा। शौर्यमूलत्वात् तपःप्रभृतीनां सर्वेषाम् ॥ १० ॥

१० ] ति० टी०–विषाणं दन्तः। कुलं पितृपैतामहादयस्तेषां वंशः समूह एव वंशः पृष्ठावयवविशेषो यस्य सः। 'वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च' इति विश्वः। कोपापरगात्रः कोप एवापरगात्रं पादाद्यवयवा यस्य सः। प्रसादहस्तः प्रसादः प्रसन्नतैव हस्तः शुण्डादण्ड इत्यर्थः। इक्ष्वाकुसिंहेन रामरूपसिंहेनावगृहीतः पातितो देहो यस्य सः ॥ १० ॥

रा० टी०–तेज इति। तेज एव विषाणो दन्तो यस्य कुलानि पितृपितामहादयस्तेषां वंशस्समूह एव वंशः पृष्ठैकदेशविशेषो यस्य कोपप्रसादौ अपरगात्रहस्तौ क्रमेण पादाद्यवयवशुण्डादण्डौ यस्य सः रावणगंधहस्ती इक्ष्वाकुसिंहेन अवगृहीतो देहो यस्य स सन् क्षितौ सुप्तः वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेपि चेति विश्वः ॥ १० ॥

गो० टी०–तेज इति। तेजः पराक्रम एव विषाणो यस्य स तथा। तेजो हि विषाणवत् परमर्मभेदि। कुलवंशवंशः कुलं पितृपितामहादयः तेषां वंशः सर्गः स एव वंशः पृष्ठावयवविशेषो यस्य स तथा। वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेपि चेत्युभयत्रापि विश्वः। कुलेन हि वंशेनेव स्वाश्रितधारणम्। कोप एवापरगात्रं शिरोव्यतिरिक्तशरीरं यस्य स तथा। प्रसाद एव हस्तो यस्य स तथा। कोपस्य बहुत्वादपरगात्रत्वेन रूपणम्। इक्ष्वाकुः रामः स एव सिंहः तेन अवगृहीतदेहः रावणगन्धहस्ती रावण एव मत्तगजः क्षितौ सुप्तः। मृत इत्यर्थः ॥ ११ ॥

११ ] ति० टी०–पराक्रमोत्साहरूपं विजृम्भितमर्चिर्यस्य सः। क्रोधजो निःश्वास एव धूमो यस्य सः। स्वबलमेव प्रतापो दाहशक्तिर्यस्य सः, अत एव प्रतापवान् ॥ ११ ॥

रा० टी०–पराक्रमेति। पराक्रमोत्साहौ विजृम्भितार्चिः प्रज्वलितज्वाला यस्य निश्वासः क्रोधोच्छ्वास एव धूमो यस्य स्वबलमेव प्रतापः दाहकत्वशक्तिर्यस्य अत एव प्रतापवान् राक्षसाग्निः रामपयोधरेण निर्वापितः ॥ ११ ॥

गो० टी०–पराक्रमेति। पराक्रमोत्साहावेव विजृम्भितार्चिः विस्तृतज्वालः। निश्वास एव धूमो यस्य स तथा। स्वबलप्रतापः स्वबलोष्णः। प्रतापवान् तेजस्वी। राक्षसाग्निः रामपयोधरेण निर्वापितः ॥ १२ ॥

१ इवेवि गो. रा. पाठः। २ हतवीरस्य साम्प्रतमिति गो. पाठः। ३ प्रसहेति गो. रा. पाठः।

सिंहर्क्षलाङ्गूलककुद्विषाणः पराभिजिद्गन्धनगन्धवाहः ।
रक्षोवृषश्चापलकर्णचक्षुः क्षितीश्वरव्याघ्रहतोऽवसन्नः ॥ ॥ १२ ॥
वदन्तं हेतुमद्वाक्यं परिदृष्टार्थनिश्चयम् । रामः शोकसमाविष्टमित्युवाच विभीषणम् ॥ १३ ॥
नायं विनष्टो निश्चेष्टः समरे चण्डविक्रमः । अत्युन्नतमहोत्साहः पतितोऽयमशङ्कितः ॥ १४ ॥
नैवं विनष्टाः शोच्यन्ते क्षत्रधर्मव्यवस्थिताः । वृद्धिमाशंसमाना ये निपतन्ति रणाजिरे ॥ १५ ॥
येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता । अस्मिन्कालसमायुक्ते न कालः परिशोचितुम् ॥ १६ ॥
नैकान्तविजयो युद्धे भूतपूर्वः कदाचन । परैर्वा हन्यते वीरः परान्वा हन्ति संयुगे ॥ १७ ॥

१२ ] ति० टी०—सिंहर्क्षा राक्षसास्त एव लाङ्गूलं ककुद्विषाणे च यस्य सः । 'सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा उष्णीषिणो मताः' इति निघण्टुः । पराभिजित्परजेता गन्धने पराक्रमायुत्साहे गन्धवाहो वायुतुल्यः । 'गन्धनगन्धवाहः' इति पाङ्कः पाठः । 'गन्धहस्ती' इति पाठे मत्तगजतुल्यः रक्षोवृषो रावणः चापलं धर्मादिविषयस्खलनमेव कर्णचक्षुर्यस्य । क्षितीश्वरव्याघ्रो रामव्याघ्रः ॥ १२ ॥

रा० टी०—सिंहेति । सिंहर्क्षा राक्षसा एव लाङ्गूलककुद्विषाणानि यस्य परान् रिपूनभिजयति गन्धने उत्साहे गन्धहस्ती मत्तगजसदृशः चापलं धर्मेभ्यः स्खलनमेव कर्णौ चक्षुषी च यस्य सः रक्षोवृषः राक्षसरूपबलीवर्दः क्षितीश्वरव्याघ्रेण रामरूपशार्दूलेनावसन्नो विनाशितः सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा उष्णीषिणो मता इति निघण्टुः गन्धनं सूचनोत्साहे हिंसने च प्रकाशन इति विश्वः ॥ १२ ॥

गो० टी०—सिंहेति । सिंहर्क्षा राक्षसाः त एव लाङ्गूलककुद्विषाणानि यस्य स तथा । सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा उष्णीषिणो मता इति निघण्टुः । यद्वा सिंहर्क्षं मूलानक्षत्रं तच्च राक्षसनक्षत्रम् । यथाह ज्योतिषे काश्यपः—अग्निर्मघा विशाखा च आश्लेषा शततारका । धनिष्ठा चित्रया युक्ता ज्येष्ठा मूला च राक्षसा इति । तत्सबन्धाद्राक्षसा अपि तच्छब्देनोच्यन्ते । राक्षससमृद्धेर्गर्वहेतुत्वेन लाङ्गूलादित्वेन रूपणम् । परानभिजयतीति पराभिजित् । गन्धने परोत्सादने गन्धहस्ती मुख्यः । गन्धनं सूचनोत्साहहिंसनेषु प्रकाशन इति विश्वः । चापलं विषयलौल्यम् तदेव कर्णचक्षुषी यस्य स तथा । रक्षो वृषः रावणवृषभः, क्षितीश्वरव्याघ्रेण रामशार्दूलेन, हतः अवसन्नः मृतः ॥ १३ ॥

१३ ] ति० टी०—परिदृष्टः प्रकाशमानोऽर्थनिश्चयो यस्मात्तत् ॥ १३ ॥

रा० टी०—वदन्तमिति । परिदृष्टः स्पष्टं प्रकाशितोऽर्थनिश्चयो यस्मात् तद्वाक्यं वदन्तं शोकसमाविष्टं विभीषणं राम इत्युवाच ॥ १३ ॥

गो० टी०—वदन्तमिति । परिसृष्टार्थनिश्चयं कृतार्थनिश्चयम् ॥ १४ ॥

१४ ] ति० टी०—अयं समरे निश्चेष्टोऽशक्तो भूत्वा न विनष्टः, अपि तु चण्डविक्रमत्वादिगुण एक एवायमशङ्कितो मृत्युशङ्कारहित एव दैवात्पतितः ॥ १४ ॥

रा० टी०—तदाकारमाह—नेति । समरे चण्डो विक्रमो यस्य अत्युन्नतो महोत्साहो यस्य अत एव अशंकितः पराभवशंकारहितः अयं मंगलविशिष्टं यथा भवति तथा पतितोयं निश्चेष्टोपि न विनष्ट. अयह्युभावहो विधिरिति कोशः ॥ १४ ॥

गो० टी०—नायमिति । अयं निश्चेष्टः निर्विक्रमः न विनष्टः, अपि त्वयं समरे चण्डविक्रमः अत्युन्नतमहोत्साहः अशङ्कितः पतितः विनष्टः ॥ १५ ॥

१५ ] ति० टी०—किं ततस्तत्राह—नैवमिति । वृद्धिं जयादिकमाशंसमानाः सन्तो ये रणाजिरे निपतन्ति । क्षत्रधर्मस्थिता एवं विनष्टास्ते न शोच्यन्ते पुण्यलोकप्राप्तेरिति भावः १५

रा० टी०—ननु प्रत्यक्षतो विद्यमानविनाशस्य कथमपलापः क्रियत इत्यत आह—नेति । ये क्षत्रधर्मव्यवस्थिताः अत एव वृद्धिं स्वविजयमाशंसमानाः रणाजिरे निपतन्ति ते एवं रणादन्यत्र निपतिता इव न शोच्यन्ते अत एव न विनष्टाः शिखी नष्ट इत्यादाविव विशेषणाभावप्रयुक्तो विशिष्टाभाव इत्यर्थः ॥ १५ ॥

गो० टी०—यदि समरे विक्रम्य नष्टः ततः किमित्यत्राह—नैवमित्यादि । ये वृद्धिं परलोकवृद्धिम्, आशंसमानाः आकाङ्क्षमाणाः सन्तः, रणाजिरे निपतन्ति । क्षत्रधर्ममवस्थिताः क्षत्रधर्मव्यवस्थिताः एवं विनष्टाः ते न शोच्यन्ते ॥१६॥

१६ ] ति० टी०—कालसमायुक्ते कालधर्मसंबद्धे । एवं दुर्गुणयुक्तस्य मरणमेव सम्यगिति भावः ॥ १६ ॥

रा० टी०—येनेति । येन युधि त्रयो लोकाः त्रासिताः तस्मिन् अस्मिन् रावणे कालेन युद्धनिमित्तकमरणेन समायुक्ते सति परिशोचितुं कालो न ॥ १६ ॥

गो० टी०—न केवलं समरमरणादेव न शोच्यत्वं किंतु यशःप्रत्यासक्त्यापीत्याह—येनेति । येन वित्रासिताः तस्मिन् रावणे कालसमायुक्ते शोचितुं न कालः नावसरः । तद्विषये शोको न युक्तः । वीरस्वर्गगमनादिति भावः ॥ १७ ॥

१७ ] ति० टी०—न भूतपूर्वं इत्येतदेवोपपादयति—परैरिति ॥ १७ ॥

१ हस्तीति गो. रा. पाठः । २ सृष्टेति गो. पाठः । ३ धर्ममवेति गो. पाठः । ४ तस्मिन्निति गो. पाठः ।

इयं हि पूर्वैः संदिष्टा गतिः क्षत्रियसंमता । क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ॥ १८ ॥
तदेवं निश्चयं दृष्ट्वा तत्त्वमास्थाय विज्वरः । यदिहानन्तरं कार्यं कल्प्यं तदनुचिन्तय ॥ १९ ॥
तमुक्तवाक्यं विक्रान्तं राजपुत्रं विभीषणः । उवाच शोकसंतप्तो भ्रातुर्हितमनन्तरम् ॥ २० ॥
योऽयं विमर्देष्वविभग्नपूर्वः सुरैः समस्तैरपि वासवेन ।
भवन्तमासाद्य रणे विभग्नो वेलामिवासाद्य यथा समुद्रः ॥ ॥ २१ ॥
अनेन दत्तानि वनीपकेषु भुक्ताश्च भोगा निभृताश्च भृत्याः ।
धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु निपातितानि ॥ ॥ २२ ॥
एषोऽहिताग्निश्च महातपाश्च वेदान्तगः कर्मसु चाग्र्यशूरः ।
एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात् ॥ ॥ २३ ॥

रा० टी०—ननु विजयाभावहेतुकः शोकः कर्तव्य एवेत्यत आह—नेति । वीरः परैर्हन्यते परान् हन्ति वा अतः एकान्तः एकनिष्ठत्वेन निश्चितो विजयः कदाचन न भूतपूर्वः एतेनावश्यं भाविनोऽर्थस्य शोको निरर्थक इति सूचितम् ॥ १७ ॥

गो० टी०—तथापि मरणे सति कथं न शोचितव्यमित्याशङ्क्य जयवत्पराजयोपि न शोकस्थानमित्याह—नैकान्तेति । एकान्तविजयः न भूतपूर्वः इतः पूर्वं न भूतः । अनैकान्त्यमुपपादयति—परैर्वेति ॥ १८ ॥

१८ ] ति० टी०—इयं हि या गतिरनेन प्राप्ता, इयं गतिः पूर्वैर्मन्वादिभिः संदिष्टोपदिष्टा क्षत्रियसंमता क्षत्रियपूजितोत्तमा गतिरेव । अतः संख्ये हतः क्षत्रियो न शोच्य इति निश्चयः॥१८॥

रा० टी०—एतादृशी मृतिः प्रशंसनीयेति बोधयन्नाह—इयमिति । इयं रणे मृतिः पूर्वैः मन्वादिभिस्संदिष्टा क्षत्रियाणां परमधर्मत्वेनोपदिष्टा अत एव क्षत्रियाणां सम्मता अभीप्सिता अत एव समरे निहतः क्षत्रियो न शोच्यः इति निश्चयः ॥ १८ ॥

गो० टी०—क्षत्रधर्मपर्यालोचनेनापि न शोच्य इत्याह—इयं हीति । क्षत्रियः शूरः ॥ १९ ॥

१९–२० ] ति० टी०—तत्तस्मादेवं निश्चयं दृष्ट्वा ज्ञात्वा तत्त्वमास्थाय निश्चितत्वमवलम्ब्यात्र यत्कल्प्यमनुष्ठेयं तदनुचिन्तय । 'सत्त्वमास्थाय' इति पाठे सत्त्वगुणमास्थायेत्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—तदिति । एवमुक्तप्रकारेण निश्चयं दृष्ट्वा ज्ञात्वा तत्त्वं यथार्थमार्गमास्थाय विज्वरश्शोकरहितस्त्वमिह अस्मिन् समये अनन्तरं विघ्नरहितं यथा भवति तथा यत् कार्यं कल्प्यं कर्तव्यं तदनुचिन्तय ॥ १९ ॥

रा० टी०—तमिति । विभीषणः उक्तवाक्यं राजपुत्रमनन्तरं तत्काले कर्तव्यं भ्रातुर्हितमुवाच ॥ २० ॥

गो० टी०—तदेवमिति । दृष्ट्वा ज्ञात्वा । तत्त्वमास्थाय परमार्थबुद्धिमवलम्ब्य । अनिमतामवश्यं मृत्युं ज्ञात्वेत्यर्थः । विज्वरः निःशोकः । यत् कार्यं कर्म कल्प्यम् अनुष्ठेयम् तदनुचिन्तय । कल्यमिति पाठे यत् कार्यं कल्यम् योग्यमित्यर्थः । कल्यो योग्यश्च ते समा इति निघण्टुः ॥ २०–२१ ॥

२१ ] ति० टी०—विमर्देषु युद्धेषु ॥ २१ ॥

रा० टी०—तदाकारमाह—य इति । योयं रावणः विमर्देषु समेतैस्सुरैस्सह वासवेनं भग्नपूर्वो न स रावणः भवन्तमासाद्य वेलामासाद्य समुद्र इव विभग्नः ॥ २१ ॥

गो० टी०—योयमिति । विमर्देषु समरेषु । अनेन महावीरतया सम्यक् संस्कारमर्हतीत्युक्तम् ॥ २२ ॥

२२ ] ति० टी०—वनीपकेषु याचकेष्वनेन दत्तानि । दानानीति शेषः । निभृता नितरां पोषिताः ॥ २२ ॥

२३ ] ति० टी०—एषोऽहिताग्निरित्यार्षः संधिः । आहिताग्निरिति छेदः । वेदान्तगोऽधीतोपनिषत्कः कर्मस्वग्निहोत्रादिषु अग्र्यशूरः परमानुष्ठाता परमकर्मठ इत्यर्थः ॥ २३ ॥

रा० टी०—अनेनेति । येनानेन दत्तानि दानानीति शेषः सुपूजितानि गुरुदैवतानीति शेषः भृत्याः निभृताः निरंतरं पालिताः अमित्रेषु रिपुषु वैराणि यापितानि य एष हिताग्निः आहिताग्निः सोलोपाभावस्तु सञ्ज्ञापूर्वकविधेरनित्यत्वात् कर्मसु यागादिषु अग्र्यशूरः उत्तमकर्ता तस्मै तस्य प्रेतं परलोकं गतस्य यत् कृत्यं तत् तव प्रसादात् आज्ञयेत्यर्थः कर्तुमिच्छामि श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०—धर्मशीलत्वाच्च तदर्हतीत्याह—अनेनेति । दत्तानि दानानि कृतानि । सुपूजितानि गुरुदैवतानीति शेषः । निभृताः नितरां भृताः । यापितानि सफलीकृतानीत्यर्थः॥२३॥

गो० टी०—आहिताग्न्यादित्वाच्च तदर्हतीत्याह—एषोहिताग्निरिति । हिताग्निः आहिताग्निः । संधिरार्षः । वेदान्तं गच्छति जानातीति वेदान्तगः । कर्मसु चाग्र्यवीर्यः कर्मशूर इत्यर्थः । प्रेतगतस्य प्रेतत्वं गतस्य इच्छामि । पुत्राणां विनष्टत्वेन भ्रातुरेवाधिकारित्वादिति भावः ॥ २४ ॥

१ विमर्देषु न भग्नेति गो. रा. पाठः । २ समेतैः सहेति गो. रा. पाठः । ३ सुपूजितानीति रा. सुपूर्वजानीति गो. पाठः । ४ च यापितानीति गो. रा. पाठः । ५ वीर्य इति गो. पाठः ।

स तस्य वाक्यैः करुणैर्महात्मा संबोधितः साधु बिभीषणेन ।
आज्ञापयामास नरेन्द्रसूनुः स्वर्गीयमाधानमदीनसत्त्वः ॥ ॥ २४ ॥
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् । क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २५ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवाधिकशततमः सर्गः ॥ १०९ ॥

## दशाधिकशततमः सर्गः ।

रावणपत्नीनां बिभीषणोपदेशमात्मनो हितकरमप्यननुसरतो बलाच्च सीतामपहृत्यापि न रामाय प्रत्यर्पयतो भवत ईदृशी समवस्था येन राक्षसा वयमात्मा च श्रयं तुल्यं निपातितमित्यादिविलापः ।

रावणं निहतं दृष्ट्वा राघवेण महात्मना । अन्तःपुराद्विनिष्पेतू राक्षस्यः शोककर्शिताः ॥ १ ॥
वार्यमाणाः सुबहुशो वेष्टन्त्यो रणपांसुषु । विमुक्तकेश्यः शोकार्ता गावो वत्सहता यथा ॥ २ ॥
उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः । प्रविश्यायोधनं घोरं विचिन्वन्त्यो हतं पतिम् ॥ ३ ॥
आर्यपुत्रेति वादिन्यो हा नाथेति च सर्वशः । परिपेतुः कबन्धाङ्कां महीं शोणितकर्दमाम् ॥ ४ ॥

२४ ] ति० टी०–तस्य स्वर्गीयं स्वर्गार्हमाधानं विधानं प्रेतकृत्यम् ॥ २४ ॥

रा० टी०–स इति । बिभीषणेन करुणैर्वाक्यैस्साधु सम्बोधितस्स रामः तस्य रावणस्य स्वर्गीयमाधानविधिमाज्ञापयामास ॥ २४ ॥

गो० टी०–स तस्येति । करुणैरित्यनेन दुःखातिशयादिदानीमेवमुक्तमिति द्योत्यते । वक्ष्यति हि नाहमस्य संस्कारं करिष्यामीति । स्वर्गीयं स्वर्गाय हितम् । आधानम् अन्त्येष्टिसंज्ञिकं कर्म ॥ २५ ॥

२५ ] ति० टी०–तवेव ममापि स्नेहविषयः, अतः संस्कारविषयां शङ्कां मा कुर्वित्यर्थः ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे नवाधिकशततम सर्गः ॥ १०९ ॥

रा० टी०–मरणान्तानीति । वैराणि मरणांतानि भवन्ति मरणानन्तरं वैरं न तिष्ठतीत्यर्थः नः प्रयोजनं च वृत्तं जातमतः एष रावणः यथा तव स्नेहविषयः तथा ममापि अतः अस्य संस्कारः क्रियताम् तथा ममापीत्यनेन रावणस्य स्वनित्यसखत्वं व्यञ्जितम् ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकादशाधिकशततमः सर्गः ॥ १११ ॥

गो० टी०–वैरातिरेकात् संस्कारे मम द्वेष इति न शङ्कनीयमित्याह—मरणेति । मरणानन्तरमपि वैरकरणं निष्प्रयोजनमित्याह–निर्वृत्तमिति । प्रयोजनं सीतालाभरूपम् । अस्य संस्कारः यायजूकोचितसंस्कारः क्रियताम् । ममाप्येष यथा तव तव यथा भ्राता तथा ममापि भ्राता मद्भ्रातृभूतस्य तव भ्रातृत्वात् । त्वमस्य दोषं दृष्ट्वा न करोषि चेदहमेव करिष्यामि भ्रातृषु येन केनापि कर्तव्यमिति भावः । अत्र श्लोके न इति गायत्र्यक्षरम् । अत्राचार्या व्याचख्युः । मरणान्तानि वैराणि ऋषिजनस्थानभंशमैथिलीहरणमत्प्राणभूतजटायुविध्वंसनप्रभृतिमद्द्वेषाचरणमितः परं कर्तुं न शक्नोति हीति भावः । निर्वृत्तं नः प्रयोजनम् । यदि वा रावणः स्वयमिति वदता मयास्य विषये किंचिच्छुभं कर्तव्यमिति मनसिकृतम् । तदनेन, द्विधा भज्येयमप्येवं न नमेयं तु कस्यचिदिति वदता प्रतिहतम् । तत्करणस्येदानीमवसरः संजात इति भावः । क्रियतामस्य संस्कारः । मत्कृतहितप्रतिषेधानर्हावस्था इदानीमस्य संजाता अतोयं न त्याज्यः । अतः परं यत्कर्तव्यं तत्कार्यमेव । ममाप्येष यथा तव । अयं मच्चित्तानुकूलो जातः अतो मन्मित्रभूतो भवानपि तमनुवर्तितुमर्हति । अथवा एष तव यथा तथा ममापि, अस्य संस्कारस्तव यथा प्राप्तः तथा ममापीत्यर्थः । भवानस्य संस्कारं न करोति चेदहमेव करोमि । बन्धुषु येन केनापि कर्तव्यं खल्विदं तद्दूरे तिष्ठ अहमेव करिष्यामीत्यर्थ इति ॥२६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वादशोत्तरशततमः सर्गः ॥११२॥

१ ] ति० टी०–रावणमिति ॥ १ ॥

रा० टी०–राक्षसीनां विलापं वर्णयितुमाह—रावणमित्यादिभिः । राक्षस्यः अन्तः पुरात् विनिष्पेतुः ॥ १ ॥

गो० टी०–अथ रावणान्तःपुरस्त्रीविलापः—रावणमित्यादिश्लोकद्वयमेकान्वयम् । वत्सहताः हतवत्साः ॥ १ ॥ २ ॥

२–४ ] ति० टी०–वार्यमाणाः पांसुवेष्टनाद्बहुशो निवार्यमाणा अपि रणपांसुषु वेष्टन्त्यः । वत्सहता हतवत्साः । अयमत्यासन्नवियोगजशोकमात्रे दृष्टान्तः ॥ २–४ ॥

रा० टी०–वार्य्यमाणा इति । वत्सहता गाव इव दुःखार्त्ताः अत एव क्षितिपांसुषु चेष्टन्त्यः उत्तरेण द्वारेण विनिष्क्रम्य आयोधनं संग्रामं प्रविश्य हतपतिं विचिन्वन्त्यः आर्य-

१ निर्वृत्तमिति गो. रा. पाठः । २ क्षितौति गो. रा. पाठः । ३ राजेति गो. पाठः ।

ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपराजिताः । करिण्य इव नर्दन्त्यः करेण्वो हतयूथपाः ॥ ५ ॥
ददृशुस्तं महाकायं महावीर्यं महाद्युतिम् । रावणं निहतं भूमौ नीलाञ्जनचयोपमम् ॥ ६ ॥
ताः पतिं सहसा दृष्ट्वा शयानं रणपांसुषु । निपेतुस्तस्य गात्रेषु छिन्ना वनलता इव ॥ ७ ॥
बहुमानात्परिष्वज्य काचिदेनं रुरोद ह । चरणौ काचिदालम्ब्य काचित्कण्ठेऽवलम्ब्य च ८ ॥
उत्क्षिप्य च भुजौ काचिद्भूमौ सुपरिवर्तते । हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥ ९ ॥
काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती । स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥ १० ॥
एवमार्ताः पतिं दृष्ट्वा रावणं निहतं भुवि । चुक्रुशुर्बहुधा शोकाद्भूयस्ताः पर्यदेवयन् ॥ ११ ॥
येन वित्रासितः शक्रो येन वित्रासितो यमः । येन वैश्रवणो राजा पुष्पकेण वियोजितः ॥ १२ ॥
गन्धर्वाणामृषीणां च सुराणां च महात्मनाम् । भयं येन रणे दत्तं सोऽयं शेते रणे हतः ॥ १३ ॥
असुरेभ्यः सुरेभ्यो वा पन्नगेभ्योऽपि वा तथा । भयं यो न विजानाति तस्येदं मानुषाद्भयम् ॥ १४ ॥
अवध्यो देवतानां यस्तथा दानवरक्षसाम् । हतः सोऽयं रणे शेते मानुषेण पदातिना ॥ १५ ॥
यो न शक्यः सुरैर्हन्तुं न यक्षैर्नासुरैस्तथा । सोऽयं कश्चिदिवासत्त्वो मृत्युं मर्त्येन लम्भितः ॥ १६ ॥
एवं वदन्त्यो रुरुदुस्तस्य ता दुःखिताः स्त्रियः । भूय एव च दुःखार्ता विलेपुश्च पुनः पुनः ॥ १७ ॥
अशृण्वता तु सुहृदां सततं हितवादिनाम् । मरणायाहृता सीता राक्षसाश्च निपातिताः ॥
एताः सममिदानीं ते वयमात्मा च पातितः । ॥ १८ ॥

पुत्रेति हा नाथेति च वादिन्यः सर्वशो राक्षस्यः कबंधैश्शिरोरहितैः अङ्कामङ्कितामत एव शोणितः कर्दमो यस्यां तां महीं परिपेतुः श्लोकत्रयमेकान्वयि ॥ २-४ ॥

गो० टी०—उत्तरेणेत्यादिश्लोकद्वयमेकान्वयम्। शोणितैः कर्दमो यस्यास्तां शोणितकर्दमाम् ॥ ३ ॥ ४ ॥

५-८ ] ति० टी०—हतयूथपाः करेण्व इव ददृशुः ॥५-८॥

रा० टी०—ता इति । हतयूथपाः करिण्य इव नर्दन्त्यस्ताः राक्षस्यो न रेजुः ॥ ५ ॥

गो० टी०—ता इति । हतयूथपा इति करेणुविशेषणम् । अत एव नर्दन्त्यः करेण्व इव विनेदुरित्यन्वयः ॥ ५-७ ॥

रा० टी०—ददृशुरिति । निहतं रावणं ददृशुः ॥ ६ ॥

रा० टी०—ता इति । ताः राक्षस्यः रणपांसुषु शयानं पतिं दृष्ट्वा छिन्ना वनलता इव तस्य गात्रेषु निपेतुः ॥ ७ ॥

रा० टी०—बहुमानादिति । परिष्वज्य रुरोद ॥ ८ ॥

गो० टी०—बहुमानादित्यादिश्लोकत्रयमेकान्वयम् । परिवर्तते वेष्टते । ईक्षती ईक्षमाणा ॥ ८-१० ॥

९ ] ति० टी०—सुपरिवर्तते लुण्ठति स्म ॥ ९ ॥

रा० टी०—उत्क्षिप्येति । काचित् भुजौ उत्क्षिप्य परिवर्त्तते स्म अलुण्ठत् ॥ ९ ॥

१०-१५ ] ति० टी०—स्नापयन्तीत्यत्र वैकल्पिकत्वात्पक्षे मित्वाभावः ॥ १०-१५ ॥

रा० टी०—काचिदिति । तुषारैः पङ्कजमिव बाष्पैर्मुखं स्नापयंती काचित् रुरोद ॥ १० ॥

रा० टी०—एवमिति । एवमार्त्ताः राक्षस्यः बहुधानेकप्रकारं चुक्रुशुः पर्य्यदेवयंश्च ॥ ११ ॥

गो० टी०—एवमिति । चुक्रुशुरिति । क्रोशः निरक्षरध्वनिः । परिदेवनम् साक्षरशब्दः ॥ ११-१३ ॥

रा० टी०—विलापप्रकारमाह—येनेत्यादिभिः । येन शक्रप्रभृतिर्वित्रासितः येन च गंधर्वप्रभृतीनां भयं दत्तं सोयं हतस्सन् शेते श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

रा० टी०—असुरेभ्य इति । यः असुरादिभ्यो भयं न विजानाति व्यजानात् तस्य इदं भयं मानुषात् प्राप्नोदिति शेषः १४

रा० टी०—अवध्य इति । सोयं मानुषेण हतः शेते १५

गो० टी०—असुरेभ्य इति । मानुषाद्भयम् । जातमिति शेषः ॥ १४ ॥ १५ ॥

१६-१७ ] ति० टी०—असत्त्वः कश्चिदिव दुर्बलः प्राकृतप्राणीव लम्भितः प्रापितः ॥ १६ ॥ १७ ॥

रा० टी०—य इति । असत्वः अल्पवीर्य इव मृत्युमर्त्येन मर्त्यरूपमृत्युना लम्भितो हिंसितः ॥ १६ ॥

गो० टी०—य इति । कश्चिदिव यः कश्चित् पुरुष इव, लम्भितः प्रापितः ॥ १६ ॥ १७ ॥

रा० टी०—एवमिति । एवं वदन्त्यः स्त्रियः पुनः पुनः रुरुदुः विलेपुश्च ॥ १७ ॥

१८ ] ति० टी०—सुहृदाम् । वाक्यमिति शेषः । एता वयं आत्मा च ते त्वयेदानीं सममेककाल एव पातितः ॥१८॥

१ करेण्व इति गो. पाठः। २ विनेदुरिति गो. न रेजुरिति रा. पाठः । ३ तामिति गो. रा. पाठः । ४ आलिङ्ग्येति गो. पाठः। ५ उद्धृत्येति गो. पाठः । ६ स्मेति गो. रा. पा. । ७ आवितात्मनामिति रा. पाठः । ८ महदिति गो. रा. पाठः । ९ न भयं य इति गो. पाठः । १० बहुधेति गो. रा. पाठः । ११ रुरुदुस्तस्य ता इति गो. रा. पाठः । १२ पातिताश्च निशाचरा इति गो. रा. पाठ. ।

ब्रुवाणोऽपि हितं वाक्यमिष्टो भ्राता विभीषणः । दृष्टं परुषितो मोहात्त्वयात्मवधकाङ्क्षिणा ॥ १९ ॥
यदि निर्यातिता ते स्यात्सीता रामाय मैथिली । न नः स्याद्व्यसनं घोरमिदं मूलहरं महत् ॥ २० ॥
वृत्तकामो भवेद्भ्राता रामो मित्रकुलं भवेत् । वयं चाविधवाः सर्वाः सकामा न च शत्रवः ॥ २१ ॥
त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात् । राक्षसा वयमात्मा च त्रयं तुल्यं निपातितम् ॥ २२ ॥
न कामकारः कामं वा तव राक्षसपुंगव । दैवं चेष्टयते सर्वं हतं दैवेन हन्यते ॥ २३ ॥
वानराणां विनाशोऽयं राक्षसानां च ते रणे । तव चैव महाबाहो दैवयोगादुपागतः ॥ २४ ॥
नैवार्थेन च कामेन विक्रमेण न चाज्ञया । शक्या दैवगतिर्लोके निवर्तयितुमुद्यता ॥ २५ ॥
विलेपुरेवं दीनास्ता राक्षसाधिपयोषितः । कुरर्य इव दुःखार्ता बाष्पपर्याकुलेक्षणाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

---

रा० टी०—अश्रृण्वतेति । सुहृदां वाक्यमिति शेषः अश्रृण्वता त्वया मरणाय स्वविनाशाय सीता आहृता अत एव निशाचरा घातिताः अत एव एतैः निशाचरैःसमं ते आत्मा शरीरं वयं च पातिताः सार्द्धश्लोक एकान्वयी ॥ १८ ॥

गो० टी०—अश्रृण्वतेति । सुहृदां सुहृद्भ्यः । पञ्चम्यर्थे षष्ठी । वचनमिति वा शेषः । अश्रृण्वता त्वया ॥ १८ ॥

१९ ] ति० टी०—हितं वाक्यं ब्रुवाणोऽपि यत्परुषित-स्तत्फलं दृष्टमित्यर्थः ॥ १९ ॥

रा० टी०—ब्रुवाण इति । हितं ब्रुवाणो विभीषणः यत्त्वया परुषितः तस्य दृष्टं फलमिदमिति शेषः ॥ १९ ॥

गो० टी०—एता इति । एताः वयं ते राक्षसाः आत्मा च समं युगपत् इदानीं पातिताः । मारिता इत्यर्थः । ब्रुवाण इति । इष्टः प्रीतिमान् ॥ १९ ॥

२० ] ति० टी०—यदि ते त्वया सीता निर्यातिता समर्पिता स्यात्तदा न इदं व्यसनं न स्यात् ॥ २० ॥

रा० टी०—यदीति । सीता रामाय ते त्वया निर्यापिता प्रेषिता यदि स्यात् तर्हि मूलहरं वंशविघातकं नो व्यसनं दुःखं न स्यात् ॥ २० ॥

गो० टी०—यदीत्यादिश्लोकद्वयमेकान्वयम् । ते त्वया । निर्यातिता प्रत्यर्पिता । मूलहरं मूलभूतत्वत्पर्यन्तहरम् । वृत्तेति ॥ यदि सीता निर्यातिता स्यात्तदा भ्राता विभीषणो वृत्तकामः निष्पन्नमनोरथः भवेत् । स्ववाक्यकरणादिति भावः । तथा रामः मित्रकुलं कुलमित्रम् । शत्रवः देवादयः ॥२०॥२१॥

२१–२२ ] ति० टी०—भ्राता वृत्तकामो निष्पन्नमनोरथः । स्ववाक्यकरणान्मित्रकुलं मित्रपक्षः । वयमविधवाः स्याम, शत्रवश्च सकामा न स्युः ॥ २१ ॥ २२ ॥

रा० टी०—वृत्तेति । भ्राता विभीषणः वृत्तकामः स्वप्रार्थितसीताप्रदानविषयकाभिलाषप्राप्तो यदि भवेत् तदा रामोपि मित्रकुलं मित्रपक्षो भवेत् वयं तु अविधवाः भवेम शत्रवः सकामा न भवेयुः ॥ २१ ॥

रा० टी०—त्वयेति । त्वया राक्षसादयः तुल्यमेककालावच्छेदेन निपातिताः ॥ २२ ॥

गो० टी०—त्वयेति । तुल्यमिति । युगपदित्यर्थः ॥ २२ ॥

२३ ] ति० टी०—एवं रावणीयस्वेच्छाचरणस्य नाशहेतुताभुक्त्वेदानीं तन्निरासपूर्वकं दैवस्य तत्कारणत्वं दर्शयन्ति—नेति । कामं पर्याप्तम् । तव न कामकारो न त्वदिच्छाप्रवर्तितोऽयं व्यवहारः । कुतो यतो दैवं सर्वं प्राणिजातं चेष्टयते तत्तत्कर्मानुसारेण, अतो दैवहतमेव केनचिन्निमित्तेन हन्यते ॥ २३ ॥

रा० टी०—नेति । तव कामकारः स्वेच्छाचरणं कामं त्वदिच्छा वा तव न त्वदधीनं नास्ति तत्र हेतुः यतो दैवमेव चेष्टयते कर्मसु प्रवर्तयति अतो दैवेन पूर्वं हतमेव हन्यते ॥२३॥

गो० टी०—एवं रावणस्वेच्छाचरणस्य राक्षसनाशहेतुतामभिधाय संप्रति तन्निरासपूर्वकं दैवकारितत्वं दर्शयन्ति—न कामकार इति । कामकारः स्वच्छन्दकरणम्, कामं प्रकामं नास्ति । कुतः दैवं चेष्टयते, सर्वं हतं दैवेन हन्यते । दैवेन हतमन्येन हन्यते ॥ २३ ॥ २४ ॥

२४ ] ति० टी०—ते तव रणे वानराणां राक्षसानां तव चायं विनाशो दैवादुपागतः ॥ २४ ॥

रा० टी०—वानराणामिति । वानरादीनां विनाशः दैवयोगात् उपागतः प्राप्तः ॥ २४ ॥

२५–२६ ] ति० टी०—अर्थेन धनेन । कामेनेच्छया । आज्ञया मर्यादाव्यवस्थापनशक्त्या । उद्यता फलोन्मुखीभूता ॥ २५ ॥ २६ ॥

इति श्रीमद्वाल्मीकीये रामायणव्याख्याने रामायणतिलके युद्धकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

रा० टी०—नेति । उद्यता दैवगतिः अर्थादिना निवर्तयितु न शक्या ॥ २५ ॥

गो० टी०—नैवेति । उद्यता कार्योन्मुखी दैवगतिः अर्थादिना न निवर्तयितुं शक्या । कामेन स्वेच्छया ॥ २६ ॥

---

१ धृष्टमिति गो. पा. २ रक्षसां च महाहवे इति गो. पाठः ।

# एकादशाधिकशततमः सर्गः ।

मन्दोदर्या दशाननज्येष्ठपत्न्याः श्रोतृहृदयदारणोऽनिवार्यशोकपरिपूर्णः सीतापातिव्रत्यप्रशस्तिगर्भः सुनीतिभूयिष्ठः श्रीचाञ्चल्यानुमतिदर्शकः स्खलितधैर्यो विलापः रामानुमतबिभीषणकृतरावणप्रेतसंस्कारश्च ।

तासां विलपमानानां तदा राक्षसयोषिताम् । ज्येष्ठपत्नी प्रिया दीना भर्तारं समुदैक्षत ॥ १ ॥
दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा । पतिं मण्डोदरी तत्र कृपणा पर्यदेवयत् ॥ २ ॥
ननु नाम महाबाहो तव वैश्रवणानुज । क्रुद्धस्य प्रमुखे स्थातुं त्रस्यत्यपि पुरंदरः ॥ ३ ॥
ऋषयश्च महान्तोऽपि गन्धर्वाश्च यशस्विनः । ननु नाम तवोद्वेगाच्चारणाश्च दिशो गताः ॥ ४ ॥
स त्वं मानुषमात्रेण रामेण युधि निर्जितः । न व्यपत्रपसे राजन्किमिदं राक्षसेश्वर ॥ ५ ॥
कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितम् । अविषह्यं जघान त्वां मानुषो वनगोचरः ॥ ६ ॥
मानुषाणामविषये चरतः कामरूपिणः । विनाशस्तव रामेण संयुगे नोपपद्यते ॥ ७ ॥
न चैतत्कर्म रामस्य श्रद्दधामि चमूमुखे । सर्वतः समुपेतस्य तव तेनाभिमर्षणम् ॥ ८ ॥

रा० टी०—विलेपुरिति । दीनाः राक्षसाधिपयोषितः एवं विलेपुः ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्वादशाधिकशततमः सर्गः ॥ ११२ ॥

गो० टी०—विलेपुरिति । कुररयः क्रौञ्च्यः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

१ ] ति० टी०—तासामिति ॥ १ ॥

रा० टी०—सोपक्रमं मन्दोदरीविलापमाह—तासामित्यादिभिः । विलपमानानां रावणयोषितां मध्ये ज्येष्ठा पत्नी भर्तारं समुदैक्षत ॥ १ ॥

गो० टी०—अथ मण्डोदरीप्रलापादि—तासामित्यादि । विलपमानानां विलपन्तीनाम् तथा विलपमानानामित्यन्वयः । दीना सती समुदैक्षत ॥ १ ॥

२ ] ति० टी०—मण्डोदरी मण्डनभूतोदरी । कृशोदरीत्यर्थः । 'मन्दोदरी' इति पाठेऽप्ययमेवार्थः ॥ २ ॥

रा० टी०—दशग्रीवमिति । रामेण हतं दशग्रीवं दृष्ट्वा कृपणा मन्दोदरी पर्यदेवयत् ॥ २ ॥

गो० टी०—दशग्रीवमिति । मण्डोदरी मण्डनभूतोदरी । कृशोदरीति यावत् । "मडि, भूषायाम्" इति धातोर्भावे कप् प्रत्ययः । मण्डं सारं सुन्दरमिति यावत् । तादृशोदरीत्येके । मण्डा पृथुपिपीलिका तस्या इव उदरं यस्याः सा मण्डोदरीत्यप्याहुः ॥ २ ॥

३ ] ति० टी०—पुरन्दरोऽपि त्रस्यति ॥ ३ ॥

४ ] ति० टी०—तवोद्वेगात्त्वत्त उद्वेगं प्राप्य ॥ ४ ॥

रा० टी०—तदाकारमाह—नन्वित्यादिभिः । क्रुद्धस्य तव प्रमुखे स्थातुं पुरंदरोपि त्रस्यति ॥ ३ ॥

रा० टी०—ऋषय इति । तवोद्वेगात् त्वद्धेतुकोद्वेगं प्राप्य ऋषिप्रभृतयो दिशो गताः ॥ ४ ॥

गो० टी०—यद्यपि समरमरणं शूराणां श्लाघ्यमिति न वीरपत्नी तच्छोचितुमर्हा, तथाप्यसमानान्मानुषात् प्राप्तमिदं लज्जावहमिति—शोचति । ननु नाम तवेत्यादिना सार्धश्लोकेन ॥ नाम प्रसिद्धौ । महीदेवाः ब्राह्मणाश्च । त्रस्यन्तीत्यनुषङ्गः । स कथं मानुषेण जित इति शेषः ॥ ३ ॥ ४ ॥

गो० टी०—ननु नामेत्यादिसार्धश्लोक एकान्वयः ॥ चारणाश्च आकाशचारिणश्च । न व्यपत्रपसे । मानुषविजयेनेति शेषः । किमिदं किमेवमवस्थानकारणमित्यर्थः ॥ ५ ॥

६–५ ] ति० टी०—वीर्येण त्रैलोक्यमाक्रम्य श्रियान्वितं त्वां मानुषो जघानेति यदत्र किमिति न व्यपत्रपसे ॥ ५ ॥ ६ ॥

रा० टी०—स इति । सः सर्वेषां जेता मानुषमात्रेण निर्जितस्त्वं न व्यपत्रपसे इदं किमाश्चर्यमित्यर्थः ॥ ५ ॥

रा० टी०—कथमिति । त्रैलोक्यमाक्रम्य विद्यमानमत एव श्रिया वीर्येण चान्वितमत एव अविषह्यं त्वां मानुषः कथं जघान ॥ ६ ॥

गो० टी०—कथमिति । वीर्येण त्रैलोक्यमाक्रम्य श्रियान्वितं त्वां मानुषस्तत्रापि वनगोचरः कथं जघान । अद्भुतमित्यर्थः ॥ ६ ॥

७ ] ति० टी०—मानुषाणामविषयेऽगोचरे । लङ्काद्वीपरूपे देशे इत्यर्थः ॥ ७ ॥

रा० टी०—मानुषाणामिति मानुषाणामविषये देशे चरतः कालरूपिणस्तव रामेण विनाशो नोपपद्यते ॥ ७ ॥

गो० टी०—तदेवासंभावितत्वं निरूपयति—मानुषाणामिति । अविषये अगम्यदेशे ॥ ७ ॥

८ ] ति० टी०—सर्वतः समुपेतस्य जयोपेतस्य तव तेन रामेण यदभिमर्षणं प्रधर्षणमेतद्रामस्य कर्मेति न श्रद्दधामि॥८॥

१ महात्मान इति रा. महीदेवा इति गो. पाठः । २ ऋषभेति गो. पाठः । ३ मर्षणमितिगो. रा. पाठः ।

[ यदैव च जनस्थाने राक्षसैर्बहुभिर्वृतः । खरस्तव हतो भ्राता तदैवासौ न मानुषः ॥
यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि । प्रविष्टो हनुमान्वीर्यात्तदैव व्यथिता वयम् ॥
यदैव वानरैर्घोरैर्बद्धः सेतुर्महार्णवे । तदैव हृदयेनाहं शङ्के राममानुषम् ॥ ]
अथवा रामरूपेण कृतान्तः स्वयमागतः । मायां तव विनाशाय विधायाप्रतितर्किताम् ॥ ९ ॥
अथवा वासवेन त्वं धर्षितोऽसि महाबल । वासवस्य तु का शक्तिस्त्वां द्रष्टुमपि संयुगे ॥ १० ॥
महाबलं महावीर्यं देवशत्रुं महौजसम् । व्यक्तमेष महायोगी परमात्मा सनातनः ॥ ११ ॥
अनादिमध्यनिधनो महतः परमो महान् । तमसः परमो धाता शङ्खचक्रगदाधरः ॥ १२ ॥

रा० टी०—नेति । सर्वतः निखिलयुद्धोपकरणैस्समुपेतस्य युक्तस्य तव तेन रामेण अभिमर्शनं विनाशः यदेतत् तत् रामस्य कर्मेति न श्रद्दधामि ॥ ८ ॥

गो० टी०—न चैतदिति । सर्वतः समुपेतस्य सर्वयुद्धोपकरणैः पूर्णस्य तव, तेन रामेण अभिमर्शनम् आक्रमणमिति यत्, एतद्रामस्य न श्रद्दधामि रामसंबन्धिकर्मेति न श्रद्दधामि ८

९ ] ति० टी०—ननु प्रत्यक्षसिद्धे कथमश्रद्धेत्यरुच्या पक्षान्तरम्—अथवेति । तव नाशायाप्रतितर्कितामचिन्तनीयोपपत्तिकां मायां विधाय कृतान्तो रामरूपेणागत इति मन्ये इति शेषः ॥ ९ ॥

रा०टी०—अथवेति । तव विनाशाय अप्रतितर्कितां मायां विधाय स्वीकृत्य रामरूपेण कृतान्तः काल एव स्वयमागतः॥९॥

गो० टी०—रावणवधस्य मानुषेणाकृतत्वे केन कृतः स्यादित्याशङ्क्य पक्षान्तरमुपक्षिपति—यदैवेत्यादिना ॥९–११

१० ] ति० टी०—अथवा रामरूपेण वासवेन त्वं धर्षितोऽसि । एतन्नोपपद्यत इत्याह—वासवस्येति । महाबलत्वादिविशेषणं त्वां द्रष्टुमपि वासवस्य तु कुतः शक्तिः ॥ १० ॥

रा० टी०—अथवेति । अथवा रामरूपेण वासवेन त्वं धर्षितोसि इदन्नोपपद्यते इत्याह त्वां द्रष्टुमपि वासवस्य न शक्तिः कुतो धर्षणमिति शेषः ॥ १० ॥

गो० टी०—एवं सामान्यतो रामस्यामानुषत्वं प्रतिपाद्य उत्तरोत्तरोत्कृष्टयमेन्द्रादिदेवताविशेषत्वं प्रतिपादयति—अथवेत्यादिना । मायां सीतारूपाम् । अप्रतितर्किताम् अपरिमेयरूपलावण्याम् ॥ १२ ॥

११ ] ति० टी०—अतः—व्यक्तमित्यादि । सत्यमेव मन्दोदरी जानीते भगवत्कृपया । महायोगी स्वाभाविकसर्वशक्तियुक्तः परमात्मा आत्मनामप्यात्मा सर्वान्तर्यामीत्यर्थः । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति श्रुतेः । सनातनः सदास्तित्वयुक्तः ॥ ११ ॥

१२ ] ति०टी०—अनादिमध्यनिधनो जन्मवृद्धिनाशहीनः । महतः परमो महान्महतो महीयान् । तमसः परमः प्रकृतेः प्रवर्तकः । 'तपसः परमः' इति पाठे सर्वतः फलद इत्यर्थः । धाता स्रष्टा । 'यतो वा इमानि भूतानि जायन्ते' इत्युक्तेः । इदानीं विग्रहगुणानाह—शङ्खेत्यादि ॥ १२ ॥

रा० टी०—व्यक्तमिति । आदिमध्यनिधनरहितः अत एव शाश्वतो नित्यः तमसः अविद्यायाः परा मा सम्पत्तिर्यस्य सः अत एव नित्या श्रीर्विभूतिर्यस्य अत एव महतः ब्रह्मादेः परा मा यस्य अत एव महान् धाता स्वतनुप्रकाशद्वारा सर्वाश्रयः शंखचक्रगदो विष्णुरपि अधरः किञ्चिन्न्यूनो यस्मात् श्रीवत्सयुक्तं वक्षो यस्य अजय्यः सर्वैर्जेतुमशक्यः ध्रुवः सर्वत्र परिपूर्णः महान् अनिवार्यः यो योग उद्योगः तद्वान् सनातनः सनं ब्रह्माणमातनोतीति सनातनः सत्यपरान् आक्रमते अतिसत्यवक्तेत्यर्थः विष्णुर्व्यापकः अत एव सर्वलोकेश्वरः श्रीमान् अतिशोभाविशिष्टः एव परमात्मा मानुषं रूपमास्थाय प्रकट्य वानरत्वमुपागतैः देवैः परिवृतस्सन् लोकानां हितकाम्यया सराक्षसपरीवारं त्वां हतवान् व्यक्तं स्फुटमेतत् सार्द्धश्लोकचतुष्टयमेकान्वयि ॥ ११–१४ ॥

गो० टी०—यदैवेत्यादिना सामान्यतोपन्यस्तममानुषत्वमेकत्र व्यवस्थापयितुमाह—व्यक्तमित्यादिना । महायोगित्वादिगुणविशिष्टो यो विष्णुः स एवैष राम इति श्रीवचनमुखेनैव विष्णोः सर्वदेवतापारम्यं भगवान् वाल्मीकिर्व्यवस्थापयति । महान् योगः लोकरक्षणोपायचिन्ता सोस्यास्तीति महायोगी । परमश्चासावात्मा च परमात्मा । सर्वजीवात्मभ्य उत्कृष्ट इत्यर्थः । परमत्वमस्य कथमित्याशङ्क्य षड्भावविकाररहितत्वादित्याह—सनातन इति । सदास्तित्वयुक्त इत्यर्थः अनादिमध्यनिधनः जन्मवृद्धिविनाशशून्यः शाश्वतः अपक्षयरहितः ध्रुवः परिणामरहितः । एतैर्विशेषणैर्जीवगतषड्भावविकारशून्यत्वमुक्तम् । तथोक्तं विष्णुपुराणे—अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः । वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् इति ॥ परमात्मशब्दार्थं विवृणोति—महतः परमो महानिति । महान् इन्द्रादिः तस्मान्महान् ब्रह्मादिः तस्मादपि महानित्यर्थः । स्थानविशेषेणापि परमत्वमाह—तमस इति । तमसः प्राकृतमण्डलस्य, परमः परस्तादप्राकृते वैकुण्ठे विद्यमानः । "आदित्यवर्णं तमसः परस्तात्" "आदित्यवर्णं तमसस्तु पारे" इति श्रुतेः । सर्वत्र व्याप्तस्य कथं तत्रावस्थानमित्याशङ्क्य विग्रहद्वारेत्याह—शङ्खेत्यादिना । सदा शङ्खचक्रधारणप्रयोजनमाह–धातेति । धाता पोषकः । "डुधाञ्, धारणपोषणयोः" इत्यस्मात्तृच् । सर्वदा रक्षणार्थमायुधधार-

१ कुण्डलितश्लोकाः गो. पाठेऽधिकाः परमाधिमंदधमंशभिन्नममे दृश्यते । २ इदमर्धं गो. रा. पुस्तकयोर्न दृश्यते ।

श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः । मानुषं रूपमास्थाय विष्णुः सत्यपराक्रमः ॥ १३ ॥
सर्वैः परिवृत्तो देवैर्वानरत्वमुपागतैः । सर्वलोकेश्वरः श्रीमाँल्लोकानां हितकाम्यया ॥ १४ ॥
स राक्षसपरीवारं देवशत्रुं भयावहम् । इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया ॥ १५ ॥
स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः । यदैवं हि जनस्थाने राक्षसैर्बहुभिर्वृतः ॥ १६ ॥
खरस्तु निहतो भ्राता तदा रामो न मानुषः । यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि ॥ १७ ॥
प्रविष्टो हनुमान्वीर्यात्तदैव व्यथिता वयम् । क्रियतामविरोधश्च राघवेणेति यन्मया ॥ १८ ॥
उच्यमानं न गृह्णासि तस्येयं व्युष्टिरागता । अकस्माच्चाभिकामोऽसि सीतां राक्षसपुंगव ॥ १९ ॥
ऐश्वर्यस्य विनाशाय देहस्य स्वजनस्य च । अरुन्धत्या विशिष्टां तां रोहिण्याश्चापि दुर्मते ॥ २० ॥
सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम् । वसुधाया हि वसुधां श्रियाः श्रीं भर्तृवत्सलाम् ॥ २१ ॥

---

णमित्यर्थः । तथोक्तमभियुक्तैः—पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पञ्चायुधी बिभ्रत्स नः श्रीरङ्गनायक इति ॥ तस्य सर्वेश्वरत्वद्योतकं लक्षणमाह—श्रीवत्सवक्षा इति । श्रीकरो वत्सः श्रीवत्सः स च रक्तवर्णो मत्स्यविशेषः, सः वक्षसि दक्षिणे यस्य स श्रीवत्सवक्षाः । जगद्रक्षणोपयोगिपुरुषकारसंबन्धमाह—नित्यश्रीरिति । नित्या अनपायिनी श्रीर्यस्यासौ नित्यश्रीः । विष्णोः श्रीरनपायिनीत्यन्यत्रोक्तेः । अत एवाजय्यः जेतुमशक्यः । "क्षय्यजय्यौ शक्यार्थे" इति निपातनात् । एष रामः एवंभूतः परमात्मा, व्यक्तं निश्चितमिति संबन्धः ॥ १४ ॥१५॥

१३-१४] ति० टी०—नित्यश्रीरनपायिलक्ष्मीकः । अजय्यो जेतुमशक्यः । शाश्वतोऽपक्षयरहितः । ध्रुवः परिणामशून्यः । अनेन षड्भावविकारशून्यत्वमुक्तम् । महायोगित्वादिविशेषणविशिष्टो यो विष्णुः स एव राम इत्यर्थः ॥ १३ ॥ १४ ॥

गो० टी०—एवंभूतस्य परमात्मनः किमर्थमेवं व्यापार इत्यत्राह द्वाभ्याम्—मानुषमित्यादि । सर्वलोकेश्वरः सर्वलोकानां नियन्ता अनिष्टनिवृत्तीष्टप्रापणयोः कर्ता । विष्णुः विष्णुसकाशादविनाशित्ववरं परिहर्तुं मानुषं वपुः आस्थाय परिगृह्य, साक्षात् अव्यवधानेन, लोकानां हितकाम्यया लोकहितेच्छया, सर्वलोकविरोधिनं त्वां हतवान् । व्यक्तमित्यत्रानुषज्यते ॥ १६ ॥ १७ ॥

१५ ] ति० टी०—सराक्षसपरीवारं राक्षसरूपपरीवारसहितम् । हतवानिति शेषः । देवशत्रुं भयावहमित्यनेन भगवतो वैषम्यनैर्घृण्ये परिहृते । अवतारप्रयोजनं रावणवधप्रयोजनं च देवभयनिवृत्तिरूपं दर्शितम् । पुरा भगवदुद्देशेन तपोनुष्ठानकाले ॥ १६ ॥

रा० टी०—इन्द्रियाणीति । पुरा तपश्चरणसमये इन्द्रियाणि जित्वा त्रिभुवनं त्वया जितं तद्वैरं स्मरद्भिरिव इन्द्रियैर्मैवप्रभृतिभिः त्वं निर्जितः ॥ १६ ॥

गो० टी०—स्वदोषकृत एवायं वध इत्याह—इन्द्रियाणीति ॥ १८ ॥

१६-१८ ] ति० टी०—तद्वैरं स्वजयनिमित्तं वैरं स्मरद्भिरिन्द्रियैरकर्मप्रवृत्तिसंपादनेन निर्जितः ॥ १६-१८ ॥

रा० टी०—यदेति । यदा यतः खरो निहतः तदा ततः रामो मानुषः प्राकृतमनुष्यो न विलक्षणदिव्यपुरुष इत्यर्थः ॥ १६ ॥

रा० टी०—यदेति । यदा लङ्कां हनुमान् प्रविष्टः तदैव वयं व्यथिताः ॥ १७ ॥

रा० टी०—क्रियतामिति । राघवेण सह अविरोधः सीतासमर्पणेन विरोधाभावः क्रियतामिति वचः मया उच्यमानस्त्वं यन्नगृह्णासि अगृह्णाः तस्येयं व्युष्टिः फलमागता॥१८॥

गो० टी०—एवं सर्वज्ञा त्वं पूर्वं किमिति नोक्तवतीत्यत्राह—क्रियतामिति । न गृह्णासि नागृह्णाः । व्युष्टिः फलम् । व्युष्टिः फले समृद्धौ चेत्यमरः ॥ १९ ॥

१९-२० ] ति० टी०—व्युष्टिः फलम् । सीतां प्रत्यभिकामः कामुकः ॥ १९ ॥ २० ॥

रा० टी०—अकस्मादिति । ऐश्वर्यादेर्विनाशाय सीतां तदानयनं प्रति अकस्मादभिलाषः इच्छावानसि ॥ १९ ॥

गो० टी०—अकस्मादिति । अकस्मान्निर्हेतुकं सीतामुद्दिश्य अभिकामोसि अभिलाष्यसि, तां प्रति त्वदभिलाषः अयुक्त इत्यर्थः ॥ २० ॥

रा०टी०—अरुन्धत्येति । अरुंधत्या रोहिण्याश्च मान्यामत एव विशिष्टां सीतां धर्षयता हर्त्रा त्वया असदृशमयोग्यं कृतम् २०

गो० टी०—अयुक्ततामेवाह—अरुन्धत्या इति । विशिष्टाम् उत्कृष्टाम् । मान्यामित्यनेन न केवलमरुन्धत्यादिवत् पातिव्रत्यमात्रं, किंतु मातृत्वं चेत्युच्यते । असदृशम् अनुचितम् ॥२१॥

२१ ] ति० टी०—मान्यामुपास्यदेवताम् । वसुधायाः सर्वक्षमावन्निदर्शनभूताया वसुधां निदर्शनभूमिम् । एवं सर्वसौभाग्ययुक्तानां निदर्शनभूतश्रियोऽपि निदर्शनभूताम् ॥ २१ ॥

रा० टी०—वसुधाया इति । वसुधायाः सकलजगदाश्रयभूतक्षितेः वसुधामाश्रयं श्रियः लक्ष्म्या अपि श्रियं पूज्यामित्यर्थः अत एव सर्वानवद्याङ्गीं सर्वस्मिन् काले सर्वदोषरहिताङ्गविशिष्टां सीतां विजने विरुद्धजनसहिते अरण्ये छद्मना आनयित्वा आनीय आत्मनः स्वेषां स्वकीयानां च दूषणं विनाशः कृतमिति शेषः सार्धश्लोक एकान्वयी ॥ २१ २२ ॥

---

१ साक्षादिति गो. पाठः । २ हतवांस्त्वां महाद्युतिरिति गो. रा. पाठः । ३ इदं पद्यद्वयं गो. पुस्तके अत्र न दृश्यते । पूर्वं गतमत्रैव सर्गे

सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम् । आनयित्वा तु तां दीनां छद्मनात्मस्वदूषणम् ॥ २२ ॥
अप्राप्य तं चैव कामं मैथिलीसंगमे कृतम् । पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो ॥ २३ ॥
तदैव यन्न दग्धस्त्वं धर्षयंस्तनुमध्यमाम् । देवा बिभ्यति ते सर्वे सेन्द्राः साग्निपुरोगमाः॥ २४ ॥
अवश्यमेव लभते फलं पापस्य कर्मणः । भर्तः पर्यागते काले कर्ता नास्त्यत्र संशयः ॥ २५ ॥
शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते । विभीषणः सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् ॥ २६ ॥
सन्त्यन्याः प्रमदास्तुभ्यं रूपेणाभ्यधिकास्ततः । अनङ्गवशमापन्नस्त्वं तु मोहान्न बुद्ध्यसे ॥ २७ ॥
न कुलेन न रूपेण न दाक्षिण्येन मैथिली । मयाधिका वा तुल्या वा तत्तु मोहान्न बुद्ध्यसे ॥ २८ ॥
सर्वदा सर्वभूतानां नास्ति मृत्युरलक्षणः । तव तद्वदयं मृत्युर्मैथिलीकृतलक्षणः ॥ २९ ॥
सीतानिमित्तजो मृत्युस्त्वया दूरादुपाहृतः । मैथिली सह रामेण विशोका विहरिष्यति ॥ ३० ॥
अल्पपुण्या त्वहं घोरे पतिता शोकसागरे । कैलासे मन्दरे मेरौ तथा चैत्ररथे वने ॥ ३१ ॥

गो० टी०—सा पतिव्रता चेत् किमर्थं न दग्धवतीत्यत्राह—वसुधाया इत्यादिसार्धश्लोकद्वयेन । वसुधायाश्च वसुधाम् अत्यन्तक्षमावतीमित्यर्थः । श्रीमित्यत्र इयङभाव आर्षः । सर्वसंपदधिष्ठात्रीमित्यर्थः । भर्तृवत्सलां पतिव्रताम् सर्वानवद्याङ्गीं अनवद्यसर्वाङ्गीम् अरण्ये विजने स्थितामिति शेषः । दीनां त्वदनभिलाषिणीमित्यर्थः । छद्मना मारीचमुखेन आनयित्वा । तं पूर्वमुक्तम् । पतिव्रतायास्तस्यास्तपसा दग्धोऽसि । मे प्रभो इत्यनेन अस्य सर्वस्य मद्दौर्भाग्यमेव निमित्तमिति द्योत्यते । आत्मस्वदूषणेत्यनेन निजस्वभूताया मम त्यागे त्वद्दूषणमेव हेतुः न त्वत्सौन्दर्यहानिरित्युच्यते ॥ २२ ॥ २३ ॥

२२] ति०टी०—छद्मनानयित्वानीय ।आत्मस्वदूषणम् स्वशब्दः स्वीयवाची । आत्मनः स्वकुलस्य नाशनं कृतमिति शेषः २२

२३ ] ति० टी०—मैथिलीसंगमे कृतं तं काममप्राप्य पतिव्रतायास्तस्यास्तपसा नूनं निश्चयेन दग्धोऽसि । मे प्रभो मे भर्तः ॥ २३ ॥

रा० टी०—अप्राप्येति । मैथिल्यास्सङ्गो नित्यं संयोगो यस्मिन् तस्मिन् रामे कृतं कामं सीतामनोरथमप्राप्य असंसाध्य विद्यमानस्त्वं पतिव्रतायाः सीतायाः तपसा पतिव्रतरूपधर्मेण दग्धोसि ॥ २३ ॥

२४ ] ति० टी०–तां धर्षयंस्तदैव धर्षणसमय एव न दग्ध इति यत् । येन माहात्म्येन देवा बिभ्यति तेन माहात्म्येनेत्यर्थः ॥ २४ ॥

रा० टी०—नन्वपहरणसमये एव कुतो नाहं दग्ध इत्यत आह तदेति । यत् यस्मात् देवाः बिभ्यते तस्माद्धर्षयंस्त्वं तदा धर्षणकाले एव न दग्धः ॥ २४ ॥

गो० टी०—तदैवेति ।तनुमध्यमां धर्षयन् सन् त्वं तदैव न दग्ध इति यत् तेन माहात्म्येन त्वत्तो देवा बिभ्यतीति संबन्धः । भीता देवाः कथं ते धर्षणफलं दाहं दद्युरिति भावः ॥ २४ ॥

२५ ] ति० टी०—काले परिपाकसमये पर्यागते सति२५

२६ ] ति० टी०—शुभं सुखम् । पापं दुःखम् ॥ २६ ॥

रा० टी०—अवश्यमिति । पापस्य कर्मणः कर्त्ता काले विपाकसमये पर्यागते, सति पापस्य कर्मणः फलमवश्यमेव लभते अत एव शुभकृत् शुभं सुखं प्राप्नोति पापकृत् पापं दुःखमश्नुते अत एव विभीषणः सुखं प्राप्तस्त्वं तु पापं दुःखं प्राप्तः श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०—अवश्यमिति । कर्ता घोरं पापस्य फलं काले पर्यागते प्राप्ते अवश्यं लभते, नात्र संशयः ॥ २५ ॥

गो० टी०—शुभकृदिति । पापं दुःखम् ॥ २६ ॥

२७ ] ति० टी०—तुभ्यं तव । ततः सीतातोऽपि ॥ २७ ॥

रा० टी०—सीतायाः हरणममर्षवशादेव न तु हेत्वन्तरमस्तीति बोधयन्ती आह—सन्तीति । रूपेण अभ्यधिकाः अन्याः मत्तोपि भिन्नास्सन्ति ततः अनंगवशं नापन्न एव त्वं मोहात् बुध्यसे सीतापहरणं हितमबुध्यथाः ॥ २७ ॥

गो० टी०—सन्तीति । तुभ्यम् तव ततः तस्याः सीतायाः । न बुध्यस । अभ्यधिकत्वमिति शेषः ॥ २७ ॥

२८ ] ति० टी०–मैथिली कुलादिना मदधिका न, मत्तुल्यापि न, अथापि तत्तु तथा त्वं तु त्वं मोहान्न बुद्ध्यसे ॥२८॥

रा० टी०–नेति । मैथिली कुलादिना मया लक्ष्या अधिकैव न तु तुल्या तदिति मोहान्मोहं प्राप्य विद्यमानोपि त्वं न बुध्यसे काक्वा बुध्यसे एवेत्यर्थः एतेन पूजाबुद्ध्यैव तस्यास्स्वीकारः त्वया कृत इति सूचितम् ॥ २८ ॥

गो० टी०–न कुलेनेति । मैथिली मया कुलेन तुल्या अधिका वा न इत्येवं योज्यम् । दाक्षिण्येन विद्यासामर्थ्येन २८

२९–३१ ] ति० टी०—अलक्षणोऽनिमित्तः । मैथिलीकृतलक्षणो मैथिलीकृतं लक्षणं निमित्तं यस्य सः । मैथिलीहेतुक इत्यर्थः ॥ २९–३१ ॥

रा० टी०—ननु पापबुद्ध्या तद्ग्रहणस्याभावात् कथं मरण-

१ दूषणेति गो. पा. । २ चैव तमिति गो. एव च तमिति रा. पा. । ३ बिभ्यते इति रा. पा. ४ घोरमिति गो. रा. पा. । ५ त्वमिति गो. रा. पा. । ६ तावदिति गो. पा. ।

देवोद्यानेषु सर्वेषु विहृत्य सहिता त्वया । विमानेनानुरूपेण या याम्यतुलया श्रिया ॥ ३२ ॥
पश्यन्ती विविधान्देशांस्तांस्तांश्चित्रस्रगम्बरा । भ्रंशिता कामभोगेभ्यः सास्मि वीर वधात्तव ॥ ३३ ॥
सैवान्येवास्मि संवृत्ता धिग्राज्ञां चञ्चलां श्रियम् । हा राजन्सुकुमारं ते सुभ्रु सुत्वक्समुन्नसम् ॥ ३४ ॥
कान्तिश्रीद्युतिभिस्तुल्यमिन्दुपद्मदिवाकरैः । किरीटकूटोज्ज्वलितं ताम्रास्यं दीप्तकुण्डलम् ॥ ३५ ॥
मदव्याकुललोलाक्षं भूत्वा यत्पानभूमिषु । विविधस्रग्धरं चारु वल्गुस्मितकथं शुभम् ॥ ३६ ॥
तदेवाद्य तवैवं हि वक्त्रं न भ्राजते प्रभो । रामसायकनिर्भिन्नं रक्तं रुधिरविस्रवैः ॥ ३७ ॥
विशीर्णमेदोमस्तिष्कं रूक्षं स्यन्दनरेणुभिः । हा पश्चिमा मे संप्राप्ता दशा वैधव्यदायिनी ॥ ३८ ॥
या मयासीन्न संबुद्धा कदाचिदपि मन्दया । पिता दानवराजो मे भर्ता मे राक्षसेश्वरः ॥ ३९ ॥

---

मित्यत आह—सर्वदेति । सर्वदा सर्वस्मिन् काले सर्वभूतानां मृत्युः अलक्षणः निमित्तरहितो न अतः तद्वत् तल्लक्षणवान् अयं मृत्युः मैथिल्या कृतं निष्पादितं लक्षणं हेतुमत्वं येन सः मैथिलीप्सितविरुद्धाचरणेन विनष्टोसीति तात्पर्यम् ॥२९॥

गो० टी०—सर्वथेति । अलक्षणः निर्निमित्तः । मैथिल्याः कृतं मैथिलीकृतम् । मैथिल्यानयनमित्यर्थः तदेव लक्षणं निमित्तं यस्य स तथा ॥ २९–३१ ॥

रा० टी०—सीतेति । सीतानिमित्तजो मृत्युः त्वया उपाहृतः स्वस्मिन् प्रापितः मैथिली तु रामेण विहरिष्यति अहं तु शोकसागरे पतिता सार्धश्लोक एकान्वयी ॥ ३० ॥

रा० टी०—कैलास इति । याहं कैलासादिषु त्वया सह विहृत्य विचित्रस्रगादिविशिष्टान् विविधान् देशान् पश्यन्ती सती अतुलया श्रिया यामि अयाम् साहं तव वधात् कामभोगेभ्यो भ्रंशितास्मि सार्द्धश्लोकद्वयमेकान्वयि ॥ ३१–३२ ॥

गो० टी०—कैलास इत्यादिसार्धश्लोकद्वयमेकान्वयम् ॥ याहं कैलासादिषु विहृत्य विमानेन विविधान् देशान् पश्यन्ती यामि अथ सा भ्रंशितास्मीत्येवं संबन्धः ॥ ३२ ॥ ३३ ॥

३२–३३] ति०टी०—श्रिया । उपलक्षितेति शेषः ३२–३३

रा० टी०—सेति । सा कृतविविधभोगाहमन्या इव संवृत्ता वैधव्यं प्राप्तेत्यर्थः अतः राज्ञां श्रियं धिक् अर्थं पृथक् ॥ ३३ ॥

३४ ] ति० टी०—सैवाहं सौभाग्यलक्षणवत्येव तव वधात्त्वेव । विधवेव संवृत्तेत्यर्थः । अत्रान्येवेतीवकारेण देवस्थित्या वस्तुतोऽवैधव्यं सूचितम् । सुभ्रु शोभनभ्रूयुतम् सुत्वक्शोभनत्वगिन्द्रियस्थानम् ॥ ३४ ॥

३५ ] ति० टी०—कान्तिराल्हादकरी प्रभा तया चन्द्रतुल्यम् । श्रीरुज्ज्वलता तया पद्मवत् । द्युतिः पराभिभवसामर्थ्यं तेजस्तेन रवितुल्यम् । कूटः समूहः । ताम्रास्यं ताम्रोष्ठम् ॥३५॥

३६ ] ति० टी०—पानभूमिषु मदव्याकुललोलाक्षं भूत्वा । यदभ्राजतेति शेषः । चारु सुन्दरम्, वल्गु चञ्चलम्, स्मितकथं स्मितोपेतकथायुतम् ॥ ३६ ॥

३७ ] ति० टी०—तदेव ते वक्त्रमेवमेव कथामापन्नं न भ्राजते । तामवस्थामाह—रामेति । रक्तं रक्तवर्णम् ॥ ३७ ॥

रा० टी०—हे इति । शोभने भ्रुवौ यस्मिन् शोभना त्वक् यस्मिन् सम्यक् उन्नता नासिका यस्मिन् कीर्त्यादिभिः इन्द्रादिभिस्तुल्यं किरीटस्य कूटेनाग्रभागेन उज्ज्वलितं प्रकाशितं दीप्ते कुण्डले यस्मिन् ताम्रौ आस्यौ ओष्ठौ यस्मिन् विविधस्रग्धरं वल्गुस्मितेन कथा कथनं यस्मिन् शुभं मंगलकारि चारु रमणीयं यत्तव वक्त्रम् पानभूमिषु मदव्याकुललोलाक्षं भूत्वा अभ्राजत् इति शेषः तदेव रामसायकैर्निर्भिन्नमत एव रुधिरविस्रवैः रक्तमरुणं विकीर्णं मेदोस्थितमांसं मस्तिष्कं मज्जा च यस्मिन् रेणुभिः रूक्षं तव वक्त्रं न भ्राजते अर्धाष्टकमेकान्वयि ॥ ३४–३७ ॥

गो० टी०—सैवेत्यर्धम् । सैव एवं भुक्तभोगैव । अन्येव अस्पृष्टभोगेव ॥ ३४ ॥

गो० टी०—एवं रावणस्य मतिं राज्यश्रियं च निन्दित्वा भर्तृसौन्दर्यवैपरीत्यं शोचति—हा राजन्नित्यादिश्लोकचतुष्टयमेकान्वयम् । सुत्वक् स्निग्धत्वक् । समुन्नसं समुन्नतनासिकम् । कान्तिः प्रभा श्रीः सौन्दर्यम् द्युतिः तेजः किरीटकूटोज्ज्वलित शिखरतुल्यकिरीटविराजितम् । ताम्रास्यं रक्ताधरमित्यर्थः । चारु सुन्दरं तव यद्वक्त्रं मदव्याकुललोलाक्षं भूत्वा अभ्राजत, तदेवेदं वक्त्रमद्य न भ्राजते । अप्रकाशनिमित्तमाह—रामेति । विस्रवैः प्रवाहैः । मेदः वसा । मस्तिष्कं मांसविशेषः ॥ ३६–३८ ॥

३८ ] ति० टी०—विशीर्णं मेदोस्थिगतमांसं मस्तिष्कं मज्जा च यस्य तत् । सा वैधव्यदा पश्चिमा दशा मे मया संप्राप्ता ॥ ३८ ॥

रा० टी०—हेति । मन्दया मया या कदाचिन्न संबुद्धा ज्ञाता सा वैधव्यदायिनी पश्चिमा दशा मे संप्राप्ता ॥ ३८ ॥

गो० टी०—हेति । मे वैधव्यकारिणी ते पश्चिमावस्था मृतिः संप्राप्ता ॥ ३९ ॥

३९ ] ति० टी०—या मया संबुद्धा नासीत् । दानवराजो मयः ॥ ३९ ॥

रा० टी०—ज्ञानाभावे हेतुमाह—पितेति । मे पिता दानवराजो मया इति गर्विताभवमिति शेषः ॥ ३९ ॥

---

१ चञ्चलाः श्रिय इति गो. पाठः । २ इदमिति गो. पाठः । ३ सिक्तमिति गो. पाठः । ४ कारिणीति गो. पाठः ।

पुत्रो मे शक्रनिर्जेता इत्यहं गर्विता भृशम् । दृप्तारिमथनाः[1] क्रूराः प्रख्यातबलपौरुषाः ॥ ४० ॥
अकुतश्चिद्भया नाथा ममेत्यासीन्मतिर्ध्रुवा[2] । तेषामेवंप्रभावाणां युष्माकं राक्षसर्षभाः[3] ॥ ४१ ॥
कथं भयमसंबुद्धं मानुषादिदमागतम् । स्निग्धेन्द्रनीलनीलं तु प्रांशुशैलोपमं महत् ॥ ४२ ॥
केयूराङ्गदवैदूर्यमुक्ताहारस्रगुज्ज्वलम्[4] । कान्तं विहारेष्वधिकं दीप्तं सङ्ग्रामभूमिषु ॥ ४३ ॥
भात्याभरणभाभिर्यद्विद्युद्भिरिव तोयदः । तदेवाद्य शरीरं ते तीक्ष्णैर्नैकैःशरैश्चितम्[5] ॥ ४४ ॥
पुनर्दुर्लभसंस्पर्शं परिष्वक्तुं न शक्यते । श्वाविधः शललैर्यद्वत्[6] लग्नैर्बाणैर्निरन्तरम् ॥ ४५ ॥
स्वर्पितैर्मर्मसु भृशं संछिन्नस्नायुबन्धनम् । क्षितौ निपतितं राजञ्श्यामं[7] वै रुधिरच्छवि ॥ ४६ ॥
वज्रप्रहाराभिहतो[8] विकीर्ण इव पर्वतः । हा स्वप्नः सत्यमेवेदं त्वं रामेण कथं हतः ॥ ४७ ॥
त्वं मृत्योरपि मृत्युः स्याः कथं मृत्युवशं गतः । त्रैलोक्यवसुभोक्तारं त्रैलोक्योद्वेगदं महत् ॥ ४८ ॥
जेतारं लोकपालानां क्षेप्तारं शंकरस्य च । दृप्तानां निग्रहीतारमाविष्कृतपराक्रमम् ॥ ४९ ॥
लोकक्षोभयितारं च साधुभूतविदारणम्[10] । ओजसा दृप्तवाक्यानां वक्तारं रिपुसंनिधौ[9] ॥ ५० ॥
स्वयूथभृत्यगोप्तारं[11][12] हन्तारं भीमकर्मणाम् । हन्तारं दानवेन्द्राणां यक्षाणां च सहस्रशः ॥ ५१ ॥

गो० टी०—अस्थिरस्य देहस्य विनाशः कुतो न संबुद्ध इत्यत्राह—पितेति । दानवराजः मयः ॥ ४० ॥ ४१ ॥

४०–४४ ] ति० टी०—अहं गर्विता विशिष्टपतिपुत्रपितृत्वात् । दृप्तारिमथनत्वादिधर्मा मम नाथास्त्रातारः सन्तीति मम ध्रुवा दृढा मतिरासीत् ॥ ४०–४४ ॥

रा० टी०—दृप्तेति । दृप्तारीणां मर्दनाः अत एव क्रूराः अत एव अकुतश्चिद्भयाः मम नाथाः इति ध्रुवा मतिरासीत् ॥ ४० ॥

रा० टी०—तेषामिति । एवंप्रभावाणां युष्माकमसंबुद्धमविज्ञातमिदं मानुषाद्भयं कथमागतम् ॥ ४१ ॥

गो० टी०—तेषामिति । तेषु युष्मास्वेवंप्रभावेष्वित्यर्थः । मयस्य मरणाभावेपि इदानीमकार्यकरत्वादेवमुक्तम् । असंबुद्धं पूर्वमचिन्तितम् ॥ ४२ ॥

रा० टी०—स्निग्धेति । प्रांशुरुन्नतो यः शैलः तदुपमं केयूरादिभिरुज्ज्वलं विहारेषु अधिकं कांतं शोभाविशिष्टं संग्रामभूमिषु दीप्तमतितेजोविशिष्टं गुरुपूजासु शंकरपूजने च विनीतं शांतं च यत् शरीरमाभरणभाभिः विद्युद्भिस्तोयद इव भाति अभात् तदेव नैकशरैः श्रितमत एव दुर्लभः संस्पर्शो यस्य तत् शरीरं परिष्वक्तुं न शक्यते सार्द्धश्लोकत्रयमेकान्वयि॥४२–४४॥

गो० टी०—स्निग्धेत्यादिसार्धश्लोकचतुष्टयमेकान्वयम् । प्रांशुशैलः उन्नतशैलः । अङ्गदवैडूर्यं वैडूर्यमयाङ्गदमिति केयूराद्भेदः । यच्छरीरं भाति आलिङ्गनयोग्यमभूत् तदेव शरीरं दुर्लभसंस्पर्शम् सत् पुनः परिष्वक्तुं न शक्यते । दुर्लभसंस्पर्शत्वमुपपादयति—श्वाविध इत्यादिना । श्वाविधः शल्यमृगस्य, शललैः तल्लोमभिः, यद्वत् यथा । कण्टकाकारश्वाविल्लोमतुल्यैरिति शरविशेषणम् । मर्मसु स्वर्पितैः क्षिप्तैः तत्रैव मर्मसु निरन्तरं लग्नैरिति योजना । श्यावं कपिशवर्णम् । श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् । श्यावः स्यात्कपिश इत्युभयत्राप्यमरः । स्नायवः धमन्यः । रुधिरसच्छवि रुधिरतुल्यकान्ति । स्वकान्तिं विहाय रुधिरकृतकान्त्यन्तरमित्यर्थः ॥ ४३–४६ ॥

४५ ] ति० टी०—श्वाविधः शल्यकस्य शललैः कण्टकैरिव लग्नैर्बाणैर्निरन्तरम् । कृतमिति शेषः ॥ ४५ ॥

४६ ] ति० टी०—तथा मर्मसु स्वर्पितैर्बाणैः संछिन्नस्नायुबन्धनम् । रुधिरच्छवि तत्संबन्धेन रक्तकान्ति ॥ ४६ ॥

रा० टी०—श्वाविध इति । श्वाविधः शल्लकस्य शललैः कण्टकैर्युक्तं शल्लकशरीरमिव मर्मसु स्वर्पितैः अत एव लग्नैर्बाणैर्निरंतरमन्तररहितं यथा भवति तथा युक्तमत एव संछिन्नानि स्नायूनां नाडीनां बंधनानि यस्य रुधिरस्य छविर्यस्मिन् तत् क्षितौ निपतितं श्यामं शरीरं वज्रप्रहारपतितः अत एव विकीर्णः पर्वत इव बभाविति शेषः इव उभयान्वयी श्लोकद्वयमेकान्वयि ॥ ४५–४७ ॥

४७ ] ति० टी०—वज्रप्रहारमभितो विकीर्णः पर्वत इव ते शरीरं विकीर्णम् । हा खेदे । स्वप्न इवेदं कथं सत्यमेव जातम् ४७

रा० टी०—हेति । इदं तव मरणं स्वप्नः सत्यं वा अन्ते बाधकमाह रामेण त्वं कथं हतः शंकायां बीजमाह मृत्योरपि मृत्युस्त्वं मृत्युवशं कथं गतः स्याः ॥ ४८ ॥

गो० टी०—वज्रेत्यर्धम् ॥ असीति शेषः ॥ ४७ ॥

गो० टी०—हेति । इदं ते मरणं स्वप्नः स्वप्नानुभवविषयः सत्यमेव, नात्र संशयः । तत्र हेतुमाह—त्वमिति । तत्रापि हेतुमाह—त्वं मृत्योरिति ॥ ४८ ॥

४८–४९ ] ति० टी०—उद्ध रत्नम् । महदत्यर्थम् ४८॥४९

५०–५१ ] ति० टी०—साधुभूतानां साधुजनानां विदारणम् । ओजसा बलेन । दृप्तवाक्यानां गर्वितवचसाम् ॥५०॥५१॥

१ मर्दनाः शूरा इति गो. मर्दना इति च रा. पाठः । २ दृढेति गो. पाठः । ३ ऋषभेति गो. रा. पाठः । ४ दामेति गो. पाठः । ५ नैकैः शरैरिति गो. नैकशरैःश्रितमिति च रा. पाठः । ६ यद्वद्बाणैर्नुन्नैरिति गो. पाठः । ७ श्यावं रुधिरसच्छवीति गो. पाठः । ८ अभिहत इति गो. पतित इति रा. पाठः । ९ नादैरिति गो. रा. पाठः । १० विराविणमिति गो. पाठः । ११ भृशेति रा. पाठः । १२ वर्णानां गोप्तारमिति गो. पाठः ।

निवातकवचाना तु निग्रहीतारमाहवे । नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च ॥ ५२ ॥
धर्मव्यवस्थाभेत्तारं मायास्रष्टारमाहवे । देवासुरनृकन्यानामाहर्तारं ततस्ततः ॥ ५३ ॥
शत्रुस्त्रीशोकदातारं नेतारं स्वजनस्य च । लङ्काद्वीपस्य गोप्तारं कर्तारं भीमकर्मणाम् ॥ ५४ ॥
अस्माकं कामभोगानां दातारं रथिनां वरम् । एवंप्रभावं भर्तारं दृष्ट्वा रामेण पातितम् ॥ ५५ ॥
स्थिरास्मि या देहमिमं धारयामि हतप्रिया । शयनेषु महार्हेषु शयित्वा राक्षसेश्वर ॥ ५६ ॥
इह कस्मात्प्रसुप्तोऽसि धरण्यां रेणुगुण्ठितः । यदा मे तनयः शस्तो लक्ष्मणेनेन्द्रजिद्युधि ॥ ५७ ॥
तदा त्वभिहता तीव्रमद्य त्वस्मिं निपातिता । सोऽहं बन्धुजनैर्हीना हीना नाथेन च त्वया॥ ५८ ॥
विहीना कामभोगैश्च शोचिष्ये शाश्वतीः समाः । प्रपन्नो दीर्घमध्वानं राजन्नद्य सुदुर्गमम् ॥ ५९ ॥
नय मामपि दुःखार्तां न वर्तिष्ये त्वया विना । कस्मात्त्वं मां विहायेह कृपणां गन्तुमिच्छसि॥ ६० ॥
दीनां विलपितीं मन्दां किं च मां नाभिभाषसे। दृष्ट्वा न खल्वभिक्रुद्धो मामिहानवगुण्ठिताम्॥ ६१ ॥
निर्गतां नगरद्वारात्पद्भ्यामेवागतां प्रभो । पश्येष्टदार दारांस्ते भ्रष्टलज्जावगुण्ठनान् ॥ ६२ ॥
बहिर्निष्पतितान्सर्वान्कथं दृष्ट्वा न कुप्यसि । अयं क्रीडासहायस्तेऽनाथो लालप्यते जनः॥ ६३ ॥

५२-५४ ] ति० टी०—आहवे निग्रहीतारम् । जेतारमिति यावत् ॥ ५२-५४ ॥

५५-५७ ] ति० टी०—एवंप्रभावं त्वां हतं दृष्ट्वा हतप्रियेमं देहं धारयामि, अतः स्थिरा कठिनहृदयास्मीति जाने॥५५॥५७॥

रा० टी०—त्रैलोक्येति । दृप्तानां निग्रहीतारं दण्डप्रदं रिपुसन्निधौ दृप्तवाक्यानां गर्वितवचनानां वक्तारं स्वयूथपस्य भृशगोप्तारं निवातकवचानां निग्रहीतारमाहवे मायास्रष्टारं रथिनां वरमेवंप्रभावं भर्त्तारं रामेण पातितं दृष्ट्वापि हतप्रियाहमिमं देहं धारयामि अतः स्थिरा अतिदृढहृदयास्मि श्लोकाष्टकमेकान्वयि ॥ ४९-५६ ॥

रा० टी०—शयनेष्विति । महार्हेषु शयनेषु शयित्वा रेणुभिर्गुण्ठितो लिप्तस्सन् धरण्यां कस्मात्प्रसुप्तोसि ॥ ५७ ॥

रा० टी०—यदेति । मे तनयः यदा शस्तो विहिंसितः तदैव तीव्रमभिहताहमद्य निपातितास्मि ॥ ५८ ॥

गो० टी०—त्रैलोक्येत्यादिहतप्रियेत्यन्तं श्लोकाष्टकमेकं वाक्यम् ॥ एवंभूतं भर्तारं दृष्ट्वा या इमं देहं धारयामि साहं स्थिरास्मि वज्रसारमयास्मि । कथमन्यथा न शीर्येदिति भावः । महदिति त्रैलोक्यवस्तुविशेषणम् । यद्वा त्रैलोक्योद्वेगदं महद्दुःख महत् यथा भवति तथा त्रैलोक्योद्वेगदमिति वा । उद्वेगो भयसंभ्रमः । शंकरस्य क्षेप्तारं कैलासचलनद्वारा । स्वयूथाः स्वबन्धवः निवातकवचा नाम केचनासुराः । तेषां संग्रहीतारं तैः सख्यं कृतमित्यर्थः । स्वजनस्य स्वाश्रितजनस्य, धर्मव्यवस्था आचारव्यवस्था । यज्ञकर्मभेत्तृत्वकथनेनातीव स्वतन्त्रत्वमुक्तम् । कन्यानामिति । स्त्रीमात्रमुच्यते । स्वजनस्य नेतारमिति । पूर्वोत्रानिष्टनिवर्तकत्वमुक्तम् । अत्रेष्टप्रापकत्वम् । भीमकर्मणां स्वशिरोहवनादीनाम् ॥ ४९-५७ ॥

गो० टी०—यदेति । शस्तः हतः । तदा अभिहता प्रहृता । अद्य अस्मिन् त्वद्धनने सति तीव्रं निपातिता । मारितेत्यर्थः ॥५८॥

५८-६० ] ति० टी०—तदा त्वभिहताभिघातगात्रं प्राप्ता, अद्य तु निपातितास्मि ॥ ५८-६० ॥

रा० टी०—सेति । शाश्वतीः बह्वीः समाः वर्षाणि शोचिष्ये ॥ ५९ ॥

गो० टी०—नाहमिति । बन्धुजनैः हीनाहं न शोचिष्ये यदि त्वं स्थितः स्याः । किंतु त्वया हीना अत एव कामभोगैर्हीना शोचिष्य इति योजना ॥ ५९ ॥

रा० टी०—प्रपन्न इति । सुदुर्गमं दीर्घमध्वानं प्रपन्नः प्राप्तस्त्वं मामपि नय प्रापय तत्र हेतुः त्वया विनाहं न वर्तिष्ये॥ ६० ॥

गो० टी०—प्रपन्न इति । दीर्घमध्वानं वीरस्वर्गम् ॥६०॥

रा० टी०—कस्मादिति । मामिह विहाय त्वं कस्माद्गन्तुमिच्छसि मां किं कस्मान्नाभिभाषसे ॥ ६१ ॥

गो० टी०—कस्मादिति । विलपितैः प्रलापैः दीनां, मन्दाम् अभाग्याम् ॥ ६१ ॥

६१ ] ति० टी०—अनवगुण्ठितां भ्रष्टावगुण्ठनाम् ॥ ६१ ॥

रा० टी०—दृष्ट्वेति । नगरद्वारात् पद्भ्यामेव निर्गतामत एव अनवगुण्ठितां भ्रष्टावगुण्ठनामागतां मां दृष्ट्वा खलु किं क्रुद्धो नासि ॥ ६२ ॥

गो० टी०—दृष्ट्वेति । अनवकुण्ठिताम् अनावरणाम् । इहागतामित्यन्वयः ॥ ६२ ॥

६२-६३ ] ति० टी०—भ्रष्टं लज्जारक्षकमवगुण्ठनं येषां तान् ॥ ६२ ॥ ६३ ॥

रा० टी०—पश्येति । हे इष्टदार भ्रष्टलज्जावगुंठनान् ते

१ च संग्रहीतारमीश्वरमिति गो. पाठः । २ पाटल इति गो. पाठः । ३ अस्मिन्निति गो. पाठः । ४ नाहमिति गो. पाठः । ५ असीति गो. पाठः । ६ जीविष्य इति गो. पाठः । ७ विलपितैरिति गो. पाठः । ८ चेति गो. पाठः । ९ असीति गो. रा. पाठः । १० कुण्ठितामिति गो. पाठः । ११ कुण्ठितानिति गो. पाठः ।

न चैनमाश्वासयसि किं वा न बहुमन्यसे । यास्त्वया विधवा राजन्कृता नैका कुलस्त्रियः ॥ ६४ ॥
पतिव्रता धर्मरता गुरुशुश्रूषणे रताः । ताभिः शोकाभितप्ताभिः शप्तः परवशं गतः ॥ ६५ ॥
त्वया विप्रकृताभिश्च[1] तदा[2] शप्तस्तदागतम् । प्रवादः सत्यमेवायं त्वां प्रति प्रायशो नृप ॥ ६६ ॥
पतिव्रतानां नाकस्मात्पतन्त्यश्रूणि भूतले । कथं च नाम ते राजल्लोकानाक्रम्य तेजसा ॥ ६७ ॥
नारीचौर्यमिदं क्षुद्रं कृतं शौटीर्यमानिना[3] । अपनीयाश्रमाद्रामं यन्मृगच्छद्मना त्वया ॥ ६८ ॥
आनीता रामपत्नी सा अपनीय च लक्ष्मणम् । कातर्यं च न ते युद्धे कदाचित्संस्मराम्यहम् ॥ ६९ ॥
तत्तु भाग्यविपर्यासान्नूनं ते पक्वलक्षणम्[4] । अतीतानागतार्थज्ञो वर्तमानविचक्षणः ॥ ७० ॥
मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निःश्वस्य चायतम् । सत्यवाक्स महाबाहो देवरो मे यदब्रवीत् ॥ ७१ ॥

दारान् पश्य बहिर्निष्पतितान्निर्गतान् तान् दारान् दृष्ट्वा कथं न कुप्यसि ॥ ६३ ॥

गो० टी०–पश्येति । इष्टदारेति संबुद्धिः । भ्रष्टलज्जावकुण्ठितान् हीनलज्जावकुण्ठितान् ॥ ६३ ॥

रा० टी०–अयमिति । क्रीडासहायोयं जनः लालप्यते अतः एनं किं न आश्वासयसे न बहु मन्यसे वा ॥ ६४ ॥

गो० टी०–अयमिति । नाथो लालप्यत इति पाठे अनाथ इति छेदः ॥ ६४ ॥

६४ ] ति० टी०–नैकाः कुलस्त्रियः । ऋष्यादीनामिति शेषः ॥ ६४ ॥

६५ ] ति० टी०–यच्छप्तस्तत्फलं त्वं परवशं शत्रुवशं गतः ॥ ६५ ॥

रा० टी०–या इति । पतिव्रताः अत एव गुरुशुश्रूषणे रताः याः कुलस्त्रियः त्वया विधवाः कृताः ताभिः विप्रकृताभिः अत एव क्रोधाभितप्ताभिः त्वं शप्तः अत एव यदुद्दिश्य आशप्तं तत् फलमागतं प्राप्तमत एव परस्य मृत्योर्वशं गतः श्लोकद्वयमेकान्वयि ॥ ६५ ॥ ६६ ॥

गो० टी०–यास्त्वयेत्यादिसार्धश्लोक एकान्वयः । परवशं परवशत्वम् । शत्रुवशत्वमिति यावत् ॥ ६५ ॥

६६-६७ ] ति० टी०–त्वया विप्रकृताभिः कृतापकाराभिस्तदापकारसमये यच्छप्तं तत्फलमागतम् । विप्रकृतानां पतिव्रतानामश्रूण्यकस्मात्किंचिदनर्थकारणं विना भूतले न पतन्तीति योऽयं प्रवादः प्रायशो जने चरति प्रवर्तते स सत्यं त्वां प्रति जातः तवानर्थकर एव जात इत्यर्थः ॥ ६६ ॥ ६७ ॥

रा० टी०–प्रवाद इति । पतिव्रतानामश्रूणि अकस्मात् अकारणात् न पतन्ति यः पातयति तं विनाशयन्त्येवेत्यर्थः अयं प्रवादः त्वां प्रति सत्यः ॥ ६७ ॥

गो०टी०–त्वयेत्यर्धम् । त्वया विप्रकृताभिः परिभूताभिः। तदा भर्तृवधकाले, यच्छप्तं तत् आगतम् फलदमासीदित्यर्थः ६६

रा० टी०–कथमिति । तेजसा लोकानाक्रम्य वियमानेन शौण्डीर्यमानिना शूरत्वाभिमानविशिष्टेन त्वया नारीचौर्यं कथं कृतम् ॥ ६८ ॥

गो० टी०–प्रवाद इति । पतिव्रतानामश्रूणि अकस्मान्निर्हेतुकतया भूतले न पतन्ति पतन्ति चेत् किंचित् कुर्वन्त्येव इत्येवं प्रायशः प्रवादः जनवार्ता त्वां प्रत्येव सत्यः यथार्थो जातः । पतिव्रतानामास्रपातकरणमनर्थावहमित्येवं जनवादः तथा कुर्वति त्वयि दृष्टफल आसीदित्यर्थः ॥ ६७ ॥

गो० टी०–कथमिति । शौण्डीर्यमानिना शूरमानिना ६८

६८ ] ति० टी०–शौटीर्यमानिना वीरमानिना ॥ ६८ ॥

रा० टी०–अपनीयेति । मृगछद्मना मृगव्याजेन रामाश्रमादपनीय दूरदेशं प्रापय्य रामपत्नी त्वया आनीता तत्ते कातर्यस्य लक्षणं सूचकम् ॥ ६९ ॥

गो० टी०–अपनीयेति । त्वया कत्रा, मृगच्छद्मना मृगरूपकपटोपायेन । कातर्यलक्षणं कातर्यसूचनम् ॥ ६९ ॥

६९ ] ति० टी०–कातर्यं कातरत्वम् ॥ ६९ ॥

रा० टी०–नन्वस्तु कातर्यमित्यत आह—कातर्यमिति । ते कातर्यं युद्धे कदाचिन्न संस्मरामि इदमेव दृष्टमित्यर्थः अतः भाग्यस्य विपर्यासात् विपर्ययात् पक्वस्य विनाशस्येत्यर्थः लक्षणं लक्षकं तत् कातर्यमभवदिति शेषः ॥ ७० ॥

गो० टी०–कातर्यमिति । ते युद्धे कातर्यम् कदाचिदपि न स्मरामि न जानामीत्यर्थः । एवमकातरप्रकृतेस्तव भाग्यविपर्यासात् यत्कातर्यं चौर्यरूपमस्ति तत् पक्वलक्षणं, पक्वत्वलक्षणं विनाशज्ञापकमिति यावत् । महतो हीनकृत्यं हानिकरमिति लोकप्रवादादिति भावः ॥ ७० ॥

७० ] ति० टी०–पक्वलक्षणम् । पक्वस्यासन्नविनाशस्य लक्षणमित्यर्थः ॥ ७० ॥

७१ ] ति० टी०–मे देवरो बिभीषणो राक्षसानां विनाश आगत इति यदब्रवीत्तदागतमिति शेषः ॥ ७१ ॥

रा० टी०–अतीतेति । अतीतानागतयोरर्थयोर्ज्ञो ज्ञाता वर्तमानस्य विचक्षणोऽभिज्ञः सत्यवाक् मे देवरो बिभीषणः मैथिलीमाहृतां दृष्ट्वा आयतं दीर्घं ध्यात्वा संचिन्त्य निःश्वस्य च अयं सीतापहारः राक्षसमुख्यानां विनाशस्समुपस्थितः इति यदब्रवीत् तज्जातमिति शेषः श्लोकद्वयमेकान्वयि ॥ ७१॥७२ ॥

गो० टी०–अतीतेत्यादिसार्धश्लोकद्वयमेकान्वयम् ।

१ आत्मने पदं गो. रा. पाठे । २ यत्तदाशप्तमिति गो. रा. पाठः । ३ यदाशप्तमिति रा. पाठः । १ शौण्डीर्येति गो. रा. पाठः । ४ तत्तेकातर्यलक्षणमिति गो. रा. पाठः ।

अयं राक्षसमुख्यानां विनाशः पैर्युपस्थितः। कामक्रोधसमुत्थेन व्यसनेन प्रसङ्गिना ॥ ७२ ॥
निवृत्तस्त्वत्कृते नौर्थः सोऽयं मूलहरो महान्। त्वया कृतमिदं सर्वमनाथं राक्षसं कुलम् ॥ ७३ ॥
नहि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः। स्त्रीस्वभावात्तु मे बुद्धिः कारुण्ये परिवर्तते ॥ ७४ ॥
सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गतः। आत्मानमनुशोचामि त्वद्विनाशेन दुःखिताम् ॥ ७५ ॥
सुहृदां हितकामानां न श्रुतं वचनं त्वया। भ्रातॄणां चैव कात्स्न्येन हितमुक्तं दशानन ॥ ७६ ॥
हेत्वर्थयुक्तं विधिवच्छ्रेयस्करमदारुणम्। विभीषणेनाभिहितं न कृतं हेतुमत्त्वया ॥ ७७ ॥
मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तथा। न कृतं वीर्यमत्तेन तस्येदं फलमीदृशम् ॥ ७८ ॥
नीलजीमूतसंकाश पीताम्बर शुभाङ्गद। स्वगात्राणि विनिक्षिप्य किं शेषे रुधिराप्लुतः ॥ ७९ ॥
प्रसुप्त इव शोकार्तां किं मां न प्रतिभाषसे। महावीर्यस्य दक्षस्य संयुगेष्वपलायिनः ॥ ८० ॥

देवरो यदब्रवीत् अयं तद्वाक्यार्थभूतो विनाशः प्रसङ्गिना प्रसक्तेन व्यसनेन हेतुना पर्युपस्थितः ॥ ७१ ॥ ७२ ॥

७२ ] ति० टी०—व्यसनेन स्त्रीप्रसक्तिलक्षणेन। प्रसङ्गिना प्रसक्तिमता ॥ ७२ ॥

रा० टी०—कामेति। कामक्रोधाभ्यां समुत्थेन अत एव प्रसङ्गिना अतिप्रसक्तेन त्वत्कृतेन व्यसनेन दारापहरणलक्षणेन अर्थः सकलैश्वर्यं निवृत्तः अतः सः दारापहारः महान् मूलहरः ७३

७३-७४ ] ति० टी०—त्वत्कृतेनार्थोऽशेषैश्वर्यलक्षणो निवृत्तः। यतः सोयं परस्त्रीप्रसक्तिरूपो मूलहरोऽनर्थ इति शेषः ॥ ७३ ॥ ७४ ॥

रा० टी०—त्वयेति। त्वया कृतं प्रवर्द्धितमिदं रक्षसां कुलमनाथं नाथरहितमभवदिति शेषः अहं पृथक्—नहीति। यद्यपि त्वं न शोचितव्यः तथापि स्त्रीस्वभावात् हेतोः मे बुद्धिः कारुण्ये दैन्ये परिवर्त्तते ॥ ७४ ॥

गो० टी०—निर्वृत्त इति। त्वत्कृते त्वन्निमित्तम्। निर्वृत्तः प्रवृत्तः ॥ ७३ ॥

गो० टी०—न हीति। कारुण्ये दैन्ये ॥ ७४ ॥ ७५ ॥

७५ ] ति० टी०—दुःखितां संप्राप्तदुःखाम् ॥ ७५ ॥

७६ ] ति० टी०—सुहृदां मारीचादीनाम् ॥ ७६ ॥

रा० टी०—सुकृतमिति। त्वद्विनाशेन दुःखितमात्मानमनुशोचामि ॥ ७५ ॥

रा० टी०—सुहृदामिति। हितकामानां मारीचादीनां भ्रातॄणां च हितयुक्तं वचनं त्वया न श्रुतमङ्गीकृतम् ॥ ७६ ॥

गो० टी०—सुहृदामिति। कात्स्न्येनोक्तं हितं त्वया न श्रुतमित्यनुषज्यते ॥ ७६ ॥

७७ ] ति० टी०—अदारुणं सौम्यम्। हेत्वर्थयुक्तं हेतुप्रयोजनाभ्यां सहितम् हेतुमत्त्र कृतम्। फलवत्त्रानुष्ठितमित्यर्थः ॥ ७७ ॥

रा० टी०—हेत्वर्थेति। हेत्वर्थाभ्यां कारणप्रयोजनाभ्यां युक्तमत एव श्रेयस्करमत एव अदारुणं विभीषणेन विधिवदभिहितं वचनं त्वया हेतुमत् सफलं न कृतम् ॥ ७७ ॥

गो० टी०—हेत्विति। हेत्वर्थयुक्तं युक्तिप्रयोजनाभ्यां युक्तम् विधिवत् शास्त्रोक्तप्रकारवत् श्रेयस्करं हितभूतम्। अदारुणं सान्त्वपूर्वकम् विभीषणेनाभिहितं वचनं त्वया हेतुमद्युक्तिमद्यथा भवति तथा न गृहीतम्। ज्ञातित्वेन मद्व्यसनं काङ्क्षसे इत्यादिना हेतूपपादनपूर्वकं न गृहीतमित्यर्थः ॥ ७७ ॥

७८ ] ति० टी०—मारीचकुम्भकर्णाभ्यामभिहितमिति शेषः ॥ ७८ ॥

रा० टी०—मारीचेति। वीर्यस्य मत्तेन मदेन मारीचकुम्भकर्णाभ्यामभिहितं मम पितुर्मयस्य च वाक्यं न कृतम् तस्य अकरणस्य ईदृशमिदं फलं प्राप्तम् ॥ ७८ ॥

गो० टी०—मारीचेति। मारीचकुम्भकर्णाभ्यां सह मम पितुर्मयस्य वाक्यं न श्रुतम् तस्य अश्रवणस्य ईदृशं फलम्। आगतमिति शेषः। अत्रानुवादान्मयोप्यस्तीत्यवगन्तव्यम् ७८

७९-८० ] ति० टी०—विनिक्षिप्य। भूतले इति शेषः ॥ ७९ ॥ ८० ॥

रा० टी०—नीलेति। किं किमर्थं शेषे ॥ ७९ ॥

रा० टी०—प्रसुप्त इति। दक्षस्य संयुगेषु अपलायिनः यातुधानस्य सुमालिनः दौहित्रीं मां प्रसुप्त इव त्वं किं न प्रतिभाषसे सार्द्धश्लोक एकान्वयी ॥ ८० ॥ ८१ ॥

गो० टी०—नीलेत्यादिसार्धश्लोक एकान्वयः। विनिक्षिप्य भूमौ प्रसार्य प्रसुप्त इव शेषे, शोकार्तां मां च किमिति न प्रतिभाषस इत्यन्वयः ॥ ७९ ॥ ८० ॥

गो० टी०—महावीर्यस्येति। यातुधानस्य माल्यवतः सुमालिनो वा। तत्संबन्धकीर्तनमप्रतिहतकुलप्रभावप्रकटनार्थम् ॥ ८१ ॥ ८२ ॥

१ सोऽयर्ममिति गो. पाठः। २ परीति गो. समिति रा. पाठः। ३ अनर्थ इति गो. पाठः। ४ रक्षसामिति गो. रा. पाठः। ५ वियोगेनेति गो. पाठः। ६ श्रुतमिति गो. पाठः। ७ आप्लुत इति गो. आवृतमिति रा. पाठः।

यातुधानस्य दौहित्रीं[1] किं मां न प्रतिभाषसे । उत्तिष्ठोत्तिष्ठ किं शेषे नवे[2] परिभवे कृते[3] ॥ ८१ ॥
अद्य वै निर्भया लङ्कां प्रविष्टाः सूर्यरश्मयः । येन सूदयसे शत्रून्समरे सूर्यवर्चसा ॥ ८२ ॥
वज्रं[4] वज्रधरस्येव सोऽयं ते सततार्चितः । रणे बहुप्रहरणो[5] हेमजालपरिष्कृतः ॥ ८३ ॥
परिघो व्यवकीर्णस्ते बाणैश्छिन्नः सहस्रधा । प्रियामिवोपसंगृह्य[6] किं शेषे रणमेदिनीम् ॥ ८४ ॥
अप्रियामिव कस्माच्च मां नेच्छस्यभिभाषितुम् । धिगस्तु हृदयं यस्या ममेदं न सहस्रधा ॥ ८५ ॥
त्वयि पञ्चत्वमापन्ने फलते शोकपीडितम् । इत्येवं विलपन्ती सा[7] बाष्पपर्याकुलेक्षणा ॥ ८६ ॥
स्नेहोपस्कन्नहृदया तदा मोहमुपागमत् । कश्मलाभिहता सन्ना बभौ[8] सा रावणोरसि॥ ८७ ॥
संध्यानुरक्ते जलदे दीप्ता विद्युदिवोज्ज्वला । तथागतां समुत्थाप्य[9] सपत्न्यस्तां भृशातुराः॥ ८८ ॥
पर्यवस्थापयामासू रुदन्त्यो[10] रुदतीं भृशम् । किं[11] ते न विदिता देवि लोकानां स्थितिरध्रुवा॥८९ ॥
दशाविभागपर्याये राज्ञां वै[12] चञ्चलाः श्रियः । इत्येवमुच्यमाना सा सशब्दं प्ररुरोद ह ॥ ९० ॥
स्नैपयन्ती[13] तदास्रेण[14] स्तनौ वक्त्रं सुनिर्मलम् । एतस्मिन्नन्तरे रामो विभीषणमुवाच ह ॥ ९१ ॥
संस्कारः क्रियतां भ्रातुः स्त्रीगणः[15] परिसान्त्व्यताम् । तमुवाच[16] ततो धीमान्विभीषण इदं वचः ॥ ९२ ॥

८१-८२ ] ति० टी०—यातुधानस्य सुमालेः ॥८१॥८२॥

८३-८५ ] ति० टी०—ते त्वया सततमर्चितः पूजितः । बहुप्रहरणो बहुहन्ता ॥ ८३-८५ ॥

रा० टी०—उत्तिष्ठेति । नवे परिभवे पराभवे कृते रामेण संपादिते सति किं शेषे सूर्यरश्मयः निर्भयास्सन्तः लंकामद्यैव प्रविष्टाः ॥ ८२ ॥

रा० टी०—येनेति । येन शत्रून् सूदयसे अहन् सोयं वज्रधरस्य वज्रमिव सततमर्चितः निरंतरं पूजितः हेमजालेन परिष्कृतः परिघः बहुप्रहरणे रणे सहस्रधा छिन्नः अत एव कीर्णः इतस्ततः प्रक्षिप्तः श्लोकद्वयमेकान्वयि ॥ ८३ ॥ ८४ ॥

रा० टी०—प्रियामिति । समरमेदिनीं प्रियामिवोपगुह्य कस्मात् शेषे अप्रियामिव मां अभिभाषितुं कस्मान्नेच्छसि॥८५

रा० टी०—धिगिति । त्वयि पञ्चत्वमापन्ने सति यस्या मम हृदयं सहस्रधा न फलते भिद्यते तां मां धिक् ॥ ८६ ॥

गो० टी०—येनेत्यादिश्लोकद्वयमेकान्वयम् । ते त्वया सततार्चितः, बाणैः रामबाणैश्छिन्नः, वज्रधरस्य वज्र इव स्थितः ते परिघः अद्य विशीर्णः ॥ ८३-८५ ॥

गो० टी०—धिगिति । यस्या मम हृदयं न फलते न स्फुटति तादृशीं मां धिगित्यन्वयः ॥ ८६ ॥

८६ ] ति० टी०—फलते स्फुटति ॥ ८६ ॥

रा० टी०—इतीति । इत्येवं विलपन्ती स्नेहेन अवस्कन्नं हृदयं यस्याः सा मन्दोदरी मोहं मूर्छामुपागमत् ॥ ८७ ॥

गो० टी०—इतीति । अवस्कन्नहृदया विलीनहृदया॥८७॥

८७-८८ ] ति० टी०—कश्मलो मूर्च्छा सन्ना पीडिता ॥ ८७ ॥ ८८ ॥

रा० टी०—कश्मलेति । कश्मलेन मूर्छयाभिहता रावणोरसि सन्ना पतिता सा मन्दोदरी संध्ययानुरक्ते अरुणीभूते जलदे सन्ना उज्ज्वला विद्युदिव बभौ ॥ ८८ ॥

रा० टी०—तथेति । तथागतां मूर्छां प्राप्तां रुदतीं तां मन्दोदरीं रुदन्त्यस्सपत्न्यः समुत्थाप्य पर्यवस्थापयामासुः स्वास्थ्यं प्रापयामासुः ॥ ८९ ॥

गो० टी०—कश्मलेति । कश्मलेन अभिहता मूर्छिता । सन्ना कृशा ॥ ८८ ॥ ८९ ॥

८९-९२ ] ति० टी०—दशाविभागस्य पुण्यपरिपाकदशाविशेषस्य पर्याये विनाशे राज्ञां चञ्चलाः श्रियस्ते न विदिताः किम् एवं लोकानां स्थितिरध्रुवा चञ्चलेत्यपि ते किं न विदितम् ॥ ८९-९२ ॥

रा० टी०—तत्प्रकारमाह—किमिति । दशाविभागयोः पुण्यपापदशयोः पर्याये कालभेदेनान्यतरस्मिन् संबद्धानामिति शेषः श्रिया सहितानां राज्ञां लोकानां च अध्रुवा स्थितिः किं ते तव न विदिता विदितैवेत्यर्थः ॥ ९० ॥

रा० टी०—इतीति । इत्येवमुच्यमाना सा मन्दोदरी अभिमुखौ उन्नतौ स्तनौ अस्राम्बुनां विस्रवैः प्रवाहैः स्नापयन्ती सती सशब्दं प्ररुरोद ॥ ९१ ॥

गो० टी०—नेत्यादिश्लोकद्वयमेकान्वयम् । दशाविभागपर्याये दशानां बाल्यकौमारयौवनवार्धकाद्यवस्थानां विभागस्य

१ दौहित्रि किं च मां नाभ्युदीक्षसे इति गो. पाठः । २ प्राप्त इति गो. पाठः । ३ नवे इति गो. पाठः । ४ वज्र इति गो. पाठः । ५ शक्तिरिति गो. बहुप्रहरणे इति रा. पाठः । ६ गुह्य त्वं शेषे समरमेदिनीमिति गो. रा. पाठः । ७ एव बाष्पव्याकुललोचनेति गो. पाठः । ८ असिते इति गो. पाठः । ९ समुत्पत्येति गो. पाठः । १० रुदन्त्य इति गो. रा. पाठः। ११ न वैस्विति गो. पाठः । १२ चञ्चलया श्रियेति गो. रा.पाठः । १३ स्नापयन्तीति गो. रा. पाठः । १४ स्वभिमुखौ स्तनावस्राम्बुविस्रवैरिति गो. रा. पाठः । १५ स्त्रियश्चैता निवर्तयेति गो. पाठः । १६ तं प्रश्रितस्ततोरामं श्रुतवाक्यो विभीषण इति गो. रा. तथापि प्रश्रितमथो इति रा. पाठः ।

विमृश्य बुद्ध्या प्रश्रितं धर्मार्थसहितं हितम् । त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा ॥ ९३ ॥
नाहमर्हामि संस्कर्तुं परदाराभिमर्शनम् । भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः ॥ ९४ ॥
रावणो नार्हते पूजां पूज्योऽपिगुरुगौरवात् । नृशंस इति मां राम वक्ष्यन्ति मनुजा भुवि ॥ ९५ ॥
श्रुत्वा तस्यागुणान्सर्वे वक्ष्यन्ति सुकृतं पुनः । तच्छ्रुत्वा परमप्रीतो रामो धर्मभृतां वरः ॥ ९६ ॥
विभीषणमुवाचेदं वाक्यज्ञं वाक्यकोविदः । तवापि मे प्रियं कार्यं त्वत्प्रभावान्मया जितम् ॥ ९७ ॥
अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वर । अधर्मानृतसंयुक्तः कामं त्वेष निशाचरः ॥ ९८ ॥
तेजस्वी बलवाञ्छूरः सङ्ग्रामेषु च नित्यशः । शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ॥ ९९ ॥
महात्मा बलसंपन्नो रावणो लोकरावणः । मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ॥१००॥

भेदस्य पर्याये प्राप्तौ विषये, लोकानामध्रुवा स्थितिः राज्ञां चञ्चलया श्रिया सह ते त्वया सुविदिता नेति काकुः । सुविदितैवेत्यर्थः । लोकानां स्थितिरध्रुवेति राज्ञां श्रीश्चञ्चलेति च त्वया सुविदितैवेत्यर्थः । उच्यमाना बन्धुवृद्धादिभिरिति शेषः। अभिमुखौ उन्नतौ ॥ ९०-९२ ॥

रा० टी०-एतस्मिन्निति । एतस्मिन्नन्तरे समये स्त्रीगणः परिसान्त्व्यताम् भ्रातुस्संस्कारश्च क्रियताम् इति वचः रामो विभीषणमुवाच ॥ ९२ ॥

रा० टी०-तमिति । श्रुतवाक्यो विभीषणः बुद्ध्या विमृश्य रामस्यैव अनुवृत्त्यर्थमभिप्रायविज्ञानार्थं धर्मार्थसहितमुत्तरं वचः प्रत्यभाषत ॥ ९३ ॥

गो० टी०-तमित्यादि । प्रश्रितः विनयान्वितः । विमृश्य एतस्य यत् प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादादित्युक्तमङ्गीकृतं विचिन्त्येत्यर्थः । रामस्यैवानुवृत्त्यर्थं रामेणानुज्ञातोस्मि चेत्तदा करिष्यामि नान्यथेत्येवमनुवृत्त्यर्थम् ॥ ९३॥

९३-९४ ] ति० टी०-प्रश्रितं राममनोनुकूलं यथा तथा रामं प्रत्युवाच । त्यक्तो धर्मो व्रतं च येन तम् । अनृतमनृतवादिनम् ॥ ९३ ॥ ९४ ॥

रा० टी०-तदाकारमाह—त्यक्तेति । त्यक्ते धर्मव्रते येन परदाराणामभिमर्शनं पीडनं यस्य तं रावणं संस्कर्तुमहं नार्हामि ९४

रा० टी०-भ्रातृरूप इति । गुरुगौरवात् अतिगुरुत्वात् पूज्योपि सर्वाहिते रतः अत एव मे शत्रुरेष रावणः पूजां नार्हते ९५

गो० टी०-त्यक्तेति । त्यक्तो धर्मो व्रतं च येन तम् । अनृतम् अनृतवादिनम् ॥ ९४ ॥

गो० टी०-भ्रातृरूप इति । गुरुगौरवात् गुरुरिति गौरवात्, पूज्योपि उक्तदोषान्मत्तः पूजां नार्हति ॥ ९५ ॥ भ्रातुः संस्काराकरणे त्वां नृशंसं लोका वक्ष्यन्तीत्याशङ्क्य वदन्तु नाम त एव पुनस्तद्गुणं विचारयन्तो मां सुकृतकारिणं वक्ष्यन्तीत्याह—नृशंस इति । संस्काराकरणे नृशंस इति मां कामं मनुष्या वक्ष्यन्ति। तस्य रावणस्य। अगुणान् दोषान् श्रुत्वा असंस्कुर्वता विभीषणेन सुकृतं शोभनं कृतमिति वक्ष्यन्तीत्यर्थः ९६

९५-९६ ] ति० टी०-गुरुगौरवात्पूज्योऽप्युक्तदोषान्मत्तः पूजां नार्हते नार्हति । हे राम, सर्वे मनुजाः पूर्वं भ्रातुरसंस्कारश्रवणान्मां नृशंस इति वक्ष्यन्ति । पश्चात्तस्यागुणाञ्श्रुत्वा पुनः सुकृतं सम्यक्कृतमित्येवं वक्ष्यन्ति ॥ ९५ ॥९६॥

रा० टी०-नृशंस इति । हे राम ये मनुजाः मां नृशंसं वक्ष्यन्ति भर्तुः प्रमीतक्रियाया अकरणेन क्रूरं कथयिष्यन्ति ते एव जनाः तस्य रावणस्य गुणान् नृशंसत्वादीन् श्रुत्वा सुकृतं शोभनकृतवन्तं वक्ष्यन्ति ॥ ९६ ॥

रा० टी०-तदिति । रामः विभीषणमुवाच ॥ ९७ ॥

गो० टी०-तच्छ्रुत्वेति । परमप्रीतः सत्यवचनकथनादिति भावः । अप्रीत इति वा छेदः ॥ ९७ ॥

९७ ] ति० टी०-तवापीति । सुग्रीवस्येव तवापि प्रियं राज्याभिषेकलक्षणं मया कार्यं कर्तव्यम् । हि यतस्त्वत्प्रभावान्मया जितम् ॥ ९७ ॥

रा० टी०-तदाकारमाह—तवेत्यादिभिः । त्वत्प्रभावात् मे मया जितं रिपुजातमिति शेषः अतः मे मया तवापि प्रियं राज्यप्रापणं कार्यमतः क्षमं योग्यं वचः त्वं मया अवश्यं वाच्यः९८

गो० टी०-दोषसद्भावेपि गुणबाहुल्यादयं संस्कारयोग्य इत्याह—तवापीत्यादिना । तव त्वया, मे प्रियमपि प्रियमेव कार्यम् । चो हेतौ । यस्मात्कारणात्, त्वत्प्रभावात् मे मया जितम् तस्मान्मया त्वं क्षमं हितमेव वाच्यः । मत्प्रियत्वात् त्वद्धितत्वाच्च रावणसंस्कारः क्रियतामित्यर्थः । यद्वा तवापि मे प्रियं कार्यं मद्वैरिणो रावणस्यासंस्करणं नाम मम प्रियं तवापि कर्तव्यमेव । त्वत्प्रभावाच्च मे जितं पूर्वं च तस्य जयसाहाय्यरूपं प्रियं त्वया कृतम् । तथाप्यवश्यं तु क्षमं वाच्यः । यदहं तत्र नियोजनीयोसीत्यर्थः ॥ ९८ ॥

९८-९९ ] ति० टी०-तस्मादवश्यं क्षममभिषेकसंपादनयोग्यं यत्कृत्यं प्रेतनिर्हारलक्षणं तन्मया त्वं वाच्यः । यद्यप्ययं त्वदुक्तदोषवांस्तथापि गुणबाहुल्यात्संस्कार्य एवेत्याह—अधर्मेत्यादि ॥ ९८ ॥ ९९ ॥

१०० ] ति० टी०-त्वच्छत्रुत्वादसंस्कार्य इति चेत्तत्राह—

१ धर्मव्र इति गो. रा. पाठः । २ वच इति गो. रा. पाठः। ३ अर्होऽस्मीति गो. पाठः । ४ मर्शिनमिति गो. पाठः । ५ काममिति गो. पाठः ६ तस्य गुणानिति रा. पाठः । ७ वाक्यज्ञो वाक्यकोविदम्मिति गो. रा. पाठः । ८ च मे जितमिति गो. रा. पाठः । ९ संयुगेष्विति गो. पाठः ।

[1]क्रियतामस्य संस्कारो ममाप्येष तथा तव । त्वत्सकाशान्महाबाहो संस्कारं विधिपूर्वकम् ॥ १०१ ॥
क्षिप्र[2]मर्हति धर्मेण त्वं यशोभाग्भविष्यसि । राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः ॥ १०२ ॥
संस्[3]कारयितुमारेभे भ्रातरं रावणं हतम् । [4]स प्रविश्य पुरीं लङ्कां राक्षसेन्द्रो विभीषणः ॥ १०३ ॥
रावणस्याग्निहोत्रं तु निर्यापयति सत्वरम् । शकटान्दारुरूपाणि अग्नीन्वै याजकांस्तथा ॥ १०४ ॥
तथा चन्दनकाष्ठानि काष्ठानि विविधानि च । अगरूणि सुगन्धीनि गन्धांश्च सुरभींस्तथा ॥ १०५ ॥
मणिमुक्ताप्रवालानि निर्यापयति राक्षसः । आजगाम मुहूर्तेन राक्षसैः परिवारितः ॥ १०६ ॥
ततो माल्यवता सार्धं क्रियामेव चकार सः । सौव[5]र्णीं शिबिकां दिव्यामारोप्य क्षौमवाससम् १०७ ॥
रावणं राक्षसाधीशमश्रुवर्णमुखा द्विजाः । तूर्यघोषैश्च विविधैस्तुवद्भिश्चाभिनन्दितम् ॥ १०८ ॥
पताकाभिश्च चित्राभिः सुमनोभिश्च चित्रिताम् । उत्क्षिप्य शिबिकां तां तु विभीषणपुरोगमाः ॥ १०९ ॥
दक्षिणाभिमुखाः सर्वे गृह्य काष्ठानि भेजिरे । अग्नयो दीप्यमानास्ते तदाध्वर्युसमीरिताः ॥ ११० ॥

---

मरणान्तानीति । नः सात्विकानामस्माकं प्रयोजनं वैरनिर्यातनरूपं निर्वृत्तं संपन्नम्, अतः परं न वैरप्रयोजनमस्ति॥१००॥

रा० टी०–अधर्मेति यद्यपि एषः अधर्मानृतसंयुक्तः तथापि तेजस्वित्वादिगुणविशिष्टोऽस्ति अत एव पराजितो न श्रूयते वैराणि तु मरणान्तान्येव नः प्रयोजनं तु निवृत्तमतः अस्य संस्कारः क्रियताम् । श्लोकत्रयमेकान्वयि ॥ ९९–१०१ ॥

गो० टी०–दोषिणः कथमर्हत्वमित्याशङ्क्य गुणाधिक्यादित्याह—अधर्मेत्यादिना ॥ ९९ ॥

गो० टी०–संयुगेष्वपराजितत्वमुदाहरति—शतक्रत्विति ॥ १०० ॥

गो० टी०–गुणबाहुल्येपि त्वद्वैरी कथं संस्कार्य इत्यत्राह–मरणेति । यथायं तव बन्धुस्तथा ममापि त्वद्वत् बन्धुरेवायमित्यर्थः ॥ १०१ ॥

१०१ ] ति० टी०–यदेवमतः—अस्य संस्कारः क्रियतामिति । एष यथा तव भ्राता संस्कारादिना तवानुग्राह्यस्तथा ममाप्यनुग्राह्य एव । चतुर्विधमुक्तिष्वेकापि नास्य । तदुक्तं विष्णुपुराणे—हिरण्यकशिपोर्विष्णुरयमित्येवं न मनस्यभूत् । दशाननत्वेऽप्यनङ्गपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपदर्शनमेवासीत् । नायमच्युत इत्यासक्तिः, विपद्यतोऽन्तःकरणस्य मानुषबुद्धिरेव केवलमभूदिति, अत एव रावणकुम्भकर्णयोः शिशुपालदन्तवक्ररूपेण जन्म श्रूयते । नहि भगवत्सालोक्यं प्राप्तयोरपि जन्म भवति, किं तु ब्रह्मणा सह मुक्तिरेवेति सिद्धान्तः ॥ १०१ ॥

रा० टी०–त्वदिति । त्वत्सकाशात् विधिपूर्वकं संस्कारमर्हति संस्कारं कुर्वित्यर्थः अतः धर्मेण युक्तस्त्वं यशोभाग्भविष्यसि ॥ १०२ ॥

गो० टी०–त्वत्सकाशादिति । यशोभागिति । पापकारिणमपि संस्कृतवानिति यशस्तव भविष्यतीत्यर्थः ॥१०२॥

१०२–१०३ ] ति० टी०–यशोभागिति रामवाक्येन त्यक्तवैरो भ्रातरं संस्कृतवानिति ख्यातिरेव भविष्यतीत्यर्थः ॥ १०२ ॥ १०३ ॥

रा० टी०–राघवस्येति । विभीषणः रावणं संस्कारयितुमारेभे ॥ १०३ ॥

रा० टी०–तत्प्रकारमाह—स इत्यादिभिः । विभीषणः लंकां प्रविश्य रावणस्याग्निहोत्रं निर्यापयति यथाविधि समापयत ॥ १०४ ॥

गो० टी०–राघवस्येति । अनुरूपेण यायजूकानुगुणेन । अत्र संस्कारारम्भात् स्त्रीनिवर्तनमर्थसिद्धम् ॥ १०३ ॥

१०४–१०७ ] ति० टी०–निर्यापयति । स्मेति शेषः ॥ १०४–१०७ ॥

१०८ ] ति० टी०–द्विजा राक्षसद्विजाः । स्तुवद्भिर्बन्दिजनैरभिनन्दितमभिनन्दितमिव रावणं शिबिकामारोप्य द्विजा ययुरिति शेषः ॥ १०८ ॥

रा० टी०–शकटानिति । राक्षसो विभीषणः शकटादीन् निर्वापयति निर्वापयत् अचिनोत् श्लोकद्वयमेकान्वयि ॥ १०५ ॥ १०६ ॥

रा० टी०–आजगामेति । स विभीषणः मुहूर्तेनाजगाम ततोऽनन्तरं माल्यवता सार्द्धं क्रियां चकार ॥ १०७ ॥

रा० टी–तत्प्रकारमाह—सौवर्णामिति । विविधैस्तूर्यघोषैः स्तुवद्भिर्मगधादिभिश्च अभिनंदितं राक्षसाधीशं शिबिकामारोप्य अश्रुपूर्णमुखा द्विजाः अतिष्ठन्निति शेषः सार्द्धश्लोक एकान्वयी ॥ १०८ ॥

१०९–११० ] ति० टी०–पताकादिभिश्चित्रितां शिबिकां वाहकैरुत्थाप्य विभीषणादयः काष्ठानि गृहीत्वा दक्षिणामुखाः श्मशानमार्गं भेजिरे ॥ १०९ ॥ ११० ॥

रा० टी०–पताकाभिरिति । चित्राभिः पताकाभिः चित्रितां शिबिकां विभीषणपुरोगमाः राक्षसाः उत्क्षिप्य संवा-

---

१ दशग्रीव इति गो. पाठः । २ प्राप्तुमर्हति धर्मज्ञेति गो. पाठः । ३ संस्कारेणानुरूपेण योजयामास रावणमिति गो. पाठः । ४ इत आरभ्य सार्धश्लोकनवकं गो. पुस्तके न दृश्यते । ५ सौवर्णामिति रा. पा. ।

शरणाभिगताः सर्वे पुरस्तात्तस्य ते ययुः । अन्तःपुराणि सर्वाणि रुदमानानि सत्वरम् ॥ १११ ॥
पृष्ठतोऽनुययुस्तानि प्लवमानानि सर्वतः । रावणं प्रयते देशे स्थाप्य ते भृशदुःखिताः ॥ ११२ ॥
चितां चन्दनकाष्ठैश्च पद्मकोशीरचन्दनैः । ब्राह्म्या संवैर्तयामासू राङ्कवास्तरणाँवृताम् ॥ ११३ ॥
[ वैर्तते वेदविहितो राज्ञो वै पश्चिमः क्रतुः । ]
प्रचक्रू राक्षसेन्द्रस्य पितृमेधमनुत्तमम्ँ । वेदिं च दक्षिणाँप्राचीं यथास्थानं च पावकम् ॥ ११४ ॥
पृषदाज्येन संपूर्णं स्रुवं स्कँधे प्रचिक्षिपुः । पादयोः शकटं प्रापुरूर्वोश्चोलूखलं तदा ॥ ११५ ॥
दारुपात्राणि सर्वाणि अरणिं चोत्तरारणिम् । दत्त्वा तु मुसलं चाँन्यं यथास्थानं विचैंक्रमुः ॥ ११६ ॥

ह्य काष्ठानि गृह्य गृहीत्वा च दक्षिणाभिमुखाः सन्तः भेजिरे जग्मुरित्यर्थः सार्द्धश्लोक एकान्वयी ॥ १०९ ॥ ११० ॥

रा० टी०–अग्नय इति । अध्वर्युसमीरितास्तेऽग्नयः दीप्यमाना बभूवुरिति शेषः ॥ अर्थ पृथक् शरणाभिगताः कुण्डस्थास्तेऽग्नयः तस्य रावणस्य पुरस्तात् ययुः ॥ १११ ॥

१११ ] ति० टी०–शरणाभिगता आधारस्थानकुण्डस्थाः ॥ १११ ॥

११२ ] ति० टी०–प्लवमानानि चलनाभ्यासाभावात्त्वरया च प्लवमानानीव ॥ ११२ ॥

रा० टी०–अन्तरिति । सर्वतः प्लवमानानि अन्तःपुराणि पृष्ठतोऽनुययुः ॥ ११२ ॥

रा० टी०–रावणमिति । प्रयते देशे रावणं स्थाप्य स्थापयित्वा भृशदुःखिताः बिभीषणप्रभृतयः चन्दनकाष्ठादिभिः निर्मितां रंकुः कृष्णसारमृगः तस्येदं रांकवं तदेव स्तरःस्तरणं तेन संवृतां चितां ब्राह्म्या वेदोक्तया संवर्त्तयामासुः संश्चक्रुः सार्धश्लोक एकान्वयी ॥ ११३ ॥

११३ ] ति० टी०–पद्मको गन्धवृक्षः । ब्राह्म्या वेदमार्गानुगतक्रियया । रङ्कुः कृष्णसारमृगस्तत्संबन्धि राङ्कवं तेनास्तरणेनावृतां चितां संवर्तयामासुश्चक्रुः ॥ ११३ ॥

गो० टी०–चितामिति । चन्दनकाष्ठानां संबन्धिनीम् । पद्मकमुशीरं च गन्धद्रव्यं प्रसिद्धम् । ब्राह्म्या वेदोक्तप्रक्रियया । रङ्कुः मृगविशेषः तत्संबन्धि चर्म राङ्कवं तदेवास्तरणं तेनावृतां चिताम् संवेशयाञ्चक्रुः योजयाञ्चक्रुः । रावणम् ऋत्विज इति च शेषः ॥ १०४ ॥

११४ ] ति० टी०–पितृमेधं पितृमेधविहितं कर्म प्रचक्रुः । तत्प्रकारः—वेदिं चेत्यादि । दक्षिणाप्राचीम् । चितायाः दक्षिणाप्राग्देशे इत्यर्थः । यथा स्थानं पावकं च प्रचक्रुः । 'दक्षिणपूर्वदेशे आहवनीयं निदधाति, उत्तरपश्चिमे गार्हपत्यम्, दक्षिणपश्चिमे दक्षिणाग्निम्' इति सूत्रोक्तस्थानमनतिक्रम्येत्यर्थः ॥ ११४ ॥

रा० टी०–प्रचक्रुरिति । राक्षसेन्द्रस्य पितृमेधं पितृमेधविहितक्रियां चक्रुः तदाकारमाह दक्षिणाप्राचीं चितायाः दक्षिणपूर्वदेशे वेदीं चक्रुः यथास्थानं विहितस्थानमनतिक्रम्य पावकं प्रचक्रुः तथा च शास्त्रं दक्षिणपूर्वदेशे आहवनीयं दधाति उत्तरपश्चिमे गार्हपत्यं दक्षिणपश्चिमे दक्षिणाग्निमितिसूत्रे ॥ ११४ ॥

गो० टी०–वर्तत इति । पश्चिमः क्रतुः अन्त्येष्टिः । वर्तते अवर्तत । चितानिर्माणानन्तरमन्तिमेष्टिं चक्रुरित्यर्थः । राक्षसेन्द्रस्य पितृमेधं पितृमेधसंस्कारं च, अनुक्रमं यथाक्रमम् प्रचक्रुः ॥ १०५ ॥

गो० टी०–संग्रहेणोक्तं संस्कारं प्रपञ्चयति–वेदिमित्यादिना । दक्षिणप्राच्यां चितायाः आग्नेयभागे, वेदिं तत्र यथास्थानं पावकं च त्रेताग्निं च प्रचक्रुरित्यनुषज्यते । वेद्यां पश्चिमे गार्हपत्यं प्राच्यामाहवनीयम् दक्षिणतो दक्षिणाग्निं च स्थापयामासुरित्यर्थः । पृषदाज्येन दधिमिश्रघृतेन । पृषदाज्यं सदध्याज्यमित्यमरः । संपूर्णं स्रुवं होमपात्रं प्रचिक्षिपुः प्रतिपत्त्यर्थं चितायामिति शेषः ॥ १०६ ॥

११५ ] ति० टी०–पृषदाज्येन सदध्याज्येन संपूर्णेनोपलक्षितं स्रुवं स्कन्धे स्कन्धदेशे प्रचिक्षिपुः । यद्यपि 'नासिके स्रुवौ' इत्यापस्तम्बेनोक्तम्, तथापि सूत्रान्तरात्स्कन्धेऽपि निक्षेपः स्रुवस्य बोध्यः । तथा पादयोः शकटमूर्वोरुलूखलमिति च सूत्रान्तरादेव बोध्यम् ॥ ११५ ॥

११६ ] ति० टी०–दारुपात्रादिसर्वं सूत्रोक्ततत्तत्स्थाने दत्त्वान्यं मुसलं चातुर्मास्यमुसलं यथास्थानं दत्त्वा च विचक्रमुः पितृमेधं चक्रुः ॥ ११६ ॥

रा० टी०–पृषदेति । पृषदा दध्ना सहितेन आज्येन घृतेन संपूर्णं स्रुवं स्कंधे प्रचिक्षिपुः पादयोश्शकटमूर्वोरुलूखलं च प्रापुः प्रचिक्षिपुः ॥ ११५ ॥

रा० टी०–दारुपात्राणीति । दारुपात्रादीनि अन्यं मुशलं च यथास्थानं दत्वा विचक्रमुः पितृमेधं चक्रुः ॥ ११६ ॥

गो० टी०–यज्ञपात्रान्तराणामपि प्रतिपत्तिं दर्शयति—पादयोरित्यादिना श्लोकत्रयेण ॥ शकटं सोमराजानयनशकटम् । उलूखलं यज्ञीयव्रीह्यवहननसाधनम् । अन्यत् स्थाल्यादिकम् दारुपात्रादिकं यथास्थानं दत्त्वा । शास्त्रदृष्टेन वेदविहितेन, महर्षिविहितेन स्मृत्युक्तेन विधिना क्रमेण, तत्र

१ संवृतामिति गो. पाठः । २ वेशयांचक्रुरिति गो. पाठः । ३ संवृतामिति रा. पाठ. । ४ इदमर्धमधिकं गो. पाठे । ५ क्रममिति गो. पाठः । ६ दक्षिणप्राच्यामिति गो. पाठः । ७ सर्वे इति गो. पाठः । ८ मन्तर्त्वोरुलूखलमिति गो. पाठः । ९ अन्यदिति गो. पाठः । १० विचक्षणा इति गो. पाठः ।

शास्त्रदृष्टेन विधिना महर्षिविहितेन च । तत्र मेध्यं पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः ॥ ११७ ॥
परिस्तरणिकां राज्ञो घृताक्तां समवेशयन् । गन्धैर्माल्यैरलंकृत्य रावणं दीनमानसाः ॥ ११८ ॥
विभीषणसहायास्ते वस्त्रैश्च विविधैरपि । लाजैरवकिरन्ति स्म बाष्पपूर्णमुखास्तथा ॥ ११९ ॥
स ददौ पावकं तस्य विधियुक्तं विभीषणः । स्नात्वा चैवार्द्रवस्त्रेण तिलान्दर्भविमिश्रितान् ॥ १२० ॥
उदकेन च संमिश्रान्प्रदाय विधिपूर्वकम् । [ प्रदाय चोदकं तस्मै मूर्ध्ना चैनं नमस्य च ॥ ]
ताः स्त्रियोऽनुनयामास सान्त्वयित्वा पुनः पुनः ॥ १२१ ॥
गम्यतामिति ताः सर्वा विविशुर्नगरं ततः । प्रविष्टासु पुरीं स्त्रीषु राक्षसेन्द्रो विभीषणः ॥
रामपार्श्वमुपागम्य समतिष्ठद्विनीतवत् ॥ ॥ १२२ ॥
रामोऽपि सह सैन्येन ससुग्रीवः सलक्ष्मणः । हर्षं लेभे रिपुं हत्वा वृत्रं वज्रधरो यथा ॥ १२३ ॥

ततो विमुक्त्वा सशरं शरासनं महेन्द्रदत्तं कवचं स तन्महत् ।
विमुच्य रोषं रिपुनिग्रहात्ततो रामः स सौम्यत्वमुपागतोऽरिहा ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकादशाधिकशततमः सर्गः ॥ १११ ॥

---

चितासमीपे, मेध्यं पवित्रम्, पशुं छागं, हत्वा । हननं होमपर्यन्तस्याप्युपलक्षणम् । परिस्तरणिकां परिस्तरणानि जात्येकवचनम् । समवेशयन् चिक्षिपुरित्यर्थः ॥ १०७–१०९ ॥

११७ ] ति० टी०–शास्त्रदृष्टेन श्रुतिदृष्टेन महर्षिविहितेन कल्पसूत्रकृदृषिविहितेन ॥ ११७ ॥

११८ ] ति० टी०–परिस्तीर्यते मुखमनयेति परिस्तरणिका वपा तां राक्षसेन्द्रस्य मुखे समवेशयन् । 'वपास्य मुखं प्रोर्णोति' इति सूत्रात् । तीर्थस्तु 'अनुस्तरणिकीं राज्ञः' इति पठित्वानुस्तरणिकीं राजगवीं तामालभ्य तच्चर्मणा यजमानमास्तृतवन्त इत्यर्थः । 'मृतायाउस्तरणीं घ्नन्ति' इति श्रुतेरित्याह ॥ ११८ ॥

रा० टी०–तदाकारमाह—शास्त्रेति । तत्र चिताभूमौ शास्त्रदृष्टेन महर्षिभिर्विहितेनोपदिष्टेन च विधिना मेध्यं पशुं हत्वा घृताक्तां परिस्तरणिकां वपां राक्षसेन्द्रस्य राज्ञो रावणस्य समवेशयन् सार्धश्लोक एकान्वयी ॥ ११७ ॥ ११८ ॥

रा० टी०–गन्धैरिति । विभीषणसहायास्ते राक्षसाः रावणं गन्धादिभिरलंकृत्य लाजैरवकिरन्ति स्म सार्धश्लोक एकान्वयी ॥ ११९ ॥

गो० टी०–अथ शवालङ्कारमाह—गन्धैरित्यादि सार्धश्लोकमेकं वाक्यम् । अवकिरन्ति चितामिति शेषः११०–१११

११९–१२० ] ति० टी०–वस्त्रैश्चेति । अलंकृत्येत्यनुकर्षः ॥ ११९ ॥ १२० ॥

रा० टी०–स इति । विभीषणः विधियुक्तं यथा भवति तथा पावकं ददौ अद्रं पृथक् स्नात्वेति । आर्द्रवस्त्रेण तिलान् विधिपूर्वकं प्रदाय तस्थाविति शेषः ॥ १२० ॥

गो० टी०–अथ संस्कारमाह—ददाविति । तस्य तस्मै रावणाय । विधियुक्तं मन्त्रयुक्तम् ॥ ११२ ॥

गो० टी०–स्नात्वेत्यादि । गम्यतामितीतिपर्यन्तं किंचिदधिकं श्लोकद्वयमेकान्वयम् ॥ दूर्वोदकमिश्रितान् तिलान् प्रेतावाहनार्थं भूमौ प्रदाय तत्र तस्मै रावणाय उदकं दत्त्वा ताः स्त्रियः गम्यतामिति पुनः पुनः सान्त्वमुक्त्वा, अनुनयामास पुरीं प्रापयामास ॥ ११३ ॥ ११४ ॥

१२१ ] ति० टी०–विधिपूर्वकं प्रदाय । स्थित इति शेषः । ननु 'निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा । तत्यजुस्तं महाभागं पञ्चभूतानि रावणम् ॥ शरीरधातवो ह्यस्य मांसं रुधिरमेव च । नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यत ॥' इति महाभारत उक्तत्वेन कस्य वाल्मीकिना श्मशानानयनपूर्वकं दाह उक्त इति चेन्न, तस्य रामबाणतेजोवर्णनविषयेऽत्युक्त्यलंकारपरत्वादिति वदन्ति ॥ १२१ ॥

रा० टी०–ता इति । सान्त्वयित्वा गम्यतामित्युक्त्वा चेति शेषः स्त्रियः अनुनयामास विभीषण इति शेषः अत एव ताः स्त्रियो नगरं विविशुः ॥ १२१ ॥

१२२–१२४ ] ति० टी०–गम्यतामित्युवाचेत्यर्थः । रावणपत्नीरिति शेषः ॥ १२२–१२४ ॥

अयं संस्कारो नवम्यामेव सायंकाले ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकादशाधिकशततमः सर्गः ॥ १११ ॥

रा० टी०–प्रविष्टास्विति । स्त्रीषु पुरीं प्रविष्टासु विभीषणः रामपार्श्वमुपागम्य विनीतवत् विनीतिविशिष्टं यथा भवति तथा अतिष्ठत् ॥ १२२ ॥

---

१ चार्द्रेति गो. पाठः । २ ददौ चेति गो. पाठः । ३ दूर्वेति गो. पाठः । ४ इदमर्धमधिकं गो. पाठे । ५ सान्त्वमुक्तेति गो. पाठः । ६ ततेति गो. पाठः । ७ च सर्वासु राक्षसीष्विति गो. रा. पाठः । ८ तदेति गो. रा. पाठः । ९ यथा वृत्रं शतक्रतुरिति गो. रा. पाठः । १० इदं पद्यं गो. पुस्तके न दृश्यते । ११ स्थितिं रा. पाठः ।

# द्वादशाधिकशततमः सर्गः ।

विभीषणस्य लङ्काराज्ये रामानुमतलक्ष्मणकृताभिषेकः अशोकवनिकानिवासिमैथिल्यै रावणवधस्वकुशलनिवेदनाय रामेण हनुमतः प्रेषणं च ।

ते रावणवधं दृष्ट्वा देवगन्धर्वदानवाः । जग्मुः स्वैः स्वैर्विमानैस्ते कथयन्तः शुभाः कथाः ॥ १ ॥
रावणस्य वधं घोरं राघवस्य पराक्रमम् । सुयुद्धं वानराणां च सुग्रीवस्य च मन्त्रितम् ॥ २ ॥
अनुरागं च वीर्यं च मारुतेर्लक्ष्मणस्य च । पतिव्रतात्वं सीताया हनूमति पराक्रमम् ॥ ३ ॥
कथयन्तो महाभागा जग्मुर्हृष्टा यथागतम् । राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम् ॥ ४ ॥
अनुज्ञाप्य महाबाहुर्मातलिं प्रत्यपूजयत् । राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः ॥ ५ ॥
दिव्यं तं रथमास्थाय दिवमेवोरुपपात ह । तस्मिंस्तु दिवमारूढे सुरथे रथिनां वरः ॥ ६ ॥
राघवः परमप्रीतः सुग्रीवं परिषस्वजे । परिष्वज्य च सुग्रीवं लक्ष्मणेनाभिवादितः ॥ ७ ॥
पूज्यमानो हरिगणैराजगाम बलालयम् । अथोवाच स काकुत्स्थः समीपपरिवर्तिनम् ॥ ८ ॥

रा० टी०—राम इति । रामः हर्षं लेभे ॥ १२३ ॥

रा० टी०—तत इति । रामः महेन्द्रदत्तं शरासनं कवचं च विमुक्त्वा विसृज्य रिपुनिग्रहात् रिपुनिग्रहं संपाद्य रोषं रोषाभासं विसृज्य सौम्यत्वमुपागतः ॥ १२४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

गो० टी०—ताः सर्वा इत्युत्तरवाक्यादि । रामपार्श्वमुपागम्येति । रणशिरसि हतत्वेन रावणस्याशौचाभावादागतः, अत एवोत्तरदिने राज्याभिषेकोऽयोध्यागमनं चावाधितम् । प्रथमायां रावणसंस्कारः ॥ ११५ ॥ ११६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

१ ] ति० टी०—ते रावणेति ॥ १ ॥

रा०टी०—रावणवधानन्तरकालिकं वृत्तान्तमाह—ते इत्यादिभिः । शुभाः कथाः कथयन्तः ते देवादयः स्वैः स्वैर्विमानैर्जग्मुः ॥ १ ॥

गो० टी०—अथ विभीषणाभिषेकः—ते रावणवधमित्यादि । अत्र क्रियाभेदात्तच्छब्दद्वयम् ॥ १ ॥

२ ] ति० टी०—सुग्रीवस्य मन्त्रितं सेनासंमेलनसीतान्वेषणादिसर्वकार्यसाधकं मन्त्रसामर्थ्यम् ॥ २ ॥

३ ] ति० टी०—मारुतिलक्ष्मणयो रामेऽनुरागं वीर्यं च ॥ ३ ॥

रा० टी०—कथास्वरूपं बोधयन्नाह—रावणस्येति । रावणस्य वधादि कथयन्तः महाभागा देवादयो जग्मुः श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—शुभाः कथाः कथयन्त इत्यस्यैव विवरणम्—रावणस्य वधमित्यादि । मन्त्रितं मन्त्रम् । सौमित्रेरिति तन्मातुः श्लाघनव्यञ्जनाय, अस्य जननी हि भाग्यवतीति २॥३॥

४ ] ति० टी०—इन्द्रदत्तमिन्द्रप्रेषितम् ॥ ४ ॥

५-६ ] ति० टी०—अनुज्ञाप्य रथं नयेत्याज्ञां दत्त्वा । यद्यपि भारते सीताया आगमनोत्तरं रथादवतरणं भगवत उक्तम्, तथापि तत्र पौर्वापर्यक्रमे तात्पर्याभावान्न क्षतिः॥५॥६॥

रा० टी०—राघव इति । राघवः रथमनुज्ञाप्य स्वर्गमने नियुज्य मातलिं प्रत्यपूजयत् ॥ ४ ॥

रा० टी०—राघवेणेति । मातलिः दिवमारुरोह ॥ ५ ॥

रा० टी०—तस्मिन्निति । राघवस्सुग्रीवं परिषस्वजे ॥६॥

गो० टी०—राघवस्त्विति । इन्द्रदत्तम् इन्द्रप्रेरितम् । शिखिप्रभम् । अग्निप्रभम् । प्रत्यपूजयत् उपचचार ॥ ४-६ ॥

७ ] ति० टी०—लक्ष्मणेनाभिवादितो राघवः ॥ ७ ॥

रा० टी०—परिष्वज्येति । हरिश्रेष्ठैः पूज्यमानो राघवः बलालयं सेनासंनिवेशस्थानमाजगाम ॥ ७ ॥

गो० टी०—परिष्वज्येति । प्रचोदितः विज्ञप्तः । बलालयं शिबिरम् ॥ ७ ॥

८ ] ति० टी०—बलालयं सेनानिवेशस्थानम् । अथ त्रिभिर्दिनैर्दशरात्रैकादशाहद्वादशाहकर्तव्यक्रियासमाप्तौ । चतुर्थेऽह्नीत्यर्थः । नात्र दशाहमाशौचमिति भ्रमितव्यम् । 'उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य तु । सद्यः संतिष्ठते यज्ञस्तथाशौचमिति स्थितिः ॥' इति मनूक्तेः ॥ ८ ॥

रा० टी०—अब्रवीदिति । रामो लक्ष्मणमब्रवीत् ॥ ८ ॥

गो० टी०—अब्रवीच्चेति । सत्यसंपन्नत्वादिविशेषणं यथोक्तकारित्वद्योतनाय ॥ ८ ॥

१ सौमित्रेरिति गो. पाठः । २ इदमर्धं गो. रा. पुस्तकयोर्न दृश्यते । ३ अनुज्ञाय महाभाग इति गो. पाठः । ४ आरुरोह स इति गो. रा. पाठः । ५ सुरसारथिसत्तम इति गो. रा. पाठः । ६ प्रचोदित इति गो पाठः । ७ श्रेष्ठैरिति गो. रा. पाठः । ८ अब्रवीच्च तदा राम इति गो. पाठः ।

सौमित्रिं मित्रसंपन्नं लक्ष्मणं शुभलक्षणम् । विभीषणमिमं सौम्य लङ्कायामभिषेचय ॥ ९ ॥
अनुरक्तं च भक्तं च तथा पूर्वोपकारिणम् । एष मे परमः कामो यदिमं रावणानुजम् ॥ १० ॥
लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम् । एवमुक्तस्तु सौमित्री राघवेण महात्मना ॥ ११ ॥
तथेत्युक्त्वा सुसंहृष्टः सौवर्णं घटमाददे । तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् ॥ १२ ॥
व्यादिदेश महासत्त्वैः समुद्रसलिलं तदा । अतिशीघ्रं ततो गत्वा वानरास्ते मनोजवाः ॥ १३ ॥
आगतास्तु जलं गृह्य समुद्राद्वानरोत्तमाः । ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ॥ १४ ॥
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् । लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥१५ ॥
विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतः । अभ्यषिञ्चंस्तदा सर्वे राक्षसा वानरास्तथा ॥ १६ ॥
प्रहर्षमतुलं गत्वा तुष्टुवू राममेव हि । तस्यामात्या जहृषिरे भक्ता ये चास्य राक्षसाः ॥ १७ ॥
दृष्ट्वाभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम् । राघवः परमां प्रीतिं जगाम सहलक्ष्मणः ॥ १८ ॥

९-११ ] ति० टी०-लङ्कायामभिषेचय । रावणसिंहासने साक्षादिति शेषः ॥ ९-११ ॥

रा० टी०-तदाकारमाह विभीषणमिति । लङ्कायामभिषिक्तं विभीषणं पश्येयमेषःनोऽस्माकं यद्यतः परः कामोभिलाषः अतः अनुरक्तं मद्विषयकानुरागवन्तमत एव भक्तं मत्प्रिष्ठप्रीत्यनुकूलव्यापारवन्तं विभीषणं लङ्कायामभिषेचय श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

रा० टी०-एवमिति । सौमित्रिः तथेत्युक्त्वा सौवर्णं घटमाददे ॥ ११ ॥

गो० टी०-विभीषणमित्यादिश्लोकद्वयमेकान्वयम् ॥ लङ्कायामभिषेचय लङ्कायां गत्वाभिषेचय । समुद्रतीर एव लङ्काराज्याभिषेके कृतेपि पुनर्विधानं रावणसिंहासनेऽभिषेकार्थम् । अनुरक्तमित्यनेन मित्रकृत्यमुक्तम् । भक्तमित्यनेन दास्यकृत्यम् । उपकारिणमित्यनेनानुरागभक्त्योः कार्यपर्यवसानमुक्तम् । परमः काम इत्यनेन शरणागतविभीषणाभिमतपरिपूरणमेव विजयस्य प्रधानप्रयोजनमित्यवगम्यते ॥ ९ ॥ १० ॥

गो० टी०-एवमिति । घटमिति जात्येकवचनम् ॥११॥

१२ ] ति० टी०-तं घटं हस्ते इति जातावेकवचनम् । मनोजवान्वानरान्व्यादिदेश ॥ १२ ॥

रा० टी०-तत्प्रयोजनमाह तमिति । तं सौवर्णं घटं वानरेन्द्राणां हस्ते दत्त्वा समुद्रात् सलिलानये मनोजवान् वानरानादिदेश ॥ १२ ॥

गो० टी०-तमिति । आनये आनयने । हस्त इत्यत्रापि जात्येकवचनम् । वानरेन्द्राणामिति बहुवचनप्रयोगात् ॥ १२ ॥

१३ ] ति० टी०-समुद्रसलिलं तदानयनम् ॥ १३ ॥

१४-१५ ] ति० टी०-समुद्रात् । चतुःसमुद्रेभ्य इत्यर्थः । परमासने विभीषणं संस्थाप्य तमभ्यषिञ्चत् ॥ १४ ॥ १५ ॥

१६ ] ति० टी०-मन्त्रदृष्टेन वेददृष्टेन ॥ १६ ॥

रा० टी०-अतीति । वानरोत्तमाः वानराः अतिशीघ्रं गत्वा तज्जलं गृह्य गृहीत्वा आगताः ॥ १३ ॥

रा० टी०-तत इति । ततोऽनन्तरमेकं घटं गृह्य गृहीत्वा परमासने संस्थाप्य तेन घटेन तज्जलेन विभीषणमभ्यषिञ्चत् ॥ १४ ॥

रा० टी०-तदेव विशिष्याह लङ्कायामिति । सुहृद्गणैस्समावृतं लंकायां रक्षसां मध्ये आसीनमिति शेषः विभीषणं मंत्रदृष्टेन वेदोक्तेन विधिना रक्षसां राजानं कर्तुमिति शेषः अभ्यषिञ्चत् अत एव अमात्याः अग्रेऽस्य भक्तास्ते च राक्षसा जहृषिरे श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०-इतीति । आदेशाद्धेतोरित्यर्थः । इति हेतुप्रकरणप्रकाशादिसमाप्तिष्वित्यमरः । वानरा वानरोत्तमा इति वचनं वानरोत्तमत्वेपि मानुषत्वव्यावर्तनाय । समुद्रात् समुद्रेभ्यः ॥ १३ ॥ १४ ॥

गो० टी०-लङ्कायामित्यादिसार्धश्लोक एकान्वयः । अनेन रामनिदेशानन्तरमेव लक्ष्मणो विभीषणादिभिः सह लङ्कां प्रविष्टवानित्यवगम्यते । मन्त्रदृष्टेन मन्त्रेषु वेदेषु दृष्टेन स्पष्टमवगम्यमानेन, विधिना प्रकारेण । शुद्धात्मानमित्यनेन रामाज्ञया अभिषेकमङ्गीकृतवान् । परमार्थस्तु रामकैङ्कर्य एवासक्तोभूदित्यवगम्यते । आज्ञाकैङ्कर्यं हि कर्तव्यम् ॥१५॥१६॥

१७-१८ ] ति० टी०-भक्ता ये चास्य विभीषणस्यामात्यव्यतिरिक्ता भक्तास्तेऽपीत्यर्थः ॥ १७ ॥ १८ ॥

रा० टी०-दृष्ट्वेति । राघवः परमां प्रीतिमाजगाम॥१७॥

रा० टी०-स इति । बिभीषणः रामदत्तं राज्यं प्राप्य प्रकृतयः प्रकृतीः प्रजाः सान्त्वयित्वा राममुपागमत् ॥ १८ ॥

गो० टी०-स इति । प्रकृतीः अमात्यप्रभृतीन्, सान्त्वयित्वा पुत्रमित्रादिविनाशजशोकापनोदनं कृत्वा राममुपागमत् । लक्ष्मणेन सहेति शेषः ॥ १७ ॥ १८ ॥

१ सत्यसंपन्नमिति गो. सत्वसंपन्नमिति रा. पाठः । २ दीप्ततेजसमिति गो. रा. पाठः । ३ चैवेति गो. रा. पाठः । ४ यदीममिति रा. पाठः । ५ त्विति गो.रा.पा. । ६ वीति गो.रा. पुस्तकयोर्नास्ति । ७ सत्त्वान्समुद्रात्सलिलानये इति गो.रा.पा. । ८ इतीति गो. पाठः। ९ वृतमिति गो.रा. पाठः । १० अभ्यषिञ्चत्स धर्मात्मा शुद्धात्मानं विभिषणमिति गो. रा. पाठः । ११ इदं पद्यं गो. रा. पुस्तकयोर्न दृश्यते । १२ इदमर्धं गो. पुस्तके न दृश्यते ।

[ स तद्राज्यं महत्प्राप्य रामदत्तं विभीषणः । ]
सान्त्वयित्वा प्रकृतयस्ततो राममुपागमत् । दध्यक्षतान्मोदकांश्च लाजाः सुमनसस्तथा ॥ १९ ॥
आजह्रुरथ संहृष्टाः पौरास्तस्मै निशाचराः । स तान्गृहीत्वा दुर्धर्षो राघवाय न्यवेदयत् ॥ २० ॥
माङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्यवान् । कृतकार्यं समृद्धार्थं दृष्ट्वा रामो विभीषणम् ॥
प्रतिजग्राह तत्सर्वं तस्यैव प्रतिकाम्यया ॥ ॥ २१ ॥
ततः शैलोपमं वीरं प्राञ्जलिं प्रणतं स्थितम् । उवाचेदं वचो रामो हनूमन्तं प्लवङ्गमम् ॥ २२ ॥
अनुज्ञाप्य महाराजमिमं सौम्य विभीषणम् । [ गच्छ सौम्यपुरीं लङ्कामनुज्ञाप्य यथाविधि ॥ ]
प्रविश्य नगरीं लङ्कां कौशलं ब्रूहि मैथिलीम् ॥ २३ ॥
वैदेहीं मां च कुशलं सुग्रीवं च सलक्ष्मणम् । आचक्ष्व वदतां श्रेष्ठ रावणं च [13] हतं रणे ॥ २४ ॥
प्रियमेतदिहाख्याहि वैदेह्यास्त्वं हरीश्वर । प्रतिगृह्य [16] तु संदेशमुपावर्तितुमर्हसि ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वादशाधिकशततमः सर्गः ॥ ११२ ॥

---

१९ ] ति० टी०—प्रकृतयः प्रकृतीः स्वपुरराष्ट्रप्रजाः॥१९॥

२० ] ति० टी०—पौरास्तस्मै विभीषणायाजह्रुः । रामसमीपगमनवेलायामिति शेषः । तानुपहृतान्पदार्थान् ॥ २० ॥

रा० टी०—अक्षतानिति । निशाचराः तस्मै बिभीषणाय अक्षतादीन् आजह्रुः ॥ १९ ॥

रा० टी०—स इति । स बिभीषणः तान् अक्षतादीन् गृहीत्वा मंगल्यं मंगलार्हं सर्वं वस्तुजातं मंगलं यथा भवति तथा राघवाय रामाय लक्ष्मणाय च न्यवेदयत् ॥ २० ॥

गो० टी०—स तानिति । मङ्गलमर्हतीति मङ्गल्यम् । मङ्गलप्रयोजनमित्यर्थः । मङ्गलं हरिद्रादिमङ्गलद्रव्यम्, सर्वम् उक्ताक्षतादिभिन्नं, रामाय लक्ष्मणाय च न्यवेदयत् ॥ १९ ॥

२१ ] ति० टी०—लक्ष्मणाय च न्यवेदयत् । प्रतिकाम्या इच्छा ॥ २१ ॥

रा० टी०—कृतेति । रामः बिभीषणं समृद्धार्थं दृष्ट्वा तस्य बिभीषणस्यैव प्रतिकाम्यया इच्छया तद्बिभीषणसमर्पितं सर्वं प्रतिजग्राह ॥ २१ ॥

गो० टी०—कृतकार्यमिति । तस्यैव प्रियकाम्यया न तु स्वभोगेच्छया ॥ २० ॥ २१ ॥

२२ ] ति० टी०—ततोऽभिषेकोत्तरं दिनद्वये तस्य प्रजासान्त्वनोत्तरं रामपूजार्थमागते विभीषणे तत्पूजां कृत्वा नगरं गते सति । सप्तमे दिन इत्यर्थः ॥ २२ ॥

रा० टी०—तत इति । राघवो हनूमन्तमब्रवीत् ॥ २२ ॥

२३-२४ ] ति० टी०—अनुज्ञाप्य । पुराधिपतित्वात्कर्तव्येऽर्थे तदनुज्ञापेक्षणम् । आदौ सीतां प्रति कुशलप्रश्नः, ततः स्वकुशलनिवेदनम् ॥ २३ ॥ २४ ॥

२५ ] ति० टी०—संदेशम् । वैदेह्याः प्रतिसंदेशमित्यर्थः २५

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वादशाधिकशततमः सर्गः ॥ ११२ ॥

रा० टी०—तदाकारमाह अनुमान्येत्यादिभिः महाराजं बिभीषणं यथाविधि अनुमान्य सत्कृत्य लंकां गच्छ तत्र अनुज्ञाप्य बिभीषणाज्ञां गृहीत्वा रावणगृहं प्रविश्य विजयेन अभिनन्द्य सम्यक् नन्दयित्वा वैदेह्याः समीपे मां कुशलिनं मया हतं रावणं च आचक्ष्व सार्धश्लोकद्वयमेकान्वयि ॥ २३ ॥ २४ ॥

रा० टी०—प्रियमिति । एतत् प्रियमुदाहृत्य उक्त्वा वैदेह्याः संदेशं प्रतिगृह्य उपावर्तितुं शीघ्रमागन्तुमर्हसि ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुर्दशाधिकशततमः सर्गः ॥११४॥

गो० टी०—अनुमान्येत्यादिसार्धश्लोकत्रयमेकान्वयम् ॥ बिभीषणमनुमान्य लङ्कां गच्छ, विभीषणमनुज्ञाप्य रावणगृहं प्रविश्य, विजयेन विजयकथनेन, अभिनन्द्य सीतां तोषयित्वा, वैदेह्यै मां कुशलिनमाचक्ष्वेति संबन्धः । संदेशं सीतावाचिकम् ॥ २२-२५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

---

१ इदमर्धमधिकं गो. रा. पुस्तकयोः । २ स सान्त्वयित्वा प्रकृतीरिति रा. । प्रकृतीः सान्त्वयित्वा चेति गो. पाठः । ३ अक्षतान्मोदकाँल्लाजान् दिव्याः सुमनसस्तदेति गो. रा. पाठः । ४ मंगल्यामिति गो. रा. पाठः । ५ पार्श्वत इति गो. पुरत इति रा. पाठः । ६ अब्रवीद्राघवो वाक्यमिति गो. । ७ मान्येति गो. रा. पाठः । ८ इदमर्धमधिकं गो. रा. पुस्तकयोः । ९ रावणगृहं विजयेनाभिनन्द्यचे ति गो. रा. पाठः । १० वैदेह्यै मां कुशलिनमिति गो. मां कुशलिनमिति रा. पाठः । ११ ससुग्रीवमिति गो. रा. पाठः । १२ जयतामिति गो. पाठः । १३ मया हतमिति गो. रा. पाठः । १४ उदाहृत्येति गो. रा. पाठः । १५ मैथिल्या इति गो. रा. पाठः । १६ चेति गो. रा. पाठः ।

## त्रयोदशाधिकशततमः सर्गः ।

राघवप्रहितो मारुतिर्लङ्कां प्रविश्य विभीषणेनानुज्ञातोऽशोकवनिकां गत्वा प्रणम्य वैदेह्यै रामादीनां कुशलं रावणवधं चाकथयत तया तु दृष्टया भर्तारं कदा पश्येयमित्यादि पृष्टो हरिरचिरादेव पश्यसीत्युक्त्वा राघवमुपाजगाम ।

इति प्रतिसमादिष्टो हनूमान्मारुतात्मजः । प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ १ ॥
प्रविश्य च पुरीं लङ्कामनुज्ञाप्य विभीषणम् । ततस्तेनाभ्यनुज्ञातो हनूमान्वृक्षवाटिकाम् ॥ २ ॥
संप्रविश्य यथान्यायं सीताया विदितो हरिः । ददर्श मृजया हीनां सातङ्कां रोहिणीमिव ॥ ३ ॥
वृक्षमूले निरानन्दां राक्षसीभिः परीवृताम् । निभृतः प्रणतः प्रह्वः सोऽभिगम्याभिवाद्य च ॥ ४ ॥
दृष्ट्वा समागतं देवी हनूमन्तं महाबलम् । तूष्णीमास्त तदा दृष्ट्वा स्मृत्वा हृष्टाभवत्तदा ॥ ५ ॥
सौम्यं तस्या मुखं दृष्ट्वा हनूमान्प्लवगोत्तमः । रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥ ६ ॥
वैदेहि कुशली रामः सुग्रीवः सहलक्ष्मणः । [ विभीषणसहायश्च हरीणां सहितो बलैः । ]
कुशलं त्वाह सिद्धार्थो हतशत्रुररिमित्रजित् ॥ ॥ ७ ॥
विभीषणसहायेन रामेण हरिभिः सह । निहतो रावणो देवी लक्ष्मणेन च वीर्यवान् ॥ ८ ॥

१-२ ] ति० टी०-इति प्रतीति । सीतां प्रति समादिष्ट इत्यर्थः ॥ १ ॥ २ ॥

रा० टी०-मैथिलीं प्रति हनुमत्प्रेषणानन्तरकालिकं वृत्तान्तमाह-इतीत्यादिभिः । हनुमान् निशाचरैः पूज्यमानस्सन् लङ्कां प्रविवेश ॥ १ ॥

रा० टी०-प्रविश्येति । लङ्कां प्रविश्य विभीषणमनुज्ञाप्य तत्रस्थित्यर्थमाज्ञां दत्वा तेन विभीषणेन, अभ्यनुज्ञातो हनुमान् वृक्षवाटिकां यथान्यायं प्रविश्य सीतया विदितोऽभवदिति शेषः सार्धश्लोक एकान्वयी ॥ २ ॥

गो० टी०-अथ हनुमत्सीतासंवादः—इति प्रतिसमादिष्ट इत्यादि । मारुतात्मज इत्यनेन वेगातिशय उच्यते । पूज्यमान इति । मार्गप्रदर्शनादिभिः पूज्यमानत्वम् ॥ १ ॥

गो० टी०-प्रविश्येत्यादिसार्द्धश्लोक एकान्वयः । मृजया शरीरसंस्कारेण । सातङ्कां सग्रहपीडाम् ॥ २ ॥

३ ] ति० टी०-मृजया स्नानादिसंस्कारेण । सातङ्कां ग्रहपीडासहिताम् ॥ ३ ॥

४-६ ] ति० टी०-निभृतो निश्चलः । प्रह्वो नम्रः । अभिवाद्य च । स्थित इति शेषः ॥ ४-६ ॥

रा० टी०-ददर्शेति । मृजया स्नानादिना हीनां रोहिणीमिव सातङ्कां शंकासहितामत एव निरानंदां राक्षसीभिः परिवृतां वृक्षमूले स्थितामिति शेषः सीतां स हनुमान् ददर्श निभृतः स्वस्थचित्तः शिरसानतः प्रह्वः उच्चारिततात्कालिकशब्दस्सन् अभिवाद्य अभिगम्य तत्समीपं प्राप्य तस्थौ चेति शेषः सार्द्धश्लोक एकान्वयी ॥ ३ ॥ ४ ॥

रा० टी०-दृष्ट्वेति । समागतं हनूमन्तं दृष्ट्वा दूरतोऽवलोक्य तत्वेनाज्ञात्वेत्यर्थः तूष्णीमास्ते दृष्ट्वा समीपतोऽवलोक्य स्मृत्वा हनूमानेवायमिति संस्मृत्य हृष्टाभवत् हृष्टाभवदित्यनेन सीतया कार्यसिद्धिर्ज्ञातेति सूचितम् ॥ ५ ॥

रा० टी०-सौम्यमिति । हनुमान् तस्याः सीतायाः सौम्यं मुखं दृष्ट्वा रामस्य वचनमाख्यातुमुपचक्रमे ॥ ६ ॥

गो० टी०-निभृत इत्यर्धम् । अभिगम्य समीपं प्राप्य अभिवाद्य स्वनाम संकीर्त्य । प्रणतः कृतप्रणामः सन् । निभृतः निश्चलः प्रह्वः प्रकर्षेण संकुचितगात्रः स्थित इति शेषः । आचार्यास्तु करणत्रयेणापि निश्चलो बभूवेत्यर्थ इति प्राहुः॥३॥

गो० टी०-दृष्ट्वेति । तं दृष्ट्वा विस्मृत्य प्रथमं तूष्णीमास्त । पुनर्दृष्ट्वा स्मृत्वा प्रमुदिताभवत् । यद्वा सामान्यतो दृष्ट्वा तूष्णीमास्त । ततो विशेषतो दृष्ट्वा स्मृत्वा हनुमानिति ज्ञात्वा प्रमुदिताभवत् । अथवा तं दृष्ट्वा स्मृत्वा प्रत्यभिज्ञाय प्रमुदिताभवत् । प्रमोदातिरेकेण स्तब्धा सती तूष्णीमास्तेत्यर्थः ॥ ४ ॥

गो० टी०-सौम्यमिति । सौम्यं निजदर्शनेन विकसितम् ॥ ५-६ ॥

७-८ ] ति० टी०-कुशलं त्वा । त्वामाहेत्यर्थः ॥७॥८॥

रा०टी०-तदाकारमाह वैदेहीत्यादिभिः कुशली रामः त्वा त्वां कुशलमाह ॥ ७ ॥

रा० टी०-विभीषणेति । विभीषणः सहायो यस्य तेन लक्ष्मणेन हरिभिश्च सह विद्यमानेन रामेण रावणो निहतः इति प्रियं ते तुभ्यमाख्यामि बोधयामि तव प्रभावात् रामेण विजयो लब्धः अतः त्वां सभाजये पूजयामि च सार्द्धश्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

१ महातेजा रावणस्य निवेशनमिति गो. पाठः । २ इदं पद्यं गो. पुस्तके न दृश्यते । ३ इव रोहिणीमिति गो. रा. पाठः । ४ समा इति गो. पाठः । ५ तमिति गो. रा. पाठः । ६ प्रमुदिताभवदिति गो. रा. पाठः । ७ दृष्ट्वा मुखं तस्या इति गो. रा.पा. । ८ सहसुग्रीवलक्ष्मण इति गो. ससुग्रीवः सलक्ष्मण इति रा. पाठः । ९ इदमर्धं मधिकं गो. रा. पाठे । १० अरिंदम इति गो. पाठः । ११ नयेन चेति गो पाठः ।

[ दृष्ट्वा तु कुशलं रामो वीरस्त्वां रघुनन्दनः । अब्रवीत्परमप्रीतः कृतार्थेनान्तरात्मना । ]
प्रियमाख्यामि ते देवि भूयश्च[2] त्वां सभाजये । तव[3] प्रभावाद्धर्मज्ञे महान्रामेण संयुगे ॥ ९ ॥
लब्धो[4]ऽयं विजयः सीते स्वस्था भव गतज्वरा[5] । रावणश्च[6] हतः शत्रुर्लङ्का[7] चैव वशीकृता ॥ १० ॥
मया ह्यलब्धनिद्रेण धृतेन[8] तव निर्जये । प्रतिज्ञैषा विनिस्तीर्णा बद्ध्वा सेतुं महोदधौ ॥ ११ ॥
संभ्रमश्च न कर्तव्यो[9] वर्तन्त्या रावणालये । विभीषणविधेयं हि लङ्कैश्वर्यमिदं कृतम् ॥ १२ ॥
तदाश्वसिहि विस्रब्धं[10] स्वगृहे परिवर्तसे । अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः ॥ १३ ॥
एवमुक्ता[11] तु[12] सा देवी सीता शशिनिभानना । प्रहर्षेणावरुद्धा सा व्याहर्तुं[13] न शशाक ह ॥ १४ ॥
ततोऽब्रवीद्धरिवरः सीतामप्रतिजल्पतीम् । किं त्वं[14] चिन्तयसे देवि किं च[14] मां नाभिभाषसे १५ ॥
एवमुक्ता हनुमता सीता धर्मपथे[15] स्थिता । अब्रवीत्परमप्रीता बाष्पगद्गदया[16] गिरा ॥ १६ ॥
प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रितम् । प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणान्तरम् ॥ १७ ॥

९-१० ] ति० टी०-कोऽसौ संदेशस्तत्राह-प्रियमिति। हे देवि, ते प्रियमाख्यामि । त्वां भूयः सभाजये प्रीणयामि । तव प्रभावात्तव पातिव्रत्यवैभवात्संयुगे रामेणायं महान्विजयो लब्धः ॥ ९ ॥ १० ॥

११ ] ति० टी०-तव निर्जये । शत्रोरिति शेषः । धृतेन कृतनिश्चयेन । एषा प्रतिज्ञा शत्रुं हत्वा सीतां प्रत्यानेष्यामीत्येवंरूपा ॥ ११ ॥

रा० टी०-रामवचनेनैवाह रावण इति । तव त्वदर्थनिर्जये रावणकर्तृकजयार्थं धृतेन कृतनिश्चयेन मया महोदधौ सेतुं बध्वा रावणो निहतः अत एव एषा राक्षसविनाशविषयिणी प्रतिज्ञा विनिस्तीर्णा सार्द्धश्लोक एकान्वयी ॥१०॥११॥

गो० टी०-रामसंदेशवाक्यमाह-प्रियमाख्यामीत्यादिश्लोकद्वयमेकान्वयम् । हे देवि, ते प्रियमाख्यामि । त्वां तु भूयः भूयिष्ठम्, सभाजये प्रीणये । धर्मज्ञे पातिव्रत्यधर्मज्ञे, त्वं दिष्ट्या जीवसि । अन्यथा मम जयो व्यर्थ एव स्यादिति भावः । मम जयेन मत्पराक्रमेण, नः संयुगे जयो लब्धः । गतव्यथा सती स्वस्था भवेति योजना ॥ १० ॥ ११ ॥

गो० टी०-मयेति । हे सीते; तव निर्जये शत्रुहस्तात्तव विमोचने । दृढेन एकाग्रचित्तेन । अत एव अलब्धनिद्रेण मया महोदधौ सेतुं बद्ध्वा, एषा प्रतिज्ञा रावणं हनिष्यामीति प्रतिज्ञा विनिस्तीर्णा प्रतिपालितेत्यर्थः ॥ १२ ॥

१२ ] ति०टी०-संभ्रमो भयम् । वर्तन्त्या वर्तमानया । यतो विभीषणविधेयं लङ्कैश्वर्यं कृतं तस्मात्त्वं स्वगृह एव परिवर्तसे, अत आश्वसिहि ॥ १२ ॥

रा० टी०-सम्भ्रम इति । रावणालये वर्तन्त्या त्वया सम्भ्रमो भयं न कर्तव्यः तत्र हेतुः इदं लङ्कैश्वर्यं विभीषणविधेयं विभीषणाधीनमित्यर्थः कृतम् ॥ १२ ॥

गो० टी०-संभ्रमश्चेति । संभ्रमः व्यग्रता । वर्तन्त्या वर्तमानया ॥ १३ ॥

१३-१६ ] ति० टी०-'अयं चाभ्येति संहृष्टः' इति पाठः । अयं विभीषणः ॥ १३-१६ ॥

रा० टी०-तदिति । तत् लङ्काया विभीषणीयास्त्वाद्धेतोः गृहे एव परिवर्तसे तत्तस्माद्विश्वस्ता सती त्वमाश्वसिहि स्वास्थ्यं प्राप्नुहि त्वद्दर्शनसमुत्सुकोयं विभीषणः अभ्येति त्वत्समीपे प्राप्नोति ॥ १३ ॥

गो० टी०-तदिति । यस्मात् स्वगृहे परिवर्तसे तस्माद्विश्वस्ता सती आश्वसिहि विश्रान्ता भव । निवृत्तखेदा भवेत्यर्थः । अयं विभीषणः ॥ १४ ॥

रा० टी०-एवमिति । एवमुक्ता अत एव प्रहर्षेणावरुद्धा निरुद्धवचना सा सीता व्याहर्तुं वक्तुं न शशाक ॥ १४ ॥

गो० टी०-एवमिति । समुत्पत्य हर्षेण समुत्थाय । अवरुद्धा अवरुद्धव्यापारा ॥ १५-१७ ॥

रा० टी०-तत इति । अप्रतिजल्पतीमप्रतिजल्पन्तीं सीतां त्वं मां किं किमर्थं नाभिभाषसे इति वचनं हरिवरो हनुमानब्रवीत् ॥ १५ ॥

रा० टी०-एवमिति । परमप्रीता सीता बाष्पैरानन्दाश्रुभिः गद्गदया गिरा अब्रवीत् ॥ १६ ॥

१७ ] ति० टी०-क्षणान्तरं क्षणरूपकालावकाशमात्रम् ॥ १७ ॥

रा० टी०-तदाकारमाह प्रियमिति । भर्तुर्विजयसंश्रितमेतत्प्रियमुपश्रुत्य प्रहर्षवशमापन्नाहं क्षणान्तरं क्षणमात्रं निर्वाक्या वचनसामर्थ्यरहितास्मि ॥ १७ ॥

गो० टी०-प्रियमिति । क्षणान्तरं क्षणमात्रम् निर्वाक्यास्मि । हर्षावरुद्धव्यापारत्वादिति भावः ॥ १८ ॥

१ इदं पद्यमधिकं गो.पाठे । २ त्वां तु भूय इति गो.त्वां च भूय इति रा.पाठः । ३ दिष्ट्या जीवसि धर्मज्ञे जयेन ममेति गो.पाठः । ४ न इति गो. पा. । ५ व्यथेति गो. रा. पाठः । ६ निहतः पाप इति गो. रा. पाठः । ७ लङ्का चेयं वशे स्थितेति गो. सामात्यः सद्भुतो मृधे इति इति रा. पाठः । ८ दृढेनेति गो. पा. । ९ गन्तव्य इति गो. पा. । १० विश्वस्तेति गो. रा. पा. । ११ अब्रवीच्च हरिश्रेष्ठ इति गो. पा. । १२ समुत्पत्येति गो. हनुमतेति रा. पा. । १३ व्याजहार न किंचनेति गो. पा. । १४ त्विति गो. पा. । १५ धर्मेत्यवस्थितेति गो. रा पाठः । १६ हर्षेति गो. पाठः ।

नहि पश्यामि सदृशं चिन्तयन्ती प्लवंगम । आख्यानकस्य भवतो दातुं प्रत्यभिनन्दनम् ॥१८॥
न च पश्यामि सदृशं पृथिव्यां नैव किंचन । सदृशं यैत्प्रियाख्याने तव दत्त्वा भवेत्सुखम् ॥१९॥
हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च । राज्यं वा त्रिषु लोकेषु नैतन्नार्हति भाषितम् ॥२०॥
एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवंगमः । प्रगृहीताञ्जलिर्हर्षात्सीतायाः प्रमुखे स्थितः ॥२१॥
भर्तुः प्रियहिते युक्ते भर्तुर्विजयकाङ्क्षिणि । स्निग्धमेवंविधं वाक्यं त्वमेवार्हस्यनिन्दिते ॥२२॥
[[१०]तवैतद्वचनं सौम्ये सारवत् स्निग्धमेव च । रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते ॥
अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः । हतशत्रुं विजयिनं रामं पश्यामि सुस्थितम् ] ॥
तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा । ततः शुभतरं वाक्यमुवाच पवनात्मजम् ॥२३॥

---

१८ ] ति० टी०—न केवलं हर्षवशादेव निर्वाक्या, किंतु प्रियाख्यातुस्तव तत्सदृशदेयवस्त्वभावादपीत्याह—नहीति। प्रत्यभिनन्दनं देयवस्तु। आख्यानकस्य त्वत्कृतप्रियाख्यानकस्य सदृशं नास्तीत्यर्थः स्वार्थे कः ॥ १८ ॥

रा० टी०—अवचने कारणान्तरमप्याह नहीति। आख्यानकस्य एतादृशप्रियवक्तुर्भवतः सदृशं योग्यं प्रत्यभिनन्दनं तृप्तिकारकं वस्तु चिन्तयन्ती अहं नैव पश्यामि ॥ १८ ॥

गो० टी०—निर्वाक्यास्मीत्यत्र हेत्वन्तरमाह न हीत्यादि। सदृशं प्रत्यभिनन्दनम् प्रतिप्रियवचनम् ॥ १९ ॥

१९ ] ति० टी०—उक्तमेवानन्दवशात्पुनराह—न चेति। ईदृशप्रियाख्याने यत्तस्य सदृशं समं तव दातुं योग्यं तत्पृथिव्यामपि न पश्यामि ॥ १९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह न चेति । प्रियाख्याने एतादृशप्रियकथनसमये यत्सदृशं दत्वा विद्यमानाया मम सुखं भवेत् तत् तव सदृशं योग्यं वस्तु पृथिव्यां किञ्चिन्न पश्यामि१९

गो० टी०—सदृशं प्रदेयवस्त्वपि न पश्यामीत्याह—न हीत्यादिना। अत्र अपिशब्देन अन्तरिक्षस्वर्गौ समुच्चीयेते। त्रिष्वपि लोकेषु न पश्यामि यत् मत्प्रियाख्याने विषये तव दातुं समम् अत्यन्तसदृशं भवेत् ॥ २० ॥

२०–२१ ] ति० टी०—एतद्भाषितं त्वदुक्तं प्रत्यभिनन्दनत्वेन हिरण्यादिकं नार्हति, अत एव तत्प्रियवचने देयं वस्तु लोके नास्तीत्यर्थः ॥ २० ॥ २१ ॥

रा० टी०—हिरण्यमिति। हिरण्यादि एतत्सर्वं भाषितुं तव योग्यत्वेन कथितुं नार्हति कश्चिदिति शेषः ॥ २० ॥

गो० टी०—उक्तं विवृणोति—हिरण्यमिति । हिरण्यं रजतम् रजतं हिरण्यमिति श्रुतेः। त्रिषु लोकेषु राज्यं त्रिलोकविषयराजत्वम् नैतदर्हति भाषितुम् हिरण्याद्येतत्सर्वमपि प्रियाख्यानसमत्वेन भाषितुं नार्हतीत्यर्थः ॥ २१ ॥

रा० टी०—एवमिति। वैदेह्या एवमुक्तः सीतायाः प्रमुखे सम्मुखे स्थितः प्रगृहीताञ्जलिः प्लवङ्गमः प्रत्युवाच ॥ २१ ॥

गो० टी०—एवमिति। प्रमुखे अग्रे ॥ २२ ॥

२२ ] ति० टी०—स्निग्धं स्नेहोपेतम्, एवंविधमशक्यप्रीतिदानमित्येवंरूपं त्वमेव भाषितुमर्हसि नान्या अतस्त्वया सर्वोत्तरं यदिदं वचनमुक्तं तदेव परमं प्रत्यभिनन्दनमिति शेषः ॥ २२ ॥

रा० टी०—तदाकारमाह भर्तुरित्यादिभिः। एवंविधं वाक्यं वक्तुं त्वमेवार्हसि ॥ २२ ॥

गो० टी०—प्रतिप्रियवचनं न पश्यामीत्यस्योत्तरमाह—भर्तुरिति।एवंविधं स्निग्धम् वाक्यं भाषितुं त्वमेवार्हसि नान्या। अनेन सर्वोत्तरं प्रीतिप्रियवचनं मह्यं दत्तमित्युक्तं भवति ॥२३॥

२३ ] ति० टी०—एतदुत्तरम् 'तवैतद्वचनं देवि त्वत्तोऽर्हामि प्रियं महत्। रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते ॥ अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः। हतशत्रुं विजयिनं रामं पश्यसि सुस्थिरम् ॥' इति श्लोकद्वयं प्रक्षिप्तमिति कतकः ॥ २३ ॥

रा० टी०—तवेति। यतः विविधात् रत्नौघात् देवराज्यादपि तवैतद्वचनं विशिष्यते ॥ २३ ॥

रा० टी०—अर्थत इति। च यतः सुस्थितं रामं पश्यामि तस्मात् देवराज्यादयो गुणाः अर्थतो मया प्राप्ताः ॥ २४ ॥

रा० टी०—तस्येति। मैथिली पवनात्मजमुवाच ॥ २५ ॥

गो० टी०—प्रियाख्यानसदृशं प्रदेयं वस्तु नास्तीत्यस्योत्तरमाह—तवेति। एतत् प्रत्यभिनन्दनं न पश्यामीत्येतत् सारवत् प्रत्यभिनन्दनवचनराहित्यकथनेन मद्वचनस्य निरवधिकप्रीतिजनकत्वकथनान्महातात्पर्यवत्। स्निग्धं मयि प्रीतिपुरःसरम्। एतद्वचनश्रवणेनैव मया सर्वोत्तरं वस्तु समुपलब्धमिति भावः ॥ २४ ॥

गो० टी०—पूर्वमेव लब्धदेवराज्यादिकस्य तत्प्रदानं निरर्थकमित्याशयेनाह—अर्थत इति । रामं विजयिनं पश्यामीति यत् अस्मात् अर्थतः प्रयोजनात् देवराज्यादयो गुणा उत्कर्षाः प्राप्ताः। रामविजयदर्शनमेव राज्यादिकमित्यर्थः२५।२६

---

१ मत्प्रियाख्यानकस्येहेति गो. रा. पाठः । २ नहि पश्यामि तत्सौम्य पृथिव्यामपि वानरेति गो. पाठः । ३ अपीति रा. पाठः । ४ मद्धितेति गो. पा. । ५ सुखं भवेदि रा. भवेत्सममितीति गो. पाठः ।६ नैतदर्हति भाषितुमिति गो. रा. पाठः ।७ गृहीतप्राञ्जलिर्वाक्यमिति गो. पाठः ।८ वाक्यमिति रा. पाठः । ९ भाषितुमिति गो. रा. पाठः । १० इदं पद्यद्वयमधिकं गो. पुस्तके ।

अतिलक्षणसंपन्नं माधुर्यगुणभूषणम् । बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् ॥२४॥
श्लाघनीयोऽनिलस्य त्वं सुतः परमधार्मिकः । बलं शौर्यं श्रुतं सत्त्वं विक्रमो दाक्ष्यमुत्तमम् ॥२५॥
तेजः क्षमा धृतिः स्थैर्यं विनीतत्वं न संशयः । एते चान्ये च बहवो गुणास्त्वय्येव शोभनाः॥२६॥
अथोवाच पुनः सीतामसंभ्रान्तो विनीतवत् । प्रगृहीताञ्जलिर्हर्षात्सीतायाः प्रमुखे स्थितः ॥२७॥
इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे । हन्तुमिच्छामि ताः सर्वा याभिस्त्वं तर्जिता पुरा २८
क्लिश्यन्तीं पतिदेवां त्वामशोकवनिकां गताम् । घोररूपसमाचाराः क्रूराः क्रूरतरेक्षणाः ॥२९॥
ईह श्रुता मया देवि राक्षस्यो विकृताननाः । असकृत्परुषैर्वाक्यैर्वदन्त्यो रावणाज्ञया ॥३०॥
विकृता विकृताकाराः क्रूराः क्रूरकचेक्षणाः । इच्छामि विविधैर्घातैर्हन्तुमेताः सुदारुणाः ॥३१॥

२४ ] ति० टी०—अतिलक्षणसंपन्नमाकाङ्क्षायोग्यतादिलक्षणसंपन्नं व्याकरणलक्षणसंपन्नं च माधुर्यं च श्रवणमात्रेणानन्दजनकत्वं तद्रूपगुण एव भूषणं यस्य तत् अष्टाङ्गया 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इत्युक्ताष्टाङ्गबुद्ध्या युक्तम् ॥ २४ ॥

रा० टी०—तदाकारमाह अतीत्यादिभिः । अतिलक्षणेन आकांक्षायोग्यताप्रत्यासत्तिमत्पदसमूहत्वेन सम्पन्नं माधुर्येण श्रवणमात्रेण आनन्दजनकेन गुणेन भूषितम् अष्टाङ्गयुक्तया बुद्ध्या युक्तं वचनमभिभाषितुं त्वमेवार्हसि बुद्धेरष्टाङ्गानि तु शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ऊहापोहोर्थविज्ञानं तत्वज्ञानं च धीगुणा इति ॥ २६ ॥

गो० टी०—नानृग्वेदेत्यादिना राम इव स्वयमपि तद्वाक्यसौष्ठवं प्रशंसति—अतीति । अतिलक्षणसंपन्नम् आकाङ्क्षायोग्यतासन्निधिमत्पदवत्स्वरूपवाक्यलक्षणसंपन्नम् बहुव्याहरतानेन न किञ्चिदपशब्दितमित्युक्तशब्दसाधुत्वसंपन्नम् । माधुर्यगुणभूषितं, संश्रवे मधुरवाक्यमित्युक्तरीत्या श्रवणमात्रेणानन्दजनकत्वरूपमाधुर्यगुणभूषितम् । अष्टाङ्गया, ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहापोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः, इत्युक्ताष्टाङ्गयुक्तया बुद्ध्या युक्तम् तादृशबुद्धिपूर्वकमित्यर्थः ॥ २७ ॥

२५ ] ति० टी०—बलमायाससहिष्णुता शौर्यं युद्धोत्साहः सत्त्वं शारीरः सारः ॥ २९ ॥

२६ ] ति० टी०—तेजः पराभिभवसामर्थ्यम् । एवमाद्या बहवो गुणास्त्वय्येव सन्ति नान्यत्र ॥ २६ ॥

रा० टी०—श्लाघनीय इति । यतः एते बलादयः अन्ये च शोभना बहवो गुणाः त्वय्येव अतः अनिलस्य सुतस्त्वं श्लाघनीयोऽसि अत्र संशयो न तत्र बलं शरीरसामर्थ्यं सत्वमिन्द्रियसामर्थ्यं विक्रमः पादविक्षेपविशेष इति न पौनरुक्त्यं श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०—न केवलं वाक्यतः गुणतोपि श्लाघ्योऽसीत्याह—श्लाघनीय इत्यादिना श्लोकद्वयेन । अनिलस्य श्लाघनीयः पुत्रः अनिलादपि संजीवनकर इत्यर्थः । संजीवनं चानृशंस्यधर्मादित्याह—परमधार्मिक इति । बलं प्रयाससहिष्णुत्वम् शौर्यं युद्धोत्साहः श्रुतं शास्त्रज्ञानम् 'श्रुतं शास्त्रावधृतयो' रित्यमरः । सत्वं शारीरः सारः विक्रमः पराक्रमः दाक्ष्यं सामर्थ्यम् उत्तममिति सर्वविशेषणम् । तेजः पराभिभवनसामर्थ्यम् । क्षमा अपराधसहिष्णुत्वम् धृतिः प्रभावः धैर्यं क्षोभके सत्यक्षोभ्यत्वम् विनीतत्वं विनयवत्त्वम् विशिष्टनतिमत्त्वं वा एते चान्ये च दयादयो बहवो गुणाः, त्वय्येव शोभनाः त्वामाश्रयमधिगम्य शोभमाना भवन्ति न संशयः नाहमसतो गुणानारोप्य स्तौमीत्यर्थः ॥ २८–३० ॥

२७–३१ ] ति० टी०—असंभ्रान्तः स्तुत्याविकृतचित्तः । विनीतवद्विनीतार्हम् ॥ २७–३१ ॥

रा० टी०—अथेति । सीतायाः प्रमुखे संमुखे स्थितां प्रगृहीताञ्जलिः प्रणयसूचकबद्धयुगलकरो हनुमान् सीताम् पुनरुवाच ॥ २९ ॥

रा० टी०—तदाकारमाह इमा इत्यादिभिः । यदि त्वमनुमन्यसे अनुमतिं करोषि तर्हि याभिस्त्वं तर्जिताः ताः इमा राक्षस्यः हन्तुमिच्छामि समुदायस्य कर्मत्वेनान्वयात्र द्वितीया ३०

गो० टी०—इदं तु मे प्रियाख्यानपारितोषिकत्वेन देयमित्यर्थयते—इमा इत्यादिना सार्द्धश्लोकद्वयमेकान्वयम् । क्लिश्यन्तीं पतिदेवतां त्वां प्रति या राक्षस्यो दारुणकथा अब्रुवन् । पुरा याभिस्त्वं तर्जिता इमा राक्षस्यः राक्षसीः, यद्यनुमन्यसे हन्तुमिच्छामि एतद्वरं मे प्रयच्छेति संबन्धः ॥ ३१–३३ ॥

रा० टी०—क्लिश्यन्तीमिति । पतिदेवां त्वां प्रति याः राक्षस्यः घोररूपसमाचाराः भयंकररूपकारिण्यः दारुणा कथाः भयंकरं वदन्त्यश्च ताः एताः सर्वाः मुष्टिभिः पाणिभिश्च जानुप्रहारैश्च दशनानां पातनैश्च विविधैर्घातैः प्रहरणान्तरैश्च हन्तुमिच्छामि अतः एतत् जहीतिस्वरूपं वरं मे प्रयच्छ श्लोकत्रयमेकान्वयि ॥ ३१–३३ ॥

१ भूषितमिति गो. रा. पाठः । २ पुत्र इति गो. पाठः । ३ इदं पद्यं सार्धं गो. रा. पुस्तकयोर्न दृश्यते । इच्छामीति पद्यार्धं मुष्टिभिरित्यर्धस्यानन्तरं दृश्यते ।

राक्षस्यो दारुणकथा वरमेतत्प्रयच्छ मे । मुष्टिभिः पार्ष्णिघातैश्च विशालैश्चैव बाहुभिः ॥ ३२ ॥
जङ्घाजानुप्रहारैश्च दन्तानां चैव पीडनैः । भक्षणैः कर्णनासानां केशानां लुञ्चनैस्तथा ॥ ३३ ॥
[ भृशं शुष्कमुखैश्चैव दारुणैर्लङ्घनैर्हतैः । विभिन्नशङ्कुग्रीवांसपार्श्वकैश्च कलेवरैः ] ।
निपात्य हन्तुमिच्छामि तव विप्रियकारिणीः । एवं प्रहारैर्बहुभिः संप्रहार्य यशस्विनि ॥ ३४ ॥
घातये तीव्ररूपाभिर्याभिस्त्वं तर्जिता पुरा । इत्युक्ता सा हनुमता कृपणा दीनवत्सला ॥ ३५ ॥
हनूमन्तमुवाचेदं चिन्तयित्वा विमृश्य च । राजसंश्रयवश्यानां कुर्वतीनां पराज्ञया ॥ ३६ ॥
विधेयानां च दासीनां कः कुप्येद्वानरोत्तम । भाग्यवैषम्यदोषेण पुरस्ताद्दुष्कृतेन च ॥ ३७ ॥
मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते । मैवं वद महाबाहो दैवी ह्येषा परा गतिः ॥ ३८ ॥
प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम् । दासीनां रावणस्याहं मर्षयामीह दुर्बला ॥ ३९ ॥

---

३२-३५ ] ति० टी०-एतद्वरमपकारिराक्षसीगणवधरूपम् ॥ ३२-३५ ॥

गो० टी०-हननप्रकारं स्वक्रोधानुरूपं दर्शयति—मुष्टिभिरित्यादिना श्लोकत्रयमेकान्वयम् । घातैः प्रहारैः भक्षणैः खादनैः लुञ्चनैः उन्मूलनैः शुष्कमुखीभिः नखैः दारुणैः पीडनैः कपोलताडनैर्वा लङ्घनैः उत्प्लुत्योपरिपातनैः हतैः हस्तैस्ताडनैः निपात्य भूमौ पातयित्वा मुष्ट्यादिभिर्हन्तुमिच्छामीत्यन्वयः ॥ ३४-३६ ॥

रा० टी०-कृन्तनैरिति । कर्णनासानां कृन्तनैः छेदनैः केशानां लुञ्चनैः उत्पाटनैः शुष्कमुखैः वन्हिप्रक्षेपादिना मुखशोषणैर्लंघनैः लंघनपूर्वकपादप्रहारैः विभिन्नाः शंकादयो येषु तैर्हतैः कलेवरैः निपात्य तव विप्रियकारिणीर्हन्तुमिच्छामि श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

रा० टी०-उपसंहरन्नाह एवमिति । बहुभिः एवंप्रकारैः विप्रकारैर्हननोपायैः तव कृतकिल्बिषाः एता राक्षसीर्हन्तुमिच्छामि ॥ ३६ ॥

रा० टी०-एवमिति । वैदेही हनुमन्तमुवाच ॥ ३७ ॥

गो० टी०-उक्तमर्थमावश्यकत्वज्ञापनाय पुनरपि संग्रहेण याचते—एवमिति ॥ ३७ ॥

गो० टी०-एवमुक्तेति । धर्मसहितमिति क्रियाविशेषणम् ॥ ३८ ॥

३६ ] ति० टी०-राजसंश्रयादेव राजवश्यानां पराज्ञया कुर्वतीनाम् । शुभमशुभं वेति शेषः ॥ ३६ ॥

रा० टी०-तदाकारमाह-राजेत्यादिभिः । राजसंश्रयस्य राजसेवायाः वश्यानामत एव पराज्ञया कुर्वतीनां कर्माणीति शेषः अत एव विधेयानां भर्तव्यानां दासीनामुपरि कः कुप्येत् न कोपीत्यर्थः ॥ ३८ ॥

गो० टी०-राजेति । राजसंश्रयवश्यानां राजसेवापरवशानाम् अत एव पराज्ञया कुर्वन्तीनां राजचोदितकार्यं कुर्वन्तीनाम्, विधेयानां चोदिताकरणे दण्डार्हाणाम्, रावणस्य दासीनां दासीभ्यः, कः कुप्येत् ॥ ३९ ॥

३७-३८ ] ति० टी०-पुरस्ताद्दुष्कृतेन । पूर्वदुष्कृतेनेत्यर्थः ॥ ३७-३८ ॥

रा० टी०-भाग्येति । हि यतस्त्वं स्वकृतमेवोपभुज्यते अतः पुरा पूर्वं दुश्चरितेन दुराचरणेन यो भाग्यवैषम्यस्य सुखभोगकालविपर्ययस्य योगेन एतत् शासनं मया प्राप्यते प्रापि राक्षसीनामभाग्यवशादेव मया दुःखं प्राप्तमित्यर्थः ॥ ३८ ॥

गो० टी०-भाग्येति । भाग्यवैषम्ययोगेन भाग्यविपर्यययोगेन । भाग्यस्यापरिपक्वतयेत्यर्थः । पुरा दुश्चरितेन च पूर्वकृतदुष्कृतेन च, एतत्तर्जनभर्त्सनादिकं प्राप्यते । तत्र हेतुमाह—स्वकृतमिति । हि यस्मात् । स्वकृतमुपभुज्यते स्वकृतकर्मफलं प्राप्यते लोकैः । अतो मयापि भुज्यत इत्यर्थः ॥ ४० ॥

३९ ] ति० टी०-रावणस्य दासीनामेतत्तर्जनादिकं दशायोगात्कर्मपरिपाककालसंबन्धात्प्राप्तव्यमिति मया निश्चितम् । अतस्तत्कालसंबन्धादेव दुर्बलेवाहं तन्मर्षयामीत्यर्थः ३९

रा० टी०-ननु तासां दुराचरणात् ताभिरेव दुःखं लब्धव्यमिति भवत्या कथं लब्धमित्यत आह—प्राप्तव्यमिति । दशायोगात् दैवाद्गुद्धारककालसम्बन्धात् एतत् दुःखाभासं मयापि प्राप्तव्यमिति निश्चितं निश्चयः अतः दुर्बला गृहावावरणरहिता वाटिकास्थेत्यर्थः अहम् रावणस्य दासीनामपराधं मर्षयामि ॥ ४० ॥

गो० टी०-प्राप्तव्यमिति । रावणस्य दासीनाम् एतत्तर्जनादिकं दशायोगात् अवस्थायोगात् अनुभवयोग्यकालसंबन्धादिति यावत् । प्राप्तव्यमिति मया निश्चितम् । दुर्बला पूर्वम-

---

१ पाणिभिः सर्वाश्चरणैश्चैव शोभने इति गो. रा. तत्रापि चैवेत्यस्य स्थाने चापीति रा. पाठः । २ घातैरिति गो. घोरैरिति रा. पा. । ३ दशनानां च पातनैरिति गो. रा. पाठः । ४ कृन्तनैरिति गो. रा. पा. । ५ इदं पद्यमधिकं गो. रा. पु. । परं नखैः शुष्कमुखीभिश्च दारुणैर्लङ्घनैर्हतैरिति गो. पु. । ६ विप्रकारैरिति गो. रा. पाठः । ७ हन्तुमिच्छाम्यहं देवि तवेमाः कृतकिल्बिषा इति गो. रा.पाठः । ८ एव मुक्ता हनुमता वैदेही जनकात्मजेति गो. रा. पाठः । ९ उवाच धर्मसहितं हनुमन्तं यशस्विनीति गो. रा. पा. । १० योगेन पुरा दुश्चरितेन चेति गो. रा. पाठः । ११ इदं मर्धं गो. रा. पु. न दृश्यते ।

आज्ञप्ता राक्षसेनेह राक्षस्यस्तर्जयन्ति माम् । हते तस्मिन्न कुर्वन्ति तर्जनं मारुतात्मज ॥ ४० ॥
अयं व्याघ्रसमीपे तु पुराणो धर्मसंहितः । ऋक्षेण गीतः श्लोकोऽस्ति तं निबोध प्लवंगम ॥ ४१ ॥
न परः पापमादत्ते परेषां पापकर्मणाम् । समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ॥ ४२ ॥
पापानां वा शुभानां वा वधार्हाणामथापि वा । कार्यं कारुण्यमार्येण न कश्चिन्नापराध्यति॥ ४३ ॥

---

ताडशापनिवारककर्मकरणाशक्ता । अतोऽहमिह राक्षसीविषये मर्षयामीति संबन्धः । दुर्बल्या कृपापरवशा वा हते रावणे दौर्बल्यान्तराभावात् । परदुःखसहिष्णुत्वमेव हि तदानीं दौर्बल्यम् ॥ ४१ ॥

४० ] ति० टी०–राक्षसीतर्जने राजाज्ञामूलत्वमन्वयव्यतिरेकाभ्यां दर्शयति—आज्ञप्ता इति ॥ ४० ॥

रा० टी०–वस्तुतस्तु आसां नापराध इति बोधयन्ती आह—आज्ञप्ता इति । रावणेनाज्ञप्ता एव राक्षस्यः मामतर्जयन् अत एव तस्मिन् रावणे हते सति तर्जनं न कुर्वन्ति ४१

गो० टी०–राक्षसीनामपराधस्य राजाज्ञामूलकत्वमन्वयव्यतिरेकाभ्यां दर्शयति—आज्ञप्ता इति ॥ ४२ ॥

४१ ] ति० टी०–ईदृशे विषये क्षमैवोचितेतीतिहासमुखेनाह—अयमिति ॥ ४१ ॥

रा० टी०–महतां सहनमेव धर्म इत्यत्र सदाचारं प्रमापयन्ती आह—अयमिति । पुराणः बहुकालकः धर्मसंहितः व्याघ्रसमीपे ऋक्षेण गीतोऽयं श्लोकोऽस्ति तं श्लोकं निबोध जानीहि इयं पौराणिकी गाथा क्वचिदरण्ये व्याघ्रेण पलायितः कश्चित् व्याधः ऋक्षेणारूढं वृक्षमारुहत् तदा वृक्षसमीपगतो व्याघ्रः वृक्षोपरि स्थितं ऋक्षं वन्यानामयं व्याधो नित्यं विघातकः अतः वृक्षादेनं पातयेत्यब्रवीत् व्याघ्रेणैवमुक्त ऋक्षः स्वस्थाने प्राप्तमेनं न पातयिष्यामि पातने महान् अधर्मः स्यादित्युक्त्वा व्याधमप्याश्वास्य सुखं सुष्वाप सुप्तमृक्षं पातयेति त्वां न भक्षयिष्यामीति व्याघ्रेण प्रेरितो व्याधः तमृक्षमपातयत् ऋक्षस्त्वभ्यासबलेन शाखान्तरमवलम्ब्य नापतत् तदा कृतापराधमेनं पातयेति व्याघ्रेणोक्त ऋक्षः कृतापराधमप्येनं रक्षिष्यामीत्युक्त्वा ररक्ष ॥ ४२ ॥

गो० टी०–अथात्मां स्वातन्त्र्येणापकारकरणमभ्युपेत्य तथापि क्षन्तव्यमित्यत्र इतिहासं दर्शयति—अयमिति । पुरा किल कश्चिद्व्याधो व्याघ्रेणानुसृतो वृक्षमारूढः, वृक्षमूलगतो व्याघ्रो वृक्षोपरि स्थितमृक्षं वन्यमृगाणामस्माकं जात्या शत्रुरेषः तस्मादेनं वृक्षात् पातयेत्यब्रवीत् । एवमुक्तो भल्लूकः स्ववासस्थानगतमेनं न पातयिष्यामि तथात्वे धर्महानिः स्यादित्युक्त्वा सुष्वाप । तदनन्तरं त्वां रक्षिष्यामि सुप्तमृक्षं पातयेति व्याघ्रेण चोदितः सन् व्याधस्तमृक्षमपातयत् । स त्वभ्यासवशेन शाखान्तरमवलम्ब्य नापतत् । तदनु कृतापराधमेनं पातयेति पुनः पुनर्व्याघ्रेणोच्यमानोपि भल्लूको बहुशः कृतापराधमप्येनं तुभ्यं न दास्यामीत्यभिधाय ररक्षेति पौराणिकी गाथा ॥ ४३ ॥

४२ ] ति० टी०–श्लोकमेवाह—न पर इति । क्वचिदरण्ये व्याघ्रानुद्रुतः कश्चिद्व्याधो ऋक्षारूढं वृक्षमारुहत् । वृक्षमूलगश्च व्याघ्रो वृक्षस्थमृक्षं वन्यानामस्माकं शत्रुममुं व्याधं वृक्षात्पातयेत्यब्रवीत् । एवमुक्तो ऋक्षः स्वावस्थानगतमेनं न पातयिष्यामि, तथात्वे धर्महानिः स्यादित्युक्त्वा सुष्वाप । सुप्तम् ऋक्षं पातयेति व्याघ्रेणोदितो व्याधो ऋक्षमपातयत् । स ऋक्षोऽभ्यासबलेन शाखान्तरमवलम्ब्य नापतत् । तदनन्तरं कृतापराधमेनं पातयेति पुनर्व्याघ्रेणोक्तोऽपि ऋक्षो बहुशः कृतापराधमप्येनं तुभ्यं न दास्यामीत्यभिधाय ररक्षेति पौराणिकी गाथेति तीर्थस्तत्रत्योऽयं श्लोकः । परेषां पापकर्मणां परानुद्दिश्य पापं कुर्वतां परः प्राज्ञः पुरुषः पापं प्रत्यपकाररूपं नादत्ते न करोति । समयोऽपकर्तृष्वपि प्रत्यपकारवर्जनरूप आचारो रक्षितव्य एव हि यतः सन्तश्चारित्रभूषणाः ॥ ४२ ॥

रा० टी०–ऋक्षगीतं श्लोकमाह—नेति । परेषामन्येषां पापकर्मणां पापं परो धर्मात्मा पुरुषो नादत्ते परिगणयति एष समय आचारः रक्षितव्यः एवमेवमाचरणीयमित्यर्थः तत्र हेतुः सन्तो महात्मानः चारित्रं सदाचारमेव भूषयन्ति कुर्वन्ति ॥ ४३ ॥

गो० टी०–तत्रत्यं श्लोकं पठति—न पर इति । सुग्रीवं प्रति रामः कपोतोपाख्यानमिव हनुमन्तमुद्दिश्य देव्यपि स्वाभिप्रेतेर्थे ऋक्षगीतं प्रमाणयति स्म । परेषां पापकर्मणां परानुद्दिश्य पापं कुर्वताम् । परः प्राज्ञः पुरुषः, पापं प्रत्यपकाररूपम्, नादत्ते नाङ्गीकरोति । न करोतीत्यर्थः । समयः आचारः अपकर्तृष्वपि प्रत्यपकारवर्जनरूपः, रक्षितव्यस्तु रक्षितव्य एव । तथा हि, सन्तश्चारित्रभूषणाः । सद्भिश्चारित्रभूषणैरिति वा पाठः ॥ ४४ ॥

४३ ] ति० टी०–पापानां वा शुभानां वेति । शुभेष्विव पापेषु वधार्हेष्वप्यार्येण कारुण्यं कार्यं कर्तव्यम् । इतरौ वाशब्दौ वाक्यालङ्कारे । ननु सापराधेष्ववश्यं दण्डः कार्योऽत आह—न कश्चिदिति । कश्चिदपि नापराध्यतीति न । सर्वोऽप्यपराध्यत्येवेत्यर्थः । तस्मात्सर्वत्र दयैवोचितेति भावः ॥४३॥

रा० टी०–पापानामिति । शुभानां कर्मणां वा इव वधार्हाणां पापानामपि कारुण्यं दया आर्येण कार्यं ननु तथात्वे सापराधेषु दण्डचोदना निरर्थेत्यत आह कश्चित्

---

१ मामतर्जयन्निति गो. रा. पाठः । २ कुर्युर्हीति गो. पाठः । ३ स्थित इति गो. पाठः । ४ मे. इति गो. पा. । ५ प्लवंगमेति गो. रा. पा. ।

लोकहिंसाविहाराणां क्रूराणां पापकर्मणाम् । कुर्वतामपि पापानि नैव कार्यमशोभनम् ॥ ४४ ॥
एवमुक्तस्तु हनुमान्सीतया वाक्यकोविदः । प्रत्युवाच ततः सीतां रामपत्नीमनिन्दिताम् ॥४५॥
युक्ता रामस्य भवती धर्मपत्नी गुणान्विता । प्रतिसंदिश मां देवि गमिष्ये यत्र राघवः ॥ ४६ ॥
एवमुक्ता हनुमता वैदेही जनकात्मजा । साब्रवीद्द्रष्टुमिच्छामि भर्तारं भक्तवत्सलम् ॥ ४७ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान्मारुतात्मजः । हर्षयन्मैथिलीं वाक्यमुवाचेदं महामतिः ॥ ४८ ॥
पूर्णचन्द्रमुखं रामं द्रक्ष्यस्यद्य सलक्ष्मणम् । स्थितमित्रं हतामित्रं शचीवेन्द्रं सुरेश्वरम् ॥ ४९ ॥
तामेवमुक्त्वा भ्राजन्तीं सीतां साक्षादिव श्रियम् । आजगाम महातेजा हनूमान्यत्र राघवः ॥ ५० ॥
सपदि हरिवरस्ततो हनूमान्प्रतिवचनं जनकेश्वरात्मजायाः ।
कथितमकथयद्यथाक्रमेण त्रिदशवरप्रतिमाय राघवाय ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

---

नापराध्यतीति न सर्वोऽपि यत् किञ्चित् अपराध्यतीत्यर्थः तेन यथापराधमेव दण्डः कार्य इति सूचितम् तेन राक्षसीनां मारणयोग्योऽपराधो नास्तीति ध्वनितम् ॥ ४४ ॥

गो० टी०—अथ देव्या अभयप्रदानश्लोकः—पापानामिति । पापानां वा शुभानां वा त्वदभिप्रायेण पापानां वा अस्मदभिप्रायेण शुभानां वा । तदेव ममोद्देश्यं दोषो यद्यपि तस्य स्यादितिवत् । मलिनस्य हि स्नानमपेक्षितम् तासां पापत्वादेवास्मदपेक्षा किं शुभानामस्माभिः तत्पुण्यानामेव तद्रक्षकत्वात् तस्मात्तत्पापमेवास्माकमुद्देश्यम् । ननु तर्हि दण्ड्या दण्डनीयाः नादण्ड्या इति धर्मशास्त्रं भवतीमासाद्य भज्येतेत्याशङ्क्य दुष्टोऽपि शरणागतो रक्षणीय इति विशेषशास्त्रं भवन्तमासाद्य किं भञ्जनीयमित्याह—वधार्हाणामिति। वधार्हाणामपीत्यर्थः सप्तम्यर्थे षष्ठी । प्लवङ्गम अनभिलषितमेवाभिलषितवान् खलु भवान् । तेषु आर्येण महता पुरुषेण करुणं दयाकार्यम् तिष्ठतु । पुण्यं पापं च इदानीमेतद्गणनीयदशां पश्य । यद्वा शुभानामिति दृष्टान्तार्थम् । शुभेषु वधाहेंषु यथा करुणं कार्यं तथा पापेषु वधार्हेष्वपि कार्यमित्यर्थः । सापराधादण्डनेतिप्रसङ्गः स्यादित्याशङ्क्याह—न कश्चिन्नापराध्यतीति । सर्वोऽप्यपराध्यतीत्यर्थः ॥ ४५ ॥

४४–५१ ] ति० टी०—राक्षसानां परहिंसैव स्वभाव इत्यतोऽपि न वध्या इत्याह—लोकेति । अशोभनं दण्डनम् ॥ ४४–५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

रा० टी०—लोकेति । लोकहिंसैव विहारो येषामत एव पापानि यत् किञ्चिदपराधानि कुर्वतां रक्षसामेवं प्राणापहारेण अशोभनं दण्डो न कार्यम् ॥ ४५ ॥

गो० टी०—रक्षसां स्वजातिप्रयुक्तहिंसादेरदोषावहत्वाच्छालोकदण्डविषयत्वं नास्तीत्याह—लोकेति । अशोभनं दण्डनम् ॥ ४६ ॥ ४७ ॥

रा० टी०—एवमिति । एवमुक्तो हनुमान् सीतां प्रत्युवाच ॥ ४६ ॥

रा० टी०—तदाकारमाह—युक्तेति । रामस्य धर्मपत्नी त्वं मां प्रति संदिश अहं गमिष्ये ॥ ४७ ॥

गो० टी०—युक्तेति । रामस्य युक्ता । किं पुनर्मद्विधो जन इति स्वस्योक्तमशरणत्वं प्रतिपादितवतो रामस्य शरण्यत्वादिगुणवत्तया सदृशीत्यर्थः अनेन सर्गेण सीताया दयालुत्वम् अपराधसहिष्णुत्वं घटकत्वं चोक्तमिति ध्येयम् ॥ ४८ ॥

रा० टी०—एवमिति । भर्तारं द्रष्टुमिच्छामि इति वचो वैदेही अब्रवीत् ॥ ४८ ॥

गो० टी०—एवमिति । इच्छामीत्यत्र इतिकरणं द्रष्टव्यम् ॥ ४९–५२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

रा० टी०—तस्या इति । मैथिलीं हर्षयन् हनुमान् इदं वाक्यमुवाच ॥ ४९ ॥

रा० टी०—तदाकारमाह पूर्णेति । स्थितानि मित्राणि यस्य हताः अमित्रा रिपवो यस्य तं रामं द्रक्ष्यसि ॥ ५० ॥

रा० टी०—तामिति । साक्षात् श्रियं शोभामिव सीतामेवमुक्त्वा हनुमान् आजगाम ॥ ५१ ॥

रा० टी०—सपदीति । हनुमान् जनकेश्वरात्मजायाः कथितं प्रतिवचनं यथाक्रमेण राघवाय अकथयत् ॥ ५२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

---

१ रक्षसां कामरूपिणामिति गो. रा. पा. । २ यशस्विनीमिति गो. रा. पा. । ३ यशस्विनीति गो. रा. पाठः । ४ वामपेत्तमेति गो. रा पा. । ५ सुस्थिरेति गो. रा. पा. । ६ आननमिति गो. रा. पा. । ७ आर्ये इति गो. रा. पा. । ८ स्थिरेति गो. पा. । ९ त्रिदशेश्वरमिति गो. रा. पा. । १० राजन्तीमिति गो. रा. पा. । ११ वेगं इति गो. पाठः । १२ इदं पद्यं गो. पु. नास्ति ।

## चतुर्दशाधिकशततमः सर्गः ।

हनुमन्निवेदितजानक्युदन्तो दाशरथिर्बाष्पपर्याकुललोचनः किंचिद्ध्यात्वा जानकीं साभरणाङ्गरागां शिरःस्नातामुपस्थापय मा चिरमिति विभीषणमादिदेश स तु यथानियोगमनुतिष्ठन् महार्हाभरणाम्बरधारिणीं जानकीं शिबिकामारोप्य राघवमुपानयत् ।

[1]तमुवाच महाप्राज्ञः सोऽभिवाद्य प्लवंगमः । रामं कमलपत्राक्षं वरं सर्वधनुष्मताम् ॥ १ ॥
यन्निमित्तोऽयमारम्भः कर्मणां [2]यः फलोदयः । तां देवीं शोकसंतप्तां [3]द्रष्टुमर्हसि मैथिलीम् ॥ २ ॥
सा हि शोकसमाविष्टा बाष्पपर्याकुलेक्षणा । मैथिली विजयं श्रुत्वा [4]द्रष्टुं त्वामभिकाङ्क्षति ॥ ३ ॥
पूर्वकात्प्रत्ययाच्चाहमुक्तो विश्वस्तया तया । [5]द्रष्टुमिच्छामि भर्तारमिति पर्याकुलेक्षणा ॥ ४ ॥
एवमुक्तो हनुमता रामो [6]धर्मभृतां वरः । आगच्छत्सहसा ध्यानमीषद्बाष्पपरिप्लुतः ॥ ५ ॥
[7]स [8]दीर्घमभिनिःश्वस्य [9]जगतीमवलोकयन् । उवाच मेघसंकाशं विभीषणमुपस्थितम् ॥ ६ ॥
दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् । इह सीतां शिरःस्नातामुपस्थापय मा चिरम् ॥ ७ ॥
एवमुक्तस्तु रामेण त्वरमाणो विभीषणः । प्रविश्यान्तःपुरं सीतां [10]स्त्रीभिः स्वाभिरचोदयत् ८ ॥

१ ] ति० टी०-तमुवाचेति ॥ १ ॥

रा० टी०-यथाक्रमकथनमुपक्रमते तमिति । हनुमान् राममभिवाद्य प्रणम्य उवाच ॥ १ ॥

गो० टी०-अथ सीतानयनम्-स उवाचेत्यादि । ॥

२-३ ] ति० टी०-आरम्भ उद्योगः । कर्मणां सेतुबन्धरावणवधादीनां यः फलोदयः फलरूपः ॥ २ ॥ ३ ॥

रा० टी०-तदाकारमाह—यदित्यादिभिः । कर्मणां युद्धादीनामारम्भः कर्मणामयं फलस्य रिपुवधस्य उदयः सिद्धिः यन्निमित्तः या सीतैव निमित्तं यस्य तां सीतां द्रष्टुमर्हसि ॥२॥

रा० टी०-सेति । शोकसमाविष्टा मैथिली तव विजयं श्रुत्वा हर्षमुपागमत् ॥ ३ ॥

गो० टी०-यन्निमित्त इति । आरम्भः उद्योगः, कर्मणां सेतुबन्धादिव्यापाराणाम् फलोदयः, रावणविजयश्च यन्निमित्तः यस्याः सीताया लाभार्थः, तां द्रष्टुमर्हसि ॥ २ ॥ ३ ॥

४ ] ति० टी०-पूर्वकात्प्रत्ययात्संदेशकालिकादात्मीयोऽयमिति विश्वासाद्भर्तारं द्रष्टुमिच्छामीत्यहमुक्तः, ततः पर्याकुलेक्षणा आसीदिति शेषः ॥ ४ ॥

रा० टी०-पूर्वेति । पूर्वकात् पौर्वकालिकात् प्रत्ययात् विश्वासात् विश्वस्तया तया सीतया भर्तारं द्रष्टुमिच्छामीति वचनमहमुक्तः ॥ ४ ॥

गो० टी०-पूर्वकादिति । पूर्वकात्पूर्वोत्पन्नात् प्रत्ययाद्विश्वासात् ॥ ४ ॥

५-६ ] ति० टी०-ध्यानमागच्छत् । परगृहोषितायां परगृहे महाँल्लोकापवादो निर्दोषायाः परित्यागे च महान्दोष इति कार्यदौस्थ्यात्किं कर्तव्यमिति चिन्तयामासेत्यर्थः। वस्तुतो मुख्यसीतालाभोऽग्रे कथं स्यादिति चिन्तात्र ॥ ५ ॥ ६ ॥

रा० टी०-एवमिति । एवमुक्तो रामः ईषद्बाष्पपरिप्लुतस्सन् ध्यानं विचारविशेषं अगच्छत् अकरोत् ॥ ५ ॥

गो० टी०-एवमिति । रामः ईषद्बाष्पपरिप्लुतः सन् सहसा ध्यानमागच्छत् । रावणभवनोषितसीतापरिग्रहे महान् लोकापवादो भवेत्, निर्दोषायास्तस्याः परित्यागे महान् दोषः स्यादित्येवं कार्यदौस्थ्यात् किं कर्तव्यमिति चिन्तयामासेत्यर्थः ५

रा० टी०-स इति । स रामः दीर्घमुष्णं निःश्वस्य मेदिनीमवलोकयन्सन् उपस्थितं विभीषणमुवाच ॥ ६ ॥

गो० टी०-दीर्घमिति । निःश्वासदैर्घ्येण चिन्तादैर्घ्यं गृह्यते । औष्ण्येन कथं क्लिष्टां तां पुनः क्लेशयिष्यामीत्यन्तस्तापो व्यज्यते । भूमिं समवलोकयन् इति चिन्तापारवश्याभिनयः । मेघसंकाशमित्यनेन सीतानयने कृतत्वरत्वमुच्यते॥६॥

७-८ ] ति० टी०-दिव्याङ्गरागामिति । तैस्तस्या रूपाधिक्याभिव्यक्तावीदृश्यर्थेऽयं मे उद्यम इति सर्वाञ्ज्ञापयितुमेतं वादः ॥ ७ ॥ ८ ॥

रा० टी०-तदाकारमाह—दिव्येति । सीतामिहोपस्थापय ॥ ७ ॥

गो० टी०-दिव्याङ्गरागामिति । अलङ्कृत्यानयनादेशः उत्तरकालिकपरुषभाषणार्हताप्रतिपादनाय। नहि तादृशदशापन्नां दीनां परुषं भाषितुं युज्यते। तब तस्या न परित्यागार्थम् किन्तु चतुर्मुखादिदेवतामुखेन तस्याः पातिव्रत्यं ख्यापयितुम् । मा चिरं विलम्बो न कार्य इत्यर्थः ॥ ७ ॥

रा० टी०-एवमिति । विभीषणः अन्तःपुरं प्रविश्य सीतां स्वाभिः स्त्रीभिरचोदयत् स्वागमनमबोधयत् ॥ ८ ॥

गो० टी०-एवमित्यादिश्लोकद्वयमेकान्वयम् । स्वाभिः स्त्रीभिरचोदयत् निजस्त्रीमुखेनाचोदयत् । ॥ ८-१० ॥

१ स उवाच महाप्राज्ञमभिगम्येति. गो. पा. । २ वचनमर्थज्ञ इति गो. वचन धर्मज्ञ इति रा. पा. । ३ चेति गो. रा. पा. । ४ मैथिली द्रष्टुमर्हसीति गो. रा. पा. । ५ तव हर्षमुपागमदिति गो. रा. पाठः । ६ भर्तारं द्रष्टुमिच्छामि कृतार्थं सहलक्ष्मणमिति गो, रा. पाठः । ७ दीर्घमुष्णं विनिःश्वस्य मेदिनीमिति गो. पाठः । ८ उष्णमिति रा. पा. । ९ मेदिनीमिति रा. पा. । १० स्वाभिः स्त्रीभिरिति गो. पा. ।

ततः सीतां महाभागां दृष्ट्वोवाच विभीषणः । मूर्ध्नि बद्धाञ्जलिः श्रीमान्विनीतो राक्षसेश्वरः ॥ ९ ॥
दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता । यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥१० ॥
एवमुक्ता तु वैदेही प्रत्युवाच बिभीषणम् । अस्नात्वा[2] द्रष्टुमिच्छामि भर्तारं राक्षसेश्वर[3]॥ ११ ॥
तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः । यथाह रामो भर्ता ते तत्तथा कर्तुमर्हसि ॥ १२ ॥
तस्य तद्वचनं श्रुत्वा मैथिली पतिदेवता । भर्तृभक्त्या[4] वृता साध्वी तथेति प्रत्यभाषत॥ १३ ॥
ततः सीतां शिरःस्नातां संयुक्तां[5] प्रतिकर्मणा । महार्हाभरणोपेतां महार्हाम्बरधारिणीम्[6] ॥ १४ ॥
आरोप्य शिबिकां सीतां राक्षसैर्वहनोचितैः । राक्षसैर्[7]बहुभिर्गुप्तामाजहार विभीषणः ॥ १५ ॥
सोऽभिगम्य महात्मानं ज्ञात्वापि ध्यानमास्थितम् । प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयत् ॥ १६ ॥
तामागतामुपश्रुत्य रक्षोगृहचरोषिताम् । रोषं[8] हर्षं च दैन्यं च राघवः प्राप शत्रुहा॥ १७ ॥
ततो यानगतां[9] सीतां सविमर्शं विचारयन् । विभीषणमिदं वाक्यमहृष्टो[10] राघवोऽब्रवीत् ॥ १८ ॥
राक्षसाधिपते सौम्य नित्यं मद्विजये रत । वैदेही संनिकर्षं मे क्षिप्रं[11] समभिगच्छतु ॥ १९ ॥

९-१० ] ति० टी०-ततः स्वक्षीणां तत्समीपगमनानन्तरम् ॥ ९ ॥ १० ॥

रा० टी०-तत इति । मूर्ध्नि बद्धाञ्जलिर्विभीषणः दृष्ट्वोवाच ॥ ९ ॥

रा० टी०-तदाकारमाह—दिव्येति । हे वैदेहि भर्ता त्वां द्रष्टुमिच्छति अतस्त्वं दिव्याङ्गरागा सती यानमारोह ॥ १० ॥

११ ] ति० टी०-अस्नात्वा द्रष्टुमिच्छामि । भर्त्राज्ञां विनापि स्नानमकृत्वैव द्रष्टुमिच्छामीत्यर्थः ॥ ११ ॥

रा० टी०-एवमिति । एवमुक्त्वा वैदेही अस्नात्वा स्नानमकृत्वैव द्रष्टुमिच्छामीति वचनं विभीषणं प्रत्युवाच ११

१२ ] ति० टी०-तस्यास्तद्वचनं स्नानायनङ्गीकारवचनम् । यथा राम आह तथा कर्तुमर्हसि । 'तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् । मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् ॥ उवाच रामो वैदेहीं परामर्शविशङ्कितः ॥' इति भारते तु मलोपचितेत्यर्थे पूर्वमिति शेषः ॥ १२ ॥

रा० टी०-तस्या इति । तस्याः वचनं श्रुत्वा यथा राम आह तथैव कर्तुं त्वमर्हसि इति विभीषणः प्रत्युवाच एतेन स्नानं रामेणाप्याज्ञप्तमिति सूचितम् ॥ १२ ॥

गो० टी०-तस्या इति । प्रत्युवाच श्रीमुखेनेति शेषः। यथानियोगं कर्तव्यत्वे हेतुद्वयम्—राजा भर्तेति ॥ ११ ॥

१३-१४ ] ति० टी०-भर्तृभक्त्या आवृतान्विता॥१३॥१४

रा० टी०-तस्येति । तस्य विभीषणस्य वचनं श्रुत्वा मैथिली तथेति प्रत्यभाषत ॥ १३ ॥

रा० टी०-तत इति । ततः रामाज्ञाश्रवणानन्तरं शिरस्स्नातां सीतां विभीषणः शिबिकामारोप्य आजहार रामसमीपं प्रापयामास श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०-तस्येति । अङ्गीकारहेतुद्वयं भर्तृदेवता भर्तृभक्तिव्रतेति ॥ १२-१४ ॥

१५ ] ति० टी०-श्रीयुक्तवाहनवहनोचितैः । परीक्षितैरित्यर्थः ॥ १५ ॥

१६ ] ति० टी०-ज्ञात्वापि विभीषणगमनं ज्ञात्वापि ध्यानमास्थितम् । अतः परं किं वक्तव्यं किं कर्तव्यमिति चिन्तायुक्तमित्यर्थः ॥ १६ ॥

रा० टी०-स इति । स विभीषणः रामं ध्यानमास्थितं ज्ञात्वापि प्राप्तां सीतां न्यवेदयत् ॥ १६ ॥

गो० टी०-स इति । ज्ञात्वापि विभीषणागमनं विदित्वापि । अनेन चिन्तातुल्यत्तिरुक्ता ॥ १६ ॥

१७ ] ति० टी०-रोषं सर्वानर्थमूलयानया किल समुद्रद्रावात्केणेदं बहुदुःखमनुभूतमिति रोषः । यद्वा रावणगृहे चिरोषितत्वनिमित्तक आरोपितो रोषो भाविशपथोपयोगी । चिरवियुक्ताया अद्य दर्शनमिति हर्षः । चिरकालं मत्प्रतीक्षयानया बहुदुःखमनुभूतमिति दैन्यम् ॥ १७ ॥

रा० टी०-तामिति । आगतां तां सीतामुपश्रुत्य विद्यमानं राघवं हर्षः दैन्यं सीताक्लेशस्मरणजनितदीनता रोषश्च त्रयमाविशत् ॥ १७ ॥

गो० टी०-तामिति । रावणवधपूर्वकसीतागमेन हर्षः रावणभवनोषितत्वेन दैन्यम् रोषश्च । अत्र रोषो भाविशपथोपयोगित्वादारोपित इति द्रष्टव्यम् ॥ १६ ॥

१८-१९ ] ति० टी०-अहृष्टः । उक्तधर्मत्रयाक्रान्तत्वात्प्रकटहर्षरहितः ॥ १८ ॥ १९ ॥

रा० टी०-तत इति । सविमर्शं प्रतर्कसहितं विचारयन् अत एव अहृष्टः किञ्चित्संतोषरहितो राघवोऽब्रवीत् ॥ १८ ॥

१ इदं पद्यं गो. पु. नास्ति । २ स्नातेति गो. पाठः । ३ अधिपेति गो. पाठः । ४ भक्तिव्रतेति गो. रा. पा. । ५ युवतीभिरलङ्कृतामिति गो. रा. पाठः । ६ दीप्तां पराध्यांम्बरसंवृतामिति गो. रा पाठः । ७ रक्षोभिरिति गो. पाठः । ८ हर्षो दैन्यं च रोषश्च त्रयं राघवमाविशत इति गो.रा. पाठः । ९ ततः पार्श्वगतं दृष्ट्वेति गो. रा. पाठः । १० अहृष्टमिति गो. पाठः । ११ शीघ्रं समुपैति गो. रा. पाठः ।

तस्यै तद्वचनं श्रुत्वा राघवस्य विभीषणः । तूर्णमुत्सारणं तत्र कारयामास धर्मवित् ॥ २० ॥
कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः । उत्सारयन्तस्तान्योधान्समन्तात्परिचक्रमुः ॥ २१ ॥
ऋक्षाणां वानराणां च राक्षसानां च सर्वशः । वृन्दान्युत्सार्यमाणानि दूरमुत्तस्थुरन्ततः ॥ २२ ॥
तेषामुत्सार्यमाणानां निःस्वनः सुमहानभूत् । वायुनोद्धूयमानस्य सागरस्येव निःस्वनः ॥२३॥
उत्सार्यमाणान्दृष्ट्वा तान्समन्ताज्जातसंभ्रमान् । दाक्षिण्यात्तदमर्षाच्च वारयामास राघवः ॥ २४ ॥
संरम्भाच्चाब्रवीद्रामश्चक्षुषा प्रदहन्निव । विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥ २५ ॥
किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः । निवर्तयैनमुद्वेगं जनोऽयं स्वजनो मम ॥ २६ ॥
न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रिया । नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियः ॥ २७ ॥

---

रा० टी०—तदाकारमाह—राक्षसेति । वैदेही मे सन्निकर्षं समीपं क्षिप्रं समभिगच्छतु ॥ १९ ॥

गो० टी०—तत इति । सविमर्शं विचारयन् सवितर्कं चिन्तयन् । अहृष्टमिति क्रियाविशेषणं विभीषणविशेषणं वा ॥ १७ ॥ १८ ॥

२० ] ति० टी०—उत्सारणम् । जनस्येति शेषः ॥२०॥

रा० टी०—तस्येति । विभीषणः राघवस्य वचनं श्रुत्वा उत्सारणे यत्नं कारयामास ॥ २० ॥

गो० टी०—स इति । उत्सारणे जननिवारणे ॥ १९ ॥

२१ ] ति० टी०—वेत्रैर्वेत्रग्रहणैर्झर्झरास्ताडशशब्दवन्तः पाणयो येषाम् ॥ २१ ॥

रा० टी०—तत्प्रकारमाह कञ्चुकेति । कञ्चुकादिमन्तः वेत्रझर्झरपाणयः विभीषणानुचराः पुरुषान् वानरादीन् उत्सारयन्तस्सन्तः समन्तात्परिचक्रमुः ॥ २१ ॥

गो० टी०—कञ्चुकेति । कञ्चुकं वारबाणम् उष्णीषं शिरोवेष्टनम् । वेत्रेण जर्जराः सदावलम्बनजनितपारुष्याः पाणयो येषां ते ॥ २० ॥

२२-२३ ] ति० टी०—उत्तस्थुरुत्थाय जग्मुः ॥२२॥२३॥

रा० टी०—ऋक्षाणामिति । अन्ततः समीपदेशात् उत्सार्यमाणानि ऋक्षादीनां वृन्दानि दूरमुत्तस्थुः ॥ २२ ॥

गो० टी०—ऋक्षाणामिति । उत्तस्थुः अपचक्रमुः॥२१॥

रा० टी०—तेषामिति । वायुना उद्धूयमानस्य समुद्रस्य निःस्वन इव उत्सार्यमाणानां निःस्वनस्सुमहानभूत् ॥ २३ ॥

गो० टी०—तेषामिति । उद्वर्तमानस्य उज्जृम्भमाणस्य ॥ २२ ॥

२४ ] ति० टी०—दाक्षिण्यात्स्वभक्तवानरसेनासु दाक्षिण्यात्कृपाविशेषात् । तदमर्षात् मदाज्ञां विनोत्सारयतीति विभीषणेऽमर्षः ॥ २४ ॥

रा० टी०—उत्सार्यमाणानिति । उत्सार्यमाणान् अत एव जातसम्भ्रमान् उद्विग्नचित्तान् तान् राघवो दृष्ट्वा दाक्षिण्यात् वानरादिषु कृपाविशेषात् अत एव तस्य निस्सारणस्य अमर्षात् हेतोः वारयामास ॥ २४ ॥

गो० टी०—उत्सार्यमाणानिति । दाक्षिण्याद्वानरेषु दाक्षिण्यात् । अमर्षात् उत्सारणासहनात् ॥ २३ ॥

२५ ] ति० टी०—संरम्भात्कोपात् ॥ २५ ॥

रा० टी०—संरम्भादिति । संरम्भात् उत्सारणहेतुककोपात् चक्षुषा प्रदहन्निव रामः विभीषणं सोपालम्भं वचोऽब्रवीत् ॥ २५ ॥

गो० टी०—संरब्ध इति । चक्षुषा प्रदहन्निवेति लोचनाभ्यां पिबन्निवेत्युक्तादरपात्रभूतस्य विभीषणस्यैवंविधदर्शनविषयताकरणं स्वजननिग्रहासहिष्णुत्वात् । सीताविषयसमारोपितरोषविशेषाद्वा ॥ २४ ॥ २५ ॥

२६ ] ति० टी०—एनमुद्वेगं निवर्तय । अस्य जनस्येति शेषः । कथमेवं युज्यते तत्राह—जनोऽयमिति । स्वजनो भ्रात्रादिस्वजनसदृश एव ॥ २६ ॥

रा० टी०—तदाकारमाह किमर्थमिति । मामनादृत्य अपृष्ट्वेत्यर्थः अयं जनः किमर्थं क्लिश्यते त्वया क्लेश्यते क्लेशो नोचित इत्यर्थः अतः एनमुद्योगं निवर्तय तत्र हेतुः अयं जनो मम स्वजनः स्वकीयलक्ष्मणादिसदृशः ॥ २६ ॥

२७ ] ति० टी०—किं च व्यर्थोऽयं जनापसरणप्रयास इत्याह—न गृहाणीति । गृहादित्रयं तिरस्क्रिया आवरणम् । ईदृशा जनापसरणादिव्यापारा न स्त्रिया आवरणम्, किं तु राजसत्कार एव केवलं छत्रचामरादिवत् । किं तर्ह्यावरणं तत्राह—वृत्तमेवावरणमिति ॥ २७ ॥

रा० टी०—नेति । गृहादित्रयमीदृशाः निस्सारणरूपा वा स्त्रियाः तिरस्काराः आवरणानि न किन्तु राजसत्काराः स्वस्वपतिकृतसत्क्रियाः वृत्तं स्वस्वाचरणञ्च आवरणम् ॥२७॥

गो० टी०—न गृहाणीति । तिरस्क्रियाः तिरस्कारिण्यः राजसत्काराः उत्सारणादिकम् वृत्तम् आचारः ॥ २६ ॥

---

१ स तद्वचनमाज्ञायेति गो. पाठः २ उत्सारणे यत्नं कारयामास सर्वत इति गो. रा. पाठः । ३ जर्जरेति गो. पाठः । ४ पुरुषा इति गो. पुरुषानिति रा. पा. । ५ सर्वेषां ध्वनिरुत्थित इति गो. पाठः । ६ उद्वर्तमानस्येति गो. पाठः ।७ तान्दृष्ट्वा समंताज्जातसंभ्रमानिति गो. रा. पाठः । ८ संरब्ध इति गो. पाठः । ९ उद्योगमिति गो. रा. पाठः । १० प्राकारास्तिरस्क्रिया इति गो. प्राकारास्तिरस्कारा इति ग ... ।

व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे । न क्रतौ नो[1] विवाहे वा दर्शनं दूष्यते[2] स्त्रियाः ॥२८॥
सैषा विपद्गता[3] चैव कृच्छ्रेण[4] च समन्विता । दर्शने नास्ति दोषोऽस्या[5] मत्समीपे विशेषतः ॥२९॥
विसृज्य[6] शिबिकां तस्मात्पद्भ्यामेवापसर्पतु । समीपे मम वैदेहीं पश्यन्त्वेते वनौकसः ॥ ३० ॥
एवमुक्तस्तु रामेण सविमर्शो विभीषणः । रामस्योपानयत्सीतां संनिकर्षं विनीतवत् ॥ ३१ ॥
ततो लक्ष्मणसुग्रीवौ हनूमांश्च प्लवंगमः । निशम्य वाक्यं रामस्य बभूवुर्व्यथिता भृशम् ॥३२॥
( कलत्रनिरपेक्षैश्च[7] इङ्गितैरस्य दारुणैः । अप्रीतमिव सीतायां तर्कयन्तिस्म राघवम् ॥ )
लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली । विभीषणेनानुगता भर्तारं साभ्यवर्तत ॥ ३३ ॥
विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता । उदैक्षत मुखं भर्तुः सौम्यं सौम्यतरानना ॥ ३४ ॥
अथ समपनुदन्मनःक्लमं सा सुचिरमदृष्टमुदीक्ष्य वै प्रियस्य ।
वदनमुदितपूर्णचन्द्रकान्तं विमलशशाङ्कनिभानना तदा[8]सीत् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥

---

२८ ] ति० टी०--अपि चेदानीं दर्शनमपि नास्य दोषायेत्याह—व्यसनेष्विति । व्यसनं विपत्तिकालः कृच्छ्रं पीडा ॥२८॥

रा० टी०–निस्सारणाभावे हेत्वन्तरमप्याह व्यसनेष्विति । व्यसनादिषु स्त्रियाः दर्शनं न दूष्यते तत्र व्यसनं आपत्कालजनितः खेदः कृच्छ्रं रोगादिजनितः खेद इति न पौनरुक्त्यम् ॥ २८ ॥

गो० टी०–व्यसनेष्विति । व्यसनेषु इष्टजनवियोगेषु कृच्छ्रेषु राज्यक्षोभादिषु युद्धे युद्धभूमौ ॥ २७ ॥

२९ ] ति० टी०–प्रकृते दर्शनस्यादोषत्वसाधकं धर्ममाह-सैषेति ॥ २९ ॥

रा० टी०–प्रकृतमाह सेति । एषा विपद्गता अत एव कृच्छ्रेण मानसिकदुःखेन समन्विता अत एव अस्याः दर्शने दोषो नास्ति मत्समीपे तु विशेषतो न दोषः ॥ २९ ॥

गो० टी०–सैषेति । कृच्छ्रे वक्ष्यमाणाग्निप्रवेशे २८॥२९

३० ] ति० टी०–पश्यन्तु । वैदेहीमित्यनुकर्षः ॥ ३० ॥

रा० टी०–विसृज्येति । तस्मादुक्तहेतोः पद्भ्यामेव वैदेही अपसर्पतु मम समीपे वैदेहीं वनौकसः पश्यन्तु वैदेह्याः कर्मत्वेन लाभः प्रत्यासत्त्या ॥ ३० ॥

३१ ] ति० टी०–सविमर्श एवंवादादस्यां प्रायेणाभिमानो नास्ति, जिघृक्षा च नास्ति यदि तौ स्यातां तदा राजपत्न्युचितमुपचारमनुमन्येतैवेति चिन्तायुक्त इत्यर्थः ॥ ३१ ॥

रा० टी०–एवमिति । रामेण एवमुक्तः अत एव सविमर्शः विचारसहितो विभीषणः सीतां रामस्य संनिकर्षमुपानयत् ॥ ३१ ॥

गो० टी०–एवमिति । सविमर्शः कृच्छ्रशब्दप्रयोगात्साशङ्कः ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०–अनयैव बुद्धया लक्ष्मणादेरपि व्यथा ३२

रा० टी०–तत इति । लक्ष्मणादयः रामस्य वाक्यं सकोपवचनं निशम्य व्यथिता बभूवुः ॥ ३२ ॥

३३ ] ति० टी०–लज्जयावलीयन्ती जनसमक्षभर्तृसमीपस्थितिजन्यलज्जयावलीयन्ती संकोचं गच्छन्ती ॥ ३३ ॥

रा० टी०–लज्जयेति । लज्जया स्वेषु गात्रेषु अवलीयन्ती मैथिली भर्तारमभ्यवर्तत ॥ ३३ ॥

गो० टी०–व्यथायां हेतुमाह—कलत्रेति ॥ ३२ ॥

गो० टी०–लज्जयेति । अवलीयन्ती संकुचन्ती ३३॥३४

३४ ] ति० टी०–विस्मयादिति । बहुमित्रपरिवारसंपत्तिदर्शनजो विस्मयः । प्रियदर्शनजो हर्षः ॥ ३४ ॥

रा० टी०–विस्मयादिति । सौम्यतरानना मैथिली विस्मयादितः भर्तुर्मुखमुदैक्षत तत्र विस्मयः रामकोपदर्शनजनितः ॥ ३४ ॥

गो० टी०–विस्मयादिति । विस्मयात् अघटितरामपुनर्दर्शनाद्विस्मयः प्रियस्य दर्शनेन प्रहर्षः स्नेहः स्वाभाविकः उदीक्षणकालिकमुखप्रसादमाह—सौम्येति ॥ ३६ ॥

३५ ] ति० टी०–समपनुदत्समपानुदत् ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्दशाधिकशततमः सर्गः ॥११४॥

रा० टी०–अथेति । सा सीता सुचिरं बहुकालं दृष्टं प्रियस्य वदनमुदीक्ष्य मनःक्लमं समपनुदत् समपानुदत् अत्यजत् अत एव विमलशशांकनिभाननासीत् ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षोडशाधिकशततमः सर्गः ॥ ११६ ॥

गो० टी०–अथेति । उदितपूर्णचन्द्रेत्यनेन कोपरक्तत्वमुक्तम् । विमलशशाङ्केत्यनेन उत्तरकालिकक्षयः सूच्यते ॥३६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तदशोत्तरशततमः सर्गः ॥११७॥

---

१ न विवाहे चेति गो. न विवाहेष्विति रा. पाठः । २ दुष्यतीति गो. पाठः । ३ युद्धेति गो. पाठः । ४ कृच्छ्रे च महति स्थितेति गो. पाठः । ५ नास्या न दोषः स्यादिति गो. पाठः । ६ तदानय समीपं मे शीघ्रमेनां बिभीषण । सीता पश्यतुमामेषा सुहृद्गणवृतं स्थितमिति गो. पाठः ७ इदं पद्यं गो. पुस्तके । ८ तदानीमिति गो. पाठः ।

## पञ्चदशाधिकशततमः सर्गः ।

समीपमागतां जानकीं वीक्ष्य राघवः स्त्रियाश्चिरं परगृहवासो निन्दास्पदमतस्त्वां न ग्रहीष्यामि यथेच्छं कुत्रापि गच्छ येन मामकीनवंशो निष्कलङ्क इत्याद्युक्त्वा तां नाङ्गीचकार येन सा भृशं खिन्ना रुरोद ।

तां तु पार्श्वे स्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम् । हृदयान्तर्गतं भावं व्याहर्तुमुपचक्रमे ॥ १ ॥
एषासि निर्जिता भद्रे शत्रुं जित्वा रणाजिरे । पौरुषात् यदनुष्ठेयं मयैतदुपपादितम् ॥ २ ॥
गतोऽस्म्यन्तममर्षस्य धर्षणा संप्रमार्जिता । अवमानश्च शत्रुश्च युगपन्निहतौ मया ॥ ३ ॥
अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः । अद्य तीर्णप्रतिज्ञोऽहं प्रभवाम्यद्य चात्मनः ॥ ४ ॥
या त्वं विरहिता नीता चलचित्तेन रक्षसा । दैवसंपादितो दोषो मानुषेण मया जितः ॥ ५ ॥
संप्राप्तमवमानं यस्तेजसा न प्रमार्जति । कस्तस्य पौरुषेणार्थो महताप्यल्पचेतसः ॥ ६ ॥
लङ्घनं च समुद्रस्य लङ्कायाश्चापि मर्दनम् । सफलं तस्य च श्लाघ्यमद्य कर्म हनूमतः ॥ ७ ॥
युद्धे विक्रमतश्चैव हितं मन्त्रयतस्तथा । सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रमः ॥ ८ ॥
विभीषणस्य च तथा सफलोऽद्य परिश्रमः । विगुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः ॥ ९ ॥

---

१ ] ति० टी०—तां त्विति ॥ १ ॥

रा० टी०—सीताकर्तृकरामसमीपागमनपूर्वकस्थित्यनंतरकालिकं वृत्तान्तमाह—तामित्यादिभिः । रामः पार्श्वे स्थितां प्रह्वां प्रणतां मैथिलीं सम्प्रेक्ष्य हृदयान्तर्गतं भावं स्वाभिप्रायं व्याहर्तुं वक्तुमुपचक्रमे ॥ १ ॥

गो० टी०—अथ रामपरुषोक्तिः—तां तु पार्श्वस्थितामित्यादि । प्रह्वां लज्जया नम्राम् ॥ १ ॥

२ ] ति० टी०—एषा त्वं शत्रुं जित्वा शत्रोः प्रत्याहृता । पौरुषात्पुरुषयत्नात् ॥ २ ॥

रा० टी०—व्याहरणप्रकारमाह—एषेत्यादिभिः । हे भद्रे ! मया शत्रुं जित्वा त्वं निर्जिता उत्कर्षं प्रापिता अत एव पौरुषात् पुरुषयत्नात् यदनुष्ठेयं तदेतत् उपपादितं कृतम् ॥२॥

गो० टी०—एषेति । एषेति प्रत्यक्षेण दर्शयति । भद्रे इत्यसंबन्धनिवेदकसंबोधनम् । पौरुषाद्यदनुष्ठेयं तदेव कृतम् । न तु त्वल्लाभाय यत्नः कृत इति भावः ॥ २ ॥

३ ] ति० टी०—अमर्षस्य क्रोधस्यान्तं गतः । धर्षणा शत्रुकृतस्वदारहरणलक्षणाभिभवः ॥ ३ ॥

रा० टी०—गत इति । अमर्षस्य क्रोधस्यान्तं फलं गतः प्राप्तोस्मि अत एव धर्षणा शत्रुकर्तृकदारापहरणहेतुकपराभवः संप्रमार्जिता दूरीकृता अत एव अवमानः शत्रुकर्तृकस्वानादरः शत्रुश्च युगपत् मया निहतौ ॥ ३ ॥

गो० टी०—गतोऽस्मीति । अन्तम् फलम् । अकृतौ निर्मूलितौ ॥ ३ ॥

४ ] ति० टी०—अद्य मे पौरुषं दृष्टम् । लोकैरिति शेषः । तीर्णप्रतिज्ञस्तीर्णा रावणवधविषया प्रतिज्ञा येन सः ॥ ४ ॥

रा० टी०—अद्येति । मे पौरुषमद्य दृष्टं त्वयेति शेषः अत एव मे श्रमः सफलः अत एव अद्य तीर्णा संपूर्णा प्रतिज्ञा राक्षसविनाशविषयकप्रतिज्ञानं यस्य सोहमात्मनः स्वप्रयत्नात् प्रभवामि प्रभाववान् भवामि ॥ ४ ॥

गो० टी०—अद्येति । आत्मनः प्रभवामि स्वतन्त्रो भवामि ॥ ४ ॥

५–६ ] ति० टी०—मया विरहिता या त्वं चलचित्तेन रक्षसा नीता, असौ दैवसंपादितस्तव दोषो मानुषेण मनुष्यसाध्यपराक्रमेण मया जितोऽपनीतः ॥ ५ ॥ ६ ॥

रा० टी०—येति । विरहिता मया हीना या त्वं चलचित्तेन रक्षसा नीता तस्यास्तव दैवसम्पादितः देवादृष्टकृतो दोषः मानुषेण मया जितो दूरीकृतः ॥ ५ ॥

गो० टी०—या त्वमिति । मया विरहिता या त्वं चलचित्तेन रक्षसा नीता । तया त्वया हेतुभूतया दैवसंपादितः दोषः अवमानः मानुषेण प्रमार्जितः दैवकृतं पुरुषयत्नेन निवारितमिति भावः ॥ ५ ॥

रा० टी०—सम्प्राप्तमिति । सम्प्राप्तमवमानं यः पुरुषः तेजसा स्वबलेन न प्रमार्जति तस्याल्पतेजसः पुरुषस्य कः पुरुषार्थः न कोपीत्यर्थः ॥ ६ ॥

गो० टी०—धर्षणाया अमार्जने दोषमाह—संप्राप्तमिति । प्रमार्जति प्रमार्ष्टि ॥ ६ ॥

७–९ ] ति० टी०—अथ सफलमित्यन्वयः ॥ ७–९ ॥

रा० टी०—लङ्घनमिति । समुद्रस्य लङ्घनं लङ्कायाः मर्दनं च हनूमतः कर्म अद्य सफलमत एव श्लाघ्यं प्रशंसनीयम् ॥ ७ ॥

---

१ अन्तर्गतं क्रोध इति गो. पाठः । २ मया रणे इति गो. रा. पाठः । ३ तदेतदिति गो. रा. पाठः । ४ मया युगपदुद्धृता विति गो. पाठः । ५ प्रतिज्ञत्वादिति गो. पाठः । ६ इहेति गो. रा. पा. । ७ पुरुषार्थोऽस्ति पुरुषस्येति गो. रा. पा. । ८ भवेति गो. पा. । ९ तच्छ्लाघ्यं महत्कर्मेति गो. पाठः । १० च मे इति गो० चन इति रा. पाठः । ११ पूर्वपरार्धयोर्व्यत्यासेन पा० गो. रा. पुस्तकयोः ।

इत्येवं वदतः श्रुत्वा सीता रामस्य तद्वचः । मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १० ॥
पश्यतस्तां तु रामस्य समीपे हृदयप्रियाम् । [ प्रभूतान्यावसिक्तस्य पावकस्येव दीप्यतः ॥
स बद्ध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेक्षितलोचनः ] जनवादभयाद्राज्ञो बभूव हृदयं द्विधा ॥ ११ ॥
सीतामुत्पलपत्राक्षीं नीलकुञ्चितमूर्धजाम् । अवदद्वै वरारोहां मध्ये वानररक्षसाम् ॥ १२ ॥
यत्कर्तव्यं मनुष्येण धर्षणां प्रतिमार्जता । तत्कृतं रावणं हत्वा मयेदं मानकाङ्क्षिणा ॥ १३ ॥
निर्जिता जीवलोकस्य तपसा भावितात्मना । अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ॥ १४ ॥
विदितश्चास्तु भद्रं ते योऽयं रणपरिश्रमः । सुतीर्णः सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥ १५ ॥
रक्षता तु मया वृत्तमपवादं च सर्वतः । प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिमार्जता ॥ १६ ॥

गो० टी०—इदानीं हनुमदादिपौरुषस्यापि धर्षणावमार्जनहेतुत्वमाह—लङ्घनं चेत्यादिना । समुद्रस्य लङ्घनं लङ्काया अवमर्दनम् इत्येवंरूपं हनुमतः श्लाघ्यं कर्म चात्र सफलम् । धर्षणापरिमार्जनेन सफलमित्यर्थः ॥ ७ ॥

रा० टी०—युद्ध इति । युद्धे विक्रमतः नोऽस्माकं हितं मन्त्रयतः सुग्रीवस्य परिश्रमः सफलः ॥ ८ ॥

गो० टी०—युद्ध इति । मन्त्रयतः चिन्तयतः ॥ ८ ॥

रा० टी०—निर्गुणमिति । निर्गुणं निषिद्धगुणविशिष्टं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः तस्य विभीषणस्य परिश्रमः सफलः ॥ ९ ॥

गो० टी०—निर्गुणमिति । तस्येत्यध्याहार्यम् ॥ ९ ॥

१० ] ति० टी०—इत्येवं वदत इत्यर्थात्त्वया मे प्रयोजनं नास्तीति प्रतिफलनादुःखेनाश्रुपरिप्लुता बभूव ॥ १० ॥

रा० टी०—इतीति । इत्येवं वचो वदतो रामस्य समीपे विद्यमाना मृगीवोत्फुल्लनयना सीता अश्रुपरिप्लुता बभूव १०

गो० टी०—इत्येवमिति । तद्वचः नैराश्येनोक्तं वचः । तस्य ब्रुवतः तस्मिन् ब्रुवति सति ॥ १० ॥

११–१३ ] ति० टी०—तद्रूपदर्शनादङ्गीकारबुद्धिः । जनवादभयात्त्यागबुद्धिः भावसंधिरत्र ॥ ११–१३ ॥

रा० टी०—पश्यत इति । हृदयप्रियां सीतां समीपे पश्यतो रामस्य हृदयं जनवादभयात् हेतोः द्विधा संशयविशिष्टमित्यर्थः बभूव जनवादभयादित्यनेन तत्त्वतः संशयाभावः सूचितः ॥ ११ ॥

गो० टी०—पश्यत इति । पावकस्येति । पावकस्य क्रोधोतीव ज्वलनम् ॥ ११ ॥

रा० टी०—सीतामिति । वानररक्षसां मध्ये सीतामवदत् ॥ १२ ॥

गो० टी०—स इति । तिर्यक्प्रेक्षितलोचनः तिर्यक्प्रेक्षणं पुरतः सीतादर्शनासहिष्णुत्वकृतम् ॥ १२ ॥

रा० टी०—तदाकारमाह—यदिति । धर्षणां परकृतपराभवं प्रतिमार्जता मानुषेण यत् कर्तव्यं तदिदं रावणं हत्वा मया कृतम् तत्र दृष्टान्तः तपसा भावितः परिशीलितः आत्मा परमात्मा येन तेन अगस्त्येन मुनिना निर्जिता जीवलोकस्य दुराधर्षा इल्वलवातापिभयात् धर्षयितुमशक्या दक्षिणा दिगिव श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—यत्कर्तव्यमित्यादित्रिपादश्लोक एकान्वयः । हे सीते, धर्षणां परिमार्जता । "मृजेरजादौ विभाषा वृद्धिः" इति वृद्धिः । मनुष्येण यत्कर्तव्यं तत् सकलं कृतम् । शत्रुहस्तादमर्षणादित्युत्तरशेषः ॥ १३ ॥

१४–१५ ] ति० टी०—जीवलोकस्य दुराधर्षेत्यन्वयः । इल्वलवातापिभयादिति शेषः । रावणभयात्प्राणिमात्रस्य दुराधर्षा युद्धेन निर्जिता ॥ १४ ॥ १५ ॥

गो० टी०—भावितात्मना ध्यातात्मस्वरूपेण, अगस्त्येन । इल्वलाक्रान्तत्वाज्जीवलोकस्य दुराधर्षा दुःसंचारा, दक्षिणा दिगिव अमर्षणात् अमर्षाद्धेतोः, शत्रुहस्तान्मया त्वं निर्जितेति संबन्धः ॥ १४ ॥

रा० टी०—विदित इति । योयं रणपरिश्रमः सुहृद्वीर्यात् सुतीर्णः स परिश्रमः विदितः प्रसिद्धोऽस्तु एतदर्थमेव कृत इति शेषस्त्वदर्थमन्यार्थं मया न कृतः एतेन रावणवधादिश्रममन्तरापि स्यादिति सूचितम् तेन अघटितघटनापटीयस्त्वरूपः स्वगुणो ध्वनितः अयं त्वच्छब्दस्सर्वादिपठितोन्यपर्यायः ॥ १५ ॥

गो० टी०—विदितश्चेति । योऽयं रणपरिश्रमः सुहृदां वीर्यात्तीर्णः निर्व्यूढः, सः त्वदर्थं मया न कृत इति विदितोऽस्तु ॥ १५ ॥

१६ ] ति० टी०—अपवादं स्वदारापहारिणं हन्तुं नाशक्नोदित्यपवादं परिमार्जता । न्यङ्गं नीचत्वं परिमार्जतेदं कृतमिति शेषः ॥ १६ ॥

रा० टी०—रक्षतेति । वृत्तं सदाचारं रक्षता अत एव अपवादं स्वदारापहारिणमप्ययं हन्तुं न शक्नोतीत्यपकीर्तिम्

१ ब्रुवतस्तस्येति गो.पाठः । २ भूयः क्रोधो व्यवर्धतेति गो.पाठः । ३ इदं पद्यं गो. पुस्तके । ४ इदं पद्यं गो. पुस्तके नास्ति । ५ अब्रवीत्परुषं सीतामिति गो.पा. ६ परीति गो.रा. पा. । ७ मयापि तत्कृतं सीते इति रा.पा. ।८ सकलं सीते इति गो.पा. । ९ शत्रुहस्तादमर्षणादिति गो.रा.पाठः । १० ते भद्रे इति गो. पाठः । ११ स इति गो. पा. । १२ कृतमिति रा. पाठः । १३ सर्वश इति गो. रा. पाठः । १४ व्यङ्गमिति रा.पा.। १५ रक्षतेति गो. पा. ।

प्राप्तचारित्रसंदेहा मम प्रतिमुखे स्थिता । दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढा[1] ॥ १७ ॥
तद्गच्छ त्वा[2]नुजानेऽद्य यथे[3]ष्टं जनकात्मजे । एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ॥ १८ ॥
कः पुमांस्तु कुले जातः स्त्रियं परगृहोषिताम् । तेजस्वी पुनरादद्यात्सुहृ[4]ल्लोभेन चेतसा ॥ १९ ॥
रावणाङ्क[5]परिक्लिष्टां दृष्टां दुष्टेन चक्षुषा । कथं त्वां पुनरादद्यां कुलं व्यपदिशन्महत् ॥ २० ॥
[6]यदर्थं निर्जिता मे त्वं सो[7]ऽयमासादितो मया । नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामिति ॥ २१ ॥
[8]तदद्य व्याहृतं भद्रे मयैतत्कृतबुद्धिना । लक्ष्मणे वाथ भरते कुरु बुद्धिं यथासुखम् ॥ २२ ॥
[9]शत्रुघ्ने वाथ सुग्रीवे [10]राक्षसे वा विभीषणे । निवेशय मनः सीते यथा वा सुखमात्मना ॥ २३ ॥
नहि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमाम् । मर्षयत्य[11]चिरं सीते स्वगृहे [12]पर्यवस्थिताम् ॥ २४ ॥

---

परिमार्जता अत एव प्रख्यातस्य दुष्टनिग्रहकारकत्वेन प्रसिद्धस्य आत्मवंशस्य व्यङ्गं न्यूनत्वं च परिमार्जता मया एतत् कृतमिति शेषः ॥ १६ ॥

गो० टी०—तर्हि किमर्थमेष परिश्रम इत्यत आह—रक्षतेति । अत्र मया रणपरिश्रमः कृत इत्यनुषज्यते । वृत्तं रक्षता अपवादं न्यङ्गम् अयशस्यं च परिरक्षता परिहरता निवारयता मया रणपरिश्रमः कृतः ॥ १६ ॥

१७–१८ ] ति० टी०—नेत्रातुरस्य नेत्ररोगिणः १७॥१८

रा० टी०—प्राप्तेति । प्राप्तः चारित्रस्य सदाचारस्य संदेहः परगृहोषितात्वेन संशयो यस्याः सा मम प्रतिमुखे सम्मुखे स्थिता त्वं नेत्रातुरस्य नयनपीडाकुलस्य प्रतिमुखे स्थितो दीप इव दृढमत्यन्तं प्रतिकूलासि तत्तस्माद्धेतोः त्वा त्वामनुजाने बोधयामि अतः एताः दश दिशः यथेष्टमिच्छामनतिक्रम्य गच्छ त्वया मे कार्यं नास्ति श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—प्राप्तेति । परगृहवासेन प्राप्तचारित्रसंदेहा त्वं नेत्रातुरस्य दीप इव प्रतिकूलासि । अनेनोपमानेन वस्तुतः सीताया दोषो नास्ति । स्वसंदेहेनाहं प्रतिकूलीकरोमीति व्यज्यते ॥ १७ ॥ १८ ॥

१९ ] ति० टी०—सुहृल्लोभेन सुहृच्चिरकालस्निग्ध इति लोभो जिघृक्षा यस्य तेन ॥ १९ ॥

रा० टी०—प्रयोजनाभावे हेतुमाह—क इति । सुहृदां लोभो जिघृक्षा यस्मिन् तेन चेतसोपलक्षितः कुले सद्वंशे जातः कस्तेजस्वी परगृहोषितां स्त्रियं पुनरादद्यात् गृह्णीयात् न कोपीत्यर्थः ॥ १९ ॥

गो० टी०—कः पुमानिति । सुहृल्लेखेन सुहृल्लेखा रणरणकम् सुहृल्लेखामर्हतीति सुहृल्लेख्यं तेन । रणरणकातिशययुक्तेनेत्यर्थः ॥ १९ ॥

२०–२१ ] ति० टी०—रावणस्य दुष्टेन चक्षुषा कामोपहतनेत्रेण दृष्टाम् । एवं च विषान्नवदग्राह्यामित्यर्थः २०॥२१

रा० टी०—रावणेति । कुलं स्वोत्तमवंशं व्यपदिशन् कथयन्नहं रावणाङ्के परिक्लिष्टामत एव दुष्टेन चक्षुषा दृष्टां त्वां कथमादद्यां गृह्णीयाम् ॥ २० ॥

गो० टी०—रावणेति । व्यपदिशन् कीर्तयन् ॥ २० ॥

रा० टी०—यदर्थमिति । यदर्थं मे मया त्वं निर्जिता निर्जयेन प्राप्ता सोयं त्वद्दर्शनरूपोर्थः मया आसादितः प्राप्तः अतः यथेष्टं गम्यतां मे अभिष्वङ्गः सङ्गो नास्ति ॥ २१ ॥

गो० टी०—तदर्थमिति । तदर्थं कुलार्थम् । अभिष्वङ्गः आसक्तिः । अनुरागो वा ॥ २१ ॥

२२ ] ति० टी०—कृतबुद्धिना निश्चितबुद्धिना । अस्मदीयेषु यत्र कुत्रापि तिष्ठेत्याह—लक्ष्मण इत्यादि ॥ २२ ॥

२३ ] ति० टी०—यथा वा सुखम् । स्वमातृपितृकुले वेत्यर्थः ॥ २३ ॥

रा० टी०—तदिति । कृतबुद्धिना सम्पादितनिश्चयेन मया यस्मात् एतद्व्याहृतं कथितं तत्तस्माद्धेतोः लक्ष्मणाद्यन्यतमे बुद्धिं कुरु सम्मतिं पृच्छेत्यर्थः अत एव यथात्मनस्सुखं तथा मनो निवेशय श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०—इति प्रव्याहृतमित्यादिश्लोकद्वयमेकान्वयम् । अत्र लक्ष्मणादौ मनस्करणं नाम अनाथाया रक्षकत्वेन तत्तद्गृहे वर्तनम् । भर्त्रा परित्यक्तायाः स्त्रिया बन्धुगृहे वासविधानात् । न स्त्री स्वातन्त्र्यमर्हतीति स्मृतेः न त्वत्रान्यथा ग्रहीतुं युक्तम् । महापुरुषेण तादृशोक्त्ययोगात् ॥ २२–२४ ॥

२४ ] ति० टी०—सर्वलोकस्य मम च त्वयि वृत्तः संदेहो दुर्निवार इत्याह—न हि त्वामित्यादि ॥ २४ ॥

रा० टी०—नहीति । स्वगृहे चिरं पर्यवस्थितां दिव्यरूपां त्वां रावणो दृष्ट्वा न मर्षयेत् ॥ २४ ॥

---

१ दृढमिति गो. रा पाठः । २ ह्यभ्यनुज्ञातेति गो. अद्याभ्यनुज्ञातेति रा. पाठः । ३ ह्यीति गो. रा. पाठः । ४ क्लेख्येनेति गो. पाठः । ५ अष्टामिति गो. पाठः । ६ तदिति गो. पाठः । ७ यज्ञः प्रव्याहृतामिति गो. पाठः । ८ इत इति गो. रा. पाठः । ९ शत्रुघ्ने इति गो. पाठः । १० सुग्रीवे वानरेन्द्रे वा राक्षसेन्द्रे इति गो. रा. पाठः । ११ मर्षयेत् चिरामिति गो. रा. पाठः । १२ परिवर्तिनीमिति गो. पाठः ।

ततः प्रियार्हश्रवणा तदप्रियं प्रियादुपश्रुत्य चिरस्य मानिनी ।
मुमोच बाष्पं रुदती तदा भृशं गजेन्द्रहस्ताभिहतेव वल्लरी ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

## षोडशाधिकशततमः सर्गः ।

एवं रामेण परित्यक्ता वैदेही पतिं विना जीवितुमनुत्सहमाना लक्ष्मणेन चितां ज्वलयित्वाऽधोमुखं काकुत्स्थं प्रदक्षिणीकृत्य देवब्राह्मणांश्च प्रणम्य यदि मच्चित्तं रामान्नापसर्पति तर्ह्यग्निः पातु मामिति प्रतिज्ञाय त्रीषु रक्षोवानरेषु च हाहेति शब्दायमानेष्वप्यनलं विवेश ।

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् । राघवेण सरोषेण श्रुत्वा प्रव्यथिताभवत् ॥ १ ॥
सा तदाश्रुतपूर्वं हि जने महति मैथिली । श्रुत्वा भर्तुर्वचो घोरं लज्जयावनताभवत् ॥ २ ॥
प्रविशन्तीव गात्राणि स्वानि सा जनकात्मजा । वाक्शरैस्तैः सशल्येव भृशमश्रूण्यवर्तयत् ॥ ३ ॥
ततो बाष्पपरिक्लिन्नं प्रमार्जन्ती स्वमाननम् । शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ॥ ४ ॥
किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् । रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥ ५ ॥
न तथास्मि महाबाहो यथा मामवगच्छसि । प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शपे ॥ ६ ॥

---

२५ ] ति० टी०—प्रियार्हश्रवणा प्रियश्रवणार्हेत्यर्थः गजेन्द्रहस्ताभिहता वल्लरी यथा तथा बाष्पं मुमोचेत्यर्थः ॥ २५ ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

रा० टी०—तत इति । प्रियार्हं श्रवणं यस्याः प्रियश्रवणार्हेत्यर्थः सा चिरस्य मानिनी सर्वकालं सत्कृता सीता प्रियात् रामात् तदप्रियमुपश्रुत्य गजेंद्रहस्ताभिहता वल्लरीव बाष्पं मुमोच ॥ २५ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥

गो० टी०—तत इति । सल्लकी गजभक्ष्यलताविशेषः २५
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

१ ] ति० टी०—एवमिति ॥ १ ॥

रा० टी०—रामपरुषोक्तिश्रवणानन्तरकालिकं सीतावृत्तान्तमाह—एवमित्यादिभिः । सरोषेण राघवेण एवं परुषं रोमहर्षणमुक्ता वैदेही भृशं प्रव्यथिताभवत् ॥ १ ॥

गो० टी०—अथ सीताग्निप्रवेशः—एवमुक्त्वा त्विति । स्पष्टम् ॥ १ ॥

२–४ ] ति० टी०—जने महति । महाजनसंनिधावित्यर्थः ॥ २–४ ॥

रा० टी०—सेति । अश्रुतपूर्वं रूक्षं भर्तृवचः महति जने तत्सन्निधौ श्रुत्वा मैथिली लज्जया अवनताभवत् ॥ २ ॥

गो० टी०—सेति । जने महति महाजनमध्ये लज्जया व्रीडिता । अतिनम्राङ्गली बभूवेत्यर्थः ॥ २ ॥

रा० टी०—प्रविशन्तीति । तैः रामोक्तैः वाक्शरैः सशल्या इव अत एव स्वानि गात्राणि प्रविशन्तीव जनकात्मजा व्यथिताभवत् ॥ ३ ॥

रा० टी०—तत इति । बाष्पैरश्रुभिः परिक्लिन्नं स्वमाननं प्रमार्जन्ती सीता भर्तारमिदमब्रवीत् ॥ ४ ॥

गो० टी०—प्रविशन्तीवेति । गात्राणि प्रविशन्ती संकुचन्तीत्यर्थः ॥ ३ ॥ ४ ॥

५ ] ति० टी०—असदृशं त्वया वक्तुं मया श्रोतुं चायोग्यम् । रूक्षं परुषम्, अत एव श्रोत्रदारुणं श्रवणकटु ॥ ५ ॥

रा० टी०—तदाकारमाह—किमित्यादिभिः । प्राकृतः पुरुषः प्राकृतां स्त्रियमिव असदृशमीदृशं रूक्षं वाक्यं किं कथं श्रावयसे ॥ ५ ॥

गो० टी०—किमिति । असदृशं त्वया वक्तुं मया श्रोतुं चायोग्यम् । रूक्षं परुषम् । अत एव श्रोत्रदारुणं श्रवणकटु ॥ ५ ॥

६ ] ति० टी०—यथा त्वमवगच्छसि दुष्टेयमिति तथा नास्मि । स्वेन चारित्रेण पातिव्रत्यलक्षणेन ते शपे शपथेन तव प्रत्ययं संपादयिष्ये, ततो मे प्रत्ययं गच्छ ॥ ६ ॥

रा० टी०—नेति । यथा मामवगच्छसि इदानीं तर्केण जानासि तथाहं नास्मि प्रत्ययमस्मिन्नर्थे विश्वासं गच्छ तत्र कारणमाह चारित्रेण स्वपातिव्रतधर्मेण ते तुभ्यं शपे शपथं करोमि ॥ ६ ॥

गो० टी०—न तथेति । चारित्रेण ममेति शेषः । ते तुभ्यम् । "श्लाघह्नुङ्स्थाशपाम्०" इति संप्रदानत्वम् । सुकृतेन शपमाना त्वां शापं शापयामीत्यर्थः ॥ ६ ॥

---

१ मैथिलीति गो. पाठः । २ सुभृशं प्रवेपितेति गो. रा. पाठः । ३ सल्लकीति गो. पाठः । ४ भृशामिति गो. रा. पाठः । ५ तदिति गो. रा पाठः । ६ रूक्षमिति गो. रा. पाठः । ७ एवेति गो. पाठः । ८ शल्यैरिति गो. पाठः ।

पृथक्स्त्रीणां प्रचारेण जातिं त्वं परिशङ्कसे । परित्यजैनां शङ्कां तु यदि तेऽहं परीक्षिता ॥ ७ ॥
यदहं गात्रसंस्पर्शं गतास्मि विवशा प्रभो । कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ८ ॥
मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते । पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरी ॥ ९ ॥
सह संवृद्धभावेन संसर्गेण च मानद । यदि तेऽहं न विज्ञाता हता तेनास्मि शाश्वतम् ॥ १० ॥
प्रेषितस्ते महावीरो हनुमानवलोककः । लङ्कास्थाहं त्वया राजन्किं तदा न विसर्जिता ॥११॥
प्रत्यक्षं वानरस्यास्य तद्वाक्यसमनन्तरम् । त्वया संत्यक्तया वीर त्यक्तं स्याज्जीवितं मया ॥१२॥

७ ] ति० टी०-पृथक्स्त्रीणां प्रचारेण चारित्रदर्शनेन हेतुना जातिं स्त्रीजातिं परिशङ्कसे दुष्टां मन्यसे । इदमनुचितमिति शेषः । यदि ते त्वयाहं परीक्षिता तदेमां शङ्कां त्यज ॥७॥

रा० टी०-तर्कस्यायुक्तत्वं बोधयन्ती आह-पृथगिति । पृथक्स्त्रीणां प्राकृतनारीणां प्रचारेण आचारेण न दृष्टान्तभूतेन जातिं प्राकृतविलक्षणनारीमपि त्वं परिशङ्कसे एवं नोचितमित्यर्थः अतो यद्यहं ते परीक्षिता तर्हि एनां शङ्कां परित्यज ॥ ७ ॥

गो० टी०-स्त्रीमात्रसाधारण्येन नाहं द्रष्टव्येत्याह-पृथक्स्त्रीणामिति । पृथक्स्त्रीणां प्राकृतस्त्रीणाम् प्रचारेण आचारेण हेतुना सर्वामपि स्त्रीजातिं तथात्वेन शङ्कसे अहम् ते त्वया यदि परीक्षिता ज्ञातस्वभावा, तर्हीमां शङ्कां त्यज ॥ ७ ॥

८ ] ति० टी०-ननु का ते परीक्षा रक्षोङ्गस्पृष्टत्वादस्तत्राह—यदहमिति । विवशास्वाधीना सती गात्रसंस्पर्शं गतास्मि प्राप्तास्मि । तत्र मे कामकारो न इच्छापूर्वकता न, तत्र बलात्स्पर्शे दैवमेवापराध्यत्यपराधं कारितवत् । दैवमेवात्र कारणं न मेऽत्रापराध इति भावः ॥ ८ ॥

रा० टी०-ननु राक्षसस्पर्शो जात एवेत्यत आह-यदीति । विवशा स्वानधीनाहं यदि गात्रस्पर्शं गतास्मि तत्र मे कामकारः इच्छापूर्विका प्रवृत्तिर्न अतः तत्र स्पर्शे दैवं देवादृष्टमेवापराध्यति ॥ ८ ॥

गो० टी०-त्वयि ज्ञातस्वभावायामपि रावणाङ्गस्पर्शलक्षणो दोषस्त्यागहेतुरित्याशङ्क्याह—यद्यहमित्यादि । यद्यपि अहं विवशा सती गात्रसंस्पर्शं गतास्मि, तथापि तत्र मे कामकारः स्वेच्छाचरणम् नास्ति । तर्हि कस्यात्रापराध इत्यत्राह—दैवं तत्रेति ॥ ८ ॥

९ ] ति० टी०-स्वतो दोषजनकं कर्म तु मे नास्तीत्याह—मदधीनमिति । परैर्ग्रहीतुमशक्यमित्यर्थः । पराधीनेषु परैर्ग्रहीतुं शक्येषु दैवाधीनेषु च । यस्याश्छायास्मि तदधीनानि गात्राणि तयैव तदर्थमेवैषां निर्माणात् हृदयं तु तदीयमेवात्रापीति भावः ॥ ९ ॥

रा० टी०-मदिति । मदधीनं यत् हृदयं मनः तत्त्वय्येव वर्तते अनीश्वरी अहं पराधीनेषु गात्रेषु गात्रस्पर्शेषु सत्सु किं करिष्यामि ॥ ९ ॥

गो० टी०-मदधीनमिति । मदधीनं परैर्ग्रहीतुमशक्यम्, यद्धृदयं तत्तु तस्मिन्काले त्वयि वर्तते अवर्तत । पराधीनेषु परैर्ग्रहीतुं शक्येषु गात्रेषु विषये, अनीश्वरा[1] अस्वतन्त्रा अहं किं करिष्यामि किं कुर्याम् ॥ ९ ॥

१० ] ति० टी०-सह युगपत्संवृद्धो भावः परस्परानुरागलक्षणस्तेन संसर्गेण चिरकालसहवासेन च यद्यहं ते त्वया गुणवत्त्वेन न विज्ञाता तेन त्वदज्ञानेन हेतुनाहं शाश्वतं हता चिरकालं दुःखमग्ना कृता ॥ १० ॥

रा० टी०-सहेति । सह एककालावच्छेदेन संवृद्धो भावः परस्परानुरागो यस्मिन् तेन संसर्गेण सार्वकालिकसम्बधेन यद्यहं ते न विज्ञाता तर्हि तेन भवदज्ञानेन शाश्वतं निरन्तरमहं हतास्मि ॥ १० ॥

गो० टी०-स्वभावपरिज्ञानहेतुभूतसहसंवर्धनसंसर्गावपि प्रत्ययं यदि नोत्पादयतः तर्हि न किमपि ते प्रत्ययमुत्पादयितुं शक्नुयादित्याशयेनाह-सह संवृद्धेति । सह संवृद्धभावात् स्वभावपरिज्ञानहेतुना सह संवर्धनेन संसर्गेण संश्लेषेण च यद्यहं ते न विज्ञाता । ततः मत्स्वभावाज्ञानेन शाश्वतम् अत्यर्थम् हतास्मि ॥ १० ॥

११ ] ति० टी०-अवलोककः । अवलोकितुमन्वेष्टुमित्यर्थः । तदा किं न त्वया विसर्जिता पुनरङ्गीकाराभावं किमिति न श्राविता ॥ ११ ॥

रा० टी०-प्रेषित इति । अवलोककः अवलोकितुं यदा हनुमान् ते त्वया प्रेषितः तदा लङ्कास्थाहं किं किमर्थं न विसर्जिता अङ्गीकाराभावं श्राविता ॥ ११ ॥

गो० टी०-प्रेषित इति । अवलोककः अवलोकितुम् । अन्वेष्टुमिति यावत् । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति ण्वुल्प्रत्ययः ॥ ११ ॥

१२ ] ति० टी०-तदोक्तौ को विशेषस्तत्राह—प्रत्यक्षमिति । एवं च तदैव जीवत्यागे एतावत्पर्यन्तं महती त्वद्वियोगव्यथा न स्यादिति भावः ॥ १२ ॥

रा० टी०-पूर्वं श्रवणे गुणमाह—प्रत्यक्षमिति । तद्वाक्यसमनन्तरं त्यागबोधकवाक्यश्रवणोत्तरकाले अस्य हनुमतः प्रत्यक्षं त्वया संत्यक्तया मया जीवितं त्यक्तं स्यात् अत एव संशये जीवितं जीवनं न्यस्य संस्थाप्य अयं वृथा श्रमस्ते न स्यात् अत एव विफलः निष्प्रयोजनः अयं तव सुहृज्जनपरिक्लेशश्च न स्यात् श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

१ अनीश्वरेति गो. पाठः ।

न वृथा ते श्रमोऽयं स्यात्संशये न्यस्य जीवितम् । सुहृज्जनपरिक्लेशो न चायं विफलस्तव ॥ १३ ॥
त्वया तु नृपशार्दूल रोषमेवानुवर्तता । लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ॥ १४ ॥
अपदेशो मे जनकान्नोत्पत्तिर्वसुधातलात् । मम वृत्तं च वृत्तज्ञ बहु तेन पुरस्कृतम् ॥ १५ ॥
न प्रमाणीकृतः पाणिर्बाल्ये मम निपीडितः । मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥ १६ ॥
इति ब्रुवन्ती रुदती बाष्पगद्गदभाषिणी । उवाच लक्ष्मणं सीता दीनं ध्यानपरायणम् ॥ १७ ॥
चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् । मिथ्यापवादोपहता नाहं जीवितुमुत्सहे ॥ १८ ॥
अप्रीतेन गुणैर्भर्त्रा त्यक्ताया जनसंसदि । या क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम् ॥ १९ ॥
एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा । अमर्षवशमापन्नो राघवं समुदैक्षत ॥ २० ॥
स विज्ञाय मनश्छन्दं रामस्याकारसूचितम् । चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥ २१ ॥
नैहि रामं तदा कश्चित्कालान्तकयमोपमम् । अनुनेतुमथो वक्तुं द्रष्टुं वाप्यशकत्सुहृत् ॥ २२ ॥
अधोमुखं स्थितं रामं ततः कृत्वा प्रदक्षिणम् । उपावर्तत वैदेही दीप्यमानं हुताशनम् ॥ २३ ॥
प्रणम्य दैवतेभ्यश्च ब्राह्मणेभ्यश्च मैथिली । बद्धांजलिपुटा चेदमुवाचाग्निसमीपतः ॥ २४ ॥
यथा मे हृदयं नित्यं नापसर्पति राघवात् । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥ २५ ॥

---

गो० टी०–तदात्वे को विशेष इत्यत आह–प्रत्यक्षमिति ॥ १२ ॥

१३ ] ति० टी०–जीवितं संशये न्यस्य युद्धे जयस्य संदिग्धत्वात्संशये प्रतिष्ठाप्य योऽयं वृथा श्रमः कृतः स न कर्तव्यः स्यात् । तथा विफलः सुहृज्जनपरिक्लेशश्च न कर्तव्यो भवेत् १३

गो० टी०–एवं कृते न केवलं ममैव व्यथाभावः तव त्वत्सुहृदां च जयार्थप्रयासोऽपि न स्यादित्याह–न वृथेति । जीवितं संशये न्यस्य कृतोऽयं श्रम इत्यर्थः ॥ १३ ॥ १४ ॥

१४ [ ति० टी०–स्त्रीत्वमेव प्राकृतसाधारणस्त्रीजातिरेव पुरस्कृतं चिन्तिता ॥ १४ ॥

रा० टी०–त्वयेति । लघुना मनुष्येणेव रोषमनुवर्तता त्वया स्त्रीत्वं प्राकृतस्त्रीधर्म एव पुरस्कृतम् मयि निश्चितम् ॥१४॥

१५ ] ति० टी०–मेऽपदेशो वैदेहीत्यादिव्यवहारो जनकाज्जनकयज्ञभूमिसंबन्धमात्रात् । नोत्पत्तिर्जनकादित्यनुकर्षः । कुतस्तर्हि सा तत्राह–वसुधातलात् । एवं मनुष्ययोन्यनुत्पत्तिरप्राकृतस्त्रीत्वोपपादिकोक्ता । तथा मे बहुमानार्हं वृत्तं चारित्रं च ते त्वया न पुरस्कृतमपरित्यागे हेतुत्वेन न विचारितम् ॥ १५ ॥

रा० टी०–अपदेश इति । मे जनकात् विदेहधर्ममवलोक्य मे अपदेशः धर्मवत्त्वं न पुरस्कृतः वसुधातलात् यज्ञभूमेः उत्पत्तिश्च न पुरस्कृता उत्पत्तिशुद्ध्येयं शुद्धैव भविष्यतीति मतिर्न कृतेत्यर्थः तेन हेतुना बहुचिरं कालमनुभूतं मम वृत्तं च न पुरस्कृतम् ॥ १५ ॥

गो० टी०–अपदेशेनेति । अपदेशेन जनकात् जनकमपदिश्येत्यर्थः ॥ १५–१७ ॥

१६–१८ ] ति० टी०–किं च बाल्ये कृतं धर्मप्रजोद्देश्यकं पाणिग्रहणमपि त्वया परित्यागे न प्रमाणीकृतम् ॥१६–१८॥

रा० टी०–नेति । बाल्ये निपीडितो मे पाणिः त्वया न प्रमाणीकृतः अत एव मम भक्त्यादि पृष्ठतः कृतम् ॥ १६ ॥

रा० टी०–इतीति । इति ब्रुवन्ती सीता लक्ष्मणमुवाच १७

रा० टी०–तदाकारमाह–चितामित्यादिभिः । अस्य व्यसनस्य भेषजमौषधं चितां कुरु तत्र हेतुः मिथ्यापवादोपहताहं जीवितुं नोत्सहे ॥ १८ ॥

गो० टी०–चितामिति । मिथ्योपघातः मिथ्यापवादः १८

१९–२० ] ति० टी०–गुणैरप्रीतेन भर्त्रा जनसंसदि त्यक्ताया या गतिः क्षमा तां गतिं गन्तुं हव्यवाहनं प्रवेक्ष्ये । 'अप्रीतस्य गुणैर्भर्तुः' इति पाठान्तरम् । तत्रापि शेषे षष्ठी ॥ १९ ॥ २० ॥

रा० टी०–अप्रीतेनेति । गुणैः आरोपितमनिष्टदुर्गुणैः अप्रीतेन भर्त्रा त्यक्तायाः मम या गतिः क्षमा युक्ता तां गतिं गन्तुं हव्यवाहनमग्निं प्रवेक्ष्ये ॥ १९ ॥

गो० टी०–अप्रीतस्येति । गुणैरप्रीतस्य विषमानैः पातिव्रत्यादिगुणैरपि अप्रीतस्य, भर्तुस्त्यक्ताया मे, या गन्तुं क्षमा गतिः प्रत्ययजननार्थं या योग्या गतिः, तं हव्यवाहनम् प्रवेक्ष्य इति योजना ॥ १९ ॥

रा० टी०–एवमिति । अमर्षवशमापन्नो लक्ष्मणः राघवं समुदैक्षत ॥ २० ॥

गो० टी०–एवमुक्तस्त्विति । अमर्षवशं दैन्यवशम् २०

२१–२५ ] ति० टी०–मनश्छन्दं मनोभिप्रायम् । आकारसूचितं भ्रूभङ्गाद्याकारसूचितम् ॥ २१–२५ ॥

---

१ नेहेति गो. रा. पाठः । २ अपदेशेनेति गो. पाठः । ३ बाल्येनेति गो. पाठः । ४ उपघातेति गो. पाठः । ५ इदं पद्यं गो. पुस्तके नास्ति ।

यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः । तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥२६॥
[ कर्मणा मनसा वाचा यथा नातिचराम्यहम् । राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ॥
आदित्यो भगवान्वायुर्दिशश्चन्द्रस्तथैव च । ऊहश्चापि तथा संध्ये रात्रिश्च पृथिवी तथा ॥
यथान्येपि विजानन्ति तथा चारित्रसंयुताम् ॥ ]
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् । विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ॥ २७ ॥
जनश्च सुमहांस्तत्र बालवृद्धसमाकुलः । ददर्श मैथिलीं दीप्तां प्रविशन्तीं हुताशनम् ॥ २८ ॥
सा तप्तनवहेमाभा तप्तकांचनभूषणा । पपात ज्वलनं दीप्तं सर्वलोकस्य संनिधौ ॥ २९ ॥
ददृशुस्तां विशालाक्षीं पतन्तीं हव्यवाहनम् । सीतां सर्वाणि रूपाणि रुक्मवेदिनिभां तदा ॥ ३० ॥
ददृशुस्तां महाभागां प्रविशन्तीं हुताशनम् । ऋषयो देवगन्धर्वा यज्ञे पूर्णाहुतीमिव ॥ ३१ ॥
प्रचुक्रुशुः स्त्रियः सर्वास्तां दृष्ट्वा हव्यवाहने । पतन्तीं संस्कृतां मन्त्रैर्वसोर्धारामिवाध्वरे ॥ ३२ ॥
ददृशुस्तां त्रयो लोका देवगन्धर्वदानवाः । शप्तां पतन्तीं निरये त्रिदिवाद्देवतामिव ॥ ३३ ॥

---

रा० टी०—स इति । आकारेण चेष्टया सूचितं रामस्य मनसः छन्दमभिप्रायं विज्ञाय रामस्य मते स्थितः सौमित्रिः चितां चकार ॥ २१ ॥

गो० टी०—स इति । आकारः भ्रूसंज्ञादिः । मते सिद्धान्ते । स्थित इति शेषः ॥ २१ ॥

रा० टी०—नहीति । तदा तस्मिन् काले कश्चित्सुहृत् अनुनेतुं विज्ञापयितुं द्रष्टुं वा नाशकत् ॥ २२ ॥

रा० टी०—अधोमुखमिति । वैदेही दीप्यमानं हुताशनं उपावर्तत समीपे अतिष्ठत् ॥ २३ ॥

रा० टी०—प्रणम्येति । वैदेही इदमुवाच ॥ २४ ॥

गो० टी०—अधोमुखमिति । पतिव्रतायाः कथं निर्व्याजं प्रत्ययं पश्यामीति लज्जया मुखदर्शने दाक्षिण्यं भविष्यतीति बुद्ध्या चावनतमुखम् । शनैः रामानुभवेन मन्दं यथा तथा ॥ २३–२४ ॥

रा० टी०—तदाकारमाह—यथेति । द्वाभ्यां यथा यदि मे हृदयं राघवात् नित्यं नापसर्पति तथा तदा पावको मां पातु ॥ २५ ॥

गो० टी०—यथा मामिति । यथा शुद्धचारित्रामेव मामन्यायेन दुष्टां जानाति, तथा चेत् अदुष्टां दुष्टेति जानाति चेत्, पावकः पातु । रामस्य मयि दोषज्ञानम् यथार्थं चेत्पात्वित्यर्थः ॥ २५ ॥ २६ ॥

२६–२८ ] ति० टी०—राघवः शुद्धचारित्रामदुष्टामेव मां यदि दुष्टां जानाति, अहं तथा चेद्दुष्टा चेत्पावको मां सर्वतः पातु । केशाम्बरादिकमपि माधाक्षीदित्यर्थः ॥२६–२८॥

रा० टी०—यथेति । यथा यदि शुद्धचारित्रामेव मां राघवो दुष्टां जानाति तदा पावकः पातु ॥ २६ ॥

रा० टी०—एवमिति । निश्शंकेन अन्तरात्मना मनसा वैदेही हुताशनं परिक्रम्य ज्वलनं विवेश ॥ २७ ॥

रा० टी०—जन इति । बालवृद्धैस्समाकुलः सुमहान् जनः हुताशनं प्रविशन्तीं मैथिलीं ददर्श ॥ २८ ॥

गो० टी०—आदित्य इत्यादिसार्धश्लोक एकान्वयः । आदित्यादयोन्ये च यथा मां चारित्रसंयुतां विजानन्ति, तथा मां पातु पावक इति संबन्धः ॥ २७ ॥

गो० टी०—एवमिति । परिक्रम्य प्रदक्षिणीकृत्य । निःसङ्गेन शरीरे निरभिलाषेण, अन्तरात्मना मनसा । उपलक्षणे तृतीया ॥ २८–३० ॥

२९ ] ति० टी०—सा तप्तेत्यादि । एतदर्थमेव स्नाताया अलङ्कारयुताया आनयनं कारितम् ॥ २९ ॥

रा० टी०—सेति । सा वैदेही दीप्तं ज्वलनं पपात ॥२९॥

३०–३१ ] ति० टी०—सर्वाणि रूपाणि सर्वाणि भूतानि । 'सर्वाणि रूपाणि विचित्य धीरः' इत्यादौ तद्बोधकतया प्रसिद्धो रूपशब्दः ॥ ३० ॥ ३१ ॥

रा० टी०—ददृशुरिति । हव्यवाहनं पतन्तीं रुक्मवेदिनिभां सीतां सर्वाणि भूतानि ददृशुः ॥ ३० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह ददृशुरिति । ऋषिप्रभृतयः पूर्णाहुतीमिव सीतां ददृशुः ॥ ३१ ॥

गो० टी०—ददृशुरिति । आज्याहुतीमिवेत्यादिदृष्टान्तेन देव्याः परमपावनत्वं द्योत्यते ॥ ३१ ॥

३२ ] ति० टी०—वसोर्धारां संततां घृतधाराम् ॥ ३२ ॥

रा० टी०—प्रचुक्रुशुरिति । अध्वरे मन्त्रैस्संस्कृतां वसोर्घृतस्य धारामिव हव्यवाहने पतन्तीं सीतां दृष्ट्वा स्त्रियः प्रचुक्रुशुः ॥ ३२ ॥

गो० टी०—प्रचुक्रुशुरिति । वसोर्धारां संततां घृतधाराम् । अनेनाभ्युज्जृम्भणं गम्यते ॥ ३२ ॥

३३ ] ति० टी०—शप्तां शापं प्राप्ताम्, अत एव त्रिदिवान्निरये मनुष्ययोन्यादौ पतन्तीम् ॥ ३३ ॥

---

१ इदं सार्धपद्यद्वयमधिकं गो. पुस्तके । २ निःसंगेति गो. पाठः । ३ सीतां कृत्स्नास्त्रयो लोकाः पुण्यामाज्याहुतीमिवेति गो. पा. ।

तस्यामग्निं विशन्त्यां तु हाहेति विपुलः स्वनः । रक्षसां वानराणां च संबभूवाद्भुतोपमः ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षोडशाधिकशततमः सर्गः ॥ ११६ ॥

## सप्तदशाधिकशततमः सर्गः ॥

सीताया अग्नौ प्रवेशसमये ब्रह्मरुद्रेन्द्रयमवरुणकुबेरा आगत्य हव्यवाहने पतन्तीं जानकीं कथमुपेक्षसे इति प्राञ्जलिं रामं पप्रच्छुः रामस्त्वहं मानवो दशरथजात इत्यात्मानं मन्ये इत्यब्रवीत् ब्रह्मा न भवान्मनुष्योऽपि तु साक्षान्नारायणो रावणाद्यसुरवधार्थी मनुष्यरूपेणावतीर्ण इत्यादि रामायाकथयत् ।

ततो हि दुर्मना रामः श्रुत्वैवं वदतां गिरः । दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १ ॥
ततो वैश्रवणो राजा यमश्च पितृभिः सह । सहस्राक्षश्च देवेशो वरुणश्च जलेश्वरः ॥ २ ॥
षडर्धनयनः श्रीमान्महादेवो वृषध्वजः । कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥ ३ ॥
एते सर्वे समागम्य विमानैः सूर्यसंनिभैः । आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥ ४ ॥
ततः सहस्ताभरणान्प्रगृह्य विपुलान्भुजान् । अब्रुवंस्त्रिदशश्रेष्ठा राघवं प्राञ्जलिं स्थितम् ॥ ५ ॥

रा० टी०–ददृशुरिति । शप्तमात एव त्रिदिवात् निरये पतन्तीं देवतामिव तां वन्हौ पतन्तीं सीतां त्रयो लोका ददृशुः ३३

गो० टी०–ददृशुरिति । देवाः स्वर्गवासिनः गन्धर्वा भूलोकवासिनः दानवाः पातालवासिनः सकलभोगार्हरूपवत्याः सीतायाः अनलप्रवेशस्यानर्हत्वान्निरयपतनानर्हस्वर्गीयदेवतादृष्टान्तः ॥ ३३ ॥

३४ ] ति० टी०–अद्भुतोपम आश्चर्यमित्युपमा ज्ञानं यत्प्रवृत्तौ सः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षोडशाधिकशततमः सर्गः ॥ ११६ ॥

रा० टी०–तस्यामिति । तस्यामग्निं विशन्त्यां सत्याम् अद्भुतोपमः हाहेति विपुलः स्वनो बभूव ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टादशाधिकशततमः सर्गः ॥ ११८ ॥

गो० टी०–तस्यामिति । अद्भुतोपमः अद्भुततुल्यः । रावणागमनमारभ्य एतावत्पर्यन्तं सीतायाः परमभागवतभूतलक्ष्मणापचारफलमुपपादितम् । वस्तुतः सीताया रावणागमनकाले अग्नौ प्रविष्टत्वात्तस्याः पुनर्गमनार्थं मायासीताया रावणगृहीताया अग्नौ प्रवेश इत्यप्याहुः ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

१ ] ति० टी०–ततो हीति । एवं वदतां हाहेति वदतां सर्वेषामार्ता गिरः श्रुत्वा ततो हि तत एव दुर्मनाः खिन्नचित्तो रामो बाष्पव्याकुललोचनः प्राकृतजीवत्सीता एतदनर्हेति तद्वियोगतो बाष्पव्याकुललोचनो भूत्वा मुहूर्तं दध्यौ, किंकृतं किं कृतं किं चातः परं कर्तव्यमिति चिन्तापरो बभूव ॥ १ ॥

रा० टी०–सीताग्निप्रवेशदर्शनहेतुकवानरादिप्रभूतस्वनश्रवणानन्तरकालिकं वृत्तान्तमाह तत इत्यादिभिः । वदतां गिरः श्रुत्वा दुर्मनाः तत्त्वेन प्रतीयमानो रामः मुहूर्तं दध्यौ ॥ १ ॥

गो० टी०–अथ रामस्तवः–ततो हीत्यादि । दुर्मनाः दुःखितमनाः, दध्यौ मनसा ध्यानं कृतवान् ॥ १ ॥

२ ] ति० टी०–अत्रावसरे दिक्पालसहितो रुद्रो हिरण्यगर्भश्च रामानुग्रहाय समागतावित्याह–तत इत्यादि ॥ २ ॥

३ ] ति० टी०–षडर्धनयनः श्रीमान् षडर्धनयनस्त्रिनेत्र इत्यर्थः । सर्वलोकस्य ब्रह्मलोकपर्यन्तं सर्वलोकवर्तिपदार्थानां स्रष्टा ब्रह्मविदां चतुर्मुखप्रजापतिविष्णुदेवराजादिदिक्पालवसिष्ठादृषितत्संतानजब्राह्मणा ब्रह्मविदस्तेषां वरो ज्येष्ठो हिरण्यगर्भः । 'यो वै ब्रह्माणं विदधाति पूर्वम्, यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः, 'हिरण्यगर्भः समवर्तताग्रे' इति श्रुतेश्च ॥ ३ ॥

४ ] ति० टी०–एते सर्वे विमानैर्लङ्कामागत्य राघवमभिजग्मुः ॥ ४ ॥

रा० टी०–तत इति । ततोऽनन्तरं वैश्रवणः कुबेरः षडर्धनयनः त्रिनयन इत्यर्थः महादेवो ब्रह्मा अः विष्णुश्च एते सर्वे समागम्य संघीभूय विमानैः लङ्कामागम्य राघवमभिजग्मुः श्रीमान् शब्देन विष्णुलाभो वा बोध्यः श्लोकत्रयमेकान्वयि २–४

गो० टी०–तत इत्यादिश्लोकत्रयमेकं वाक्यम् ॥२–४॥

५ ] ति० टी०–प्रगृह्योद्यम्य । भारते तु–अग्निप्रवेशं सीताया अनुक्त्वा रामस्य चारित्रसंदेहे सीतादुःखं दृष्ट्वा वाय्वग्निवरुणाद्युक्त्यैव सीताङ्गीकार उक्तस्तत्रानुक्तोऽप्यग्निप्रवेशो मध्ये द्रष्टव्य इत्याहुः । पाद्मे तु–'सा तेन गर्हिता साध्वी विवेश ज्वलनं तदा' इत्युक्तम् ॥ ५ ॥

१ अमित्रकर्शन इति गो. रा. पाठः । २ परंतप इति गो. रा. पाठ । ३ प्राञ्जलिस्थितमिति समस्तं रा. पाठे ।

कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानविदां विभुः । उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥
कथं देवगणश्रेष्ठमात्मानं नावबुद्ध्यसे ॥ ॥ ६ ॥
ऋतधामा वसुः पूर्वं वसूनां च प्रजापतिः । त्रयाणामपि लोकानामादिकर्ता स्वयंप्रभुः ॥ ७ ॥
रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः । अश्विनौ चापि कर्णौ ते सूर्याचन्द्रमसौ दृशौ ॥ ८ ॥
अन्ते चादौ च मध्ये च दृश्यसे च परंतप । उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा ॥ ९ ॥
इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः । अब्रवीत्रिदशश्रेष्ठान्रामो धर्मभृतां वरः ॥ १० ॥
आत्मानं मानुषं मन्ये रामं दशरथात्मजम् । सोऽहं यश्च यतश्चाहं भगवांस्तद्ब्रवीतु मे ॥ ११ ॥

---

रा० टी०—तत इति । त्रिदशश्रेष्ठाः सहस्ताभरणान् हस्ताभरणसहितान् भुजान् प्रगृह्य उद्यम्य प्राञ्जलिस्थितं ध्यानाकुलत्वेन बद्धकरं राघवं राममब्रुवन् ॥ ५ ॥

गो० टी०—तत इति । प्रगृह्य उद्धृत्य ॥ ५ ॥

६ ] ति० टी०—कर्ता सर्वस्येति । मनुष्यदेहे राघवे सर्वलोककर्तृत्वाद्युक्तिर्मूलस्वरूपाभिप्रायेण । ज्ञानविदामौपनिषदज्ञानवताम् । देवगणा इन्द्रादयस्तेषां श्रेष्ठम् । 'विष्णुमुखा वै देवाः' इति श्रुतेः ॥ ६ ॥

रा० टी०—तदाकारमाह—कर्तेत्यादिभिः । सर्वस्य लोकस्य श्रेष्ठः कर्ता सर्वजगत्कर्तुरपि नियामक इत्यर्थः अत एव ज्ञानवतां सर्वविषयकज्ञानविशिष्टानां विभुः स्वामी त्वं हव्यवाहने पतन्तीं सीतां कथमुपेक्षसे एतेन सीताया न किंचिद्दोषसंसर्ग इति भवतो ज्ञातमस्तीति सूचितम् तेन अदोषे दोषारोपणमनुचितमिति ध्वनितम् ॥ ६ ॥

गो० टी०—कर्तेत्यादि । पूर्वं ब्रह्मणः अद्वारकं कर्तृत्वम्, अत्रसद्वारकं कर्तृत्वमिति न विरोधः । सर्वज्ञस्त्वं कथमज्ञ इवोपेक्षस इति भावः । देवगणश्रेष्ठं ब्रह्मादिदेवगणे श्रेष्ठम् ॥६॥७॥

७ ] ति० टी०—ऋतधामेत्यादिश्लोकत्रयं कतकासंमतम् । तीर्थस्त्वेवं व्याचष्टे—पूर्वं पूर्वस्मिन्कल्पे सृष्टः पूर्वं वा वसूनां मध्ये ऋतधामा नाम वसुः । आदिकर्ताण्डाधिपतिरूपादिसृष्टिकर्ता । स्वयंप्रभुरितरानियम्यः ॥ ७ ॥

रा० टी०—इतीति । ननु दशरथसुतं मां कथमेवं वर्णयसीत्यत आह—कथमिति । देवगणश्रेष्ठं सर्वदेवेभ्योऽधिकमात्मानं स्वस्वरूपं कथं नावबुध्यसे अथ पृथक् श्रेष्ठत्वमुपपादयितुं तद्विभूतीस्तादात्म्येनाह—ऋतेत्यादिभिः । त्रयाणां लोकानामादिकर्ता पूर्वं वसूनामृतधामा वसुः त्वमेव प्रजापतिस्त्वमेव ॥ ७ ॥

गो० टी०—आत्मस्वरूपमेवाह—ऋतधामेत्यादिश्लोकत्रयमेकं वाक्यम् ॥ ऋतधामाख्यो वसुरित्यर्थः । प्रजापतिः प्रजास्वामीति वसुविशेषणम् । आदिकर्ता । अण्डाधिपतिपर्यन्ताद्वारकसृष्टिकर्तेत्यर्थः । स्वयं प्रभवतीति स्वयंप्रभुः । अनियम्य इत्यर्थः । रुद्राणां मध्ये अष्टमो रुद्रः, तथा साध्यानामित्यत्रापि । अन्ते चेति । अन्ते प्रलये, आदौ सृष्टेः प्राक् च दृश्यसे । अनेनोत्पत्तिविनाशराहित्यमुक्तम् । एवं सर्वज्ञः सर्वशक्तिः सर्वेश्वरोऽपि सन् अज्ञ इव विदेहकुले प्रादुर्भूतां सीतां किमर्थमुपेक्षस इत्यर्थः ॥ ८–१० ॥

८ ] ति० टी०—अष्टमो रुद्रो महादेवः । साध्यानामपि पञ्चमो वीर्यवान्नामा । विराड्रूपं वर्णयति—अश्विनौ चेत्यादि ॥ ८ ॥

रा० टी०—रुद्राणामिति । अष्टमो रुद्रो महादेवः साध्यानां पञ्चमः वीर्यवान्नाम त्वमेव विराड्रूपत्वं वर्णयति अश्विनौ ते कर्णौ ॥ ८ ॥

९ ] ति० टी०—अन्ते चादौ चेत्यनेन सर्वभूततत्त्वं त्वमेवेति सूचितम् ॥ ९ ॥

रा० टी०—अन्त इति । अन्ते सृष्टिविनाशे आदौ सृष्टेः पूर्वं त्वमेव दृश्यसे अतः प्राकृतो मानुष इव वैदेहीं कथमुपेक्षसे ॥ ९ ॥

१० ] ति० टी०—लोकपालैरिन्द्रादिब्रह्मान्तैः पूर्वोक्तैः । लोकस्य भूलोकस्येदानीं साक्षात्स्वामी राघवो रघुकुलजः ॥१०॥

रा० टी०—इतीति । लोकस्य स्वामी राघवः त्रिदशश्रेष्ठानब्रवीत् ॥ १० ॥

गो० टी०—इत्युक्त इति । लोकपालैः लोकरक्षकैः ॥११॥

११ ] ति० टी०—अथ ब्रह्मानुमहादेव ब्रह्मविद्यौन्मुख्यस्य श्रुत्यादिसिद्धतया तदौन्मुख्यस्यात्मानं नावबुध्यसे इति ब्रह्मणैव कृतत्वात्तज्जिज्ञासुरिव स्वीयानां स्वस्वरूपबोधनाय ब्रह्माणं गुरुमज्ञ इवोपासददित्याह—आत्मानमिति । अहमात्मानमात्मस्वरूपं सामान्यतोऽहंत्वेन प्रतीयमानं दशरथपुत्रं रामनामकं मनुष्यजातीयपिण्डमेव मन्ये, न तु ततोऽतिरिक्तं किंचिदपि । भवद्भिरप्युक्तं स्वात्मानं नावबुध्यसे इति । एवं च सोऽहमेवंभूताहंबुद्धिमान्यश्च परमार्थतो यत्तत्त्वो यतश्च यत्प्रकृतिकश्च तत्सर्वं भगवान्सर्वज्ञः परमगुरुर्मे मह्यमज्ञाय जिज्ञासवे ब्रवीतूपदिशतु । अयमेव ब्रह्मविद्योपदेशमार्गः सर्वत्र श्रुतिस्मृतिषु प्रसिद्धः ॥ ११ ॥

रा० टी०—तदाकारमाह—आत्मानमिति । अहमात्मानं दशरथात्मजं मानुषं मन्ये भगवान् भवान् तु यः यत्स्वरूपोऽहं यस्य स्वामी अहं यतो लोकादागतोहं तत्सर्वं ब्रवीतु इत्य-

---

१ वतामिति गो. पा. पाठः । २ त्वमिति गो. पा. । ३ त्वं हीन गो. पा. । ४ लोकानामिति गो. पा. । ५ यस्येति गो पा. ।

इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः । अब्रवीच्छृणु मे वाक्यं सत्यं सत्यपराक्रम ॥ १२ ॥
भवान्नारायणो देवः श्रीमांश्चक्रायुधः प्रभुः । एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥ १३ ॥
अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव । लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥ १४ ॥
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः । अजितः खड्गधृग्विष्णुः कृष्णश्चैव बृहद्बलः ॥ १५ ॥

रथात्मजं मन्ये इत्यनेन तद्वदेव धर्मप्रवर्तना ममाप्युचितेति सूचितम् तेन राक्षसादिष्वपि स्वस्वदाराणां संरक्षणार्थमेवं मया क्रियते इति सूचितम् ॥ ११ ॥

गो० टी०—ब्रह्मादिभिः सामान्यतः स्तूयमानोऽपि सर्वदेवपूजनीयाचतुर्मुखात् स्वप्रभावं लोके प्रख्यापयितुं स्वसौशील्यं दर्शयति—आत्मानमिति । आत्मानं मानुषं मन्ये । परत्वापेक्षया मानुषत्वाभिनय एव ममाभिमत इत्यर्थः । अत्रापि विशेषमाह—राममिति । रामं रामनामकम् । ततोऽप्यतिशयमाह—दशरथात्मजमिति । अवतारापेक्षया चक्रवर्तिपुत्रत्वमेव प्रियतममिति भावः । स्वस्य विष्ण्ववतारत्वं सुग्रीवादिभिरनवगतमिति तत्प्रतिपत्त्यर्थं स्वस्वरूपं पृच्छति—योऽहमिति । योऽहमिति स्वरूपप्रश्नः । यस्येति संबन्धिप्रश्नः । यत इति प्रयोजनप्रश्नः । भगवान् तद्ब्रवीत्विति । चक्रवर्तिपुत्रत्वमेव ममात्यन्तप्रियतमम् । स्वयं सर्वज्ञतया ममानभिमतमपि परत्वं प्रकटयत्वित्यर्थः । आकारगोपनविवरणस्यानभिमतत्वेऽपि स्वयमनुमतिदानं रावणनिरसनेन निष्पन्नकार्यतया ॥ १२ ॥ १३ ॥

१२ ] ति० टी०—इति ब्रुवाणं जिज्ञासवे मह्यं ब्रवीत्विति ब्रुवाणम् । वाक्यं देहदेहितत्त्वोपदेशरूपम् ॥ १२ ॥

रा० टी०—इतीति । हे राम ! मे सत्यं वचनं शृणु इति काकुत्स्थं रामं ब्रह्मा अब्रवीत् ॥ १२ ॥

१३ ] ति० टी०—नारं जीवसमूहोऽयनं स्थानं यस्य स विराड्रूपो नारायणपदवाच्यो यः स त्वमसि । देवः स्वप्रकाशः । विराट्चिह्नान्याह—चक्रेति । इदं शङ्खगदादेरप्युपलक्षणम् । एकशृङ्गो वराहः, एकदंष्ट्रो धरणीवराहः । अयं विराड्विष्णुमूर्तेर्भेदः । भूतभव्यसपत्नजिद्भूतभव्यकालरूपो यः सपत्नो जनिमृतिहेतुत्वात्तं जयति सः । नित्य इति यावत्॥१३॥

रा० टी०—तदाकारमाह—भवानित्यादिभिः । भूताः भूतकालकाः उपलक्षणतया वर्तमानकालका अपि ये सपत्नाः तान् जयति स भवानेव नारायणादिः विभूतीनां तादात्म्यमभिप्रेत्येदम् एवमुत्तरेष्वपि बोध्यम् ॥ १३ ॥

गो० टी०—स्वरूपप्रश्नोत्तरमाह—भवानिति । नाराः अयनं यस्यासौ नारायणः । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इति मनुस्मरणात् । तेन जगत्कारणत्वमुक्तम् । एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी इति श्रुतेः । अवाप्तसमस्तकामस्य जगद्व्यापारानुपपत्तिं परिहरति—देव इति । दीव्यतीति देवः क्रीडाप्रवृत्तः । लीलायाः प्रयोजनत्वात् । परिपूर्णस्यापि व्यापारः संभवतीति भावः । एवं परत्वासाधारणं नामधेयमुक्त्वा पत्नीवैशिष्ट्यमाह—श्रीमानिति । नित्यं श्रीरस्यास्तीति श्रीमान् नित्ययोगे मतुप् । असाधारणमायुधमाह—चक्रायुध इति । स्वरूपवैलक्षण्यमाह—विभुरिति । व्यापक इत्यर्थः । फलितं रक्षकत्वमाह—एकशृङ्गो वराह इति । प्रलयोदधिसंप्लवे वराहरूपं कृत्वा भूमेरुद्धारक इत्यर्थः । उद्धृतासि वराहेणेति श्रुतेः । अनिष्टनिवर्तकत्वमाह—भूतभव्यसपत्नजिदिति । भूताः सपत्नाः मधुकैटभादयः भव्याः सपत्नाः शिशुपालादयः तान् जयतीति तथोक्तः ॥ १४ ॥

१४ ] ति० टी०—तदेवाह—अक्षरमिति । यदक्षरं मध्ये चान्ते चादौ च । सत्यमप्रच्युतस्वरूपं तत्त्वं यद्ब्रह्म तदेव त्वमसीति शेषः । लोकानां धर्माधिकृतप्राणिनां त्वमेव परमो धर्मः । 'यज्ञो वै विष्णुः' इत्यादिश्रुतेरश्वमेधान्तधर्मस्त्वमेव । विष्वञ्चः सर्वगताः सेनानियामकगणा यस्य । चतुर्भुजः शत्रुनिरसनदक्षभुजचतुष्टयवान् ॥ १४ ॥

रा० टी०—अक्षरमिति । सततं सर्वत्र परिपूर्णं मध्ये अन्ते चकारेणादावपि अक्षरमेकरसं यद्ब्रह्म तद् भवानेव अत एव धर्मादिस्त्वमेव ॥ १४ ॥

गो० टी०—अथ सर्वविशेषसंहारार्थमाह—अक्षरमित्यादि । न क्षरतीत्यक्षरम् आप्नोति व्याप्नोतीति वा अक्षरम् । एतद्वै तदक्षरम् गार्गि ब्राह्मणा अभिवदन्तीति श्रुतेः । भवानित्यनुषज्यते । अक्षरं भवान् एवमुत्तरत्राप्यनुषञ्जनीयम् । बृहति बृंहयतीति च ब्रह्म । बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेति श्रुतिनिर्वचनात् । सत्यम् अविपर्ययत्वम् । षड्भावविकारशून्यमित्यर्थः । अस्ति जायते परिणमते विवर्धते अपक्षीयते विनश्यतीति षड् भावविकाराः । मध्ये चान्ते चेति । चकारादादौ चेत्यर्थः । वर्तमानमिति शेषः । नित्यत्वमुक्तमनेन । लोकानां परो धर्मः सिद्धरूपो धर्मः सर्वलोकश्रेयःसाधनीभूत इत्यर्थः । विष्वक्प्राची सर्वगता सेना यस्य सः विष्वक्सेनः । सर्वस्वामीत्यर्थः । चतुर्भुजः युगपच्चतुर्विधपुरुषार्थप्रद इत्यर्थः ॥ १२ ॥

१५ ] ति० टी०—शार्ङ्गधन्वा कालरूपं शार्ङ्गं धनुर्यस्य हृषीकेश इति हृषीकाणामिन्द्रियाणामीशो नियन्ता । पुरुष

१ रामेति गो. रा. पाठः । २ धृदिति गो. पा. ।

सेनानीर्ग्रामणीः सर्वं त्वं बुद्धिस्त्वं क्षमा दमः । प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ॥ १६ ॥
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् । शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ॥ १७ ॥
सहस्रशृङ्गो वेदात्मा शतशीर्षो महर्षभः । त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः ॥ १८ ॥

इति पुरूणि फलानि सनोति ददाति स पुरुषः, पुरु हृदयपुण्डरीके शेत इति वा पूर्णत्वाद्वा पुरुषः । 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति श्रुतेः । पुरुषोत्तमः । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥' इति स्मृतेः । अजितो पाप्मनारिभिश्चाजितः । खड्गधृग्विद्याख्यनन्दकखड्गधृक् । विष्णुः सर्वव्यापकः । कृष्णस्तद्वर्णः । बृहद्बल इत्यशेषब्रह्माण्डस्य लीलाकन्दुकवद्धारणक्षमः बृहद्बलः ॥ १६ ॥

रा० टी०–शार्ङ्गधन्वेति । शार्ङ्गं धनुर्यस्य स हृषीकेशः पुरुषादिश्च पुरुषोत्तमस्त्वमेव ॥ १६ ॥

गो० टी०–शार्ङ्गधन्वेति । शृङ्गविकारः शार्ङ्गम् धनुर्यस्य स शार्ङ्गधन्वा । "धनुषश्च" इत्यनङादेशः । अनेन रक्षणोपकरणवत्त्वमुक्तम् । हृषीकाणाम् इन्द्रियाणाम् ईशः नियन्ता । सर्वेन्द्रियाकर्षकदिव्यविग्रह इत्यर्थः । पुरु सनोतीति पुरुषः । "षणु, दाने" इत्यस्माद्धातोर्डप्रत्ययः । ब्रह्मप्रद इत्यर्थः । यद्वा पुरि हृदयगुहायां शेत इति पुरुषः । पुरि शयनं पुरुषमीक्षत इति निर्वचनश्रुतेः । यद्वा येन जगत्पूर्णं स पुरुषः । तेनेदं पूर्णं पुरुषेण सर्वमिति श्रुतेः । यद्वा पुरातनत्वात् पुरुषः । पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वमिति श्रुतेः । पुरुषेभ्यः क्षराक्षरेभ्यः उत्तमः पुरुषोत्तमः । यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः इति हि गीयते । यद्वा पुरुषेषु उत्तमः पुरुषोत्तमः । सप्तमीति योगविभागान्नागोत्तमादिवत् समासः । कैश्चिदपि न जित इत्यजितः । आश्रितसंरक्षणे कदाचिदपि भङ्गं न प्राप्नोतीत्यर्थः । खड्गं नन्दकाख्यं धरतीति खड्गभृत् । विष्णुः व्यापनशीलः । यो दयापदं प्राप्नोति तं तदा तत्रैव स्थितो रक्षतीत्यर्थः । कृष्णः भूनिर्वृतिहेतुः । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचक इति निर्वचनात् । बृहत् बलं धारणसामर्थ्यं यस्य सः बृहद्बलः ॥ १६ ॥

१६ ] ति० टी०–सेनानी राजसेनापतिश्च । ग्रामणीर्मन्त्री सर्वं जगत्त्वमेव बुद्धिर्निश्चयात्मिका क्षमा भक्तापराधसहिष्णुता दम इन्द्रियनिग्रहः तद्धर्मकत्वात्तदात्मत्वव्यपदेशः । प्रभवाप्ययौ सृष्टिप्रलयौ तत्कारणत्वात्तद्व्यपदेशः । उपेन्द्रादयस्तवैव मूर्तिभेदाः ॥ १६ ॥

रा० टी०–सेनानीरिति । सेनान्यादिस्त्वमेव ॥ १६ ॥

गो० टी०–सेनानीरिति । सेनां नयतीति सेनानीः । देवसेनानिर्वाहक इत्यर्थः ग्रामं नयतीति ग्रामणीः । दिव्यजनपदादिपालक इत्यर्थः । बुद्धिः सत्त्वं क्षमा दम इति बुद्ध्यादिप्रवर्तक इत्यर्थः । न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तमिति वचनात् । महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक इति श्रुतेश्च । प्रभवत्यस्माज्जगदिति प्रभवः उत्पत्तिस्थानम् । सर्वोपादानमित्यर्थः । अप्ययः सर्वजगल्लयस्थानम् । कृष्ण एव हि भूतानामुत्पत्तिरपि चाप्यय इति श्रुतेः । उपेन्द्रः इन्द्रानुजत्वेन प्रथममवतीर्णः । मधुसूदनः वेदापहारकदैत्यसंहारी ॥ १७ ॥

१७ ] ति० टी०–'प्रजापतिरिन्द्रमसृजत' इत्युक्तेरिन्द्रः कर्म सृष्टिर्यस्य स इन्द्रकर्मा महेन्द्रः सकलेशिता पद्मं वैराजं नाभौ यस्य सः रणान्तकृद्रणे शत्रूणां नाशकर्ता शरण्यं शरणत्वेन प्राप्यम्, शरणं रक्षणं च त्वामेवाहुः । 'परित्राणाय साधूनाम्' इत्युक्तेः ॥ १७ ॥

रा० टी०–इन्द्रेति । इन्द्रकर्मादिस्त्वमेव अत एव शरण्यं शरणहितं शरणमाश्रयं च महर्षयः त्वामेव आहुः ॥ १७ ॥

गो० टी०–इन्द्रकर्मेति । इन्द्रस्य कर्मेव कर्म यस्य स इन्द्रकर्मा । तं विष्णुरन्वतिष्ठतेति श्रुतेः । महेन्द्रः निरतिशयैश्वर्यसंपन्नः । पद्मं नाभौ यस्य स पद्मनाभः । ममापि जनक इत्यर्थः । वक्ष्यति हि–पद्मे दिव्येर्कसंकाशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितमिति ॥ रणे अन्तं शत्रुनाशं करोतीति रणान्तकृत् । शरण्यं शरणार्हम् । तदुचितज्ञानशक्तिदयादिसंपन्नमित्यर्थः शरणं रक्षणोपायम् । उपाये गृहरक्षित्रोः शब्दः शरणमित्ययमिति वचनात् । सर्वस्य शरणं सुहृदिति श्रुतेः । महर्षयः अलौकिकतत्त्वसाक्षात्कारसमर्थाः । दिव्या महर्षयः सनकादयः । यत्रर्षयः प्रथमजा ये पुराणा इत्युक्ता नित्यसूरयो वा नित्यनिर्दोषा वेदा वा ॥१८॥

१८ ] ति० टी०–सहस्रशृङ्गोऽनेकशाखामयशृङ्गवान् । वेदात्मा वेदस्वरूपः । शतशीर्षोऽनेकविधिमयशिरोयुक्तः । महर्षभः श्रेष्ठतमः । शिशुमारप्रजापतिरूप इत्यर्थ इति कतकः । त्रयाणां लोकानाम् । सर्वप्रजानामित्यर्थः । स्वयंप्रभुरनन्यप्रेर्यः ॥ १८ ॥

रा० टी०–सहस्रेति । सहस्राणि बहूनि शृङ्गाणि शाखा यस्य स वेदात्मा त्वमेव महर्षभः शतशीर्षस्त्वमेव अत एव आदिकर्ता त्वमेव ॥ १८ ॥

गो० टी०–सहस्रशृङ्ग इत्यादिसार्धश्लोक एकान्वयः ॥ सहस्रशृङ्गः सहस्रशाखारूपशृङ्गः । शतजिह्वः अनेकविधचोदनारूपजिह्वः । ऋषभः कर्मणामालोचयिता । "ऋष, आलोचने" इति धातुः । महांश्चासावृषभश्च महर्षभः । एवंभूतो वेदात्मा त्वमित्यर्थः । आदिकर्ता समष्टिकर्ता । अनेन

१ च त्वं बुद्धिः सत्वमिति गो. पाठः । २ जिह्व इति गो. पा. ।

सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः। त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परंतपः॥ १९ ॥
प्रभवं निधनं चापि नो विदुः को भवानिति। दृश्यसे सर्वभूतेषु गोषु च ब्राह्मणेषु च॥ २० ॥
दिक्षु सर्वासु गगने पर्वतेषु नदीषु च। सहस्रचरणः श्रीमाञ्शतशीर्षः सहस्रदृक्॥ २१ ॥
त्वं धारयसि भूतानि पृथिवीं सर्वपर्वतान्। अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगः॥ २२ ॥
त्रींल्लोकान्धारयन्राम देवगन्धर्वदानवान्। अहं ते हृदयं राम जिव्हा देवी सरस्वती॥ २३ ॥
देवा रोमाणि गात्रेषु ब्रह्मणा निर्मिताः प्रभो। निमेषस्ते स्मृता रात्रिरुन्मेषो दिवसस्तथा॥ २४ ॥

व्यष्टिकर्तुः स्वस्य व्याप्तिः। स्वयंप्रभुः अनन्यप्रेर्यः। न तस्येशे कश्चनेति श्रुतेः। सिद्धानां मुक्तानाम्। साध्यानां, यत्र पूर्वे साध्याः सन्ति देवा इत्युक्तानां नित्यानामाश्रयः साम्यभोगप्रदः। पूर्वजः आश्रितापेक्षायाः पूर्वं तद्रक्षणाय जनितः॥ १९॥ २०॥

१९ ] ति० टी०—सिद्धानामारूढानां साध्यानामारुरुक्षूणामाश्रयः प्राप्यः, पूर्वजश्चासि। 'अहमस्मि प्रथमजा ऋतस्य' इत्यादि श्रुतेः॥ १९॥

रा० टी०—सिद्धानामिति। सिद्धादीनामाश्रयस्त्वमेव यज्ञादिस्त्वमेव॥ १९॥

गो० टी०—सर्वकर्मसमाराध्यत्वमाह—त्वं यज्ञ इति। त्वं यज्ञः। यज्ञो वै विष्णुरिति श्रुतेः। यज्ञनिर्वाहकपशुहविराज्यस्रुक्स्रुवादिशरीरको यज्ञाराध्येन्द्रादिशरीरकश्चेत्यर्थः। ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतमिति हि गीयते। वषट्कार इत्युपलक्षणम्। आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरम् यजेति द्व्यक्षरम् ये यजामह इति पञ्चाक्षरमित्युक्तानां सप्तदशाक्षराणाम्। तैराराध्य इत्यर्थः। तथोक्तम्—चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदत्विति। ओंकारः प्रणववाच्यः। ओमित्येकाक्षरं ब्रह्मेति श्रुतेः। परन्तपः उत्कृष्टतप इत्यर्थः। उत्कृष्टतपःसमाराध्य इति यावत्। ते प्रभवं निधनं वा न विदुः, वेदा वैदिकाश्च को भवानिति च न विदुः। अपरिच्छिन्नमहिमत्वात्। क इत्थावेद यत्र स इति श्रुतेः॥ २१॥

२० ] ति० टी०—तव प्रभावावपि न जानन्ति को भवानिति चेदंतया न जानन्ति। सार्वात्म्येन स्तौति—दृश्यस इति। सर्वभूतेषु गोष्वित्यादि। उत्तमचेतनेष्वपीत्यर्थः। दृश्यसेऽन्तर्यामितया श्रूयसे॥ २०॥

रा० टी०—प्रभवमिति। यस्त्वं सर्वभूतादिषु दृश्यसे तस्य तव प्रभवं प्राकट्यं निधनं तिरोभावं च को भवानिति च न विदुः तत्त्वज्ञा अपीति शेषः एतेन प्राकट्यतिरोभावयोः तदिच्छावशत्वं सूचितम् तत्स्वरूपस्य तु अपारमहिमत्वं सूचितं सार्द्धश्लोक एकान्वयी॥ २०॥

गो० टी०—सर्वान्तर्यामित्वमाह—दृश्यस इति। योगिभिरिति शेषः। अनेन संबन्धप्रश्नस्योत्तरमुक्तम्॥ २२॥

२१] ति० टी०—अत्यन्तमचेतनेष्वपि त्वमन्तर्यामीत्याह-दिक्ष्विति॥ २१॥

२२ ] ति० टी०—त्वमेव सहस्रचरणत्वादिविशिष्टानन्तरूपो भूत्वा पृथिव्यादींस्तद्वर्तिभूतानि च धारयसि। तथान्तेऽन्ते पृथिव्या उपरिवर्तिनि सलिले त्वं महोरगशयनो दृश्यसे। एवं च पृथिव्या अध उपरि च प्रतिष्ठितस्वशक्तिस्त्वमित्युक्तम्॥ २२॥

रा० टी०—सहस्रेति। सहस्रचरणः सर्वत्र प्रकाशद्वारा परिपूर्णत्वात् अनेकचरणविशिष्टः अत एव शतशीर्षस्त्वं भूतानि धारयसि त्रीन् लोकान् धारयन् पृथिव्याः अन्ते मध्ये सलिले महोरगःशेषः त्वमेव दृश्यसे श्लोकद्वयमेकान्वयि॥२१॥ २२॥

गो० टी०—पुरुषसूक्तार्थमाह—सहस्रेति। अत्र शतशब्दः सहस्रवाचकः। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति श्रुतेः। श्रीमानिति भूपतित्वस्याप्युपलक्षणम्। श्रीश्च ते लक्ष्मीश्च पत्न्यावित्युत्तरनारायणोक्तेः। अथ सर्वाधारत्वमाह—त्वमिति। भूतानीति भूव्यतिरिक्तमहाभूतपरम्। अनेनाधाराधेयभावसंबन्ध उक्तः॥ २३॥

गो० टी०—दैनंदिनप्रलयवृत्तान्तमाह—अन्त इति। पृथिव्या अन्ते विनाशे। महानुरगः शेषो यस्य सः शेषशायी सन्, धारयन् कुक्षौ धारयन् दृश्यसे। मार्कण्डेयादिभिरिति शेषः२४

२३ ] ति० टी०—हे राम, त्रींल्लोकान्धारयंस्त्वं विराट्। नारायणोऽसीत्यर्थः। एतेन यतश्चाहमुत्पन्न इति प्रश्नस्योत्तरं दत्तम्। एवं देहत्वमुपदिश्य देहित्वमुपदिशति—अहं ते हृदयमिति। हे राम, ते रामोपग्रहस्य तव हृदयं सर्वाधारभूतमान्तरं त्वदात्मतत्त्वमहमेव ज्ञानस्वरूपः महाकाश इव घटाकाशस्य। तव जिह्वा मन्निर्मिता वाग्देवी सरस्वती॥ २३॥

२४ ] ति० टी०—देवा इन्द्रियदेवा दिग्वाताकादयस्तव गात्रेषु श्रोत्रादिषु ब्रह्मणा मया निर्मिताः, रोमाणि च निर्मितानि। ओषधिवनस्पत्यादिनेति शेषः। निमेषोन्मेषौ च रात्रिदिवसत्वेन प्रसिद्धौ॥ २४॥

रा० टी०—अहमिति। हे राम! अहं ते हृदयं जिह्वा सरस्वती देवा रोमाणि ते निमेषः रात्रिः ते उन्मेषः उन्मीलनं दिवसः ते गात्रेषु ब्रह्मणा वेदेन निर्मिताः कथिता इत्यर्थः सार्द्धश्लोक एकान्वयी॥ २३॥ २४॥

१ परन्तप इति गो. पा.। २ वा ते इति गो.रा. पाठः। ३ वनेष्विति गो रा. पाठः। ४ च सपर्वतामिति गो. पाठः।

संस्कारास्त्वभवन्वेदा नैतदस्ति त्वया विना । जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ॥ २५ ॥
अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः । त्वया लोकास्त्रयः क्रान्ताः पुरा स्वैर्विक्रमैस्त्रिभिः ॥ २६ ॥
महेन्द्रश्च कृतो राजा बलिं बद्ध्वा सुदारुणम् । सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्णः प्रजापतिः ॥ २७ ॥
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् । तदिदं नस्त्वया कार्यं कृतं धर्मभृतां वर ॥ २८ ॥
निहतो रावणो राम प्रहृष्टो दिवमाक्रम । अमोघं देव वीर्यं ते न ते मोघाः पराक्रमाः ॥ २९ ॥
अमोघं दर्शनं राम अमोघस्तव संस्तवः । अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि ॥ ३० ॥

गो० टी०—अथ अङ्गान्यन्या देवता इत्युक्तसर्वदेवाद्यात्मकत्वं दर्शयति—अहं त इत्यादिना । हृदयं वक्षः ब्रह्मणः परब्रह्मणः । ते देवा गात्रेषु स्थिताः रोमाणीव स्थिताः तद्वदविनाभूताः ॥ २५ ॥

गो० टी०—निमेषइति । दिवा अहः । वेदाः संस्काराः निःश्वसितभूता इत्यर्थः । तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद इत्यादि श्रुतेः । किं बहुना संग्रहेणोच्यत इत्याह—न तदस्ति विना त्वयेति । यस्त्वया विनाभूतं त्वदनन्तर्यामिकम्, तन्नास्तीत्यर्थः ॥ २६ ॥

२५ ] ति० टी०—संस्काराः संस्क्रियन्ते बोध्यन्त एभिर्लोका इति संस्काराः प्रवृत्तिनिवृत्तिबोधकाः—नैतदस्तीति । त्वया विना यदस्ति तत्किमपि नेत्यर्थः । कार्यकारणरूपं सर्वं जगत्ते शरीरम् । स्थैर्यमशेषप्रजानित्यधारणसामर्थ्यम् । वसुधातलं भूतत्त्वं त्वमेव ॥ २५ ॥

रा० टी०—संस्कारा इति । संस्काराः प्रवृत्तिनिवृत्तिव्यवहारबोधकास्ते तव वेदा अभवन् अतः त्वया विना एतज्जगन्नास्ति अत एव सर्वं चिदचिदात्मकं जगत् ते शरीरं धैर्यं धारणसामर्थ्यं वसुधातलम् ॥ २६ ॥

गो० टी०—एवं निषेधश्रुत्यर्थमुक्त्वा सर्वं खल्विदं ब्रह्म तत्त्वमसीत्यादिसामानाधिकरण्यश्रुत्यर्थमाह—जगदिति । सर्वं जगत् ते शरीरम् तव नियमेन आधेयं विधेयं शेषभूतं चेत्यर्थः । इदमेव हि शरीरलक्षणम् एवं जगतस्त्वच्छरीरत्वाच्छरीरगतविशेषणानि त्वद्विशेषणानीत्याह—स्थैर्यमिति वसुधातलं वसुधातलस्थैर्यम् । काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नम इति विष्णुपुराणोक्तेः । अग्निः अग्नितापः, ते कोपः । सोमः सोमगतप्रसादः, ते प्रसादः, त्वत्प्रसाद इत्यर्थः ॥ २७ ॥

२६ ] ति० टी०—ते कोपोऽग्निः । ते प्रसादः सोमः । त्वया वामनात्मनावतीर्णेन पुरा पूर्वं त्रिभिर्विक्रमैस्त्रयो लोका भूर्भुवःस्वःस्वरूपाः क्रान्ताः ॥ २६ ॥

रा० टी०—अग्निरिति । ते कोपोग्निः ते प्रसादस्सोमः श्रीवत्सलक्षणो विष्णुश्च गात्रेषु स्वैस्त्रिभिर्विक्रमैः पादप्रक्षेपैः त्रयो लोकाः क्रान्ताः परिमिताः बलिं बद्ध्वा महेन्द्रश्च राजा कृतः सार्द्धश्लोक एकान्वयी ॥ २६ ॥

गो० टी०—त्वयेति । त्वया त्रिविक्रमेण पुराणे पूर्वकाले । लोकाक्रमणफलमाह—महेन्द्र इति । राजा कृतः । त्रैलोक्यस्येति शेषः ॥ २८ ॥

२७ ] ति० टी०—बलिं बद्ध्वा महेन्द्रश्च राजा कृतः । सीता लक्ष्मीः प्रसिद्धविष्णुपत्न्यभिन्नतत्त्वत्वात् । यो विष्णुः स भवान्देवः प्रकाशरूपः । कृष्णः कृष्णवर्णः । प्रजापतिस्तदभिन्नतत्त्वः ॥ २७ ॥

२८ ] ति० टी०—स एव त्वं रावणस्य वधाय मानुषीं तनुं प्रविष्टोऽसि । माययेति शेषः । एवं तत्त्वेन त्वया तदिदं रावणवधरूपं नः सर्वेषां देवानां कार्यं कृतम् ॥ २८ ॥

रा० टी०—ननु तथात्वे कथमिह ममागमनमित्यत आह सीतेति । मानुषीं तनुं प्रविष्टः नित्यं प्राप्तः कृष्णः कृष्णवर्णः प्रजानां पतिर्विष्णुः व्यापकस्यापि व्यापकः देवो नित्यविहारी भवान् लक्ष्मीः लक्ष्म्या ईयते सेवार्थं प्राप्यते सा सीता च रावणस्य वधार्थमिहागच्छतामिति शेषः तत्तस्माद्धेतोः इदं रावणवधादिरूपं नः कार्यं त्वया कृतं सार्द्धश्लो एकान्वयी ॥ २७ ॥ २८ ॥

गो० टी०—प्रयोजनप्रश्नस्योत्तरमाह—वधार्थमिति । ॥ २९–३१ ॥

२९ ] ति० टी०—अथ वृत्तानुष्ठानानुवादपूर्वं वर्तिष्यमाणकर्तव्यमाह—निहत इति । रावणो निहतः । एवं यावतारकार्यं निवृत्तम्, अतःपरं महाराज्येन किञ्चित्कालं प्रहृष्टः सन्दिवं परनाकाख्यं ब्रह्मलोकमाक्रम प्राप्नुहि । एवं सिद्धकार्यत्वात्ते वीर्यं बलममोघम् तन्मूलाः पराक्रमाश्च न मोघा न निष्फलाः, अपि तु सफला एवेत्यर्थः ॥ २९ ॥

रा० टी०—निहत इति । हे राम ते वीर्यं तेजः अमोघं सफलमित्यर्थः ते पराक्रमाश्च मोघा निष्फला न अत एव त्वया रावणो निहतः अत एव दिवं नित्यक्रीडास्थलं अयोध्यामित्यर्थः आक्रम गच्छ ॥ २९ ॥

३० ] ति० टी०—अथ रामस्य सर्वोपास्यत्वं सर्वाभीष्टसिद्धिप्रदत्वं चाह—अमोघमिति । हे राम, ते दर्शनमेवं मूर्तेस्ते दर्शनं सुग्रीवादीनाममोघम् । एवं कालान्तरे श्रुत्वा चित्तग्रहणामप्यमोघमैहिकामुष्मिकसकलफलसाधनं तव संस्तवो

१ पुराणे इति गो. पाठः । २ देव वीर्यं ते इति रा. बलवीर्यं ते इति गो. पा. । ३ नच मोघस्तव स्तव इति रा. पा. । ४ ते पराक्रम इति गो. पा. । ५ च ये नरा इति गो. तु ये नरा इति रा. पा. ।

ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् । प्राप्नुवन्ति तथा कामानिह लोके परत्र च ॥ ३१ ॥
इममार्षं स्तवं दिव्यमितिहासं पुरातनम् । ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥

## अष्टादशाधिकशततमः सर्गः ।

पितामहवाक्यावसाने मूर्तिमान्हव्यवाहनः सीतामङ्के कृत्वा भो रामास्यां पापं न विद्यते रावणेन प्रलोभ्यमाना बहु तर्जितापि चक्षुषा मनसा वाचापि त्वद्गतेनान्तरात्मनेयं रावणं नाचिन्तयदत एनां गृह्णीष्वेत्यार्पयत् रामोऽप्यहं जानन्नपि निष्पापां लोकवादनिरासकृते एवमकरवमित्युक्त्वा सीतामङ्गीकृत्यानन्दस्य परां काष्ठामन्वभवत् ।

एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम् । अङ्केनादाय वैदेहीमुत्पपात विभावसुः ॥ १ ॥
विधूयाथ चितां तां तु वैदेहीं हव्यवाहनः । उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥ २ ॥
तरुणादित्यसंकाशां तप्तकांचनभूषणाम् । रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम् ॥ ३ ॥

रामनारायणेत्येवंरूपोऽमोघः सकलेष्टदः । ये च त्वयि भक्तिमन्तः सोऽहमेवेति गौणवृत्त्या त्वदुपासकास्तवाहमिति वोपासकास्तेऽप्यमोघं संसारमार्गमतिक्रान्ताः सत्यसंकल्पत्वादिमन्तः सन्तो मल्लोकप्राप्तिरूपामोघफला भविष्यन्ति, किं पुनर्ये सर्वात्मना त्वदभेदध्यानवन्त इत्यर्थः ॥ ३० ॥

रा० टी०–अमोघमिति । हे राम ते दर्शनममोघं सफलमेवेत्यर्थः तव स्तवः स्तुतिरपि मोघो न अत एव ते भक्तिमन्तो नराः अमोघाः प्राप्तमहाफला एव भविष्यन्ति ३०

गो० टी०–अमोघा इत्यर्धम् । अमोघाः अप्रतिबद्धफलाः ये त्वयि भक्तिमन्तः ते अविलम्बेन फलमभिमतं लभन्त इति इदं च्यावतारस्यैकं प्रयोजनम् ॥ ३२ ॥

३१ ] ति० टी०–उक्तमर्थमुपसंहरति दार्ढ्याय—ये त्वामिति ॥ ३१ ॥

रा० टी०–ये इति । ये जनाः पुरुषोत्तमं त्वां ध्रुवं भक्ताः सेवाशीलाः ते जनाः इह लोके परत्र च कामान् प्राप्नुवन्ति ३१

गो० टी०–इदमेव विवृणोति–य इति । त्वामुद्दिश्येति शेषः । अनेन सर्वस्मादपि तपःप्रभृतेः रामभक्तिरेव परो धर्म इत्युक्तम् । काम्यन्त इति कामाः भोगोपकरणानि, इह लोके परत्र च प्राप्नुवन्ति । सदेत्यनेन यावच्छरीरपातमत्र भोगान् भुक्त्वा शरीरावसाने परलोके सर्वान् कामान् प्राप्नुवन्तीत्यर्थः ॥ ३३ ॥

३२ ] ति० टी०–इदानीं तत्परैतत्स्तोत्रपाठफलमुपदिशति—इममिति । ऋषिर्वेदस्तदुक्तसगुणनिर्गुणब्रह्मविद्याप्रतिपादकत्वादार्षः स चासौ स्तवश्चेत्यार्षस्तवस्तम्, अत एव दिव्यं पुरातनं पुरावृत्तप्रतिपादकमितिहासम् । अनादिसिद्धपुरातनब्रह्मविद्याप्रतिपादकत्वात् । एवंभूतं ब्रह्मविद्यास्तवं ये कीर्तयिष्यन्ति तेषां पराभवः परैरिहामुत्रलोकशत्रुभिः पुत्रदारादिभिः पापैश्चाभिभव आक्रमणं नास्ति न भविष्यति च ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥

रा० टी०–इममिति । मम भवत्स्तुतिबोधकं पुरातनं चिरकालकमितिहासं आवयोस्संवादरूपमार्यं मन्त्रपारं गतैः प्रोक्तमत एव दिव्यं स्तवं ये नराः कीर्तयिष्यन्ति तेषां पराभवो नास्ति ३२

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनविंशत्यधिकशततमः सर्गः ॥ ११९ ॥

गो० टी०–ये रामभक्तिं कर्तुमदक्षास्तेषामिदं स्तोत्रमेव तादृशफलप्रदमित्याह–इममिति । ऋषिः वेदः तत्संबन्ध्यार्षम् । अत एव पुरातनम् । परभावः पुनरावृत्तिः ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

१ ] ति० टी०–एतदिति । पितामहसमीरितं शुभं परमशोभनं निजब्रह्मत्वप्रतिपादकं वाक्यं श्रुत्वा ध्यात्वा च । प्रसन्नतयावस्थानकाले इति शेषः । अङ्केनादाय । 'रयिं च पुत्रांश्चादादग्निर्मह्यम्' इति श्रुत्यर्थमपरोक्षमेव संपादयन्नित्यर्थः ॥ १ ॥

रा० टी०–ब्रह्मादिकर्तृकस्तवनानन्तरकालिकं वृत्तान्तमाह—एतदित्यादिभिः । पितामहेन समीरितं कथितं एतद्वाक्यं श्रुत्वा विभावसुर्वह्निः वैदेहीमादाय अङ्केन शीघ्रगत्या उत्पपात ॥ १ ॥

गो० टी०–एतच्छ्रुत्वेत्यादि । विभावसुः अग्निः ॥ १ ॥

२-३ ] ति० टी०–मूर्तिमान्मुकुटादिचिह्ननिजमूर्तियुक्तः ॥ २ ॥ ३ ॥

रा० टी०–तदेवमर्थान्तरेणाह विधूयेत्यादिभिः । हव्यवाहनो वह्निः चितां विधूय दग्ध्वा जनकात्मजां गृहीत्वा उत्तस्थौ ॥ २ ॥

रा० टी०–तरुणेति । नीलाः कुञ्चिताश्च मूर्धजाः यस्याः न क्लिष्टानि अग्निसम्बन्धेनापि विबाधितानि माल्याभरणानि यस्याः अत एव अनिन्दितां वैदेहीं अङ्के रामस्येति शेषः कृत्वा संस्थाप्य रामाय विभावसुर्ददौ श्लोकद्वयमेकान्वयि ३॥४

१ सदेति गो. रा. पा. । २ नित्यमिति गो. पा. ।

अक्लिष्टमाल्याभरणां तथारूपामनिन्दिताम् । ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ॥ ४ ॥
अब्रवीत्तु तदा रामं साक्षी लोकस्य पावकः । एषा ते राम वैदेही पापमस्यां न विद्यते ॥ ५ ॥
नैव वाचा न मनसा नैवं बुद्ध्या न चक्षुषा । सुवृत्ता वृत्तशौ[३]टीर्य न त्वामत्यचरच्छुभा ॥ ६ ॥
रावणेनापनीतैषा वीर्योत्सिक्तेन रक्षसा । त्वया विरहिता दीना विवशा निर्जने सती ॥ ७ ॥
रुद्धा चान्तःपुरे गुप्ता त्वच्चित्ता त्वत्परायणा । रक्षिता राक्षसीभिश्च घोराभिर्घोरबुद्धिभिः ॥ ८ ॥
प्रलोभ्यमाना विविधं तर्ज्यमाना च मैथिली । नाचिन्तयत तद्रक्षस्त्वद्गतेनान्तरात्मना ॥ ९ ॥
विशुद्धभावां निष्पापां प्रतिगृह्णीष्व मैथिलीम् । न किंचिदभिधातव्या अहमाज्ञापयामि ते ॥ १० ॥
ततः प्रीतमना रामः श्रुत्वैवं वदतां वरः । दध्यौ मुहूर्तं धर्मात्मा हर्षव्याकुललोचनः ॥ ११ ॥
एवमुक्तो महातेजा धृतिमानुरुविक्रमः । उवाच त्रिदशश्रेष्ठं रामो धर्मभृतां वरः ॥ १२ ॥

---

गो० टी०—स इति । विधूय चितां शिथिलीकृत्य । मूर्तिमान् मनुष्यविग्रहवान् ॥ २ ॥

गो० टी०—तरुणादित्येत्यादिश्लोकद्वयमेकान्वयम् ॥ तथारूपां प्रवेशकालिकरूपवतीम् । मनस्विनीं प्रसन्नमनस्कामित्यर्थः । अङ्के कृत्वा अङ्केनादायेत्यर्थः ॥ ३–५ ॥

४ ] ति० टी०—अक्लिष्टेति । अग्निसंबन्धेऽपीति शेषः । तथारूपां पूर्वानुभूतशोभायुक्ताम् ॥ ४ ॥

५ ] ति० टी०—तदा दानसमये लोकस्य मनोवाक्कायैर्लोककृतपुण्यपापकर्मणः साक्षी साक्षाद्द्रष्टा । सर्वदेहान्तर्वैश्वानरात्मना । नित्यप्रतिष्ठितत्वादिति भावः । एषा या मयि रावणहरणकाले प्रविष्टा सैव । एवं हि कूर्मपुराणानुसारेण व्याख्यानम्, तच्च प्राङ्निरूपितम् । पापं रावणस्पर्शरूपमपि ॥ ५ ॥

रा० टी०—अब्रवीदिति । पावकः राममब्रवीत् तदाकारमाह एषा या वैदेही अस्यां पापं न विद्यते ॥ ५ ॥

गो० टी०—एषेति । एषा या पूर्वं मयि प्रविष्टा सैवेत्यर्थः । एतेन मायासीताग्निं प्रविष्टा साक्षात्सीताग्निना दत्तेति प्रत्युक्तम् । ते त्वदीयेत्यर्थः । एनां परिगृहाणेति शेषः ॥ ६ ॥

६ ] ति० टी०—सुवृत्ता वृत्तशौटीर्यं त्वां मनआदिभिः प्रत्येकं सद्भिरेतैश्च नात्यचरत् ॥ ६ ॥

रा० टी०—नेति । शोभनं वृत्तमाचरणं यस्याः सा सीता वृत्तशौण्डीर्यमाचारनिपुणं त्वां वागादिभिर्नात्यचरत् ॥ ६ ॥

गो० टी०—पापाभावमेवोपपादयति—नैवेत्यादिना । अनुध्यानात्संकल्पात् । अत्यन्ताभिमतां देवीं निर्दोषां जानन्नपि त्वत्कृतावमत्वपरिहारार्थं वह्निं प्रावेशयदिति संतोषातिशयाद्वृत्तशौण्डीरेति संबोधनम् ॥ ७ ॥

७ ] ति० टी०—एषा या इदानीं मयि प्रविष्टा ॥ ७ ॥

रा० टी०—रावणेनेति । वीर्योत्सिक्तेन पराक्रमगर्वविशिष्टेन रावणेन निर्जने त्वया विरहिता अत एव दीना एषा सीता अपनीता अन्तःपुरे रुद्धा च अत एव गुप्ता अन्यैर्दुर्ज्ञेया राक्षसीभिः रक्षिता विविधं प्रलोभ्यमाना तर्ज्यमाना च त्वद्गतेन अन्तरात्मना अन्तःकरणेनोपलक्षिता मैथिली तद्रक्षो रावणं नाचिन्तयन् अगणयत् अतः विशुद्धः भावः त्वद्विषयकप्रीतिर्यस्याः अत एव निष्पापां मैथिलीं प्रतिगृह्णीष्व किंचित् दुरुक्तं नाभिधातव्यं वक्तव्यमिदमहं ते आज्ञापयामि सम्यग्बोधयामि श्लोकचतुष्टयमेकान्वयि ॥ ७–१० ॥

गो० टी०—एतत्संमतिं विना कथं रावणः समानीतवानित्यत्राह—रावणेनेत्यादि ॥ ८ ॥

८ ] ति० टी०—रुद्धा निरुद्धस्वच्छन्दगमनादिव्यवहारा गुप्ता परिहृतस्वजनदर्शना त्वच्चित्ता त्वयि चित्तं यस्याः सा, अत एव त्वत्परायणा त्वद्गतिः ॥ ८ ॥

गो० टी०—विवशा नीतेत्यत्र लिङ्गं दर्शयति—रुद्धेति । त्वयि चित्तं यस्याः सा त्वच्चित्ता त्वमेव परायणमुत्तमगतिर्यस्याः सा त्वत्परायणा ॥ ९ ॥ १० ॥

९ ] ति० टी०—तद्रक्षो नाचिन्तयत नागणयत । तत्र हेतुरन्तरात्मनस्त्वद्गतत्वम् । एवं च यत्प्रतिबिम्बस्याप्येवं व्यवस्था तद्बिम्बस्य शुद्धत्वं किं वक्तव्यमिति ध्वनिः ॥ ९ ॥

१० ] ति० टी०—विशुद्धभावां विशुद्धान्तराम्, अत एव निष्पापाम्—न किञ्चिदिति । मन्नियोगानन्तरं प्रतिग्राह्या न वेति संदेहो न गृह्णामीति निषेधश्च न कर्तव्य इत्यर्थः । कुत एवं तत्राह—आज्ञापयामि ते इति । एवमुक्तिस्तु रामेण स्वस्वरूपाज्ञाननटनात्तदनुसारेण रुद्रमूर्तेर्भगवतोऽग्नेरपीति मन्तव्यम् ॥ १० ॥

गो० टी०—विशुद्धभावामिति । विशुद्धभावां विशुद्धहृदयाम् । अभिधातव्यम् मद्वचनस्योत्तरमिति शेषः ॥ ११ ॥

११–१२ ] ति० टी०—दध्यौ । किमिहोचितं वक्तव्यमिति ध्यातवानिति शेषः ॥ ११ ॥ १२ ॥

रा० टी०—तत इति । श्रुत्वैव प्रीतमनाः अत एव हर्षेण

---

१ मनस्विनीमिति गो. पा. । २ नानुध्यानादिति गो. पा. । ३ शौण्डीरेति गो. शौण्डीर्यमिति रा पा. । ४ निर्जनादनादिति गो. पा. । ५ सर्वैर्विकृतैर्घोरदर्शनैरिति गो. पा. । ६ राघवेति गो. रा. पा. । ७ बाष्पेति गो. पा. । ८ दृढेति गो. पाठः ।

अवश्यं चापि लोकेषु सीता पावनमर्हति। दीर्घकालोषिता हीयं रावणान्तःपुरे शुभा ॥ १३ ॥
बालिशो बत कामात्मा रामो दशरथात्मजः। इति वक्ष्यति मां लोको जानकीमविशोध्य हि॥ १४ ॥
अनन्यहृदयां सीतां मच्चित्तपरिरक्षिणीम्। अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥ १५ ॥
इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा। रावणो नातिवर्तेत वेलामिव महोदधिः ॥ १६ ॥
[ प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः। उपेक्षे चापि वैदेहीं प्रविशन्तीं हुताशनम् ॥ ]
न च शक्तः सुदुष्टात्मा मनसापि हि मैथिलीम्। प्रधर्षयितुमप्राप्यां दीप्तामग्निशिखामिव ॥ १७ ॥
नेयमर्हति वैक्लव्यं रावणान्तःपुरे सती। अनन्या हि मया सीता भास्करस्य प्रभा यथा॥ १८ ॥
विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा। न विहातुं मया शक्या कीर्तिरात्मवता यथा ॥ १९ ॥

व्याकुले व्याप्ते लोचने यस्य स रामः मुहूर्तं दध्यौ कर्तव्यं चिन्तयामास ॥ ११ ॥

रा० टी०–एवमिति। एवमुक्तो रामः त्रिदशश्रेष्ठमुवाच ॥ १२ ॥

गो० टी०–तत इति। दध्यौ न कथैव सीता त्यक्तेत्यचिन्तयत् ॥ १२ ॥ १३ ॥

१३-१४ ] ति० टी०–पावनम्। स्वार्थण्यन्ताद्भावे ल्युट्। शुद्धिमित्यर्थः। जानकीमविशोध्य ग्राहिणं माम्। रावणान्तःपुरे दीर्घकालोषितां तां दशरथात्मजो गृहीतवांस्ततस्स कामात्मा कामपरतन्त्रचित्तो बालिशो भूलोकव्यवहारापरिज्ञो यतोऽत इति लोको मां वक्ष्यति। ततः शुद्ध्यर्थमग्निप्रवेशो मयानुमत इति शेषः ॥ १३ ॥ १४ ॥

रा० टी०–तदाकारमाह–अवश्यमित्यादिभिः। जानकीमविशोध्य शोधनमकृत्वा ग्रहीतारं मां दशरथात्मजः कामात्मा बालिशश्च सन् रावणान्तःपुरे दीर्घकालोषिता या इयं सीता तामगृह्णादिति शेषः इति लोको मां वक्ष्यति इति हेतोः लोकेषु राक्षसादिजनमध्येषु सीता पावनं पूतिक्रियामवश्यमर्हति एतेन एवमेव लोकापवादादपि सर्वैर्भेतव्यमिति विभीषणादिभ्यः उपदेशः सूचितः श्लोकद्वयमेकान्वयि ॥ १३॥१४ ॥

गो० टी०–वस्तुतो निर्दोषत्वेऽपि अपवादोऽस्तीत्याह–अवश्यमिति। ॥ १४ ॥

गो० टी०–अपवादपरिहारार्थमयं मम प्रयत्न इत्याह–बालिश इति। अविशोध्येति। परिग्रह इति शेषः ॥ १५ ॥

१५ ] ति० टी०–इयं शुद्धेति हृदये जानाम्येवेत्याह–अनन्येति। मच्चित्तपरिरक्षिणीं मद्गतचित्तत्वेनात्मनो दोषपरिरक्षणशीलाम् ॥ १५ ॥

रा० टी०–अनन्येति। न अन्यस्मिन् हृदयं यस्याः अत एव मच्चित्तस्य परिरक्षिणीमनुकूलां सीतामहमप्यवगच्छामि जानामि ॥ १५ ॥

गो० टी०–अनन्येति। अनन्यहृदयां मय्येव सक्तहृदयाम्। मच्चित्तपरिवर्तिनीं मच्चित्तानुवर्तिनीम्। त्यक्तस्वव्यापारामित्यर्थः। जनकात्मजामिति हेतुगर्भविशेषम्। जनकपुत्र्याः किमाचारसंपत्तिर्वक्तव्येति भावः ॥ १६ ॥

१६ ] ति० टी०–स्वेन तेजसा पातिव्रत्येन ॥ १६ ॥

रा० टी०–इमामिति। महोदधिर्वेलामिव स्वतेजसा रक्षितामिमां सीतां रावणो नातिवर्तेत ॥ १६ ॥

गो० टी०–तर्हि किमर्थमुपेक्षितवानसीत्यत्राह–प्रत्ययार्थमिति। प्रत्ययार्थं विश्वासजननार्थमित्यर्थः। सत्यसंश्रयः सत्यैकाश्रयः। यथावद्वृत्तप्रवर्तनाकाङ्क्षीत्यर्थः ॥ १७ ॥

गो० टी०–एतादृशसुन्दरीं रावणः कथं नेक्षेतेत्यत्राह–मामपीति। ॥ १८ ॥

१७ ] ति० टी०–प्रधर्षयितुं न शक्तः, अत एवाप्राप्याम् अशक्यग्रहाम्। तत्र निदर्शनम्—दीप्तामिति ॥ १७ ॥

रा० टी०–न चेति। दीप्तामग्निशिखामिव अप्राप्यां मैथिलीं दुष्टात्मा रावणः मनसापि प्रधर्षयितुं न शक्तः ॥१७॥

गो० टी०–दृष्टान्तान्तरमाह–न हीति। अप्राप्तां प्रधर्षणानर्हाम् ॥ १९ ॥

१८ ] ति० टी०–वैक्लव्यं कातर्यपीडाम्। अनन्या हीति। 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः। शक्तिशक्तिमतोरभेदाच्च। अनेनाग्निदत्ताया रावणस्पर्शाद्यभावः स्पष्टमेवोक्तः ॥ १८ ॥ १९ ॥

रा० टी०–नेति। भास्करस्य प्रभेव मया अनन्या इयं सीता रावणान्तःपुरे वैक्लव्यं क्लेशं नार्हति ॥ १८ ॥

गो० टी०–तथाप्येषा तादृशमैश्वर्यं कथं जह्यात्तत्राह–नेयमिति। रावणैश्वर्यं नेयमर्हति किंतु ममैश्वर्यमर्हतीत्यर्थः। तत्र हेतुमाह–अनन्येति। मया अनन्या अभिन्ना अविनाभूतेति यावत् ॥ २० ॥

रा० टी०–विशुद्धेति। त्रिषु लोकेषु विशुद्धा मैथिली आत्मवता बुद्धिमता जनेन कीर्तिरिव मया विहातुं न शक्या ॥१९॥

गो० टी०–अहमपि तया अनन्य इत्याह–विशुद्धेति २१

१ त्रिष्विति गो. पाठः। २ वक्ष्यन्ति मां सन्त इति गो. पा.। ३ भक्तामिति गो. पा.। ४ वर्तिनीमिति गो. पा.। ५ इदं पद्यमधिकं गो. पा. ६ हीति गो. पा.। ७ चैश्वर्यमिति गो. पा.। ८ शुभेति गो. पा.। ९ भास्करेणेति गो. पा.।

अवश्यं च मया कार्यं सर्वेषां वो वचो हितम् । स्निग्धानां लोकनाथानामेवं च वदतां हितम् ॥ २० ॥
इत्येवमुक्त्वा विजयी महाबलैः प्रशस्यमानः स्वकृतेन कर्मणा ।
समेत्य रामः प्रियया महायशाः सुखं सुखार्होऽनुबभूव राघवः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टादशाधिकशततमः सर्गः ॥ ११८ ॥

## एकोनविंशाधिकशततमः सर्गः ।

महेश्वरो रामोक्तं निशम्य राम रावणजं महद्भयमद्य नष्टमिदानीमयोध्यायां मातृभरतं चाश्वास्य राज्यमपि प्राप्य वंशवृद्धिं कृत्वा स्वर्गमेहीत्युक्त्वा तत्रागतं पितरं दशरथं दर्शयामास ततः सलक्ष्मणं प्रणमन्तं राममङ्के कृत्वा संपरिष्वज्याभिनन्द्य स्नुषां च समाश्वास्यामन्त्र्य च तान्दशरथः स्वर्गमारुरोह ।

एतच्छ्रुत्वा शुभं वाक्यं राघवेणानुभाषितम् । ततः शुभतरं वाक्यं व्याजहार महेश्वरः ॥ १ ॥
पुष्कराक्ष महाबाहो महावक्षः परंतप । दिष्ट्या कृतमिदं कर्म त्वया धर्मभृतां वर ॥ २ ॥
दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः । अपवृत्तं त्वया संख्ये रामरावणजं भयम् ॥ ३ ॥
आश्वास्य भरतं दीनं कौसल्यां च यशस्विनीम् । कैकेयीं च सुमित्रां च दृष्ट्वा लक्ष्मणमातरम् ॥ ४ ॥
प्राप्य राज्यमयोध्यां च नन्दयित्वा सुहृज्जनम् । इक्ष्वाकूणां कुले वंशं स्थापयित्वा महाबल ॥ ५ ॥
इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः । ब्राह्मणेभ्यो धनं दत्त्वा त्रिदिवं गन्तुमर्हसि ॥ ६ ॥

---

२०-२१ ] ति० टी०-सर्वेषां वो वचः सीताग्रहणविषयं मे हितं मयावश्यं कार्यं कर्तुं योग्यम् स्निग्धानां मयि स्नेहवताम्, लोकमान्यानामशेषजगत्पूज्यानाम्, एवं पूर्वोक्तप्रकारेण हितं वदताम् ॥ २० ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टादशाधिकशततमः सर्गः ॥ ११८ ॥

रा० टी०-अवश्यमिति । हितं वदतां लोकनाथानां वो वचः मयावश्यं कार्यम् ॥ २० ॥

गो० टी०-सीतापरिग्रहे भवद्वचनं तु प्रधानहेतुरित्याह-अवश्यमिति । वचनकरणे स्नेहः सर्वपूज्यत्वं हितोपदेष्टृत्वं च हेतुरित्यर्थः ॥ २२ ॥

रा० टी०-इतीति । स्वकृतेन कर्मणा प्रशस्यमानः ब्रह्मादिभिस्स्तूयमानो रामः सुखं यथा भवति तथा प्रियया समेत्य सुखार्होऽनुबभूव ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे विंशत्युत्तरशततमः सर्गः ॥ १२० ॥

गो० टी०-इतीति । विदितं स्वेन विदितम्, इदम् उक्तं वचनम् उक्त्वा स्वकृतेन कर्मणा करणेन महाबलैः कर्तृभिः प्रशस्यमानः प्रियया समेत्य सीतां स्वसमीपमानीयेत्यर्थः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

१ ] ति० टी०-एतद्वाक्यं श्रुत्वा युष्मदाज्ञया सीतामङ्गीकरोम्येवेत्युक्तं वाक्यं श्रुत्वा । ततः सीताग्रहणनियोगानुष्ठानानन्तरम् ॥ १ ॥

रा० टी०-रामकर्तृकसीतास्वीकारानन्तरकालिकं वृत्तान्तमाह-एतदित्यादिभिः । महेश्वरः राघवेणानुभाषितं श्रुत्वा शुभतरं वाक्यं व्याजहार ॥ १ ॥

गो० टी०-देवकार्यस्याकृतत्वात्त्रिदिवमाक्रमेति ब्रह्मणोक्तत्वाल्लोके धर्मसंस्थापनपरं रामहृदयं जानन् रुद्रस्तदनुमन्यते-एतच्छ्रुत्वेत्यादि । ॥ १ ॥

२ ] ति० टी०-महावक्षो हे महोरस्क ॥ २ ॥

रा० टी०-तदाकारमाह-पुष्कराक्षेति । इदं कर्म दिष्ट्या अस्मद्भाग्यवशेन कृतम् ॥ २ ॥

गो० टी०-पुष्कराक्षेति । पुष्कराक्ष पुण्डरीकाक्ष । अनेन तस्य यथा कप्यासं पुण्डरीके इव अक्षिणी, पुरुषः पुण्डरीकाक्ष इति श्रुतिस्मृतिभ्यामुदीरितस्य परब्रह्मासाधारणचिह्नस्य रामे रुद्रेण प्रतिपादनाद्रामत्वेनावतीर्णो विष्णुरेव वेदान्तवेद्यं परब्रह्मेत्युक्तम् । श्रीनिवासत्वेन महावक्षस्त्वम् । दिष्ट्या भाग्येन । अस्माकमिति शेषः ॥ २ ॥

३ ] ति० टी०-तमो दुःखम् ॥ ३ ॥

रा० टी०-दिष्ट्येति । प्रवृद्धं रावणजं भयं तमो दुःखं च त्वया अपवृत्तं निवर्तितम् ॥ ३ ॥

गो० टी०-उक्तमेव विवृणोति-दिष्ट्येति । सर्वस्य रावणजं भयमेव प्रवृद्धं तमः अपावृत्तं निरस्तम् ॥ ३ ॥

४ ] ति० टी०-आश्वास्येति अयोध्यां गत्वेति शेषः ॥ ४ ॥

५ ] ति० टी०-कुले कुलपरिपालननिमित्तं वंशं संतानम् । 'दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके' इत्यवतारात्पूर्वं प्रतिज्ञातत्वात्प्राप्य राज्यमित्याद्युक्तम् ॥ ५ ॥

६ ] ति० टी०-तुरगमेधेनेष्ट्वा भगवन्तं प्रजापतिमिति

---

१ मान्यानामिति गो.पा. । २ महाबलैरिति गो.पा. । ३ वक्ष इति गो. पा. । ४ स्विमिति गो. पा. । ५ अपावृत्तमिति गो. पा. । ६ अयोध्यामिति गो. पा. ।

एष राजा दशरथो विमानस्थः पिता तव । काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ॥ ७ ॥
इन्द्रलोकं गतः श्रीमांस्त्वया पुत्रेण तारितः । लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥ ८ ॥
महादेववचः श्रुत्वा राघवः सहलक्ष्मणः । विमानशिखरस्थस्य प्रणाममकरोत्पितुः ॥ ९ ॥
दीप्यमानं स्वया लक्ष्म्या विरजोऽम्बरधारिणम् । लक्ष्मणेन सह भ्रात्रा ददर्श पितरं प्रभुः ॥ १० ॥
हर्षेण महताविष्टो विमानस्थो महीपतिः । प्राणैः प्रियतरं दृष्ट्वा पुत्रं दशरथस्तदा ॥ ११ ॥
आरोप्याङ्के महाबाहुर्वरासनगतः प्रभुः । बाहुभ्यां संपरिष्वज्य ततो वाक्यं समाददे ॥ १२ ॥
न मे स्वर्गो बहु मतः संमानश्च सुरर्षभैः[1] । त्वया राम विहीनस्य सत्यं प्रतिशृणोमि ते ॥ १३ ॥
( अद्य[2] त्वां निहतामित्रं दृष्ट्वा संपूर्णमानसम् । निस्तीर्णवनवासं च प्रीतिरासीत्परा मम ) ॥
कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर । तव प्रव्राजनार्थानि स्थितानि हृदये मम ॥ १४ ॥
त्वां तु दृष्ट्वा कुशलिनं परिष्वज्य सलक्ष्मणम् । अद्य दुःखाद्विमुक्तोऽस्मि नीहारादिव भास्करः ॥ १५ ॥
तारितोऽहं त्वया पुत्र सुपुत्रेण महात्मना । अष्टावक्रेण धर्मात्मा कहोलो[3] ब्राह्मणो यथा ॥ १६ ॥

शेषः । अनुत्तमं यशो महद्यश इत्यादिकं प्रजापतिनाम । तस्य नाम महद्यशः' इति श्रुतेः। अश्वमेधफलं च तत्प्राप्तिरेव । 'प्रजापतिं वा एष ईप्सतीत्याहुः, योऽश्वमेधेन यजते' इति श्रुतेरिति कतकः । त्रिदिवं भूस्वःपदापेक्षया तृतीयं दिवं ब्रह्मलोकम् ॥६॥

रा० टी०–आश्वास्येति । भरतादीन् दृष्ट्वा आश्वास्य च अयोध्यायां राज्यं प्राप्य इक्ष्वाकूणां कुले कुलपरिपालनार्थं वंशं स्थापयित्वा तुरगमेधेन इष्ट्वा ब्राह्मणेभ्यो धनं दत्त्वा त्रिदिवं साकेतं गन्तुमर्हसि श्लोकत्रयमेकान्वयि ॥ ४–६ ॥

गो० टी०–आश्वास्येत्यादिश्लोकत्रयमेकान्वयम् ॥ यशस्विनीमिति कैकेयीविशेषणम् तन्मूलत्वाद्रावणवधस्य तस्या यशस्वित्वम् । लक्ष्मणमातरमित्यनेन सा लक्ष्मणस्नेहाद्विशेषतो वन्द्येत्युक्तम् । अयोध्यायां सुहृज्जनं नन्दयित्वेत्यन्वयः । वंशं पुत्रपौत्रादिपरम्पराम् । इक्ष्वाकूणां कुले इक्ष्वाकुकुलनिमित्तम्, स्थापयित्वा । प्राप्य चानुत्तमं यश इति तुरगमेधफलोक्तिः । आश्वास्येत्यादिना दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके इत्यवतारात्पूर्वं तत्कृतां प्रतिज्ञामनुसृत्य रुद्रेणोक्तम् ॥ ४–६ ॥

७-८] ति० टी०–एष इति । पुरःस्थस्यापि देवदेहपरिग्रहेणाज्ञायमानतयाङ्गुल्यानिर्देशः ॥ ७ ॥ ८ ॥

रा० टी०–एष इति । पुत्रेण त्वया त्वद्वियोगेन तारितः प्रस्थापितः इन्द्रलोकं सकलैश्वर्यविशिष्टसाकेतम् गतः अत एव विमानस्थः एष तव पिता दशरथः मानुषे लोके इदानीमागत इति शेषः अतः लक्ष्मणेन सह एनमभिवादय श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०–एष इत्यादिश्लोकद्वयमेकान्वयम् ॥ देवदेहपरिग्रहेणापरिज्ञायमानत्वात् पुरःस्थितोप्ययं एष इत्यङ्गुल्या निर्दिश्यते । मानुषे लोके गुरुरित्यनेन, पिता पुत्रेण पितृमान् योनियौनाविति श्रुतिरुपबृंहिता ॥ ७–१० ॥

९-१२ ] ति० टी०–विमानशिखरस्थस्य विमानोपरि प्रतिष्ठितस्य ॥ ९–१२ ॥

रा० टी०–महादेवेति । राघवो लक्ष्मणश्च पितुः प्रणाममकरोत् ॥ ९ ॥

रा० टी०–दीप्यमानमिति । स्वया लक्ष्म्या दीप्यमानं पितरं ददर्श ॥ १० ॥

रा० टी०–हर्षेणेति । प्राणैः प्रियतरं पुत्रं दृष्ट्वा महता हर्षेणाविष्टो दशरथः अंके आरोप्य बाहुभ्यां संपरिष्वज्य वाक्यं समाददे उच्चारयामास । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०–हर्षेणेत्यादिश्लोकद्वयमेकान्वयम् । पुत्रं रामम् ॥ ११ ॥ १२ ॥

१३-१५ ] ति० टी०–सुरर्षभैः समानोऽपि स्वर्गो न बहुमतः ॥ १३–१५ ॥

रा० टी०–तदाकारमाह–नेति । त्वया विहीनस्य मे मम सुरर्षभैः बहुमतोऽपि स्वर्गः समानः त्वत्सहवाससदृशो न इति सत्यं प्रतिशृणोमि ॥ १३ ॥

गो० टी०–न मे स्वर्ग इति । सुरर्षिभिः संमानः देवर्षिभिः समानोऽपि ॥ १३ ॥ १४ ॥

रा० टी०–कैकेय्येति । कैकेय्या उक्तानि तव प्रव्राजनार्थानि यानि वाक्यानि तानि मम हृदये स्थितानि न विस्मर्यन्ते इत्यर्थः ॥ १४ ॥

गो० टी०–कैकेय्येति । हृदये स्थितानि । न विस्मरामीत्यर्थः । तेन दुःखितोऽभूवमिति सूचितम् ॥ १५ ॥

रा० टी०–त्वामिति । कुशलिनं त्वां दृष्ट्वा अद्य दुःखाद्विमुक्तोस्मि ॥ १५ ॥

गो० टी०–त्वां त्विति । सलक्ष्मणमित्यनेन द्वितीयपरिष्वङ्गे लक्ष्मणोऽपि विषयीकृत इत्युच्यते ॥ १६ ॥

१६ ] ति० टी०–अष्टावक्रपिता कहोलनामर्षिः पुत्रेण स्वधर्मेण तारित इति पौराणिकी कथा ॥ १६ ॥

१ संमानश्च सुरर्षिभिरिति गो. पा. । २ इदं पद्यं मधिकं गो. पा. ३ तारिन इति गो. पा. ।

इदानीं च विजानामि यथा सौम्य सुरेश्वरैः। वधार्थं रावणस्येह पिहितं[1] पुरुषोत्तमम् ॥ १७ ॥
सिद्धार्था खलु कौसल्या या त्वां राम गृहं गतम्। वनान्निवृत्तं संहृष्टा द्रक्ष्यते[2] शत्रुसूदनम् ॥ १८ ॥
सिद्धार्थाः खलु ते राम नरा ये त्वां पुरीं गतम्। राज्ये चैवाभिषिक्तं च द्रक्ष्यन्ते वसुधाधिपम् ॥ १९ ॥
अनुरक्तेन बलिना शुचिना धर्मचारिणा। इच्छेयं त्वामहं द्रष्टुं भरतेन समागतम् ॥ २० ॥
चतुर्दश समाः सौम्य वने निर्यातितास्त्वया। वसता सीतया सार्धं मत्प्रीत्या लक्ष्मणेन च ॥ २१ ॥
निवृत्तवनवासोऽसि प्रतिज्ञा पूरिता त्वया। रावणं च रणे हत्वा देवताः परितोषिताः ॥ २२ ॥
कृतं कर्म यशः श्लाघ्यं प्राप्तं ते शत्रुसूदन। भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥ २३ ॥
इति ब्रुवाणं राजानं रामः प्राञ्जलिरब्रवीत्। कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ॥ २४ ॥
सपुत्रां त्वां त्यजामीति यदुक्ता कैकयी त्वया। स शापः कैकयीं घोरः सपुत्रां न स्पृशेत्प्रभो ॥ २५ ॥
तथेति स महाराजो राममुक्त्वा कृताञ्जलिम्। लक्ष्मणं च परिष्वज्य पुनर्वाक्यमुवाच ह ॥ २६ ॥
[ रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया। कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते ] ॥
धर्मं प्राप्स्यसि धर्मज्ञ यशश्च विपुलं भुवि। रामे प्रसन्ने स्वर्गं च महिमानं तथोत्तमम् ॥ २७ ॥
रामं शुश्रूष भद्रं ते सुमित्रानन्दवर्धन। रामः सर्वस्य लोकस्य हितेष्वभिरतः सदा ॥ २८ ॥
एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः। अभिवाद्य महात्मानमर्चन्ति पुरुषोत्तमम् ॥ २९ ॥

---

रा० टी०–तारित इति । हे पुत्र ! महात्मना पुत्रेण त्वया अहं तारितः तीर्णप्रतिज्ञोऽभवमिति शेषः तत्र दृष्टान्तः अष्टावक्रेण पुत्रेण कोहलस्तत्पितेव ॥ १६ ॥

गो० टी०–तारितोहं त्विति । कहोलो नाम ऋषिरष्टावक्रेण तारित इतीयं कथा भारतोक्ता ॥ १७ ॥

१७–१९ ] ति० टी०–पिहितं पुरुषोत्तममाच्छादितम्। मत्पुत्रत्वेनेति शेषः ॥ १७–१९ ॥

रा० टी०–इदानीमिति । सुरेश्वरैः रावणस्य वधार्थं पुरुषोत्तमं त्वां यथा पिहितं प्राप्तं तथाहं जानामि एतेन स्वप्रतिज्ञाया अपि पालनं कृतमिति सूचितम् ॥ १७ ॥

गो० टी०–इदानीं त्विति । रावणस्य वधार्थं सुरेश्वरैरिदमभिषेकविघ्नादिकं कर्म यथा विहितं तथा इदानीमेव जानामि । पुरुषोत्तमेत्यनेन भवान् विष्णुरेव रावणवधार्थं मनुष्यत्वं गत इत्युच्यते ॥ १८ ॥

रा० टी०–सिद्धार्थेति । या वनान्निवृत्तमत एव गृहं गतं द्रक्ष्यते सा कौशल्या सिद्धार्था ॥ १८ ॥

गो० टी०–सिद्धार्थेति । सिद्धार्था कृतार्था । मम स्वर्गसुखादपि तस्याः सुखमधिकमिति भावः ॥ १९ ॥ २० ॥

रा० टी०–सिद्धार्था इति । ये अभिषिक्तं त्वां द्रक्ष्यन्ते ते सिद्धार्थाः ॥ १९ ॥

२०–२३ ति० टी०–द्रष्टुमिच्छेयम् । स्वलोकस्थ एव सन्निति शेषः ॥ २०–२३ ॥

रा० टी०–अनुरक्तेनेति । अनुरक्तेन भरतेन समागतं त्वां द्रष्टुमहमिच्छेयम् ॥ २० ॥

गो० टी०–अनुरक्तेनेति । अवश्यं राम भरतं प्राप्नुहीति भावः ॥ २१–२४ ॥

रा० टी०–चतुर्दशेति । मत्प्रीत्या वने वसता त्वया चतुर्दश समा वर्षाणि निर्यापिताः ॥ २१ ॥

रा० टी०–निवृत्तेति । रावणं हत्वा देवताः परितोषिताः अत एव प्रतिज्ञाः पूरिताः अतः त्वं निवृत्तवनवासोऽसि ॥ २२ ॥

रा० टी०–कृतमिति । श्लाघ्यं कर्म त्वया कृतमत एव यशः प्राप्तमत एव राज्यस्थस्त्वं दीर्घमायुरवाप्नुहि ॥ २३ ॥

२४–२६ ] ति० टी०–घोरः स शापः सपुत्रां कैकेयीं यथा न स्पृशेत्तथा प्रसादं कुरु ॥ २४–२६ ॥

रा० टी०–इतीति । रामः राजानमब्रवीत् तदाकारमाह–कैकेय्या भरतस्य च प्रसादं प्रसन्नतां कुरु ॥ २४ ॥

रा० टी०–प्रसादाकारमाह सपुत्रामिति । सपुत्रां त्वां त्यजामि इति यत् कैकेयी त्वया उक्ता स घोरश्शापः सपुत्रां कैकेयीं न स्पृशेत् एतेन साकेतं गच्छेति सूचितम् ॥ २६ ॥

रा० टी०–तथेति । महाराजः राममुक्त्वा लक्ष्मणं वाक्यमब्रवीत् ॥ २६ ॥

गो० टी०–कुरु प्रसादमिति । कैकेय्या भरतस्य च कैकय्यां भरते चेत्यर्थः । संबन्धसामान्ये षष्ठी । यस्मादुक्ता तस्मात् प्रसादं कुर्विति संबन्धः ॥ २९ ॥

गो० टी०–स शाप इत्यर्धमेकं वाक्यम् । शापः संबन्धविच्छेदरूपः ॥ २६ ॥ २७ ॥

२७–२९ ] ति० टी०–स्वर्गं महिमानं च प्राप्स्यसीत्यनुकर्षः ॥ २७–२९ ॥

---

१ विहितमिति गो. पा. । २ द्रक्ष्यत्यरिनिषूदनेति गो. पा. । ३ जलार्द्रमिति गो. पा. । ४ लक्ष्मणेन च धीमतेति गो पा. । ५ इदं पद्यमधिकं गो. पाठे । ६ शुश्रूषस्वेति गो. पाठः । ७ गम्येति गो. पाठः ।

एतत्तदुक्तमव्यक्तमक्षरं ब्रह्मसंमितम् । देवानां हृदयं सौम्य गुह्यं रामः परंतपः ॥ ३० ॥
अवाप्तधर्माचरणं यशश्च विपुलं त्वया । एनं शुश्रूषता व्यग्रं वैदेह्या सह सीतया ॥ ३१ ॥
इत्युक्त्वा लक्ष्मणं राजा स्नुषां बद्धाञ्जलिं स्थिताम् । पुत्रीत्याभाष्य मधुरं शनैरेनामुवाच ह ॥ ३२ ॥
कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति । रामेणेदं विशुद्ध्यर्थं कृतं वै त्वद्धितैषिणा ॥ ३३ ॥
सुदुष्करमिदं पुत्रि तव चारित्रलक्षणम् । कृतं यत्तेऽन्यनारीणां यशो ह्यभिभविष्यति ॥ ३४ ॥
न त्वं कामं समाधेया भर्तृशुश्रूषणं प्रति । अवश्यं तु मया वाच्यमेष ते दैवतं परम् ॥ ३५ ॥
इति प्रतिसमादिश्य पुत्रौ सीतां च राघवः । इन्द्रलोकं विमानेन ययौ दशरथो नृपः ॥ ३६ ॥
विमानमास्थाय महानुभावः श्रिया च संहृष्टतनुर्नृपोत्तमः ।
आमन्त्र्य पुत्रौ सह सीतया च जगाम देवप्रवरस्य लोकम् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकोनविंशत्यधिकशततमः सर्गः ॥ ११९ ॥

---

रा० टी०—तदाकारमाह धर्ममिति । रामे प्रसन्ने सति धर्मादीन् प्राप्स्यसि ॥ २७ ॥

गो० टी०—राममिति । सीतया सह रामं शुश्रूषतेत्यन्वयः ॥ २८ ॥

रा० टी०—राममिति । यतः सर्वस्य लोकस्य हितेषु रामोऽभिरतः अतः रामं शुश्रूष ॥ २८ ॥

गो० टी०—धर्ममिति । स्वर्गं सुखम् । लक्ष्मणस्यापि विष्ण्ववतारत्वं न जानाति दशरथः । महिमानं महत्त्वम् ॥२९॥३०॥

रा० टी०—एत इति । एते सर्वे महात्मानं राममभिवाद्य अर्चन्ति ॥ २९ ॥

गो०टी०—रामस्य सर्वोत्तमत्वं शिष्टाचारेण दर्शयति—एत इति । अर्चन्तीति णिजभाव आर्षः । एत इति हस्तनिर्देशेन रुद्रोऽप्यन्तर्गतः ॥ ३१ ॥

३०] ति०टी०—एतद्रामरूपं वस्तु । तज्जानीहीति शेषः । यद्देवानां हृदयमुक्तम् । 'देवानां हृदयं ब्रह्मान्वविन्दत्' इति श्रुत्या देवहृदयत्वेनोपदिष्टं तथा देवानां गुह्यम् । 'एतद्वै महोपनिषदं देवानां गुह्यम्' इति श्रुत्या देवगुह्यत्वेनोपदिष्टम् । ब्रह्मसंमितं ब्रह्मणा 'अन्तरस्मिन्निमे लोकाः' इत्यादि श्रुत्या प्रतिपादितम् । अक्षरमशेषजगत्कारणतया नित्यं यद्ब्रह्मास्ति ब्रह्मशब्दतन्त्रे ॥३०॥

रा० टी०—एतदिति । रामः देवानां ब्रह्मादीनामपि हृदयं नियन्तेत्यर्थः अतस्तदुक्तं रामोक्तिरेतत् अव्यक्तं गूढाभिप्रायमित्यर्थः अत एव गुह्यमत एव ब्रह्मसम्मितं वेदतुल्यमत एव अक्षरं नित्यम् एतेन एतदुक्तमादरतोऽनुष्ठेयमित्युपदेशस्सूचितः ॥३०॥

गो० टी०—एतदिति । देवानां हृदयं सर्वदेवान्तर्यामी । वेदानामिति पाठे वेदतात्पर्यभूतम् उभयथाप्यग्नीन्द्रादिरूपेण सर्वकर्मसमाराध्यमित्यर्थः । गुह्यं साक्षादुपनिषद्वेद्यम् । अव्यक्तं भक्तिशून्यैर्दुर्ज्ञेयम् । अक्षरं षड्भावविकाररहितम् । तदेतत् ब्रह्म रामः रामरूपेण निर्मितम् रामरूपेणावतीर्णमिति उक्तम् । ब्रह्मादिभिरिति शेषः ॥ ३२–३९ ॥

३१-३२ ] ति० टी०—यत एवं भूतो रामो ब्रह्मादिभिस्त्वत्समक्षमेवोक्तः, अत एनं शुश्रूषता त्वया सर्वधर्माचरणं प्राप्तम् । ब्रह्मधर्मे सर्वधर्मान्तर्भावस्य संवर्गविद्यायामुक्तत्वादिति भावः ॥ ३१ ॥ ३२ ॥

रा० टी०—अवाप्तमिति । एनं रामं शुश्रूषता त्वया धर्मचरणादि अवाप्तम् ॥ ३१ ॥

रा० टी०—इतीति । राजा बद्धांजलिं स्थितां स्नुषां पुत्रीत्याभाष्य शनैरुवाच ॥ ३२ ॥

३३-३४ ] ति० टी०—इमं त्यागं प्रति यथेष्टं गम्यतामित्युक्तरूपम् ॥ ३३ ॥ ३४ ॥

रा० टी०—तदाकारमाह—कर्तव्य इति । त्वद्धितैषिणा रामेण इदं वह्निप्रवेशनादि विशुद्ध्यर्थं लोकानां शुद्ध्यर्थं कृतम् अतः त्यागं प्रति मन्युर्न कर्तव्यः ॥ ३३ ॥

रा० टी०—सुदुष्करमिति । सुदुष्करमन्याभिः कर्तुमशक्यं चारित्रलक्षणं यत् कर्म त्वया कृतं तेन कर्मणा नारीणां यशः अभिभविष्यति ॥ ३४ ॥

३५-३७ ] ति० टी०—यद्यपि भर्तृशुश्रूषां प्रति त्वं न समाधेया न प्रार्थनापूर्वं नियोज्या । तत्र ते स्वतः प्रवृत्तिसत्त्वात् । अथापि मया गुरुत्वादवश्यं वाच्यम् । तदेवाह—ते दैवतं परमिति ॥ ३५–३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकोनविंशत्यधिकशततमः सर्गः ॥११९॥

रा० टी०—नेति । यद्यपि भर्तृशुश्रूषणं प्रति त्वं न समाधेया स्वत एव तत्र प्रवृत्तेत्यर्थः मया तु अवश्यं वाच्यं पित्रादीनां पुत्रादिशिक्षाकर्तृत्वस्यावश्यकत्वादित्यर्थः शिक्षायां हेतुः एष पतिः ते परं दैवतम् ॥ ३५ ॥

रा० टी०—इतीति । राघवो दशरथः इति प्रतिसमादिश्य इन्द्रलोकं ययौ ॥ ३६ ॥

रा० टी०—विमानमिति । नृपोत्तमो दशरथः मानया

---

१ निरीते गो. पा. । २ अवाप्तं धर्मचरणमिति गो. रा. पा. । ३ भक्त्येति गो. पा. । ४ स तथोक्त्वामहाबाहुर्लक्ष्मणं प्राञ्जलिं स्थितम् । उवाच राजा धर्मात्मा वैदेहीं वचनं शुभमिति गो.पा. । ५ इदं पद्यं गो.पु. नास्ति । ६ तथा स्नुषामिति गो. पा. । ७ जलमिति गो. पा. । ८ इदं पद्यं गो. पु. नास्ति ।

## विंशाधिकशततमः सर्गः ।

दशरथे स्वर्गं गते वृत्रघ्नाऽस्माकममोघंदर्शनमतो वरानीप्सितान्वृणीष्वेत्यनुज्ञातो राघवः सर्वेषां युद्धे मृतानां कपीनां पुनर्जीवनांते यत्र तिष्ठेयुस्तत्र जलमूलफलबाहुल्यमकालेऽपीत्यायचावत् तथेत्युक्ते वज्रपाणिना सर्वे वानरा जीवन्त उत्तस्थुरानन्दितं च सहरिलक्ष्मणं राममामन्त्र्य निर्जराः सहर्षं दिवं प्रतिययुः।

प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः। अब्रवीत्परमप्रीतो राघवं प्राञ्जलिं स्थितम् ॥ १ ॥
अमोघं दर्शनं राम तवास्माकं नरर्षभ। प्रीतियुक्ताः स्म तेन त्वं ब्रूहि यन्मनसेप्सितम् ॥ २ ॥
एवमुक्तो महेन्द्रेण प्रसन्नेन महात्मना। सुप्रसन्नमना हृष्टो वचनं प्राह राघवः ॥ ३ ॥
यदि प्रीतिः समुत्पन्ना मयि ते विबुधेश्वर। वक्ष्यामि कुरु मे सत्यं वचनं वदतां वर ॥ ४ ॥
मम हेतोः पराक्रान्ता ये गता यमसादनम्। ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ ५ ॥
मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानराः। तान्प्रीतमनसः सर्वान्द्रष्टुमिच्छामि मानद ॥ ६ ॥
विक्रान्ताश्चापि शूराश्च न मृत्युं गणयन्ति च। कृतयत्ना विपन्नाश्च जीवयैतान्पुरंदर ॥ ७ ॥
मत्प्रियेष्वभिरक्ताश्च न मृत्युं गणयन्ति ये। त्वत्प्रसादात्समेयुस्ते वरमेतमहं वृणे ॥ ८ ॥
नीरुजो निर्व्रणांश्चैव संपन्नबलपौरुषान्। गोलाङ्गूलांस्तथर्क्षांश्च द्रष्टुमिच्छामि मानद ॥ ९ ॥

---

सह स्वपुत्रौ आमन्त्र्य पृष्ट्वा विमानमास्थाय देवप्रवरस्य लोकं जगाम ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकविंशत्यधिकशततमः सर्गः ॥ १२१ ॥

गो० टी०–न त्वमिति। न समाधेया नोपदेष्टव्या३६॥३७

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने द्वाविंशत्युत्तरशततमः सर्गः ॥ १२२ ॥

१ ] ति० टी०–काकुत्स्थे दशरथे। महेन्द्रः। तत्सहितो ब्रह्मा इत्यर्थः। सत्यसंकल्पस्य तस्मिन्नेव प्रसिद्धेः। वानराणां संकल्पमात्रेणोत्थानस्य वक्ष्यमाणत्वात्। भारतेऽपि—'ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा। समुत्तस्थुर्महाराज वानरा लब्धचेतसः॥' इत्युक्तम्। पाद्मेऽपि—'पितामहवरात्तूर्णं जीवयामास तान्नृप' इति। प्राञ्जलिं स्थितं राघवं प्रतीति शेषः॥१॥

रा० टी०–दशरथगमनानन्तरकालिकं वृत्तान्तमाह—प्रतीत्यादिभिः। काकुत्स्थे दशरथे प्रतिप्रयाते सति महेन्द्रः अत्यैश्वर्यवान् पाकशासनः प्राञ्जलिं दशरथोद्देशेन बद्धकरं राघवमब्रवीत् ॥ १ ॥

गो० टी०–अथेन्द्रानुशासनम्—प्रतिप्रयात इत्यादि। काकुत्स्थे दशरथे। महेन्द्रः लब्धमहेन्द्रभावः ॥ १ ॥

२–३ ] ति० टी०–अस्माकं दर्शनं कृतोपकारस्य तवामोघं प्रत्युपकारेण चरितार्थं भवत्विति शेषः। तेन यतः प्रीतियुक्तास्तेनेत्यर्थः ॥ २ ॥ ३ ॥

रा० टी०–तदाकारमाह—अमोघमिति। हे राम! अस्माकं तव दर्शनममोघं निष्फलं न अतः यन्मनसा ईप्सितं तत्प्रीतियुक्तस्त्वं ब्रूहि आज्ञापय ॥ २ ॥

रा० टी०–एवमिति। महेन्द्रेण एवमुक्तो राघवः वचनं प्राह ॥ ३ ॥

गो० टी०–अमोघमिति। तवास्माकं दर्शनम् अस्मत्कर्तृकं दर्शनम् दशरथपुत्रकामेष्टिकालिकम्, अमोघं रावणवधपर्यन्तं जातमित्यर्थः। तेन प्रीतियुक्तत्वेन, यत् प्रत्युपकाररूपं कार्यमिच्छसि तद्ब्रूहि। केचित्तु त्वत्कर्तृकमस्मद्विषयं दर्शनमित्यर्थ इत्याहुः ॥ २–६ ॥

४ ] ति० टी०–यद्वचनं वक्ष्यामि तत्सत्यं कुरु ॥ ४ ॥

रा० टी०–तदाकारमाह—यदीत्यादिभिः। हे विबुधेश्वर अहं वक्ष्यामि मे वचनं सत्यं कुरु ॥ ४ ॥

५ ] ति० टी०–पराक्रान्ताः कृतपराक्रमाः ॥ ५ ॥

रा० टी०–तद्वचनमेवाह—ममेत्यादिभिः। मम हेतोः ये यमसादनं तद्द्वारा स्वर्गं गतास्ते सर्वे जीवितं जीवनं प्राप्य समुत्तिष्ठन्तु ॥ ५ ॥

६–७] ति० टी०–विप्रयुक्ताः। जीवितनाशेनेति भावः ६॥७

रा० टी०–मदिति। ये वानरा मत्कृते पुत्रैर्दारैश्च विप्रयुक्ताः तान्सर्वान् द्रष्टुमिच्छामि ॥ ६ ॥

रा० टी०–विक्रान्ता इति। शूराः मृत्युं न गणयन्ति अत एव कृतप्रयत्ना विपन्ना मृताश्च अतः एतान् जीवय ॥७॥

गो० टी०–मत्कृत इत्यादिसार्धश्लोकमेकं वाक्यम्। मत्प्रियेषु अभियुक्ता निरताः। समेयुरित्यत्र पुत्रैर्दारैश्चेत्यावर्तनीयम् ॥ ६ ॥ ७ ॥

८–९ ] ति० टी०–मत्प्रियेषु मत्प्रियकृत्येषु त्वत्प्रसादात्समेयुस्ते। स्वजनैरिति शेषः ॥ ८ ॥ ९ ॥

रा० टी०–मदिति। ये मत्प्रियेषु अभिरक्तास्सन्तः मृत्युं

---

१ उक्तस्तु काकुत्स्थः प्रत्युवाच कृताञ्जलिः। लक्ष्मणेन सह भ्रात्रा सीतया सह भार्ययेति गो. पा.। २ ते इति गो. पा.। ३ इदं सार्धपद्यं गो. पु. नास्ति।

अकाले चापि पुष्पाणि मूलानि च फलानि च । नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥ १० ॥
श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः । महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिसंयुतम्[1] ॥ ११ ॥
महानयं वरस्तात यस्त्वयोक्तो रघूत्तम । द्विर्मया नोक्तपूर्वं च तस्मादेतद्भविष्यति ॥ १२ ॥
समुत्तिष्ठन्तु ते सर्वे हता ये युधि राक्षसैः । ऋक्षाश्च सह गोपुच्छैर्निकृत्ताननबाहवः ॥ १३ ॥
नीरुजो निर्व्रणाश्चैव संपन्नबलपौरुषाः । समुत्थास्यन्ति हरयः सुप्ता निद्राक्षये यथा ॥ १४ ॥
सुहृद्भिर्बान्धवैश्चैव ज्ञातिभिः स्वजनेन च । सर्व एव समेष्यन्ति संयुक्ताः परया मुदा ॥ १५ ॥
अकाले पुष्पशबलाः फलवन्तश्च पादपाः । भविष्यन्ति महेष्वास नद्यश्च सलिलायुताः ॥ १६ ॥
सव्रणैः प्रथमं गात्रैरिदानीं निर्व्रणैः समैः । ततः समुत्थिताः सर्वे सुप्त्वेव हरिसत्तमाः ॥ १७ ॥
बभूवुर्वानराः सर्वे किं न्वेतदिति विस्मिताः । काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः ॥ १८ ॥
अब्रुवन्परमप्रीताः स्तुत्वा रामं सलक्ष्मणम्[2] । गच्छायोध्यामितो राजन्विसर्जय च वानरान् ॥ १९ ॥
मैथिलीं सान्त्वयस्वैनामनुरक्तां यशस्विनीम्[3] । भ्रातरं भरतं पश्य त्वच्छोकाद्व्रतचारिणम् ॥ २० ॥
शत्रुघ्नं च महात्मानं मातॄः सर्वाः परंतप । अभिषेचय चात्मानं पौरान्गत्वा प्रहर्षय[4] ॥ २१ ॥
एवमुक्त्वा सहस्राक्षो[5] रामं सौमित्रिणा सह । विमानैः सूर्यसंकाशैर्ययौ[6] हृष्टः सुरैः सह ॥ २२ ॥

---

न गणयन्ति अगणयन्त ते समेयुः पुत्रादिभिस्सह संगता भवेयुः एतं वरमहं वृणे ॥ ८ ॥

रा० टी०—नीरुज इति । रुगादिरहितान् गोलांगूलान् ऋक्षांश्च द्रष्टुमिच्छामि ॥ ९ ॥

गो० टी०—नीरुज इति । निष्पीडान् ॥ ८ ॥

१०-११ ] ति० टी०—उत्थितानां सर्वदा सुखलाभाय वरान्तरम्—अकाले चापीति ॥ १० ॥ ११ ॥

रा० टी०—अकाल इति । यत्र वानराः तत्र अकालेऽपि पुष्पादीनि तिष्ठेयुः ॥ १० ॥

रा० टी०—श्रुत्वेति । महेन्द्रः इदं प्रत्युवाच ॥ ११ ॥

गो० टी०—अकाल इति । विमलाः विमलोदकाः ॥ ९ ॥

गो० टी०—श्रुत्वा त्विति । प्रीतिर्लक्ष्यतेनेनेति प्रीतिलक्षणं प्रीतिव्यञ्जकम् ॥ १० ॥

१२-१६ ] ति० टी०—महानिति । एकस्यापि मृतस्य पुनरुज्जीवनं दुष्करम्, अपरिमितमृतजीवनं तु मदतिरिक्ताशक्यमिति भावः ॥ १२-१६ ॥

रा० टी०—तदाकारमाह महानित्यादिभिः । यद्यपि अयं तव वरः ईक्षितः महान् दुःसाध्य इत्यर्थः तथापि एतत् त्वयोक्तं भविष्यति तत्र हेतुः द्विः विरुद्धवचनद्वयं मया नोक्तपूर्वम् ॥ १२ ॥

रा० टी०—समुत्तिष्ठन्त्विति । गोपुच्छैस्सह ये ऋक्षाः राक्षसैर्युधि हतास्ते सर्वे समुत्तिष्ठन्तु ॥ १३ ॥

रा० टी०—नीरुज इति । नीरुजः अङ्गभंगरहिताः अत एव निर्व्रणाः अत एव सम्पन्नबलपौरुषास्सन्तो हरयः सुप्ता निद्राक्षये इव समुत्थास्यन्ति ॥ १४ ॥

रा० टी०—सुहृद्भिरिति । सर्वे परया मुदा युक्तास्सन्तः सुहृदादिभिस्समेष्यन्ति ॥ १५ ॥

रा० टी०—अकाल इति । हे महेष्वास पादपाः अकाले पुष्पैश्शबलाः युक्ताः फलवन्तश्च भविष्यन्ति ॥ १६ ॥

गो० टी०—महानयं वर इति । वरस्य महत्त्वम् इतस्ततो विप्रकीर्णकरचरणपुच्छादिस्वस्वसंस्थानसंधानलोकान्तरगतानयनादिरूपाघटितार्थघटितत्वम् । द्विर्मया नोक्तपूर्वमिति । उक्तवचनस्य विपरीतं वचनान्तरं नोक्तपूर्वमित्यर्थः ॥ ११-१३ ॥

गो० टी०—अकाल इति । पुष्पशबलाः पुष्पैर्नानावर्णाः । सलिलायुताः सलिलैर्व्याप्ताः ॥ १४ ॥

१७-२२ ] ति० टी०—ततः समुत्थिताः । देवराजस्यानुग्रहरूपसंकल्पानन्तरम् ॥ १७-२२ ॥

रा० टी०—सव्रणैरिति । प्रथमं सव्रणैः इदानीं निर्व्रणैः गात्रैरुपलक्षितास्सर्वे हरिसत्तमाः प्रथमं सुप्ते विद्यमानाः पश्चात् समुत्थिता इव बभूवुः अत एव एतत् किमिति सर्वे वानरा विस्मिता बभूवुः सार्द्धश्लोक एकान्वयी व इवार्थकः सुप्ता इव इति छेदे तु नमुने इत्यत्र योगविभागेन क्वचित्त्रिपाद्या असिद्धत्वाभावे गुणो बोध्यः ॥ १७ ॥ १८ ॥

गो० टी०—ये निहताः सव्रणास्तेषां निर्व्रणत्वमनुगृह्णाति—सव्रणैरिति । प्रथमं वरदानात्पूर्वम् सव्रणैः, अथ निर्व्रणैः संवृत्तैः निर्व्रणीभूतैः गात्रैरुपलक्षिताः, वानरा भविष्यन्तीत्यनुकृष्य योजना ॥ १९ ॥

रा० टी०—काकुत्स्थमिति । सुरोत्तमाः रामं स्तुत्वा अब्रुवन् ॥ १९ ॥

---

१ मुख्यानीति गो. पा. । २ लक्षणमिति गो. पा. । ३ तपस्विनीमिति गो. रा. पा । ४ एतयोरर्धयोर्व्यत्यासेन पाठो गो. पु. । ५ तमामन्त्र्येति गो. पा. । ६ हृष्टा जग्मुः सुरा दिवमिति गो. पा. ।

अभिवाद्य च काकुत्स्थः सर्वास्तांस्त्रिदशोत्तमान्। लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा ॥ २३ ॥
ततस्तु सा लक्ष्मणरामपालिता महाचमूर्हृष्टजना यशस्विनी ।
श्रिया ज्वलन्ती विरराज सर्वतो निशा प्रणीतेव हि शीतरश्मिना ॥ ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे विंशत्यधिकशततमः सर्गः ॥ १२० ॥

## एकविंशाधिकशततमः सर्गः ।

तां रात्रिमुषितं रामं विभीषणः साञ्जलिर्वस्त्राण्याभरणानि च दिव्यानि गृहाणेत्यब्रवीत् रामेण तु भरतं विना नाम्बरादिकं मे बहुमतं सत्वरमयोध्यां गमिष्याम इत्युक्ते विभीषणः पुष्पकं नाम विमानमुपास्थापयत् ।

तां रात्रिमुषितं रामं सुखोदितमरिंदमम् । अब्रवीत्प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥ १ ॥
स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च । चन्दनानि च माल्यानि दिव्यानि विविधानि च ॥ २ ॥
अलंकारविदश्चैता नार्यः पद्मनिभेक्षणाः । उपस्थितास्त्वां विधिवत्स्नापयिष्यन्ति राघव ॥ ३ ॥
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम् । हरीन्सुग्रीवमुख्यांस्त्वं स्नानेनोपनिमन्त्रय ॥ ४ ॥
स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः । सुकुमारो[1] महाबाहुर्भरतः सत्यसंश्रयः ॥ ५ ॥
तं विना कैकयीपुत्रं भरतं धर्मचारिणम् । न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ॥ ६ ॥

गो० टी०—तत इति । अत्र क्रियाभेदात्सर्वशब्दद्वयम् । किमेतदिति । युद्धे मृतस्य कथमेवं जीवनमित्यर्थः ॥१६—१८॥

रा० टी०—तदाकारमाह—गच्छेति । इतो लङ्कायाः अयोध्यां गच्छ मैथिलीं सांत्वयस्व च ॥ २० ॥

गो० टी०—गच्छायोध्यामित्यादिसार्धश्लोकद्वयमेकान्वयम् । त्वच्छोकात् त्वद्वियोगशोकात्॥ १९—२२ ॥

रा० टी०—भ्रातरमिति । भरतादीन् पश्य आत्मानमभिषेचय च सार्द्धश्लोक एकान्वयी ॥ २१ ॥

रा० टी०—एवमिति । सहस्राक्षः हरैस्सह ययौ ॥ २२ ॥

२३ ] ति० टी०—वासमाज्ञापयत् । यथापूर्वमाज्ञापयदित्यर्थः ॥ २३ ॥

रा० टी०—अभिवाद्येति । काकुत्स्थः त्रिदशोत्तमान् अभिवाद्य अभिवादनं कारयित्वा वासं यथा पूर्वं वानरादिस्थितिम् आज्ञापयत् ॥ २३ ॥

गो० टी०—अभिवाद्येति । वासमाज्ञापयत् वानराणामिति शेषः ॥ २३ ॥

२४ ] ति० टी०—यद्यपि रामेणापीच्छामात्रेणैतत्सुकरं तथापि गृहीतमनुष्यदेहत्वात्तत्स्वरूपगोपनाय सेन्द्रब्रह्मद्वारा तथा कृतमिति ध्येयम् । येऽप्यमृतवृष्ट्या इन्द्रेण सर्वसमुत्थानं कृतमिति वदन्ति, तत्पक्षेऽपि रावणकंस्कारादिने सर्वरक्षसां दाहादिसंस्कारपूर्वकं भस्मनः समुद्रे प्रक्षेपान्न तदुत्थानशङ्का । पूर्वं युद्धकाले एव मृतानां समुद्रे प्रक्षेप इति मूल एव पूर्वमुक्तत्वाच्च । अन्ये तु—"स श्लोकस्तत्राधुनिकप्रक्षिप्तः । नचौषधिगन्धमात्रेण सर्वेषां विशल्यता, किं तु चूर्णीकृत्य तस्य दानेनेति प्रागेवोक्तम् । तथा च तदभावान्न तेषां विशल्यता, मृतानां गन्धाघ्राणाभावाच्च । रावणस्य तथाज्ञाया अभावाच्चेत्याहुः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे विंशत्यधिकशततमः सर्गः ॥१२०॥

रा० टी०—तत इति । श्रिया विजयलक्ष्म्या सर्वतो ज्वलन्ती महाचमूः शीतरश्मिना चन्द्रमसा प्रणीता निशेव रराज ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे द्वाविंशत्यधिकशततमः सर्गः ॥ १२२ ॥

गो० टी०—ततस्त्विति । प्रणीता प्रकाशिता ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रयोविंशत्युत्तरशततमः सर्गः ॥ १२३ ॥

१ ] ति० टी०—तां रात्रिमिति । यत्र दिने ब्रह्मादयो जग्मुस्तत्संबन्धिन्यां रात्रावित्यर्थः । सुखोदितं सुखप्रबद्धम् । जयं पृष्ट्वा जयशब्दं प्रयुज्य ॥ १ ॥

रा० टी०—यथापूर्वनिवासानंतरकालिकं वृत्तान्तमाह—तामित्यादिभिः । विभीषणः यस्यां रात्रौ ब्रह्मादयो गताः तां रात्रिं सुखोदितं सुखकथनविशिष्टं यथा भवति तथा उषितं रामं जयं पृष्ट्वा अब्रवीत् ॥ १ ॥

गो० टी०—अथ रामस्य वैभीषणसत्कारः—तां रात्रिमित्यादि । तां रात्रिम् । यस्मिन् दिने ब्रह्मादयो निर्गताः तां रात्रिमित्यर्थः ॥ १ ॥

२ ] ति० टी०—स्नानानि स्नानसाधनसुगन्धतैलादीनि २

३—६]ति०टी०—अलंकारविदोऽलंकरणक्रियासमर्थाः ३—६

[1] कुमार इति गो० पा० ।

एतत्पश्य यथा क्षिप्रं प्रतिगच्छाम तां पुरीम् । अयोध्यां गच्छतो ह्येष पन्थाः परमदुर्गमः ॥ ७ ॥
एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः । अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज ॥ ८ ॥
पुष्पकं नाम भद्रं ते विमानं सूर्यसंनिभम् । मम भ्रातुः कुबेरस्य रावणेन बलीयसा ॥ ९ ॥
हृतं निर्जित्य सङ्ग्रामे कामगं दिव्यमुत्तमम् । त्वदर्थं पालितं चेदं तिष्ठत्यतुलविक्रम ॥ १० ॥
तदिदं मेघसंकाशं विमानमिह तिष्ठति । येन यास्यसि यानेन त्वमयोध्यां गतज्वरः ॥ ११ ॥
अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान् । वस तावदिह प्राज्ञ यद्यस्ति मयि सौहृदम् ॥ १२ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या भार्यया सह । अर्चितः सर्वकामैस्त्वं ततो राम गमिष्यसि ॥ १३ ॥

---

रा० टी०—तदाकारमाह—स्नानेति द्वाभ्याम् स्नानानि स्नानसाधनानि अङ्गरागादीनि गृहीत्वेति शेषः उपस्थिता एता नार्यः त्वां स्नापयिष्यंति स्नापयितुमिच्छन्तीत्यर्थः श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

रा० टी०—एवमिति । काकुत्स्थो विभीषणमुवाच तदाकारमाह हरीन् स्नानेन स्नानार्थमुपनिमन्त्रय ॥ ४ ॥

रा० टी०—ननु त्वमप्युपमन्त्रणं स्वीकुर्वित्यत आह—स इति । सत्यसंश्रयः स भरतः मम हेतोः ताम्यति संतपतीत्यर्थः अतः तं भरतं विना बहुसुगंधलेपमादिपूर्वकं स्नानं मे न मतम् श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—स्नानानीत्यादिसार्धश्लोकद्वयमेकान्वयम् । स्नानानि स्नानीयजलानि । अत्र सर्वमानीतमित्यनुषज्यते । अङ्गरागाणि कुङ्कुमार्द्रानि माल्यानि स्रजः विविधम् सोपचारमित्यर्थः ॥ २–४ ॥

गो० टी०—हरीनिति । सुग्रीवप्रमुख्यान् सुग्रीवप्रमुखानेव हरीन्, स्नानेन स्नानेन हेतुना, अभिनिमन्त्रय ॥ ५ ॥

गो० टी०—त्वां विना तेषामामन्त्रणे किं कारणमित्यत आह—स त्विति । सः सर्वदा मनसि परिवर्तमानः धर्मात्मा ताम्यति । धर्माचरणेनैव ताम्यतीति भावः। मम हेतोः मदाभार्थमित्यर्थः । सत्यसंश्रयः, चतुर्दशे हि संपूर्णे वर्षेहनि रघूत्तम । न द्रक्ष्यामि यदि त्वां हि प्रवेक्ष्यामि हुताशनमिति कृतप्रतिज्ञः ॥ ६ ॥

गो० टी०—तं विनेति । तं विना स्नानोपकरणं विना, स्नानं कथं कार्यम् । कैकयीपुत्रं, मध्यमाम्बा तस्मिन् यद्दुःखमकरोत् तत्किं मयापि कर्तव्यम् । भरतं राज्ञा मया च विरहितं राज्यं सम्यक् कृतयन्तम् । धर्मचारिणं, मद्वियोगेन बहुमतपरे तस्मिन् कथं मया व्रतत्यागः कर्तुं युक्त इति भावः । न मे स्नानं बहुमतम् । प्रथमं मे स्नानमेव नेष्टं, कथं तदनन्तरभावीनि वस्त्रादीनि ॥ ७ ॥

७–९ ] ति० टी०—प्रतिगच्छामेति लोट् ॥ ७–९ ॥

१० ] ति० टी०—त्वदर्थं पालितं चेदं तिष्ठति । हृतेऽपि रावणे इति शेषः ॥ १० ॥

रा० टी०—एतदिति । यतः अयोध्यां गच्छतो जनस्य पन्थाः परमदुर्गमः अतः अयोध्यां यथा येन प्रकारेण क्षिप्रं शीघ्रं प्रतिगच्छाम तद् पश्य विचारय ॥ ७ ॥

रा० टी०—एवमिति । एवमुक्तो विभीषणः काकुत्स्थं प्रत्युवाच तदाकारमाह अन्हा एकदिनेन त्वामयोध्यां प्रापयिष्यामि ॥ ८ ॥

रा० टी०—तदुपायमाह—पुष्पकमित्यादिभिः । रावणेन हृतं मम भ्रातुः कुबेरस्य पुष्पकं नाम विमानं तिष्ठति ननु इदानीं कुबेराय कुतो न दत्तमित्यत आह त्वदर्थमेव मया पालितं न दत्तमित्यर्थः श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०—हत एवेति । अनेन पथा येनाहमागतस्तेनेत्यर्थः । एष इति हस्तनिर्देशपूर्वकमुच्यते । अयोध्याम् आगतः प्राप्तः अयमयोध्यामार्गः, तेन क्षिप्रं तां प्रति गच्छामीत्यर्थः । परमदुर्गमः अतिदूरत्वादिति भावः ॥ ८ ॥

गो० टी०—मार्गस्य परमदुर्गमत्वमात्रं परिहर्तुमाह—एवमुक्तस्त्विति ॥ ९ ॥

गो० टी०—अह्ना त्वामित्यादिसार्धश्लोकत्रयमेकान्वयम् । किं रावणेन चौर्येणापहृतमित्यत्राह—आहृतं निर्जित्येति । तर्हि कुबेराय समागताय तत्किमर्थं न दत्तमित्यत्राह—त्वदर्थं इति । त्वदर्थं त्वद्गमनार्थं पालितमिति । न दत्तमित्यर्थः । यद्वा त्वदर्थं त्वत्पूजार्थमेव । मेघसंकाशमिति वेगे दृष्टान्तः ॥ १०—१३ ॥

११ ] ति० टी०—तदिदमिति । लङ्कायां वर्तमानस्यापि पुष्पकस्यात्युन्नततया शिबिरस्थैरपि दृश्यमानत्वादिदमिति प्रत्यक्षवन्निर्देशः । इह लङ्कायाम् ॥ ११ ॥

रा० टी०—तदिति । तदिदं विमानमिह तिष्ठति तेन यानेन विमानेन त्वमयोध्यां यास्यसि ॥ ११ ॥

१२–१३ ] ति० टी०—वस तावदिहेति । एकदिवसमिति शेषः ॥ १२ ॥ १३ ॥

रा० टी०—अहमिति । हे प्राज्ञ सर्वकामैर्मया अर्चितस्त्वमिह वस ततोऽनंतरं त्वं गमिष्यसि श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—स्नानाकरणे *द्वित्रिदिनमात्रस्थितिं याचते—

---

१ हत एव पथेति गो. पा. । * द्वित्रैति पुस्तके भाति ।

प्रीतियुक्तस्य विहितां ससैन्यः ससुहृद्गणः। सत्क्रियां राम मे तावद्गृहाण त्वं मयोद्यताम् ॥ १४ ॥
प्रणयाद्बहुमानाच्च सौहार्देन च राघव। प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते ॥ १५ ॥
एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम्। रक्षसां वानराणां च सर्वेषामेव शृण्वताम् ॥ १६ ॥
पूजितोऽस्मि त्वया वीर साचिव्येन परेण च। सर्वात्मना च चेष्टाभिः सौहार्देन परेण च ॥ १७ ॥
न खल्वेतन्न कुर्यां ते वचनं राक्षसेश्वर। तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ॥ १८ ॥
मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः। शिरसा याचतो यस्य वचनं न कृतं मया ॥ १९ ॥
कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम्। गुहं च सुहृदं चैव पौराञ्जानपदैः सह ॥ २० ॥
अनुजानीहि मां सौम्य पूजितोऽस्मि विभीषण। मन्युर्न खलु कर्तव्यः सखे त्वां चानुमानये ॥ २१ ॥
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर। कृतकार्यस्य मे वासः कथं स्यादिह संमतः ॥ २२ ॥

---

अहं त इत्यादिना चतुःश्लोक्येकान्वया। गुणान् भक्त्यादिगुणान्। सर्वकामैः भूषणादिभिः। विहितां मया कृताम्। उद्यताम्। इतः परं नोद्योगः कार्यः, येन विलम्बः स्यात्, किंतु पूर्वमेव सङ्गृहीतामित्यर्थः। निर्बन्धदोषं परिहरति—प्रणयादिति। प्रणयात् मद्वाक्यमवश्यं श्रोष्यतीति विस्रम्भात् बहुमानात् त्वत्कृतलालनात्। सौहृदेन भक्त्या प्रसादयामि प्रार्थयामि ॥ १४–१७ ॥

१४ ] ति० टी०—विहितां शास्त्रविहिताम् मयोद्यताम् मयोपक्रान्ताम्। मे मत्तः ॥ १४ ॥

१५–१६ ] ति० टी०—न खल्वाज्ञापयामि ते। अत्र हेतुः—प्रेष्योऽहमिति ॥ १५ ॥ १६ ॥

रा० टी०—प्रीतीति। प्रीतियुक्तस्य मे प्रार्थनयेति शेषः मयोद्यतां प्रक्रान्तां विहितामुचितां सत्क्रियां गृहाण ॥ १४ ॥

रा० टी०—प्रणयादिति। ते प्रेष्यो भृत्योऽहं प्रणयादिना त्वां प्रसादयामि न त्वाज्ञापयामि ॥ १५ ॥

रा० टी०—एवमिति। रामो विभीषणं प्रत्युवाच ॥ १६ ॥

गो० टी०—एवमिति। उपशृण्वताम् उपशृण्वत्सु। भावलक्षणे षष्ठी ॥ १८ ॥

१७ ] ति० टी०—साचिव्यं मन्त्रसाहाय्यम्। सर्वात्मना च चेष्टाभिरिति। कायवाङ्मनोभिः कृतयुद्धचेष्टाभिः। परेणोत्तमेन। 'सौहार्देनोत्तमेन च' इत्येव क्वचित्पाठः ॥ १७ ॥

रा० टी०—तदाकारमाह—पूजित इत्यादिभिः। परेण सौहार्देनोपलक्षितेन त्वया परेण उत्तमेन साचिव्येन मन्त्रेण सर्वात्मना सर्वप्रयत्नेन च चेष्टाभिः कायव्यापारेण च पूजितोऽस्मि ॥ १७ ॥

गो० टी०—पूजितोऽहमिति। साचिव्येन साहाय्येन। चेष्टाभिः पौरुषैः। सर्वात्मना पूजित इत्यन्वयः ॥ १९ ॥

१८–१९ ] ति० टी०—अथाप्येतदत्र स्थित्वा त्वत्सत्कारस्वीकारं न कुर्यामिति न विशिष्य कार्यमेव। परंत्वस्वीकारे हेतुमाह—तं त्विति। यस्य वचनं मया न कृतं तं त्विति योजना ॥ १८ ॥ १९ ॥

रा० टी०—नेति। एतत्ते वचनं न कुर्याम् तत्र हेतुः मां निवर्तयितुं यश्चित्रकूटमुपागतः यस्य वचनं मया न कृतं तं भरतं कौशल्यादींश्च द्रष्टुं मे मनस्त्वरते श्लोकत्रयमेकान्वयि ॥ १८–२० ॥

गो० टी०—न खल्वेतदित्यादिश्लोकद्वयमेकान्वयम्। विभीषणवचनाकरणे हेतुमाह—तं त्विति। त्वरायां हेतुमाह—शिरसेति ॥ २०–२१ ॥

२० ] ति० टी०—सह द्रष्टुं त्वरते मन इत्यनुषङ्गः ॥ २० ॥

२१–२२ ] ति० टी०—अनुमानये। कृतानुमतिको यथा भवसि तथा प्रार्थये इत्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०—अन्विति। यतस्त्वया अहं पूजितोऽस्मि अतो मामनुजानीहि गमनाय आज्ञापय अत एव मन्युर्न कर्तव्यः इति त्वामनुमानये प्रार्थयामि ॥ २१ ॥

रा० टी०—उपेति। मे विमानं शीघ्रमुपस्थापय तत्र हेतुः कृतकार्यस्य मे इह वासः कथं स्यात् ॥ २२ ॥

गो० टी०—कौसल्यामिति। अत्रापि द्रष्टुं त्वरते मे मन इति संबध्यते। पौरांश्च तमयैः सहेत्यत्र पौरैरेव तनयशब्दोऽन्वेति ॥ २२ ॥

गो० टी०—उपस्थापयेति। *द्वित्रिदिनान्यत्र स्थातव्यमित्यस्योत्तरमाह—कृतेति। निर्वर्तितचतुर्दशवर्षप्रमाणमस्य कृतकार्यस्य मे इह लङ्कायाम् वासः सम्मतः कथं स्वित्, न सम्मत इत्यर्थः। अन्यथा भरतस्याग्निप्रवेशादिति भावः ॥ २३ ॥

---

१ परन्तपेति २ गुहं च सुहृदश्चैवेति गो. रा. पा.। ३ त्वरितं त्वा इति गो. पा.। ४ इदं पद्यमनुजानीहि मामिति पद्यात्पूर्वं गो. पाठे दृश्यते। गो. पा.। * द्वित्रेति युक्तं दृश्यते।

ऐवमुक्तस्तु रामेण राक्षसेन्द्रो विभीषणः। विमानं सूर्यसंकाशमाजुहाव त्वरान्वितः ॥ २३ ॥
ततः काञ्चनचित्राङ्गं वैदूर्यमणिवेदिकम्। कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम् ॥ २४ ॥
पाण्डुराभिः पताकाभिर्ध्वजैश्च समलंकृतम्। काञ्चनं काञ्चनैर्हर्म्यैर्हेमपद्मविभूषितैः ॥ २५ ॥
प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षकम्। घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम् ॥ २६ ॥
तं मेरुशिखराकारं निर्मितं विश्वकर्मणा। बृहद्भिर्भूषितं हर्म्यैर्मुक्तारजतशोभितैः ॥ २७ ॥
तलैः स्फटिकचित्राङ्गैर्वैदूर्यैश्च वरासनैः। महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २८ ॥
उपस्थितमनाधृष्यं तद्विमानं मनोजवम्। निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥ २९ ॥
तत्पुष्पकं कामगमं विमानमुपस्थितं भूधरसंनिकाशम्।
दृष्ट्वा तदा विस्मयमाजगाम रामः ससौमित्रिरुदारसत्त्वः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्ड एकविंशत्यधिकशततमः सर्गः ॥ १२१ ॥

---

२३ ] ति० टी०–एवमुक्त इति । '[1]राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः। तद्विमानं समादाय तूर्णं प्रतिनिवर्तते' इति क्वचित्पाठः ॥ २३ ॥

२४ ] ति० टी०–कूटागारैः शालागृहैः ॥ २४ ॥

२५ ] ति० टी०–पताकाः सूक्ष्मध्वजा. । हेमकृतपद्मभूषितैः काञ्चनैर्हर्म्यैः। काञ्चनं काञ्चनमयमिव ॥ २५ ॥

२६–२८ ] ति० टी०–मुक्तामणिभिः कृता गवाक्षा यस्मिंस्तत् ॥ २६–२८ ॥

२९–३० ] ति० टी०–उपस्थितं विमानं निवेदयित्वा विज्ञाप्य ॥ २९ ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे एकविंशत्यधिकशततमः सर्गः ॥ १२१ ॥

रा० टी०–एवमिति। विभीषणः विमानमाजुहाव॥२३॥

रा० टी०–विमानं वर्णयन्नाह—तत इत्यादिभिः। काञ्चनानि स्वर्णमयानि चित्राण्यङ्गानि यस्य वैदूर्यमणीनां वेदिका यस्मिन् कूटागारैः शालागृहैः परिक्षिप्तं रजतस्येव विशदा प्रभा यस्य पताकाभिर्ध्वजैश्च हेमपद्मविभूषितैः कांचनैर्हर्म्यैश्च समलंकृतम् किंकिणीजालैः प्रकीर्णं मुक्तामणिभिर्युक्ता गवाक्षा यस्मिन् घण्टानां जालैस्समूहैः परिक्षिप्तं हर्म्यैर्भूषितं स्फटिकेन चित्राण्यङ्गानि येषां तैस्तलैः वैदूर्यैः तत्तन्मणिमयैर्महार्हास्तरणोपेतैः महान्ति धनानि येषु तैरासनैरुपपन्नमनाधृष्यमुपस्थितमागतं मनोजवं कांचनं विमानं रामाय निवेदयित्वा निवेद्य विभीषणस्तस्थौ श्लोकषट्कमेकान्वयि२४–२९

रा० टी०–तदिति। कामगं पुष्पकं विमानं दृष्ट्वा रामो विस्मयमाजगाम भ्रातुर्विमानं कथं हृतवान् इति विस्मये हेतुस्सूचितः॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे त्रयोविंशत्यधिकशततमः सर्गः ॥१२३॥

गो० टी०–अनुजानीहीति । पूजितोऽस्मि विमानप्रदानेनेति शेषः। प्रदत्तत्वेन स्वस्वादुत्तरत्र कुबेराय प्रेषयिष्यति । मन्युः दैन्यम् कोपो वा मतुर्दैन्ये क्रतौ क्रुधीत्यमरः। त्वरितम् उक्तप्रकारेण त्वरान्तम् मामिति संबन्धः यद्वा त्वरितं यथा भवति तथा अनुमानये अनुमतिं कारये ॥ २४ ॥

गो० टी०–राघवस्य वचः श्रुत्वेत्यादिश्लोकचतुष्टयमेकं वाक्यम्। प्रतिनिवर्तत प्रतिन्यवर्तत। काञ्चनचित्राङ्गम् काञ्चनमयचित्रावयवम् । कूटागारैः मण्डपैः, परिक्षिप्तं व्याप्तम् रजतप्रभम् रजतशब्देन अत्र विशदत्वमुच्यते। पताकाभिः केवलध्वजैः ध्वजैः सचिह्नैः हर्म्यैः अवान्तरराजगृहैः । हेमपद्मानि लम्बमानानि तैर्विभूषितम्। प्रकीर्णं व्याप्तम्। मुक्तामणिगवाक्षितं मुक्तामणिनिर्मितगवाक्षयुक्तम्। घण्टाजालैः परिक्षिप्तम् चतुर्षु पार्श्वेषु किङ्किणीजालयुक्तम्, कोणेषु घण्टाजालयुक्तम्, अत एव मधुरस्वनम् ॥ २५–२८ ॥

गो० टी०–यन्मेर्विन्यादिश्लोकत्रयमेकान्वयम्। मुक्तारजतसन्निभैः तद्वन्निर्मलैरित्यर्थः। स्फाटिकचित्राङ्गैः स्फाटिकमयविचित्रावयवैः। महाधनैः महामूल्यैः॥ २९–३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने चतुर्विंशत्युत्तरशततमः सर्गः ॥१२४॥

---

[1] राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः। तं विमानं समादाय तूर्णं प्रति निवर्ततेति गो. पा.। [2] बहुभिरिति गो. पा.। [3] इदं पद्यं गो. पु. न दृश्यते।

## द्वाविंशत्यधिकशततमः सर्गः ।

भो राघव विमानमानीतमन्यत्किं करवाणीति बिभीषणेनानुयुक्तो दाशरथिर्धनरत्नप्रदानेनेमे कृतकृत्याः कपयो पूज्यन्तामित्यादिश्य तेन तथा कारयित्वा च सजानकीलक्ष्मणः स्वयं विमानमारुह्य यदा निष्क्रान्तस्तदा सर्वेषां स्वेन सह जिगमिषां विज्ञाय तुष्टस्तैरपि तदारोप्य वैहायसपथेन प्रस्थितः ।

उपस्थितं तु तं कृत्वा पुष्पकं पुष्पभूषितम् । अविदूरे स्थितो राममित्युवाच विभीषणः ॥ १ ॥
स तु बद्धाञ्जलिपुटो विनीतो राक्षसेश्वरः । अब्रवीत्त्वरयोपेतः किं करोमीति राघवम् ॥ २ ॥
तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः । विमृश्य राघवो वाक्यमिदं स्नेहपुरस्कृतम् ॥ ३ ॥
कृतप्रयत्नकर्माणः सर्व एव वनौकसः । रत्नैरर्थैश्च विविधैः संपूज्यन्तां विभीषण ॥ ४ ॥
सहामीभिस्त्वया लङ्का निर्जिता राक्षसेश्वर । हृष्टैः प्राणभयं त्यक्त्वा सङ्ग्रामेष्वनिवर्तिभिः ॥ ५ ॥
त इमे कृतकर्माणः सर्व एव वनौकसः । धनरत्नप्रदानैश्च कर्मैषां सफलं कुरु ॥ ६ ॥
एवं संमानिताश्चैते नन्द्यमाना यथा त्वया । भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ७ ॥
त्यागिनं संग्रहीतारं सानुक्रोशं जितेन्द्रियम् । सर्वे त्वामभिगच्छन्ति ततः संबोधयामि ते ॥ ८ ॥

१ ] ति० टी०—अविदूरे स्थितत्वादिविशेषणो विभीषणः पुष्पकमुपस्थितमासन्नं कृत्वा तं राममित्युवाच ॥ १ ॥

रा० टी०—विभीषणकर्तृकपुष्पकप्रापणानन्तरकालिकं वृत्तान्तमाह—उपस्थितमित्यादिभिः । विभीषणः पुष्पैर्भूषितं पुष्पकमुपस्थितं कृत्वा राममित्युवाच ॥ १ ॥

गो० टी०—अथ वानरसेनासम्माननम्—उपस्थितमित्यादि । तं दृष्ट्वा दर्शयित्वा । तत्कृत्वेति वा पाठः । प्रत्युवाच विमानमागतमितीति शेषः । स त्विति द्वितीयश्लोकसंग्रहो वायं श्लोकः ॥ १ ॥

२ ] ति० टी०—कथमुवाचेत्यतः—अब्रवीदिति ॥ २ ॥

रा० टी०—तदेव भङ्ग्यंतरेणाह—स इति । त्वरयोपेतो विभीषणः किं करोमीति राघवमब्रवीत् ॥ २ ॥

गो० टी०—स त्विति । त्वरयोपेतः आदरोपेत इत्यर्थः । किं करोमीति । इतः परं किं करवाणीत्यर्थः ॥ २ ॥

३ ] ति० टी०—तं किं करोमीत्युक्तवन्तम् । उपशृण्वतो लक्ष्मणस्य । अग्रे इति शेषः ॥ ३ ॥

रा० टी०—तमिति । राघवो विमृश्य विचार्य स्नेहपुरस्कृतमिदं वाक्यमब्रवीत् ॥ ३ ॥

गो० टी०—तमिति । लक्ष्मणस्योपशृण्वतः लक्ष्मणसंमतिपूर्वकमित्यर्थः ॥ ३ ॥

४ ] ति० टी०—कृतं प्रयत्नेन कर्म युद्धकर्म यैस्ते । अर्थैर्विविधान्नपानवस्त्रादिभिः ॥ ४ ॥

रा० टी०—तदाकारमाह—कृतेति । कृतानि प्रयत्नेन अत्युद्योगेन कर्माणि व्यापारा यैः ते वनौकसः रत्नैरर्थैस्तदितरद्रव्यादिभिश्च संपूज्यन्ताम् ॥ ४ ॥

गो० टी०—कृतेति । प्रयत्नकर्म प्रयत्नसाध्यं कर्मेत्यर्थः । अर्थैः प्रयोजनैः वस्त्रादिभिरित्यर्थः ॥ ४ ॥

५-६ ] ति० टी०—अमीभिः सह लङ्का निर्जितेत्यनेन तव लङ्काप्राप्तिर्वानरपराक्रमादेवेत्युक्तम् । प्राणभयं त्यक्त्वा हृष्टैर्युद्धोत्साहवद्भिः ॥ ५ ॥ ६ ॥

रा० टी०—तदेव भंग्यंतरेणाह—सहेति । प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्तिभिर्यैरमीभिस्सह त्वया लंका निर्जितास्ते वानरास्साधु पूज्यन्ताम् अत एव धनरत्नप्रदानैः एषां कर्म सफलं कुरु श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—सहेति । अजिता पूर्वं सुरादिभिरप्यजिता । तव लङ्काराज्यप्राप्तिरेव तदधीनेत्यर्थः । हृष्टैः मयि प्रीतिमद्भिरित्यर्थः ॥ ५ ॥ ६ ॥

गो० टी०—त इम इत्यर्थोक्तं भङ्ग्यन्तरेणाह—धनरत्नेति ॥ ७ ॥

७ ] ति० टी०—यथा यथान्यायं त्वया कृतज्ञेन नन्द्यमाना निर्वृताः सुखिनो भविष्यन्ति ॥ ७ ॥

रा० टी०—एवमिति । त्वया एवं सम्मानिताः वनौकसः निर्वृत्ताः प्राप्तानन्दा भविष्यन्ति ॥ ७ ॥

गो० टी०—एवमिति । निर्वृताः सुखिताः । निर्वृत्ता इति पाठे निष्पन्नाः परिपूर्णा इति यावत् ॥ ८ ॥

८ ] ति० टी०—त्वां तत्सत्कारसमर्थम् । तेषां च सत्कारप्रियत्वं ज्ञात्वैव त्वां तत्सत्कारे नियुञ्ज इत्याह—त्यागिनमिति । उचितविषय इति शेषः । संग्रहीतारं यथाकालं यथान्यायम् । रत्नादेरिति शेषः ॥ ८ ॥

रा० टी०—इमे अवश्यं सत्करणीया इति बोधयन्नाह—त्यागिनमिति द्वाभ्याम् त्यागिनं देशकालादिप्राप्तौ दातारं संग्रहीतारं प्रजादिभ्यो यथान्यायं ग्रहीतारं सानुक्रोशं दयावन्तं त्वां सर्वे वानराः अभिगच्छन्ति ततः संबोधयामि सम्बोध्य दापयामि ॥ ८ ॥

१ बद्धाञ्जलिः प्रह्व इति गो. रा. पा. । २ यभिरजितेति गो. पा. । ३ पूज्यन्तां सर्ववानरा इति गो. पूज्यन्तां साधु वानरा इति रा. पा. ।

हीनं रतिगुणैः सर्वैरभिहन्तारमाहवे। सेना त्यजति संविग्ना नृपतिं तं नरेश्वर ॥ ९ ॥
एवमुक्तस्तु रामेण वानरांस्तान्विभीषणः। रत्नार्थसंविभागेन सर्वानेवाभ्यपूजयत् ॥ १० ॥
ततस्तान्पूजितान्दृष्ट्वा रत्नार्थैर्हरियूथपान्। आरुरोह तदा रामस्तद्विमानमनुत्तमम् ॥ ११ ॥
अङ्केनादाय वैदेहीं लज्जमानां मनस्विनीम्। लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ १२ ॥
अब्रवीत्स विमानस्थः पूजयन्सर्ववानरान्। सुग्रीवं च महावीर्यं काकुत्स्थः सविभीषणम् ॥ १३ ॥
मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः। अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ॥ १४ ॥
यत्तु कार्यं वयस्येन स्निग्धेन च हितेन च। कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ॥ १५ ॥
किष्किन्धां प्रति याह्याशु स्वसैन्येनाभिसंवृतः। स्वराज्ये वस लङ्कायां मया दत्ते विभीषण ॥
न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः ॥ १६ ॥
अयोध्यां प्रति यास्यामि राजधानीं पितुर्मम। अभ्यनुज्ञातुमिच्छामि सर्वानामन्त्रयामि वः ॥ १७ ॥
एवमुक्तास्तु रामेण हरीन्द्रा हरयस्तथा। ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः ॥ १८ ॥

गो० टी०—अर्थव्ययेन खेदो मा भूदित्याह—त्यागिनमिति। संग्रहीतारं धनप्रदानेन मित्रसंग्रहकारिणमित्यर्थः। संग्रहार्थं त्यागित्वमुक्त्वा दयया त्यागित्वमाह—सानुक्रोशमिति। यशस्विनं त्यागकृतयशोवन्तम्। संबोधयामि न तु चोदयामीत्यर्थः ॥ ९ ॥

९ ] ति० टी०—सर्वै रतिगुणैर्दानमानादिलक्षणसेनारमणगुणैर्हीनं वृथैवाहवेऽभिहन्तारं घातयन्तं नृपतिं संविग्ना सेना हे नरेश्वर, त्यजति त्यजत्येव। अतो दानादिनैते सत्कार्या एवेति भावः ॥ ९ ॥

रा० टी०—अदाने दोषमाह—हीनमिति। रतिगुणैः रतिरूपगुणोत्पादकैस्सर्वैः दानमानादिभिः हीनं रहितमभिहंतारमनुचितवचनादिभिः ताडयन्तं नृपतिम् सेना आहवे त्यजति ॥९॥

१०-१४ ] ति० टी०—रत्नार्थैः। रत्नैरर्थैर्धनैश्च संविभागेन यथार्हमंशकल्पनयेत्यर्थः। सर्ववानरपूजार्थं दिनद्वयं वासः। भारतेऽपि—'ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः। तत्रैवोवास धर्मात्मा सहितस्तत्र वानरैः। अथैतान्वानरान्दृष्ट्वा स संमान्याभिपूज्य च। विसर्जयामास तदा रत्नैः संतोष्य सर्वथा॥' इत्युक्तम् ॥ १०-१४ ॥

रा० टी०—एवमिति। रामेण एवमुक्तो विभीषणः रत्नार्थयोः संविभागेन यथोचितसंकलनया सर्वान् अभ्यपूजयत्॥१०

रा० टी०—तत इति। रामः हरियूथपान् पूजितान् दृष्ट्वा लज्जमानां स्वाभाविकमहाकुलोचितलज्जाविशिष्टां वैदेहीमङ्केनादाय विमानमारुरोह श्लोकद्वयमेकान्वयि ॥११॥१२॥

रा० टी०—अब्रवीदिति। विमानस्थः काकुत्स्थः सविभीषणं सुग्रीवं सर्ववानरांश्च पूजयन्सन् अब्रवीत् ॥ १३ ॥

रा० टी०—तदाकारमाह—मित्रेत्यादिभिः। मया अनुज्ञातास्सर्वे यूयं यथेष्टं प्रतिगच्छत ॥ १४ ॥

गो० टी०—सैनिकसम्मानाकरणे दोषमाह—हीनमिति। नृपतिं स्वामिनमपि रतिगुणैः प्रीतिकरैरौदार्यादिगुणैः, हीनम् अभिहन्तारं हिंसनशीलम् प्रसादं विना क्रोधैकनिरतमिति यावत्। तं नरेश्वरं सैन्याः संविग्नाः आहवे त्यजन्तीति योजना ॥ १० ॥

गो० टी०—एवमिति। संविभागेन यथार्हमंशकल्पनया। समतया प्रदाने अधिकानां कोपप्रसङ्गादिति भावः ॥ ११ ॥

गो० टी०—तत इत्यादिश्लोकद्वयमेकान्वयम् ॥ ततः पूजानन्तरं, ततः पूजादर्शनादेव हेतोरिति ततःशब्दद्वययोजना। लज्जमानां सदस्यङ्कारोहणाय *लज्जन्तीम्। रामेणाङ्कारोपणं च स्त्रीसहायरहितत्वात्। धनुष्मता रामधनुर्धारिणा ॥१२॥१४॥

गो० टी०—अब्रवीदित्यत्र संग्रहेणोक्तं विवृणोति—मित्रेत्यादिना। वानरान् प्रत्याह—मित्रेति ॥ १९ ॥

१५ ] ति० टी०—अधर्मभीरुणेति छेदः ॥ १५ ॥

रा० टी०—यदिति। वयस्येन सख्या यत् कार्यं तत्सर्वं भवता कृतम् ॥ १९ ॥

गो० टी०—सुग्रीवं प्रत्याह—यत्त्वित्यादिना। सुहृदा शोभनहृदयेन। वाशब्द एवकारार्थः। अधर्मभीरुणेति छेदः ॥ १६ ॥ १७ ॥

१६-१८ ] ति० टी०—सेन्द्रा दिवौकसोऽपि न त्वां धर्षयितुं शक्ताः। मत्प्रसादादिति भावः न तेभ्य एव किन्तु राक्षसानां भयम् ॥ १६-१८ ॥

रा० टी०—किष्किंधामिति। स्वसैन्येनाभिसंवृतस्सुग्रीवस्त्वं किष्किंधां प्रति याहि हे विभीषण त्वं स्वराज्ये लंकायां वस त्वां धर्षयितुं दिवौकसोऽपि न शक्ताः सार्द्धश्लोक एकान्वयी ॥ १६ ॥

रा० टी०—अयोध्यामिति। अहमयोध्यां प्रति यास्यामि अतः अभ्यनुज्ञातुं भवत्सम्मतिं ग्रहीतुमिच्छामि अत एव वो युष्मान् आमन्त्रयामि बोधयामि ॥ १७ ॥

रा० टी०—एवमिति। एवमुक्ताः वानराः विभीषणश्च ऊचुः ॥ १८ ॥

१ यशस्विनीमिति गो. पा.। * अत्र शानृप्रत्ययो न युक्त इति भाति।

अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान् । मुदुयुक्ता विचरिष्यामो वनान्युपवनानि च ॥ १९ ॥
दृष्ट्वा त्वामभिषेकार्हं कौसल्यामभिवाद्य च । अचिरादागमिष्यामः स्वगृहान्नृपसत्तम ॥ २० ॥
एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः । अब्रवीद्वानरान्रामः ससुग्रीवविभीषणान् ॥ २१ ॥
प्रियात्प्रियतरं लब्धं यदहं ससुहृज्जनः । सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥ २२ ॥
क्षिप्रमारोह सुग्रीव विमानं सह वानरैः । त्वमप्यारोह सामात्यो राक्षसेन्द्र विभीषण ॥ २३ ॥
ततः स पुष्पकं दिव्यं सुग्रीवः सह वानरैः । आरुरोह मुदा युक्तः सामात्यश्च विभीषणः ॥ २४ ॥
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् । राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ॥ २५ ॥
खेगतेन विमानेन हंसयुक्तेन भास्वता । प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत् ॥ २६ ॥
ते सर्वे वानरर्क्षाश्च राक्षसाश्च महाबलाः । यथासुखमसंबाधं दिव्ये तस्मिन्नुपाविशन् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वाविंशत्यधिकशततमः सर्गः ॥ १२२ ॥

गो० टी०—विभीषणं प्रत्याह—स्वैति ॥ स्वराज्ये वस न तु परकीयं रावणवदाक्रमितव्यम् । अतो जनस्थानरक्षिणः समानेतव्या इति भावः ॥ १८–२० ॥

गो० टी०—अयोध्यामिति । उद्युक्ताः सावधानाः । जनपदपीडामकुर्वन्त इत्यर्थः ॥ २१–२३ ॥

१९ ] ति० टी०—मुदुयुक्ता हर्षयुक्ताः ॥ १९ ॥

रा० टी०—तदाकारमाह—अयोध्यामिति । द्वाभ्यामयोध्यां गंतुमिच्छामः अतो भवान् नयतु गमने प्रयोजनमाह मुदा हर्षेण युक्ता वयं वनान्युपवनानि च विचरिष्यामः ॥१९॥

२०–२१ ] ति० टी०—अभिषेकार्हं त्वां दृष्ट्वा तवैव सर्वेषामस्माकं मातरं कौसल्यामभिवाद्य च ॥ २० ॥ २१ ॥

रा० टी०—दृष्ट्वेति । अभिषेकार्हं त्वां दृष्ट्वा स्वगृहान् आगमिष्यामः ॥ २० ॥

रा० टी०—एवमिति । एवमुक्तो राघवोऽब्रवीत् ॥२१॥

२२–२४ ] ति० टी०—प्रियात्प्रियतरम् । प्रथमतः कृतकृत्यस्यायोध्याप्रवेशनमेव प्रियम्, तत्रापि सुहृद्भिर्भवद्भिः सहितो भरतादिभिः सह प्रीतिं लप्स्ये । राज्याभिषेकसंतोषं लप्स्ये इत्यर्थः ॥ २२–२४ ॥

रा० टी०—तदाकारमाह—प्रियादिति द्वाभ्याम् यतः ससुहृज्जनोऽहं गमिष्यामीति शेषः अतः प्रियात्प्रियतरमतिप्रियमित्यर्थः लब्धं तत्र हेतुः भवद्भिः सहितः पुरीं गतोऽहं प्रीतिं भवत्प्रसन्नतां लप्स्ये ॥ २२ ॥

रा० टी०—क्षिप्रमिति । हे सुग्रीव हे विभीषण आरोह ॥ २३ ॥

रा० टी०—तत इति । सेनया सह सामात्यः सुग्रीवो विभीषणश्च पुष्पकमारुरोह ॥ २४ ॥

गो० टी०—प्रियात्प्रियतरमिति । सीतालाभः प्रियं, भरतदर्शनं प्रियात्प्रियम्, भवद्भिः सह पुरप्रवेशः प्रियात्प्रियतरमित्यर्थः ॥ २४ ॥ २५ ॥

गो० टी०—तत इति । शीघ्रं शीघ्रगमिति विमानविशेषणम् । त्वरन्निति सुग्रीवविशेषणात् ॥ २६ ॥

२५ ] ति० टी०—परमासनमुत्तमयानम् ॥ २५ ॥

रा० टी०—तेष्विति । कौबेरं परमासनं विमानं राघवेणाभ्यनुज्ञातं सत् उत्पपात ॥ २५ ॥

गो० टी०—तेष्विति । आसनं वाहनम् ॥ २७ ॥

२६ ] ति० टी०—हंसयुक्तेनेति । हंसशब्देन वाहकत्वाकारेण निर्मितहंसप्रतिमा उच्यत इति व्याख्यातारः । प्रहृष्टो हृष्टरोमा । प्रतीतः प्रहृष्टचित्तः ॥ २६ ॥

रा० टी०—खेति । हंसयुक्तेन विमानेनोपलक्षितो रामः कुबेरवद्बभौ ॥ २६ ॥

गो० टी०—ययाविति । हंसयुक्तेन प्रतिमारूपहंसयुक्तेन । प्रतीतः श्लाघितः ॥ २८ ॥

२७ ] ति० टी०—असंबाधमित्यनेन विमानस्य वैपुल्यमुक्तम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे द्वाविंशत्यधिकशततमः सर्गः ॥ १२२ ॥

रा० टी०—ते इति । ते वानरादयः असंबाधं यथा भवति तथा तस्मिन्पुष्पके उपाविशन् ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे चतुर्विंशत्यधिकशततमः सर्गः ॥१२४॥

गो० टी०—ते सर्वे इति । यथासुखमसंबाधमिति पदद्वयेन दिव्यस्य पुष्पकस्य अपेक्षितावकाशप्रदत्वं गम्यते ॥२९॥

इति श्रीगो० श्रीरामाय० रत्नकिरीटाख्याने युद्ध० पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥

१ उद्युक्ता इति गो. पा. । २ अप्यारोहत्वरन् शीघ्रमिति गो. पा. । ३ ययौ तेनेति. गो. पा. ४ वानरा हृष्टा इति गो. पा. ।

## त्रयोविंशत्यधिकशततमः सर्गः ।

विमानमारुह्य व्योमाध्वना प्रस्थितो जानकीजानिरियं लङ्कात्र रोमहर्षणो रणोऽत्र कुम्भकर्णोऽत्र तदग्रजो हत इत्यादि तत्तत्स्थलानि सीतां दर्शयन्क्रमेण किष्किंधां प्राप्य कपियोषितोऽपि मामनुयन्त्विति वैदेह्यभिलषितमनुमन्यमानस्ता अपि पुष्पकमारोप्य भूयः प्रियं ऋष्यमूकोऽयं यत्र सुग्रीवेण संगतोऽहमिति क्रमेण भरतागमस्थलादीन्यपि प्रदर्श्यान्तेऽयोध्यां प्रादर्शयत् ।

अनुज्ञातं तु रामेण तद्विमानमनुत्तमम् । हंसैयुक्तं महानादमुत्पपात विहायसम् ॥ १ ॥
पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः । अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥ २ ॥
कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् । लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा ॥ ३ ॥
एतदायोधनं पश्य मांसशोणितकर्दमम् । हरीणां राक्षसानां च सीते विशसनं महत् ॥ ४ ॥
एष दत्तवरः शेते प्रमाथी राक्षसेश्वरः । तव हेतोर्विशालाक्षि निहतो रावणो मया ॥ ५ ॥
कुम्भकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः । धूम्राक्षश्चात्र निहतो वानरेण हनूमता ॥ ६ ॥
विद्युन्माली हतश्चात्र सुषेणेन महात्मना । लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे ॥ ७ ॥
अङ्गदेनात्र निहतो विकटो नाम राक्षसः । विरूपाक्षश्च दुष्प्रेक्षो महापार्श्वमहोदरौ ॥ ८ ॥
अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः । त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥ ९ ॥
युद्धोन्मत्तश्च मत्तश्च राक्षसप्रवरावुभौ । निकुम्भश्चैव कुम्भश्च कुम्भकर्णात्मजौ बली ॥ १० ॥
वज्रदंष्ट्रश्च दंष्ट्रश्च बहवो राक्षसा हताः । मकराक्षश्च दुर्धर्षो मया युधि निपातितः ॥ ११ ॥
अकम्पनश्च निहतः शोणिताक्षश्च वीर्यवान् । यूपाक्षश्च प्रजङ्घश्च निहतौ तु महाहवे ॥ १२ ॥
विद्युज्जिह्वोऽत्र निहतो राक्षसो भीमदर्शनः । यज्ञशत्रुश्च निहतः सुप्तघ्नश्च महाबलः ॥ १३ ॥
सूर्यशत्रुश्च निहतो ब्रह्मशत्रुस्तथापरः । अत्र मन्दोदरी नाम भार्या तं पर्यदेवयत् ॥ १४ ॥

---

१ ] ति० टी०—अनुज्ञातमिति ॥ १ ॥

रा० टी०—विमानारोहणानन्तरकालिकं वृत्तान्तमाह—अनुज्ञातमित्यादिभिः । रामेणानुज्ञातं विमानं विहायसमाकाशमुत्पपात तन्मार्गेण जगामेत्यर्थः ॥ १ ॥

गो० टी०—अथ विलासेन सीतायै तत्तद्देशप्रदर्शनम्—अनुज्ञातं त्वित्यादि ॥ १ ॥

२–३ ] ति० टी०—पातयित्वा संचार्य ॥ २ ॥ ३ ॥

रा० टी०—पातयित्वेति । रामः चक्षुस्सर्वत्र पातयित्वा प्रसार्य मैथिलीमब्रवीत् ॥ २ ॥

रा० टी०—तदाकारमाह—कैलासेत्यादिभिः । त्रिकूटशिखरस्थितां लंकामीक्षस्व ॥ ३ ॥

गो० टी०—पातयित्वेति । मैथिलीं राजपुत्रीलालनीयत्वोक्तिः ॥ २–३ ॥

४ ] ति० टी०—आयोधनं युद्धभूमिम् । महद्विशसनं वधसाधनभूतम् ॥ ४ ॥

रा० टी०—एतदिति । विशसनं वधसाधकमत एव मांसशोणिताभ्यां कर्दमो यस्मिन् तदायोधनं युद्धस्थानं पश्य ॥४॥

गो० टी०—एतदिति । आयोधनं युद्धभूमिम् । विशस्यन्तेऽस्मिन्निति विशसनम् । अधिकरणे ल्युट् ॥ ४ ॥

५–७ ] ति० टी०—प्रमाथी प्रमथनशीलः । एष इति तद्दाहभूमिदर्शनम् । अग्रेऽपि सर्वत्र तत्तद्युद्धभूमिप्रदर्शनमेव । अत्युच्चस्थत्वाद्विमानस्य सर्वयुद्धभूमिप्रत्यक्षं युगपत् ॥ ५ ॥ ७ ॥

रा० टी०—एष इति । मया निहतो रावणः शेते ॥ ५ ॥

गो० टी०—अत्रेति । दत्तवरः ब्रह्मणा दत्तवरः, प्रमाथी हिंसकः, शेते । भस्मस्वरूपेणेत्यर्थः ॥ ५ ॥

रा० टी०—कुम्भकर्ण इति । धूम्राक्षस्तु हनूमता निहतः ६

गो० टी०—कुम्भकर्ण इति । प्रहस्तश्चेत्यत्र नीलेनेत्यध्याहार्यम् ॥ ६ ॥

रा० टी०—विद्युन्मालीति । लक्ष्मणेन इन्द्रजित् निहतः ७

गो० टी०—विद्युन्मालीति । पूर्वमनुक्तमपि अत्रानुवादात् ग्राह्यम् । एवं विकट इत्यत्रापि ॥ ७ ॥ ८–१० ॥

८–९ ] ति० टी०—अङ्गदेन विकटो हत इत्यनुवादात्तदपि जातमिति बोध्यम् ॥ ८ ॥ ९ ॥

रा० टी०—अङ्गदेनेति । विकटः अङ्गदेन निहतः ॥ ८ ॥

रा० टी०—अकम्पन इति । अकम्पनो निहतः त्रिशिरःप्रभृतयो अन्ये च निहताः ॥ ९ ॥

१० ] ति० टी०—बली बलिनौ ॥ १० ॥

रा० टी०—युद्धोन्मत्त इति ॥ १० ॥

११–१४ ] ति० टी०—दंष्ट्रनामा कश्चिदनुवादात् ॥ ११ ॥ १४ ॥

रा० टी०—वज्रदंष्ट्र इति । मकराक्षो मया निपातितः ११

---

१ उत्पपात महामेघः श्वसनेनोद्धतो यथेति गो. पा. । २ अत्रेति गो. पा. । ३ दुर्धर्षं इति गो. पा. । ४ इत आरभ्य श्लोकपञ्चकं गो. पु. न दृश्यते ।

सपत्नीनां सहस्रेण साग्रेण परिवारिता । एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने ॥ १५ ॥
यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयम् । एष सेतुर्मया बद्धः सागरे लवणार्णवे ॥ १६ ॥
तव हेतोर्विशालाक्षि नलसेतुः सुदुष्करः । पश्य सागरमक्षोभ्यं वैदेहि वरुणालयम् ॥ १७ ॥
अपारमिव गर्जन्तं शङ्खशुक्तिसमाकुलम् । हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ॥ १८ ॥
विश्रमार्थं हनुमतो भित्त्वा सागरमुत्थितम् । एतत्कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् ॥ १९ ॥
अत्रै[2] पूर्वं महादेवः प्रसादमकरोद्विभुः । एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः ॥ २० ॥

रा० टी०-अकम्पन इति । अयमकम्पनोन्य इति न पौनरुक्त्यम् ॥ १२ ॥

रा० टी०-विद्युज्जिव्ह इति ॥ १३ ॥

रा० टी०-सूर्येति । अर्धं पृथक्-अत्रेति । साग्रेण किंचिदधिकेन सपत्नीनां सहस्रेण परिवारिता मन्दोदरी तं रावणं पर्यदेवयत् व्यलपत् ॥ १४ ॥

१५ ] ति० टी०-साग्रेण सहस्रादप्यधिकयुक्तेन । तीर्थमवतारः ॥ १५ ॥

रा० टी०-एतदिति । यत्र सागरमुत्तीर्य तां रात्रिं वयमुषिताः तदेतत् समुद्रस्य तीर्थं घट्टो दृश्यते ॥ १५ ॥

गो० टी०-एतत्त्विति । तीर्थम् उत्तरणस्थानम् । यत्र तीर्थे, तां रात्रिं सागरतरणरात्रिम् ॥ ११ ॥

१६ ] ति० टी०-यत्रावतारे तां रात्रिं समुद्रोत्तरणदिवसरात्रिम् ॥ १६ ॥

रा० टी०-एष इति । मया बद्धः एष सेतुः नलसेतुर्भवति नलेनैव कारित इत्यर्थः तद्विशेषणं सुदुष्करः नलभिन्नेन कर्तुमशक्यः ॥ १६ ॥

गो० टी०-एष इति । सागरे सागरखानिते । सलिलेति क्षीरोदादिव्यावृत्तिः । एष सेतुः, नलसेतुः नलबद्धः । "षिञ्, बन्धने" इति धातुः । एतेन नलसेतुः सेतुरित्युक्त्या पूर्वकल्पकृतसेत्वन्तरं व्यावर्त्यते इति प्रत्युक्तम् । पूर्वमेव सेतुसत्त्वे पुनः सेतुकरणवैयर्थ्यात् ॥ १२ ॥

१७ ] ति० टी०-नलसेतुर्मन्नियुक्तनलकृतः सेतुर्नलसेतुः । सुदुष्करः । तदतिरिक्तेनेति भावः ॥ अथ वरुणालयत्वादिविशेषणं सागरं पश्य ॥ ॥ १७ ॥

रा० टी०-पश्येति । अभिगर्जन्तमपारं सागरं पश्य ॥ १७ ॥

गो० टी०-पश्येति । अपारं मध्ये द्वीपभूतपाररहितम् ॥ १३ ॥

१८ ] ति० टी०-अथ सागरमध्यप्रदेशागमनकाले मैनाकं दर्शयति—हिरण्यनाभमिति । काञ्चनं काञ्चनप्रचुरं तद्वर्णं च ॥ १८ ॥

रा० टी०-हिरण्येति । हनुमतो विश्रमार्थं सागरं भित्वोत्थितं हिरण्यनाभं शैलेन्द्रं समुद्रस्य कुक्षौ पश्य स्कंधावारस्य सेनासमूहस्य निवेशनं निवासस्थानं च पश्य सार्द्धश्लोक एकान्वयी ॥ १८ ॥ १९ ॥

गो० टी०-हिरण्येति । हिरण्यनाभं मैनाकम् ॥ १४ ॥

१९ ] ति० टी०-एतन्मैनाकपर्वतस्वरूपम् । समुद्रस्य कुक्षौ वर्तते इति शेषः । एतदित्यावर्तते । एतत्स्कन्धावारनिवेशनं सेनानिवेशनम् । समुद्रोत्तरतीरस्थमिति शेषः ॥ १९ ॥

गो० टी०-एतदित्यर्धम् । कुक्षौ मध्ये । सेतूपरीति शेषः । स्कन्धावारनिवेशनं स्कन्धावारनिवेशनरूपस्थानम् । स्कन्धावारः शिबिरम् ॥ १५ ॥

गो० टी०-एतत्त्वित्यादि सार्धश्लोकमेकं वाक्यम् ॥ पूजितं पूजितुमर्हम् । पूर्वं सेतोर्दक्षिणकोटिरुक्ता । अत्रोत्तरकोटिरिति ज्ञेयम् । अनुगृह्णाति—एतदिति । पवित्रं पावनम् । महापातकनाशनं च । भविष्यतीति शेषः ॥ १६ ॥

२० ] ति० टी०-अत्र पूर्वमिति । अत्र सेतुमूले । ... बन्धनात्पूर्वं विभुर्महादेवो मम रामस्य प्रसादमकरोन्मत्स्थापितत्वेनात्र स्थितोऽभूत् । सेतोर्निर्विघ्नतासिद्ध्यै समुद्रप्रसादानन्तरं शिवस्थापनं रामेण कृतमिति गम्यते । अत्र स्थले महात्मनः सागरस्य तीर्थं सेतुनिर्माणमूलप्रदेशत्वात्सेतुबन्ध इति ख्यातं भविष्यतीति शेषः । तथा त्रैलोक्येन पूजितं च भविष्यति ॥ २० ॥

रा० टी०-अत्रेति । अत्र अस्मिन् सेतुमूलभूतदेशे महादेवः महाशम्भुः प्रसादमतिप्रीतिमकरोत् एतेन नीलादिवत् महादेवोऽपि सेतुबंधनसाहाय्यं कृतवान् इति सूचितम् तेन शिवस्य रामे अतिप्रीतिस्सूचिता अत एव स्वसाहाय्यसूचनार्थमिदानीमपि तत्र तस्य स्थितिः प्रसिद्धा यद्वा अत्र अस्मिन् देशे महादेवः प्रसादं प्रहर्षेण सादं प्राप्तिं स्वनित्यस्थितिमित्यर्थः अकरोत् सेतुरक्षणार्थं ममाज्ञया अत्रैव स्थित इत्यर्थः न च प्रसन्नतादौ रूढस्य प्रसादशब्दस्य कथमुक्तोर्थ इति वाच्यम् योगवृत्तिस्वीकारे बाधकाभावात् अत एव यौगिकार्थमादाय पङ्कजशब्दादीनां शुक्तिकादौ प्रवृत्तिः प्रदर्शिता नैयायिकादिभिः अत एव पुनर्भूर्यौगिकः पुंसीत्यादि ग्रंथाः संगच्छन्ते रामकर्तृकशिवस्थापनं पुराणेषु विस्तरतो निरूपितम् अत एव शम्भोः प्रीत्यै यो मयाकारि धर्मः स्वे स्वे काले माननीयो भवद्भिः नानावर्णान् भाविनो भूमिपालान् भूयो भूयो याचते रामचन्द्रः इति रामकृतः ताम्रपत्रलिखितः स्वतोविदीर्णदेवालयैकदेशान्निसृतः इदानींतनसार्वभौमेन वाराणसीं प्रेषितः श्लोकोपि संगच्छते ननु पूर्वमत्रुक्तेरिदं न युक्त-

१ निषेवितमिति गो. पा. । २ इदमर्धमेतत्तु दृश्यत इत्यादिसार्धश्लोकानन्तरं गो. पु. दृश्यते ।

सेतुबन्ध इति ख्यातं त्रैलोक्येन च पूजितम् । एतत्पवित्रं परमं महापातकनाशनम् ॥ २१ ॥
अत्र राक्षसराजोऽयमाजगाम विभीषणः । एषा सा दृश्यते सीते किष्किन्धा चित्रकानना ॥ २२ ॥
सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः । अथ दृष्ट्वा पुरीं सीता किष्किन्धां वालिपालिताम् २३ ॥

मिति तु न भ्रमितव्यम् । पूर्वमनुक्तत्वेऽपि अनयैवोक्त्या पूर्ववृत्तस्यानुमानेन पूर्वोक्त्यभावस्याकिंचित्करत्वेन युक्तत्वे बाधकाभावात् अत एव नयत्तमारीचवृत्तादीनां पूर्वमनुक्तत्वेऽप्युत्तरत्रोक्तेर्नाशङ्क्यम् यद्वा अत्र स्थितस्सन् महादेवः प्रसादं संशयास्पदीभूतरावणसाहाय्यगमननिरोधमकरोत् तथाच मेदिनीमूले प्रत्यन्तशैले च प्रसादस्त्ववरोधन इति एतेन पूर्वं शंभुप्रसादादुक्त्यायमर्थो न युक्त इत्याद्युक्तय आपाततो रमणीया इति दिक् अर्द्धं पृथक्-एतदिति । सेतुबन्ध इति ख्यातं त्रैलोक्येन पूजितम् महात्मनस्सागरस्य समीपे एतत् शिवात्मकं तीर्थं दृश्यते सेतुबन्धशब्दार्थस्तु सेतौ सेतुमूलदेशे बध्नाति संबन्धं प्राप्नोतीति ॥ २० ॥

गो० टी०—एवं लङ्कामारभ्य सेतुबन्धपर्यन्तमुक्त्वा ततः उत्तरे दर्भशयनस्थानं निर्दिशति—अत्र पूर्वमिति । महादेव इति समुद्रराज उच्यते, औचित्यात् । प्रभुः समुद्रजलाधिष्ठाता । प्रसादमकरोत् । सागरं शोषयिष्यामीति कुपितस्य मे प्रसादं प्रसन्नत्वम् अकरोत् । प्रसादस्तु प्रसन्नतेत्यमरः । न त्वत्र रुद्रो महादेवः । तेन पूर्वं प्रसादकरणस्योक्तेः । पूर्वोक्तानामेव ह्यत्रानुवादः कृतः न चाङ्गदेन विकटनिरसनस्य पूर्वमनुक्तत्वेऽपि यथानुवादात्तत्सिद्धिः, तथात्रापि भविष्यतीति वाच्यम् । तद्वदत्राविरोधाभावात् । उपलभ्यते हि विरोधः । तथाहि । तत्र प्रसादः किं सेतुनिर्माणकाले वा पुनरागमनकाले वा । नाद्यः । प्रसादकरणहेतुरावणवधादेरभावात्, पूर्वसिद्धसमुद्रप्रसादेनैवोपपत्तेश्च, महादेवसमाख्यायाः समुद्रप्रसादश्रुत्या बाधितुं युक्तत्वाच्च । न द्वितीयः । पूर्वशब्दविरोधात् । न च पूर्वमित्यस्य पूर्वकल्प इत्यर्थ इति वाच्यम् । आत्मानं मानुषं मन्य इति वदता सुग्रीवादिसन्निधौ स्वस्य विष्ण्ववतारत्वद्योतकपूर्ववृत्तोद्घाटनानौचित्यात् । पूर्वकल्पकृतसेतुसद्भावे पुनस्तन्निर्माणवैयर्थ्यात् किं च अत्रेतिपदस्य पूर्वश्लोकोक्तमकरकारितसेतुपरामर्शित्वमेवोचितम् । न तु पूर्वकल्पकृतसेतुपरामर्शित्वम् । तस्य सद्भावेप्यन्तरितत्वसंभवात् । ननु पुराणान्तरानुसारान्नदर्थपरत्वं युक्तम् । तथा हि कूर्मपुराणे—सेतुमध्ये महादेवमीशानं कृत्तिवाससम् । स्थापयामास वै लिङ्गं पूजयामास राघवः ॥ तस्य देवो महादेवः पार्वत्या सह शङ्करः । प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥ ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीह द्विजातयः । महापातकसंयुक्तास्तेषां पापं विनश्यति ॥ अन्यानि चैव पापानि तीरे तत्र महोदधेः । दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥ यावत्स्थास्यन्ति तरवो यावदेव च मेदिनी । यावत्सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥ स्नानं दानं जपः श्राद्धं भविष्यत्यक्षयं ततः । स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥ इत्युक्त्वा भगवान् वाचं परिष्वज्य च राघवम् । सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयतेति ॥ पाद्मे पुराणेऽपि—रामः पुष्पकादवरुह्य महादेवं प्रतिष्ठापितवान् सोऽस्मै प्रसन्नोऽभूदित्युच्यते । एतादृशपुराणवचनानुसारेणायं श्लोको लिङ्गप्रतिष्ठां बोधयतीति । मैवम् उक्तदोषविस्तारात्, इतिहासो हि परिग्रहातिशयात्, ग्रन्थसौष्ठवाच्च, इतिहासपुराणं पञ्चममित्यादौ अधिकाक्षरत्वेऽपि पूर्वप्रयोगेणाभ्यर्हितत्वाच्च । पुराणेभ्यो गरीयानिति वेदः प्राचेतसादासीदिति वेदमयत्वोक्त्या चतुर्मुखवरप्रदानमूलतया च प्रबलतरः । तद्विरोधे तामसपुराणवचनानि न प्रमाणानि । किं च पुराणं सर्गप्रतिसर्गादिष्वन्यपरमिति नेतिहासवत् पुरावृत्तकथने तात्पर्यवत् । अथवा, अस्मिन्सर्गे श्लोकाः प्रायशो व्यत्यस्ता दृश्यन्ते इत्युक्तारिप्रभृतिभिरुक्तम् । तथा चेदमर्धम् अत्र मन्दोदरीतिश्लोकानन्तरम् पठितव्यम् । तत्र च महादेवप्रसादः स्वपितृदर्शनमेव । अत एव भरतं प्रति हनुमत्प्रेषणावसरे वक्ष्यति महादेवप्रसादाच्च पित्रा मम समागममिति । पुराणान्तरं तु माहात्म्यप्रतिपादनपरं बोध्यमिति संक्षेपः ॥ १७ ॥

२१ ] ति० टी०—एतत्पवित्रं दर्शनात्सर्वपापविशोधनं विशिष्य महापातकस्यापि नाशनम् । ' सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ' इति स्मृतेः । कूर्मपुराणे रामचरिते तत्र स्थाने स्पष्टमेव लिङ्गस्थापनमुक्तम् । स्वस्थापितलिङ्गदर्शनेन ब्रह्महत्यादिपापक्षयो भविष्यतीति महादेववरदानं च स्पष्टमेवोक्तम् अत एवावधार्यं पूर्वं महादेवः प्रसादमकरोत्, ततः सेतुबन्धनं जातमित्यक्षरार्थः ॥ २१ ॥

रा० टी०—एतदिति । एतत् शिवात्मकं क्षेत्रं महापातकनाशनमस्तीति शेषः विभीषणोऽत्रैवाजगाम ॥ २१ ॥

२२-२३ ति० टी०—अत्र राक्षसराज आजगाम । अत्र सेतुबन्धतीर्थे चित्रकानना मधुवनादिदिव्यकाननोपेता या दृश्यते, एषा सुग्रीवस्य पुरी किष्किन्धा ॥ २२ ॥ २३ ॥

रा० टी०—एषेति । मया यत्र वाली हतः सा एषा किष्किन्धा दृश्यते ॥ २२ ॥

गो० टी०—अत्र राक्षसराज इति । अत्र समुद्रराजप्रसादप्रदेशादुत्तरतः ॥ १८ ॥

गो० टी०—एषेति । पम्पावनमधुवनाद्यपेक्षया चित्रकाननेत्युक्तिः ॥ १९ ॥

रा० टी०—अथेति । प्रणयस्य साधुना शोभनतया असति प्रकाशते सा सीता राममब्रवीत् ॥ २३ ॥

गो० टी०—अथेति । प्रणयसाध्वसा प्रणययुक्तसाध्वसवती प्रणतसाध्वसेति पाठे उपनतसाध्वसा । सुग्रीवादिसन्निधानात् प्रणयसाध्वसेति । प्रथमभाषणरूपत्वाद्वा ॥ २० ॥

अब्रवीत्प्रश्रितं वाक्यं रामं प्रणयसाध्वसा । सुग्रीवप्रियभार्याभिस्ताराप्रमुखतो नृप ॥ २४ ॥
अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम् । गन्तुमिच्छे सहायोध्यां राजधानीं त्वया सह ॥ २५ ॥
एवमुक्तोऽथ वैदेह्या राघवः प्रत्युवाच ताम् । एवमस्त्विति किष्किन्धां प्राप्य संस्थाप्य राघवः २६ ॥
विमानं प्रेक्ष्य सुग्रीवं वाक्यमेतदुवाच ह । ब्रूहि वानरशार्दूल सर्वान्वानरपुंगवान् ॥ २७ ॥
स्त्रीभिः परिवृताः सर्वे ह्ययोध्यां यान्तु सीतया । तथा त्वमेभिः सर्वाभिः स्त्रीभिः सह महाबल ॥ २८ ॥
अभित्वरय सुग्रीव गच्छामः प्लवगाधिप । एवमुक्तस्तु सुग्रीवो रामेणामिततेजसा ॥ २९ ॥
वानराधिपतिः श्रीमांस्तैश्च सर्वैः समावृतः । प्रविश्यान्तःपुरं शीघ्रं तारामुद्वीक्ष्य सोऽब्रवीत् ॥ ३० ॥
प्रिये त्वं सह नारीणां वानराणां महात्मनाम् । राघवेणाभ्यनुज्ञाता मैथिलीप्रियकाम्यया ॥ ३१ ॥
त्वर त्वमभिगच्छामो गृह्य वानरयोषितः । अयोध्यां दर्शयिष्यामः सर्वा दशरथस्त्रियः ॥ ३२ ॥
सुग्रीवस्य वचः श्रुत्वा तारा सर्वाङ्गशोभना । आहूय चाब्रवीत्सर्वा वानराणां तु योषितः ॥ ३३ ॥

२४-२५ ] ति० टी०—प्रणयसाध्वसा प्रणयः साध्वसं च भर्तुः स्नेहे प्रवर्तननिमित्तं यस्याः सा । ताराप्रमुखतस्ताराप्रमुखाभिः सुग्रीवस्य प्रियाभिर्भार्याभिः परिवृता गन्तुमिच्छे इच्छामि । अत्रैतदर्थमेकदिनवासः । अत एव भारतेऽङ्गदस्य यौवराज्याभिषेकोऽप्येतद्दिन उक्तः ॥ २४ ॥ २५ ॥

रा० टी०—तदाकारमाह—सुग्रीवेति । ताराप्रमुखतस्ताराप्रभृतिभिः सुग्रीवप्रियभार्याभिस्सह सहिता अन्येषामङ्गदादीनां स्त्रीभिश्च परिवृताहं त्वया सह अयोध्यां गन्तुमिच्छे सार्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०—सुग्रीवेत्यादिसार्धश्लोक एकान्वयः । अहं ताराप्रमुखतः ताराप्रमुखाभिः, सुग्रीवप्रियभार्याभिः सह अन्येषां वानरेन्द्राणां स्त्रीभिश्च परिवृता सती त्वया सह अयोध्यां गन्तुम् इच्छे इच्छामीति संबन्धः । आत्मनेपदमार्षम् ॥२१॥

२६-२८ ] ति० टी०—एवमस्त्विति तामुक्त्वा किष्किन्धां प्राप्य तत्र विमानं संस्थाप्य सुग्रीवं प्रेक्ष्य एतद्वक्ष्यमाणमुवाच तदेवाह—ब्रूहीति ॥ २६ ॥ २८ ॥

रा० टी०—एवमिति । राघवः एवमस्त्विति तां वैदेहीं प्रत्युवाच किष्किंधां प्राप्य विमानं संस्थाप्य सुग्रीवमेतदुवाच सार्धश्लोकस्तस्मिलितान्वयी ॥ २६ ॥ २७ ॥

गो० टी०—एवमित्यादिसार्धश्लोक एकान्वयः । एवमस्त्विति सीतां प्रत्युवाच । अथ किष्किन्धां प्राप्य विमानं संस्थाप्य सुग्रीवं प्रेक्ष्योवाचेति संबन्धः ॥ २२ ॥

रा० टी०—तदाकारमाह—ब्रूहीति द्वाभ्याम् सीतया सीताप्रीत्यर्थं स्त्रीभिः परिवृता सर्वे भवन्तः अयोध्यां यान्तु इति वानरपुंगवान् ब्रूहि ॥ २८ ॥

गो० टी०—ब्रूहीति । यान्त्वित्यत्र इतिकरणं द्रष्टव्यम् । सीतया निमित्तभूतया । सीताप्रियार्थमित्यर्थः ॥ २३ ॥

रा० टी०—तथेति । यथा वयं गच्छामः तथा त्वमपि सर्वाभिः स्त्रीभिः सहैव अभित्वरय शीघ्रं गच्छ ॥ २९ ॥

गो० टी०—तथा त्वमपीति । अत्र याहीति विपरिणामेन संबन्धः । अभित्वरस्व । किष्किन्धायां विलम्बो न कार्य इत्यर्थः ॥ २४ ॥

२९-३० ] ति० टी०—अभित्वरय । गन्तुमिति शेषः ॥ २९ ॥ ३० ॥

रा० टी०—एवमिति । तैर्वानरैः समावृतो वानराधिपतिः अन्तःपुरं प्रविश्य तारामुद्वीक्ष्य अब्रवीत् सार्धश्लोक एकान्वयी ॥ ३० ॥ ३१ ॥

गो० टी०—एवमुक्त इति । सर्वैः समावृतो वानराधिपतिरुक्त इत्यन्वयः ॥ २५ ॥

गो० टी०—प्रविश्येति । अर्धमेकं वाक्यम् । प्रवेशः सुग्रीवस्यैव, न तु वानराणाम् । भाषत अभाषत ॥ २६ ॥

३१ ] ति० टी०—वानराणां नारीणां सह । ताभिः सहेत्यर्थः षष्ठ्यार्षी ॥ ३१ ॥

३२-३३ ] ति० टी०—वानरयोषितो गृह्य गृहीत्वा गन्तुं त्वरां कुरु । सर्वाभिः सह गच्छामस्तासामयोध्यां दर्शयिष्यामः ॥ ३२ ॥ ३३ ॥

रा० टी०—तदाकारमाह—प्रिय इति । महात्मनां वानराणां नारीणां नारीभिः सहैव मैथिलीप्रियकाम्यया राघवेणाभ्यनुज्ञाता त्वं वानरयोषितो गृह्य गृहीत्वा त्वर वयमयोध्याममभिगच्छामः दशरथस्त्रियः दर्शयिष्यामः युष्मानिति शेषः श्लोकद्वयमेकान्वयि ॥ ३२ ॥ ३३ ॥

रा० टी०—सुग्रीवस्येति । तारा वानराणां योषित आहूय अब्रवीत् ॥ ३४ ॥

गो० टी०—प्रिये त्वमिति । नारीभिः स्त्रीभिः सह अनुज्ञाता । अयोध्यागमनं प्रतीति शेषः । त्वं च वानरस्त्रियश्चानुज्ञाता इत्यर्थः । नारीणामिति पाठे तृतीयार्थे षष्ठी ॥२७॥

गो० टी०—त्वरेति । गृह्य गृहीत्वा । आनीयेति यावत् । दर्शयिष्यामः द्रक्ष्यामः । दशरथस्त्रियः दशरथस्त्रियश्च ॥ २८ ॥

१ अन्येषेति गो. पा. । २ स्वदार-सहिता इति गो. पा. । ३ नारीभिरिति गो. पा. ।

सुग्रीवेणाभ्यनुज्ञाता गन्तुं सर्वैश्च वानरैः । मम चापि प्रियं कार्यमयोध्यादर्शनेन च ॥ ३४ ॥
प्रवेशं चैव रामस्य पौरजानपदैः सह । विभूतिं चैव सर्वासां स्त्रीणां दशरथस्य च ॥ ३५ ॥
तारया चाभ्यनुज्ञाताः सर्वा वानरयोषितः । नेपथ्यविधिपूर्वं तु कृत्वा चापि प्रदक्षिणम् ॥ ३६ ॥
अध्यारोहन्विमानं तत्सीतादर्शनकाङ्क्षया । ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः ॥ ३७ ॥
ऋष्यमूकसमीपे तु वैदेहीं पुनरब्रवीत् । दृश्यतेऽसौ महान्सीते सविद्युदिव तोयदः ॥ ३८ ॥
ऋष्यमूको गिरिवरः काञ्चनैर्धातुभिर्वृतः । अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ॥ ३९ ॥
समयश्च कृतः सीते वधार्थं वालिनो मया । एषा सा दृश्यते पम्पा नलिनीचित्रकानना ॥ ४० ॥
त्वया विहीनो यत्राहं विललाप सुदुःखितः । अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ॥ ४१ ॥
अत्र योजनबाहुश्च कबन्धो निहतो मया । दृश्यतेऽसौ जनस्थाने श्रीमान्सीते वनस्पतिः ॥ ४२ ॥
जटायुश्च[1] महातेजास्तव हेतोर्विलासिनि । रावणेन हतो यत्र पक्षिणां प्रवरो बली ॥ ४३ ॥

---

गो० टी०—सुग्रीवस्येति । सर्वाङ्गशोभनेत्यनेन पूर्वं स्वयमलंकृतवतीति गम्यते ॥ २९ ॥

३४ ] ति० टी०—सुग्रीवेणाभ्यनुज्ञाता यूयं सर्वैर्वानरैः स्वस्वभर्तृभिः सह गन्तुं त्वरयतेति शेषः किं च भवतीभिरयोध्यादर्शनेन ममापि प्रियं कार्यम् । तद्दर्शनं ममापि प्रियमिति भावः ॥ ३४ ॥

रा० टी०—तदाकारमाह—सुग्रीवेणेति । वानरैः स्वस्वपतिभिस्सह गन्तुं सुग्रीवेण अभ्यनुज्ञाता यूयमिति शेषः अतः अयोध्यादर्शनेन ममापि प्रियं कार्यं भवतीभिरिति शेषः एतेन अहमपि युष्माभिस्सहैव गन्तुमिच्छामीति सूचितम् ॥ ३५ ॥

गो० टी०—सुग्रीवेणेत्यादिश्लोकद्वयमेकान्वयम् । सुग्रीवेण सर्वैर्वानरैः स्वस्वभर्तृभिर्वानरैः सह, अयोध्यां गन्तुमभ्यनुज्ञाताः । यूयमिति शेषः । न केवलं सुग्रीवानुज्ञामात्रं मत्प्रियार्थं च भवतीभिरागन्तव्यमित्याह—मम चापीति । अयोध्यादर्शनेन मम यत्प्रियं तद्भवतीभिः सहागत्य कार्यमित्यर्थः । रामस्य प्रवेशं च दशरथस्य स्त्रीणां विभूतिम् ऐश्वर्यं च । द्रक्ष्याम इति शेषः ॥ ३० ॥ ३१ ॥

३५ ] ति० टी०—प्रवेशं चेति । पश्याम इति शेषः । दशरथस्त्रीणां विभूतिमैश्वर्यं च पश्यामः ॥ ३५ ॥

रा० टी०—तत्र गमने फलमाह—प्रवेशमिति । रामस्य प्रवेशादि द्रक्ष्याम इति शेषः ॥ ३६ ॥

३६ ] ति० टी०—नेपथ्यविधिरलंकारविधिः । प्रदक्षिणकरणं विमानस्य ॥ ३६ ॥

रा० टी०—तारयेति । वानरयोषितः नेपथ्यविधिः अलंकारकरणं पूर्वं यस्य तं प्रदक्षिणं विमानपरिक्रमणं कृत्वा सीतादर्शनकांक्षया विमानमध्यारोहन् सार्द्धश्लोक एकान्वयी ॥ ३७ ॥

गो० टी०—तारयेत्याद्यर्धत्रयमेकान्वयम् । नेपथ्यम् अलंकारम् । विधिपूर्वेण मङ्गलालम्भनादिविधिपूर्वकमित्यर्थः । अत्रालंकरणाह्वानादिना दिनमेकं गतमित्याहुः । प्रदक्षिणं कृत्वा । विमानस्येति शेषः । प्रादक्षिण्येन गमनमात्रमत्र विवक्षितम् । अतिविपुलस्य तस्य सद्यः प्रदक्षिणासंभवात् ॥ ३२ ॥

३७–४० ] ति० टी०—अत्र ताभिः सहोत्थितमित्यनेनाश्विनचतुर्थ्यां किष्किन्धायामुषित्वा पञ्चम्यां ततः प्रस्थानमिति गम्यते । उपरि पञ्चम्यां भरद्वाजाश्रमप्रवेशस्य वक्ष्यमाणत्वात् ॥ ३७ ॥ ४० ॥

रा० टी०—ताभिरिति । ताभिः स्त्रीभिस्सह उत्थितं विमानं राघवः प्रेक्ष्य वैदेहीं पुनरब्रवीत् ॥ ३८ ॥

रा० टी०—तदाकारमाह—दृश्यत इत्यादिभिः । ऋष्यमूको दृश्यते ॥ ३९ ॥

रा० टी०—अत्रेति । अत्र ऋष्यमूके सुग्रीवेणाहं समागतः वालिनो वधार्थं समयश्च मया कृतः ॥ ४० ॥

रा० टी०—एषेति । यत्र त्वया विहीनोऽहं विललाप सा एषा पम्पा दृश्यते ॥ ४१ ॥

गो० टी०—ताभिरिति । उत्थितमित्यनेन तारागमनपर्यन्तं भूमौ विमानं स्थितमिति ज्ञायते ॥ ३३ ॥ ३४ ॥

गो० टी०—अत्रेति । समयः संकेतः ॥ ३५ ॥

गो० टी०—एषेति । विललाप । लिङ्व्यत्ययमैकवचनम् ३६।३७

४१ ] ति० टी०—अस्यास्तीरे पम्पायास्तीरे ॥ ४१ ॥

रा० टी०—अस्या इति । अस्याः पंपायाः तीरे शबरी दृष्टा कबन्धो निहतश्च ॥ ४२ ॥

४२–४३ ] ति० टी०—अत्र पम्पोत्तरदेशे वनस्पतिर्जटायोरावासन्यग्रोधः ॥ ४२ ॥ ४३ ॥

रा० टी०—दृश्यते इति । यत्र रावणेन जटायुर्हतः सोऽसौ वनस्पतिः जनस्थाने दृश्यते सार्द्धश्लोक एकान्वयी ॥४३।४४

गो० टी०—दृश्यते चेत्यादिसार्धश्लोकमेकं वाक्यम् । श्रीमान् वनस्पतिः जटायुनिवासभूतो वटः । तस्य श्रीमत्त्वं महात्मना जटायुषाधिष्ठितत्वात् ॥ ३८ ॥

---

१ यत्र युद्धं महद्वृत्तं तव हेतोर्विलासिनि । रावणस्य नृशंसस्य जटायोश्च महात्मन इति गो. पा. ।

[ खरश्च निहतो यत्र दूषणश्च निपातितः । त्रिशिराश्च महावीर्यो मया बाणैरजिह्मगैः । ]
एतत्तदाश्रमपदमस्माकं वरवर्णिनि । पर्णशाला तथा चित्रा दृश्यते शुभदर्शने ॥ ४४ ॥
यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात् । एषा गोदावरी रम्या प्रसन्नसलिला शुभा ॥ ४५ ॥
अगस्त्यस्याश्रमश्चैव दृश्यते कदलीवृतः । [ दीप्तश्चैवाश्रमो ह्येष सुतीक्ष्णस्य महात्मनः । ]
दृश्यते चैव वैदेहि शरभङ्गाश्रमो महान् ॥ ४६ ॥
उपायतः सहस्राक्षो यत्र शक्रः पुरंदरः । एते ते तापसा देवि दृश्यन्ते तनुमध्यमे ॥ ४७ ॥
अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरोपमः । अस्मिन्देशे महाकायो विराधो निहतो मया ॥ ४८ ॥
अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी । असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते ॥ ४९ ॥
अत्र मां कैकयीपुत्रः प्रसादयितुमागतः । एषा सा यमुना रम्या दृश्यते चित्रकानना ॥ ५० ॥
भरद्वाजाश्रमः श्रीमान्दृश्यते चैष मैथिलि । इयं च दृश्यते गङ्गा पुण्या त्रिपथगा नदी ॥ ५१ ॥
[ नानाद्विजगणाकीर्णा संप्रपुष्पितकानना । ]
शृङ्गवेरपुरं चैतद्गुहो यत्र सखा मम । [ एषा सा दृश्यते सीते सरयूर्यूपमालिनी ॥
नानातरुशताकीर्णा संप्रपुष्पितकानना । ] एषा सा दृश्यते सीते राजधानी पितुर्मम ॥
अयोध्यां कुरु वैदेहि प्रणामं पुनरागता ॥ ५२ ॥
ततस्ते वानराः सर्वे राक्षसाः सविभीषणाः । उत्पत्योत्पत्य संहृष्टास्तां पुरीं ददृशुस्तदा ॥ ५३ ॥

४४ ] ति० टी०—एतत्तदाश्रमपदम् । पञ्चवट्याश्रमस्थानमित्यर्थः ॥ ४४ ॥

रा० टी०—एतदिति । यत्र रावणेन त्वं हृता तदस्माकमाश्रमपदमेतदेव अत एव पर्णशाला तथा पूर्ववच्चित्रा दृश्यते सार्धश्लोक एकान्वयी ॥ ४५ ॥

गो० टी०—खरश्चेत्यादिसार्धश्लोक एकान्वयः । तत् पञ्चवटीति प्रसिद्धम् ॥ ३९ ॥ ४० ॥

४५ ] ति० टी०—यत्र यस्यां पर्णशालायाम् ॥ ४५ ॥

रा०टी०-एषेति । एषा गोदावरी अगस्त्यस्याश्रमश्च दृश्यते

गो० टी०-एषा गोदावरीति । अयमेव पाठः सम्यक् । एषा मन्दाकिनीति पाठे अगस्त्याश्रमसमीपे मन्दाकिनीति काचिन्नद्यस्तीति ज्ञेयम् । एतच्छ्लोकात्पूर्वं पर्णशालेति श्लोकः पठनीयः ४१

४६ ] ति० टी०—अगस्त्याश्रमो दृश्यते । एतत्समीप एव प्रागुपदिष्टः स्वाश्रमः ॥ ४६ ॥

रा० टी०—दृश्यत इति । यत्र शक्र उपयातः स शरभंगाश्रमो दृश्यते सहस्राक्षपुरन्दरयोर्यौगिकत्वान्न पौनरुक्त्यम् ॥ ४७

गो० टी०—दीप्तश्चेत्यर्धम् ॥ ४२ ॥

गो टी०—वैदेहीति । पुराणि शत्रुशरीराणि शत्रुपुराणि वा दारयतीति पुरन्दरः ॥ ४३ ॥

४७ ] ति० टी०—एते ते तापसाः । पूर्वानुभूता इत्यर्थः ४७

रा० टी०—एत इति । यत्र सूर्यवैश्वानरोपमोऽत्रिरेते ते तापसाश्च दृश्यन्ते ॥ ४८ ॥

४८ ] ति० टी०—कुलपतिराश्रमस्वामी । 'कुलमन्वयसंघातगृहोत्पत्त्याश्रमेषु च' इत्यजयः ॥ ४८ ॥

रा० टी०—अस्मिन्निति । अस्मिन् देशे विराधो मया निहतः अत्रैव तापसी अनसूया त्वया दृष्टा ॥ ४९ ॥

गो० टी०—अस्मिन्देश इत्यर्धम् ॥ ४४ ॥

गो० टी०—एते हीत्यादिसार्धश्लोक एकान्वयः । तापसावासाः । अस्माभिर्दश वर्षाणि यत्रोषितमिति भावः । तापसी अनसूया ॥ ४५ ॥ ४६ ॥

४९–५१ ] ति० टी०—तापस्यत्रिपत्नी ॥ ४९ ॥ ५१ ॥

रा० टी०—असाविति । असौ सुतनु शैलानामिन्द्रः चित्रकूटः प्रकाशते अत्रैव कैकेयीपुत्रो भरत आगतः ॥ ५० ॥

रा० टी०—एषेति । एषा यमुना दृश्यते एष भरद्वाजाश्रमो दृश्यते ॥ ५१ ॥

रा० टी०—इयमिति । इयं गंगा दृश्यते यत्र मम सखा गुहः तत् शृंगवेरपुरं दृश्यते ॥ ५२ ॥

रा० टी०—एषेति । यूपमालिनी यज्ञस्तम्भमयी सरयूर्दृश्यते ॥ ५३ ॥

गो० टी०—एषा सेत्यर्धम् ॥ ४७ ॥

गो० टी०—भरद्वाजेत्यर्धम् । यत्र भरद्वाजाश्रमः । पूर्वं दृष्ट इति शेषः । श्रीमान् स एष प्रदेशः प्रकाशते । अदूरवर्तितया सम्यक् दृश्यते ॥ ४८ ॥

गो० टी०—एषा त्रिपथगेति । वरवर्णिनीति सीतासंबोधनम् ॥ ४९ ॥

५२–५३ ] ति० टी०—यत्र मम सखा गुहस्तच्छृङ्गवेरपुरमेतत् । दृश्यत इति शेषः । एषा सा मम पितू राजधान्य-

१ इदं पद्यमधिकं गो. पुस्तके दृश्यते २ दर्शनेति गो. पा. । ३ पश्य मैथिलीति गो. पा. । ४ इदमर्धमधिकं गो. पुस्तके । ५ इदमर्धमेते ते तापसा स्थाश्रमाः दृश्यते गो. पुस्तके । ६ इदमर्धमधिकं गो. पाठे । ७ शृङ्गिवेरेति गो. पा. । ८ समागत इति गो. पा. । ९ इदं पद्यमधिकं गो. पुस्तके ।

ततस्तु तां पाण्डुरहर्म्यमालिनीं विशालकक्ष्यां गजवाजिभिर्वृताम् ।
पुरीमपश्यन्प्लवगाः सराक्षसाः पुरीं महेन्द्रस्य यथामरावतीम् ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोविंशत्यधिकशततमः सर्गः ॥ १२३ ॥

## चतुर्विंशत्यधिकशततमः सर्गः ।

चतुर्दशे वत्सरे पूर्णे कौसल्येयो भारद्वाजमुनिमुपगम्याभिवाद्य च मातॄणां भरतस्य चानामयं पप्रच्छ स तु सर्वेषां कुशलमभिधायात्रोषित्वा श्वो गच्छ वृणीष्वाभिमतान्वरानिति लक्ष्मणाग्रजमुवाच अयोध्यापथेऽखिलद्रुमा अकालफला नगाश्च मधुस्रवाः सन्त्विति रामेण प्रार्थितः स तथाकरोत् ।

पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः । भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥ १ ॥

योध्या दृश्यते । गङ्गातीरवर्तिभरद्वाजाश्रमप्रदेशगे विमाने तस्यात्युन्नतव्योमप्रदेशवृत्तित्वादयोध्यादिदर्शनम् । अयोध्यां प्रति प्रणामं कुरु ॥ ५२ ॥ ५३ ॥

रा० टी०—एषेति । मम पितुः राजधानी दृश्यते अयोध्यां पुनरागता त्वं प्रणामं कुरु ॥ ५४ ॥

रा० टी०—तत इति । वानरादयः उत्पत्योत्पत्य पुरीमयोध्यां ददृशुः ॥ ५५ ॥

गो० टी०—शृङ्गिबेरपुरमित्यर्धम् । यत्र गुहः समागतः तच्छृङ्गिबेरपुरम् एतदित्यन्वयः ॥ ५० ॥

गो० टी०—एषा सेति । यूपमालिनी इक्ष्वाकुभिस्तीरे यागानन्तरं कीर्त्यर्थं शिलाभिः कृतयूपवतीत्यर्थः ॥ ५१ ॥

गो० टी०—एषा सेति । अयोध्यामिति । उद्दिश्येति शेषः । विमानस्याकाशगतत्वेन दूरस्था अपि गङ्गा शृङ्गिबेरपुरसरय्वयोध्या दृष्टा इति बोध्यम् । भरद्वाजाश्रमे हि तदा स्थितिः ॥ ५२ ॥ ५३ ॥

५४ ] ति० टी०—विशालकक्ष्यां विशालरथ्याम् ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे त्रयोविंशत्यधिकशततमः सर्गः ॥ १२३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तत इति । प्लवङ्गमाः महेन्द्रस्यामरावतीमिव अयोध्यां ददृशुः ॥ ५६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे पञ्चविंशत्यधिकशततमः सर्गः ॥ १२५ ॥

गो० टी०—ततस्त्विति । पाण्डुरेत्यादिस्वभावोक्तिः ॥ ५४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥

१ ] ति० टी०—पूर्णे इति । पञ्चम्यां चतुर्दशे वर्षे पूर्णे सति तद्दिने भरद्वाजाश्रमं प्राप्य मुनिं भरद्वाजं ववन्दे ॥ १ ॥

रा० टी०—सिंहावलोकनन्यायेन मार्गवृत्तान्तमाह—पूर्णे इत्यादिभिः । पंचम्यां चतुर्दशे वर्षे पूर्णे सति लक्ष्मणाग्रजः भरद्वाजाश्रमं प्राप्य मुनिं ववन्दे ॥ १ ॥

गो० टी०—अथ भरद्वाजाश्रमवासः—पूर्णे इति । पूर्णे चैत्रशुद्धपञ्चम्यामयोध्यातो निर्गमनम् । तदारभ्य चतुर्दशवर्षे पूर्णे सति पञ्चम्यां चैत्रशुद्धपञ्चम्याम् । तथा हि चैत्रशुद्धपञ्चम्यां निर्गमः तद्रात्र्यां तमसातीरे निवासः षष्ठ्यां शृङ्गिबेरपुरे सप्तम्यां वनस्पतिमूले अष्टम्यां भरद्वाजाश्रमे नवम्यां यमुनातीरे दशम्यां रामश्चित्रकूटं गमिष्यतीति गुहचारमुखेन विदितवृत्तान्तस्य सुमन्त्रस्य सायाह्ने अयोध्याप्रवेशः । तद्रात्रावेव दशरथस्य निर्याणम् एकादश्यां राज्ञस्तैलद्रोण्यां निक्षेपः द्वादश्यां भरतं प्रति दूतप्रेषणम् ते च दूता मार्गे त्रयोदशीं चतुर्दशीं चापनीय पौर्णमास्यां रात्रौ केकयनगरं प्रविविशुः । प्रतिपदि भरतस्यायोध्यां प्रत्यागमनम् तत्र च मार्गे सप्त रात्रीरुषित्वा अष्टमे दिने त्वरातिशयेनाहोरात्रमागत्य नवम्यां सूर्योदये भरतस्यायोध्याप्रवेशः तस्यामेव दशरथसंस्कारः । तदहरारभ्य त्रयोदशदिने वैशाखशुद्धपञ्चम्यां तत्पूर्वदिने च भरतेन राज्ञः श्राद्धकर्मकरणम् षष्ठ्यां तद्देशीयाचारसिद्धदहनदेशशोधनम् सप्तम्यां मार्गशोधनाय कर्मान्तिकप्रेषणम् कर्मान्तिकैश्च दशमीपर्यन्तं चतुर्दिनं मार्गशोधनम् । एकादश्यां भरतस्य रामसकाशं प्रति गमनम् तद्रात्रौ गङ्गातीरे निवासः द्वादश्यां भरद्वाजाश्रमे त्रयोदश्यां रामसमागमः चतुर्दशीपौर्णमासीप्रतिपत्सु चित्रकूटे भरतस्य निवासः वैशाखबहुलद्वितीयायां भरतस्यायोध्यां प्रति प्रयाणम् चतुर्थ्यामयोध्याप्रवेशः । इत्येवं सार्धमासे गते वैशाखबहुलपञ्चम्यां रामस्य चित्रकूटान्निर्गमः अत्र्याश्रमप्रवेशश्च । एवमाश्रममण्डलवासेन सह सार्धमासेषु दशसंवत्सरेषु गतेषु अवशिष्टकाले पञ्चवटीवासे तत्र त्रयोदशवर्षेषु गतेषु ततश्चतुर्दशे वर्षे चैत्रमासे सीताहरणम् वैशाखे सुग्रीवदर्शनम् आषाढे वालिवधः आश्वयुजे सैन्योद्योगः फाल्गुने प्रायोपवेशः फाल्गुनशुद्धचतुर्दश्यां लङ्कादाहः फाल्गुनामावास्यायां रावणवधः चैत्रशुद्धप्रतिपदि रावणसंस्कारादि । द्वितीयायां विभीषणाभिषेकः, सीताप्राप्तिदेवताप्रस्थानानि च । तृतीयायां लङ्कातो निर्गमः । चतुर्थ्यां किष्किन्धायां वासः । पञ्चम्यां भरद्वाजाश्रमे वासः

१ संकुलामिति गो. रा. पा. ।

सोऽपृच्छदभिवाद्यैनं भरद्वाजं तपोधनम् । शृणोषि कच्चिद्भगवन्सुभिक्षानामयं पुरे ॥ २ ॥
कच्चित्स युक्तो भरतो जीवन्त्यपि च मातरः । एवमुक्तस्तु रामेण भरद्वाजो महामुनिः ॥
प्रत्युवाच रघुश्रेष्ठं स्मितपूर्वं प्रहृष्टवत् ॥ ३ ॥
आज्ञावशत्वे भरतो जटिलस्त्वां प्रतीक्षते । पादुके ते पुरस्कृत्य सर्वं च कुशलं गृहे ॥ ४ ॥
त्वां पुरा चीरवसनं प्रविशन्तं महावनम् । स्त्रीतृतीयं च्युतं राज्याद्धर्मकामं च केवलम् ॥ ५ ॥
पदातिं त्यक्तसर्वस्वं पितुर्निर्देशकारिणम् । सर्वभोगैः परित्यक्तं स्वर्गच्युतमिवामरम् ॥ ६ ॥
दृष्ट्वा तु करुणापूर्वं ममासीत्समितिंजय । कैकेयीवचने युक्तं वन्यमूलफलाशिनम् ॥ ७ ॥
सांप्रतं तु समृद्धार्थं समित्रगणबान्धवम् । समीक्ष्य विजितारिं च ममाभूत्प्रीतिरुत्तमा ॥ ८ ॥

अत्र वक्तव्योपपत्तयस्तत्र तत्र प्रदर्शिताः । अस्मिन् प्रकारे हनुमत्सन्निधाने, द्वौ मासौ रक्षितव्यौ मे इति रावणवचनं सीतासान्त्वनपरम् । मासादूर्ध्वं न जीविष्य इति सीतावचनं तु सम्यक् संगच्छते । मासशब्दस्य वर्तमानमासपरत्वं चास-त्कृतकम् । रावणेन दश मासा गताः अवशिष्टौ द्वौ मासा-वित्युक्तिर्मधुपानमत्ततया अविवेककृता । सीताया मासादूर्ध्व-मिति वचनं तु वर्तमानमासपरमिति विवेकः । भरद्वाजाश्रमं प्राप्येत्यनेन महतां स्थानमपि प्राप्यमित्युक्तम् । नियतः नियतकरणत्रयः ॥ १ ॥

२ ] ति० टी०—पुरेऽयोध्यायां सुभिक्षं चानामयं च सुभिक्षानामयम् । सुभिक्षमन्नसमृद्धिः । 'अनामयं स्यादारो-ग्यम्' । शृणोषि कच्चित् शिष्यादिमुखेनेतिशेषः ॥ २ ॥

रा० टी०—स इति । स रामः भरद्वाजमभिवाद्य अपृ-च्छत् अर्द्धं पृथक् तदाकारमाह—शृणोषीति । पुरे अयो-ध्यायां सुभिक्षमन्नादिसम्पत्तिमनामयं रोगराहित्यं शृणोषि भरतः सुयुक्तः पालनादौ निरतः अस्तीति शेषः मातरो जीवन्ति ॥ २ ॥

गो० टी०—स इत्यादिसार्धश्लोक एकान्वयः । सुभिक्षा-नामयम् । भिक्ष्यन्त इति भिक्षाः अन्नानि भिक्षाणां समृद्धिः सुभिक्षम् समृद्धावव्ययीभावः आमयस्याभावोनामयम् प्रस-ज्यप्रतिषेधेऽपि समासस्येष्टत्वात्साधुः । सुभिक्षं चानामयं चेति विग्रहः । अनामयम् आरोग्यम् । अनामयं स्यादारोग्य-मित्यमरः । युक्तः प्रजापालने समाहितः ॥ २ ॥

३ ] ति० टी०—स भरतो युक्तः । प्रजापालने समाहित इत्यर्थः । स्मितपूर्वम् । सर्वज्ञोऽपि भगवानजानन्निव मां पृच्छ-तीति स्मितकरणम् । प्रहृष्टवत्प्रहृष्टार्हम् ॥ ३ ॥

रा० टी०—एवमिति । एवमुक्तो भरद्वाजः प्रहृष्टवत् स्मितपूर्वं च यथा भवति तथा प्रत्युवाच ॥ ३ ॥

गो० टी०—एवमिति । प्रहृष्टवत् प्रहृष्टम् । क्रियाविशेष-णम् । स्मितपूर्वम् । सर्वज्ञोऽप्यजानान इव पृच्छतीति स्मितम् । यद्वा किं भरतः प्रजापालनसंतुष्टो वर्तत इति प्रश्नसारं मत्वा परतन्त्रे तस्मिन् कथमित्थं संभवतीति स्मितकरणम् ॥ ३ ॥

४-६ ] ति० टी०—ते पादुके पुरस्कृत्य सर्वं कुशलं गृहे पुरे च संपादयन्भरतस्त्वां प्रतीक्षते ॥ ४ ॥ ६ ॥

७ ] ति० टी०—उच्यमानविशेषणं त्वां दृष्ट्वा मम पुरा करुणा दैन्यमासीत् ॥ ७ ॥

रा० टी०—तदाकारमाह—आज्ञेत्यादिभिः । भरतः ते पादुके पुरस्कृत्य राजस्थानीयत्वेन संस्थाप्य त्वां प्रतीक्षते गृहे च कुशलमस्तीति शेषः ॥ ४ ॥

रा० टी०—त्वामिति । पुरा देवादिपालनार्थम् महावनं प्रविशन्तं स्त्री एव तृतीया यस्य राज्यात् अभिषेकात् च्युत-मत एव त्यक्तसर्वस्वमत एव सर्वभोगैः परित्यक्तं स्वर्गच्युत-ममरमिव पदातिं त्वां पूर्वं दृष्ट्वा मम करुणा आसीत् सांप्रतं तु समृद्धः संसिद्धः अर्थो यस्य तं विजितारिं त्वां समीक्ष्य ममोत्तमा प्रीतिरभूत् अर्द्धष्टकमेकान्वयि ॥ ५-८ ॥

गो० टी०—अत एव तदनुरूपमुत्तरयति—पङ्क्तेति । स्ना-नाभावात्पङ्कदिग्धत्वम् । स्नानाभावेऽपि नित्यानुष्ठानं दीक्षित-वत् गौणस्नानेन । स्नानाभावे निमित्तमाह—जटिल इति । जटिलः जटावान् पिच्छादित्वादिलच् । जटिलानां वारुण-स्नानम् निषिद्धमिति भावः । कथं न्वपररात्रेषु सरयूमवगा-हत इत्याद्युक्तिस्तु कादाचित्कस्नानपरत्वेऽप्युपपद्यते । यद्वा सदा अनास्तृतभूमिशयनादिना वा तादृशत्वम् । एवं व्रतनिष्ठो भरतस्ते पादुके राज्याय पुरस्कृत्य त्वां प्रतीक्षते । त्वदाग-मनाकाङ्क्षया वर्तत इत्यर्थः । कच्चित्स युक्तो भरत इत्यस्योत्तर-मुक्त्वा, जीवन्त्यपि च मातर इत्यस्योत्तरमाह—सर्वं चेति । तव गृहे यद्यदस्ति तत्सर्वम् कुशलं क्षेमयुक्तम् । जीवन्त्यपि चेति सम्भाव्य पृष्टाः सर्वे मातृपरिचारकादयो जीवन्ती-त्यर्थः ॥ ४ ॥

गो० टी०—त्वां पुरेत्यादिश्लोकत्रयमेकं वाक्यम् । पुरा-चीरवसनं पुरातनचीरवसनम् । अतो न पूर्वपदेन पौनरु-क्त्यम् । करुणा दुःखम् । परदुःखदुःखित्वं हि करुणा ॥५-७॥

८ ] ति० टी०—सांप्रतं तु समृद्धत्वादिगुणं समीक्ष्य ममो-त्तमा प्रीतिरभूत् । जातेत्यर्थः ॥ ८ ॥

गो० टी०—सांप्रतमिति । साम्प्रतम् इदानीम् तु त्वां

१ पङ्कदिग्धस्त्विति गो॰ पा॰ । २ स्विति गो॰ पा॰ । ३ त्वामिति गो॰ पा॰ ।

सर्वं च सुखदुःखं ते विदितं मम राघव । यत्त्वया विपुलं प्राप्तं जनस्थाननिवासिना ॥ ९ ॥
ब्राह्मणार्थे नियुक्तस्य रक्षतः सर्वतापसान् । रावणेन हृता भार्या बभूवेयमनिन्दिता ॥ १० ॥
मारीचदर्शनं चैव सीतोन्मथनमेव च । कबन्धदर्शनं चैव पम्पाभिगमनं तथा ॥ ११ ॥
सुग्रीवेण च ते सख्यं यत्र वाली हतस्त्वया । मार्गणं चैव वैदेह्याः कर्म वातात्मजस्य च ॥ १२ ॥
विदितायां च वैदेह्यां नलसेतुर्यथा कृतः । यथा चादीपिता लङ्का प्रहृष्टैर्हरियूथपैः ॥ १३ ॥
सपुत्रबान्धवामात्यः सबलः सहवाहनः । यथा च निहतः संख्ये रावणो बलदर्पितः ॥ १४ ॥
यथा च निहते तस्मिन्रावणे देवकण्टके । समागमश्च त्रिदशैर्यथा दत्तश्च ते वरः ॥ १५ ॥
सर्वं ममैतद्विदितं तपसा धर्मवत्सल । संपतन्ति च मे शिष्याः प्रवृत्त्याख्याः पुरीमितः ॥ १६ ॥
अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर । अर्घ्यं प्रतिगृहाणेदमयोध्यां श्वो गमिष्यसि ॥ १७ ॥
तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मजः । बाढमित्येव संहृष्टः श्रीमान्वरमयाचत ॥ १८ ॥

समीक्ष्य । स्थितस्येति शेषः । प्रीतिः । जातेति शेषः । अनुसमेत्यनेन देवकार्यकरणहेतुत्वात् पूर्वमपि काचित् प्रीतिरासीदिति द्योत्यते ॥ ८ ॥

९ ] ति० टी०—सर्वं ते सुखं दुःखं च विदितमित्येतत्प्रकाशयति—यत्त्वयेति । जनस्थाननिवासिना त्वया यद्विपुलं खरवधादिना दुःखं प्राप्तं तन्मया विदितम् ॥ ९ ॥

रा० टी०—सर्वमिति । यत् विपुलमधिकं सुखदुःखं त्वया प्राप्तं तत्सर्वं मे विदितमस्ति ॥ ९ ॥

गो० टी०—सर्वमित्यर्धम् । सुखं पञ्चवटीवासादिकृतम् । दुःखं सीताहरणजम् ॥ ९ ॥

गो० टी०—यत्त्वयेत्यादिसार्धश्लोकषट्कमेकान्वयम् । ब्राह्मणार्थं ऋषिजनरक्षणार्थं, नियुक्तस्य तैर्याचितस्य । अत एव रक्षितुः खरादिवधमुखेन पालयितुः, तव भार्या हृता बभूवेति यत् तच्चेति योजना । हृता हर्तुमीप्सिता । आशंसायां क्तः । अतो न सीतोन्मथनमित्यनेन पौनरुक्त्यम् । वरः मृतवानरजीवनादिः ॥ १०–१९ ॥

१० ] ति० टी०—तदनन्तरं ब्राह्मणार्थे ब्रह्मविदां ब्रह्मर्षीणां प्रयोजने रक्षाप्रयोजने नियुक्तस्य, अत एव सर्वतापसान्रक्षतस्तव भार्येयं हृता बभूवेत्येतच्च मे विदितम् ॥ १० ॥

रा० टी०—तदेव निदर्शयन्नाह—ब्राह्मणेत्यादिभिः । ब्राह्मणार्थे नियुक्तस्य ब्रह्मवेत्तृकार्यसिद्धये नियुक्तस्य ब्रह्मादिभिः प्रार्थितस्य अत एव सर्वतापसान् रक्षतस्तव भार्या रावणेन हृता बभूव ॥ १० ॥

११ ] ति० टी०—मारीचदर्शनम् । रावणस्य सीतापहारार्थमिति शेषः । सीतोन्मथनं सीताया राक्षसीभिर्लङ्कायां क्लेशनम् ॥ ११ ॥

१२ ति० टी०—वातात्मजस्य कर्म समुद्रलङ्घनादिलङ्कादहनान्तम् ॥ १२ ॥

१३–१५ ] ति० टी०—प्रहृष्टैर्हरियूथपैर्लङ्कादीपितेति यदिन्द्रजिद्वधानन्तरं कृतं तच्च विदितम् ॥ १३ ॥ १५ ॥

रा० टी०—एतत् मारीचदर्शनादि च सर्वं तपसा ज्ञानचक्षुषा मे विदितं सार्द्धश्लोकषट्कमेकान्वयि ॥ ११–१६ ॥

१६ ] ति० टी०—इतो मदाश्रमान्मे शिष्याः प्रवृत्त्याख्यास्तत्र प्रवृत्तिमुदन्तमाचक्षते प्रवृत्त्याख्यास्तथाभूताः सन्तस्तव पुरीमयोध्यां संपतन्ति । अतस्त्वत्पुरीवृत्तान्तोऽपि ज्ञायत इति शेषः १६

१७ ] अहमपीति । त्रिदशा इवेति भावः । दद्मि ददामि । अर्घ्यं प्रतिगृहाण । मया दातुं प्रतिज्ञातस्य वरस्य वरणात्पूर्वमिति शेषः ॥ १७ ॥

रा० टी०—पुरीवृत्तान्तज्ञाने हेत्वन्तरमाह—सम्पतन्तीति । प्रवृत्त्याख्याः वृत्तान्तकथनशीलाः मे शिष्याः पुरीमयोध्यां सम्पतन्ति प्रतिदिनं गच्छन्ति एतेन अयोध्यावृत्तं तेभ्यो नित्यं प्रतिशृणोमीति सूचितम् तेन भरद्वाजस्य अयोध्योपासकत्वं व्यञ्जितम् अर्द्धं पृथक्—अहमिति । अहं वरमर्घ्यं ते तुभ्यं दद्मि ददामि अतस्त्वं गृहाण श्वः आगामिदिवसे अयोध्यां गमिष्यसि गन्तासि ॥ १७ ॥

गो० टी०—अहमिति । वरम् दद्मि ददामि । अत्र आश्रमे अद्य अर्घ्यं पूजाम् गृहाणेति संबन्धः ॥ १६ ॥

१८ ] ति० टी०—बाढमित्येव । प्रतिगृह्येति शेषः ॥ १८ ॥

रा० टी०—तस्येति । तस्य भरद्वाजस्य वाक्यं बाढमित्युक्त्वा नृपात्मजो वरमयाचत ॥ १८ ॥

गो० टी०—तस्येत्यादिसार्धश्लोकद्वयमेकान्वयम् । बाढमिति प्रतिगृह्य, तस्मिन् दिने तत्र पूजामङ्गीकृत्येत्यर्थः । धीमान् अद्यात्र स्थित्वा भरतं प्रति दूतप्रेषणमुचितमिति ज्ञानवानित्यर्थः । मधूनि स्रवन्तीति मधुस्रवाः । गच्छतः ममेति शेषः । मयि गच्छति सतीत्यर्थः । भवन्तु । अत्रेतिकरणं बोध्यम् । इति वरमयाचतेति संबन्धः ॥ १७ ॥ १८ ॥

१ यथाविक्रममिति गो. पा. । २ यथेति गो. पा. । ३ देवकण्टक इति गो. वरदर्पित इति रा. पा. । ४ इदमर्धं गो. पुस्तके नास्ति । ५ इदमप्यर्धं गो. पु. नास्ति ।

अकालफलिनो वृक्षाः सर्वे चापि मधुस्रवाः । फलान्यमृतगन्धीनि बहूनि विविधानि च ॥ १९ ॥
भवन्तु मार्गे भगवन्नयोध्यां प्रति गच्छतः । तथेति च प्रतिज्ञाते वचनात्समनन्तरम् ॥ २० ॥
अभवन्पादपास्तत्र स्वर्गपादपसंनिभाः । निष्फलाः फलिनश्चासन्विपुष्पाः पुष्पशालिनः ॥२१॥
शुष्काः समग्रपत्रास्ते नगाश्चैव मधुस्रवाः । सर्वतो योजनास्तिस्रो गच्छतामभवंस्तदा ॥ २२ ॥
ततः प्रहृष्टाः प्लवगर्षभास्ते बहूनि दिव्यानि फलानि चैव ।
कामादुपाश्नन्ति सहस्रशस्ते मुदान्विताः स्वर्गजितो मुदेव ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे चतुर्विंशत्यधिकशततमः सर्गः ॥ १२४ ॥

## पञ्चविंशत्यधिकशततमः सर्गः ।

अयोध्यायामवलोकितायां रावणवैरिणा भरतस्य स्वकुशलनिवेदनाय तदिङ्गितज्ञानार्थं च संदिष्टो मारुतिरन्तरा गुहं निवेद्याचिरादेव भरतमुपेत्य स्मारं स्मारं काकुत्स्थसंदेशमस्खलन्निवेदयंस्तेनानन्दाश्रैः सकुतुकमाश्वासितोऽभूत् ।

अयोध्यां तु समालोक्य चिन्तयामास राघवः । प्रियकामः प्रियं रामस्ततस्त्वरितविक्रमः ॥ १ ॥
चिन्तयित्वा ततो दृष्टिं वानरेषु न्यपातयत् । उवाच धीमांस्तेजस्वी हनूमन्तं प्लवंगमम् ॥ २ ॥

१९ ] ति० टी०–वरमाह—अकालेति ॥ १९ ॥

२०–२२ ] ति० टी०–अयोध्यां प्रति गच्छतो मम मार्गे एवं वृक्षादयो भवन्तु । वानराणां विश्रामार्थमिति शेषः ॥२०–२२॥

रा० टी०–तदाकारमाह—अकालेत्यादिभिः । अयोध्यां प्रति गच्छतो मे मार्गे वृक्षाः अकालफलिनः मधुस्रवाश्च भवन्तु फलानि च अमृतगंधीनि बहूनि च भवन्तु सार्द्धश्लोक एकान्वयी ॥ १९ ॥ २० ॥

रा० टी०–तथेति । तथा इति प्रतिज्ञाते भरद्वाजप्रतिज्ञायां सत्यां वचनात् प्रतिज्ञावाक्यात् समन्तरमेव गच्छतां सर्वतो भरद्वाजाश्रमादारभ्य अयोध्यापर्यन्तमार्गस्य चतुर्दिक्षु तिस्रो योजनाः पादपाः स्वर्गपादपसंनिभा अभवन् अत एव नगा मधुस्रवा अभवन् निष्फला नगाः फलिनः विपुष्पाः पुष्परहिताः पुष्पशालिनः आसन् शुष्कास्समग्रपत्राश्चाभवन् सार्द्धश्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०–तथेति चेत्यादिसार्धश्लोकद्वयमेकान्वयम् । योजना योजनानि । "सुपां सुलुक्" इत्यादिना पूर्वसवर्णादेशः । अत्यन्तसंयोगे द्वितीया । गच्छतां वानराणां फलिनश्चासन्निति क्रमेणान्वयः । इदं चोत्तरदिनकार्यं सौकर्याय ऋषिणा दर्शितम् ॥ १९–२१ ॥

२३ ] ति० टी०–जयन्तीति जितः । स्वर्गजित इव मुदान्वितास्ते प्रसिद्धा वानराः कामायथेच्छमुपाश्नन्ति स्म२३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य युद्धकाण्डे चतुर्विंशत्यधिकशततमः सर्गः ॥१२४॥

रा० टी०–तत इति । सहस्रशः प्लवगर्षभाः दिव्यानि फलानि कामादिच्छातः स्वर्गजित इव उपाश्नन्ति ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे षड्विंशत्यधिकशततमः सर्गः ॥ १२६ ॥

गो० टी०–तत इति । ते प्रस्थिताः स्वर्गजितो यथा स्वर्गिण इव ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने सप्तविंशत्युत्तरशततमः सर्गः ॥१२७॥

१–२ ] ति० टी०–पञ्चम्यां चतुर्दशवर्षस्य पूर्णत्वात्तद्दिने भरद्वाजाश्रमे विलम्बस्य प्राप्तत्वाच्चतुर्दशसमाप्तौ यदि त्वां न पश्यामि तदा हुताशनं प्रवेक्ष्यामीति भरतोक्तेर्भरतस्य स्वागमननिवेदनाय हनुमत्प्रेषणं कृतवानित्याह–अयोध्यां त्विति । समालोक्य । भरद्वाजाश्रमे विमानादवतरणसमये इति भावः । सुग्रीवादीनां सम्यक्शिष्टाचारकरणाय सुहृद्रूपतदाकारज्ञानाय च पूर्वं हनुमत्प्रेषणम्, अत एव पाद्मे पञ्चम्यामेव विसृष्टहनुमत्प्रवेशसमये भरतवर्णनमेवं कृतम्—'अग्निप्रवेशे सोद्योगकाले भ्रातुरनागमात् । न्यवेदयत्तदा तस्मै श्रीरामागमनोत्सवम् ॥' इति । किं च । प्रियकाम इति । सुग्रीवादीनां प्रियकामोऽयोध्यायां सर्वतत्प्रियपूरणकामस्तेषां प्रियं यथा भवति तथा चिन्तयामास । कर्तव्यजातमिति शेषः ॥ १ ॥ २ ॥

रा० टी०–भरद्वाजाश्रमे वासनिश्चयानन्तरकालिकं वृत्तान्तमाह—अयोध्यामित्यादिभिः । अयोध्यां समालोक्य प्रियकामः अयोध्यावासिनां प्रियमिच्छुः रामः प्रियं यथा भवति तथा चिन्तयामास चतुर्दशवर्षसमाप्तिदिने यदि त्वां न पश्यामि तर्हि हुताशनं प्रवेक्ष्यामीति भरतोक्तिं सस्मारेत्यर्थः ॥ १ ॥

गो० टी०–अथ भरतं प्रति हनुमत्प्रेषणमष्टाविंशत्युत्तरशततमे–अयोध्यां त्विति । अर्धमेकं वाक्यम् । समालोक्य समालोच्येत्यर्थः । आश्रमस्थस्य तदवलोकनासंभवात् । चिन्तयामास । कर्तव्यमिति शेषः ॥ १ ॥

१ कल्पानीति गो. गन्धानीति रा. पा. । २ तथेवेति गो. पा. । ३ इदमर्धमुत्तरश्लोकपूर्वार्द्धं च गो. पुस्तके नास्ति ।

[1]अयोध्यां त्वरितो गत्वा शीघ्रं प्लवगसत्तम । जानीहि कच्चित्कुशली जनो नृपतिमन्दिरे ॥ ३ ॥
[2]शृङ्गवेरपुरं प्राप्य गुहं गहनगोचरम् । निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ॥ ४ ॥
श्रुत्वा तु मां कुशलिनमरोगं विगतज्वरम् । भविष्यति गुहः प्रीतः स ममात्मसमः सखा ॥ ५ ॥
अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च । निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः ॥ ६ ॥
भरतस्तु त्वया वाच्यः कुशलं वचनान्मम । सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ॥ ७ ॥
हरणं चापि वैदेह्या रावणेन बलीयसा । सुग्रीवेण च संवादं[3] वालिनश्च वधं रणे ॥ ८ ॥
[4]मैथिल्यन्वेषणं चैव यथा चाधिगता त्वया । लङ्घयित्वा महातोयमापगापतिमव्ययम् ॥ ९ ॥
उपयानं समुद्रस्य सागरस्य च दर्शनम् । यथा च कारितः सेतू रावणश्च यथा हतः॥ १० ॥
वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च । महादेवप्रसादाच्च पित्रा मम समागमम् ॥ ११ ॥
उपयातं च मां सौम्य भरताय निवेदय । सह राक्षसराजेन हरीणामीश्वरेण च ॥ १२ ॥
जित्वा शत्रुगणान्रामः प्राप्य चानुत्तमं यशः । उपायाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ १३ ॥
एतच्छ्रुत्वा यं[5]माकारं भजते भरतस्ततः । स च ते वेदितव्यः स्यात्सर्वं यच्चापि मां प्रति॥१४॥
ज्ञेयाः सर्वे च वृत्तान्ता भरतस्येङ्गितानि च । तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषितेन च ॥ १५ ॥

---

रा० टी०-चिन्तयित्वेति । चिन्तयित्वा भरतस्याग्निप्रवेशनिवारणोपायभूतसंदेशः प्रेषणीय इति निश्चित्य वानरेषु दृष्टिं न्यपातयत् हनूमन्तमुवाच ॥ २ ॥

३ ] ति० टी०-यथा क्षिप्रमयोध्या प्राप्यते तथा त्वरितः सन्नयोध्यां गच्छ । नृपतिमन्दिरे वर्तमानः सर्वोऽपि जनः कुशलीति जानीहि ॥ ३ ॥

रा० टी०-तदाकारमाह—अयोध्यामित्यादिभिः । त्वरितस्त्वमयोध्यां गच्छ नृपतिमंदिरे जनः-कुशली कच्चिदिति शीघ्रं जानीहि च ॥ ३ ॥

गो० टी०-जानीहीत्यर्धम् । नृपतिमन्दिरे जनः मात्रादिः ॥ २ ॥

४ ] ति० टी०-गहनं काननं गोचरो देशो यस्य तम् । मम कुशलं मद्वचनाद्ब्रूहि ॥ ४ ॥

रा० टी०-शृंगबेरेति । श्रृंगबेरपुरं प्राप्य गहनं वनं गोचरो देशो यस्य तं गुहं मम वचनात् कुशलं ब्रूहि ॥ ४ ॥

गो० टी०-शृङ्गिबेरेति । गहनगोचरं वनचारिणम् ॥३॥

५-६ ] ति० टी०-आत्मसमः । तत्सदृशः । तत्त्वज्ञानित्वात् ॥ ५ ॥ ६ ॥

रा० टी०-तत्प्रयोजनमाह-श्रुत्वेति । गुहः मां कुशलिनं श्रुत्वा प्रीतो भविष्यति ननु तेन तव किमित्यत आह स गुहः ममात्मसमः सखा एतेन तत्प्रीतिर्ममैव प्रीतिरिति ध्वनितम्॥५॥

गो० टी०-गुहाय निवेदनस्य प्रयोजनमाह-श्रुत्वा त्विति । विगतज्वरं मद्विश्लेषचिन्ताज्वररहितम् यथा तथेति भविष्यतीति क्रियाविशेषणम् । आत्मसमः हीनजातिमनपेक्ष्य प्रेमातिशयेन गुहमिक्ष्वाकुकुलीनममन्यत ॥ ४ ॥

रा० टी०-प्रयोजनान्तरमाह-अयोध्याया इति । प्रीतो गुहः अयोध्यायाः मार्गं भरतस्य प्रवृत्तिं च निवेदयिष्यति ॥६॥

गो० टी०-अयोध्यायाश्चेति । प्रवृत्तिं वृत्तान्तम् ॥ ५ ॥

७-८ ] ति० टी०-सिद्धार्थं निर्व्यूढपितृवचनपरिपालनरूपप्रयोजनम् ॥ ७ ॥ ८ ॥

९ ] ति० टी०-यथा त्वयाधिगता । अस्खलितमता यथा दृष्टेत्यर्थः ॥ ९ ॥

१० ] ति० टी०-उपयानं पुनः स्वयमस्मत्समीपागमनम् । वानरसेनया सह समुद्रतीरगमनं वा । सागरस्य स्वरूपेण प्रत्यक्षतो दर्शनं दर्शनदानम् ॥ १० ॥

११ ] ति० टी०-महेन्द्रादिकर्तृकं वरदानं वानरसमुत्थानरूपम् । अत्र ब्रह्मवरुणयोरपि वरदानकर्तृत्वोक्तेः पूर्वं महेन्द्रसहितो ब्रह्मेति व्याख्यातम् ॥ ११ ॥

१२-१३ ] ति० टी०-उपयातं नगरसमीपमागतम् ॥ १२ ॥ १३ ॥

१४ ] ति० टी०-एतच्छ्रुत्वैवंप्रकारं मदागमनं श्रुत्वा यमाकारं खेदानन्दसूचकमाकारम् । स आकारो यच्चापि भरतस्य मां प्रति कर्तव्यं तच्च वेदितव्यम् ॥ १४ ॥

१५ ] ति० टी०-तदेवाह—ज्ञेया इति । मुखवर्णेन प्रीतिखेदोचितविकाससंकोचाद्याकारेणेत्यर्थः । तत्त्वेन याथार्थ्येन वृत्तान्ता ज्ञेया इत्यन्वयः ॥ १५ ॥

रा० टी०-भरत इति । भरतः मम वचनात् कुशलं वाच्यः तस्मै भरताय मां सिद्धार्थं शंस ॥ ७ ॥

रा० टी०-हरणमिति । वैदेह्या हरणादि भरताय निवेदय श्लोकपञ्चकमेकान्वयि ॥ ८-१२ ॥

---

१ इदमर्धं गो. पुस्तके नास्ति । २ शृङ्गीति गो. पा. । ३ संसर्गमिति गो. पा. । ४ एतदाद्ययोर्द्वयोः श्लोकयोर्व्यत्यासेन पाठो गो. पुस्तके । ५ भयाकारमिति गो. पा. ।

सर्वकामसमृद्धं हि हस्त्यश्वरथसंकुलम्। पितृपैतामहं राज्यं कस्य नावर्तयेन्मनः ॥ १६ ॥
संगत्या भरतः श्रीमान्राज्येनार्थी स्वयं भवेत्। प्रशास्तु वसुधां सर्वामखिलां रघुनन्दनः ॥ १७ ॥
तस्य बुद्धिं च विज्ञाय व्यवसायं च वानर। यावन्न दूरं याताः स्मः क्षिप्रमागन्तुमर्हसि ॥ १८ ॥

रा० टी०–जित्वेति। समृद्धार्थो रामः मित्रैस्सह उपयाति एतद्वचनं श्रुत्वा मां प्रति यमाकारमभिप्रायं भरतो भजते प्राप्नोति स आकारो वेदितव्यः यदन्यच्चेष्टादि तत्सर्वं वेदितव्यं श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

रा० टी०–ज्ञानोपायमाह—ज्ञेया इति। भरतस्य इङ्गितानि सर्वे तत्समीपवर्तिसम्बन्धिनोऽपि वृत्तान्ता मुखवर्णादिना तत्त्वेन विज्ञेयाः ॥ १५ ॥

गो० टी०–भरतस्त्विति। सिद्धार्थं निर्व्यूढपितृवचनपरिपालनरूपप्रयोजनम् ॥ ६ ॥

गो० टी०–हरणमित्यादिश्लोकपञ्चकमेकान्वयम्। रणे सुग्रीववालिनोर्युद्धे। वालिनो वध इत्यर्थः। यथा चेति। महातोयम् अव्ययम् आपगापतिं लङ्घयित्वा त्वया सीता यथा अधिगता तथा शंसेत्यन्वयः। समुद्रस्योपयानम् समुद्रं प्रति गमनमित्यर्थः। संबन्धसामान्ये षष्ठी। समीपयानं वा। सागरस्य समुद्रराजस्य। ब्रह्मणा वरुणेन चेति सहार्थे तृतीया। अनेन महेन्द्रेण वानरसमुत्थापनरूपवरप्रदाने ब्रह्माद्यनुमतिरस्तीति द्योतितम्। पित्रा मम समागममित्येतदन्तस्य शंसेति पूर्वेण संबन्धः। उपयानमिति। अन्यथा चतुर्थ्यामेव चतुर्दशवर्षातिक्रमात् सोऽग्निं प्रविशेदिति भावः। सौम्येत्यनेन मन्दं मन्दं कथय। अन्यथा हठान्मदागमनश्रवणे हर्षोऽस्य उन्मत्तको भवेदिति भावः ॥ ७–१२ ॥

गो० टी०–त्वमेव राज्यं पालयेति मयोक्ते भरतस्तदङ्गीकरोति न वेति तदाकारस्त्वया ज्ञातव्य इत्याह—एतच्छ्रुत्वेति। एतत् उपयानम्। आकारं मुखप्रसादादिकम्। मां प्रति यत् इङ्गितचेष्टादिकम् ॥ १३ ॥

गो० टी०–जित्वा शत्रुगणानित्यादिश्लोकद्वयमेकान्वयम्। एतच्छ्लोकान्ते इत्युक्त्वेत्यध्याहर्तव्यम्। ज्ञेया इति श्लोकेन पूर्वोक्तमेव विशेष्यते। तत्त्वेनेत्यस्य ज्ञेया इत्यनेन संबन्धः। अत्रापि पूर्ववद्राज्यं पालयेति मदुक्तिं भरतः किमङ्गीकरोतीति परीक्षस्वेति भावः। अन्यथा भरतप्रकृतेः रामप्रकृतेश्च विरुद्धं स्यात् यावेवमूचतुः। न सर्वे भ्रातरस्तात भवन्ति भरतोपमा इति, यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ। शिरसा धारयिष्यामि न मे शान्तिर्भविष्यतीति च ॥ १४ ॥ १५ ॥

१६ ] ति० टी०–ननु तादृशसौहृदवति कोऽन्यथा शङ्कायाः प्रसङ्गोऽत आह—सर्वकामेत्यादि। पितृपैतामहं तत्क्रमेणागतं नावर्तयेत्। अनेन भ्रातर एवं शङ्क्या इति लोकान्बोधयति ॥ १६ ॥

रा० टी०–ननु सदैवैकाकाराभिप्रायस्य भरतस्याभिप्रायज्ञाने किं फलमित्यत आह—सर्वेति। सर्वकामैः समृद्धं राज्यं कस्य मनः न आवर्त्तयेत् अन्यथा कुर्यात् ॥ १६ ॥

गो० टी०–ननु किं परीक्षणीयं सर्वस्यापि राज्याधिपत्यकाङ्क्षित्वादित्याशङ्क्याह—सर्वेति। पितृपितामहशब्दौ कुलपरम्परोपलक्षकौ। पितृपितामहेभ्य आगतम् उत्तरपदवृद्धिरार्षी। नावर्तयेत् नाकर्षेत्। कस्य भरतादन्यस्यैवेत्यर्थः ॥ १६ ॥

१७ ] ति० टी०–तस्य राज्याकाङ्क्षा चेत्किं करिष्यतीत्याशङ्क्य स एव राज्यं प्रशास्त्वित्याह—संगत्येति। संगत्या चिरकालपरिचयेन कैकयीसंगत्या वा। यदि कैकयीवत्स्वयमपि राज्येनार्थी भवेत्तर्हि स एव वसुधां शास्तु। वयं यत्र क्वापि तपसा कालं नेष्याम इति शेषः ॥ १७ ॥

रा० टी०–तन्मनसोन्यथाभावे किं करिष्यसीत्यत आह—संगत्येति। संगत्या चिरकालं राज्यप्राप्त्या राज्येन स्वयमर्थी राज्याभिलाषीत्यर्थः यदि भरतो भवेत् तर्हि सर्वां वसुधां प्रशास्तु तन्ममापि मुदावहमिति तात्पर्यम् ॥ १७ ॥

गो० टी०–एवं भरतेङ्गिते ज्ञाते तव किं कर्तव्यमित्याह—संगत्येति। संगत्या अस्मत्संगत्या। यद्यपि पूर्वं सर्वात्मना न राज्यपालनमङ्गीकरोमीत्युक्तम्। तथापि चतुर्दशवर्षपर्यन्तं मद्विरहातुरतया मद्दर्शनजहर्षप्रकर्षातिरेकेण त्वमभिषिक्तो भवेति मदुक्तिमङ्गीकरिष्यति किमिति भावः। भरतः मत्प्रीत्यर्थम् पूर्वं राज्यभारमङ्गीकृतवान् खलु। स्वयं श्रीमान् स्वाभाविकपारतन्त्र्यश्रीमान् भवेदित्याशंसायां लिङ्। प्रशास्तु वसुधां कृत्स्नाम्। ततो मदभिषेकसंभ्रमं न लब्धवान्। अहं तु भरताभिषेकमहोत्सवमनुभवेयम्। अत एव अयोध्याकाण्डेऽपि, शनैर्जगाम सापेक्ष इत्युक्तम्। भरताभिषेकदर्शनसापेक्ष इत्यर्थः। अखिलाम् खिलरहिताम्। समृद्धजनामित्यर्थः। कथमसौ भरणक्षम इत्यत्राह–रघुनन्दन इति। त्रैलोक्यभरणक्षमकुलोद्भूत इत्यर्थः ॥ १७ ॥

१८ ] ति० टी०–यावदस्मादाश्रमाद्दूरं याता न स्मः। अयोध्याया अतिसमीपं न प्राप्ताः स्म इति यावत्। क्षिप्रमागन्तुमर्हसि। तावदिति शेषः ॥ १८ ॥

रा० टी०–तस्येति। तस्य भरतस्य बुद्धिं निश्चयं व्यवसायप्रयोगं च क्षिप्रं विज्ञाय यावद्वयं न दूरयाताः तावदेव आगन्तुमर्हसि ॥ १८ ॥

गो० टी०–तस्येति। बुद्धिं मत्सन्निधाने कथं चिद्राज्यमङ्गीकरिष्यतीति बुद्धिम्, व्यवसायं सर्वात्मना नाङ्गीकरि-

१ राज्यार्थी चेदिति गो. पा.।

इति प्रतिसमादिष्टो हनूमान्मारुतात्मजः । मानुषं धारयन्रूपमयोध्यां त्वरितो ययौ ॥ १९ ॥
अथोत्पपात वेगेन हनूमान्मारुतात्मजः । गरुत्मानिव वेगेन जिघृक्षन्भुजगोत्तमम् ॥ २० ॥
लङ्घयित्वा पितृपथं विहगेन्द्रालयं शुभम् । गङ्गायमुनयोर्भीमं समतीत्य समागमम् ॥ २१ ॥
शृङ्गवेरपुरं प्राप्य गुहमासाद्य वीर्यवान् । स वाचा शुभया हृष्टो हनूमानिदमब्रवीत् ॥ २२ ॥
सखा तु तव काकुत्स्थो रामः सत्यपराक्रमः । ससीतः सह सौमित्रिः स त्वां कुशलमब्रवीत् ॥ २३ ॥
पञ्चमीमद्य रजनीमुषित्वा वचनान्मुनेः । भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यत्रैव राघवम् ॥ २४ ॥
एवमुक्त्वा महातेजाः संप्रहृष्टतनूरुहः । उत्पपात महावेगाद्वेगवानविचारयन् ॥ २५ ॥
सोऽपश्यद्रामतीर्थं च नदीं वालुकिनीं तथा । वरूथीं गोमतीं चैव भीमं शालवनं तथा ॥ २६ ॥
प्रजाश्च बहुसाहस्रीः स्फीताञ्जनपदानपि । स गत्वा दूरमध्वानं त्वरितः कपिकुञ्जरः ॥ २७ ॥
आससाद द्रुमान्फुल्लान्नन्दिग्रामसमीपगान् । सुराधिपस्योपवने यथा चैत्ररथे द्रुमान् ॥ २८ ॥

ष्यतीति व्यवसायं च, ज्ञात्वा अङ्गीकरिष्यति चेदस्मादेशाद्यावद्दूरं न याताः स्म तावदागन्तुमर्हसि । अन्यथा नागच्छेति भावः । अत एव हनुमानपि तस्य व्यवसायं ज्ञात्वा नागतवानिति ज्ञेयम् । केचित्तु भरतभावज्ञोऽपि रामः सर्वात्मना सुरक्तोऽपि राज्ञा परीक्षणीय इति लोके राजनीतिप्रवर्तनार्थैवमतिशङ्कावचनमुक्तवान् । वस्तुतः स्वस्य झटिति गमने भरतस्य हर्षे उन्मस्तको भवेदिति । तस्मात्सत्त्वाय हनुमन्तं प्रेषितवान् । तदाशयज्ञो हनुमानपि रामागमनमुक्त्वा भरतेन सहैवागतवानित्याहुः ॥ १८ ॥

१९ ] ति० टी०—मानुषमित्यर्धं संक्षेपः ॥ १९ ॥

रा० टी०—इतीति । इति प्रतिसमादिष्टो हनुमान् मानुषं रूपं धारयन् सन् अयोध्यां ययौ ॥ १९ ॥

गो० टी०—इतीति । प्रतिसमादिष्टः प्रतिकूलं समादिष्टः । अहृदयं समादिष्ट इत्यर्थः । ययौ यातुमुद्युक्तः ॥ १९ ॥

२०] ति० टी०—तस्यैव प्रपञ्चः—उत्पपातेत्यादि ॥ २० ॥

रा० टी०—अथेति । हनुमान् उरगोत्तमं जिघृक्षन् गरुत्मानिव वेगेनोत्पपात ॥ २० ॥

गो० टी०—अथेति । अथ उद्योगानन्तरम् । वेगेन जिघृक्षन् इवेत्यन्वयः ॥ २० ॥

२१–२३ ] ति० टी०—पितृपथं वायुमार्गम् अन्तरिक्षमित्यर्थः । तद्विशेषणं विहगेन्द्रालयं श्रेष्ठविहगानां संचारस्थानम् ॥ २१ ॥ २३ ॥

रा० टी०—लङ्घयित्वेति । पितृपथं वायुमार्गं विहगेन्द्रालयं गरुडगृहं च लंघयित्वा अत एव गंगायमुनयोस्समागमं समतीत्य अतिक्रम्य श्रृंगवेरपुरं प्राप्य गुहमासाद्य प्राप्य हनुमानिदमब्रवीत् श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

रा० टी०—तदाकारमाह—सखेति । रामः त्वां कुशलमब्रवीत् ॥ २३ ॥

गो० टी०—लङ्घयित्वेत्यादिश्लोकद्वयमेकान्वयम् । पितृपथं स्वपितृपथम् । वायुमार्गमित्यर्थः । भुजगेन्द्रालयमिति गङ्गायमुनासंगमविशेषणम् ॥ २१–२३ ॥

२४ ] ति० टी०—अद्य पञ्चमीं पञ्चमीसंबन्धिनीं रजनीमुषित्वाद्य स्थित्वा श्वो गमिष्यसीति भरद्वाजानुज्ञातं राघवं श्वः प्रातरेव द्रक्ष्यसि ॥ २४ ॥

रा० टी०—पंचमीमिति । पंचमीं रजनीं पञ्चमतिथिरात्रिं मुनेर्भरद्वाजस्य वचनादुषित्वा अभ्यनुज्ञातं राघवमत्रैव द्रक्ष्यसि ॥ २४ ॥

गो० टी०—पञ्चमीमिति । पञ्चमीं पञ्चमीसंबन्धिनीम् । अद्य रजनीम् एतां रजनीम् उषित्वा । निर्गतमिति शेषः । भरद्वाजाभ्यनुज्ञातम् । प्रातरिति शेषः । अत्रैव अचिरेणैव ॥ २४ ॥

२५ ] ति० टी०—संप्रहृष्टतनूरुहः । जगदानन्दरामसेवकत्वलाभेनेति भावः । अविचारयन् । अध्वश्रममिति शेषः ॥ २५ ॥

रा० टी०—एवमिति । हनुमान् एवमुक्त्वा अविचारयन् अध्वश्रममगणयन् महावेगादुत्पपात ॥ २५ ॥

गो० टी०—एवमिति । संप्रहृष्टतनूरुहः सकललोकानन्दकारिरामप्रत्यागमनम् मया श्रावयितव्यं लब्धमित्यस्माद्धेतोरिति भावः । महावेगः महावेगस्वभावः । वेगवान् तादात्विकवेगवान् । अविचारयन् मार्गस्थवनगिरिनदीसौन्दर्यादिकमगणयन्निति भावः ॥ २५ ॥

२६–२७ ] ति० टी०—रामतीर्थं परशुरामतीर्थम् । वालुकिनीं तदाख्याम् । शालवनं शालवृक्षवनम् ॥ २६ ॥ २७ ॥

२८ ] ति० टी०—सुराधिपस्योपवने नन्दनाख्ये चैत्ररथं कुबेरोद्यानं चात्र द्रष्टव्यम् ॥ २८ ॥

रा० टी०—स इति । स हनुमान् रामतीर्थं वालुकिनीं तदभिधां नदीं च सालवनं च बहुसाहस्रीः प्रजाश्चापश्यत सार्धश्लोक एकान्वयी ॥ २६ ॥

रा० टी०—स इति । कपिकुंजरः दूरमध्वानं गत्वा नंदिग्रामसमीपगान् द्रुमान् आससाद तत्र दृष्टान्तः वीथिः स्वलंकृते

१ मध्यं सन्निपातमतीत्य चेति गो. पा. । २ गोमतीं तां च सोऽपश्यदिति गो. पा. । ३ एतदाद्ययोर्द्वयोः श्लोकयोर्व्यत्यासेन पाठो गो. पु. ।

स्त्रीभिः सपुत्रैः पौत्रैश्च रममाणैः स्वलंकृतैः । क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम्॥ २९ ॥
ददर्श भरतं दीनं कृशमाश्रमवासिनम् । जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम् ॥ ३० ॥
फलमूलाशिनं दान्तं तापसं धर्मचारिणम् । समुन्नतजटाभारं वल्कलाजिनवाससम् ॥ ३१ ॥
नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम् । पादुके ते पुरस्कृत्य प्रशासन्तं वसुंधराम् ॥ ३२ ॥
चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् । उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः ॥ ३३ ॥
बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः । नहि ते राजपुत्रं तं चीरकृष्णाजिनाम्बरम् ॥ ३४ ॥
परिभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलाः । तं धर्ममिव धर्मज्ञं देहबन्धमिवापरम् ॥ ३५ ॥
उवाच प्राञ्जलिर्वाक्यं हनूमान्मारुतात्मजः । वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम् ॥ ३६ ॥

रममाणैस्सपुत्रैः पुत्रसहितैः पौत्रैश्च सेवितान् सुराधिपस्योपवने चैत्ररथे कुबेरोद्याने द्रुमानिव अर्द्धचतुष्टयमेकान्वयि ॥२७॥२८॥

गो० टी०—सोऽपश्यदित्यादिसार्धश्लोकमेकं वाक्यम् । रामतीर्थं परशुरामतीर्थम् । तां प्रसिद्धाम् । प्रजाः कोसलजनपदस्थाः ॥ २६ ॥

गो० टी०—स गत्वेत्यादिश्लोकद्वयमेकान्वयम् । फुल्लान् फुल्लपुष्पान् । स्त्रीभिः सपुत्रैर्वृद्धैश्च । स्त्रीबालवृद्धाविशेषेण सर्वेषामानन्दकरत्वादिति भावः । सुराधिपस्य उपवने नन्दनवने, चैत्ररथे च स्थितान् द्रुमान् यथा तत्सदृशानित्यर्थः ॥२७॥२८॥

२९–३१ ] ति० टी०—स्वलंकृतैः रममाणैः पुत्रपौत्रैः सहिताभिः स्त्रीभिर्गृह्यमाणपुष्पानिति द्रुमविशेषणम् ॥ २९–३१ ॥

३२ ] ति० टी०—भावितात्मानं ध्यातपरमात्मानम्, अत एव ब्रह्मर्षिसमतेजसम् ॥ ३२ ॥

३३ ] ति० टी०—चातुर्वर्ण्यस्य लोकस्य । स्वार्थे ष्यञ् । चतुर्वर्णरूपस्य लोकस्य ॥ ३३ ॥

रा० टी०—क्रोशमात्र इति । चीरकृष्णाजिनाम्बरं भ्रातृव्यसनेन कर्शितं बाधितचित्तम् अत एव कृशम् अत एव मलेन दिग्धं व्याप्तमंगं यस्य अत एव समुन्नतो जटाभारो यस्य वल्कलमजिनमेव वासो यस्य अत एव दीनं क्षीणपरिकरविशिष्टम् ॥ नियतं यतचित्तं भावितः परिशीलितः आत्मा परमात्मा येन पादुके पुरस्कृत्य वसुधां प्रशासन्तं काषायाम्बरधारिभिः अमात्यैः पुरोहितैश्च बलमुख्यैश्च उपस्थितमाश्रमवासिनं नन्दिग्रामीयपर्णशालास्थितम् भरतमयोध्यायाः क्रोशमात्रे क्रोशपरिमितोर्ध्वदेशे स्थितो हनुमान् ददर्श एकत्राजिनशब्दः मृगचर्मपरः परत्र व्याघ्रादिचर्मपर इति न पौनरुक्त्यम् अर्द्धदशकमेकान्वयि ॥ २९–३३ ॥

गो० टी०—क्रोशमात्रे त्वित्यादिश्लोकपञ्चकमेकान्वयम् । क्रोशमात्रे *घटिकाद्वयमात्रे घटिकाद्वयगन्तव्यभूमौ । क्रोशलक्षणमुक्तं ज्यौतिषदर्पणे—यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः । हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषामिति । दीनं रामादर्शनेन । दान्तं बहिरिन्द्रियनिग्रहशालिनम् । समुन्नतजटाभारमिति ॥ पूर्वं जटावत्त्वोक्तिः, अत्र तद्भारस्य समुन्नतत्वोक्तिरिति वैषम्यम् । वल्कलाजिनवाससमित्युत्तरीयोक्तिः । अतश्चीरकृष्णाजिनाम्बरमित्यनेन न पुनरुक्तिः । नियतं नियतवाचम् । भावितात्मानं ध्यातात्मानमिति मनोनियमोक्तिः । ते पूर्वं रामेण दत्ते । चातुर्वर्ण्यस्य चतुर्वर्णरूपस्य स्वार्थे ष्यञ् लोकस्य जनस्य । युक्तैः सन्नद्धैः । योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः ॥ २९–३३ ॥

३४ ] ति० टी०—बलमुख्यैर्बलाध्यक्षैर्युक्तैः काषायाम्बरधारिभिः । 'यथा राजा तथा प्रजा' इति न्यायात् । तदेवाह—नहि ते इति ॥ ३४ ॥

रा० टी०—नहीति । धर्मवत्सलाः पौराः राजपुत्रं परिभोक्तुं तं परित्यज्य भोगं कर्तुं नैव व्यवस्यन्ति एतेन पौराणामपि भोगराहित्यं व्यक्तम् ॥ ३४ ॥

गो० टी०—भ्रातृवियोगाद्भरतस्य वल्कलादिधारणमस्तु अमात्यादीनां तत् किन्निमित्तमित्याशङ्क्य तत्र कारणमाह—न हीति । राजपुत्रं भरतं परिवर्जयित्वा भोक्तुं समीचीनवस्त्राभरणादीन्यनुभवितुम्, न व्यवस्यन्ति व्यवसायं न कुर्वन्ति । "अपपरी वर्जने" इति परेः कर्मप्रवचनीयसंज्ञा आचार्याः प्राहुः । परि परितो वर्तमाना अपि पौराः भरतं भोक्तुम् अनुभवितुम् । द्रष्टुमिति यावत् । न व्यवस्यन्ति व्यवसायं न कुर्वन्ति । तद्दर्शने निराशा भवन्तीत्यर्थः । तत्र हेतुमाह—राजपुत्रमिति । रामविरहानन्तरक्षणे मृतस्य पुत्रः खल्वयम् । अथ रामानागमेन किमयमस्माभिर्लभ्यत इति भावः । हेत्वन्तरमाह—धर्मवत्सलं धर्मार्थतया स्वात्मत्यागे पितृसदृशमित्यर्थः । चतुर्दशे वर्षे पूर्णेपि रामागमनादर्शनात् प्राणत्यागे व्यवसितं भरतमालोकयतां पौराणां खेदातिशयोऽनेन श्लोकेन सूच्यते ॥ ३४ ॥

३५–३६ ] ति० टी०—परिभोक्तुं परित्यज्य भोक्तुम् । द्वितीय इवशब्दो वाक्यालंकारे । 'इव' इति वैकत्र पाठः । देहबन्धं मनुष्यदेहसंबन्धवन्तम् ॥ ३५ ॥ ३६ ॥

रा० टी०—तमिति । देहबंधं मनुष्यदेहवंतमपरं धर्ममिव धर्मज्ञं तं भरतं प्रांजलिरेव हनुमान् उवाच ॥ ३६ ॥

१ वल्कलमिति गो. पा. २ देहवन्तमिति गो. पा. । *इदं च लेखनमसंबद्धं भाति घटिकार्थस्यानवगादिना ।

अनुशोचसि काकुत्स्थं स त्वां कौशलमब्रवीत् । प्रियमाख्यामि ते देव शोकं त्यज सुदारुणम् ॥३७॥
अस्मिन्मुहूर्ते भ्रात्रा त्वं रामेण सह संगतः । निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् ॥ ३८ ॥
उपयाति समृद्धार्थः सह मित्रैर्महाबलैः । लक्ष्मणश्च महातेजा वैदेही च यशस्विनी ॥
सीता समग्रा रामेण महेन्द्रेण शची यथा ॥ ॥ ३९ ॥
एवमुक्तो हनुमता भरतः कैकयीसुतः । पपात सहसा हृष्टो हर्षान्मोहमुपागमत् ॥ ४० ॥
ततो मुहूर्तादुत्थाय प्रत्याश्वस्य च राघवः । हनूमन्तमुवाचेदं भरतः प्रियवादिनम् ॥ ४१ ॥
अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य संभ्रमात् । सिषेच भरतः श्रीमान्विपुलैरश्रुबिन्दुभिः ॥ ४२ ॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः । प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम्॥ ४३ ॥
गवां शतसहस्रं च ग्रामाणां च शतं परम् । सकुण्डलाः शुभाचारा भार्याः कन्यास्तु षोडश॥ ४४ ॥
हेमवर्णाः सुनासोरूः शशिसौम्याननाः स्त्रियः । सर्वाभरणसंपन्नाः संपन्ना कुलजातिभिः ॥ ४५ ॥

---

रा०टी०—तदाकारमाह—वसन्तमित्यादिभिः । दण्डकारण्ये वसन्तं यंत्वमनुशोचसि स रामः त्वां कौशलमब्रवीत् ॥ ३६ ॥

गो० टी०—तमिति । देहवन्तमपरं धर्ममिव स्थितम् । द्वितीय इवशब्दो वाक्यालंकारे ॥ ३५ ॥ ३६ ॥

३७ ] ति० टी०—शोकं त्यज सुदारुणमित्यनेनास्य पापोक्तोऽग्निप्रवेशोद्यमः सूचित इति बोध्यम् ॥ ३७ ॥

रा० टी०—प्रियमिति । अस्मिन्मुहूर्ते शीघ्रमित्यर्थः भ्रात्रा रामेण सह संगतः त्वं भविष्यसीति शेषः अतः शोकं त्यज इति प्रियमहमाख्यामि ॥ ३७ ॥

गो० टी०—प्रियमिति । संगतः भविष्यसीति शेषः । अत्रापरिचितत्वात् भरतं हनुमान् नावन्दत । यद्वा प्राञ्जलिरिति पदं वन्दनपूर्वकाञ्जलिपरम् । अथवा भरतदशादर्शनेन प्रियाख्याने क्षणविलम्बेऽपि प्राणहानिशङ्कया सति कुड्य इति न्यायेन वन्दनोद्देश्यवस्तुनि शीर्यमाणे किं वन्दनेनेति तदुज्जीवकं प्रियाख्यानमेवाकरोत् । यद्वा तद्दशादर्शनेन स्वरूपं विसस्मार ॥ ३७ ॥

३८–३९ ] ति० टी०—अस्मिन्मुहूर्ते । अचिरादित्यर्थः । संगतो भविष्यसीति शेषः ॥ ३८ ॥ ३९ ॥

रा० टी०—निहत्येति । रावणं निहत्य मैथिलीं प्रतिलभ्य रामो लक्ष्मणश्च महेन्द्रेण शचीव रामेण समग्रा सहिता सीता च उपयाति अर्धचतुष्टयमेकान्वयि ॥ ३८ ॥ ३९ ॥

गो० टी०—निहत्येति । समृद्धार्थः संपूर्णमनोरथः ॥३८॥

गो० टी०—लक्ष्मणश्चेति । समग्रा संपूर्णमनोरथा । उपयात इति शेषः ॥ ३९ ॥

४०–४१ ] ति० टी०—उत्कटहर्षोऽपि चित्तवैवश्यहेतुरितिकृत्वा पपातेत्यादि ॥ ४० ॥ ४१ ॥

४२ ] ति० टी०—अशोकजैर्हर्षजैरित्यश्रुबिन्दुभिरित्यनेनान्वितम् ॥ ४२ ॥

रा० टी०—तत इति । भरतस्संभ्रमात् आदरात् कपिमालिङ्ग्य प्रीतिमयैः अत एव अशोकजैः अशोकः शोकसंसर्गशून्यः परमानन्द इत्यर्थः तज्जनितैः अश्रुबिन्दुभिः सिषेच इदमुवाच च अर्धचतुष्टयमेकान्वयि ॥ ४१ ॥ ४२ ॥

गो० टी०—एवमिति । हृष्टः पपात हर्षान्मोहं जगाम इत्यनेन वार्ताश्रवणमात्रेणैतादृशावस्थे भरते झटिति रामागमने कावस्था भवेदिति ऋषिर्विस्मयते ॥ ४० ॥ ४१ ॥

गो० टी०—अशोकजैरिति । भरतः कपिमालिङ्ग्य अशोकजैः शोकजभिन्नैः प्रीतिमयैः आनन्दजैरित्यर्थः विपुलैः गुरुभिः ॥ ४२ ॥

४३–४५ ] ति० टी०—अनुक्रोशात्कृपया प्रियाख्यानस्य कर्तरि ल्युट् प्रियाख्यानकर्तुः किं प्रियं ददामि एतत्प्रियाख्यानसमं न किंचित्पश्यामीति भावः ॥ ४३ ॥ ४५ ॥

रा० टी०—तदाकारमाह—देव इत्यादिभिः । अनुक्रोशात् स्वकृपातः इहागतस्त्वं देवो वा मानुषो वा तद्वदेत्यर्थः प्रियाख्यानस्य प्रियवक्तुस्ते किं ददामि इति ब्रुवतो ममाग्रे प्रियं स्वेप्सितं वदेति शेषः ॥ ४३ ॥

रा० टी०—तूष्णीं स्थितं तं प्रत्याह—गवामिति । द्वाभ्याम् । षोडश कन्याः भार्यास्ते दास्यामीति शेषः ॥ ४४ ॥

रा० टी०—हेमेति । हेमवर्णाः सर्वाभरणसम्पन्नाः कुलजातिभिश्च सम्पन्नाः सुनासोरूः शशिसौम्याननाः स्त्रियः भवद्भार्याः कर्मकरीरित्यर्थः दास्यामीति शेषः॥ ४५ ॥

रा० टी०—एवमिति । हृष्टो भरतः पपात हर्षात् मोहमविवेकमुपागमत् ॥ ४० ॥

गो० टी०—देवो वेत्यादिश्लोकत्रयमेकान्वयम् ॥ परिगृहीतमनुष्यदेहेऽपि हनुमति तेजोविशेषात् संशयः । अनुक्रोशात् दयया, प्रियं ब्रुवतस्ते, प्रियाख्यानस्य प्रियवचनस्य, पारितोषिकत्वेन गवादिकं ददामि भार्याः भरणार्हाः कन्याः अनूढाः स्त्रियः ॥ ४३–४५ ॥

निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदाद्भुतोपमम् ।
प्रहर्षितो रामदिदृक्षयाभवत्पुनश्च हर्षादिदमब्रवीद्वचः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चविंशत्यधिकशततमः सर्गः ॥ १२५ ॥

## षड्विंशत्यधिकशततमः सर्गः ।

प्रहृष्टेन भरतेनानुयुक्तो मारुतिः शूर्पणखाकर्णनासच्छेदक्रुद्धखरदूषणवधादिसीताहरणमध्यरावणवधान्तं रामविजयोत्कर्षकं निखिलवृत्तमकथयत् ।

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् । शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥ १ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २ ॥
राघवस्य हरीणां च कथमासीत्समागमः । कस्मिन्देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥ ३ ॥
स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः । आचचक्षे ततः सर्वं रामस्य चरितं वने ॥ ४ ॥
यथा प्रव्राजितो रामो मातुर्दत्तौ वरौ तव । यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ५ ॥
यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात्प्रभो । त्वयायोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम् ॥ ६ ॥
चित्रकूटगिरिं गत्वा राज्येनामित्रकर्शनैः । निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम् ॥ ७ ॥
स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम् । आर्यस्य पादुके गृह्य यथासि पुनरागतः ॥ ८ ॥
सर्वमेतन्महाबाहो यथावद्विदितं तव । त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥ ९ ॥

---

४६ ] ति० टी०—निशम्य प्रहर्षितो रामदिदृक्षया । अत्र युक्तोऽभवदिति शेषः ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे पञ्चविंशत्यधिकशततमः सर्गः ॥ १२५ ॥

रा० टी०—निशम्येति । नृपात्मजो भरतः अद्भुतोपमं रामागमनं कपिप्रवीरस्य कपिप्रवीरात् निशम्य श्रुत्वा प्रहर्षितोऽभवत् रामदिदृक्षयोपलक्षितस्सन् इदं वचोऽब्रवीच्च ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तविंशत्यधिकशततमः सर्गः ॥ १२७॥

गो० टी०—निशम्येति । रामदिदृक्षया उपलक्षितो भरतः । अद्भुता उपमा यस्य तत् अद्भुतोपमम् निरुपममित्यर्थः । तद्रामगमनम्, कपिप्रवीरस्य कपिप्रवरात्, निशम्य । नटस्य शृणोतीतिवत्षष्ठी । प्रहर्षितोऽभवत् ॥ ४६ ॥

इति श्रीगो० श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने अष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥

१ ] ति० टी०—बहूनि वर्षाणि सुमहद्वनं गतस्य मम नाथस्य कीर्तनं शृणोम्यहम् ॥ १ ॥

२ ] ति० टी०—अत इयं लौकिकी गाथा कल्याणीति मां प्रति प्रतिभाति । बतेति हर्षे । तां गाथामाह—एतीति ॥ २ ॥

रा० टी०—भरतवचनाकारमाह—बहूनीत्यादिभिः । मम प्रीतिकरं बहूनि वर्षाणि वनं गतस्य नाथस्य कीर्तनं शृणोमि ॥ १ ॥

रा० टी०—कल्याणीति । जीवन्तं नरं वर्षशतादपि आनन्द एति इयं लौकिकी गाथा मां कल्याणी एव प्रतिभाति इव एवार्थे २

गो० टी०—बहूनीत्यादिश्लोकद्वयमेकान्वयम् । बहूनि वर्षाणि वनं गतस्येति संबन्धः । वर्षशतादपीत्यत्रेतिकरणं द्रष्टव्यम् । वर्षशतात्परमिति शेषः ॥ १ ॥ २ ॥

३ ] ति० टी०—सह मित्रैरित्यस्य सुग्रीवादिमित्रसहितैरित्यर्थः तन्मुखादवगत्य पृच्छति—राघवस्येति । किमाश्रित्य किं निमित्तमाश्रित्येत्यर्थः ॥ ३ ॥

रा० टी०—राघवस्येति । राघवस्य हरीणां च समागमः कस्मिन्देशे किं प्रयोजनमाश्रित्य कथमासीत् ॥ ३ ॥

गो० टी०—राघवस्येति । अत्र वानरसमागमप्रश्नेन पूर्वं भरतः सामान्यतो वानरसेनासन्नाहं श्रुतवानिति गम्यते । किमाश्रित्य किं प्रयोजनमवलम्ब्य ॥ ३ ॥

४ ] ति० टी०—बृस्यां तापसासने ॥ ४ ॥

रा० टी०—स इति । राजपुत्रेण भरतेन बृस्यां तापसासने समुपवेशितः पृष्टश्च स हनुमान् रामस्य चरितमाचचक्षे ॥ ४ ॥

गो० टी०—स इति । बृस्यां तपस्विसमुचितासने । व्रतिनामासनं बृसीत्यमरः ॥ ४ ॥

५ ] ति० टी०—यथा शब्दानां तवानुभवसिद्ध इत्यर्थः । मातू राज्ञा वरौ दत्तौ । तत एव राज्ञा रामः प्रव्राजित इति यथा तवानुभवसिद्धमित्यर्थः । एवमग्रेऽपि ॥ ५ ॥

६–७ ] ति० टी०—राजगृहात्तदाख्यात्केकयपुरात्॥६॥७॥

८–९ ] ति० टी०—विसर्जितम् । रामेणेति शेषः॥८॥९॥

---

१ कर्शनेति गो. पा. ।

अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम् । परिद्यूनमिवात्यर्थं तद्वनं समपद्यत ॥ १० ॥
तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगाकुलम् । प्रविवेशाथ विजनं स महद्दण्डकावनम् ॥ ११ ॥
तेषां पुरस्ताद्बलवान्गच्छतां गहने वने । विनदन्सुमहानादं विराधः प्रत्यदृश्यत ॥ १२ ॥
तमुत्क्षिप्य महानादमूर्ध्वबाहुमधोमुखम् । निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १३ ॥
तत्कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ । सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १४ ॥
शरभङ्गे दिवं प्राप्ते रामः सत्यपराक्रमः । अभिवाद्य मुनीन्सर्वाञ्जनस्थानमुपागमत् ॥ १५ ॥
चतुर्दश सहस्राणि जनस्थाननिवासिनाम् । हतानि वसता तत्र राघवेण महात्मना ॥ १६ ॥
एकेन सह संगम्य रामेण रणमूर्धनि । अह्नश्चतुर्थभागेन निःशेषा राक्षसाः कृताः ॥ १७ ॥
महाबला महावीर्यास्तपसो विघ्नकारिणः । निहता राघवेणाजौ दण्डकारण्यवासिनः ॥ १८ ॥
राक्षसाश्च विनिष्पिष्टाः खरश्च निहतो रणे । दूषणं चाग्रतो हत्वा त्रिशिरास्तदनन्तरम् ॥ १९ ॥

---

रा० टी०—तदाकारमाह—यथेत्यादिभिः । यथा तव मातुः वरौ दत्तौ राज्ञेति शेषः यथा च रामः प्रव्राजितः यथा च दशरथः अमृत- मृतसदृशः लोकान्तरं प्राप्त इत्यर्थः यथा च राजगृहात् स्वमातुलसदनात् दूतैस्त्वमानीतः त्वया च यथा राज्यं नेप्सितं यथा च चित्रकूटगिरिं गत्वा भ्राता रामः त्वया निमन्त्रितः प्रार्थितः यथा च राज्ञो वचने स्थितेन रामेण राज्यं विसर्जितं त्वत्प्रार्थनयापि नाङ्गीकृतमित्यर्थः यथा च पादुके गृह्य गृहीत्वा पुनरागतोसि एतत्सर्वं वृत्तं तव यथावद्विदितमतः त्वयि प्रतिप्रयाते सति यद्वृत्तं तन्मे मत्तो निबोध श्लोकपञ्चकमेकान्वयि ॥ ५–९ ॥

गो० टी०—वक्ष्यमाणवृत्तान्ते प्रामाण्यसिद्धये तत्पूर्ववृत्तं संग्रहेणानुवदति—यथेत्यादिना । अत्र यथेत्यस्य येन प्रकारेणेत्यर्थः । मातुः मम राज्येन निमन्त्रित इत्यन्वयः । अमित्रकर्शनेत्यनेन राज्यकरणसामर्थ्यं स्वस्य सत्यपि ज्येष्ठानुवृत्त्यर्थं निमन्त्रित इति गम्यते ॥ ५–९ ॥

१० ] ति० टी०—परिद्यूनं परिक्षीणम् । पीडितमिति यावत् ॥ १० ॥

रा० टी०—अपयात इति । त्वयि अपयाते चित्रकूटात्परावृत्ते सति समुद्भ्रान्ता मृगद्विजाः यस्मिन् तद्वनं परिद्यूनं परिक्षीणमिव यथा भवति तथा समपद्यत ॥ १० ॥

गो० टी०—अपयात इति । समुद्भ्रान्तेति । अपूर्वपुरुषदर्शनेनेति भावः । परिद्यूनं परितप्तम् ॥ १० ॥

११–१२ ] ति० टी०—तत्तदनन्तरम् ॥ ११ ॥ १२ ॥

रा० टी०—तदिति । हस्तिभिर्मृदितं प्रमर्दितं दण्डकावनं प्रविवेश ॥ ११ ॥

रा० टी०—तेषामिति । गच्छतां तेषां रामादीनां पुरस्तात् विराधः प्रत्यदृश्यत ॥ १२ ॥

गो० टी०—तदिति । तत् प्रसिद्धम् । हस्तिभिः वनगजैः मर्दितम् ॥ ११ ॥ १२ ॥

१३–१६ ] ति० टी०—निखाते गर्ते प्रक्षिपन्ति स्म प्रक्षिप्तवन्तावित्यर्थः ॥ १३ ॥ १६ ॥

रा० टी०—तमिति । नदन्तं कुञ्जरमिव महानादं समुत्क्षिप्य कृत्वेत्यर्थः विद्यमानं विराधं निखाते प्रक्षिपन्ति स्म १३

रा० टी०—तदिति । सायान्हे शरभंगस्याश्रममीयतुः प्रापतुः ॥ १४ ॥

रा० टी०—शरभंग इति । रामः जनस्थानमुपागमत् ॥ १५ ॥

रा० टी०—चतुर्दशेति राघवेण रक्षसां चतुर्दश सहस्राणि हतानि ॥ १६ ॥

गो० टी०—तमिति । निखाते अवटे । प्रक्षिपन्ति स्मेति बहुवचनेन सीतयापि तत्र किंचित्साहाय्यं कृतमिति गम्यते ॥ १३–१५ ॥

गो० टी०—ततः पश्चादित्यर्थम् ॥ १६ ॥

गो० टी०—तत इति । कर्णनासमित्यत्र प्राण्यङ्गत्वादेकवद्भावः ॥ १७ ॥

गो० टी०—चतुर्दशेति । स्पष्टम् ॥ १८ ॥

१७–१९ ] ति० टी०—अह्नश्चतुर्थभागेन । इदं च राक्षसार्दनयुद्धसंनाहसीतागुहाप्रेषणादिसर्वव्यापारापेक्षया । युद्धकालस्त्वर्धाधिकमुहूर्तेनेत्यारण्यकाण्ड उक्तः ॥ १७ ॥ १९ ॥

रा० टी०—तदेव सविशेषमाह—एकेनेति । एकेन रामेण सह संगम्य विद्यमानाः राक्षसाः अह्नः चतुर्थभागेन निश्शेषाः कृताः रामेणेति शेषः ॥ १७ ॥

रा० टी०—महाबला इति । तपसो विघ्नकारिणः राघवेण निहताः ताडिताः विनिष्पिष्टाः हिंसिताश्च खरश्च निहतः दूषणं हत्वा त्रिशिराश्च निहतः श्लोकद्वयमेकान्वयि ॥१८॥१९॥

गो० टी०—एकेनेति । संगताः पार्थक्येन विना सर्वे राक्षसाः परस्परं मिलिताः सन्तः, एकेन रामेण सह संगम्य निःशेषाः कृता इत्यन्वयः । अह्नश्चतुर्थभागेनेत्यत्र अह्नश्चतुर्थो

पश्चाच्छूर्पणखा नाम रामपार्श्वमुपागता । ततो रामेण संदिष्टो लक्ष्मणः सहसोत्थितः ॥ २० ॥
प्रगृह्य खड्गं चिच्छेद कर्णनासे महाबलः । ततस्तेनार्दिता बाला रावणं समुपागता ॥ २१ ॥
रावणानुचरो घोरो मारीचो नाम राक्षसः । लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः ॥ २२ ॥
सा राममब्रवीद्दृष्ट्वा वैदेही गृह्यतामिति । अयं मनोहरः कान्त आश्रमो नो भविष्यति॥ २३ ॥
ततो रामो धनुष्पाणिर्मृगं तमनुधावति । स तं जघान धावन्तं शरेणानतपर्वणा ॥ २४ ॥
अथ सौम्य दशग्रीवो मृगयां याति राघवे । लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा॥ २५ ॥
जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव । त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् ॥ २६ ॥
प्रगृह्य सहसा सीतां जगामाशु स राक्षसः । ततस्त्वद्भुतसंकाशाः स्थिताः पर्वतमूर्धनि ॥ २७ ॥
सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः । ददृशुर्विस्मिताकारा रावणं राक्षसाधिपम् ॥ २८ ॥
ततः शीघ्रतरं गत्वा तद्विमानं मनोजवम् । आरुह्य सह वैदेह्या पुष्पकं स महाबलः ॥ २९ ॥

---

यामः तस्य भागः त्रिपादघटिकान्यूनार्धांशः तेन । अन्यथा अर्धाधिकमुहूर्तेनेति पूर्वोक्तविरोधः प्रसज्येत ॥ १९ ॥

गो० टी०—महाबला इति । श्लोके तपसो विघ्नकारिण इत्युक्त्या राक्षसहननं तपोविघ्नशान्त्यर्थमिति दर्शितम् ॥ २० ॥

गो० टी०—राक्षसा इत्यर्धम् ॥ २१ ॥

२० ] ति० टी०—ननु रक्षसां वधे को हेतुस्तत्राह— पश्चादिति । जनस्थानोपागमानन्तरमित्यर्थः ॥ २० ॥

२१-२२ ] ति० टी०—कर्णनासे चिच्छेद । ततस्तत्प्रेरितचतुर्दशसहस्ररक्षसां वध इति शेषः । ततः खरादिवधानन्तरम् । तेन लक्ष्मणेन पूर्वमर्दिता सा बाला मूर्खा रावणमुपागमत् ॥ २१ ॥ २२ ॥

रा० टी०—राक्षसानां वधे निमित्तमाह—पश्चादिति । या रामाधरपानस्य चातु याचनकर्त्री शूर्पणखा रामपार्श्वमुपागता ततस्तस्याः कर्णनासे लक्ष्मणश्चिच्छेद ततस्तस्मादेव हेतोस्तेन रामेण अर्दिताः जनस्थानराक्षसा निहता इत्यर्थः ननु तस्याः का गतिरित्यत आह बाला अज्ञा शूर्पणखा तु रावणं समुपागता श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

रा० टी०—रावणेति । मारीचः मृगो भूत्वा वैदेहीं लोभयामास ॥ २२ ॥

गो० टी०—तत इत्यर्धम् । बाला मूर्खा । मूर्खेऽर्भकेपि बालः स्यादित्यमरः ॥ २२ ॥ २३ ॥

२३ ] ति० टी०—मृगमिति शेषः । दृष्ट्वा राममब्रवीत् । तदेवाह—अयं मृगो गृह्यताम् । गृहीतेनानेनाश्रमो मनोहरो भविष्यति ॥ २३ ॥

रा० टी०—सेति । वैदेही दृष्ट्वा मृगमिति शेषः अयं मृगः नः आश्रमः खेलनाश्रयो भविष्यति अतः गृह्यतामिति राममब्रवीत् ॥ २३ ॥

गो० टी—अथैनमिति । एनं रामम् । गृह्यतां मृग-इति शेषः ॥ २४ ॥ २५ ॥

२४-२६ ] ति० टी०—अनुधावत्यनुधावति स्म॥२४॥२६॥

रा० टी०—तत इति । रामः मृगमनुधावति अन्वधावत् अत एव तं मृगं शरेण जघान ॥ २४ ॥

रा० टी०—अथेति । अथ कपटमृगागमनानंतरं राघवे मृगयां याति सति दशग्रीवः आश्रमं सीताकान्तदेशं प्रविवेश सीतां जग्राह च सार्द्धश्लोक एकान्वयी ॥ २५ ॥

रा० टी०—त्रातुकाममिति । त्रातुकामं सीतारक्षणेच्छुं जटायुषं हत्वा सीतां प्रगृह्य राक्षसो रावणो जगाम ॥२६॥

गो० टी०—अथेति । निष्क्रान्त इति । क्रूरत्वान्निष्क्रान्तिकारणानुक्तिः । अत एवाह कामन्दकः—प्रियं पथ्यं च तथ्यं च वदेद्धर्मार्थमेव च । अश्राव्यमयशस्यं च परोक्षे कटु चोत्सृजेदिति ॥ २६ ॥

गो० टी०—जग्राहेति । तरसा बलात्कारेण । ग्रहः अङ्गारक इति यावत् ॥ २७ ॥ २८ ॥

२७ ] ति० टी०—सहसा बलात्कारेण ॥ २७ ॥

२८ ] ति० टी०—विस्मिता ददृशुः । सुग्रीवादय इति भावः ॥ २८ ॥

रा० टी०—तत इति । सीतां गृहीत्वा गच्छन्तं रावणं पर्वतमूर्द्धनि स्थिताः वानराः ददृशुः सार्द्धश्लोक एकान्वयी ॥ २७ ॥ २८ ॥

गो० टी०—ततस्त्वित्यादिसार्धश्लोक एकान्वयः । अद्भुतसंकाशाः अद्भुताकाराः ॥ २९ ॥ ३० ॥

२९ ] ति० टी०—तत इति । अनेन मार्गे क्वचित्स्थापितं गुप्ते देशे आसीत्स्मृतिमात्रेण वा तदुपस्थानं बोध्यम्॥२९॥

रा० टी०—तत इति । पुष्पकं विमानमारुह्य लंकां प्रविवेश सार्द्धश्लोक एकान्वयी ॥ २९ ॥

---

१ इदं सार्धपद्यं " चतुर्दश सहस्राणीति पद्यात्पूर्वं गो. पुस्तके दृश्यते । २ मृगं याते विपिने गो. पा. । ३ इदं पद्यं गो. पु. नास्ति ।

प्रविवेश तदा लङ्कां रावणो राक्षसेश्वरः । तां सुवर्णपरिष्कारे शुभे महति वेश्मनि ॥ ३० ॥
प्रवेश्य मैथिलीं वाक्यैः सान्त्वयामास रावणः । तृणवद्भाषितं तस्य तं च नैर्ऋतपुंगवम् ॥ ३१ ॥
अचिन्तयन्ती वैदेही ह्यशोकवनिकां गता । न्यवर्तत तदा रामो मृगं हत्वा तदा वने ॥ ३२ ॥
निवर्तमानः काकुत्स्थो दृष्ट्वा गृध्रं स विव्यथे । गृध्रं हतं तदा दृष्ट्वा रामः प्रियतरं पितुः ॥ ३३ ॥
मार्गमाणस्तु वैदेहीं राघवः सहलक्ष्मणः । गोदावरीमनुचरन्वनोद्देशांश्च पुष्पितान् ॥ ३४ ॥
आसेदतुर्महारण्ये कबन्धं नाम राक्षसम् । ततः कबन्धवचनाद्रामः सत्यपराक्रमः ॥ ३५ ॥
ऋष्यमूकगिरिं गत्वा सुग्रीवेण समागतः । ततः समागमः पूर्वं प्रीत्या हार्दो व्यजायत ॥ ३६ ॥
भ्रात्रा निरस्तः क्रुद्धेन सुग्रीवो वालिना पुरा । इतरेतरसंवादात्प्रगाढः प्रणयस्तयोः ॥ ३७ ॥
रामः स्वबाहुवीर्येण स्वराज्यं प्रत्यपादयत् । वालिनं समरे हत्वा महाकायं महाबलम् ॥ ३८ ॥
सुग्रीवः स्थापितो राज्ये सहितः सर्ववानरैः । रामाय प्रतिजानीते राजपुत्र्यास्तु मार्गणम् ॥ ३९ ॥
आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना । दश कोट्यः प्लवंगानां सर्वाः प्रस्थापिता दिशः ॥ ४० ॥

---

३०-३१ ] ति० टी०—तदा । तत इत्यर्थः । सुवर्णपरिष्कारे सुवर्णप्राकारे ॥ ३० ॥ ३१ ॥

३२-३४] ति०टी०—तृणवदचिन्तयन्त्यगणयन्ती ॥३२॥३४॥

३५ ] ति० टी०—कबन्धवचनात् । निहतदग्धकबन्धवचनादित्यर्थः ॥ ३५ ॥

रा० टी०—तामिति । सुवर्णः स्वर्णमयः परिष्कारः प्राकारो यस्य तस्मिन् वेश्मनि प्रविश्य रावणो मैथिलीं सान्त्वयामास सान्त्वनानुकूलव्यापारं चकार ॥ ३० ॥

गो०टी०—तामिति । सुवर्णपरिक्रान्ते सुवर्णानुलिप्ते॥३१॥

रा० टी०—तृणवदिति । तस्य रावणस्य भाषितं तं रावणं च अचिन्तयन्ती अगणयन्ती वैदेही अशोकवनिकां गताभवदिति शेषः ॥ ३१ ॥ ३२ ॥

गो० टी०—तृणवदिति । तस्य रावणस्य भाषितं तृणवत् । मत्वेति शेषः । तं च नैर्ऋतपुङ्गवम् अचिन्तयन्ती वैदेही अशोकवनिकां गता । तत्रैव स्थितेत्यर्थः ॥ ३२ ॥ ३३ ॥

रा०टी०—न्यवर्ततेति । रामो मृगं हत्वा न्यवर्तत निवर्तमानः काकुत्स्थः गृध्रं दृष्ट्वा हतं गृध्रमवलोक्य विव्यथे ॥ ३३ ॥

गो० टी०—निवर्तमान इति । अदृष्ट्वेति छेदः । सीतामिति शेषः सीतां गृध्रं चादृष्ट्वा प्रविव्यथ इत्यन्वयः ॥ ३४ ॥

रा० टी०—गृध्रमिति । गृध्रं हतं दृष्ट्वा वैदेहीं मार्गमाणो रामः गोदावरीमनुचरन् सन् कबन्धं नाम राक्षसमासेदतुः जग्मतुरित्यर्थः श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०—गृध्रमित्यादिसार्धश्लोक एकान्वयः । ततो वैदेहीं मार्गमाणो राघवः पितुः प्रियसखं हतं गृध्रं दग्ध्वा गोदावरीं तद्वनोद्देशांश्चान्वचरत् । पुष्पितानित्यनेन पुष्पलोभेन किं सीतात्र गतेति मतिर्व्यज्यते ॥ ३५ ॥

गो० टी०—आसेदतुरित्यर्धमेकं वाक्यम् । राघवाविति शेषः ॥ ३६ ॥ ३७ ॥

३६ ] ति० टी०—तयोः पूर्वं परस्परसांनिध्यात्पूर्वं रामस्य श्रवणेन सुग्रीवस्य दूरादर्शनेन हार्दः समागमः । मानसं सख्यं जातमित्यर्थः ॥ ३६ ॥

रा० टी०—तत इति । कबन्धवचनात् निहतदग्धकबन्धवाक्यात् ऋष्यमूकगिरिं गत्वा सुग्रीवेण समागमोऽभवदिति शेषः ॥ ३६ ॥

गो० टी०—तयोरिति । तयोः रामसुग्रीवयोः, पूर्वं दर्शनात् प्रागेव, हार्दः समागमः मानसः संबन्धः व्यजायत । मनसा परस्परं सख्यमाचकाङ्क्षाते इत्यर्थः ॥ ३८ ॥

३७-३८ ] ति० टी०—तत्र हेतुमाह—भ्रात्रेति । अतस्तयोः परस्परसंवादात्प्रगाढः प्रणय आसीत् ॥ ३७ ॥ ३८ ॥

रा० टी०—तत इति । क्रुद्धेन वालिना निरस्तो यस्सुग्रीवस्तेन सह पूर्वं हार्दो दूरतो दर्शनेन मानसः समागमो व्यजायत अनन्तरमितरेतरसंवादात् तयोः रामसुग्रीवयोः प्रगाढः प्रणयः स्नेहः व्यजायत सार्धश्लोक एकान्वयी ॥ ३८॥

रा० टी०—राम इति । रामः स्वबाहुवीर्येण स्वराज्यं सुग्रीवाधिपत्यं प्रत्यपादयत् अर्थ पृथक् तत्प्रकारमाह—वालिनमिति । वालिनं हत्वा सुग्रीवो राज्ये स्थापितः रामेणेति शेषः ॥ ३९ ॥

गो० टी०—सुग्रीवस्य कुतः सख्यापेक्षेत्यत्र आह—भ्रात्रेति ॥ ३९ ॥

गो० टी०—इतरेतरेति । इतरेतरसंवादात् अन्योन्यप्रयोजनकथनात् प्रणयः प्रगाढः अतिशयितः अभूत् ॥ ४० ॥

गो० टी०—रामस्येति । अत्र सुग्रीव इति शेषः । सुग्रीवः रामस्य बाहुवीर्येण वालिनं हत्वा स्वराज्यम् प्रत्यपादयत् समपादयदिति संबन्धः ॥ ४१ ॥

३९ ] ति० टी०—रामायेति । अत्र क्रमो न विवक्षितः ॥३९

४० ] ति० टी०—आदिष्टा नियुक्ताः ॥ ४० ॥

---

१ प्राविक्ष्येति गो. पा. । २ अन्वचरदिति गो. पा. । ३ तयोरिति गो. पा. । ४ भ्रात्रेति गो. रा. पा. ।

तेषां नो विप्रनेष्टानां विन्ध्ये पर्वतसत्तमे । भृशं शोकाभितप्तानां महान्कालोऽत्यवर्तत ॥ ४१ ॥
भ्राता तु गृध्रराजस्य संपातिर्नाम वीर्यवान् । समाख्याति स्म वसतीं सीतां रावणमन्दिरे ॥ ४२ ॥
सोऽहं दुःखपरीतानां दुखं तज्ज्ञातिनां नुदन् । आत्मवीर्यं समास्थाय योजनानां शतं प्लुतः ॥
तत्राहमेकामद्राक्षमशोकवनिकां गताम् ॥ ॥ ४३ ॥
कौशेयवस्त्रां मलिनां निरानन्दां दृढव्रताम् । तया समेत्य विधिवत्पृष्ट्वा सर्वमनिन्दिताम् ॥ ४४ ॥
अभिज्ञानं मैया दत्तं रामनामाङ्कुलीयकम् । अभिज्ञानं मणिं लब्ध्वा चरितार्थोऽहमागतः ॥ ४५ ॥
मया च पुनरागम्य रामस्याक्लिष्टकर्मणः । अभिज्ञानं मया दत्तमर्चिष्मान्स महामणिः ॥ ४६ ॥
श्रुत्वा तां मैथिलीं रामस्त्वाशशंसे च जीवितम् । जीवितान्तमनुप्राप्तः पीत्वामृतमिवातुरः ॥ ४७ ॥
उद्योजयिष्यन्नुद्योगं दध्रे लैङ्कावधे मनः । जिघांसुरिव लोकान्ते सर्वाँल्लोकान्विभावसुः ॥ ४८ ॥
ततः समुद्रमासाद्य नलं सेतुमकारयत् । अतरत्कपिवीराणां वाहिनी तेन सेतुना ॥ ४९ ॥
प्रहस्तमवधीन्नीलः कुम्भकर्णं तु राघवः । लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणम् ॥ ५० ॥
स शक्रेण समागम्य यमेन वरुणेन च । महेश्वरस्वयंभूभ्यां तथा दशरथेन च ॥ ५१ ॥
तैश्च दत्तवरः श्रीमानृषिभिश्च समागतैः । सुरर्षिभिश्च काकुत्स्थो वराँल्लेभे परंतपः ॥ ५२ ॥
स तु दत्तवरः प्रीत्या वानरैश्च समागतः । पुष्पकेण विमानेन किष्किन्धामभ्युपागमत् ॥ ५३ ॥

---

रा० टी०–रामायेति । सुग्रीवश्च राजपुत्र्यास्सीताया मार्गणमन्वेषणं प्रतिजानीते अत एव सुग्रीवेणादिष्टाः प्लवङ्गानां दश कोट्यः दिशः प्रस्थापिताः सार्धश्लोक एकान्वयी ॥ ४० ॥ ४१ ॥

गो० टी०–सुग्रीव इति । राज्ये स्थापितः सुग्रीवः सर्ववानरैः सहितोऽभूत् ॥ ४२ ॥

गो० टी०–रामायेति । सुग्रीव इति शेषः । प्रतिजानीते प्रतिज्ञातवान् ॥ ४३ ॥

गो० टी०–आदिष्टा इति । आदिष्टाः मार्गणायादिष्टाः, दिशः प्रस्थापिताश्च ॥ ४४ ॥

४१–४२ ] ति० टी०–विप्रनष्टानां बिलप्रवेशानन्तरं निर्गममार्गमजानताम् । 'विप्रकृष्टानाम्' इति पाठेऽतीतकालानामित्यर्थः ॥ ४१ ॥ ४२ ॥

रा०टी०–तेषामिति। तेषां मध्ये विन्ध्यपर्वतसत्तमे विप्रनष्टानां बिलप्रवेशादज्ञातमार्गाणामस्माकं महान् कालोऽत्यवर्तत ४२

रा० टी०–भ्रातेति । गृध्रराजस्य जटायुषस्सम्पातिर्नाम भ्राता रावणमन्दिरे वसन्तीं सीतां समाख्याति स्म ॥ ४३ ॥

गो० टी०–तेषामिति । तेषां स्थापितानाम्, विप्रकृष्टानाम् बहुकालविलम्बितानाम् । यद्वा स्वयंप्रभाबिले प्रविष्टतया दूरं गतानाम् ॥ ४५ ॥ ४६ ॥

४३-४४]ति०टी०-ज्ञातिनामित्यत्र दीर्घाभाव आर्षः ४३-४४

रा० टी०–स इति । तज्ज्ञातिनां सम्पातिवचनेन सीतास्थितिज्ञानवतां दुःखमतिदुर्गमलङ्कायां सीतायाः स्थितत्वेन सीतादर्शनाशक्यज्ञानजनितखेदम् नुदन्नहं योजनानां शतं प्लुतोऽभवमिति शेषः एतेन ज्ञातिनामित्यत्र दीर्घाभाव आर्ष इति महामुक्तिश्चिन्त्या ॥ ४४ ॥

रा० टी०–तत्रेति । तत्र अशोकवनिकां गताम् । एकां सीतामहमद्राक्षम् ॥ ४५ ॥

गो० टी०–सोऽहमिति । ज्ञातिनामिति मकारान्तत्वमार्षम् । प्लुतः समुद्र इति शेषः ॥ ४७ ॥

गो० टी०–तत्राहमिति । तत्र रावणालये ॥ ४८ ॥

रा० टी०–तयेति । तया सीतया सह समेत्य स्थित्वा अनिन्दितां सीतां विधिवत्पृष्ट्वा रामस्य नाम यस्मिन् तत् अङ्गुलीयकमभिज्ञानं मया दत्तम् ॥ ४६ ॥

गो० टी०–तयेति । अनिन्दितां सीताम् सर्वं वृत्तान्तं पृष्ट्वा । प्रच्छिर्द्विकर्मकः । पृष्ट्वा स्थिताय मे मह्यम्, सः प्रसिद्धः महामणिः अभिज्ञानं दत्तम् ॥ ४९ ॥

४५–४७ ] ति० टी०–मणिम् । सीतासकाशाच्चूडामणिं लब्ध्वेत्यर्थः ॥ ४५ ॥ ४७ ॥

रा० टी०–अभिज्ञानमिति। मणिमभिज्ञानं लब्ध्वा चरितार्थः सिद्धप्रयोजनोऽहमागतः अहं पृथक् मयेति रामस्य समीपे मया शीघ्रगत्या मया पुनरागम्य महामणिरभिज्ञानं दत्तम् ॥ ४७ ॥

गो० टी०–अभिज्ञानमित्यर्धम् ॥ ५० ॥

गो०टी०-मया चेति। क्रियाभेदान्मयाशब्दद्वयं प्रयुक्तम् ५१

रा० टी०–श्रुत्वेति । जीवितान्तमनुप्राप्तो रामो मैथिलीं श्रुत्वा जीवितं जीवनमाशशंसे ॥ ४८ ॥

गो० टी०–श्रुत्वेति । जीवितमाशशंसे, ततः पूर्वं जीविते निराशः स्थित इति व्यक्तम् । जीवितान्तं प्राप्तः, आतुरः अमृतं पीत्वा यथा जिवीतमाशास्ते तथेत्यर्थः ॥ ५२ ॥

४८–५३ ] ति० टी०–उद्युज्यते जयोऽनेनेत्युद्योगं बलं तद्योजयिष्यन्प्रोत्साहयिष्यन् ॥ ४८ ॥ ५३ ॥

---

१ क्लमाकामिति गो. पा. २ च मे दत्तमर्चिष्मान्स महामणिरिति गो. पा. । ३ काममिति गो. पा. ।

तां गङ्गां पुनरासाद्य वसन्तं मुनिसंनिधौ । अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥ ५४ ॥
ततः स वाक्यैर्मधुरैर्हनूमतो निशम्य हृष्टो भरतः कृताञ्जलिः ।
उवाच वाणीं मनसः प्रहर्षिणीं चिरस्य पूर्णः खलु मे मनोरथः ॥ ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे षड्विंशत्यधिकशततमः सर्गः ॥ १२६ ॥

## सप्तविंशत्यधिकशततमः सर्गः ॥

ततः परां काष्ठां मुदो वहन्भरतः शत्रुघ्नद्वारा नगरं स्वलंकार्य मन्त्रिभिश्चतुरंगसेनया चोपेतः यानारूढकौसल्यादिमातृः पुरस्कृत्य निष्क्रम्य विमानस्थमेव रामं यदा ववन्दे तदा रामादिष्टं विमानं भूमाववातरत् भरतस्तदारुह्य पुनस्तं च सीतां प्रणम्य सुग्रीवादीन् परिषस्वजे रामस्तु कौसल्यादिमातॄरभिवाद्य पौराञ्जलींश्च सादरं पश्यन् भवद्राज्यं प्रतिगृह्णाणेति भरतेन प्रार्थितस्तेन योजितपादुकः सपरिवारस्तेनैव पुष्पकेण भरताश्रममुपगम्य तद्विमानं कुबेराय-प्रादिशोत् ।

श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः । हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥ १ ॥
दैवतानि च सर्वाणि चैत्यानि नगरस्य च । सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ॥ २ ॥

५४ ] ति० टी०–मुनिसंनिधावथ वसन्तं श्वो द्रष्टुमर्हसि । आश्विनशुक्लचतुर्दश्यामश्विनी तद्वर्षे इति पञ्चम्यां पुष्यस्य संभवः । पूर्णिमायामश्विन्यामप्येकर्क्षक्षयेण वा ॥ ९४ ॥

रा० टी०–उद्योजयिष्यन्निति । उद्योगमुद्योजयिष्यन् कुर्वन् रामः लंकावधे मनो दध्रे तत्र दृष्टान्तः लोकान्ते भुवननाशसमये विभावसुरिव ॥ ४९ ॥

गो० टी०–उद्योजयिष्यन्निति । उद्योगमुद्योजयिष्यन् उद्योगं कुर्वन् । ओदनपाकं पचतीतिवत् । विभावसुः अग्निः ॥ ९३ ॥

रा० टी०–तत इति । ततः समुद्रमासाद्य नलसेतुमकारयत् तेन सेतुना कपिवीराणां वाहिनी अतरत् ॥ ६० ॥

गो० टी०–तत इति । नलं सेतुमकारयत् नलेन सेतुमकारयत् ॥ ९८ ॥

रा० टी०–प्रहस्तमिति । रामो रावणमवधीत् ॥६१॥

रा० टी०–स इति । स रामः शक्रादिभिस्समागम्य तैर्दत्तवरस्सन् वरान् स्वेप्सितान् लेभे अर्द्धचतुष्टयमेकान्वयि ॥ ६२ ॥ ६३ ॥

रा० टी०–स इति । दत्तवरः प्रापितविभीषणादिमनोरथस्स रामः वानरैस्समागतस्सन् किष्किन्धामभ्युपागमत्॥६४॥

रा० टी०–तामिति । गंगां पुनरासाद्य मुनिसन्निधौ भरद्वाजसमीपे वसन्तं रामं श्वः पुष्ययोगेण अविघ्नं यथा भवति तथा द्रष्टुमर्हसि ॥ ६५ ॥

गो० टी०–तामिति । पुनर्गङ्गामासाद्य मुनिसन्निधौ भरद्वाजसमीपे, अद्य वसन्तं तम् अविघ्नं यथा भवति तथा श्वः पुष्ययोगेन द्रष्टुमर्हसि । पुष्ययोगलाभार्थम् अद्य गङ्गातीरे रामः स्थित इति भावः ॥ ९९ ॥

५५ ] ति० टी०–कृताञ्जलिः । रामं स्मृत्वेति शेषः । मे मनोरथः पूर्णः खल्वित्युवाच ॥ ९५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे षड्विंशत्यधिकशततमः सर्गः ॥ १२६ ॥

रा० टी०–तत इति । हनूमतो मधुरैः वाक्यैः निशम्य रामवृत्तान्तं श्रुत्वा हृष्टो भरतः मे मनोरथः पूर्णः इति मनसः प्रहर्षिणीं वाणीमुवाच ॥ ९६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे अष्टाविंशत्यधिकशततमः सर्गः ॥ १२८ ॥

गो० टी०–तत इति । सत्यम् अविरुद्धभक्त्या सत्यत्वेन ज्ञातम् । मनोरथ इत्यनन्तरमितिकरणं द्रष्टव्यम् ॥ ६० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकोनत्रिंशदुत्तरशततमः सर्गः ॥१२९॥

१ ] ति० टी०–परमानन्दम् । तत्करं वच इति शेषः ॥१॥

रा० टी०–हनुमद्वचनश्रवणानन्तरकालिकं वृत्तान्तमाह–श्रुत्वेत्यादिभिः । भरतः परमः आनंदो यस्मात् तद्वचनं श्रुत्वा हृष्टं शत्रुघ्नमाज्ञापयामास ॥ १ ॥

गो० टी०–श्रुत्वेत्यादि ॥ परमानन्दम् परमानन्दकरम् । वच इति शेषः ॥ १ ॥

२ ] ति० टी०–दैवतानि कुलदैवतानि । नगरस्य चैत्यानि साधारणदेवतायतनानि । अर्चन्त्वर्चयन्तु ॥ २ ॥

रा० टी०–तदाकारमाह—दैवतानीत्यादिभिः । दैवतानि कुलदेवान् नगरस्य चैत्यानि देवालयानि शुचयो नराः अर्चन्तु पूजयन्तु ॥ २ ॥

गो० टी०–दैवतानीति । चैत्यानि चतुष्पथमण्डपान् अर्चन्तु अर्चयन्तु ॥ २ ॥

१ तमिति गो. पा. । २ स्तु सत्यं हनुमद्वचो महदिति गो. पा. ।

सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा । सर्वे वादित्रकुशला गणिकाश्चैव सर्वशः ॥ ३ ॥
राजदारास्तथामात्याः सैन्याः सेनाङ्गनागणाः । ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः ॥ ४ ॥
अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम् । भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ॥ ५ ॥
विष्टीरनेकसाहस्रीश्चोदयामास भागशः । समीकुरुत निम्नानि विषमाणि समानि च ॥ ६ ॥
स्थानानि च निरस्यन्तां नन्दिग्रामादितः परम् । सिञ्चन्तु पृथिवीं कृत्स्नां हिमशीतेन वारिणा ॥ ७ ॥
ततोऽभ्यवकिरन्त्वन्ये लाजैः पुष्पैश्च सर्वतः । समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ॥ ८ ॥
शोभयन्तु च वेश्मानि सूर्यस्योदयनं प्रति । स्रग्दाममुक्तपुष्पैश्च सुवर्णैः पञ्चवर्णकैः ॥ ९ ॥
राजमार्गमसंबाधं किरन्तु शतशो नराः । ततस्तच्छासनं श्रुत्वा शत्रुघ्नस्य मुदान्विताः ॥ १० ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थश्चार्थसाधकः । अशोको मन्त्रपालश्च सुमन्त्रश्चापि निर्ययुः ॥ ११ ॥
मत्तैर्नागसहस्रैश्च सध्वजैः सुविभूषितैः । अपरे हेमकक्षाभिः सगजाभिः करेणुभिः ॥ १२ ॥
निर्ययुस्तुरगाक्रान्ता रथैश्च सुमहारथाः । शक्त्यृष्टिपाशहस्तानां सध्वजानां पताकिनाम् ॥ १३ ॥
तुरगाणां सहस्रैश्च मुख्यैर्मुख्यतरान्वितैः । पदातीनां सहस्रैश्च वीराः परिवृता ययुः ॥ १४ ॥
ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः । कौसल्यां प्रमुखे कृत्वा सुमित्रां चापि निर्ययुः ॥ १५ ॥
[ कैकेय्या सहिताः सर्वा नन्दिग्राममुपागमन् । ]

३ ] ति० टी०–स्तुतिपुराणज्ञा इति सूतलक्षणरूपं सूतविशेषणम् । वैतालिका वंशावलीकीर्तकाः ॥ ३ ॥

४–५ ] ति० टी०–राजदारा मातरः । सैन्या राजभवनाद्वृतिमन्तोऽभ्यन्तराः । सेनागणा आटविकान्तसेनाभेदास्तथाङ्गनागणाः श्रेणी नानाजातीयसङ्घः ॥ ४ ॥ ५ ॥

६ ] ति० टी०–विष्टीर्भृतिकरान् । भागशो विभज्येति शेषः । विषमाणि स्थलान्यत्युन्नतदेशाः समानि च स्थानानि निरस्यन्तामयं भेदो निराक्रियताम् । सर्वं समं क्रियतामिति यावत् ॥ ६ ॥

७ ] ति० टी०–इतो नन्दिग्रामात्परं यावदयोध्याम् । तावत एव गन्तव्यदेशत्वादिति भावः ॥ ७ ॥

८ ] ति० टी०–समुच्छ्रितपताका रथ्याः कर्म ॥ ८ ॥

९–१० ] ति० टी०–सूर्यस्योदयनं प्रति । श्वः सूर्योदयकाले यथा सर्वं सज्जं भवति तथा कुरुतेत्यर्थः । विरलपुष्पबन्धाः स्रजः निबिडपुष्पबन्धं दाम । मुक्तपुष्पाणि बन्धरहितानि पुष्पाणि । पुष्पविशेषणम्—सुवर्णैरिति । पञ्चवर्णकैः पञ्चवर्णकल्पितैरलंकारैः ॥ ९ ॥ १० ॥

११–१५ ] ति० टी०–धृष्ट्यादयोऽष्टमन्त्रिणो निर्ययुः । उदयात्पूर्वं यथोक्तराजमार्गसत्कारं कृत्वा प्रतिनिर्ययुरित्यर्थः ॥ ११ ॥ १५ ॥

रा० टी०–सूता इति । रामस्य शशिनिभं मुखं द्रष्टुं सूतादयोऽभिनिर्यान्तु तत्र वैतालिकाः वंशावलीवक्तारः राजदाराः कौसल्याप्रभृतयः सेनाङ्गनानां गणास्समूहाः श्रेणी अनेकजातीनां संघः सार्द्धश्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०–सूता इत्यादिसार्धश्लोक एकान्वयः । सूताः स्तुतिशीलाः । वैतालिकाः बन्दिनः ॥ ३ ॥

रा० टी०–भरतस्येति । शत्रुघ्नः अनेकसाहस्रीर्विष्टीः भृतिकरान् चोदयामास ॥ ५ ॥

रा० टी०–चोदनप्रकारमाह—समीत्यादिभिः । इतः अयोध्यायाः परं नन्दिग्रामात् नन्दिग्राममुपलभ्य निम्नानि अत्यधोदेशाः विषमाणि उन्नतनिम्नविशिष्टानि समानि सर्वाणि स्थलानि समीकुरुत एकाकारतया रचयत स्थानानि मार्गमध्यवर्तिदेवाद्यायतनानि तु निरस्यन्तां त्यज्यन्तां तानि यथापूर्वमेव तिष्ठन्त्वित्यर्थः हिमशीतेन वारिणा पृथिवीं सिञ्चन्तु च सार्द्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

रा० टी०–तत इति । अन्ये लाजादिभिरभ्यवकिरन्तु समुच्छ्रिताः याः पताकास्ताश्च रथ्याः मार्गाः स्रगादिभिरुपलक्षितानि वेश्मानि अनेकविधभवनानि च सूर्यस्योदयनं प्रति पुरवरोत्तमं पुरवरेभ्यः वाराणस्यादिभ्योऽप्युत्तममयोध्यापुरं शोभयन्तु श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–भरतस्येत्यादिश्लोकपञ्चकमेकान्वयम् । विष्टीः भृतिं विना कर्मकरान् । नन्दिग्रामादितः परम् । अयोध्यापर्यन्तमित्यर्थः अन्ये पुरुषाः हिमवच्छीतेन वारिणा सिञ्चन्तु । ततः सेचनानन्तरम्, लाजादिभिः किरन्तु । रथ्याः समुच्छ्रितपताकाः, कुर्वन्त्विति शेषः । सूर्यस्योदयनं प्रति सूर्यस्योदयमारभ्य । यावत्सूर्योदयमिति वा । स्रजः मालिकाः तासां दामभिः पङ्क्तिभिः, मुक्तपुष्पैः असूत्रबद्धपद्मकुवलयादिभिश्च वेश्मानि शोभयन्तु । सुगन्धैः पञ्चवर्णकैः पञ्चविधवर्ण-

१ सङ्घश्च इति गो. पा. । २ इदं पद्यं गो पु. राजमार्गमसंबाधमित्यर्धात्परं दृश्यते । ३ वीर्यवानिति गो. पा. । ४ स्थूलानीति गो. पा. । ५ सर्वश इति गो.पा. । ६ पताकास्त्विति रा.पा. । ७ सुगन्धैरिति गो.पा. । ८ इदमर्धं गो.पु.नास्ति । ९ शातकुम्भविभूषितैरिति गो.पा. । १० इदमर्धमाधिकं गो.पु. ।

द्विजातिमुख्यैर्धर्मात्मा श्रेणीमुख्यैः सनैगमैः । माल्यमोदकहस्तैश्च मन्त्रिभिर्भरतो वृतः ॥ १६ ॥
शङ्खभेरीनिनादैश्च बन्दिभिश्चाभिनन्दितः । आर्यपादौ गृहीत्वा तु शिरसा धर्मकोविदः ॥ १७ ॥
पाण्डुरं छत्रमादाय शुक्लमाल्योपशोभितम् । शुक्ले च वालव्यजने राजार्हे हेमभूषिते ॥ १८ ॥
उपवासकृशो दीनश्चीरकृष्णाजिनाम्बरः । भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः ॥ १९ ॥
प्रत्युद्ययौ तदा रामं महात्मा सचिवैः सह । अश्वानां खुरशब्दैश्च रथनेमिस्वनेन च ॥ २० ॥
शङ्खदुन्दुभिनादेन संचचालेव मेदिनी । गजानां बृंहितैश्चापि शङ्खदुन्दुभिनिःस्वनैः ॥ २१ ॥
कृत्स्नं तु नगरं तत्तु नन्दिग्राममुपागमत् । समीक्ष्य भरतो वाक्यमुवाच पवनात्मजम् ॥ २२ ॥

द्रव्यचूर्णैः, राजमार्गं किरन्तु । राजमार्गे वर्णद्रव्यचूर्णैः नानाविधलतापद्मादिचित्ररेखाः कुर्वन्त्वित्यर्थः ॥ ८ ॥

रा० टी०—राजेति । शतशो नराः राजमार्गमसम्बाधं कर्तुमिति शेषः किरन्तु तिष्ठन्तु अर्द्धं पृथक् ॥ तत इति । शत्रुघ्नस्य शासनं श्रुत्वा धृष्टिप्रभृतयो नागसहस्रैर्निर्ययुः अर्द्धचतुष्टयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—अथ परेद्युः प्रातः रामभक्त्यतिशयेन सर्वेषां निर्गमनं दर्शयति—राजदारा इत्यादिना । श्रेणीमुख्याः श्रेणिमुखाः तथा गणाः । श्रेणी श्रेणय इति यावत् । अत्र श्लोके निर्ययुरिति वक्ष्यमाणमनुषज्यते ॥ ९ ॥

गो० टी०—अमात्यान्विशिष्य दर्शयति—धृष्टिरित्यादिना । सार्धश्लोक एकान्वयः । अत्र धृष्ट्यादयो गजारूढा ययुरित्यर्थः ॥ १० ॥ ११ ॥

रा० टी०—अपर इति । अपरे सगजाभिः गजसहिताभिः करेणुभिर्निर्ययुः तुरगाः आक्रान्ता यैस्ते समहारथाः रथैर्निर्ययुः ॥ १२ ॥

गो० टी०—अपर इति । अपरे राजान्तरङ्गाः पुरुषाः करेणुभिर्निर्ययुः ॥ १२ ॥

रा० टी०—शक्तीति । शक्त्यादियुक्तहस्तानां सध्वजानां पताकिनां च जनानां सहस्रैः मुख्यतरान्वितैर्मुख्यैः तुरगाणां सहस्रैश्च पदातीनां सहस्रैश्च परिवृता वीरा ययुः सार्द्धश्लोक एकान्वयी ॥ १३ ॥ १४ ॥

गो० टी०—शक्तीत्यादिसार्धश्लोक एकान्वयः । उक्तविशेषणानां तुरगाणां सहस्रैः पदातीनां सहस्रैश्च परिवृता वीरा ययुः ॥ १३ ॥

रा० टी०—तत इति । यानान्युपारूढाः दशरथस्त्रियः कौसल्यां सुमित्रां च प्रमुखे अग्रे कृत्वा निर्ययुः ॥ १५ ॥

गो० टी०—तत इति । प्रमुखे अग्रे ॥ १४ ॥

१६ ] ति० टी०—नैगमा वणिजः । 'वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्' इत्यमरः ॥ १६ ॥

१७-१८ ] ति०टी०—आर्यपादौ श्रीरामपादुके॥१७-१८॥

१९-२२ ] ति० टी०—उपवासकृश इत्यनेन रामादेरपि किंचित्कालमुपवासोऽनुमेयः । तत्पूर्वमागमनश्रवणपूर्वकम् ॥ १९ ॥ २२ ॥

रा० टी०—द्विजातीति । द्विजातिमुख्यैर्ब्राह्मणैः श्रेणीषु नगरवासिसमूहेषु मुख्यैर्नैगमैः वणिग्भिश्च माल्यमोदकहस्तैः माल्यमोदकविशिष्टहस्तविशिष्टैर्मन्त्रिभिर्वैदिकब्राह्मणैश्च वृतः शंखभेरीनिनादैः बन्दिभिश्च अभिनन्दितो भरतः आर्यपादौ रामपादुके शिरसा गृहीत्वा शुक्लमाल्योपशोभितं छत्रं वालव्यजने चादाय सचिवैस्सह रामं प्रत्युद्ययौ सार्द्धश्लोकचतुष्टयमेकान्वयि ॥ १६–१९ ॥

गो०टी०—कैकेय्येति । अत्र भरतेनोपेक्षयानाहूतत्वात् पश्चान्निर्गत्य कैकेय्या नन्दिग्रामप्राप्तिकाले साहित्यमुच्यते ॥ १५ ॥

रा० टी०—अश्वानामिति । अश्वानां खुरशब्दादिभिर्मेदिनी संचचालेव ॥ २० ॥

गो० टी०—कृत्स्नमित्यर्धम् । अत्र नगरशब्देन तत्रत्यजना लक्ष्यन्ते ॥ १६ ॥

रा० टी०—गजानामिति । गजानां बृंहितादिभिस्सह कृत्स्नं नगरं तत्स्थजनो नन्दिग्राममुपागमत् ॥ २१ ॥

गो० टी०—अश्वानामिति । संचचाल कम्पितेव ॥१७॥

गो० टी०—अशोकपरिवारैः सह भरतस्य नन्दिग्रामान्निर्गमं दर्शयति—द्विजातिमुख्यैरित्यादिभिः सार्धैश्चतुर्भिः श्लोकैः । ततो महात्मा भरतः सर्वैर्वृतः प्रत्युद्ययाविति वाक्यार्थः । सनैगमैः सवणिग्भिः । 'वैदेहकः सार्थवाहो नैगमो वाणिजो वणिगित्यमरः' । मन्त्रिभिः वसिष्ठादिभिः । सचिवैः सुमन्त्रादिभिः । आर्यपादौ रामपादुके । हेमभूषिते हेमदण्डभूषिते । तत्पूर्वं श्रवणादिहर्षमागतः । श्रवणात्पूर्वं तु नास्य हर्षोऽभूदित्यर्थः ॥ १८–२१ ॥

रा० टी०—समीक्ष्येति । भरतः पवनात्मजं समीक्ष्योवाच अर्द्धं पृथक् ॥ २२ ॥

गो० टी०—समीक्ष्येत्यर्धम् । समीक्ष्य समन्ताद्रामागमनं निरीक्ष्य ॥ २२ ॥

१ इदं सार्धपद्यं द्विजातिमुख्यैर्धर्मात्मेतिपद्यात्पूर्वमेव गो.-पुस्तके पठितम् तत्रापि कृत्स्नं तु नगरमित्यर्धमेवादौ दृश्यते । २ इदमर्धं गो.पुस्तके नास्ति ।

कच्चिन्न खलु कापेयी सेव्यते चलचित्तता । नहि पश्यामि काकुत्स्थं राममार्य परंतपम् ॥ २३ ॥
कच्चिन्न चानुदृश्यन्ते कपयः कामरूपिणः । अथैवमुक्ते वचने हनूमानिदमब्रवीत् ॥ २४ ॥
अर्थ्यं विज्ञापयन्नेव भरतं सत्यविक्रमम् । सदाफलान्कुसुमितान्वृक्षान्प्राप्य मधुस्रवान् ॥ २५ ॥
भरद्वाजप्रसादेन मत्तभ्रमरनादितान् । तस्य चैव वरो दत्तो वासवेन परंतप ॥ २६ ॥
ससैन्यस्य तदातिथ्यं कृतं सर्वगुणान्वितम् । निःस्वनः श्रूयते भीमः प्रहृष्टानां वनौकसाम् ॥२७॥
मन्ये वानरसेना सा नदीं तरति गोमतीम् । रजोवर्षं समुद्भूतं पश्य सालवनं प्रति ॥ २८ ॥
मन्ये सालवनं रम्यं लोलयन्ति प्लवंगमाः । तदेतद्दृश्यते दूराद्विमानं चन्द्रसन्निभम् ॥ २९ ॥
विमानं पुष्पकं दिव्यं मनसा ब्रह्मनिर्मितम् । रावणं बान्धवैः सार्धं हत्वा लब्धं महात्मना ॥ ३० ॥

---

२३-२४ ] ति० टी०–यावन्न दूरं यातोऽस्मि । क्षिप्रमागन्तुमर्हसीति हनूमन्तं प्रति रामोक्तेर्भरते सर्वां कथामुक्त्वा पुना रामसमीपं गत्वा रामं प्रति भरतवृत्तान्तं निवेद्य पुनर्नन्दिग्रामं प्रति रामाज्ञया गते एतद्भरतवचस्तं प्रतीति बोध्यम् । कापेयी कपिस्वभावप्रयुक्ता चलचित्तता न सेव्यते नानुष्ठीयते कच्चित् । मिथ्या नोच्यते कच्चिदित्यर्थः । कुत एवं शङ्का तत्राह—नहीति ॥ २३ ॥ २४ ॥

रा० टी०–तदाकारमाह—कच्चिदिति । रामं न पश्यामि कपयोपि नानुदृश्यन्ते अतः कापेयी कपिजातिषु दृश्यमाना चलचित्तता तु कच्चिन्न सेव्यते भवन्तमिति शेषः एतेन चांचल्यवशादेव रामागमनं त्वयोक्तमिति प्रतीयते इति सूचितम् सार्द्धश्लोक एकान्वयी ॥ २३ ॥

गो० टी०–कच्चिदित्यादिसार्धश्लोक एकान्वयः । कच्चिदिति प्रश्ने । सेव्यते । त्वयेति शेषः । तत्र हेतुमाह–नहीति । रामस्य दूरागमनेऽपि नासीरचारिणः कपयो दृश्येरन्, तेषां कामरूपित्वेन स्वरूपेणादर्शनेऽपि रूपान्तरेण वा दृश्येरन् । तदपि नास्तीत्यर्थः ॥ २३ ॥

रा० टी०–अथेति । एवमुक्ते सति अर्थ्यमर्थादनपेतं सत्यमित्यर्थः विज्ञापयन् सन् हनूमान् भरतमब्रवीत् ॥ २४ ॥

गो० टी०–अथेति । अर्थं विलम्बहेतुम् । 'अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु' इति वैजयन्ती ॥ २४ ॥

२५ ] ति० टी०–एवं मिथ्यावादित्वशङ्कायां तन्निवृत्तयेऽर्थ्यमर्थादनपेतं विज्ञापयन्निदमब्रवीत् । सदाफलत्वादिविशिष्टान्वृक्षान्प्राप्य प्रहृष्टानां वनौकसां भूमौ निःस्वनः श्रूयते, अतस्त्वं प्रयाहीति शेषः ॥ २५ ॥

२६ ] ति० टी०–वृक्षाणां तथाविधत्वं कुतस्तत्राह—भरद्वाजप्रसादेनेति । तेनापि कथमेवं शक्यं तत्राह—तस्य चेति । भरद्वाजस्य चेत्यर्थः । वासवेनेति । तत्तपःप्रसादितेनेत्यर्थः ॥ २६ ॥

२७ ] ति० टी०–यदेवमतः ससैन्यस्य तव रामस्य च भरद्वाजेन सर्वगुणान्वितमातिथ्यं कृतम् ॥ २७ ॥

रा० टी०–तदाकारमाह—सदेत्यादिभिः । भरद्वाजप्रसादेन सदाफलान् मधुस्रवान् द्रुमान् प्राप्य प्रहृष्टानां वनौकसां निःस्वनः श्रूयते ननु भरद्वाजे कथमेवं शक्तिरित्यत आह वासवेन एषः सर्वसामग्रीसम्पादकशक्तिविशेषः दत्तः अत एव तदा भवद्गमनसमये ससैन्यस्य तवातिथ्यं कृतं सार्द्धश्लोकद्वयमेकान्वयि ॥ २५-२७ ॥

गो० टी०–सदेति । भरद्वाजप्रसादेन सदाफलानितिसंबन्धः । प्राप्य वानराः हृष्यन्तीति च शेषः ॥ २५ ॥

गो० टी०–तस्य चेति । ससैन्यस्य रामस्य वासवेन एष वरो दत्तः अकालफलित्ववरो दत्तः, तथा सर्वगुणान्वितम् आतिथ्यं मधुस्रवत्वरूपं भरद्वाजेन कृतम्, अतोऽकालफलित्वं मधुस्रवत्वं च वनस्य युक्तमित्यर्थः ॥ २६ ॥

गो० टी०–एवं विलम्बहेतुमुक्त्वा समीपागमनचिह्नं दर्शयति—निःस्वन इति । इदानीं वानरसेना गोमतीं नदीं तरतीति मन्ये । यस्मात् भीमो निःस्वन इति भावः ॥ २७ ॥

२८ ] ति० टी०–यतो ध्वनिः श्रूयते, अतः सा सेना गोमतीं तरतीति मन्ये । 'वालुकीम्' इति पाठान्तरम् । क्षणानन्तरमाह—रजोवर्षमिति ॥ २८ ॥

रा० टी०–मन्ये इति । वानरसेना गोमतीं तरति इत्यहं मन्ये तत्र गमकमाह सालवनं प्रति समुद्भूतं रजोवर्षं पश्य एतेन इदं रजो वानराणामेवेति सूचितम् ॥ २८ ॥

गो० टी०–ततोऽपि सन्निकर्षमाह—रज इति । समुद्भूतं रजोवर्षं पश्य । तस्माद्वालुकिनीं नदीं प्रति यातीति मन्ये ॥ २८ ॥

गो० टी०–क्षिप्रं वानरसेनाया अनागमने हेतुमाह—मन्य इति । तस्मात्तस्याः विलम्बः ॥ २९ ॥

२९ ] ति० टी०–क्षणोत्तरमाह—तदेतदिति ॥ २९ ॥

३० ] ति० टी०–मनसा ब्रह्मनिर्मितम् । ब्रह्मणास्रष्टृत्वसाम्याद्विश्वकर्मणा निर्मितम् ॥ ३० ॥

रा० टी०–मन्ये इति । सालवनं प्लवङ्गमाः लोलयन्तीत्यहं मन्ये तदेतद्विमानमपि चन्द्रसन्निभं दृश्यते ॥ २९ ॥

---

१ वालुकिनीमिति गो. पा. ।

तरुणादित्यसंकाशं विमानं रामवाहनम् । धनदस्य प्रसादेन दिव्यमेतन्मनोजवम् ॥ ३१ ॥
एतस्मिन्भ्रातरौ वीरौ वैदेह्या सह राघवौ । सुग्रीवश्च महातेजा राक्षसश्च विभीषणः ॥ ३२ ॥
ततो हर्षसमुद्भूतो निःस्वनो दिवमस्पृशत् । स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्तिते ॥ ३३ ॥
रथकुञ्जरवाजिभ्यस्तेऽवतीर्य महीं गताः । ददृशुस्तं विमानस्थं नराः सोममिवाम्बरे ॥ ३४ ॥
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः । यथार्थेनार्घ्यपाद्याद्यैस्ततो राममपूजयत् ॥ ३५ ॥
मनसा ब्रह्मणा सृष्टे विमाने भरताग्रजः । रराज पृथुदीर्घाक्षो वज्रपाणिरिवामरः ॥ ३६ ॥
ततो विमानाग्रगतं भरतो भ्रातरं तदा । ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ॥ ३७ ॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् । हंसयुक्तं महावेगं निपपात महीतलम् ॥ ३८ ॥
आरोपितो विमानं तद्भरतः सत्यविक्रमः । राममासाद्य मुदितः पुनरेवाभ्यवादयत् ॥ ३९ ॥
तं समुत्थाय काकुत्स्थश्चिरस्याक्षिपथं गतम् । अङ्के भरतमारोप्य मुदितः परिषस्वजे ॥ ४० ॥
ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः । अथाभ्यवादयत्प्रीतो भरतो नाम चाब्रवीत् ॥ ४१ ॥
सुग्रीवं कैकयीपुत्रो जाम्बवन्तमथाङ्गदम् । मैन्दं च द्विविदं नीलमृषभं चैव सस्वजे ॥ ४२ ॥
सुषेणं च नलं चैव गवाक्षं गन्धमादनम् । शरभं पनसं चैव परितः परिषस्वजे ॥ ४३ ॥
ते कृत्वा मानुषं रूपं वानराः कामरूपिणः । कुशलं पर्यपृच्छंस्ते प्रहृष्टा भरतं तदा ॥ ४४ ॥
अथाब्रवीद्राजपुत्रः सुग्रीवं वानरर्षभम् । परिष्वज्य महातेजा भरतो धर्मिणां वरः ॥ ४५ ॥

रा० टी०–ननु विमानं कुतो लब्धमित्यत आह–विमानमिति । रावणं हत्वा विमानं महात्मना रामेण लब्धम् ३०

गो० टी०–विमानं तु दृश्यत इत्याह—तदेतदिति । पुष्पकं विमानं पुष्पकाख्यं विमानम् ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०–एतद्दिव्यं मनोजवं विमानं प्रसादेन ब्रह्मणः प्रसादेन धनदस्य भवतीति शेषः । 'परेण तपसा लेभे यत्कुबेरः पितामहात्' इति सुन्दरकाण्डोक्तेः ॥ ३१ ॥

रा० टी०–विमाननिर्माणे कारणमाह–तरुणेति । धनदस्य प्रसादेन कुबेरप्रीत्यर्थं मनोजवमेतद्विमानं ब्रह्मणा निर्मितमिति शेषः ॥ ३१ ॥

गो० टी०–तरुणेति । दिव्यं मनोजवं तरुणादित्यसंकाशं रामवाहनमेतद्विमानम्, प्रसादेन धनदस्य ब्रह्मप्रसादेन धनदस्य, लब्धमित्यर्थः । परेण तपसा लेभे यत्कुबेरः पितामहादिति सुन्दरकाण्डोक्तेः ॥ ३२ ॥

३२-३३ ] ति० टी०–एतस्मिन्विमाने राघवौ सुग्रीवो विभीषणश्च तिष्ठतीति शेषः ॥ ३२ ॥ ३३ ॥

३४ ] ति० टी०–तत आसन्ने भरतादयस्तं ददृशुरित्याह—ददृशुरिति ॥ ३४ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्विमाने रामादयस्सन्तीति शेषः ॥ ३२ ॥

रा० टी०–तत इति । ततो हनुमद्वचनश्रवणानन्तरं रामोऽयमिति कीर्तितः स्त्रीबालयुववृद्धानां निस्वनः दिवमस्पृशत् ॥ ३३ ॥

रा० टी०–रथेति । ते अयोध्यावासिनो नराः विमानस्थं रामं ददृशुः ॥ ३४ ॥

गो० टी०–एतस्मिन्निति । आसत इति शेषः ॥ ३३ ॥ ३५ ॥

३५-३८ ] ति० टी०–यथार्थेन स्वागतेन । अन्वर्थेन स्वागतेनेत्यर्थः । यस्यागमनं परमकल्याणं तत्स्वागतमित्यर्थानुगतिमतेत्यर्थः ॥ ३५ ॥ ३८ ॥

रा० टी०–प्राञ्जलिरिति । राघवोन्मुखः रामदृष्टिपथं प्राप्तो भरतः अर्घ्यपाद्याद्यैः यथार्थेन प्रसादनरूपप्रयोजनमनतिक्रम्य राममपूजयत् ॥ ३५ ॥

रा० टी०–मनसेति । भरताग्रजो रामः अपरो वज्रपाणिरिव विमानेन रराज ॥ ३६ ॥

रा० टी०–तत इति । भरतः विमानाग्रगतं रामं ववन्दे ३७

रा० टी०–तत इति । तद्विमानं रामाभ्यनुज्ञातं सत् महीतलं निपपात ॥ ३८ ॥

गो० टी०–प्राञ्जलिरिति । यथार्थेन स्वागतेन । चतुर्दशे वर्षे पूर्णे अवश्यमागमिष्यामीति प्रतिज्ञानुसारिणा स्वागमनेनेत्यर्थः । अपूजयत् अश्लाघयत् ॥ ३६ ॥ ३८ ॥

३९-४० ] ति० टी०–अभ्यवादयत् । *अभ्यवन्ददित्यर्थः ॥ ३९ ॥ ४० ॥

रा० टी०–आरोपितेति । तद्विमानमारोपितः रामेणारोहितो भरतः राममासाद्य पुनरभ्यवादयत् ॥ ३९ ॥

रा० टी०–तमिति । चिरस्य बहुकालात् अक्षिपथं गतं भरतमङ्के आरोप्य परिषस्वजे ॥ ४० ॥

गो० टी०–आरोपित इति । अत्र भरतस्य विमानारोपणं सर्वेषां प्रदर्शनार्थमिति बोध्यम् ॥ ४० ॥ ४१ ॥

४१-४५ ] ति० टी०–लक्ष्मणमासाद्य वन्दमानं लक्ष्मणं

१ कीर्तित इति रा.पा. । २ स्वागतेन यथार्थेनेति गो.पा. । ३ अपर इति गो.रा.पा. । ४ तले इति गो.पा. । ५ उत्थाप्येति गो.पा. । *परस्मैपद प्रयोगश्चिन्त्यः ।

त्वमस्माकं चतुर्णां वै भ्राता सुग्रीवपञ्चमः । सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम् ॥ ४६ ॥
विभीषणं च भरतः सान्त्ववाक्यमथाब्रवीत् । दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करम् ॥ ४७ ॥
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् । सीतायाश्चरणौ वीरो विनयादभ्यवादयत् ॥ ४८ ॥
रामो मातरमासाद्य विवर्णां शोककर्शिताम् । जग्राह प्रणतः पादौ मनो मातुः प्रहर्षयन् ॥ ४९ ॥
अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् । स मातॄश्च ततः सर्वाः पुरोहितमुपागमत् ॥ ५० ॥
स्वागतं ते महाबाहो कौसल्यानन्दवर्धन । इति प्राञ्जलयः सर्वे नागरा राममब्रुवन् ॥ ५१ ॥
तान्यञ्जलिसहस्राणि प्रगृहीतानि नागरैः । व्याकोशानीव पद्मानि ददर्श भरताग्रजः ॥ ५२ ॥
पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् । चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥ ५३ ॥

परिष्वङ्गादिना संभाव्य । 'अन्येद्युः पाञ्चजन्यात्मा कैकेय्यां भरतोऽभवत् । तदन्येद्युः सुमित्रायामनन्तात्मा च लक्ष्मणः ॥ सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत्प्रिये ॥' इति पाद्मे शिवोक्तेः । *वैदेहीमभ्यवादयदभ्यवन्दत् । परे तु—यद्यपि लक्ष्मणो भरतात्कनिष्ठो वयसा । स्पष्टं चेदं जन्मप्रकरणे, तथापि ज्येष्ठानुवर्तनेन स्वापेक्षयाधिकगुणत्वेन स्वव्यवहारेण ज्येष्ठानुवृत्तिरेवंकर्तव्येति भरतं प्रत्युपदेशदानेन च गुरुत्वबुद्ध्या तस्य न निरुचितैव । किं च कौसल्यायै प्रथमं दत्तपायसांशजत्वाल्लक्ष्मणस्य ज्येष्ठत्वम् । ततो हि कैकेय्यै पायसार्धदानं तदंशजश्च शत्रुघ्न इति स एव भरतात्कनिष्ठः, अत एव वैदेहीं चेति चकारः स्वरसतः संगच्छते, अत एव शत्रुघ्नकृतो लक्ष्मणनमस्कार उपपद्यते । तयोर्युगपदुत्पन्नत्वादित्याहुः ॥ ४१ ॥ ४९ ॥

४६–४९ ] ति॰ टी॰—पञ्चमो भ्राता भ्रातृविषयकपञ्चत्वसंख्यापूरणः । सौहृदात्तत्पूर्वकोपकारात् ॥ ४६ ॥ ४९ ॥

रा॰ टी॰—तत इति । भरतो लक्ष्मणमासाद्य अभ्यवादयत् लक्ष्मणेन प्रणाममकारयत् हेतुमति णिच् अथ वैदेहीमासाद्य अभ्यवादयत् अवन्दत् अत्र स्वार्थे णिच् उभयार्थलाभस्तु शब्दावृत्त्या नाम प्रणामोपयोगिस्वाभिधामब्रवीच्च ॥ ४१ ॥

रा॰ टी॰—सुग्रीवमिति । केकयीपुत्रः सुग्रीवप्रभृतिं सस्वजे सुषेणप्रभृतिं च परिषस्वजे श्लोकद्वयमेकान्वयि ४२।४३

रा॰ टी॰—ते इति । ते वानराः ते अमृतरूपायोध्यायां मानुषं रूपं कृत्वा भरतं कुशलं पर्यपृच्छन् ॥ ४४ ॥

रा॰ टी॰—अथेति । भरतः सुग्रीवं परिष्वज्य अब्रवीत् ४५

रा॰ टी॰—तदाकारमाह—त्वमिति । हे सुग्रीव अस्माकं चतुर्णां पञ्चमो भ्राता त्वमसीति शेषः तत्र हेतुः सौहृदात् कापट्यरहितोपकारात् मित्रं तु भ्रातुर्न भिन्नमिति तात्पर्यं प्रसङ्गादाह अपकारस्तु अरिलक्षणं रिपुत्वसम्पादकमित्यर्थः ॥ ४६ ॥

रा॰ टी॰—विभीषणमिति । त्वया सहायेन सुदुष्करं कर्म दिष्ट्या भाग्योदयेन कृतं रामेणेति शेषः इति सान्त्ववाक्यं भरतो विभीषणमब्रवीत् ॥ ४७ ॥

रा॰ टी॰—शत्रुघ्न इति । शत्रुघ्नः राममभिवाद्य सीतायाः चरणावभ्यवादयत् ॥ ४८ ॥

रा॰ टी॰—राम इति । रामः मातरं कौशल्यामासाद्य मातुर्मनो हर्षयन् सन् पादौ जग्राह ॥ ४९ ॥

गो॰ टी॰—तत इति । लक्ष्मणमासाद्य कृतनमस्कारं लक्ष्मणमालिङ्गनेन संभाव्य । इदं च लक्ष्मणस्य कनिष्ठत्वात् । लक्ष्मणेन चिकीर्षितो नमस्कारो रामसन्निधौ भरतेन प्रतिषेधित इति चाहुः । वैदेहीं चाभ्यवादयत् चकारो रामनमस्कारं समुच्चिनोति । न संख्ये भरतानुज इत्युक्तेः । सीतामादाय गच्छ त्वमग्रतो भरताग्रजेत्यत्र बहुव्रीहिरित्युक्तम् । न च वैपरीत्यं शङ्क्यम् । पुष्ये जातस्तु भरतः, सार्पे जातौ तु सौमित्री इति जन्मक्रमोक्तेः । पायसप्रदाने विवाहे च प्राथम्यं तत्र परिहृतम् । लक्ष्मणासादनानन्तरं सीतानमस्काराभिधानात् सीता तारादिभिः सह रामसमीप एव किंचिदन्यत्र स्थितेत्यवगम्यते ॥ ४२ ॥

गो॰ टी॰—त इति । मानुषं रूपं कृत्वा स्थिता इति शेषः ॥ ४५ ॥ ४९ ॥

गो॰ टी॰—राम इति । मनो मातुः प्रसादयन्निति पूर्वं त्वद्वाक्यं नाश्रौषमिति त्वया मनस्तापो न कार्य इत्येवं प्रसन्नामकरोदित्यर्थः ॥ ५० ॥

५०–५१ ] ति॰ टी॰—कैकेयीं च यशस्विनीम् । अस्या मनोदार्ढ्येन राजा नरकात्तारितः, देवा ब्रह्मर्षयश्च परमं सुखं प्राप्ताः रामस्य च यशो जातम्, अत एषा यशस्विन्येव ॥ ५० ॥ ५१ ॥

रा॰ टी॰—अभिवाद्येति । स रामः सुमित्रां कैकेयीं चाभिवाद्य ततः तस्मात्स्थलात्सर्वाः मातॄः पुरोहितं च उपागमत् गत्वाभ्यवादयत् ॥ ५० ॥

गो॰ टी॰—अभिवाद्येति । यशस्विनीं, रावणजयस्य तन्मूलत्वात् । सर्वैः प्रशस्यमानामित्यर्थः । पुरोहितं वसिष्ठम्, अभिवाद्येत्यनुषज्यते । अभिवाद्योपागमदित्यन्वयः ॥ ५१ ॥

रा॰ टी॰—स्वागतमिति । हे महाबाहो त्वया स्वागतमिति वचः सर्वे नागराः राममब्रुवन् ॥ ५१ ॥

५२–५३] ति॰टी॰—व्याकोशानि विकसितानि ५२॥५३

१ पद्मावितिर गो. पा. । २ विषण्णामिति गो. पा. । *अत्रापि परस्मैपदप्रयोगश्चिन्त्यः ।

अब्रवीच्च तदा रामं भरतः सकृताञ्जलिः । एतत्ते सकलं राज्यं न्यासं निर्यातितं मया ॥ ५४ ॥
अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः । यत्त्वां पश्यामि राजानमयोध्यां पुनरागतम् ॥ ५५ ॥
अवेक्षतां भवान्कोशं कोष्ठागारं गृहं बलम् । भवतस्तेजसा सर्वं कृतं दशगुणं मया ॥ ५६ ॥
तथा ब्रुवाणं भरतं दृष्ट्वा तं भ्रातृवत्सलम् । मुमुचुर्वानरा बाष्पं राक्षसश्च विभीषणः ॥ ५७ ॥
ततः प्रहर्षाद्भरतमङ्कमारोप्य राघवः । ययौ तेन विमानेन ससैन्यो भरताश्रमम् ॥ ५८ ॥
भरताश्रममासाद्य ससैन्यो राघवस्तदा । अवतीर्य विमानाग्रादवतस्थे महीतले ॥ ५९ ॥
अब्रवीत्तु तदा रामस्तद्विमानमनुत्तमम् । वह वैश्रवणं देवमनुजानामि गम्यताम् ॥ ६० ॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् । उत्तरां दिशमुद्दिश्य जगाम धनदालयम् ॥ ६१ ॥
विमानं पुष्पकं दिव्यं संगृहीतं तु रक्षसा । अगमद्धनदं वेगाद्रामवाक्यप्रचोदितम् ॥ ६२ ॥
पुरोहितस्यात्मसखस्य राघवो बृहस्पतेः शक्र इवामराधिपः ।
निपीड्य पादौ पृथगासने शुभे सहैव तेनोपविवेश वीर्यवान् ॥ ॥ ६३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तविंशत्यधिकशततमः सर्गः ॥ १२७ ॥

---

रा० टी०–तानीति । नागरैः प्रगृहीतानि अञ्जलिसहस्राणि व्याकोशानि विकसितानि पद्मानीव भरताग्रजो ददर्श ॥ ५२ ॥

रा० टी०–पादुके इति । भरतः रामस्य पादुके स्वयं गृहीत्वा नरेन्द्रस्य रामस्य चरणाभ्यां योजयामास ॥ ५३ ॥

५४–५६ ] ति० टी०–एतदेतावत्कालं मया रक्षितं न्यासभूतं मयि स्थितं राज्यं मया ते निर्यातितं तुभ्यं निवेदितम् ॥ ५४ ॥ ५६ ॥

रा० टी०–अब्रवीदिति । भरतो राममब्रवीत् तदाकारमाह न्यासं न्यासत्वेन मया गृहीतं ते राज्यं मया निर्यातितं एतावत्कालं पालितम् ॥ ५४ ॥

रा० टी०–अद्येति । यद्यस्मात् अयोध्यां पुनरागतं राजानं त्वां पश्यामि तस्मात् मे मनोरथः संवृत्तः अत एव मे जन्म कृतार्थम् ॥ ५५ ॥

रा० टी०–अवेक्षतामिति । यत् भवतस्तेजसा मया दशगुणं कृतं तत् कोशादि भवान् अवेक्षताम् ॥ ५६ ॥

गो० टी०–एतत्त इत्यादिसार्धश्लोकद्वयमेकान्वयम् । हे राजन्, मया रक्षितं न्यासत्वेन पालितम् एतद्राज्यम् ते निर्यातितं तुभ्यं निवेदितम् । कोष्ठागारं धान्यशालाम् दशगुणत्वं रामनिर्गमनकालिककोशापेक्षया ॥ ५५ ॥ ५६ ॥

५७–६२ ] ति० टी०–विभीषणश्च बाष्पं मुमोच । ईदृशा अपि भ्रातरः सन्तीत्यानन्देन स्वस्य तद्वैपरीत्यजशोकेन च ॥ ५७ ॥ ६२ ॥

रा० टी०–तथेति । तथा ब्रुवाणं भरतं दृष्ट्वा वानरा विभीषणश्च बाष्पमानंदाश्रु मुमुचुः ॥ ५७ ॥

गो० टी०–तथेति । मुमुचुरिति । स्वकुलीनेष्वेतादृशभ्रातृत्वस्यदर्शनादिति भावः ॥ ५७ ॥

रा० टी०–तत इति । राघवः भरतमङ्कमारोप्य विमानेन भरताश्रमं ययौ ॥ ५८ ॥

रा० टी०–भरतेति । राघवः भरताश्रममासाद्य विमानाग्रादवतीर्य महीतले अवतस्थे ॥ ५९ ॥

गो० टी०–तत इति । भरताश्रमम् नन्दिग्रामम् ॥५८॥५९

रा० टी०–अब्रवीदिति । त्वया गम्यतां वैश्रवणं कुबेरं त्वं वह इत्यहमनुजानामि आज्ञापयामि इति वचः रामो विमानमब्रवीत् ॥ ६० ॥

गो० टी०–अब्रवीत्त्वेति । गम्यतामित्यनन्तरमितिकरणं बोध्यम् ॥ ६० ॥

रा० टी०–तत इति । तद्विमानं धनदालयमुद्दिश्य उत्तरां दिशं जगाम ॥ ६१ ॥

गो० टी०–तत इति । दिशमागम्य दिशमुद्दिश्य ॥६१॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–विमानमिति । रक्षसा रावणेन गृहीतं विमानं रामवाक्यप्रचोदितं सत् धनदमगमत् ॥ ६२ ॥

६३ ] ति० टी०–पुरोहितस्यात्मसखस्येति । वसिष्ठपुत्रस्य सुयज्ञस्येत्यर्थः । 'आत्मसमस्य' इति पाठान्तरम् । ब्रह्मज्ञत्वादिति भावः । वसिष्ठस्येत्यर्थ इति तीर्थः ॥ ६३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डे सप्तविंशत्यधिकशततमः सर्गः ॥ १२७ ॥

रा० टी०–पुरोहितस्येति । पुरोहितस्य आत्मसखस्य वसिष्ठस्येत्यर्थः पादौ बृहस्पतेश्शक्र इव निपीड्य तेन वसिष्ठेन सह पृथगासने उपविवेश ॥ ६३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ युद्धकाण्डे एकोनत्रिंशदधिकशततमः सर्गः ॥ १२९ ॥

१ रक्षितं राजन् राज्यमिति गो. पा. । २ इदं पदं गो. पुस्तके नास्ति । ३ राघव इति गो. पा. ।

# अष्टाविंशाधिकशततमः सर्गः ।

भरतात्प्रतिगृहीतराज्यो रामः सुग्रीवादिभिः सीता च वानरपत्नीभिश्च सह सुस्नातावलंकृतौ । सुग्रीवो गजं रामस्तु सुहृद्रथं चारुह्य सानन्दं पुरं प्रविष्टो । ततो वानरैश्चतुःसमुद्रवार्यानाय्य वसिष्ठादिमहर्षिभिरभिषिक्तो रामः सुग्रीवबिभीषणादीन्सपरिगृह्य रत्नभूषणादिभिः परितोष्य स्वस्थानं गमयित्वा रञ्जितपौरजानपदश्चिरं शशास मेदिनीमीजे च पौण्डरीकादिभिः क्रतुभिर्भूरिदक्षिणैः तदा न किंचिदशुभमभवत् काण्डान्ते पठनादिना शुभप्राप्तिकथनं काण्डसमाप्तिश्च ।

शिरस्यञ्जलिमाधाय कैकेयीनन्दिवर्धनः । बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥ १ ॥
पूजिता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ २ ॥
धुरमेकाकिना न्यस्तां वृषभेण बलीयसा । किशोरवद्गुरुं भारं न वोढुमहमुत्सहे ॥ ३ ॥
वारिवेगेन महता भिन्नः सेतुरिव क्षरन् । दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥ ४ ॥

गो० टी०–पुरोहितस्येति । आत्मसमस्य स्वानुरूपस्य, पृथगासने तेन सहैवोपविवेश । पृथगासने युगपदेवोपविविशतुरित्यर्थः ॥ ६२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने त्रिंशदुत्तरशततमः सर्गः ॥ १३० ॥

१ ] ति० टी०–शिरसीति ॥ १ ॥

रा० टी०–रामं प्रति भरतोक्तिमाह–शिरसीत्यादिभिः । भरतः शिरस्यञ्जलिमादाय रामं बभाषे ॥ १ ॥

गो० टी०–एवं पुष्पकं धनदाय प्रेषयित्वा वसिष्ठेन च समागम्य भरतानुज्ञां विना नायोध्या प्रवेष्टव्येति तात्पर्येण नन्दिग्राम एवासनोपविष्टे रामे निविष्टेषु च पौरवर्गेषु सन्निहितासु च मातृषु तादात्विकसूक्ष्मेङ्गितदर्शननिपुणो भरतः स्वहृदयमग्रजाय निवेदयति—शिरस्यञ्जलिमित्यादिना । शिरस्यञ्जलिमाधायेत्यनेन पूर्वकृता प्रपत्तिः स्मार्यते । अनन्यगतिकत्वसूचिका मुद्रा ह्यञ्जलिः । कैकेय्यानन्दवर्धन इत्यनेन भरतवचने कैकेयीसन्तोषो मुखप्रसादादिनावगम्यत इति द्योत्यते ॥ १ ॥

२ ] ति० टी०–त्वया मामिका माता पूजिता । तदुक्तवनवासानुष्ठानात् । मया चित्रकूटे तव समर्पितमिदं राज्यं त्वं पुनश्चित्रकूट एव मम दत्तवान्, तत्पुनस्तुभ्यमहं ददामि । ननु कथं दत्तस्य पुनर्दानं तत्राह—यथेति । यथा त्वं मद्दत्तं राज्यं मह्यमददास्तथा मयापि त्वद्दत्तं तुभ्यं दीयते इत्यर्थः ॥ २ ॥

रा० टी०–तदाकारमाह–पूजितेत्यादिभिः । मामिका माता त्वया पूजिता तदाज्ञाकरणात्सत्कृता अत एव इदं राज्यं मम मह्यं दत्तं तद्राज्यं यथा त्वं ममाददाः तथा अहं तुभ्यं ददामि ॥ २ ॥

गो० टी०–रामस्य राज्यपरिग्रहे अपरिहार्यं हेतुं दर्शयति—पूजितेति । मामिका मत्संबन्धिनी, माता पूजिता । राज्यपरित्यागपूर्वकवनवासाङ्गीकारेण त्वया तोषिता । अनन्तरमिदं राज्यम्, मम मयि, चित्रकूटे दत्तम् । तद्राज्यम् त्वं यथा येन प्रकारेण ममाददाः तेन प्रकारेण तुभ्यं ददामि । न्यासरूपेण मयि स्थापितं राज्यं न्यासरूपत्वाप्रहाणेनैव पुनर्ददामीत्यर्थः ॥ २ ॥

३ ] ति० टी०–ननु त्वद्दत्तराज्यभोगमहं करिष्यामि, राज्यं तु त्वमेव पालयेत्यत्राह—धुरमिति । एकाकिना स्वसमानधूर्वहबलीवर्दान्तररहितेन बलीयसा वृषभेण बलीवर्देन न्यस्तां क्षिप्तां किशोरवत्पार्श्ववर्तिवडवा बालवत्सो यथा वोढुं नोत्सहते, तथा गुरुं राज्यस्य भारं वोढुं नाहमुत्सहे ॥ ३ ॥

रा० टी०–ननु स्वस्मिन्नेव संस्थाप्यतामित्यत आह–धुरमिति । एकाकिना स्वसमानद्वितीयरहितेन बलीयसा वृषभेण न्यस्तां प्रक्षिप्तां धुरं भारं किशोरवत् कैशोर्यवत् वत्स इत्यर्थः यथा वोढुं नोत्सहते तथा गुरुं भारं वोढुमहं नोत्सहे यथा तथेत्यध्याहृतम् ॥ ३ ॥

गो० टी०–अयोध्यायां राज्यभोगान् यथाकामं भोक्ष्ये राज्यं त्वमेव परिपालयेत्याकाङ्क्षायामाह—धुरमिति । यद्वा पुनरर्थनपर्यन्तं न्यासधारणे न दोष इत्याशङ्क्याह–धुरमिति । एकाकिना असहायेन, बलीयसा ऋषभेण न्यस्तां धुरम् किशोरवत् बालवत्स इव, गुरुं भारम् वोढुं नोत्सहे ॥ ३ ॥

४ ] ति० टी०–नोत्सहे इत्यत्र हेतुमाह—वारीति । महता वारिवेगेन भिन्नः क्षरन्सेतुर्यथा दुर्निबन्धो बद्धुमशक्यः, एवमसंवृतमशक्यसंवरणं राज्यच्छिद्रं चोरादिनिबन्धनं दुर्निबन्धनं बद्धुमशक्यमित्येव मन्ये । अहमिति शेषः ॥ ४ ॥

रा० टी०–वारीति । महता वारिवेगेन भिन्नः अत एव क्षरन् सेतुरिव असंवृतं प्रसिद्धं राज्यच्छिद्रं चोराद्युपद्रवः दुर्बन्धनं निवारयितुमशक्यमिदमहं मन्ये ॥ ४ ॥

गो० टी०–तर्हि कथमेतावत्पर्यन्तं सोढमित्यत आह—वारीति । महता वारिवेगेन भिन्नः अत एव क्षरन् बहिर्निःसरन्, जलसेतुरिव, इदं राज्यच्छिद्रं छिद्रवद्राज्यम्, असंवृतं संवरणरहितं सत्, दुर्बन्धनं मन्ये । यथा महता वारिवेगेन भिन्नः क्ष-

१ आनन्देति गो. पा. ।

गतिं खर इवाश्वस्य हंसस्येव च वायसः । नान्वेतुमुत्सहे वीर तव मार्गमरिंदम ॥ ५ ॥
यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने । महानपि दुरारोहो महास्कन्धः प्रशाखवान् ॥ ६ ॥
शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् । तस्य नानुभवेदर्थं यस्य हेतोः स रोपितः ॥ ७ ॥
एषोपमा महाबाहो त्वमर्थं वेत्तुमर्हसि । यद्यस्मान्मनुजेन्द्र त्वं भर्ता भृत्यान्न शाधि हि ॥ ८ ॥
जगदद्याभिषिक्तं त्वामनुपश्यतु राघव । प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥ ९ ॥
तूर्यसंघातनिर्घोषैः काञ्चीनूपुरनिःस्वनैः । मधुरैर्गीतशब्दैश्च प्रतिबुद्ध्यस्व शेष्व च ॥ १० ॥
यावदावर्तते चक्रं यावती च वसुंधरा । तावत्त्वमिह लोकस्य स्वामित्वमनुवर्तय ॥ ११ ॥
भरतस्य वचः श्रुत्वा रामः परपुरंजयः । तथेति प्रतिजग्राह निषसादासने शुभे ॥ १२ ॥

रन् सेतुर्वारिवेगाहतिनिरोधकतृणपुलशाखापुञ्जादिसंवरणम् विना न वद्धुं शक्यते । एवं बहुविधच्छिद्रं राज्यमपि मन्त्रगोपनादिराजगुणावरणं विना पालयितुं न शक्यमिति भावः ॥४॥

५ ] ति० टी०—तव मार्गं रक्षणीयरक्षणचातुर्यम् ॥ ५ ॥

रा० टी०—गतिमिति । अश्वस्य गतिं खर इव हंसस्य वायस इव तव मार्गं गतिमन्वेतुमाचरितुं नोत्सहे ॥ ५ ॥

गो० टी०—अहमिव भवानपि लोकान् गुणैर्वशीकरोत्वित्यत्राह—गतिमिति ॥ ५ ॥

६-७ ] ति० टी०—अन्तर्निवेशने गृहारामे कश्चिद्वृक्ष आरोपितः, स महत्त्वादिगुणविशिष्टश्च जातः, ततः स पुष्पितो भूत्वा फलान्यदर्शयन्यदि विशीर्येत विशीर्णपुष्पो वा स्वरूपतो वा विशीर्णो भवति, ततोऽस्य फलस्य हेतोर्येन रोपितः स तदा रोपणादिक्लेशस्यार्थं फलं नानुभवेदिति स यथा वृथा प्रयासः ॥ ६ ॥ ७ ॥

८ ] ति० टी०—एषोपमा तव । हे महाबाहो, यदि त्वं भक्तान्भृत्यानस्मान्न शाधि । तदेति शेषः । तमर्थं त्वं वेत्तुमर्हसि अन्यापदेशवचनार्थमित्यर्थः । राज्ञा प्रजापालनार्थं महता यत्नेनोत्पाद्य संवर्धितेन त्वया प्रजापालनं संपादनीयम्, तदकरणे तु तादृशवृक्षतुल्यस्त्वमिति भावः ॥ ८ ॥

रा० टी०—यथेति । अन्तर्निवेशने स्वाराममध्ये आरोपितः अत एव महान् प्ररूढः अत एव महास्कन्धः प्रकृष्टा शाखा येषां नवपल्लवानां तद्वान् दुरारोहः अन्यैरारोपयितुमशक्यो वृक्षः पुष्पितो भूत्वा फलानि न प्रदर्शयन्सन् यदि शीर्येत तदा यस्य हेतोः स वृक्षो येन रोपितः सः तस्यारोपस्य फलं यथा नानुभवेत् तथा हे महाबाहो यदि भृत्यान् अस्मान्न शाधि तर्हि एषा अफलवृक्षसंबन्धिनी उपमा ते भविष्यतीति शेषः अर्थमेतन्मद्विज्ञापनं त्वं वेत्तुं ज्ञातुमर्हसि श्लोकत्रयमेकान्वयि ॥ ६-८ ॥

गो० टी०—तर्हि ममैवोपोद्बलेन भवानेव राज्यं परिपालयत्वित्याशङ्क्य तर्हि तातेन भवत्पोषणं विफलं स्यादित्याह—यथा चेत्यादिश्लोकत्रयेण ॥ अन्तर्निवेशने आरोपितः ज्ञः, वृक्षः महान् जातः, सुदुरारोहो महास्कन्धप्रशाखवान् पुष्पितोपि भूत्वा फलानि न प्रदर्शयन् यथा शीर्येत अफलो भवति । यथा च यस्य फलस्य हेतोर्येन रोप्यते, सः रोपयिता तस्य वृक्षस्य अर्थं तत्फलम् नानुभवेत् । मनुजेन्द्र भक्तान् भृत्यान् अस्मान्न शाधि यदि । महाबाहो एषोपमा त्वदर्थमुक्तेति वेत्तुमर्हसीति योजना । अत्र वृक्षरामयोरारोपयितृदशरथयोश्च उपमानोपमेयभावः । बीजावापस्य पुत्रेष्ट्यादेश्च महास्कन्धस्य सभ्रातृकत्वस्य च प्रशाखवत्त्वस्य सुग्रीवादिमित्रगणस्य च पुष्पाणां कल्याणगुणानां च राज्याकरणस्य फलाभावस्य च साम्यं द्योत्यते ॥ ६ ॥ ८ ॥

९ ] ति० टी०—यदेवमतः—जगदद्येत्यादि ॥ ९ ॥

रा० टी०—जगदिति । अभिषिक्तमत एव मध्याह्ने प्रतपन्तमादित्यमिव दीप्ततेजसं त्वां जगदद्य अनुपश्यतु ॥९॥

गो० टी०—भवतस्तु राज्यपरिपालने महती शक्तिरित्याह—जगदिति ॥ ९ ॥

१० ] ति० टी०—तूर्यघोषादिभी राजोपचारैः प्रतिबुद्ध्यस्व शेष्व चेत्यर्थः ॥ १० ॥

रा० टी०—तूर्येति । तूर्यसंघातनिर्घोषादिभिः राजसामग्रीभिः उपलक्षितस्सन् प्रतिबुद्ध्यस्व जागृहि शेष्व च ॥ १० ॥

गो० टी०—सर्वभोगार्हस्त्वमेव भोगान् भुङ्क्ष्वेत्याह—तूर्येति । काञ्चीनूपुरनिःस्वनैरित्यनेन प्रबोधकललितनृत्यं गम्यते ॥ १० ॥

११ ] ति० टी०—चक्रं ज्योतिश्चक्रं यावदावर्तते । अनेन कालावधिरुच्यते । यावती च वसुंधरेति देशावधिरुच्यते ॥११॥

रा० टी०—यावदिति । चक्रं ज्योतिश्चक्रं यावदावर्तते यावद्देशं भ्रमति यावती यत् परिमिता वसुंधरा तावल्लोकस्य स्वामित्वं त्वमनुवर्तय ॥ ११ ॥

गो० टी०—मध्ये स्वस्य राज्याशाभावं द्योतयन्नाह—यावदिति । चक्रं ज्योतिश्चक्रमिति यावत् । यावती यावत्कालस्थितिः, तावत् तावत्कालम्, सर्वस्य राज्यस्य स्वामित्वमनुवर्तय । स्वामित्वानुवर्तनं हि पालनमेव ॥ ११ ॥

१२ ] ति० टी०—प्रतिजग्राह । भरतस्य वच इति शेषः ॥ १२ ॥

१ सर्वत इति गो. पा. । २ सर्वत इति गो. पा. ।

ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धनाः । सुखहस्ताः सुशीघ्राश्च राघवं पर्यवारयन् ॥ १३ ॥
पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले । सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥ १४ ॥
विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः । महार्हवसनोपेतस्तस्थौ तत्र श्रिया ज्वलन् ॥ १५ ॥
प्रतिकर्म च रामस्य कारयामास वीर्यवान् । लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६ ॥
प्रतिकर्म च सीतायाः सर्वा दशरथस्त्रियः । आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥ १७ ॥
ततो वानरपत्नीनां सर्वासामेव शोभनम् । चकार यत्नात्कौसल्या प्रहृष्टा पुत्रवत्सला ॥ १८ ॥
ततः शत्रुघ्नवचनात्सुमन्त्रो नाम सारथिः । योजयित्वाभिचक्राम रथं सर्वाङ्गशोभनम् ॥ १९ ॥
अर्ग्न्यर्कामलसंकाशं दिव्यं दृष्ट्वा रथं स्थितम् । आरुरोह महाबाहू रामः परपुरंजयः ॥ २० ॥
सुग्रीवो हनुमांश्चैव महेन्द्रसदृशद्युती । स्नातौ दिव्यनिभैर्वस्त्रैर्जग्मतुः शुभकुण्डलौ ॥ २१ ॥
सर्वाभरणजुष्टाश्च ययुस्ताः शुभकुण्डलाः । सुग्रीवपत्न्यः सीता च द्रष्टुं नगरमुत्सुकाः ॥ २२ ॥

---

रा० टी०—भरतस्येति । रामः भरतस्य वचः प्रतिजग्राह निषसाद च ॥ १२ ॥

गो० टी०—भरतस्येति । निषसादेति । भरत इति शेषः ॥ १२ ॥

१३ ] ति० टी०—श्मश्रुवर्धनाः तच्छेदका नापिता इत्यर्थः । 'वर्धनच्छेदनेऽथ द्वे आनन्दनसभाजने' इत्यमरः ॥ १३ ॥

रा० टी०—तत इति । शत्रुघ्नवचनाद्धेतोः शीघ्राः शीघ्रं क्रियानिष्पादकाः सुखः सुखप्रदः हस्तो येषां अत एव निपुणाः श्मश्रूणां वर्द्धनाः शोधनादिना वर्द्धका राघवं पर्यवारयन्॥१३॥

गो० टी०—तत इति । श्मश्रुवर्धकाः श्मश्रुकर्तकाः । 'वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने' इत्यमरः । सुशीघ्राः अभिषेकमुहूर्तातिलङ्घनं विना शीघ्रं कर्तुं समर्थाः । उपासत श्मश्रून्यवर्धन्त । भरतलक्ष्मणापेक्षया श्मश्रुवर्धकानां बहुवचनम् । राघवमिति भरतलक्ष्मणयोः प्रदर्शनार्थम् ॥ १३ ॥

१४–१५ ] ति० टी०—पूर्वं त्विति । अत्र भरतलक्ष्मणयोः स्नानाद्यभिधानकाले शत्रुघ्नस्य तदनभिधानं तु स्नानकारयितृत्वात् । उपलक्षणं वा ॥ १४ ॥ १५ ॥

रा० टी०—पूर्वमिति । भरतादौ यथाक्रमं पूर्वं स्नाते सति विशोधिता जटा यस्य सः महार्हवसनोपेतो रामः श्रिया ज्वलन्सन् तस्थौ श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—पूर्वमित्यादिश्लोकद्वयमेकान्वयम् । न मे स्नानं बहुमतं, तं विना कैकयीसुतमित्युक्त्या प्रथमं स्नानं भरतस्य, सुग्रीवस्यापि किष्किन्धानिर्गमनप्रभृतिस्नानाभावादय स्नानम् तथा विभीषणस्यापि लङ्कानिर्गमनप्रभृतिस्नानाभावात् शत्रुघ्नस्य स्नानाश्रवणमधिकर्तृत्वेन तदानीमवसराभावात् पूर्वं व्रतग्रहणादुक्तेश्च । नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोनघ इति संक्षेपोक्तेरत्रापि शत्रुघ्नस्नानमर्थसिद्धमित्याहुः । जटाशोधनं शुद्धकेशीकरणम् । स्नात इति कर्तरि क्तः । नानावर्णपुष्पयुक्तत्वेन चित्रमाल्यत्वम् । कुङ्कुमकर्पूरकस्तूर्यादिवस्तुभेदेन चित्रानुलेपनत्वम् । महार्हवसनं पीताम्बरम् । श्रिया अलंकारश्रिया, तत्र सिंहासने, ज्वलन् प्रकाशमानः तस्थौ ॥ १४ ॥ १५ ॥

१६ ] ति० टी०—इक्ष्वाकुकुलवर्धनः शत्रुघ्नः ॥ १६ ॥

रा० टी०—प्रतीति । इक्ष्वाकुकुलवर्द्धनो भरतः रामस्य लक्ष्मणस्य च प्रतिकर्म अलंकारक्रियां कारयामास ॥ १६ ॥

गो० टी०—प्रतिकर्मेति । प्रतिकर्म हाराद्यलंकरणम् । इक्ष्वाकुकुलवर्धनः शत्रुघ्नः ॥ १६ ॥

१७ ] ति० टी०—प्रतिकर्मालंकरणम् । आत्मनैव न सैरन्ध्रीहस्तेनेत्यर्थः ॥ १७ ॥

रा० टी०—प्रतीति । दशरथस्त्रियः आत्मना स्वेनैव सीतायाः प्रतिकर्म चक्रुः ॥ १७ ॥

गो० टी०—प्रतिकर्मेति । आत्मनैव स्वयमेव ॥ १७ ॥

१८ ] ति० टी०—शोभनमलंकरणम् ॥ १८ ॥

१९–२० ] ति० टी०—अभिचक्राम समीपमाजगाम ॥ १९ ॥ २० ॥

रा० टी०—तत इति । वानरपत्नीनां शोभनमलंकरणं कौसल्या चकार ॥ १८ ॥

रा० टी०—तत इति । सुमंत्रो नाम सारथिः शत्रुघ्नवचनात् रथं योजयित्वा अभिचक्राम रामसमीपं प्राप ॥१९॥

रा० टी०—अग्नीति । रामः रथमुपस्थितं दृष्ट्वा आरुरोह ॥ २० ॥

गो०टी०—तत इति । शोभनम् प्रतिकर्मेत्यर्थः॥१८–२०॥

२१–२२ ] ति० टी०—दिव्यनिभैर्दिव्यकान्तिभिर्वस्त्रैर्युक्तौ जग्मतुः । रथस्थं राममनुजग्मतुरित्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०—सुग्रीव इति । दिव्यनिभैर्वस्त्रैरुपलक्षितौ सुग्रीवो हनुमाँश्च जग्मतुः रामरथेन सहेति शेषः ॥ २१ ॥

रा० टी०—सर्वेति । नगरं द्रष्टुमुत्सुकाः सुग्रीवपत्न्यः सीता च ययुः ॥ २२ ॥

---

१ कालस्येति गो. पा. । २ अर्कमण्डलेति गो. पा. । ३ रथोत्तममिति गो.पा. । ४ सत्यपराक्रम इति गो. पा. । ५ वराभरणसंपन्ना इति गो.पा. ।

अयोध्यायां च सचिवा राज्ञो दशरथस्य चै । पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥ २३ ॥
अशोको विजयश्चैव सिद्धार्थश्च समाहिताः । मन्त्रयन्रामवृद्ध्यर्थं वृत्त्यर्थं नगरस्य च ॥ २४ ॥
सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः । कर्तुमर्हथ रामस्य यद्यन्मङ्गलपूर्वकम् ॥ २५ ॥
इति ते मन्त्रिणः सर्वे संदिश्य चै पुरोहितः । नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ २६ ॥
हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः । प्रययौ रथमास्थाय रामो नगरमुत्तमम् ॥ २७ ॥
जग्राह भरतो रश्मीञ्शत्रुघ्नश्छत्रमाददे । लक्ष्मणो व्यजनं तस्य मूर्ध्नि संवीजयंस्तदा ॥ २८ ॥
श्वेतं च वालव्यजनं जगृहे परितः स्थितः । अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ॥ २९ ॥
ऋषिसङ्घैस्तदाकाशे देवैश्च समरुद्गणैः । स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥ ३० ॥
ततः शत्रुंजयं नाम कुञ्जरं पर्वतोपमम् । आरुरोह महातेजा सुग्रीवः प्लवगर्षभः ॥ ३१ ॥
नव नागसहस्राणि ययुरास्थाय वानराः । मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ॥ ३२ ॥
शङ्खशब्दप्रणादैश्च दुन्दुभीनां च निःस्वनैः । प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम् ॥ ३३ ॥

---

गो० टी०—सुग्रीव इति । दिव्यनिभैः दिव्यवस्त्रसदृशैः वस्त्रैरुपलक्षिताविति शेषः ॥ २१ ॥ २२ ॥

२३ ] ति० टी०—अयोध्यायां चेति । तस्मिन्नन्तरे इत्यादिः । पुरोहितं वसिष्ठम् । अर्थवत्प्रयोजनोत्तमवत् । रामाभिषेकोपयुक्तमशेषविचारं चक्रुरित्यर्थः ॥ २३ ॥

रा० टी०—अयोध्यायामिति । दशरथस्य सचिवाः पुरोहितं वशिष्ठं पुरस्कृत्य अर्थवद्यथा भवति तथा मंत्रयामासुः अभिषेकविषयककृत्यं विचारयामासुः ॥ २३ ॥

गो० टी०—अयोध्यायामिति । गत्वेति शेषः । मन्त्रयामासुः अभिषेकोपयोगिमङ्गलद्रव्यसंपादनार्थम् एवं कर्तव्यमिति मन्त्रयामासुः ॥ २३ ॥

२४ ] ति० टी०—तदेवाह—अशोक इत्यादि । अशोकादयो रामवृद्ध्यर्थं नगरस्य च वृत्त्यर्थं संगता मन्त्रयन्नमन्त्रयन् ॥ २४ ॥

रा० टी०—अप्रसिद्धसचिवानां नामानि निर्दिशन् तदेवाह—अशोक इति । अशोकादयश्च मंत्रयन् अमंत्रयन् ॥ २४ ॥

गो० टी०—उक्तमर्थं विवृणोति—अशोक इति । मन्त्रयन् अमन्त्रयन् ॥ २४ ॥

२५ ] ति० टी०—तदेवाह—सर्वमेवेति । कर्तुमर्हथेति भृत्यान्प्रत्युक्तिः ॥ २५ ॥

२६–२७ ] ति० टी०—मन्त्रिणः पुरोहितश्चैवं संदिश्य निर्ययुः ॥ २६ ॥ २७ ॥

रा० टी०—तदाकारमाह—सर्वमिति । रामस्याभिषेकार्थं यद्यत्कर्तव्यं तत्सर्वं मंगलपूर्वकं कर्तुमर्हथ ॥ २५ ॥

रा० टी०—इतीति । मंत्रिणः पुरोहितश्च इति संदिश्य आज्ञाप्य नगरान्निर्ययुः ॥ २६ ॥

रा० टी०—हरीति । रथमास्थायेन्द्र इव रामो रथमास्थाय प्रययौ ॥ २७ ॥

गो० टी०—सर्वमित्यादिश्लोकद्वयमेकान्वयम् । अर्हथेति पूजायां बहुवचनम् ॥ २५ ॥ २६ ॥

गो०टी०—हरीति । हरियुक्तं हरितवर्णयुक्ताश्वयुक्तम् ॥२७॥

२८ ] ति० टी०—लक्ष्मणो व्यजनं तालवृन्तमयम् ॥२८॥

२९–३१ ] ति० टी०—अपरं श्वेतं वालव्यजनं विभीषणो जगृहे ॥ २९ ॥ ३१ ॥

३२ ] ति० टी०—नवनागसहस्राणि । नवसहस्रसंख्याकगजानित्यर्थः ॥ ३२ ॥

रा० टी०—जग्राहेति । भरतो रश्मीन् हयरज्जूः जग्राह शत्रुघ्नः तस्य रामस्य समीपे मूर्ध्नि छत्रमाददे लक्ष्मणः सम्वीजयन् संवीजयितुं व्यजनमाददे ॥ २८ ॥

रा० टी०—श्वेतमिति । चन्द्रसंकाशम् अपरं तालव्यजनापेक्षया भिन्नं वालव्यजनं चामरं विभीषणो जगृहे ॥२९॥

रा० टी०—ऋषीति । ऋषिसंवादिभिः स्तूयमानस्य रामस्य समीपे मधुरध्वनिः शुश्रुवे ॥ ३० ॥

रा० टी०—तत इति । सुग्रीवः शत्रुंजयं नाम कुञ्जरमारुरोह ॥ ३१ ॥

रा० टी०—नवेति । वानराः मानुषं विग्रहं कृत्वा नवनागसहस्राणि आस्थाय ययुः ॥ ३२ ॥

गो० टी०—जग्राहेत्यादिश्लोकद्वयमेकान्वयम् । रश्मीन् जग्राह सारथ्यमकरोत् । लक्ष्मण इति । पुरतः स्थितो लक्ष्मणः व्यजनं तालवृन्तकम् मूर्ध्नि सम्पर्यवीजयत् । श्वेतं वालव्यजनं च जग्राह । अहं सर्वं करिष्यामीति त्वरया उभयग्रहणम् । अपरं चन्द्रसंकाशमित्यत्र जग्राहेत्यनुषज्यते ॥ २८ ॥ २९ ॥

गो० टी०—ऋषीति । समरुद्गणैः सवायुगणैः । रामस्य मधुरध्वनिः रावणनिरसनाद्यवदानकथनध्वनिः ॥ ३०–३२ ॥

३३ ] ति० टी०—शङ्खशब्दप्रणादैः । शङ्खशब्दैर्जनानां हर्ष-

ददृशुस्ते समायान्तं राघवं सपुरःसरम् । विराजमानं वपुषा रथेनातिरथं तदा ॥ ३४ ॥
ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः । अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ॥ ३५ ॥
अमात्यैर्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः । श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ॥ ३६ ॥
स पुरोगामिभिस्तूर्यैस्तालस्वस्तिकपाणिभिः । प्रव्याहरद्भिर्मुदितैर्मङ्गलानि वृतो ययौ ॥ ३७ ॥
अक्षतं जातरूपं च गावः कन्याः सहद्विजाः । नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ॥ ३८ ॥
सख्यं च रामः सुग्रीवे प्रभावं चानिलात्मजे । वानराणां च तत्कर्म ह्याचचक्षेऽथ मन्त्रिणाम् ॥३९॥
श्रुत्वा च विस्मयं जग्मुरयोध्यापुरवासिनः । वानराणां च तत्कर्म राक्षसानां च तद्बलम् ॥ ४० ॥
[ विभीषणस्य संयोगमाचचक्षेथ मन्त्रिणाम् । ]
द्युतिमानेतदाख्याय रामो वानरसंयुतः । हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश सः ॥ ४१ ॥
ततो ह्यभ्युच्छ्रयन्पौराः पताकाश्च गृहे गृहे । ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ॥ ४२ ॥
अथाब्रवीद्राजपुत्रो भरतं धर्मिणां वरम् । अर्थोपहितया वाचा मधुरं रघुनन्दनः ॥ ४३ ॥
पितुर्भवनमासाद्य प्रविश्य च महात्मनः । कौसल्यां च सुमित्रां च कैकेयीमभिवाद्य ॥ ४४ ॥
तच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् । मुक्तावैदूर्यसंकीर्णं सुग्रीवाय निवेदय ॥ ४५ ॥
तस्य तद्वचनं श्रुत्वा भरतः सत्यविक्रमः । हस्ते गृहीत्वा सुग्रीवं प्रविवेश तमालयम् ॥ ४६ ॥

---

प्रणादैश्चेत्यर्थः । तदुक्तं पाद्मे–'आगतो रावणद्वेषी कुम्भकर्णस्वरान्तकः । अतिकायेन्द्रजिच्छेत्ता महर्षिजनरक्षकः ॥ समाप्तदेवताकार्यः सीतेशो लक्ष्मणानुजः । सत्यैकनिरतः शास्ता परदारसहोदरः ॥ सुग्रीवराज्यदो धन्वी रावणानुजराज्यदः । शरणागतसंत्राता धर्मस्थापनतत्परः ॥ रामो दाशरथिः श्रीमान्भगवान्भरताग्रजः । शरण्यो राम इत्येवं शुश्रुवे काहलध्वनिः ॥' इति ॥ ३३ ॥

रा० टी०–शङ्खेति । शङ्खशब्दप्रणादादिभिरुपलक्षितो रामः पुरीमयोध्यां प्रययौ प्रणादो मनुष्यशब्दः ॥ ३३ ॥

गो० टी०–शङ्खेति । शङ्खशब्दप्रणादैः शङ्खशब्दैः जनहर्षप्रणादैश्चेत्यर्थः ॥ ३३ ॥

३४ ] ति० टी०–ते नागराः ॥ ३४ ॥

३५–३६ ] ति० टी०–ते नागरा वर्धयित्वा । आशीर्भिरिति शेषः ॥ ३५ ॥ ३६ ॥

रा० टी०–ददृशुरिति । समायान्तं राघवं ते नागरा ददृशुः ॥ ३४ ॥

रा० टी०–वर्द्धयित्वेति । रामेण प्रतिनन्दिताः नागराः काकुत्स्थं रामं वर्द्धयित्वा आशीर्वचनैस्संवर्ध्य अनुजग्मुः ॥३५॥

रा० टी०–अमात्यैरिति । अमात्यादिभिर्वृतो रामः नक्षत्रैर्वृतश्चन्द्रमा इव विरुरुचे ॥ ३६ ॥

गो० टी०–ददृशुरिति । ये नगरं प्रविश्य वसिष्ठं पुरस्कृत्य रामाभिषेकममन्त्रयन् ते सुमन्त्रादयः ॥ ३४ ॥ ३५ ॥

गो० टी०–अमात्यैरिति । प्रकृतिभिः पौरजनैः ॥३६॥

३७ ] ति० टी०–तूर्यैस्तूर्यवादकैः । स्वस्तिकश्च तालवदेव करतलधार्यः । मङ्गलानि प्रव्याहरद्भिरित्यन्वयः ॥ ३७ ॥

रा० टी०–स इति । तूर्यैरुपलक्षितैः तालस्वस्तिकपाणिभिः मंगलानि प्रव्याहरद्भिः पुरोगामिभिर्वृतो रामो ययौ ॥ ३७ ॥

गो० टी०–सेति । तूर्यैः तूर्यवादकैः । स्वस्तिको वाद्यविशेषः । मङ्गलानि प्रव्याहरद्भिः मङ्गलपाठकैः ॥ ३७ ॥

३८–४१ ] ति० टी०–अक्षतादिकं मङ्गलार्थम् । जातरूपमक्षतम् संपादितहरिद्रादिवर्णविशेषमित्यर्थः । अक्षतादीनां पुरतो यानं तद्ग्राहिपुरुषद्वारा ॥ ३८ ॥ ४१ ॥

रा० टी०–अक्षतमिति । अक्षतादयः मोदकहस्ता नराश्च रामस्य पुरतो ययुः अचेतनगमनं चेतनसहकारेण बोध्यम् ॥ ३८ ॥

गो० टी०–अक्षतं जातरूपमिति । हरिद्रया जातरूपमक्षतम्, वहद्भिरिति शेषः ॥ ३८ ॥

रा० टी०–सख्यमिति । रामः सुग्रीवे सख्यमनिलात्मजे प्रभावं च वानराणां च कर्म च मन्त्रिणां मध्ये आचचक्षे ॥ ३९ ॥

गो० टी०–सख्यं चेत्यादिसार्धश्लोकमेकं वाक्यम् ॥ सख्यं जातमिति शेषः मन्त्रिणां मन्त्रिभ्यः ॥ ३९ ॥

रा० टी०–श्रुत्वेति । अयोध्यापुरवासिनः वानराणां कर्म राक्षसानां बलं च श्रुत्वा विस्मयं जग्मुः ॥ ४० ॥

रा० टी०–द्युतिमानिति । द्युतिमान् स रामः एतदाख्याय अयोध्यां प्रविवेश ॥ ४१ ॥

गो० टी०–श्रुत्वेत्यर्धम् । श्रुत्वा सुग्रीवसख्यादिकमिति शेषः ॥ ४० ॥ ४१ ॥

४२–४३] ति०टी०–अभ्युच्छ्रयन्नभ्युदश्रयन् ॥४२॥४३॥

४४–४६ ] ति० टी०–पितुर्भवनमासाद्य तत्र महात्मनः

---

१ राक्षसानां च तद्बलमिति गो. पा. । २ इदमर्धं "विभीषणस्य संयोगमित्यर्धानन्तरं पठ्यते गो. पुस्तके । ३ इदमर्धं मधिकं गो. पुस्तके । ४ प्रविश्येति गो. पा. । ५ अभिवाद्य चेति गो. पा. ।

ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च । गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ॥ ४७ ॥
उवाच च महातेजाः सुग्रीवं राघवानुजः । अभिषेकाय रामस्य दूतानाज्ञापय प्रभो ॥ ४८ ॥
सौवर्णान्वानरेन्द्राणां चतुर्णां चतुरो घटान् । ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान् ॥ ४९ ॥
तथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् । पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः ॥ ५० ॥
एवमुक्ता महात्मानो वानरा वारणोपमाः । उत्पेतुर्गगनं शीघ्रं गरुडा इव शीघ्रगाः ॥ ५१ ॥
जाम्बवांश्च हनूमांश्च वेगदर्शी च वानरः । ऋषभश्चैव कलशाञ्जलपूर्णानथानयन् ॥ ५२ ॥
नदीशतानां पञ्चानां जलं कुम्भैरुपाहरन् । पूर्वात्समुद्रात्कलशं जलपूर्णमथानयत् ॥ ५३ ॥
सुषेणः सत्त्वसंपन्नः सर्वरत्नविभूषितम् । ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमानयत् ॥ ५४ ॥
रक्तचन्दनकर्पूरैः संवृतं काञ्चनं घटम् । गवयः पश्चिमात्तोयमाजहार महार्णवात् ॥ ५५ ॥
रत्नकुम्भेन महता शीतं मारुतविक्रमः । उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः ॥ ५६ ॥

---

सुग्रीवादीन्मुख्यान्प्रवेश्य कौसल्याया अभिवादय । वानरैरिति शेषः। इति भरतमब्रवीदिति संबन्धः। तत्र पूर्वं सुग्रीवादिप्रवेशबीजमुक्तं पाद्मे—'स्वं श्रीमद्भवनं रामो भक्तपादाब्जरेणुभिः। शुद्धीकर्तुमना राजा हनुमन्तमकल्मषम् ॥ विभीषणं च सुग्रीवं गृहं प्रावेशयत्तदा ॥' इति । आपाततस्तु कौसल्यादिप्रणामकरणं फलमिति भाति । आन्तरं मुख्यं तु पाद्मोक्तं बोध्यम् । पूर्वं तु रामेणैकान्त एव तद्वन्दनं कृतम्, न तु सर्वसमक्षमितिगम्यते ॥ ४४ ॥ ४६ ॥

रा० टी०—तत इति । ततो रामागमनाद्धेतोः पौराः गृहे गृहे पताकाः अभ्युच्छ्रयन् अभ्युद्‍श्रयन् उदस्थापयन् ऐक्ष्वाकानामध्युषितं पितुर्गृहमाससाद राम इति शेषः ॥ ४२ ॥

गो० टी०—तत इति । अभ्युच्छ्रयन् अभ्युदश्राययन्, उन्नम्य स्थापितवन्तः ॥ ४२ ॥

गो० टी०—ऐक्ष्वाकेत्यर्धम् । राम इति शेषः ॥ ४३ ॥

रा० टी०—अर्थेति । रघुनंदनो रामः अर्थोपहितया प्रयोजनसहितया वाचा मधुरं यथा भवति तथा भरतमब्रवीत् ४३

रा० टी०—तदाकारमाह—पितुरिति द्वाभ्याम् पितुर्भवनमासाद्य प्रविश्य च सुग्रीवमितिशेषः कौशल्याप्रभृतीरभिवादय ॥ ४४ ॥

गो० टी०—अथाब्रवीदित्यादि । श्लोकद्वयमेकान्वयम् । अथ रघुनन्दनः महात्मनः पितुर्भवनमासाद्य प्रविश्य च कौसल्याप्रभृतीरभिवाद्य च भरतमब्रवीदिति योजना ॥ ४४॥४५ ॥

रा० टी०—तदिति । साशोकवनिकम् अशोकवनिकाविशिष्टं मुक्तावैदूर्यसंकीर्णं मद्भवनं सुग्रीवाय निवेदय ॥ ४५ ॥

रा० टी०—तस्येति । तस्य रामस्य तद्वचनं श्रुत्वा भरतः सुग्रीवं हस्ते गृहीत्वा तमालयं प्रविवेश ॥ ४६ ॥

गो० टी०—यच्चेति । साशोकवनिकम् अन्तःपुरोद्यानसहितम् ॥ ४६ ॥ ४७ ॥

४७ ] ति० टी०—ततः शत्रुघ्नेन प्रचोदिता राजभवनरक्षका अभ्यन्तरप्रदेशप्रदर्शनार्थं तैलप्रदीपान्गृहीत्वा भरतसुग्रीवयोः पुरः प्रविविशुः ॥ ४७ ॥

रा० टी०—तत इति । ततः भरतकर्तृकभवनप्रवेशसमये शत्रुघ्नेन प्रचोदिताः भृत्याः तैलप्रदीपान् तैलाक्तबहुपटमयदीपविशेषान् पर्यङ्कास्तरणानि च गृहीत्वा विविशुः ॥ ४७ ॥

गो० टी०—तत इति । विविशुः । परिचारिका इति शेषः ॥ ४८–५० ॥

४८ ] ति० टी०—उवाचेति । रामभवनप्रदर्शनानन्तरमिति शेषः। राघवानुजो भरतः ॥ ४८ ॥

रा० टी०—उवाचेति । राघवानुजो भरतः रामस्याभिषेकाय दूतानाज्ञापय इति वचनं सुग्रीवमुवाच ॥ ४८ ॥

४९ ] ति० टी०—चतुर्णां चतुःसागरगामिनां जाम्बवदादीनाम् ॥ ४९ ॥

रा० टी०—सौवर्णानिति । सः भरतेन बोधितः सुग्रीवस्सौवर्णान् चतुरो घटान् चतुर्णां वानरेन्द्राणां ददौ ॥ ४९ ॥

गो० टी०—यथेति । हे वानराः, चतुर्णां सागराम्भसाम् चतुर्भिः सागराम्भोभिः पूर्णैर्घटैः उपलक्षिताः प्रत्यूषसमये यथा प्रतीक्षध्वं यथास्मान् प्रतीक्षिष्यध्वे तथा कुरुतेति योजना। सागरजलानयननियोगो नदीजलानयननियोगस्याप्युपलक्षकः ॥ ५१–५३ ॥

५०–५१ ] ति० टी०—चतुर्णां सागराम्भसां तैः पूर्णैर्घटैः सहिताः प्रत्यूषसमये यथास्मान्प्रतीक्षध्वं प्रतीक्षिष्यध्वं तथा कुरुतेति योजना ॥ ५० ॥ ५१ ॥

रा०टी०—तत्प्रयोजनमाह—यथेति । चतुर्णां सागराम्भसां पूर्णघटैरुपलक्षिता यूयं प्रत्यूषसमये यथा प्रतीक्षध्वं अस्मानिति शेषः तथा कुरुत ॥ ५० ॥

रा० टी०—एवमिति । एवमुक्ताः वारणोपमाः गरुडा इव शीघ्रगाः वानराः गगनमुत्पेतुः ॥ ५१ ॥

५२–५६ ] ति० टी०—जाम्बवांश्चेति । अत्र चकारैः

---

१ जलं कुम्भेषु चाहरन्निरिति गो. पा. । २ शाखामिति गो. पा. ।

आजहार स धर्मात्मानिलः सर्वगुणान्वितः। ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् ॥ ५७ ॥
अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह। पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ॥ ५८ ॥
ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह। रामं रत्नमये पीठे ससीतं संन्यवेशयत् ॥ ५९ ॥
वसिष्ठो विजयश्चैव जावालिरथ काश्यपः। कात्यायनो गौतमश्च वामदेवस्तथैव च ॥ ६० ॥
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना। सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ६१ ॥
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा। योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टैः सनैगमैः ॥ ६२ ॥
सर्वौषधिरसैश्चापि दैवतैर्नभसि स्थितैः। चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च संगतैः ॥ ६३ ॥
ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम्। अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ॥ ६४ ॥
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः। सभायां हेमक्लृप्तायां शोभितायां महाधनैः ॥ ६५ ॥
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः। नानारत्नमये पीठे कल्पयित्वा यथाविधि ॥ ६६ ॥
किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना। ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ॥ ६७ ॥
छत्रं तस्य च जग्राह शत्रुघ्नः पाण्डुरं शुभम्। श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥ ६८ ॥

सुषेणगवयादिपञ्चशतवानरपरिग्रहः। तद्वक्ष्यति—नदीशतानां पञ्चानामिति। अत एव सुषेणगवययोः समुद्रजलाहर्तृत्वेन वक्ष्यमाणेन न विरोधः ॥ ५२ ॥ ५६ ॥

रा० टी०—जाम्बवानिति। जाम्बवदादयः जलपूर्णान् समुद्रजलैः पूरितान् कलशान् अनायन् पञ्चानां शतानां नदीनां जलं च उपाहरन् स्वस्वगन्तव्यसमुद्रदिग्वर्त्तिनदीभ्योऽपि जलान्यानयन्नित्यर्थः अत्र वेगदर्शिशब्देन गवयो गृह्यते वेगं दर्शयति तच्छील इति व्युत्पत्तेः अत एव गवयः पश्चिमादिति वक्ष्यमाणेन न विरोधः सार्द्धश्लोक एकान्वयी ॥ ५२ ॥

रा० टी०—आनयनकर्तॄन् विभज्याह—पूर्वादिति। सुषेणः शोभनसेनावान् जाम्बवानित्यर्थः पूर्वात्समुद्रात् जलेन पूर्णं कलशमानयत् जलं च पूर्वसमुद्रस्येति प्रत्यासत्त्या लब्धम् ॥ ५३ ॥

गो० टी०—जलपूर्णानथानयन्नित्युक्तमेवार्थं विवृणोति—नदीशतानामिति ॥ ५४ ॥

गो० टी०—एवं जाम्बवद्धनुमदङ्गदवृषभैर्नदीजलानयनमुक्त्वा सुषेणर्षभगवयानलैः सागरजलानयनं दर्शयति—पूर्वादिति ॥ ५५ ॥

रा० टी०—ऋषभ इति। ऋषभः रक्तचंदनकर्पूरैः संवृतं काञ्चनं घटं गृहीत्वेति शेषः दक्षिणात् समुद्रात् जलमानयत् ॥ ५४ ॥

रा० टी०—गवय इति। गवयः पश्चिमात् महार्णवात् तोयं जलमाजहार ॥ ५५ ॥

रा० टी०—उत्तरादिति। उत्तरात्समुद्रात् आनिलः अनिलसुतो हनुमान् जलमाजहार ॥ ५६ ॥

गो० टी०—ऋषभो दक्षिणादिति। अयं चर्षभः पूर्वस्मादन्यः ॥ ५६–५८ ॥

५७ ] ति० टी०—आनिलो हनुमान्। तत्प्रसिद्धं नदीतीर्थसागराणां जलम् ॥ ५७ ॥

५८ ] ति० टी०—श्रेष्ठाय पुरोहिताय वसिष्ठाय ॥ ५८ ॥

रा० टी०—तत इति। शत्रुघ्नः सचिवैः सह रामस्याभिषेकाय वानरश्रेष्ठैरानीतं जलं प्रेक्ष्य पुरोहिताय श्रेष्ठाय वशिष्ठाय सुहृद्भ्यश्च न्यवेदयत् सार्धश्लोक एकान्वयी ॥ ५७ ॥ ५८ ॥

गो० टी०—तत इत्यादिसार्धश्लोक एकान्वयः। तत् प्रसिद्धम्। तज्जलं तेषां नदीसागराणां जलम् ॥ ५९–६२ ॥

५९–६० ] ति० टी०—प्रयतः प्रयत्नवान्। रत्नमये पीठे रत्नसिंहासने। ससीतं सीतासहितम् ॥ ५९ ॥ ६० ॥

६१ ] ति० टी०—प्रसन्नेन निर्मलेन सकलवैदिकमन्त्रमन्त्रितत्वादतिपवित्रेण च सलिलेन नरव्याघ्रमभ्यषिञ्चन् ॥ ६१ ॥

रा० टी०—तत इति। ततः शत्रुघ्नवचनश्रवणानन्तरं ब्राह्मणैः सह प्रयतो वशिष्ठः रत्नमये पीठे ससीतं सीतासहितं रामं सन्यवेशयत् ॥ ५९ ॥

रा० टी०—वशिष्ठ इति। वशिष्ठादयः प्रसन्नेन सुगन्धिना सलिलेन पुरुषव्याघ्रं राममभ्यषिञ्चन् श्लोकद्वयमेकान्वयि ॥ ६० ॥ ६१ ॥

६२ ] ति० टी०—ऋत्विग्भिरित्यादि। अत्र वसिष्ठादयः प्रयोजककर्तारः कन्याभिः षोडशसंख्याभिः। अभ्यषिञ्चन्नभ्यषेचयन्। ते वसिष्ठादयः नैगमा वणिजः ॥ ६२ ॥

६३ ] ति० टी०—नभसि स्थितैः सर्वदेवसहितैर्लोकपालदेवतैः सर्वौषधिरसैरभ्यषेचयन्वसिष्ठादयः ॥ ६३ ॥

रा० टी०—तत्प्रकारं बोधयन्नाह—ऋत्विग्भिरिति। ते वशिष्ठादयः पूर्वं सर्वौषधिरसैः चकारात्सलिलेन च करणैः ऋत्विगादिभिः प्रयोज्यैः पुरुषव्याघ्रं राममभ्यषिंचन् अभ्यषेचयन् श्लोकद्वयमेकान्वयि ॥ ६२ ॥ ६३ ॥

गो० टी०—ऋत्विग्भिरिति। ते वसिष्ठादयः ऋत्विगादिभिः सहाभ्यषिञ्चन्निति योजना ॥ ६३ ॥

१ जल इति गो. पा.। २ वामदेवश्चेति गो. पा.। ३ सुयज्ञश्च गौतमो विजयस्तथेति गो. पा.। ४ प्रहृष्टा इति गो. पा.।

[1]अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः। मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम्॥ ६९ ॥
राघवाय ददौ वायुर्वासवेन प्रचोदितः। सर्वरत्नसमायुक्तं मणिभिश्च[2] विभूषितम् ॥ ७० ॥
मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः। प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ७१ ॥
अभिषेके तदर्हस्य तदा रामस्य धीमतः। भूमिः सस्यवती चैव फलवन्तश्च पादपाः ॥ ७२ ॥
गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे। सहस्रशतमश्वानां धेनूनां च गवां तथा ॥ ७३ ॥
ददौ शतवृषान्पूर्वं द्विजेभ्यो मनुजर्षभः। त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः॥ ७४ ॥
नानाभरणवस्त्राणि महार्हाणि च राघवः। अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम्॥ ७५ ॥
सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजाधिपः। वैदूर्यमयचित्रे च चन्द्ररश्मिविभूषिते ॥ ७६ ॥
वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ। मणिप्रवरजुष्टं तं मुक्ताहारमनुत्तमम् ॥ ७७ ॥
सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम्। अरजे वाससी दिव्ये शुभान्याभरणानि च ॥ ७८ ॥

---

गो० टी०—सर्वौषधिरसैरित्यत्रापि अभ्यषिञ्चंस्त इत्यनुषज्यते ॥ ६४ ॥ ६५ ॥

६४ ] ति० टी०—येन किरीटेन मनुरभिषिक्तो युक्तः ॥ ६४ ॥

६५ ] ति० टी०—अन्ववायो वंशः। येन वसिष्ठेन तद्वंशे राजान उच्यमानगुणायां सभायामभिषेचिताः ॥ ६६ ॥

६६ ] ति० टी०—तस्यां सभायां पीठे दीप्ततेजसं रामं कल्पयित्वोपवेश्य यथाविध्यभिषिच्य ॥ ६६ ॥

६७–६८ ] ति० टी०—पश्चादभिषेकानन्तरं तेन किरीटेन तेन वसिष्ठेन राघवः समयोक्ष्यत संयुक्तः कृतः। ऋत्विग्भिश्च भूषणैः संयुक्तः कृतः आर्षो लङ् ॥ ६७ ॥ ६८ ॥

रा० टी०—ब्रह्मणेति। पूर्वं ब्रह्मणा निर्मितं यत् किरीटं येन च पुरा अभिषिक्तो मनुः योजित इति शेषः येन च तस्य मनोः अन्ववाये वंशे विशेषणविशिष्टायां सभायामभिषेचिता राजानो येन योजिता इति शेषः तेन किरीटेन ततः पश्चात् अभिषेकादुत्तरकाले तेन वशिष्ठेन प्रयोजकेन ऋत्विग्भिः प्रयोज्यैः दीप्ततेजसं रामं नानारत्नमये पीठे यथाविधि कल्पयित्वा उपवेश्य राघवः समयोक्ष्यत समयोज्यत श्लोकचतुष्टयमेकान्वयि ॥ ६४–६७ ॥

रा० टी०—छत्रमिति। शत्रुघ्नः छत्रं जग्राह सुग्रीवः श्वेतं बालव्यजनं जग्राह अपरं द्वितीयं बालव्यजनं विभीषणो जग्राह सार्द्धश्लोक एकान्वयी ॥ ६८ ॥

६९–७० ] ति० टी०—शतपुष्करां शतपद्मनिर्मिताम् ॥ ६९ ॥ ७० ॥

रा० टी०—मालामिति। वासवेन प्रचोदितो वायुः काञ्चनीं मालां राघवाय ददौ ॥ ६९ ॥

गो० टी०—मालामिति। शतपुष्करां शतपद्माम् ॥६६॥

रा० टी०—सर्वेति। शक्रप्रचोदितः वायुरित्यनुकृष्यते मुक्ताहारं नरेन्द्राय रामाय ददौ ॥ ७० ॥

गो० टी०—सर्वेति। सर्वरत्नैः नवरत्नैः समायुक्तम्, मणिरत्नेन मणिश्रेष्ठेन नायकेन मध्ये विराजन्तं, मुक्ताहारं मुक्ताप्रचुरहारम् ददौ। वायुरित्यनुषज्यते ॥ ६७ ॥ ६८ ॥

७१ ] ति० टी०—शक्रप्रचोदित इति। वायुरित्यनुकृष्यते। वायुद्वारा दिव्यां स्वीयां काञ्चनमालां मुक्ताहारं च भगवान्महेन्द्रो ददावित्यर्थः ॥ ७१ ॥

रा० टी०—प्रजगुरिति। तदर्हस्य देवादिगानयोग्यस्य रामस्य अभिषेके देवगन्धर्वाः प्रजगुः अप्सरोगणाः ननृतुश्च ॥ ७१ ॥

७२ ] ति० टी०—तदर्हस्य देवगीतनृत्ताद्यर्हस्य। अभिषेके सतीत्यर्थः ॥ ७२ ॥

रा० टी०—भूमिरिति। भूमिः सस्यवती प्रशस्तसस्यविशिष्टा बभूव ॥ ७२ ॥

गो० टी०—पूर्वं रामविश्लेषे, अपि वृक्षाः परिम्लाना इत्युक्तावस्थं वस्तुजातं रामसंश्लेषे तादृगवस्थां विहाय प्रहृष्टतममभूदित्याह—भूमिरिति ॥ ६९ ॥

७३ ] ति० टी०—सहस्रशतं लक्षम्, धेनूनां गवाम्। नवप्रसूतगवामित्यर्थः। शतशब्दोऽनन्तवाची वा ॥ ७३ ॥

७४–७८ ] ति० टी०—पूर्वं गवादिदानानि कृत्वा तदनन्तरं भूयसीत्वेन त्रिंशत्कोटीर्हिरण्यं ददौ ॥ ७४–७८ ॥

रा० टी०—सहस्रेति मनुजर्षभो रामः पूर्वमश्वानां गवां च सहस्रशतं लक्षमित्यर्थः शतवृषांश्च द्विजेभ्यो ददौ ॥ ७३ ॥

रा० टी०—त्रिंशदिति। पुनरनन्तरं हिरण्यस्य त्रिंशत्कोटीः ब्राह्मणेभ्यो ददौ ॥ ७४ ॥

गो० टी०—सहस्रशतमिति। धेनूनां नवप्रसूतिकानाम्। धेनुः स्यान्नवसूतिकेत्यमरः। पूर्वं हिरण्यदानादेः पूर्वम्। सुग्रीवादिभ्यः पूर्वं वा ॥ ७० ॥ ७१ ॥

रा० टी०—अर्केति। मनुजाधिपो रामः काञ्चनीं स्रजं सुग्रीवाय प्रायच्छत् ॥ ७९ ॥

गो०टी०—अर्करश्मीति। मणिविग्रहां मणिप्रचुराम् ७२

---

१ अपरं चन्द्रसंकाशं वालव्यजनमुत्तमम्। हृष्टो रामस्य जग्राह राक्षसेन्द्रो विभीषण इति गो. पा.। २ मणिरत्नेति गो.पा.। ३ नवरत्नैरिति गो. पा.।

अवेक्षमाणा वैदेही प्रददौ वायुसूनवे । अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ॥ ७९ ॥
अवैक्षत हरीन्सर्वान्भर्तारं च मुहुर्मुहुः । तामिङ्गितज्ञः संप्रेक्ष्य बभाषे जनकात्मजाम् ॥ ८० ॥
प्रदेहि सुभगे हारं यस्य तुष्टासि भामिनि । अथ सा वायुपुत्राय तं हारमसितेक्षणा ॥ ८१ ॥
तेजो धृतीर्यशो दाक्ष्यं सामर्थ्यं विनयो नयः । पौरुषं [3]विक्रमो बुद्धिर्यस्मिन्नेतानि नित्यदा ॥ ८२ ॥
हनूमांस्तेन हारेण शुशुभे वानरर्षभः । चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाचलः ॥ ८३ ॥
सर्वे वानरवृद्धाश्च ये चान्ये वानरोत्तमाः । वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः ॥ ८४ ॥
विभीषणोऽथ सुग्रीवो हनूमाञ्जाम्बवांस्तथा । सर्वे वानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ८५ ॥
यथार्हं पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः । प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥ ८६ ॥
ततो द्विविदमैन्दाभ्यां नीलाय च परंतपः । सर्वान्कामगुणान्वीक्ष्य प्रददौ वसुधाधिपः ॥ ८७ ॥
दृष्ट्वा सर्वे महात्मानस्ततस्ते वानरर्षभाः । विसृष्टाः पार्थिवेन्द्रेण किष्किन्धां समुपागमन् ॥८८॥
सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम् । पूजितश्चैव रामेण किष्किन्धां प्राविशत्पुरीम्॥ ८९ ॥

---

रा० टी०-वैदूर्येति । वैदूर्यमये एव चित्रे अङ्गदे अङ्गदाय ददौ ॥ ७६ ॥

गो० टी०-वैदूर्येति । धृतिमान् प्रीतिमान् ॥ ७६ ॥

रा० टी०-मणीति । मणिप्रवरैर्जुष्टं मुक्ताहारं सीतायै प्रददौ ॥ ७७ ॥

गो० टी०-मणिप्रवरेति । सीतायै प्रददौ हनुमते दातव्यमित्याशयेन ददौ ॥ ७४ ॥

रा० टी०-अजरे इति । वैदेही अवेक्षमाणा राममवलोकयन्ती तदभिप्रायं लब्ध्वेत्यर्थः आसक्ती आभरणानि च वायुसूनवे प्रददौ ॥ ७८ ॥

गो० टी०-अरजे इति । अरजे निर्मले अकारान्तत्वमार्षम् । अवेक्षमाणा भर्तारमिति शेषः । स्त्रियाः स्वातन्त्र्याभावात् भर्त्रनुज्ञां काङ्क्षितवतीति भावः ॥ ७९ ॥

७९-८० ] ति० टी०-अवेक्षमाणा तत्कृतमुपकारं चिन्तयन्ती प्रददौ । प्रदातुमियेषेत्यर्थः । आत्मनः कण्ठाद्धारमवमुच्य दित्सया भर्त्रनुमतये भर्तारमवैक्षत ॥ ७९ ॥ ८० ॥

रा० टी०-अवमुच्येति । जनकनन्दिनी आत्मनः कण्ठात् हारमवमुच्य हरीन् भर्तारं च मुहुर्मुहुरवैक्षत ॥ ७९ ॥

गो० टी०-अवमुच्येति । हारं रामदत्तम् । सदसि मध्ये हारप्रदानं कस्मै चित् पारितोषिकतया दापयितुमिति निश्चित्य अयं हारः एषु कस्मै देय इत्याशयेनावैक्षतेत्यर्थः॥७६॥

रा० टी०-तामिति । इङ्गितज्ञः अभिप्रायाभिज्ञो रामः जनकात्मजां संप्रेक्ष्य यस्योपरि त्वं तुष्टासि तस्मै हारं प्रदेहि इति बभाषे ॥ ८० ॥

गो० टी०-तामिङ्गितज्ञ इत्यादिसार्धश्लोक एकान्वयः । प्रदेहीति । यस्य यस्मिन् पौरुषं बलम् समुद्रलङ्घनेन विक्रमो लङ्कादहनेन बुद्धिः अशोकवनिकाप्रवेशेन सर्वशः सर्वाणि, यस्मिन् सन्तीति यस्य संतुष्टासि तस्मै देहीति योजना अन्यथा अन्येषां निन्दोक्तिरेव स्यात् ॥ ७७ ॥ ७८ ॥

८१ ] ति० टी०-अथ भर्त्रनुमत्यनन्तरं सा वायुपुत्राय ददाविति शेषः ॥ ८१ ॥

८२-८५ ] ति० टी०-तत्र हेतुः पौरुषादि तेजआदि च । यत्र हनुमति नित्यदा नित्यश्च आर्षो दाप्रत्ययः ॥ ८२-८३ ॥

८६ ] ति० टी०-कामैः स्रक्चन्दनान्नपानाद्यैः ॥ ८६ ॥

रा० टी०-अथेति । सा सीता यस्मिन् एतानि तेजःप्रभृतीनि नित्यदा तिष्ठन्तीति शेषः तस्मै वायुपुत्राय ददाविति शेषः किञ्च यस्मिन् हारे तेजःप्रभृतीनि तिष्ठन्तीति यत्प्रभावात्तद्धारिणि भवन्तीत्यर्थः तं वायुपुत्राय ददौ सार्धश्लोक एकान्वयी ॥ ८१ ॥ ८२ ॥

रा० टी०-हनूमानिति । तेन हारेण हनुमान् चन्द्रांशुचयेन गौरो यः श्वेताभ्रः तेन अचल इव शुशुभे ॥ ८३ ॥

रा० टी०-सर्व इति । वानरवृद्धाः वानरोत्तमाश्च सर्वे यथार्हं प्रतिपूजिताः ॥ ८४ ॥

रा० टी०-विभीषण इति । विभीषणादयः सर्वे वानरमुख्याश्च रामेण यथार्हं पूजिताः अत एव प्रहृष्टमनसस्सर्वे यथागतं जग्मुः स्वस्वनिवेशस्थानमिति शेषः श्लोकद्वयमेकान्वयि ॥ ८५ ॥ ८६ ॥

८७-८९ ] ति० टी०-वीक्ष्य मैन्दद्विविदनीलान्दृष्ट्वा तेभ्यः सर्वान्कामगुणानत्युत्तमान्रत्नादीन्ददौ ॥ ८७-८९ ॥

रा० टी०-तत इति । वसुधाधिपः सर्वान् वानरान् कामगुणान् यथेप्सितगुणविशिष्टान् पदार्थान् वीक्ष्य द्विविदादिभ्यः प्रददौ ॥ ८७ ॥

रा० टी०-दृष्ट्वेति । दृष्ट्वा अभिषेकमवलोक्य विद्यमानाः पार्थिवेन्द्रेण रामेण विसृष्टाः वानरर्षभाः किष्किधां समुपागमन् ॥ ८८ ॥

रा० टी०-गोवर्धनवर्धन्यायेन पुनराह-सुग्रीव इति । रामाभिषेचनं दृष्ट्वा विद्यमानः रामेण पूजितः सुग्रीवः किष्किधां प्राविशत् ॥ ८९ ॥

---

१ ददौ सेति गो. पा. । २ इदमर्धं गो. पुस्तके नास्ति । ३ इदमर्धं अथ सा वायुपुत्र इत्यर्धात्प्राग्दृश्यते गो. पुस्तके । ४ इदं पद्यं सर्वे वानरवृद्धाश्चेत्यर्धात्प्राग्दृश्यते गो. पुस्तके । ५ भवेति गो. पा. ।

विभीषणोऽपि धर्मात्मा सह तैर्नैर्ऋतर्षभैः । लब्ध्वा कुलधनं राजा लङ्कां प्रायान्महायशाः ॥९०॥
स राज्यमखिलं शासन्निहतारिर्महायशाः । राघवः परमोदारः शशास परया मुदा ॥
उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ॥ ॥ ९१ ॥

आतिष्ठ धर्मज्ञ मया सहेमां गां पूर्वराजाध्युषितां बलेन ।
तुल्यं यथा त्वं पितृभिः पुरस्तात्तौवराज्ये धुरमुद्वहस्व ॥ ॥ ९२ ॥
सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानो भुवि यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ॥ ९३ ॥

---

गो० टी०-तत इति । कामगुणान् काम्यन्त इति कामाः प्रार्थनीयाः गुणाः येषां ते तान् आभरणादिवस्तुविशेषान् ॥ ७९ ॥ ८० ॥

९० ] ति० टी०-लब्ध्वा कुलधनमिति । स्वकुलधनं लङ्काराज्यमित्यर्थः । यत्तु इक्ष्वाकुकुलदैवतं रङ्गं विमानमिति, तन्न । पाद्मेऽवतारसमाप्तिसमये तद्दानस्योक्तत्वात् । तथा च तत्र विभीषणं प्रति रामवचनम् । 'यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावद्रमस्व राज्यस्थः काले मम पदं व्रज ॥ इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे । श्रीरङ्गस्वामिनं स्वार्चामिक्ष्वाकुकुलदैवतम् ॥ रङ्गं विमानमादाय लङ्कां प्रायाद्विभीषणः ॥' इति ॥ ९० ॥

रा० टी०-विभीषण इति । कुलधनं स्वराज्यं लब्ध्वा आगतो विभीषणः लङ्कां प्रायात् अत्र कुलधनशब्देन रङ्गनाथग्रहणमिति केचित् ॥ ९० ॥

गो० टी०-विभीषणोथेऽति । अत्र संभावितपरिगणने प्रथमं कीर्तनाल्लब्ध्वा कुलधनमित्यनुवादाच्च आदावेव विभीषणः संभावित इति बोध्यम् ॥ ८१-८३ ॥

गो० टी०-सुग्रीव इत्यर्धम् । अत्रापि वचनव्यत्ययेन किष्किन्धामभ्युपागमदित्युपपद्यते ॥ ८४ ॥

गो० टी०-लब्ध्वेत्यर्धम् । कुलधनम् इक्ष्वाकुकुलधनम् लङ्काराज्यमिति केचित् ॥ ८५ ॥

९१ ] ति० टी०-शासन्दुष्टनिग्रहं कुर्वञ्शशास पालयामास ॥ ९१ ॥

रा० टी०-स इति । निहतारिः रामः अखिलं राज्यं शासन्सन् परया मुदा शशास रराजेत्यर्थः ॥ ९१ ॥

गो० टी०-स इति । शासन् दुष्टनिग्रहं कुर्वन् । शशास बुभुजे इत्यर्थः । धातूनामनेकार्थत्वात् ॥ ८६ ॥ ८७ ॥

९२ ] ति० टी०-चतुरङ्गबलेन सह पूर्वराजाध्युषितामिमां गां मया सहातिष्ठ । पूर्वे राजानो मन्वादयस्तैरध्युषितां पालिताम् । कीदृशमास्थानं मया भुवः कर्तव्यं भवता सहेत्यत्राह—तुल्यमित्यादि । पुरस्तान्महाराज्याभिषेकात्पूर्वं पितृभिः स्वपितृभिस्तुल्यं यथा भवति तथा तैर्या यौवराज्ये धूर्धृता तां धुरमुद्वहस्व । आत्मना सह वनवासे दुःखानुभवाद्राज्ये सहसुखानुभवार्थं लक्ष्मणं प्रति यौवराज्यप्रार्थनेति भावः ॥ ९२ ॥

रा० टी०-उवाचेति । रामो लक्ष्मणमुवाच अर्ध्दं पृथक् तदाकारमाह—आतिष्ठेति । पूर्वराजैरध्युषितां बलेन सैन्येन सहिताम् इमां गां मया सह आतिष्ठ ननु राजत्वेन समानकाले द्वयोः स्थितिर्न युज्यत इत्यत आह पुरस्तात् पूर्वस्मिन् काले पितृभिः तुल्यं यथा भवति तथा यौवराज्ये स्थितस्सन् धुरमुद्वहस्व ॥ ९२ ॥

गो० टी०-लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धरामिति पूर्वाभिषेकारम्भे भरतासन्निधाने प्रतिज्ञानात् रामो द्विर्नाभिभाषत इति नियमाल्लक्ष्मणमेव यौवराज्ये नियुङ्क्ते—आतिष्ठेति । पूर्वराजैः मन्वादिभिः अध्युषिताम् आतिष्ठ पालय । पितृभिः पितृपितामहप्रपितामहैः, या धृता तां धुरं मया तुल्यं यथा भवति तथा यौवराज्ये स्थित्वा उद्वहस्व ॥८८॥

९३ ] ति० टी०-सर्वात्मना पर्यनुनीयमानः । ज्येष्ठे भरते विद्यमानेऽहं यौवराज्यानर्हं इति निषेधे क्रियमाणेऽपि पुनःपुनरनुनीयमान इत्यर्थः । नियुज्यमानोऽपि न्यायप्राप्तस्वीययौवराज्येन भरतेनानुनीयमानोऽपि योगं यौवराज्यसंसर्गं नोपैति नेच्छति स्म । ततो भरतं यौवराज्येऽभ्यषेचयत् ॥९३॥

रा० टी०-सर्वात्मनेति । सर्वात्मना सर्वप्रकारेण यौवराज्ये पर्यनुनीयमानः रामेणेति शेषः नियुज्यमानः भरतेनापीति शेषः सौमित्रिः योगं युवराजत्वसम्बन्धं यदा न उपैति अङ्गीचकार ततस्तदा महात्मा रामः भरतं यौवराज्ये अभ्यषिञ्चत् ॥ ९३ ॥

गो० टी०-सर्वेति । यौवराज्ये नियुज्यमानः यौवराज्यमङ्गीकुरुष्वेति नियम्यमानः, पर्यनुनीयमानः, पुनः पुनरनुनयेन पृच्छ्यमानः सन्नपि च, सर्वात्मना सर्वप्रकारेणापि, यदा योगं सम्मतिम् नोपैति । स्वशेषत्वविरुद्धत्वज्ञानाज्ज्येष्ठे भरते विद्यमाने स्वस्य तदनुचितत्वज्ञानाच्चेति भावः । तदा भरतम् अत्यन्तपरतन्त्रम् यौवराज्ये अभ्यषिञ्चत् ॥ ८९ ॥

---

१ रामेण सर्वकामैश्च यथार्हं प्रतिपूजित इति गो. पा । २ विभीषण इति गो.पा. । ३ मयेति गो.पा. । ४ धृता या तामिति गो पा. । ५ अपि चेति गो. पा.

पौण्डरीकाश्वमेधाभ्यां वाजिमेधेन चासकृत् । अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवात्मजः ॥ ९४ ॥
राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः । दशाश्वमेधानाजह्रे सदश्वान्भूरिदक्षिणान् ॥ ९५ ॥
आजानुलम्बिबाहुः स महावक्षाः प्रतापवान् । लक्ष्मणानुचरो रामः शशास पृथिवीमिमाम् ॥ ९६ ॥
राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् । ईजे बहुविधैर्यज्ञैः ससुतभ्रातृबान्धवः ॥ ९७ ॥
न पर्यदेवन्विधवा न च व्यालकृतं भयम् । न व्याधिजं भयं चासीद्रामे राज्यं प्रशासति ॥ ९८ ॥
निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत् । नच स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ ९९ ॥
सर्वं मुदितमेवासीत्सर्वो धर्मपरोऽभवत् । राममेवानुपश्यन्तो नाभ्यहिंसन्परस्परम् ॥ १०० ॥
आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः । निरामया विशोकाश्च रामे राज्यं प्रशासति ॥ १०१ ॥
[ रामो रामो राम इति प्रजानामभवन् कथाः । रामभूतं जगद्भूद्रामे राज्यं प्रशासति ॥ ]
नित्यमूला नित्यफलास्तरवस्तत्र पुष्पिताः । कामवर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ॥ १०२ ॥
[ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः । ]
स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः । आसन्प्रजा धर्मपरा रामे शासति नानृताः ॥ १०३ ॥
सर्वे लक्षणसंपन्नाः सर्वे धर्मपरायणाः । दशवर्षसहस्राणि रामो राज्यमकारयत् ॥ १०४ ॥
धर्म्यं यशस्यमायुष्यं राज्ञां च विजयावहम् । आदिकाव्यमिदं चार्षं पुरा वाल्मीकिना कृतम् १०५
यः शृणोति सदा लोके नरः पापात्प्रमुच्यते । पुत्रकामश्च पुत्रान्वै धनकामो धनानि च ॥ १०६ ॥

---

९४-१०० ] ति० टी०—पौण्डरीकाश्वमेधेत्यादिरुत्तरकाण्डार्थसंक्षेपः । पौण्डरीकाश्वमेधाभ्यामिति सामान्यत उक्त्वा तत्रैव विशेषमाह—वाजिमेधेन चासकृदिति ॥ ९४-१०० ॥

रा० टी०—पौण्डरीकेति । पार्थिवात्मजो रामः पौण्डरीकादिभिः यज्ञैरयजत् ॥ ९४ ॥

रा० टी०—राज्यमिति । राघवः दशसहस्राणि दशगुणितानि सहस्राणि त्रिसहस्राणि येषु त्रयस्त्रिंशत्सहस्रवर्षाणीत्यर्थः राज्यं प्राप्य दशाश्वमेधानाजह्रे तन्मध्ये एव यथाकालमकरोत् किञ्च दशसहस्राणि त्रिंशद्वर्षसहस्रपर्यन्तं राज्यं प्राप्य कृत्वा अश्वमेधानाजह्रे त्रिसहस्रवर्षपर्यन्तं चकार अत एव दशवर्षसहस्राणि दशवर्षशतानि चेति बालकाण्डोक्तेन न विरोधः ॥ ९५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणवर्णयन्नाह—आजान्वित्यादिभिः । रामः पृथिवीं शशास ॥ ९६ ॥

गो० टी०—पौण्डरीकेति । अत्रोत्तरकल्पारम्भोक्तिर्वनवासात्परमग्न्याधानपूर्वकं पूर्वक्रतवोपि रामेण कृता इत्यस्योपलक्षणम् ॥ ९०-९२ ॥

रा० टी०—राघव इति । राघवः ससुतभ्रातृबांधवस्सन् बहुविधैर्यज्ञैरीजे ॥ ९७ ॥

गो० टी०—राघव इति । चापीति निपातसमुदायोवधारणार्थोऽभिन्नक्रमः । ससुहृज्जातिबान्धव एवेत्यर्थः ॥ ९३ ॥

रा० टी०—नेति । रामे राज्यं प्रशासति सति विधवाः न पर्यदेवन् विधवा नाभवन्नित्यर्थः ॥ ९८ ॥

रा० टी०—निर्दस्युरिति । लोको निर्दस्युरभवत् अनर्थं कश्चिन्नास्पृशत् अत एव वृद्धाः बालानां प्रेतकार्याणि न कुर्वते बाला न म्रियन्ते इत्यर्थः ॥ ९९ ॥

गो० टी०—न पर्यदेवन्निति नापर्यदेवयन्नित्यर्थः ॥ ९४ ॥ ९५ ॥

रा० टी०—सर्वमिति । सर्वजनजातं मुदितमेवासीत् राममेवानुपश्यन्तो जनाः परस्परं नाभ्यहिंसन् ॥ १०० ॥

गो० टी०—सर्वमिति । राममेवेति । अन्योन्यनिर्मूलनवैरे सत्यपि राममुखं म्लानं भविष्यतीति मत्वा परस्परं नाभ्यहिंसन् । परमधार्मिकं राममेवानुचिन्तयन्तोऽन्योन्यवैरं प्रजहुरित्यर्थः ॥ ९६-१०२ ॥

१०१-१०४ ] ति० टी०—वर्षसहस्राण्यासन् जना इति शेषः ॥ १०१-१०४ ॥

रा० टी०—आसन्निति । वर्षसहस्राणि अनेकसहस्रवर्षाणीत्यर्थः पुत्रसहस्रिणस्सन्तः आसन् ॥ १०१ ॥

रा० टी०—नित्येति । तरवः पुष्पितास्सन्तः नित्यमूलाः नित्यफलाश्च भवन्तीति शेषः ॥ १०२ ॥

रा० टी०—स्वकर्मेति । प्रजाः स्वैरेव कर्मभिः तुष्टाः सन्तः कर्मसु प्रवर्त्तन्ते अत एव धर्मपराः यागादिशीला आसन् १०३ ॥

रा० टी०—सर्व इति । सर्वे जना लक्षणसंपन्नाः शुभप्रदलक्षणयुक्ताः सर्वधर्मपरायणाः परमात्मधर्मनिरताः आसन् दशवर्षसहस्राणि त्रयस्त्रिंशद्वर्षाणीत्यर्थः रामो राज्यमकारयत् अकरोत् ॥ १०४ ॥

१०५-१०६ ] ति० टी०—आर्षमृषिर्वेदस्तत्संबन्धि । वेदोपबृंहणमिति यावत् । पुरा पुरातनम् ॥ १०५ ॥ १०६ ॥

---

१ वाजपेयेनेति गो. पा. । २ शतेति गो. पा. । ३ स्कंध इति गो. पा. । ४ सुहृज्ज्ञातीति गो. पा. । ५ अनर्थं इति गो.पा. । ६ इदं पद्यमधिकं गो. पुस्तके । ७ काले इति गो. पा. । ८ इदमर्धमधिकं गो. पा. । ९ दशवर्षशतानि च भ्रातृभिः सहितः श्रीमान्रामो राज्यमकारयदिति गो. पा. । १० धन्यमिति गो. पा. । ११ पठेच्छृणुयादिति गो. पा. ।

लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् । महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ॥ १०७ ॥
राघवेण यथा माता सुमित्रा लक्ष्मणेन च । भरतेन च कैकेयी जीवपुत्रास्तथा स्त्रियः ॥ १०८ ॥
[ भविष्यन्ति सदानन्दाः पुत्रपौत्रसमन्विताः । ]
श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति । रामस्य विजयं चेमं सर्वमक्लिष्टकर्मणः ॥ १०९ ॥
शृणोति य इदं काव्यं पुरा वाल्मीकिना कृतम् । श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥ ११० ॥
समागम्य प्रवासान्ते रमन्ते सह बान्धवैः । शृण्वन्ति य इदं काव्यं पुरा वाल्मीकिना कृतम् १११
ते प्रार्थितान्वरान्सर्वान्प्राप्नुवन्तीह राघवात् । श्रवणेन सुराः सर्वे प्रीयन्ते संप्रशृण्वताम् ॥ ११२ ॥
विनायकाश्च शाम्यन्ति गृहे तिष्ठति यस्य वै । विजयेत महीं राजा प्रवासी स्वस्तिमान्भवेत् ॥ ११३ ॥
स्त्रियो रजस्वलाः श्रुत्वा पुत्रान्सूयुरनुत्तमान् । पूजयंश्च पठंश्चैनमितिहासं पुरातनम् ॥ ११४ ॥
सर्वपापैः प्रमुच्येत दीर्घमायुरवाप्नुयात् । प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ॥ ११५ ॥

---

१०७-१११ ] ति० टी०-रामाभिषेचनम् । तदवधिकमित्यर्थः रिपूनधितिष्ठति । तान्विजयते इत्यर्थः ॥ १०७-१११ ॥

रा० टी०-धर्म्यमिति । पुरा वाल्मीकिना कृतं आर्षं वेदप्रतिपाद्यवस्तुप्रतिपादकमिदमादिकाव्यं राज्ञां धर्मादिप्रापकं विजयावहं चास्तीति शेषः ॥ १०९ ॥

गो० टी०-अथ रामायणपठने फलं दर्शयति-धन्यमित्यादिसार्धश्लोकमेकं वाक्यम् । ऋषिः वेदः तत्संबन्धि । वेदोपबृंहणमिति यावत् । पुरा अवतारात्पूर्वम् । रामोत्तरतापनीयमूलत्वेन पुरातनमिति वार्थः । यद्वा पुरा सर्वकविभ्यः पूर्वम् । न त्ववतारात्पूर्वमित्यर्थः । 'प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्रपदमात्मवान्' इति रामे प्राप्तराज्ये सति चकारेत्युपक्रमात्, रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवानिति राज्यप्राप्तिपर्यन्तं भूततया निर्दिश्य ततः परं ब्रह्मलोकं प्रयास्यतीत्येतदन्तं भविष्यता निर्देशात्, कोन्वस्मिन् साम्प्रतं लोके इत्यादौ साम्प्रतशब्दप्रयोगात्, रामभूतं जगदभूद्रामे राज्यं प्रशासतीति सकललोकविदितरामविषयप्रश्नानुपपत्तेः सर्वथा परिहृतत्वात् । इतिहासं पुरातनमित्यस्य आदिकाव्यत्वात्सकृतेरन्येषामपि विरोधाभासानां सुपरिहार्यत्वाच्चायमेवार्थः ॥ १०३ ॥

रा० टी०-य इति । यो नरः सदा शृणोति स पापात्सदा प्रमुच्यते अहं पृथक् ॥ १०६ ॥

रा० टी०-पुत्रेति । रामाभिषेचनं श्रुत्वा पुत्रकामो मनुजः पुत्रान् लभते धनकामो धनानि लभते राजा महीं विजयते प्राप्नोति रिपूनधिष्ठति निराकरोति यथा राघवादिना कौसल्यादयः जीवपुत्राः जीवनप्रदपुत्रविशिष्टाः तथा स्त्रियो भवन्तीति शेषः सार्धश्लोकद्वयमेकान्वयि ॥ १०७॥१०८ ॥

रा० टी०-श्रुत्वेति । अक्लिष्टकर्मणो रामस्य विशेषेण जयो यस्मिन् तदेतद्रामायणं श्रुत्वा दीर्घमायुर्विन्दति ॥ १०९ ॥

गो० टी०-पुत्रकामस्त्वित्यादिसार्धश्लोकद्वयमेकं वाक्यम् । रामाभिषेचनम् रामाभिषेकावधिकम्, अधितिष्ठति आक्रम्य तिष्ठतीत्यर्थः । माता कौसल्या । जीवपुत्राः भवन्तीति शेषः ॥ १०४-१०७ ॥

रा० टी०-शृणोतीति । य इदं शृणोति सोऽसौ दुर्गाणि अतितरति ॥ ११० ॥

रा० टी०-समागम्येति । ये इदं काव्यं शृण्वंति ते प्रवासात्समागम्य बान्धवैस्सह रमन्ते राघवात् प्रार्थितान् वरान् प्राप्नुवन्ति सार्द्धश्लोक एकान्वयी ॥ १११ ॥ ११२ ॥

गो० टी०-शृणोति य इत्यादिश्लोकद्वयमेकान्वयम् । दुर्गाणि दारिद्र्यादीनि ॥ १०८ ॥ १०९ ॥

११२ ] ति० टी०-'संप्रशृण्वताम्' इति पाठः ॥ ११२ ॥

रा० टी०-श्रवणेनेति । संप्रशृण्वतां जनानां श्रवणेनैव सर्वे सुराः प्रीयन्ते यस्य गृहे तिष्ठति पुस्तकं पाठकर्ता चेति तस्यापि विनायकाः विघ्नाः शाम्यन्ति ॥ ११३ ॥

गो० टी०-श्रवणेनेति । विनायकाः विघ्नकरा ग्रहाः ॥ ११०-११२ ॥

११३ ] ति० टी०-विनायका विघ्नकारिणो देवगणविशेषाः ॥ ११३ ॥

रा० टी०-विजयेतेति । राजा महीं विजयेत जित्वा प्राप्नुयात् प्रवासी विदेशस्थः स्वस्तिमान् भवेत् रजस्वलाः स्त्रियः श्रुत्वा अनुत्तमान् अत्युत्तमान् पुत्रान् सूयुः ॥ ११४ ॥

११४-११५ ] ति० टी०-स्त्रियो रजस्वलाः शुद्धस्नानानन्तरं षोडशदिनावधि ॥ ११४ ॥ ११९ ॥

रा० टी०-पूजयन्निति । पुरातनमितिहासं पूजयन् पठंश्च सर्वपापैः प्रमुच्यते ॥ ११९ ॥

रा० टी०-प्रणम्येति । क्षत्रियैर्नित्यं श्रोतव्यमत एव ऐश्वर्यं पुत्रलाभश्च भविष्यति ॥ ११६ ॥

गो० टी०-ब्राह्मणवत् क्षत्रियस्यापि पाठप्राप्तौ नियममाह-प्रणम्येति । वैश्यादीनां कैमुतिकसिद्धं ब्राह्मणात् प्रणमनपूर्वकं श्रवणम् ॥ ११३-११६ ॥

---

१ इदमधर्ममधिकं गो. पुस्त. । २ आर्षमिति गो. पा. । ३ समागमं प्रवासान्ते भजते चापिति गो. पा. । ४ इदं गो. पु. न दृश्यते । ५ प्रार्थितांश्च रावन्सर्वान्प्राप्नयादिह राघवादिति गो. पुस्तके । ६ तिष्ठन्तीति गो. पा.

ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः । रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा ॥ ११६ ॥
[ साक्षाद्रामो रघुश्रेष्ठः शेषो लक्ष्मण उच्यते । ]
प्रीयते सततं रामः स हि विष्णुः सनातनः । आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः ॥ ११७ ॥
एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ ११८ ॥
देवाश्च सर्वे तुष्यन्ति ग्रहणाच्छ्रवणात्तथा । रामायणस्य श्रवणे तृप्यन्ति पितरः सदा ॥ ११९ ॥
भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम् । ये लिखन्तीह च नरास्तेषां वासस्त्रिविष्टपे ॥ १२० ॥

कुटुम्बवृद्धिं धनधान्यवृद्धिं स्त्रियश्च मुख्याः सुखमुत्तमं च ।
श्रुत्वा शुभं काव्यमिदं महार्थं प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥ ॥ १२१ ॥
आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिकरं शुभं च ।
श्रोतव्यमेतन्नियमेन सद्भिराख्यानमोजस्करमृद्धिकामैः ॥ ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाविंशत्यधिकशततमः सर्गः ॥ १२८ ॥

---

इति श्रीगोमतीतीरनैमिष्यारण्याश्वमेधसप्ततन्तुवाटगतमुनीन्द्रद्विजेन्द्रादिवसुधाधिपेन्द्रपरिवृतस्य मुनिवृन्दारकवृन्दवन्द्यमानकोरकाकारचरणयुगलस्य सद्भ्रातृसन्मित्रसन्मन्त्रिसहितस्य साकेतपुरवराधीश्वरस्य दीनानां दैन्यहरण उदीर्णवीर्योत्सिक्तरावणवधार्थं देवैः प्रार्थितस्य रघुकुलतिलकसंभूतस्य श्रीसीताविशेषकस्य लक्ष्मीपतेः साम्यांशस्य लक्ष्मीवतो राजाधिराजस्य लोकाभिरामस्य निकटोक्तयोः श्रीरामात्मजयोरादिकविशिष्ययोः कुशलवयोराख्याने श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां श्रीमद्युद्धकाण्डे पञ्चविंशेऽह्नि वर्तमानकथाप्रसङ्गः समाप्तः ।

---

११६-११९ ] ति० टी०—सदेत्यनेन कालत्रयेऽपीत्यर्थः ॥ ११६-११९ ॥

रा० टी०—रामायणमिति । रामायणं शृण्वतः पठतः पुरुषस्योपरि सनातनः ब्रह्मादीनामपि रचयिता विष्णुः स्वप्रकाशद्वारा सर्वत्र परिपूर्ण आदिदेवः सर्वदेवानामादिः महादेवः नित्यं विहारकर्ता नारेण नीत्यैव अयते गच्छति परमनीतिमानित्यर्थः हरिः पुनर्वसुतृतीयचरणे प्रादुर्भूतो रामः प्रीयते सार्द्धश्लोक एकान्वयी ॥ ११७ ॥

रा० टी०—एवमिति । विष्णोर्बलं प्रवर्द्धतां स्तुत्यादिना प्रवर्धयतां देवानां मध्ये एतदाख्यानं पुरावृत्तं प्रवृत्तं देवैः पठितमित्यर्थः अतः यूयमपि प्रव्याहरत पठत शिष्यानुदिश्येयमुक्तिः ॥ ११८ ॥

रा० टी०—देवा इति । ग्रहणात् पठनात् श्रवणाच्च सर्वे देवाः तुष्यन्ति रामायणस्य श्रवणे पितरः सदैव तुष्यन्ति ११९

गो० टी०—आयुष्यमिति । सौभ्रातृकं सौभ्रातृकरम् । सुखं सुखकरम् ॥ ११७-११९ ॥

१२०-१२२ ] ति० टी०—ये ऋषिणा कृतां मुनिना कृतां रामस्य संहिताम् । रामायणमित्यर्थः । लिखन्ति च चाच्छृण्वन्ति त्रिविष्टपे ब्रह्मलोके । 'शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥' इति वचनात् । अत्र फलश्रुतिश्लोकाः कतकव्याख्याने नोपलभ्यन्ते ॥ १२०-१२२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये युद्धकाण्डेऽष्टाविंशत्यधिकशततमः सर्गः ॥ १२८ ॥

निर्मलं कतकक्षोदादपि रामायणार्णवम् ।
अत्यन्तं निर्मलं चक्रे रामः स्वमतिवाससा ॥
भट्टनागेशपूज्येन सेतुः श्रीरामवर्मणा ।
कृतः सर्वोपकृतये श्रीमद्रामायणाम्बुधौ ॥
युद्धे हतो दशग्रीवः सगर्वो वीतकल्मषः ।
पश्यन्रामात्मकं विश्वं स्वयं रामो बभूव ह ॥
युद्धे युद्धादिभिः श्रान्तान्वानरान्प्रतिपूज्य च ।
स्वानन्देनास्थितोऽयोध्यां रामः पातु स सर्वतः ॥

रा० टी०—भक्त्येति । रामस्य भक्त्या ये इमां संहितां लिखन्ति तेषां त्रिविष्टपे साकेते वासो भवति ॥ १२० ॥

रा० टी०—कुटुम्बेति । इदं काव्यं श्रुत्वा सर्वार्थमर्थसिद्धिं प्राप्नोति ॥ १२१ ॥

रा० टी०—आयुष्यमिति । यतः इदमायुष्यत्वादिविशिष्टं मतः ऋद्धिकामैः पुरुषैः एतच्छ्रोतव्यम् ॥ १२२ ॥

बध्वा सेतुमपाम्निधौ सुखतनुः
श्रीवानरेन्द्रेण युक्

---

१ इदमर्धमधिकं गो. पुस्तके । २ एतस्थाने “ मेवमेतत्पुरावृत्तमित्यर्धमपूर्वमेव गो. पु. दृश्यते ।

शत्रुभ्रातृविभीषणेन सहितः
श्रीकोशलेशः परम् ।
हत्वा रावणमात्तबन्धुसहितं
संप्राप्य सीतां मुदा
पश्यन् मार्गनिवासमाशु कथयन्
श्रीकोशलां प्राप्तवान् ॥ १ ॥
वाल्मीकिरामायणटीकयाशु
प्रीयान्महात्मा रघुवंशनाथः
युद्धस्थयायैव समाप्तिभाजा
श्रीमत्त्रिवेण्यामखिलार्थदाता ॥ २ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ
युद्धकाण्डे त्रिंशदधिकशततमस्सर्गः ॥ १३० ॥

गो० टी०—भक्त्येति । संहितातुल्यत्वात् संहितेति व्यपदेशः ॥ १२० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नकिरीटाख्याने युद्धकाण्डव्याख्याने एकत्रिंशदुत्तरशततमः सर्गः ॥ १३१ ॥

---

इत्थं श्रीमच्छठारेश्चरणसरसिजद्वन्द्वसेवातिरेका-
दुद्भूतोद्दामबोधः कुशिकसुतकुलाम्पतेरोपधीशः ।
श्रीमान् गोविन्दराजो वरदगुरुसुतो भावनाचार्यवर्य-
प्रेम्णैव प्रेर्यमाणो व्यतनुत विपुलां युद्धकाण्डस्य टीकाम् ॥१॥

---

इति श्रीवाल्मीकिरामायणे युद्धकाण्डं समाप्तम् ।